

श्रीप्रभाचन्द्राचार्यविरचितः

# श्रीप्रमेयकमलमार्तण्डः ।

स च

स्याद्वादवारिधिवादिगजकेसरिविद्वद्रत्नपण्डितगोपालदासगुरुचरणचञ्चरीकेण तत्प्रसादाल्लब्धबोधेन च जैनशास्त्रिश्रीवंशीधरेण सम्पादितः ।

तुकाराम जावजी इत्यनेन स्वकीये निर्णयसागराख्ये मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितश्च ।

वीरनिर्वाण संवत् २४३८ । ईसवी सन १९१२ ।

प्रथमसंस्करणम् ]

[ मूल्यमस्य ४ रूप्यकचतुष्टयम् ।

श्रीः

# उपोद्घातः ।

श्रीवर्द्धमाने भगवत्यर्हति चतुर्विंशतितमे तीर्थकरे गते सति मोक्ष पञ्च श्रुतकेवलिनः श्रुताब्धेः पारगता विक्रमाब्दात्प्रागेव यावद्भूवुस्तावत्खलु श्रीनिगमभस्तिमाली समस्तकर-प्रसरेणैवेममार्यदेश प्रकाशयामास यतः श्रुतकेवलिनोपि प्रत्यक्षप्रमितसकलार्थवेदिन इव परोक्षतयागमानुसारेण चराचरं भुवनत्रयमनुभवन्ति ननु । तावच्च महतोपि महीयान् पठनपाठन-प्रचारः प्रायशोनपेक्ष्यैव पुस्तकाश्रयमासीत् । तत एव तत्कालपर्यन्त नासीत् पुस्तकलेखनप्रचारो वहुधा । ततः प्रभृति यथा यथा प्रवोधधारणाशक्तिरलभताशक्ततां मन्दोद्योग वा तथा तथा प्रत्यहमधिकाधिकरूपेण ग्रन्थरचनाप्रचारः समजनि ।

तदवसरे एव जैनन्यायशास्त्राणां सर्वतः प्राक् प्रणेता भगवान् **श्रीसमन्तभद्रो** विक्रमराजस्य १२५ तमेऽब्दे वभूव । एकश्रुतिर**कलङ्क**श्च गुरुस्ततः । इत्यादिपूर्वेषां ग्रन्थकृतां सारमुद्धृत्य श्री**माणिक्यनन्दि**सूरिर्विक्रमाब्दे ५६९ तमे **परीक्षामुखसूत्राणि** विदधे । अत्र प्रमाणस्वरूपाधिकारः, प्रत्यक्षप्रमाणाधिकारः, परोक्षप्रमाणाधिकारः, प्रमाणस्य विषयफ-लनिरूपणाधिकारः, प्रमाणाद्याभासाधिकारः, नयतदाभासाद्यधिकारश्चेति षडधिकाराः सन्ति । षडङ्गेस्मिन्नन्यूनवर्ण्यविषये जैनन्यायदर्शने जिनानुवन्धिप्रमाणप्रमेयतदाभासादिकमाभाष्य निरसितान्यन्यानि विरोधिदर्शनान्यशेषविशेषप्रवन्धैः । अस्य हि **प्रमेयरत्नमाला**दिषु सत्स्वपि वहुतरविवरणेषु **प्रमेयकमलमार्तण्डो** नामाय विद्वन्मनस्तोष चेक्रियमाणो मकुटायते सर्वेषु न्यायग्रन्थेषु । अस्मिन् कतिचित् सूत्राणि सामस्त्येनोच्चार्यान्यानि सूत्राणि यथास्थान प्रतीकरूपेणैव प्रदर्शितानि । अस्य विषयक्रमः पुरस्तात्प्रदर्शितोस्ति । आर्हतन्यायसिद्धान्ता-नुसारेण प्रमाणप्रमेयादिस्वरूपमशेषतोऽवसितुमनसामयमसाधारणोऽशेषविशेषविषयप्ररूपणपरः प्रतिपत्तव्यः । अस्य खल्वनुष्टुप्पद्यापेक्षया ग्रन्थपरिमाण द्वादशसहस्राणि विभावयन्तु ।

एतद्ग्रन्थकर्ता श्री**प्रभाचन्द्र**देवो भोजदेवसमये वभूव । तत्परिचयार्थमित्थमस्य ग्रन्थस्यान्ते उल्लिखितानि पद्यगद्यान्युपलभ्यन्ते ।

"गम्भीरं निखिलार्थगोचरमल शिष्यप्रबोधप्रद यद्व्यक्तं पदमद्वितीयमखिल माणिक्यनन्दिप्रभोः ।
तद्व्याख्यातमदो यथावगमतः किञ्चिन्मया लेशतः स्थेयाच्छुद्धधियां मनोरतिगृहे चन्द्रार्कतारावधि ॥ १ ॥
मोहध्वान्तविनाशनो निखिलतो विज्ञानशुद्धिप्रदो मेयानन्तनभोविसर्पणपटुर्वस्तूक्तिभाभासुरः ।
शिष्याब्जप्रतिबोधनः समुदितो योऽद्रेः परीक्षामुखाज्जीयात्सोत्र निवन्ध एष सुचिर मार्तण्डतुल्योऽमलः ॥ २ ॥

गुरुः श्रीनन्दिमाणिक्यो नन्दिताशेषसज्जनः । नन्दताद्दुरितैकान्तरजोजैनमतार्णवः ॥ ३ ॥
श्रीपद्मनन्दिसैद्धान्तशिष्योऽनेकगुणालयः । प्रभाचन्द्रश्चिरं जीयाद्रत्ननन्दिपदे रतः ॥ ४ ॥

श्रीभोजदेवराज्ये श्रीमद्धारानिवासिना परापरपरमेष्ठिप्रणामार्जितामलपुण्यनिराकृतनिखिलमलकलङ्केन श्रीमत्प्रभाचन्द्रेण निखिलप्रमाणप्रमेयस्वरूपोद्योति परीक्षामुखपदं विवृतमिति ॥" श्रीभोजदेवः श्रीप्रभाचन्द्रश्च कदा बभूवतुरिति विशेषनिर्धारार्थमिदमवबोद्धव्यम्—

श्रीनेमिचन्द्रसिद्धान्तचक्रवर्ती श्रीचामुण्डरायस्य जन्मसमये १०३४( ईस्वी सन् ९७८ ) तमे विक्रमसंवत्सरे बभूवेति निश्चीयते । श्रीनेमिचन्द्रविहितग्रन्थस्य गाथा-श्रीपूज्यपादविनिर्मितशब्दानुशासनस्य ( जैनेन्द्रस ) च सूत्राणि प्रमाणत्वेनात्र प्रमेयकमलमार्तण्डे समुद्धृरे इति श्रीप्रभाचन्द्रः श्रीनेमिचन्द्राचार्यस्य श्रीपूज्यपादस्य वा न प्राग् लब्धजन्मेति वक्तुमुत्सहते रसना ।

शिलालेखपुस्तके चास्य परिचय इत्थं प्रदत्तः—

"स श्रीप्रभाचन्द्रो गोपनन्दिना सूरिणा सहाध्येष्ट यस्य पादौ धारानगराधिपतिः श्रीभोजराजः समपूजयत् । प्रसिद्धोयं दार्शनिको विद्वान् श्रीप्रभाचन्द्रः १०६० तमात् ११९५ तमपर्यन्ते विक्रमसंवत्सरे बभूव ।"

श्रीअकलङ्कदेवविनिर्मिताया लघुत्रय्या उपरि न्यायकुमुदचन्द्राभिधस्तिलकायितस्तिलकोप्यनेनैव परोपकारनियतचेतसा विद्वद्रत्नेन समपादि यो हि प्रमेयकमलमार्तण्डस्यैव समकोटिमध्यास्ते । राजमार्त्तण्डः, प्रमाणदीपकः, वादिकौशिकमार्त्तण्डः अर्थप्रकाशः इत्येवप्रभृतयोऽन्या अप्यस्य कृतय. सन्ति । रत्नकरण्डकाभिधस्य श्रीसामन्तभद्रीयश्रावकाचारस्य वृहत्स्वयम्भूस्तोत्रस्य, समाधिशतकस्य चोपरि विवरणानि श्रीप्रभाचन्द्रेणैव विनिर्मितानि सन्ति किंतु तेषां प्रणेता स एवापरो वा प्रभाचन्द्रस्तदनन्तर लब्धजन्मेति न पार्यतेऽवधारयितुमलं तथापि प्रमेयकमलमार्तण्डापेक्षया तद्वृत्तीनां रचनातरङ्गभङ्गी विसदृशीति वक्तुमुत्सहे ।

अधुना पूर्वाचार्यकृतीर्लोके प्रख्यापयितुकामोय पारस्परिकमतविद्वेप विद्विषन् सर्वेषीन् समदृष्ट्या संमानयन् सज्जनवरः श्रीमान् तुकाराम जावजीति निर्णयसागरमुद्रणयन्त्राधिपतिश्चिराय सर्वेषां सस्मरणीयो यत्कृपाकटाक्षेणाय ग्रन्थः प्राकाश्यमुपढौकितः ।

अस्य ग्रन्थस्य पञ्चचत्वारिंशदाद्यानि पत्राणि न मया संशोधितानीति विभावयन्तु विद्वांसः । ततो यत्रतत्र तावत्पर्यन्त सभवन्त्यशुद्धयस्तत् क्षाम्यन्त्वध्येतारः । विदुषामग्रे इयमभ्यर्थना ।

यतः—

परस्य तुच्छेपि परोनुरागो महत्यपि स्वस्य गुणे न तोषः । एवविधो यस्य मनोविवेकः किं प्रार्थ्यते सोत्र हिताय साधुः ॥ १ ॥

( श्रीमहाकविहरिश्चन्द्रः )

गुणानगृह्णन् सुजनो न निर्वृतिं प्रयाति दोषानवदन्न दुर्जनः । चिरन्तनाभ्यासनिबन्धनेरिता गुणेषु दोषेषु च जायते मतिः ॥ २ ॥

( श्रीवीरनन्दी )

सन्तः सन्तु मम प्रसन्नमनसो वाचां विचारोद्यताः, सूतेऽम्भः कमलानि तत्परिमल वाता वितन्वन्ति यत् ।
कि वाऽभ्यर्थनयाऽनया यदि गुणोस्त्यासां ततस्ते स्वय, कर्तारः प्रथन न चेदथ यशःप्रत्यर्थिना तेन किम् ? ॥ ३ ॥

( श्रीसोमप्रभसूरिः )

विदुषामनुचरो

**वंशीधरः**

# विषयसूची

इति ।



श्रीप्रभाचन्द्राचार्यविरचितः

# प्रमेयकमलमार्त्तण्डः ।

श्रीस्याद्वादविद्यायै नमः ॥ सिद्धेर्धाम महारिमोहहननं कीर्त्तेः परं मन्दिरं मिथ्यात्वप्रतिपक्षमक्षयसुखं संशीतिविध्वंसनम् । सर्वप्राणिहितं प्रभेन्दुभवनं सिद्धं प्रमालक्षणं सन्तश्चेतसि चिन्तयन्तु सुधियः श्रीवर्द्धमानं जिनम् ॥ १ ॥ शास्त्रं करोमि वरमल्पतरावबोधो माणिक्यनन्दिपदपङ्कजसत्प्रसादात् । अर्थं न किं स्फुटयति प्रकृतं लघीयाँल्लोकस्य भानुकरविस्फुरिताद्गवाक्षः ॥ २ ॥ ये नूनं प्रथयन्ति नोऽसमगुणा मोहादवज्ञा जनास्ते तिष्ठन्तु न तान्प्रति प्रयतितैः प्रारभ्यते प्रक्रमः । सन्तः सन्ति गुणानुरागमनसो ये धीधनास्तान्प्रति प्रायैः शास्त्रकृतो यदत्र हृदये वृत्तं तदाख्यायते ॥ ३ ॥ त्यजति न विदधानः कार्यमुद्विज्य धीमान् खलजनपरिवृत्तेः स्पर्धते किन्तु तेन । किमु न वितनुतेऽर्कः पद्मबोधं प्रबुद्धस्तदपहृतिविधायी शीतरश्मिर्यदीह ॥ ४ ॥ अजडमदोषं दृष्ट्वा मित्रं सुश्रीकमुद्यतमतुष्यत् । विपरीतबन्धुसङ्गतिमुद्गिरति हि कुवलयं किं न ॥ ५ ॥

श्रीमदकलङ्कार्थोऽव्युत्पन्नप्रज्ञैरवगन्तुं न शक्यत इति तद्व्युत्पादनाय करतलामलकवत् तदर्थमुद्धृत्य प्रतिपादयितुकामस्तत्परिज्ञानानुग्रहेच्छाप्रेरितस्तदर्थप्रतिपादनप्रवणं प्रकरणमिदमाचार्यः प्राह । तत्र प्रकरणस्य सम्बन्धाभिधेयरहितत्वाशङ्कापनोदार्थं तदभिधेयस्य चाऽप्रयोजनवत्त्वपरिहारानभिमतप्रयोजनवत्त्वव्युदासाशक्यानुष्ठानत्वनिराकरणदक्षमक्षुण्णसकलशास्त्रार्थसङ्ग्रहसमर्थं प्रमाणेत्यादिश्लोकमाह–

१ भव्यसिद्धिं प्रति कारण भवति भगवानत आश्रयत्वेनाभिधीयते ॥ २ वाण्या ॥ ३ आश्रयम् ॥ ४ शास्त्रादौ देवशास्त्रगुरवो नमस्करणीया अत एव देवनमस्कृतौ श्रीवर्द्धमान विशेष्य कृत्वा हेतुहेतुमद्भावेनतयाऽन्वयानुसारेणान्यानि विशेषणानि योजयेत्, तत शास्त्रनमस्कृतौ प्रमालक्षण विशेष्य कृत्वा, गुरुनमस्कृतौ जिन विशेष्य कृत्वा, चान्यानि विशेषणानि योजयेत् ॥ ५ इष्टदेवतामभिष्टुत्य शास्त्र करोमीति प्रतिज्ञा कुर्वन्ति सूरय ॥ ६ अपि ॥ ७ माहात्म्यात् ॥ ८ दृष्टिगोचर ॥ ९ पश्यत ( इति शेष ) ॥ १० यद्यप्यय प्रक्रमो भवद्भि क्रियते, तथापि भवत्कृते प्रक्रमे केचन जना अवज्ञा विदधाना सन्तीत्याह ॥ ११ नकगुणा पुरुषा ॥ १२ ओणादिकोऽयमिकारान्तस्ततस्तस् । प्रयत्नादित्यर्थ ॥ १३ यद्यप्यय प्रक्रम प्रारभ्यते–तथापि स्वकृतिविरचितत्वात्सतामनादरणीयत्व न स्यादित्याह प्राग इति बाहुल्येनेत्यर्थ ॥ १४ माणिक्यनन्दिभट्टारकस्य ॥ १५ परीक्षामुखालङ्कारे ॥ १६ प्रवृत्त ॥ १७ यद्यपि मत प्रक्रम प्रारभ्यते तथापि दुष्टा दुष्टत्व न मुञ्चेयुस्ततस्ताय प्रक्रमो नारब्धव्य इत्युक्ते त्यजतीत्याह ॥ १८ उद्वेग प्राप्य ॥ १९ व्यापारात् ॥ २० मित्र सूर्य, पक्षे प्रभाचन्द्रम् ॥ २१ तुष्टिमगच्छत् ॥ २२ चन्द्र–॥ २३ सूचयति ॥ २४ कुमुद, पक्षे भूमण्डल ( मिथ्यादृष्टिसमूहम् ) ॥ २५ मणिवत् ॥ २६ सगृह्य ॥ २७ तयोरकलङ्कार्थाव्युत्पन्नयो यौ परिज्ञानानुग्रहौ तयोर्या इच्छा तया प्रेरित ॥ २८ दक्षम् ॥ २९ "शास्त्रैकदेशसम्बन्ध शास्त्रकार्यान्तरस्थितम् । आहु प्रकरण नाम शास्त्रभेद विपश्चित " ॥ शास्त्रैकदेशेत्यादिविशेषणात् साकल्येन प्रतिपादकभाष्यादे प्रकरणत्व परास्तम् । शास्त्रकार्यान्तर तु वैशद्य लघुत्व च । तच्चोपोद्घातप्रतिपादनभेदाद्द्विविधम् । तत्र प्रतिपाद्यमर्थं बुद्धौ सगृह्य ( आलोच्य ) प्रागेव तदर्थमर्थान्तरवर्णनमुपोद्घात । प्रतिपाद्यमर्थं बहिरेव परिज्ञाय पश्चात्तत्सिद्धये तद्धेतुवर्णन प्रतिपादनम् । सकलप्रतिपादकशास्त्रकार्यात् ( प्रकृतशास्त्रकार्याद् ) अन्यत्कार्यं कार्यान्तरम् ॥ ३० शास्त्रावतारे सति ॥ ३१ प्रस्तुतस्यार्थस्य अनुरोधेनोत्तरोत्तरस्य विधान सम्बन्ध ॥

प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्ययः । इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं लघीयसः ॥ १ ॥



सम्बन्धाभिधेयशक्यानुष्ठानेष्टप्रयोजनवन्ति हि[1] शास्त्राणि प्रेक्षावद्भिराद्रियन्ते नेतराणि-सम्बन्धाभिधेयरहितस्योन्मत्तादिवाक्यवत्तद्वतोऽप्यप्रयोजनवतः[3] काकदन्तपरीक्षावदनभिमतप्रयोजनवतो वा मातृविवाहोपदेशवदशक्यानुष्ठानस्य वा सर्वज्वरहरतक्षकचूडारत्नालङ्कारोपदेशवत् तैरनादरणीयत्वात् । तदुक्तं-'सिद्धार्थं सिद्धसम्बन्धं श्रोता श्रोतुं प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ १ ॥ सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यताम् ॥ २ ॥ अनिर्दिष्टफलं सर्वं न प्रेक्षापूर्वकारिभिः । शास्त्रमाद्रियते तेन वाच्यमग्रे प्रयोजनम् ॥ ३ ॥ शास्त्रस्य तु फले ज्ञाते तत्प्राप्त्याशावशीकृताः । प्रेक्षावन्तः प्रवर्त्तन्ते तेन वाच्यं प्रयोजनम् ॥ ४ ॥ यावत् प्रयोजनेनास्य सम्बन्धो नाभिधीयते । असम्बद्धप्रलापित्वाद्भवेत्तावदसङ्गतिः ॥५॥ तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः । शास्त्रावतारसम्बन्धो वाच्यो नान्योऽस्ति निष्फलः ॥ ६ ॥ ' इति । तत्रास्य प्रकरणस्य प्रमाणतदाभासयोर्लक्षणमभिधेयम् । अनेन च सहास्य प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धः । शक्यानुष्ठानेष्टप्रयोजनं तु साक्षात्तल्लक्षणव्युत्पत्तिरेव-'इति वक्ष्ये तयोर्लक्ष्म' इत्यनेनाऽभिधीयते । 'प्रमाणादर्थसंसिद्धिर्' इत्यादिकं तु परम्परयेति समुदायार्थः ॥ अथेदानीं व्युत्पत्तिद्वारेणाऽवयवार्थोऽभिधीयते ॥ अत्र प्रमाणशब्दः कर्तृकरणभावसाधनो द्रव्यपर्याययोर्भेदाऽभेदात्मकत्वात् स्वातन्त्र्यसाधकतमत्वादिविवक्षापेक्षया तद्भावाऽविरोधात् । तत्र क्षयोपशमविशेषवशात्स्वपरप्रमेयस्वरूपं प्र मिमीते यथावज्जानातीति प्रमाणमात्मा, स्वपरग्रहणपरिणतस्यापरतन्त्रस्याऽऽत्मन एव हि कर्तृसाधनप्रमाणशब्देनाभिधानं-स्वातन्त्र्येण विवक्षितत्वात् स्वपरप्रकाशात्मकस्य प्रदीपादेः प्रकाशाभिधानवत् ॥ साधकतमत्वादिविवक्षायां तु प्रमीयते येन तत्प्रमाणं प्रमितिमात्रं वा-प्रतिबन्धापाये प्रादुर्भूतविज्ञानपर्यायस्य प्राधान्येनाश्रयणात् प्रदीपादेः प्रभाभारात्मकप्रकाशवत् ॥ भेदाभेदयोः परस्परपरिहारेणावस्थानादन्यतरस्यैव वास्तवत्वादुभयात्मकत्वमयुक्तमित्यसमीक्षिताभिधानं-बाधकप्रमाणाभावात् । अनुपलम्भो हि बाधकं प्रमाणं, न चात्र सोऽस्ति-सकलभावेषूभयात्मकत्वग्राहकत्वेनैवाखिलाऽस्खलत्प्रत्ययप्रतीतेः । विरोधो[39] बाधक इत्यप्यसमीचीनमुपलम्भसम्भवात् । विरोधो[40] ह्यनुपलम्भसाध्यो यथा-तुरङ्गमोत्तमाङ्गे शृङ्गस्य ।

---

१ पूर्वोक्तलक्षण सम्बन्ध ॥ २ यस्मात् ॥ ३ "काकस्य कति वा दन्ता मेषस्याण्ड कियत्पलम् । गर्दभे कति रोमाणीत्येव मूर्खविचारणा" ॥ ४ ज्ञाताभिधेयमेवेत्यवधारण समर्थयमान प्राह ॥ ५ यदाद्रियते ॥ ६ अर्थशब्देनाभिधेय प्रयोजन च ॥ ७ शास्त्रम् ( इति शेष ) ॥ ८ प्रयुज्यते प्रतिपाद्यते इति प्रयोजनमभिधेय प्रयुक्ति , प्रयोजन फल ताभ्या सह वर्त्तते ॥ ९ ज्ञातफलमेवेति समर्थयते ॥ १० आदौ ॥ ११ फलम् ॥ १२ निरूपितेपि फले प्रवर्तन न भविष्यतीति शङ्कायामाह ॥ १३ कारणेन ॥ १४ सिद्धसम्बन्धमेव पद समर्थयमानोऽप्रेतनश्लोके ब्रूते ॥ १५ अभिधेयेन ॥ १६ परस्परसम्बन्धरहित शास्त्रम् ॥ १७ सम्बन्धादित्रयम् ॥ १८ साभिधेय ॥ १९ सफल ॥ २० साभिधेय सप्रयोजनश्च सम्बन्धो वाच्य ॥ २१ सम्बन्धादित्रयरहित ॥ २२ सम्बन्धादित्रये वक्तव्ये आदरणीयत्वे सति शास्त्रप्रारम्भकाले ॥ २३ प्रमाणेतरलक्षणस्य व्युत्पत्तिमन्तरेणापवर्गादे प्राप्तिर्न स्यादत एव साक्षात्त्वम् ॥ २४ श्लोकस्य ॥ २५ श्लोके ॥ २६ आत्मद्रव्यम् ॥ २७ ज्ञानपर्याय ॥ २८ साक्षाद् व्यापारे ॥ २९ भाव ॥ ३० कथन ॥ ३१ कर्तृसाधनोऽयम् ॥ ३२ भाव ॥ ३३ सम्बन्धिन ॥ ३४ करणे भावे चात्र घञ् ॥ ३५ पर शङ्कते ॥ ३६ भेदस्याऽभेदस्य वा ॥ ३७ पदार्थेषु ॥ ३८ उपलम्भो यत्र भेदस्तत्राभेद इति ॥ ३९ अभाव ॥ ४० अभावोऽर्थधर्मोयम् ॥ ४१ ज्ञानधर्मोऽयम् ॥ ४२ विरोध ॥

अन्यथा स्वरूपेणापि तद्वतो[1] विरोधः स्यात् । न चानेयो[2]रेकत्र वस्तुन्यनुपलम्भोस्ति-अभेदमात्रस्य भेदमात्रस्य वेतैर[3]निरपेक्षस्य वस्तुन्यप्रतीतेः । कल्पयता[4]प्यभेदमात्रं भेदमात्रं वा प्रतीतिरवश्याऽभ्युपगमनीया-तन्निबन्धनत्वाद्वस्तुव्यवस्थायाः । सा चेदुभयात्मन्यप्यस्ति किं तत्र स्वसिद्धान्तविषमग्रहनिबन्धनप्रद्वेषेण[5]- अप्रामाणिकत्वप्रसङ्गादित्यलमतिप्रसङ्गेन-अनेकान्तसिद्धिप्रक्रमे विस्तरेणोपक्रमात्[6] । वक्ष्यमाण[7]लक्षणलक्षितप्रमाणभेदमनभिप्रेत्या[8]नन्तर[9]सकलप्रमाणविशेषसाधारणप्रमाणलक्षणपुरःसरः 'प्रमाणाद्' इत्येकवचननिर्देशः कृतः ॥ कौ[10] हेतौ ॥ अर्थ्यतेऽभिलष्यते प्रयोजनार्थिभिरित्यर्थो हेय उपादेयश्च । उपेक्षणी[11]यस्यापि परित्यजनीयत्वाद्धेयत्व[12]मुपादानक्रियां प्रत्यकर्म[13]भावान्नोपादेयत्वं हानक्रियां प्रति विपर्यया[14]त्तत्त्वम्[15] । तथा च लोको वदत्यहम[16]नेनोपेक्षणीयत्वेन परित्यक्त इति । सिद्धिरसतः[17] प्रादुर्भावोऽभिलषित[18]प्राप्तिर्भावज्ञप्तिश्चोच्यते । तत्र[19] ज्ञापक[20]प्र[21]करणा[22]दसतः प्रादुर्भावलक्षणा सिद्धिर्नेह गृह्यते । समीचीना सिद्धिः संसिद्धिरर्थस्य संसिद्धिर् 'अर्थसंसिद्धिर्' इति । अनेन कारणान्तरा[23]हितविपर्यासादिज्ञाननिबन्धनाऽर्थसिद्धिर्निरस्ता । जातिप्रकृत्या[25]दिभेदेनोपकारकार्थसिद्धिस्तु संगृहीता । तथाहि । केवल[24]निम्बलवणरसादावस्मदादीनां द्वेषबुद्धिविषये निम्बकीटोष्ट्रादीनां जात्या[26]ऽभिलापबुद्धिरुपजायते, असमदाद्यभिलापविषये चन्दनादौ तु तेषां द्वेषः-तथा पित्तप्रकृतेरुष्णस्पर्शे द्वेषो-वातप्रकृतेरभिलापः-शीतस्पर्शे तु वातप्रकृतेर्द्वेषो[27] न पित्तप्रकृतेरिति । न चैतज्ज्ञानमसत्यमेव-हिता[28]ऽहितप्राप्तिपरिहारसमर्थत्वात् प्रसिद्धसत्यज्ञानवत् । हिताऽहितव्यवस्था चोपकारकत्वापकारकत्वाभ्यां प्रसिद्धेति । तदिव स्वपरप्रमेयस्वरूपप्रतिभासिप्रमाणमिवाभासत इति तदाभासं सकलमतसम्मता[29]ऽवबुद्धक्षणिकाद्येकान्ततत्त्वज्ञानं सन्निकर्षोऽविकल्पक[30]ज्ञानाऽप्रत्यक्षज्ञानज्ञानान्तरप्रत्यक्षज्ञानाऽनाप्तप्रणीताऽऽगमा[31]ऽविनाभावविकललिङ्गनिबन्धना[32]ऽभिनिबोधा[33]दिकं[34] संशयविपर्यासानध्यवसायज्ञानं च, तस्माद्विपर्ययोऽभिलषितार्थस्य स्वर्गापवर्गादेरनवद्यतत्साधनस्य वैहिकसुखदुःखादिसाधनस्य वा सम्प्राप्तिज्ञप्तिलक्षणसमीचीनसिद्ध्यभावः । प्रमाणस्य प्रथमतोऽभिधानं[35] प्रधानत्वात् । न चैतदसिद्धं-सम्यग्ज्ञानस्य निःश्रेयसप्राप्तेः[36] सकलपुरुषार्थोपयोगित्वात्, निखिलप्रयासस्य प्रेक्षावतां तदर्थत्वात्, प्रमाणेतरविवेक[37]स्यापि तत्प्रसाध्यत्वाच्च । तदाभासस्य तूक्तप्रकाराऽसम्भवादप्राधान्यम् । '[38]इति' हेत्वर्थे । पुरुषार्थसिद्ध्यसिद्धिनिबन्धनत्वादिति हेतोः 'तयोः' प्रमाणतदाभासयो 'र्लक्ष्म' असाधारणस्वरूपं व्यक्ति[39]भेदेन[40] तज्ज्ञप्तिनिमित्तं

---

१ पदार्थस्य ॥ २ भावाभावयो ॥ ३ भेदस्याभेदस्य वा ॥ ४ प्रतिवादिना ॥ ५ अन्यथेति शेष ॥ ६ प्रारम्भात् ॥ ७ विशदं प्रत्यक्षमविशदं परोक्षमिति ॥ ८ अविवक्षितत्वात् ॥ ९ स्वापूर्वेत्यादि ॥ १० पञ्चमी ॥ ११ अर्थस्य ॥ १२ हेयत्वेऽपेऽन्तर्भावादित्यर्थ ॥ १३ ज्ञानविषयभूत वस्तु कर्माभिधीयते मध्यस्थभावेन स्थितत्वात्कर्मभाव न प्राप्त इत्यर्थ ॥ १४ कर्मभावात् ॥ १५ हेयत्वम् ॥ १६ पुरुषेण ॥ १७ यथा कुलालाद्घटसिद्धि ॥ १८ पदार्थ ॥ १९ त्रिष्वर्थेषु मध्ये ॥ २० प्रमाणादर्थसंसिद्धिरिति ॥ २१ षष्ठी ॥ २२ ज्ञापकपक्षस्य प्रकरणात् प्रस्तावात् ॥ २३ चक्षुरादिकारणादन्यत्कारण काचकामलादि मिथ्यात्वादि वा कारणान्तरम् ॥ २४ अवस्थाक्षेत्रकालादि वा ॥ २५ अन्यरससयोगरहित ॥ २६ उष्ट्रादिजात्या कृत्वा ॥ २७ निम्बकीटकस्य निम्ब कटुकोऽपि हितत्वात् स एव रोचते ॥ २८ वैनयिकवादिज्ञानम् ॥ २९ सकलमतानि सम्मतानि यस्य स सकलमतसम्मतो विनयवादी तस्यावबुद्धिर्ज्ञान तदाभासमित्यर्थ ॥ ३० निर्विकल्पक ॥ ३१ अपौरुषेय ॥ ३२ अनुमान ॥ ३३ लिङ्गाभिमुखनियतस्य लिङ्गिनो बोधन वा ॥ ३४ उपमानार्थापत्त्यभावप्रमाणानि ॥ ३५ घटते ॥ ३६ मर्यादाया का ( पञ्चमी ) ॥ ३७ भेदस्य ॥ ३८ 'हेतावेवप्रकारादौ व्यवच्छेदे विपर्यये । अधिकारे समाप्तौ च इतिशब्द प्रकीर्तित' ॥ ३९ तदाभासेभ्य ॥ ४० व्यक्तिभेदेनाऽसाधारणत्व स्वव्यक्त्यभेदेन साधारणत्वमिति स्याद्वादसिद्धि ॥

लक्षणं 'वक्ष्ये'। व्युत्पादनार्हत्वात्तल्लक्षणस्य यथावत्तत्स्वरूपं प्रस्पष्टं कथयिष्ये। अनेन ग्रन्थकारस्य तद्व्युत्पादने स्वातन्त्र्यव्यापारोऽवमीयते-निखिललक्ष्यलक्षणभावावबोधोऽन्योपकारनियतचेतोवृत्तित्वात्तस्य। ननु चेदं वक्ष्यमाणं प्रमाणेतरलक्षणं पूर्वशास्त्रप्रसिद्धं तद्विपरीतं वा, यदि पूर्वशास्त्राऽप्रसिद्धं तर्हि तद्व्युत्पादनप्रयासो नारम्भणीयः-स्वरुचिविरचितत्वेन सतामनादरणीयत्वात्, तत्प्रसिद्धं तु नितरामेतन्न व्युत्पादनीयं-पिष्टपेषणप्रसङ्गादित्याह-'सिद्धमल्पम्'। प्रथमविशेषणेन व्युत्पादनवत्तल्लक्षणप्रणयने स्वातन्त्र्यं परिहृतम्। तदेवाकलङ्कमिदं पूर्वशास्त्रपरम्पराप्रमाणप्रसिद्धं लघूपायेन प्रतिपाद्य प्रज्ञापरिपाकार्थं व्युत्पाद्यते-न स्वरुचिविरचितं-नापि प्रमाणानुपपन्नं-परोपकारनियतचेतसो ग्रन्थकृतो विनेयविसंवादने प्रयोजनाभावात्। तथाभूतं हि वदन् विसंवादकः स्यात्। अल्पमिति विशेषणेन यदन्यत्राऽकलङ्कदेवैर्विस्तरेणोक्तं प्रमाणेतरलक्षणं-तदेवात्र संक्षेपेण विनेयव्युत्पादनार्थमभिधीयत इति पुनरुक्तत्वनिरासः। विस्तरेणान्यत्राभिहितस्यात्र संक्षेपाभिधाने विस्तररुचिविनेयविदुषां नितरामनादरणीयत्वम्। को हि नाम विशेषव्युत्पत्त्यर्थी प्रेक्षावांस्तत्साधनाऽन्यसद्भावे सत्यन्यत्राऽतत्साधने कृतादरो भवेदित्याह-'लघीयसः'। अतिशयेन लघवो हि लघीयांसः संक्षेपरुचय इत्यर्थः। कालशरीरपरिमाणकृतं तु लाघवं नेह गृह्यते-तस्य व्युत्पाद्यत्वव्यभिचारात्, क्वचित्तथाविधे व्युत्पादकस्याऽप्युपलम्भात्। तस्मादभिप्रायकृतमिह लाघवं गृह्यते। येषां संक्षेपेण व्युत्पत्त्यभिप्रायो विनेयानां तान् प्रतीदमभिधीयते-प्रतिपादकस्य प्रतिपाद्याशयवशवर्त्तित्वात्। 'अकथितम्' इत्यनेन कर्मसंज्ञायां सत्यां कर्मणीप्। ननु चेष्टदेवतानमस्कारकरणमन्तरेणैवोक्तप्रकाराऽऽदिश्लोकाभिधानमाचार्यस्याऽयुक्तम्। अविघ्नेन शास्त्रपरिसमाप्त्यादिकं हि फलमुद्दिश्येष्टदेवतानमस्कारं कुर्वाणाः शास्त्रकृतः शास्त्रादौ प्रतीयन्ते इत्यप्यसमीक्षिताभिधानं-वाङ्नमस्काराऽकरणेपि कायमनोनमस्कारकरणात्। त्रिविधो हि नमस्कारो-मनोवाक्कायकारणभेदात्। दृश्यते चातिलघूपायेन विनेयव्युत्पादनमनसां धर्मकीर्त्त्यादीनामप्येवंविधा प्रवृत्तिः-वाङ्नमस्कारकरणमन्तरेणैव'सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिः' इत्यादिवाक्योपन्यासात्। यद्वा वाङ्नमस्कारोऽप्यनेनैवादिश्लोकेन कृतो ग्रन्थकृता। तथा हि। मा अन्तरङ्गबहिरङ्गानन्तज्ञानप्रातिहार्यादिश्रीः अण्यते शब्द्यतेयेनार्थोऽसावाणः शब्दो, मा चाणश्च माणौ, प्रकृष्टौ महेश्वराद्यसम्भविनौ माणौ यस्याऽसौ प्रमाणो भगवान् सर्वज्ञो दृष्टेष्टाऽविरुद्धवाक् च, तस्मादुक्तप्रकारार्थसंसिद्धिर्भवति। तदाभासात्तु महेश्वरादेर्विपर्ययस्तत्संसिद्ध्यभावः। इति वक्ष्ये तयोर्लक्ष्म 'सामग्रीविशेषविश्लेषिताऽखिलावरणमतीन्द्रियम्०' इत्याद्यसाधारणस्वरूपं प्रमाणस्य, किंविशिष्टं, सिद्धं वक्ष्यमाणप्रमाणप्रसिद्धं, तद्विपरीतं तु तदाभासस्य, तच्चाऽल्पं संक्षिप्तं यथा भवति तथा, लघीयसः प्रति वक्ष्ये तयोर्लक्ष्मेति। शास्त्रा-

---

१ नूनू द्विकर्मक ॥ २ व्युत्पत्तिकरणार्हत्वात् ॥ ३ भा। कृत्वा ( तृतीयान्त तेन कृत्वेत्यर्थ )॥ ४ पर ॥ ५ पुनरुक्तत्वप्रसङ्गात् ॥ ६ ईप्। यथा-( व्युत्पादने यथा )॥ ७ कथने॥ ८ प्रमाणतदाभासलक्षणम् अकलङ्केन प्रोक्तमाकलङ्कम्। कलङ्केन दोषेण रहित वा ॥ ९ पूर्वशास्त्रपरम्परा च प्रमाण चेति पूर्वशास्त्रपरम्पराप्रमाणे ताभ्यामित्यर्थ ॥ १० परम्पराप्रमाणप्रसिद्धमिति वा पाठ ॥ ११ संक्षिप्तशब्दरूपेण ॥ १२ प्रतारणे ॥ १३ प्रतारक ॥ १४ प्रमाणसंग्रहादौ ॥ १५ परीक्षामुखे ॥ १६ प्रमाणसंग्रहादौ ॥ १७ प्रमाणसंग्रहादिसद्भावे ॥ १८ परीक्षामुखे ॥ १९ विशेषव्युत्पत्त्यसाधने ॥ २० न कोपि ॥ २१ तर्हि कान् प्रतीत्याशङ्कायामाह ॥ २२ विमतो व्युत्पाद्यकालकृतलाघवादित्युक्ते गर्भाऽष्टमवर्षादिजातज्ञानसम्पन्नेन व्यभिचारात्। वीत प्रतिपाद्य कायकृतलाघवादित्युक्ते अधीतशास्त्रेण कुब्जादिनाऽनेकान्तात्। तयोर्व्युत्पादकत्वादिति भाव ॥ २३ बुद्धि ॥ २४ गुरो ॥ २५ शिष्य ॥ २६ सूत्रेण ॥ २७ इप् द्वितीया ॥ २८ पर ॥ २९ उपायेन शब्देनेत्यर्थ ॥ ३० बौद्धाचार्याणाम् ॥ ३१ अथ वा ॥ ३२ 'कश्चित्पुरुष' इत्यादि ॥

रम्भे चाऽपरिमितगुणोदधेर्भगवतो गुणलवव्यावर्णनमेव वाक्स्तुतिरित्यलमतिप्रसङ्गेन ॥ छ ॥ प्रमाणविशेपलक्षणोपलक्षणाकाङ्क्षायास्तत्सामान्यलक्षणोपलक्षणपूर्वक-त्वात् प्रमाणस्वरूपविप्रतिपत्तिनिराकरणद्वारेणाऽऽधतत्सामान्यलक्षणोपलक्षणायेदमभिधीयते—

## स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् ॥ १ ॥

प्रमाणत्वान्यथानुपपत्तेरित्ययमत्र हेतुर्द्रष्टव्यः । विशेपणं हि व्यवच्छेदफलं भवति । तत्र प्रमाणस्य ज्ञानमिति विशेपणेनाऽव्यभिचारादिविशेषणविशिष्टार्थोपलब्धिजनकं कारकसाकल्यं साधकतमत्वात् प्रमाणमिति प्रत्याख्यातं-तस्याऽज्ञानरूपस्य प्रमेयार्थवत् स्वपरपरिच्छित्तौ साधकतमत्वाभावतः प्रमाणत्वायोगात्-तत्परिच्छित्तौ साधक-तमत्वस्याऽज्ञानविरोधिना ज्ञानेन व्याप्तत्वात् । छिदौ परश्वादिनों साधकतमेन व्यभिचार इत्ययुक्तं-तत्परिच्छित्ताविति विशेपणात्-न खलु सर्वत्र साधकतमत्वं ज्ञानेन व्याप्तं-परश्वादेरपि ज्ञानरूपताप्रसङ्गात्, अज्ञानरूपस्यापि प्रदीपादेः स्वपरपरिच्छित्तौ साधकतमत्वोपलम्भात्तेन तस्याऽव्याप्तिरित्यप्ययुक्तं-तस्योपचारात्तत्र साधकतमत्वव्यवहारात् । साकल्यस्याप्युपचारेण साधकतमत्वोपगमे न किंचिदनिष्टम् । मुख्यरूपतया हि स्वपरपरिच्छित्तौ साधकतमस्य ज्ञानस्योत्पादकत्वात् तस्यापि साधकतमत्वम् । तस्माच्च प्रमाणं-कारणे कार्योपचारात्-अन्नं वै प्राणा इत्यादिवत् । प्रदीपेन मया दृष्टं चक्षुपाऽवगतं धूमेन प्रतिपन्नमिति लोकव्यवहारोऽप्युपचा-रतो यथा ममाऽयं पुरुपश्चक्षुरिति-तेपां प्रमितिं प्रति बोधेन व्यवधानात् । तस्य त्वपरेणाव्यवधानात्तन्मुख्यम् । न च व्यपदेशमात्रात्पारमार्थिकवस्तुव्यवस्था नड्वलो-दकं पादरोग इत्यादिवत् । ततो यद्बोधाऽबोधरूपस्य प्रमाणत्वाभिधानकं 'लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्' इति-तत्प्रत्याख्यातं-ज्ञानस्यैवाऽनुपचरित-प्रमाणव्यपदेशार्हत्वात् । तथा हि । यद्यत्राऽपरेण व्यवहितं न तत्तत्र मुख्यरूपतया साधकतमव्यपदेशार्हं, —यथा हि च्छिदिक्रियायां कुठारेण व्यवहितोऽयस्कारः । स्वपरपरिच्छित्तौ विज्ञानेन व्यवहितं च परपरिकल्पितं साकल्यादिकमिति । तस्मात् कारकसाकल्यादिकं साधकतमव्यपदेशार्हं न भवति । किं च स्वरूपेण प्रसिद्धस्य

---

१ वचसा नमस्कारकरण तु तस्य सस्तवनम् ॥ २ पूर्वपक्षेण ॥ ३ परिज्ञान ॥ ४ साध्ये ॥ ५ लक्षणेत्यावृत्तिफल तदाभासत्परिहारफलमित्यथ ॥ ६ अविपर्यय व्यभिचारो नाम अतिव्याप्ति ॥ ७ अव्याप्त्यतिव्याप्त्यसभवा-दिरहितविशेपणसभवसशयादिव्यभिचार ॥ ८ प्रतीति ॥ ९ जरनैयायिका आत्माकाशादीना साकल्य प्रमाणमित्याहु ॥ १० जानन्त प्रति निरस्तम् ॥ ११ घटवत् ॥ १२ व्याप्यस्य ॥ १३ पर ॥ १४ अज्ञानरूपेण ॥ १५ कारणत्वेनाभिप्रेते वस्तुनि ॥ १६ अन्यथा ॥ १७ पर ॥ १८ यद्यदज्ञानविरोधिज्ञानेन व्याप्त तत्तत्स्वपरपरिच्छित्तौ साधकतममतोऽज्ञानरूपस्य स्वपरपरिच्छित्तौ साधकतमस्य तेन ज्ञानेनाव्याप्ति ॥ १९ न परमार्थत ॥ २० प्रदीपस्य स्वपरप्रकाशकरूपेण साधकतमत्व न तु स्वपरपरिच्छित्त्यात्मकत्वेनेति भाव ॥ २१ परे ॥ २२ जैनानाम् ॥ २३ ज्ञानजनकत्वेन ॥ २४ अज्ञानरूपत्वादित्यस्य हेतोरनैकान्तिकत्वे ॥ २५ प्रदीपादे प्रामाण्यम् ॥ २६ वस्तुरूप वह्नि ॥ २७ ज्ञानधर्मसाधकतमस्य ॥ २८ अग्निस्वरूपम् ॥ २९ साधकतमज्ञानहेतुत्वेन ॥ ३० साधकतमत्वेन ॥ ३१ साधकतमज्ञानस्य हेतुत्वेन ॥ ३२ प्रमितिक्रिया प्रति ॥ ३३ परिच्छित्ति प्रति प्रदीपादे साधकतमत्व न मुख्यम् ॥ ३४ प्रदीपादे-साधकतमत्वमिति व्यपदेशमात्रात् ॥ ३५ प्रदीपादे प्रामाण्यम् ॥ ३६ 'शाड्वल हरित प्रोक्त। नड्वल नडसयुतम् ' ( क ) तृणसयुतमुदक नड्वल कथ्यते ॥ ३७ पादरोगकारणतया व्यपदिश्यमान नड्वलोदक यथा पादरोगत्वेन न पारमार्थिक तथा प्रकृतमपि ॥ ३८ ज्ञानस्यैव साधकतमत्व यत ॥ ३९ नैयायिकस्य वैशेषिकस्य च ॥ ४० शासनादिलोके पत्रादे, तत्प्रमाणम् ॥ ४१ पुरुषा प्रमाणम् ॥ ४२ अनुभव प्रमाणम् ॥ ४३ प्रदीपादि लिखितादि ॥ तथाहीत्यत्र कारकसाकल्यादिक धर्मि । मुख्यरूपतया साधकतमव्यपदेशार्हं न भवतीति धर्म । स्वपरपरिच्छित्तौ विज्ञानेन व्यवहितत्वात् प्रदीपादिवत् ॥ ४४ ज्ञातस्य ॥

प्रमाणत्वादिव्यवस्था स्यान्नान्यथा-अतिप्रसङ्गात्-न च साकल्यं स्वरूपेण प्रसिद्धम्। तत्स्वरूपं हि सकलान्येव कारकाणि तद्धर्मो वा स्यात्, तत्कार्यं वा पदार्थान्तरं वा
गत्यन्तराभावात्। न तावत्सकलान्येव तानि साकल्यस्वरूपं-कर्तृकर्माभावे तेषां करणत्वानुपपत्तेः । तद्भावे वान्येषां कर्तृकर्मरूपता तेषामेव वा, तावदन्येषां सक-
लकारकव्यतिरेकेणान्येषामभावात् भावे वा न कारकसाकल्यं, नापि तेषामेव कर्तृकर्म्मरूपता करणत्वाभ्युपगमात्। न चैतेषां कर्तृकर्मरूपाणामपि करणत्वं-परस्परविरो-
धात्। कर्तृता हि ज्ञानचिकीर्षाप्रयत्नाधारता स्वातन्त्र्यं वा, निर्वर्त्यत्वादिधर्मयोगित्वं कर्मत्वं, करणत्वं तु प्रधानक्रियाऽनाधारत्वमित्येतेषां कथमेकत्र सम्भवः। तन्न सकल-
कारकाणि साकल्यम्। नापि तद्धर्मः। स हि संयोगोऽन्यो वा? संयोगश्चेन्नास्याऽनन्तरं-विस्तरतो निषेधात्। अन्यश्चेन्नास्य साकल्यरूपतेत्यतिप्रसङ्गात्-व्यस्तार्थानामपि
तत्सम्भवात्। किं चाऽसौ कारकेभ्योऽव्यतिरिक्तो व्यतिरिक्तो वा? यद्यव्यतिरिक्तस्तदा धर्ममात्रं कारकमात्रं वा स्यात्। व्यतिरिक्तश्चेत्सम्बन्धाऽसिद्धिः। सम्बन्धेऽपि
वा सकलकारकेषु युगपत्तस्य सम्बन्धेऽनेकदोषदुष्टसामान्यादिरूपतापत्तिः, क्रमेण सम्बन्धे सकलकारकधर्मता साकल्यस्य न स्यात् यदैव हि तस्यैकेन हि सम्बन्धो न तदै-
वाऽन्येनेति। नापि तत्कार्यं साकल्यम्। नित्यानां तज्जननस्वभावत्वे सर्वदा तदुत्पत्तिप्रसक्तिः, एकप्रमाणोत्पत्तिसमये सकलतदुत्पाद्यप्रमाणोत्पत्तिश्च स्यात्। तथा हि।
यदा यज्जनकमस्ति-तत्तदोत्पत्तिमत्प्रसिद्धं, यथा तत्कालाभिमतं प्रमाणम्। अस्ति च पूर्वोत्तरकालभाविनां सर्वप्रमाणानां तदा नित्याभिमतं जनकमात्मादिकं कारणमित्या
त्मादिकारणे सत्यपि तेषामनुत्पत्तौ ततः कदाचनाप्युत्पत्तिर्न स्यादिति सकलं जगत् प्रमाणविकलमापद्येत । आत्मादौ तत्करणसमर्थे सत्यपि स्वयमेव तेषां
यथाकालं भावे तत्कार्यताविरोधः-तस्मिन् सत्यप्यभावात्-स्वयमेवान्यदा भावात्। न च स्वकालेपि तत्सद्भावे भावात्तत्कार्यता गगनादिकार्यताप्रसक्तेः। न च तस्यापि
तत्प्रति कारणत्वस्येष्टेरदोषोयमिति वक्तव्यम्-आत्माऽनात्मविभागाभावप्रसङ्गात्। यत्र प्रमितिः समवेता सोत्रात्मा नान्य इत्यप्यनालोचितवचनं-समवायाऽसिद्धौ सम-
वेतत्वाऽसिद्धेः । यदा यत्र यथा यद्भवति तदा तत्र तथाऽऽत्मादेस्तत्करणसमर्थत्वान्नैकदा सकलप्रमाणोत्पत्तिप्रसक्तिरित्यप्यसम्भाव्यं तत्स्वभावभूतसामर्थ्यभेद-
मन्तरेण कार्यस्य कालादिभेदायोगात्। अन्यथा दृष्टस्य पृथिव्यादिकार्यनानात्वस्याऽदृष्टपार्थिवादिपरमाण्वादिकारणचातुर्विध्यं किमर्थं समर्थ्यते। नित्यस्वभावमेकमेव हि

१ साधकतमत्व ॥ २स्वरविषाणादे ॥ ३अत्र यथासख्य स्वार्थे भावे कर्मणि ष्यण् ॥ ४प्रमाणरूपसाकल्यस्य करणस्वरूपत्व यत ॥ ५कारकाणाम् ॥ ६ मीमासकाना कर्त्रादीना लक्षणमिदम् ॥ ७"व्याप्य विषयभूत च निर्वत्य
विक्रियात्मकम्। कर्तुश्च क्रियया व्याप्तमीप्सितानीप्सितेतरत्" ॥ ८ छेदनम । उत्क्षेपणापक्षेपणस्यैव आधारत्व न तु च्छिदेरित्यर्थ ॥ ९ कर्मकर्त्रोरेव छिदि प्रमितिलक्षणप्रधानक्रियाधारत्व न तु करणस्य ॥ १० विरुद्धधर्माणाम् ॥
११ साकल्ये ॥ १२ प्रमेयत्वप्रमातृत्वसत्त्वादि ॥ १३ सन्निकर्ष ॥ १४ साधारमिदमग्रे ॥ १५ अन्यधर्म ॥ १६ कारकाणा द्वित्र्यादीनाम् ॥ १७ धर्मो वा कारकरूपधर्मो वा स्यात् कारकेभ्योऽन्यधर्मस्याव्यतिरिक्तत्वात् ॥ १८ एक
स्वभावेनानेकस्वभावेन च वृत्तौ सामान्यानवस्थादय स्यु ॥ १९ सामान्यादौ ये दोषास्तेऽत्रापि स्युरित्यर्थ । एकस्वभावेन स्वभावभेदेन च वृत्तो सामान्यत्वानवस्थादय ॥ २० अवयवी ॥ २१ रूपमिव रूप यस्य तद्धर्मस्य
सामान्ये ये दोषास्तेऽत्रापि स्यु ॥ २२ कारकेण ॥ २३ नेत्रोद्घाटनयोग्यदेशगमनादि ॥ २४ आत्माकाशकालदिग्मनसाम् ॥ २५ कार्यलक्षणसाकल्यप्रमाणस्य ॥ २६ सकलपदार्थपरिच्छेदककार्यलक्षणसाकल्यप्रमाणानामुत्पत्ति
स्यात् ॥ २७ कारणाऽधीनानि कार्याणि यत ॥ २८ उपनय ॥ २९ विवक्षितकालाऽभिमतकार्योत्पत्तिसमये ॥ ३० कार्यविकलम् ॥ ३१ युगपत् प्रमाणकार्यस्य ॥ ३२ अन्यथा ॥ ३३ पर ॥ ३४ गगनादि ॥
३५ चतुर्थपरिच्छेदेऽस्य निराकरिष्यते ॥ ३६ पर, ॥ ३७ आत्मादि ॥ ३८ नानाकार्याणि विभिन्नशक्तिहेतुकानि विभिन्नकार्यत्वात् पृथ्व्यादिभेदकार्यवत् ॥ ३९ सर्वेषा कार्याणा युगपदुत्पत्तिर्यत ॥ ४० देशस्वभाव ॥ ४१ तत्सा
मर्थ्यभेद विनापि कार्यस्य कालादिभेदो भविष्यतीति चेत् ॥ ४२ प्रत्यक्षस्य ॥ ४३ आप्यतैजसवायवीय ॥ ४४ द्व्यणुकादि ॥ ४५ नरादि ॥

किञ्चित्समर्थनीयम् । यथा च कारणजातिभेदमन्तरेण कार्यभेदोनोपपद्यते तथा तच्छक्तिभेदमन्तरेणापि । न च ययैकयाशक्त्यैकमनेकाः शक्तीर्बिभर्ति तत्राप्यनेकशक्तिपरिकल्पनेऽनवस्थाप्रसङ्गात् । तयैव तदनेकं कार्यं करिष्यतीति वाच्यम् । यतो न भिन्नाः शक्तीः कयाचिच्छक्त्या कश्चिद्धारयतीति जैनो मन्यते । स्वकारणकलापात्तदात्मकस्यैवाऽस्योत्पादात् । सहकारिसव्यपेक्षाणां जनकत्वाद्देशकालस्वभावभेदः कार्ये न विरुध्यतइत्यपि वार्तम् । नित्यस्यानुपकार्यतया सहकार्यऽपेक्षाया अयोगात् । सहकारिणो हि भावाः किं विशेषाधायित्वेनैकार्थकारित्वेन वाभिधीयन्ते । प्रथमपक्षे किमसौ विशेषस्तेभ्यो भिन्नोऽभिन्नो वा तैर्विधीयते । भेदे सम्बन्धासिद्धेस्तदवस्थमेवाकारकत्वमेतेषां पूर्वावस्थायामिव पश्चादप्यनुपज्यते । तदसिद्धिश्च समवायादिसम्बन्धस्याग्रे निराकरिष्यमाणत्वात् सुप्रसिद्धा । विभिन्नातिशयात् कार्योत्पत्तौ चात्र कारकव्यपदेशोऽपि कल्पनाशिल्पिकल्पित एवातिशयस्यैव कारकत्वात् । द्वितीयपक्षे तु कथमेतेषां नित्यता उत्पादविनाशात्मकातिशयाद भिन्नत्वात्तत्स्वरूपवत् । एकार्थकारित्वेन त्वेषां सहकारित्वं नास्माभिः प्रतिक्षिप्यते । किन्त्वपरिणामित्वे तेषा प्राक् पश्चात् पृथग्भावावस्थायामपि कार्यकारित्वप्रसङ्गतः सहैव कुर्वन्तीति नियमो न घटते । न खलु साहित्येऽपि भावाः पररूपेण कार्यकारिणः । स्वयमकारकाणामन्यसन्निधानेऽपि तत्कारित्वासम्भवात् । सम्भवे वा पर एव परमार्थतः कार्यकारको भवेत् । स्वात्मनि तु कारकव्यपदेशो विकल्पकल्पितो भवेत् । तथा चान्यस्यानुपकारिणो भावमनपेक्ष्यैव कार्यं तद्विकलेभ्य एव सहकारिभ्यः समुत्पद्येत । तेभ्योऽपि वा न भवेत् । स्वयं तेषामप्यकारकत्वात् पररूपेणैव कारकत्वात् । अतः सर्वेषा स्वयमकारकत्वे पररूपेणाप्यकारकत्वात् तद्वार्तोच्छेदतो न कुतश्चित् किञ्चिदुत्पद्येत । ततः स्वरूपेणैव भावाः कार्यस्य कर्तार इति न कदाचित्तत्क्रियोपरतिः स्यात् । ननु कार्याणां सामग्रीप्रभवस्वभावत्वात् तस्याश्चापरापरप्रत्यययोगरूपत्वात्प्रत्येकं नित्यानां तत्क्रियास्वभावत्वेऽप्यनुत्पत्तिस्तेषामिति तदप्यसाम्प्रतम् । यतोऽयमेकोऽपि भावः क्रमभाविकार्योत्पादने समर्थोऽतः कथमेषां भिन्नकालापरापरप्रत्यययोगलक्षणाऽनेकसामग्रीप्रभवस्वभावता स्यात् । एकेनापि हि तेन तज्जननसामर्थ्यं बिभ्राणेन तान्युत्पादयितव्यानि कथमन्यथा केवलस्य तज्जननस्वभावता सिद्ध्येत् तस्याः कार्यप्रादुर्भावानुमीयमानस्वरूपत्वात् । प्रयोगो यो यन्न जनयति नासौ तज्जननस्वभावः । यथा गोधूमो यवाङ्कुरमजनयन्न

१ कारणम् ॥ २ पार्थिवादिजाति ॥ ३ अत्राभिप्रायस्तु योग्यतावच्छिन्नस्वरूपसहकारिसमवधानमेव शक्तिरिति गौतमीयन्यायिकेरेशे द्रव्याच्छक्तिरुत्पद्यते चेति जैना वदन्तीति मत्वा दूषण वदत्पर तद्दूषणपरिजिहीर्षया न चेत्याह ॥ ४ आत्मादिकारण ॥ ५ अनेकशक्तिधारणे ॥ ६ कारणस्य ॥ ७ हे जैन तत्र हेतो ॥ ८ आत्मादि ॥ ९ परेण ॥ १० आत्मा ॥ ११ आत्मादि ॥ १२ पुण्यपाप ॥ १३ आत्मादे ॥ १४ नानाशक्त्यात्मकस्य ॥ १५ पर ॥ १६ आत्मादीना ॥ १७ कारणाना ॥ १८ कार्यस्य ॥ १९ अतिशय उपकार ॥ २० कारकविशेष क्रियते ते ॥ २१ कारकाणा विशेषाध्यारोपक, तेन ॥ २२ एककार्यकरणत्वेनोभयोरपि ॥ २३ कारकेभ्य ॥ २४ सहकारिरहितावस्थायामिव २५ जनकत्वेन ॥ २६ आत्मादे ॥ २७ आत्मादीना ॥ २८ अतिशयस्वरूपवत् ॥ २९ सहकारिणा ॥ ३० जैने ॥ ३१ सहकारिभ्य ॥ ३२ भिन्नभावावस्थाया ॥ ३३ सहकारिभि ॥ ३४ सहकारिणा ॥ ३५ आत्मादय ॥ ३६ सहकारिरूपेण ॥ ३७ आत्मादीना ॥ ३८ सहकारि ॥ ३९ आत्मादौ ॥ ४० एव सति ॥ ४१ आत्मन ॥ ४२ जनकत्वेन ॥ ४३ मद्वात । मुख्यकारकस्य स्वरूप ॥ ४४ आत्मादिक ॥ ४५ सहकारिकारकेभ्य ४६ स्वरूपेण ॥ ४७ आत्मादिरूपेण ॥ ४८ आत्मादिरूपेणापि ॥ ४९ कारक ॥ ५० कार्य ॥ ५१ स्वाधीनतया ॥ ५२ कार्य ॥ ५३ करण ॥ ५४ विश्राम ॥ ५५ पर ॥ ५६ कारण ॥ ५७ कदाचित् रूपभिन्नकालक्रमभाविकारणयोगरूपत्वात् ॥ ५८ केवल ॥ ५९ करण ॥ ६० नित्य ॥ ६१ कारण । भा ॥ ६२ नित्यस्य ॥ ६३ केवलेन ॥ ६४ परिणामित्व ॥ ६५ न तथा ॥ प्रत्येकमात्मादिर्धर्मी ( केवल ) तदजनकत्वादिति हेतु, तज्जननस्वभावो न भवतीति साध्यम् ॥

तज्जननस्वभावः । न जनयति चायं केवलः कदाचिदप्युत्तरोत्तरकालभावीनि प्रत्ययान्तरापेक्षाणि कार्याणीति । ननु प्रत्ययान्तरमपेक्ष्य कार्यजननस्वभावत्वान्नासौ केवलस्तज्जनयति । न च सहकारिसहितासहितावस्थयोरस्य स्वभावभेदः प्रत्ययान्तरापेक्षस्वकार्यजननस्वभावतायाः सर्वदा भावात् । तदप्यपेशलम् । यतः प्रत्ययान्तरसन्निधानेऽपि स्वरूपेणैवास्य कार्यकारिता । तच्च प्रागप्यस्तीति प्रागेवातः कार्योत्पत्तिः स्यात् । प्रत्ययान्तरेभ्यश्चास्यातिशयसम्भवे तदपेक्षा स्यादुपकारकेष्वेवास्याः सम्भवादन्यथाऽतिप्रसङ्गात् । तत्सन्निधानस्यासन्निधानतुल्यत्वाच्च केवल एवासौ कार्यं कुर्यादकुर्वंश्च केवलः सहितावस्थायां च कुर्वन् कथमेकस्वभावो भवेद्विरुद्धधर्माध्यासतः स्वभावभेदानुषङ्गात् । किञ्च सकलानि कारकाणि साकल्योत्पादने प्रवर्तन्तेऽसकलानि वा । न तावत्सकलानि साकल्यासिद्धौ तत्सकलत्वासिद्धेः । अन्योऽन्याश्रयश्च–सिद्धे हि साकल्ये तेषां सकलरूपतासिद्धिस्तत्सिद्धौ च साकल्यसिद्धिरिति । नाप्यसकलान्यतिप्रसक्तेः । किञ्च यया प्रत्यासत्त्या तथाविधान्येतानि साकल्यमुत्पादयन्ति तयैव प्रमामप्युत्पादयिष्यन्तीति व्यर्था साकल्यकल्पना । करणमन्तरेण प्रमोत्पत्त्यभावे साकल्येऽप्यन्यत् करणं कल्पनीयमित्यनवस्था । नचाध्यक्षसिद्धत्वात्साकल्यस्यादोषोऽयमात्मान्तःकरणसंयोगादेरतीन्द्रियस्याध्यक्षाऽविषयत्वात् । केवलं विशिष्टार्थोपलब्धिलक्षणकार्यस्याऽध्यक्षसिद्धस्य करणमन्तरेणानुपपत्तेस्तत्परिकल्पना । तच्च मनोलक्षणकरणसद्भावे साकल्यमेवेत्यवधारयितुं न शक्यम् । तन्न सकलकारककार्यं साकल्यम् ॥ नापि पदार्थान्तरं सर्वस्य पदार्थान्तरस्य साकल्यरूपताप्रसङ्गात् । तथा च तत्सद्भावे सर्वत्र सर्वदा सर्वस्यार्थोपलब्धिरिति सर्वः सर्वदर्शी स्यात् । ततः कारकसाकल्यस्य स्वरूपेणाऽसिद्धेः सिद्धौ वा ज्ञानेन व्यवधानान्न प्रामाण्यम् ॥ छ ॥ मा भूत् कारकसाकल्यस्यासिद्धस्वरूपत्वात् प्रामाण्यं सन्निकर्षादेस्तु सिद्धस्वरूपत्वात्प्रमित्युत्पत्तौ साधकतमत्वाच्च तत्स्यात् । सुप्रसिद्धो हि चक्षुषो घटेन संयोगो रूपादिना संयुक्तसमवायः रूपत्वादिना संयुक्तसमवेतसमवायो ज्ञानजनकः । साधकतमत्वं च प्रमाणत्वेन व्याप्तं न पुनर्ज्ञानत्वमज्ञानत्वं वा संशयादिवत्प्रमेयार्थवच्चेत्यसमीक्षिताभिधानम् । तस्य प्रमित्युत्पत्तौ साधकतमत्वाभावात् । यद्भावे हि प्रमितेर्भाववत्ता यदभावे चाभाववत्ता तत्तत्र साधकतमम् । भावाभावयोस्तद्वत्ता साधकतमत्वमित्यभिधानात् । न चैतत्सन्निकर्षादौ सम्भवति । तद्भावेऽपि क्वचित्प्रमित्यनुत्पत्तेः न हि चक्षुषो घटवदाकाशे संयोगो विद्यमानोऽपि प्रमित्युत्पादकः संयुक्तसमवायो वा रूपादिवच्छब्दरसादौ संयुक्तसमवेतसमवायो वा रूपत्ववच्छब्दत्वादौ । तदभावेऽपि च विशेषणज्ञानाद्विशेष्यप्रमितेः

---

१ हेतु ॥ २ धर्मे ॥ ३ अयमेवोपनय ॥ ४ तस्मादात्मादि प्रेत्यक्रमुत्तरोत्तर निगमनम् ॥ ५ पर ॥ ६ कारणान्तर ॥ ७ सहकारिलक्षणकारणान्तर ॥ ८ नित्यस्य ॥ ९ सहकारिसन्निधानात् ॥ १० आत्मादिकारकात् ॥
११ कारकस्य ॥ १२ उपकारकाणामेवापेक्षा भवति नाऽन्येषामित्यर्थः ॥ १३ अनुपकारकेष्वेव सम्भवे ॥ १४ पटोत्पत्तौ कुविन्दस्य मृत्पिण्डे अपेक्षा भवेत् ॥ १५ अनुपकारकप्रत्ययान्तर ॥ १६ साहित्यात् ॥ १७ प्रमाण ॥
१८ यतोऽत्रापि विचार्यमाण (तत) ॥ १९ द्वित्राणामपि प्राप्नोति ॥ २० स्वभावेन । प्रत्यासत्ति स्वभाव ॥ २१ कारकाणि ॥ २२ पर ॥ २३ साकल्यस्य ॥ २४ पुन ॥ २५ ज्ञान ॥ २६ अर्थापत्तिप्रमाणम् ॥ २७ श्रेयसी (मन्यते) ॥ २८ अर्थापत्तिप्रमाणप्रसिद्ध करण ॥ २९ भावमनो ॥ ३० प्रमितिरूप पदार्थ ॥ ३१ तु ॥ ३२ सर्वपदार्थान्तरसाकल्यरूपप्रमाणत्वात् ॥ ३३ पर ॥ ३४ लिङ्गशब्द ॥ ३५ द्रव्यत्वकर्मसामान्य ॥ ३६ गुणत्व
कर्मत्व ॥ ३७ प्रमितौ ॥ ३८ सतो ॥ ३९ यस्य तस्य तत्र ॥ ४० आदिपदेन शब्दलिङ्ग ॥ ४१ नभसि ॥ ४२ गगनमिति प्रमिते ॥ ४३ कर्म ॥ ४४ रसत्वस्पर्शत्वादि ॥ ४५ सन्निकर्ष ॥ ४६ ॥ दण्ड ॥
४७ दण्डोऽस्यास्तीति तस्मिन् दण्डिनि ॥

शक्तिः प्रतिपत्तुः प्रतिबन्धापायो वा शक्तिश्चेत्किमतीन्द्रिया सहकारिसान्निध्यलक्षणा
सद्भावोपगमात् । योग्यताभ्युपगमे सैवास्तु किमनेनान्तर्गडुना । योग्यता च शक्तिः प्रतिपत्तुः प्रतिबन्धापायो वा । सहकारिकारणं चात्र द्रव्यं गुणः कर्म वा स्यात् ।
वा । न तावदतीन्द्रियाऽनभ्युपगमात् । नापि सहकारिसान्निध्यलक्षणा कारकसाकल्यपक्षोक्ताशेषदोषानुषङ्गात् । कथमन्यथा दिक्कालाकाशात्मनां व्यापिद्रव्यता ।
द्रव्यं चेत्किं व्यापि द्रव्यमव्यापि द्रव्यं वा न तावद् व्यापि द्रव्यं तत्सान्निध्यस्याकाशादीन्द्रियसन्निकर्षेऽप्यविशेषात् । गुणोऽपि तत्सहकारी प्रमेयगतः
अथाऽव्यापि द्रव्यं तत्किं मनोनयनमालोको वा त्रितयस्याप्यस्य सान्निध्यं घटादीन्द्रियसन्निकर्षवदाकाशादीन्द्रियसन्निकर्षेऽप्यस्त्येव । अमूर्तत्वान्नास्य प्रत्यक्षतेऽत्यप्ययुक्तम् । सामा-
प्रमातृगतो वा स्यादुभयगतो वा । प्रमेयगतश्चेत्कथं नाकाशस्य प्रत्यक्षता । द्रव्यत्वतोऽस्यापि गुणसद्भावाविशेषात् । न खलु तेनास्य विरोधो येनानुत्पत्तिः प्रध्वंसो वा तत्सद्भावेऽस्य
न्यादेरप्यप्रत्यक्षत्वप्रसङ्गात् । प्रमातृगतोऽप्यदृष्टोऽन्यो वा गुणो गगनेन्द्रियसन्निकर्षसमयेऽस्त्येव । न तावदर्थान्तरगतं विज्ञानोत्पत्तौ तस्यानङ्गत्वात् ।
स्यात् । उभयगतपक्षेऽप्युभयपक्षोपक्षिप्तदोषानुषङ्गः । कर्माऽप्यर्थान्तरगतमिन्द्रियगतं वा तत्सहकारि स्यात् न तावदर्थान्तरगतं विज्ञानोत्पत्तौ तस्यानङ्गत्वात् ।
इन्द्रियगतं तु तत्तत्रास्त्येव । आकाशेन्द्रियसन्निकर्षे नयनोन्मीलनादिकर्मणः सद्भावात् । प्रतिबन्धापायरूपयोग्यतोपगमे तु सर्वं सुस्थम् । यस्य यत्र यथाविधो हि
प्रतिबन्धापायस्तस्य तत्र तथाविधार्थपरिच्छित्तिरुत्पद्यते । प्रतिबन्धापायश्च प्रतिपत्तुः सर्वज्ञसिद्धिप्रस्तावे प्रसाधयिष्यते । न च योग्यताया एवार्थपरिच्छित्तौ साध-
कतमत्वतः प्रमाणत्वानुषङ्गात् ज्ञानं प्रमाणमित्यस्य विरोधोऽस्याः स्वार्थग्रहणशक्तिलक्षणभावेन्द्रियस्वभावायाः यदसन्निधाने कारकान्तरसन्निधानेऽपि यन्नोत्पद्यते
तत्तत्करणकम् । यथा कुठारासन्निधाने कुठारच्छेदनमनुत्पद्यमानं कुठारकरणकम् । नोत्पद्यते च भावेन्द्रियासन्निधाने स्वार्थसंवेदनं सन्निकर्षादिसद्भावेऽपीति तद्भावे-
न्द्रियकरणकमित्यनुमानतः प्रसिद्धस्वभावायाः स्वार्थावभासिज्ञानलक्षणप्रमाणसामग्रीत्वतः । तदुत्पत्तावेव साधकतमत्वोपपत्तेः । ततोऽन्यनिरपेक्षतया स्वार्थपरि-
च्छित्तौ साधकतमत्वाज्ज्ञानमेव प्रमाणम् । तद्धेतुत्वात्सन्निकर्षादेरपि प्रामाण्यमित्यप्यसमीचीनम् । छिदिक्रियायां करणभूतकुठारस्य हेतुत्वादयस्कारादेरपि प्रमा-
ण्यप्रसङ्गात् । उपचारमात्रेणाऽस्य प्रामाण्ये चात्मादेरपि तत्प्रसङ्गस्तद्धेतुत्वाविशेषात् । ननु चात्मनः प्रमातृत्वाद् घटादेश्च प्रमेयत्वान्न प्रमाणत्वं प्रमातृप्रमेयाभ्या-
मर्थान्तरस्य प्रमाणत्वाभ्युपगमादित्यप्यसङ्गतम् । न्यायप्राप्तस्याभ्युपगममात्रेण प्रतिषेधायोगात् । अन्यथाऽचेतनादर्थान्तरं प्रमाणमित्यभ्युपगमात्सन्निकर्षादेरपि

---

१ सन्निकर्षस्य शक्ति ॥ २ यद्यपि घटाकाशयोरविशिष्टश्चक्षुष सन्निकर्षोऽस्ति तथापि योग्यतावशाद घट एव प्रमिति जायते नाकाशे इति सन्निकर्षगतस्याभ्युपगमे ॥ ३ सन्निकर्षेण ॥ ४ ग्रन्थिना (व्रणेन) ॥ ५ सन्निकर्षस्य ॥ ६ ऐन्द्रिया चेद् घटवद्दृश्येत न च दृश्यते इयमतोऽतीन्द्रिया ॥ ७ परे ॥ ८ धर्मकार्यपक्षयो धर्मरूपे पक्षे ॥ ९ सन्निकर्षे ॥ १० क्रिया ॥ ११ स्पर्शफल ॥ १२ ज्ञेयपदार्थे ॥ १३ पर ॥ १४ गन्धादे ॥ १५ पुण्य-पापरूप ॥ १६ इच्छादि ॥ १७ नभोनयनसन्निकर्षेण ॥ १८ सहकारिगुणस्य ॥ १९ सन्निकर्षे ॥ २० गुणस्य ॥ २१ प्रमेय ॥ २२ सन्निकर्षे ॥ २३ अन्यथा स्थिरार्थानामप्रतीतिप्रसङ्गात् ॥ २४ निमीलन ॥ २५ आवरणापाय ॥ २६ घटादौ प्रमोत्पद्यते नाकाशादाविति ॥ २७ तु ॥ २८ अर्थे ॥ २९ ज्ञान ॥ ३० नरस्य ॥ ३१ लक्षणस्य ॥ ३२ न च विरोधो कुत । सामग्रीत्वत इति पर्यन्तमस्य हेतुर्द्रष्टव्य ॥ ३३ भावेन्द्रिय ॥ ३४ अनुमानम् । ३५ सन्निकर्षे ॥ ३६ तस्मात् ॥ ३७ ता ॥ ३८ योग्यता ॥ ३९ ज्ञाने साधकतमत्वसामर्थ्ये ॥ ४० भावे-न्द्रियात् ॥ ४१ सन्निकर्ष । कारकान्तर ॥ ४२ पर ॥ ४३ तत्प्रसङ्गादिति पाठान्तरम् ॥ ४४ प्रमातु ॥ ४५ मुख्यज्ञान ॥ ४६ पर ॥ ४७ स्तूर्तत्वात् ॥ ४८ भिन्नस्य ॥ ४९ परेषाम् ॥ ५० युक्त्या प्राप्तस्य यदभावसन्निकर्षादिसद्भावौ धर्मिणौ । स्वार्थसंवेदनजनकौ न भवत इति साध्यो धर्मः । तदनुपपद्यमानत्वात् ॥ प्रमाणत्वस्य ॥ ५१ युक्त्या रहिताभ्युपगमेन ॥ ५२ चेतन ॥ ५३ परै जैनैः ॥ ५४ अचेतनत्वात् ॥

तन्न स्यात् । किञ्च प्रमेयत्वेन सह प्रमाणत्वस्य विरोधे प्रमाणमप्रमेयमेव स्यात् । तथा चासत्त्वप्रसङ्गः संविन्निष्ठत्वाद्भावव्यवस्थितेरित्ययुक्तमेतत् प्रमाता प्रमाणं प्रमेयं प्रमितिरिति चतसृष्वेवंविधासु तत्त्वं परिसमाप्यत इति । कथं वा सर्वज्ञज्ञानेनाप्यस्याप्रमेयत्वे तस्य सर्वज्ञत्वम् । किञ्च प्रमाणवत् प्रमातुरपि प्रमेयत्वधर्माधारत्वं न स्यात्तस्य तद्विरोधाविशेषात् । तथा चाश्वविषाणस्येवास्यासत्त्वानुषङ्गः । तद्धर्माधारत्वे वा प्रमात्रा ततोऽर्थान्तरभूतेन भवितव्यं प्रमाणवत् । तस्यापि प्रमेयत्वे ततोऽप्यर्थान्तरभूतेनेत्येकत्रात्मनि प्रमेयेऽनन्तप्रमातृमालाप्रसक्तिः । यदि धर्मभेदादेकत्रात्मनि प्रमातृत्वं प्रमेयत्वं चाविरुद्धं तर्हि प्रमाणत्वमप्यविरुद्धमनुमन्यताम् । ततो निराकृतमेतत् प्रमातृप्रमेयाभ्यामर्थान्तरं प्रमाणमिति । चक्षुषश्चाप्राप्यकारित्वेनाग्रे समर्थनात्कथं घटेनसंयोगस्तदभावात्कथं रूपादिना संयुक्तसमवायादिरित्यव्याप्तिः सन्निकर्षप्रमाणवादिनाम् । सर्वज्ञाभावश्चेन्द्रियाणां परमाण्वादिभिः साक्षात्सम्बन्धाभावात् । तथा हि । नेन्द्रियं साक्षात्परमाण्वादिभिः सम्बध्यते इन्द्रियत्वादस्मदादीन्द्रियवत् । योगजधर्मानुग्रहीतस्यतैः साक्षात्सम्बन्धश्चेत् कोऽयमिन्द्रियस्य योगजधर्मानुग्रहो नाम स्वविषये प्रवर्त्तमानस्यातिशयाधानं सहकारित्वमात्रं वा । प्रथमपक्षोऽयुक्तः परमाण्वादौ स्वयमिन्द्रियस्य प्रवर्तनाभावाद्भावे तदनुग्रहवैयर्थ्य तत एवास्य तत्र प्रवृत्तौ परस्पराश्रयः । सिद्धे हि योगजधर्मानुग्रहे तत्र तस्य प्रवृत्तिस्तस्यां च योगजधर्मानुग्रह इति । द्वितीयपक्षोऽप्यसम्भाव्यः स्वविषयातिक्रमेणास्य योगजधर्मसहकारित्वेनाप्यनुग्रहायोगादन्यथैकस्यैवेन्द्रियस्याशेषरसादिविषयेषु प्रवृत्तौ तदनुग्रहप्रसङ्गः स्यात् । अथैकमेवान्तः करणं गृहीतं युगपत्सूक्ष्माद्यशेषार्थविषयज्ञानजनकमिष्यते तन्नाणुमनसोऽशेषार्थैः सकृत्सम्बन्धाभावेतस्तज्ज्ञानजनकत्वासम्भवाद् अन्यथा दीर्घशष्कुलीभक्षणादौ सकृच्चक्षुरादिभिस्तत्सम्बन्धप्रसक्ते रूपादिज्ञानपञ्चकस्य सकृदुत्पत्तिप्रसङ्गाद् युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति विरुध्येत । क्रमशोऽन्यत्र तद्दर्शनादत्रापि क्रमकल्पनायां योगिनः सर्वार्थेषु सम्बन्धस्य क्रमकल्पनास्तु । तथादर्शनाविशेषात् । तदनुग्रहसामर्थ्याद् दृष्टातिक्रमेष्टौ चात्मैव समाधिविशेषोत्थधर्ममाहात्म्यादन्तःकरणनिरपेक्षोऽशेषार्थग्राहकोऽस्तु किमदृष्टपरिकल्पनया । तन्नाणुमनसोऽशेषार्थैः साक्षात्सकृत्सम्बन्धो घटते । अथ परम्परया । तथा हि । मनो महेश्वरेण सम्बद्धं तेन च घटादयोऽर्थास्तेषु रूपादय इत्यत्राप्यशेषार्थज्ञानसम्भवः । सम्बन्धसम्बन्धोऽपि

१ प्रामाण्य ॥ २ वस्तुनि ॥ ३ प्रमितिविषया प्रमेया इति वचनाज्ज्ञानविषयत्वाद्भावस्य व्यवस्थिते प्रमितिविषयप्रमेयत्वे सत्येव सत्त्वव्यवस्थितिस्ततु प्रमाणो नास्त्येवाप्रमेयरूपत्वादिति भाव ॥ ४ अप्रमेयत्व स्यादसत्त्व च न स्यादिति ( हेतो ) सन्दिग्धानैकान्तिकत्वेसत्याह ॥ ५ परिच्छित्ति ज्ञान ॥ ६ प्रमाण सनभवति अप्रमेयत्वात्खरविषाणवत् ॥ ७ सत्ता ॥ ८ पदार्थ ॥ ९ ततश्च ॥ १० परमार्थ ॥ ११ परिपूर्णता याति अत्रैवान्त प्राप्नोतीत्यर्थ ॥ १२ इति यदुक्त तच्चतुर्थसंख्यापूरकस्य प्रमाणस्याभावादयुक्तमेव प्रामाण्यस्य ॥ १३ सति ॥ १४ प्रमेयत्वेन प्रमातृत्वस्य ॥ १५ प्रमातु ॥ १६ प्रमात्रन्तरस्यापि ॥ १७ स्वभाव ॥ १८ प्रमित्याश्रय प्रमाता ॥ १९ प्रमाविषय प्रमेय ॥ २० प्रमितिक्रिया प्रति करणत्वम् ॥ २१ आत्मन ॥ २२ प्रमाणहेतुत्वात् ॥ २३ प्रमात्रन्तर्गतत्वात्प्रमाणस्य ॥ २४ आदिपदेन रूपत्वादिर्ग्राह्य ॥ २५ (संयुक्तसमवेतसमवायादि )॥ २६ लक्ष्यैकदेशवृत्तिरव्याप्तिरिति वचनात्तस्य स्पर्शादिचतुर्ष्विन्द्रियेषु प्राप्य कारित्व चक्षुष्यप्राप्यकारित्वमित्यव्याप्ति ॥ २७ समाधि ॥ २८ ईश्वरस्य ॥ २९ पर ॥ ३० अदृष्ट ॥ ३१ उपकारात् ॥ ३२ करण ॥ ३३ धर्मात् ॥ ३४ परमाण्वादौ ॥ ३५ इन्द्रियस्य ॥ ३६ विषयान्तरेऽपि सहकारित्वरूपानुग्रहश्चेत् ॥ ३७ योगजधर्मस्य ॥ ३८ पर ॥ ३९ परै ॥ ४० युगपत् ॥ ४१ परमते ॥ ४२ तदर्थं सकृत्सम्बन्धश्चेन्मनस ॥ ४३ मनस ॥ ४४ परग्रन्थ ॥ ४५ पर ॥ ४६ घटादौ ॥ ४७ मन सम्बन्ध ॥ ४८ सर्वज्ञस्य ॥ ४९ मनस ॥ ५० क्रमेण मन सम्बन्ध ॥ ५१ पर ॥ ५२ क्रमेण मन सम्बन्धस्य ॥ ५३ युगपदशेषार्थग्रहणमितीष्टौ ॥ ५४ पर ॥ ५५ अशेषार्थरणुमनसो हि सम्बन्ध ५६ सर्वगतत्वात् (महेश्वरस्य) ॥ ५७ सम्बन्धसम्बन्धे ॥

हि तस्याशेषार्थैर्वर्तमानैरेव नानुत्पन्नैर्विनष्टैः। तत्काले तैरपि सह सोऽस्तीति चेन्न। तदा वर्तमानार्थसम्बन्धसम्बन्धस्यासम्भवात्। ततोऽयमन्य एवेति चेत्तर्हि तज्जनितज्ञानमप्यनुत्पन्नविनष्टार्थकालीनसम्बन्धसम्बन्धजनितज्ञानादन्यदित्येकज्ञानेनाशेषार्थज्ञत्वासम्भवः। वहुभिरेव ज्ञानैस्तदिति चेत्तेषां किं क्रमेण भावोऽक्रमेण वा। क्रमभावे नानन्तेनापि कालेनानन्तता संसारस्य प्रतीयेत। य एव हि सम्बन्धसवन्धवशाज् ज्ञानजनकोऽर्थः स एव तज्जनितज्ञानेन गृह्यते नान्य इति। अक्रमभावस्तु नोपपद्यते। विनष्टानुत्पन्नार्थज्ञानानां वर्तमानार्थज्ञानकालेऽसम्भवात् न हि कारणाभावे कार्यं नामातिप्रसङ्गात्। न च बौद्धानामिव योगानां विनष्टानुत्पन्नस्य कारणत्वं सिद्धान्तविरोधात्। नित्यत्वादीश्वरज्ञानस्योक्तदोषानवकाश इत्यप्यवाच्यम्। तन्नित्यत्वस्येश्वरनिराकरणप्रघट्टके निराकरिष्यमाणत्वात्। तन्न सन्निकर्षोऽप्यनुपचरितप्रमाणव्यपदेशभाक्॥ छ॥

एतेनेन्द्रियवृत्तिः प्रमाणमित्यभिदधानः साङ्ख्यः प्रत्याख्यातः। ज्ञानस्वभावमुख्यप्रमाणकरणत्वात्। तत्राप्युपचारतः प्रमाणव्यवहाराभ्युपगमात्। न चेन्द्रियेभ्यो वृत्तिर्व्यतिरिक्ताऽव्यतिरिक्ता वा घटते। तेभ्यो हि यद्यव्यतिरिक्तासौ तदा श्रोत्रादिमात्रमेवासौ तच्च सुप्ताद्यवस्थायामप्यस्तीति तदाप्यर्थपरिच्छित्तिप्रसक्तेः सुप्तादिव्यवहारोच्छेदः। अथ व्यतिरिक्ता तदाप्यसौ किं तेषां धर्मोऽर्थान्तरं वा। प्रथमपक्षे वृत्तेः श्रोत्रादिभिः सह सम्बन्धो वक्तव्यः। स हि तादात्म्यं समवायादिर्वा स्यात्। यदि तादात्म्यं तदा श्रोत्रादिमात्रमेवासाविति पूर्वोक्त एव दोषोऽनुषज्यते। अथ समवायस्तदास्य व्यापिनः सम्भवे व्यापिश्रोत्रादिसद्भावे च प्रतिनियतदेशाऽवृत्तिरभिव्यज्येत् इति स्ववते। अथ संयोगस्तदा द्रव्यान्तरत्वप्रसक्तेर्न तद्धर्मो वृत्तिर्भवेत्। अर्थान्तरमसौ तदा नासौ वृत्तिरर्थान्तरत्वात् पदार्थान्तरवत्। अर्थान्तरत्वेपि प्रतिनियतविशेषसद्भावात्तेषामसौ वृत्तिः। नन्वसौ विशेषो यदि तेषां विषयप्राप्तिरूपस्तदेन्द्रियादिसन्निकर्ष एव नामान्तरेणोक्तः स्यात्। स चानन्तरमेव प्रतिव्यूढः। अथाऽर्थाकारपरिणतिर्नाऽस्या बुद्धावेवाभ्युपगमात् न च श्रोत्रादिस्वभावा तद्धर्मरूपार्थान्तरस्वभावा वा तत्परिणतिर्घटते। प्रतिपादितदोषानुषङ्गात्। न च परपक्षे परिणामः परिणामिनो भिन्नोऽभिन्नो वा घटते। इत्यग्रे विचारयिष्यते॥ छ॥

एतेन प्रभाकरोऽप्यर्थतथात्वप्रकाशको ज्ञातृव्यापारोऽज्ञानरूपोऽपि प्रमाणमिति प्रतिपादयन् प्रतिव्यूढः प्रतिपत्तव्यः। सर्वत्रैवाज्ञानस्योपचारादेव प्रसिद्धेः। न च ज्ञातृव्यापारस्वरूपस्य किञ्चित्प्रमाणं ग्राहकम्। तद्धि प्रत्यक्षमनुमानमन्यद्वा।यदि प्रत्यक्षं तत्किं स्वसंवेदनं बाह्येन्द्रियजं मनःप्रभवं वा, न तावत्स्वसंवेदनं तस्याज्ञाने

१ मनस ॥ २ तेषामसत्त्वात् ॥ ३ पर ॥ ४ अनुत्पन्नविनष्टार्थकाले ॥ ५ अनुत्पन्नविनष्टार्थसम्बन्धसम्बन्धात्पर ॥ ६ नृणाम् ॥ ७ ईश्वरेण ॥ ८ युगपत् ॥ ९ पर ॥ १० असर्वज्ञत्वज्ञानासम्भव ॥ ११ प्रस्तावे ॥ १२ सन्निकर्षप्रमाणनिराकरणेन ॥ १३ नेत्रादीनामुद्घाटनादि ॥ १४ अभिन्ना ॥ १५ मूर्च्छागतप्रमत्तादि ॥ १६ हेतो ॥ १७ जाग्रद्दशाया यथा ॥ १८ प्रवुद्ध ॥ १९ भिन्ना ॥ २० स्वरूप ॥ २१ परे ॥ २२ आदिपदेन संयोग ॥ २३ वृत्ते श्रोत्रादिभि ॥ २४ नित्य एको व्यापी समवाय ॥ २५ इन्द्रियाणा व्यक्तीक्रियते ॥ २६ भवन्मत नश्यति ॥ २७ द्रव्योर्द्रव्ययो संयोग इतिहेतो संयोगित्वात् ॥ २८ इन्द्रियवृत्ते ॥ २९ पर ॥ ३० अर्थ ॥ ३१ पर ॥ ३२ वृत्ति ॥ ३३ परिणते ॥ ३४ अर्थाकारपरिणति किम् ॥ ३५ साङ्ख्ये ॥ ३६ किं च ॥ ३७ साङ्ख्य ॥ ३८ इन्द्रियस्य ॥ ३९ इन्द्रियवृत्ति प्रमाणमित्येतन्निराकरणेन ॥ ४० चेतनासमवायाच्चेतन आत्मा न स्वरूपतोऽतस्तद्व्यापारोऽपि (अज्ञानरूप) ॥ ४१ (निराकृत) ४२ मते ॥ ४३ स्यात् ॥ ४४ अर्थापत्तिरूपम् ॥ ४५ अनुभूति प्रत्यक्षमिदमाश्रित्य ॥ ४६ ज्ञातृव्यापारे अप्रवृत्ति ॥

विरोधादनभ्युपगमाच्च । नापि बाह्येन्द्रियजमिन्द्रियाणां स्वसम्बद्धेऽर्थे ज्ञानजनकत्वोपगमात् । न च ज्ञातृव्यापारेण सह तेषां सम्बन्धः, प्रतिनियतरूपादिविषयत्वात् । नापि मनोजन्यं तथाप्रतीत्यभावादनभ्युपगमादतिप्रसङ्गाच्च । नाप्यनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादसंन्निकृष्टेऽर्थे बुद्धिरित्येवंलक्षणत्वात्तस्य । सम्बन्धश्च कार्यकारणभावादिनिराकरणेन नियमलक्षणोऽभ्युपगम्यते ॥ तदुक्तम् ॥ कार्यकारणभावादिसम्बन्धानां द्वयी गतिः । नियमानियमाभ्यां स्यादनियमादनङ्गता ॥ १ ॥ सर्वेऽप्यनियमा ह्येते नानुमोत्पत्तिकारणम् । नियमात्केवलादेव न किञ्चिन्नानुमीयते ॥ २ ॥ एवं परोक्तसम्बन्धप्रत्याख्याने कृते सति । नियमोनाम सम्बन्धः स्वमतेनोच्यतेऽधुना ॥ ३ ॥ इत्यादि । स च सम्बन्धः किमन्वयनिश्चयद्वारेण प्रतीयते व्यतिरेकनिश्चयद्वारेण वा प्रथमपक्षे किं प्रत्यक्षेणानुमानेन वा तन्निश्चयः, न तावत्प्रत्यक्षेणोभयरूपग्रहणे ह्यन्वयनिश्चयो न च ज्ञातृव्यापारस्वरूपं प्रत्यक्षेण निश्चीयते इत्युक्तम् । तदभावे च न तत्प्रतिबद्धत्वेनार्थप्रकाशनलक्षणहेतुरूपमिति । नाप्यनुमानेनास्य निश्चितान्वयहेतुप्रभवत्वाभ्युपगमात् । न च तस्यान्वयनिश्चयः प्रत्यक्षसमधिगम्यः पूर्वोक्तदोषानुषङ्गात् । नाप्यनुमानगम्यस्तदनन्तरप्रथमानुमानाभ्यां तन्निश्चयेऽनवस्थेतरेतराश्रयानुषङ्गात् । नापि व्यतिरेकनिश्चयद्वारेण । व्यतिरेको हि साध्याभावे हेतोरभावो न च प्रकृतसाध्याभावः प्रत्यक्षाधिगम्यः तस्य ज्ञातृव्यापाराविषयत्वेन तद्भाववत्तदभावेऽपि प्रवृत्तिविरोधात् । समर्थितं चास्य तदविषयत्वं प्रागिति । नाप्यनुमानाधिगम्योऽत एव । अथानुपलम्भनिश्चयः अत्रापि किं दृश्यानुपलम्भोऽभिप्रेतोऽदृश्यानुपलम्भो वा यद्यदृश्यानुपलम्भो नासौ गमकोऽतिप्रसङ्गात् । दृश्यानुपलम्भोऽपि चतुर्द्धा भिद्यते स्वभावकारणव्यापकानुपलम्भविरुद्धोपलम्भभेदात् तत्र न तावदाद्यो युक्तः स्वभावानुपलम्भस्यैवंविधे विषये व्यापाराभावादेकज्ञानसंसर्गिपदार्थान्तरोपलम्भरूपत्वात्तस्य । न च ज्ञातृव्यापारेण सह कस्यचिदेकज्ञानसंसर्गित्वं सम्भवतीति । नापि द्वितीयः सिद्धे हि कार्यकारणभावे कारणानुपलम्भः कार्याभावनिश्चायकः । न च ज्ञातृव्यापारस्य केनचित् सह कार्यत्वं निश्चितं तस्यादृश्यत्वात् । प्रत्यक्षानुपलम्भनिबन्धनश्च कार्यकारणभावः । तत एव केनचित्सह व्याप्यव्यापकभावस्यासिद्धेर्न व्यापकानुपलम्भोऽपि

१ प्राभाकरै ॥ २ ज्ञातृव्यापारस्यात्यन्त परोक्षत्वाच्च ॥ ३ अत्यन्तपरोक्षतया ज्ञातृव्यापारग्राहकत्वप्रकारेण मनोजन्यप्रत्यक्षस्य ॥ ४ परै ॥ ५ धर्मादेरप्यतीन्द्रियस्य मन प्रत्यक्षत्व स्यात् परमाण्वादेरपि ग्राहकत्व मनस स्यात् ॥ ६ नु ॥ ७ इन्द्रियै ॥ ८ तादात्म्यादि ॥ ९ अविनाभाव ॥ १० परेण ॥ ११ एव सति च किम् ॥ १२ गोपालघटिकादो व्यभिचारात् ॥ १३ अनुमान प्रति ॥ १४ सौगताद्युक्त ॥ १५ प्रभाकरमतेन ॥ १६ साध्यसाधनयोरविनाभावलक्षण ॥ १७ ज्ञातृव्यापारे सति अर्थप्रकाशलक्षणो हेतुर्न घटते ॥ १८ साध्यसाधनरूप ॥ १९ पूर्वम् ॥ २० ज्ञातृव्यापारस्य ॥ २१ सम्बद्ध ॥ २२ अर्थप्रकाशो ज्ञातृव्यापारहेतुकस्तस्मिन् सत्येवोपजायमानत्वादित्यनुमानेन ॥ २३ हेतो ॥ २४ द्वितीयानुमान ॥ २५ अर्थप्रकाशान्यथानुपपत्तिज्ञातृव्यापारयो(?)रन्वय तस्मिन्ननुमान । तत्स्वयमेव जानाति अनुमानान्तरेण वा । प्रथमस्येतरेतराश्रय । द्वितीयेऽनवस्था ॥ २६ ज्ञातृव्यापारलक्षण ॥ २७ यद्वि यद्भावग्राहक तदेव तद्भावग्राहकमिति ॥ २८ तद्भाववत्तदभावेऽपि प्रवृत्तिविरोधात् ॥ २९ व्यतिरेक ज्ञातृव्यापार आत्मनि नास्ति अनुपलभ्यमानत्वात् खरशृङ्गवदित्यनुपलम्भस्वरूपम् ॥ ३० पदार्थाना ॥ ३१ पिशाचपरमाण्वादेरपि गमकत्व स्यात् ॥ ३२ शुद्धभूतलोपलम्भ एव स्वभावानुपलम्भ ॥ ३३ अत्यन्तपरोक्षे ॥ ३४ घटेन सह प्रतिषेध्याधारभूतभूतलम् ॥ ३५ यदि भूतलाधारतयापि विद्येत तदा प्रत्यक्षेणैव लभ्येत ॥ ३६ आत्मन ॥ ३७ ज्ञातृव्यापारलक्षण ॥ ३८ कारणेन ॥ ३९ अन्वय व्यतिरेक (प्रत्यक्षेणान्वयव्यतिरेकनिबन्धन) ॥ ४० ज्ञातृव्यापारस्यादृश्यत्वादेव ॥ ४१ आत्मादिव्यापारस्य ॥

तन्निश्चायकः । विरुद्धोपलम्भोपि द्विधा भिद्यते । विरोधस्य द्विविधत्वात् । तथा हि-को विरोधोऽविकलकारणस्य भवतोऽन्यभावेऽभावात्सहानवस्थालक्षणः ? शीतोष्णयोरिव, विशिष्टात्प्रत्यक्षान्निश्चीयते । न च प्रकृतं साध्यमविकलकारणं कस्यचिद्भावे निवर्त्तमानमुपलभ्यते । तस्यादृश्यत्वात् । द्वितीयस्तु परस्परपरिहारस्थितिलक्षणः । सोप्युपलभ्यस्वभावभावनिष्ठत्वात्प्रकृतविषये न सम्भवति । किञ्चानुपलम्भोऽभावप्रमाणं प्रमाणपञ्चकविनिवृत्तिरूपम् । तच्च ज्ञातमेवाभावसाधकं कृतयत्नस्यैव प्रमाणपञ्चकविनिवृत्तेरभावसाधकत्वोपगमात् । तदुक्तम्—गत्वा गत्वा तु तान्देशान् यद्यर्थो नोपलभ्यते । तदान्यकारणाभावादसन्नित्यवगम्यते । तज्ज्ञानं चान्यस्मादभावप्रमाणात्प्रमेयाभावाद्वा ? तत्राद्यपक्षेऽनवस्थाप्रसङ्गस्तस्याप्यन्यस्मादभावप्रमाणात्परिज्ञानात् । प्रमेयाभावात्तज्ज्ञाने चेतरेतराश्रयत्वम् । किञ्चासौ ज्ञातृव्यापारः कारकैर्जन्योऽजन्यो वा ? यद्यजन्यस्तदासावभावरूपो भावरूपो वा ? प्रथमपक्षोऽयुक्तस्तस्याभावरूपत्वेऽर्थप्रकाशनलक्षणफलजनकत्वविरोधात् । अविरोधे वा फलार्थिनः कारकान्वेषणं व्यर्थम् । तत एवाभिमतफलसिद्धेर्विश्वमदरिद्रं च स्यात् । अथ भावरूपोसौ तत्रापि किं नित्योऽनित्यो वा ? न तावन्नित्योऽन्धादीनामप्यर्थदर्शनप्रसङ्गात् सुप्तादिव्यवहाराभावः सर्वसर्वज्ञताप्रसङ्गः कारकान्वेषणवैयर्थ्यं च स्यात् । अथानित्यस्तदयुक्तमजन्यस्वभावभावस्यानित्यत्वेन केनचिदप्यनभ्युपगमात् । भवतु वाऽनित्यस्तथाप्यसौ कालान्तरस्थायी क्षणिको वा ? न तावत्कालान्तरस्थायी क्षणिका हि सा न कालान्तरमवतिष्ठत इति वचसो विरोधप्रसङ्गात् । कारकान्वेषणं चापार्थकं तत्कालं यावत्तत्फलस्यापि निष्पत्तेः । क्षणिकत्वे विश्वं निखिलार्थप्रतिभासरहितं स्यात् । क्षणानन्तरं तस्यासत्त्वेनार्थप्रतिभासाभावात् । द्वितीयादिक्षणेषु स्वत एवात्मनो व्यापारान्तरोत्पत्तेर्नायं दोष इत्यप्यसङ्गतम् । कारकानायत्तस्य देशकालस्वरूपप्रतिनियमायोगात् । किञ्चाऽनवरतव्यापाराभ्युपगमे तज्जन्यार्थप्रतिभासस्यापि तथा भावात्तदवस्थः सुप्ताद्यभावदोषानुषङ्गः । तन्नाऽजन्योऽसौ । नापि जन्यो यतोऽसौ क्रियात्मकोऽक्रियात्मको वा ? प्रथमपक्षे किं क्रिया परिस्पन्दात्मिका तद्विपरीता वा ? तत्राद्यः पक्षोऽयुक्तो निश्चलस्यात्मनः परिस्पन्दात्मकक्रियाया अयोगात् । नापि द्वितीयस्तथाविधक्रियायाः परिस्पन्दाभावरूपतया फलजनकत्वायोगादभावस्य फलजनकत्वविरोधात् । न चासौ परिस्पन्दस्वभावा तद्विपरीता वा कारकफलान्तरालवर्त्तिनी प्रमाणतः प्रतीयते । तन्न क्रियात्मको

---

१ ज्ञातृव्यापाराभाव ॥ २ ता ॥ ३ शीतकालादे ॥ ४ जायमानस्य ॥ ५ वह्नि ॥ ६ ज्ञातृव्यापाररूप ॥ ७ विरोधिन ॥ ८ ज्ञातृव्यापारस्य ॥ ९ निरोध ॥ १० ज्ञेय ॥ ११ अर्थानुपलम्भकाले ॥ १२ इन्द्रियाभावस्यालोकाभावस्य च कारणस्य ॥ १३ आद्यप्रमाणपञ्चकाभावस्य प्रथमप्रमाणपञ्चकविषयप्रमाणपञ्चकाभावात् परिज्ञान तस्यापि प्रमाणात् • द्वितीयस्याद्वितीयप्रमाणपञ्चकविषयप्रमाणपञ्चकाभावात् परिज्ञान तस्याप्येवमित्यादि प्रकारेण ॥ १४ सिद्धे हि प्रमेयाभावे अभावप्रमाणपरिज्ञान सिध्यति तत्सिद्धौ च प्रमेयाभावसिद्धिरिति ॥ १५ खरविषाणादौ ॥ १६ आकाशादौ ॥ १७ किंच ॥ १८ अभावरूपव्यापारादेव ॥ १९ जगत् ॥ २० सहकारिकारणैर्नित्यस्यानुपकार्यत्वात् ॥ २१ प्रागभावाद् व्यभिचारमाशङ्क्य भावशब्द प्रयुक्त ॥ २२ पदार्थस्य ॥ २३ वादिना नरेण ॥ २४ ज्ञातृव्यापाररूपा क्रिया ॥ २५ ज्ञातृव्यापार ॥ २६ पर ॥ २७ पुरुषस्य ॥ २८ ज्ञातृव्यापारस्य ॥ २९ परै ॥ ३० सर्वदाभावात् ॥ ३१ किंच ॥ ३२ प्रमाता ॥ ३३ अर्थप्रकाश ॥ ३४ ज्ञातृव्यापारलक्षणा ॥

व्यापारो नापि तद्विपरीतः । अक्रियात्मको हि व्यापारो बोधरूपोऽबोधरूपो वा? बोधरूपत्वे प्रमातृवत्प्रमाणान्तरगम्यता न स्यात् । अबोधरूपता तु व्यापारस्यायुक्ता चिद्रूपस्य ज्ञातुरचिद्रूपव्यापारायोगात् । जानातीति च क्रिया ज्ञातृव्यापारो भवताभिधीयते । स च बोधात्मक एव युक्तः । किञ्चासौ धर्मिस्वभावो धर्मस्वभावो वा? प्रथमपक्षे ज्ञातृवन्न प्रमाणान्तरगम्यता । द्वितीयेपि पक्षे धर्मिणो ज्ञातुर्व्यतिरिक्तो व्यापारोऽव्यतिरिक्तो वोभयमनुभयं वा? व्यतिरिक्तत्वे सम्बन्धाभावोऽव्यतिरेके ज्ञातैव तत्स्वरूपवत् । उभयपक्षे तु विरोधः अनुभयपक्षोऽप्ययुक्तोऽन्योन्यव्यवच्छेदरूपाणां सकृत् प्रतिषेधायोगादेकनिषेधेनापरविधानात् । किञ्च व्यापारस्य कारकजन्यत्वोपगमे तज्जनने प्रवर्तमानानि कारकाणि किमपरव्यापारसापेक्षाणि न वा? तत्राद्यपक्षेऽनवस्था व्यापारान्तरस्याप्यपरव्यापान्तरसापेक्षैस्तैर्जननात् । व्यापारनिरपेक्षाणां तज्जनकत्वे फलजनकत्वमेवास्तु किमदृष्टव्यापारकल्पनाप्रयासेन । अस्तु वा व्यापारस्तथाप्यसौ प्रकृतकार्ये व्यापारान्तरसापेक्षो निरपेक्षो वा? न तावत्सापेक्षोऽपरापरव्यापारान्तरापेक्षायामेवोपक्षीणशक्तिकत्वेन प्रकृतकार्यजनकत्वाभावप्रसङ्गात् । व्यापारान्तरनिरपेक्षस्य तज्जनकत्वे कारकाणामपि तथा तदस्तु विशेषाभावात् । अथैवं पर्यनुयोगः सर्वभावस्वभावव्यावर्तकः । तथा हि । वह्नेर्दाहकस्वभावत्वे गगनस्यापि तत्स्यादितरथा वह्नेरपि न स्यात् । तदसमीक्षिताभिधानं प्रत्यक्षसिद्धत्वेनात्र पर्यनुयोगस्यानवकाशात् । व्यापारस्य तु प्रत्यक्षसिद्धत्वाभावान्न तथास्वभावावलम्बनं युक्तम् । अर्थप्राकट्यं व्यापारमन्तरेणानुपपद्यमानं तं कल्पयतीत्यर्थापत्तितस्तत्सिद्धिरित्यपि फल्गुप्रायम् । अर्थप्राकट्यं हि ततो भिन्नमभिन्नं वा? यद्यभिन्नं तदाऽर्थ एवेति यावदर्थं तत्सद्भावात्सुसार्थभावः । भेदे सम्बन्धासिद्धिरनुपकारात् । उपकारेऽनवस्था । किञ्चैतदन्यथानुपपद्यमानत्वेनानिश्चितं[19] तं[20] कल्पयति निश्चितं वा? न तावदनिश्चितमतिप्रसङ्गात् । तथाभूतं हि[21] तद्यथा तं कल्पयति तथा येन[22] विनाप्युपपद्यते तदपि किं न कल्पयत्यविशेषात् । निश्चितं[23] चेत्क तस्यान्यथानुपपन्नत्वनिश्चयो? दृष्टान्ते साध्यधर्मिणि वा? दृष्टान्ते चेल्लिङ्गस्यापि[25] तत्र साध्यनियतत्वनिश्चयो[26]ऽस्तीत्यनुमानमेवार्थापत्तिरिति प्रमाणसंख्याव्याघातः । साध्यधर्मिण्यपि कुतः प्रमाणात्तस्य तन्निश्चयः? विपक्षेऽनुपलम्भाच्चेन्न तस्य सर्वात्मसम्बन्धिनोऽसिद्धानैकान्तिकत्वादित्युक्तम् । ततः प्रमाणतोऽचेतनस्वभावज्ञातृव्यापारस्याप्रतीतेः कथमर्थतथात्वप्रकाशकोऽसौ यतः प्रमाणं स्यात् ॥ छ ॥ ज्ञानस्वभावस्य ज्ञातृव्यापारस्यार्थतथात्वप्रकाशकतया प्रमाणताभ्युपगमान्न भट्टस्यानन्तरोक्ताशेषदोषानुषङ्ग इत्यप्यसमीक्षिताभिधानं सर्वथा परोक्षज्ञानस्वभावस्यास्यासत्त्वेन प्रतिपादयिष्यमाणत्वात् । सकलज्ञानानां स्वपरव्यवसायात्मकत्वेन व्यवस्थितेः इत्यलं प्रपञ्चेन । तन्नाज्ञानं प्रमाणमन्यत्रोपचारादित्यभिप्रायवान् प्रमाणस्य ज्ञानविशेषणत्वं समर्थयमानः प्राह ॥

---

१ ज्ञातृव्यापारोस्ति अर्थप्राकट्यान्यथानुपपत्तेरित्यर्थापत्तिरूप ॥ २ अक्रियात्मकत्वात् ॥ ३ अभिन्नत्वात् ॥ ४ धर्मरूपत्वात् ॥ ५ वस्तुधर्माणा ॥ ६ परे ॥ ७ कारकाणा ॥ ८ अर्थप्रकाश ॥ ९ अर्थप्रकाशलक्षणे ॥ १० नष्ट ॥ ११ निरपेक्षत्वप्रकारेण ॥ १२ प्रश्न ॥ १३ पदार्थ ॥ १४ व्यापारान्तरनिरपेक्षत्वप्रकारेण कार्यजनकत्वलक्षण ॥ १५ अन्यद्वा इत्यमु तृतीय विकल्प शोधयति ॥ १६ अर्थप्राकट्यस्य सर्वदा भावात् ॥ १७ उपकारस्याप्युपकारकरणे सम्बन्धो न स्यादित्युपकारकल्पने ॥ १८ ज्ञातृव्यापारमन्तरेण ॥ १९ अर्थप्राकट्य ॥ २० व्यापार ॥ २१ कथ तथा हि ॥ २२ स्तम्भाद्यभावेन ॥ २३ ज्ञातृव्यापारेण सह ॥ २४ अर्थप्राकट्यस्य ॥ २५ अर्थापत्त्युत्थापकार्थस्य ॥ २६ अविनाभाव ॥ २७ ज्ञातृव्यापाराभावे स्तम्भादौ प्राकट्यस्य ॥ २८ पर ॥ २९ ज्ञातृव्यापारस्य निराकरणेन ॥

## हिताऽहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् ॥ २ ॥

हितं सुखं तत्साधनं च तद्विपरीतमहितं, तयोः प्राप्तिपरिहारौ। प्राप्तिः खलूपादेयभूतार्थक्रियाप्रसाधकार्थप्रदर्शकत्वम्। अर्थक्रियार्थी हि पुरुषस्तन्निष्पादनसमर्थं प्राप्तुकामस्तत्प्रदर्शकमेव प्रमाणमन्वेषत इत्यस्य प्रदर्शकत्वमेव प्रापकत्वम्। न हि तेन प्रदर्शितेऽर्थे प्राप्त्यभावः। न च क्षणिकस्य ज्ञानस्यार्थप्राप्तिकालं यावदवस्थानाभावात्कथं प्रापकतेति वाच्यम्। प्रदर्शकत्वव्यतिरेकेण तस्यास्तत्रासम्भवात्। न चान्यस्य ज्ञानान्तरस्यार्थप्राप्तौ संनिकृष्टत्वात्तदेव प्रापकमित्याशङ्कनीयम्। यतो यद्यप्यनेकस्माज्ज्ञानक्षणात्प्रवृत्तावर्थप्राप्तिस्तथापि पर्यालोच्यमानमर्थप्रदर्शकत्वमेव ज्ञानस्य प्रापकत्वं नान्यत्। तच्च प्रथमत एव ज्ञानक्षणे संपन्नमिति नोत्तरोत्तरज्ञानानां तदुपयोगि, तद्विशेषांशप्रदर्शकत्वेन तु तेषामुपपन्नमेव। प्रवृत्तिमूला तूपादेयार्थप्राप्तिर्न प्रमाणाधीना तस्याः पुरुषेच्छाधीनप्रवृत्तिप्रभवत्वात्। न च प्रवृत्त्यभावे प्रमाणस्यार्थप्रदर्शकत्वलक्षणव्यापाराभावो वाच्यः प्रतीतिविरोधात्। न खलु चन्द्रार्कादिविषयं प्रत्यक्षमप्रवर्तकत्वान्न तत्प्रदर्शकमिति लोके प्रतीतिः। कथं चैवं वादिनः सुगतज्ञानं प्रमाणं स्यात्। न हि हेयोपादेयतत्त्वज्ञानं कंचित् तस्य प्रवर्तकं कृतार्थत्वादन्यथा कृतार्थता न स्यादितरजनवत्। सुखादिस्वसंवेदनं वा न हि कंचित्पुरुषं प्रवर्तयति फलात्मकत्वादन्यथा प्रवृत्त्यनवस्था। व्याप्तिज्ञानं वा। न खलु स्वविषयेऽर्थिनं तत्प्रवर्तयत्यनुमानवैफल्यप्रसङ्गात्। ततः प्रवृत्त्यभावेऽपि प्रवृत्तिविषयोपदर्शकत्वेन ज्ञानस्य प्रामाण्यमभ्युपगन्तव्यम्। ननु प्रवृत्तेर्विषयो भावी वर्तमानो वाऽर्थः? भावी चेन्नासौ प्रत्यक्षेण प्रवर्तयितुं शक्यस्तत्र तस्याप्रवृत्तेः। वर्तमानश्चेन्नार्थिनोऽत्राप्रवृत्तेः। न हि कश्चिदनुभूयमान एव प्रवर्ततेऽनवस्थापत्तेरिति साम्प्रतमर्थक्रियासमर्थोऽर्थस्यार्थक्रियायाश्च प्रवृत्तिविषयत्वात्। तत्रार्थक्रियासमर्थोऽर्थोऽध्यक्षेण प्रदर्शयितुं शक्यः। न ह्यर्थक्रियावत्सोऽप्यनागतः। न चास्याध्यक्षत्वे प्रवृत्त्यभावप्रसङ्गोऽर्थक्रियार्थत्वात्तस्याः। कार्यादृष्टौ कथमेतत्तत्र समर्थमित्यवगमो यतः प्रवृत्तिः स्यादिति चेदास्तां तावदेतत्कार्यकारणभावविचारप्रस्तावे विस्तरेणाभिधानात्। प्रतीयते चेदमभिमतार्थक्रियाकारि न त्विदमित्यर्थमात्रप्रतिपत्तौ प्रवृत्तिः पशूनामपि। तस्मादर्थक्रियासमर्थार्थप्रदर्शकत्वमेव प्रमाणस्य हितप्रापणम्। अहितपरिहारोऽप्यनभिप्रेतप्रयोजनप्रसाधनमेतदित्युपदर्शनमेव। तयोः समर्थमव्यवधानेनार्थतथाभावप्रकाशकं हि यस्मात्प्रमाणं ततो ज्ञानमेव तत्। न चाज्ञानस्यैवंविधं तत्प्राप्तिपरिहारयोः सामर्थ्यं ज्ञानकल्पनावैयर्थ्यप्रसङ्गात्। ननु साधूक्तं प्रमाणस्याज्ञान-

१ स्नानपानादि ॥ २ जलादि ॥ ३ जलादिक ॥ ४ प्राप्तिनिबन्धनत्व ॥ ५ बौद्धो वदति ॥ ६ स्थिति ॥ ७ परेण ॥ ८ अर्थज्ञाने ॥ ९ समीपत्वात् ॥ १० पुरुषस्य ॥ ११ जात ॥ १२ प्रदर्शकत्वम् ॥ १३ फलवत् ॥ १४ अर्थ ॥ १५ भेद ॥ १६ प्रदर्शकत्व ॥ १७ जलादि ॥ १८ कारणका ॥ १९ प्रवर्तकत्वाभावे ॥ २० तु ॥ २१ भा ॥ २२ यत प्रवर्तक तत्र प्रमाणमित्येववादिन ॥ २३ विषये ॥ २४ कृतार्थकमपि प्रवर्तयति चेत् ॥ २५ सुगतो न सर्वज्ञो ज्ञानेन प्रवर्त्यमानत्वाद्गोपवत्। विपक्षे गोपस्य सर्वज्ञत्व तत एव सुगतवत् ॥ २६ कृतार्थकमपि प्रवर्तयतीति चेत् ॥ २७ कथ प्रमाणम् (अपि तु न स्यात् अस्ति च प्रमाणे प्रदर्शकत्वात्) ॥ २८ अर्थे ॥ २९ प्रवृत्ते फलहेतुत्वात्तत्रापि फलेन भाव्यम् ॥ ३० अनुपरमा ॥ ३१ कथ प्रमाणम् ॥ ३२ अखिलसाध्यसाधनलक्षणे ॥ ३३ पुरुष ॥ ३४ यत प्रदर्शकत्वमेव प्रापकत्व ज्ञानस्य ॥ ३५ सद्भावे ॥ ३६ अर्थ ॥ ३७ प्रकाशकत्वेन ॥ ३८ परेण ॥ ३९ पर ॥ ४० द्वयोर्मध्ये ॥ ४१ विषये ॥ ४२ अन्यथा ॥ ४३ अर्थप्राप्त्यर्थे हि प्रवृत्ति सा प्रत्यक्षा जातेति ॥ ४४ प्रवृत्ते फलहेतुत्वात्तत्रापि फलेन भाव्यम् ॥ ४५ तयोर्द्वयोर्मध्ये ॥ ४६ जलादि ॥ ४७ अप्रत्यक्षत्वप्रसङ्गादर्थस्य ॥ ४८ अर्थप्राप्त्यर्थं हि प्रवृत्ति सा प्रत्यक्ष जायते इति ॥ ४९ पर । स्नानादि ॥ ५० जल ॥ ५१ अर्थक्रियाया ॥ ५२ निश्चय ॥ ५३ किं च ॥ ५४ वस्तु ॥ ५५ पाषाणादिकम् ॥ ५६ अहिकण्टकादि ॥ ५७ हिताहितप्राप्तिपरिहारयो ॥ ५८ अव्यवधानेनार्थतथात्वप्रदर्शकत्वलक्षणम् ॥ ५९ हिताहित ॥ ६० अन्यथा ॥

रूपतापनोदार्थं ज्ञानविशेषणमस्माकमपीष्टत्वात् । तद्धि समर्थयमानैः साहाय्यमनुष्ठितं तत्तु किञ्चिन्निर्विकल्पकं किञ्चित्सविकल्पकमिति मन्यमानं प्रत्यगेपस्यापि प्रमाणस्याविशेषेण विकल्पात्मकत्वविधानार्थं व्यवसायात्मकत्वविशेषणसमर्थनपरं तन्निश्चयात्मकमित्याद्याह। यत्प्राक्प्रबन्धेन समर्थितं ज्ञानरूपं प्रमाणम् ॥:-

## तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवत् ॥ ३ ॥

संशयविपर्यासानध्यवसायात्मको हि समारोपस्तद्विरुद्धत्वं वस्तुतथाभावग्राहकत्वं निश्चयात्मकत्वेनानुमाने व्याप्तं सुप्रसिद्धमन्यत्रापि ज्ञाने तद् दृश्यमानं निश्चयात्मकत्वं निश्चाययति समारोपविरोधिग्रहणस्य निश्चयस्वरूपत्वात् । प्रमाणत्वाद्वा तत्तदात्मकमनुमानवदेव । परनिरपेक्षतया वस्तुतथाभावप्रकाशकं हि प्रमाणं न चाविकल्पकम् तथा नीलादौ विकल्पस्य क्षणक्षयेऽनुमानस्यापेक्षणात् ।:- ततोऽप्रमाणं तद्वस्तुव्यवस्थायामपेक्षितपरव्यापारत्वात्सन्निकर्षादिवत् । न चेदमनुभूयतेऽक्षव्यापारानन्तरं स्वार्थव्यवसायात्मनो नीलादिविकल्पस्यैव वैशद्येनानुभवात् । न च विकल्पाविकल्पयोर्युगपद्वृत्तेर्लघुवृत्तेर्वा एकत्वाध्यवसायाद्विकल्पे वैशद्यप्रतीतिस्तद्व्यतिरेकेणापरस्याप्रतीतेः भेदेन प्रतीतौ ह्यन्यत्रान्यस्यारोपो युक्तो मित्रे चैत्रवत् । न चाऽस्पष्टाभो विकल्पो निर्विकल्पकं च स्पष्टाभं प्रत्यक्षतः प्रतीतम् । तथाप्यनुभूयमानस्वरूपं वैशद्यं परित्यज्याननुभूयमानस्वरूपं वैपरिकल्पयन् कथं परीक्षको नामानवस्थाप्रसङ्गात्ततोऽप्यपरस्वरूपं तदिति परिकल्पनप्रसङ्गात् । युगपद्वृत्तेश्चाभेदाध्यवसाये दीर्घशष्कुलीभक्षणादौ रूपादि ज्ञानपञ्चकस्यापि सहोत्पत्तेरभेदाध्यवसायः किन्न स्यात् । भिन्नविषयत्वात्तेषां तदभावेऽत एव स प्रकृतयोरपि न स्यात् क्षणसन्तानविषयत्वेनानयोरप्यस्याविशेषात् । लघुवृत्तेश्चाऽभेदाध्यवसाये खररटितमित्यादावप्यभेदाध्यवसायप्रसङ्गः । कथं चैवं कापिलानां बुद्धिचैतन्ययोर्भेदोऽनुपलभ्यमानोपि न स्यात् । अथानयोः सादृश्याद्भेदेनानुपलम्भो भिभवाद्वाभिधीयते । ननु किंकृतमनयोः सादृश्यं विषयाभेदकृतं ज्ञानरूपताकृतं वा? न तावद्विषयाभेदकृतं सन्तानेतरविषयत्वेनानयोर्विषयाभेदाऽसिद्धेर्ज्ञानरूपतासादृश्येन त्वभेदाध्यवसाये नीलपीतादिज्ञानानामपि भेदेनोपलम्भो न स्यात् । अथाभिभवात्, केन कस्याभिभवः विकल्पेनाविकल्पस्य भानुना तारानिकरस्येवेति चेद्विकल्पस्याप्यविकल्पेनाभिभवः कुतो न भवति? बलीयस्त्वादस्येति चेत्कुतोस्य बलीयस्त्वं बहुविषयान्निश्चयात्मकत्वाद्वा? प्रथमपक्षोऽयुक्तो निर्विकल्पविषय एव तत्प्रवृत्त्यभ्युपगमात् । अन्यथा अग्रहीतार्थग्राहित्वेन प्रमाणान्तरत्वप्रसङ्गः । द्वितीयपक्षेपि स्वरूपे निश्चयात्मकं, तस्यार्थरूपे वा? न

१ बोद्धाना ॥ २ जैनै ॥ ३ कृतम् ॥ ४ ज्ञान ॥ ५ वौद्ध ॥ ६ प्रधान ॥ ७ स्वापूर्वेत्यादि ॥ ८ व्यापकेन ॥ ९ प्रत्यक्षे ॥ १० ज्ञानस्य ॥ ११ सम्यग्ज्ञानत्वादविसंवादित्वान्निश्चयहेतुत्वात् ॥ १२ ज्ञानविशेषणविशिष्ट प्रमाण ॥ १३ प्रमाणत्व च स्वान्निश्चयात्मकत्व च न स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह पर सविकल्पक ज्ञानम् ॥ १४ दर्शन सागताभिमतम् ॥ १५ नीलमिद पीतमिदम् ॥ १६ सर्वं क्षणिक सत्त्वात् इत्यस्य ॥ १७ ज्ञानापेक्ष ॥ १८ किच ॥ १९ निर्विकल्पकम् ॥ २० प्रत्यक्षसिद्ध न भवतीत्यर्थ ॥ २१ नयनोन्मीलनानन्तरम् ॥ २२ क्रमसत्त्वेऽपि ॥ २३ अविकल्पविकल्पयो स्पष्टाऽस्पष्टत्वेन भेदेन प्रत्यक्षत प्रतीत्यभावे ॥ २४ विकल्पे ॥ २५ अवेशद्यम् ॥ २६ सौगत ॥ २७ अवेशद्यधर्मात् ॥ २८ पीतम् ॥ २९ सविकल्पकम् ॥ ३० पर ॥ ३१ अविकल्पकविकल्पयो ॥ ३२ सामान्य ॥ ३३ अविकल्पविकल्पयो ॥ ३४ भिन्नविषयत्वस्य ॥ ३५ किं न ॥ ३६ विकल्पाविकल्पयोरनुपलभ्यमानभेदसम्भवप्रकारेण ॥ ३७ साङ्ख्यानाम् ॥ ३८ अप्रतीयमान ॥ ३९ अनुपलभ्यमानत्वान्न सिध्येत् ॥ ४० अभ्युपगममात्रस्य तत्रापि सद्भावात् ॥ ४१ पर ॥ ४२ विकल्पेतरयो ॥ ४३ पृथक्त्वाध्यवसायस्य ॥ ४४ पराभवात् ॥ ४५ परेण मया ॥ ४६ भा (तृतीया) ॥ ४७ क्षण ॥ ४८ पुन ॥ ४९ क्षण ॥ ५० तिरस्कार ॥ ५१ परे ॥

तावत्स्वरूपे सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमित्यस्य विरोधात् । नाप्यर्थे विकल्पस्यैकस्य निश्चयानिश्चयस्वभावद्वयप्रसङ्गात् । तच्च परस्परं तद्वतश्चैकान्ततोभिन्नं चेत्समवायाद्यनभ्युपगमात्सम्बन्धासिद्धेर्वलवान्विकल्पो निश्चयात्मकत्वादित्यस्यासिद्धेः । अभेदैकान्तेपि तद्द्वयं तद्वानेव वा भवेत् । कथंचित्तादात्म्येनिश्चयानिश्चयस्वरूपसाधारणमात्मानं प्रतिपद्यते चेद्विकल्पः स्वरूपेपि सविकल्पकः स्यादन्यथा निश्चयस्वरूपतादात्म्यविरोधः । न च स्वरूपमनिश्चिन्वन्विकल्पोऽर्थनिश्चायकोऽन्यथाऽगृहीतस्वरूपमपि ज्ञानमर्थग्राहकं भवेत् तथाचाप्रत्यक्षोपलम्भस्येत्यादिविरोधस्तत्स्वरूपस्यानुभूतस्याप्यनिश्चितस्य क्षणिकत्वादिवन्नान्यनिश्चायकत्वम् । विकल्पान्तरेण तन्निश्चयेऽनवस्था । कश्चानयोरेकत्वाध्यवसायः? किमेकविषयत्वमन्यतरेणान्यतरस्य विषयीकरणं वा परत्रेतरस्याध्यारोपो वा? न तावदेकविषयत्वं सामान्यविशेषविषयत्वेनानयोर्भिन्नविषयत्वात् । दृश्यविकल्प्ययोरेकत्वाध्यवसायादभिन्नविषयत्वमित्यप्ययुक्तम् । एकत्वाध्यवसायो हि दृश्ये विकल्प्यस्याध्यारोपः । स च गृहीतयोरगृहीतयोर्वा तयोर्भवेत्? न तावद्गृहीतयोर्भिन्नस्वरूपतया प्रतिभासमानयोर्घटपटयोरिवैकत्वाध्यवसायायोगात् । न चानयोर्ग्रहणं दर्शनेनास्य विकल्प्यागोचरत्वान्नापि विकल्पेनास्यापि दृश्यागोचरत्वान्नापि ज्ञानान्तरेणास्यापि निर्विकल्पकत्वे विकल्पात्मकत्वे चोक्तदोषानतिक्रमात् । नाप्यगृहीतयोः स सम्मत्यतिप्रसङ्गात् । सादृश्यनिबन्धनश्चारोपो दृष्टो वस्त्ववस्तुनोश्च नीलखरविषाणयोरिव सादृश्याभावान्नाध्यारोपो युक्तः । तन्नैकविषयत्वम् । अन्यतरस्यान्यतरेण विषयीकरणमपि समानकालभाविनोरपारतन्त्र्यादनुपपन्नम् । अविषयीकृतस्यान्यस्यान्यत्राध्यारोपोप्यसम्भवी । किञ्च विकल्पे निर्विकल्पकस्याध्यारोपो निर्विकल्पके विकल्पस्य वा प्रथमपक्षे विकल्पव्यवहारोच्छेदो निखिलज्ञानानां निर्विकल्पकत्वप्रसङ्गात् । द्वितीयपक्षेपि निर्विकल्पकवार्तोच्छेदः सकलज्ञानाना सविकल्पकत्वानुषङ्गात् । किं च विकल्पे निर्विकल्पकधर्मारोपाद्वैशद्यव्यवहारवन्निर्विकल्पके विकल्पधर्मारोपादवैशद्यव्यवहारः किन्न स्यात् । निर्विकल्पकधर्मेणाभिभूतत्वाद्विकल्पधर्मस्येत्यन्यत्रापि समानम् । भवतु वा तेनैवाभिभवस्तथाप्यसौ सहभावमात्रादभिन्नविषयत्वादभिन्नसामग्रीजन्यत्वाद्वा स्यात् प्रथमपक्षे गोदर्शनसमयेऽश्वविकल्पस्य स्पष्टप्रतिभासो भवेत्सहभावाविशेषात् । अथानयोर्भिन्नविषयत्वान्नास्पष्टप्रतिभासमभिभूयाश्वविकल्पे स्पष्टतयो प्रतिभासस्तर्हि शब्दस्वलक्षणमध्यक्षेणानुभवता तत्र क्षणक्षयानुमानं स्पष्टमनुभूयतामभिन्नविषयत्वा-

१ निर्विकल्पकबोध ॥ २ सविकल्पक्षण ॥ ३ निर्विकल्पकक्षण ॥ ४ नीलमिति स्वस्य वेदनेन ॥ ५ स्वसंवेदनम् ॥ ६ नीलाद्याकारतया सविकल्पकत्वं क्षणा ॥ ७ सर्वज्ञानानां स्वरूपे निर्विकल्पकत्वाभ्युपगमस्य ग्रन्थस्य ॥ ८ स्वरूपेऽनिश्चयात्मकत्वमर्थे निश्चयात्मकत्वम् ॥ ९ ततः स्वरूपनिश्चयाभावात् ॥ १० विकल्पात् ॥ ११ स्वरूपम् ॥ १२ परेणो ॥ १३ त्रयाणा भेदात् ॥ १४ सौगताभ्युपगतस्य हेतो ॥ १५ स्वरूपम् ॥ १६ विकल्प ॥ १७ सति ॥ १८ स्वरूपम् ॥ १९ तथा चापसिद्धान्तप्रसङ्ग ॥ २० भा ॥ २१ विकल्पस्य ॥ २२ किंच ॥ २३ अज्ञात ॥ २४ नाज्ञात नाम ज्ञापकम् ॥ २५ अत्यन्तपरोक्षज्ञानस्य ॥ २६ नार्थसिद्धि प्रसिद्ध्यति ॥ २७ उपलम्भ स्वरूप जानाति नवा ? न जानाति चेत्कथ सर्व जानातीत्यभिप्राय ॥ २८ नीलनीलमिति ॥ २९ नीलोयमिति ॥ ३० नैयायिक प्रति बौद्धेनोक्तम् ॥ ३१ विकल्पस्वरूप यथा क्षणिकत्वादिनिश्चायक न भवति अनिश्चितत्वात्तथाऽर्थस्यापि न निश्चायक तत एव ॥ ३२ अर्थे ॥ ३३ निर्विकल्पकसविकल्पकयो ॥ ३४ भा ॥ ३५ परमाणु ॥ ३६ निर्विकल्पकसविकल्पकयो ॥ ३७ पर ॥ ३८ स्वलक्षण ॥ ३९ नीलादि ॥ ४० सति ॥ ४१ खरविषाणयोरप्येकत्वाध्यवसायप्रसङ्ग परमाण्वादावपि स्याद्वा ॥ ४२ लोके ॥ ४३ दृश्यविकल्प्ययो ॥ ४४ विकल्पाविकल्पयो ॥ ४५ अविकल्पस्य ॥ ४६ विकल्पे ॥ ४७ इद निर्विकल्पकमिति ॥ ४८ वैशद्य ॥ ४९ विकल्पधर्मस्यावैशद्यस्य निर्विकल्पके आरोपेन न ( इति चेत् ) ॥ ५० विकल्पधर्मेण निर्विकल्पधर्मस्याभिभूतत्वात् विकल्पे निर्विकल्पकधर्मारोपाद्वैशद्यव्यवहारो माभूत् ॥ ५१ निर्विकल्पधर्मेणाभिभूतत्वात् ॥ ५२ दर्शन ॥ ५३ अवैशद्य ॥ ५४ तिरस्कृत्य लोप्य वा ॥ ५५ वैशद्येन ॥ ५६ श्रोत्रेन्द्रियदर्शनेन ॥ ५७ परेण ॥ ५८ सर्व क्षणिकमिति ॥ ५९ परेण ॥

न्नीलादिविकल्पवत् । भिन्नसामग्रीजन्यत्वादनुमानविकल्पस्याध्यक्षेण तद्धर्माभिभवाभावे सकलविकल्पानां विशदावभासिस्वसंवेदनप्रत्यक्षेणाभिन्नसामग्रीजन्येनाभिभवप्रसङ्गः । अथ तत्राभिन्नसामग्रीजन्यत्वं नेष्यते तेषां विकल्पवासनाजन्यत्वात्सवेदनमात्रप्रभवत्वाच्च स्वसंवेदनस्येत्यसन्नीलादिविकल्पस्याप्यध्यक्षेणाभिभवाभावप्रसङ्गात्तत्रापि तदविशेषात् । किं चानयोरेकत्वं निर्विकल्पकमध्यवस्यति विकल्पो वा ज्ञानान्तरं वा ? न तावन्निर्विकल्पकमध्यवसायविकलत्वात्तस्य अन्यथा भ्रान्तताप्रसङ्गः । नापि विकल्पस्तेनाविकल्पस्याविषयीकरणादन्यथा स्वलक्षणगोचरताप्राप्तेर्विकल्पोऽवस्तुनिर्भास इत्यस्य विरोधः । न चाविषयीकृतस्यान्यत्रारोपः । न ह्यप्रतिपन्नरजतः शुक्तिकायां रजतमारोपयति । ज्ञानान्तरं तु निर्विकल्पकं सविकल्पकं वा? उभयत्राप्युभयदोषानुषङ्गस्तदुभयविषयत्वायोगः । तदन्यतरविषयेणानयोरेकत्वाध्यवसायेऽतिप्रसङ्गोऽक्षज्ञानेन त्रिविप्रकृष्टेतरयोरप्येकत्वाध्यवसायप्रसङ्गात् । तन्न तयोरेकत्वाध्यवसायाद्विकल्पे वैशद्यप्रतीतिरविकल्पकस्यानेनैवैकत्वाध्यवसायस्य चोक्तन्यायेनाप्रसिद्धत्वात् । यच्चोच्यते—संहृतसकलविकल्पावस्थायां रूपादिदर्शनं निर्विकल्पकं प्रत्यक्षतोऽनुभूयते । तदुक्तम्—संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना । स्थितोपि चक्षुषा रूपमीक्षते साऽक्षजा मतिः ॥ १ ॥ प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति । प्रत्यात्मवेद्यः सर्वेषां विकल्पो नामसंश्रयः ॥ २ ॥ इति । न चात्रावस्थायां नामसंश्रयतयाऽननुभूयमानानामपि विकल्पानां सम्भवोऽतिप्रसङ्गादित्यप्युक्तिमात्रमश्वं विकल्पयतो गोदर्शनलक्षणायां संहृतसकलविकल्पावस्थायां स्थिरस्थूलादिस्वभावार्थसाक्षात्कारिणो विपरीतारोपविरुद्धस्याध्यक्षस्यानिश्चयात्मकत्वायोगात् । तत्त्वे वाश्वविकल्पाद्व्युत्थितचित्तस्य गवि स्मृतिर्न स्यात् क्षणिकत्वादिवत् । नामसंश्रयात्मनो विकल्पस्यात्र निषेधे तु न किञ्चिदनिष्टम् । न चाशेषविकल्पानां नामसंश्रयतैव स्वरूपं समारोपविरोधिग्रहणलक्षणत्वात्तेषामित्यग्रे व्यासतो वक्ष्यामः । न चानिश्चयात्मनः प्रामाण्यं गच्छत्तृणस्पर्शसंवेदनस्यापि तत्प्रसङ्गात् । निश्चयहेतुत्वात्तस्य प्रामाण्यमित्ययुक्तं संशयादिविकल्पजनकस्यापि प्रामाण्यप्रसङ्गात् । स्वलक्षणानध्यवसायित्वात्तद्विकल्पस्यादोषोयमित्यन्यत्रापि समानम् । न हि नीलादिविकल्पोपि स्वलक्षणाध्यवसायी तदनालम्बनस्य तदध्यवसायित्वविरोधात् । मनोराज्यादिविकल्पः कथं तदध्यवसायीत्यस्यैव दूषणं यस्यासौ राज्याद्यग्राहकस्वभावो नास्माकं सत्यराज्यादिविषयस्य तद्ग्राहकस्व-

१ नीलादिप्रतिभासो यथानुभूयते ॥ २ प्रत्यक्ष श्रोत्रचक्षुरादिजनितमनुमान च लिङ्गजनितम् ॥ ३ दर्शनेन ॥ ४ अनुमान साष्ट नानुभूयते ॥ ५ प्रधानादिविकल्पाना ॥ ६ सर्वचित्तचेत्तानामभिन्नसामग्रीप्रभवत्वात् ॥
७ विशदतयाप्रतिभासो भवेत्सकलविकल्पानाम् ॥ ८ पर ॥ ९ सर्वविकल्पेषु स्वसवेदनेषु च ॥ १० सौगतेरस्माभि ॥ ११ सस्कार ॥ १२ प्रत्यक्षस्य ॥ १३ नीलादिविकल्पे ॥ १४ विकल्पेतरयो ॥ १५ नीलादिविकल्पवत् ॥
१६ अवस्तुनि निर्भास प्रतिभासो यस्य विकल्पस्य स ॥ १७ ग्रन्थस्य ॥ १८ निर्विकल्पकस्य ॥ १९ विकल्पे ॥ २० घटते ॥ २१ ना ॥ २२ सविकल्पकनिर्विकल्पकयो ॥ २३ ज्ञानेन ॥ २४ देशकालस्वभावव्यवहिता-
व्यवहितयो घटादिपरमाण्वायो ॥ २५ त्रिकल्पस्य ॥ २६ परेण ॥ २७ नष्ट ॥ २८ नीलादि ॥ २९ जातिद्रव्यगुणक्रियानिबन्धना ॥ ३० सामस्त्येन ॥ ३१ विकल्परूपाम् ॥ ३२ स्थिरीभूतेन ॥ ३३ गच्छन् वा ॥ ३४ रहित ॥
३५ मनसा ॥ ३६ प्रतिस्वरूपवेद्य ॥ ३७ स्वसवेदनेन वेद्य ॥ ३८ शब्द सश्रय कारण यस्य विकल्पस्य स ॥ ३९ नष्टविकल्पाया ॥ ४० सुप्तप्रमत्तादावपि स्यात् ॥ ४१पुरुपस्य ॥ ४२साधारण सामान्यरूप ॥ ४३क्षणिकादि ॥
४४ ता ( षष्ठी ) ॥ ४५ निर्विकल्पकस्य ॥ ४६ व्यावृत्त ॥ ४७ नरस्य ॥ ४८ जेनाना ॥ ४९ ज्ञान ॥ ५० शब्दाद्वैतवादे ॥ ५१ विस्तरत ॥ ५२ दर्शनस्य ॥ ५३ दर्शनस्य ॥ ५४ अनुक्षणिक ॥ ५५ सशयादि ॥ ५६ नीला-
दिविकल्पे ॥ ५७ स्वलक्षण ॥ ५८ विकल्प स्वलक्षणाध्यवसायी न भवति तदनालम्बनत्वात् मनोराज्यादिना ( मनोराज्याध्यवसायिनेत्यर्थ ) अनेकान्तोऽस्य ॥ ५९ मनोराज्यादिस्वरूपालम्बनोपि राज्याध्यवसायी ॥ ६० बौद्धस्य ॥
६१ मनोराज्यादिविकल्पस्य ॥

भावत्वाभ्युपगमात् । न चास्य विकल्पोत्पादकत्वं घटते स्वयमविकल्पकत्वात् स्वलक्षणवद् । विकल्पोत्पादनसामर्थ्याविकल्पकत्वयोः परस्परं विरोधात् । विकल्प-वासनापेक्षस्याविकल्पकस्यापि प्रत्यक्षस्य विकल्पोत्पादनसामर्थ्याविरोधेऽर्थस्यैव तथाविधस्य सोस्तु । किमन्तर्गडुना निर्विकल्पकेन । अथाज्ञातोर्थः + कथं तज्जन-कोऽतिप्रसङ्गात् । दर्शनं कथमनिश्चयात्मकमित्यपि समानम् । तस्यानुभूतिमात्रेण जनकत्वे क्षणक्षयादौ विकल्पोत्पत्तिप्रसङ्गः । यत्रार्थे दर्शनं विकल्पवासनायाः प्रबोधकं तत्रैव तज्जनकमित्यप्यसाम्प्रतं तस्यानुभवमात्रेण तत्प्रबोधकत्वे नीलादाविव क्षणक्षयादावपि तत्प्रबोधकत्वप्रसङ्गात् । तत्राभ्यासप्रकरणबुद्धिपाटवार्थि-त्वाभावान्न तत्तस्याः प्रबोधकमिति चेदथ कोयमभ्यासो नाम भूयोदर्शनं बहुशो विकल्पोत्पत्तिर्वा ? न तावद्भूयो दर्शनं तस्य नीलादाविव क्षणक्षयादावप्यविशेषात् । अथ बहुशो विकल्पोत्पत्तिरभ्यासस्तस्य क्षणाक्षयादिदर्शने कुतोऽभावः ? तस्य विकल्पवासनाप्रबोधकत्वाभावाच्चेदन्योन्याश्रयः । सिद्धे हि क्षणक्षयादौ दर्शनस्य विकल्पवासनाप्रबोधकत्वाभावे तल्लक्षणाभ्यासाभावसिद्धिः तत्सिद्धौ चास्य सिद्धिरिति । क्षणिकाक्षणिकविचारणायां क्षणिकप्रकरणमप्यस्त्येव । पाटवं तु नीलादौ दर्शनस्य विकल्पोत्पादकत्वं स्फुटतरानुभवो वा स्यादविद्यावासनाविनाशादात्मलाभो वा ? प्रथमपक्षेऽन्योन्याश्रयात् द्वितीयपक्षे तु क्षणाक्षयादावपि तत्प्रसङ्गः स्फुट-तरानुभवस्यात्राप्यविशेषात् तृतीयपक्षोप्ययुक्तः तुच्छस्वभावाभावानभ्युपगमात् । अन्योत्पादकैककारणस्वभावस्योपगमे क्षणक्षयादौ तत्प्रसङ्गः । अन्यथा दर्शनभेदः स्याद्विरुद्धधर्माध्यासात् । योगिन एव च तथाभूतं तत्सम्भाव्येत । ततोऽस्यापि विकल्पोत्पत्तिप्रसङ्गाद्विधूतकल्पनाजालेत्यादिविरोधः । अर्थित्वं चाभिलषितत्वं जिज्ञासितत्वं वा ? प्रथमपक्षोऽयुक्तः क्वचिदनभिलषितेपि वस्तुनि तस्याः प्रबोधदर्शनात् । चक्रकप्रसङ्गश्चाभिलषितत्वस्य वस्तुनिश्चयपूर्वकत्वात् । द्वितीयपक्षेतु क्षण-क्षयादौ तद्वासनाप्रबोधप्रसङ्गो नीलादाविवात्रापि जिज्ञासितत्वाविशेषात् । न चैवं सविकल्पकप्रत्यक्षवादिनामपि प्रतिवाद्युपन्यस्तसकलवर्णपदादीनां स्वोच्छ्वासादि-संख्यायाश्चाविशेषेण स्मृतिः प्रसज्यते सर्वथैकस्वभावस्यान्तर्बहिर्वा वस्तुनोऽनभ्युपगमात् । तन्मते ह्यवग्रहेहावायज्ञानादनभ्यासात्मकादन्यदेवाभ्यासात्मकं धारणा

---

१ किंच ॥ २ निर्विकल्पकदर्शनस्य ॥ ३ स्वलक्षणे यथा ॥ ४ अविकल्पकं च स्याद्विकल्पोत्पादनसामर्थ्यं च स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ५ अभिलापसंसर्गयोग्यताराहित्यमविकल्पकत्वं तस्मिन्सति कथं विकल्पोत्पादनसामर्थ्यं स्यादविकल्पकस्य ॥ ६ परं ॥ ७ विकल्पवासनापेक्षस्य ॥ ८ (परं )अगृहीत ॥ ९ विकल्प ॥ १० सर्वस्य सर्वत्र विकल्पं जनयेत् ॥ ११ विकल्पजनक ॥ १२ उभयत्रापि ॥ १३ विकल्प ॥ १४ यथा नील मिदमिति विकल्पस्तथा क्षणिकमिदमिति विकल्पः स्यात ॥ १५ न क्षणक्षयादौ ॥ १६ विकल्प ॥ १७ स्वसंवेदनेन ॥ १८ स्वर्गप्रापणशक्ति ॥ १९ दर्शनस्य ॥ २० अनुभूतिमात्राविशेषात् ॥ २१ पश्यन्नयं क्षणिकमेव पश्यतीति वचनात् ॥ २२ इदं क्षणिकमिदं क्षणिकमिति ॥ २३ प्रस्ताव ॥ २४ दर्शन ॥ २५ पश्यन्नयं क्षणिकमेव पश्यतीति वचनात् ॥ २६ इदं क्षणिकमिदं क्षणिकमिति ॥ २७ पश्यन्नयं क्षणिकमेव पश्यतीति वचनात् ॥ २८ क्षणि-कादौ दर्शनस्य विकल्पवासनाप्रबोधकत्वाभावे सिद्धे विकल्पोत्पादकत्वलक्षणपाटवाभावसिद्धिस्तत्सिद्धौ चास्य सिद्धिरिति ॥ २९ विकल्पवासनाप्रबोधकत्व ॥ ३० सिद्धे हि विकल्पोत्पादकत्वे (पाटवे) नीलादौ विकल्पवासनाप्रबो धकत्वसिद्धिस्ततस्तदुत्पादकत्वसिद्धिरिति ॥ ३१ सौगतै ॥ ३२ बुद्धे ॥ ३३ विकल्पवासनाप्रबोधविकल्पोत्पत्ति ॥ ३४ अविद्यावासनातोऽन्यदिन्द्रियं वा ज्ञानान्तरं वा आत्मा वा ॥ ३५ वस । अविद्यावासनाविनाशस्य ॥ ३६ विक-ल्पोत्पादकत्वम ॥ ३७ निर्विकल्पक ॥ ३८ नीलादौ पाटवं क्षणक्षयादावपाटवमिति ॥ ३९ एकक्षणस्यैव पाटवभावाभाव ॥ ४० किं च ॥ ४१ पाटव ॥ ४२ निश्चीयेत ॥ ४३ योगिनः प्रत्यक्षादपि ॥ ४४ विधूतकल्पनाजाल प्रत्यक्ष योगिनां मतम् ॥ ४५ ग्रन्थविरोध ॥ ४६ ज्ञातुमिष्टत्व ॥ ४७ अहिकण्टकादौ ॥ ४८ अभिलाषाद्विकल्पवासनाप्रबोधस्तस्माच्च विकल्पस्तस्माच्चाभिलषितत्वम् ॥ ४९ विकल्प ॥ ५० विकल्प ॥ ५१ निर्विकल्पकप्रत्यक्षवादि-मतप्रकारेणानिश्चयात्मकस्य विकल्पाजनकत्वे ॥ ५२ जैनानाम ॥ ५३ सौगत ॥ ५४ वाक्य ॥ ५५ येन ॥ ५६ निश्वास ॥ ५७ बोधस्य निश्चयात्मकत्वात् ॥ ५८ निरंशस्य ॥ ५९ नैयायिकानां ॥

ज्ञानं प्रत्यक्षम् । तदभावे परोपन्यस्तमकलवर्णादिष्ववग्रहादित्रयसद्भावेपि स्मृत्यनुत्पत्तिस्तत्सद्भावे तु स्यादेव सर्वत्र यथासंस्कारं स्मृत्युत्पत्त्यभ्युपगमात् । न च परेषामप्ययं युक्तो दर्शनभेदाभावादेकस्यैव क्वचिदभ्यासादीनामितरेषां वाभ्युपगमात् । न च तदन्यव्यावृत्त्या तत्र तद्योगः स्वयमतत्स्वभावस्य तदन्यव्यावृत्तिसम्भवे पावकस्याऽशीतत्वादिव्यावृत्तिप्रसङ्गात् । तत्स्वभावस्य तु तदन्यव्यावृत्तिकल्पने फलाभावात्प्रतिनियतत्तत्स्वभावस्यैवान्यव्यावृत्तिरूपत्वात् । स्यान्मतम् अभ्यासादि-सापेक्षं निरपेक्षं वा दर्शनं विकल्पस्य नोत्पादकं शब्दार्थविकल्पवासनाप्रभवत्वात्तस्य । तद्वासनाविकल्पस्यापि पूर्वतद्वासनाप्रभवत्वादित्यनादित्वाद्विकल्पसन्तानस्य प्रत्यक्षसन्तानादन्यत्वाद्विजातीयाद्विजातीयस्योदयानिष्टेर्नोक्तदोषानुषङ्ग इत्यप्यसङ्गतं तस्य विकल्पाजनकत्वे यत्रैव जनयेदेतां तत्रैवास्यप्रमाणतेत्यस्य विरोधानुषङ्गात् । कथं वा वासनाविशेषप्रभवत्ततोऽध्यक्षस्य रूपादिविषयत्वनियमो मनोराज्यादिविकल्पादपि तत्प्रसङ्गात् । प्रत्यक्षसहकारिणो वासनाविशेषादुत्पन्नाद्रूपादि-विकल्पात्तस्य तन्नियमे स्वलक्षणविषयत्वनियमोप्यत एवोच्यताम् अन्यथा रूपादिविषयत्वनियमोप्यतो मा भूदविशेषात् । तथा च स्वलक्षणगोचरोऽसौ प्रत्य-क्षस्य तन्नियमहेतुत्वाद्रूपादिवत् / रूपाद्युल्लेखित्वाद्विकल्पस्य तद्बलात्तन्नियमस्यैवाभ्युपगमे प्रत्यक्षस्याभिलापसंसर्गोपि तद्वदनुमीयेत । विकल्पस्याभिलापनाभि-लप्यमानजात्याद्युल्लेखिततयोत्पत्त्यन्यथानुपपत्तेस्तथाविधदर्शनस्याप्रमाणसिद्धत्वाच्चात्मैवाहम्प्रत्ययप्रसिद्धेः प्रतिबन्धकापायेऽभ्यासाद्यपेक्षो विकल्पोत्पादकोऽस्तु । किमदृष्टपरिकल्पनया । ततो विकल्पः प्रमाणं संवादकत्वादर्थपरिच्छित्तौ साधकतमत्वादनिश्चितार्थनिश्चायकत्वात्प्रतिपत्त्रपेक्षणीयत्वाच्च अनुमानवत् । ननु निर्विकल्पकं तद्विपरीतत्वात्सन्निकर्षादिवत् । तस्याप्रामाण्यं पुनः स्पष्टाकारविकलत्वाद्गृहीतग्राहित्वादसति प्रवर्तनाद् हिताहितप्राप्तिपरिहारासमर्थत्वात्

---

१ अर्थे ॥ २ सस्कारानतिक्रमेण ॥ ३ जैने ॥ ४ सौगतानाम् ॥ ५ दर्शनं नीलादौ विकल्पोत्पादकं क्षणक्षयादौ न भवेदिति न्याय ॥ ६ प्रत्यक्ष ॥ ७ अवग्रहादिभेदात्प्रत्यक्षभेदो न दर्शनस्यैकरूपत्वात् ॥ ८ नीलादौ ॥ ९ क्षणक्षयादौ अनभ्यासादीनाम् ॥ १० परेण ॥ ११ अनभ्यासादे ॥ १२ अभ्यासादिरनभ्यासादि ॥ १३ दर्शने ॥ १४ यथाक्रममनभ्यासस्याभ्यासस्य च ॥ १५ अभ्यासानभ्यासादि ॥ १६ स्वरूपेण ॥ १७ अभ्यासा-द्यस्वभावस्य ॥ १८ अभ्यासादि ॥ १९ अनभ्यासादि ॥ २० अभ्यासादि ॥ २१ स्वरूपस्य ॥ २२ दर्शनस्य ॥ २३ अभ्यासादि ॥ २४ अनभ्यासादि ॥ २५ दर्शनस्वभाव ॥ २६ प्रकरणादि ॥ २७ अभ्यासादिस्वभावस्य दर्शनस्य ॥ २८ अनभ्यासादि ॥ २९ विकल्पस्य ॥ ३० शब्दार्थो नाम सामान्य ॥ ३१ वासनायाः ॥ ३२ भिन्नत्वात् ॥ ३३ दर्शनात् ३४ विकल्पस्य ॥ ३५ अनङ्गीकारात् ॥ ३६ न चास्य विकल्पोत्पादकत्वं घटते स्वयमवि-कल्पकत्वात्स्वलक्षणवदित्यादि ॥ ३७ दर्शनस्य ॥ ३८ अर्थे ॥ ३९ सन्निकल्पात्मिका बुद्धिः ॥ ४० दर्शनस्य ॥ ४१ किं च ॥ ४२ नयनाध्यक्षस्य ॥ ४३ अन्यथा ॥ ४४ क्षणिकादि ॥ ४५ दर्शनस्य ॥ ४६ परेण भवता ॥ ४७ विकल्पात् ॥ ४८ दर्शनस्य ॥ ४९ विकल्पात्प्रत्यक्षस्वलक्षणविषयत्वनियमे च ॥ ५० स्वलक्षणविषय ॥ ५१ यद्वि यद्विषयकं तदेतापरस्य तद्विषयत्वनियमहेतुर्यथा रूपादिविषयको विकल्पो रूपविषयत्वनियमहेतु प्रत्यक्षस्य ॥ ५२ अध्यक्षस्य रूपादिविषये नियमहेतुत्वाद्यथा रूपादिविषयो विकल्प तथाध्यक्षस्य स्वलक्षणनियमहेतुत्वात्स्वलक्षणविषयोपि विकल्प स्यात् ॥ ५३ सप्तमी ॥ ५४ परामर्शित्वात् ॥ ५५ प्रत्यक्षस्य ॥ ५६ ॥ रूपादिविषयत्व ॥ ५७ शब्दसम्बन्धोपि ॥ ५८ प्रत्यक्ष रूपादिनियतविषयं विकल्पस्य रूपाद्युल्लेखित्वेनोत्पत्त्यन्यथानुपपत्तेरित्यनुमानेन रूपादिविषयत्वनियमोऽनुमीयते यद्वत् ॥ ५९ शब्द ॥ ६० वाच्य ॥ ६१ सामान्यविषय ॥ ६२ शब्दत्वेन तु दर्शनस्य तद्विपरीतत्वात् ॥ ६३ किंच ॥ ६४ निर्विकल्पक ॥ ६५ स्वसंवेदनवेद्य ॥ ६६ आवरण ॥ ६७ निर्विकल्पकदर्शन ॥ ६८ मनोराज्यादि विकल्पवत् ॥ ६९ प्रमातृ ॥ ७० रहितत्वात् ॥ ७१ मनोराज्यादिविकल्पवत् ॥ ७२ धारावाहिकज्ञानवत् ॥ ७३ केशोण्डुकज्ञानवत् ॥ ७४ द्विचन्द्रादिज्ञानवत् ॥

कदाचिद्विसंवादात् समारोपानिषेधकत्वाद् व्यवहारानुपयोगात् । स्वलक्षणागोचरत्वात् शब्दसंसर्गयोग्यप्रतिभासत्वाच्छब्दप्रभवत्वाद्वा गत्यन्तराभावात् । न तावत्स्पष्टाकारविकलत्वात्तस्याऽप्रामाण्यं काचाभ्रकादिव्यवहितार्थदूरपादपादिप्रत्यक्षस्याप्यप्रामाण्यप्रसङ्गात् । न चैतद्युक्तमज्ञातवस्तुप्रकाशनसंवादलक्षणस्य प्रमाणलक्षणस्य सद्भावात् । प्रमाणान्तरत्वप्रसङ्गो वाऽस्पष्टत्वालिङ्गजत्वाभ्यां प्रमाणद्वयानन्तर्भूतत्वात् । नापिगृहीतग्राहित्वादनुमानस्याप्यप्रामाण्यानुषङ्गात् । व्याप्तिज्ञानयोगिसंवेदनगृहीतार्थग्राहित्वात् कथं वा क्षणक्षयानुमानस्य प्रामाण्यं शब्दरूपावभास्यध्यक्षावगतक्षणक्षयविषयत्वात् । न चाऽध्यक्षेण धर्मिस्वरूपग्राहिणा शब्दग्रहणेपि न क्षणक्षयग्रहणं विरुद्धधर्माध्यासतस्तद्भेदप्रसक्तेः । नाप्यसति प्रवर्तनादतीतानागतयोर्विकल्पकाले असत्त्वेपि स्वकाले सत्त्वात् । तथाप्यस्याप्रामाण्ये प्रत्यक्षस्याप्यप्रामाण्यानुषङ्गस्तद्विषयस्यापि तत्कालेऽसत्त्वाविशेषात् । हिताऽहितप्राप्तिपरिहारासमर्थत्वादित्यसम्भाव्यं विकल्पादेवेष्टार्थप्रतिपत्तिप्रवृत्तिप्राप्तिदर्शनादनिष्टार्थाच्च निवृत्तिप्रतीतेः । कदाचिदर्थप्रापकत्वाभावस्तु प्रत्यक्षेपि समानोऽनर्थित्वादप्रवृत्तस्याद्यप्रत्यक्षवत् । कदाचिद्विसंवादादित्यप्यसाम्प्रतं प्रत्यक्षेप्यप्रामाण्यप्रसङ्गात् । तिमिराद्युपहतचक्षुषोऽर्थाभावेपि प्रत्यक्षप्रवृत्तिदर्शनाद्भ्रान्तादभ्रान्तस्य भेदोऽन्यत्रापि समानः । समारोपानिषेधकत्वादित्यप्यसङ्गतं विकल्पविषये समारोपासम्भवात् । नापि व्यवहारायोग्यत्वात्सकलव्यवहाराणां विकल्पमूलत्वात् । स्वलक्षणाऽगोचरत्वादित्यप्यसमीक्षिताभिधानमनुमानेपि तत्प्रसक्तेस्तद्वृत्तस्यापि सामान्यगोचरत्वात् । न च तद्ग्राह्यस्य सामान्यरूपत्वेप्यध्यवसेयस्य स्वलक्षणरूपत्वाद् दृश्यविकल्प्यावर्थावेकीकृत्य ततः प्रवृत्तेरनुमानस्य प्रामाण्यं, प्रकृतविकल्पेप्यस्य समानत्वात् । शब्दसंसर्गयोग्यप्रतिभासत्वादित्यप्यसमीचीनमनुमानेपि समानत्वात् । शब्दप्रभवत्वादित्यप्यसाम्प्रतं शब्दाध्यक्षस्याप्रामाण्यप्रसङ्गात् । ग्राह्यार्थं विना तन्मात्रप्रभवत्वं चासिद्धं नीलादिविकल्पानां सर्वदार्थे सत्येव भावात् । कस्यचित्तु तमन्तरेणापि भावोऽध्यक्षेपि समानो द्विचन्द्रादिप्रत्यक्षस्यार्थाभावेपि भावात् । भ्रान्तादभ्रान्तस्यान्यत्वमत्रापि समानम् । किञ्च विकल्पाभिधानयोः कार्यकारणत्वनियमकल्पनायां किञ्चित्पश्यतः पूर्वानुभूततत्सदृशस्मृतिर्न स्यात् तन्नामविशेषास्मरणात्, तदस्मरणे तदभिधानाप्रतिपत्तिस्तदप्रतिपत्तौ तेन तद्योजनं तद्योजनात्तदर्थाध्यवसाय इत्यविकल्पाभिधानं जगदा-

१ स्थाणा निसवाद पुरुषविकल्पवत् ॥ २ सशयज्ञानवत् ॥ ३ गच्छत्तृणस्पर्शज्ञानवत् ॥ ४ भ्रान्तज्ञानवत् ॥ ५ अर्थ ॥ ६ अङ्गुल्यादिवाक्यजनितविकल्पवत् ॥ ७ अङ्गुल्यादिजनितवाक्यवत् ॥ ८ स्फटिकजलादि ॥ ९ पर्वतादि ॥ १० पारमार्थिक लक्षणमिदम् ॥ ११ व्यावहारिकम् ॥ १२ व्याप्तिज्ञान च तयोगिसवेदन च ॥ १३ सर्वज्ञ ॥ १४ श्रावणाध्यक्षगृहीतार्थग्राहित्वात् ॥ १५ श्रावणाध्यक्ष ॥ १६ निर्विकल्पकेन ॥ १७ सर्व वस्तु क्षणिक सत्त्वात ॥ १८ तस्येग्रहणमग्रहणमिति १९ शब्दधर्मिण ॥ २० क्षणिकत्वधर्मस्य ॥ २१ धर्मिरूपस्य वस्तुन क्षणिक न भवतीत्यर्थ ॥ २२ रावणशङ्खचक्रवर्ति ॥ २३ अर्थयो ॥ २४ आगमज्ञाने ॥ २५ समकाले ग्राह्यग्राहकत्वाभावात्सव्येतरगोविषाणवत् ॥ २६ प्रत्यक्ष ॥ २७ सर्पादि ॥ २८ पुरुषस्य ॥ २९ इद जलमिति ॥ ३० ईप् (सप्तमी सप्तम्यर्थे मतुरित्यर्थ) ॥ ३१ रोग ॥ ३२ पुरुषस्य ॥ ३३ भ्रान्तविकल्पे ॥ ३४ अप्रामाण्य ॥ ३५ तस्य पूर्वानुभूततत्सदृशस्य ॥ ३६ ॥ सामान्यारोपोऽधिकरण स्वलक्षणमध्यवसेयम् ॥ ३७ स्वलक्षण ॥ ३८ स्थूल ॥ ३९ पुरुषस्य ॥ ४० नील ॥ ४१ न्यायस्य ॥ ४२ शब्दजनितप्रत्यक्षस्य ॥ ४३ घट कास्ते तत्रास्ते इत्यादि ॥ ४४ शब्द ॥ ४५ विकल्पस्य ॥ ४६ विकल्पस्य ॥ ४७ वन्ध्यासुतादयर्थ ॥ ४८ नील ॥ ४९ तु ॥ ५० तेन दृश्येन नीलेन सदृश पूर्वानुभूत च तत्र तत्सदृश च तस्य स्मृति ॥ ५१ स्मृतिविकल्प ॥ ५२ पूर्वानुभूततत्सदृशार्थस्मरणात्पूर्व नामविशेषस्य पूर्वानुभूततत्सदृशार्थस्मरणोत्पादकस्याभावात्तस्य तत्कार्यतया पूर्वानुभूततत्सदृशार्थनामविशेषस्मृत्यनन्तरभावित्वात् ॥ ५३ नामविशेष ॥ ५४ नाम ॥ ५५ शब्देन ॥ ५६ नीलशब्देनेद वाच्यमिति योजनाभाव ॥ ५७ दृश्यस्य नीलस्य ॥ ५८ दृश्यमाने नीले विकल्पानुत्पत्ति ॥ ५९ विकल्पाभिधानशून्य ॥

पद्येत । किञ्च पदस्य वर्णाना च नामान्तरस्मृतावसत्यामध्यवसायः सत्यां वा? तत्राद्यपक्षे नाम्नो नामान्तरेण विनापि स्मृतौ केवलार्थाध्यवसायः किं न स्यात् । स्वाभिधानविशेषापेक्षा एवार्था निश्चयैर्निश्चीयन्त इत्येकान्तत्यागात् । द्वितीयपक्षे त्वनवस्था वर्णपदाध्यवसायेप्यपरनामान्तरस्यावश्यं स्मरणात् ॥ छ ॥ येपि शब्दाद्वैतवादिनो निखिलप्रत्ययानां शब्दानुविद्धत्वेनैव सविकल्पकत्वं मन्यन्ते तत्स्पर्शवैकल्ये हि तेषां प्रकाशरूपताया एवाभावप्रसङ्गः । वाग्रूपता हि शाश्वती प्रत्यवमर्शिनी च । तदभावे प्रत्ययानां नापरं रूपमवशिष्यते । सकलं चेदं वाच्यवाचकतत्त्वं शब्दब्रह्मण एव विवर्तो नान्यविवर्तो नापि स्वतन्त्रमिति । तदुक्तम् । न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिवाभाति सर्वं शब्दे प्रतिष्ठितम् ॥ १ ॥ वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ २ ॥ अनादिनिधनं शब्दब्रह्मतत्त्वं यदक्षरम् । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ ३ ॥ अनादिनिधनं हि शब्दब्रह्म उत्पादविनाशाभावा-दक्षरं चाकाराद्यक्षरस्य निमित्तत्वादनेन वाचकरूपतार्थभावेनेत्यनेन तु वाच्यरूपतास्य सूचिता । प्रक्रियेति भेदाः । शब्दब्रह्मेति नामसङ्कीर्तनमिति तेप्यतत्त्वज्ञाः शब्दानुविद्धत्वस्य ज्ञानेष्वप्रतिभासनात् । तद्धि प्रत्यक्षेण प्रतीयतेऽनुमानेन वा? प्रत्यक्षेण चेत्किमैन्द्रियेण स्वसंवेदनेन वा? न तावदैन्द्रियेणेन्द्रियाणां रूपादिनि-यतत्वेन ज्ञानाविषयत्वात् । नापि स्वसंवेदनेनास्य शब्दागोचरत्वात् । अथार्थस्य तदनुविद्धत्वात्तदनुभवे ज्ञाने तदप्यनुभूयत इत्युच्यते । ननु किमिदं शब्दानुविद्धत्वं नामार्थस्याभिन्नदेशे प्रतिभासः तादात्म्यं वा? तत्राद्यविकल्पोऽसमीचीनः तद्रहितस्यैवार्थस्याध्यक्षे प्रतिभासनात् । न हि तत्र यथा पुरोवस्थितो नीलादिः प्रति-भासते तथा तद्देशे शब्दोपि श्रोतृश्रोत्रप्रदेशे तत्प्रतिभासात् । न चान्यदेशतयोपलभ्यमानोप्यन्यदेशोसौ युक्तोऽतिप्रसङ्गात् । नापि तादात्म्यं विभिन्नेन्द्रिय-जनितज्ञानग्राह्यत्वात् । ययोर्विभिन्नेन्द्रियजनितज्ञानग्राह्यत्वं न तयोरैक्यं यथा रूपरसयोस्तथात्वं च नीलादिरूपशब्दयोरिति । शब्दाकाररहितं हि नीलादिरूपं लोचनज्ञाने प्रतिभाति तद्रहितस्तु शब्दः श्रोत्रज्ञाने इति कथं तयोरैक्यम्? रूपमिदमित्यभिधानविशेषेणरूपप्रतीतेस्तयोरैक्यमिति, असत् रूपमिदमिति ज्ञानेन हि वाग्रू-पतांप्रतिपन्नाः पदार्थाः प्रतिपद्यन्ते भिन्नवाग्रूपताविशेषणविशिष्टा वा? प्रथमपक्षोऽयुक्तो न हि लोचनविज्ञानं वाग्रूपतायां प्रवर्तते । तस्यास्तदविषयत्वाद्रसादिवत् । अन्यथेन्द्रियान्तरपरिकल्पनावैयर्थ्यं तस्यैवाशेषार्थग्राहकत्वप्रसङ्गात् । द्वितीयपक्षेप्यभिधाने प्रवर्तमानं शुद्धरूपमात्रविषयं लोचनविज्ञानं कथं तद्विशिष्टतया स्ववि-

१ गौरित्यस्य ॥ २ गकारओकारविसर्जनीयाना ॥ ३ अभिधान ॥ ४ नामनिरपेक्ष ॥ ५ विकल्पे ॥ ६ पर ॥ ७ ज्ञानाना ॥ ८ ईप् ॥ ९ तादात्म्य ॥ १० शब्दरूपापन्नत्वेनेव ॥ ११ शब्दानुविद्धत्व ॥ १२ अव्यभिचारिणी ॥ १३ प्रकाशहेतुभूता च ॥ १४ एवंविधवाग्रूपताऽभावे ॥ १५ प्रकाशोपायभूत ॥ १६ प्रधान ॥ १७ ज्ञान ॥ १८ शब्दान्वयरहित ॥ १९ कुतो नास्ति? शब्दरूपापन्नमेव विश्वं शब्दे विश्रान्त यत ॥ २० अनुस्यूत ॥ २१ एव ॥ २२ अपगच्छेत् ॥ २३ तदा ॥ २४ ज्ञान ॥ २५ शब्दरूपापन्नत्वेन ॥ २६ यत ॥ २७ ता (षष्ठी, षष्ठीसमास इत्यर्थः) ॥ २८ स्तूं ॥ २९ परिणमति ॥ ३० भेदा भवेयु ॥ ३१ शब्द ॥ ३२ अर्थ ॥ ३३ शब्दानुविद्धार्थ ॥ (३४ शब्दब्रह्म) ॥ ३५ भवता परेण ॥ ३६ अर्थस्य शब्देन तादात्म्यम ॥ ३७ शब्द ॥ ३८ ॥ ३९ अर्थ ॥ ४० अर्थ ॥ ४१ शब्दाद्या नैकरूपाविति वर्मा ॥ ४२ साधनसमर्थन ॥ ४३ अर्थ ॥ ४४ अर्थाकार ॥ ४५ दण्डिपुरुषेण व्यभिचारो नानुमानस्य ॥ ४६ शब्द ॥ ४७ अर्थाकार ॥ ४८ शब्दार्थयो ॥ ४९ पदार्था स्ववाचकादभिन्नास्तद्विशेषणविशिष्टत्वात् । रूपविशेषणविशिष्टघटवत् ॥ ५० तादात्म्येन ॥ ५१ अर्थात् ॥ ५२ ततस्या प्रवर्तते चेत् ॥ ५३ लोचनाल्लोत्रादि ॥ ५४ ॥ रसादि ॥ ५५ शब्दे ॥ ५६ केवल ॥ ५७ भिन्नवाग्रूपताविशेषण ॥

पयमुद्योतयेत् । न ह्यगृहीतविशेषणा विशेष्ये बुद्धिर्दण्डाग्रहणे दण्डिवत् । न च ज्ञानान्तरे तस्य प्रतिभासाद्विशेषणत्वं तथा सत्यनयोर्भेदसिद्धिः स्यादित्युक्तम् ।
अभिधानानुषक्तार्थस्मरणात्तथाविधार्थदर्शनसिद्धिरित्यप्यसारमन्योन्याश्रयानुषङ्गात् । तथाविधार्थदर्शनसिद्धौ वचनपरिकरितार्थस्मरणसिद्धिस्ततश्च तथाविधार्थदर्शनसि-
द्धिरिति । का चेयमर्थस्याभिधानानुषक्तता नामाऽर्थज्ञाने तत्प्रतिभासोऽर्थदेशे तद्वेदनं वा तत्काले तत्प्रतिभासो वा? न तावदाद्यो विकल्पो लोचनाध्यक्षे शब्दस्या-
प्रतिभासनात् । नापि द्वितीयः शब्दस्य श्रोत्रप्रदेशे निरस्तशब्दसन्निधीनां च रूपादीनां स्वप्रदेशे स्वविज्ञानेनानुभवात् । नापि तृतीयस्तुल्यकालस्याप्यभिधानस्य
लोचनज्ञाने प्रतिभासाभावाद्भिन्नज्ञानवेद्यत्वे च भेदप्रसङ्ग इत्युक्तम् । कथं चैवंवादिनो बालकादेरर्थदर्शनसिद्धिस्तत्राभिधानाप्रतीतेरर्थं विकल्पयतो गोदर्शनं वा ।
न हि तदा गोशब्दोल्लेखस्तज्ज्ञानस्यानुभूयते युगपद्वृत्तिद्वयानुत्पत्तेरिति । कथं वा वाग्रूपताऽवबोधस्य शाश्वती यतो वाग्रूपता चेदुत्क्रामेदित्याद्यवतिष्ठेत लोचना-
ध्यक्षे तत्संस्पर्शाभावात् । न खलु श्रोत्रग्राह्यां वैखरीं वाचं तत्संस्पृशति तस्यास्तदविषयत्वात् । अन्तर्जल्परूपा मध्यमा वा । तामन्तरेणापि शुद्धसंविदोभावात् ।
संहृताशेषवर्णादिविभागानुपश्यन्ती सूक्ष्मा चान्तर्ज्योतीरूपा वागेव न भवत्यनयोरर्थात्मदर्शनलक्षणत्वात् । वाचस्तु वर्णपदाद्यनुक्रमलक्षणत्वात् । ततोऽयुक्तमेतत्त-
लक्षणप्रणयनं "स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना १ प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते । अविभागाऽनुप-
श्यन्ती सर्वतः संहृतक्रमा २ स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी । तया व्याप्तं जगत्सर्वं ततः शब्दात्मकं जगत् ३" इत्यादि । अनुमानात्तेषां तदनुविद्धत्व-
प्रतीतिरित्यपि मनोरथमात्रं तदविनाभाविलिङ्गाभावात् । तत्सम्भवे वाऽध्यक्षादिबाधितपक्षनिर्देशानन्तरं प्रयुक्तत्वेन कालात्ययापदिष्टत्वाच्च । अथ जगतः शब्दमय-
त्वात्तदुदरवर्तिनां प्रत्ययानां तन्मयत्वात्तदनुविद्धत्वं सिद्धमेवेत्यभिधीयते तदप्यनुपपन्नमेव तत्तन्मयत्वस्याध्यक्षादिबाधितत्वात् । पदवाक्यादितोऽन्यस्य गिरितरु-
पुरलतादेस्तदाकारपराङ्मुखेणैव सविकल्पकाध्यक्षेणात्यन्तं विशदतयोपलम्भात् । ये यदाकारपराङ्मुखास्ते परमार्थतोऽतन्मया यथा जलाकारविकलाः स्थासको-
शकुशूलादयस्तत्त्वतो न तन्मयाः परमार्थतस्तदाकारपराङ्मुखाश्च पदवाक्यादितो व्यतिरिक्ता गिरितरुपुरलतादयः पदार्था इत्यनुमानतोऽस्य तद्वैधुर्यसिद्धेश्च । किं च

१ शब्द ॥ २ अर्थे ॥ ३ श्रोत्रज्ञाने ॥ ४ वाग्रूपताविशेषणस्य ॥ ५ रूपरूपशब्दयो ॥ ६ भिन्नेन्द्रियजनितज्ञानग्राह्येत्यादिना प्रमेय ॥ ७ पर ॥ ८ सम्बद्ध ॥ ९ पुरोवर्ति ॥ १० यद्रूपार्थस्य दर्शनं तद्रूपार्थस्य स्मरणमिति
वचनात् ॥ ११ वाग्रूपताविशेषणविशिष्टार्थ ॥ १२ सहित ॥ १३ अर्थज्ञान ॥ १४ अथन मह ॥ १५ पूर्वमेव ॥ १६ अभिधानानुषक्तार्थं एव प्रत्यक्षे प्रतिभातीत्येववादिन ॥ १७ मूक ॥ १८ अर्थदर्शने ॥ १९ प्रतिभास ॥
२० नित्या ॥ २१ श्रोत्रं बहिष्कृत्य ॥ २२ वाग्रूपता ॥ २३ वचनात्मिका ॥ २४ लोचनाध्यक्ष ॥ २५ लोचनाध्यक्ष न संस्पृशति ॥ २६ लोचनज्ञानस्य ॥ २७ नष्ट ॥ २८ पश्यन्त्या ॥ २९ अर्थदर्शन ॥ ३० अर्थदर्शन-
लक्षणा ॥ ३१ आत्मदर्शनलक्षणा ॥ ३२ वाक्य ॥ ३३ कण्ठादिषु ॥ ३४ प्रसृते सति ॥ ३५ पुम्सेण ॥ ३६ हृदिस्थो वायु प्राण ॥ ३७ परित्यज्य ॥ ३८ वर्णादिरहिता ॥ ३९ नष्टवर्णादिक्रमो यत ॥ ४० शाश्वती ॥
४१ तेषां प्रत्ययानां ॥ ४२ शब्द ॥ ४३ सर्वे प्रत्यया शब्दानुविद्धा इत्यत्र साध्ये साधनाभाव ॥ ४४ श्लोक ॥ ४५ भिन्नस्य ॥ ४६ शब्दानुविद्धत्वराहित्य ॥

शब्दपरिणामरूपत्वाज्जगतः शब्दमयत्वं साध्यते शब्दादुत्पत्तेर्वा? न तावदाद्यः पक्षः परिणामस्यैवात्रासम्भवात् । शब्दात्मकं हि ब्रह्म नीलादिरूपतां प्रतिपद्यमानं स्वाभाविकं शब्दरूपं परित्यज्य प्रतिपद्येतापरित्यज्य वा? प्रथमपक्षेऽस्याऽनादिनिधनत्वविरोधः पौरस्त्यस्वभावविनाशात् । द्वितीयपक्षे तु नीलादिसंवेदनकाले बधिरस्यापि शब्दसंवेदनप्रसङ्गो नीलादिवत्तदव्यतिरेकात् । यत्खलु यदव्यतिरिक्तं तत्तस्मिन्संवेद्यमाने संवेद्यते । यथा नीलादिसंवेदनावस्थायां तस्यैव नीलादेरात्मा । नीलाद्यव्यतिरिक्तश्च शब्द इति । शब्दस्यासंवेदने वा नीलादेरप्यसंवेदनप्रसङ्गः तादात्म्याविशेषात् । अन्यथा विरुद्धधर्माध्यासात्तस्य ततो भेदप्रसङ्गः । न ह्येकस्यैकदा एकप्रतिपत्त्रपेक्षया ग्रहणमग्रहणं च युक्तम् । विरुद्धधर्माध्यासेप्यत्र भेदासंभवे हिमवद्विन्ध्यादिभेदानामप्यभेदानुषङ्गः । किं चासौ शब्दात्मा परिणामं गच्छन्प्रतिपदार्थभेदं प्रतिपद्येत न वा? तत्राद्यविकल्पे शब्दब्रह्मणोऽनेकत्वप्रसङ्गः । विभिन्नानेकार्थस्वभावात्मकत्वात्तत्स्वरूपवत् । द्वितीयविकल्पे तु सर्वेषां नीलादीनां देशकालस्वभावव्यापारावस्थादिभेदाभावः प्रतिभासभेदाभावश्चानुषज्येत एकस्वभावाच्छब्दब्रह्मणोऽभिन्नत्वात्तत्स्वरूपवत् । तन्न शब्दपरिणामरूपत्वाज्जगतः शब्दमयत्वम् । नापि शब्दादुत्पत्तेः । तस्य नित्यत्वेनाविकारित्वात् क्रमेण कार्योत्पादविरोधात्सकलकार्याणां युगपदेवोत्पत्तिः स्यात् । कारणवैकल्याद्धि कार्याणि विलम्बन्ते नान्यथा । तच्चेदविकलं किमपरं तैरपेक्ष्यं येन युगपन्न भवेयुः । किं चापरापरकार्यग्रामोऽतोऽर्थान्तरमनर्थान्तरं वोत्पद्येत? तत्रार्थान्तरस्योत्पत्तौ कथं शब्दब्रह्मविवर्तमर्थरूपेणेति घटते । न ह्यर्थान्तरस्योत्पादेऽन्यस्य तत्स्वभावमनाश्रयतस्ताद्रूप्येण विवर्त्तो युक्तः । तदनर्थान्तरस्य तूत्पत्तौ तस्यानादिनिधनत्वविरोधः । ननु परमार्थतोऽनादिनिधनेऽभिन्नस्वभावेपि शब्दब्रह्मण्यविद्यातिमिरोपहतो जनः प्रादुर्भावविनाशवत्कार्यं भेदेन विचित्रमिव मन्यते । तदुक्तं "यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः । संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥ १ ॥ तथेदममलं ब्रह्मनिर्विकारमविद्यया । कलुषत्वमिवापन्नं भेदरूपं प्रपश्यति" इति । तदप्यसाम्प्रतमत्रार्थे प्रमाणाभावात् । न खलु यथोपवर्णितस्वरूपं शब्दब्रह्म प्रत्यक्षतः प्रतीयते सर्वदा प्रतिनियतार्थस्वरूपग्राहकत्वेनैवास्य प्रतीतेः । यच्चाभ्युदयनिश्रेयसफलधर्मानुगृहीतान्तःकरणा योगिन एव तत्पश्यन्तीत्युक्तं तदप्युक्तिमात्रम् । न हि तद्व्यतिरेकेणान्ये योगिनो वस्तुभूताः सन्ति येन ते पश्यन्तीत्युच्येत । यदि च तज्ज्ञाने तस्य व्यापारः स्यात्तदा योगिनस्तस्य रूपं पश्यन्तीति स्यात् । यावतोक्तप्रकारेण कार्ये व्यापार एवास्य न संगच्छते । अविद्यायाश्च तद्व्यतिरेकेणासंभवात्कथं भेदप्रति-

१ शब्दब्रह्मणि ॥ २ स्वीकुर्वत् ॥ ३ वस्तु ॥ ४ तादात्म्यसद्भावात् ॥ ५ का ( पञ्चमी पञ्चमीसमास इत्यर्थ ) ॥ ६ शब्दस्य ॥ ७ नीलादेरेव संवेदन न शब्दस्येति चेत् ॥ ८ वेद्यावेद्यत्वधर्मसाहित्यात् ॥ ९ ब्रह्मण ॥
१० नीलात् ॥ ११ अभिन्नस्य शब्दलिङ्गस्य ॥ १२ अन्यथा ॥ १३ नीलनीलशब्दयो ॥ १४ ब्रह्मा ॥ १५ उत्पादविनाश ॥ १६ नीलत्वपीतत्वादि ॥ १७ विभिन्नानेकार्थस्वरूपवत् ॥ १८ पदार्थे सहैकत्वे ॥ १९ ज्ञान ॥ २० प्रमेयभेदाद्
ज्ञानभेद इति वचनात् ॥ २१ पदार्थभ्य ॥ २२ शब्दब्रह्मस्वरूपवत् ॥ २३ शब्दब्रह्मण ॥ २४ कार्य ॥ २५ घटपटादि ॥ २६ शब्दब्रह्मण ॥ २७ भिन्नमभिन्न वा ॥ २८ पूर्वमुक्त विवर्ततेऽर्थभावेनेति ॥ २९ अपरापरकार्य-
ग्रामस्य ॥ ३० शब्दब्रह्मण ॥ ३१ अर्थान्तर ॥ ३२ अर्थान्तररूपेण ॥ ३३ ब्रह्म ॥ ३४ सत्ता ॥ ३५ शब्दब्रह्मण ॥ ३६ उत्पादविनाशात्मकादर्थादभिन्नत्वात् ॥ ३७ अभेदरूपे भेदरूपप्रतिभास ॥ ३८ वतु इवार्थे ॥
३९ घटपटादि ॥ ४० नानारूप ॥ ४१ उपहत ॥ ४२ सच्छिन्नम् ॥ ४३ रेखाभि ॥ ४४ नानारूपाभि ॥ ४५ उत्पादविनाशरहित ॥ ४६ भेदप्रक्रमे इवशब्द ॥ ४७ इव ॥ ४८ इव ॥ ४९ पुरोवर्ति ॥ ५० स्वर्ग ॥ ५१ मोक्ष ॥
५२ बस ॥ ५३ परेण भवता ॥ ५४ ब्रह्मण ॥ ५५ परमार्थभूता ॥ ५६ योगिज्ञाने ॥ ५७ ब्रह्मण ॥ ५८ अहमिति जनकत्वलक्षणव्यापार ॥ ५९ साकल्येन ॥ ६० ब्रह्मण ॥ ६१ घटते ॥ ६२ किं च ॥ ६३ ब्रह्म ॥

साम्यम् ।

भासहेतुत्वमाकाशे च वितथप्रतिभासहेतुभूतं वास्तवमेवास्ति तिमिरमिति न दृष्टान्तदार्ष्टान्तिकयोः, नाप्यनुमानतस्तत्प्रतिपत्तिः, + अनुमानं हि कार्यलिङ्गं वा भवेत्स्वभावादिलिङ्गं वा । अनुपलब्धेर्विधिसाधकत्वेनानभ्युपगमात् । तत्र न तावत्कार्यलिङ्गं नित्यैकस्वभावात्ततः कार्योत्पत्तिप्रतिषेधात् । क्रमयौगपद्याभ्यां तस्यार्थक्रियाविरोधात्, नापि स्वभावलिङ्गं शब्दब्रह्माख्यधर्मिण एवासिद्धेः । न ह्यसिद्धे धर्मिणि तत्स्वभावभूतो धर्मः स्वातन्त्र्येण सिद्ध्येत् । यच्चोच्यते "ये यदाकारानुस्यूतास्ते तन्मया यथा घटशरावोदञ्चनादयो मृद्विकारा मृदाकारानुगता मृन्मयत्वेन प्रसिद्धाः, शब्दाकारानुस्यूताश्च सर्वे भावा इति" तदप्युक्तिमात्रं शब्दाकारान्वितत्वस्यासिद्धेः । प्रत्यक्षेण हि नीलादिकं प्रतिपद्यमानोऽनाविष्टाभिलापमेव प्रतिपत्ता प्रतिपद्यते । कल्पितत्वाच्चास्याऽसिद्धिः । शब्दान्वितरूपाधारार्थासत्त्वेपि हि ते तदन्वितत्वेन त्वया कल्प्यन्ते । तथाभूताच्च हेतोः कथं पारमार्थिकं शब्दब्रह्म सिद्ध्येत् । साध्यसाधनविकलश्च दृष्टान्तो घटादीनामपि सर्वथैकमयत्वस्यैकान्वितत्वस्य चासिद्धेः । न खलु भावानां परमार्थेनैकरूपानुगमोस्ति । सर्वार्थानां समानाऽसमानपरिणामात्मकत्वात् । किं च शब्दात्मकत्वेऽर्थानां शब्दप्रतीतौ सङ्केताग्राहिणोप्यर्थे सन्देहो न स्यात्तद्वत्तस्यापि प्रतीतत्वात् । अन्यथा तादात्म्यविरोधः । अग्निपाषाणादिशब्दश्रवणाच्च श्रोत्रस्य दाहाभिघातादिप्रसङ्गः । तन्नानुमानतोपि तत्प्रतीतिः । नाप्यागमात् । सर्वं खल्विदं ब्रह्मेत्याद्यागमस्य ब्रह्मणोऽर्थान्तरभावे द्वैतप्रसङ्गाद् अनर्थान्तरभावे तु तद्वदागमस्याप्यसिद्धिप्रसङ्गः । तदेवं शब्दब्रह्मणोऽसिद्धेर्न शब्दानुविद्धत्वं सविकल्पकलक्षणं किन्तु समारोपविरोधिग्रहणमिति प्रतिपत्तव्यम् । ननु व्यवसायात्मकविज्ञानस्य प्रामाण्ये निखिलं तदात्मकं ज्ञानं प्रमाणं स्यात् तथा च विपर्ययज्ञानस्य धारावाहिविज्ञानस्य च प्रमाणताप्रसङ्गात् प्रतीतिसिद्धप्रमाणेतरव्यवस्थाविलोपः स्यात् । इत्याशङ्क्याऽतिप्रसङ्गापनोदार्थमपूर्वार्थविशेषणमाह । अतोऽनयोरनर्थविषयत्वाविशेषग्राहित्वाभ्यां व्यवच्छेदः सिद्धः । यद्वानेनाऽपूर्वार्थविशेषणेन धारावाहिविज्ञानमेव निरस्यते । विपर्ययज्ञानस्य तु व्यवसायात्मकत्वविशेषणेनैव निरस्तत्वात् संशयादिस्वभावसमारोपविरोधिग्रहणत्वात्तस्य । ननु संशयादिज्ञानस्यासिद्धस्वरूपत्वात्कस्य व्यवसायात्मकत्वविशेषणत्वेन निरासः । संशयज्ञाने हि धर्मी धर्मो वा प्रतिभाति ? धर्मी चेत् स तात्त्विकोऽतात्त्विको वा ? तात्त्विकश्चेत् कथं तद्बुद्धेः संशयरूपता ? तात्त्विकार्थगृहीतिरूपत्वात्करतलादिनिर्ण(र्ण)यवत् ? अथातात्त्विकस्तथाप्यतात्त्विकार्थविषयत्वात्केशोण्डुकादिज्ञानवद् भ्रान्तिरेव संशयः । अथ धर्मः स स्थाणुत्वलक्षणः पुरुषत्वलक्षण उभयं वा? यदि स्थाणुत्वल-

---

१ मिथ्या ॥ २ तिमिराविषयो ॥ ३ ब्रह्म ॥ ४ कारणलिङ्ग ॥ ५ ( अनुपलब्धिरूपो हि हेतुर्न विधिसाधक ) ॥ ६ शब्दब्रह्मण ॥ ७ घटादि ॥ ८ ब्रह्मण ॥ ९ कार्य ॥ १० स्वरूप ॥ ११ भवता परेण ॥ १२ शब्दमया ॥ १३ हेतो ॥ १४ पदार्थ ॥ १५ शब्देन रहितम् ॥ १६ ज्ञाता ॥ १७ शब्दान्वितत्वस्य ॥ १८ अर्था ॥ १९ शब्द ॥ २० परेण ॥ २१ कल्पितशब्दान्वितत्वरूपात् ॥ २२ विसदृश ॥ २३ पुरुषस्य ॥ २४ अयं घट पटो वेत्यादि ॥ २५ शब्दवन्नीलादेरपि ॥ २६ सन्देहश्चेत् ॥ २७ अग्न्यर्थाभिन्नशब्दस्य श्रोत्रसम्बन्धित्वात् ॥ २८ न च तथास्ति ॥ २९ ब्रह्म ॥ ३० आगमो भिन्नो ब्रह्मण ॥ ३१ तस्मात्कारणात् उक्तप्रकारेण ॥ ३२ ज्ञानम् ॥ ३३ पर ॥ ३४ घटोऽयं घटोऽयमिति ॥ ( निश्चयानन्तर तेनैवाकारेण पुन पुनर्यत्प्रवर्तते तज्ज्ञानम् ) ॥ ३५ निश्चयात्मकत्वाविशेषात् ॥ ३६ परिहार ॥ ३७ जैने ॥ ३८ प्रभाकरो ब्रूते ॥ ३९ पुरुष ॥ ४० पुरुषत्व ॥ ४१ संशयो धर्मी संशयरूपतापन्नो न भवतीति साध्यो धर्म तात्त्विकार्थगृहीतिरूपत्वात् ॥ ४२ गृहीतिर्ग्रहणम् ॥ ४३ चस । ( वेति शब्दैकदेशेन बहुव्रीहिग्रहण सकारात्समासार्थबोध ) ॥

क्षणस्तत्र तात्त्विकाऽतात्त्विकयोः पूर्ववद्दोषः । अथ पुरुषत्वलक्षणस्तत्राप्ययमेवं दोषः । अथोभयं तथाप्युभयस्य तात्त्विकत्वाऽतात्त्विकत्वयोः स एव दोषः । अथैकस्य तात्त्विकत्वमन्यस्यातात्त्विकत्वम् । तथापि तद्विषयं ज्ञानं तदेवं भ्रान्तमभ्रान्तं चेति प्राप्तम् । अथ सन्दिग्धोर्थस्तत्र प्रतिभासते । सोपि विद्यते न वेत्यादिविकल्पे तदेव दूषणम् । तन्न संशयो घटते । नापि विपर्ययस्तस्यापि स्मृतिप्रमोषाद्यभ्युपगमेनाव्यवस्थितेरित्यप्यसमीचीनं । यतः संशयः सर्वप्राणिनां चलितप्रतिपत्त्यात्मकत्वेन स्वात्मसंवेद्यः । स धर्मिविषयो वास्तु धर्मविषयो वा तात्त्विकातात्त्विकार्थविषयो वा । किमेभिर्विकल्पैरस्य वालाग्रमपि खण्डयितुं शक्यते । प्रत्यक्षसिद्धस्याप्यर्थस्वरूपस्यापह्नवे सुखदुःखादेरप्यपह्नवः स्यात् । कथं च धर्मिविषयो धर्मविषयो वेत्यादि प्रश्नहेतुकसंशयादिरूढ एवायं संशयं निराकुर्यात् । न चेदस्वस्थः । किं चोत्पादककारणाभावात्संशयस्य निरासोऽसाधारणस्वरूपाभावाद्विषयाभावाद्वा ? तत्राद्यः पक्षोऽयुक्तस्तदुत्पादककारणस्य सद्भावात् । स ह्याहितसंस्कारस्य प्रतिपत्तुः समानाऽसमानधर्मोपलम्भानुपलम्भतो मिथ्यात्वकर्मोदये सत्युत्पद्यते । असाधारणस्वरूपाभावोप्यसिद्धश्चलितप्रतिपत्तिलक्षणस्यासाधारणस्वरूपस्य तत्र सत्त्वात् । विषयाभावस्तु दूरोत्सारित एव स्थाणुत्वविशिष्टतया पुरुषत्वविशिष्टतया वाऽनवधारितस्योर्द्धतासामान्यस्य तद्विषयस्य सद्भावात् । एतेन विपर्ययनिरासोपि निराकृतः । तत्राप्युत्पादककारणादेः सद्भावाविशेषात् ॥ किं[22] चायं विपर्ययोऽख्यातिमसत्ख्यातिं प्रसिद्धार्थख्यातिमात्मख्यातिं सदसत्त्वाद्यनिर्वचनीयार्थख्याति विपरीतार्थख्याति स्मृतिप्रमोषं वाभिप्रेत्य निराक्रियेत प्रकारान्तराऽसम्भवात् । अख्यातिं चेत् । तथा हि । जलावभासिनि ज्ञाने तावन्न जलसत्तालम्बनीभूतास्त्यभ्रान्तत्वप्रसङ्गात् । जलाभावस्तत्र न प्रतिभात्येव तद्विधिपरत्वेनास्य प्रवृत्तेः । अत एव मरीचयोऽपि नालम्बनं तत्त्वे वा तद्ग्रहणस्याभ्रान्तत्वप्रसङ्गः । तोयाकारेण मरीचिग्रहणनित्यप्ययुक्तं तदन्यत्वात् । न खलु घटाकारेण तदन्यस्य पटादेर्ग्रहणं दृष्टं ततो निरालम्बनं जलादिविपर्ययज्ञानमित्यप्यविचारितरमणीयं विशेषतो व्यपदेशाभावप्रसङ्गात् । यत्र हि न किञ्चिदपि प्रतिभाति तत्केन विशेषेण जलज्ञानं रजतज्ञानमिति वा व्यपदिश्येत । भ्रान्तिसुषुप्तावस्थयोरविशेषप्रसङ्गश्च । न ह्यत्र प्रतिभासमानार्थव्यतिरेकेणान्योऽस्ति विशेषः । प्रतिभासमानश्च तज्ज्ञानस्यालम्बनमित्युच्यते । तन्नाख्यातिरेव विपर्ययः । सत्यमेतत्तथापि प्रतिभासमानोऽर्थः सद्रूपो

१ उभयप्रतिभासे ॥ २ स्थाणुत्वस्य ॥ ३ स्थाणौ पुरुषत्वस्य ॥ ४ उभय ॥ ५ पूर्वोक्त ॥ ६ एकमेवज्ञान ॥ ७ पर ॥ ८ संशयज्ञाने ॥ ९ तात्त्विक ॥ १० अतात्त्विको वा ॥ ११ उभय ॥ १२ संशयज्ञानस्य ॥ १३ त्वया परेण ( अपि तु न ) ॥ १४ सुखमवयविरूप परमाणुरूप वा । न तावदाद्य पक्षोऽनभ्युपगमात् । द्वितीयपक्षे तु प्रतिभासाभाव स्यादिति ॥ १५ संशय ॥ १६ प्राभाकर ॥ १७ संशय ॥ १८ ऊर्द्धता ॥ १९ शिर पाण्यादिमत्त्वनकोटरादिमत्त्व ॥ २० अनिश्चितस्य ॥ २१ संशयनिरासनिराकरणपरेण ग्रन्थेन ॥ २२ तत्तद्वादिन प्रत्युच्यते ॥ २३ चार्वाक ॥ २४ सौत्रान्तिकमाध्यमिको ॥ २५ सांख्य ॥ वैदान्तिको भास्करीय ॥ २६ विज्ञानाद्वैतवादी योगाचार ॥ २७ शाङ्करीय ब्रह्माद्वैतमायावादी च ॥ २८ उभय ॥ २९ नैयायिकवैशेषिकभाट्टवैभाषिकजैना ॥ ३० ईप् । ( सप्तमी ) ॥ ३१ प्राभाकर ॥ ३२ अप्रवेदन ३३ अर्थस्य ॥ ३४ पर ॥ ३५ अस्य ज्ञानस्य विषय क जल वा तदभावो वा मरीचयो वा अन्यद्वा ॥ ३६ मरीचिकाजलज्ञाने ॥ ३७ अन्यथा ॥ ३८ मरीचिकाया ॥ ३९ जलास्तित्वप्रधानत्वेन ॥ ४० मरीचिविषयत्वे च ॥ ४१ ज्ञानस्य ॥ ४२ ज्ञानस्य सत्ता ग्राहकत्वात् ॥ ४३ तोयात् ॥ ४४ ज्ञाने ॥ ४५ निर्विषय ॥ ४६ ज्ञाने ॥ ४७ ज्ञान ॥ ४८ भ्रान्तज्ञाने ॥ ४९ जलम् ॥ ५० साद्यादिभिरुक्त ॥ ५१ माध्यमिकोऽनवीत् ॥ ५२ जलादि ॥ ५३ तज्ज्ञानस्याभ्रान्तताप्रसङ्गात् ॥

विचार्यमाणो नास्तीत्यसत्ख्यातिरेवासौ। शुक्तिकाशकले हि न शुक्तिकादिप्रतिभासः। किं तर्हि रजतप्रतिभासः। स च रजताकारस्तत्र नास्तीति तदयुक्तमिति अपरः। कस्मादऽसतः खपुष्पादिवत्प्रतिभासासम्भवात्। भ्रान्तिवैचित्र्याभावप्रसङ्गश्च न ह्यसत्ख्यातिवादिनोऽर्थगतं ज्ञानगतं वा वैचित्र्यमस्ति येनानेकप्रकारा भ्रान्तिः स्यात्। तस्मात्प्रमाणप्रसिद्ध एवार्थो विचित्रस्तत्र प्रतिभाति। न चास्य विचार्यमाणस्यासत्त्वं विचारस्य प्रतीतिव्यतिरेकेणाऽन्यस्यासम्भवात्। प्रतीत्यबाधितत्वाच्च। करतलादेरपि हि प्रतिभासबलेनैव सत्त्वम्। स च प्रतिभासोऽन्यत्राप्यस्ति। यद्यप्युत्तरकालं तथा सोऽर्थो नास्ति तथापि यदा प्रतिभाति तदा तावदस्त्येवान्यथा विद्युदादेरपि सत्त्वसिद्धिर्न स्यात्। तस्मात्प्रसिद्धार्थख्यातिरेव युक्तेत्यप्यसाम्प्रतम्। यथावस्थितार्थगृहीतित्वाविशेषे हि भ्रान्ताऽभ्रान्तव्यवहाराभावः स्यात्। अपि चोत्तरकालमुदकादेरभावेऽपि तच्चिह्नस्य भूस्निग्धतादेरुपलम्भः स्यात्। न खलु विद्युदादिवदुदकादेरप्याशुभावी निरन्वयो विनाशः क्वचिदुपलभ्यते। सर्वतद्देशद्रष्टृणामविसंवादेनोपलम्भश्च विद्युदादिवदेव स्यात्। बाध्यबाधकभावश्च न प्राप्नोति। सर्वज्ञानानामवितथार्थविषयत्वाविशेषात्। यदप्युच्यते ज्ञानस्यैवायमाकारोऽनाद्यविद्योपप्लवसामर्थ्याद्बहिरिव प्रतिभासते। अनादिविचित्रवासनाश्च क्रमविपाकवत्यः पुंसां सन्ति तेनानेकाकाराणि ज्ञानानि स्वाकारमात्रसंवेद्यानि क्रमेण भवन्तीत्यात्मख्यातिरेवेति। तदप्ययुक्तिमात्रं यतः स्वात्ममात्रसंवित्तिनिष्ठत्वे अर्थाकारत्वे च ज्ञानस्यात्मख्यातिः सिद्ध्येत्। न च तत्सिद्धमुत्तरत्रोभयस्यापि प्रतिषेधात्। सर्वज्ञानानां स्वाकारग्राहित्वे च भ्रान्ताऽभ्रान्तविवेको बाध्यबाधकभावश्च न प्राप्नोति तत्र व्यभिचाराभावाविशेषात्। स्वात्मस्थितत्वेन रजताद्याकारस्य संवेदनेन च सुखाद्याकारवद्बहिष्ठतया प्रतीतिर्न स्यात्। प्रतिपत्ता च तदुपादानार्थं प्रवर्त्तेताऽबहिष्ठाऽस्थिरत्वेन प्रवृत्त्यविषयत्वात्। अथाविद्योपप्लववशाद्बहिष्ठस्थिरत्वेनाध्यवसायः। कथमेवं विपरीतख्यातिरेव नेष्टा॥ ज्ञानादभिन्नस्यास्थिरस्य चार्थाकारस्यान्यथाध्यवसायाभ्युपगमादिति। यच्चोच्यते न ज्ञानस्य विषये उपदेशगम्योऽनुमानसाध्यो वा येन विपरीतोऽर्थः कल्प्येत। किं तर्हि यो यस्मिन् ज्ञाने प्रतिभाति स तस्य विषय इत्युच्यते। जलादिज्ञाने च जलाद्यर्थ एव प्रतिभाति न तद्विपरीतो जलादि-

---

१ विपर्यय ॥ २ जल ॥ ३ वेदान्तवादी ॥ ४ साह्य ॥ ५ शुक्तिकाया रजतज्ञानमेकचन्द्रे द्विचन्द्रज्ञानमित्यादि ॥ ६ अर्थस्याऽसत्त्वात् ॥ ७ ज्ञानत्वेनैकादशत्वात् ॥ ८ सत्यभूत ॥ ९ नानाप्रकार ॥ १० भ्रान्तत्वेन उपगते ज्ञाने ॥ ११ रजताद्यर्थस्य ॥ १२ पूर्वकालवत् ॥ १३ मरीचिकाया जललक्षणोऽर्थ सत्यभूत प्रतिभासमानत्वात् घटवत् ॥ १४ सर्वज्ञानानामङ्गीक्रियमाणे ॥ १५ सति ॥ १६ तत्र प्रवृत्तस्य पुरुषस्य ॥ १७ उत्तरकाले ॥ १८ विचारिते सति ॥ १९ सत्यभूतार्थ ॥ २० ज्ञानाद्वैतवादिना योगाचारेण ॥ २१ शुक्तिकादौ रजताद्याकार ॥ २२ अयथार्थवित्तिशक्ति । वितिभ्रान्ति ॥ २३ ज्ञानात् ॥ २४ उद्बोधवत्य ॥ २५ कारणेन ॥ २६ अनाद्यविद्यासामर्थ्येन ॥ २७ घटादि ॥ २८ ग्राह्यग्राहक ॥ २९ सवित्तिरूपाणि ॥ ३० ज्ञान ॥ ३१ नम । ( बहुव्रीहिसमास इत्यर्थ ) ॥ ३२ मरीचिकाया जलाकार ज्ञानात्मा प्रतिभासमानत्वात् ज्ञानस्वरूपवत् ॥ ३३ ज्ञानप्रतीति ॥ ३४ ज्ञानस्य ॥ ३५ सिद्धे ॥ ३६ द्वय ॥ ३७ नीलकेशोण्डुकादिसर्वविकल्पाना ॥ ३८ आत्मस्वरूपमात्रे ॥ ३९ स्वस्य ज्ञानस्यात्मा स्वरूप तत्र स्थितत्वेन ॥ ४० बहि स्थिततया ॥ ४१ प्रमाता ॥ ४२ किं च ॥ ४३ रजतादि ॥ ४४ ज्ञानस्य क्षणिकत्वात् ॥ ४५ पर ॥ ४६ रजतादे ॥ ४७ अनिर्वचनीयार्थख्यातिवादिना शाङ्करीयेण ॥ ४८ विपरीतार्थख्यातिं दूषयन् अनिर्वचनीयार्थख्याति समर्थयते ॥ ४९ रजतादि ॥ ५० विपरीत इति ॥ ५१ रजतमिदमिति ज्ञाने किंरूपोऽर्थ प्रतिभासते इति प्रश्ने पर उपदेश करोति । कथ शुक्तिकाशकलमिति रजतमिदमिति ज्ञान पुरोवर्तिवस्तुविषय तत्रैव प्रवर्तकत्वात्सम्प्रतिपन्नज्ञानवदित्यनुमान रजतमिदमित्येतस्मिन् ज्ञाने प्रतिभासमानार्थस्योपदेशगम्यत्वेऽनुमानसाध्यत्वे वा विपरीतार्थख्याति स्यात्प्रतिभासमानार्थव्यतिरेकेणार्थान्तरस्य सद्भावात् शुक्तिशकलस्य ॥ ५२ मरीचिकाचक्रे जललक्षण ॥ ५३ प्रतिभासमानाद्विपरीतोऽर्थ शुक्तिशकललक्षण ॥ ५४ अन्यथा ॥

ज्ञानव्यपदेशाभावप्रसङ्गात् । स च जलाद्यर्थः सन्न भवति तद्बुद्धेरभ्रान्तत्वप्रसङ्गात् । नाप्यसन् खपुष्पादिवत्प्रतिभासप्रवृत्त्योरविषयत्वानुषङ्गात् । नापि सदसद्रूप उभयदोषानुषङ्गात् । सदसतोरैकात्म्यविरोधाच्च । तस्मादयं बुद्धिसन्दर्शितोऽर्थः सत्त्वेनासत्त्वेनान्येन वा धर्मान्तरेण निर्वक्तुं न शक्यत इत्यनिर्वचनीयार्थख्याति-सिद्धेस्त्यपि मनोरथमात्रमद्वैतसिद्धौ ह्येतत्सिद्ध्येत् । तच्चाद्वैतं निराकरिष्यामः । यच्चोक्तं न ज्ञानस्य विषय उपदेशगम्य इत्यादि तद्भवतामेव प्राप्तम् । तथा हि—जलादिभ्रान्तौ नियतदेशकालस्वभावः सदात्मकत्वेनैव जलाद्यर्थः प्रतिभाति तद्ग्रहणेप्सोस्तत्रैव प्रवृत्तिदर्शनात्तत्कथमसौ अनिर्वचनीयः स्यात् । न ह्येवंभूते प्रतिभासप्रवृत्ती अनिर्वचनीयेऽर्थे सम्भवतः । अथ विचार्यमाण एवासौ सदसत्त्वादिभिरनिर्वचनीयः सम्पद्यते न तु भ्रान्तिकाले तथा प्रतिभातीति । नन्वेवमन्यथाप्रतिभासाद्विपरी-तख्यातिरेव स्यात् । ननु विपरीतख्यातिरपि प्रतिभासविरोधान्न युक्तेति । कएवमाह विपरीतोऽयमर्थ इति ख्यातिः । किं तर्हि? पुरुषविपरीते स्थाणौ पुरुषोऽयमिति-ख्यातिर्विपरीतख्यातिः ॥ ननु पुरुषावभासिनि ज्ञाने स्थाणोरप्रतिभासमानस्य विषयत्वमयुक्तं सर्वत्राप्यव्यवस्थाप्रसङ्गात् तदयुक्तं यतः स्थाणुरेवात्र ज्ञाने तद्रूपस्यानव-धारणादधर्मादिवशाच्च पुरुषाद्याकारेणाध्यवसीयते । बाधोत्तरकालं हि प्रतिसन्धत्ते स्थाणुरयं मे पुरुष इत्येवं प्रतिभात इति । कथमेवं विपर्ययनिरासः तस्या एव तद्रूप-त्वादिति । स्मृतिप्रमोषाभ्युपगमेन तु विपर्ययप्रत्याख्यानमयुक्तं तस्यासिद्धरूपत्वात् । ननु शुक्तिकायामिदं रजतमिति प्रतिभासो विपर्ययो न चासौ विचार्यमाणो घटते । न हीदं रजतमित्येकमेवेदं ज्ञानं कारणाभावात् । तथा हि न दोषैश्चक्षुरादीनां शक्तेः प्रतिबन्धः क्रियते कार्यानुत्पत्तिप्रसङ्गात् । न हि दुष्टा यवा विपरीतं कार्यमाविर्भा-वयन्ति । अत एव प्रध्वंसोऽपि । किं च सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना रजतस्य चासम्बद्धत्वादवर्तमानत्वाच्च चक्षुषा कथं वर्तमानरजताकारावभासः स्यात् ॥ ज्ञाने च कस्यायमाकारः प्रथते? न तावद्रजतस्याऽवर्तमानत्वात् । नापि ज्ञानस्यैव स्वसिद्धान्तविरोधात् । किं चागृहीतरजतस्येदं विज्ञानं नोपजायते अतिप्रसङ्गात् ।

---

१ अन्यथा ॥ २ उत्तरकालेऽानकानुत्पत्तिप्रसङ्गात् ॥ ३ उभयेन ॥ ४ निरूपयितु ॥ ५ विवादापन्नो जललक्षणोऽर्थ सत्त्वाऽसत्त्वाद्यनिर्वचनीय प्रतिभासमानत्वे सति बाध्यमानत्वान्यथानुपपत्ते ॥ ६ भेदेन निरूप-यितुमशक्यत्वमद्वैताश्रित पुरुषाद्वैताभावे तदसम्भवादित्यर्थ ॥ ७ भवदुक्तम् ॥ ८ परेण ॥ ९ अनुमानसाध्य ॥ १० अर्थोऽनिर्वचनीय इति उपदेशगम्येनेत्यादि ॥ ११ उभयेन ॥ १२ रजतमर्थादि ॥ १३ इति नियतदे-शादिस्वभावस्यार्थस्य सदात्मकप्रतिभासमानस्योपदेशादनिर्वचनीयत्व कथ स्यात् । रजतादिभ्रान्तौ प्रतिभासमानोऽर्थ अनिर्वचनीय सत्त्वादिना बाध्यमानत्वे सति प्रतिभासमानत्वान्यथानुपपत्तेरित्यर्थस्योपदेशागम्यत्वमनुमानबा-ध्यत्व च भवतामेवायातम् ॥ १४ सदात्मकविषयतद्ग्रहणेषु निबन्धने ॥ १५ रजतलक्षणस्य ॥ १६ यदि ॥ १७ उत्तरकाले ॥ १८ अनिर्वचनीय एव तत्काले सत्त्वेन भातीति ॥ १९ अनिर्वचनीयार्थस्य अनिर्वचनीयरूपतया प्रतिभासनात् ॥ २० पर ॥ २१ विपरीतोयमर्थ इति प्रतिभासाभावात् ॥ २२ चेत् ॥ २३ पर ॥ २४ अन्यथा ॥ २५ घटपटादिप्रतिभासिनि ज्ञाने ॥ २६ अप्रतिभासमानस्य पुरुषस्य विपरीतत्व स्यात् ॥ २७ चेत् ॥ २८ काचादिदोष ॥ २९ प्रत्यभिज्ञान ॥ विपरीतख्यातिरेवास्ति न विपर्यय इति भाट्टा ॥ ३० विपरीतख्यात्यभ्युपगमप्रकारेण ॥ ३१ विपरीतख्याते ॥ ३२ विवेकाख्यातिमभिप्रेत्य विपर्ययनिरास क्रियते इति प्रभाकरेणोक्त त प्रत्याह ॥ ३३ पर ॥ ३४ एकत्वेन ज्ञानोत्पत्तौ ॥ ३५ काचकामलादिदोष ॥ ३६ इद रजतमिद जल ॥ ३७ यवाङ्कुरादन्यत् शाल्यङ्कुरादि ॥ ३८ न हि बीजप्रध्वंसोऽङ्कुर जनयति ॥ ३९ कारणाभाव ॥ ४० वस्तु ॥ ४१ शुक्तिकाया ॥ ४२ विषयाभाव ॥ ४३ चक्षुषा जनिते रजतज्ञाने ॥ ४४ वस्तुन ॥ ४५ प्रकाशते ॥ ४६ जैनस्य ॥ ४७ स्वरूपाभाव ॥ ४८ अज्ञात ॥ ४९ नु ॥ ५० इद रजतमिति ॥ ५१ अन्यथा ॥ ५२ भूभवनवार्द्धितोदितस्यापीद रजतमिति विज्ञान भवतु ॥

गृहीतरजतस्य च तद्रजतमिदमिति स्यादिन्द्रियसंस्कारसादृश्यदोषैर्जन्यमानत्वात् । किं च शुक्तिकायां रजतसंसर्गो न तावदसन् प्रतिभासते खे खपुष्पसंसर्गवत् ।
असत्ख्यातित्वप्रसङ्गात् । नापि सन् रजतस्य तत्रासत्त्वात् । ततो ज्ञानद्वयमेतदिदमिति हि पुरोव्यवस्थितार्थप्रतिभासनं रजतमिति च पूर्वावगतरजतस्मरणं सादृश्यादेः
कुतश्चिन्निमित्तात् । तच्च स्मरणमपि स्वरूपेण नावभासत इति स्मृतिप्रमोषोऽभिधीयते । यत्र हि स्मरामीति प्रत्ययस्तत्र स्मृतेरप्रमोषो न पुनर्यत्रस्मृतित्वेऽपि स्मरामीति
रूपाप्रवेदनम् । प्रवृत्तिश्च भेदाऽग्रहणादेवोपपन्ना । ननु कोऽयं तदग्रहो नाम । न तावदेकत्वग्रहस्तस्यैव विपर्ययरूपत्वात् । नापि तद्ग्रहणप्रागभावस्तस्याऽप्रवृत्तिहे-
तुत्वात् । प्रवृत्तिनिवृत्त्योः प्रमाणफलत्वादिति चेत् । न, भेदाऽग्रहणसचिवस्य रजतज्ञानस्य प्रवृत्तिहेतुत्वोपपत्तेरिति ॥ अत्र प्रतिविधीयते ॥ न दोषैः शक्तेः प्रति-
बन्धः प्रध्वंसो वा विधीयते । किन्तु दोषसमवधाने चक्षुरादिभिरिदं विज्ञानं विधीयते । दोषाणां चेदमेव सामर्थ्यं यत्तत्सन्निधानेऽविद्यमानेप्यर्थे ज्ञानमुत्पादयन्ति
चक्षुरादीनि । न चैवमसत्ख्यातिः स्यात् । सादृश्यस्यापि तद्धेतुत्वात् । असत्ख्यातिस्तु न तद्धेतुका खपुष्पज्ञानवत् । रजताकारश्च प्रतिभासमानो न ज्ञानस्य
संस्कारस्यापि तद्धेतुत्वात् । दोषाद्धि संस्कारसहायादनुभूतस्यैव रजतस्यायमाकारः पुरोवर्तिन्यर्थे प्रतिभासते । न चैवं तद्रजतमिति स्यात् । दोषवशात्पुरो व्यवस्थि-
तार्थे रजताकारस्य प्रतिभासनात् । कथमन्यथा भवतोऽपि तद्रजतमिति प्रतिभासो न स्यात् । ततो यथा तव स्मृतिप्रमोषस्तथा दोषेभ्यः सामानाधिकरण्येन पुरोवर्त्ति-
न्यवर्तमानरजताकारावभासः किं न स्यात् । अनेन तत्संसर्गः सन्नसन्वा प्रतिभासते इत्यपि निरस्तम् । न च विवेकाऽख्यातिसहायाद्रजतज्ञानात् प्रवृत्तिर्घटते ।
घटोयमित्याद्यभेदज्ञानात्प्रवृत्तिप्रतीतेः । विवेकाख्यातिश्च भेदे सिद्धे सिद्ध्येत् । न चात्र ज्ञानभेदः कुतश्चित् सिद्धस्तथापि तत्कल्पने घटोयमित्यादावपि ज्ञानभेदः क-

---

१ तु ॥ २ इन्द्रियेणेदमशोऽरिस ज्ञान सस्कारेण तद्रजतमित्यशोऽरिसम्मरण सादृश्यदोषलक्षणाभ्या कारणाभ्या तद्रजतमिदमिति सामानाधिकरण्य भवति । नापि सादृश्यादेव केवलात् सामानाधिकरण्य पूर्वं गृहीतरजतस्य नु दृश्यमाने सत्यरजते तद्रजतमिदमिति सामानाधिकरण्यप्रसङ्गात् । सादृश्याविशेषात् । नापि दोषात्केवलात्सामानाधिकरण्य स्तम्भेपि तत्प्रसङ्गात् । दोषलक्षणस्य कारणस्य स्तम्भेपि विद्यमानत्वात् । तस्मादुभय कारण सादृश्यदोषौ ॥ ३ अन्यथा (असत- प्रतिभासे) ॥ ४ शुक्तिकाया ॥ ५ दोषात् ॥ ६ मनोदोष ॥ ७ रजतज्ञान ॥ ८ प्राभाकरेण ॥ ९ ज्ञाने ॥ १० प्रतीति अनुच्चारणम् ॥ ११ प्रत्यक्षस्मरणयोर्भिन्नयो-रेकत्वेन ग्रहण विपर्यय ॥ १२ सत्यासत्यज्ञानयोरित्यादि ॥ १३ विपरीतख्यातित्वप्रसङ्गादित्यर्थ ॥ १४ भेद ॥ १५ ज्ञानस्य ॥ १६ बाधकोत्पत्ते पूर्व ॥ १७ सहायस्य ॥ १८ परोक्ते प्रत्युत्तर दीयते जैनै ॥ १९ काचकामलादिभि ॥ २० नेत्रादीना ॥ २१ रजत ॥ २२ रजते ॥ २३ इद रजतमिति ॥ २४ पूर्वदृष्टरजतेन शुक्तिकाया सादृश्य ॥ २५ अन्यथाख्याति ॥ २६ विपर्ययज्ञानस्य सादृश्य हेतु ॥ २७ सादृश्यहेतुका ॥ २८ सादृश्यहेतु ॥ २९ एव तर्हि आत्मख्याति स्यात् ॥ ३० न ज्ञानस्य आकार आत्मख्यातिप्रसङ्गात् ॥ ३१ रजतज्ञान ॥ ३२ शुक्तिकादौ ॥ ३३ रजतमिदमिति ज्ञानस्य सादृश्यनिबन्धनत्वेन ॥ ३४ पूर्वं रजतानुभवाऽविशेषात् ॥ ३५ परस्य ॥ ३६ अभाव ॥ ३७ तद्रजतमित्येतस्मिन्निद रजतमिति ज्ञान यथा ते प्रमोषवशाज्जायते ॥ ३८ इद रजतमिति इदरजतयोरेकाधिकरणत्वेन ॥ ३९ शुक्तिकादौ ॥ ४० सर्वथासन्निति वक्तु न शक्यते सदृशरूपस्यानुभूयमानत्वात्सर्वथाऽसन्निति वक्तु न शक्यते अनुभूतरजतस्य पुरोदेशे असम्भवात् । कथञ्चिदनुभव इति इति भाव ॥ ४१ भेदाऽग्रहण ॥ ४२ इद रजतमित्यत्र ॥ ४३ इद प्रत्यक्ष रजतमिति स्मरणम् ॥ ४४ प्रमाणात् ॥

ल्यतामविशेषात् । अथात्र सतो घटस्य ग्रहणान्नासौ कल्प्यते । तर्हि अन्यत्राप्यसतो ग्रहणात्तत्कल्पना माभूत् । यथैव हि गुणान्वितैश्चक्षुरादिभिः सति वस्तुन्येकं ज्ञानं जन्यते तथा दोषान्वितैः सादृश्यवशादसत्येकं ज्ञानं जन्यते । गुणदोषाणां च सद्भावं ज्ञानजनकत्वं च स्वतः प्रामाण्यप्रतिषेधप्रस्तावे प्रतिपादयिष्यामः । न च प्रभाकरमते विवेकाख्यातिः सम्भवति । तत्र हीदमिति प्रत्यक्षं रजतमिति च स्मरणमिति संवित्तिद्वयं प्रसिद्धं तच्चाऽऽत्मप्राकट्येनैवोत्पद्यते । आत्मप्राकट्यं चान्योन्यभेदग्रहणेनैव संवेद्यते घटपटादिसंवित्तिवत् । किञ्च विवेकख्यातेः प्रागभावो विवेकाख्यातिः । न चाभावः प्रभाकरमतेऽस्ति । कश्चायं स्मृतेः प्रमोषः । किं स्मृतेरभावोऽन्यावभासो वा स्यात्, विपरीताकारवेदित्वं वा अतीतकालस्य वर्तमानतया ग्रहणं वा, अनुभवेन सह क्षीरोदकवदविवेकेनोत्पादो वा, प्रकारान्तरासम्भवात् । तत्र न तावदाद्यः पक्षः । स्मृतेरभावे हि कथं पूर्वदृष्टरजतप्रतीतिः स्यात् । मूर्च्छाद्यवस्थायां च स्मृतिप्रमोषव्यपदेशः स्यात् तदभावाविशेषात् । अथात्रेदमिति प्रतिभासाभावान्नासौ । नन्विदमित्यत्रापि किं प्रतिभातीति वक्तव्यम् । पुरोव्यवस्थितं शुक्तिकाशकलमिति चेत् । ननु स्वधर्मविशिष्टत्वेन तत्तत्र प्रतिभाति रजतसन्निहितत्वेन वा । प्रथमपक्षे कुतः स्मृतिप्रमोषः । शुक्तिकाशकले हि स्वगतधर्मविशिष्टे प्रतिभासमाने कुतो रजतस्मरणसम्भवो यतोऽस्य प्रमोषः स्यात् । न खलु घटे गृहीते पटस्मरणसम्भवः । अथ शुक्तिकारजतयोः सादृश्याच्छुक्तिकाप्रतिभासे रजतस्मरणं नास्याऽकिञ्चित्करत्वात् । यदा ह्यसाधारणधर्माध्यासितं शुक्तिकास्वरूपं प्रतिभाति तदा कथं सदृशवस्तुस्मरणमन्यथा सर्वत्र स्यात् । सामान्यमात्रग्रहणे हि तत्कदाचित्स्यादपि नाऽसाधारणस्वरूपप्रतिभासे । द्विचन्द्रादिषु च जातितैमिरिकप्रतिभासविषयेऽसदृशवस्तुप्रतिभासाभावात्कथं स्मृतेरुत्पत्तिर्यतः प्रमोषः स्यात् । नापि तत्सन्निहितत्वेन प्रतिभासो रजतस्य तत्रासत्त्वेन तत्सन्निधानायोगात् । इन्द्रियसम्बद्धाना च तद्देशवर्तिनां परमाण्वादीनामपि प्रतिभासः स्यात् तदविशेषात् । नाप्यन्योन्यावभासोऽसौ । स हि किं तत्कालभाव्युत्तरकालभावी वा स्यात् । तत्कालभावी चेत् तर्हि घटादिज्ञानं तत्कालभावि, तस्याः प्रमोषः स्यात् । नाप्युत्तरकालभाव्यन्यावभासोऽस्याः प्रमोषोतिप्रसङ्गात् । यदि-

१ ज्ञानभेदमिथ्याभावश्च ॥ २ पर ॥ ३ घटोयमित्यत्र ॥ ४ इदं रजतमित्यत्र ॥ ५ नैमेल्यादि ॥ ६ किं च ॥ ७ ता ( षष्ठी ) ॥ ८ भेदाप्रतिभास इत्यर्थ ॥ ९ ज्ञानद्वय ॥ १० स्वरूप ॥ ११ आविर्भाव ॥ १२ भेदस्याप्रतिभास ॥ १३ अभाव १४ स्मर्यमाणाद्रजतादन्यस्य शुक्तिकाशकलस्यावभास ॥ १५ स्मर्यमाणाद्रजतादन्यथाकारात्सप्टाकार ॥ १६ अतीत कालो यस्य रजतस्य तदिदमतीतकाल तस्यातीतकालस्य रजतस्य ॥ १७ प्रत्यक्षेण सह स्मृते ॥ १८ स्मृतेरभेदेन ॥ १९ अन्यथा ॥ २० स्मृते ॥ २१ जैनमाशङ्कते प्राभाकर ॥ २२ प्रष्टव्यम् ॥ २३ प्राभाकराभिप्राय ॥ २४ भो प्राभाकर ॥ २५ स्वस्य चतुरस्रादि ॥ २६ सम्बद्धत्वेन ॥ २७ न कुतोपि स्मृतिप्रमोषो भवेत् ॥ २८ त्र्यस्रादि ॥ २९ न कुतोपि ॥ ३० सादृश्यस्य ॥ ३१ अकिञ्चित्करत्वमेव भावयन्ति ॥ ३२ त्र्यस्रादि ॥ ३३ शुक्तिकाशकलस्य ॥ ३४ रजतादिसदृशवस्तु ॥ ३५ घटते सन्निहितशुक्तिकाशकलप्रतीतौ वा पश्चोत्तरकाल शुक्तिकाशकलप्रतीतौ च घटादो वा ॥ ३६ सदृशवस्तुस्मरणम् ॥ ३७ विशेष ॥ ३८ स्मृते सादृश्यनिबन्धनत्वे इत्यत्र किं च ॥ ३९ जन्मना ॥ ४० रजत ॥ ४१ शुक्तिकायाम् ॥ ४२ किञ्च ॥ ४३ शुक्तिकादेशवर्तिनाम् ॥ ४४ रजतेन सन्निहितत्वस्य ॥ ४५ परमाणूना ॥ ४६ स्मृतिप्रमोष ॥ ४७ रजतस्मरण ॥ ४८ रजतस्मरण ॥ ४९ रजतस्मरण ॥ ५० स्मृतेरभाव ॥ ५१ स्मृते ॥

ह्युत्तरकालभाव्यन्यावभासः समुत्पन्नस्तर्हि पूर्वज्ञानस्य स्मृतिप्रमोपत्वेनासौ नाभ्युपगमनीयोऽन्यथा सकलपूर्वज्ञानानां स्मृतिप्रमोपत्वेनाभ्युपगमनीयः स्यात् । किञ्चान्यावभासस्य सद्भावे परिस्फुटवपुः स एव प्रतिभातीति, कथं रजते स्मृतिप्रमोपो निखिलान्यावभासानां स्मृतिप्रमोपतापत्तेः । अथ विपरीताकारवेदित्वं तस्याः प्रमोपः तर्हि विपरीतख्यातिरेव । कश्चासौ विपरीत आकारः । परिस्फुटार्थावभासित्वं चेत् । कथं तस्य स्मृतिसम्बन्धित्वं प्रत्यक्षाकारत्वात् । तत्सम्बन्धित्वे वा प्रत्यक्षरूपतैवास्याः स्यान्न स्मृतिरूपता । नाप्यतीतकालस्य वर्तमानतया ग्रहणं तस्याः प्रमोपोऽन्यस्मृतिवत्तस्याः स्पष्टवेदनाभावानुपङ्गात् । न चैवम् । अतीतकालस्य स्पाष्ट्येनाधिकस्य संवेदनं स इति चेन्न तत्र परमार्थतः स्पाष्ट्यसद्भावे अतीन्द्रियार्थवेदिनो निपेधो न स्यात् । तत्स्मृतिवदन्यस्यापीन्द्रियमन्तरेणवैशद्यसम्भवात् । अथात्र पारम्पर्येणेन्द्रियादेव वैशद्यम् । न तदविशेषात्सर्वस्यास्तत्प्रसङ्गात् । अथानुभवेन सह क्षीरोदकवदविवेकेनोत्पादोऽस्याः प्रमोपः । ननु कोयमविवेको नाम । भिन्नयोः सतोरभेदेन ग्रहणं संश्लेषो वा आनन्तर्येण उत्पादो वा ? प्रथमपक्षे विपरीतख्यातिरेव । संश्लेषस्तु ज्ञानयोर्न सम्भवत्येवास्य मूर्तद्रव्येष्वेव प्रतीतेः । आनन्तर्येणोत्पादस्य स्मृतिप्रमोपरूपत्वेऽनुमेयशब्दार्थेषु देवदत्तादिज्ञानानां स्मरणानन्तरभाविनां स्मृतिप्रमोपताप्रसङ्गः स्यात् । यदि च द्विचन्द्रादिवेदनं स्मरणं तर्हीन्द्रियान्वयव्यतिरेकानुविधायि न स्यादन्यत्र स्मरणे तददृष्टेः । तदनुविधायि चेदमन्यथा न किञ्चित्तदनुविधायि स्यात् । तद्विकारविकारित्वं चात एव दुर्लभं स्यात् । किञ्च स्मृतिप्रमोपपक्षे बाधकप्रत्ययो न स्यात् । स हि पुरोवर्त्तिन्यर्थे तत्प्रतिभासस्यासद्विपयतामादर्शयन्नेदं रजतमित्युल्लेखेन प्रवर्त्तते । ननु रजतप्रतिभासः स्मृतिरित्युल्लेखेन । स्मृतिप्रमोपाभ्युपगमे च स्वतःप्रामाण्यव्याघातः सम्यग्रजतप्रतिभासेऽपि ह्याशङ्कोत्पद्यते किमेष स्मृतावपि स्मृतिप्रमोपः किं वा सत्यप्रतिभास इति बाधकाभावापेक्षणात् । यत्र हि स्मृतिप्रमोपस्तत्रोत्तरकालमवश्यं बाधकप्रत्ययो यत्र तु तदभावस्तत्र स्मृतेः प्रमोपासम्भवः । बाधकाभावापेक्षायां चानवस्था । तस्मादिदं रजतमित्यत्र ज्ञानद्वयकल्पनाऽसम्भवात्स्मृतिप्रमोपाभावः । ततः सूक्तं—विपर्ययज्ञानस्य व्यवसायात्मकत्वविशेपणेनैव निरास इति ॥

तेनापूर्वार्थविशेपणेन धारावाहिविज्ञानं निरस्यते । नन्वेवमपि प्रमाणसंप्लववादिनां व्याघातः प्रमाणप्रतिपन्नेऽर्थे प्रमाणान्तराप्रतिपत्तिरित्यचोद्यम् । अर्थप-

---

१ रजत ॥ २ परेण भवता ॥ ३ शुक्तिकाशकल ॥ ४ विशदस्वरूप ॥ ५ शुक्तिरूप ॥ ६ स्वभाव ॥ ७ अन्यथा ॥ ८ अभावरूपतापत्ते ॥ ९ स्मृतिविपरीत ॥ १० पदार्थाना ॥ ११ ॥ स्मृते ॥ १२ परिस्फुटार्थावभासित्वाकारस्य ॥ १३ स्मृते ॥ १४ रजतस्य ॥ १५ स्मरण ॥ १६ स्मृते ॥ १७ देवदत्तादिस्मृतिवत् ॥ १८ शुक्तिकाया रजतस्मृते १९ रजतस्मृतौ ॥ २० सर्वज्ञस्य ॥ २१ रजत ॥ २२ सवेदनस्य ॥ २३ स्मृतिविपय रजतमतीन्द्रियम् ॥ २४ रजतस्मरणे ॥ २५ इति चेत् ॥ २६ प्रत्यक्षस्मरणयो ॥ २७ सम्बन्ध ॥ २८ अनुमेयार्थोऽग्न्यादि ॥ २९ असन्निहितार्थग्राहकज्ञानस्य स्मृतित्वमितिस्थितौ दूपणम् ॥ ३० किञ्च ॥ ३१ घटादौ ॥ ३२ तदप्रतीते ॥ ३३ घटादिज्ञान प्रत्यक्ष ॥ ३४ इन्द्रिय ॥ ३५ काचादि ॥ ३६ ता (षष्ठी) ॥ ३७ द्विचन्द्रादि ॥ ३८ ज्ञानस्य ॥ ३९ तस्य काचकामलादिना द्विचन्द्रादिग्राहित्वेन परिणामित्वम् ॥ ४० इन्द्रियान्वयव्यतिरेकानुविधायित्वाभावादेव द्विचन्द्रज्ञानस्य स्मरणत्वादेव वा ॥ ४१ शुक्तिकाशकले ॥ ४२ रजत ॥ ४३ ॥ उत्तरकाले ॥ ४४ परेण ॥ ४५ ज्ञाने ॥ ४६ रजतस्य ॥ ४७ एतदेव भावयति ॥ ४८ ज्ञाने ॥ ४९ किञ्च ॥ ५० अन्यानवस्था ॥ ५१ यतो विपर्ययज्ञानादिक समर्थितम् ॥ ५२ स्मरणेन ॥ ५३ भाट्ट शङ्कते ॥ ५४ बहूना प्रमाणानामेकस्मिनर्थे प्रवृत्ति प्रमाणसम्प्लव ॥ ५५ जैनाना विरोध ॥ ५६ प्रत्यक्षादि ॥

रिच्छित्तिविशेषसद्भावे तत्प्रवृत्तेरप्यभ्युपगमात्। प्रथमप्रमाणप्रतिपन्ने हि वस्तुन्याकारविशेषं प्रतिपद्यमानं प्रमाणान्तरमपूर्वार्थमेव वृक्षो न्यग्रोध इत्यादिवत्। एत देवाह ॥ अनिश्चितोऽपूर्वार्थः ॥ ४ ॥ स्वरूपेणाकारविशेषरूपतया वानवगतोऽखिलोप्यपूर्वार्थः। न केवलमप्रतिपन्न एवापूर्वार्थोऽपि तु दृष्टोऽपि प्रतिपन्नोपि समारोपात्संशयादिसद्भावात्तादृगपूर्वार्थोऽधीतानभ्यस्तशास्त्रवत्। एवंविधार्थस्य यन्निश्चयात्मकं विज्ञानं तत्सकलं प्रमाणम्। तन्नानधिगतार्थाधिगन्तृत्वमेव प्रमाणस्य लक्षणम्। तद्धि वस्तुन्यधिगतेऽनधिगते वाऽव्यभिचारादिविशिष्टां प्रमां जनयन्नोपालम्भविषयः। न चाधिगतेऽर्थे किं कुर्वत्तत्प्रमाणतां प्राप्नोतीति वक्तव्यं विशिष्टप्रमां जनयतस्तस्ये प्रमाणताप्रतिपादनात्। यत्र तु सा नास्ति तन्न प्रमाणम्। न च विशिष्टप्रमोत्पादकत्वेप्यधिगतविषयेऽस्याऽकिञ्चित्करत्वमतिप्रसङ्गात्। न चैकान्ततोऽनधिगतार्थाधिगन्तृत्वे प्रामाण्यं प्रमाणस्यावसातुं शक्यम्। तद्ध्यर्थतथाभावित्वलक्षणं संवादादवसीयते। स च तदर्थोत्तरज्ञानवृत्तिः। न चानधिगतार्थाधिगन्तुरेव प्रामाण्ये संवादप्रत्ययस्य तद् घटते। न च तेनाप्रमाणभूतेन प्रथमस्य प्रामाण्यं व्यवस्थापयितुं शक्यमतिप्रसङ्गात्। न च सामान्यविशेषयोस्तादात्म्याभ्युपगमे तस्यैकान्ततोऽनधिगतार्थाधिगन्तृत्वं सम्भवति। इदानीं तन्नानास्तित्वस्य पूर्वास्तित्वादभेदात्तस्य च पूर्वमप्यधिगतत्वात्कथंचिदनधिगतार्थाधिगन्तृत्वे त्वसंन्मतप्रवेशः। निश्चिते विषये किन्निश्चयान्तरेणा प्रेक्षावत्त्वप्रसङ्गादित्यप्यवाच्यं भूयो निश्चये सुखादिसाधकत्वविशेषप्रतीतेः। प्रथमतो हि वस्तुमात्रं निश्चीयते पुनः सुखसाधनं दुःखसाधनं वेति निश्चित्योपादीयते त्यज्यते वा। अन्यथा विपर्ययेणाप्युपादानत्यागप्रसङ्गः स्यात्। केषांचित्सकृद्दर्शनेपि तन्निश्चयो भवत्यभ्यासादित्येकविषयाणामप्यागमानुमानाध्यक्षाणां प्रामाण्यमुपपन्नं प्रतिपत्तिविशेषसद्भावात्। सामान्याकारेण हि वचनात्प्रतीयते, वह्निरनुमानादेशादिविशेषविशिष्टोऽध्यक्षात्त्वाकारनियत इति। ततोऽयुक्तमुक्तं "तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम्। अदुष्टकारणारब्धं प्रमाणं लोकसम्मतम्" इति। प्रत्यभिज्ञानस्यानुभूतार्थग्राहिणोऽप्रामाण्यप्रसङ्गात्। तथा च कथमतः शब्दात्मादेर्नित्यत्वसिद्धिः। न चानुभूतार्थग्राहित्वमस्यासिद्धं स्मृतिप्रत्यक्षप्रतिपन्नेऽर्थे तत्प्रवृत्तेः। न ह्यप्रत्यक्षेऽस्मर्यमाणे चार्थे प्रत्यभिज्ञानं नामाऽति-

१ स्वच्छादिलक्षण ॥ २ अपूर्वः अर्थो यस्य ॥ ३ स्वच्छादिमत्त्वेन ॥ ४ अज्ञात ॥ ५ दृष्टोपि समारोपात्तादृगिति सूत्रम् ॥ ६ अपूर्वस्य ॥ ७ पूर्वाग्रहीता ग्राहि ॥ ८ सर्वथा ॥ ९ अर्थपरिच्छित्ति ॥ १० दोष ॥ ११ निश्चिते ॥ १२ कार्य ॥ १३ परेण ॥ १४ प्रमाणान्तरस्य ॥ १५ ज्ञाने ॥ १६ विशिष्टप्रमाजनकता ॥ १७ ॥ ज्ञान ॥ १८ विशिष्टप्रमोत्पादकत्वे यद्यकिंचित्करत्व तदा सर्वथाऽदृष्टेऽर्थे प्रमाजनकस्य ज्ञानस्याकिंचित्करत्वस्याद्विशिष्टप्रमोत्पादकत्वस्याविशेषात् ॥ १९ किंच ॥ २० सर्वथा ॥ २१ निश्चेतु ॥ २२ संवाद ॥ २३ पूर्वज्ञानार्थ ॥ २४ ङीप् (सप्तमी) ॥ २५ तदर्थश्चासौ उत्तरज्ञानवृत्तिश्च ॥ २६ ज्ञानस्य ॥ २७ सवादात् ॥ २८ द्वितीयज्ञानेन ॥ २९ गृहीतार्थग्राहित्वात् ॥ ३० ज्ञानस्य ॥ ३१ न ह्यज्ञातमस्तीति वक्तुं शक्यं तस्याज्ञातत्वविरोधान्नैयायिक ॥ ३२ संशयादिना प्रथमज्ञानस्य प्रामाण्यप्रसङ्गात् ॥ ३३ किंच ॥ ३४ वृक्षवटादि ॥ ३५ प्रमाणस्य ॥ ३६ वट ॥ ३७ अधिगतार्थाधिगन्तृत्वात् ॥ ३८ वृक्ष ॥ ३९ विशेषापेक्षया ॥ ४० जैन ॥ ४१ प्रयोजन ॥ ४२ अन्यथा ॥ ४३ परेण ॥ ४४ ज्ञानात् ॥ ४५ निश्चयान्तरानङ्गीकारे ॥ ४६ सुखसाधनत्वदु खसाधनत्वनिश्चय उत्तरज्ञानान भवति चेत् ॥ ४७ व्यत्यासेन ॥ ४८ पुरुषाणां ॥ ४९ एकदा ॥ ५० धूमादेः ॥ ५१ भाट्टेन ॥ ५२ परप्रमाणलक्षणनिराकरणे च मति ॥ ५३ सर्वथा ॥ ५४ गृहीतग्राहित्वेन प्रत्यभिज्ञानस्याप्रामाण्ये च ॥ ५५ प्रत्यभिज्ञानात् ॥ ५६ वस ॥ ५७ प्रत्यभिज्ञानस्य ॥ ५८ उत्तरप्रत्यक्ष ॥ ५९ तस्य ॥

विरोध

प्रसङ्गात्। पूर्वोत्तरावस्थाव्याप्येकत्वे तस्य प्रवृत्तेरयमदोष इति चेत्। किं ताभ्यामेकत्वस्य भेदोऽभेदो वा? भेदे तत्र तस्याप्रवृत्तिः। न हि पूर्वोत्तरावस्थाभ्यां भिन्ने सर्वथैकत्वे तत्परिच्छेदि[3]ज्ञानाभ्यां जन्यमानं प्रत्यभिज्ञानं प्रवर्त्तते। अर्थान्तरैकत्ववत्[3]। मतान्तरप्रवेशश्च। ताभ्यामेकत्वस्य सर्वथाऽभेदेऽनुभूतग्राहित्वं प्रत्यभिज्ञानस्य स्यात्। ताभ्यां तस्य कथञ्चिदभेदे सिद्धं तस्यानुभूतार्थग्राहित्वम्। न चैवंवादिनः प्रत्यभिज्ञानप्रतिपन्ने शब्दादिनित्यत्वे प्रवर्त्तमानस्य दर्शनस्य परार्थत्वादित्यादेः प्रमाणता घटते। सर्वेषां चानुमानानां व्याप्तिज्ञानप्रतिपन्ने विषये प्रवृत्तेरप्रमाणता स्यात्। प्रत्यभिज्ञानान्नित्यशब्दादिसिद्धावपि कुतश्चित्समारोपस्य प्रसूतेस्तद्व्यवच्छेदार्थत्वादस्य प्रामाण्ये चैकान्तत्यागः स्मृत्यूहादेश्चाभिमतप्रमाणसंख्या व्याघातकृत्प्रमाणान्तरत्वप्रसङ्गः स्यात्। प्रत्यभिज्ञानवत्कथंचिदपूर्वार्थत्वसिद्धेः। किञ्चापूर्वार्थप्रत्ययस्य प्रामाण्ये द्विचन्द्रादिप्रत्ययोऽपि प्रामाणं स्यात्। निश्चितत्वं तु परोक्षज्ञानवादिनो न सम्भवतीत्यग्रे वक्ष्यामः। ननु द्विचन्द्रादिप्रत्ययस्य सबाधकत्वान्न प्रमाणता। यैत्र हि वाधाविरहस्तत्प्रमाणमित्यप्यसङ्गतम्। वाधाविरहो हि तत्कालभावी उत्तरकालभावी वा विज्ञानप्रमाणताहेतुः? न तावत्तत्कालभावी क्वचिन्मिथ्याज्ञानेऽपि तस्य भावात्। अथोत्तरकालभावी स किं ज्ञातोऽज्ञातो वा? न तावदज्ञातोऽस्य सत्त्वेनाप्यसिद्धेः। ज्ञातश्चेत्। किं पूर्वज्ञानेनोत्तरज्ञानेन वा? न तावत्पूर्वज्ञानेनोत्तरकालभावी वाधाविरहो ज्ञातुं शक्यस्तद्धि स्वसमानकालं नीलादिकं प्रतिपद्यमानं कथमुत्तरकालमप्यत्र वाधकं नोदेष्यतीति प्रतीयात्पूर्वमनुत्पन्नवाधकानामप्युत्तरकालं वाध्यमानत्वदर्शनात्। नाप्युत्तरज्ञानेनासौ ज्ञायते तदा प्रमाणत्वाभिमतज्ञानस्य नाशात्। नष्टस्य च वाधाविरहचिन्ता गतसर्पस्य घृष्टिकुट्टनन्यायमनुकरोति। कथं च वाधाविरहस्य ज्ञायमानत्वेपि सत्यत्वं ज्ञायमानस्यापि केशोण्डुकादेरसत्यत्वदर्शनात्। तज्ज्ञानस्य सत्यत्वाच्चेत्तस्यापि कुतः सत्यता? प्रमेयसत्यत्वाच्चेदन्योन्याश्रयः। अपरवाधाभावज्ञानाच्चेदनवस्था। अथ संवादादुत्तरकालभावी वाधाविरहः सत्यत्वेन ज्ञायते। तर्हि संवादस्याप्यपरसंवादात्सत्यत्वसिद्धिस्तस्याप्यपरसंवादादित्यवनस्था। किञ्च कैंचित्कदाचित्कस्यचिद् वाधाविरहो विज्ञानप्रमाणता हेतुः सर्वत्र सर्वदा सर्वस्य वा? प्रथमपक्षे कस्यचिन्मिथ्याज्ञानस्यापि प्रमाणताप्रसङ्गः। क्वचित्कदाचित्कस्यचिद्वाधाविरहसद्भावात्। सर्वत्र सर्वदा सर्वस्य वाधाविरहस्तु नासर्वविदां विषयः। अदुष्टकारणारब्धत्वम-

---

१ मेवांदो प्रत्यभिज्ञानत्वप्रसङ्ग ॥ २ पूर्वोत्तराकारग्राहिस्मरणप्रत्यक्षाभ्या ॥ ३ ईप् ॥ ४ सर्वथाभेदे ॥ ५ नैयायिक ॥ ६ एकत्वस्य ॥ ७ प्रत्यभिज्ञानस्य ॥ ८ सर्वथाऽपूर्वार्थविज्ञान प्रमाणमित्येववादिन ॥ ९ उच्चारणस्य ॥ १० शिष्य ॥ ११ अर्थापत्त्यादे । शब्दोनित्य उच्चारणान्यथाऽनुपपत्तेरिति ॥ १२ किञ्च ॥ १३ सएवाय ॥ १४ आत्मा ॥ १५ सर्वं क्षणिकं सत्त्वादिति क्षणिकत्वप्रतिपादकानुमानात् ॥ १६ उत्पत्ते ॥ १७ व्याप्तिज्ञानेन निश्चितसाध्यसाधनाना सामान्येन ग्रहणेप्यनुमानेन नियतदेशकालाकारतया साध्यप्रतिपत्तेरनुमानप्रामाण्ये च ॥ १८ सर्वथाऽपूर्वार्थविज्ञानमेव प्रमाणमित्येकान्तत्याग ॥ १९ इदमस्पमित्यादे ॥ २० पडिति विज्ञाने ॥२१ स्मृत्यादीनाम् ॥ २२ भाट्टस्य ॥ २३ उत्तरकाले ॥ २४ ज्ञाने ॥ २५ तज्ज्ञानकाल ॥ २६ ॥ विचार्यमाणप्रामाण्यविज्ञानकाल ॥ २७ रजतादिज्ञाने ॥ २८ न हि शुक्तिकायामिद रजतमिति ज्ञान यदा जायते तदैव वाध्यते प्रवृत्त्यादेरभावप्रसङ्गात् ॥ २९ न ह्यज्ञातमस्तीतिवक्तु शक्य तस्याऽज्ञातत्वविरोधात् ॥ ३० शुक्तिकादौ ॥ ३१ प्रमाण ॥ ३२ काल ॥ ३३ ज्ञानाना ॥ ३४ ॥ पूर्वस्येद जलमिति ज्ञानस्य ॥ ३५ किञ्च ॥ ३६ पूर्वकाले ॥ ३७ उत्तरकाले ॥ ३८ पूर्वज्ञानापेक्षया ॥ ३९ विषये ॥ ४० पूर्व ॥

प्यज्ञातं ज्ञातं वा तद्धेतुः[1] ? प्रथमपक्षोऽयुक्तोऽज्ञातस्य सत्त्वसन्देहात् । नापि ज्ञातं करणकुशलादेरतीन्द्रियस्य ज्ञप्तेरसम्भवात् । अस्तु वा तज्ज्ञप्तिः । तथाप्यसावदुष्टकारणारब्धः ज्ञानान्तरात्संवादप्रत्ययाद्वा ? आद्यविकल्पेऽनवस्था । द्वितीयविकल्पेऽपि संवादप्रत्ययस्यापि ह्यदुष्टकारणारब्धत्वं तथाविधादन्यतो ज्ञातव्यं तस्याप्यन्यत इति । न चानेकान्तवादिनामप्युपालम्भः समानोऽयं यथावदर्थनिश्चायकप्रत्ययस्याभ्यासदशायां बाधवैधुर्यस्यादुष्टकारणारब्धत्वस्य च स्वयं संवेदनादनभ्यासदशायां तु परतोऽभ्यस्तविषयात् । न चैवमनवस्था कैश्चित्कस्यचिदभ्यासोपपत्तेरित्यलं विस्तरेण परतः प्रामाण्यविचारे विचारणात् । लोकसम्मतत्वं च यथावद्वस्तुस्वरूपनिश्चयान्नापरम् । ननु चोक्तलक्षणाऽपूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणमित्ययुक्तमुक्तमर्थव्यवसायात्मकज्ञानस्य मिथ्यारूपतया प्रमाणत्वायोगात् । परमात्मस्वरूपग्राहकस्यैव ज्ञानस्य सत्यत्वप्रसिद्धेः अक्षसन्निपातानन्तरोत्थाऽविकल्पकप्रत्यक्षेण हि सर्वत्रैकत्वमेवाऽन्यानपेक्षतया झगिति प्रतीयते इति तदेव वस्तुत्वस्वरूपम् । भेदः पुनरविद्यासंकेतस्मरणजनितविकल्पप्रतीत्याऽन्याऽपेक्षतया प्रतीयते इत्यसौ नार्थस्वरूपम् । तथा यत्प्रतिभासते तत्प्रतिभासान्तः प्रविष्टमेव । यथा प्रतिभासस्वरूपम् । प्रतिभासते चाशेषं चेतनाचेतनरूपं वस्त्वित्यनुमानादप्यात्माऽद्वैतप्रसिद्धिः । न चात्राऽसिद्धो हेतुः साक्षादसाक्षाच्चाशेषवस्तुनोऽप्रतिभासमानत्वे सकलशब्दविकल्पगोचरातिक्रान्तया वक्तुमशक्तेः । तथागमोऽप्यस्य प्रतिपादकोऽस्ति "सर्वं वै खल्विदं ब्रह्म नेह नानास्ति किञ्चन । आरामं तस्य पश्यन्ति न तं पश्यति कश्चन" इति । तथा पुरुष एवैतत्सर्वं यद्भूतं यच्च भाव्यं स एव हि सकललोकसर्गस्थितिप्रलयहेतुः ॥ उक्तं च "ऊर्णनाभ इवांशूनां चन्द्रकान्त इवाम्भसाम् । प्ररोहाणामिव प्लक्षः स हेतुः सर्वजन्मिनाम्" भेददर्शिनो निन्दा च श्रूयते—"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति । न चाम्नायस्याऽध्यक्षबाधा तस्याप्यभेदग्राहकत्वेनैव प्रवृत्तेः । तदुक्तम् "आहुर्विधातृप्रत्यक्षं न निषेद्धृ विपश्चितः । नैकत्वे आगमस्तेन प्रत्यक्षेण प्रबाध्यते" किञ्चाऽर्थानां भेदो देशभेदात्कालभेदादाकारभेदाद्वा स्यात् ? न तावद्देशभेदात्स्वतोऽभिन्नस्याऽन्यभेदेऽपि भेदानुपपत्तेः । नह्यन्यभेदोऽन्यत्र संक्रामति । कथं च देशस्य भेदोऽन्यदेशभेदाच्चेदनवस्था । स्वतश्चेत्तर्हि भावभेदोऽपि स्वत एवास्तु किं देशभेदाद्भेदकल्पनया । तन्न देशभेदाद्वस्तुभेदः । नापि कालभेदात् तद्भेदस्यैवाध्यक्षतोऽप्रसिद्धेः

---

१ पूर्वविज्ञानप्रमाणताहेतु ॥ २ इन्द्रियदृष्टादि ॥ ३ परिज्ञानस्य ॥ ४ अदृष्टकारणारब्धत्व ॥ ५ अनवस्था ॥ ६ ज्ञानात् ॥ ७ दोष ॥ ८ ज्ञानस्य ॥ ९ राहित्यस्य ॥ १० स्वरूपेण ॥ ११ स्वयं संवेदनाद्यनुपालम्भ ॥
१२ अर्थे ॥ १३ ज्ञानस्य ॥ १४ अनवस्थापरिहारस्य विस्तरेण ॥ १५ ज्ञानस्य ॥ १६ भास्करीय आह ॥ १७ अर्थे ॥ १८ भेद ॥ १९ झटिति ॥ २० अभेदेभेदप्रतिभासो ह्यविद्या ॥ २१ घट पटाद्भिन्न इति ॥ २२ पटस्य ॥
२३ ब्रह्म ॥ २४ ब्रह्मग्राहकप्रत्यक्षप्रकारेणानुमानमपि दर्शयति ॥ २५ प्रतिभासमानत्वादिति ॥ २६ असाष्टतया ॥ २७ प्रत्यक्षानुमानप्रकारेण ॥ २८ परमात्मन ॥ २९ विवर्त । विकार ॥ ३० ब्रह्मण ॥ ३१ प्रत्यक्षानुमानागम-
प्रकारेण ॥ ३२ उत्पत्ति ॥ ३३ कोलिक ( कीटविशेष ) ॥ ३४ लालारूपतन्तूनाम् ॥ ३५ वट ॥ ३६ तथा ॥ ३७ यमात् ॥ ३८ पुरुष ३९ ब्रह्मणि ॥ ४० भेदमिव ॥ ४१ ब्रह्माण ॥ ४२ किञ्च ॥ ४३ आगमस्य ॥
४४ विधायक सन्मात्रग्राहकमित्यर्थं ॥ ४५ निषेधक भेदग्राहकमित्यर्थं ॥ ४६ कारणेन ॥ ४७ स्वरूपेण ॥ ४८ स्वतोऽभिन्नस्य भास्करस्य यथा देशभेदाद्भेदो न घटते तथा पदार्थानामिति भाव ॥ ४९ अन्यस्य देशस्य
भेदोऽभिन्ने सूर्ये न संक्रामति ॥ ५० अनवस्थापरिहारार्थं ॥ ५१ अर्थे ॥ ५२ देशभेदादिति पदं नास्ति च क्वचिद्ग्रन्थे ॥

तद्धि सन्निहितं वस्तुमात्रमेवाधिगच्छति नातीतादिकालभेदं तद्गतार्थभेदं वा आकारभेदोऽप्यर्थानां भेदको व्यतिरिक्तप्रमाणात्प्रतिभाति स्वतो वा ? न तावद् व्यतिरिक्तप्रमाणात्तस्य नीलसुखादिव्यतिरिक्तस्वरूपस्याप्रतिभासमानत्वाद् । अथाहंप्रत्यये योऽयमात्मा तद्ग्राहकोऽवसीयते । न तत्रापि शुद्धबोधस्याप्रतिभासनात् । स खल्वहं सुखी दुःखी स्थूलः कृशो वेत्यादिरूपतया सुखादिशरीरं चावलम्बमानोऽनुभूयते न पुनस्तदव्यतिरिक्तं बोधस्वरूपम् स्वतश्चाकाराणां भेदसंवेदने स्वप्रकाशनियतत्वप्रसङ्गः । तथा चान्योऽन्यासंवेदनात्कुतः स्वतोऽप्याकारभेदसंवित्तिः । अथैकरूपब्रह्मणो विद्यास्वभावत्वे तदर्थानां शास्त्राणां प्रवृत्तीनां च वैयर्थ्यं निवर्त्यं प्राप्तव्यस्वभावाभावादविद्यास्वभावत्वे चासत्यत्वप्रसङ्गः । तथा च सत्यं ज्ञानमनन्तं ब्रह्मेत्यस्य विरोधस्तदप्यसङ्गतम् । विद्यास्वभावत्वेऽप्यस्य शास्त्रादीनां वैयर्थ्यासंभवादविद्याव्यापारनिवर्तनफलत्वात्तेषाम् । यत एव चाविद्याब्रह्मणोऽर्थान्तरभूता तत्त्वतो नास्त्यत एवासौ निवर्त्यते तत्त्वतस्तस्याः सद्भावे हि न कश्चिन्निवर्तयितुं शक्नुयाद् ब्रह्मवत् ।[14] सर्वैरेव चातात्त्विकानाद्यविद्योच्छेदार्थो मुमुक्षूणां प्रयत्नोऽभ्युपगतः । न चानादित्वेनाविद्योच्छेदासम्भवः प्रागभावेनाऽनेकान्तात् तत्त्वज्ञानप्रागभावरूपैव चाविद्या तत्त्वज्ञानलक्षणविद्योत्पत्तौ व्यावर्तत एव घटोत्पत्तौ तत्प्रागभाववत् । भिन्नाऽभिन्नादिविकल्पस्य च वस्तुविषयत्वादवस्तुभूताऽविद्यायामप्रवृत्तिरेवमेवेयमविद्या मायामिथ्याप्रतिभास इति । न चात्मश्रवणमननध्यानादीनां भेदरूपतयाऽविद्यास्वभावत्वात्कथं विद्याप्राप्तिहेतुत्वमित्यभिधातव्यम् । यथैव हि रजःसंपर्ककलुषोदके द्रव्यविशेषचूर्णं रजःप्रक्षिप्तं रजोऽन्तराणि प्रशमयत्स्वयमपि प्रशम्यमानं स्वच्छां स्वरूपावस्थामुपनयति । यथा वा विषं विषान्तरं शमयति स्वयं च शाम्यत्येवमात्मश्रवणादिभिर्भेदाभिनिवेशोच्छेदात् । स्वगतेपि भेदे समुच्छिन्ने स्वरूपे संसारी समवतिष्ठते । अवच्छेदकाविद्याव्यावृत्तौ हि परमात्मैकस्वरूपतावस्थितेः[25] घटाद्यवच्छेदकभेदव्यावृत्तौ व्योम्नः शुद्धाकाशतावत् । न चाद्वैते सुखदुःखबन्धमोक्षादिभेदव्यवस्थाऽनुपपन्ना । समारोपितादपि भेदात्तद्भेदव्यवस्थोपपत्तेः यथा द्वैतिनां[26] शिरसि मे वेदना पादे मे वेदनेत्यात्मनः समारोपितभेदनिमित्ता दुःखादिभेदव्यवस्था पादादीनामेव तद्वेदनाधिकरणत्वात्तेषां च भेदात्तद्व्यवस्था युक्तेत्यप्ययुक्तम् । यतस्तेषामज्ञत्वेन भोक्तृत्वायोगात्[27] । भोक्तृत्वे वा चार्वाकमतानुषङ्गः । तदेवमेकत्वस्य प्रत्यक्षानुमानागमप्रमितस्वरूपत्वात्सिद्धं ब्रह्माऽद्वैतं तत्त्वमिति ॥ छ ॥

अत्र प्रतिविधीयते । किं भेदस्य प्रमाणबाधितत्वादभेदः साध्यते अभेदे साधकप्रमाणसद्भावाद्वा ? तत्राद्यविकल्पोऽयुक्तः प्रत्यक्षादेर्[33] भेदानुकूलतया तद्बाधकत्वायोगात् । न खलु भेदमन्तरेण प्रमाणेतर[34]व्यवस्थापि सम्भाव्यते । द्वितीयपक्षोऽप्ययुक्तो भेदमन्तरेण साध्यसाधकभावस्यैवासम्भवात् । न चाभेदसाधकं किञ्चित्प्रमा-

---

१ बहिर्वस्तु ॥ २ अन्तर्वस्तु ॥ ३ भिन्न ॥ ४ आकारलक्षणभेद ॥ ५ प्रमाण ॥ ६ पदार्थां स्वप्रकाशनियता ॥ ७ भा ( तृतीया ) ॥ ८ अनुष्ठानाना ॥ ९ अविद्या ॥ १० विद्या ॥ ११ ग्रन्थस्य ॥ १२ भिन्ना ॥ १३ परमार्थत ॥ १४ वादिभि ॥ १५ मोक्षार्थिना ॥ १६ यथा गगनस्य ॥ १७ अनादिना ॥ १८ उभय ॥ १९ स्थित ॥ २० स्वरूप ॥ २१ श्रद्धान ॥ २२ दुराग्रह ॥ २३ सति ॥ २४ एकत्वे ॥ २५ घटे पटस्य निषेधक भेदोत्पादक इत्यर्थं ॥ २६ घटाकाशपटाकाश ॥ २७ देवदत्तादेर्भावात् । कल्पितात् ॥ २८ नैयायिकादीना ॥ २९ अन्यथा ॥ ३० परेण भट्टेन ॥ ३१ अनुमानागमौ ॥ ३२ ग्राहक ॥ ३३ प्रवर्तमानत्वात् इति शेष ॥ ३४ तदाभास ॥

णमस्ति । यच्चोक्तम् "अविकल्पकाध्यक्षेणैकत्वमेवावसीयते" तत्र किमेकव्यक्तिगतमनेकव्यक्तिगतं व्यक्तिमात्रगतं वा तत्त्वेन प्रतीयते? एकव्यक्तिगतं चेत्तत्किं साधारणमसाधारणं वा? न तावत्साधरणमेकव्यक्तिगतं साधारणं चेति विप्रतिषेधाद्[1]/असाधारणं चेत् कथं नातो भेदसिद्धिरसाधारणस्वरूपलक्षणत्वाद्भेदस्य । अथानेकव्यक्तिगतं सत्तासामान्यरूपमेकत्वं प्रत्यक्षग्राह्यमित्युच्यते । तत्किं व्यक्त्यधिकरणतया प्रतिभात्यनधिकरणतया वा? प्रथमपक्षे भेदप्रसङ्गो व्यक्तिरधिकरणं तदाधेयं च सत्तासामान्यमिति । अयमेव हि भेदः । द्वितीयपक्षे व्यक्तिग्रहणमन्तरेणाप्यन्तराले तत्प्रतिभासप्रसङ्गः । तथा किमेकव्यक्तिग्रहणद्वारेण तत्प्रतीयते सकलव्यक्तिग्रहणद्वारेण वा? प्रथमपक्षे विरोधः । एकाकारता ह्यनेकव्यक्तिगतमेकं रूपं तच्चैकस्मिन् व्यक्तिस्वरूपे प्रतिभातेप्यनेकव्यक्त्यनुयायितया कथं प्रतिभासेत । अथ सकलव्यक्तिप्रतिपत्तिद्वारेण तत्प्रतीयते तदा तस्याऽप्रतिपत्तिरेवाखिलव्यक्तीनां ग्रहणासम्भवात् । भेदसिद्धिप्रसङ्गश्चाखिलव्यक्तीनां विशेषणतया एकत्वस्य च विशेष्यत्वेनेकत्वस्य वा विशेषणतया तासां च विशेष्यत्वेन प्रतिभासनात् । तथा तद्व्यक्तिभ्यस्तद्भिन्नमभिन्नं वा? यद्यभिन्नं तर्हि व्यक्तिरूपतानुषङ्गोऽस्य । न च व्यक्तिर्व्यक्त्यन्तरमन्वेतीति कथं सकलव्यक्त्यनुयायित्वमेकत्वस्य । अथार्थान्तरं कथं नानात्वाऽप्रसिद्धिः । यथा चानुगतप्रत्ययजनकत्वेनैकत्वं व्यक्तिषु कल्प्यते तथा व्यावृत्तप्रत्ययजनकत्वेनानेकत्वमप्यविशेषात् । तन्नैकत्वं नानात्वमन्तरेणावकाशं लभते । प्रयोगो—विवादाध्यासितमेकत्वं परमार्थसन्नानात्वाविनाभावि एकान्तिकत्वरूपतयाऽनुपलभ्यमानत्वाद् । घटादिभेदाविनाभूतमृद्द्रव्यैकत्ववत् । एतेन व्यक्तिमात्रगतमप्येकत्वं प्रत्युक्तमेकानेकव्यक्तिव्यतिरेकेण व्यक्तिमात्रस्यानुपपत्तेः । यच्चोक्त "भेदस्यान्यापेक्षतया कल्पनाविषयत्वं" तदप्युक्तिमात्रमेकत्वस्यैवान्यापेक्षतया कल्पनाविषयत्वसम्भवात् । तद्ध्यनेकव्यक्त्याश्रितं भेदस्तु प्रतिनियतव्यक्तिस्वरूपोऽध्यक्षावसेयः । अथैकत्वं प्रत्यक्षेणैव प्रतिपन्नमन्यापेक्षया तु कल्पनाज्ञानेनानुयायिरूपतया व्यवह्रियते तर्हि भेदोऽप्यध्यक्षेण प्रतिपन्नोऽन्यापेक्षया विकल्पज्ञानेन व्यावृत्तिरूपतया व्यवह्रियते इत्यप्यस्तु । का चेयं कल्पना नाम ज्ञानस्य स्मरणानन्तरभावित्वं शब्दाकारानुविद्धत्वं वा स्वाज्जात्याद्युल्लेखो वा असदर्थविषयत्वं वाऽन्यापेक्षतयाऽर्थस्वरूपावधारणं वा उपचारमात्रं वा? प्रकारान्तराऽसम्भवात् न तावदाद्यविकल्पोऽभेदज्ञानस्यापि स्मरणानन्तरमुपलम्भेन कल्पनात्वप्रसङ्गात् । शब्दाकारानुविद्धत्वं च ज्ञाने प्रागेव प्रतिविहितम् । ननु सकलो भेदप्रतिभासोऽभिलापपूर्वकस्तदभावे भेदप्रतिभासस्याप्यभावः स्यात् तन्न, विकल्पाभिलापयोः कार्यकारणभावस्य कृतोत्तरत्वात् । अस्तु वासौ । तथापि किं शब्दजनितो भेदप्रतिभासस्तज्जनितो वा शब्दः? प्रथमपक्षे किं शब्दा-

१ सामान्य ॥ २ निरोधात् ॥ ३ विशेष ॥ ४ इद सदिद सत् ॥ ५ परेण भवता ॥ ६ वस ॥ ७ वस ॥ ८ तस्या व्यक्तावाधीयते आरोप्यते इति तदाधेय ॥ ९ प्रतिपत्तृव्यक्त्योर्मध्ये ॥ १० किञ्च ॥ ११ किञ्च ॥ १२ व्यक्तिस्वरूपवत् ॥ १३ भिन्न ॥ १४ इद सदिद सदिति ॥ १५ समर्थ्यते ॥ १६ पटाद् घटो व्यावृत्त इति ॥ १७ कल्प्यताम् ॥ १८ सर्वथा ॥ १९ विरूपद्वयनिराकरणपरेण ग्रन्थेन ॥ २० निराकृतम् ॥ २१ परेण ॥ २२ पटस्य ॥ २३ भेद ॥ २४ प्रमीयमानत्वात् ॥ २५ निरूप ॥ २६ एकत्व ॥ २७ घट सन पट सन्नित्यादिज्ञानेन ॥ २८ अनुस्यूतरूपतया ॥ २९ घटस्य ॥ ३० पट ॥ ३१ विसदृश ॥ ३२ सर्व रात्रिद ब्रह्मेत्यादिरूपस्य सोहमित्यादेर्वा ॥ ३३ प्रतीत्या ॥ ३४ सविकल्पकसिद्धौ शब्दाद्वैते च ॥ ३५ पर ॥ ३६ इति चेत् ॥ ३७ सविकल्पकसिद्धौ ॥

देव[1] भेदप्रतिभासस्ततोऽसौ भवत्येवेति[2] वा? शब्दादेव भेदप्रतिभासाभ्युपगमे[3] प्रथमाक्षसन्निपातानन्तरं चित्रपट्यादि[4]ज्ञानस्य भेदविषय[5]स्यानुत्पत्तिप्रसङ्गो निर्विकल्पकानुभवानन्तरं संकेतस्मरण[6]विवक्षा[7]प्रयत्न[8]ताल्वादिपरिस्पंदक्रमेणोपजायमानशब्दस्याविकल्पकप्रथमप्रत्ययावस्थायामभावात्। शब्दादनेकत्व[9]प्रतिभासो भवत्येवेत्यप्ययुक्तमुक्तमेकं ब्रह्मणो रूपमित्यादिशब्दस्य भेदप्रत्यय[10]जनकत्वे सत्यागमात्तस्यैकत्वप्रतिपत्तेरभावानुषङ्गात्। भेदप्रतिभासाच्छब्देऽस्तीत्यभ्युपगते चान्योन्याश्रयत्वम्। शब्दाद्भेदप्रतिभासो भेदप्रतिभासाच्छब्द इति। घटोयं पटोयमित्यादिभेदप्रतिभासस्य जात्याद्युल्लेखित्वात्कल्पनात्वेऽभेदज्ञानस्यापि कल्पनात्वानुषङ्गस्तस्यापि सत्तादि[11]सामान्यो[12]ल्लेखित्वात्[13]। असदर्थविषयत्वं च भेदप्रतिभासस्यासिद्धमर्थक्रियाकारिणो[14] वस्तुभूतार्थस्य तत्र प्रतिभासनात्। विसंवादित्वं बाध्यमानत्वं च कल्पनालक्षणमे[15]तेन प्रत्युक्तं तस्यासदर्थविषयत्वा[16]दर्थान्तरत्वा[17]ऽसम्भवात्। अन्यापेक्षतयार्थ[18]स्वरूपावधारणं चानन्तरमेव प्रत्याख्यातं यतो[20] व्यवहार एवान्यापेक्षतया प्रवर्तते न स्वरूपावधारणम्[21]। नापि[22] भेदप्रतिभासस्योपचाररूपं कल्पनात्वं मुख्या[23]सम्भवे तस्याप्यदर्शनान्माणवके सिंहाद्युपचारवत्[24]। न चाभेदवादिनो मुख्यं भेदाभ्युपगमोऽस्त्य[25]पसिद्धान्तप्रसङ्गात्। यच्चानुमानादप्यात्माद्वैतसिद्धिरित्युक्तं[26] तत्र स्वतः[27]प्रतिभासमानत्वं हेतुः परतो वा। स्वतश्चेदसिद्धिः[28]। परतश्चेद्विरुद्धोऽद्वैते साध्ये द्वैतप्रसाधनात्। घटः प्रतिभासत इत्यादि प्रतिभास[?]सामानाधिकरण्यं तु विषये विषयिधर्मस्योपचारान्न पुनः प्रतिभासात्मकत्वात्। प्रतिभासनं हि विषयिणो ज्ञानस्य धर्मः स विषये घटादावध्यारोप्यते। तदध्यारोपनिमित्तं च प्रतिभासनक्रियाधिकरणत्वम्[32]। तथा चार्थमहं वेद्मीत्यन्तःप्रकाशमानानन्तपर्यायचेतनद्रव्यवद्बहिःप्रकाशमानानन्तपर्यायाऽचेतनद्रव्यमपि प्रतिपत्तव्यम्[33]। सर्वं वै खल्विदं ब्रह्मेत्याद्यागमोपि नाद्वैतप्रसाधकोऽभेदे प्रतिपाद्यप्रतिपादकभावस्यैवासम्भवात्। न चागमप्रामाण्यवादिनोऽर्थवादस्य प्रामाण्यमभिप्रेतमतिप्रसङ्गात्[35]। आत्मैव हि सकललोकसर्गस्थितिप्रलयहेतुरित्यप्यसम्भाव्यमद्वैतैकान्ते कार्यकारणभावविरोधात्तस्य द्वैताविनाभावित्वात्। निराकृतं च[36] नित्यस्य कार्यकारित्वं शब्दाद्वैतविचारप्रक्रमे ॥

किमर्थं चासौ[37] जगद्वैचित्र्यं विदधाति। न तावद्व्यसनितया[38]ऽप्रेक्षाकारित्वप्रसङ्गात्[39]। प्रेक्षाकारिप्रवृत्तेः प्रयोजनवत्तया व्याप्तत्वात्। कृपया परोपकारार्थं तत् करोतीति चेत्। न तद्व्यतिरेकेण परस्या[41]ऽसत्त्वात्। सत्त्वे वा नारकादिदुःखितप्राणिविधानं न स्यादेकान्तसुखितमेवाखिलं जगज्जनयेत्[42]। किञ्च सृष्टेः प्रागनुकम्प्यप्रा-

---

१ पूर्वावधारणम् ॥ २ उत्तरावधारणम् ॥ ३ परेण ॥ ४ चित्राणां पटानां समाहारः चित्रपटी ॥ ५ भेदो विषयो यस्य ॥ ६ नीलादि ॥ ७ वक्तुमिच्छा ॥ ८ उत्साह ॥ ९ भेद ॥ १० प्रतिभास ॥ ११ इद सदिद सत् ॥ १२ आत्मत्व ॥ १३ परामर्शित्वात् ॥ १४ स्नानपानादि ॥ १५ असदर्थविषयत्वनिराकरणेन ॥ १६ अपादाने का (पञ्चमी) ॥ १७ एकत्वप्रतिभास ॥ १८ घट ॥ १९ पट ॥ २० कथ ॥ २१ किन्तु स्वापेक्षतया एव प्रतिभासते ॥ २२ वा ॥ २३ भेदस्य ॥ २४ अग्नि ॥ २५ अन्यथा ॥ २६ परेण ॥ २७ पदार्थानां ॥ २८ परवायसिद्धो हेतु । नहि पदार्थां स्वत एव प्रतिभासन्ते ॥ २९ अन्यस्मात् ॥ ३० ईप् ॥ ३१ स्वरूपस्य ॥ ३२ विषयस्य ॥ ३३ परेण ॥ ३४ प्रशसारूपस्य ॥ ३५ अलाबूनि निमज्जन्ती(?) त्यादेरपि प्रमाणताप्रसङ्ग । सारमित्येतस्य प्रशसावचनस्य अलाबुषु सद्भावात् (? ग्रावाण प्लवन्ते अन्धो मणिमविन्दत्) ॥ ३६ किञ्च ॥ ३७ ब्रह्मा ॥ ३८ फल विना प्रवृत्तिर्व्यसनम् ॥ ३९ मूर्खत्व ॥ ४० ब्रह्म ॥ ४१ जगत ॥ ४२ कुत्सितसृष्टे किं फलम् ॥

ण्यभावात् किमालम्ब्य तस्यानुकम्पा प्रवर्त्तते। येनानुकम्पावशादयं स्रष्टा कल्प्येत। अनुकम्पावशाच्चास्य प्रवृत्तौ देवमनुष्याणां सदाभ्युदययोगिनां प्रलयविधानविरोधो दुःखितप्राणिनामेव प्रलयविधानानुषङ्गात्। प्राण्यदृष्टापेक्षोऽसौ सुखदुःखसमन्वितं जगत् जनयतीत्यप्यसङ्गतं स्वातन्त्र्यव्याघातानुषङ्गात्। समर्थस्वभावस्यासमर्थस्वभावस्य वा नित्यैकरूपस्य वस्तुनोऽन्यापेक्षाऽयोगाच्च। अदृष्टवशाच्च जगद्वैचित्र्यसम्भवे किमनेनान्तर्गडुना पीडाकारिणा। अदृष्टापेक्षा चास्यानुपपन्ना। किं त्ववधीरणमेवोपपन्नमन्यथा कृपालुत्वव्याघातप्रसङ्गः। न हि कृपालवः परदुःखं तद्धेतुं वाऽन्विच्छन्ति परदुःखतत्कारणवियोगवाञ्छयैव प्रवृत्तेः। ननु यथोर्णनाभो जालादिविधाने स्वभावतः प्रवर्त्तते। तथात्मा जगद्विधाने इत्यप्यसत्। ऊर्णनाभो हि न स्वभावतः प्रवर्त्तते। किं तर्हि प्राणिभक्षणलाम्पट्यात्प्रतिनियतहेतुसम्भूततया कादाचित्कात्। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति निन्दावादोप्यनुपपन्नः। सकलप्राणिनां भेदग्राहकत्वेनैवाखिलप्रमाणानां प्रवृत्तिप्रतीतेः। यच्चोक्तमाहुर्विधातृप्रत्यक्षमित्यादि। तत्र किमिदं प्रत्यक्षस्य विधातृत्वं नाम। सत्तामात्रावबोधोऽसाधारणवस्तुस्वरूपपरिच्छेदो वा? प्रथमपक्षोऽयुक्तो नित्यनिरंशव्यापिनो विशेषनिरपेक्षस्य सत्तामात्रस्य स्वप्नेप्यप्रतीतेः खरविषाणवत्। द्वितीयपक्षे तु कथं नाद्वैतप्रतिपादकागमस्याध्यक्षबाधा। भावभेदग्राहकत्वेनैवास्य प्रवृत्तेः। अन्यथाऽसाधारणवस्तुस्वरूपपरिच्छेदकत्वविरोधः। यच्च भेदो देशभेदात्स्यादित्याद्युक्तं तदप्यसङ्गतं सर्वत्राकारभेदस्यैवार्थभेदकत्वोपपत्तेः। यत्रापि देशकालभेदस्तत्रापि तद्रूपतयाऽऽकारभेद एवोपलक्ष्यते। स चाकारभेदः स्वसामग्रीतो जातोऽहमहमिकया प्रतीयमानेनात्मना प्रतीयते। प्रसाधयिष्यते चात्मा सुखशरीरादिव्यतिरिक्तो जीवसिद्धिप्रघट्टके। कथं चाभेदसिद्धिस्तत्प्रतिपत्तावप्यस्य समानत्वात्। तथाहि—अभेदोऽर्थानां देशाभेदात्कालाभेदादाकाराभेदाद्वा स्यात्? यदि देशाभेदात्तदा देशस्यापि कुतोऽभेदोऽन्यदेशाभेदाच्चेदनवस्था। स्वतश्चेदर्थानामपि स्वत एवाभेदोऽस्तु किं देशाभेदादभेदकल्पनया इत्यादि सर्वमत्रापि योजनीयम्। तस्मात्सामान्यस्य विशेषस्य वा स्वभावतोऽभेदोभेदो वाभ्युपगन्तव्यः। यच्चेदमुक्तम्। यत एवाविद्या ब्रह्मणोऽर्थान्तरभूता तत्त्वतो नास्त्यत एवासौ निवर्त्यत इत्यादि तदप्यसारम्। यतो यद्यवस्तुसत्यविद्या कथमेषा प्रयत्ननिवर्तनीया स्यात्। न ह्यवस्तुसन्तः शशशृङ्गादयो यत्ननिवर्त्तनीयत्वमनुभवन्तो दृष्टाः। न चास्यास्तत्त्वतः सद्भावे निवृत्त्यसम्भवो घटादीनां सतामेव निवृत्तिप्रतीतेः। न चाविद्यानिर्मितत्वेन घटग्रामारामादीनामपि तत्त्वतोऽसत्त्वमन्योऽन्याश्रयानुषङ्गात्। अविद्यानिर्मितत्वे हि घटादीनां तत्त्वतोसत्त्वं तस्माच्चाविद्यानिर्मितत्वमिति। अभेदस्य विद्यानिर्मितत्वेन परमार्थसत्त्वेप्यन्योन्याश्रयो द्रष्टव्यः। न चानाद्यऽविद्योच्छेदे प्रागभावो दृष्टान्तो वस्तुव्यतिरिक्तस्यानादेस्तुच्छस्वभावस्यास्याऽसिद्धेः। यदपि तत्त्वज्ञानप्रागभावरूपैवाविद्येत्याद्यभिहितं तदप्यभिधानमात्रं प्रागभावरूपत्वे तस्या-

१ ब्रह्मण ॥ २ क्रिय ॥ ३ ब्रह्मण ॥ ४ पुण्यपाप ॥ ५ ब्रह्मा ॥ ६ ब्रह्मण ॥ ७ अवज्ञा ॥ ८ नरा ॥ ९ ब्रह्माद्वैतवादी ॥ १० क्षुधा ॥ ११ परेण ॥ १२ विसदृश ॥ १३ पदार्थ ॥ १४ प्रत्यभावे ॥ १५ परेण ॥ १६ बहिरन्तर्वा ॥ १७ सास्नादिमत्त्वादि ॥ १८ गवादि ॥ १९ वस्तुनि ॥ २० वस्तुनि ॥ २१ विचारस्य २२ अभेदपक्षे ॥ २३ स्वरूपेण ॥ २४ परेण ॥ २५ आत्मश्रवणमननादिना ॥ २६ भेदस्याविद्याहेतुत्वे अभेदस्य विद्याहेतुत्वमायात तत्रापि दूषणम् ॥ २७ वचन ॥

। प्रागभावस्य कार्योत्पत्तौ सामर्थ्यासम्भवात्[1]। न हि घटप्रागभावः कार्यमुत्पादयन्दृष्टः[2]। केवलं घटवत्प्रागभावविना-
भेदज्ञानलक्षणकार्योत्पादकत्वाभावानुषङ्गात्
शमन्तरेण[3] तत्त्वज्ञानलक्षणं कार्यमेवं नोत्पद्येत। अथ न भेदज्ञानं तस्याः कार्यं किं तर्हि भेदज्ञानस्वभावैवासौ। तन्नैवं[4] सति प्रागभावस्य भावान्तरस्वभावतानु-
षङ्गात्। न च ज्ञानस्य भेदाभेदग्रहणकृता विद्येतरव्यवस्था संवादविसंवादकृतत्वात्तस्य सत्येतरत्वव्यवस्थायाः। संवादश्च भेदाभेदज्ञानयोर्वस्तुभूतार्थग्राहकत्वात्तुल्य
इत्युक्तम्। यदप्युक्तं–भिन्नाभिन्नादिविचारस्य[6] च वस्तुविषयत्वादित्यादि। तत्राविद्यायाः किमवस्तुत्वाद्विचारागोचरत्वं विचारागोचरत्वाद्वाऽवस्तुत्वं स्यात्। न
तावद्यद्यदवस्तु तत्तद्विचारयितुमशक्यमितरेतराभावादेरवस्तुत्वेऽपीदमित्थमित्यादिशाब्दप्रतिभासलक्षणविचारविषयत्वात्। नापि विचारागोचरत्वेनावस्तुत्वमी (मि)
क्षुक्षीरादिमाधुर्यतारतम्यस्य तज्जनितसुखादितारतम्यस्य वा इदमित्थमिति परस्मै निर्देष्टुमशक्यत्वेपि वस्तुरूपत्वप्रसिद्धेः। किं चायं भिन्नाभिन्नादिविचारः प्रमाणम-
प्रमाणं वा? यदि प्रमाणं तेनाविषयीकृतायाः कथमविद्यायाः सत्त्वम्। तदसत्त्वे च कथं मुमुक्षोस्तदुच्छित्तये प्रयासः फलवान्। अथाप्रमाणं कथं तर्हि तस्य वस्तुविष-
यत्वं यतो भिन्नाभिन्नादिविचारस्य वस्तुविषयत्वादित्यभिधानं शोभेत। यच्चोक्तं यथा रजोरजोन्तराणीत्यादि तदप्यसमीचीनम्। यतो बाध्यबाधकभावाभावे
कथं श्रवणमननादिलक्षणाऽविद्याऽविद्यां प्रशमयेत्। बाध्यबाधकभावश्च सतोरेवाहिनकुलवत्। न त्वसतोः शशाश्वविषाणवत्। दैवरक्ता हि किंशुकाः केन रज्यन्ते
नाम। विद्यमानमेव हि रजो रजोन्तरस्य स्वकार्यं कुर्वतः सामर्थ्यापनयनद्वारेण बाधकं प्रसिद्धं विषद्रव्यं वा उपयुक्तविषद्रव्यसामर्थ्यापनयने चरितार्थत्वादन्नमलादि-
सदृशतया न कार्यान्तरकरणे तत्प्रभवतीति। न चैवं भेदस्योच्छेदो घटेत वस्तुस्वभावतयाऽभेदवत्तस्योच्छेत्तुमशक्तेः। ननु स्वप्नावस्थायां भेदाभावेऽपि भेदप्रतिभासो
दृष्टस्ततो न पारमार्थिको भेदस्तत्प्रतिभासो वेत्यभेदेपि समानम्। न खलु तदा विशेषस्यैवाभावो न पुनस्तद्व्यापकसामान्यस्यान्यथा कूर्मरोमादीनामसत्त्वेपि
तद्व्यापकस्य सामान्यस्य सत्त्वप्रसङ्गः। कथं च स्वप्नावस्थायां भेदस्यासत्त्वम्। बाध्यमानत्वाच्चेत्। तर्हि जाग्रदवस्थायां तस्याबाध्यमानत्वात् सत्त्वमस्तु। एकं-
त्रास्य बाध्यमानत्वोपलम्भात्सर्वत्रासत्त्वे च स्थाण्वादौ पुरुषप्रत्ययस्य बाध्यमानत्वेनासत्यतोपलम्भादात्मन्यप्यसत्यत्वप्रसङ्गस्ततो जाग्रदवस्थायां स्वप्नावस्थायां वा यत्र

---

१ अभावरूपत्वात्खरविषाणवत् ॥ २ प्रागभाव स्यात्कार्योत्पादकत्व च स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ३ अविद्याविनाशमन्तरेण । केवल यथा घटप्रागभावो घटप्रागभावविनाशरूपकार्यमन्तरा घटपटादिरूप कार्यं नो-
त्पादयितुमल तथा विद्या प्रागभावरूपैवाविद्या विद्याप्रागभावविनाशमेव कार्यं कर्तुं समर्था न च विद्यारूप भेदरूप वा कार्यमुत्पादयितु समर्थेत्यर्थ ॥ ४ अविद्याया भेदज्ञानस्वभावत्वे ॥ ५ भेदज्ञान ॥ ६ विकल्पस्य ॥ ७ खरशृङ्गवत् ॥
८ इतरस्मिन्नितरस्याभाव इतरेतराभाव । यदभावे नियमेन कार्यस्योत्पत्ति स प्रागभाव इतीदृशम् ॥ ९ प्रतिपाद्याय ॥ १० यदि ॥ ११ स्वपरभेदरूपा ॥ १२ स्वपररूपश्रवणमननादिलक्षणाऽविद्ययो ॥ १३ असत्योरविद्ययो-
र्बाध्यबाधकभाव स्यादित्युक्ते आह ॥ १४ यथा दैवरक्ता किंशुका केनापि न रज्यन्ते तथा असत्योरविद्ययोर्बाध्यबाधकभाव केनापि कर्तुं न शक्यत इत्यभिप्राय ॥ १५ न केनापि ॥ १६ कालुष्यलक्षण स्वकार्य ॥ १७ कालु-
ष्यजननसामर्थ्य ॥ १८ निराकरण ॥ १९ मरणमूर्च्छादि ॥ २० किञ्च ॥ २१ अथैकत्व प्रत्यक्षेणैव प्रतिपन्नम् ॥ २२ घटपटादीनाम् ॥ २३ भेदज्ञान ॥ २४ भेदस्य ॥ २५ विशेषाभावे सामान्यसत्त्व यदि ॥ २६ रोमत्वस्य ॥
२७ मरीचिकाचक्रे जलमिति ज्ञाने ॥ २८ महाहृदादौ ॥

बाधकोदयस्तदसत्यं यत्र तु तदभावस्तत्सत्यमित्यभ्युपगन्तव्यम् । ननु बाधकेन ज्ञानमपह्रियते विषयो वा फलं वा? न तावद् ज्ञानस्यापहारो युक्तः तस्य प्रतिभातत्वात् । नापि विषयस्यात एव । विषयापहारश्च राज्ञां धर्मो न ज्ञानानाम् । फलस्यापि स्नानपानावगाहनादेः प्रतिभातत्वान्नापहारः । बाधकमपि ज्ञानमर्थो वा? ज्ञानं चेत्तत्किं समानविषयं भिन्नविषयं वा? तत्र समानविषयस्य संवादकत्वमेव न बाधकत्वम् । न खलु प्राक्तनं घटज्ञानमुत्तरेण तद्विषयज्ञानेन बाध्यते । भिन्नविषयस्य बाधकत्वे चातिप्रसङ्गः । अर्थोपि प्रतिभातोऽप्रतिभातो वा बाधकः स्यात् । तत्राद्यविकल्पोऽयुक्तः प्रतिभातो ह्यर्थः स्वज्ञानस्य सत्यतामेवावस्थापयति । यथा पटः पटज्ञानस्य । द्वितीयविकल्पेऽप्यप्रतिभातो बाधकश्चेत्यन्योन्यविरोधः । न हि खरविषाणमप्रतिभातं कस्यचिद्बाधकम् ॥ किं च क्वचित्कदाचित्कस्यचिद्बाध्यबाधकभावाभावाभ्यां सत्येतरत्वव्यवस्था सर्वत्र सर्वदा सर्वस्य वा? प्रथमपक्षे सत्येतरत्वव्यवस्थासङ्करः । मरीचिकाचक्रादौ जलादिसंवेदनस्यापि क्वचित्कदाचित्कस्यचिद्बाधकस्यानुत्पत्तेः सत्यसंवेदने तूत्पत्तेः प्रतीयमानत्वात् । द्वितीयपक्षे तु सकलदेशकालपुरुषाणां बाधकानुत्पत्त्युत्पत्त्योः कथमसर्वविदा वेदनं तत्प्रतिपत्तुः सर्ववेदित्वप्रसङ्गात् । इत्यप्यनल्पतमोविलसितम् । रजतप्रत्ययस्य शुक्तिकाप्रत्ययेनोत्तरकालभाविनैकविषयतया बाध्यत्वोपलम्भात् ज्ञानमेव हि विपरीतार्थख्यापकं बाधकमभिधीयते प्रतिपादितासदर्थख्यापनं तु बाध्यम् । ननु चैतद्गतसर्पस्य घृष्टिं प्रति यष्ट्यभिहननमिवाभासते । यतो रजतज्ञानं चेदुत्पत्तिमात्रेण चरितार्थं किं तस्याऽतीतस्य मिथ्यात्वापादनलक्षयापि बाधया । तदसत् । एतदेव हि मिथ्याज्ञानस्यातीतस्यापि बाध्यत्वं यदस्मिन् मिथ्यात्वापादनम् । क्वचित्पुनः प्रवृत्तिप्रतिषेधोपि फलमन्यथा रजतज्ञानस्य बाध्यत्वासम्भवे शुक्तिकादौ प्रवृत्तिरविरता प्राप्नोति । कथं चैवं वादिनोऽविद्याविद्ययोर्बाध्यबाधकभावः स्यात् । तत्राप्युक्तविकल्पजालस्य समानत्वात् । यच्च समारोपितादपि भेदादित्याद्युक्तं तदप्ययुक्तम् । आत्मनः सांशत्वे सत्येव भेदव्यवस्थोपपत्तेर्निरंशस्यान्तर्बहिर्वा वस्तुनः सर्वथाप्यप्रसिद्धेरित्यात्माद्वैताभिनिवेशं परित्यज्यान्तर्बहिश्चानेकप्रकारं वस्तु वास्तवं प्रमाणप्रसिद्धमुररीकर्त्तव्यम् ॥ ननु चाविभागबुद्धिस्वरूपव्यतिरेकेणार्थस्याप्रतीतितोऽसत्त्वाद्विज्ञप्तिमात्रमेव तत्त्वमभ्युपगन्तव्यं तद्ग्राहकं च ज्ञानं प्रमाणमिति । तन्न । यतोऽविभागस्वरूपावेदकप्रमाणसद्भावतो विज्ञप्तिमात्रं तत्त्वमभ्युपगम्यते बहिरर्थसद्भावबाधकप्रमाणावष्टम्भेन

---

१ प्रमाणेन ॥ २ इद जलमिति ज्ञानस्य ॥ ३ जलादिलक्षण ॥ ४ उत्तरम् ॥ ५ उत्तरम् ॥ ६ एक ॥ ७ अप्रतिभातत्वबाधकत्वयो ॥ ८ विषये ॥ ९ असत्यत्व ॥ १० ज्ञानस्य ॥ ११ ज्ञानस्य ॥ १२ एकत्रानेकेषा युगपत्प्राप्ति सङ्कर ॥ १३ आदिपदेन शुक्तिका ॥ १४ रजतादि ॥ १५ अज्ञान ॥ १६ प्रभाचन्द्रदेव पर प्रति ब्रूते ॥ १७ इद रजतमिति ज्ञानस्य ॥ १८ शुक्तिकैकविषय ॥ १९ रजतादि ॥ २० उत्तरम् ॥ २१ शुक्तिशकले प्रतिभातरजताद्विपरीतोऽर्थ शुक्तिशकलम् ॥ २२ शुक्तिकैकविषयख्यापकम् ॥ २३ उत्तरज्ञानेन ॥ २४ बोधित ॥ २५ बोधितमसदर्थख्यापन ( प्रतिपादन ) मसदर्थग्रहण यस्य पूर्वज्ञानस्य ॥ २६ बाध्यबाधकभावलक्षणम् ॥ २७ रजतप्रत्ययस्य शुक्तिविषयप्रत्यय उत्तरकालभावी बाधक इति प्रतिपादनम् ॥ २८ मिथ्याज्ञान ॥ २९ प्रयोजनम् ॥ ३० प्रथमज्ञाने ॥ ३१ उत्तरज्ञानेन ॥ ३२ विषये ॥ ३३ मिथ्यात्वापादनाभावे ॥ ३४ बाधकेन ज्ञानमपह्रियते विषयो वेत्येवं वादिन ॥ ३५ उक्तविकल्पैरतीतस्योत्तरकालीन न बाधकमिति ॥ ३६ अविद्यया किं ज्ञानमपह्रियते विषय फल वा ॥ ३७ सहांशै वर्त्तते इति साश ॥ ३८ सुखादिस्तम्भादि च ॥ ३९ पारमार्थिकम् ॥ ४० भवता परेण ॥ ४१ विज्ञानाद्वैतवादी योगाचार आह ॥ ४२ ग्राह्यग्राहकसवित्तिरूपो विभाग ॥ ४३ जेनादिभि ॥ ४४ इद ज्ञानमय विषय इति विभाग ॥ ४५ ज्ञापक ४६ परेण ॥ ४७ बलेन ॥

वा? यद्याद्यः पक्षस्तत्रापि तथाभूतविज्ञप्तिमात्रे[1] ग्राहकं प्रत्यक्षमनुमानं वा? प्रमाणान्तरस्य सौगतैरनभ्युपगमात् । तत्र न तावत्प्रत्यक्षं वहिरर्थसंस्पर्शरहितं विज्ञप्तिमात्रमेवेत्यधिगन्तुं समर्थमर्थाभावनिश्चयमन्तरेण विज्ञप्तिमात्रमेवेत्यवधारणानुपपत्तेः॥ "अयमेवेति यो ह्येष भावे भवति निर्णयः । नैष[2] वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥ १ ॥" इत्यभिधानात् । न चार्थाभावः प्रत्यक्षाधिगम्यो वाह्यार्थप्रकाशकत्वेनैवास्योत्पत्तेः । न च प्रत्यक्षे प्रतिभासमानस्याप्यर्थस्याभावो विज्ञप्तिमात्रस्याप्यभावानुपङ्गात् । न च तैमिरिकप्रतिभासे प्रतिभासमानेन्दुद्वयवन्निर्मलमनोऽक्षप्रभवप्रतिभासविपर्यस्याप्यसत्त्वमित्यभिधातव्यम् । यतस्तैमिरिकप्रतिभासविपयस्यार्थस्य वाध्यमानप्रत्ययविपयत्वादसत्त्वं युक्तं न पुनः सत्यप्रतिभासविपयस्याऽवाध्यमानप्रत्ययविपयत्वेन सत्त्वसम्भवात् । वाध्यवाधकभावश्चानन्तरमेव ब्रह्माद्वैतप्रघट्टके प्रपञ्चितः । तन्नार्थाभावोऽध्यक्षेणाधिगम्यः । नाप्यनुमानेनाध्यक्षविरोधेऽनुमानस्याप्रामाण्यात् । प्रत्यक्षनिराकृतो न पक्ष इत्यभिधानात् । न च वाह्यार्थावेदकाध्यक्षस्य भ्रान्तत्वान्न तेनानुमानवाधेत्यभिधातव्यम् । अन्योऽन्याश्रयात् । सिद्धे ह्यर्थाभावे तद्ग्राह्यध्यक्षं भ्रान्तं सिद्ध्येत्तत्सिद्धौ चार्थाभावानुमानस्य तेनाऽवाधेति । किञ्च तदनुमानं कार्यलिङ्गप्रभवं स्वभावहेतुसमुत्थं वाऽनुपलब्धिप्रसूतं वा? न तावत्प्रथमद्वितीयविकल्पौ कार्यस्वभावहेत्वोर्विधिसाधकत्वाभ्युपगमात् । अत्र द्वौ वस्तुसाधनावित्यभिधानात् । तृतीयविकल्पोप्ययुक्तोऽनुपलब्धेरसिद्धत्वाद्वाह्यार्थस्याध्यक्षादिनोपलम्भात् । किं चाऽदृश्यानुपलब्धिस्तदभावसाधिका स्यात् दृश्यानुपलब्धिर्वा? प्रथमपक्षेऽतिप्रसङ्गः । द्वितीयपक्षे तु सर्वत्र सर्वदा सर्वथार्थाभावाऽप्रसिद्धिः । प्रतिनियतदेशादावेवास्यास्तदभावसाधकत्वसम्भवात् । एतेन वहिरर्थसद्भाववाधकप्रमाणावष्टम्भेन विज्ञप्तिमात्रं तत्त्वमभ्युपगम्यत इत्येतन्निरस्तम् । तत्सद्भाववाधकप्रमाणस्योक्तप्रकारेणासम्भवात् । ननु नार्थाभावद्वारेण विज्ञप्तिमात्रं साध्यतेऽपि त्वर्थसंविदोः सहोपलम्भनियमादभेदो द्विचन्द्रदर्शनवदिति विधिद्वारेणैव साध्यते । तदप्यसारमभेदपक्षस्य प्रत्यक्षेण वाधनाच्छब्दे श्रावणत्ववत् । दृष्टान्तोपि साध्यविकलो विज्ञानव्यतिरिक्तवाह्यार्थमन्तरेण द्विचन्द्रदर्शनस्याप्यसम्भवात् । कारणदोषवशात् खलु वहिःस्थितमेकमपीन्दुं द्विरूपतया प्रतिपद्यमानं ज्ञानमुत्पद्यते । कारणदोषज्ञानाद्वाधकप्रत्ययाच्चास्य भ्रान्तता । अर्थक्रियाकारिस्तम्भाद्युपलब्धौ तु तदभावात्सत्यता । सहोपलम्भनियमश्चासिद्धो नीलाद्यर्थोपलम्भमन्तरेणाप्युपरतेन्द्रियव्यापारेण सुखादिसंवेदनोपलम्भात् । अनैकान्तिकश्चायं रूपालोकयोर्भिन्नयोरपि सहोपलम्भनियमसम्भवात् । तथा सर्वज्ञज्ञानस्य तज्ज्ञेयस्य चेतर-

१ प्रकृते विज्ञप्तिमात्रे ॥ २ घटते ॥ ३ वहिरर्थं ॥ ४ सद्भावाद्विना ॥ ५ अस्तीति साध्य ॥ ६ यत्प्रतिभासते तदस्तीति अनैकान्तिको न ॥ ७ प्रतिभासमानत्वाविशेषात् ॥ ८ ज्ञान ॥ ९ वाह्यार्थस्य ॥ १० परेण ॥ ११ नेमौ द्वौ चन्द्रौ ॥ १२ ज्ञानाद्वैतवादिना वाध्यवाधकभावो नास्तीत्युक्ते आह ॥ १३ पूर्वं ॥ १४ भा ( तृतीया, तृतीयासमास इत्यर्थ ) ॥ १५ परेण ॥ १६ अनुमानात् ॥ १७ अर्थ ॥ १८ सिद्धा ॥ १९ अस्तित्व ॥ २० त्रिपु हेतुपु मध्ये ॥ २१ पिशाचादेरप्यभावसाधिका ॥ २२ कालप्रकार ॥ २३ वहिरर्थाभावसाधकप्रमाणनिराकरणपरेण ग्रन्थेन ॥ २४ द्वन्द्व ॥ २५ आत्मख्यातिवादी ॥ २६ ईप् ॥ २७ इन्द्रिय ॥ २८ काचकामलादि ॥ २९ उत्तरकाले नेमो द्वो चन्द्रो ॥ ३० घटपटादि ॥ ३१ प्रतीति ॥ ३२ निवृत्तेन्द्रिय ॥ ३३ पुरुषेण ॥ ३४ न चेकत्वम् ॥

जनचित्तस्य सहोपलम्भनियमेपि भेदाभ्युपगमादनेकान्तः । ननु सर्वज्ञः सन्तानान्तरं वा नेष्यते तत्कथमयं दोष इत्यसत् । सकललोकसाक्षिकस्य सन्तानान्तरस्यानभ्युपगममात्रेणाऽभावाऽसिद्धेः । सुगतश्च सर्वज्ञो यदि परमार्थतो नेष्यते तर्हि किमर्थ प्रमाणभूतायेत्यादिनासौ समर्थितः स्तुतश्चाद्वैतादिप्रकरणानामादौ दिग्नागादिभिः सद्भिः । न खलु तेषामसति सत्त्वकल्पने वुद्धिः प्रवर्त्तते । विचार्य पुनस्त्यागाददोषं इत्यप्यसारम् । त्यागाङ्गत्वे हि तस्य वरं पूर्वमेव नाङ्गीकरणमीश्वरादिवत् । अद्वैतमेव तथा स्तूयते इत्यपि वार्त्तम् । तत्र स्तोतव्यस्तोतृस्तुतितत्फलानामत्यन्तासम्भवात् । किञ्च सहोपलम्भः किं युगपदुपलम्भः क्रमेणोपलम्भाभावो वा स्यादेकोपलम्भो वा ? प्रथमपक्षे विरुद्धो हेतुः सह शिष्येणागत इत्यादौ यौगपद्यार्थस्य सहशब्दस्य भेदे सत्येवोपलम्भात् । न ह्येकस्मिन्यौगपद्यमुपपद्यते । द्वितीयपक्षेप्यसिद्धो हेतुः क्रमेणोपलम्भाभावमात्रस्य वादिप्रतिवादिनोरसिद्धत्वात् । किं चास्मादभेदः एकत्वं साध्येत भेदाभावो वा ? तत्राद्यविकल्पोऽसङ्गतो भावाऽभावयोस्तादात्म्यतदुत्पत्तिलक्षणसम्वन्धाभावतो गम्यगमकभावायोगात् । प्रसिद्धे हि धूमपावकयोः कार्यकारणभावे शिंशपात्ववृक्षत्वयोश्च तादात्म्ये प्रतिवन्धे गम्यगमकभावो दृष्टः । द्वितीयविकल्पेप्यभावस्वभावत्वात्साध्यसाधनयोः सम्वन्धाऽभावस्तादात्म्यतदुत्पत्त्योरर्थस्वभावप्रतिनियमात् । अनिष्टसिद्धिश्च । सिद्धेपि भेदप्रतिषेधे विज्ञप्तिमात्रस्येष्टस्यातोऽप्रसिद्धेर्भेदप्रतिषेधमात्रेऽस्य चरितार्थत्वात् । ततस्तत्सिद्धौ वा ग्राह्यग्राहकभावादिप्रसङ्गो वहिरर्थसिद्धेरपि प्रसाधकोऽनुपज्यते । अथैकोपलम्भः सहोपलम्भः । ननु किमेकत्वेनोपलम्भ एकोपलम्भः स्यादेकेनैव वोपलम्भ एकलोलीभावेन चोपलम्भः एकस्यैवोपलम्भो वा ? प्रथमपक्षे साध्यसमो हेतुर्यथाऽनित्यः शब्दोऽनित्यत्वादिति । वहिरन्तर्मुखाकारतया च नीलतद्धियोर्भेदस्य सुप्रतीतत्वात् कथं तयोरेकत्वेनोपलम्भः सिद्ध्येत् । एकेनैवोपलम्भोप्यन्यवेदनाऽभावे सिद्धे सिद्ध्येत् । न चासौ सिद्धो नीलाद्यर्थस्य तत्समानक्षणैरन्यवेदनैरुपलम्भप्रतीतेरित्येकेनैवोपलम्भोऽसिद्धः । एतेनैकलोलीभावेनोपलम्भः सहोपलम्भश्चित्रज्ञानाकारवदशक्यविवेचनत्वं साधनमसिद्धं प्रतिपत्तव्यम् । नीलतद्धियोरशक्यविवेचनत्वासिद्धेरन्तर्वहिर्देशतया विवेकेनानयोः[48] प्रतीतेः । अथैकस्यैवोपलम्भः । किं ज्ञानस्यार्थस्य वा ?

---

१ परेण ॥ २ ज्ञानान्तर वा ॥ ३ सोगतै ॥ ४ जगद्धितैपिणे प्रणम्य शास्त्रे सुगताय तापिने ॥ ५ असति सत्त्वकल्पने वुद्धिप्रवृत्त्यभावलक्षणो दोष ॥ ६ फल्गु ॥ ७ दिग्नागादि ॥ ८ साधन विचार्यते ॥ ९ प्रसज्य ॥ १० विपरीतनिश्चिताविनाभावो विरुद्ध ॥ ११ उपाध्याये ॥ १२ असतसत्तानिश्चयोऽसिद्ध ॥ १३ योगाचारजैनाभ्या तुच्छस्वभावप्रागभावप्रध्वसाभावलक्षणाऽभावयोरनभ्युपगमात् ॥ १४ तुच्छरूपाभावस्य ॥ १५ हेतो ॥ १६ साध्यविचार ॥ १७ अर्थमविदो ॥ १८ प्रसज्य ॥ १९ साध्य ॥ २० अभावो हेतु ॥ २१ एकत्व ॥ २२ साध्यसाधन ॥ २३ सम्बन्धे ॥ २४ शशविषाणाश्वविषाणयोरिव ॥ २५ तुच्छाभावसिद्धि ॥ २६ असाद्धेतो ॥ २७ अभावे ॥ २८ क्रमेणोपलम्भाभावमात्रात् इत्यस्मात्साधनात् ॥ २९ किञ्च ॥ ३० व्याप्यव्यापक ॥ ३१ यथा ग्राह्य ग्राहकमिति द्वैत तथा वाह्योऽर्थं विज्ञानमिति द्वैतसिद्धिरपि स्यादित्यर्थ ॥ ३२ अर्थसविदोस्तादात्म्यात् ॥ ३३ नीलतद्वतो सर्वथा तादात्म्यात् ॥ ३४ ज्ञानेन ॥ ३५ कथञ्चित्तादात्म्य ॥ ३६ किञ्च ॥ ३७ स्वरूपासिद्धो हेतु ॥ ३८ ज्ञानेन ॥ ३९ अर्थस्य ॥ ४० उपलम्भ ॥ ४१ सन्तानान्तरवेदने ॥ ४२ पुरुप ॥ ४३ एकत्वेनोपलम्भनिराकरणपरेण ग्रन्थेन ॥ ४४ चित्रज्ञानायथा तदाकाराणा श्वेतादीनामशक्यविवेचनत्व यथा न तथात्र ॥ ४५ अयमर्थ इद ज्ञानमिति विवेकाभाव ॥ ४६ परेण ॥ ४७ नीलनीलज्ञानयो ॥ ४८ पृथक्त्वेन ॥

ज्ञानस्यैव चेदसिद्धो हेतुः। न खलु परं[3] प्रति ज्ञानस्यैवोपलब्धिः सिद्धाऽर्थस्याप्युपलब्धेः। न चार्थस्याभावादनुपलब्धिरितरेतराश्रयानुषङ्गात्। सिद्धे ह्यर्थाभावे ज्ञानस्यैवोपलम्भः सिद्ध्येत्तदुपलम्भसिद्धौ चार्थाभावसिद्धिरिति। अथार्थस्यैवैकस्योपलम्भः। नन्वेवं कथमर्थाभावसिद्धिः? ज्ञानस्यैवाभावसिद्धिप्रसङ्गात्। उपलम्भनिबन्धनत्वाद्वस्तुव्यवस्थायाः। स्वरूपकारणभेदाच्चानयोर्भेदोग्राहकस्वरूपं हि विज्ञानं नीलादिकं तु ग्राह्यस्वरूपम्। अभेदे च तयोर्ग्राहकता ग्राह्यता वाऽविशेषेण स्यात्। कारणभेदस्तु सुप्रसिद्धो ज्ञानस्य चक्षुरादिकारणप्रभवत्वात्तद्विपरीतत्वाच्च नीलाद्यर्थस्येति। यच्चोच्यते यदवभासते तज्ज्ञानं यथा सुखाद्यवभासते च नीलादिकमिति[8]। तत्र किं स्वतोऽवभासमानत्वं हेतुः परतो वाऽभासमानत्वमात्रं वा? तत्राद्यपक्षे हेतुरसिद्धः। न खलु परनिरपेक्षा नीलादयोऽवभासन्ते इति परस्य प्रसिद्धम्। नीलादिकमहं वेद्मीत्यहमहमिकया प्रतीयमानेन प्रत्ययेन नीलादिभ्यो भिन्नेन तत्प्रतिभासाभ्युपगमात्। यदि च परनिरपेक्षावभासा[11] नीलादयः परस्य प्रसिद्धाः स्युस्तर्हि किमतो हेतोस्तं प्रति साध्यम्। ज्ञानतेति चेत्सा यदि प्रकाशता तर्हि हेतुसिद्धौ सिद्धैव न साध्या। असिद्धौ वा तस्याः कथं नासिद्धो हेतुः। को हि नाम स्वप्रतिभासं तत्रेच्छन् ज्ञानतां नेच्छेत्॥

ननु चाहम्प्रत्ययो गृहीतोऽगृहीतो वा निर्व्यापारः सव्यापारो वा निराकारः साकारो वा नीलादेर्ग्राहकः स्यात्? गृहीतश्चेत्किं स्वतः परतो वा? स्वतश्चेत्स्वरूपमात्रप्रकाशनिमग्नत्वाद्बहिरर्थप्रकाशकत्वाभाव एवं स्यात्। परतश्चेदनवस्था। तस्यापि ज्ञानान्तरेण ग्रहणात्। न च पूर्वज्ञानाग्रहणेऽप्यर्थस्यैव ज्ञानान्तरेण ग्रहणमित्यभिधातव्यम्। तस्यासन्नत्वेन जनकत्वेन च ग्राह्यलक्षणप्राप्तत्वात्। तदाह—"तां ग्राह्यलक्षणप्राप्तामासन्नां जनिकां धियम्। अगृहीत्वोत्तरं ज्ञानं गृह्णीयादपरं कथम्॥" अगृहीतश्चेद्ग्राहकोऽतिप्रसङ्गः। न च निर्व्यापारो वोधोऽर्थग्राहकोऽर्थस्यापि वोधं प्रति ग्राहकत्वानुषङ्गात्। व्यापारवत्त्वे चातोऽव्यतिरिक्तो व्यापारो व्यतिरिक्तो वा? आद्यविकल्पे वोधस्वरूपमात्रमेव नापरो व्यापारः कश्चित्। न चानयोरभेदो युक्तो धर्मधर्मितया भेदप्रतीतेः। द्वितीयविकल्पे तु सम्बन्धासिद्धिस्तत्तस्तस्योपकाराभावात्। उपकारे वानवस्था। तन्निर्वर्तने व्यापारस्यापरव्यापारपरिकल्पनात्। निराकारत्वे वा वोधस्यातः प्रतिकर्मव्यवस्था न स्यात्। साकारत्वे वा बाह्यार्थपरि-

---

१ अर्थसंविदोरभेद एकस्येवोपलम्भात् ॥ २ जेन प्रति ॥ ३ अर्थज्ञानयोर्घटपटयोरिव ॥ ४ प्रकाश ॥ ५ प्राकृतनीलकारणप्रभवत्वात् ॥ ६ परेण भवता ॥ ७ तस्माद् ज्ञानमिति निगमनम् ॥ ८ प्रतिज्ञाद्यसिद्ध ॥ ९ ज्ञान ॥ १० जेनस्य ॥ ११ परनिरपेक्षोऽवभासो येषा ते ॥ १२ जेनस्य ॥ १३ इष्टमबाधितमसिद्धं साध्यम् ॥ १४ ज्ञानत्वम् ॥ १५ नीलादीनाम् ॥ १६ नीलादो ॥ १७ अहप्रत्ययस्य ॥ १८ द्वितीयेन ॥ १९ जेने ॥ २० पूर्वज्ञानस्य ॥ २१ उत्तरज्ञानस्य ॥ २२ प्राक्तनीं ॥ २३ कर्तृ ॥ २४ ॥ नीलादिकम् ॥ २५ नाज्ञात ज्ञापक नाम ॥ २६ देवदत्तज्ञान जिनदत्तेनाज्ञात सत् जिनदत्तस्यार्थग्राहक भवेत् ॥ २७ अन्यथा ॥ २८ निर्व्यापारत्वाविशेषात् ॥ २९ वोधात् ॥ ३० वोधव्यापारयो ॥ ३१ स्वरूप ॥ ३२ वोध ॥ ३३ वोधस्याय व्यापार इति ॥ ३४ व्यापारात् ॥ ३५ वोधस्य ॥ ३६ घटज्ञानस्य घट पटज्ञानस्य पटो विषय, इति प्रतिनियतविषय ॥

कल्पनानर्थक्यं नीलाद्याकारेण वोधेनैव पर्याप्तत्वात्। तदुक्तं—"धियो नीलादिरूपत्वे वाह्योऽर्थः किन्निवन्धनः। धियोऽनीलादिरूपत्वे वाह्योऽर्थः किन्निवन्धनः॥१॥" तथा न भिन्नकालोऽसौ तद्ग्राहको वोधेन स्वकालेऽविद्यमानार्थस्य ग्रहणे निखिलस्य प्राणिमात्रस्याशेषज्ञत्वप्रसङ्गात्। नापि समकालः समसमयभाविनोर्ज्ञानज्ञेययोः प्रतिवन्धाभावतो ग्राह्यग्राहकभावासम्भवात्। अन्यथाऽर्थोपि ज्ञानस्य ग्राहकः। अथार्थे ग्राह्यताप्रतीतेः स च ग्राह्यो न ज्ञानं न तद्व्यतिरेकेणास्याः प्रतीत्यभावात्। स्वरूपस्य च ग्राह्यत्वे ज्ञानेपि तदस्तीति तत्रापि ग्राह्यता भवेत्। अथ जडत्वान्नार्थो ज्ञानग्राहकः। ननु कुतोऽस्य जडत्वसिद्धिस्तदग्राहकत्वाच्चेदन्योन्याश्रयः। सिद्धे हि जडत्वे तदग्राहकत्वसिद्धिस्ततश्च जडत्वसिद्धिरिति। अथ गृहीतिकरणादर्थस्य ज्ञानं ग्राहकम्। ननु साऽर्थादर्थान्तरमनर्थान्तरं वा तेन क्रियते? अर्थान्तरत्वेर्थस्य न किञ्चित्कृतमिति कथं तेनास्य ग्रहणम्। तस्येयमिति सम्वन्धासिद्धिश्च। तयाप्यस्य गृहीत्यन्तरकरणेऽनवस्था। अनर्थान्तरत्वे तु तत्करणेऽर्थ एव तेन क्रियते इत्यस्य ज्ञानता ज्ञानकार्यत्वादुत्तरज्ञानवत्। जडार्थोपादानोत्पत्तेर्न दोपश्चेत्। ननु पूर्वोऽर्थोऽप्रतिपन्नः कथमुपादानमतिप्रसङ्गात्। प्रतिपन्नश्चेत् किं समानकालाद्भिन्नकालाद्वेत्यादिदोपानुपङ्गः। किञ्च गृहीतिरगृहीता कथमस्तीति निश्चीयते। अन्यज्ञानेन चास्या ग्रहणे स एव दोपोऽनवस्था च ततोऽर्थो ज्ञानं गृहीतिरिति त्रितयं स्वतन्त्रमाभातीति न परतः कस्यचिदवभासनमिति नासिद्धो हेतुः। ननु चार्थमहं वेद्मि चक्षुपेति कर्मकर्तृक्रियाकरणप्रतीतिर्ज्ञानमात्राभ्युपगमे कथमित्यप्यपेशलं तैमिरिकस्य द्विचन्द्रदर्शनवदस्या अप्युपपत्तेः यथा हि तस्यार्थाभावेपि तदाकारं ज्ञानमुदेत्येवं कर्मादिष्वविद्यमानेष्वप्यनाद्यविद्यावासनावशात्तदाकारं ज्ञानमिति॥

अत्र प्रतिविधीयते॥ यत्तावदुक्तमहंप्रत्ययो गृहीतोऽगृहीतो वेत्यादि। तत्र गृहीत एवार्थग्राहकोऽसौ तद्ग्रहश्च स्वत एव। न च स्वतोऽस्य ग्रहणे स्वरूपमात्रप्रकाशनिमग्नत्वाद्बहिरर्थप्रकाशकत्वाभावः। विज्ञानस्य प्रदीपवत्स्वपरप्रकाशस्वभावत्वात्। यच्चोक्तं निर्व्यापारः सव्यापारो वेत्यादि। तदप्युक्तिमात्रं स्वपरप्रकाशस्वभाव-

---

१ ज्ञानस्य॥ २ निराकारत्वे॥ ३ ग्राहकव्यवस्थापकाभावात्॥ ४ किम्प्रयोजन। किं निवन्धन निमित्त व्यवस्थापक यस्य वाह्यार्थस्य स॥ ५ नीलादि॥ ६ अन्यथा॥ ७ अय प्रत्ययोनीलादेर्ग्राहक॥ ८ तदुत्पत्तिलक्षणसम्वन्ध॥ ९ सव्येतरगोविपाणवत्॥ १० इति न (इत्यर्थ)॥ ११ अर्थस्य॥ १२ भो जेन॥ १३ परिच्छित्ति॥ १४ घटादे॥ १५ घटस्य करणे पटस्य किमायात यथा तथा॥ १६ प्रथमया॥ १७ सम्वन्धसिद्ध्यर्थम्॥ १८ अभिन्नत्वे॥ १९ मृत्पिण्डादि॥ २० अर्थस्य॥ २१ अज्ञात॥ २२ अप्रतिपन्नत्वाविशेपात्॥ २३ खरविपाणादेरप्युपादानत्वप्रसङ्गात्॥ २४ वोधात्॥ २५ अज्ञाता॥ २६ भिन्नकालेन समकालेन वेत्यादि॥ २७ अन्यज्ञानेन गृहीतो गृहीत्यन्तरमावगृहीतेरर्थेन सम्वन्धसिद्ध्यर्थं क्रियते। एव चेदन्यज्ञानेन क्रियमाणा गृहीति सा अर्थाद्भिन्ना अभिन्ना वेति उभयपक्षे उक्तदोपानुपङ्ग। पुनरपि भेदपक्षे गृहीतेरर्थेन सम्वन्धसिद्ध्यर्थमन्यज्ञानेनापर गृहीत्यन्तर क्रियते। अपरगृहीतिरपि अर्थाद्भिन्ना अभिन्ना वेत्यादिप्रकारेणानवस्था॥ २८ परेण॥ २९ इदमपि ज्ञान समकाल भिन्नकाल वेत्यादि। अन्यज्ञानमपि गृहीतमगृहीतमित्यादिप्रकारेण॥ ३० ग्रहणम्॥ ३१ परेण॥

ताव्यतिरेकेण ज्ञानस्य स्वपरप्रकाशनेऽपरव्यापाराभावात्प्रदीपवत् । न खलु प्रदीपस्य स्वपरप्रकाशस्वभावताव्यतिरेकेणान्यस्तत्प्रकाशनव्यापारोऽस्ति । न च ज्ञानरूपत्वे नीलादेः सप्रतिघादिरूपता घटते । न च तद्रूपतयाऽध्यवसीयमानस्य नीलादेर्ज्ञानमिति नामकरणे काचिन्नः क्षतिः । नामकरणमात्रेण सप्रतिघत्वबाह्यरूपत्वादेरर्थधर्मस्याव्यावृत्तेः । न च तद्रूपता ज्ञानस्यैव स्वभावस्तद्विषयत्वेनानन्यवेद्यतया चास्यान्तःप्रतिभासनात् । सप्रतिघान्यवेद्यस्वभावतया चार्थस्य बहिःप्रतिभासनात् । न च प्रतिभासमन्तरेणार्थव्यवस्थायामन्यन्निबन्धनं पश्यामः । यदप्यभिहितं निराकारः साकारो वेत्यादि तदप्यभिधानमात्रं साकारवादप्रतिक्षेपेण निराकारादेव प्रत्ययात् प्रतिकर्मव्यवस्थोपपत्तेः प्रतिपादयिष्यमाणत्वात् । यच्चान्यदुक्तं न भिन्नकालोऽसौ तद्ग्राहक इत्यादि तदप्यसारं क्षणिकत्वानभ्युपगमात् । यो हि क्षणिकत्वं मन्यते तस्यायं दोषो बोधकालेऽर्थस्याभावादर्थकाले च बोधस्यासत्त्वात् तयोर्ग्राह्यग्राहकभावानुपपत्तिरिति । यच्चाविद्यमानार्थस्य ग्रहणे प्राणिमात्रस्याशेषज्ञत्वप्रसक्तिरित्युक्तं तदप्ययुक्तं भिन्नकालस्य समकालस्य वा योग्यस्यैवार्थस्य ग्रहणात् । दृश्यते हि पूर्वोत्तरचरादिलिङ्गप्रभवप्रत्ययाद्भिन्नकालस्यापि प्रतिनियतस्यैव शकटोदयाद्यर्थस्य ग्रहणम् । कथं चैवं वादिनोऽनुमानोच्छेदो न स्यात् । तथा हि । त्रिरूपाल्लिङ्गाल्लिङ्गिनि ज्ञानमनुमानं प्रसिद्धम् । लिङ्गं चावभासमानत्वमन्यद्वा यदि भिन्नकालं तस्य जनकं तर्ह्येकस्यानुमानस्याशेषमतीतमनागतं तज्जनकमित्यतः एवाशेषानुमेयप्रतीतेरनुमानभेदकल्पनानर्थक्यम् । अथ भिन्नकालत्वाविशेषेपि किञ्चिदेव लिङ्गं कस्यचिज्जनकमित्यदोषोऽयम् । नन्वेवं तदविशेषेपि किञ्चिदेव ज्ञानं कस्यचिदेवार्थस्य ग्राहकं किं नेष्यते । अथातीतानुत्पन्नेऽर्थे प्रवृत्तं ज्ञानं निर्विषयं स्यात्तर्हि नष्टानुत्पन्नाल्लिङ्गादुपजायमानमनुमानं निर्हेतुकं किं न स्यात् । यथा च स्वकाले विद्यमानं स्वरूपेण जनकं तथा ग्राह्यमपि तत्र भिन्नकालं लिङ्गमनुमानस्य जनकम् । नापि समकालं तस्य जनकत्वविरोधात्तदविरोधे वानुमानमप्यस्य जनकं भवेत् । तथा चान्योन्याश्रयान्नैकस्यापि सिद्धिः । अथानुमानमेव जन्यं तत्रैव जन्यताप्रतीतेः । नानुमानव्यतिरेकेणार्थे मात्रतानजन्यतायाः प्रतीत्यभावात् । न च स्वरूपमेव जन्यता । लिङ्गेपि तत्सद्भावेन जन्यताप्रसक्तेः । तथा चान्योन्यजन्यतालक्षणोदोषः स एवानुप-

१ ज्ञान ॥ २ अर्थे ॥ ३ अर्थस्य ॥ ४ काठिन्य ॥ ५ छेदनाग्रहणादि ॥ ६ अस्माक जैनाना ॥ ७ वहिरर्थं ॥ ८ ज्ञान ॥ ९ वय जैना ॥ १० परेण ॥ ११ अहम्प्रत्यय ॥ १२ ज्ञानात् ॥ १३ विपय ॥१४ जैनै ॥ १५ अहम्पत्यय ॥ १६ अर्थे ॥ १७ ज्ञानार्थयो ॥ १८ जैनानाम् ॥ १९ ज्ञानकाले ॥ २० सर्वज्ञत्व ॥ २१ परेण भवता ॥ २२ ग्रहीतु शन्यस्य ॥ २३ एतदेव दर्शयति ॥ २४ लोके ॥ २५ अनुमानात् ॥ २६ क्रियत एव ॥ २७ भिन्नकाल समकालो वा अहम्प्रत्यय । इत्यादि ॥ २८ योगानास्य ॥ २९ साध्ये अग्न्यादो ॥ ३० सहोपलम्भादि ॥ ३१ लिङ्ग ॥ ३२ एतस्मादनुमानादेव ॥ ३३ सकलसाध्यपदार्थाना परिज्ञानात् ॥ ३४ लिङ्गानामतीतानागतादीनाम् ॥ ३५ अनुमानस्य ॥ ३६ लिङ्गप्रकारेण ॥ ३७ परेण ॥ ३८ अतीतकारणवादिपक्षे क्षणिकत्वेन नष्टादित्युच्यते भाविकारणवादिपक्षे लिङ्गवत्तासमानत्वमनुत्पन्न लिङ्ग चानुमानस्य कारण तदभावे अनुमानलक्षणकार्यानुदयात् ॥ ३९ योगतेनोच्यते चेत् ॥ ४० अतीतकारण ॥ [illegible] क्षणिकत्वेन ॥ ४१ भाविकारणवादिपक्षे लिङ्गमवभासमानत्वमनुमानस्य कारण तदभावे कार्यानुदयात् ॥४२ अतीते भविष्यति काले ॥ ४३ लिङ्गम् ॥४४ अनुमानस्य ॥४५ वस्तु ॥ ४६ ज्ञानस्य भाति ॥ ४७ सर्वोत्तरयोगिनाम् ॥ ४८ लिङ्गेन ॥ ४९ ता (षष्ठी षष्ठ्यन्तान्मतुरित्यर्थ ) ॥ ५० अनुमानस्य ॥

ज्यते । अथानयोः स्वरूपाविशेषेप्यनुमान एव जन्यता लिङ्गापेक्षया । ननु लिङ्गे तदपेक्षया सेत्युच्यते । तर्हि ज्ञानार्थयोस्तदविशेषे ऽर्थस्यैव ज्ञानापेक्षया ग्राह्यता न तु ज्ञानस्यार्थापेक्षया सेत्युच्यताम् । न चोत्पत्तिकरणाल्लिङ्गमनुमानस्योत्पादकं तस्यास्ततोऽर्थान्तरानर्थान्तरपक्षयोरसम्भवात् । सा हि यद्यनुमानादर्थान्तरं तदानुमानस्य न किञ्चित्कृतमित्यस्याभावः । अनुमानस्योत्पत्तिरिति सम्बन्धासिद्धिश्चानुपकारात् । उपकारे वाऽनवस्था । अथानर्थान्तरभूता क्रियते तदानुमानमेव तेन कृतं स्यात् । तथा चानुमानं लिङ्गं लिङ्गजन्यत्वादुत्तरलिङ्गक्षणवत् । न च प्राक्तनानुमानोपादानजन्यत्वान्नानुमानं लिङ्गं यतस्तदप्यनुमानमन्यतो लिङ्गाच्चेत्तर्हि तदप्यनुमानं लिङ्गं तज्जन्यत्वादुत्तरलिङ्गक्षणवदिति तदवस्थं चोद्यम् । उत्तरमपि तदेवेति चेदनवस्था स्यात् । अथ तथाप्रतीतेर्लिङ्गजन्यत्वाविशेषे किञ्चिल्लिङ्गमपरमनुमानं तर्हि ज्ञानजन्यत्वाविशेषेपि किञ्चिज्ज्ञानमपरोऽर्थ इति किन्न स्यात् । तथा चार्थो ज्ञानं ज्ञानकार्यत्वादुत्तरज्ञानवदित्ययुक्तम् । न च गृहीतिविधानादर्थस्य ग्राह्यतेष्यते स्वरूपप्रतिनियमात्तदभ्युपगमात् । यथैव ह्येकसामग्र्यधीनानां रूपादीनां चक्षुरादीनां वा समसमयेऽपि स्वरूपप्रतिनियमादुपादानेतरत्वव्यवस्था । तथार्थज्ञानयोर्ग्राह्येतरत्वव्यवस्था च भविष्यति । ननु यया प्रत्यासत्त्या ज्ञानमात्मानं विषयीकरोति तयैव चेदर्थं तयोरैक्यम् । न ह्येकस्वभाववेद्यमनेकं युक्तमन्यथैकमेव न किञ्चित्स्यात् । अथान्यया स्वभावद्वयापत्तिर्ज्ञानस्य भवेत् । तदपि स्वभावद्वयं यद्यपरेण स्वभावद्वयेनाधिगच्छति तदाऽनवस्था । तद्वेदनेप्यपरस्वभावद्वयापेक्षणात् । ततः स्वरूपमात्रग्राह्येव ज्ञानं नार्थग्राहीत्यप्यसमीचीनं स्वार्थग्रहणैकस्वभावत्वाद्विज्ञानस्य । स्वभावतद्वत्पक्षोपक्षिप्तदोषपरिहारश्च स्वसंवेदनसिद्धौ भविष्यतीत्यलमतिप्रसङ्गेन । कथं चैवं वादिनो रूपादेः सजातीयेतरकर्तृत्वं तत्राप्यस्य समानत्वात् । तथा हि—रूपादिकं लिङ्गं वा यया प्रत्यासत्त्या सजातीयक्षणं जनयति तयैव चेद्रसादिकमनुमानं वा तर्हि तयोरैक्यमित्यन्यतरदेव स्यात् । अथान्यया तर्हि रूपादेरेकस्य स्वभावद्वयमायातं तत्र चानवस्था परापरस्वभावद्वयकल्पनात् । न खलु येन स्वभावेन रूपादिकमेकां शक्तिं बिभर्ति तेनैवापरां तयोरैक्यप्रसङ्गात् । अथ रूपादिकमेकस्वभावमपि भिन्नस्वभावं कार्यद्वयं कुर्यात्तत्करणैकस्वभावत्वात् । तर्हि ज्ञानमप्येकस्वभावं स्वा-

---

१ लिङ्गानुमानयो ॥ २ परेण भवता ॥ ३ परेण ॥ ४ लिङ्गेन ॥ ५ उत्पत्त्यन्तरान्वेषणात् ॥ ६ अभिन्ना ॥ ७ लिङ्गेन ॥ ८ ननु प्राक्तनमनुमान लिङ्गादुत्पद्यते ॥ ९ प्राक्तनम् ॥ १० लिङ्गतया अनुमानतया ॥ ११ अनुमानस्य ॥ १२ उत्तरक्षण ॥ १३ किञ्च ॥ १४ परिच्छित्ति ॥ १५ कारणात् ॥ १६ जैनै ॥१७ अर्थग्राह्यतास्वरूपस्य प्रतिनियतत्वात्॥१८पूर्वक्षण॥१९उत्तर॥२०उत्तररूपरसयो उत्तरचक्षुर्ज्ञानयो ॥ २१ सहकारिकारण ॥ २२ ग्राहक ॥ २३ यदवभासते तज्ज्ञानमित्यनुमानस्य निपक्षे बाधक प्रमाणम् ॥ २४ शक्त्या ॥ २५ द्वन्द्व ॥ २६ स्वार्थग्रहण ॥ २७ ज्ञान ॥ २८ एकत्वमनवस्था च ॥ २९ ज्ञानान्तरप्रत्यक्षपक्षविक्षेपणान्ते ॥ ३० ज्ञान ॥ ३१ ज्ञानाद्वैतपक्षे दोषपरिहारविस्तरेण ॥ ३२ स्वभावानवस्था ब्रुवाणस्य ॥ ३३ रसादिलिङ्ग च (?) ॥ ३४ स्वजातीय जनयन्विजातीय जनयेत् (?) ॥ ३५ उत्तररूपमुत्तरलिङ्ग च ॥ ३६ अनवस्थादिदोषस्य ॥ ३७ न्यायस्य ॥ ३८ पूर्व ॥ ३९ धूमादि ॥ ४० पूर्व ॥ ४१ स्वभावेन ॥ ४२ शक्त्या ॥ ४३ उत्तर ॥ ४४ रूपलिङ्ग च ॥ ४५ विजातीयम् ॥ ४६ विजातीय ॥ ४७ रूपरसयोर्लिङ्गानुमानयोर्वा ॥ ४८ रूप वा रसो वा लिङ्ग वा अनुमान वा स्यात् ॥ ४९ लिङ्गस्य ॥ ५० कर्तृ ॥ ५१ अन्यथा ॥ ५२ लिङ्ग च ॥ ५३ रूपादे ॥

र्थयोः सङ्करव्यतिकरव्यतिरेकेण ग्राहकमस्तु तद्ग्रहणैकस्वभावत्वात् । ननु व्यवहारेण कार्यकारणभावो न परमार्थतस्तेनायमदोषः । तर्हि तेनैवाहमहमिकया प्रतीयमानेन ज्ञानेन नीलादेर्ग्रहणसिद्धेः कथमसिद्धेः स्वतोऽवभासमानत्वलक्षणो हेतुर्न स्यात् । न चैवंवादिनः स्वरूपस्यं स्वतोऽवगतिर्घटते समकालस्यास्य प्रतिपत्तावर्थवत् प्रसङ्गात् । न च स्वरूपस्य ज्ञानतादात्म्यान्नायं दोषस्तादात्म्येपि समानेतरकालविकल्पानतिवृत्तेः । ननु ज्ञानमेव स्वरूपं तत्कथं तत्र भेदभावी विकल्पोऽवतरतीति चेत् । कुत एतत्तथा प्रतीतेश्चेत्-इयं यद्यप्रमाणं कथमतस्तत्सिद्धिरतिप्रसङ्गात् । प्रमाणं चेत् । तर्हि स्वपरग्रहणस्वरूपताप्यस्य तथैवास्त्वलं तत्रापि तद्विकल्पकल्पनया प्रत्यक्षविरोधात् । तन्न स्वतोऽवभासमानत्वं हेतुरसिद्धत्वात् । नापि परतो वाद्यसिद्धत्वात् । न खलु सौगतः कस्यचित्परतोऽवभासमानत्वमिच्छति । नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोपर इत्यभिधानात् कथं च साध्यसाधनयोर्व्याप्तिः सिद्धा । यतो यदवभासते तज्ज्ञानमित्यादि सूक्तं स्यात् । न खलु स्वरूपमात्रपर्यवसितं ज्ञानं निखिलमवभासमानत्वं ज्ञानत्वव्याप्तमित्यधिगन्तुं समर्थम् । न चाखिलसम्बन्ध्यप्रतिपत्तौ सम्बन्धप्रतिपत्तिः । द्विष्टसम्बन्धसंवित्तिरित्याद्यभिधानात् । न च विवक्षितं ज्ञानं ज्ञानत्वमवभासमानत्वं चात्मन्येव प्रतिपद्य तयोर्व्याप्तिमधिगच्छतीत्यभिधातव्यं तत्रैवानुमानप्रवृत्तिप्रसङ्गात् । तत्र च तत्प्रवृत्तेर्वैयर्थ्यं साध्यस्याध्यक्षे सिद्धत्वात् । अथ सकलं ज्ञानमात्मन्यनयोर्व्याप्तिं प्रत्येतीत्युच्यते । ननु सकलज्ञानाज्ञाने कथमेवंवादिना प्रत्येतुं शक्यम् । न चासिद्धव्याप्तिकलिङ्गप्रभवादनुमानात्तथागतस्य स्वमतसिद्धिः परस्यापि तथाभूतात्कार्याद्यनुमानादीश्वराद्यभिमतसाध्यसिद्धिप्रसङ्गात् । न चानयोः कुतश्चित् प्रमाणाद्व्याप्तिः प्रसिद्धा ज्ञानवज्जडस्यापि परतो ग्रहणसिद्ध्या हेतोरनैकान्तिकत्वानुषङ्गात् । यदप्युक्तं जडस्य प्रतिभासायोगादिति । तत्राप्यप्र-

---

१ ज्ञानस्य ॥ २ रूपादे ॥ ३ उपलक्षणात् ॥ ४ साध्यसाधनभावादि ॥ ५ कारणेन ॥ ६ पदार्थस्य ॥ ७ ज्ञप्ति ॥ ८ ज्ञानात् (ज्ञानेन) प्रकाशमानत्वात् ॥ ९ समकालो भिन्नकालो वार्थो न ग्राह्य इत्येव वादिनो योगाचारस्य ॥ १० ज्ञानस्य ॥ ११ ज्ञानात् ॥ १२ परिच्छित्ति ॥ १३ देशान्तरस्थमपि स्वरूप गृह्णीयात्समकालत्वे तदुत्पत्तिलक्षणसम्बन्धाभावात् ॥ १४ देशान्तरस्थमपि स्वरूप गृह्णीयात्समकालत्वात् ॥ १५ दूषणम् ॥ १६ अर्थवत्प्रसङ्गलक्षण ॥ १७ भिन्न ॥ १८ अनतिक्रमणात् ॥ १९ अपि न कुतोऽपि ॥ २० ज्ञानस्वरूपे ॥ २१ प्रमाणात् ॥ २२ ज्ञानमेव स्वरूप ॥ २३ ज्ञानस्य स्वरूपतया ॥ २४ ज्ञानमेव स्वरूपसिद्धि ॥ २५ संशयादेरपि तत्सिद्धि ॥ २६ ज्ञानस्य ॥ २७ अर्थग्रहणे ॥ २८ समानेतरकाल इत्यादि ॥ २९ अन्यथा ॥ ३० जैनस्य ॥ ३१ ज्ञानात् ॥ ३२ योगाचार ॥ ३३ अर्थ ॥ ३४ ग्राह्य ॥ ३५ ग्राहक ॥ ३६ ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते । (इति उत्तरार्द्ध श्लोकस्य) ॥ ३७ सौगतैः परत प्रतिभासानभ्युपगमे ॥ ३८ क्रिय ॥ ३९ निश्चितम् ॥ ४० ज्ञातु ॥ ४१ सम्बन्धिनोरवभासमानत्वज्ञानत्वयो ॥ ४२ नैकरूपप्रवेदनात् । द्वयो स्वरूपग्रहणे सति सम्बन्धवेदनम् ॥ ४३ प्रत्यक्षमनुमान वा ॥ ४४ स्वस्मिन्नेव ॥ ४५ अवभासमानत्वज्ञानत्वयो ॥ ४६ परेण ॥ ४७ अन्यथा ॥ ४८ ज्ञानस्य ॥ ४९ जानाति ॥ ५० परेण ॥ ५१ अपरिज्ञाने (सति) ॥ ५२ सकल ज्ञानमित्यादिवादिना ॥ ५३ नीलादीना ज्ञानरूपतासिद्धि ॥ ५४ यौगादेरपि ॥ ५५ असिद्धव्याप्तिकलिङ्ग ॥ ५६ कार्यादेर्हेतोरुत्पन्नादनुमानात् ॥ ५७ ता हेतो सम्बन्धि ॥ ५८ क्रिय ॥ ५९ अन्यथा ॥ ६० साध्यसाधनज्ञानयोर्व्याप्तिज्ञानेन ग्रहणम् ॥ ६१ नीलादेरर्थस्य ॥ ६२ ज्ञानात् ॥ ६३ प्रतिभासमानत्वादिलस्य ॥ ६४ परेण ॥

तिपन्नस्यास्य प्रतिभासायोगः प्रतिपन्नस्य वा । न तावदप्रतिपन्नस्यासौ प्रत्येतुं शक्योऽन्यथा सन्तानान्तरस्याप्रतिपन्नस्य स्वप्रतिभासायोगस्यापि प्रसिद्धेस्तस्याप्यभावः । तथा च तत्प्रतिपादनार्थं प्रकृतहेतूपन्यासो व्यर्थः । अथ सन्तानान्तरं स्वस्य स्वप्रतिभासयोगं स्वयमेव प्रतिपद्यते । जडस्यापि प्रतिभासयोगं तदेव प्रत्येतीति किन्नेष्यते । प्रतीतेरुभयत्रापि समानत्वात् । अथाऽप्रतिपन्नेपि जडे विचारात्तदयोगः । ननु तेनाप्यस्याविषयीकरणे स एव दोषो विचारस्तत्र न प्रवर्त्तते । ततै एव वात्र तदयोगप्रतिपत्तिरिति विषयीकरणे वा विचारवत्प्रत्यक्षादिनाप्यस्य विषयीकरणात्प्रतिभासायोगोऽसिद्धः । न च प्रतिपन्नस्य जडस्य प्रतिभासायोगप्रतिपत्तिरित्यभिधातव्यं जडप्रतीतिः प्रतिभासायोगश्चास्येत्यन्योन्यविरोधात् । साध्यविकलश्चायं दृष्टान्तो नैयायिकादीनां सुखादौ ज्ञानरूपत्वासिद्धेः । अस्मादेव हेतोस्तत्रापि ज्ञानरूपतासिद्धौ दृष्टान्तान्तरं मृग्यम् । तत्राप्येतच्चोद्ये तदन्तरान्वेषणमित्यनवस्था । नीलादेर्दृष्टान्तत्वे चान्योऽन्याश्रयः । सुखादौ ज्ञानरूपतासिद्धौ नीलादेस्तन्निदर्शनात्तद्रूपतासिद्धिस्तस्यां च तन्निदर्शनात्सुखादेस्तद्रूपतासिद्धिरिति । न च सुखादौ दृष्टान्तमन्तरेणापि तत्सिद्धिर्नीलादावपि तथैव तदापत्तेस्तत्र दृष्टान्तवचनमनर्थकमिति निग्रहाय जायेत । अथ सुखादेरज्ञानत्वे ततः पीडानुग्रहाभावो भवेत् । ननु सुखाद्येव पीडानुग्रहौ ततो भिन्नौ वा । प्रथमपक्षे किं ज्ञानत्वेन व्याप्तौ तौ प्रतिपन्नौ यतस्तदभावे न स्याताम् । व्यापकाभावे हि नियमेन व्याप्याभावो भवति । अन्यथा प्राणादेः सात्मकत्वेन क्वचिद्व्याप्त्यसिद्धावप्यात्माऽभावे स न भवेत् । ततः केवलव्यतिरेकि हेत्वगमकत्वप्रदर्शनमयुक्तम् । तन्नाद्यपक्षो नापि द्वितीयो यतो यदि नाम सुखदुःखयोर्ज्ञानत्वाभावोऽर्थान्तरभूतानुग्रहाद्यभावे किमायातम् । न खलु यज्ञदत्तस्य गौरत्वाभावे देवदत्ताभावो दृष्टः । ननु सुखादौ जैनस्य प्रकाशमानत्वं ज्ञानरूपतया व्याप्तं प्रसिद्धमेवेत्यप्यसारम् । यतः स्वतः प्रकाशमानत्वं ज्ञानरूपतया व्याप्तं यत्तस्यात्र प्रसिद्धं तन्नीलाद्यर्थे नास्तीत्यसिद्धो हेतुः । यत्तु परतः प्रकाशमानत्वं तत्र प्रसिद्धं तन्न ज्ञातरूपतया व्याप्तम् । प्रकाशमानत्वमात्रं च नीलादावुपलभ्यमानं जडत्वेनाविरुद्धत्वं नैकान्ततो ज्ञानरूपतां प्रसाधयेत् । यदप्युक्तं तैमिरिकस्य द्विचन्द्रादिवत्कर्त्रादिकमविद्यमानमपि प्रतिभातीति । तदपि स्वमनोरथमात्रमत्र बाधकप्रमाणाभावात् । द्विचन्द्रादौ हि विपरीतार्थख्यापकस्य बाधकप्रमाणस्य सद्भावाद्युक्तमसत्प्रतिभासनम् । न पुनः कर्त्रादौ,

---

१ परेण त्वया अज्ञातस्य ॥ २ शिष्यादिकम् ॥ ३ सोगते ॥ ४ स्वरूपेण ॥ ५ बोधनार्थं ॥ ६ प्रतिभासमानत्वात् ॥ ७ ता ॥ ८ सम्बन्ध ॥ ९ जानाति ॥ १० परेण ॥ ११ सोगतस्य तव ॥ १२ सन्तानान्तरप्रतिभासयोगे जडप्रतिभासयोगे च ॥ १३ प्रतिभासायोग ॥ १४ विचारात् ॥ १५ जडस्य विचारेण ॥ १६ अनुमान ॥ १७ जडस्य ॥ १८ द्वितीयविकल्पस्य ॥ १९ असम्भव ॥ २० परेण ॥ २१ ज्ञान ॥ २२ सुखादि ॥ २३ प्रतिभासमानत्वादित्यस्मात् ॥ २४ सुखादिधर्मी ज्ञान भवतीति साध्य प्रतिभासमानत्वात् । दृष्टान्तेन भाव्य ह्यत्र ॥ २५ यदवभासते तज्ज्ञानमित्यत्रानुमाने ॥ २६ दु ग्व ॥ २७ सुखादु स्यात् ॥ २८ उपकार ॥ २९ अन्वयदृष्टान्ते ॥ ३० परेण ॥ ३१ ज्ञानत्वेन पीडानुग्रहयोर्व्याप्त्यसिद्धावपि ज्ञानाभावे पीडानुग्रहयोरभावो यदि ॥ ३२ उच्छ्वासादे ॥ ३३ अन्वयदृष्टान्ते ॥ ३४ घटादो ॥ ३५ सौगतस्य ॥ ३६ श्रेयान् ॥ ३७ तर्हि ॥ ३८ पीडा ॥ ३९ दूषणम् ॥ ४० दृष्टान्ते ॥ ४१ दार्ष्टान्तिके ॥ ४२ तृतीयो विकल्प ॥ ४३ ज्ञायमान ॥ ४४ सर्वथा ॥ ४५ परेण ॥ ४६ पुरुषस्य ॥ ४७ सौगत ॥ ४८ घटमहमात्मना वेद्मीति कर्त्रादौ ॥ ४९ नेद कर्त्रादिकमिति ॥ ५० एकचन्द्र ॥

तत्र तद्विपरीताद्वैतप्रसाधकप्रमाणस्य कस्यचिदसम्भवेनाऽबाधकत्वात् । प्रतिपादितश्च बाध्यबाधकभावो ब्रह्माद्वैतविचारे तदलमतिप्रसङ्गेन । अद्वैतप्रसाधकप्रमाणसद्भावे च द्वैतापत्तितो नाद्वैतं भवेत् । प्रमाणाभावे चाद्वैताप्रसिद्धिः प्रमेयप्रसिद्धेः प्रमाणसिद्धिनिबन्धनत्वात् । किञ्चाद्वैतमित्यत्र प्रसज्यप्रतिषेधः पर्युदासो वा? प्रसज्यपक्षे नाद्वैतसिद्धिः । प्रतिषेधमात्रपर्यवसितत्वात्तस्य । प्रधानोपसर्जनभावेनाङ्गाङ्गिभावकल्पनायामपि द्वैतप्रसङ्गः । पर्युदासपक्षेपि द्वैतप्रसक्तिरेव प्रमाणप्रतिपन्नस्य द्वैतलक्षणवस्तुनः प्रतिषेधेनाऽद्वैतप्रसिद्धेरभ्युपगमात् । द्वैतादद्वैतस्य व्यतिरेके च द्वैतानुषङ्ग एव । अव्यतिरेकेपि द्वैतप्रसक्तिरेव भिन्नादभिन्नस्याभेदे विरोधात् ॥ छ ॥

एतेन चित्रप्रतिभासाप्येकैव बुद्धिर्बाह्यचित्रविलक्षणत्वात् । शक्यविवेचनं हि बाह्यं चित्रमशक्यविवेचनास्तु बुद्धेर्नीलादय आकारा इत्यादिना चित्राद्वैतमप्युपवर्णयन्नपाकृतोऽशक्यविवेचनत्वस्यासिद्धेः । तद्धि बुद्धेरभिन्नत्वं वा, सहोत्पन्नानां नीलादीनां बुद्ध्यन्तरपरिहारेण विवक्षितबुद्ध्यैवानुभवो वा, भेदेन विवेचनाभावमात्रं वा? प्रकारान्तरासम्भवात् । तत्राद्यपक्षे साध्यसमो हेतुः । तथाहि । यदुक्तं भवति बुद्धेरभिन्ना नीलादयस्ततोऽभिन्नत्वात्तदेवोक्तं भवत्यशक्यविवेचनत्वादिति । द्वितीयपक्षेप्यनैकान्तिको हेतुः । सचराचरस्य जगतः सुगतज्ञानेन सहोत्पन्नस्य बुद्ध्यन्तरपरिहारेण तज्ज्ञानस्यैव ग्राह्यस्य तेन सहैकत्वाभावात् । एकत्वे वा संसारी सुगतः संसारिणो वा सर्वे सुगता भवेयुः संसारेतररूपता चैकस्य ब्रह्मवादं समर्थयते । अथ सुगतसत्ताकालेऽन्यस्योत्पत्तिरेव नेष्यते । तत्कथमयं दोषः? नन्वेवं प्रमाणभूतायेत्यादिना केनासौ स्तूयते? कथं चापराधीनोऽसौ येनोच्यते । तिष्ठन्त्येव पराधीना येषां च महती कृपेत्यादि । न खलु वन्ध्यासुताधीनः कश्चिद्भवितुमर्हति । मार्गोपदेशोपि व्यर्थो विनेयाऽसत्त्वात् । नापि ततः कश्चित्सौगतीं गतिं गन्तुमर्हति । सुगतसत्ताकालेऽन्यस्यानुत्पत्तेस्तत्कालश्चार्थान्तिकं इति । बुद्ध्यन्तरपरिहारेण विवक्षितबुद्ध्यैवानुभवश्चासिद्धो नीलादीनां बुद्ध्यन्तरेणाप्यनुभवात् । ज्ञानरूपत्वात्तत्सिद्धौ चान्योन्याश्रयः । सिद्धे हि ज्ञानरूपत्वे नीलादीनां बुद्ध्यन्तरप-

---

१ एकत्व ॥ २ कर्मादि ॥ ३ जैनेन मया ॥ ४ बाध्यबाधकभावसमर्थनेन ॥ ५ किंच ॥ ६ प्रमाणमेकमद्वैतमेकं चेति द्वैतापत्ति ॥ ७ प्रसक्तस्य प्रतिषेध प्रसज्य ॥ ८ सदृशग्राही पर्युदास ॥ ९ द्वैतनिषेधस्य प्रधानभावेन । अद्वैतविधेरप्रधानत्वेन ॥ १० गौण ॥ ११ कृत्वा ॥ १२ विशेषण ॥ १३ विशेष्य ॥ १४ इदं विशेष्यमिदं च विशेषणमित्यनेन प्रकारेण द्वैतप्रसङ्ग ॥ १५ भिन्नत्वे ॥ १६ किम ॥ १७ द्वैतात् ॥ १८ अद्वैतस्य । अव्यतिरिक्तस्य ॥ १९ एकत्वे ॥ २० ज्ञानाद्वैतनिराकरणपरेण ग्रन्थेन ॥ २१ नानाप्रकार ॥ २२ पूर्ववादे ज्ञानगताना नीलाद्याकाराणा भ्रान्तत्वम् । अत्र (चित्राद्वैतवादे) ज्ञानगताकाराणा सत्यत्वम् ॥ २३ विसदृश ॥ २४ असिद्धो हेतुरित्युक्ते सत्याह ॥ २५ घटपटस्तम्भादि ॥ २६ इमे बुद्धिरमी नीलादय आकारा इति विभागं कर्तुं न शक्यते ॥ २७ योगाचार ॥ २८ नीलादीनाम् ॥ २९ बुद्ध्या सह प्रादुर्भूतानाम् ॥ ३० स्वरूपम् ॥ ३१ साध्येन सम हेतु दर्शयति ॥ ३२ साध्यमेवोक्त भवति ॥ ३३ साध्यमेवोक्त भवति ॥ ३४ नान्यज्ञानस्य ॥ ३५ जगदभिन्नत्वात् ॥ ३६ सुगताभिन्नत्वात्सुगतसंसारिणः ॥ ३७ असंसार ॥ ३८ सुगतस्य ॥ ३९ परेण मया ॥ ४० पुरुषेण ॥ ४१ भवता ॥ ४२ सुगता ॥ ४३ (निर्वाणेपि परप्राप्ते कृपादो कृतचेतस उत्सवोत्तरमर्द ज्ञेयम्) ॥ ४४ ना ॥ ४५ अन्योत्पत्तिरहित ॥ ४६ ससारिणामेवोत्पत्तिरहित ॥

रिहारेण विवक्षितबुद्ध्यैवानुभवः सिद्ध्येत्तत्सिद्धौ च ज्ञानरूपत्वमिति । भेदेन विवेचनाभावमात्रमप्यसिद्धं बहिरन्तर्देशसम्बन्धित्वेन नीलतज्ज्ञानयोर्विवेचनप्रसिद्धेः ।
एकस्याक्रमेण नीलाद्यनेकाकारव्यापित्ववत्क्रमेणाप्यनेकसुखाद्याकारव्यापित्वसिद्धेः सिद्धः कथञ्चिदक्षणिको नीलाद्यनेकार्थव्यवस्थापकः प्रमातेप्यद्वैताय दत्तो
जलाञ्जलिः ॥ छ ॥

ननु चाक्रमेणाप्येकस्यानेकाकारव्यापित्वं नेष्यते ॥ किं स्यात्सा चित्रतैकस्यां न स्यात्तस्यां मतावपि । यदीदं स्वयमर्थेभ्यो रोचते तत्र के वयमित्यभिधानात् ।
तत्कथं तद्दृष्टान्तावष्टम्भेन क्रमेणाप्येकस्यानेकाकारव्यापित्वं साध्येत । तदप्यसमीचीनमेवमतिसूक्ष्मेक्षिकया विचारयतो माध्यमिकस्य सकलशून्यतानुषङ्गात् । तथा
हि । नीले प्रवृत्तं ज्ञानं पीतादौ न प्रवर्त्तते इति पीतादेः सन्तानान्तरवदभावः । पीतादौ च प्रवृत्तं तन्नीले न प्रवर्त्तते इत्यस्याप्यभावस्तद्वत् । नीलकुवलयसूक्ष्मांशे
च प्रवृत्तिमद् ज्ञानं नेतरांशनिरीक्षणे क्षममिति तदंशानामप्यभावः । संविदितांशस्य चावशिष्टस्य स्वयमनंशस्याप्रतिभासनात्सर्वाभावः । नीलकुवलयादिसंवेदनस्य
स्वयमनुभवात्सत्त्वे चान्यैरनुभवात्सन्तानान्तराणामपि तदस्तु । अथान्यैरनुभूयमानसंवेदनस्य सद्भावासिद्धेस्तेषामभावस्तर्हि तन्निषेधासिद्धेस्तेषां सद्भावः किन्न स्यात् ।
अथ तत्संवेदनस्य सद्भावासिद्धिरेवाभावसिद्धिः । नन्वेवं तन्निषेधासिद्धिरेव तत्सद्भावसिद्धिरस्तु । भावाभावाभ्यां परसंवेदनसन्देहे चैकान्ततः सन्तानान्तरप्रतिषे-
धासिद्धेः । कथं च ग्रामारामादिप्रतिभासे प्रतीतिभूधरशिखरारूढे सकलशून्यताभ्युपगमः प्रेक्षावतां युक्तः प्रतीतिबाधनात् । दृष्टहानेरदृष्टकल्पनायाश्चानुषङ्गात् ।
किञ्चाखिलशून्यतायाः प्रमाणतः प्रसिद्धिः प्रमाणमन्तरेण वा? प्रथमपक्षे कथं सकलशून्यता वास्तवस्य तत्सद्भावावेदकप्रमाणस्य सद्भावात्? द्वितीयपक्षेतु कथं तस्याः
सिद्धिः प्रमेयसिद्धेः प्रमाणसिद्धिनिबन्धनत्वात्? तदेवं सुनिश्चितासम्भवद्बाधकप्रमाणत्वात् प्रतीतिसिद्धमर्थव्यवसायात्मकत्वं ज्ञानस्याभ्युपगन्तव्यमन्यथाऽप्रामाणि-
कत्वप्रसङ्गः स्यात् ॥ छ ॥

---

१ किञ्च ॥ २ एकस्य बोधस्य ॥ ३ चित्राद्वैतवादिन ॥ ४ युगपत् ॥ ५ ग्राहक ॥ ६ पुरुष ॥ ७ जैनं प्रति माध्यमिको ब्रूते ॥ ८ भावस्य ॥ ९ परेण मया माध्यमिकेन ॥ १० मम दूषणं किं स्यात् ॥ ११ चित्रत्वेना-
भिप्रेताया मतौ एकस्या सा चित्रता न स्यात्तदा किं स्यान्मम दूषणम् ॥ १२ प्रसिद्धा ॥ १३ चित्रत्वेनाभिप्रेताया ॥ १४ बुद्धौ ॥ १५ चित्रत्वम् ॥ १६ ज्ञानेभ्य ॥ १७ बोधस्य ॥ १८ भवता जैनेन ॥ १९ चित्रैकज्ञानस्य
नानात्वसमर्थनप्रकारेण ॥ २० ज्ञानेन ॥ २१ उद्धृतस्य ॥ २२ नीलकुवलयस्य ॥ २३ चित्र ॥ २४ स्वेनैव ॥ २५ नीलकुवलयस्य ॥ २६ सन्तानान्तरे ॥ २७ स्वयम् ॥ २८ भो माध्यमिक ॥ २९ सन्तानान्तरै ॥ ३० स्वयम् ॥
३१ नीलकुवलयसंवेदनवादिनं प्रति ॥ ३२ साधकप्रमाणाभावात् ॥ ३३ बाधकप्रमाणाभावात् ॥ ३४ भो माध्यमिक ॥ ३५ अन्यैरनुभूयमानसंवेदनस्य ॥ ३६ माध्यमिको ब्रूते । अन्यसंवेदनसद्भावे साधकं प्रमाणं नोपन्यस्तं
भवद्भिः ॥ अस्माभिश्च बाधकं प्रमाणं नोपन्यस्तमिति परसंवेदनसन्देहः (इत्युक्ते जैन आह) ॥ ३७ ग्रामादि ॥ ३८ सकलशून्यत्वस्य ॥ ३९ पूर्वोक्तप्रकारेण ज्ञानस्यार्थव्यवसायात्मकत्वे समर्थिते सति ॥

अथेदानीं प्राक् प्रतिज्ञातं स्वव्यवसायात्मकत्वं ज्ञानविशेषणं व्याचिख्यासुः स्वोन्मुखतयेत्याद्याह ॥ स्वस्य विज्ञानस्वरूपस्योन्मुखतोल्लेखिता तया इतीत्थंभावे भा। प्रतिभासनं संवेदनमनुभवनं स्वस्य प्रमाणत्वेनाभिप्रेतविज्ञानस्वरूपस्य सम्बन्धी व्यवसायः । स्वव्यवसायसमर्थनार्थमर्थव्यवसायं स्वपरप्रसिद्धमर्थस्येत्यादिना दृष्टान्तीकरोति । इवशब्दो यथार्थे । यथार्थस्य घटादेस्तदुन्मुखतया स्वोल्लेखितया प्रतिभासनं व्यवसायः तथा ज्ञानस्यापीति ॥

स्यान्मतम्—न ज्ञानं स्वव्यवसायात्मकमचेतनत्वाद् घटादिवत् । तदचेतनं प्रधानविवर्त्तत्वात्तद्वत् । यत्तु चेतनं तन्न प्रधानविवर्तो यथात्मा इत्यप्यसङ्गतम्—तस्यात्मविवर्त्तत्वेन प्रधानविवर्त्तत्वासिद्धेः । तथा हि । ज्ञानविवर्त्तवानात्मा द्रष्टृत्वात् । यस्तु न तथा स न द्रष्टा यथा घटादि । द्रष्टा चात्मा तस्मात्तद्विवर्त्तवानिति । प्रधानस्य ज्ञानवत्त्वे तु तस्यैव द्रष्टृत्वानुषङ्गादात्मकल्पनानर्थक्यम् । चेतनोऽहमित्यनुभवाच्चैतन्यस्वभावतावच्चात्मनो ज्ञाताहमित्यनुभवाद् ज्ञानस्वभावताप्यस्तु विशेषाभावात् । ज्ञानसंसर्गाज्ज्ञाताहमित्यात्मनि प्रतिभासो न पुनर्ज्ञानस्वभावत्वादित्यप्यसमीक्षिताभिधानम् । चैतन्यादिस्वभावस्याप्यभावप्रसङ्गात् । चैतन्यसंसर्गाद्धि चेतनो भोक्तृत्वसंसर्गाद्भोक्तौदासीन्यसंसर्गादुदासीनः शुद्धिसंसर्गाच्छुद्धो न तु स्वभावतः । प्रत्यक्षादिप्रमाणबाधोभयत्र । न खलु ज्ञानस्वभावताविकलोऽयं कदाचनाप्यनुभूयते । तद्विकलस्यानुभवविरोधात् । आत्मनो ज्ञानस्वभावत्वेऽनित्यत्वापत्तिः प्रधानेपि समाना । तत्परिणामस्य व्यक्तस्यानित्यत्वोपगमात् । अदोषेत्वात्मपरिणामस्यापि ज्ञानविशेषादेरनित्यत्वे को दोषः । तस्यात्मनः कथञ्चिदव्यतिरेके भङ्गुरत्वप्रसङ्गः प्रधानेपि समानः । व्यक्ताव्यक्तयोरव्यतिरेकेपि व्यक्तमेवानित्यं परिणामत्वान्न पुनरव्यक्तं परिणामित्वादित्यभ्युपगमेत एव ज्ञानात्मनोरव्यतिरेकेपि ज्ञानमेवानित्यमस्तु विशेषाभावात् । आत्मनोऽपरिणामित्वे तु प्रधानेपि तदस्तु । व्यक्त्यपेक्षया परिणामि प्रधान न शक्त्यपेक्षया सर्वदा स्थास्नुत्वादित्यभिधाने त्वात्मापि तथास्तु सर्वथा विशेषाभावादपरिणामिनोऽर्थक्रियाकारित्वासम्भवेनाग्रेऽसत्त्वप्रतिपादनाच्च । स्वसंवेदनप्रत्यक्षाविषयत्वे चास्याः प्रतिनियतार्थव्यवस्थापकत्वं न स्यात् । तद्व्यवस्थापकत्वं हि तदनुभवनम् । तत्कथं बुद्धेरप्रत्यक्षत्वे घटेत । आत्मान्तरबुद्धितोपि तत्प्रसङ्गात् । न चैवं ततो बुद्धिः स्वव्यवसायात्मिका कारणान्तरनिरपेक्षतयार्थव्यवस्थापकत्वात् । यत्पुनः स्वव्यवसायात्मकं न भवति न तत्त्वे-

---

१ व्याख्यातुमिच्छु ॥ २ ग्राह कृता ॥ ३ तृतीया ॥ ४ वादिप्रतिवादिप्रसिद्धम् ॥ ५ अर्थ ॥ ६ तव साङ्ख्यस्य ॥ ७ ज्ञानम् ॥ ८ ज्ञानस्य ॥ ९ पर्यायत्वेन ॥ १० जैनानुमानम् ॥ ११ चेतयितृत्वात् ॥ १२ ज्ञान ॥ १३ आशङ्कायाम् ॥ १४ चैतन्यस्वभावताया अनुभव । ज्ञानस्वभावताया अनुभवः इत्यविशेष ॥ १५ कथ तथा हि ॥ १६ नैर्मल्य ॥ १७ आत्मनश्चैतन्यादिस्वभावाभावे ज्ञानस्वभावाभावे च ॥ १८ आत्मा ॥ १९ आत्मा आत्मना ॥ २० ज्ञानमनित्यमिति वचनात् ज्ञानस्वरूपवत् ॥ २१ महदादे ॥ २२ ज्ञानादे ॥ २३ प्रधानस्यानित्यत्वापत्तिलक्षणोऽदोष ॥ २४ का ॥ २५ अभेदे २६ आत्मन ॥ २७ विनश्वरत्व ॥ २८ महदादे ॥ २९ प्रधानस्य ३० महदादि, द्वितीयपक्षे गुणादि ॥ ३१ सूक्ष्मस्वभावा द्वितीयपक्षे साम्यावस्था शक्ति ॥ ३२ परेण ॥ ३३ व्यक्त्यपेक्षया परिणाम्यस्तु ॥ ३४ व्यक्त्यपेक्षया परिणाम्यस्तु ॥ ३५ किंच ॥ ३६ बुद्धे ॥ ३७ अन्यथा ॥ ३८ पुरुषान्तर ॥ ३९ स्वस्य ॥ ४० व्यक्तिलक्षणाया बुद्धे बुद्धिलक्षणात्कारणादपर कारणान्तरमिन्द्रियम् ॥ ४१ कारणनिरपेक्षतया ॥

थाऽर्थव्यवस्थापकं यथाऽऽदर्शादीति । अर्थव्यवस्थितौ तस्याः पुरुषभोगापेक्षत्वात्[1] । बुद्ध्यध्यवसितमर्थं[2] पुरुषश्चेतयते[3] इत्यभिधानात् । ततोऽसिद्धो[4] हेतुरित्यपि[5] श्रद्धा-
मात्रं[6] भेदेनानयोरनुपलम्भात्[7] । एकमेव ह्यनुभवसिद्धं[8] संविद्रूपं हर्षविषादाद्यनेकाकारं विषयव्यवस्थापकमनुभूयते तस्यैवैते चैतन्यं बुद्धिरध्यवसायो ज्ञानमिति
पर्यायाः । न च शब्दभेदमात्राद्वास्तवोऽर्थभेदोऽतिप्रसङ्गात्[9][10] । संसर्गविशेषवशाद्विप्रलब्धो[11][12] बुद्धिचैतन्ययोः[13] सन्तमपि[14] भेदं नावधारयत्ययोगोलकादिवाग्नेः[15] । न चात्रापि
भेदो नास्तीत्यभिधातव्यमुभयत्र[16][17][18] रूपस्पर्शयोर्भेदप्रतीतेः । अयोगोलकस्य हि वृत्तसन्निवेशः[19] कठिनस्पर्शश्चान्योऽग्निर्भासुररूपोष्णस्पर्शाभ्यां प्रमाणतः[20] प्रतीयते । ततो
यथात्राऽन्योऽन्यानुप्रवेशलक्षणसंसर्गाद्विभागप्रतिपत्त्यभावस्तथा[21][22] प्रकृतेपीत्यप्यसाम्प्रतम्[23] । वह्न्ययोगोलकयोरप्यभेदात् । अयोगोलकद्रव्यं हि पूर्वाकारपरित्यागेना-[24]
ग्निसन्निधानाद्विशिष्टरूपस्पर्शपर्यायाधारमेकमेवोत्पन्नमनुभूयते । आमाकारपरित्यागेन पाकाकाराधारघटद्रव्यवत् । कथं तर्हि तस्योत्तरकालं[25] तत्पर्यायाधारतया विना-
शप्रतीतिरित्यप्यचोद्यम् । उत्पत्त्यनन्तरमेव तद्विनाशाप्रतीतेः । किञ्चिद्ध्यौपाधिकं वस्तुरूपमुपाध्यपायानन्तरमेवापैति[26][27][28] । यथा जपापुष्पसन्निधानोपनीतस्फटिकरक्तिमा ।
किञ्चित्तु[29] कालान्तरे[30] मनोज्ञाङ्गनादिविषयोपनीतात्मसुखादिवत्[31] । सकलभावानां[32] स्वतोऽन्यतश्च[33][34] निवर्त्तनप्रतीतेः । तन्नाग्न्ययोगोलयोर्भेदः । तद्वदिहाप्येकस्मिन्[35][36] स्वपर-
प्रकाशात्मपर्यायेऽनुभूयमाने[37] नान्यसद्भावोऽभ्युपगन्तव्योऽन्यथा[38][39] न क्वचिदेकत्वव्यवस्था[40] स्यात् । सकलव्यवहारोच्छेदप्रसङ्गश्चानिष्टार्थपरिहारेणेष्टे[41][42][43] वस्तुन्येकस्मिन्ननु-
भूयमानेऽप्यन्यसद्भावाशङ्कया[44] क्वचित्प्रवृत्त्याद्यभावात्[45][46] । ततोऽबाधितैकत्वप्रतिभासादपरपरिहारेणावभासमाने वस्तुन्येकत्वव्यवस्थामिच्छताऽनुभवसिद्धकर्तृत्वभोक्तृ-[47]
त्वाद्यनेकधर्माधारचिद्विवर्त्तस्याप्येकत्वमभ्युपगन्तव्यं[48][49] तदविशेषात् । न चात्रैकत्वप्रतिभासे किञ्चिद्बाधकं[50] यतो द्विचन्द्रादिप्रतिभासवन्मिथ्यात्वं स्यात् । स्वसंवेदन-
प्रसिद्धस्वपरप्रकाशरूपचिद्विवर्त्तव्यतिरेकेणान्यचैतन्यस्य कदाचनाप्यप्रतीतेः । न चोपदेशमात्रात्प्रेक्षावतां[51] निर्बाधबोधादिरूढोऽर्थोऽन्यथाप्रतिभासमानोऽन्यथापि[52][53][54][55][56][57]

१ अनुभव स एव कारणम् ॥ २ बुद्धिप्रतिविम्बितम् ॥ ३ अनुभवति ॥ ४ कारणान्तरसापेक्षतया ॥ ५ बुद्धे ॥ ६ भो साङ्ख्य ॥ ७ बुद्धिपुरुषयो ॥ ८ बुद्ध्यनुभवयो ॥ ९ अन्यथा ॥ १० इन्द्र शक्र इत्यादौ स स्यात् ॥ ११ सम्बन्ध ॥ १२ वञ्चितो नर ॥ १३ चेतन्य पुरुषस्य रूपम् ॥ १४ विद्यमानम् ॥ १५ निश्चिनोति ॥ १६ अयोगोलकाग्न्यो ॥ १७ जैनेन भवता ॥ १८ अयोगोलकाग्न्यो ॥ १९ वर्तुलाकार ॥ २० प्रत्यक्षात् ॥ २१ अयोगोलकाग्न्यो ॥ २२ भेद ॥ २३ बुद्धिचैतन्ये ॥ २४ कृष्णत्वादिलक्षण ॥ २५ अयोगोलकस्य ॥ २६ कारण ॥ २७ विनाश ॥ २८ अपगच्छति ॥ २९ उपाध्यपाये सति ॥ ३० अपैति ॥ ३१ स्रक्चन्दनादि ॥ ३२ पदार्थ ॥ ३३ परिणमन ॥ ३४ चूतफलादिवत् ॥ ३५ अयोगोलकवत् ॥ ३६ बुद्धिचैतन्ये ॥ ३७ स्वयम् ॥ ३८ चेतन्य ॥ ३९ परेण ॥ ४० विषये ॥ ४१ कथम् ॥ ४२ अहिकण्टकादि ॥ ४३ वनितादौ ॥ ४४ अहिकण्टकादि ॥ ४५ विषये ॥ ४६ निवृत्ति ॥ ४७ परेण ॥ ४८ आत्मन ॥ ४९ बोधस्य ॥ ५० प्रमाण ॥ ५१ आगमात् ॥ ५२ बुद्धिलक्षण ॥ ५३ एकत्वेन ॥ ५४ स्वसंवेदनप्रत्यक्ष ॥ ५५ बुद्धिलक्षण ॥ ५६ एकत्वेन प्रतिभासमान ॥ ५७ बुद्धिचेतन्यमिति द्वयरूपतया ॥

कल्पयितुं युक्तोऽतिप्रसङ्गात्। चैतन्यस्य च स्वपरप्रकाशात्मकत्वे किं बुद्धिसाध्यं येनासौ कल्प्यते। बुद्धेश्चाचेतनत्वे विषयव्यवस्थापकत्वं न स्यात्। आकारवत्त्वा-त्तत्त्वमित्यप्ययुक्तमचेतनस्याकारत्वेप्यर्थव्यवस्थापकत्वासम्भवात्। अन्यथाऽऽदर्शादेरपि तत्प्रसङ्गाद्बुद्धिरूपतानुषङ्गः। अन्तःकरणत्वपुरुषोपभोगप्रत्यासन्नहेतुत्वलक्ष-णविशेषोपि मनोऽक्षादिनानैकान्तिकत्वान्न बुद्धेर्लक्षणम्। यदि चायमेकान्तोऽन्तःकरणमन्तरेणार्थमात्मा न प्रत्येतीति, कथं तर्हि अन्तःकरणप्रत्यक्षता? अन्यान्तः-करणविम्बादेवेति चेदनवस्थाऽन्यान्तःकरणविम्बमन्तरेणान्तःकरणप्रत्यक्षतायां चार्थप्रत्यक्षतापि तथैवास्त्वलं तत्परिकल्पनया। अन्तःकरणप्रत्यक्षताभावे च कथं तद्गतार्थविम्बग्रहणम्? न ह्यादर्शाग्रहणे तद्गतार्थप्रतिविम्बग्रहणं दृष्टम्। विषयाकारधारित्वं च बुद्धेरनुपपन्नं मूर्त्तस्यामूर्त्ते प्रतिविम्बासम्भवात्। तथा हि। न विषयाकारधारिणी बुद्धिरमूर्त्तत्वादाकाशवत्। यत्तु विषयाकारधारि तन्मूर्त्तं यथा दर्पणादि। न चासिद्धो हेतुस्तस्याः सकलवादिभिरमूर्त्तत्वाभ्युपगमात्। अन्यथा वाह्येन्द्रियप्रत्यक्षत्वप्रसङ्गो दर्पणादिवदेव। अतिसूक्ष्मत्वात्तदप्रत्यक्षत्वे तद्गतार्थप्रतिविम्बप्रत्यक्षतापि न स्यात्। मूर्तस्य चेन्द्रियादिद्वारेणैव संवेदनसम्भवात्। तद-भावेऽसंविदितत्वप्रसङ्गश्च। सर्वथा परोक्षत्वाभ्युपगमे चास्या मीमांसकमतानुषङ्गः॥ छ॥

एतेन बौद्धोप्यर्थाकारवत्त्वेन ज्ञाने प्रामाण्यं प्रतिपादयन्प्रत्याख्यातः। प्रत्यक्षविरोधाच्च। प्रत्यक्षेण विषयाकाररहितमेव ज्ञानं प्रतिपुरुषमहमहमिकया घटादिग्राहक-मनुभूयते? न पुनर्दर्पणादिवत्प्रतिविम्बाक्रान्तम्। विषयाकारधारित्वे च ज्ञानस्यार्थे दूरनिकटादिव्यवहाराभावप्रसङ्गः। न खलु स्वरूपे स्वतोऽभिन्नेऽनुभूयमाने सोस्ति न चैवं, दूरे पर्वतो निकटे मदीयो वाहुरिति व्यवहारस्याऽस्खलद्रूपस्य प्रतीतेः। ततस्तदन्यथानुपपत्तेर्निराकारं तत्। न चाकाराधायकस्य दूरादितया तथा व्यव-हारो युक्तो दर्पणादौ तथानुपलम्भात्। दीर्घस्वापर्यन्ते प्रबोधचेतसो जनकस्य जाग्रद्दशाचेतसो दूरत्वेनातीतत्वेन चात्रापि दूरातीतादिव्यवहारानुषङ्गः स्यात्। किञ्चार्थादुपजायमानं ज्ञानं यथा तस्य नीलतामनुकरोति तथा यदि जडतामपि तर्हि जडमेव तत्स्यादुत्तरार्थक्षणवत्। अथ जडता नानुकरोति कथं तस्या ग्रहणम्?

१ अन्यथा॥ २ केन कारणेन॥ ३ किंच॥ ४ अर्थाकारवत्त्वात्॥ ५ जलादे॥ ६ मध्ये॥ ७ अनुभव॥ ८ कारण बुद्धिरूपम्॥ ९ व्यस्तलक्षण॥ १० अदृष्ट॥ ११ अतिव्याप्ते॥ १२ अन्त करणत्व बुद्धेर्लक्षणमित्युक्ते मनसा व्यभिचार। कथ मनोप्यन्त करण भवति न च तस्य बुद्धिरूपता। पुरुषोपभोगप्रत्यासन्नहेतुत्व बुद्धेर्लक्षणमित्युक्ते चाक्षादिना व्यभिचारस्तथा हि। पुरुषोपभोगप्रत्यासन्नहेतुरिन्द्रिय भवति न च तस्य बुद्धिरूपता॥ १३ किंच॥ १४ बुद्धिम॥ १५ बुद्धि॥ १६ आकार॥ १७ बुद्धि॥ १८ बुद्धि॥ १९ अन्त करणगतार्थ॥ २० हेतो॥ २१ पदार्थस्य॥ २२ किंच॥ २३ आलोकादि॥ २४ किंच॥ २५ बुद्धेर्विषयाकारधारित्वनिराकरणपरेण ग्रन्थेन॥ २६ योगाचार॥ २७ सोत्रान्तिक॥ २८ पदार्थस्य २९ किंच॥ ३० सौत्रान्तिक॥ ३१ स्वसंवेदनेन॥ ३२ अ ।॥ ३३ पदार्थ॥ ३४ स्वय ज्ञानेन॥ ३५ किंच॥ ३६ दूरनिकटादिव्यवहार॥ ३७ अस्त्वेवमिति चेत्॥ ३८ अव्यभिचरत्॥ ३९ प्रतिभासनात्॥ ४० साकारत्वे दूरनिकटादिव्यवहारो न घटते यत॥ ४१ समर्पकस्य पदार्थस्य॥ ४२ पुरुषस्य॥ ४३ किंच॥ ४४ ज्ञानस्य॥ ४५ पुरुषस्य॥ ४६ परिच्छित्ति॥

तदग्रहणे नीलाकारस्याप्यग्रहणमन्यथा तयोर्भेदो[२]ऽनेकान्तो[३] वा। नीलाकारग्रहणेपि चा[४]गृहीता जडता कथं तस्येत्युच्येत? अ[५]न्यथा गृहीतस्य स्तम्भस्यागृहीतं त्रैलोक्यं[६]रूपं भवेत्। तथा चैकोपलम्भो[७] नैकत्व[८]साधनम्। अथ नीलाकारवज्जडतापि प्रतीयते। किन्त्वतदाकारे[१०]ण ज्ञानेन[११]। न तर्हि नीलताप्यतदाकारे[१२]णैवानेन प्रतीयताम्। तथा हि। यद्येन[१३] स्वात्मनो[१४]ऽर्थान्तरभूतं प्रतीयते तत्तेनातदाकारेण। यथा स्तम्भादेर्जाड्यम्। प्रतीयते च स्वात्मनोऽर्थान्तरभूतं नीलादिकमिति। किञ्च नीलाकारमेव ज्ञानं जडतां प्रतिपद्यते ज्ञानान्तरं[१५] वा? आद्यविकल्पे नीलाकारतां स्वात्मभूततया[१६] जडतां त्वन्यथा[१७] तज्जानातीत्यर्द्धजरतीयन्यायानुसरणं ज्ञानस्य। अथ ज्ञानान्तरेण सा प्रतीयते तदप्यतदाकारं यथा जडतां प्रतिपद्यते तथाद्य[१९]नीलतामिति व्यर्थं तदाकारकल्पनम्। किञ्च ज्ञानान्तरेण जडतैव केवला[२०] प्रतीयते तद्वन्नी[२१]लतापि वा? न तावदुत्तरपक्षोऽर्द्धजरतीयन्यायानुसरणप्रसङ्गात्। प्रथमपक्षे तु नीलताया जडतेयमिति कुतः प्रतीतिः? नाद्यज्ञानात्[२२], तेन नीलाकारमात्रस्यैव प्रतीतेः[२३]। नापि द्वितीयात्तस्य[२४] जडतामात्रविषयत्वात्[२५]। अथोभयविषयं[२६] ज्ञानान्तरं[२७] परिकल्प्यते[२८]। तच्चेदुभयत्र[२९] साकारं स्वयं[३०][३१] जडतां[३२]। निराकारं चेत्परमतप्रसङ्गः[३३]। क्वचित्साका[३४]रतायामुक्तदोषो[३५]ऽनवस्था। ननु निराकारत्वे ज्ञानस्याखिलं निखिलार्थवेदकं तत्स्यात्। केचित्प्रत्या[३६]सत्तिविप्रकर्षाभावादित्यप्यपेशलम्। प्रतिनियतसामर्थ्येन तत्तथा[३९][४०]भूतमपि प्रतिनियतार्थव्यवस्थापकमित्यग्रे वक्ष्यते। नीलाकारवज्जडाकारस्यापि[४१]ष्टेन्द्रियाद्याकारस्य[४२] चानुकरणप्रसङ्गः[४३]। कारणत्वाविशेषात्प्रत्यासत्तिविप्रकर्षाभावाच्चेति चौद्ये[४७] भवतोपि[४८] योग्यतैव शरणम्। यच्चोच्यते[४९]। यथैवाहारकालादेः[५०] समानेऽपत्यं जननीपित्रोस्तदेकमाकारं धत्ते नान्यस्य कस्यचित्। तथा चक्षुरादेः कारणत्वाविशेषेपि नीलस्यैवाकारमनुकरोति ज्ञानं नान्यस्येति तन्निराकारज्ञानेपि[५३] समानम्। तत्कार्यत्वाविशेषेपि हि यया प्रत्यासत्त्या[५५] ज्ञानं[५६] नीलमेवानुकरोति[५७] तयैव सर्वत्रानाका-

---

१ जडस्याग्रहणेपि नीलस्य ग्रहण चेत् ॥ २ नीलजडयो ॥ ३ गृह्यमाणाऽगृह्यमाणधर्मावेकस्यार्थस्येति च ॥ ४ किञ्च ॥ ५ अगृहीतापि नीलस्य धर्मश्चेत् ॥ ६ यत ॥ ७ ज्ञानम् ॥ ८ किन्त्वनेकत्वसाधनम् ॥ ९ विशेषे ॥ १० अजडाकारेण ॥ ११ निराकारेण ॥ १२ अनीलाकारेण ॥ १३ नीलादिकं धर्मी अतदाकारेण ज्ञानेन प्रतीयते इति साध्यो धर्मः । तेन स्वात्मनोऽर्थान्तरभूततया प्रतीयमानत्वात् ॥ १४ ज्ञानरूपात् ॥ १५ कर्तृ ॥ १६ नीलाकारतया ॥ १७ अजडाकारतया ॥ १८ अस्वात्मभूततया चेत् ॥ १९ आद्यज्ञानम् ॥ २० नीलतारहिता ॥ २१ जडतया युक्ता नीलता ॥ २२ प्रथमज्ञानात् ॥ २३ न जडताया ॥ २४ ज्ञानान्तरात् ॥ २५ न नीलताया ॥ २६ जडता नीलता (च) विषयो यस्य ॥ २७ तृतीयम् ॥ २८ परेण ॥ २९ नीलताया जडताया च ॥ ३० स्यात् ॥ ३१ स्वस्य ॥ ३२ ज्ञानस्य ॥ ३३ जैन ॥ ३४ नीलतायाम् ॥ ३५ उक्तदोषपरिहारार्थं ज्ञानान्तरेण जडता प्रतीयते इति चेद्रन्यानवस्था ॥ ३६ अर्थे ॥ ३७ ताद्रूप्यतदुत्पत्तिलक्षणसम्बन्ध ॥ ३८ तदभाव॥ ३९ ज्ञानम् ॥ ४० निराकारम् ॥ ४१ पापादि ॥ ४२ मन ॥ ४३ किञ्च ॥ ४४ ज्ञानस्य ॥ ४५ नीलाकारेण प्रत्यासत्ति॥ ४६ इन्द्रियादिना विप्रकर्षस्य ॥ ४७ जैनैः ॥ ४८ बौद्धस्य ॥ ४९ सौत्रान्तिकेन ॥ ५० पित्रादे ॥ ५१ कारणे ॥ ५२ अपत्यम् ॥ ५३ यदुक्त त्वयासमाधानम् ॥ ५४ ज्ञानस्य ॥ ५५ स्वभावेन ॥ ५६ कर्तृ ॥ ५७ अर्थे ॥ ५८ पदार्थे ॥

रत्वाविशेषेऽपि किञ्चिदेव प्रतिपद्यते न सर्वमिति विभागः किं नेष्यते। अन्योन्याश्रयदोषश्चोभयत्र समानः । किञ्च प्रतिनियतघटादिवत्सकलं वस्तु निखिलज्ञानस्य कारणं स्वाकारार्पकं वा किन्न स्यात्? वस्तुसामर्थ्यात् किञ्चिदेव कस्यचित् कारणं न सर्वं सर्वस्येति चेत्तर्हि तत एव किञ्चित्कस्यचिद्ग्राह्यं ग्राहकं वा न सर्वं सर्वस्येत्यलं प्रतीत्यपलापेन। प्रमाणत्वाच्चास्य तदभावः । अर्थाकारानुकारित्वे हि तस्य प्रमेयरूपतापत्तेः प्रमाणरूपताव्याघातः । न चैवं, प्रमाणप्रमेययोर्बहिरन्तर्मुखाकारतया भेदेन प्रतिभासनात्। न चाध्यक्षेण ज्ञानमेवाऽर्थाकारमनुभूयते न पुनर्बाह्योऽर्थ इत्यभिधातव्यं ज्ञानरूपतया बोधस्यैवाध्यक्षे प्रतिभासनान्नार्थस्य। न ह्यनहङ्कारास्पदत्वेनार्थस्य प्रतिभासेऽहङ्कारास्पदबोधरूपवत् ज्ञानरूपतायुक्ता अहङ्कारास्पदत्वेनार्थस्यापि प्रतिभासोपगमे त्वहं घट इति प्रतीतिप्रसङ्गः । न चान्यथाभूता प्रतीतिरन्यथाभूतमर्थं व्यवस्थापयति नीलप्रतीतेः पीतादिव्यवस्थाप्रसङ्गात्। बोधस्यार्थाकारतां मुक्त्वार्थेन घटयितुमशक्तेर्नीलस्यायं बोध इति निराकारबोधस्य केनचित्प्रत्यासत्तिविप्रकर्षासिद्धेः। सर्वार्थघटनप्रसङ्गात्सर्वैकवेदनापत्तेः प्रतिकर्मव्यवस्था ततो न स्यादित्यर्थाकारो बोधोऽभ्युपगन्तव्यः । तदुक्तम् "अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपताम्। तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपता" । इत्यनल्पतमोविलसितं यतो घटयति सम्बन्धयतीति विवक्षितं ज्ञानमर्थसम्बद्धमर्थरूपतानिश्चाययतीति वा? प्रथमपक्षोऽयुक्तो न ह्यर्थसम्बन्धो ज्ञानस्यार्थरूपतया क्रियते किन्तु स्वकारणैस्तज्ज्ञानमर्थसम्बद्धमेवोत्पाद्यते । न खलु ज्ञानमुत्पद्य पश्चादर्थेन सम्बध्यात्। न चार्थरूपता ज्ञानस्यार्थे सम्बन्धकारणं तादात्म्याभावानुषङ्गात्। द्वितीयपक्षोऽप्यसम्भाव्यः सम्बन्धासिद्धेः। न खलु ज्ञानगतार्थरूपतार्थसम्बद्धेन ज्ञानेन सहचरिता क्वचिदुपलब्धा येनार्थसम्बद्धं ज्ञानं सा निश्चाययेत्। विशिष्टविषयोत्पाद एव च ज्ञानस्यार्थेन सम्बन्धो न तु संश्लेषात्मकोऽस्य ज्ञानेऽसम्भवात् । स चेन्द्रियैरेव विधीयते इत्यर्थरूपतासाधनप्रयासो वृथैव। न चैवं सर्वत्रासौ प्रसज्यते । यतो निराकारत्वेऽप्यवबोधस्येन्द्रियवृत्त्या पुरोवर्तिन्येवार्थे नियमितत्वान्न सर्वार्थघटन-

---

१ वस्तु ॥ २ परेण ॥ ३ नियतार्थप्रतिपत्तौ नियतस्वभावसिद्धिस्तत्सिद्धौ च नियतार्थप्रतिपत्तिसिद्धिरिति नियतनीलाकारानुकरणे च सिद्धे नियतानुकरणयोग्यतासिद्धिर्ज्ञानस्य तत्सिद्धौ च नियतनीलाकारानुकरणसिद्धिरिति ॥ ४ नियतार्थग्रहणानुकरणयो ॥ ५ कस्यचित्प्रा[illegible]स्य ॥ ६ किञ्च ॥ ७ अर्थाकारानुकारित्वाभाव ॥ ८ अस्तूभय का नो हानिरिति चेत् ॥ ९ इन्द्रिय ॥ १० परेण ॥ ११ अर्थस्य बोधरूपतया ॥ १२ परेण ॥ १३ अन्यथा ॥ १४ पदार्थेन ॥ १५ तादूप्यतदुत्पत्तिलक्षणसम्बन्ध ॥ १६ तदभाव ॥ १७ ईप् (सप्तमी) ॥ १८ निराकारबोधस्य सम्बन्धात् ॥ १९ सम्बन्ध ॥ २० सर्वार्थानाम् ॥ २१ पटज्ञानस्य पटो विषयो घटज्ञानस्य घट इत्यादि ॥ २२ जैनेन भणता ॥ २३ अपरसांनिकर्षादिक कर्तृ ॥ २४ निर्विकल्पका बुद्धिम् ॥ २५ यस्मात् ॥ २६ प्रमाण न घटयतीति सम्बन्ध ॥ २७ बुद्धे ॥ २८ फलज्ञानस्य ॥ २९ सम्बन्धित्वेन ॥ ३० नैयायिकादिकल्पितम् ॥ ३१ ज्ञानस्यार्थरूपता ॥ ३२ अर्थरूपता ॥ ३३ मा ॥ ३४ कर्त्री ॥ ३५ मा ॥ ३६ इन्द्रियादिभि ॥ ३७ अर्थसम्बन्धज्ञानार्थरूपतयो ॥ ३८ किञ्च ॥ ३९ अन्यथा ॥ ४० अर्थरूपताज्ञानयो ॥ ४१ भा ॥ ४२ पूर्वस्मिन्विकल्पे इत्यादि द्रष्टव्यम् ॥ ४३ यस ॥ ४४ ईप् ॥ ४५ किञ्च ॥ ४६ ज्ञाने ॥ ४७ ज्ञाने ॥ ४८ अर्थरूपताभावे ॥ ४९ असन्निहितेष्वर्थे ॥ ५० ज्ञानोत्पादलक्षण सम्बन्ध ॥ ५१ व्यापारेण ॥

प्रसङ्गः । कस्मात्तैस्तत्र तन्नियम्यते इत्यत्र वस्तुस्वभावैरुत्तरं वाच्यम् । न हि कारणानि कार्योत्पत्तिप्रतिनियमे पर्यनुयोगमर्हन्ति । तत्र तस्य वैफल्यात् । साकारत्वेपि चायं पर्यनुयोगः समानः । साकारमपि हि ज्ञानं किमिति सन्निहितं नीलादिकमेव पुरोवर्त्ति व्यवस्थापयति न पुनः सर्वम् । तेनैव च तथा जननादित्युत्तरं निराकारत्वेपि समानम् । किञ्चेन्द्रियादिजन्यं विज्ञानं किमितीन्द्रियाद्याकारं नानुकुर्यादिति प्रश्ने भवताप्यत्र वस्तुस्वभाव एवोत्तरं वाच्यम् । साकारता च ज्ञाने साकारज्ञानेन प्रतीयते निराकारेण वा? साकारेण चेत्तत्रापि तत्प्रतिपत्तावाकारान्तरपरिकल्पनमित्यनवस्था । निराकारेण चेद्बाह्यार्थस्य तथाभूतज्ञानेन प्रतिपत्तौ को विद्वेषः । किञ्चास्य वादिनोऽर्थेन संवित्तेर्घटनाऽन्यथानुपपत्तेः सन्निकर्षः प्रमाणमधिगतिः फलं स्यात्, तस्यास्तमन्तरेण प्रतिनियतार्थसम्बन्धित्वासम्भवात् । साकारं संवेदनस्याखिलसमानार्थसाधारणत्वेनानियतार्थघटनप्रसङ्गान्निखिलसमानार्थानामेकवेदनापत्तिः, केनचित्प्रत्यासत्तिविप्रकर्षासिद्धेः । तदुत्पत्तेरिन्द्रियादिनाव्यभिचारान्नियामकत्वायोगः । तदुत्पत्तेस्ताद्रूप्याच्चार्थस्य बोधो नियामको नेन्द्रियादेर्विपर्ययादित्यप्यसाम्प्रतम् । तद्द्वयलक्षणस्यापि समानार्थसमनन्तरप्रत्ययेनानैकान्तिकत्वात् । कथं चार्थवदिन्द्रियाकारं नानुकुर्यादसौ तदुत्पत्तेरविशेषात् । तदविशेषेप्यस्य कारणान्तरपरिहारेणार्थाकारानुकारित्वं पुत्रस्येव पित्राकारानुकरणमित्यप्यसङ्गतं स्वोपादानमात्रानुकरणप्रसङ्गात् । विषयस्यालम्बनप्रत्ययतया स्वोपादानस्य च समनन्तरप्रत्ययतया प्रत्यासत्तिविशेषसद्भावादुभयाकारानुकरणेऽर्थवदुपादानस्यापि विषयतापत्तिरविशेषात् । तज्जन्मरूपाविशेषेप्यध्यवसायनियमात्प्रतिनियतार्थनियामकत्वेर्थवदुपादानेप्यध्यवसायप्रसङ्गोऽन्यथोभयत्राप्यसौ माभूद्विशेषाभावात् । न चैवं तज्जन्मादित्रयसद्भावेप्यर्थप्रतिनियमः कामलाद्युपहतचक्षुषः शुक्ले शङ्खे पीताकारज्ञानादुत्पन्नस्य तद्रूपस्य तदाकाराध्यवसायिनो विज्ञानस्य समनन्तरप्रत्यये प्रामाण्यप्रसङ्गात् । न चैवं वादिनो विज्ञानस्य स्वरूपे प्रमाणता घटते तत्र सारूप्याभावात् । किञ्च ज्ञानगतान्नीलाद्याकारात्क्षणिकत्वाद्याकारः किं भिन्नो-

---

१ कारणात् ॥ २ ज्ञानम् ॥ ३ पूर्वपक्षे ॥ ४ अस्माभिर्जैनै ॥ ५ आक्षेपम् ॥ ६ किञ्च ॥ ७ व्यवस्थापकत्वप्रकारेण ॥ ८ ज्ञानस्य ॥ ९ भवदीयम् ॥ १० जैने कृते ॥ ११ परेण ॥ १२ पूर्वपक्षे ॥ १३ अर्थरूपता ॥ १४ किञ्च ॥ १५ निराकारेण ॥ १६ सौत्रान्तिकस्य ॥ १७ ज्ञानस्य ॥ १८ अर्थप्रमिति ॥ १९ किंच । ताद्रूप्यनिषेध कुर्वन्ति ॥ २० अर्थाकारमर्थादुत्पन्नमर्थाध्यवसायि ज्ञानं प्रमाणमिमानि विशेषणानि प्रत्येकं दूषयन्ति ॥ २१ ईषत् ॥ २२ अर्थ ॥ २३ ताद्रूप्याभावात् ॥ २४ प्राक्तनज्ञानस्य य एव नीलाद्यर्थो विषय स एवोत्तरज्ञानस्येति एकसन्तानवर्त्तित्वेन समानोऽर्थ एको नील ॥ २५ ईषत् ॥ २६ प्रथमक्षणे नीलमिदमिति ज्ञानमुत्पन्नं तच्च द्वितीयस्य जनकं तत्र ताद्रूप्यमस्ति तदुत्पत्तिज्ञानत्वेन समानमव्यवहितत्वेनानन्तरमिति ॥ २७ सदृश ॥ २८ प्राक्तनज्ञानेन ॥ २९ तदुत्पत्तेस्ताद्रूप्याच्च यद्यर्थस्य बोधो नियामकः तदा प्राक्तनज्ञानेनानैकान्तात् कथम्? द्वितीयबोधस्य प्राक्तनबोधात्तदुत्पत्तिताद्रूप्यसद्भावेपि द्वितीयबोधेन पूर्वान्तरबोधस्य नियामकत्वायोगात् । ज्ञानं ज्ञानस्य न नियामकं ज्ञानस्य स्वप्रकाशकत्वात् ॥ ३० किञ्च । ताद्रूप्यनिषेध कुर्वन्ति ॥ ३१ ज्ञानस्य ॥ ३२ अर्थलक्षणात्कारणादपरमिन्द्रियलक्षणम् ॥ ३३ बोधस्य ॥ ३४ कारण ॥ ३५ अव्यवहितकारण ॥ ३६ तदुत्पत्तिलक्षणसम्बन्ध ॥ ३७ अर्थपूर्वज्ञाने ॥ ३८ तज्जन्मतद्रूपविशेषाभावात् ॥ ३९ अर्थोपादानाभ्यामुत्पत्तेरविशेषात् ॥ ४० अर्थोपादानाभ्या ॥ ४१ निश्चय ॥ ४२ बोधस्य ॥ ४३ अर्थोपादानयो ॥ ४४ तज्जन्मरूप ॥ ४५ किञ्च इदानीं सह दूषयति ॥ ४६ अर्थात्तदुत्पत्त्यादि ॥ ४७ बोधस्य ॥ ४८ दोष ॥ ४९ पुरुषस्य ॥ ५० किञ्च । साकारत्वेन ज्ञानस्य प्रामाण्यवादिन ॥ ५१ निरस्तत्वादि ॥

ऽभिन्नो वा? भिन्नश्चेन्नीलाद्याकारस्याक्षणिकत्वप्रसङ्गस्तद्व्यावृत्तिलक्षणत्वात्तस्य। अथाभिन्नस्तर्हि ततोऽर्थस्य नीलत्वादिवत् क्षणिकत्वादेरपि प्रसिद्धेस्तदर्थमनुमानमनर्थकम्। तदसिद्धौ वा नीलत्वादेरप्यतः सिद्धिर्न स्यादविशेषात्। ननु चानेकस्वभावार्थाकारत्वेपि ज्ञानस्य यस्मिन्नेवांशे संस्कारपाटवान्निश्चयोत्पादकत्वं तत्रैव प्रामाण्यं नान्यत्रेति। नन्वसौ निश्चयः साकारो निराकारो वा? साकारत्वे तत्रापि नीलाद्याकारस्य क्षणिकत्वाद्याकाराद्भेदाभेदपक्षयोः पूर्वोक्तदोषप्रसङ्गः। तत्रापि निश्चयान्तरकल्पनेऽनवस्था। अथ निराकारस्तर्हि निश्चयात्मना सर्वार्थेष्वविशिष्टस्य ज्ञानस्यायमस्यार्थस्य निश्चय इति प्रतिकर्मनियमः कुतः सिद्ध्येत्। निराकारस्यापि कुतश्चिन्निमित्तात्प्रतिकर्मसिद्धावन्यत्राप्यत एव तत्सिद्धेः किमाकारकल्पनयेति। नन्वस्तु निराकारत्वं विज्ञानस्य, न तु स्वसंविदितत्वं भूतपरिणामत्वाद्दर्पणादिवदित्यप्ययुक्तम् हेतोरसिद्धेः। भूतपरिणामत्वे हि विज्ञानस्य वाह्येन्द्रियप्रत्यक्षत्वप्रसङ्गो दर्पणादिवत्। सूक्ष्मभूतविशेषपरिणामत्वान्न तत्प्रसङ्ग इत्यप्यसङ्गतम् स हि चैतन्येन सजातीयो विजातीयो वा तदुत्पादनहेतुः स्यात्? प्रथमपक्षे सिद्धसाध्यता। सूक्ष्मो हि भूतविशेषोऽचेतनद्रव्यव्यावृत्तस्वभावो रूपादिरहितः सर्वदा वाह्येन्द्रियाविषयः स्वसंवेदनप्रत्यक्षाधिगम्यः परलोकादिसम्बन्धित्वेनानुमेयश्चात्मापरनामाविज्ञानोपादानहेतुरिति परैरभ्युपगमात्। तस्यातो विजातीयत्वेनोपादानभावः सर्वथा विजातीयस्योपादानत्वे वह्नेर्जलाद्युपादानभावप्रसङ्गात् तत्त्वचतुष्टयव्याघातः। सत्त्वादिना सजातीयत्वात्तस्योपादानभावेप्ययमेव दोषः। प्रमाणप्रसिद्धत्वाच्चात्मनस्तदुपादानत्वमेव विज्ञानस्योपपन्नम्। तथा हि। यद्यतोऽसाधारणलक्षणविशेषविशिष्टं तत्ततस्तत्त्वान्तरम्। यथा तेजसो वाय्वादिकम्। पृथिव्याद्यसाधारणलक्षणविशेषविशिष्टं च चैतन्यमिति। न चायमसिद्धो हेतुश्चैतन्यस्य ज्ञानदर्शनोपयोगलक्षणत्वात्। भूपयःपावकपवनानां धारणेरणद्रवोष्णतास्वभावानां तल्लक्षणाभावात्। न हि भूतानि ज्ञानदर्शनोपयोगलक्षणान्यस्मदाद्यनेकप्रतिपत्तृप्रत्यक्षत्वात्। यत्पुनस्तल्लक्षणं तन्नास्मदाद्यनेकप्रतिपत्तृप्रत्यक्षम्। यथा

१ अत्रानुमाने घटादिवद् दृष्टान्त ॥ २ नीलाकाराद् ज्ञानात् ॥ ३ अर्थस्य ॥ ४ क्षणिकत्वादि ॥ ५ सर्वं क्षणिकं सत्त्वात् ॥ ६ नीलाकारज्ञानात् ॥ ७ अभिन्नत्वस्य ॥ ८ यस्य ज्ञानस्य ॥ ९ नीले ॥ १० विकल्प ॥ ११ क्षणिकांशे ॥ १२ भो बौद्ध ॥ १३ ज्ञानेनोत्पाद्य ॥ १४ साकारनिश्चयविपर्ययै ॥ १५ निश्चयगतस्य ॥ १६ अक्षणिकत्वादि ॥ १७ अभिन्नपक्षे। निश्चयगतनीलाद्याकारे ॥ १८ नीलगतक्षणिकत्वनिश्चयपरिहारार्थम् ॥ १९ अन्यथानवस्था ॥ २० निश्चय ॥ २१ स्वस्वरूपेण ॥ २२ साधारणस्य ॥ २३ नीलस्य ॥ २४ योग्यतात ॥ २५ निराकारज्ञानपक्षेपि ॥ २६ किं प्रयोजन न किमपि ॥ २७ जैन प्रति चार्वाको ब्रूते ॥ २८ हेतोरसिद्धत्वमेव दर्शयन्ति ॥ २९ ज्ञानस्य ॥ ३० सूक्ष्मभूतविशेष ॥ ३१ ज्ञानेन ॥ ३२ अस्माकं जैनानाम् ॥ ३३ प्राणी ॥ ३४ रसगन्धवर्णशब्दैश्च ॥ ३५ आदिपदेन पुण्यपाप ॥ ३६ चिद्विवर्त्तत्वादिसत्त ॥ ३७ जैनै ॥ ३८ चैतन्यस्य ॥ ३९ अन्यथा ॥ ४० प्रमेयत्ववस्तुत्वादि ॥ ४१ किंच ॥ ४२ स उपादान यस्य तत् ॥ ४३ चैतन्य धर्मी पृथिव्यादिभ्योऽर्थान्तर भवतीति साध्यो धर्मः। ततोऽसाधारणलक्षणविशेषविशिष्टत्वात् ॥ ४४ पृथिव्यादिभ्य ॥ ४५ विसदृश ॥ ४६ पृथिव्यादिभ्य ॥ ४७ भिन्न ॥ ४८ का ॥ ४९ ज्ञानदर्शरूप एव उपयोग ॥ ५० अनेकसर्वज्ञप्रत्यक्षेणासचैतन्येन व्यभिचार ॥ ५१ अनेकप्रतिपत्तृप्रत्यक्षत्वादित्युक्ते ॥ ५२ प्रत्यक्षत्वादित्युक्ते प्रत्यक्षेण ॥ ५३ अस्मचैतन्येन व्यभिचार ॥

चैतन्यम् । तथा च भूतानि । तस्मात्तथैवेति । ननु ज्ञानाद्युपयोगविशेषव्यतिरेकेणापरस्य तद्वतः प्रमाणतोऽप्रतीतेरसिद्धमेवासाधारलक्षणविशेषविशिष्टत्वम् । तथा हि । न तावत्प्रत्यक्षेणासौ प्रतीयते, रूपादिवत्तत्स्वभावानवधारणात् । नाप्यनुमानेनास्य प्रामाण्याप्रसिद्धेः । न च तद्भावावेदकं किञ्चिदनुमानमस्तीत्यसङ्गतं प्रत्यक्षेणैवात्मनः प्रतीतेः । सुख्यहं दुःख्यहमिच्छावानहमित्याद्यनुपचरिताहम्प्रत्ययस्यात्मग्राहिणः प्रतिप्राणिसंवेदनात् । न चायं मिथ्याऽबाध्यमानत्वात् । नापि शरीरालम्बनो बहिःकरणनिरपेक्षान्तःकरणव्यापारेणोत्पत्तेः न हि शरीरं तथाभूतप्रत्ययवेद्यं बहिःकरणविषयत्वात्, तस्यानुपचरिताहम्प्रत्ययविषयत्वाभावाच्च । न हि स्थूलोऽहं कृशोहमित्याद्यभिन्नाधिकरणतया प्रत्ययोऽनुपचरितोऽत्यन्तोपकारके भृत्येऽहमेवायमिति प्रत्ययस्याप्यनुपचरितत्वप्रसङ्गात् । प्रतिभासभेदो बाधकोन्यत्रापि समानः । न हि बहलतमःपटलपटावगुण्ठितविग्रहस्याहमिति प्रत्ययप्रतिभासे स्थूलत्वादिधर्मोपेतो विग्रहोपि प्रतिभासते । उपचारश्च निमित्तं विना न प्रवर्तते इत्यात्मोपकारकत्वं निमित्तं कल्प्यते भृत्यवदेव । मदीयो भृत्य इतिप्रत्ययभेदवन्मदीयं शरीरमिति प्रत्ययभेदस्तु मुख्यः । यच्चोक्तम्-रूपादिवत्तत्स्वभावानवधारणात्तदयुक्तमहमिति तत्स्वभावस्य प्रतिभासनात् । न चार्थान्तरस्यार्थान्तरस्वभावेनाप्रत्यक्षत्वं दोषः, सर्वपदार्थानामप्रत्यक्षताप्रसङ्गात् । अथात्मनः कर्तृत्वादेकस्मिन् काले कर्मत्वासम्भवेनाप्रत्यक्षत्वम् । तन्न, लक्षणभेदेन तदुपपत्तेः । स्वातन्त्र्यं हि कर्तृत्वलक्षणं तदेव च ज्ञानक्रियया व्याप्यत्वोपलब्धेः कर्मत्वं चाविरुद्धं लक्षणाधीनत्वाद्वस्तुव्यवस्थायाः । तथानुमानेनात्मा प्रतीयते । श्रोत्रादिकरणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवत् । न चात्र श्रोत्रादिकरणानामसिद्धत्वम्, रूपरसगन्धस्पर्शशब्दोपलब्धिः करणकार्या क्रियात्वाच्छिदिक्रियावदित्यनुमानात्तत्सिद्धेः । तथा शब्दादि ज्ञानं क्वचिदाश्रितं गुणत्वाद्रूपादिवदित्यनुमानतोप्यसौ प्रतीयते । प्रामाण्यं चानुमानस्याग्रे समर्थयिष्यते । शरीरेन्द्रियमनोविषयगुणत्वाद्विज्ञानस्य न तद्व्यतिरिक्ताश्रयाश्रितत्वम्, येनात्मसिद्धिः स्यादित्यपि मनोरथमात्रम्, विज्ञानस्य तद्गुणत्वासिद्धेः । तथा हि । न शरीरं चैतन्यगुणाश्रयो भूतविकारत्वाद् घटादिवत् । चैतन्यं वा शरीरविशेषगुणो न भवति सति

१ दर्शन ॥ २ आत्मन ॥ ३ साधनम् ॥ ४ इन्द्रियप्रत्यक्षेण ॥ ५ किंच ॥ ६ हेतु ॥ ७ नहि करणनिरपेक्षान्त करणव्यापारादुत्पद्यमानप्रत्ययवेद्यम् ॥ ८ अभावोऽसिद्ध इत्युक्ते सत्याह ॥ ९ इच्छावानहम् ॥ १० ईषू ॥ ११ अनुकरणे ॥ १२ देह ॥ १३ अन्यथा ॥ १४ उपचारेण ॥ १५ स्थूलोहमित्यादिप्रत्यये ॥ १६ आवृत ॥ १७ पुरुषस्य ॥ १८ स्थूलत्वादौ ॥ १९ स्थूलत्वादे ॥ २० प्रयोजनम् ॥ २१ शरीरस्य ॥ २२ ज्ञाने ॥ २३ शरीरस्य ॥ २४ ज्ञान ॥ २५ परेण ॥ २६ आत्म ॥ २७ आत्मा ॥ २८ आत्म ॥ २९ चेतनस्य ॥ ३० रूपादिलक्षणादर्थादर्थान्तरमात्मा तस्य ॥ ३१ आत्मलक्षणादर्थादर्थान्तर घटादिस्तस्य स्वभावो रूपादिस्तेन ॥ ३२ अन्यथा ॥ ३३ घटादीना ॥ ३४ रूपरसादिरूपेण । वर्मेण, प्रत्यक्षत्वासम्भवात् ॥ ३५ कर्तृकाले ॥ ३६ स्वतन्त्र कर्तेति वचनात् ॥ ३७ क्रियाव्याप्त कर्मेति वचनात् ॥ ३८ असाधारणस्वरूपम् ॥ ३९ प्रत्यक्षप्रकारेण ॥ ४० अर्थपरिच्छित्तौ ॥ ४१ छिदो ॥ ४२ अनुमाने ॥ ४३ प्रत्यक्षानुमानप्रकारेण ॥ ४४ आत्मनि ॥ ४५ घटाद्यर्थे यथा ॥ ४६ आत्मा ॥ ४७ असाभिजने ॥ ४८ घटादि स्रगादि च ॥ ४९ केन ॥ ५० शरीरस्य ॥

शरीरे निवर्त्तमानत्वात्। ये तु शरीरविशेषगुणा, न ते तस्मिन्सति निवर्त्तन्ते, यथा रूपादयः। सत्यपि तस्मिन्निवर्त्तते च चैतन्यम्, तस्मान्न तद्विशेषगुणः। तथा नेन्द्रियाणि चैतन्यगुणवन्ति करणत्वाद्भूतविकारत्वाद्वा वास्यादिवत्। तद्गुणत्वे चै चैतन्यस्येन्द्रियविनाशे प्रतीतिर्न स्याद्गुणिविनाशे गुणस्याप्रतीतेः। न चैवम्, तस्मान्न तद्गुणः। तथा च प्रयोगः। स्मरणादि चैतन्यमिन्द्रियगुणो न भवति तद्विनाशेऽप्युत्पद्यमानत्वात्। यो यद्विनाशेऽप्युत्पद्यते स न तद्गुणो यथा पटविनाशेऽपि घटरूपादि, भवति चेन्द्रियविनाशेऽपि स्मरणादिकम्। तस्मान्न तद्गुणः। यदि चेन्द्रियगुणश्चैतन्यं स्यात्तर्हि करणं विना क्रियायाः प्रतीत्यभावात्करणान्तरैर्भवितव्यम्। तेषां च प्रत्येकं चैतन्यगुणत्वे एकस्मिन्नेव शरीरे पुरुषबहुत्वप्रसङ्गः स्यात्। तथा च देवदत्तोपलब्धेऽर्थे यज्ञदत्तस्येवेन्द्रियान्तरोपलब्धे तस्मिन्न स्यादिन्द्रियान्तरेण प्रतिसन्धानम्। दृश्यते चैतत्ततो नेन्द्रियगुणश्चैतन्यम्। अथैकमेवेन्द्रियमशेषकरणाधिष्ठायकमिष्यतेऽतोयमदोषः तर्हि संज्ञाभेदमात्रमेव स्यादात्मनस्तथानामान्तरकरणात्। नापि चैतन्यगुणवन्मनःकरणत्वाद्वास्यादिवत्। कर्तृत्वोपगमे तस्य चेतनस्य सतो रूपाद्युपलब्धौ करणान्तरापेक्षित्वे च प्रकारान्तरेणात्मैवोक्तः स्यात्। नापि विषयगुणस्तदसान्निध्ये तद्विनाशे चानुस्मृत्यादिदर्शनात्। न च गुणिनोऽसान्निध्ये विनाशे वा गुणानां प्रतीतिर्युक्ता, गुणत्वविरोधानुषङ्गात्। ततः परिशेषाच्छरीरादिव्यतिरिक्ताश्रयाश्रितं चैतन्यमित्यतो भवत्येवात्मसिद्धिः। ततो निराकृतमेतच्छरीरेन्द्रियविषयसंज्ञेभ्यः पृथिव्यादिभूतेभ्यश्चैतन्याभिव्यक्तिः, पिष्टोदकगुडधातक्यादिभ्यो मदशक्तिवत्। ततोऽसाधारणलक्षणविशेषविशिष्टत्वेऽप्यतश्चान्तरत्वमेव। पृथिव्य(व्या)पस्तेजोवायुरिति तत्त्वानि, तत्समुदये शरीरेन्द्रियविषयसंज्ञाः तेभ्यश्चैतन्यमित्यत्राभिव्यक्तिमुपयातीति क्रियाध्याहारादतः सन्दिग्धविपक्षव्यावृत्तिको हेतुरिति। शब्दसामान्याभिव्यक्तिनिषेधेनास्य चैतन्याभिव्यक्तिवादस्य विरोधाच्च। किंच सतोऽभिव्यक्तिश्चैतन्यस्यासतो वा स्यात्सदसद्रूपस्य वा? प्रथमकल्पनायां तस्यानाद्यनन्तत्वसिद्धिः, सर्वदा सतोऽभिव्यक्तेस्तामन्तरेणानुपपत्तेः। पृथिव्यादिसामान्यवत्। तथा च 'परलोकिनोऽभावात्परलोकाभावः' इत्यपरीक्षिताभिधानम्। प्रागसतश्चैतन्यस्याभिव्यक्तौ प्रतीतिविरोधः, सर्व-

१ चैतन्यस्य ॥ २ शरीरे ॥ ३ किंच ॥ ४ सुखम् ॥ ५ किंच ॥ ६ गुणी ॥ ७ गुण ॥ ८ जानातीति ॥ ९ चैतन्यलक्षणाया ॥ १० चेतन्य गुणो येषा तानि तत्त्वे ॥ ११ चक्षुया दृष्टेऽर्थे श्रोत्रेण प्रतिसन्धान न स्यात् ॥ १२ प्रत्यभिज्ञानम् ॥ १३ मन ॥ १४ प्रेरकम् ॥ १५ परेण ॥ १६ विद्यमानस्य ॥ १७ मन ॥ १८ चक्षुरादि ॥ १९ चैतन्य ॥ २० सुखादि ॥ २१ अन्यथा ॥ २२ गुणिनोऽमी गुणा इति ॥ २३ इन्द्रियमनो विषय ॥ २४ आत्म ॥ २५ गुणत्वादिसाधनात् ॥ २६ जायते ॥ २७ तेभ्यश्चैतन्यस्याभिव्यक्तिर्यत ॥ २८ ज्ञानदर्शनोपयोगरूप ॥ २९ चेतन्यस्य॥ ३० सूत्रे ॥ ३१ चैतन्यस्याभिव्यक्ति ॥ ३२ वस ॥ ३३ असाधारणलक्षणविशेषविशिष्टत्वादिति ॥ ३४ आकाशात्तद्विलक्षणशब्दोत्पत्तिं यौगाभिता निराकुर्वतश्चार्वाकस्य भूतेभ्यस्तद्विलक्षणचेतन्योत्पत्तिकथनमयुक्त स्ववचनविरोधादित्यभिप्राय ॥ ३५ अग्रे ॥ ३६ यथा घटाना प्रदीपाद्यभिव्यञ्जकव्यापारात्पूर्वं सद्भावग्राहक प्रमाणमस्ति तथा ताल्वादिव्यापारात्पूर्वं शब्दादिसद्भावग्राहकप्रमाणाभावात्कथमभिव्यञ्जकव्यापाराच्छब्दादीनामभिव्यक्तिरिति चार्वाकेण शब्दाद्यभिव्यक्तिपक्षे मीमासक प्रत्युद्राव्यमानेन दूषणेन चेतन्याभिव्यक्तिपक्षस्यापि निराकृतत्वात्। कथम् ? अभिव्यक्तात्चैतन्यात्पूर्वमनभिव्यक्तनित्यचैतन्यसद्भावग्राहकप्रमाणभावादिति ॥ ३७ किंच ॥ ३८ पृथिवीत्वादि ॥ ३९ अनाद्यनन्तात्मसिद्धो ॥ ४० सत्याम् ॥

थाप्यसतः कस्यचिदभिव्यक्त्यप्रतीतेः न चैवं[2] वादिनो व्यञ्जककारकयोर्भेदः[3]। प्राक्सतः स्वरूपसंस्कारकं हि व्यञ्जकम्। असतः स्वरूपनिर्वर्तकं कारकमित्येवं तयोर्भेदप्रसिद्धिः। कथञ्चित्सतोऽसतश्चाभिव्यक्तौ परमतप्रवेशः। कथञ्चिद्द्रव्यतः सतश्चैतन्यस्य पर्यायतोऽसतश्च कायाकारपरिणतैः पृथिव्यादिपुद्गलैः परैरप्यभिव्यक्तेरभीष्टत्वात्। पृथिव्यादिभूतचतुष्टयवत्। नन्वेवं पिष्टोदकादिभ्यो मदशक्त्यभिव्यक्तिरपि न स्यात्तत्राप्युक्तविकल्पानां समानत्वादित्यप्यसाम्प्रतं तत्रापि द्रव्यरूपतया प्राक्सत्त्वाभ्युपगमात्। सकलभावानां तद्रूपेणानाद्यनन्तत्वात्। शरीरेन्द्रियविषयसंज्ञेभ्यश्चैतन्यस्योत्पत्त्यभ्युपगमात्तेभ्यश्चैतन्यमित्यत्रोत्पद्यते इति क्रियाध्याहारान्नाभिव्यक्तिपक्षभावी दोषोऽवकाशं लभते इत्यन्यः सोपि चैतन्यं प्रत्युपादानकारणत्वं सहकारिकारणत्वं वा भूतानामिति पृष्टः स्पष्टमाचष्टाम्। न तावदुपादानकारणत्वं तेषां चैतन्ये भूतान्वयप्रसङ्गात्। सुवर्णोपादाने किरीटादौ सुवर्णान्वयवत्, पृथिव्याद्युपादाने काये पृथिव्याद्यन्वयवद्वा। न चात्रैवम् न हि भूतसमुदयः पूर्वमचेतनाकारं परित्यज्य चेतनाकारमाददानो धारणेरणद्रवोष्णतालक्षणेन रूपादिमत्त्वस्वभावेन वा भूतस्वभावेनान्वितः प्रमाणप्रतिपन्नः, चैतन्यस्य धारणादिस्वभावरहितस्यान्तःसंवेदनेनानुभवात्। न च प्रदीपाद्युपादानेन कज्जलादिना प्रदीपाद्यनन्वितेन व्यभिचारः, रूपादिमत्त्वमात्रेणात्राप्यन्वयदर्शनात्। पुद्गलविकाराणा रूपादिमत्त्वमात्राव्यभिचारात्। भूतचैतन्ययोरप्येवं सत्त्वादिक्रियाकारित्वादिधर्मैरन्वयसद्भावादुपादानोपादेयभावः स्यादित्यप्यसमीचीनम्, जलानलादीनामप्यन्योन्यमुपादानोपादेयभावप्रसङ्गात्-तद्धर्मैस्तत्राप्यन्वयसद्भावाविशेषात्। किञ्च प्राणिनामाद्यं चैतन्यं चैतन्योपादानकारणकं चिद्विवर्त्तत्वान्मध्यचिद्विवर्त्तवत्। तथान्त्यचैतन्यपरिणामश्चैतन्यकार्यस्तत एव तद्वत्। इत्यनुमानात्तस्य चैतन्यान्तरोपादानपूर्वकत्वसिद्धेर्न भूतानां चैतन्यं प्रत्युपादानकारणत्वकल्पना घटते। सहकारिकारणत्वकल्पनायां तूपादानमन्यद्वाच्यमनुपादानस्य कस्यचित्कार्यस्यानुपलब्धेः। शब्दविद्युदादेरनुपादानस्याप्युपलब्धेरदोषोयमित्यप्यपरीक्षिताभिधानम्-शब्दादिः सोपादानकारणकः कार्यत्वात् पटादिवदित्यनुमानात्तस्याद्दृश्योपादानस्यापि सोपादानत्वसिद्धेः। गोमयादेरचेतनाच्चेतनस्य वृश्चिकादेरुत्पत्तिप्रतीतेः तेनानेकान्त इत्ययुक्तम्-तस्य पक्षान्तर्भूतत्वात्। वृश्चिकादिशरीरं ह्यचेतनं गोमयादेः प्रादुर्भवति न पुनर्वृश्चिकादिचैतन्यविवर्त्तस्तस्य पूर्वचैतन्यविवर्त्तादेवोत्पत्तिप्रतिज्ञानात्।

---

१ खरविषाणादिवत् ॥ २ किञ्च ॥ ३ मा भूत् ॥ ४ व्यङ्ग्यस्य ॥ ५ जैन ॥ ६ नरनारकादि ॥ ७ जैनै ॥ ८ यथा पृथिव्यादिभूतचतुष्टयस्य पुद्गलरूपेण सत घटादिपर्यायरूपेणासतश्चक्रादिकारणादाविर्भावस्तथा प्रकृतस्यापि ॥ ९ चैतन्याभिव्यक्तिनिषेधप्रकारेण ॥ १० मदशक्तौ ॥ ११ सूत्रे ॥ १२ अविद्धकर्णश्चार्वाकविशेष ॥ १३ जैनै ॥ १४ अन्यथा ॥ १५ चैतन्य भूतान्वयि तदुपादानत्वात् । यद्यदुपादान तत्तदन्वयि यथा मृद्रूपोपादानको घट ॥ १६ पीतत्वभासुरत्व ॥ १७ वारणादि ॥ १८ उपसहार ॥ १९ प्रत्यक्ष ॥ २० प्रदीपादि उपादान यस्य ॥ २१ कज्जले प्रदीपरूपादिमत्त्वमात्रान्वयप्रकारेण ॥ २२ जलानलादय परस्परमुपादानोपादेयभाववन्त सत्त्वादिधर्मैरन्वितत्वात्तद्भूतचैतन्यवत् ॥ २३ चैतन्य धर्मि भूतोऽन्वयि भवतीति साध्यो धर्म । तदुपादानत्वाद् यथा मृदुपादानको घटो मृदन्वयी ॥ २४ तज्जन्मापेक्षया ॥ २५ पूर्वजन्मचैतन्य ॥ २६ वस ॥ २७ पूर्वचित् ॥ २८ प्रमेय ॥ २९ जन्मप्रभृतिमरणपर्यन्त ॥ ३० यस ( कर्मधारयसमास ) ॥ ३१ पर्याय ॥ ३२ वस ॥ ३३ भूतानाम् ॥ ३४ कारणम् ॥ ३५ परेण ॥ ३६ वृश्चिकचैतन्येन ॥ ३७ वृश्चिकचैतन्यस्य ॥ ३८ यस ॥

अथ यथार्थः[1] (पथिकाग्निररणिनिर्मथोत्थोऽनग्निपूर्वकोऽन्यस्त्वग्निपूर्वकस्तथाद्यं चैतन्यं कायाकारपरिणतभूतेभ्यो भविष्यत्यन्यत्तु[3] चैतन्यपूर्वकं विरोधाभावादित्यपि[4] मनोरथमात्रम्—प्रथमपथिकाग्नेरनश्युपादानत्वे[5] जलादीनामप्यजलाद्युपादानत्वापत्तेः पृथिव्यादिभूतचतुष्टयस्य तत्त्वान्तरभावविरोधः[6]। येषां हि परस्परमुपादानोपादेय भावस्तेषां न तत्त्वान्तरत्वम्, यथा क्षितिविवर्त्तानाम्। परस्परमुपादानोपादेयभावश्च पृथिव्यादीनामित्येकमेवपुद्गलतत्त्वं क्षित्यादिविवर्त्तमवतिष्ठत्-सहकारिभावो-पगमे तु तेषां[10] चैतन्येपि सोस्तु। यथैव हि प्रथमाविर्भूतपावकादेस्तिरोहितपावकान्तरादिपूर्वकत्वं[12] तथा गर्भचैतन्यस्याविर्भूतस्वभावस्य तिरोहितचैतन्यपूर्वकत्वमिति[14]। न चानाद्येकानुभवितृव्यतिरेकेणेष्टानिष्टविषये प्रत्यभिज्ञानाभिलापादयो जन्मादौ युज्यन्ते तेषामभ्यासपूर्वकत्वात्। न च मातुरुदरस्थितस्य बहिर्विषयादर्शनेऽभ्यासो युक्तोऽतिप्रसङ्गात्। न चावलग्नावस्थायामभ्यासपूर्वकत्वेन प्रतिपन्नानामप्यनुसन्धानादीनां जन्मादावतत्पूर्वकत्वं युक्तम्। अन्यथा धूमोऽग्निपूर्वकोऽदृष्टोप्यनग्निपूर्वकः स्यात्। मातापित्रभ्यासपूर्वकत्वात्तेषामदोषोयमित्यप्यसम्भाव्यम्। सन्तानान्तराभ्यासादन्यत्र प्रत्यभिज्ञानेऽतिप्रसङ्गात्। तदुपलब्धे सर्वं मयैवोपलब्धमेतदित्यनुस-न्धानं चाखिलापत्यानां स्यात्। परस्परं वा तेषां प्रत्यभिज्ञानप्रसङ्गः स्यात्, एकसन्तानोद्भूतदर्शनस्पर्शनप्रत्ययवत्। ज्ञानेनाहं घटादिकं जानामीत्यहम्प्रत्ययप्रसि-द्धत्वाच्चात्मनो नापलापो युक्तः। अत्र हि यथाकर्मतया विषयस्यावभासस्तथा कर्तृतयात्मनोपि। न चात्र देहेन्द्रियादीनां कर्तृता-घटादिवत्तेषामपि कर्मतयाऽ-वभासनात् तदप्रतिभासनेप्यहम्प्रत्ययस्यानुभवात्। न हि बहलतमःपटलपटावगुण्ठितविग्रहस्योपरतेन्द्रियव्यापारस्य गौरस्थौल्यादिधर्मोपेतं शरीरं प्रतिभासते। अहम्प्रत्ययः स्वसंविदितः पुनस्तस्यानुभूयमानो देहेन्द्रियविषयादिव्यतिरिक्तार्थालम्बनः सिद्ध्यतीति प्रमाणप्रसिद्धोऽनादिनिधनो द्रव्यान्तरमात्मा। प्रयोगा अनाद्य-नन्त आत्मा द्रव्यत्वात्पृथिव्यादिवत्। न तावदाश्रयासिद्धोयं हेतुरात्मनोऽहम्प्रत्ययप्रसिद्धत्वात्। नापि स्वरूपासिद्धो द्रव्यलक्षणोपलक्षितत्वात्। तथा हि। द्रव्यमात्मा गुणपर्ययवत्त्वात्पृथिव्यादिवत्। न चायमप्यसिद्धो हेतुर्ज्ञानदर्शनादिगुणानां सुखदुःखहर्षविषादादिपर्यायाणां च तत्र सद्भावात्। न च घटादिनाने-कान्तस्तस्य मृदादिपर्ययत्वात्। ननु शरीररहितस्यात्मनः प्रतिभासे ततोऽन्योऽनादिनिधनोऽसाविति स्यात् जलरहितस्यानलस्येव। न चैवम् आसंसारं तत्सहि-

१ सन्दिग्धानेकान्तिकत्वम् ॥ २ चुल्लीस्थ ॥ ३ मध्यचैतन्यम् ॥ ४ कार्यत्वादिहेतो ॥ ५ काष्ठ ॥ ६ पृथिव्यादयो धर्मिणस्तत्त्वान्तरत्वं न प्राप्नुवन्तीति साध्यं परस्परमुपादानोपादेयभाववत्त्वात् ॥ ७ सलिलदहनपवन ॥ ८ वस ॥ ९ परेण ॥ १० अग्नि प्रलरणिरूपपृथ्व्यादीनाम् ॥ ११ दधि ॥ १२ शक्तिरूपस्थित ॥ १३ उपादान ॥ १४ शक्तिरूपस्थित ॥ १५ उपादान ॥ १६ किञ्च ॥ १७ आत्म ॥ १८ संस्कार ॥ १९ बालकस्य ॥ २० त्रिविप्रकृष्टे-प्यर्थेऽभ्यासो भवत्वदर्शनाविशेषात् ॥ २१ मध्यमावस्थाया ॥ २२ प्रत्यभिज्ञानादीनाम् ॥ २३ अनभ्यास ॥ २४ अपत्यस्य ॥ २५ मातापितृलक्षण ॥ २६ अपत्ये ॥ २७ वस्तुनि ॥ २८ अपत्येन ॥ २९ किञ्च ॥ ३० एकापत्येन दृष्टेऽर्थे द्वितीयापत्यस्य प्रत्यभिज्ञानप्रसङ्गः स्यात् ॥ ३१ आत्मलक्षण ॥ ३२ किञ्च ॥ ३३ निह्नव ॥ ३४ ज्ञानेनाहं घटादिकं जानामीति प्रत्यये ॥ ३५ ज्ञानेनाहं घटादिकं जानामीति प्रत्यये ॥ ३६ देहेन्द्रियादिकं जानामि ॥ ३७ नरस्य ॥ ३८ पश्चात् ॥ ३९ मन ॥ ४० आत्मा ॥ ४१ अनादिनिधनस्य ॥ ४२ आत्मनि ॥ ४३ द्रव्यत्वादिति हेतो ॥ ४४ सति ॥ ४५ परिहारमाह ॥

तस्यैवास्यावभासनात् । तत्र शरीररहितस्येति कोऽर्थः ? किं तत्स्वभावविकलस्याहोस्वित्तद्देशपरिहारेण देशान्तरावस्थितस्येति ? तत्राद्यपक्षेऽस्त्येव तद्रहितस्यास्य प्रतिभासः रूपादिमदचेतनस्वभावशरीरविलक्षणतयाऽमूर्त्तचैतन्यस्वभावतया चात्मनोऽध्यक्षगोचरत्वेनोक्तत्वात् । द्वितीयपक्षे तु शरीरदेशादन्यत्रानुपलम्भात्तत्र तदभावः, शरीरप्रदेश एव वा ? प्रथमविकल्पे सिद्धसाधनं तत्र तदभावाभ्युपगमात् । न खलु नैयायिकवज्जैनेनापि स्वदेहादन्यत्रात्मेष्यते । द्वितीयविकल्पे तु न केवलमात्मनोऽभावोऽपि तु घटादेरपि । न हि सोपि स्वदेशादन्यत्रोपलभ्यते । किञ्च स्वशरीरादात्मनोऽन्यत्वाभावस्तत्स्वभावत्वात्तद्गुणत्वाद्वास्यात्तत्कार्यत्वाद्वा-प्रकारान्तरासम्भवात् । पक्षत्रयेपि प्रागेव दत्तमुत्तरम् । ततश्चैतन्यस्वभावस्यात्मनः प्रमाणतः प्रसिद्धेस्तत्स्वभावमेव ज्ञानं युक्तम् । तथा च स्वव्यवसायात्मकम् तच्चेतनात्मपरिणामत्वात् । यत्तु न स्वव्यवसायात्मकं न तत्तथा, यथा घटादि तथा च ज्ञानं तस्मात्स्वव्यवसायात्मकमित्यभ्युपगन्तव्यम् ॥

ननु विज्ञानस्य प्रत्यक्षत्वेऽर्थवत्कर्मतापत्तेः करणात्मनो ज्ञानान्तरस्य परिकल्पना स्यात् । तस्यापि प्रत्यक्षत्वे पूर्ववत्कर्मतापत्तेः करणात्मकं ज्ञानान्तरं परिकल्पनीयमित्यनवस्था स्यात् । तस्याप्रत्यक्षत्वेपि करणत्वे प्रथमे कोऽपरितोपो येनास्य तथा करणत्वं नेष्यते । न चैकस्यैव ज्ञानस्य परस्परविरुद्धकर्मकरणाकाराभ्युपगमो युक्तोऽन्यत्र तथाऽदर्शनादित्याशङ्क्य प्रमेयवत्प्रमातृप्रमाणप्रमितीनां प्रतीतिसिद्धं प्रत्यक्षत्वं प्रदर्शयन्नाह—

घटमहमात्मना वेद्मीति । कर्मवत्कर्तृकरणक्रियाप्रतीतेः । न हि कर्मत्वं प्रत्यक्षतां प्रत्यङ्गमात्मनोऽप्रत्यक्षत्वप्रसङ्गात् तद्वत्तस्यापि कर्मत्वेनाप्रतीतेः । तदप्रतीतावपि कर्तृत्वेनास्य प्रतीतेः प्रत्यक्षत्वे, ज्ञानस्यापि करणत्वेन प्रतीतेः प्रत्यक्षतास्तु विशेषाभावात् । अथ करणत्वेन प्रतीयमानं ज्ञानं करणमेव न प्रत्यक्षम् तदन्यत्रापि समानम् । किञ्चात्मनः प्रत्यक्षत्वे परोक्षज्ञानकल्पनया किं साध्यम् तस्यैव स्वरूपवद्बाह्यार्थग्राहकत्वप्रसिद्धेः । कर्तुः करणमन्तरेण क्रियायां व्यापारासम्भवात्करणभूतपरोक्षज्ञानकल्पना नानार्थिकेत्यप्यसाधीयो मनसश्चक्षुरादेश्चान्तर्बहिःकरणस्य सद्भावात् ततोऽस्य विशेषाभावाच्च । अनयोरचेतनत्वात्प्रधानं चेतनं करणमित्यप्यसमीचीनम् भावेन्द्रियमनसोश्चेतनत्वात् । तत्परोक्षत्वसाधने च सिद्धसाधनम् स्वार्थग्रहणशक्तिलक्षणायां लब्धेर्मनसश्च भावकरणस्य च्छद्मस्थाप्रत्यक्षत्वात् ।

१ उक्ते ग्रन्थे ॥ २ प्रतिभासाभाव ॥ ३ प्रतिभासाभाव ॥ ४ देशे ॥ ५ जीवस्य ॥ ६ ता ॥ ७ जैनै ॥ ८ तत्स्वभावस्य यद्यतोऽसाधारणलक्षणविशेषविशिष्ट तत्ततत्त्वान्तरमित्यादिना निरस्तत्वात् ॥ ९ जैने ॥ १० वस्त ॥ ११ चार्वाकेण भवता ॥ १२ मीमांसक ॥ १३ विज्ञान कर्म-प्रत्यक्षत्वात्, घटवत् ॥ १४ करणस्वरूपस्य ॥ १५ पूर्वज्ञानस्य यथा ॥ १६ प्रथमज्ञानस्य ॥ १७ अप्रत्यक्षत्वे ॥ १८ जैने ॥ १९ यत्कर्म तदेव करणम् ॥ २० घटे ॥ २१ अर्थस्य यथा ॥ २२ करणभूतेन ॥ २३ अन्यथा ॥ २४ आत्मा न प्रत्यक्ष कर्मत्वेनाप्रतीयमानत्वात्करणज्ञानवत् ॥ २५ यत् कर्म न भवति तत्प्रत्यक्षमपि न भवतीत्युक्ते ॥ २६ करणज्ञानवत् ॥ २७ उभयत्र कर्मत्वेनाप्रतीयमानत्वस्य ॥ २८ समाधानपरिहारम् ॥ २९ कर्तृत्वेनात्मा प्रतीयमान कर्तव स्यात्र प्रत्यक्ष इति समानम् ॥ ३० प्रयोजनम् ॥ ३१ प्रमितिलक्षणाया ॥ ३२ परोक्षज्ञानस्य ॥ ३३ परोक्षत्वेन ॥ ३४ उभयत्र ॥ ३५ मुख्यम् ॥ ३६ कर्मत्वेनाप्रतीयमानत्वाद्धेतो ॥ ३७ बाह्येन्द्रियाश्रिताया ॥ ३८ अर्थग्रहणशक्ते ॥ ३९ असदादि ॥

उपयोगलक्षणं तु भावकरणं नाप्रत्यक्षम् स्वार्थग्रहणव्यापारलक्षणस्यास्य[1] स्वसंवेदनप्रत्यक्षप्रसिद्धत्वात्[2] घटादिद्वारेण घटादिग्रहणे उपयुक्तोऽप्यहं[3] घटं न पश्यामि पदार्थान्तरं तु पश्यामीत्युपयोगस्वरूपसंवेदनस्याखिलजनानां सुप्रसिद्धत्वात् । क्रियायाः करणाविनाभावित्वे चात्मनः[4] स्वसंवित्तौ[5] किङ्करणं[6] स्यात् ? स्वात्मैवेति चेदर्थेऽपि स एवास्तु किमदृष्टान्य[7]कल्पनया । ततश्चक्षुरादिभ्यो विशेषमिच्छता[8] ज्ञानस्य[9] कर्मत्वेनाप्रतीतावप्यध्यक्षत्वमभ्युपगन्तव्यम् । फलज्ञानात्मनोः[10] फलत्वेन कर्तृत्वेन चानुभूयमानयोः[11] प्रत्यक्षत्वाभ्युपगमे[12] करणज्ञाने[13] करणत्वेनानुभूयमानेपि सोस्तु विशेषाभावात्[14] । न चाभ्यां[15][16] सर्वथा करणज्ञानस्य भेदो[17] मतान्तरानुपङ्गात्[18] । कथञ्चिद्भेदे[19] तु नास्याप्रत्यक्षतैकान्तः[20] श्रेयान् प्रत्यक्षस्वभावाभ्यां कर्तृफलज्ञानाभ्यां[21]मभिन्नस्यै[22]कान्ततोऽप्रत्यक्षत्वविरोधात् । किञ्चात्मज्ञानयोः[23] सर्वथा कर्मत्वाप्रसिद्धिः कथञ्चिद्वा ? न तावत्सर्वथा[24] पुरुषान्तरापेक्षया[25] प्रमाणान्तरापेक्षया[26] च कर्मत्वाप्रसिद्धिप्रसङ्गात् । कथञ्चिच्चेदेनात्मना[27][28] कर्मत्वं सिद्धं तेन प्रत्यक्षत्वमप्यस्मदादिप्रमात्र[29]पेक्षया घटादीनामप्यंशत[30] एव कर्मत्वाध्यक्षयोः प्रसिद्धेः । विरुद्धा[31] च[32] प्रतीयमानयोः[33] कर्मत्वाप्रसिद्धिः । प्रतीयमानत्वं हि ग्राह्यत्वं तदेव कर्मत्वं स्वतः[34] प्रतीयमानत्वापेक्षया कर्मत्वाप्रसिद्धौ परतः[35] कथं तत्सिध्येत् । विरोधाभावाच्चेत्स्वतस्तत्सिद्धौ[36] को विरोधः । कर्तृकरणत्वयोः कर्मत्वेन सहानवस्थानम्, परतस्तत्सिद्धौ[37] समानम् । घटग्राहिज्ञान[38]विशिष्टमात्मानं स्वतो[39]ऽहमनुभवामीत्यनुभवसिद्धं स्वतः प्रतीयमानत्वापेक्षयापि कर्मत्वम् । तत्रार्थवज्ज्ञानस्य प्रतीतिसिद्धप्रत्यक्षताऽपलापो[40]ऽर्थप्रत्यक्षत्व[41]स्याप्यपलापप्रसङ्गात् । प्रतीतिसिद्ध[42]स्वभावस्यैकत्रापलापे[43]ऽन्यत्राप्यनाश्वासा[44][45]न्न क्वचित्[46]प्रतिनियतस्वभावव्यवस्था स्यात् ॥ किञ्चेयं प्रत्यक्षतार्थधर्मो ज्ञानधर्मो वा । न तावदर्थधर्मो नीलत्वादिवत्तद्देशे[47] ज्ञानकालादन्यदाप्यनेकप्रमातृसाधारणविषयतया च प्रसिद्धिप्रसङ्गात्[48] । न चैवम् । आत्मन्येवास्याज्ञानकाले एव स्वासाधारणविषयतया च प्रसिद्धेः । तथा च न प्रत्यक्षतार्थधर्मस्तद्देशे ज्ञानकालादन्यदाप्यनेकप्रमातृसाधारणविषयतया चाऽप्रसिद्धत्वात् । यस्तु तद्धर्मः स तद्देशे ज्ञानकाला-

---

१ अर्थग्रहणव्यापार ॥ २ तदेव दर्शयति ॥ ३ व्याप्रियमाण ॥ ४ किंच ॥ ५ स्वस्वरूपम् ॥ ६ करण ॥ ७ भेदम् ॥ ८ परेण ॥ ९ करणरूपस्य ॥ १० अर्थपरिच्छित्ति ॥ ११ ताद्वि ( तासङ्गा पष्ठ्या । द्वि पदेन द्विवचन ग्राह्यम् ) ॥ १२ परेण ॥ १३ करणज्ञान प्रत्यक्षमेव स्वस्वरूपेण प्रतिभासमानत्वात्फलज्ञानात्मवत् ॥ १४ स्वरूपेण प्रतिभासाविशेषात् ॥ १५ किंच ॥ १६ का ( पञ्चमी विभक्ति ) ॥ १७ अन्यथा ॥ १८ नैयायिक ॥ १९ करणरूपेण न तु ज्ञानरूपेण ॥ २० का ॥ २१ करणज्ञान सर्वथा न परोक्ष प्रत्यक्षस्वभावाभ्या कर्तृफलज्ञानाभ्यामभिन्नत्वात्तत्स्वरूपवत् ॥ २२ करणस्य ॥ २३ करण ॥ २४ अन्यथा ॥ २५ अस्य करणज्ञानमस्ति उपदेशकृतार्थनिश्चयान्यथानुपपत्ते ॥ २६ करण ॥ २७ मम करणज्ञानमस्ति अर्थप्राकट्यान्यथानुपपत्ते ॥ २८ स्वभावेन ॥ २९ साकल्येन किमिति न स्यात्प्रत्यक्षत्वमित्युक्ते सत्याह ॥ ३० स्थूलत्वादो ॥ ३१ किंच ॥ ३२ कर्मत्वेन करणत्वेन च ॥ ३३ आत्मज्ञानयो ॥ ३४ स्वय स्व जानातीति अपेक्षया ॥ ३५ परापेक्षया स्वय कर्मत्व च कथम् ॥ ३६ (स्वय) ॥ ३७ कर्तृकरणयो परत कर्मत्वेन प्रतीतिरस्ति कथ समान सहानवस्थान स्यादित्युक्ते सत्याह ॥ ३८ विशेषण ॥ ३९ स्वय ॥ ४० अन्यथा ॥ ४१ करणज्ञान प्रत्यक्षमर्थप्रत्यक्षत्वान्यथानुपपत्ते ॥ ४२ प्रत्यक्षत्वरूपस्य ॥ ४३ करणज्ञाने ॥ ४४ स्थूलत्वाद्यर्थे ॥ ४५ अविश्वासात् ॥ ४६ वस्तुनि ॥ ४७ घटपटादि ॥ ४८ अन्यथा ॥

दन्यदाप्यनेकप्रमातृसाधारणविषयतया च प्रसिद्धो दृष्टो यथा रूपादिः। तद्देशे ज्ञानकालादन्यदाप्यनेकप्रमातृसाधारणविषयतया चाप्रसिद्धा चेयं तस्मान्न तद्धर्मः[1]। यस्यात्मनो ज्ञानेनार्थः[2] प्रकटीक्रियते तद्‌ज्ञानकाले[3] तस्यैव सोऽर्थः प्रत्यक्षो भवतीत्यपि श्रद्धामात्रमर्थप्रकाशकविज्ञानस्य प्राकट्याभावे तेनार्थप्रकटीकरणासम्भवात्[4] प्रदीपवदन्यथासन्तानान्तरवर्तिनोपि[5] ज्ञानादर्थप्राकट्यप्रसङ्गः[6]। चक्षुरादिवत्तस्य प्राकट्याभावेप्यर्थे प्राकट्यं घटेतेत्यप्यसमीचीनं चक्षुरादेरर्थप्रकाशकत्वासम्भवात्। तत्प्रकाशकज्ञानहेतुत्वात् खलूपचारेणार्थप्रकाशकत्वम्। कारणस्य[7] चाज्ञातस्यापि[8] कार्ये व्यापाराविरोधो ज्ञापकस्यैवाज्ञातस्य ज्ञापकत्वविरोधान्नाज्ञातं ज्ञापकं नामेत्यखिलैः परीक्षादक्षैरभ्युपगमात्[9]। प्रमातुरात्मनो ज्ञापकस्य स्वयं प्रकाशमानस्योपगमादर्थे प्राकट्यसम्भवे[10] करणज्ञानकल्पनावैफल्यमित्युक्तम्। नापि ज्ञानधर्मोऽस्य[11] सर्वथा परोक्षतयोपगमात्[12]। यत्खलु[13] सर्वथा परोक्षं तन्न प्रत्यक्षताधर्माधारो यथाऽदृष्टादि। सर्वथापरोक्षं[14] च परैरभ्युपगतं ज्ञानमिति[15]। कुतश्चैवं वादिनो[16] ज्ञानसद्भावसिद्धिः प्रत्यक्षादनुमानादेर्वा? न तावत्प्रत्यक्षात्तस्यातद्विषयतयोपगमात्[16]। यद्यद्विषयं न भवति न तत्तद्व्यवस्थापकम्। यथास्मादृक्प्रत्यक्षं परमाण्वाद्यविषयं न तद्व्यवस्थापकम्। ज्ञानाविषयं च प्रत्यक्षं परैरभ्युपगतमिति[17]। नाप्यनुमानात्तदविनाभाविलिङ्गाभावात्। तद्धि अर्थज्ञप्तिरिन्द्रियार्थौ वा तत्सहकारिप्रगुणं[18][19] मनो वा? अर्थज्ञप्तिश्चेत्सा किं ज्ञानस्वभावार्थस्वभावा[20] वा? यदि ज्ञानस्वभावा तदाऽसिद्धत्वात्तस्याः[21] कथमनुमापकत्वम्। न खलु ज्ञानस्वभावाविशेषेपि ज्ञप्तिः प्रत्यक्षा न करणज्ञानमित्यत्र[22] व्यवस्थानिबन्धनं पश्यामोऽन्यत्र महामोहात्[23]। शब्दमात्रभेदाच्च[24] सिद्धासिद्धत्वभेदः[25] स्वेच्छापरिकल्पितोऽर्थस्याभिन्नत्वात्[26]। ज्ञानत्वेन[27] हि प्रत्यक्षताविरोधे ज्ञप्तावपीयं न स्यादविशेषात्[28]। अथार्थस्वभावा ज्ञप्तिस्तदार्थप्राकट्यं सा। न चैतदर्थग्राहकविज्ञानस्यात्माधिकरणत्वेनापि[29][30] प्राकट्याभावे[31] घटते पुरुषान्तरज्ञानादप्यर्थप्राकट्यप्रसङ्गात्[32]। आत्माधिकरणत्वपरिज्ञानाभावे[33] च ज्ञानस्य[34] ज्ञानेन ज्ञातोप्यर्थः नात्मानुभवितृकत्वेन[35] ज्ञातो भवेन्मया[36] ज्ञातो ऽयमर्थ इति। अर्थगतप्राकट्यस्य सर्वसाधारणत्वाच्चात्मान्तरबुद्धेरप्यनुमानं[37] स्यात्। यद्बुद्ध्या[38] यस्यार्थः प्रकटीभवति तद्बुद्धिमेवासौ ततोऽनुमिमीते[39][40] नात्मान्तरबुद्धिमित्यप्यसारं बुद्ध्यात्मनोरप्रत्यक्षतै-[41]

---

१ सन्दिग्धानैकान्तिकत्वमनेन वाक्येनार्थधर्मत्वादित्येतस्य हेतो ॥ २ करणज्ञानेन ॥ ३ करण ॥ ४ ज्ञान नार्थं प्रकटयति स्वयमप्रत्यक्षत्वात्परमाण्वादिवत् ॥ ५ करणज्ञान प्रत्यक्षमर्थप्रकाशकत्वात्प्रदीपवत् ॥ ६ अ
(प्र) त्यक्षादपि ज्ञानादर्थप्राकट्ये ॥ ७ पुरुषान्तर ॥ ८ स्वस्य ॥ ९ उभयत्रापि परोक्षत्वाविशेषात् ॥ १० कारकस्य ॥ ११ किंच ॥ १२ करणज्ञान न प्राकट्यधर्माधिकरण सर्वथा परोक्षतयोपगमात् ॥ १३ करणम् ॥ १४ सर्वथा
परोक्षकरणज्ञानमित्येवंवादिन ॥ १५ करण ॥ १६ वीत प्रत्यक्ष करणज्ञानाव्यवस्थापक तदविषयत्वादिति ॥ १७ मीमासके ॥ १८ वस ॥ १९ एकाग्रम् ॥ २० करणज्ञान ॥ २१ अज्ञातासिद्धत्वम् ॥ २२ पक्षे ॥
२३ महद्ज्ञान वर्जयित्वा ॥ २४ अर्थज्ञप्ति करणज्ञानमिति ॥ २५ प्रत्यक्षाप्रत्यक्षभेद ॥ २६ ज्ञानलक्षणस्य ॥ २७ करणस्य ॥ २८ ज्ञानत्वेन प्रत्यक्षताया ॥ २९ करणज्ञानस्य ॥ ३० जीव अहमधिकरणमस्य ज्ञानस्येति
परिज्ञानाभावे ॥ ३१ अत्यन्तपरोक्षत्वात् ॥ ३२ स्व ॥ ३३ किंच ॥ ३४ ज्ञानस्य ॥ ३५ जीवेन ॥ ३६ किंच ॥ ३७ सर्वेषा करणज्ञानमस्ति अर्थप्राकट्यान्यथानुपपत्ते ॥ ३८ ता ॥ ३९ अर्थप्राकट्यात् ॥ ४० जानाति ॥
४१ करणज्ञान ॥

कान्ते यद्बुद्ध्या[1] यस्यार्थः प्रकटीभवतीत्यस्यैवान्धपरम्परया व्यवस्थापयितुमशक्तेः । प्रत्यक्षत्वे चात्मनः सिद्धं विज्ञानस्य स्वार्थव्यवसायात्मकत्वम् । आत्मैव हि स्वार्थ-ग्रहणपरिणतो[2] जानातीति ज्ञानमिति कर्तृसाधनज्ञानशब्देनाभिधीयते । इन्द्रियार्थौ[3] लिङ्गमित्यप्यनालोचिताविधानं[4] तयोर्विज्ञानसद्भावाविनाभावासिद्धेः । योग्यदेशे स्थितस्य प्रतिपत्तुरिन्द्रियार्थसद्भावेऽप्यन्यत्र[6] गतमनसो विज्ञानाभावात् । तत्सिद्धौ चेन्द्रियस्यातीन्द्रियत्वेनार्थस्यापि ज्ञानाऽप्रत्यक्षत्वेनासिद्धेः । कथं तथापि हेतुत्वं तयोः ? सिद्धौ वा न साध्यज्ञानकाले ज्ञानान्तरात्तत्सिद्धिर्युगपद् ज्ञानानुत्पत्त्यभ्युपगमात् । उत्तरकालीनज्ञानात्तत्सिद्धौ तदा साध्यज्ञानस्याभावात्कस्यानुमानम् ? उभयविषयस्यैकज्ञानस्यानभ्युपगमादनवस्थाप्रसङ्गाच्चानयोरसिद्धिः । इन्द्रियार्थसहकारि[14]प्रगुणं मनो लिङ्गमित्यप्यपरीक्षिताभिधानं तत्सद्भावासिद्धेः । युगपद् ज्ञाना-नुत्पत्तेस्तत्सिद्धिः । तथा हि आत्मनो मनसा तस्येन्द्रियैः सम्बन्धे ज्ञानमुत्पद्यते । यदा चास्य चक्षुषा सम्बन्धो न तदा शेषेन्द्रियैरतिसूक्ष्मत्वात् इत्यप्यसङ्गतं दीर्घशष्कुलीभक्षणादौ युगपद्रूपादिज्ञानपञ्चकोत्पत्तिप्रतीतेरश्वविकल्पकाले गोनिश्चयाच्च तदसिद्धेः । न चात्र क्रमैकान्तकल्पना । प्रत्यक्षविरोधात् । किञ्चैवंवादिना युगपत्प्रतीतं येनावयवावयव्यादिव्यवहारः स्यात् ? घटपटादिकमिति चेन्नात्रापि तथा कल्पनाप्रसङ्गात् । किञ्चातिसूक्ष्मस्यापि मनसो नयनादीनामन्यतमेन सन्निकर्ष-समये रूपादिज्ञानवन्मानसं सुखादिज्ञानं किन्न स्यात् । सम्बन्धसम्बन्धसद्भावात् । तथाविधादृष्टस्याभावाच्चेददृष्टकृता तर्हि युगपद् ज्ञानानुत्पत्तिस्तदेवानुमा-पयेन्न मनः । किञ्च युगपद् ज्ञानानुत्पत्तेर्मनःसिद्धिस्ततश्चास्याः प्रसिद्धिरित्यन्योन्याश्रयः । चक्रकप्रसङ्गश्च विज्ञानसिद्धिपूर्विका हि युगपद् ज्ञानानुत्पत्तिसिद्धिस्तत्सि-द्धिर्मनःपूर्विकेति । तस्मात्तत्सहकारि प्रगुणं मनो लिङ्गमित्यप्यसिद्धम् । अस्तु वा किञ्चिल्लिङ्गं तथापि ज्ञानस्याप्रत्यक्षतैकान्ते तत्सम्बन्धा सिद्धिः । न चासिद्धं सम्ब-न्धलिङ्गं कस्यचिद्गमकमतिप्रसङ्गात् । ततः परोक्षतैकान्ताग्रहग्रहाभिनिवेशपरित्यागेन ज्ञानं स्वव्यवसायात्मकमर्थज्ञप्तिनिमित्तत्वादात्मवदित्यभ्युपगन्तव्यम् । नेत्रा-लोकादिनानेकान्त इत्यप्ययुक्तं तस्योपचारतोऽर्थज्ञप्तिनिमित्तत्वसमर्थनात् परमार्थतः प्रमातृप्रमाणयोरेव तन्निमित्तत्वोपपत्तेरित्यलमतिप्रसङ्गेन ॥

एतेनात्माऽप्रत्यक्षः कर्मत्वेनाप्रतीयमानत्वात्करणज्ञानवदित्याचक्षाणः प्रभाकरोऽपि प्रत्याख्यातः । प्रमितेः कर्मत्वेनाप्रतीयमानत्वेऽपि प्रत्यक्षत्वाभ्युपगमात् । तस्याः

---

१ ता ॥ २ ज्ञान ॥ ३ द्वितीयविकल्पस्य ॥ ४ करणज्ञानस्य ॥ ५ भा (तृतीया) ॥ ६ कस्मिंश्चिद्विषये ॥ ७ करणज्ञानस्य सर्वथा परोक्षत्वात् ॥ ८ इन्द्रियार्थयो ॥ ९ असिद्धत्वेपि ॥ १० करणज्ञान प्रति ॥ ११ करणज्ञाने ॥ १२ इन्द्रियार्थं ॥ १३ इन्द्रियार्थालिङ्गात्करणज्ञानसिद्धिरिन्द्रियार्थयोरपि सिद्धि कस्मादपरकरणज्ञानात्तस्यापि अपरेन्द्रियार्थादित्यनवस्था ॥ १४ एकाग्रम् ॥ १५ मनस ॥ १६ चशब्द आधिक्ये ॥ १७ दीर्घशष्कुलीभक्षणादौ युगपद् ज्ञान नोत्पद्यते इत्येववादिना ॥ १८ अत्राक्षेपार्थे किमिति पूर्वेण सम्बन्ध ॥ १९ क्रमैकान्त ॥ २० मनसा सम्बद्धे आत्मनि सुखादे समवायसम्बन्ध सम्बन्धसम्बन्ध ॥ २१ युगपज्ज्ञानोत्पादकस्य ॥ २२ करणज्ञान कर्म ॥ २३ करणज्ञान ॥ २४ ज्ञप्ति ॥ २५ विज्ञानसिद्धि ॥२६ इन्द्रियार्थं ॥ २७ अविनाभाव ॥ २८ भा ॥ २९ लिङ्गस्य ॥ ३० अज्ञात ॥ ३१ साध्यस्य ॥ ३२ अन्यथा ॥ ३३ दुराग्रह ॥ ३४ करणज्ञान ॥ ३५ साध्यसम स्यात् सज्ञप्तिनिमित्तत्वाशङ्कात ॥ ३६ कुठारेण व्यभिचार ॥ ३७ मीमांसकभाट्टकरणज्ञानदूषणकथनेन ॥ ३८ करणज्ञानस्य परोक्षत्वनिराकरणपरेण ग्रन्थेन ॥ ३९ ब्रुवन् ॥४० दृद्ध ॥ ४१ अर्थपरिच्छित्ते ॥ ४२ प्राभाकरेण ॥

क्रियात्वेन प्रतिभासनात्प्रत्यक्षत्वे करणज्ञानात्मनोः करणत्वेन कर्तृत्वेन च प्रतिभासनात्प्रत्यक्षत्वमस्तु । न चाभ्यां तस्याः सर्वथा भेदोऽभेदो वा मतान्तरानुषङ्गात् । कथञ्चिदभेदे सिद्धं तयोः कथञ्चित्प्रत्यक्षत्वं प्रत्यक्षादभिन्नयोः सर्वथा परोक्षत्वविरोधात् । ननु शाब्दी प्रतिपत्तिरेषा घटमहमात्मना वेद्मीति नानुभवप्रभवा तस्याः सदविनाभावाभावादन्यथाङ्गुल्यग्रे हस्तियूथशतमास्ते इत्यादिप्रतिपत्तेरप्यनुभवत्वप्रसङ्गस्तत्कथमतः प्रमात्रादीना प्रत्यक्षताप्रसिद्धिरित्याह—

शब्दानुच्चारणेपि स्वस्यानुभवनमर्थवत् । यथैव हि घटस्वरूपप्रतिभासो घटशब्दोच्चारणमन्तरेणापि प्रतिभासते । तथा प्रतिभासमानत्वाच्च न शाब्दस्तथा प्रमात्रादीनां स्वरूपस्य प्रतिभासोपि तच्छब्दोच्चारणं विनापि प्रतिभासते । तस्माच्च न शाब्दः । तच्छब्दोच्चारणं पुनः प्रतिभातप्रमात्रादिस्वरूपप्रदर्शनपरं नाऽनालम्बनमर्थवत् । अन्यथा सुख्यहमित्यादिप्रतिभासस्याप्यनालम्बनत्वप्रसङ्गः । ननु यथा सुखादिप्रतिभासः सुखादिसंवेदनस्याप्रत्यक्षत्वेप्युपपन्नस्तथार्थसंवेदनस्याप्रत्यक्षत्वेप्यर्थप्रतिभासो भविष्यतीत्यप्यविचारितरमणीयं सुखादेः संवेदनादर्थान्तरस्वभावस्याप्रतिभासनादाह्लादनाकारपरिणतज्ञानविशेषस्यैव सुखत्वात् । तस्य चाध्यक्षत्वात् । तस्यानध्यक्षत्वेऽत्यन्तापरोक्षज्ञानैर्ग्राह्यत्वे चानुग्रहोपघातकारित्वासम्भवोऽन्यथा परकीयसुखादीनामप्यात्मनोऽत्यन्तापरोक्षज्ञानग्राह्याणां तत्कारित्वप्रसङ्गः । ननु पुत्रादिसुखाद्यप्रत्यक्षत्वेपि तत्सद्भावोपलम्भमात्रादात्मनोऽनुग्रहाद्युपलभ्यते । तत्कथमयमेकान्त इत्यप्यशिक्षितलक्षितम् । नहि तत्सुखाद्युपलम्भमात्रात्सौमनस्यादिजनिताभिमानिकसुखपरिणतिमन्तरेणात्मनोऽनुग्रहादिसम्भवः शत्रुसुखाद्युपलम्भाद्दुश्चेष्टितादिना परित्यक्तपुत्रसुखाद्युपलम्भाच्च तत्प्रसङ्गात् । विग्रहादिकमतिसन्निहितमप्याभिमानिकसुखमन्तरेणानुग्रहादिकं न विदधाति किमङ्ग पुनरतिव्यवहिताः पुत्रसुखादयः । अस्तु नाम सुखादेः प्रत्यक्षता सा तु प्रमाणान्तरेण न स्वतः स्वात्मनि क्रियाविरोधादित्यन्यस्तस्यापि प्रत्यक्षविरोधः । न खलु घटादिवत्सुखाद्यविदितस्वरूपं पूर्वमुत्पन्नं पुनरिन्द्रियेण सम्बध्यते ततो ज्ञानं 'ग्रहणं चेति लोके प्रतीतिः' । प्रथममेवेष्टानिष्टविषयानुभवानन्तरं स्वप्रकाशात्मनोऽस्योदयप्रतीतेः । स्वात्मनि क्रियाविरोधं चानन्तरमेव विचारयिष्यामः । यदि चार्थान्तरभूतप्रमाणप्रत्यक्षाः

१ सति ॥ २ कर्मत्वेनाप्रतीयमानयोरपि ॥ ३ क्रिय ॥ ४ नैयायिक ॥ ५ बौद्ध ॥ ६ अन्यथा ॥ ७ योगर्गागतयो परिग्रह ॥ कर्मत्वेन परोक्षत्व कर्तृत्वेन करणत्वेन प्रत्यक्षत्व करणज्ञानयो ॥ ८ प्रमितिरूपात् ॥ ९ करणज्ञानात्मनो ॥ १० भा ॥ ११ अहमात्मना ॥ १२ स्वसंवेदनप्रत्यक्ष ॥ १३ अनुभवेन सह ॥ १४ प्रतीतिरागमप्रतिपन्नप्रतीतिवत् ॥ १५ कारणात् ॥ १६ शाब्द्या प्रतिपत्ते श(न)शनात् ॥ १७ ता ॥ १८ अय घट ॥ १९ अनुमानसद्भावाच्च ॥ २० सुखादिवत् ॥ २१ निर्विषय ॥ २२ रैप् (सप्तमी) ॥ २३ शब्दाग्रस्य ॥ २४ शब्दोच्चारणपूर्वकत्वात् ॥ २५ भाट ॥ २६ करणज्ञान प्रत्यक्षम र्थप्रकाशनिमित्तत्वात्प्रदीपादानवद्वा ॥ २७ अर्थज्ञप्तिनिमित्तत्वादित्यस्य साधनस्यानैकान्तिकत्वम् ॥ २८ करणज्ञानस्य ॥ २९ परिच्छित्ति ॥ ३० दु नारि ॥ ३१ करणज्ञानस्य ॥ ३२ करणज्ञानस्य ॥ ३३ भिन्न ॥ ३४ करण ॥ ३५ दु नास्वस्य ॥ ३६ स्वस्य ॥ ३७ अनैकान्तिकत्व ॥ ३८ प्रमाणमात्रात् ॥ ३९ स्वस्य ॥ ४० पितु ॥ ४१ कथ ॥ ४२ वैमनस्य ॥ ४३ आत्मन आत्मनि ॥ ४४ स्वस्य ॥ ४५ तातस्य ॥ ४६ अन्यथा ॥ ४७ अनेकान्तिकत्वपरिहार कृत ॥ ४८ सुचेष्टित ॥ ४९ शरीर ॥ ५० उदासीनपुरुषस्य ॥ ५१ पुत्र ॥ ५२ विशेषे ॥ ५३ नयायिको वैशेषिको वा ॥ ५४ अज्ञात ॥ ५५ पश्चात् ॥ ५६ इन्द्रियसम्बन्धात् ॥ ५७ करणरूपमु पद्यते ॥ ५८ ज्ञानेन ॥ ५९ परिच्छित्तिरूप ॥ ६० स्वक्चन्दनादि ॥ ६१ अध्यादि ॥ ६२ सुखादे ॥ ६३ परिच्छित्तिलक्षणा ॥ ६४ अग्रे ॥ ६५ क्रिया ॥ ६६ सुखादेर्भिन्नप्रमाणात् ॥

सुखादयस्तर्हि तदपि प्रमाणं प्रमाणान्तरप्रत्यक्षमित्यनवस्था। विभिन्नप्रमाणग्राह्याणां चानुग्रहादिकारित्वविरोधः । न हि स्त्रीसङ्गमादिभ्यः प्रतीयमानाः सुखादयोऽन्यस्यात्मनस्तत्कारिणो दृष्टाः । ननु परकीयसुखादीनामनुमानगम्यत्वान्नात्मनोऽनुग्रहादिकारित्वम् । आत्मीयानां प्रत्यक्षाधिगम्यत्वात्तत्कारित्वमित्यप्यसारं योगिनोपि तत्कारित्वप्रसङ्गात् । प्रत्यक्षाधिगम्यत्वाविशेषात् । आत्मीयसुखादीनामेव तत्कारित्वं नान्येषामित्यपि फल्गुप्रायमत्यन्तभेदेऽर्थान्तरभूतप्रमाणग्राह्यत्वे चात्मीयेतरभेदस्यैवासम्भवात् । आत्मीयत्वं हि तेषां तद्गुणत्वात्तत्कार्यत्वाद्वा स्यात्तत्र समवायाद्वा तदाधेयत्वाद्वा तददृष्टनिष्पाद्यत्वाद्वा । न तावत्तद्गुणत्वात्तेषामात्मनो व्यतिरेकैकान्ते तस्यैव ते गुणा नाकाशादेरन्यात्मनो वेति व्यवस्थापयितुमशक्तेः । तत्कार्यत्वाच्चेत्कुतस्तत्कार्यत्वं तस्मिन् सति भावादाकाशादौ तत्प्रसङ्गः । तस्य निमित्तकारणत्वेन व्यापाराददोषश्चेदात्मनोपि तथा तदस्तु । समवायिकारणमन्तरेण कार्यानुत्पत्तेरात्मनस्तत्कल्प्यते गगनादेस्तु निमित्तकारणत्वमित्यप्ययुक्तं विपर्ययेणापि तत्कल्पनाप्रसङ्गात् । प्रत्यासत्तेरात्मैव समवायिकारणं चेन्न देशकालप्रत्यासत्तेर्नित्यव्यापित्वेनात्मवदन्यत्रापि समानत्वात् । योग्यतापि कार्ये सामर्थ्यं तत्सामर्थ्यस्याप्यात्मनोऽत्यन्तभेदे तस्यैवेदं तच्चाकाशादेरप्यस्तीति । अथात्मन्यात्मनस्तज्जननसामर्थ्यं नान्यस्येत्यप्ययुक्तमत्यन्तभेदे तथा तज्जननविरोधात् । तदभावेऽभावात्तच्चेन्न नित्यव्यापिनान्यस्येति किङ्कृतोयं विभागः । समवायादेश्च निषेत्स्यमानत्वान्नियामकत्वायोगः । तत्रान्वयमात्रेण सुखादीनामात्मकार्यत्वम् । तेन तेषां तत्रैव समवायासम्भवात् । तदाधेयत्वाद्वाभ्यां तस्याभावासम्भवात् । तत्र समवायादित्यप्यसत् तस्यात्रैव निराकरिष्यमाणत्वात् । सर्वत्राविशेषाच्च । न तावत्समवायो दत्तोत्तरत्वात् । नापि तादात्म्यं मतान्तरानुषङ्गात् । तेषामात्मनोऽत्यन्तभेदे सकलात्मनां गगनादीनां च व्यापित्वे तत्रैवोत्कलितत्वमित्यपि श्रद्धामात्रगम्यम् । अथाऽदृष्टान्नियमो यद्ध्यात्मीयाऽदृष्टनिष्पाद्यं सुखं तदात्मीयम्चेत्किमिदं तदाधेयत्वं नाम । तत्र समवायस्तादात्म्यं वा तत्रोत्कलितत्वमात्रं वा । न तावत्समवायो दत्तोत्तरत्वात् । नापि तादात्म्यं मतान्तरानुषङ्गात् ।

---

१ सुखादीना ॥ २ किञ्च ॥ ३ उपघात ॥ ४ स्वस ॥ ५ परकीयसुखादिवद्दृष्टान्त ॥ ६ देवदत्तस्य पुरुषस्य ॥ ७ यज्ञदत्तस्य स्वस्य ॥ ८ जीवन्मुक्तस्य ॥ ९ आत्मन सकाशात्सुखादीनाम् ॥ १० परकीय ॥
११ देवदत्तात्म ॥ १२ देवदत्तात्म ॥ १३ देवदत्तात्मनि ॥ १४ देवदत्तात्म ॥ १५ देवदत्तात्म ॥ १६ भा ॥ १७ भेदेकान्ते ॥ १८ देवदत्तात्मन ॥ १९ सुखादय ॥ २० यज्ञदत्तात्मन ॥ २१ देवदत्तात्म ॥ २२ देवदत्ते सति ॥ २३ सुखादय आकाशकार्यत्वादाकाशादीया स्युराकाशादौ सति भावात् ॥ २४ उपादानकारण ॥ २५ आत्मा निमित्तकारण गगनादि समवायिकारण ॥ २६ सुखादौ ॥ २७ शक्ति कार्योत्पादिका ॥ २८ किञ्च ॥
२९ सुखादि ॥ ३० उत्पाद ॥ ३१ आत्मन सकाशात्सुखादिक सर्वथा भिन्न ॥ ३२ सुखादि ॥ ३३ देवदत्तस्य ॥ ३४ केन कृत ॥ ३५ देवदत्तात्मनि सामर्थ्यस्य ॥ ३६ अग्रे ॥ ३७ तस्मिन् सति भावात् ॥ ३८ देवदत्तात्म ॥
३९ सुखादीना ॥ ४० व्यतिरेक ॥ ४१ सुखादि ॥ ४२ देवदत्तसुखादीनाम् ॥ ४३ देवदत्तात्मन ॥ ४४ आत्मन ॥ ४५ देवदत्तात्मनि ॥ ४६ ग्रन्थे ॥ ४७ स्यादावर्थे ॥ ४८ समवायस्य ॥ ४९ कारणेन ॥ ५० सुखादीना ॥
५१ स्वादौ ॥ ५२ देवदत्तात्मन्येव ॥ ५३ देवदत्तात्म ॥ ५४ स्वादौ ॥ ५५ नस ॥ ५६ देवदत्तात्म ॥ ५७ देवदत्तात्मनि ॥ ५८ सुखादीना ॥ ५९ देवदत्तात्मना सह ॥ ६० देवदत्तात्मनि ॥ ६१ आविर्भूतत्व ॥ ६२ जैने ॥
६३ अन्यथा ॥ ६४ जैनमत ॥ ६५ दिक्कालादि ॥ ६६ देवदत्तात्मनि ॥ ६७ पुण्यादि ॥

न्यत्तु परकीयमित्यप्यसारमदृष्टस्याप्यात्मीयत्वासिद्धेः । समवायादेस्तन्नियामकत्वेऽयुक्तदोषानुषङ्गः । यत्र यददृष्टं सुखं दुःखं चोत्पादयति तत्तस्यत्येपि मनोरथमात्रं परस्पराश्रयानुषङ्गात् । अदृष्टनियमे सुखादेर्नियमस्तन्नियमाच्चादृष्टस्येति । यस्य श्रद्धयोपगृहीतानि द्रव्यगुणकर्माणि यददृष्टं जनयन्ति तत्तस्येत्यपि श्रद्धामात्रं तस्या अप्यात्मनोऽत्यन्तभेदे प्रतिनियमासिद्धेः । यस्यादृष्टेनासौ जन्यते सा तस्येत्यप्यन्योन्याश्रयादयुक्तम् । द्रव्यादौ यस्य दर्शनस्मरणादीनि श्रद्धामाविर्भावयन्ति तस्य सेत्यप्युक्तिमात्रं दर्शनादीनामपि प्रतिनियमासिद्धेः । समवायात्तेषां श्रद्धायाश्च प्रतिनियमः । इत्यप्यसमीक्षिताभिधानं तस्य षट्पदार्थपरीक्षायां निराकरिष्यमाणत्वात् । एतेनैतदपि प्रत्याख्यातं, ज्ञानं ज्ञानान्तरवेद्यं प्रमेयत्वात्पटादिवत् सुखसंवेदनेन हेतोर्व्यभिचारान्महेश्वरज्ञानेन च । तस्य ज्ञानान्तरावेद्यत्वेपि प्रमेयत्वात् । तस्यापि ज्ञानान्तरप्रत्यक्षत्वेऽनवस्था तस्यापि ज्ञानान्तरेण प्रत्यक्षत्वात् । ननु नानवस्था नित्यज्ञानद्वयस्येश्वरे सदासम्भवात्तत्रैकेनार्थजातस्य द्वितीयेन पुनस्तज्ज्ञानस्य प्रतीतेर्नापरज्ञानकल्पनया किञ्चित्प्रयोजनं तावतैवार्थसिद्धेरित्यप्यसमीचीनं समानकालयोर्द्रव्यभाविसजातीयगुणद्वयस्यान्यत्रानुपलब्धेरत्रापि तत्कल्पनाऽसम्भवात् । संभवे वा तद्द्वितीयज्ञानं प्रत्यक्षमप्रत्यक्षं वा । अप्रत्यक्षं चेत् कथं तेनाद्यज्ञानप्रत्यक्षतासम्भवः । अप्रत्यक्षादप्यतस्तत्सम्भवे प्रथमज्ञानस्याऽप्रत्यक्षत्वेऽप्यर्थप्रत्यक्षतास्तु । प्रत्यक्षं चेत्स्वतो ज्ञानान्तराद्वा । स्वतश्चेदाद्यस्यापि स्वतः प्रत्यक्षत्वमस्तु । ज्ञानान्तराच्चेत्सैवानवस्था । आद्यज्ञानाच्चेदन्योन्याश्रयः । सिद्धे ह्याद्यज्ञानस्य प्रत्यक्षत्वे ततो द्वितीयस्य प्रत्यक्षतासिद्धिस्तत्सिद्धौ चाद्यस्येति । किञ्चानयोर्ज्ञानयोर्महेश्वराद्भेदे कथं तदीयत्वसिद्धिः समवायादेरग्रे दत्तोत्तरत्वात् । तदाधेयत्वात्तस्येत्युक्तम् । तदाधेयत्वं च तत्र समवेतत्वं तच्च केन प्रतीयते । न तावदीश्वरेण तेनात्मनो ज्ञानद्वयस्य चाग्रहणेऽत्रेदं समवेतमिति प्रतीत्ययोगात् । तस्य तत्र

---

१ सुखादय आत्मीया आत्मीयादृष्टनिष्पाद्यत्वात् ॥ २ पुन ॥ ३ आत्मनि ॥ ४ आत्मन ॥ ५ अस्येदमदृष्टमिति ॥ ६ आत्मन ॥ ७ विश्वासेन ॥ ८ स्वीकृतानि ॥ ९ श्रद्धा अस्येति ॥ १० श्रद्धाया नियमे अदृष्टनियमस्तस्मिस्तन्नियम ॥ ११ आत्मन ॥ १२ प्रत्यक्ष ॥ १३ प्रत्यभिज्ञान ॥ १४ दर्शनादीनाम् ॥ १५ सुखदु खादे स्वसंविदितत्वसमर्थनपरेण ग्रन्थेन ॥ १६ यौगमतमपि (तदेव यौगमत दर्शयति ज्ञानमित्यादिना) ॥ १७ सुखसंवेदन ज्ञान भवति न तु ज्ञानान्तरवेद्य ॥ १८ ॥ भा ॥ १९ द्वयोर्ज्ञानयोर्मध्ये ॥ २० आद्येन ॥ २१ समूहस्य ॥ २२ प्रयोजनम् ॥ २३ कथमनवस्था ॥ २४ गुणद्वयानुपलब्धेरित्युक्ते मातुलिङ्गे रूपरसाभ्या व्यभिचारस्तत्र तदुपलब्धेरत सजातीयेत्युक्त तथापि क्रमेणात्मनि सुखाद्यगुणद्वयस्योपलब्धेरत समानकालेत्युक्त तथापि नानापुरुषरुच्चार्यमाणशब्दाना समानकालसजातीयगुणत्वेन आकाशे उपलब्धेरतो यावद्द्रव्यभावीत्युक्त न चाकाशस्थितिपर्यन्त शब्दानामनवस्थान तेषामनित्यत्वेनोपगमात् त्रिक्षणस्थायित्वाच्च ॥ २५ यावद्द्रव्य तावद्भावीति ॥ २६ आत्मघटादौ ॥ २७ ईश्वरो वीतगुणद्वयाधारो न भवति द्रव्यत्वात्पटवत् ॥ २८ तन्मतप्रक्रियापेक्षया ॥ २९ ईश्वरस्य ॥ ३० प्रथममेव ॥ ३१ ईप् ॥ ३२ तदाधेयत्व समवाय तादात्म्य तन्नोत्कलितत्वमित्यादौ दूषणम् ॥ ३३ किंच ॥ ३४ ईश्वरे ॥ ३५ ईश्वरे समवेत (समवायेन सम्बद्ध) ज्ञानद्वय ॥ ३६ ज्ञानविकलो गृह्णाति ज्ञानसहितो वा । ज्ञानविकलश्चेत् । ज्ञानद्वयकल्पनानर्थक्यमात्मनैवार्थज्ञानस्य ग्राहकोस्तु । ज्ञानसहितश्चेत् । तदपि ज्ञानमात्मनि समवेतमिति कुतो जानाति आत्मैव ज्ञान वेत्यादिविचार ॥

नेष्यते । किञ्च ज्ञानान्तरापेक्षया तत्र कर्मत्वविरोधः स्वरूपापेक्षया वा प्रथमपक्षे महेश्वरस्यासर्वज्ञत्वप्रसङ्गस्तज्ज्ञानेन तस्याऽवेद्यत्वात् । आत्मसमवेतानन्तरज्ञानवेद्यत्वाभावे च स्वसमवेतानन्तरज्ञानवेद्यमर्थज्ञानमिति ग्रन्थविरोधो मीमांसकमतप्रवेशश्च स्यात् । ज्ञानान्तरापेक्षया तस्य कर्मत्वाविरोधे च स्वरूपापेक्षयाप्यविरोधोऽस्तु सहस्रकिरणवत्स्वपरोद्योतनस्वभावत्वात्तस्य । कर्मत्ववच्च ज्ञानक्रियातोऽर्थान्तरस्यैव करणत्वदर्शनात्तस्यापि तत्र विरोधोऽस्तु विशेषाभावात् । तथा च ज्ञानेनाहमर्थं जानामीत्यत्र ज्ञानस्य करणतया प्रतीतिर्न स्यात् । विशेषणज्ञानस्य करणत्वाद्विशेष्यज्ञानस्य तत्फलत्वेन क्रियात्वात्तयोर्भेद एवेत्यपि श्रद्धामात्रं विशेषणज्ञानेन विशेष्यमहं जानामीति प्रतीत्यभावात् । विशेषणज्ञानेन हि विशेषणं विशेष्यज्ञानेन च विशेष्यं जानामीत्यखिलजनोऽनुमन्यते । किञ्चानयोर्विषयो भिन्नोऽभिन्नो वा । प्रथमपक्षे विशेषणविशेष्यज्ञानद्वयपरिकल्पना व्यर्थाऽर्थभेदाभावाद्धारावाहिविज्ञानवत् । द्वितीयपक्षे चानयोः प्रमाणफलव्यवस्थाविरोधोऽर्थान्तरविषयत्वाद् घटपटज्ञानवत् । न खलु घटज्ञानस्य पटज्ञानं फलम् । न चान्यत्र व्यापृते विशेषणज्ञाने ततोऽर्थान्तरे विशेष्ये परिच्छित्तिर्युक्ता । न हि खदिरादावुत्पतननियतनव्यापारवति परशौ ततोऽन्यत्र धवादौ छिदिक्रियोत्पद्यते इत्येतत्प्रातीतिकम् । लिङ्गज्ञानस्यानुमानज्ञाने व्यापारदर्शनादत्राप्यविरोधं इत्यप्यसम्भाव्यं समानेन्द्रियग्राह्ये योग्यदेशावस्थितेऽर्थे घटपटद्वत्क्रमभावेनात्र ज्ञानद्वयानुपलब्धेरेकमेव हि तयोर्ग्राहकं ज्ञानमनुभूयते । न चात्र विषयभेदाज्ज्ञानभेदकल्पना । समानगुणानां युगपद्भावानभ्युपगमात् । क्रमभावे च प्रतीतिविरोधः सर्वज्ञाभाटादिवदेकस्यापि ज्ञानस्य व्यापाराविरोधात् । न च घटादावपि ज्ञानभेदः समानगुणानां युगपद्भावानभ्युपगमात् । क्रमभावे च प्रतीतिविरोधः सर्वज्ञाभावश्च युगपद्भावाभ्युपगमे चानयोः सव्येतरगोविषाणवत्कार्यकारणभावाभावः । विशेषणविशेष्यज्ञानयोः क्रमभावेप्याशुवृत्त्या यौगपद्याभिमानो यथोत्पलपत्रशतच्छेद इत्यप्यसङ्गतं निखिलभावानां क्षणिकत्वप्रसङ्गात्सर्वत्रैकत्वाध्यवसायस्याशुवृत्तिप्रवृत्तत्वात् । प्रत्यक्षप्रतिपन्नस्यास्य दृष्टान्तमात्रेण निषेधविरोधाच्च । अन्यथा शुक्ले शङ्खे पीतविभ्रमदर्शनात्सुवर्णेपि तद्विभ्रमः स्यात् । मूर्तस्य सूच्यग्रस्योत्तराधर्यस्थितमुत्पलपत्रशतं युगपत्प्राप्तुमशक्तेः । क्रमच्छेदेप्याशुवृत्त्या

---

१ परेण ॥ २ ज्ञानक्रियाया ॥ ३ असदादिज्ञानस्य ॥ ४ प्रथमज्ञान ॥ ५ द्वितीयज्ञानेन ॥ ६ किञ्च ॥ ७ योगस्य ॥ ८ करणज्ञान न प्रत्यक्ष कर्मत्वेनाप्रतीयमानत्वात् ॥ ९ ज्ञानान्तरेणाप्यप्रत्यक्षत्वात् ॥ १० स्वरूपापेक्षया कर्मत्वविरोध ब्रूम । ज्ञानान्तरापेक्षया किं कर्मत्वविरोधोस्ति ॥ ११ परेणाङ्गीकृते ॥ १२ किञ्च ॥ १३ कुठारादे ॥ १४ ज्ञानाद्भिन्नस्य करणत्वस्याविशेषात्कर्मत्ववत् ॥ १५ ज्ञानकरणत्वविरोधे सति ॥ १६ करणज्ञानेन ॥ १७ पक्षे ॥ १८ लोके ॥ १९ करणज्ञानक्रियाज्ञानयो ॥ २० नीलादिज्ञानेन दण्डादिज्ञानेन वा ॥ २१ जानामि ॥ २२ उत्पलादिक दण्डीत्यादिक ॥ २३ ता ॥ २४ विशेषणज्ञानविशेष्यज्ञानयो ॥ २५ विशेषणज्ञानविशेष्यज्ञानयो ॥ २६ भिन्नविषयत्वात् ॥ २७ किञ्च ॥ २८ नीलादौ विशेषणे ॥ २९ सति ॥ ३० उत्पलादौ ॥ ३१ ज्ञान ॥ ३२ कथ ॥ ३३ सति ॥ ३४ धूमादिज्ञानस्य ॥ ३५ अग्न्यादिज्ञाने ॥ ३६ विशेष्यपरिच्छित्तौ ॥ ३७ विशेषणज्ञानव्यापारस्य ॥ ३८ लिङ्गलिङ्गिज्ञानस्य ॥ ३९ नीलोत्पलयोर्विशेषणविशेष्ययो ॥ ४० एक ॥ ४१ अग्न्यादि ॥ ४२ ज्ञानाना ॥ ४३ नैयायिकानामनभ्युपगमात् ॥ ४४ परे ॥ ४५ कृत्वा ॥ ४६ कल्पना ॥ ४७ कथ ॥ ४८ घटपटादिपदार्थे ॥ ४९ एकोयमित्यध्यवसाय ॥ ५० विशेषणविशेष्यज्ञानयौगपद्यस्य ॥ ५१ किञ्च ॥ ५२ अविरोधे ॥

न हि घटादिज्ञानज्ञानस्याध्यक्षत्वं सिद्धमितरेतराश्रयानुषङ्गात्[1]। मनःसिद्धौ हि तस्याध्यक्षत्वसिद्धिस्तत्सिद्धौ च सविशेषणहेतुसिद्धेर्मनःसिद्धिरिति[2]। विशेष्यासिद्धत्वं च। न खलु घटज्ञानाद्भिन्नमन्यज्ज्ञानं तद्ग्राहकमनुभूयते[3]। सुखादिसंवेदनेन[4] व्यभिचारश्च। तद्धि प्रत्यक्षत्वे सति ज्ञानं न तज्जन्यमिति। अस्यापि पक्षीकरणान्न दोष इत्ययुक्तं व्यभिचारविषयस्य पक्षीकरणे न कश्चिद्धेतुर्व्यभिचारी स्यात्। अनित्यः शब्दः प्रमेयत्वाद् घटवदित्यादेरप्यात्मादिना[5] न व्यभिचारस्तस्य पक्षीकृतत्वात्। प्रत्यक्षादिबाधोभयत्र[6] समाना। न हि घटादिवत्सुखाद्यविदितस्वरूपं पूर्वमुत्पन्नं पुनरिन्द्रियेण सम्बध्यते ततो ज्ञानं ग्रहणं चेति लोके प्रतीतिः। प्रथममेवेष्टानिष्टविषयानुभवानन्तरं स्वप्रकाशात्मनोऽस्योदयप्रतीतिः। स्वात्मनि क्रियाविरोधान्मिथ्येयं प्रतीतिः। न हि सुतीक्ष्णोपि खड्ग आत्मानं छिनत्ति सुशिक्षितोपि वा नटबटुः स्वं स्कन्धमारोहतीत्यप्यसमीचीनं स्वात्मन्येव क्रियायाः प्रतीतेः। स्वात्मा हि क्रियायाः स्वरूपं क्रियावदात्मा वा। यदि स्वरूपं कथं तस्यास्तत्र विरोधः स्वरूपस्याविरोधकत्वादन्यथा सर्वभावानां स्वरूपे विरोधान्निःस्वरूपत्वानुषङ्गः। विरोधस्य द्विष्ठत्वाच्च न क्रियायाः स्वात्मनि विरोधः॥ क्रियावदात्मा तस्याः स्वात्मेत्यप्यसङ्गतं क्रियावत्येव तस्याः प्रतीतेस्तत्र तद्विरोधासिद्धेरन्यथा सर्वक्रियाणां निराश्रयत्वं सकलद्रव्याणां चाऽक्रियत्वं स्यात्। न चैवम्। कर्मस्थायास्तस्याः कर्मणि कर्तृस्थायाश्च कर्तरि प्रतीयमानत्वात्। किञ्च तत्रोत्पत्तिलक्षणा क्रिया विरुध्यते। परिस्पन्दात्मिका धात्वर्थरूपा ज्ञप्तिरूपा वा। यद्युत्पत्तिलक्षणा सा विरुध्यताम्। न खलु ज्ञानमात्मानमुत्पादयतीत्यभ्यनुजानीमः। स्वसामग्रीविशेषवशात्तदुत्पत्त्यभ्युपगमात्। नापि परिस्पन्दात्मिकासौ तत्र विरुध्यते तस्याः द्रव्यवृत्तित्वेन ज्ञाने सत्त्वस्यैवासम्भवात्। अथ धात्वर्थरूपा सा न विरुद्धा भवति तिष्ठतीत्यादिक्रियाणां क्रियावत्येव सर्वदोपलब्धेः। ज्ञप्तिरूपक्रियायास्तु विरोधो दूरोत्सारित एव स्वरूपेण कस्यचिद्विरोधासिद्धेः। अन्यथा प्रदीपस्यापि स्वप्रकाशनविरोधस्तद्धि स्वकारणकलापात्स्वपरप्रकाशात्मकमेवोपजायते प्रदीपवत्। ज्ञानक्रियायाः कर्मतया स्वात्मनि विरोधस्ततोऽन्यत्रैव कर्मत्वदर्शनादित्यप्यसमीक्षिताभिधानं प्रदीपस्यापि स्वप्रकाशनविरोधानुषङ्गात्। यदि चैकत्र दृष्टो धर्मः सर्वत्राभ्युपगम्यते तर्हि घटे प्रभास्वरौष्ण्यादिधर्मानुपलब्धेः प्रदीपेप्यस्याभावप्रसङ्गः। रथ्यापुरुषे वाऽसर्वज्ञत्वदर्शनान्महेश्वरेप्यसर्वज्ञत्वानुषङ्गः। अत्र वस्तुवैचित्र्यसम्भवे ज्ञानेन किमपराद्धं येनात्रासौ

---

१ अन्यथा ॥ २ हेतो ॥ ३ घटज्ञान ॥ ४ इन्द्रियार्थसंनिकर्षज न भवति ॥ ५ प्रमेयेन ॥ ६ आत्मनोऽनित्यत्वे सुखादिसंवेदनस्येन्द्रियार्थसंनिकर्षजत्वे च ॥ ७ पश्चात् ॥ ८ मानस करणरूपम् ॥ ९ सुखादिसंवेदनस्य ॥ १० प्रकाशलक्षणाया ॥ ११ ता ॥ १२ आत्मार्थवाचकस्वशब्दपक्षे ॥ १३ आत्मीयार्थग्राचकस्वशब्दपक्षे ॥ १४ विरोधकत्वे ॥ १५ घटादि ॥ १६ अभाव ॥ १७ अर्थ ॥ १८ स्वरूप ॥ १९ ओदन पचति देवदत्त ॥ २० न विरोध ॥ २१ ग्राम गच्छति देवदत्त ॥ २२ ज्ञाने ॥ २३ भवता परेण ॥ २४ परेग ॥ २५ वय जैना ॥ २६ स्वात्मनि ॥ २७ देवदत्तादौ ॥ २८ जानाति ॥ २९ स्वात्मनि ॥ ३० अर्थस्य ॥ ३१ अस्मदादिज्ञान ॥ ३२ कुत ॥ ३३ घटादौ ॥ ३४ किंच ॥ ३५ स्वच्छिदिक्रिया प्रति कर्मत्वनिरोधलक्षण ॥ ३६ यज्ञादौ ॥ ३७ ज्ञाने ॥ ३८ भास्वरौष्ण्यमसर्वज्ञत्वलक्षण ॥ ३९ केन ॥ ४० स्वपरप्रकाशरूपो वैचित्र्यसम्भव ॥

नेष्यते । किञ्च ज्ञानान्तरापेक्षया तत्र कर्मत्वविरोधः स्वरूपापेक्षया वा प्रथमपक्षे महेश्वरस्यासर्वज्ञत्वप्रसङ्गस्तज्ज्ञानेन तस्याऽवेद्यत्वात् । आत्मसमवेतानन्तरज्ञान-
वेद्यत्वाभावे च स्वसमवेतानन्तरज्ञानवेद्यमर्थज्ञानमिति ग्रन्थविरोधो मीमांसकमतप्रवेशश्च स्यात् । ज्ञानान्तरापेक्षया तस्य कर्मत्वाविरोधे च स्वरूपापेक्षयाप्यवि-
रोधोऽस्तु सहस्रकिरणवत्स्वपरोद्योतनस्वभावत्वात्तस्य । कर्मत्ववच्च ज्ञानक्रियातोऽर्थान्तरस्यैव करणत्वदर्शनात्तस्यापि तत्र विरोधोऽस्तु विशेषाभावात् । तथा च
ज्ञानेनाहमर्थं जानामीत्यत्र ज्ञानस्य करणतया प्रतीतिर्न स्यात् । विशेषणज्ञानस्य करणत्वाद्विशेष्यज्ञानस्य तत्फलत्वेन क्रियात्वात्तयोर्भेद एवेत्यपि श्रद्धामात्रं विशेषण-
ज्ञानेन विशेष्यमहं जानामीति प्रतीत्यभावात् । विशेषणज्ञानेन हि विशेषणं विशेष्यज्ञानेन च विशेष्यं जानामीत्यखिलजनोऽनुमन्यते । किञ्चानयोर्विषयो भिन्नोऽ
भिन्नो वा । प्रथमपक्षे विशेषणविशेष्यज्ञानद्वयपरिकल्पना व्यर्थाऽर्थभेदाभावाद्धारावाहिविज्ञानवत् । द्वितीयपक्षे चानयोः प्रमाणफलव्यवस्थाविरोधोऽर्थान्तरविष-
यत्वाद् घटपटज्ञानवत् । न खलु घटज्ञानस्य पटज्ञानं फलम् । न चान्यत्र व्यापृते विशेषणज्ञाने ततोऽर्थान्तरे विशेष्ये परिच्छित्तिर्युक्ता । न हि खदिरादावुत्पतन-
नियतनव्यापारवति परशौ ततोऽन्यत्र धवादौ छिदिक्रियोत्पद्यते इत्येतत्प्रातीतिकम् । लिङ्गज्ञानस्यानुमानज्ञाने व्यापारदर्शनादत्राप्यविरोधे इत्यप्यसम्भाव्यं
तद्वत्क्रमभावेनात्र ज्ञानद्वयानुपलब्धेरेकमेव हि तयोर्ग्राहकं ज्ञानमनुभूयते । न चात्र विषयभेदाज्ज्ञानभेदकल्पना । समानेन्द्रियग्राह्ये योग्यदेशावस्थितेऽर्थे घटप-
टादिवदेकस्यापि ज्ञानस्य व्यापाराविरोधात् । न च घटादावपि ज्ञानभेदः समानगुणानां युगपद्भावानभ्युपगमात् । क्रमभावे च प्रतीतिविरोधः सर्वज्ञाभा-
वश्च युगपद्भावाभ्युपगमे चानयोः सव्येतरगोविषाणवत्कार्यकारणभावाभावः । विशेषणविशेष्यज्ञानयोः क्रमभावेऽप्याशुवृत्त्या यौगपद्याभिमानो यथोत्पलप-
त्रशतच्छेद इत्यप्यसङ्गतं निखिलभावानां क्षणिकत्वप्रसङ्गात्सर्वत्रैकत्वाध्यवसायस्याशुवृत्तिप्रवृत्तत्वात् । प्रत्यक्षप्रतिपन्नस्यास्य दृष्टान्तमात्रेण निषेधविरोधाच्च ।
अन्यथा शुक्ले शङ्खे पीतविभ्रमदर्शनात्सुवर्णेऽपि तद्विभ्रमः स्यात् । मूर्तस्य सूच्यग्रस्योत्तराधर्यस्थितमुत्पलपत्रशतं युगपत्प्राप्तुमशक्तेः । क्रमच्छेदेऽप्याशुवृत्त्या

---

१ परेण ॥ २ ज्ञानक्रियाया ॥ ३ अस्मदादिज्ञानस्य ॥ ४ प्रथमज्ञान ॥ ५ द्वितीयज्ञानेन ॥ ६ किञ्च ॥ ७ योगस्य ॥ ८ करणज्ञान न प्रत्यक्ष कर्मत्वेनाप्रतीयमानत्वात् ॥ ९ ज्ञानान्तरेणाप्यप्रत्यक्षत्वात् ॥ १० स्वरूपापेक्षया कर्मत्वविरोध ब्रूम । ज्ञानान्तरापेक्षया किं कर्मत्वविरोधोस्ति ॥ ११ परेणाङ्गीकृते ॥ १२ किञ्च ॥ १३ कुठारादे ॥ १४ ज्ञानाद्भिन्नस्य करणत्वस्याविशेषात्कर्मत्ववत् ॥ १५ ज्ञानकरणत्वविरोधे सति ॥ १६ करणज्ञानेन ॥ १७ पक्षे ॥ १८ लोके ॥ १९ करणज्ञानक्रियाज्ञानयो ॥ २० नीलादिज्ञानेन दण्डादिज्ञानेन वा ॥ २१ जानामि ॥ २२ उत्पलादिक दण्डीत्यादिक ॥ २३ ता ॥ २४ विशेषणज्ञानविशेष्यज्ञानयो ॥ २५ विशेषणज्ञानविशेष्यज्ञानयो ॥ २६ भिन्नविषयत्वात् ॥ २७ किञ्च ॥ २८ नीलादौ विशेषणे ॥ २९ सति ॥ ३० उत्पलादौ ॥ ३१ ज्ञान ॥ ३२ कथ ॥ ३३ सति ॥ ३४ धूमादिज्ञानस्य ॥ ३५ अग्न्यादिज्ञाने ॥ ३६ विशेष्यपरिच्छित्तौ ॥ ३७ विशेषणज्ञानव्यापारस्य ॥ ३८ लिङ्गलिङ्गिज्ञानस्य ॥ ३९ नीलोत्पलयोर्विशेषणविशेष्ययो ॥ ४० एक ॥ ४१ अग्न्यादि ॥ ४२ ज्ञानाना ॥ ४३ नैयायिकानामनभ्युपगमात् ॥ ४४ परै ॥ ४५ कृत्वा ॥ ४६ कल्पना ॥ ४७ कथ ॥ ४८ घटपटादिपदार्थे ॥ ४९ एकोयमित्यध्यवसाय ॥ ५० विशेषणविशेष्यज्ञानयौगपद्यस्य ॥ ५१ किञ्च ॥ ५२ अविरोधे ॥

यौगपद्याभिमानोऽयुक्तः । पुंसस्तु स्वावरणक्षयोपशमापेक्षस्य युगपत्स्वपरप्रकाशनस्वभावस्य समग्रेन्द्रियस्याप्राप्तार्थग्राहिणः स्वयममूर्तस्य युगपत्स्वविषयग्रहणे विरोधाभावात् किन्न युगपज्ज्ञानोत्पत्तिः । न च मनोपि सूच्यग्रवन्मूर्त्तमिन्द्रियाणि तूत्पलपत्रवत्परस्परपरिहारस्थितानि युगपत्प्राप्तुं न समर्थमिति वाच्यम् । तथाभूतस्यास्याऽसिद्धेः । युगपज्ज्ञानोत्पत्तिविभ्रमात्तत्सिद्धौ परस्पराश्रयः । तद्विभ्रमसिद्धौ हि मनःसिद्धिस्ततस्तद्विभ्रमसिद्धिरिति । चक्षुरादिकं क्रमवत्कारणापेक्षं कारणान्तरसाकल्ये सत्यप्यनुत्पाद्योत्पादकत्वाद्बीजादिवदित्यनुमानात्तत्सिद्धिरित्यपि मनोरथमात्रं भवदभ्युपगतेन मनसैवानेकान्तात् । न हि तत्साकल्ये तत् तथाभूतमपि क्रमवत्कारणान्तरापेक्षमनवस्थाप्रसङ्गात् । किञ्चानुत्पाद्योत्पादकत्वं युगपत्क्रमेण वा । युगपच्चेद्विरुद्धो हेतुस्तथोत्पादकत्वस्याक्रमिकारणाधीनत्वात्प्रसिद्धसहभाव्यनेककार्यकारिसामग्रीवत् । क्रमेण चेदसिद्धः कर्कटीभक्षणादौ युगपद्रूपादिज्ञानोत्पादकत्वप्रतीतेः । आशुवृत्त्या विभ्रमकल्पनायां तूक्तम् । तत्र मनसः सिद्धिः । सिद्धौ वा न संयोगो निरंशयोरेकदेशेन संयोगे सांशत्वम् । सर्वात्मनैकत्वमुभयव्याघातकारि स्यात् । यत्र संयुक्तं मनस्तत्रासमवेते ज्ञानमुत्पादयतीत्यभ्युपगमे चाखिलात्मसमवेतसुखादौ ज्ञानं जनयेत्तेषां नित्यव्यापित्वेन मनसा संयोगो विशेषात् । तथा च प्रतिप्राणि भिन्नं मनोन्तरं व्यर्थम् । यस्य यन्मनस्तत्तत्समवायिनि ज्ञानहेतुरित्यप्यसारं प्रतिनियतात्मसम्बन्धित्वस्यैवात्रासिद्धेः । तद्धि तत्कार्यत्वात्तदुपक्रियमाणत्वात्तत्संयोगात्तददृष्टप्रेरितत्वात्तदात्मप्रेरितत्वाद्वा स्यात् । न तावत्तत्कार्यत्वेन तत्सम्बन्धिता नित्ये तदयोगात् । नाप्युपक्रियमाणत्वे नानाधेयाप्रहेयातिशये तस्याप्यसम्भवात् । नापि संयोगात्सर्वत्रास्याविशेषात् । नापि यददृष्टप्रेरितं प्रवर्तते निवर्तते वा तत्तस्येति वाच्यमचेतनस्यादृष्टस्यानिष्टदेशादिपरिहारेणेष्टदेशादौ तत्प्रेरणासम्भवात् । अन्यथेश्वरकल्पनावैफल्यम् । न

---

१ विशेषणविशेष्यरूप ॥ २ कर्तृ ॥ ३ कर्मरूपाणि ॥ ४ परेण ॥ ५ मन ॥ ६ यदुत्पादक तत्क्रमवत्कारणापेक्षम् ॥ ७ आलोकादि ॥ ८ ज्ञान ॥ ९ ता ॥ १० उपादानादिरुच्यमाने नाङ्कुरोत्पादकं नानी- जैरनेकान्तस्तद्व्यवच्छेदार्थमनुत्पाद्योत्पादकत्वादित्युक्त तथापि बीजैरेवानेकान्तस्तद्व्यवच्छेदार्थं कारणान्तरसाकल्ये सतीत्युक्तम् । [illegible] कारणान्तरं कारणान्तरसाकल्ये सत्युत्पाद्यो- त्पादक न भवति किन्तूत्पादकमेव बीजम् ॥ ११ हल क्रमत कारणमत्र ॥ १२ मन ॥ १३ पर ॥ १४ [illegible] ॥ १५ मत ॥ १६ अन्यथा ॥ १७ [illegible] ॥ १८ नित्य शब्द. कृतकत्वात् ॥ १९ अङ्कुरादि ॥ २० बीजानि ॥ २१ क्षित्युदकादिलक्षणा ॥ २२ यथा बीजलक्षणा सामग्री क्षित्युदकादिलक्षणाऽक्रमकारणाधीना ॥ २३ चक्षुरादीना ॥ २४ तद्विभ्रमसिद्धौ हि मन सिद्धिस्ततस्तद्विभ्रमसिद्धिरिति दूषण ॥ २५ स्वप्रक्रियामात्रेण ॥ २६ आत्मना ॥ २७ आत्ममनसो ॥ २८ घटते ॥ २९ संयोगे ॥ ३० मनोभ्युपगम्य तत्र किम ॥ ३१ आत्मानि ॥ ३२ समवायिनि ॥ ३३ सुखादौ ॥ ३४ परेण ॥ ३५ मत. कर्तृ ॥ ३६ [illegible] ॥ ३७ एकस्यैव मनस सम्भवे सति ॥ ३८ मानसान्तरं ॥ ३९ व्यर्थं भवतीत्युक्ते पर प्राह ॥ ४० आत्मन ॥ ४१ कर्तृ ॥ ४२ सुखादौ ॥ ४३ भवति ॥ ४४ जीव ॥ ४५ अस्यात्मन इदं मन इति ॥ ४६ मनसि ॥ ४७ मनो धर्मि प्रतिनियतात्मसम्बन्धि भवतीति साध्यम् ॥ ४८ प्रतिनियतात्म ॥ ४९ मनस ॥ ५० मनस ॥ ५१ मनस ५२ ता ॥ ५३ भा ॥ ५४ नाम ॥ ५५ मनस. ॥ ५६ मनस ॥ ५७ मनस ॥ ५८ नित्यपरमाणुपरिमाण मन इति वचनात् ॥ ५९ आत्मना ॥ ६० आरोपयितुमशक्य ॥ ६१ स्फोटयितुमशक्य ॥ ६२ अतिशये मनसि ॥ ६३ आत्मसु ॥ ६४ ता ॥ ६५ अनिष्टात् ॥ ६६ परेण ॥ ६७ काल ॥ ६८ मन ॥

चेश्वरस्यादृष्टप्रेरणे व्यापारात्साफल्यं मनस एवासौ प्रेरकः कल्प्यताम् किं परम्परया । तस्य सर्वसाधारणत्वाच्चातो न तन्नियमः । न चादृष्टस्यापि प्रतिनियमः सिद्ध-स्तस्यात्मनोऽत्यन्तभेदात्समवायस्यापि सर्वत्राविशेषात् । येनात्मना यन्मनः प्रेर्यते तत्तस्येत्ययुक्तमनुपलब्धस्य प्रेरणासम्भवात् । किञ्चेश्वरस्यापि स्वसंविदितज्ञाना-नभ्युपगमे सदसद्वर्गः कस्यचिदेकज्ञानालम्बनोऽनेकत्वात्पञ्चाङ्गुलवदित्यत्र पक्षीकृतैकदेशेन व्यभिचारस्तज्ज्ञानान्यसदसद्वर्गयोरनेकत्वाविशेषेऽप्येकज्ञानालम्बनत्वा-भावादेकशाखाप्रभवत्वाद्यामिनिवत् । स्वसंविदितत्वाभ्युपगमे चास्यानेनैव प्रमेयत्वहेतोर्व्यभिचार इत्युक्तम् । अस्मदादिज्ञानापेक्षया ज्ञानस्य ज्ञानान्तरवेद्यत्वं साध्यते इत्यत्राप्युक्तम् । किञ्चाद्ये ज्ञाने सति असति वा द्वितीयज्ञानमुत्पद्यते सति चेत् युगपज्ज्ञानानुत्पत्तिविरोधः । असति चेत्कस्य तद्ग्राहकमसतो ग्रहणे द्विचन्द्रादिज्ञानवदस्य भ्रान्तत्वप्रसङ्गः । किञ्चास्मदादीनां तज्ज्ञानान्तरं प्रत्यक्षमप्रत्यक्षं वा । यदि प्रत्यक्षं स्वतो ज्ञानान्तराद्वा । स्वतश्चेत्प्रथममप्यर्थज्ञानं स्वतः प्रत्यक्षमस्तु । ज्ञानान्तरात्प्रत्यक्षत्वे तदपि ज्ञानान्तरं ज्ञानान्तरात्प्रत्यक्षमित्यनवस्था । अप्रत्यक्षं चेत्कथं तेनाद्यज्ञानग्रहणं स्वयमप्रत्यक्षेण ज्ञानान्तरेणात्मान्तरज्ञानेने-वास्य ग्रहणविरोधात् । ननु ज्ञानस्य स्वविषये गृहीतिजनकत्वं ग्राहकत्वं तच्च ज्ञानान्तरेणागृहीतस्यापीन्द्रियादिवद्युक्तमित्यपि मनोरथमात्रमर्थज्ञानस्यापि ज्ञाना-न्तरेणागृहीतस्यैवार्थग्राहकत्वानुषङ्गात् । तथा च ज्ञानज्ञानपरिकल्पनावैयर्थ्यं मीमांसकमतानुषङ्गश्च । लिङ्गशब्दसादृश्यानां चागृहीतानां स्वविषये विज्ञानजनकत्वप्रसङ्गात्तद्विषयविज्ञानान्वेषणानर्थक्यम् । उभयथोपलम्भाददोष इत्यभ्युपगमेपि किञ्चिल्लिङ्गादिकमज्ञातमेव चक्षुरादिकं तु ज्ञातमेव स्वविषये प्रमिति-मुत्पादयेत्तत एव । अथ चक्षुरादिकमेवाज्ञातं स्वविषये प्रमितिनिमित्तं न लिङ्गादिकं तदपि ज्ञातमेव नान्यथाऽतो नोभयत्रोभयथाप्रसङ्गः । प्रतीतिविरोधात् । नन्वेवं यथार्थज्ञानं ज्ञातमर्थे ज्ञप्तिनिमित्तं तथा ज्ञानज्ञानमपि ज्ञानेऽस्तु तत्राप्युभयथापरिकल्पने प्रतीतिविरोधाविशेषात् । यथैव हि विवादापन्नं चक्षुराद्यज्ञातमेवार्थे

---

१ विषये ॥ २ परेण ॥ ३ महेश्वरेणादृष्ट प्रेर्यते अदृष्टेन मन इति परम्परा तया ॥ ४ अदृष्टस्य ॥ ५ किञ्च ॥ ६ अस्येदमदृष्टमिति ॥ ७ आत्मसु गगनादौ ॥ ८ परे ॥ ९ द्रव्यगुणकर्मसामान्यविशेषस-मवायरूप सद्वर्ग ॥ १० प्रागप्रध्वंसेतरेतरात्यन्ताभावरूपोऽसद्वर्ग ॥ ११ पारिशेष्यादीश्वरस्य ॥ १२ गुणरूपेण विज्ञानेन ॥ १३ सद्वर्गेण ॥ १४ ईश्वर ॥ १५ द्वन्द्व ॥ १६ ईश्वरज्ञानान्यपदार्थयोरेकज्ञानालम्बनत्वे स्वसंविदितल-सत्र ॥ १७ पक्वानि एतानि फलानि ॥ १८ एव ॥ १९ हेतु ॥ २० व्यभिचारपरिहारार्थं ॥ २१ परै ॥ २२ ईश्वरस्य ॥ २३ गुणरूपेण महेश्वरज्ञानेन ॥ २४ स्वभावालम्बनादिति ॥ २५ स्वभावालम्बनादित्यादि ॥ २६ असदादे ॥ २७ ज्ञानान्तरम् ॥ २८ भवन्मते ॥ २९ ज्ञानस्य ॥ ३० अर्थज्ञान भ्रान्तमसद्ग्रहणात् ॥ ३१ द्वितीयम् ॥ ३२ द्वितीयेन ॥ ३३ सन्तानान्तर ॥ ३४ ज्ञानस्य ॥ ३५ द्वितीय ॥ ३६ अर्थज्ञाने ॥ ३७ परिच्छित्ति ॥ ३८ कथ्यते ॥ ३९ तृतीयज्ञानेन ॥ ४० द्वितीयज्ञानस्य ॥ ४१ अदृष्टादि ॥ ४२ ईप् ॥ ४३ मीमांसकमते अगृहीतस्यैव ( परोक्षस्य ) ज्ञानस्यार्थग्राहकत्वात् ॥ ४४ गामभ्याजेत्यादि ॥ ४५ सज्ञासज्ञिसम्बन्धप्रतिपत्ते कारण सादृश्य ॥ ४६ किञ्च ॥ ४७ अनुमेये ॥ ४८ गामभ्याजेत्यादिवाक्यार्थे ॥ ४९ लिङ्गादिश्चासौ विषयश्च ॥ ५० इन्द्रियस्याज्ञातस्य लिङ्गादेर्ज्ञातस्य ॥ ५१ न लज्ञात ज्ञापक नाम ॥ ५२ गृहीतस्यागृहीतस्य च गृहीतिजनकत्वेन ॥ ५३ अर्थ-ज्ञानतद्ग्राहकज्ञानवच्च ॥ ५४ परेण ॥ ५५ परकीय ॥ ५६ असदादिक लिङ्गन्तु ज्ञातमेव ॥ ५७ परकीय ॥ ५८ परस्य ॥ ५९ चक्षुरादौ लिङ्गादौ च ॥ ६० यथाक्रम ज्ञातत्वाज्ञातत्वप्रकारेण ॥ ६१ इति चेत् ॥ ६२ उभयथोभयत्र विकल्पे प्रतीतिविरोधप्रकारेण ॥ ६३ ज्ञात ॥ ६४ ज्ञप्तिनिमित्त ६५ ज्ञाने ॥ ६६ एक ज्ञातमपर चाज्ञात स्वविषये प्रमितिजनकम् ॥ ६७ परस्य ॥ ६८ परकीयम् ॥ ६९ अप्रत्यक्षत्वाविशेषाभावात् ॥

ज्ञप्तिनिमित्त तत्त्वादसच्चक्षुरादिवत् । लिङ्गादिकं तु ज्ञातमेव कंचिज्ज्ञप्तिनिमित्तं तत्त्वादुभयवादिप्रसिद्धधूमादिवदित्यनुमानप्रतीत्यात्रोभयथा कल्पने विरोधः । तथा ज्ञानज्ञानं ज्ञातमेव स्वविषये ज्ञप्तिनिमित्तं ज्ञानत्वादर्थज्ञानवदित्यत्रापि सर्वथा विशेषाभावात् । यदि चाप्रत्यक्षेणाप्यनेनार्थज्ञानप्रत्यक्षता तर्हीश्वरज्ञानेनात्मनोऽप्रत्यक्षेणाशेषविषयेण प्राणिमात्रस्याशेषार्थसाक्षात्करणं भवेत् । तथा चेश्वरेतरविभागाभावः । स्वज्ञानं गृहीतमात्मनोऽध्यक्षमित्यप्यसङ्गतं स्वसंविदितत्वाभावे स्वज्ञानत्वासिद्धेः । स्वस्मिन्समवेतं स्वज्ञानमित्यपि वार्त्तं समवायनिषेधात्तदविशेषाच्च । स्वकार्यमित्यप्यसम्यक् समवायनिषेधे तदाधेयतयोत्पादस्याप्यसिद्धेः । जनकत्वमात्रेण तत्त्वे दिक्कालादौ तत्प्रसङ्गः । नित्यज्ञानं चेश्वरस्यापि न स्यात्ततः स्वतो ज्ञानं प्रत्यक्षमन्यथोक्तदोषानुषङ्गः । ननु ज्ञानान्तरप्रत्यक्षत्वेपि नानवस्था अर्थज्ञानस्य द्वितीयेनास्यापि तृतीयेन ग्रहणादर्थसिद्धेरपरज्ञानकल्पनया प्रयोजनाभावात् । अर्थजिज्ञासायां ह्यर्थे ज्ञानं ज्ञानजिज्ञासायां तु ज्ञाने प्रतीतेरेवंविधत्वादित्यप्यसमीक्षिताभिधानं तृतीयज्ञानस्याग्रहणे तेन प्राक्तनज्ञानग्रहणविरोधात् । इतरथा सर्वत्र द्वितीयादिज्ञानकल्पनानर्थक्यं तत्र चोक्तो दोषः । किञ्चार्थजिज्ञासायां सत्यामहमुत्पन्नमिति तज्ज्ञानादेव प्रतीतिर्ज्ञानान्तराद्वा । प्रथमपक्षे जैनमतसिद्धिस्तथा प्रतिपद्यमानं हि ज्ञानं स्वपरपरिच्छेदकं स्यात् । द्वितीयपक्षेप्यर्थज्ञानमज्ञातमेव मयार्थस्य परिच्छेदकमिति ज्ञानान्तरं प्रतिपद्यते चेत्तदेव स्वार्थपरिच्छेदकं सिद्धं तथाद्यमपि स्यात् । न प्रतिपद्यते चेत्कथं तथाप्रतिपत्तिः । किञ्चार्थज्ञानमर्थमात्मानं च प्रतिपद्याज्ञातमेव मया ज्ञानमर्थं जानातीति ज्ञानान्तरं प्रतीयादप्रतिपद्य वा । प्रथमपक्षे त्रिविषयं ज्ञानान्तरं प्रसज्येत । द्वितीयपक्षे त्वतिप्रसङ्गो मयाऽज्ञातमेवादृष्टं सुखादीनि करोतीत्यपि तज्ज्ञानीयादविशेषात् । नापि शक्तिक्षयादीश्वराद्विषयान्तरसञ्चारादहष्टाद्वाऽनवस्थाभावः । न हि शक्तिक्षयाच्चतुर्थादिज्ञानस्यानुत्पत्तेरनवस्थानाभावः । तदनुत्पत्तौ प्राक्तनज्ञानासिद्धिदोषस्य तदवस्थत्वात् । तत्क्षये च कुतो रूपादिज्ञानं साधनादिज्ञानं वा यतो व्यवहारः प्रवर्त्तेत । न च चतुर्थादिज्ञानजननशक्तेरेव क्षयो नेतरस्याः युगपदनेकशक्त्यभावात् । भावे वा तथैव ज्ञानोत्पत्तिप्रसङ्गः । नित्यस्यापरापेक्षाप्यसम्भाव्या क्रमेण शक्तिसद्भावे

१ परस्य ॥ २ स्वविषये ॥ ३ ज्ञान ॥ ४ प्रतीतिविरोध ॥ ५ किंच ॥ ६ द्वितीयज्ञानेन ॥ ७ स्यात् ॥ ८ असदादे ॥ ९ असदादि ॥ १० अर्थज्ञान ॥ ११ असदादे ॥ १२ कथ्यते ॥ १३ असदादिना ॥ १४ द्वितीयज्ञानस्य ॥ १५ आत्मनि ॥ १६ सर्वेष्वात्मसु ॥ १७ आत्मन ॥ १८ स्वज्ञानम् ॥ १९ आत्मनि ॥ २० सति ॥ २१ विवक्षितात्मनि ॥ २२ स्वज्ञानस्य ॥ २३ जन्मन ॥ २४ निमित्तकारण ॥ २५ स्वकीयत्वे ॥ २६ ज्ञानस्य स्वकीयत्व ॥ २७ तज्जनकत्वाविशेषात् ॥ २८ किंच ॥ २९ ज्ञातत्वात् ॥ ३० कार्यं स्यानित्यत्वात् ॥ ३१ ज्ञानत्वात् ॥ ३२ अनवस्था ॥ ३३ चतुर्थं ॥ ३४ जात ॥ ३५ ज्ञान जात ॥ ३६ जिज्ञासापूर्वकत्वात् ॥ ३७ चतुर्थेन ॥ ३८ द्वितीय ॥ ३९ अर्थज्ञाने ॥ ४० आत्मनि ॥ ४१ प्रथमज्ञानेनालम् ॥ ४२ अशेषस्य प्राणिमात्रस्याशेषज्ञत्वलक्षण ॥ ४३ अर्थज्ञान ॥ ४४ मिथ्यादि ॥ ४५ प्रथम ॥ ४६ कर्तृ ॥ ४७ जानाति ॥ ४८ ज्ञानान्तरम् ॥ ४९ अर्थज्ञान ॥ ५० ज्ञानत्वाद्द्वितीयज्ञानवत् ॥ ५१ कर्तृ ॥ ५२ ज्ञानस्वरूप ॥ ५३ त्रितयमपि द्वितीयज्ञानस्य कर्मभूतम् ॥ ५४ ज्ञात्वा ॥ ५५ कर्तृ ॥ ५६ कर्तृ ॥ ५७ चस ॥ ५८ अपसिद्धान्तप्रसङ्ग ॥ ५९ कर्तृ ॥ ६० त्रितयविषयीकरणस्य ॥ ६१ किंच ॥ ६२ प्रतिपत्तु ॥ ६३ पद्मपद्मादि ॥ ६४ प्रथमद्वितीयतृतीय ॥ ६५ पूर्वनिरूपित ॥ ६६ शक्ति ॥ ६७ दृष्टान्तादि ॥ ६८ कुत ॥ ६९ रूपादिज्ञानजनिताया शक्ते ॥ ७० अपसिद्धान्त ॥ ७१ आत्मन ॥ ७२ ज्ञानोत्पत्ता ॥ ७३ शक्ति ॥

कुतोऽसौ[1] । न तावदात्मनो[2]ऽशक्तात्[3]तद[4]सम्भवात् । शक्त्यन्तर[5]कल्पने चानवस्था । ईश्वरस्तानिवारयतीत्यपि बालविलसितं कृतकृत्यस्य तन्निवारणे प्रयोजनाभावात् । परोपकारः प्रयोजनमित्य[6]सद्धर्मि[7]ग्रहणाभावस्य त[8]दवस्थत्वप्रसङ्गादप्रतीतेर्निषिद्ध[9]त्वाच्चास्य । न च विषया[10]न्तरसञ्चारात्तन्निवृत्तिः । विषयान्तरसञ्चारो हि धर्मि[11][12]ज्ञानविषया[13]दन्यत्र साधनादिविषये ज्ञानोत्पत्ति[14]ः । न च त[15]ज्ज्ञानसन्निधाने[16]ऽवश्यं साधना[17]दिना सन्निहितेन भवित[18]व्यमसिद्धा[19]देरभावा[20]पत्तेः । स[21]न्निहितेपि वा जिघृक्षिते धर्मि[22]ण्य[23]गृहीते कथं विषयान्तरे ग्र[24]हणाकांक्षा । कथं वा[25] त[26]ज्ज्ञानमेका[27]र्थसमवेतत्वेन सन्निहितं विहाय तद्विपरीते दृष्टान्तादौ ज्ञानं[28] जायेत । अदृष्टात्तन्निवृत्तौ स्वसंविदितज्ञानोत्पत्तिरेवातोऽस्तु किं मिथ्या[29]भिनिवेशेन । तत्र प्रत्यक्षाद्धर्मिसिद्धिः । ना[30]प्यनुमानात्तत्सद्भावावेदकस्य[31] तस्यैवासिद्धेः । सिद्धौ वा त[32]त्राप्या[33]श्रयासिद्ध्यादिदोषोपनिपातः[34] स्यात् । पु[35]नरत्राप्यनुमानान्तरात्तत्सिद्धावनवस्था । इ[36]त्युक्तदोषपरिजिहीर्षया प्रदीपवत्स्वपरप्रकाशनशक्तिद्वयात्मकं ज्ञानमभ्युपग[37]न्तव्यम् । तदपह्नवे व[38][39]स्तुव्यवस्थाभावप्रसङ्गात् । ननु स्व[40]परप्रकाशो नाम यदि बोधरूपत्वं तदा साध्यविकलो दृष्टान्तः प्रदीपे बोधरूपत्वस्यासम्भवात् । अथ भासुररूपसम्बन्धित्वं तस्य ज्ञानेऽत्यन्तासम्भवात्कथं साध्यताऽन्य[41]था[42] प्रत्यक्षबाधस्तदप्यसमीचीनम् । तत्प्रकाशो हि स्वपररूपोद्योत[43]नरूपोऽभ्युपग[44]म्यते । स च क[45]चिद्बोधरूपतया क्वचित्तु भासुररूपतया वा न विरोधमध्यास्ते । ननु ये[46]नात्मना ज्ञानमात्मानं प्रकाशयति येन चार्थं तौ चेत्ततोऽभिन्नौ तर्हि ता[47]वेव न ज्ञानं तस्य तत्रानुप्रवेशात्तत्स्वरूपवत् । ज्ञा[48]नमेव वा तयोस्तत्रानुप्रवेशात् तथा च कथं तस्य स्वपरप्रकाशनशक्तिद्वयात्मकत्वम् । भि[49]न्नौ चेत्स्वसंविदितौ स्वाश्रयज्ञानविदितौ वा । प्रथमपक्षे स्वसंविदितज्ञानं[50]त्रयप्रसङ्गस्तत्रापि प्रत्येकं स्वपरप्रकाशस्वभावद्वयात्मकत्वे स[51] एव पर्यनुयोगोऽनवस्था च । द्वितीयपक्षेऽपि स्वपरप्रकाशहेतुभूतयोस्त[52]योर्यदि ज्ञानं त[53]थाविधेन स्वभावद्वयेन प्रकाशकं तर्ह्यनवस्था[54] । तदप्रकाशक[55]त्वे प्रमाणत्वायोग[56]स्तयोर्वा त[57][58]त्स्वभावत्वविरोध इत्येका[59]न्तवा[60]दिनामुपलम्भो नास्मा[61]कं जा[62]त्यन्तरत्वा[63]त्स्वभावतद्वतोर्भेदाभेदं

---

१ शक्तिर्भवेत् ॥ २ असमर्थात् ॥ ३ ता ॥ ४ शक्तादात्मनश्चेन्न ॥ ५ आत्मगता शक्तय शक्तिमत एवात्मन उत्पद्यन्ते इत्यनेन प्रकारेण ॥ ६ आद्यज्ञानज्ञानाभावस्य ॥ ७ पूर्वनिरूपित ॥ ८ घटादि ज्ञानज्ञानमित्यादौ ॥ ९ धर्मिज्ञानज्ञानस्य ॥ १० तृतीयज्ञानात् ॥ ११ ता ॥ १२ बस॰ ॥ १३ आद्यज्ञानस्य ॥ १४ तृतीयज्ञानात् ॥ १५ तृतीयज्ञानस्य ॥ १६ द्वितीय ॥ १७ तृतीयज्ञानस्यैकात्मसमवेतत्वेन ॥ १८ दृष्टान्तादि ॥ १९ अन्यथा ॥ २० आश्रय ॥ २१ दृष्टान्त ॥ २२ साधनादौ ॥ २३ अर्थज्ञाने ॥ २४ तृतीयेन द्वितीयस्याग्रहणे द्वितीयेन प्रथमस्याग्रहणे ॥ २५ प्रतिपत्तु ॥ २६ किम ॥ २७ धर्मिज्ञानतृतीयज्ञान ॥ २८ एकात्मनि ॥ २९ तृतीय चतुर्थं ॥ ३० ज्ञानान्तरेणैव वेद्य ज्ञानमिति ॥ ३१ द्वितीयविकल्प ॥ ३२ ग्राहकस्य ॥ ३३ धर्मिज्ञान ॥ ३४ ता ॥ ३५ हेतोरसिद्धि ॥ ३६ द्वितीयेऽनुमाने ॥ ३७ ईश्वरज्ञानेन सुखसंवेदनेन चानेकान्त धर्म्यसिद्धि- ॥ ३८ परेण ॥ ३९ घटादिज्ञान ॥ ४० ज्ञान स्वपरप्रकाशकमर्थप्रकाशकत्वात्प्रदीपवत् ॥ ४१ प्रदीपे बोधरूपत्वे ज्ञाने भासुररूपसम्बन्धित्वे सति ॥ ४२ ज्ञाने भासुररूपसम्बन्धित्व विद्यते चेत् ॥ ४३ प्रकटन ॥ ४४ जैनै ॥ ४५ ज्ञाने ॥ ४६ स्वभावेन ॥ ४७ भवत ॥ ४८ तौ ॥ ४९ ज्ञानात् ॥ ५० द्वौ स्वभावौ ज्ञान च ॥ ५१ प्रत्येक स्वपरप्रकाशनस्वभावौ भिन्नावभिन्नौ वा । अभिन्नपक्षे प्रागुक्तमेव दूषण भिन्नपक्षे स्वसंविदितौ स्वाश्रयज्ञानविदितौ वेत्यादि ॥ ५२ भावयो ॥ ५३ भिन्नेन ॥ ५४ स्वभावद्वयप्रकाशनात् ॥ ५५ ज्ञानस्य ॥ ५६ ज्ञानस्य ॥ ५७ ज्ञान ॥ ५८ भा ॥ ५९ परेषा भवताम् ॥ ६० जैनानाम् ॥ ६१ प्रकारान्तरत्वात् ॥ ६२ कथञ्चिद् भेदाभेदरूपत्वात् ॥ ६३ असत्प्रत्यक्षस्य ॥

प्रत्यनेकान्तात् । ज्ञानात्मना हि स्वभावतद्वतोरभेदः । स्वपरप्रकाशस्वभावात्मना च भेद इति ज्ञानमेवाभेदोऽतो भिन्नस्य ज्ञानात्मनोऽप्रतीतेः । स्वपरप्रकाशस्वभावे च भेदस्तद्व्यतिरिक्तयोस्तयोरप्रतीयमानत्वादित्युक्तदोषानवकाशः । कल्पितयोस्तु भेदाभेदैकान्तयोस्तद्दूषणप्रवृत्तौ सर्वत्र प्रवृत्तिप्रसङ्गात् न कस्यचिदिष्टतत्त्वव्यवस्था स्यात् । स्वपरप्रकाशस्वभावौ च प्रमाणस्य तत्प्रकाशनसामर्थ्यमेव । तद्रूपतया चास्य परोक्षता तत्प्रकाशनलक्षणकार्यानुमेयत्वात्तयोः । सकलभावानां सामर्थ्यस्य कार्यानुमेयतया निखिलवादिभिरभ्युपगमात् । अर्वाग्दृशां चान्तर्बहिर्वार्थो नैकान्ततः प्रत्यक्ष इत्यत्राखिलवादिनामविप्रतिपत्तिरेवेत्युक्तदोषानवकाशतया प्रमाणस्य प्रत्यक्षताप्रसिद्धेरलं विवादेन । अमुमेवार्थं समर्थयमानः कोवेत्यादिना प्रकरणार्थमुपसंहरति ॥

को वा लौ (लौ)किकः परीक्षको वा तत्प्रतिभासिनमर्थमध्यक्षमिच्छंस्तदेव प्रमाणमेव तथा प्रत्यक्षप्रकारेण नेच्छेत् । अपि तु प्रतीति प्रमाणयन्निच्छेदेव । अत्रैवार्थे परीक्षकेतरजनप्रसिद्धत्वात् प्रदीपं दृष्टान्तीकरोति । यथैव हि प्रदीपस्य स्वप्रकाशतां प्रत्यक्षतां वा विना तत्प्रतिभासिनोऽर्थस्य प्रकाशकता प्रत्यक्षता वा नोपपद्यते । तथा प्रमाणस्यापि प्रत्यक्षतामन्तरेण तत्प्रतिभासिनोऽर्थस्य प्रत्यक्षता न स्यादित्युक्तं प्राक् प्रबन्धेनेत्युपरम्यते । तदेवं सकलमाणव्यक्तिव्यापि साकल्येनाप्रमाणव्यक्तिभ्यो व्यावृत्तं प्रमाणप्रसिद्धं स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणलक्षणम् ॥

ननूक्तलक्षणप्रमाणस्य प्रामाण्यं स्वतः परतो वा स्यादित्याशङ्क्य प्रतिविधत्ते ॥

तत्प्रामाण्यं स्वतः परतश्च ॥ तस्य स्वापूर्वार्थेत्यादिलक्षणलक्षितप्रमाणस्य प्रामाण्यमुत्पत्तौ परत एव । ज्ञप्तौ स्वकार्ये च स्वतः परतश्च अभ्यासानभ्यासापेक्षया । ये तु सकलप्रमाणानां स्वतः प्रामाण्यं मन्यन्ते तेऽत्र प्रष्टव्याः । किमुत्पत्तौ ज्ञप्तौ स्वकार्ये वा स्वतः सर्वप्रमाणानां प्रामाण्यं प्रार्थ्यते प्रकारान्तरासम्भवात् । यद्युत्पत्तौ तत्रापि स्वतः प्रामाण्यमुत्पद्यते इति कोऽर्थः । किं कारणमन्तरेणोत्पद्यते स्वसामग्रीतो वा विज्ञानमात्रसामग्रीतो वा गत्यन्तराभावात् । प्रथमपक्षे देशकालनियमेन प्रतिनि-

१ अनियमात् ॥ २ स्वरूपेण ॥ ३ ईयेक ॥ ४ वा द्वि ॥ ५ ज्ञानस्य ॥ ६ ता ॥ ७ ता ॥ ८ इति ॥ ९ ज्ञानरूपस्वभावरूपाभेदाया ॥ १० स्वभावतद्वतो ॥ ११ स्वपरप्रकाशनस्वभावभेदाभेदपक्षयो ॥ १२ भवत्पक्षे मया यौगेन ॥ १३ सुखात्मनोरभेदो ब्रह्माद्वैतवादिना कल्पितस्तत्राभेदे त्वया दूषणमुद्भाव्यते भेदप्रतिभासो न स्यादेकात्मनि सौगतेन भेद कल्पितस्तत्र भेदे त्वया दूषणमुद्भाव्यते अनुसन्धान न स्यादिति । तथापि भेदाभेदपक्षदूषण स्यात् । कथ त्वया द्रव्यगुणयोर्भेदोऽभ्युपगत आत्मन्यभेदस्त्वत्पक्षेपि परेणोद्भाव्यमान दूषण प्रसज्येत ॥ १४ वस्तुनि ॥ १५ कारकौ न ज्ञापकौ ज्ञाप्यस्य ॥ १६ ज्ञानस्य ॥ १७ स्वपरप्रकाशनयो ॥ १८ किंचिज्ज्ञानाम् ॥ १९ व्यक्त्यपेक्षया प्रत्यक्ष शक्त्यपेक्षया परोक्ष ॥ २० ज्ञान स्वप्रकाशनसमर्थप्रकाशकत्वात् ॥ २१ स्वपरप्रकाशनसमर्थप्रकाशकत्वात् ॥ २२ मीमांसकेन ज्ञानपरोक्षतारूपो यौगेन स्वात्मनिक्रियाऽभावरूपश्च ॥ २३ स्वसंविदित ॥ २४ ज्ञान ॥ २५ अध्यक्षविषय ॥ २६ प्रदीपवत् ॥ २७ प्रदीपप्रकारेण ॥ २८ दूषणम् ॥ २९ अस्माभिर्नन्विति ॥ ३० प्रत्यक्षपरोक्ष ॥ ३१ अव्याप्त्यादिपरिहार ॥ ३२ सन्निकर्षादि ॥ ३३ अतिव्याप्तिपरिहार ॥ ३४ असम्भवपरिहार ॥ ३५ स्वापूर्वेत्यादि ॥ ३६ अविसंवादित्व ॥ ३७ जैन ॥ ३८ अर्थाव्यभिचारित्वम् ॥ ३९ प्रवृत्त्यर्थपरिच्छित्तिलक्षणे ॥ ४० भाट्ट ॥ ४१ समर्थ्यते ॥ ४२ आत्मवाचक आत्मीयवाचकश्च ॥ ४३ आत्मवाचकपक्षे ॥ ४४ आत्मीयवाचकपक्षे ॥ ४५ आत्मीयपक्षे ॥

यत[1]प्रमाणाधारतया प्रामाण्यप्रवृत्तिविरोधः स्वतो जायमानस्यैवंरूपत्वादन्यथा[2] तदयोगात्[3]। द्वितीयपक्षे तु सिद्धसाध्यता स्वसामग्रीतः सकलभावानामुत्पत्त्यभ्युपगमात् । तृतीयपक्षोऽप्यविचारितरमणीयः विशिष्ट[7]कार्यस्याविशिष्टकारणप्रभवत्वायोगात् । तथा हि । प्रामाण्यं[4] विशिष्टकारणप्रभवं विशिष्टकार्यत्वा[5]दप्रामाण्य[6]वत् । यथैव[8] ह्यप्रामाण्यलक्षणं विशिष्टं कार्यं काचकामलादिदोषलक्षणविशेषणविशिष्टेभ्यश्चक्षुरादिभ्यो जायते तथा प्रामाण्यमपि गुणविशेषणविशिष्टेभ्यो विशेषा[9]भावात् । ज्ञप्तावप्य-नभ्यासदशायां न प्रामाण्यं स्वतोऽवतिष्ठते सन्देहविपर्ययाक्रान्तत्वात्तद्वदेव । अभ्यासदशायां तूभयमपि स्वतः । नापि प्रवृत्ति[10]लक्षणे स्वकार्ये तत्स्वतोऽवतिष्ठते स्वग्रहण[11][12]सापेक्षत्वा[13]दप्रामाण्य[14]वदेव । तद्धि ज्ञातं[15] सन्निवृत्ति[16]लक्षणस्वकार्यकारि नान्यथा[17] ॥ ननु[18] गुणविशेषणविशिष्टेभ्य[19] इत्युक्तं[20] तेषां प्रमाणतोऽनुपलम्भेनासत्त्वात् । न खलु प्रत्यक्षं तान्प्रत्येतुसमर्थमतीन्द्रियेन्द्रियाप्रतिपत्तौ[21] तद्गुणानां प्रतीतिविरोधात् । नाप्यनुमानं[22] तस्य प्रतिबन्ध[23]बलेनोत्पत्त्यभ्युपगमात् । प्रतिबन्धश्चेन्द्रियगुणैः[24] सह लिङ्गस्य[25] प्रत्यक्षेण गृह्येतानुमानेन वा । न तावत्प्रत्यक्षेण गुणाग्रहणे तत्सम्बन्धग्रहणविरोधात् । नाप्यनुमानेनास्यापि[26] गृहीतसम्बन्धलिङ्गप्रभवत्वात् । तत्राप्य[27]-नुमानान्तरेण[28] सम्बन्धग्रहणेऽनवस्था । प्रथमानुमानेनान्योन्याश्रयः । अप्रतिपन्न[29]सम्बन्धप्रभवं चानुमानं न प्रमाण[30]मतिप्रसङ्गात्[31] । किञ्च स्वभावहेतोः[32] कार्याद्नुप-लब्धेर्वा तत्प्रभवेत् । न तावत्स्वभावात्[33]तस्य प्रत्यक्षगृहीतेर्थे[34] व्यवहारमात्रप्रवर्तनफलत्वाद्वृक्षादौ[35] शिंशपात्वादिवत् । न चात्यक्षाऽक्षाश्रितगुणलिङ्ग[36]सम्बन्धः प्रत्यक्षतः प्रतिपन्नः । कार्यहेतोश्च[37] सिद्धे कार्य[38]कारणभावे कारणप्रतिपत्तिहेतुत्वं तत्सिद्धिश्चाध्यक्षानुपलम्भ[39][40]प्रमाणसम्पाद्या । न चेन्द्रियगुणाश्रितसम्बन्धग्राहक[41]त्वेनाध्यक्ष[42]प्रवृत्तिः । येन तत्कार्यत्वेन कस्यचिल्लिङ्गस्या[43]प्यध्यक्षतः[44] प्रतिपत्तिः स्यात् । अनुपलब्धे[45]स्त्वेवंविधे विषये प्रवृत्तिरेव न सम्भवत्यभावमात्रसाधकत्वेनास्याः व्यापारोपगमात् । न चात्र[46][47] लिङ्गमस्ति । यथार्थोपलब्धि[48]रस्तीत्यप्यसङ्गतं यतो यथार्थत्वायथार्थत्वे[49] विहाय यदि कार्यस्यो[50]पलब्ध्या[51]ख्यस्य स्वरूपं निश्चितं भवेत्तदा यथार्थत्व[52]लक्षणः कार्यविशेषो[53]

---

१ घटादि ॥ २ तदनिरोधे ॥ ३ कारणमन्तरेण प्रवृत्तेरयोगात् ॥ ४ प्रामाण्यस्य ॥ ५ ज्ञानेन व्यभिचार ॥ ६ प्रामाण्य न विज्ञानसामग्रीजन्य विज्ञानान्यत्वे सति कार्यत्वात् प्रामाण्यविज्ञाने भिन्नसामग्रीजन्ये भिन्नकार्यत्वाद् घटपटादिवत् ॥ ७ विशिष्टकार्यत्वस्य ॥ ८ सत्यमसत्यमिति ॥ ९ प्रामाण्यमप्रामाण्यम् ॥ १० अभ्यासदशाया विषय प्रति गमनम् ॥ ११ सत्यत्व ॥ १२ स्वस्य ज्ञानेन ॥ १३ प्रामाण्यस्य ॥ १४ अर्थव्यभिचारित्व ॥ १५ असत्यमिदमिति ॥ १६ विषय प्रत्यगमनम् ॥ १७ अज्ञातम् ॥ १८ अभ्यासदशाया स्वत ॥ १९ मीमासक ॥ २० चक्षुरादिभ्य ॥ २१ अपरिज्ञाने ॥ २२ प्रामाण्य विज्ञानकारणातिरिक्तकारणप्रभव विज्ञानान्यत्वे सति कार्यत्वादप्रामाण्यवत् ॥ २३ अविनाभाव ॥ २४ प्रामाण्यस्य ॥ २५ लिङ्गस्य ॥ २६ प्रामाण्य गुणनियत तदन्वयव्यतिरेकानुविधायित्वात् ॥ २७ द्वितीयानुमाने ॥ २८ तदन्वयव्यतिरेकानुविधायित्व गुणसद्भावाविनाभावि तस्मि ( गुणे )न्नत्वेवोत्पद्यमानत्वात् ॥ २९ अगृहीत ॥ ३० अनुमानाभासम् ॥ ३१ तत्पुत्रत्वादेरुत्पन्नस्य प्रामाण्यप्रसङ्गात् ॥ ३२ वृक्षोय शिंशपात्वात् ॥ ३३ हेतो ॥ ३४ वृक्षोय शिंशपात्वात् ॥ ३५ ता ॥ ३६ प्रामाण्य ( कार्य ) साध्येन ( गुणेन ) सम्बन्धि अनुमानकार्यत्वाद्धूमवत् ॥ ३७ हेतु कार्यम् ॥ ३८ सम्बन्ध कारणम् ॥ ३९ अन्वयव्यतिरेकाभ्याम् ॥ ४० असत्यसद्भाव ॥ ४१ कार्यकारणभाव ॥ ४२ ता ॥ ४३ प्रामाण्यस्य ॥ ४४ सम्बन्ध ॥ ४५ ता ॥ ४६ किंच ॥ ४७ नयनगुणे साध्ये ॥ ४८ नयने गुणा सन्ति यथार्थोपलब्धे ॥ ४९ विशेषरूपे ॥ ५० कार्यमात्रस्य ॥ ५१ उपलम्भसामान्यस्य ॥ ५२ सत्य ॥ ५३ कर्ता ॥

पूर्वस्मात्कारणकलापादनिष्पद्यमानो गुणाख्यं स्वोत्पत्तौ कारणान्तरं परिकल्पयेत् । यदा तु यथार्थैवोपलब्धिः स्वयोत्पादकैककारणकलापानुमापिका तदा कथं तद्व्यतिरिक्तगुणसद्भावः । अयथार्थत्वं तूपलब्धेर्विशेषः पूर्वस्मात्कारणसमूहादनुत्पद्यमानः स्वोत्पत्तौ सामग्र्यन्तरं परिकल्पयतीति परतोऽप्रामाण्यं तस्योत्पत्तौ दोषापेक्षत्वात् । न चेन्द्रिये नैर्मल्यादिरेव गुणो नैर्मल्यं हि तत्स्वरूपं न तु स्वरूपाधिको गुणः । तथा व्यपदेशस्तु दोषाभावनिबन्धनः । तथा हि । कामलादिदोषासत्त्वान्निर्मलमिन्द्रियं तत्सत्त्वे सदोषम् । मनसोपि निद्राद्यभावः स्वरूपं तत्सद्भावस्तु दोषः । विषयस्यापि निश्चलत्वादिस्वरूपं चलित्वादिस्तु दोषः । प्रमातुरपि क्षुदाद्यभावः स्वरूपं तत्सद्भावस्तु दोषः । न चैतद्वक्तव्यं विज्ञानजनकानां स्वरूपमयथार्थोपलब्ध्या समधिगतम् । यथार्थत्वं तु पूर्वस्मात्कारणकलापादनुत्पद्यमानं गुणाख्यं सामग्र्यन्तरं परिकल्पयतीति । यतोऽत्र लोकः प्रमाणम् । न चात्र(ऽ)मिथ्याज्ञानात्कारणस्वरूपमात्रमेवानुमिनोति किन्तु सम्यग्ज्ञानात् । किञ्चार्थतथाभावप्रकाशनरूपं प्रामाण्यं तस्य चक्षुरादिसामग्रीतोविज्ञानोत्पत्तावप्यनुत्पत्त्युपगमे विज्ञानस्य स्वरूपं वक्तव्यम् । न च तद्रूपव्यतिरेकेण तस्य स्वरूपं पश्यामो येन प्रामाण्यं तदुत्पत्तावप्यनुत्पन्नमुत्तरकालं तत्रैवोत्पत्तिमदभ्युपगम्यते । भित्तौविव चित्रम् । विज्ञानोत्पत्तावप्यनुत्पत्तौ व्यतिरिक्तसामग्रीतश्चोत्पत्त्यभ्युपगमे विरुद्धधर्माध्यासात्कारणभेदाच्च तयोर्भेदः स्यात् । किञ्चार्थतथात्वपरिच्छेदरूपा शक्तिः प्रामाण्यम् । शक्तयश्च भावानां सत एवोत्पद्यन्ते नोत्पादककारणाधीनाः । तदुक्तम् ॥ "स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् । न हि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते ॥" न चैतत्सत्कार्यदर्शनसमाश्रयणादभिधीयते किन्तु यः कार्यगतो धर्मः कारणे समस्ति स कार्यवत्तत एवोदयमासादयति । यथा मृत्पिण्डे विद्यमानारूपादयो घटेपि मृत्पिण्डादुपजायमाने मृत्पिण्डरूपादिद्वारेणोपजायन्ते । ये तु कार्यधर्माः कारणेष्वविद्यमाना न ते ततः कार्यवत् जायन्ते किन्तु स्वत एव । यथा तस्यैवोदकाहरणशक्तिः । एवं विज्ञानेप्यर्थतथात्वपरिच्छेदशक्तिश्चक्षुरादिष्वविद्यमाना तेभ्यो नोदयमासादयति । किन्तु स्वत एवाविर्भवति ॥ उक्तं च ॥ "आत्मलाभे हि भावानां कारणापेक्षिता भवेत् । लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥" यथा ॥ मृत्पिण्डदण्डचक्रादिघटो जन्मन्यपेक्षते । उदकाहरणे त्वस्य तदपेक्षा न विद्यते ॥ चक्षुरादिविज्ञानकारणादुपजायमानत्वात्तस्य परतोऽभिधाने तु सिद्ध

१ शुद्ध चक्षु ॥ २ अन्यत् ॥ ३ इन्द्रिय ॥ ४ इन्द्रिय ॥ ५ इन्द्रिय ॥ ६ क्रा ॥ ७ निर्मल चक्षुरिति ॥ ८ इन्द्रियस्वरूपम् ॥ ९ पटादिपदार्थस्य ॥ १० आसन्नत्वादि ॥ ११ वक्ष्यमाणम् ॥ १२ जैनै ॥ १३ चक्षुरादीना ॥ १४ लिङ्गेन ॥ १५ अयथार्थोपलब्धिजनकादिन्द्रियात् ॥ १६ विज्ञानसामग्र्यनुमाने ॥ १७ चक्षुरादि ॥ १८ प्रामाण्य विज्ञानकारण ( चक्षुरादि ) प्रभव विज्ञानस्वभावत्वात् विज्ञानस्वरूपवत् ॥ १९ प्रमाणस्य कार्यार्थतथाभावप्रकाशनरूप प्रामाण्यम् ॥ २० प्रामाण्यस्य ॥ २१ जैनै ॥ २२ वय मीमासका ॥ २३ विज्ञानस्य ॥ २४ विज्ञाने ॥ २५ भित्तिसद्भावे चित्र नोत्पद्यते विनष्टे तु भवतीति ॥ २६ प्रामाण्यस्य ॥ २७ प्रामाण्यस्य ॥ २८ विज्ञानस्य कारणमिन्द्रिय प्रामाण्यस्य गुण इति ॥ २९ उत्पत्त्यनुत्पत्तिलक्षण ॥ ३० इन्द्रियगुणो ॥ ३१ प्रमाणप्रामाण्ययो ॥ ३२ प्रमाणप्रामाण्ये भिन्ने ॥ ३३ इति परस्यानिष्टापत्ति परेणाभेदाभ्युपगमात् ॥ ३४ प्रमाणस्य भावशक्ति ॥ ३५ विज्ञानकारणातिरिक्तकारणाधीनो गुण ॥ ३६ भवति ॥ ३७ निश्चीयताम् ॥ ३८ कारणे ॥ ३९ स्वरूपेण ॥ ४० विज्ञानकारणातिरिक्तकारणाधीनेन गुणेन ॥ ४१ अपरार्द्धस्थम् ॥ ४२ साङ्ख्यमत ॥ ४३ कारणधर्मादेव ॥ ४४ घटलक्षणकार्यस्य ॥ ४५ कार्याणा ॥ ४६ प्रामाण्यस्य ॥

साध्यता । अनुमानादिबुद्धिस्तु गृहीताविनाभावादिलिङ्गादेरुपजायमाना प्रमाणभूतैवोपजायतेऽतोऽत्रापि तेषां न व्यापारः । तन्नोत्पत्तौ तदन्यापेक्षम् । नापि ज्ञप्तौ तद्धि तत्र किं कारणगुणानपेक्षते संवादप्रत्ययं वा । प्रथमपक्षोऽयुक्तो गुणानां प्रत्यक्षादिप्रमाणाविषयत्वेन प्रागेवासत्त्वप्रतिपादनात् । संवादज्ञानापेक्षाप्ययुक्ता । तत्खलु समानजातीयं भिन्नजातीयं वा प्रथमपक्षे किमेकसन्तानप्रभवं भिन्नसन्तानप्रभवं वा । न तावद्भिन्नसन्तानप्रभवं देवदत्तघटज्ञाने यज्ञदत्तघटज्ञानस्यापि संवादकत्वप्रसङ्गात् । एकसन्तानप्रभवमप्यभिन्नविषयं भिन्नविषयं वा । प्रथमविकल्पे संवाद्यसंवादकभावाभावोऽविशेषात् । अभिन्नविषयत्वे हि यथोत्तरं पूर्वस्य संवादकं तथेदमप्यस्य किन्न स्यात् । कथं चास्य प्रमाणत्वनिश्चयः । तदुत्तरकालभाविनोऽन्यस्मात् तथाविधादेवेति चेत्तर्हि तस्याप्यन्यस्मात्तथाविधादेवेत्यनवस्था । प्रथमप्रमाणात्तस्य प्रामाण्यनिश्चयेऽन्योन्याश्रयः । भिन्नविषयमित्यपि वार्त्तं शुक्तिशकले रजतज्ञानं प्रत्युत्तरकालभावि शुक्तिकाशकलज्ञानस्य प्रामाण्यव्यवस्थापकत्वप्रसङ्गात् । नापि भिन्नजातीयम् । तद्धि किमर्थक्रिया ज्ञानमुतान्यत् । न तावदन्यद् घटज्ञानात्पटज्ञाने प्रामाण्यनिश्चयप्रसङ्गात् । नाप्यर्थक्रियाज्ञानं प्रामाण्यनिश्चयाभावे प्रवृत्त्यभावेनार्थक्रियाज्ञानाघटनात् । चक्रकप्रसङ्गश्च । कथं चार्थक्रियाज्ञानस्य तन्निश्चयोऽन्यार्थक्रियाज्ञानाच्चेदनवस्था । प्रथमप्रमाणाच्चेदन्योन्याश्रयः । अर्थक्रियाज्ञानस्य स्वतःप्रामाण्यनिश्चयोपगमे चाद्यस्य तथाभावे किङ्कृतः प्रद्वेषः ॥ तदुक्तम् ॥ "यथैव प्रथमज्ञानं तत्संवादमपेक्षते । संवादेनापि संवादः परो मृग्यस्तथैव हि ॥ १ ॥ कस्यचित्तु यदीष्येत स्वत एव प्रमाणता । प्रथमस्य तथाभावे प्रद्वेषः केन हेतुना ॥ २ ॥ संवादस्याथ पूर्वेण संवादित्वात्प्रमाणता । अन्योन्याश्रयभावेन प्रामाण्यं न प्रकल्पते ॥ ३ ॥" इति । अर्थक्रियाज्ञानस्यार्थाभावेऽदृष्टत्वान्न स्वप्रामाण्यनिश्चयेऽन्यापेक्षा साधनज्ञानस्य त्वर्थाभावेपि दृष्टत्वात्तत्र तदपेक्षा युक्तेत्यप्यसङ्गतं तस्याप्यर्थमन्तरेण स्वप्नदशायां दर्शनात् । फलावाप्तिरूपत्वात्तस्य तत्र नान्यापेक्षा । साधननिर्भासि ज्ञानस्य तु फलावाप्तिरूपत्वाभावात्तदपेक्षेत्यप्यनुत्तरं फलावाप्तिरूपत्वस्याप्रयोजकत्वात् । यथैव हि साधननिर्भासिनो ज्ञानस्यान्यत्र व्यभिचारदर्शनात्सत्यासत्यविचारणायां प्रेक्षावतां प्रवृत्तिस्तथा तस्यापि

१ आगम ॥ २ शङ्केतादि ॥ ३ शब्द ॥ ४ गुणाना ॥ ५ प्रामाण्य ॥ ६ गुण ॥ ७ प्रामाण्य ॥ ८ प्रामाण्यस्य ॥ ९ अर्थज्ञानेन समाना सदृशा जातिवि(र्वि)षयो यस्य तत्समानजातीयम् ॥ १० पुरुष ॥ ११ अन्यथा ॥ १२ भिन्नसन्तानप्रभवत्वाविशेषात् ॥ १३ एकस्य जलज्ञान जलज्ञानमिति ॥ १४ अभिन्नविषयस्य ॥ १५ सवादक ॥ १६ किंच ॥ १७ उत्तरज्ञानस्य ॥ १८ द्वितीयज्ञानात् ॥ १९ ज्ञानात् ॥ २० अभिन्नविषयात् ॥ २१ प्रथमप्रमाणादुत्तरस्य निश्चय उत्तरज्ञानात्प्रथमनिश्चय इति ॥ २२ ज्ञानात् ॥ २३ पूर्वज्ञात ॥ २४ सदृशविषयत्वेन समानजातीयत्वे सति भिन्नविषयत्वस्याविशेषात् ॥ २५ सवादज्ञान ॥ २६ द्वितीयविकल्प प्रत्याह पर ॥ २७ स्नानावगाहनादि ॥ २८ ता ॥ २९ मरीचिकाचक्रे जलज्ञानात्पश्चान्मरीचिकाज्ञानम् ॥ ३० अन्यथा ॥ ३१ आद्यज्ञानस्य ॥ ३२ अर्थक्रियाज्ञानोत्पत्तौ पूर्वज्ञानस्य प्रामाण्य पूर्वज्ञानप्रामाण्ये च प्रवृत्ति प्रवृत्तौ चार्थक्रिया ज्ञानोत्पत्तिरिति ॥ ३३ किञ्च ॥ ३४ प्रामाण्य ॥ ३५ जैनै ॥ ३६ ज्ञानस्य ॥ ३७ स्वविषये ॥ ३८ स्वविषये ॥ ३९ द्वितीयज्ञानस्य ॥ ४० ज्ञानस्य ॥ ४१ आद्यज्ञानेन ॥ ४२ न घटते ॥ ४३ जैन ॥ ४४ अप्रतीते ॥ ४५ जलज्ञानस्य ॥ ४६ जललक्षण ॥ ४७ मरीचिकाचक्रे ॥ ४८ साधनज्ञानप्रामाण्ये ॥ ४९ स्नानपानादिलक्षण ॥ ५० स्वप्रामाण्यनिश्चये ॥ ५१ प्रथमतृतीयज्ञान ॥ ५२ स्नानादिक्रियाया साधन जलादि तस्मिन् ॥ ५३ युक्ता ॥ ५४ अन्यानपेक्षत्व प्रति ॥ ५५ अर्थक्रियाया ॥ ५६ जल ॥ ५७ मरीचिकाया ॥ ५८ जाग्रद्दशाया सुप्तावस्थाया च सत्यासत्यत्वस्य ॥

विशेषाभावात् । किञ्च समानकालमर्थक्रिया ज्ञानं पूर्वज्ञानप्रामाण्यव्यवस्थापकं भिन्नकालं वा । यद्येककालं पूर्वज्ञानविषयं तदविषयं वा । न तावत्तद्विषयं चक्षुरादि ज्ञाने ज्ञानान्तरस्याप्रतिभासनात् + प्रतिनियतरूपादिविषयत्वात्तस्य, तदविषयत्वे च कथं तज्ज्ञानप्रामाण्यनिश्चायकत्वं तदग्रहे तद्धर्माणां ग्रहणविरोधात् । भिन्नकाल-मित्यप्ययुक्तं पूर्वज्ञानस्य क्षणिकत्वेन नाशे तदग्राहकत्वेनोत्तरज्ञानस्य तत्प्रामाण्यनिश्चायकत्वायोगात् । सर्वप्राणभृतां प्रामाण्ये सन्देहविपर्ययाक्रान्तत्वासिद्धेश्च । समुत्पन्ने खलु विज्ञानेऽयमित्थमेवार्थ इति निश्चयो न सन्देहो विपर्ययो वा । तदुक्तम् ॥ "प्रमाणं ग्रहणात्पूर्वं स्वरूपेणैव संस्थितम् । निरपेक्षं स्वकार्ये च गृह्यते प्रत्ययान्तरैः ॥ १" । इति प्रमाणाप्रमाणयोरुत्पत्तौ तुल्यरूपत्वान्न संवादविसंवादावन्तरेण तयोः प्रामाण्याप्रामाण्यनिश्चय इति च मनोरथमात्रमप्रमाणे बाधककारण-दोषज्ञानयोरवश्यं भावित्वादप्रामाण्यनिश्चयः । प्रमाणे तु तयोरभावात्प्रामाण्यावसायो यापि तत्तुल्यरूपेऽन्यत्र तयोर्दर्शनात्तदाशङ्का सापि त्रिचतुरज्ञानापेक्षामात्रा-न्निवर्त्तते । न च तदपेक्षायां स्वतः प्रामाण्यव्याघातोऽनवस्था वा संवादकज्ञानस्याप्रामाण्यव्यवच्छेदे एव व्यापारादन्यज्ञानानपेक्षणाच्च । तदुक्तम् । "एवं त्रिचतुर-ज्ञानजन्मनो नाधिका मतिः । प्रार्थ्यते तावतैवेयं स्वतः प्रामाण्यमश्नुते ॥ १ ॥" योप्यनुत्पद्यमानः संशयो बलादुत्पाद्यते सोप्यर्थक्रियार्थिनां सर्वत्र प्रवृत्त्यादिव्यव-हारोच्छेदकारित्वान्न युक्तः । उक्तं च ॥ "आशङ्केत हि यो मोहादजातमपि बाधकम् । स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥१॥" चोदनाजनिता तु बुद्धिरपौरुषेयत्वेन दोषरहिताच्चोदनावाक्यादुपजायमाना लिङ्गाप्तोक्त्यक्षबुद्धिवत्स्वतः प्रमाणम् । "तदुक्तम् ॥ चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः । कारणैर्जन्यमानत्वाल्लिङ्गाप्तो-क्त्यक्षबुद्धिवत् ॥ १ ॥" तन्नञसौ परापेक्षी । नापि स्वकार्ये । तत्रापि हि किं तत्संवादप्रत्ययमपेक्षते कारणगुणान्वा । प्रथमपक्षे चक्रकप्रसङ्गः । प्रमाणस्य हि स्वकार्ये प्रवृत्तौ सत्यामर्थक्रियार्थिनां प्रवृत्तिस्तस्यां चार्थक्रियाज्ञानोत्पत्तिलक्षणः संवादस्तत्सद्भावे च संवादमपेक्ष्य प्रमाणं स्वकार्येऽर्थपरिच्छेदलक्षणे प्रवर्त्तेत । भाविनं संवादप्रत्ययमपेक्ष्य तत्तत्र प्रवर्त्तेत इत्यप्यनुपपन्नं तस्यासत्त्वेन स्वकार्ये प्रवर्त्तमानं विज्ञानं प्रति सहकारित्वायोगात् । द्वितीयपक्षेऽपि गृहीताः स्वकारणगुणाः

---

१ स्वप्रदशाया व्यभिचारदर्शनस्य ॥ २ सवादक ॥ ३ वस ॥ ४ वस ॥ ५ वस ॥ ६ स्पर्शनरसनघ्राणश्रोत्र ॥ ७ द्वितीये ज्ञाने ॥ ८ आद्यस्य जलज्ञानस्य ॥ ९ रसगन्धस्पर्शशब्द ॥ १० वस ॥ ११ बाह्ये न्द्रियजनितज्ञानस्य ॥ १२ प्रामाण्यसत्त्वादीनाम् ॥ १३ यदा ज्ञानमुत्पद्यते तदा सशयादिरहितमेवोत्पद्यतेऽत कथमपरापेक्षा ॥ १४ किञ्च ॥ १५ भवति ॥ १६ प्रामाण्य ॥ १७ प्रामाण्यलक्षणस्य धर्मस्यान्तर्भावाद्धर्मिप्रधा-नोऽयनिर्देश ॥ १८ परिच्छित्ते ॥ १९ अर्थपरिच्छित्तिप्रवृत्तिलक्षणे ॥ २० पुरुषे ॥ २१ सवादरूपे ॥ २२ सन्निकर्षरूपे ॥ २३ परत ॥ २४ निश्चय ॥ २५ भवति ॥ २६ अप्रमाणे ॥ २७ अप्रामाण्य ॥ २८ प्रमाणे २९ परिज्ञाने ॥ ३० पञ्चमस्य ज्ञानस्य ॥ ३१ स्वग्रन्थोक्तप्रकारेण कथमाद्यज्ञानस्य द्वितीयादिसवादज्ञानापेक्षित्वप्रकारेण ॥ ३२ उत्पत्ते ॥ ३३ का ॥ ३४ ज्ञानम् ॥ ३५ वाञ्छते पुरुषेण ॥ ३६ प्राप्नोति ॥ ३७ यथाऽऽद्यज्ञान द्वितीय द्वितीय च तृतीय तृतीय च चतुर्थमपेक्षते । तथा चतुर्थेनापि पञ्चममपेक्षणीयमित्यादिप्रकारेणानवस्था किमिति न स्यादित्युक्ते सत्याह ॥ ३८ विषये ॥ ३९ अज्ञानात् ॥ ४० प्रवृत्तिनिवृत्तिरूपेषु ॥ ४१ यत ॥ ४२ वेद ॥ ४३ इति गुणव्यापाराभाव ॥ ४४ प्रत्येक सम्बध्यते ॥ ४५ स्वत ॥ ४६ अनाप्तोक्तत्वलक्षण ॥ ४७ वेदवाक्यै ॥ ४८ सवादानुमान ॥ ४९ प्रामाण्यस्य ॥ ५० परापेक्ष प्रामाण्य न ॥ ५१ प्रामाण्य कर्तृ ॥ ५२ प्रामाण्यलक्षणस्य धर्म स्यान्तान्तर्भावाद्धर्मिप्रधानोय निर्देश ॥ ५३ अर्थपरिच्छित्तिरूपे ॥ ५४ नृणाम् ॥ ५५ अविद्यमानत्वेन ॥ ५६ अर्थपरिच्छित्तिलक्षणे ॥ ५७ प्रमाणस्य ॥

तस्य स्वकार्ये प्रवर्त्तमानस्य सहकारित्वं प्रतिपद्यन्ते अगृहीता वा ? न तावदुत्तरः पक्षः अतिप्रसङ्गात् । प्रथमपक्षेऽनवस्था । स्वकारणगुणज्ञानापेक्षं हि प्रमाणं स्वकार्ये प्रवर्त्तेत तदपि स्वकारणगुणज्ञानापेक्षं प्रमाणकारणगुणग्रहणलक्षणे स्वकार्ये प्रवर्त्तेत तदपि च स्वकारणगुणज्ञानापेक्षमिति । तस्य स्वकारणगुणज्ञानानपेक्षस्यैव प्रमाणकारणगुणपरिच्छेदलक्षणे स्वकार्ये प्रवृत्तौ प्रथमस्यापि कारणगुणज्ञानानपेक्षस्यार्थपरिच्छेदलक्षणे स्वकार्ये प्रवृत्तिरस्तु विशेषाभावात् । तदुक्तम् ॥ "जातेपि यदि विज्ञाने तावन्नार्थोऽवधार्यते । यावत्कारणशुद्धत्वं न प्रमाणान्तराद्गतम् ॥ १ ॥ तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् । यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥ २ ॥ तस्यापि कारणे शुद्धे तज्ज्ञानस्य प्रमाणता । तस्याप्येवमितीत्थं च न क्वचिद्व्यवतिष्ठते ॥ ३ ॥" इति ।

अत्र प्रतिविधीयते । यत्तावदुक्तं प्रत्यक्षं न तान्प्रत्येतुं समर्थमिति तत्रेन्द्रिये शक्तिरूपे व्यक्तिरूपे वा तेषामनुपलम्भेनाभावः साध्यते । प्रथमपक्षे गुणवद्दोषाणामप्यभावः । नह्याधाराप्रत्यक्षत्वे आधेयप्रत्यक्षता नामातिप्रसङ्गात् । अथ व्यक्तिरूपे तत्रापि किमात्मप्रत्यक्षेण गुणानामनुपलम्भः परप्रत्यक्षेण वा ? प्रथमविकल्पे दोषाणामप्यसिद्धिः । न ह्यात्मीयं प्रत्यक्षं स्वचक्षुरादिगुणदोषविवेचने प्रवर्त्तते इत्येतत्प्रातीतिकम् । स्पार्शनादिप्रत्यक्षेण तु चक्षुरादिसद्भावमात्रमेव प्रतीयते इत्यतोपि गुणदोषसद्भावासिद्धिः । अथ परप्रत्यक्षेण तेनोपलभ्यन्ते तदसिद्धम् । यथैव हि काचकामलादयो दोषाः परचक्षुषि प्रत्यक्षतः परेण प्रतीयन्ते तथा नैर्मल्यादयो गुणा अपि जातमात्रस्यापि नैर्मल्याद्युपेतेन्द्रियप्रतीतेः । तेषां गुणरूपत्वाभावे जाततैमिरिकस्याप्युपलम्भादिन्द्रियस्वरूपव्यतिरिक्ततिमिरादिदोषाणामप्यभावः । कथं वा रूपादीनां घटादिगुणस्वभावता—उत्पत्तिप्रभृतितः प्रतीयमानत्वाविशेषात् । यच्चक्षुरादिव्यतिरिक्तभावाभावानुविधायि तत्तत्कारणकम् । यथाऽप्रामाण्यं तथा च प्रामाण्यम् । यच्च तद्व्यतिरिक्तं कारणं ते गुणा इत्यनुमानतोपि तेषां सिद्धिः । यच्चेन्द्रियगुणैः सह लिङ्गस्य प्रतिबन्धः प्रत्यक्षेण गृह्येतानुमानेन वेत्याद्युक्तं तदप्ययुक्तम् ऊहाख्यप्रमाणान्तरात्तत्प्रतिबन्धप्रतीतेः । कथं चाप्रामाण्यप्रतिपादकदोषप्रतीतिः—तत्राप्यस्य समानत्वात् । नैर्मल्यादेर्मलाभा-

---

१ सन्तानान्तरलोचनगुणा अपि सहकारिणो भवन्तु अगृहीतत्वाविशेषात् ॥ २ इन्द्रियनैर्मल्यादि ॥ ३ भवच्चक्षुर्निर्मलमिति शब्द परोक्ष इति ॥ ४ प्रमाणकारणगुणज्ञान ॥ ५ शब्द ॥ ६ आप्तोक्तत्वलक्षण ॥ ७ प्रमाणकारणगुणज्ञानस्य ॥ ८ अनपेक्षत्वस्य ॥ ९ प्रथमज्ञानस्य ॥ १० चक्षु ॥ ११ नैर्मल्य ॥ १२ शब्दज्ञानात् ॥ १३ ज्ञातम् ॥ १४ तदा ॥ १५ शाब्दलक्षणस्य ॥ १६ अन्वेक्ष्य ॥ १७ शब्दलक्षणात् ॥ १८ प्रथमज्ञानकारण (नेत्र)स्य ॥ १९ द्वितीयस्य तृतीयज्ञानस्यापि ॥ २० दोपरहिते ॥ २१ द्वितीयस्य तृतीयस्यापि ॥ २२ ज्ञाने ॥ २३ जैन ॥ २४ जैने ॥ २५ स्वकारणाश्रितान्गुणान् ॥ २६ ग्रन्थे ॥ २७ गोलके ॥ २८ गुणानाम् ॥ २९ शक्तिरूपे इन्द्रिये ॥ ३० शक्तिरूपेन्द्रियस्य ॥ ३१ गुणदोष ॥ ३२ अन्यथा आत्मान्तरप्रत्यक्षत्वाभावेपि तज्ज्ञानप्रत्यक्षताप्रसङ्गात् ॥ ३३ गुणानाम् ॥ ३४ गुणा ॥ ३५ प्राणिन ॥ ३६ किन्तु नयनस्वरूपतैव ॥ ३७ प्राणिन ॥ ३८ कामलादिक नयनस्वरूपानतिरेकि जातमात्रस्य नयनविशिष्टत्वेनोपलभ्यमानत्वाद्गुणवत् ॥ ३९ न नैर्मल्यादयो गुणा इति ॥ ४० किन्न स्यात् ॥ ४१ घटादिरूपादयो धर्मिणो गुणा न भवन्तीति साध्यम् ॥ ४२ प्रामाण्य धर्मि चक्षुरादिव्यतिरिक्तपदार्थकारणक भवति चक्षुरादिव्यतिरिक्तपदार्थभावाभावानुविधायित्वात् ॥ ४३ कारणस्य ॥ ४४ यथार्थोपलब्धिलक्षणविशिष्टकार्यत्वादित्यस्य ॥ ४५ अविनाभाव ॥ ४६ गुणसद्भावे प्रामाण्यस्य सद्भावस्तदभावेप्रामाण्यस्याभाव इति ॥ ४७ परेण ॥ ४८ इन्द्रियगुणलिङ्गस्य ॥ ४९ दोषपक्षेपि दोषैस्सह लिङ्गस्य सम्बन्ध प्रत्यक्षेण गृह्यतेऽनुमानेन वेत्यादिदोषस्य ॥

वरूपत्वात्कथं गुणरूपतेत्यप्यसाम्प्रतम्–दोषाभावस्य प्रतियोगिपदार्थस्वभावत्वात्। निःस्वभावत्वे कार्यत्वधर्माधारत्वविरोधात् खरविषाणवत्। तथाविधस्याप्रतीतेरनभ्युपगमाच्च अन्यथा भावान्तरविनिर्मुक्तो भावोऽत्रानुपलम्भवत्। अभावः समस्तस्य हेतोः किञ्च समुद्भव इत्यस्य विरोधः। तथा च गुणदोषाणां परस्परपरिहारेणावस्थानाद्दोषाभावे गुणसद्भावोऽवश्याभ्युपरान्तयोऽन्यभावे शीतसद्भाववत्। अभावाभावे भावसद्भाववद्वा। अन्यथा कथं हेतौ नियमाभावो दोषः स्यात् अभावस्य गुणरूपतावद्दोषरूपत्वस्याप्ययोगात्। तथा च नैर्मल्यादिव्यतिरिक्तगुणरहिताच्चक्षुरादेरुपजायमानप्रामाण्यवन्नियमविरहव्यतिरिक्तदोषरहिताद्धेतोरप्रामाण्यमप्युपजायमानं स्वतो विशेषाभावात्। तथा च। "अप्रामाण्यं त्रिधाभिन्नं मिथ्यात्वाज्ञानसंशयैः। वस्तुत्वाद्द्विविधस्यात्र सम्भवो दुष्टकारणात्" इत्यस्य विरोधः। ततो हेतोर्नियमविरहस्य दोषरूपत्वे चेन्द्रिये मलापगमस्य गुणरूपतास्तु। तथा च सूक्तमिदम् "तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः। अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः" इति। गुणेभ्यो हि दोषाणामभाव इत्यभिदधता गुणेभ्यो गुणा एवाभिहितास्तथा प्रामाण्यमेवाप्रामाण्यद्वयासत्त्वम्। तस्य गुणेभ्यो भावे कथं न परतः प्रामाण्यम्। कथं वा तस्यौत्सर्गिकत्वम् दुष्टकारणप्रभवासत्यप्रत्ययेष्वभावात्। अप्रामाण्यस्य चौत्सर्गिकत्वमस्तु–दोषाणां गुणापगमे व्यापारात्। भवतु वा भावाद्भिन्नोऽभावस्तथाप्यस्य प्रामाण्योत्पत्तौ व्याप्रियमाणत्वात्कथं तत्स्वतः? न चाभावस्याऽजनकत्वं कुड्याद्यभावस्य परभागावस्थितघटादिप्रत्ययोत्पत्तौ जनकत्वप्रतीतेः प्रमाणपञ्चकाभावस्य चाभावप्रमाणोत्पत्तौ। योपि यथार्थत्वायथार्थत्वे विहायोपलम्भसामान्यस्यानुपलम्भः सोपि विशेषनिष्ठत्वात्तत्सामान्यस्य युक्तः। न हि निर्विशेषं गोत्वादिसामान्यमुपलभ्यते गुणदोषरहितमिन्द्रियसामान्यं वा। येनोपलम्भसामान्येऽप्ययं पर्यनुयोगः स्यात्।

---

१ भावान्तरस्वभावत्वादभावस्य ॥ २ यद् (गुण) निरूपणाधीन निरूपण यस्य (दोषस्य) तत्तत्प्रतियोगि ॥ ३ गुण ॥ ४ अभावस्य ॥ ५ अज्ञानादिना क्रियमाणत्वलक्षणकार्यत्व (नैर्मल्यादि) ॥ ६ निस्स्वभावाभावस्य ॥ ७ त्वया परेण ॥ ८ अभ्युपगमे ॥ ९ गुणाद्दोपलक्षण कपालक्षणादन्यो घटो वा ॥ १० गुण कपाल वा ॥ ११ मीमांसकमते ॥ १२ एकस्माद्भूतलोपलम्भलक्षणाद्भावादपरो घटोपलम्भलक्षणो भावो भावान्तर तेन विनिर्मुक्तो भावो भूतलोपलम्भलक्षण स एव घटस्यानुपलम्भो यथा ॥ १३ ॥ लिङ्गस्य ॥ १४ निस्स्वभावत्वाभावे ॥ १५ घटस्य ॥ १६ कपालस्य ॥ १७ घटस्य ॥ १८ नैव ॥ १९ साधने ॥ २० अविनाभावाभाव ॥ २१ स्वत ॥ २२ भावान्तररहितकारणमात्रजन्यत्वस्य ॥ २३ विपर्यय ॥ २४ ज्ञानाभाव स्वप्नावस्थायाम् ॥ २५ अज्ञानस्य ज्ञानभावरूपतयास्वत सिद्धत्वान तत्र काचिदपेक्षा ॥ २६ भावरूपत्वात् ॥ २७ संशयविपर्ययरूपस्य ॥ २८ त्रिषु मध्ये ॥ २९ काचकामलादिदोषदूषिताचक्षुष ॥ ३० ग्रन्थस्य ॥ ३१ अनुमानस्य प्रामाण्ये गुणाना व्यापारो न दृष्टो यत ॥ ३२ संशयविपर्यय ॥ ३३ कारणेन ॥ ३४ प्रामाण्यम् ॥ ३५ अबाधित आस्ते ॥ ३६ परेण ॥ ३७ गुणाभावरूपत्वाद्दोषाणा दोषाभाव एव च गुण ॥ ३८ यथा गुणेभ्यो दोषाणामभाव ॥ ३९ किंच ॥ ४० नैसर्गिकत्वम् ॥ ४१ औत्सर्गिकत्वस्य ॥ ४२ किंच ॥ ४३ उत ॥ ४४ निराकरणे नाशे ॥ ४५ गुणरूपात् ॥ ४६ गुणेभ्यो भिन्नो दोषाणामभाव इत्यर्थ ॥ ४७ प्रामाण्य प्रति ॥ ४८ प्रमिति ॥ ४९ न हि सर्वथा यथार्थत्वायथार्थत्वविशेषाद्भिन्नमुपलम्भसामान्यम् ॥ ५० विशेषरहितगोत्वादिसामान्योपलम्भप्रकारेण। गुणदोषरहितेन्द्रियसामान्योपलम्भप्रकारेण च ॥ ५१ अपि शब्दोत्र एवकारार्थे ॥ ५२ यतो यथार्थत्वायथार्थत्वे विहायेत्यादि ॥ ५३ उपलम्भसामान्यस्यानुपलम्भलक्षण ॥ ५४ अपि तु विशेषेप्यय पर्यनुयोगो ज्ञातव्य ॥

लोकं च प्रमाणयतोभयं परतः प्रतिपत्तव्यम् । सुप्रसिद्धो हि लोकेऽप्रामाण्ये दोषावष्टब्धचक्षुषो व्यापारः प्रामाण्ये नैर्मल्यादियुक्तस्य, यत्पूर्वं दोषावष्टब्धमिन्द्रियं मिथ्याप्रतिपत्तिहेतुस्तदेवेदानीं नैर्मल्यादियुक्तं सम्यक्प्रतिपत्तिहेतुरिति प्रतीतेः । यच्चोच्यते क्वचिन्निर्मलमपीन्द्रियं मिथ्याप्रतीतिहेतुरन्यत्रारक्तादिस्वभावं सत्यप्रतीतिहेतुस्तत्रापि प्रतिपत्तुर्दोषः स्वच्छनील्यादिमले निर्मलाभिप्रायात् । अनेकप्रकारो हि दोषः प्रकृत्यादिभेदात् । तदभावोपि भावान्तरस्वभावस्तथाविधस्तत एव । न चोत्पन्नं सद्विज्ञानं प्रामाण्ये नैर्मल्यादिकमपेक्षते येनानयोर्भेदः स्यात् । गुणवच्चक्षुरादिभ्यो जायमानं हि तदुपात्तप्रामाण्यमेवोपजायते । अर्थतथाभावपरिच्छेदसामर्थ्यलक्षणामाण्यस्य स्वतो भावाभ्युपगमे चार्थान्यथात्वपरिच्छेदसामर्थ्यलक्षणाप्रामाण्यस्याप्यविद्यमानस्य केनचित्कर्त्तुमशक्तेः स्वतो भावोऽस्तु । कथं चैवं वादिनो ज्ञानरूपतात्मन्यविद्यमानेन्द्रियैर्जन्यते ? तस्यास्तत्राविद्यमानत्वेप्युत्पत्त्युपगमेऽर्थग्रहणशक्त्या कोपराधः कृतो येनास्यास्ततः समुत्पादो नेष्यते । न चेमाः शक्तयः स्वाधारेभ्यः समासादितव्यतिरेका येन स्वाधाराभिमतविज्ञानवत्कारणेभ्यो नोदयमासादयेयुः । पाश्चात्यसंवादप्रत्ययेन प्रामाण्यस्याजन्यत्वात्स्वतो भावेऽप्रामाण्यस्यापि सोस्तु । न खलूत्पन्ने विज्ञाने तदप्युत्तरकालभाविविसंवादप्रत्ययाद्भवति । यच्चोक्तम् । "लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु" तदप्युक्तिमात्रम् । यथावस्थितार्थव्यवसायरूपं हि संवेदनं प्रमाणं तस्यात्मलाभे कारणापेक्षायां काऽन्या स्वकार्ये प्रवृत्तिर्या स्वयमेव स्यात् । घटस्य तु जलोद्वहनव्यापारात्पूर्वं रूपान्तरेणापि स्वहेतोरुत्पत्तेर्युक्ता मृदादिकारणनिरपेक्षस्य तत्र प्रवृत्तिः प्रतीतिनिबन्धनत्वाद्वस्तुव्यवस्थायाः । विज्ञानस्य तूत्पत्त्यनन्तरमेव विनाशोपगमात्कुतो लब्धात्मनो वृत्तिः स्वयमेव स्यात् । तदुक्तम् "न हि तत्क्षणमप्यास्ते जायते वाऽप्रमात्मकम् । येनार्थग्रहणे पश्चाद्व्याप्रियेतेन्द्रियादिवत् ॥ १ ॥" तेन जन्मैव बुद्धेर्विषये व्यापार उच्यते । तदेव च प्रमारूपं तद्वतीकरणं च धीः" इति । किञ्च प्रमाणस्य किं कार्यं यत्रास्य प्रवृत्तिः स्वयमेवोच्यते ? यथार्थपरिच्छेदः प्रमाणमिदमित्यवसायो वा ? तत्राद्यविकल्पे आत्मानमेव करोतीत्यायातम् । तच्चायुक्तम्—स्वात्मनि क्रियाविरोधात् । नापि प्रमाणमिदमित्यवसायः—भ्रान्तिकारणसद्भावेन क्वचित्तदभावात् ।

---

१ प्रामाण्याप्रामाण्य ॥ २ चक्षुष ॥ ३ नरे ॥ ४ पुरुषान्तरे ॥ ५ पुरुषस्य ॥ ६ निर्मल इति ॥ ७ वातपित्तादि ॥ ८ नैर्मल्यादिगुण ॥ ९ अनेकप्रकार ॥ १० गुणम् ॥ ११ कालभेद ॥ १२ ज्ञान कर्तृ ॥ १३ न हि स्वतोऽसती शक्तिरित्यस्य दोषमाह ॥ १४ परेण ॥ १५ स्वाश्रयकारणे ॥ १६ कारणेन ॥ १७ यत्कारणेऽविद्यमान तत्स्तत एव जायते इत्येवंवादिन ॥ १८ घटाद्याकारविशेषितज्ञानरूपता ॥ १९ परेण ॥ २० कर्तृभूतया ॥ २१ सापि ज्ञानेऽविद्यमाना इन्द्रियैर्जन्यताम् ॥ २२ परेण ॥ २३ ज्ञानेभ्य ॥ २४ प्राप्तभेदा ॥ २५ आक्षेपे ॥ २६ यया शक्त्या आधारीभूतविज्ञानकारणेभ्यो न तथेमा इत्यर्थ ॥ २७ परेणाङ्गीकृते ॥ २८ परेण ॥ २९ प्रामाण्य कथ्यते ॥ ३० आक्षेपोक्ति ॥ ३१ प्रामाण्य ॥ ३२ अर्थपरिच्छित्तिरूपे प्रवृत्तिरूपे च ॥ ३३ न कापि ॥ ३४ रिक्ततारूपेण ॥ ३५ जलाहरणलक्षणे स्वकार्ये ॥ ३६ परमते ॥ ३७ न हि ॥ ३८ अप्रमिति ॥ ३९ आक्षेपे ॥ ४० ज्ञानस्य लक्षणान्तरे अवस्थानप्रकारेण अप्रमात्मकभवनप्रकारेण ॥ ४१ उत्पत्त्यनन्तरम् ॥ ४२ आत्मन ॥ ४३ क्षणमपि नास्ते अप्रमात्मक वा न जायते येन प्रकारेण ॥ ४४ व्याप्रियेत ॥ ४५ एव चेद्विज्ञानस्य करणरूपता क्रियारूपता न स्यादित्युक्ते आह ॥ ४६ जन्मैव ॥ ४७ परिच्छित्ति ॥ ४८ स्वज्ञप्ति ॥ ४९ तयोर्मध्ये ॥ ५० स्वस्वरूपम् ॥ ५१ तत्र प्रवर्तनात्तस्य ॥ ५२ उत्पत्तिलक्षणाया ॥ ५३ सदोषनयन ॥ ५४ सत्यजलज्ञाने प्रमाणस्वभावे ॥

क्वचिद्विपर्ययदर्शनाच्च। अनुमानोत्पादकहेतोस्तु साध्याविनाभावित्वमेव गुणो, यथा तद्वैकल्यं दोषः। साध्याविनाभावस्य हेतुस्वरूपत्वाद्गुणरूपत्वाभावे तद्वैकल्यस्यापि हेतोः स्वरूपविकलत्वाद्दोषता मा भूत्। आगमस्य तु गुणवत्पुरुषप्रणीतत्वेन प्रामाण्यं सुप्रसिद्धम्–अपौरुषेयत्वस्यासिद्धेर्नीलोत्पलादिषु दहनादीनां वितथप्रतीतिजनकत्वोपलम्भेनानेकान्तात्परस्परविरुद्धभावनानियोगाद्यर्थेषु प्रामाण्यप्रसङ्गाच्च। निखिलवचनानां लोके गुणवत्पुरुषप्रणीतत्वेन प्रामाण्यप्रसिद्धेः। अत्रान्यथापि तत्परिकल्पने प्रतीतिविरोधाच्च। अपि चापौरुषेयत्वेप्यागमस्य न स्वतोऽर्थे प्रतीतिजनकत्वम्। सर्वदा तत्प्रसङ्गात्। नापि पुरुषप्रयत्नाभिव्यक्तस्य–तेषां रागादिदोषदुष्टत्वेनोपगमात् तत्कृताभिव्यक्तेर्यथार्थतानुपपत्तेः। तथा चाप्रामाण्यप्रसङ्गभयादपौरुषेयत्वाभ्युपगमो गजस्नानमनुकरोति। तदुक्तम्। "असंस्कार्यतया पुंभिः सर्वथा स्यान्निरर्थता। संस्कारोपगमे व्यक्तं गजस्नानमिदं भवेत् ॥१॥" तत्र प्रामाण्यस्योत्पत्तौ परानपेक्षा। नापि ज्ञप्तौ। साहि निर्निमित्ता सन्निमित्ता वा? न तावन्निर्निमित्ता–प्रतिनियतदेशकालस्वभावाभावप्रसङ्गात्। सनिमित्तत्वे किं स्वनिमित्ताऽन्यनिमित्ता वा? न तावत्स्वनिमित्ता स्वसंविदितत्वानभ्युपगमात्। अन्यनिमित्तत्वे तत्किं प्रत्यक्षमुतानुमानम्? न तावत्प्रत्यक्षं तस्य तत्र व्यापाराभावात्। तद्धीन्द्रियसंयुक्ते विषये तद्व्यापारादुदयमासादयत्प्रत्यक्षव्यपदेशं लभते। न च प्रामाण्येनेन्द्रियाणां सम्प्रयोगो येन तद्व्यापारजनितप्रत्यक्षेण तत्प्रतीयेत। नापि मनोव्यापारजप्रत्यक्षेण एवंविधानुभवाभावात्। नाप्यनुमानतः लिङ्गाभावात्। अर्थप्राकट्यं लिङ्गम्। तत्किं यथार्थत्वविशेषणविशिष्टं निर्विशेषणं वा? प्रथमपक्षे तस्य यथार्थत्वविशेषणग्रहणं प्रथमप्रमाणादन्यस्माद्वा? आद्यपक्षे परस्पराश्रयः दोषः। द्वितीयेऽनवस्था। निर्विशेषणात्तत्प्रतिपत्तौ चातिप्रसङ्गः। प्रत्यक्षानुमानाभ्यां तत्प्रामाण्यनिश्चये स्वतः प्रामाण्यव्याघातश्च। यच्च संवादात्पूर्वस्य प्रामाण्ये चक्रकदूषणं तदप्यसङ्गतम्। न खलु संवादात्पूर्वस्य प्रामाण्यं निश्चित्य प्रवर्त्तते। किन्तु वह्निरूपदर्शने सत्येकदा शीतपीडितोऽन्यार्थं तद्देशमुपसर्पन् कृपालुना वा केनचित्तद्देशं वह्नेरानयने तत्स्पर्शविशेषमनुभूय तद्रूपस्पर्शयोः सम्बन्धमवगम्यानभ्यासदशायां ममायं रूपप्रतिभासोऽभिमतार्थक्रियासाधनः-एवंविधप्रतिभास

---

१ भ्रान्तज्ञाने प्रमाणमित्यध्यवसायदर्शनात् ॥ २ शब्दस्य ॥ ३ पुन ॥ ४ "पूर्वाचार्यो हि धात्वर्थं वेदे भट्टस्तु भावनाम्। प्राभाकरो नियोग तु शङ्करो विधिमब्रवीत्" ॥ ५ आगमो धर्मी प्रामाण्य भवतीति साध्यम् ॥ ६ स्वर्णे ॥ ७ यदपौरुषेय तत्प्रमाणमित्युक्तऽनेकान्तात् ॥ ८ विधि ॥ ९ बोधे ॥ १० वेदे ॥ ११ अपोरुषेयत्वेन ॥ १२ अन्यथा ॥ १३ ज्ञातस्य ॥ १४ अपौरुषेयत्वस्य ॥ १५ अपोरुषेयस्य वेदस्य ॥ १६ वेदस्य पुरुषकृताभिव्यक्तितोऽर्थे प्रतीतिजनकत्वे च ॥ १७ तव परस्य ॥ १८ वेदस्य ॥ १९ निश्चिता ॥ २० पुभि ॥ २१ गुण ॥ २२ मीमासकमतप्रक्षेप करोति ॥ २३ अन्यथा ॥ २४ प्रामाण्यमात्मान स्वेनैव जानाति ॥ २५ अत्यन्तपरोक्षत्वाद्विज्ञानस्य ॥ २६ मीमासके ॥ २७ प्रामाण्यज्ञप्तो ॥ २८ जायमानम् ॥ २९ सन्निकर्ष ॥ ३० अपि तु न ॥ ३१ तत्प्रतीयेत ॥ ३२ प्रामाण्यज्ञप्तिरूप ॥ ३३ प्रामाण्यज्ञप्ते ॥ ३४ प्राकट्य प्रामाण्याविनाभावि भवति तच्च यत्र ज्ञानेस्ति तत्र प्रामाण्यमिति ॥ ३५ प्रमाणप्रामाण्यमस्ति यथार्थप्राकट्यात् ॥ ३६ प्राकट्यमात्रम् ॥ ३७ लिङ्गस्य ॥ ३८ प्रथमजलज्ञानात् ॥ ३९ प्रमाणात् ॥ ४० प्रमाणभूतप्रथमज्ञानात्साधनस्य यथार्थत्वविशेषणग्रहण गृहीतविशेषणविशिष्टात्साधनात्प्रथमज्ञानस्य प्रामाण्यनिश्चय इति ॥ ४१ लिङ्गात् ॥ ४२ प्रामाण्यज्ञप्तौ ॥ ४३ मिथ्याज्ञानेऽपि प्रामाण्य स्यादित्यर्थ ॥ ४४ पूर्वज्ञानग्राहि द्वितीय प्रत्यक्षम् ॥ ४५ पूर्वज्ञानस्य ॥ ४६ किञ्च ॥ ४७ अर्थक्रियारूपात् ॥ ४८ परोक्षम् ॥ ४९ जलादिज्ञानस्य ॥ ५० नर ॥ ५१ नर ॥ ५२ पुष्पार्थं ॥ ५३ गच्छन् ॥ ५४ उष्णस्पर्शम् ॥ ५५ अविनभावम् ॥ ५६ भास्वर ॥ ५७ शीतापहरणलक्षण ॥ ५८ पिङ्गाङ्गभासुररूप ॥

त्वात्पूर्वोत्पन्नैवंविधप्रतिभासवदित्यनुमानात्साधननिर्भासि ज्ञानस्य प्रामाण्यं निश्चित्य प्रवर्तते । कृषीवलादयोपि ह्यनभ्यस्तवीजादिविषये प्रथमतरं तावच्छरावादावल्पतरवीजवपनादिना वीजावीजनिर्धारणाय प्रवर्त्तन्ते । पश्चाद्दृष्टसाधर्म्यात्परिशिष्टस्य वीजावीजतया निश्चितस्योपयोगाय परिहाराय चाभ्यस्तवीजादिविषये तु निःसंशयं प्रवर्त्तन्ते । यच्चाभ्यधायि-संवादप्रत्ययात्पूर्वस्य प्रामाण्यावगमेऽनवस्था तस्याप्यपरसंवादापेक्षाऽविशेषात् । तदप्यभिधानमात्रम्-तस्य संवादरूपत्वेनापरसंवादापेक्षाभावात् । प्रथमस्यापि संवादापेक्षा मा भूदित्यप्यसमीचीनम् तस्यासंवादरूपत्वात् अतः संवादकद्वारेणैवास्य प्रामाण्यं निश्चीयते । अर्थक्रियाज्ञानं तु साक्षादविसंवाद्यर्थक्रियालम्बनत्वान्न तथा प्रामाण्यनिश्चयभाक् । तेन कस्यचित्तु यदीष्येतेत्यादि प्रलापमात्रम् । न चार्थक्रियाज्ञानस्याप्यवस्तुवृत्तिशङ्कायामन्यप्रमाणापेक्षयानवस्थावतारः । अस्यार्थाभावेऽदृष्टत्वेन निराकृतत्वात् । यथैव हि किं गुणव्यतिरिक्तेन गुणिनाऽर्थक्रिया संपादिता उताऽव्यतिरिक्तेनोभयरूपेणानुभयरूपेण त्रिगुणात्मना वार्थेन परमाणुसमूहलक्षणेन वा इत्याद्यर्थक्रियार्थिनां चिन्ताऽनुपयोगिनीनिष्पन्नत्वाद्वाञ्छितफलस्य । तथेयमपि किं वस्तुभूतायामवस्तुभूतायां वार्थक्रियायां तत्संवेदनमिति । वृद्धिच्छेदादिकं हि फलमभिलषितम् । तच्चेन्निष्पन्नं वृद्धि योगि ज्ञानानुभवे किं तच्चिन्तासाध्यम् । न च स्वप्नार्थक्रियाज्ञानस्यार्थाभावेपि दृष्टत्वाज्जाग्रदर्थक्रियाज्ञानेपि तथा शङ्का तस्यैतद्विपरीतत्वात् । स्वप्नार्थक्रियाज्ञानं हि सबाधम्—तद्द्रष्टुरेवोत्तरकालमन्यथा प्रतीतेः । न जाग्रद्दशाभावीति । यदि चौत्रार्थक्रियाज्ञानमर्थमन्तरेण स्यात्किमन्यज्ज्ञानमर्थाव्यभिचारि यद्बलेनार्थव्यवस्था । अपि चार्थक्रियाहेतुर्ज्ञानं प्रमाणमिति प्रमाणलक्षणं तत्कथं फलेप्याशङ्क्यते । यथाङ्कुरहेतुर्वीजमिति वीजलक्षणस्याङ्कुरेऽभावात् । नैवं प्रश्नः कथमङ्कुरे वीजरूपता निश्चीयते इति । एवमत्रापि । यच्चेदमुक्तं श्रोत्रधीश्चाप्रमाणं स्यादितराभिरसङ्गतेरिति तदप्ययुक्तम् ।—वीणादिरूपविशेषोपलम्भतस्तच्छब्दविशेषे शङ्काव्यावृत्तिप्रतीतेः कथमितराभिरसङ्गतिः—श्रोत्रबुद्धेरर्थक्रियानुभवरूप-

---

१ शीतापनोदस्य साधनमग्निः ॥ २ जल ॥ ३ परेण ॥ ४ ज्ञानस्य ॥ ५ जैनै ॥ ६ सवादप्रत्ययो धर्मी अपरसवादापेक्षोभवतीति साध्य प्रत्ययत्वात् ॥ ७ प्रत्ययत्वेन ॥ ८ जलादिज्ञानस्य ॥ ९ पूर्वज्ञानविषये उत्तरज्ञानस्य वृत्ति सवाद ॥ १० असवादरूपत्व यत ॥ ११ प्रेक्षावद्भि ॥ १२ सवाद ॥ १३ स्नानपानावगाहनादि ॥ १४ पुन ॥ १५ यस (कर्मधारयसमास) ॥ १६ वस ॥ १७ अविसवादापेक्षाप्रकारेण ॥ १८ भवति ॥ १९ कारणेन ॥ २० स्वत एव प्रमाणता । प्रथमस्य तथाभावे प्रद्वेष केन हेतुना ॥ २१ अपिशब्दात्साधनज्ञानस्य ग्रहणम् ॥ २२ विद्यमानेपि स्नानादिके अविद्यमानस्नानादिलक्षणाऽवस्तुवृत्तिशङ्कायाम् ॥ २३ नि सशयत्वात् ॥ २४ रूपस्पर्शादि ॥ २५ योग ॥ २६ साङ्ख्यचार्वाकौ ॥ २७ व्यतिरिक्ताव्यतिरिक्त ॥ २८ जैनमीमासकौ ॥ २९ वौद्धविशेष ॥ ३० सत्त्वरजस्तमोलक्षणा गुणा ॥ ३१ साङ्ख्य ॥ ३२ प्रधानेन ॥ ३३ वौद्ध ॥ ३४ अवयवी ॥ ३५ यौग ॥ ३६ नृणाम् ॥ ३७ स्नानपानावगाहनादे ॥ ३८ अर्थक्रियाज्ञानचिन्ता ॥ ३९ अङ्गमलापहार ॥ ४० पुरुषस्य ॥ ४१ पुरुषेण ॥ ४२ का ॥ ४३ अर्थक्रियाज्ञानम् ॥ ४४ न सबाधम् ॥ ४५ किञ्च ॥ ४६ जाग्रद्दशाभाव्यर्थक्रियायाम् ॥ ४७ स्थिति ॥ ४८ किन्तु नैव शङ्कनीयम् ॥ ४९ परेण ॥ ५० अर्थक्रियाज्ञानेप्रमाणलक्षणाशङ्का कथ स्यात् । अर्थक्रियाज्ञानरूपे फले अर्थक्रियाहेतुतया प्रमाणता निश्चीयते कथमिति प्रश्न स्यात् ॥ ५१ स्वग्रन्थे ॥ ५२ चक्षुरादिजनितधीभि ॥ ५३ रूपादिज्ञानै ॥ ५४ अर्थस्य शब्दस्य क्रिया, उत्पद्यमानत्व तस्यानुभवरूपत्वेन ॥

त्वेन स्वतः प्रामाण्यसिद्धेश्च[1] गन्धादिबुद्धिवत्[2]। संशयाद्यभावान्नान्येन[3] सङ्गत्यपेक्षा[4]। यत्रैव[5] हि संशयादिस्तत्रैव[6] साऽपेक्ष्यते[7]। नान्यत्र—अतिप्रसङ्गात्। अथोच्य-तेऽर्थक्रियाऽविसंवादोत्पूर्वस्य प्रामाण्यनिश्चये[8] मणिप्रभायां[9] मणिबुद्धेरपि प्रामाण्यनिश्चयः स्यात्तदप्यपर्यालोचिताभिधानमेवंभूतार्थक्रियाज्ञानान्मणिबुद्धेरप्रामाण्यस्यैव निश्चयात्तेन[11]संवादाभावात्। कुञ्चिकाविवरस्थायां हि मणिप्रभायां मणिज्ञानमपरैकान्तर्देशसम्बद्धे[12] तु मणावर्थक्रियाज्ञानमिति भिन्नदेशार्थग्राहकत्वेन भिन्नविषययोः पूर्वोत्तरज्ञानयोः कथमविसंवादस्तिमिराद्याहितविभ्रमज्ञानवत्[16]। यच्चान्यदुक्तम्[18]—क्वचित्कूटेपि जयतुङ्गे ज्ञानं प्रमाणं स्यात्कतिपयार्थक्रियादर्शनात्। तत्र कूटे कूटज्ञानं प्रमाणमेवाऽकूटज्ञानं तु न प्रमाणं तत्संवादाभावात् सम्पूर्णचेतनालाभो हि तस्यार्थक्रिया न कतिपयचेतनालाभ इति। यच्चैकविषयं भिन्नविषयं वा संवादकमित्यु-क्तम्। तत्रैकाधारवर्तिरूपादीनां तादात्म्यप्रतिबन्धेनान्योन्यं व्यभिचाराभावात्। जाग्रद्दशारसादिज्ञानं रूपाद्यविनाभावि रसादिविषयत्वात्। भिन्नविषयत्वेप्यांश-ङ्कितविषयाभावस्य रूपज्ञानस्य प्रमाण्यनिश्चयात्मकम्। दृश्यते हि विभिन्नदेशाकारस्यापि वीणादे रूपविशेषदर्शने शब्दविशेषे शङ्कान्यावृत्तिः किं पुनर्नात्र। अवि-नाभावो हि संवाद्यसंवादकभावनिमित्तं नान्यत्। संवादज्ञानं किं पूर्वज्ञानविषयं, तदविषयं वेत्याद्यप्यसमीक्षिताभिधानम्। न खलु संवादज्ञानं तद्ग्राहित्वेनास्य प्रामाण्यं व्यवस्थापयति। किं तर्हि? तत्कार्यविशेषत्वेनाग्न्यादिकमिव धूमादिकं सर्वप्राणभृतां प्रामाण्ये सन्देहविपर्ययासिद्धेश्च इत्यप्ययुक्तम्—प्रेक्षापूर्वकारिणो हि प्रमाणाप्रमाणचिन्तायामधिक्रियन्ते नेतरे। ते च कासांचिद्ज्ञानव्यक्तीना विसंवाददर्शनाज्जाताशङ्काः कथं ज्ञानमात्रादयमित्थमेवार्थ इति निश्चिन्वन्ति प्रामाण्यं वास्य। अन्यथैषां प्रेक्षावत्त्वैव हीयेत। प्रमाणे वाधककारणदोषज्ञानाभावात्प्रामाण्यावसाय इत्यप्यभिधानमात्रम्।—तदभावो हि वाधकाग्रहणे, तदभावनिश्चये वा स्यात्? प्रथमपक्षे भ्रान्तज्ञाने तद्भावेपि तदग्रहणं कञ्चित्कालं दृष्टम्। एवमत्रापि स्यात्। भ्रान्तज्ञाने कञ्चित्कालमग्रहेपि कालान्तरे वाधकग्रहणं, सम्यग्ज्ञाने तु कालान्तरेपि तदग्रहणमित्ययं विभागः सर्वविदां नास्मादृशाम्। वाधकाभावनिश्चयोपि सम्यग्ज्ञाने प्रवृत्तेः प्रागुत्तरकालं वा? आद्यविकल्पे भ्रान्तज्ञानेपि प्रमाणत्व-प्रसङ्गः। द्वितीयविकल्पे तन्निश्चयस्याकिञ्चित्करत्वं तमन्तरेणैव प्रवृत्तेरुत्पन्नत्वात्। न च वाधकाभावनिश्चये किञ्चिन्निमित्तमस्ति[51]। अनुपलब्धिरस्तीति[52] चेत्किं प्राक्का-

१ किंच ॥ २ स्पर्शरस ॥ ३ अपरेण सजातीयेनार्थक्रियाज्ञानेन ॥ ४ सवाद ॥ ५ ज्ञाने ६ स्यात् ॥ ७ अन्यथा ॥ ८ प्रतीयमानेपि स्वकीये सुखे अन्यापेक्षा स्यात् ॥ ९ ज्ञानस्य ॥ १० अङ्गीक्रियमाणे ॥ ११ ता ॥ १२ भिन्नदेशार्थसम्बद्धा ॥ १३ पूर्वज्ञानस्य ॥ १४ अभूत् ॥ १५ जनित ॥ १६ विभ्रमज्ञानस्य यथा भिन्नदेशसम्बन्धार्थक्रियाज्ञानरूपसंवादात्न प्रामाण्यम् ॥ १७ शुक्तिकादौ रजतादिज्ञान विभ्रम ॥ १८ परेण ॥ १९ द्रङ्गे ॥ २० दूषण-मुच्यते ॥ २१ अकूटजयतुङ्गस्य ॥ २२ अर्थ ॥ २३ पूर्वज्ञानस्य ॥ २४ परेण ॥ २५ मातु(लि)ङ्गादि ॥ २६ सम्बन्धेन ॥ २७ द्वितीयम् ॥ २८ रूपरसज्ञानयोः ॥ २९ जाग्रद्दशाभावि ॥ ३० आद्यस्य जाग्रद्दशाभाविन ॥ ३१ आद्यस्य ॥ ३२ रूपादौ ॥ ३३ विभिन्नविषययो रूपरसज्ञानयो शङ्काव्यावृत्ति कुत इत्युक्ते आह ॥ ३४ एकविषयत्व भिन्नविषयत्व वा ॥ ३५ पूर्वज्ञान विषयो यस्य ॥ ३६ अर्थक्रियाज्ञान ॥ ३७ कर्तृ ॥ ३८ अग्न्यादिक कर्मतामापन्न यथा व्यवस्थापयति धूमादिक कर्तृ। कुतस्तत्कार्यत्वान्न तु तद्ग्राहकत्वादित्यर्थ ॥ ३९ कर्तृ ॥ ४० वाधक ॥ ४१ अप्रेक्षाकारिणो नरा ॥ ४२ मरीचिकादौ ॥ ४३ किन्तु नैव ॥ ४४ वाधकाभाव ॥ ४५ उभयो ॥ ४६ सत्यजलज्ञाने ॥ ४७ उभयो (कोट्यो)। ४८ देशकालापेक्षया ॥ ४९ स्नानपानादिलक्षणाया ॥ ५० किंच ॥ ५१ कारणम् ॥ ५२ विवादापन्ने प्रमाणे वाधक नास्ति अनुपलब्धेरिति ॥

लोत्तरकाला वा ? न तावत्प्राक्काला तस्याः प्रवृत्त्युत्तरकालभाविबाधकाभावनिश्चयनिमित्तत्वासम्भवात् । न ह्यन्यकालानुपलब्धिरन्यकालम[1]भावनिश्चयं[2] विदधात्यतिप्रसङ्गात्[4] । नाप्युत्तरकाला—प्राक् प्रवृत्तेरुत्तरकालं बाधकोपलब्धिर्न भविष्यतीत्यसर्वविदा निश्चेतुमशक्यत्वेनासिद्धत्वात् । प्रवृत्त्युत्तरकाल[6]भाविनिश्चयमात्रनिमित्तत्वे न किञ्चित्फलं तस्याकिञ्चित्करत्वात् । किञ्चासौ सर्वसम्बन्धिन्यात्मसम्बन्धिनी वा ? प्रथमपक्षे असिद्धा । न खलु सर्वे प्रमातारो बाधकं नोपलभन्ते इत्यर्वाग्दर्शिना निश्चेतुं शक्यम् । नाप्यात्मसम्बन्धिनी तस्याः[11] परचेतोवृत्तिविशेषैरनैकान्तिकत्वात्[12] । तन्नानुपलब्धिर्निमित्तम् । नापि संवादो[13]नवस्था[14]प्रसङ्गात्[15] । कारणदोषाभावेप्ययमेव न्यायः । एवं त्रि[16]चतुरज्ञानेत्याद्यपि स्वगृहमान्यम् । कैस्यचिद्[17]विज्ञानस्य प्रामाण्यं पुनरप्रामाण्यं[18] पुनः प्रमाणतेत्यवस्थात्रयदर्शनाद्बाधके तद्बाधकादौ वावस्थात्रयमाशङ्कमानस्य परीक्षकस्य कथं नापरापेक्षा येनानवस्था न स्यात् । आशङ्केत हि यो मोहादित्याद्यपि विभीषिकामात्रं यतो नाभिशापमात्रात्प्रेक्षावतां प्रमाणमन्तरेण बाधकाशङ्का व्यावर्त्तते । न चास्या व्यावर्त्तकं प्रमाणं भवन्मतेऽस्तीत्युक्तम् । कारणदोषज्ञानेपि पूर्वेण जाताशङ्कस्य तत्कारणदोषान्तरापेक्षायां कथमनवस्था न स्यात् । तस्य तत्कारणदोषग्राहकज्ञानाभावमात्रतः प्रमाणत्वान्नानवस्था यदाह "यदा स्वतः प्रमाणत्वं तदान्यन्नैव मृग्यते । निवर्त्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः" इत्यपि प्रागेव विहितोत्तरम् । न च दोषाज्ञानात्तदभावः सत्स्वपि तेषु तदज्ञानसम्भवात् । सम्यग्ज्ञानोत्पादनशक्तिवैपरीत्येन मिथ्याप्रत्ययोत्पादनयोग्यं हि रूपं तिमिरादिनिमित्तमिन्द्रियदोषः । स चातीन्द्रियत्वात्सन्नपि नोपलक्ष्यते । न च दोषाः ज्ञानेन व्याप्ता येन तन्निवृत्त्या निवर्त्तेरन् । ततोऽयुक्तमिदम् "तस्मात्स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् । बाधकरणदुष्टत्वज्ञानाभ्यां तदपोद्यते ॥ पराधीनेपि वै तस्मिन्नानवस्था प्रसज्यते । प्रमाणाधीनमेतद्धि स्वतस्तच्च प्रतिष्ठितम् ॥ प्रमाणं हि

---

१ नेद जलमिति ॥ २ पूर्वेण जाताशङ्कस्य ॥ ३ बाधकस्य ॥ ४ सम्प्रत्यत्र घटानुपलब्धि कालान्तरेप्यत्र घटाभाव कुर्यादित्यतिप्रसङ्गात् ॥ ५ जलादिज्ञाने ॥ ६ बाधकाभाव ॥ ७ अनुपलम्भस्य ॥ ८ प्रवृत्त्यर्थौ हि निश्चयोऽवलोक्यते प्रवृत्तेश्च जातत्वान्निश्चयस्याकिञ्चित्करत्वम् ॥ ९ अनुपलब्धि ॥ १० किंचिज्ज्ञेन ॥ ११ अनुपलब्धे ॥ १२ लब्धुमशक्यै ॥ १३ बाधकाभावनिश्चय निमित्तम् ॥ १४ अन्यथा ॥ १५ पूर्वेण जाताशङ्कस्य सवादेसवादान्तरापेक्षणात् ॥ १६ इद जल पुनरिद जल पुनरिद जलम् ॥ १७ विवक्षितस्य ॥ १८ बाधकात् ॥ १९ प्रथमज्ञानलक्षणसवादप्रमाणम् ॥ २० चतुर्थज्ञानस्य ॥ २१ प्रत्यक्षादिना प्रामाण्यग्रहणाभावे प्रामाण्ये बाधकाशङ्काव्यावर्त्तनस्य कर्त्तुमशक्यत्वात् ॥ २२ द्वितीयविकल्प ॥ २३ विज्ञानकारणनेत्रादिकम् ॥ २४ काचकामलादि ॥ २५ ज्ञानेन ॥ २६ इन्द्रियाणामतीन्द्रियत्वादभाव ॥ २७ सवादकज्ञानम् ॥ २८ कुत ॥ २९ शङ्कया यदापादितमप्रामाण्यम् ॥ ३० सवादमन्तरेण ॥ ३१ स्वच्छनीत्यादि ॥ ३२ कारणदोषाभावेप्ययमेव न्याय इति ॥ ३३ किञ्च ॥ ३४ दोषाभाव ॥ ३५ किञ्च ॥ ३६ अनवस्था समर्थिता यत ॥ ३७ अग्रे वक्ष्यमाणलक्षणम् ॥ ३८ मीमासकग्रन्थे । प्रथमज्ञानप्रामाण्ये सवादज्ञानापेक्षाया अनवस्थाचक्रकेतरेतराश्रया यत ॥ ३९ एव चेत्सर्वस्य ज्ञानस्य भ्रान्तादे' प्रमाणता स्यादित्युक्ते सत्याह ॥ ४० यथाऽप्रामाण्य बाधककारणदोषज्ञानापेक्ष तथा बाधकादिनाऽपरमपेक्षणीयमपरेणाप्यपरमपेक्षणीयमित्यनवस्था कुतो न स्यादित्युक्त आह ॥ ४१ भ्रान्तादेरप्रामाण्ये ॥ ४२ अप्रामाण्य ॥ ४३ प्रमाणाधीन स्याद्यदि अप्रामाण्य तदाऽनवस्था न स्यादेव किं तर्हि अप्रामाण्यस्य प्रमाणमन्तरेणैव सिद्धि स्यात्ततश्चाप्रामाण्य स्वत स्यादित्युक्ते आह ॥

प्रमाणेन यथा नान्येन साध्यते । न सिध्यत्यप्रमाणत्वमप्रमाणात्तथैव हि ॥ बाधकप्रत्ययस्तावदर्थान्यत्वाऽवधारणम् । सोऽनपेक्षः प्रमाणत्वात्पूर्वज्ञानमपोहते ॥ यत्रापि त्वपवादस्य स्यादपेक्षा क्वचित्पुनः । जाताशङ्कस्य पूर्वेण साप्यन्येन निवर्त्तते ॥ बाधकान्तरमुत्पन्नं यद्यस्यान्विच्छतोऽपरम् । ततो मध्यमबाधेन पूर्वस्यैव प्रमाणता ॥ अथान्यदप्रयत्नेन सम्यगन्वेषणे कृते । मूलाभावान्न विज्ञानं भवेद्बाधकबाधनम् ॥ ततो निरपवादत्वात्तेनैवाद्यं बलीयसा । बाध्यते तेन तस्यैव प्रमाणत्वमपोह्यते ॥ एवं परीक्षकज्ञानं तृतीयं नातिवर्त्तते । ततश्चाजातबाधेन नाशङ्क्यं बाधकं पुनः ॥" कथं वा चोदनाप्रभवचेतसो निःशङ्कं प्रामाण्यं गुणवतो वक्तुरभावेनाऽपवादकदोषाभावासिद्धेः । ननु वक्तृगुणैरेवापवादकदोषाभावो नेष्यते तदभावेप्यनाश्रयाणां तेषामनुपपत्तेः । तदुक्तम् । "शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितम् । तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः ॥ १ ॥ तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यसम्भवात् । यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥" इत्यपि प्रलापमात्रमपौरुषेयत्वस्यासिद्धेः । ततश्चेदमयुक्तम् ॥ "तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी । वेदे तेनाप्रमाणत्वं नाशङ्कामपि गच्छति ॥ १ ॥" स्थितं चैतच्चोदनाजनिता बुद्धिर्न प्रमाणमनिराकृतदोषकारणप्रभवत्वात् । द्विचन्द्रादिबुद्धिवत् । न चैतदसिद्धं गुणवतो वक्तुरभावे तत्र दोषाभावासिद्धेः । नाप्यनैकान्तिकं विरुद्धं वा दुष्टकारणप्रभवत्वाप्रामाण्ययोरविनाभावस्य मिथ्याज्ञाने सुप्रसिद्धि(द्ध)त्वादिति ॥ श्रीः ॥ सिद्धं सर्वजनप्रबोधजननं सद्योऽकलङ्काश्रयं विद्यानन्दसमन्तभद्रगुणतो नित्यंमनोनन्दनम् । निर्दोषं परमागमार्थविषयं प्रोक्तं प्रमालक्षणं युक्त्या चेतसि चिन्तयन्तु सुधियः श्रीवर्द्धमानं जिनम् ॥ १

१ प्रमाणमन्तरेण ॥ २ बाधप्रत्यय पुन क इत्युक्ते आह ॥ ३ ज्ञान ॥ ४ परानपेक्ष ॥ ५ स्वत ॥ ६ मरीचिकाया जलज्ञानम् ॥ ७ बाधते ॥ ८ विषये ॥ ९ यदा बाधकप्रत्ययोऽपरमपेक्षेत तदा किम् ॥ १० बाधकज्ञानस्य ॥ ११ अपवादान्तरस्य ॥ १२ अर्थे ॥ १३ नरस्य ॥ १४ पूर्वेण ज्ञानेन ॥ १५ अपरेण बाधकप्रत्ययेन पूर्वसजातीयेन सवादकेन ॥ १६ बाधकान्तरमुत्पद्यते यदा तदा किम् ॥ १७ ता ॥ १८ तृतीयज्ञानस्य बाधक चतुर्थज्ञान ॥ १९ इच्छामन्तरेण ॥ २० उत्पद्यते ॥ २१ प्रामाण्य ॥ २२ तृतीयस्य ॥ २३ तृतीयस्थानवर्त्ति ज्ञानम् ॥ २४ बाधकस्य द्वितीय ज्ञानस्य ॥ २५ बाधकज्ञान न भवेद्यत ॥ २६ द्वितीयज्ञानेन ॥ २७ ज्ञान ॥ २८ कारणेन ॥ २९ निराक्रियते ॥ ३० द्वितीयज्ञानेन ॥ ३१ एव चेदनवस्था कुतो न स्यादित्युक्ते सत्याह ॥ ३२ तृतीय ज्ञान नातिवर्त्तते यत ॥ ३३ नरेण ॥ ३४ स्वत प्रामाण्ये दूषणान्तरम् ॥ ३५ किंच ॥ ३६ ज्ञानस्य ॥ ३७ परेण मया ॥ ३८ दोषाणा ॥ ३९ वाक्ये ॥ ४० निराकृताना दोषाणाम् ॥ ४१ शब्दे ॥ ४२ पुरुष ॥ ४३ वेदे ॥ ४४ अप्रमाण्य ॥ ४५ अनाथा ससाध्या ॥ ४६ स्यात् ॥ ४७ कारणेन ॥ ४८ ज्ञान ॥ ४९ वेदे ॥ ५० न सम्यग्ज्ञाने ॥ ५१ कृतकृत्यम् ॥ ५२ झटिति ॥ ५३ उत्पन्नानन्तरम् ॥ ५४ अस्मिन्पदे सिद्धप्रमाणलक्षणवर्द्धमानस्वामिसम्बन्धित्वेनार्थत्रय बोद्धव्यम् ॥ ५५ द्रव्यभावकर्मणामभावस्तस्याश्रयम् ॥ ५६ प्रमाणलक्षणस्य सम्यग्ज्ञानरूपत्वात् ॥ ५७ सर्वदा ॥ ५८ रागादिभावकर्मरहितम् ॥ ५९ बस (बहुव्रीहिसमाससंज्ञेयमुपनिबद्धा जैनेन्द्रव्याकरणे) ॥ ६० प्रमाणलक्षणस्य सम्यग्ज्ञानरूपत्वात् ॥ ६१ नाज्ञानप्रधानतया ॥

परिच्छेदावसाने आशिषमाह । चिन्तयन्तु कं श्रीवर्द्धमानं तीर्थंकरपरमदेवम् । भूयः कथम्भूतं जिनम् । के सुधियः । क्व चेतसि । कया युक्त्या । ज्ञानप्रधानतया । भूयोपि कथम्भूतं सिद्धं जीवन्मुक्तम् । भूयोपि कीदृशं सर्वजनप्रबोधजननम् । सर्वे च ते जनाश्च तेषां प्रबोधस्तं जनयतीति सर्वजनप्रबोधजननस्तम् । कथं सद्यः झटिति । भूयोपि कीदृशमकलङ्काश्रयम् । कलङ्कानां द्रव्यकर्मणामभावः अकलङ्कस्तस्याश्रयस्तम् । भूयोपि कथम्भूतं मनोनन्दनम् । कथं नित्यं सर्वदा । कुतः विद्यानन्दसमन्तभद्रगुणतः । विद्या केवलज्ञानमानन्दः सुखं समन्ततो भद्राणि कल्याणानि समन्तभद्राणि विद्या चानन्दश्च समन्तभद्राणि च तान्येव गुणास्तेभ्यः स्ततः । भूयोपि कीदृशं निर्दोषं रागादिभावकर्मरहितम् । भूयोपि कथम्भूतं परमागमार्थविषयं परमागमार्थो विषयो यस्य स तथोक्तस्तम् । भूयोपि कीदृशं प्रोक्तं प्रकष्टमुक्तं वचनं यस्यासौ प्रोक्तस्तम् । भूयोपि कथम्भूतं प्रमालक्षणम् ॥ श्रीः ॥ इति श्रीप्रभाचन्द्रविरचिते प्रमेयकमलमार्त्तण्डे परीक्षामुखालङ्कारे प्रथमः परिच्छेदः समाप्तः ॥ श्रीः ॥



श्रीः ।

## अथ प्रत्यक्षोद्देशः ॥ २ ॥

अथ प्रमाणसामान्यलक्षणं व्युत्पाद्येदानीं तद्विशेषलक्षणं व्युत्पादयितुमुपक्रमते । प्रमाणलक्षणविशेषव्युत्पादनस्य च प्रतिनियतप्रमाणव्यक्तिनिष्ठत्वात्तदभिप्रायवांस्तद्व्यक्तिसंख्याप्रतिपादनपूर्वकं तल्लक्षणविशेषमाह ॥ तद्द्वेधेति ॥ १ ॥

तत्स्वापूर्वेत्यादिलक्षणलक्षितं प्रमाणं द्वेधा द्विप्रकारं सकलप्रमाणभेदप्रभेदानामत्रान्तर्भावविभावनात् । परपरिकल्पितैकद्वित्र्यादिप्रमाणसंख्यानियमे तदघटनादित्याचार्यः स्वयमेवाग्रे प्रतिपादयिष्यति । ये हि प्रत्यक्षमेकमेव प्रमाणमित्याचक्षते न तेषामनुमानादिप्रमाणान्तरस्यात्रान्तर्भावः सम्भवति तद्विलक्षणत्वाद्विभिन्नसामग्रीप्रभवत्वाच्च । ननु चास्याऽप्रामाण्यान्नान्तर्भावविभावनया किञ्चित्प्रयोजनम् । प्रत्यक्षमेकमेव हि प्रमाणमगौणत्वात्प्रमाणस्य । अर्थनिश्चायकं च ज्ञानं प्रमाणम् । न चानुमानादर्थनिश्चयो घटते । सामान्ये सिद्धसाधनाद्विशेषेऽनुगमाभावात् । तदुक्तम् । विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनमिति । किञ्च व्याप्तिग्रहणे पक्षधर्मतावगमे च सत्यनुमानं प्रवर्त्तते । न च व्याप्तिग्रहणमध्यक्षतोऽस्य सन्निहितमात्रार्थग्राहित्वेनाखिलपदार्थाक्षेपेण व्याप्तिग्रहणेऽसामर्थ्यात् । नाप्यनुमानतोऽस्य व्याप्तिग्रहणपुरस्सरत्वात् । तत्राप्यनुमानतो व्याप्तिग्रहणेऽनवस्थेतरेतराश्रयदोषप्रसङ्गः । न चान्यत्प्रमाणं तद्ग्राहकमस्ति । तत्कुतोनुमानस्य प्रामाण्यमित्यसमीक्षिताभिधानमनुमानादेरप्यध्यक्षवत्प्रतिनियतस्वविषयव्यवस्थायामविसंवादकत्वेन प्रामाण्यप्रसिद्धेः । प्रत्यक्षेपि हि प्रामाण्यमविसंवादकत्वादेव प्रसिद्धं तच्चान्यत्रापि समानमनुमानादिनाप्यध्यवसितेर्थे विसंवादाभावात् । यच्चागौणत्वात्प्रमाणस्येत्युक्तं तत्रानुमानस्य कुतो गौणार्थविषयत्वात् प्रत्यक्षपूर्वकत्वाद्वा । न तावदाद्यो विकल्पोऽनुमानस्याप्यध्यक्षवद्वास्तवसामान्यविशेषात्मकार्थविषयत्वाभ्युपगमात् । न खलु कल्पितसामान्यार्थविषयमनुमानं सौगतवज्जैनैरिष्टं तद्विषयत्वस्यानुमाने

१ अनन्तरम् ॥ २ कथयित्वा ॥ ३ विशदीकर्त्तुं ॥ ४ आरभते ॥ ५ परिच्छेदावतार ॥ ६ भेद ॥ ७ आद्य त्रिविधमन्त्य पञ्चविधमित्यादिलक्षण ॥ ८ व्यक्तिभेदेपि लक्षणैकत्वमन्तर्भाव ॥ ९ निश्चयनात् ॥ १० कुत एतत् ॥ ११ तदघटन कथमाचार्य प्रतिपादयिष्यतीत्युक्ते आह ॥ १२ चार्वाका ॥ १३ वैशद्यावैशद्य ॥ १४ इन्द्रियलिङ्गे ॥ १५ अनुमानादे ॥ १६ किञ्च ॥ १७ साध्ये ॥ १८ न हि अग्निमात्रे कस्यचिद्विप्रतिपत्तिरस्ति सामान्याच्च प्रवर्त्तमान कथ नियतमभिमुखमेवावश्य प्रवर्त्तेत ॥ १९ यो यो धूमवान् सस तार्णेनाग्निमानित्यन्वयाभाव ॥ २० नानुमान प्रमाण स्यान्निश्चयाभावतस्तत ॥ २१ हेतो ॥ २२ उत्पद्यते ॥ २३ अग्न्याधारधूमाधारमहानसादि ॥ २४ स्वीकरणेन ॥ २५ प्रत्यक्षस्य ॥ २६ सर्वत्र धूमोऽग्निना व्याप्त तदन्वयव्यतिरेकानुविधानात् ॥ २७ व्याप्तिग्रहणम् ॥ २८ आद्यानुमानेऽपरानुमानेन व्याप्तिप्रतिपत्तौ अनवस्था । आद्यानुमानेन द्वितीयानुमाने व्याप्तिप्रतिपत्तौ इतरेतराश्रय ॥ २९ पक्षधर्मतावगमे च सत्यनुमान प्रवर्तत इत्युक्त तत्र पक्षप्रतिपत्तिश्च प्रत्यक्षतोऽनुमानतो वा । न तावत्प्रत्यक्षत पक्षप्रतिपत्तिरनुमानानर्थक्यप्रसङ्गात् । नाप्यनुमानत पक्षप्रतिपत्तिरनुमानेपि पक्षप्रतिपत्तिं प्रत्यक्षतोऽनुमानतो वा । न तावत्प्रत्यक्षत उक्तदोषानुषङ्गात् । नाप्यनुमानतोऽनवस्थाप्रसङ्गात् । कथमनुमानेप्यनुमानात्पक्षप्रतिपत्तिरिति ॥ ३० व्याप्तिग्रहणाभावे सति ॥ ३१ ग्रन्थे ॥ ३२ उपचरित ॥ ३३ परमार्थरूप ॥ ३४ अन्यापोहरूप ॥

निराकरिष्यमाणत्वात् । प्रत्यक्षपूर्वकत्वाच्चानुमानस्य गौणत्वे प्रत्यक्षस्यापि कस्यचिदनुमानपूर्वकत्वाद्गौणत्वप्रसङ्गोऽनुमानात्साध्यार्थं निश्चित्य प्रवर्त्तमानस्याध्यक्षप्रवृत्तिप्रतीतेः । ऊहाख्यप्रमाणपूर्वकत्वाच्चास्याध्यक्षपूर्वकत्वमसिद्धम् । यच्चोक्तं न च व्याप्तिग्रहणमध्यक्षत इत्यादि तदप्युक्तिमात्रं व्याप्तेः प्रत्यक्षानुपलम्भवलोद्भूतोहाख्यप्रमाणात्प्रसिद्धेः । न च व्यक्तीनामानन्त्यं देशादिर्व्यभिचारो वा तत्प्रसिद्धेर्बाधकः । सामान्यद्वारेण प्रतिबन्धावधारणात्तस्य चानुगताऽबाधितप्रत्ययविषयत्वादस्तित्वम् । प्रसाधयिष्यते च सामान्यविशेषात्मा तदर्थ इत्यत्र वस्तुभूतसामान्यसद्भावः । न चोहप्रमाणमन्तरेण प्रत्यक्षमेव प्रमाणमगौणत्वादित्याद्यभिधातुं शक्यम् । तथा हि । अगौणत्वमविसंवादित्वं वा लिङ्गं नाप्रसिद्धप्रतिबन्धं सत्प्रत्यक्षस्य प्रामाण्यमनुमापयेदतिप्रसङ्गात् । प्रतिबन्धप्रसिद्धिश्चानेनावश्यमेवाभ्युपगन्तव्याऽन्यथा यस्यामेव प्रत्यक्षव्यक्तौ प्रामाण्येनागौणत्वादेरसौ सिद्धस्तस्यामेवागौणत्वादेस्तत्सिध्येत्, न व्यक्त्यन्तरे तत्र तस्यासिद्धत्वात् । न चासौ साकल्येनाध्यक्षात्सिध्येत्तस्य सन्निहितमात्रविषयत्वात् । अथैकत्र व्यक्तौ प्रत्यक्षेणानयोः सम्बन्धं प्रतिपद्यान्यत्राप्येवंविधं प्रत्यक्षं प्रमाणमित्यगौणत्वादिप्रामाण्ययोः सर्वोपसंहारेण प्रतिबन्धप्रसिद्धिरित्यभिधीयते न—अविषये सर्वोपसंहारेण प्रतिपत्तेरयोगात् । सर्वोपसंहारेण प्रतिपत्तिश्च नामान्तरेणोह एवोक्तः स्यात् । अग्निधूमादीना चैवमविनाभावप्रतिपत्तिः किन्न स्यात् ? येनानुमानमप्रमाणमविनाभावस्याखिलपदार्थाक्षेपेण प्रतिपत्तुमशक्यत्वादित्युक्तं शोभेत । किञ्चानुमानमात्रस्याप्रामाण्यं प्रतिपादयितुमभिप्रेतमतीन्द्रियार्थानुमानस्य वा ? प्रथमपक्षे प्रतीतिसिद्धसकलव्यवहारोच्छेदः । प्रतीयन्ते हि कुतश्चिदविनाभाविनोऽर्थादर्थान्तरं प्रतिनियतं प्रतियन्तो लौकिकाः, न तु सर्वं स्मात्मनम् । द्वितीयपक्षे तु कथमतीन्द्रियप्रत्यक्षेतरप्रमाणानामगौणत्वादिना प्रामाण्येतरव्यवस्था ? कथं वा परचेतसोऽतीन्द्रियस्य व्यापारव्याहारादिकार्यविशेषात्

१ व्याप्तिग्राहि प्रत्यक्षम् ॥ २ तु ॥ ३ ता ॥ ४ किन्न ॥ ५ साधनम् ॥ ६ अग्निधूमव्यक्तयोऽनन्ता अतः सम्बन्धोऽवधारयितुं न शक्यः, यो धूमवान् सोऽग्निमान् पर्वत इति देशादिव्यभिचारो वा तज्ज्ञप्तेर्बाधकः ॥ ७ काल ॥ ८ प्रसे ॥ ९ धूमस्येनाग्निलेन ॥ १० साध्यसाधनयोरविनाभाव ॥ ११ गौणो रित्याद्यनुस्यूत ॥ १२ प्रमाणार्थं ॥ १३ किन्न ॥ १४ सर्वमनुमानमप्रमाणं गौणत्वादित्यादि च ॥ १५ उक्तमेव समर्थयन्ते आचार्याः ॥ १६ साध्येनाज्ञाताविनाभावम् ॥ १७ मार्गेण ॥ १८ धूमस्य नार्द्धितोत्थितस्यापि धूमलिङ्गात्साध्यप्रतिपत्तिः स्यादज्ञातसम्बन्धत्वाविशेषात् ॥ १९ साकल्येन ॥ २० परेण ॥ २१ साकल्येन प्रतिबन्धप्रसिद्धेरनभ्युपगमे ॥ २२ अग्निप्रत्यक्षविशेषे सन्निधानमात्रेण ॥ २३ सद् ॥ २४ अविसंवादित्व ॥ २५ अविनाभाव ॥ २६ प्रत्यक्षप्रामाण्यम् ॥ २७ प्रकृतव्यक्तेरन्यव्यक्तौ ॥ २८ घटप्रत्यक्षविशेषे ॥ २९ अविनाभावस्य ॥ ३० अग्निप्रत्यक्षविशेषे ॥ ३१ अगौणत्वादिप्रामाण्ययोः साध्यसाधनयोः ॥ ३२ अविनाभावम् ॥ ३३ घटादिसकलप्रत्यक्षे व्यक्त्यन्तरे ॥ ३४ अगौणमविसंवादकम् ॥ ३५ यावत्प्रत्यक्षं तावत्सर्वमगौणमविसंवादकमिति ॥ ३६ अविनाभावप्रसिद्धिः ॥ ३७ परेण ॥ ३८ इति चेन्न ॥ ३९ स्वीकारेण ॥ ४० अविनाभावस्य ॥ ४१ किन्न ॥ ४२ प्रत्यक्षप्रमाणप्रकारेण ॥ ४३ स्वीकारेण ॥ ४४ भवता ॥ ४५ तवेष्टम् ॥ ४६ नाश ॥ ४७ ज्ञायन्ते ॥ ४८ धूमलक्षणात् ॥ ४९ अग्निलक्षणम् ॥ ५० जानन्त ॥ ५१ प्रत्यक्षाणि चेतराणि चानुमानादीनि प्रत्यक्षेतराणि अतीन्द्रियाणि च तानि प्रत्यक्षेतराणि चातीन्द्रियप्रत्यक्षेतराणि । तानि च तानि प्रमाणानि च । सन्तानान्तरव्यतिरेकेण प्रत्यक्षानुमानयोरतीन्द्रियत्वम् ॥ ५२ अगौणत्वादित्वविसंवादित्वेन ॥ ५३ किन्न ॥ ५४ शिष्याशिष्यस्य ॥

प्रतिपत्तिः, स्वर्गा[1]पूर्व[2]देव[3]तादेस्तथाविधस्य प्रतिषेधोऽनुपलब्धेः स्यात् ? सोयं चार्वाकः प्रमाणस्यागौणत्वादनुमानादर्थनिश्चयो दुर्लभ इत्याचक्षाणः कथमत एवाध्यक्षादेः प्रामाण्यादिकं प्रसाधयेत् ? प्रसाधयन्वा कथमतीन्द्रियेतरार्थविषयमनुमानं न प्रमाणयेत् ? उक्तं च—प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः । प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचिदिति । तन्नानुमानस्याप्रामाण्यम् ।

अस्तु नाम प्रत्यक्षानुमानभेदात्प्रमाणद्वैविध्यमित्यारेकापनोदार्थं प्रत्यक्षेतरभेदादित्याह । न खलु प्रत्यक्षानुमानयोर्व्याख्येयागमादिप्रमाणभेदानामन्तर्भावः सम्भवति यतः सौगतोपकल्पितः प्रमाणसंख्यानियमो व्यवतिष्ठेत । प्रमेयद्वैविध्यात् प्रमाणस्य द्वैविध्यमेवेत्यप्यसम्भाव्यम्—तद्द्वैविध्यासिद्धेः । एक एव हि सामान्यविशेषात्मार्थः प्रमेयः प्रमाणस्येत्यग्रे वक्ष्यते । किञ्चानुमानस्य सामान्यमात्रगोचरत्वे ततो विशेषेष्वप्रवृत्तिप्रसङ्गः । न खल्वन्यविषयं ज्ञानमन्यत्र प्रवर्त्तकम्—अतिप्रसङ्गात् । अथ लिङ्गानुमितात्सामान्याद्विशेषप्रतिपत्तेस्तत्र प्रवृत्तिः । नन्वेवं लिङ्गादेव तत्प्रतिपत्तिरस्तु । किं परम्परया ? ननु विशेषेषु लिङ्गस्य प्रतिबन्धप्रतिपत्तेरभावात्कथमतस्तेषां प्रतिपत्तिः ? तदेतत्सामान्येपि समानम् । अथाप्रतिपन्नप्रतिबन्धमपि सामान्यं तेषां गमकम् । लिङ्गमप्येवंविधं तद्गमकं किन्न स्यात् ? सामान्यस्यापि सामान्येनैव विशेषेषु प्रतिबन्धप्रतिपत्तावनवस्था । सामान्याद्धि सामान्यप्रतिपत्तौ विशेषेष्वप्रवृत्तौ पुनस्ततोऽप्यपरसामान्यप्रतिपत्तौ स एव दोषः । अतः सामान्यतदनुमानानामनवस्थानादप्रवृत्तिर्विशेषेषु स्यात् । किञ्च व्यापकमेव गम्यम्—अव्यभिचारस्य तत्रैव भावात् । व्यापकं च कारणं कार्यस्य, स्वभावो भावस्य । तच्च स्वलक्षणमेव । अतस्तदेव गम्यं स्यात्, न सामान्यमव्यापकत्वात् । अथ तदपि व्यापकं स्वलक्षणवद्वस्तुत्वम् । अन्यथा तस्मिन्नधिगतेपि प्रयोजनाभावात्तत्रानुमानमप्रमाणमेव स्यात् । किञ्च तत्प्रमेयद्वित्वं प्रमाणद्वित्वस्य ज्ञातमज्ञातं वा ज्ञापकं भवेत् ? यद्यज्ञातमेव तत्तस्य ज्ञापकं तर्हि तस्य सर्वत्राविशेषात्सर्वेषामविशेषेण तत्प्रतिपत्तिप्रसङ्गतो विवादो न स्यात् । ज्ञातं चेत्कुतस्तज्ज्ञप्तिः ? प्रत्यक्षादनुमानाद्वा ? न तावत्प्रत्यक्षात्—तेन सामान्याग्रहणात् । ग्रहणे वा तस्य सविकल्पकत्वप्रसङ्गो विषयसङ्करश्च

---

१ कथ वा ॥ २ अदृष्ट ॥ ३ सर्वज्ञ ॥ ४ अतीन्द्रियस्य ॥ ५ प्रत्यक्ष प्रमाणमगौणत्वात्, अनुमानमप्रमाण गौणत्वादित्याचक्षाण ॥ ६ आदिपदेनानुमानस्याप्रामाण्यम् ॥ ७ इन्द्रियाण्यतिक्रान्ता स्वर्गादय । ते च इतरे च प्रत्यक्षग्राह्या अग्न्यादय । अतीन्द्रियेतरे ते च ते अर्थाश्च ते विषया यस्यानुमानस्य तत् ॥ ८ अप्रमाण ॥ ९ त्व ॥ १० का ॥ ११ परिज्ञानात् ॥ १२ परोक्ष ॥ १३ स्वर्गादे ॥ १४ आह सौगत ॥ १५ परोक्ष ॥ १६ अपि तु न कुतोपि स्थितिं कुर्यात् ॥ १७ चतुर्थाध्याये ॥ १८ (ततोऽनुमानादित्यर्थ) अग्निपरमाणुलक्षणस्वलक्षणेषु ॥ १९ घटविषय ज्ञान पटे प्रवर्तक स्यात् ॥ २० धूम ॥ २१ अग्निमत्त्वात् ॥ २२ विशेषेषु पुरुषस्य ॥ २३ यथा लिङ्गात्सामान्यस्य प्रतिपत्तिरेव तेषा विशेषाणाम् ॥ २४ प्रयोजनम् ॥ २५ लिङ्गात्सामान्यप्रतिपत्ति सामान्याद्विशेषप्रतिपत्तिरिति ॥ २६ विशेषेषु सामान्यस्य प्रतिबन्धप्रतिपत्तेरभावात्कथ ततस्तेषा प्रतिपत्तिरिति ॥ २७ अप्रतिपन्नप्रतिबन्धत्वाविशेषात् ॥ २८ विशेषेष्वप्रवृत्तिरूप ॥ २९ अविनाभावस्य ॥ ३० व्यापके ॥ ३१ वह्नि ॥ ३२ धूमस्य ॥ ३३ वृक्षत्वम् ॥ ३४ शिंशपात्वस्य ॥ ३५ साध्यम् ॥ ३६ लिङ्गस्य ॥ ३७ सामान्यस्य ॥ ३८ अवस्तुत्वे ॥ ३९ विशेषेषु प्रवृत्तिलक्षण ॥ ४० ॥ सामान्यविशेष भेदेन ॥ ४१ अज्ञातप्रमेयद्वित्वस्य ॥ ४२ देशे ॥ ४३ नृणाम् ॥ ४४ द्वाभ्या वा ॥

प्रमाणद्वित्वविरोधी[1] भवतोऽनुपज्येत[2]। नाप्यनुमानतोऽत एव[3]। स्वलक्षणपराङ्मुखतया[4] हि भवतानुमानमभ्युपगतम्[5]–अतद्भेदपरावृत्तवस्तुमात्रप्रवेदनात्[6]। सामान्यविषयं[7] प्रोक्तं लिङ्गं[8] भेदाप्रतिष्ठितेरित्यभिधानात्[9][10][11]। द्वाभ्यां[12] तु प्रमेयद्वित्वस्य[13] ज्ञानेस्य प्रमाणद्वित्वज्ञापकत्वायोगः[14]। अन्यथा[15] देवदत्तयज्ञदत्ताभ्यां[16] प्रतिपन्नाद्धूमद्वित्वात्तदन्यतरस्याग्निद्वित्वप्रतिपत्तिः स्यात्[17]। द्वैविध्यमिति हि द्विष्ठो धर्मः[18]। स च द्वयोर्ज्ञाने[19] ज्ञायते[20]। नान्यथा। न ह्यज्ञातसह्यविन्ध्यस्य[21] तद्गतद्वित्व[22]प्रतिपत्तिरस्ति। परस्पराश्रयानुषङ्गश्च। सिद्धे हि प्रमाणद्वित्वेऽतः प्रमेयद्वित्वसिद्धिस्तस्याश्च प्रमाणद्वित्वसिद्धिरिति[23]। अथान्यतः[24] प्रमाणद्वित्वस्य सिद्धिः, व्यर्थस्तर्हि प्रमेयद्वित्वोपन्यासः। तदप्य[25]न्यदेकं[26] वा स्यादनेकं वा? एकं चेद्विषयसङ्करः[27][28][29]। प्रत्यक्षं[30] हि स्वलक्षणाकारमनुमानं तु सामान्याकारम्। तद्द्वयस्यैकज्ञानवेद्यत्वे सुप्रसिद्धो विषयसङ्करः। अथानेकज्ञानवेद्यम्। तदप्यपरेणानेकज्ञानेन वेद्यं तदप्यपरेणेत्यनवस्था[31]। ननु[32] स्वलक्षणाकारता प्रत्यक्षेणात्मभूतैव[33] वेद्यते सामान्याकारता[34] त्वनुमानेन[35]। तयोश्च[36] स्वसंवेदनप्रत्यक्षसिद्धत्वात्[37] प्रत्यक्षसिद्धमेव प्रमाणद्वित्वं प्रमेयद्वित्वं च केवलम्[38][39]। यस्तथा[40] प्रतिपद्यमानोपि न व्यवहरति स प्रसिद्धेन प्रमेयद्वैविध्येन प्रमाणद्वैविध्यव्यवहारे प्रवर्त्त्यते[41]। तदप्यसारम्–ज्ञानादर्थान्तरस्या[42]नर्थान्तरस्य[43] वा केवलस्य सामान्यस्य विशेषस्य वा क्वचिज्ज्ञाने प्रतिभासाभावात्–उभयात्मन[44] एवान्तर्बहिर्वा वस्तुनोऽध्यक्षादिप्रत्यये प्रतिभासमानत्वात्[45]। प्रयोगः[46]।–असति बाधके यद्यथा प्रतिभासते तत्तथैवाभ्युपगन्तव्यम्। यथा नीलं नीलतया। प्रतिभासते चाध्यक्षादि प्रमाणं सामान्यविशेषात्मार्थविषयतयेति।

ननु मा भूत्प्रमेयभेदः। तथाप्यागमादीनां नानुमानादर्थान्तरत्वम्[47]। शब्दादिकं[48] हि परोक्षार्थं[49] सम्बद्धमसम्बद्धं वा गमयेत्[50]? न तावदसम्बद्धम्–गवादे[51]रप्यश्वादिप्रतीतिप्रसङ्गात्[52]। सम्बद्धं चेत्तल्लिङ्गमेव। तज्जनितं च ज्ञानमनुमानमेव। इत्यप्यसाम्प्रतम्–प्रत्यक्षस्याप्येवमनुमानत्वप्रसङ्गात्[53]। तदपि हि स्वविषये सम्बद्धं

---

१ अनुमानस्याभाव इत्यर्थ ॥ २ सौगतस्य ॥ ३ अत एवेत्यस्य हेतोरसिद्धत्व परिहरति ॥ ४ स्वलक्षणागोचरत्वेन ॥ ५ सौगतेन ॥ ६ अनभिलप ॥ ७ अभिमात्र ॥ ८ अन्यापोह ॥ ९ अन्यापोह ॥१० स्वलक्षणस्य ॥ ११ अव्यवस्थिते । कुतोऽव्यवस्थिति ? भेदानामानन्त्येन ग्रहणासम्भवात् ॥ १२ प्रत्यक्षानुमानाभ्याम् । असौ तृतीयो विकल्प ॥ १३ परिज्ञाने सति अस्य प्रमेयद्वित्वस्य॥ १४ प्रमेयद्वित्वस्य प्रमाणद्वित्वज्ञापकत्व चेत् ॥ १५ भिन्नदेशे ॥ १६ देवदत्तस्य यज्ञदत्तस्य वा ॥ १७ प्रमेयद्वित्वस्य प्रमाणद्वित्वज्ञापकत्वायोग दर्शयति ॥ १८ स्वलक्षणसामान्ययो प्रमेययो ॥ १९ सति ॥ २० पुरुषेण ॥ २१ नरस्य ॥ २२ सह्यविन्ध्यपर्वतगत ॥ २३ इतरेतराश्रयपरिहारार्थं पर प्राह ॥ २४ ज्ञानात् ॥ २५ किंच ॥२६ तयो ॥ २७ ज्ञानम् ॥ २८ युगपद्वयो प्रतिपत्तिर्विषयसङ्कर ॥ २९ विषयसङ्कर कथमित्युक्ते सत्याह ॥ ३० तर्हीति शेष ॥ ३१ अनवस्था परिहरति पर ॥ ३२ प्रत्यक्षस्य ॥ ३३ स्वरूपगतैव ॥ ३४ अनुमानस्य ॥ ३५ वेद्यते ॥ ३६ सामान्य विशेष वा ॥ ३७ इति ॥ ३८ नर (शिष्य) ॥ ३९ स्वसंवेदनप्रत्यक्षेण प्रमेयद्वित्व प्रमाणद्वित्व च ॥ ४० प्रमाण द्विविध प्रमेयद्वैविध्यादित्यनुमान प्रदर्श्य ॥ ४१ आचार्येण ॥ ४२ अर्थगतस्य ॥ ४३ ज्ञानगतस्य ॥ ४४ सामान्यविशेषात्मन ॥ ४५ प्रत्यक्षादि प्रमाण धर्मि सामान्यविशेषार्थविषयत्वेनाभ्युगन्तव्य भवतीति साध्यो धर्म । असति बाधके तथा प्रतिभासमानत्वादिति हेतु ॥ ४६ सम्बद्धार्थविषयत्वात् ॥ ४७ आदिशब्देन सादृश्यार्थापत्त्युत्थापकार्थादि ॥ ४८ कर्तृ ॥ ४९ परोक्षार्थे ॥ ५० परोक्षार्थम् ॥ ५१ गन्धादिशब्दात् ॥ ५२ असम्बद्धत्वाविशेषात् ॥ ५३ आगमादीनामनुमानत्वप्रकारेण ॥

सत्तस्य गमकम् । नान्यथा—सर्वस्य प्रमातुः सर्वार्थप्रत्यक्षत्वप्रसङ्गात् । अथ विषयसम्बद्धत्वाविशेषेपि प्रत्यक्षानुमानयोः सामग्रीभेदात्प्रमाणान्तरत्वम् । शाब्दादीनामप्येवं प्रमाणान्तरत्वं किन्न स्यात् ? तथा हि ।—शाब्दं तावच्छब्दसामग्रीतः प्रभवति—शब्दादुदेति यज्ज्ञानमप्रत्यक्षेपि वस्तुनि । शाब्दं तदिति मन्यन्ते प्रमाणान्तरवादिन इत्यभिधानात् । न चास्य प्रत्यक्षता—सविकल्पकास्पष्टस्वभावत्वात् । नाप्यनुमानता—त्रिरूपलिङ्गाप्रभवत्वादनुमानगोचरार्थाविषयत्वाच्च । तदुक्तम् ।—तस्मादननुमानत्वं शाब्दे प्रत्यक्षवद्भवेत् । त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् । १ । यादृशो हि धूमादिलिङ्गजस्यानुमानस्य विषयो धर्मविशिष्टो धर्मी तादृशा विषयेण रहितं शाब्दं सुप्रसिद्धं त्रैरूप्यरहितं च । तथा हि ।—न शब्दस्य पक्षधर्मत्वं धर्मिणोऽयोगात् । न चार्थस्य धर्मित्वम्—तेन तस्य सम्बन्धासिद्धेः । न चाप्रतीतेर्थे तद्धर्मतया शब्दस्य प्रतीतिः सम्भविनी । प्रतीते चार्थे न तद्धर्मतया प्रतिपत्तिः शब्दस्योपयोगिनी—तामन्तरेणाप्यर्थस्य प्रागेव प्रतीतेः । अथ शब्दो धर्मी, अर्थवानिति साध्यो धर्मः, शब्द एव च हेतुर्न—प्रतिज्ञार्थैकदेशत्वप्रसक्तेः । अथ शब्दत्वं हेतुरिति न प्रतिज्ञार्थैकदेशत्वं न—शब्दत्वस्यागमकत्वात्, गोशब्दत्वस्य च निषेत्स्यमानत्वेनासिद्धत्वात् । उक्तं च—सामान्यविषयत्वं हि पदस्य स्थापयिष्यते । धर्मी धर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम् । १ । न तावदनुमानं हि यावत्तद्विषयं न तत् । अथ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते । २ । प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते । शब्दत्वं गमकं नात्र गोशब्दत्वं निषेत्स्यते । ३ । व्यक्तिरेव विशेष्यातो हेतुश्चैका प्रसज्यते ॥ न चार्थान्वयोस्यास्ति व्यापारेण हि सद्भावेन सत्तयेति यावत् । विद्यमानस्य ह्यन्वेतृत्वं, नाविद्यमानस्य । यत्र हि धूमस्तत्रावश्यं वह्निरस्तीत्यस्तित्वेन प्रसिद्धोऽन्वेता भवति धूमस्य । न त्वेवं शब्दस्यार्थेनान्वयोस्ति । न हि तत्र शब्दाक्रान्ते देशेऽर्थस्य सद्भावः । न खलु यत्र

---

१ अन्यथा चेत् ॥ २ शाब्दादीनि प्रमाणान्तराणि—सामग्रीभेदात् प्रत्यक्षादिवत् ॥ ३ सामग्रीभेदप्रकारेण ॥ ४ मेरुरस्तीति ज्ञानम् । आगमज्ञानमित्यर्थ (हेत्वन्तरमिदम्) ॥ ५ जैनादय ॥ ६ पक्षधर्मत्वादि ॥ ७ शब्दादुत्पन्नात् ॥ ८ ईदृ ॥ ९ अनुमेय ॥१० च ॥ ११ अग्निमत्त्व ॥ १२ पर्वत ॥ १३ भा ॥ १४ गोलक्षणस्य ॥ १५ अविनाभाव ॥ १६ अर्थधर्मत्वेन ॥ १७ फलवती ॥ १८ इति चेन्न ॥ १९ पक्षवचन प्रतिज्ञा तस्या अर्थ पक्षस्तस्यैकदेशो धर्मी धर्मश्च ॥ २० गोशब्दो जगति नित्यो व्यापकश्चैनेक एवेति गोशब्दत्वसामान्याभाव ॥ हेतो ॥ २१ इति चेन्नेत्यर्थ ॥ २२ गोशब्दवदश्वशब्देपि शब्दत्वस्य भावादगमकत्वम् ॥ २३ तस्मिन्निषेधोपि गोशब्दस्यातीतादेरेकत्वात्, नैकव्यक्तौ सामान्यमिति व्यापकत्वेनैकत्वाच्च गोशब्दत्वसामान्याभाव ॥ २४ अर्थस्य ॥ २५ अर्थस्य साध्यस्य ज्ञापकत्वम् ॥ २६ गोत्व ॥ २७ गवादेरागमस्य ॥ २८ स्वग्रन्थापेक्षयाग्रे ॥ २९ अनुमानविषय ॥ ३० स्वग्रन्थापेक्षया ॥ ३१ उभयस्य ( शाब्दानुमानयो ) उभय( सामान्यविशेष )विषयत्व यद्यपि तथापि शब्दस्यानुमानरूपता भविष्यतीत्युक्ते सत्याह ॥ ३२ धर्मविशिष्टधर्मिविषयम् ॥ ३३ शाब्दम् ॥ ३४ बोद्धेन न समर्थ्यते ॥ ३५ गोशब्दस्य नित्यविभुत्वाविशेषाभावात् ॥ ३६ स्वग्रन्थापेक्षया ॥ ३७ शब्दस्वलक्षणा ॥ ३८ धर्मिणी ॥ ३९ शब्दत्व न गमक गोशब्दत्वस्य प्रतिषेधो वा यत ॥ ४० ततश्च प्रतिज्ञार्थैकदेशासिद्धो हेतुरित्यभिप्राय ॥ ४१ अर्थेन सहाविनाभाव ॥ ४२ शब्दस्य ॥ ४३ शब्दस्य ॥ ४४ व्यापारेणेति पदस्य सद्भावेनेति सत्तयेति वा पर्यायशब्दौ ॥ ४५ व्यापकत्वमन्वयश्च ॥ ४६ व्यापक ॥ ४७ धूमाग्निप्रकारेण ॥

पिण्डखर्जूरादिशब्दः श्रूयते तत्र पिण्डखर्जूराद्यर्थोप्यस्ति । नापि शब्दकालेऽर्थोऽवश्यं सम्भवति । रावणशङ्खचक्रवर्त्यादिशब्दा हि वर्त्तमानास्तदर्थस्तु भूतो भविष्यंश्च । इति कुतोर्थैः शब्दस्यान्वेतृत्वं । नित्यविभुत्वाभ्याम् । तत्त्वे चोतिप्रसङ्गः । तदुक्तम् ।—अन्वयो न च शब्दस्य प्रमेयेण निरूप्यते । व्यापारेण हि सर्वेषामन्वेतृत्वं प्रतीयते । १ । यत्र धूमोस्ति तत्राग्निरस्तित्येनान्वयः स्फुटः । न त्वेवं यत्र शब्दोस्ति तत्रार्थोस्तीति निश्चयः । २ । न तावद्यत्र देशेऽसौ न तत्काले च गम्यते । भवेन्नित्यविभुत्वाच्चेत्सर्वार्थेष्वपि तत्समम् । ३ । तेनं सर्वत्र दृष्टत्वाद्व्यतिरेकस्य चागतेः । सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते । ४ । अन्वयाभावे च व्यतिरेकस्याप्यभावः—अन्वयेन विना तस्माद्व्यतिरेकः कथं भवेदित्यभिधानात् । ततः शाब्दं प्रमाणान्तरमेव । उपमानं च । अस्य हि लक्षणम् ।—दृश्यमानाद्यदन्यत्र विज्ञानमुपजायते । सादृश्योपाधि तत्तज्ज्ञैरुपमानमिति स्मृतम् । १ । येन हि प्रतिपत्रा गौरुपलब्धो न गवयो, न चातिदेशवाक्यं गौरिव गवय इति श्रुतं तस्यारण्ये पर्यटतो गवयदर्शने प्रथमे उपजाते परोक्षे गवि सादृश्यज्ञानं यदुत्पद्यतेऽनेन सदृशो गौरिति, तस्य विषयः सादृश्यविशिष्टः परोक्षो गौस्तद्विशिष्टं वा सादृश्यम् । तच्च वस्तुभूतमेव । यदाह ।—सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् । भूयोवयवसामान्ययोगो जात्यन्तरस्य तदिति । अस्य चानधिगतार्थाधिगन्तृतया प्रामाण्यम् । गवयविषयेण हि प्रत्यक्षेण गवयो विषयीकृतो, न त्वसन्निहितोपि सादृश्यविशिष्टो गौस्तद्विशिष्टं वा सादृश्यम् । यच्च पूर्वं गौरिति प्रत्यक्षमभूत्तस्यापि गवयोत्यन्तमप्रत्यक्ष एव । इति कथं गवि तदपेक्षं तत्सादृश्यज्ञानम् ? उक्तं च ।—तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् । प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् । १ । प्रत्यक्षेणावबुद्धेपि सादृश्ये गवि च स्मृते । विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता । २ । प्रत्यक्षेपि यथा देशे स्मर्यमाणे च पावके । विशिष्टविषयत्वेन नानुमानाप्रमाणता, इति । न चेदं प्रत्यक्षम्—परोक्षविषयत्वात्सविकल्पकत्वाच्च । नाप्यनुमानम्—हेत्वभावात् । तथा हि ।—गोगतं गवयगतं वा सादृश्यमत्र हेतुः स्यात् ? तत्र न गोगतम्—तस्य

---

१ इति देशान्वयाभाव ॥ २ कालान्वयाभाव. ॥ ३ अन्वयो व्यापकत्व वा ॥ ४ गोशब्दादश्वार्थप्रतीति स्यात् ॥ ५ शब्दस्य सर्वेष्वर्थेष्वनुगमो यत ॥ ६ सम्बन्ध ॥ ७ विद्वद्भि ॥ ८ कुतस्तथाहि ॥ ९ सद्भावेन सत्तया वा ॥ १० अर्थानाम् ॥ ११ धूमाग्निप्रकारेण ॥ १२ तत्र प्रदेशेऽर्थोऽस्तीति निश्चयो नास्तीत्यर्थं ॥ १३ अर्थ ॥ १४ अन्वेतृत्वम् ॥ १५ कारणेन ॥ १६ अर्थेषु ॥ १७ शब्दस्य ॥ १८ अप्रतिपत्ते ॥ १९ अन्वयाविनाभावित्व व्यतिरेकस्य यत ॥ २० शब्दार्थयोरन्वयव्यतिरेकौ न स्तो यत ॥ २१ अनुमानात् ॥ २२ भाट्टो ब्रवीति ॥ २३ गवयात् ॥ २४ गवि ॥ २५ उपाधिर्विशेषणम् ॥ २६ कारिका भावयति ॥ २७ ग्रामादौ ॥ २८ अन्यत्र प्रसिद्धस्यान्यत्रारोपणमतिदेश ॥ २९ गोगवययो ॥ ३० तदुपमानम् ॥ ३१ गवयस्य ॥ ३२ स्मर्यमाणो ॥ ३३ स्मर्यमाणगोविशिष्टम् ॥ ३४ यस्मात्कारणात् ॥ ३५ निराकर्त्तुम् ॥ ३६ भूयसा बहूनामवयवाना समानता सामान्य तेन योग ॥ ३७ एकस्या गवयजातेरन्या गोजातिर्जात्यन्तरम् । एकस्या गोजातेरन्या गवयजातिर्जात्यन्तरम् । तस्य ॥ ३८ उपमानस्य ॥ ३९ गवयस्य ॥ ४० गोप्रत्यक्षापेक्षम् ॥ ४१ ता ॥ ४२ प्रत्यक्षात् ॥ ४३ गवयात् ॥ ४४ गोलक्षण वस्तु ॥ ४५ स्मर्यमाणगवान्वितम् ॥ ४६ उपमान गृहीतग्राहित्वादप्रमाण स्यादित्युक्ते आह ॥ ४७ गवयगते ॥ ४८ सादृश्यविशिष्टस्य ॥ ४९ सादृश्यविशिष्टो गौस्तद्विशिष्ट वा सादृश्यमितिविशिष्टविषय ॥ ५० सादृश्यविशिष्टस्य गोस्तद्विशिष्टस्य वा सादृश्यस्य ॥ ५१ स्मरणप्रत्यक्षाभ्याम् ॥ ५२ अस्मिन्नर्थे दृष्टान्तमाह ॥ ५३ पर्वतादौ ॥ ५४ देशादिनियतत्वेन ॥ ५५ उपमानम् ॥ ५६ उपमानस्यानुमानत्वे साध्ये ॥

पक्षधर्मत्वेनाग्रहणात्। यदा हि सादृश्यमात्रं धर्मि स्मर्यमाणेन गवा विशिष्टमिति साध्यं यदा च तादृशो गौस्तदा न तस्य तद्धर्मतया ग्रहणमस्ति। अत एव न गवयगतम्। गोगतसादृश्यस्य गोर्वा हेतुत्वे प्रतिज्ञार्थैकदेशत्वप्रसङ्गश्च। न च सादृश्यमत्र प्राक्प्रमेयेण प्रतिबन्धं प्रतिपन्नम्। न चान्वयप्रतिपत्तिमन्तरेण हेतोः साध्यप्रतिपादकत्वमुपलब्धम्। ततो गवार्थदर्शने गवयं पश्यतः सादृश्येन विशिष्टे गवि पक्षधर्मत्वग्रहणं सम्बन्धानुस्मरणं चान्तरेण प्रतिपत्तिरुत्पद्यमाना नानुमानेऽन्तर्भवतीति प्रमाणान्तरमुपमानम्। उक्तं च।—न चैतस्यानुमानत्वं पक्षधर्माद्यसम्भवात्। प्राक्प्रमेयस्य सादृश्यं धर्मित्वेन न गृह्यते। १। गवये गृह्यमाणं च न गवार्थानुमापकम्। प्रतिज्ञार्थैकदेशत्वाद्गोगतस्य न लिङ्गता। २। गवयश्चाप्यसम्बन्धान्न गोलिङ्गत्वमृच्छति। सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि। ३। एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने। सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः, इति। तथार्थापत्तिरपि प्रमाणान्तरम्। तल्लक्षणं ह्यर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यदृष्टार्थकल्पना। कुमारिलोप्येतदेव भाष्यकारवचो व्याचष्टे। प्रमाणषट्कविज्ञातो यत्रार्थोऽनन्यथा भवन्। अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता। १। प्रत्यक्षादिभिः षड्भिः प्रमाणैः प्रसिद्धो योर्थः स येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिः। तत्र प्रत्यक्षपूर्विकार्थापत्तिर्यथाग्नेः प्रत्यक्षेण प्रतिपन्नाद्दाहाद्दहनशक्तियोगोऽर्थापत्त्या प्रकल्प्यते। न हि शक्तिः प्रत्यक्षेण परिच्छेद्या—अतीन्द्रियत्वात्। नाप्यनुमानेन—अस्य प्रत्यक्षावगतप्रतिबन्धलिङ्गप्रभवत्वेनाभ्युपगमात्, अर्थापत्तिगोचरस्य चार्थस्य कदाचिदप्यध्यक्षागोचरत्वात्। अनुमानपूर्विका त्वर्थापत्तिर्यथा सूर्ये गमनात्तच्छक्तियोगिता। अत्र हि देशाद्देशान्तरप्राप्त्या सूर्ये गम-

१ क पक्षस्तद्धर्मत्वेनाग्रहण वा कथ सादृश्यस्येत्येतदाह ॥ २ सामान्यम् ॥ ३ गोगतसदृशत्वादिति हेतु ॥ ४ गवयसदृशो गौरिति वा पक्षः ॥ ५ गवयगतसदृशत्वादिति हेतु ॥ ६ गोगतसादृश्यस्य ॥ ७ पक्ष ॥ ८ हेतूपन्यासात्पूर्वं सादृश्यस्याप्रतिबद्धत्वात् ॥ ९ पक्षधर्मत्वेनाग्रहणादेव ॥ १० हेतु ॥ ११ सादृश्यम् ॥ १२ यद्यपि पक्षधर्मत्वेनाग्रहण गोगतसादृश्यस्य तथापि हेतुत्वेनोपन्यास क्रियते इत्युक्ते आह ॥ १३ गोर्गवयेन सदृश गोगतसादृश्यात्। गोर्गवयेन सदृश गौर्यत ॥ १४ उक्तयुक्त्या पक्षधर्मत्व नास्ति चेन्मा भूदन्वयो भविष्यतीत्युक्ते आह ॥ १५ हेतु ॥ १६ उपमानस्यानुमानत्वे साध्ये ॥ १७ हेतूपन्यासात्पूर्वम्॥१८सादृश्यविशिष्टो गौस्तद्विशिष्ट वा सादृश्यमिति विशिष्टविषयेण ॥ १९ अविनाभूतम् ॥२० तथा प्रतीतेरभावात् ॥ २१ सपक्षे सत्त्व ॥ २२ सादृश्यस्य पक्षधर्मत्वेनाग्रहणमन्वयप्रतिपत्त्यभावो वा यत ॥२३ वस ॥२४ सति ॥ २५ अन्वय ॥ २६ आदिशब्देन सपक्षे सत्त्वम्॥ २७ अनुमानकालात्पूर्वम् ॥ २८ हेतु ॥ २९ पक्षधर्मत्वेन सादृश्यम् ॥ ३० तर्हि गवयो हेतुर्भविष्यतीत्युक्ते आह॥ ३१ गवार्थेन ॥ ३२ पक्षधर्मत्व नास्ति चेन्मा भूदन्वयो भविष्यतीत्युक्ते आह ॥ ३३ पुसा ॥ ३४ हेतूपन्यासात्पूर्वम् ॥ ३५ प्रमेयेण ॥ ३६ उक्तार्थोपसहारमाह ॥ ३७ गोलक्षणे ॥३८ गवयम् ॥ ३९ पक्षधर्मत्वग्रहण विना साध्यसाधनसम्बन्धस्मरण च विना कोर्थो, गवयदर्शनकाल एव ॥ ४० शाब्दोपमाने यथा प्रमाणान्तरे भवत ॥ ४१ सामर्थ्यात्प्राप्ता ॥ ४२ उच्यते ॥ ४३ पुन ॥ ४४ प्रत्यक्षादिप्रमाणमात्रगम्य ॥ ४५ आगमे ॥ ४६ अदृष्टार्थं विना ॥ ४७ उपरि दृष्टिलक्षण ॥ ४८ आपादनम् ॥ ४९ बुद्धौ ॥५० नदीपूरादि ॥ ५१ अदृष्टार्थे सत्येव भवन्नित्यर्थ ॥ ५२ उपरि दृष्टिलक्षणम् ॥ ५३ पूरादन्यम् ॥ ५४ कारिका भावयति ॥ ५५ दृष्टे ॥ ५६ अर्थापत्तिषु मध्ये ॥ ५७ स्फोटात् ॥ ५८ अग्निर्दहनशक्तियुक्त दाहान्यथानुपपत्तेरिति ॥ ५९ आत्मादिवत् ॥ ६० भा ॥ ६१ शक्तिलक्षणस्य ॥

नमनुमीयते ततस्तच्छक्तिसम्बन्ध इति। श्रुतार्थापत्तिर्यथा, पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यश्रवणाद्रात्रिभोजनप्रतिपत्तिः। उपमानार्थापत्तिर्यथा, गवयोपमितायां गोस्तज्ज्ञानग्राह्यताशक्तिः। अर्थापत्तिपूर्विकाऽर्थापत्तिर्यथा, शब्देऽर्थापत्तिप्रबोधिताद्वाचकसामर्थ्यादभिधानसिध्यर्थं तन्नित्यत्वज्ञानं। शब्दाद्ध्यर्थः प्रतीयते, ततो वाचकसामर्थ्यं, ततोपि तन्नित्यत्वमिति। अभावपूर्विकाऽर्थापत्तिर्यथा, प्रमाणाभावप्रमितचैत्राभावविशेषिताद्गेहाच्चैत्रवहिर्भावसिद्धिः, जीवंश्चैत्रोऽन्यत्रास्ति गृहे अभावादिति। तदुक्तं "तत्र प्रत्यक्षतो ज्ञाताद्दाहाद्दहनशक्तता। वह्नेरनुमितात्सूर्ये यानात्तच्छक्तियोगिता। १। पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ। रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते। २। गवयोपमितायाः गोस्तज्ज्ञानग्राह्यशक्तता। अभिधानप्रसिध्यर्थमर्थापत्त्यावबोधितात्। ३। शब्दे वाचकसामर्थ्यात्तन्नित्यत्वप्रमेयता। अभिधानान्यथाऽसिद्धेरिति वाचकशक्तता। ४। अर्थापत्त्यावगम्यैव तदन्यत्वगतेः पुनः। अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः। ५। दर्शनस्य परार्थत्वादित्यस्मिन्नभिधास्यते। प्रमाणाभावनिर्णीतचैत्राभावविशेषितात्। ६। गेहाच्चैत्रवहिर्भावसिद्धिर्या त्विह दर्शिता। तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत्" इत्यादि।

तथाऽभावप्रमाणमपि प्रमाणान्तरम्। तद्धि निषेध्याधारवस्तुग्रहणादिसामग्रीतस्त्रिप्रकारमुत्पन्नं सत् क्वचित्प्रदेशादौ घटादीनामभाव विभावयति। उक्तं च "गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया। १। प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते। सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि। २। प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता" इति। न चाध्यक्षेणाभावोऽवसीयते—तस्याभावविषयत्वविरोधात्—भावांशेनैवेन्द्रियाणां सम्बन्धात्। तदुक्तं "न तावदिन्द्रियेणैषा नास्तीत्युत्पाद्यते मतिः। भावांशेनैव सम्बन्धो योग्यत्वादिन्द्रियस्य हि" इति।

१ आदित्यो गमनशक्तियुक्तो गतिमत्त्वान्यथानुपपत्ते। गतिमानादित्यो देशाद्देशान्तरप्राप्ते, वाणादिवत् ॥ २ सूर्यो गमनशक्तियुक्तो गतिमत्त्वान्यथानुपपत्ते ॥ ३ आगम ॥ ४ देवदत्तो रात्रौ भुङ्क्ते—पीनत्वे सति दिवाभोजनाभावश्रवणान्यथानुपपत्ते ॥ ५ गौरुपमानज्ञानग्राह्यताशक्तियुक्ता उपमेयत्वान्यथानुपपत्ते ॥ ६ उच्चारण ॥ ७ शब्दो नित्यो वाचकसामर्थ्यान्यथा( नित्यत्व विना)ऽनुपपत्ते। अस्यार्थापत्तिपूर्वकत्व निरूप्यते। शब्दो वाचकशक्तियुक्त ततोऽर्थप्रतीत्यन्यथा ( वाचकशक्ति विना )ऽनुपपत्ते ॥ ८ शब्द ॥ ९ अभावप्रमाण ॥ १० ता ॥ ११ भा ॥ १२ विशेषण ॥ १३ अर्थापत्तिषु मध्ये ॥ १४ मत्याम् ॥ १५ उपमान ॥ १६ नम ॥ १७ अभिधानसिध्यर्थं तन्नित्यत्वप्रमेयता स्यात् ॥ १८ नित्यत्व विना ॥ १९ वाचकशक्तता। अर्थापत्त्यवगम्या न भविष्यति अतश्चार्थापत्तिपूर्विकार्थापत्ति कथं स्यादित्युक्ते आह ॥ २० अतीन्द्रियत्वात् ॥ २१ शक्ततायाः सकाशादन्यत्व भिन्नत्व नित्यत्वस्य ॥ २२ परिज्ञानात् ॥ २३ यथैवार्थापत्त्या वाचकशक्ततावगम्यते तथैव शब्दनित्यत्वं प्रतीयते इति कृत्वार्थापत्तिपूर्विकार्थापत्तेर्वैयर्थ्यमित्युक्ते आह ॥ २४ अभिधानान्यथासिद्धेरिति यदुक्तं तत्समर्थनीयमित्युक्ते आह ॥ २५ उच्चारणस्य ॥ २६ शिष्यार्थत्वात् ॥ २७ स्वग्रन्थापेक्षयाग्रे वक्ष्यमाणग्रन्थे ॥ २८ अर्थापत्तिनिरूपणप्रस्तावे ॥ २९ प्रमाणपञ्चकाङ्गिनाम् ॥ ३० भाष्यकार ॥ ३१ घटादि ॥ ३२ शुद्धभूतल ॥ ३३ निषेध्यस्मरणमुपलब्धिग्रक्षणप्राप्तस्य घटादेरनुपलम्भश्च ॥ ३४ अभावप्रमाणसामग्रीत ॥ ३५ त्रिप्रकारमित्येतत्पद् प्रत्यक्षेत्यादिनाऽऽह ॥ ३६ भूतले ॥ ३७ आदिपदेन काले ॥ ३८ बाह्येन्द्रियानपेक्षया ॥ ३९ स्वरूपम् ॥ ४० प्रमाणपञ्चस्वरूपत्वेनाभावप्रमाणस्य ॥ ४१ प्रसज्यप्रतिषेधोत्र ॥ ४२ जीवस्य प्रमाणपञ्चकरूपता ॥ ४३ स्वरूपम् ॥ ४४ पर्युदासोत्र ॥ ४५ भुवि। घटाद्यलक्षणे ॥ ४६ घटाद्यस्तित्वावबोधार्थम् ॥ ४७ अनुमानापेक्षया ॥

नाप्यनुमानेनासौ साध्यते–हेतोरभावात् । न च विपर्ययभूतस्याभावस्याभावादभावप्रमाणवैयर्थ्यम्–कारणादिविभागतो व्यवहारस्य लोकप्रतीतस्याभावप्रसङ्गात् । उक्तं च । न च स्याद्व्यवहारोयं कारणादिविभागतः । प्रागभावादिभेदेन नाभावो यदि भिद्यते । १ । प्रागभावादिभेदान्यथानुपपत्तेश्चास्यार्थापत्त्या वस्तुरूपतावसीयते । उक्तं च । न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता । कार्यादीनामभावः को भावो यः कारणादिनः । १ । अनुमानावसेया चास्य वस्तुता । यदाह–यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् । तस्माद्गवादिवद्वस्तु प्रमेयत्वाच्च गृह्यताम् । १ । चतुःप्रकारश्चाभावो व्यवस्थितः–प्राक्प्रध्वंसेतरेतराऽत्यन्ताभावभेदात् । उक्तं च । वस्त्वऽसङ्करसिद्धिश्च तत्प्रामाण्यं समाश्रिता । क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते । १ । नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् । गवियोऽश्वाद्यभावस्तु सोन्योन्याभाव उच्यते । २ । शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः । शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते । ३ । यदि चैतेषां व्यवस्थापकमभावाख्यं प्रमाणं न स्यात्तदा प्रतिनियतवस्तुव्यवस्थाविलोपः स्यात् । तदुक्तं "क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः । शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तितात्मनि । १ । अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह । व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता" इति । न च निरंशत्वाद्वस्तुनस्तत्स्वरूपग्राहिणाध्यक्षेणास्य सर्वात्मना ग्रहणादगृहीतस्य चापरस्यासदंशस्य तत्राभावात् कथं तद्व्यवस्थापनाय प्रवर्त्तमानमभावाख्यं प्रमाणं प्रामाण्यमश्नुते इत्यभिधातव्यम्–यतः सदसदात्मके वस्तुनि प्रत्यक्षादिना तत्र सदंशग्रहणेप्यगृहीतस्यासदंशस्य व्यवस्थापनाय प्रमाणाभावस्य प्रवर्त्तमानस्य न प्रामाण्यव्याहतिः । उक्तं च । स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते किञ्चिद्रूपं कैश्चित्कदाचन । १ । यस्य यत्र यदोद्भूतिर्जिघृक्षा चोपजायते । वेद्यतेनुभवस्तस्य तेन च व्यपदिश्यते । २ । तस्योपकारकत्वेन वर्त्ततेशस्तदेतरः । उभयोरपि संवित्त्या उभयानुगमोस्ति तु । ३ । प्रत्यक्षाद्यवतारश्च भावांशो गृह्यते यदा । व्यापारस्तदनुत्पत्तेरभावांशे जिघृक्षिते । ४ । न च धर्मिणोऽभिन्नत्वाद्भावांशवदभावांशस्याप्यध्यक्षेणैव ग्रहः–सदसदंशयोर्धर्मभेदेप्यन्योन्यं भेदान्नायनरश्मिरूपादिवदभावस्यानुद्भूतत्वात् । न

१ कारणादे प्रागभावादिना विभाग कृत । अभाव इति वा ॥ २ पदार्थस्य ॥ ३ अन्यथा ॥ ४ क्षीर ॥ ५ कार्यं दधि ॥ ६ प्रागभावादिकृत कारणादिविभाग ॥ ७ लोकप्रतीत ॥ ८ भावप्रमाणमन्तरेण ॥ ९ प्रागभावादय ॥ १० कारणेन ॥ ११ स्वरूपादीना च ॥ १२ अथवाऽर्थापत्त्यपेक्षया ॥ १३ अभावो वस्तुरूपो भवति अनुवृत्तिव्यावृत्तिबुद्धिग्राह्यत्वाद्गवादिवत्प्रमेयत्वाच्च तद्वत् ॥ १४ शशस्य ॥ १५ कालत्रये ॥ १६ गन्धादय ॥ १७ सद्रूपस्य वस्तुन ॥ १८ समर्थनाय ॥ १९ व्याप्नोति ॥ २० सौगतेन ॥ २१ सर्वदा ॥ २२ प्रमाणे ॥ २३ किञ्चिद्रूपमित्येतत्पद यस्येत्यादिना विवृणोति । सदंशस्यासदंशस्य वा ॥ २४ उभयात्मके वस्तुनि ॥ २५ सदंशग्रहणकाले ॥ २६ अभिव्यक्ति ॥ २७ पुरुषाणाम् ॥ २८ नरे ॥ २९ परिच्छित्ति ॥ ३० सदंशस्यासदंशस्य वा ॥ ३१ अभिव्यक्तेन सदंशेन असदंशेन वा ॥ ३२ पुभिर्वस्तु ॥ ३३ य एवांशो गृह्यते स एवांशोस्ति न तद्द्वितीय इत्युक्ते आह ॥ ३४ गृह्यमाणसदंशस्य ॥ ३५ सदंशग्रहणकाले ॥ ३६ असदंश ॥ ३७ सदसदंशयो ॥ ३८ संवेदनात् ॥ ३९ उभयात्मके वस्तुनि ॥ ४० कैश्चिदित्येतत्पद प्रत्यक्षाद्यवतार इत्यादिना आह ॥ ४१ तदा भवेत् ॥ ४२ स्यात् ॥ ४३ अभावस्य ॥ ४४ ग्रहीतुमिष्टे वस्तुनि ॥ ४५ तदनुत्पत्तेरित्येतदपरार्द्धं विघटयति ॥ ४६ वस्तुन ॥ ४७ एकत्वात् ॥ ४८ भेदेप्युभयधर्मयो प्रत्यक्षेण ग्रहण कुतो न स्यादित्युक्ते आह ॥ अन्योन्यमिति ॥ ४९ सदंशस्योद्भूतत्वात् ॥

चाभावस्य भावरूपेण प्रमाणेन परिच्छित्तिर्युक्ता । प्रयोगः—यो यथाविधो विषयः स तथाविधेनैव प्रमाणेन परिच्छि(च्छे)द्यते । यथा रूपादिभावो भावरूपेण चक्षुरादिना । विवादास्पदीभूतश्चाभावस्तस्मादभावः परिच्छेद्यत, इति । उक्तं च "न तु भावादभिन्नत्वात्सम्प्रयोगोस्ति तेन च । न ह्यत्यन्तमभेदोस्ति रूपादिवदिहापि नः । १। धर्मयोर्भेद इष्टो हि धर्म्यभेदेपि नः स्थितेः । उद्भवाभिभवात्मत्वाद्ग्रहणं चावतिष्ठते । २ । मेयो यद्वदभावो हि मानमप्येवमिष्यताम् । भावात्मके यथा मेये नाभावस्य प्रमाणता । ३ । तथैवाभावमेयेपि न भावस्य प्रमाणता" इति । ततः शा(श)ब्दादीनां प्रमाणान्तरत्वप्रसिद्धेः कथं प्रत्यक्षानुमानभेदात्प्रमाणद्वैविध्यं परेषां व्यवतिष्ठेत ?

नन्वेवं प्रत्यक्षेतरभेदात्कथं भवतोपि प्रमाणद्वैविध्यव्यवस्था—तेषां प्रमाणान्तरत्वप्रसिद्धेरविशेषादिति चेत्तेषां परोक्षेऽन्तर्भावादिति ब्रूमः । तथा हि ।—यदेकलक्षणलक्षितं तद्व्यक्तिभेदेप्येकमेव । यथा वैशद्यैकलक्षणलक्षितं चक्षुरादिप्रत्यक्षम् । अवैशद्यैकलक्षणलक्षितं च शाब्दादीति । चक्षुरादिसामग्रीभेदेपि हि तज्ज्ञानाना वैशद्यैकलक्षणलक्षितत्वेनैवाभेदः प्रसिद्धः—प्रत्यक्षरूपतानतिक्रमात् । तद्वत् शब्दादिसामग्रीभेदेप्यवैशद्यैकलक्षणलक्षितत्वेनैवाभेदः शाब्दादीनाम्—परोक्षरूपत्वाविशेषात् । ननु परोक्षस्य स्मृत्यादिभेदेन परिगणितत्वादुपमानादीनां प्रमाणान्तरत्वमेवेत्यप्यसमीक्षिताभिधानम्—तेषामत्रैवान्तर्भावात् । उपमानस्य हि प्रत्यभिज्ञानेन्तर्भावो वक्ष्यते, अर्थापत्तेस्त्वनुमानेऽन्तर्भावः । तथा हि । अर्थापत्त्युत्थापकोर्थोन्यथानुपपद्यमानत्वेनानवगतोवगतो वाऽदृष्टार्थपरिकल्पनानिमित्तं स्यात् ? न तावदनवगतः—अतिप्रसङ्गात् । येन हि विनोपपद्यमानत्वेनावगतस्तमपि परिकल्पयेत्, येन विना नोपपद्यते तमपि वा न कल्पयेत्—अन्यथानुपपद्यमानत्वेनानवगतस्यार्थापत्त्युत्थापकार्थस्यान्यथानुपपद्यमानत्वे सत्यप्यदृष्टार्थपरिकल्पकत्वासम्भवात् । सम्भवे वा लिङ्गस्याप्यनिश्चिताविनाभावस्य परोक्षार्थानुमापकत्वं स्यात् । ततश्चेदं नार्थापत्त्युत्थापकार्थाद् भिद्येत । नाप्यवगतः—अर्थापत्त्यनुमानयोर्भेदाभावप्रसङ्गादेव—अविनाभावित्वेन प्रतिपन्नादेकस्मात्सम्बन्धिनो द्वितीयप्रतीतेरुभयत्राविशेषात् । किञ्चास्यान्यथानुपपद्यमानत्वावगमोऽर्थापत्तेरेव प्रमाणान्तराद्वा ? प्रथमपक्षेऽन्योन्याश्रयः । तथा हि । अन्यथानुपपद्यमानत्वेन प्रतिपन्नादर्थादर्थापत्तिप्रवृत्तिस्तत्प्रवृत्ते-

---

१ अभावो अभावप्रमाणपरिच्छेद्य –तथाविधविपयत्वात् ॥ २ भावेन परिच्छेद्योऽभावेन वेति ॥ ३ तथाविधविपयत्वात् ॥ ४ पदार्थात् ॥ ५ अभावस्य ॥ ६ इन्द्रियाणाम् ॥ ७ असदशेन ॥ ८ रश्मि ॥ ९ यथा रूपादेरत्यन्तमभेदोस्ति, एव भावाभावधर्मयोरत्यन्तमभेदो नास्ति ॥ १० धर्मस्यात्यन्तमभेदो नास्तीति कुत ? ॥ ११ स्वकीयप्रमाणाभ्यामुभयधर्मयोरपि ग्रहण कस्मान्न स्यादित्युक्ते आह ॥ १२ सदसदशयो १३ प्रत्यक्षादिप्रमाणे ॥ १४ अग्रहण च ॥ १५ अभावरूपम् ॥ १६ सौगतेन ॥ १७ दृष्टान्तमाह ॥ १८ बौद्धानाम् ॥ १९ सौगतमतप्रसिद्धप्रमाणद्वैविध्याव्यवस्थितिप्रकारेण ॥ २० जेनस्य ॥ २१ वय जैना ॥ २२ शब्दादि धर्मि व्यक्तिभेदेप्येक भवत्येकलक्षणलक्षितत्वात् ॥ २३ स्पर्शनादि ॥ २४ अध पूरादि ॥ २५ उपरि वृष्टि विना ॥ २६ उपरि वृष्ट्यादिलक्षण ॥ २७ कारणम् ॥ २८ रासभागमनादिना ॥ २९ धूमादे ॥ ३० नालिकेरद्वीपायात नर प्रति ॥ ३१ लिङ्गम् ॥ ३२ अन्यथा ॥ ३३ धूमादिहेतोरध पूरादिकल्पकाद्वा ॥ ३४ अग्न्यादिसाध्यस्योपरिवृष्ट्यादिकल्प्यस्य वा ॥ ३५ अध पूरादे ॥ ३६ उपरि वृष्ट्यादिं विना ॥ ३७ अध पूरात् ॥ ३८ अर्थापत्त्युत्थापकार्थावगम ॥

श्चास्यान्यथानुपपद्यमानत्वप्रतिपत्तिरिति । ततो निराकृतमेतत् "अविनाभाविता चात्र तदैव परिगृह्यते । न प्रागवगतेत्येवं सत्यप्येषा न कारणम् ॥१॥ तेन सम्बन्धवेलायां सम्बन्ध्यन्यतरो ध्रुवम् । अर्थापत्त्यैव गन्तव्यः पश्चादस्त्वनुमानता" इति । अथ प्रमाणान्तरात्तदवगमः । तत्किं भूयो दर्शनं विपक्षेनुपलम्भो वा ? आद्यविकल्पे क्वास्य भूयो दर्शनम् ? साध्यधर्मिणि दृष्टान्तधर्मिणि वा ? न तावदाद्यः पक्षः—शक्तेरतीन्द्रियतया साध्यधर्मिण्यस्य तदविनाभावित्वेन भूयोदर्शनासम्भवात् । द्वितीयपक्षोप्ययं एवायुक्तः । किञ्च दृष्टान्तधर्मिणि प्रवृत्तं भूयोदर्शनं साध्यधर्मिण्यप्यस्यान्यथानुपपन्नत्वं निश्चाययति दृष्टान्तधर्मिण्येव वा ? तत्रोत्तरः पक्षोऽयुक्तः । न खलु दृष्टान्तधर्मिणि निश्चितान्यथानुपपद्यमानत्वोर्थोऽन्यत्र साध्यधर्मिणि तथात्वेनानिश्चितः स्वसाध्यं प्रसाधयति—अतिप्रसङ्गात् । प्रथमपक्षे तु लिङ्गार्थापत्त्युत्थापकार्थयोर्भेदाभावः स्यात् । ननु लिङ्गस्य दृष्टान्तधर्मिणि प्रवृत्तप्रमाणवशात्सर्वोपसंहारेण स्वसाध्यनियतत्वनिश्चयः, अर्थापत्त्युत्थापकार्थस्य तु साध्यधर्मिण्येव प्रवृत्तप्रमाणात्सर्वोपसंहारेणादृष्टार्थान्यथानुपपद्यमानत्वनिश्चय इत्यनयोर्भेदः । नैतद्युक्तम् । न हि लिङ्गं सपक्षानुगममात्रेण गमकं वज्रस्य लोहलेख्यत्वे पार्थिवत्ववत् श्यामत्वे तत्पुत्रत्ववद्वा । किं तर्हि ? अन्तर्व्याप्तिबलेनेति प्रतिपादयिष्यते, तत्र च किं सपक्षानुगमेनेति च । तदभावे गमकत्वमेवास्य कथमिति चेद्यथार्थापत्त्युत्थापकार्थस्य । तथार्थापत्तिरेवाखिलमनुमानमिति षट्प्रमाणसंख्याव्याघातः । भवतु वा सपक्षानुगमाननुगमभेदस्तथापि नैतावता तयोर्भेदः । अन्यथा पक्षधर्मत्वसहिताया अर्थापत्तेस्तद्रहितार्थापत्तिः प्रमाणान्तरं स्यादिति प्रमाणसंख्याव्याघातः । अस्ति चार्थापत्तिः पक्षधर्मत्वरहिता—'नदीपूरोप्यधोदेशे दृष्टः सन्नुपरि स्थिताम् । नियम्यो

---

१ अर्थस्य ॥ २ अन्योन्याश्रयो यत ॥ ३ वक्ष्यमाणम् ॥ ४ अर्थापत्त्यनुमानयोरभेद –निश्चिताविनाभाविलिङ्गप्रभवत्वाविशेषादित्युक्ते आह पर ॥ ५ अर्थापत्तिकल्पितेऽव पूरादौ ॥ ६ अर्थापत्त्युत्पत्ते पूर्वमविनाभाविता नावसिता ॥ ७ सती ॥ ८ अर्थापत्तिं प्रति ॥ ९ अतोऽनुमानादर्थापत्तेर्भेद. ॥ १० सम्बन्धे गृहीतेर्थापत्तेरनुमानरूपता भविष्यतीत्युक्ते आह ॥ ११ येन कारणेनाविनाभाविताऽर्थापत्तिसमये एव गृह्यते तेन कारणेन सम्बन्धे ॥ १२ ग्रहणस्य ॥ १३ अनुमानस्य ॥ १४ सम्बन्धिनोर्वृष्टिपूरयोर्मध्ये अन्यतरो वृष्टि ॥ १५ पूर्वमर्थापत्तिरेवेत्यर्थ ॥ १६ उत्तरकाल चेत् तदा ॥ १७ अर्थापत्त्युत्थापकार्थाविनाभावावगम ॥ १८ यत्र वृष्टिर्नास्ति स विपक्षस्तस्मिन् ॥ १९ अर्थापत्त्युत्थापकार्थस्य कल्प्याविनाभूतकल्पकस्य ॥ २० साध्यधर्मा दहनशक्तिलक्षणोस्याग्नेरस्तीति साध्यधर्मा तस्मिन् ॥ २१ दृष्टान्त एव धर्मी ॥ २२ अग्नो ॥ २३ दाहस्य साधनस्य ॥ २४ शक्त्या ॥ २५ दृष्टान्ते धर्मिणि शक्त्याविनाभूतस्फोटलक्षणकल्पकाऽदर्शनादेव ॥ २६ दाहस्य ॥ २७ शक्तिं विना ॥ २८ शक्तिं विना ॥ २९ दाह ॥ ३० दाहस्य शक्तिम् ॥ ३१ मैत्रपुत्रत्वादेरपि स्वसाध्य प्रति गमकत्वप्रसङ्गात् ॥ ३२ महानसादौ ॥ ३२ प्रत्यक्ष ॥ ३४ यो यो धूमवान्स सोऽग्निमानिति ॥ ३५ अविनाभाव ॥ ३६ अन्तर्व्याप्तिबलेनेति कोर्थ पक्षे एव साध्यसाधनयोर्व्याप्तिरन्तर्व्याप्ति ॥ ३७ अर्थापत्तिरूपात् ॥ ३८ यो य स्फोट स सर्वोपि शक्तियुक्ताग्निकार्य ॥ ३९ स्फोटस्य ॥ ४० पाषाणकाष्ठादि ॥ ४१ अन्वय ॥ ४२ वज्र लोहलेख्य पार्थिवत्वात्पाषाणवद्यल्लोहलेख्य न तत्पार्थिव न, यथाकाशम् ॥ ४३ पक्षे ॥ ४४ एतद्द्वयमेवानुमानाङ्ग नोदाहरणमित्यादिविचारावसरे ॥ ४५ अन्तर्व्याप्तिबलेनैव गमकत्वे च ॥ ४६ प्रतिपादयिष्यते ॥ ४७ यथार्थापत्त्युत्थापकस्यान्तर्व्याप्तिबलेन गमकत्व तथा लिङ्गस्यापि ॥ ४८ दाहस्य ॥ ४९ दृष्टान्ताभावे हेतोर्गमकत्वे च ॥ ५० दृष्टान्ते ॥ ५१ अर्थापत्ते ॥ ५२ अर्थापत्त्यनुमानयो ॥ ५३ एतावता भेदश्चेत् ॥ ५४ हेतोर्व्याप्यवृत्तित्व पक्षधर्मत्वम् ॥ ५५ उपरि वृष्टो देवो नदीपूरदर्शनान्यथानुपपत्तेरित्येतस्य अपक्षधर्मत्व भिन्नदेशत्वात् । यत्र देशे वृष्टिस्तत्र नदीपूरो न । यत्र नदीपूरस्तत्र वृष्टिर्न । अत्र पक्ष उपरिदेश ॥ ५६ पुन ॥ ५७ व्याप्य ॥

गमयत्येव वृत्तां वृष्टिं नियामिकाम् । १ । पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा । सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते । २ । एवं यत्पक्षधर्मत्वं ज्येष्ठं हेत्वङ्गमिष्यते । तत्पूर्वोक्तान्यधर्मस्य दर्शनाद्व्यभिचार्यते, इत्यभिधानात् । नियमवतोऽर्थान्तरप्रतिपत्तेरविशेषात्तयोरभेदे स्वसाध्याविनाभाविनोऽर्थादर्थान्तरप्रतिपत्तेरत्राप्यविशेषात्कथमनुमानादर्थापत्तेर्भेदः स्यात् ? अथ विपक्षेऽनुपलम्भात्तस्यान्यथानुपपद्यमानत्वावगमो न–पार्थिवत्वादेरप्येवं स्वसाध्याविनाभावित्वावगमप्रसङ्गात्—विपक्षेऽनुपलम्भस्याविशेषात्, सर्वात्मसम्बन्धिनोऽनुपलम्भस्यासिद्धानैकान्तिकत्वाच्च । नन्वेवं सकलानुमानोच्छेदः । अस्तु नाम तस्यायं, यो भूयोदर्शनाद्विपक्षेऽनुपलम्भाद्व्याप्तिं प्रसाधयति, नास्माकम्–प्रमाणान्तरात्तत्प्रसिद्ध्यभ्युपगमाद् । भवतोपि ततस्तदभ्युपगमे प्रमाणसंख्याव्याघातः । ननु वह्निस्वरूपस्याध्यक्षत एव प्रसिद्धेस्तदतिरिक्तातीन्द्रियशक्तिसद्भावे प्रमाणाभावात्कथं तत्रार्थापत्तेः प्रामाण्यम् ? निजा हि शक्तिः पृथिव्यादीनां पृथिवीत्वादिकमेव–तदभिसम्बन्धादेव तेषां कार्यकारित्वात् । अन्त्या तु चरमसहकारिरूपा–तत्सद्भावे कार्यकरणादभावे चाकरणात् । तथा हि । सन्तोपि तन्तवो न कार्यमारभन्ते अन्त्यतन्तुसंयोगं विनेति सैव शक्तिस्तेषाम् । ननु कथमर्थान्तरमर्थान्तरस्य शक्तिः ? अनर्थान्तरत्वेपि समानमेतत्, स एव तस्यैव न शक्तिरिति । अथ यदि पूर्वेषां सहकार्येव शक्तिस्तर्हि तस्याप्यशक्तस्याकारणत्वादन्या शक्तिर्वाच्येत्यनवस्था । तदयुक्तम् । चरमस्य हि सहकारिणः पूर्वसहकारिण एव शक्तिः–इतरेतराभिसम्बन्धेन कार्यकरणात् । स एव समग्राणां भावः सामग्रीति भावप्रत्ययेनोच्यते–तेन सता समग्रव्यपदेशात् । किञ्चासौ शक्तिर्नित्याऽनित्या वा स्यात्? नित्या चेत्सर्वदा कार्योत्पत्तिप्रसङ्गः । तथा च सहकारिकारणापेक्षा व्यर्थार्थानाम्–तल्लाभात्प्रागेव कार्यस्योत्पन्नत्वात् । अथानित्यासौ । कुतो जायते ? शक्तिमतश्चेत्किं शक्तादशक्ताद्वा ? शक्ताच्चेच्छक्त्यन्तरपरिकल्पना । अतोऽनवस्था स्यात् । अश-

---

१ व्यापिकाम् ॥ २ पुत्रो ब्राह्मण —पित्रोर्ब्राह्मण्यान्यथानुपपत्ते ॥ ३ अनुमा अर्थापत्ति । अप्रत्यक्षा नो बुद्धिरित्याद्यभिधानात् ॥ ४ उक्तप्रकारेण ॥ ५ अन्यस्य पक्षाद्व्यतिरिक्तस्य धर्मो नदीपूर पितृब्राह्मण्य च । पूर्वोक्तो नदीपूरादि स चासावन्यधर्मश्च तस्य ॥ ६ यो यो हेतु स स पक्षधर्मत्वसहित इत्यस्य व्यभिचार । पक्षधर्मरहितोपि हेतुर्विद्यते यत ॥ ७ स्फोटात्पूराच्च ॥ ८ पक्षधर्मसहितासहितार्थापत्त्यो ॥ ९ लिङ्गात्पूराच्च ॥ १० अग्निवृष्ट्यो ११ अनुमानेऽर्थापत्तौ च ॥ १२ आकाशे लोहलेख्यत्वस्याभावात् ॥ १३ दाहस्य ॥ १४ इति चेन्न ॥ १५ साधनस्य ॥ १६ अलोहलेख्ये आकाशलक्षणे विपक्षे पार्थिवत्वस्यानुपलम्भप्रकारेण ॥ १७ वज्रस्य लोहलेख्यत्व ॥ १८ गगने ॥ १९ विपक्षेऽनुपलम्भ सर्वसम्बन्धीत्यादिप्रकारेण ॥ २० पर ॥ २१ दृष्टान्ते ॥ २२ जैनानाम् ॥ २३ ऊहात् ॥ २४ मीमांसकस्य ॥ २५ नैयायिक ॥ २६ वह्नित्वस्य ॥ २७ स्वरूपातिरिक्त ॥ २८ पृथिवीत्वादिस्वरूप ॥ २९ शक्ति ॥ ३० अन्त्य ॥ ३१ जैनादि ३२ बीजस्य ॥ ३३ नैयायिक ॥ ३४ वह्नि ॥ ३५ वह्ने ॥ ३६ अपरसहकारिशक्त्यभावादशक्त ॥ ३७ अतीन्द्रियया शक्त्या शक्तिमत उपकार क्रियते इत्यस्मिन्पक्षे शक्त्या क्रियमाण उपकार शक्तिमतो भिन्नश्चेत्तदानवस्था । कथम् ? उपकारोपि शक्तिमतोऽभिन्नो यदि तदा शक्तिमतोऽयमुपकार इति सम्बन्धो न स्याद्भिन्नत्वात् । उपकारेणापि स्वसम्बन्धसिद्ध्यर्थमुपकारान्तर क्रियते चेत्तदा शक्तेनाऽशक्तेन वोपकारेणोपकारान्तर क्रियते ? न तावदशक्तेन–अशक्तस्योपकारकरणे अक्षमत्वात् । शक्तेन चेदुपकारेण स्वसम्बन्धसिद्ध्यर्थमुपकारान्तर विधीयते तर्हि यया शक्त्या स्वय शक्त उपकार सापि भिन्नाऽभिन्ना वा ? भिन्ना चेत्तदोपकारस्येय शक्तिरिति न–तस्माद्भिन्नत्वात् । शक्त्यापि स्वसम्बन्धसिद्ध्यर्थमुपकारान्तर क्रियते इत्यादिप्रकारेणानवस्था ॥ ३८ कारणानाम् ॥ ३९ विद्यमानेन ॥ ४० तन्तूनाम् ॥ ४१ इत्यनवस्था परिहृता ॥ ४२ यया शक्त्या शक्तिमान् शक्त सापि नित्याऽनित्या वा ? न तावन्नित्या–सर्वदा कार्योत्पत्तिप्रसङ्गात् । अथानित्या । सापि कुतो जायेत ? शक्तिमतश्चेच्छक्तादशक्ताद्वेत्यादिप्रकारेण ॥

श्चास्यान्यथानुपपद्यमानत्वप्रतिपत्तिरिति[3]। ततो निराकृतमेतत्[4] "अविनाभाविता चात्र तदेव परिगृह्यते। न प्रागवगतेत्येवं सत्यप्येषा न कारणम्[5]॥१॥ तेन[10] सम्बन्धवेलायां[11][12] सम्बन्ध्यन्यतरो ध्रुवम्[13][14]। अर्थापत्त्यैव गन्तव्यः पश्चादस्त्वनुमानता[15]" इति। अथ प्रमाणान्तरात्तदवगमः[16]। तत्किं भूयो दर्शनं विपक्षेनुपलम्भो वा? आद्यविकल्पे क्वास्य[17] भूयो दर्शनम्? साध्यधर्मिणि दृष्टान्तधर्मिणि वा? न तावदाद्यः पक्षः–शक्तेरतीन्द्रियतया साध्यधर्मिण्यस्य[22][23][24] तदविनाभावित्वेन भूयोदर्शनासम्भवात्। द्वितीयपक्षोप्यत एवायुक्तः। किञ्च दृष्टान्तधर्मिणि प्रवृत्तं भूयोदर्शनं साध्यधर्मिण्यप्यस्यान्यथानुपपन्नत्वं निश्चाययति दृष्टान्तधर्मिण्येव वा? तत्रोत्तरः पक्षोऽयुक्तः। न खलु दृष्टान्तधर्मिणि निश्चितान्यथानुपपद्यमानत्वोऽर्थोऽन्यत्र साध्यधर्मिणि तथात्वेनानिश्चितः स्वसाध्यं प्रसाधयति–अतिप्रसङ्गात्[31]। प्रथमपक्षे तु लिङ्गार्थापत्त्युत्थापकार्थयोर्भेदाभावः स्यात्। ननु लिङ्गस्य दृष्टान्तधर्मिणि प्रवृत्तप्रमाणवशात्सर्वोपसंहारेण स्वसाध्यनियतत्वनिश्चयः, अर्थापत्त्युत्थापकार्थस्य तु साध्यधर्मिण्येव प्रवृत्तप्रमाणात्सर्वोपसंहारेणादृष्टार्थान्यथानुपपद्यमानत्वनिश्चय इत्यनयोर्भेदः। नैतद्युक्तम्। न हि लिङ्गं सपक्षानुगममात्रेण गमकं वज्रस्य लोहलेख्यत्वे पार्थिवत्ववत् श्यामत्वे तत्पुत्रत्ववद्वा। किं तर्हि? अन्तर्व्याप्तिबलेनेति प्रतिपादयिष्यते, तत्र च किं सपक्षानुगमेनेति च। तदभावे गमकत्वमेवास्य कथमिति चेद्यथार्थापत्त्युत्थापकार्थस्य। तथा चार्थापत्तिरेवाखिलमनुमानमिति षट्प्रमाणसंख्याव्याघातः। भवतु वा सपक्षानुगमाननुगमभेदस्तथापि नैतावता तयोर्भेदः[53]। अन्यथा पक्षधर्मत्वसहिताया अर्थापत्तेस्तद्रहितार्थापत्तिः प्रमाणान्तरं स्यादिति प्रमाणसंख्याव्याघातः। अस्ति चार्थापत्तिः पक्षधर्मत्वरहिता–'नदीपूरोप्यधोदेशे दृष्टः सन्नुपरि स्थिताम्। नियम्यो

१ अर्थस्य ॥ २ अन्योन्याश्रयो यत ॥ ३ वक्ष्यमाणम् ॥ ४ अर्थापत्त्यनुमानयोरभेद –निश्चिताविनाभाविलिङ्गप्रभवत्वाविशेषादित्युक्ते आह पर ॥ ५ अर्थापत्तिकल्पितेऽध पूरादौ ॥ ६ अर्थापत्त्युत्पत्ते पूर्वमविनाभाविता नावसिता ॥ ७ सती ॥ ८ अर्थापत्तिं प्रति ॥ ९ अतोऽनुमानादर्थापत्तेर्भेद. ॥ १० सम्बन्धे गृहीतेर्थापत्तेरनुमानरूपता भविष्यतीत्युक्ते आह ॥ ११ येन कारणेनाविनाभाविताऽर्थापत्तिसमये एव गृह्यते तेन कारणेन सम्बन्धे ॥ १२ ग्रहणस्य ॥ १३ अनुमानस्य ॥ १४ सम्बन्धिनोर्वृष्टिपूरयोर्मध्ये अन्यतरो वृष्टि ॥ १५ पूर्वमर्थापत्तिरेवेत्यर्थ ॥ १६ उत्तरकाल चेत् तदा ॥ १७अर्थापत्त्युत्थापकार्थाविनाभावावगम ॥१८ यत्र वृष्टिर्नास्ति स विपक्षस्तस्मिन् ॥ १९ अर्थापत्त्युत्थापकार्थस्य कल्प्याविनाभूतकल्पकस्य ॥ २० साध्यधर्मा दहनशक्तिलक्षणोस्याग्नेरस्तीति साध्यधर्मा तस्मिन् ॥ २१ दृष्टान्त एव धर्मा ॥ २२ अग्नो ॥ २३ दाहस्य साधनस्य ॥ २४ शक्त्या ॥ २५ दृष्टान्ते धर्मिणि शक्त्याविनाभूतस्फोटलक्षणकल्पकाऽदर्शनादेव ॥ २६ दाहस्य॥ २७ शक्तिं विना॥ २८ शक्तिं विना ॥ २९ दाह ॥ ३० दाहस्य शक्तिम् ॥ ३१ मैत्रपुत्रत्वादेरपि स्वसाध्य प्रति गमकत्वप्रसङ्गात् ॥ ३२ महानसादो ॥ ३३ प्रत्यक्ष ॥ ३४ यो यो धूमवान्स सोऽग्निमानिति ॥ ३५ अविनाभाव ॥ ३६ अन्तर्व्याप्तिबलेनेति कोर्थ पक्षे एव माध्यसाधनयोर्व्याप्तिरन्तर्व्याप्ति ॥ ३७ अर्थापत्तिरूपात् ॥ ३८ यो य स्फोट स सर्वोपि शक्तियुक्ताग्निकार्य ॥ ३९ स्फोटस्य ॥ ४० पाषाणकाष्ठादि ॥ ४१ अन्वय॥ ४२ वज्र लोहलेख्य पार्थिवत्वात्पाषाणवद्यल्लोहलेख्य न तत्पार्थिवं न, यथाकाशम् ॥ ४३ पक्षे॥ ४४ एतद्द्वयमेवानुमानाङ्ग नोदाहरणमित्यादिविचारावसरे ॥ ४५ अन्तर्व्याप्तिबलेनैव गमकत्वे च ॥ ४६ प्रतिपादयिष्यते ॥ ४७ यथार्थापत्त्युत्थापकस्यान्तर्व्याप्तिबलेन गमकत्व तथा लिङ्गस्यापि ॥ ४८ दाहस्य ॥ ४९ दृष्टान्ताभावे हेतोर्गमकत्वे च॥ ५० दृष्टान्ते ॥ ५१ अर्थापत्ते ॥ ५२ अर्थापत्त्यनुमानयो ॥ ५३ एतावता भेदश्चेत् ॥ ५४ हेतोर्व्याप्यवृत्तित्व पक्षधर्मत्वम् ॥ ५५ उपरि वृष्टो देवो नदीपूरदर्शनान्यथानुपपत्तेरित्येतस्य अपक्षधर्मत्व भिन्नदेशत्वात्। यत्र देशे वृष्टिस्तत्र नदीपूरो न । यत्र नदीपूरस्तत्र वृष्टिर्न। अत्र पक्ष उपरिदेश ॥ ५६ पुन ॥ ५७ व्याप्य ॥

गमयत्येव वृत्तां वृष्टिं नियामिकाम् । १ । पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा । सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते । २ । एवं यत्पक्षधर्मत्वं ज्येष्ठं हेत्वङ्गमिष्यते । तत्पूर्वोक्तान्यधर्मस्य दर्शनाद्व्यभिचार्यते, इत्यभिधानात् । नियमवतोऽर्थान्तरप्रतिपत्तेरविशेषात्तयोरभेदे स्वसाध्याविनाभाविनोऽर्थादर्थान्तरप्रतिपत्तेरत्राप्यविशेषात्कथमनुमानादर्थापत्तेर्भेदः स्यात्? अथ विपक्षेऽनुपलम्भात्तस्यान्यथानुपपद्यमानत्वावगमो न—पार्थिवत्वादेरप्येवं स्वसाध्याविनाभावित्वावगमप्रसङ्गात्—विपक्षेऽनुपलम्भस्याविशेषात्, सर्वात्मसम्बन्धिनोऽनुपलम्भस्यासिद्धानैकान्तिकत्वाच्च । नन्वेवं सकलानुमानोच्छेदः । अस्तु नाम तस्यायं, यो भूयोदर्शनाद्विपक्षेऽनुपलम्भाद्व्याप्तिं प्रसाधयति, नास्माकम्—प्रमाणान्तरात्तत्प्रसिद्ध्यभ्युपगमाद् । भवतोपि ततस्तदभ्युपगमे प्रमाणसंख्याव्याघातः । ननु वह्निस्वरूपस्याध्यक्षत एव प्रसिद्धेस्तदतिरिक्तातीन्द्रियशक्तिसद्भावे प्रमाणाभावात्कथं तत्रार्थापत्तेः प्रामाण्यम्? निजा हि शक्तिः पृथिव्यादीनां पृथिवीत्वादिकमेव—तदभिसम्बन्धादेव तेषां कार्यकारित्वात् । अन्त्या तु चरमसहकारिरूपा—तत्सद्भावे कार्यकरणादभावे चाकरणात् । तथा हि । सन्तोपि तन्तवो न कार्यमारभन्ते अन्त्यतन्तुसंयोगं विनेति सैव शक्तिस्तेषाम् । ननु कथमर्थान्तरमर्थान्तरस्य शक्तिः? अनर्थान्तरत्वेपि समानमेतत्, स एव तस्यैव न शक्तिरिति । अथ यदि पूर्वेषां सहकार्येव शक्तिस्तर्हि तस्याप्यशक्तस्याकारणत्वादन्या शक्तिर्वाच्येत्यनवस्था । तदयुक्तम् । चरमस्य हि सहकारिणः पूर्वसहकारिण एव शक्तिः—इतरेतराभिसम्बन्धेन कार्यकरणात् । स एव समग्राणां भावः सामग्रीति भावप्रत्ययेनोच्यते—तेन सता समग्रव्यपदेशात् । किञ्चासौ शक्तिर्नित्याऽनित्या वा स्यात्? नित्या चेत्सर्वदा कार्योत्पत्तिप्रसङ्गः । तथा च सहकारिकारणापेक्षा व्यर्थार्थानाम्—तल्लाभात्प्रागेव कार्यस्योत्पन्नत्वात् । अथानित्यासौ । कुतो जायते? शक्तिमतश्चेत्किं शक्तादशक्ताद्वा? शक्ताच्चेच्छक्त्यन्तरपरिकल्पना । अतोऽनवस्था स्यात् । अश-

---

१ व्यापिकाम् ॥ २ पुत्रो ब्राह्मण —पित्रोर्ब्राह्मण्यान्यथानुपपत्ते ॥ ३ अनुमा अर्थापत्ति । अप्रत्यक्षा नो बुद्धिरित्याद्यभिधानात् ॥ ४ उक्तप्रकारेण ॥ ५ अन्यस्य पक्षाद्व्यतिरिक्तस्य धर्मो नदीपूर पितृब्राह्मण्य च । पूर्वोक्तो नदीपूरादि स चासावन्यधर्मश्च तस्य ॥ ६ यो यो हेतु स स पक्षधर्मत्वसहित इत्यस्य व्यभिचार । पक्षधर्मरहितोपि हेतुर्विद्यते यत ॥ ७ स्फोटात्पूराच्च ॥ ८ पक्षधर्मसहितासहितार्थापत्त्यो ॥ ९ लिङ्गात्पूराच्च ॥ १० अग्निदृष्टो ११ अनुमानेऽर्थापत्तौ च ॥ १२ आकाशे लोहलेखित्वस्याभावात् ॥ १३ दाहस्य ॥ १४ इति चेन्न ॥ १५ साधनस्य ॥ १६ अलोहलेख्ये आकाशलक्षणे विपक्षे पार्थिवत्वस्यानुपलम्भप्रकारेण ॥ १७ वज्रस्य लोहलेखित्व ॥ १८ गगने ॥ १९ विपक्षेऽनुपलम्भ सर्वसम्बन्धीत्यादिप्रकारेण ॥ २० पर ॥ २१ दृष्टान्ते ॥ २२ जैनानाम् ॥ २३ ऊहात् ॥ २४ मीमांसकस्य ॥ २५ नैयायिक ॥ २६ वह्नित्वस्य ॥ २७ स्वरूपातिरिक्त ॥ २८ पृथिवीत्वादिस्वरूप ॥ २९ शक्ति ॥ ३० अन्त्य ॥ ३१ जैनादि ३२ बीजस्य ॥ ३३ नैयायिक ॥ ३४ वह्नि ॥ ३५ वह्ने ॥ ३६ अपरसहकारिशक्त्यभावादशक्त ॥ ३७ अतीन्द्रियया शक्त्या शक्तिमत उपकार क्रियते इत्यस्मिन्पक्षे शक्त्या क्रियमाण उपकार शक्तिमतो भिन्नश्चेत्तदानवस्था । कथम्? उपकारोपि शक्तिमतोभिन्नो यदि तदा शक्तिमतोऽयमुपकार इति सम्बन्धो न स्याद्भिन्नत्वात् । उपकारेणापि स्वसम्बन्धसिद्ध्यर्थमुपकारान्तर क्रियते चेत्तदा शक्तेनाऽशक्तेन वोपकारेणोपकारान्तर क्रियते? न तावदशक्तेन—अशक्तस्योपकारकरणे अक्षमत्वात् । शक्तेन चेदुपकारेण स्वसम्बन्धसिद्ध्यर्थमुपकारान्तर विधीयते तर्हि यया शक्त्या स्वय शक्त उपकार सापि भिनाऽभिना वा? भिना चेत्तदोपकारस्येय शक्तिरिति न—तस्माद्भिन्नत्वात् । शक्त्यापि स्वसम्बन्धसिद्ध्यर्थमुपकारान्तर क्रियते इत्यादिप्रकारेणानवस्था ॥ ३८ कारणानाम् ॥ ३९ विद्यमानेन ॥ ४० तन्तूनाम् ॥ ४१ इत्यनवस्था परिहृता ॥ ४२ यया शक्त्या शक्तिमान् शक्त नापि नित्याऽनित्या वा? न तावन्नित्या—सर्वदा कार्योत्पत्तिप्रसङ्गात् । अथानित्या । सापि कुतो जायेत? शक्तिमतश्चेच्छक्तादशक्ताद्वेत्यादिप्रकारेण ॥

कात्तदुत्पत्तौ कार्यमेव तथाविधात्ततः किन्नोत्पद्येत? अलमतीन्द्रियशक्तिकल्पनया। तथा शक्तिः शक्तिमतो भिन्नाऽभिन्ना वा स्यात्? अभिन्ना चेच्छक्तिमात्रं शक्तिमन्मात्रं वा स्यात्? भिन्ना चेत्तस्येयमिति व्यपदेशाभावः—अनुपकारात्। उपकारे वा तया तस्योपकारस्तेन वाऽस्याः? प्रथमपक्षे शक्तिमतः शक्त्योपकारोऽर्थान्तरभूतोऽनर्थान्तरभूतो वा विधीयते? अर्थान्तरभूतश्चेदनवस्था—तस्यापि व्यपदेशार्थमुपकारान्तरपरिकल्पनया शक्त्यन्तरपरिकल्पनात्। अनर्थान्तरभूतोपकारकरणे तु स एव कृतः स्यात्। तथा च न शक्तिमानसौ—तत्कार्यत्वात्प्रसिद्धतत्कार्यवत्। शक्तिमतापि शक्त्यन्तरान्वितेन तद्रहितेन वा शक्तेरुपकारः क्रियते? आद्यपक्षे शक्त्यन्तराणां ततो भेदोऽभेदो वा? उभयत्रानन्तरोक्तोभयदोषानुषङ्गोऽनवस्था च। तद्रहितेनानेन शक्तेरुपकारे तु प्राच्यशक्तिकल्पनाप्यपार्थिका—तद्व्यतिरेकेणैव कार्यस्याप्युत्पत्तेरुपकारवत्। शक्तिशक्तिमतोर्भेदाभेदपरिकल्पनायां विरोधादिदोषानुषङ्गः। तथासौ किमेकानेका वा? तत्रैकत्वे शक्तेर्युगपदनेककार्योत्पत्तिर्न स्यात्। अनेकत्वेप्यनेकशक्तिमात्मन्यर्थोऽनेकशक्तिभिर्विभृयादित्यनवस्थाप्रसङ्ग इति।

अत्र प्रतिविधीयते। किं ग्राहकप्रमाणाभावाच्छक्तेरभावोऽतीन्द्रियत्वाद्वा? तत्राद्यः पक्षोऽयुक्तः—कार्योत्पत्त्यन्यथानुपपत्तिजनितानुमानस्यैव तद्ग्राहकत्वात्। ननु सामग्र्यधीनोत्पत्तिकत्वात्कार्याणां कथं तदन्यथानुपपत्तिर्यतोऽनुमानात्तत्सिद्धिः स्यादित्यप्यसमीचीनम्—यतो नास्माभिः सामग्र्याः कार्यकारित्वं प्रतिषिध्यते। किन्तु प्रतिनियतायास्तस्याः प्रतिनियतकार्यकारित्वमतीन्द्रियशक्तिसद्भावमन्तरेणासम्भाव्यमित्यसावप्यभ्युपगन्तव्या। कथमन्यथा प्रतिबन्धकमणिमन्त्रादिसन्निधानेप्यग्निः स्फोटादि कार्यं न कुर्यात्? सामग्र्यास्तत्रापि सद्भावात्। तेन ह्यग्नेः स्वरूपं प्रतिहन्यते सहकारिणो वा? न तावदाद्यः पक्षः क्षेमङ्करः—अग्निस्वरूपस्य तदवस्थतयाध्यक्षेणैवाध्यवसायात्। नापि द्वितीयः—सहकारिस्वरूपस्याप्यङ्गुल्यग्निसंयोगलक्षणस्याविकलतयोपलक्षणात्। अतः शक्तेरेवानेन प्रतिबन्धोभ्युपगन्तव्यः। ननु चानेन नाग्नेः सहकारिणो वा स्वरूपं प्रतिहन्यते। किन्तु स्वभाव एव निवर्त्यते। अतः स्फोटादिकार्यस्यानुत्पत्तिः—प्रतिबन्धकमणिमन्त्राद्यभावस्यापि तदुत्पत्तौ सहकारित्वात्तदभावे तदनुत्पत्तेः। इत्यप्यसमीक्षिताभिधानम्—उत्तम्भकमणिसन्निधाने कार्यस्यानुत्पत्तिप्रसङ्गात्। न खलु तदा प्रतिबन्धकमण्याद्यभावोस्ति—

१ स्फोटादि ॥ २ शक्ति ॥ ३ शक्तिमत सकाशात् ॥ ४ पूर्ववत् ॥ ५ न केवल शक्ते ॥ ६ शक्तिमतोऽयमुपकार इति सम्बन्धव्यपदेशार्थम् ॥ ७ उपकारस्य ॥ ८ शक्तिमान् ॥ ९ वह्नि ॥ १० उपकारवत् ॥ ११ द्वितीयपक्षे ॥ १२ निष्फला ॥ १३ स्फोटादे ॥ १४ शक्तिरहितेन शक्तिमताऽग्निना उपकारस्योत्पत्तिर्यथा ॥ १५ अन्धकारनाश, अर्थप्रकाश, वर्त्तिकादाह, तैलशोषादि ॥ १६ अर्थोऽनेकशक्तीरेकशक्त्या विभर्त्ति चेत्तदानेकशक्तीनामेकत्वप्रसङ्ग —एकशक्त्या ग्राह्यमानत्वात्तदन्यतमशक्तिवत् ॥ १७ अतीन्द्रियाया ॥ १८ वह्निलक्षणोर्थो दहनशक्तियुक्तस्तत स्फोटादिकार्योत्पत्त्यन्यथानुपपत्तेरिति ॥ १९ समवाय्यसमवायिनिमित्तकारणाना परस्परसम्बन्धलक्षणा सामग्री ॥ २० जैनै ॥ २१ अतीन्द्रियशक्त्यभावेपि सामग्र्या कार्यकारित्वे ॥ २२ सामग्र्या प्रतिबन्धकसन्निधाने सद्भावो नास्तीत्युक्ते आह ॥ २३ प्रतिबन्धकेन ॥ २४ प्रतिबन्धकमणिमन्त्रादिना ॥ २५ परेण भवता ॥ २६ प्रतिबन्धकेन ॥ २७ स्वस्य प्रतिबन्धकस्य भाव ॥ २८ अभावरूपकारणाभावे ॥ २९ कार्योत्थापक ॥ ३० प्रतिबन्धकमण्याद्यभावस्य सहकारिणोऽभावात् ॥ ३१ उत्तम्भकमणिसन्निधानकाले ॥

प्रत्यक्षविरोधात् । ननु यथाग्निः प्रतिबन्धकमण्याद्यभावसहकारी स्फोटादिकार्यं करोत्येवं प्रतिबन्धकमण्यादिरुत्तम्भकमण्याद्यभावसहकारी तत्प्रतिबन्धं करोति । अतो न तत्सन्निधाने कार्यस्यानुत्पत्तिरिति । अस्तु नामैतत्, तथापि प्रतिबन्धकोत्तम्भकमणिमन्त्रयोरभावेऽग्निः स्वकार्यं करोति न वा? न तावदुत्तरः पक्षः—प्रत्यक्षविरोधात् । प्रथमपक्षे तु कस्याभावः ? अग्नेः सहकारी (रिणः) तयोरन्यतरस्योभयस्य वा? न तावदुभयस्य—अन्यतराभावे कार्यानुत्पत्तिप्रसङ्गात् । अन्यतरस्य चेत्किं प्रतिबन्धकस्योत्तम्भकस्य वा? प्रतिबन्धकस्य चेत्स एवोत्तम्भकमण्यादिसन्निधाने कार्यानुत्पादप्रसङ्गः—तदा तस्याभावाप्रसिद्धेः। उत्तम्भकस्य चेदत्राप्ययमेव दोषः । न चाभावस्य कार्यकारित्वं घटते—भावरूपतानुषङ्गात्—अर्थक्रियाकारित्वलक्षणत्वात्परमार्थसतो लक्षणान्तराभावात् । कश्चास्याभावः ? कार्योत्पत्तौ सहकारी स्यात्किमितरेतराभावः प्रागभावो वा स्यात्प्रध्वंसो वा अभावमात्रं वा ? न तावदितरेतराभावः—प्रतिबन्धकमणिमन्त्रादिसन्निधानेप्यस्य सम्भवात् । नापि प्रागभावः—तत्प्रध्वंसोत्तरकालं कार्योत्पत्त्यभावप्रसङ्गात् । नापि प्रध्वंसः—प्रतिबन्धकमण्यादिप्रागभावावस्थायां कार्यस्यानुत्पत्तिप्रसङ्गात् । न च भावादर्थान्तरस्याभावस्य सद्भावोस्ति—तस्यानन्तरमेव निराकरिष्यमाणत्वात् । अतो निराकृतमेतत् 'यस्यान्वयव्यतिरेकौ कार्येणानुक्रियेते सोऽभावस्तत्र सहकारी—सहकारिणामनियमात्, इति । कथं चैवंवादिनो[17] मन्त्रादिना कञ्चित्प्रति प्रतिबद्धोप्यग्निः स एवान्यस्य स्फोटादिकार्यं कुर्यात् ?—प्रतिबन्धकाभावस्य सहकारिणः कस्यचिदप्यभावात् । न चास्मत्पक्षेप्येतच्चोद्यं समानम्—वस्तुनोऽनेकशक्त्यात्मकत्वात्कस्याश्चित्केनचित्कञ्चित् (प्रति) प्रतिबन्धेप्यन्यस्याः प्रतिबन्धाभावात् । नाप्यभावमात्रं सहकारि—वस्तुनोर्थान्तरस्याभावस्याभावे तद्गतसामान्यस्याप्यसम्भवात् । न चाभावस्य सामान्यं सम्भवति—द्रव्यगुणकर्मान्यतमरूपतानुषङ्गात् । ततः प्रतिबन्धकमण्यादिप्रतिहतशक्तिर्वह्निः स्फोटादिकार्यस्यानुत्पादकस्तद्विपरीतस्तूत्पादक इत्यभ्युपगन्तव्यम् । ततो निराकृतमेतत् 'कार्यं स्वोत्पत्तौ प्रतिबन्धकाभावोपकृतोभयवाद्यविवादास्पदकारकव्यतिरिक्तानपेक्षम्—तन्मात्रादुत्पत्तावनुपपद्यमानबाधकत्वात् । यत्तु[21] यतो[22] व्यतिरिक्तमपेक्षते[23] न तत्तन्मात्रजत्वे[24]ऽनुपपद्यमानबाधकम् । यथा तन्तुमात्रापेक्षया पटः । न च तथेदम् । तस्माद्यथोक्तसाध्यम्, इति—हेतोरसिद्धेः—तन्मात्रादुत्पत्तौ कार्यस्य प्रागुक्तन्यायेनानेकबाधकोपपत्तेः। स्वरूपसहकारिव्यतिरेकेण शक्तेः प्रतीत्यभावादसत्त्वे वा स्रग्वनितादिदृष्टकारणकलापव्यतिरेकेणादृष्टस्या[25]प्यप्रतीतितोऽसत्त्वं स्यात् । तथा[26] चासाधारणनिमित्तकारणाय दत्तो[28] जलाञ्जलिः। कथं चैवंवादिनो[29] जगतो महेश्वरनिमित्तत्वं सिध्येत् ?—विचित्रक्षित्यादि-

१ प्रतिबन्धकाभावे उत्तम्भकसद्भावे चोभयसद्भावे च ॥ २ उत्तम्भकस्याभाव सहकारी चेदित्यर्थं ॥ ३ उत्तम्भकसद्भावे कार्यानुत्पादप्रसङ्गलक्षण ॥ ४ अभाव कार्यकारी चेत्तर्हीति शेष ॥ ५ तदोत्तम्भकस्याभावविशेषाभावादुत्तम्भकसद्भावे कार्यं न स्याद् ॥ ६ सत्तासम्बन्ध प्रमाणसम्बन्धो वेत्यादि ॥ ७ प्रतिबन्धकस्य ॥ ८ प्रतिबन्धक उत्तम्भको नेति ॥ ९ तुच्छाभावस्य ॥ १० सहकारिणो भावा अभावा एव वा भवन्तीति नियमो नास्ति ॥ ११ कार्योत्पत्तिं प्रत्यभाव सहकारीत्येव वादिन ॥ १२ प्रागभावादिरूपस्य ॥ १३ जैन ॥ १४ मन्त्रादिना ॥ १५ नर प्रति ॥ १६ अभाव सहकारी विचार्यमाणो न घटते यत ॥ १७ स्फोटादिकार्यं वर्मि ॥ १८ वह्नि ॥ १९ अतीन्द्रियशक्ते. ॥ २० कारकमात्रात् ॥ २१ पटादिकार्यम् ॥ २२ तन्तुभ्य ॥ २३ वेमादिकम् ॥ २४ तन्तुमात्र ॥ २५ पुण्यस्य ॥ २६ पुण्यस्याऽसत्त्वे सति ॥ २७ विशेष ॥ २८ परेण भवता ॥ २९ स्वरूपसहकारिव्यतिरेकेण शक्ते प्रतीत्यभाव इत्येववादिन ॥

दृष्टकारणकलापादेवाङ्कुरादि विचित्रकार्योत्पत्तिप्रतीतेः । अनुमानात्तस्य तन्निमित्तत्वसाधने शक्तेरप्यत एव सिद्धिरस्तु । तथा हि—यत्कार्यं, तदसाधरणधर्माध्यासितादेव कारणादाविर्भवति, सहकारीतरकारणमात्राद्वा न भवति । यथा सुखाङ्कुरादि । कार्यं चेदं निखिलमाविर्भाववद्वस्त्विति । एतेनैवातीन्द्रियत्त्वात्तदभावोऽपास्तः । यदप्युक्तं पृथिव्यादीनां पृथिवीत्वादिकमेव निजा शक्तिरित्यादि तदप्यपेशलम्—मृत्पिण्डादिभ्योपि पटोत्पत्तिप्रसङ्गात्—सहकारीतरशक्तेस्तत्राप्यविशेषात् । अथ न पृथिवीत्वादिमात्रोपलक्षितानामर्थानां पटाद्युत्पत्तौ व्यापारो येनातिप्रसङ्गः स्यात्—तन्तुत्वाद्यसाधारणनिजशक्त्युपलक्षितानामेव तत्र तेषां व्यापारादित्यप्यसाम्प्रतम्—तन्तुत्वाद्युपलक्षितानां दग्धकुथिताद्यर्थानामपि तज्जनकत्वप्रसङ्गात् । अवस्थाविशेषसमन्वितानां तन्तूनां कार्यारम्भकत्वादयमदोष इत्यपि मनोरथमात्रम्—शक्तिविशेषमन्तरेणावस्थाविशेषस्यैवासम्भवात् । अन्यथा दग्धादिस्वभावानामपि तेषां स स्यात् । यच्चोच्यते शक्तिर्नित्याऽनित्या वेत्यादि, तत्र किमयं द्रव्यशक्तौ पर्यायशक्तौ वा प्रश्नः स्यात् ?—भावानां द्रव्यपर्यायशक्त्यात्मकत्वात् । तत्र द्रव्यशक्तिर्नित्यैव—अनादिनिधनस्वभावत्वाद्द्रव्यस्य । पर्यायशक्तिस्त्वनित्यैव—सादिपर्यवसानत्वात्पर्यायाणाम् । न च शक्तेर्नित्यत्वे सहकारिकारणानपेक्षयैवार्थस्य कार्यकारित्वानुषङ्गः—द्रव्यशक्तेः केवलायाः कार्यकारित्वानभ्युपगमात् । पर्यायशक्तिसमन्विता हि द्रव्यशक्तिः कार्यकारिणी—विशिष्टपर्यायपरिणतस्यैव द्रव्यस्य कार्यकारित्वप्रतीतेः । तत्परिणतिश्चास्य सहकारिकारणापेक्षया । इति पर्यायशक्तेस्तदैव भावान्न सर्वदा कार्योत्पत्तिप्रसङ्गः सहकारिकारणापेक्षावैयर्थ्यं वा । कथमन्यथा अदृष्टेश्वरादेः केवलस्यैव सुखादिकार्योत्पादनसामर्थ्ये सर्वदा कार्योत्पादकत्वं सहकारिकारणापेक्षावैयर्थ्यं वा न स्यात् ? यदप्यभिहितं शक्तादशक्ताद्वा तस्याः प्रादुर्भाव इत्यादि, तत्र शक्तादेवास्याः प्रादुर्भावः । न चानवस्था दोषाय—बीजाङ्कुरादिवदनादित्वात्तत्प्रवाहस्य । वर्त्तमाना हि शक्तिः प्राक्तनशक्तियुक्तेनार्थेनाविर्भाव्यते सापि प्राक्तनशक्तियुक्तेनेति पूर्वपूर्वावस्थायुक्तार्थानामुत्तरोत्तरावस्थाप्रादुर्भाववत् । कथं चैवंवादिनोऽदृष्टस्याप्याविर्भावो घटते ? तद्धयात्मना अदृष्टान्तरयुक्तेनाविर्भाव्यते तद्रहितेन वा ? प्रथमपक्षेऽनवस्था । द्वितीयपक्षे तु मुक्तात्मवत्तस्य तज्जनकत्वासम्भवः । किञ्च कथं वा महेश्वरस्याखिलकार्यकारित्वम् ?—सहकारिरहितस्य तत्कारित्वे सकलकार्याणामेकदैवोत्पत्तिप्रसङ्गात् । तत्सहितस्य तत्कारित्वे तु तेपि सहकारिणोऽन्यसहकारिसहितेन कर्त्तव्या इत्यनवस्था । पूर्वपूर्वादृष्टसहकारिसमन्वितयोरात्मेश्वरयोरुत्तरोत्तरादृष्टाखिलकार्यकारित्वे निखिलभावाना

१ शक्ति ॥ २ पुण्यमहेश्वरादे ॥ ३ स्वपक्षसिद्धौ साध्यम् ॥ ४ उपादान ॥ ५ परपक्षप्रतिक्षेपे साध्यमिदम् ॥ ६ सुखेऽदृष्टमसाधारणकारणम् ॥ ७ अङ्कुरेऽसाधारणकारणमीश्वर ॥ ८ द्वितीयविकल्पोयम् ॥ ९ शक्त्यभाव ॥ १० सामान्यम् ॥ ११ चक्रचीवरादि ॥ १२ पृथिवीत्वादि ॥ १३ अप्त्वादि ॥ १४ पटादौ ॥ १५ तन्त्वाद्यर्थानाम् ॥ १६ तन्तुत्वाद्यविशेषात् ॥ १७ शक्तिविशेष विनावस्थाविशेषो भविष्यति चेत् ॥ १८ शक्तिरहित ॥ १९ तथा च सति पटादिजनकत्वप्रसङ्ग स्यात् ॥ २० द्रव्यशक्ति पर्यायशक्तिरसिद्धेत्युक्ते सत्याह ॥ २१ द्रवति द्रोष्यति अदुद्रुवदिति द्रव्यम् ॥ २२ परापरविवर्तव्यापि द्रव्यमूर्द्धता मृदिव स्थासादिषु ॥ २३ पर्यायशक्तिरहिताया ॥ २४ जैनै ॥ २५ कथमिति चेदाह ॥ २६ स्रग्वनितादि ॥ २७ सहकारिकारणानन्तरम ॥ २८ परेणाङ्गीकृते सति ॥ २९ शक्ते ॥ ३० शक्तिमत ॥ ३१ शक्ति ॥ ३२ अर्थेन ॥ ३३ शक्तादशक्ताद्वेत्येववादिन ॥ ३४ अदृष्टान्तरपरिकल्पनया आत्मन इति पक्षे ॥ ३५ ससारात्मन ॥ ३६ अदृष्टरहितत्वात् ॥ ३७ अदृष्टविशेष ॥ ३८ महेश्वरेण ॥

पूर्वपूर्वशक्तिसमन्वितानामुत्तरोत्तरशक्त्युत्पादकत्वमस्तु । अलं मिथ्याभिनिवेशेन । यच्चान्यदुक्तं शक्तिः शक्तिमतो भिन्नाऽभिन्ना वेत्यादि, तदप्ययुक्तम्—तस्यास्तद्वतः कथञ्चिद्भेदाभ्युपगमात् । शक्तिमतो हि शक्तिर्भिन्ना—तत्प्रत्यक्षत्वेप्यस्याः प्रत्यक्षत्वाभावात् । कार्यान्यथानुपपत्त्या तु प्रतीयमानासौ । तद्वतो विवेकेन प्रत्येतुमशक्यत्वादभिन्नेति । न चात्र विरोधाद्यवतारः—तदात्मकवस्तुनो जात्यन्तरत्वान्मेचकज्ञानवत्सामान्यविशेषवच्च । यत्पुनरुक्तमेकानेका वेत्यादि, तत्रार्थानामनेकैव शक्तिः । तथा हि । अनेकशक्तियुक्तानि कारणानि—विचित्रकार्यत्वान्नानार्थवत् । विचित्रकार्याणि वा कारणशक्तिभेदनिमित्तकानि—तत्त्वाद्विभिन्नार्थकार्यवत् । न हि कारणशक्तिभेदमन्तरेण कार्यनानात्वं युक्तं रूपादिज्ञानवत् । यथैव हि कर्कटिकादौ रूपादिज्ञानानि रूपादिस्वभावभेदनिबन्धनानि तथा क्षणस्थितेरेकस्मादपि प्रदीपादेर्भावाद्वर्त्तिकादाहतैलशोषादिविचित्रकार्याणि तच्छक्तिभेदनिमित्तकानि व्यवतिष्ठन्ते । अन्यथा रूपादेर्नानात्वं न स्यात् । चक्षुरादिसामग्रीभेदादेव हि तज्ज्ञानप्रतिभासभेदः स्यात् । कर्कटिकादिद्रव्यं तु रूपादिस्वभावरहितमेकमनंशमेव स्यात् । चक्षुरादिबुद्धौ प्रतिभासमानत्वाद्रूपादेः कथं कर्कटिकादिद्रव्यस्य तद्रहितत्वमिति चेत् तर्हि तैलशोषादिविचित्रकार्यानुमानबुद्धौ शक्तिनानात्वस्याप्यर्थानां प्रतीतेः कथं तद्रहितत्वं स्यात्? प्रत्यक्षबुद्धौ प्रतिभासमाना रूपादय एव परमार्थसन्तो, न त्वनुमानबुद्धौ प्रतिभासमानाः शक्तय इत्येतदप्यसुन्दरम्—अदृष्टेश्वरादेरपरमार्थसत्त्वप्रसङ्गात् । प्रदीपादिद्रव्यस्यैकस्य वर्त्तिकादिसहकारिसामग्रीभेदात्तद्दाहादिकार्यनानात्वं, न पुनस्तच्छक्तिस्वभावभेदादित्यप्यविचारितरमणीयम्—रूपादेरप्यभावप्रसङ्गात् । शक्यं हि वक्तुं कर्कटिकादिद्रव्ये चक्षुरादिसामग्रीभेदाद्रूपादिप्रत्ययप्रतिभासभेदो, न पुना रूपाद्यनेकस्वभावभेदादिति । तन्न प्रमाणप्रतिपन्नत्वाद्रूपादिवच्छक्तीनामपलापो युक्त इति । यत्पुनरर्थापत्त्यर्थापत्तेरुदाहरणं वाचकसामर्थ्यात्तन्नित्यत्वज्ञानमुक्तं तदप्ययुक्तम्—वाचकसामर्थ्यस्य तत्प्रत्यनन्यथाभवनासिद्धेः । निराकरिष्यते चाग्रे नित्यत्वं शब्दस्येत्यलमतिप्रसङ्गेन । याप्यभावार्थापत्तिर्जीवंश्चैत्रोऽन्यत्रास्ति गृहेऽभावादिति, तत्रापि किं गृहे यत्तस्य जीवनं तदेव गृहे चैत्राभावस्य विशेषणमुतान्यत्र? प्रथमपक्षे तत्राभावस्य विशेष्यस्यासिद्धिः । यदा हि चैत्रो गृहे जीवति कथं तदा तत्र तदभावो येनासौ तेन विशेष्येत?

---

१ आवश्यायापादनेन ॥ २ जैनै ॥ ३ अग्निं विना धूमवत् ॥ ४ पदार्थात् ॥ ५ भेदेन ॥ ६ शक्ते कथञ्चिद्भेदाभेदपक्षे ॥ ७ भेदाभेद ॥ ८ भेदादभेदाद्वा जात्यन्तरत्वात् ॥ ९ दहनो दाहशक्तियुक्तो दाहान्यथानुपपत्ते ॥ १० खव्यक्तिष्वनुस्यूतत्वात्सामान्यरूपता गोत्वस्य । अश्वत्वादिभ्यो व्यावर्त्तमानत्वाद्विशेषरूपता यथा तथा सर्वत्र प्रतिपत्तव्यम् । सामान्यमेव विशेषस्तस्यैव तद्वत् ॥ ११ विचित्राणि कार्याणि येषां तानि विचित्रकार्याणि तेषां भावस्तत्त्व तस्माद्धेतो ॥ १२ विचित्रकार्यत्वात् ॥ १३ सन्दिग्धानैकान्तिकत्वे सत्याह ॥ १४ तैलशोषादिशक्तिभेद विनापि—तैलशोषादिकार्याणि स्युरिति चेत् ॥ १५ तैलशोषादि ॥ १६ तैलशोषादिशक्तिं विनापि शक्तिभेदनिमित्तकानि यदि तैलशोषादिकार्याणि स्यु ॥ १७ किन्तु ॥ १८ रूपादिस्वभावसमर्थनार्थं पर आह ॥ १९ प्रदीपो नानाशक्तियुक्त—तैलशोषादिनानाकार्यान्यथानुपपत्तेरिति ॥ २० दूषणभीत्यैव वच ॥ २१ ज्ञाने ॥ २२ निरंशत्वप्रतिपादनाय ॥ २३ शब्द ॥ २४ शब्दनित्यत्व प्रति ॥ २५ अन्यथा नित्यत्व विना न भवन तस्य ॥ २६ अविनाभावस्यासिद्धे ॥ २७ जीवत ॥ २८ बहिर्जीवनम् ॥ २९ विशेष्यस्यासिद्धिमुद्भावयन्ति ॥ ३० चैत्राभाव ॥ ३१ गृहजीवनेन ॥

यदा च तत्र तदभावो, न तदा तत्र तज्जीवनमिति । द्वितीयपक्षे[1] तु विशेषणस्यासिद्धिः[2] । न[3] खलु चैत्रस्यान्यत्र[4] यज्जीवनं तदर्थापत्त्युदयकाले तथाविधप्रदेश[5]विशेषण-
त्वेन कुतश्चित्प्रतीयते[6]–अर्थापत्तेर्वैयर्थ्यप्रसङ्गात् । येनैव[7] हि प्रमाणेन तज्जीवनं प्रतीयते तेनैव तत्सद्भावोपि[8] । न[11] ह्यप्रतिपन्ने देवदत्ते तद्धर्मो जीवनं प्रत्येतुं शक्यम्
–अतिप्रसङ्गात्[12] । न चाप्रतीतस्य[13] विशेषणत्वमतेँ एव । अर्थापत्त्यैव तत्सिद्धावितरेतराश्रयः । सिद्धे हि तया तस्यान्यत्र जीवने तद्विशेषिता[16]तत्प्रदेशाभावादर्थापत्त्यु-
दयस्ततश्च तत्सिद्धिरिति । अथ न निश्चितं सज्जीवनं तद्गृहाभावविशेषणं येनायं दोषः, किन्तु यदि[19] गृहेऽसन् जीवति तदान्यत्रास्तीत्यभिधीयते तर्हि संशयरूपत्वा-
त्तस्याः कथं प्रामाण्यम् ? या[22] तु प्रमाणं सानुमानमेव । पञ्चावयवत्वमप्यत्र[23] सम्भवत्येव । तथा हि । जीवतो देवदत्तस्य गृहेऽभावो वहिस्तत्सद्भावपूर्वकः–जीवतो
गृहेऽभावत्त्वात्प्राङ्गणे स्थितस्य गृहे जीवदभाववत् । यद्वा देवदत्तो वहिरस्ति—गृहासंसृष्टजीवनाधारत्वात्स्वात्मवत् । कथं पुनर्देवदत्तस्यानुपलभ्यमानस्य जीवनं
सिद्धं येन तद्धेतुविशेषणमित्यसत्–प्रसङ्गसाधनोपन्यासात् । यच्च निषेध्याधारवस्तुग्रहणादिसामग्रीत इत्याद्युक्तं तत्र निषेध्याधारो वस्त्वन्तरं प्रतियोगिसंसृष्टं प्रतीय-
तेऽसंसृष्टं वा ? तत्राद्यपक्षोऽयुक्तः–प्रतियोगिसंसृष्टवस्त्वन्तरस्याध्यक्षेण प्रतीतौ तत्र तदभावग्राहकत्वेनाभावप्रमाणप्रवृत्तिविरोधात् । प्रवृत्तौ वा न प्रामाण्यम्–
प्रतियोगिनः सत्त्वेपि तत्प्रवृत्तेः । द्वितीयपक्षे त्वभावप्रमाणवैयर्थ्यम्–प्रत्यक्षेणैव प्रतियोगिनोऽभावप्रतिपत्तेः । अथ प्रतियोग्यसंसृष्टतावगमो वस्त्वन्तरस्याभावप्रमाण-
सम्पाद्यस्तर्हि तदप्यभावप्रमाणं प्रतियोग्यसंसृष्टवस्त्वन्तरग्रहणे सति प्रवर्तेत, तदसंसृष्टतावगमश्च पुनरप्यभावप्रमाणसम्पाद्य इत्यनवस्था । प्रथमाभावप्रमाणात्तदसं-
सृष्टतावगमे चान्योन्याश्रयः । प्रतियोगिनोपि स्मरणं वस्त्वन्तरसंसृष्टस्यासंसृष्टस्य वा ? यदि संसृष्टस्य तदाऽभावप्रमाणाप्रवृत्तिः । अथासंसृष्टस्य । ननु प्रत्यक्षेण
वस्त्वन्तरासंसृष्टस्य प्रतियोगिनो ग्रहणे तथाभूतस्यास्य स्मरणं स्यान्नान्यथा । तथाभ्युपगमे च तदेवाभावप्रमाणवैयर्थ्यं, वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यं समाश्रि-

१ चैत्रस्य वहिर्जीवन चैत्राभावविशेषणमित्यस्मिन्पक्षे ॥ २ जीवनस्य ॥ ३ असिद्धिमेव प्रदर्शयन्ति ॥ ४ वहि ॥ ५ अन्यप्रदेश ॥ ६ प्रमाणात् ॥ ७ विद्वद्भि ॥ ८ अन्यथा ॥ ९ अर्थापत्तेर्वैयर्थ्यप्रस-
ङ्गमेव सूचयन्ति ॥ १० अतोर्थापत्त्या चैत्रसद्भावपरिकल्पन व्यर्थम् ॥ ११ जीवनमेव प्रतीयते न तत्सद्भाव इति परेणोक्ते जैन प्राह ॥ १२ मेरुप्रतीत्यभावेपि तद्रूपादिप्रतिपत्तिप्रसङ्गात् ॥ १३ जीवनस्य ॥ १४ दण्डाऽज्ञाने
दण्डिज्ञानप्रसङ्गात् ॥ १५ वहिर्जीवन ॥ १६ नहिर्जीवन ॥ १७ गृह ॥ १८ इतरेतराश्रय ॥ १९ यदि जीवति तदा वहिरस्ति यदि न जीवति तदा नास्तीत्यर्थं ॥ २० जीवनस्य संशयितत्वात् ॥ २१ अन्यत्र जीवनानिश्चयात् ॥
२२ यथार्थापत्तिर्यथाऽप्रमाण तथा सर्वाप्यप्रमाण स्यादित्यारेकायामाह ॥ २३ पञ्चावयवत्वाभावे कथमर्थापत्तेरनुमानत्वमिति परेणोक्ते सत्याह ॥ २४ प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा ॥ २५ मृतेन व्यभिचारपरिहारा-
र्थमेतत् ॥ २६ प्रमातृस्वरूपवत् ॥ २७ अभावरूपहेतो ॥ २८ साध्यसाधनयोर्व्याप्यव्यापकभावसिद्धौ व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको यत्र (अर्थे) प्रदर्श्यते तत्प्रसङ्गसाधनम् ॥ २९ घट ॥ ३० भूतल ॥ ३१ आ-
दिपदेन प्रतिषेध्यस्मरणमुपलब्धिलक्षणप्राप्तस्य घटादेरनुपलम्भश्च ॥ ३२ भूतलम् ॥ ३३ घटेन ॥ ३४ रहितम् ॥ ३५ घटाभाव ॥ ३६ अभावप्रमाणस्य ॥ ३७ अभावावगम ॥ ३८ भूतलस्य ॥ ३९ आद्यम् ॥ ४० उत्प-
द्येत ॥ ४१ प्रथमाभावप्रमाणात्प्रतियोग्यसंसृष्टतावगम तदवगमश्च प्रथमाभावप्रमाणोदये इति ॥ ४२ स्मृतता च प्रतियोगिनमित्येतद्विचारयति ॥ ४३ भूतल ॥ ४४ भूतलसम्बद्धप्रतियोगिसद्भावग्राहकत्वेनैव प्रत्यक्षस्य
प्रवृत्ते ॥ ४५ पूर्वोक्तमेव ॥ ४६ आयातम् ॥

तेत्यादिग्रन्थविरोधश्च । वस्तुमात्रस्याध्यक्षेण ग्रहणाभ्युपगमे प्रतियोगीतरव्यवहाराभावः । यदि चानुभूतेपि भावे प्रतियोगिस्मरणमन्तरेणाभावप्रतिपत्तिर्न स्यात्तर्हि प्रतियोग्यप्यनुभूत एव स्मर्त्तव्यो, नान्यथा—अतिप्रसङ्गात् । तदनुभवश्चान्यासंसृष्टतयाऽभ्युपगन्तव्यः, तस्याप्यन्यासंसृष्टताप्रतिपत्तिस्ततोऽन्यत्र प्रतियोगिस्मरणात् तत्राप्ययमेव न्याय इत्यनवस्था । अथ प्रतियोगिनो भूतलस्य स्मरणाद् घटस्यान्यासंसृष्टता प्रतीयते, तत्स्मरणाच्च भूतलस्य तदेतरेतराश्रयः । तथा हि ।—न यावद्धटासंसृष्टभूभागप्रतियोगिस्मरणाद् घटस्य भूतलासंसृष्टताप्रतिपत्तिर्न तावत्तत्स्मरणाद्भूतलस्य घटासंसृष्टताप्रतिपत्तिः । यावच्च भूतलस्य घटासंसृष्टता न प्रतीयते न तावत्तत्स्मरणेन घटस्येति । ततोऽन्यप्रतियोगिस्मरणमन्तरेणैवाभावांशो भावांशवत्प्रत्यक्षोऽभ्युपगन्तव्यः । भूतलासंसृष्टघटदर्शनाहितसंस्कारस्य च पुनर्घटासंसृष्टभूभागदर्शनानन्तरं तथाविधघटस्मरणे सत्यस्यात्राभाव इति प्रतिपत्तिः प्रत्यभिज्ञानमेव । यदा तु स्वदुरागमाहितसंस्कारः साङ्ख्यस्तथाऽप्रतिपद्यमानस्तत्प्रसिद्धसत्त्वरजस्तमोलक्षणविषयनिदर्शनोपदर्शनेनानुपलब्धिविशेषतः प्रतिबोध्यते तदाप्यनुमानमेवेति क्वाभावप्रमाणस्यावकाशः । ततोऽयुक्तमुक्तं "न चाध्यक्षेणाभावोऽवसीयते तस्याभावविषयत्वविरोधात् । नाप्यनुमानेन हेतोरभावात्" इति । किञ्चाभावप्रमाणेनाभावग्रहणे तस्यैव प्रतिपत्तिः स्यान्न प्रतियोगिनि वृत्तेः । अभावप्रतिपत्तेस्तन्निवृत्तिप्रतिपत्तिश्चेत्सा किं प्रतियोगिस्वरूपसम्बद्धाऽसम्बद्धा वा ? न तावत्सम्बद्धा—भावाभावयोस्तादात्म्यादिसम्बन्धासंभवस्य वक्ष्यमाणत्वात् । अथासम्बद्धा तर्हि तत्प्रतिपत्तावपि कथं प्रतियोगिनि वृत्तिसिद्धिः—अतिप्रसङ्गात् । तन्निवृत्तेरप्यपरतन्निवृत्तिप्रतिपत्त्यभ्युपगमे चानवस्था । यच्च प्रमाणपञ्चकाभावस्तदन्यज्ञानमात्मा वा ज्ञाननिर्मुक्तोऽभावप्रमाणमिति त्रिप्रकारतास्येत्युक्तं तदप्ययुक्तं यतः प्रमाणपञ्चकाभावो निरुपाख्यत्वात्कथं प्रमेयाभावं

---

१ प्रत्यक्षेणैवाभावस्य प्रतीतत्त्वात् ॥ २ अनवस्थादिदूषणपरिहार करोति ॥ ३ भूतलमात्रस्य ॥ ४ अनवस्थादिदोपभयात्परेण ॥ ५ घट ॥ ६ भूतल ॥ ७ भूतलस्य ॥ ८ प्रत्यक्षप्रतिपन्ने ॥ ९ भूतललक्षणे ॥ १० घटस्य ॥ ११ परेण ॥ १२ अन्येन पटेन ॥ १३ परेण ॥ १४ घटस्य ॥ १५ पटेन ॥ १६ घटात् ॥ १७ पटे ॥ १८ ग्रन्थानवस्था स्यात् ॥ १९ अनवस्थापरिहारार्थं पर प्राह ॥ २० भूभागेन ॥ २१ अन्यासमृष्टता प्रतीयते ॥ २२ घटासंसृष्टभूभागप्रतियोगिस्मरणात् घटस्य भूतलासंसृष्टताप्रतिपत्तिस्तस्य। सत्त्या भूभागासंसृष्टघटप्रतियोगिस्मरणाद्भूतलस्य घटासंसृष्टताप्रतिपत्तिस्तस्या सत्या घटासंसृष्टभूभागस्मरणाद् घटस्य भूतलासंसृष्टताप्रतिपत्तिरित्यान्वयमुखेनेतरेतराश्रय ॥ २३ भूभागासंसृष्टघटप्रतियोगि ॥ २४ दृष्टश्रुतानुभूतेर्थे स्मरण चोपजायते ॥ २५ घटासंसृष्टभूभाग ॥ २६ असंसृष्टताप्रतीति ॥ २७ इतरेतराश्रयो यत ॥ २८ स्मर्यमाणघटस्य ॥ २९ प्रतियोगिस्मरण विना जायमान ज्ञान प्रत्यक्ष प्रतियोगिस्मरणानन्तरमुपजायमानमभावप्रमाण भविष्यतीत्युक्ते आह ॥ ३० नरस्य ॥ ३१ स्मर्यमाणघटस्य ॥ ३२ भूभागे ॥ ३३ दर्शनस्मरणकारणकृत्वाविशेषात् ॥ ३४ आविर्भावतिरोभावात्सर्वं सर्वत्र विद्यते इति ॥ ३५ अभाव प्रत्यक्षत ॥ ३६ दृष्टान्त ॥ ३७ अभावम् ॥ ३८ इट् भूतले घटो नास्ति दृश्यत्वे सत्यनुपलब्धे । यत्र यस्य दृश्यत्वे सत्यनुपलब्धिस्तत्र तस्याभावो यथा तमसि सत्त्वस्य ॥ ३९ विपये ॥ ४० प्रत्यक्षप्रत्यभिज्ञानानुमानैरभाव प्रतीयते यत ॥ ४१ सति ॥ ४२ घटाभावस्य ॥ ४३ प्रतिपत्ति स्यात् ॥ ४४ निवृत्ति ४५ अनन्तरमेव प्रध्वसाभावनिराकरणे ॥ ४६ निवृत्त्याऽसम्बद्धस्य प्रतियोगिनो घटस्य यथाऽभावात्तया पटस्यापि निवृत्त्याऽसम्बद्धस्याभावप्रसङ्ग —उभयत्रासम्बद्धत्वाविशेषात् ॥ ४७ सा चासौ निवृत्तिश्च तन्निवृत्तिस्तस्या• सकाशात् ॥ ४८ परेण ॥ ४९ प्रतिपत्तिर्भेदेन सम्बद्धाऽसम्बद्धेत्यादिप्रकारेण ॥ ५० निषेध्याद्घटादन्यस्य भूतलस्य परिज्ञानम् ॥ ५१ परेण ॥ ५२ नि स्वभावत्त्वात् ॥ ५३ गगनाम्भोजवत् ॥

परिच्छिन्द्यात् ?–परिच्छित्तेर्ज्ञानधर्मत्वात् । अथ प्रमाणपञ्चकाभावः प्रमेयाभावविषयं ज्ञानं जनयन्नुपचारादभावप्रमाणमुच्यते,[2] न[3]–अभावस्यावस्तुतया तज्ज्ञानजनकत्त्वायोगात्[4] । वस्त्वेव हि कार्यमुत्पादयति, नावस्तु–तस्य सकलसामर्थ्यविकलत्वात्खरविषाणवत्[5] । सामर्थ्ये वा तस्य भावरूपताप्रसक्तिः–तल्लक्षणत्वात्परमार्थसतो लक्षणान्तराभावात्–सत्तासम्बन्धादेस्तल्लक्षणस्य निर्पेत्स्यमानत्वात्[6] । न च यत्र प्रमाणपञ्चकाभावस्तत्रावश्यं प्रमेयाभावज्ञानमुत्पद्यते–परचेतोवृत्तिविशेषैरनैकान्तिकत्त्वात्[10] । किञ्च प्रमाणपञ्चकाभावो ज्ञातोऽज्ञातो वा तज्ज्ञानहेतुः स्यात् ? ज्ञातश्चेत्कुतो ज्ञप्तिः ? तद्विषयप्रमाणपञ्चकाभावाच्चेदनवस्था[15] । प्रमेयाभावाच्चेदन्योन्याश्रयः । सिद्धे हि प्रमेयाभावे प्रमाणपञ्चकाभावसिद्धिस्तत्सिद्धेश्च प्रमेयाभावसिद्धिरिति । अज्ञातस्य च ज्ञापकत्वायोगः–नाज्ञातं ज्ञापकं नामेति प्रेक्षावद्भिरभ्युपगमात् । अन्यथातिप्रसङ्गः[17] । अक्षादेस्तु[18] कारकत्वादज्ञातस्यापि ज्ञानहेतुत्वाविरोधः । न चास्यापि कारकत्त्वात्तद्धेतुत्वाविरोधः–निखिलसामर्थ्यशून्यत्वेनास्य कारकत्वासम्भवादित्युक्तत्वात् । ततोऽयुक्तमुक्तं "प्रत्यक्षाद्यवतारश्च भावांशो गृह्यते यदा । व्यापारस्तदनुत्पत्तेरभावांशे जिघृक्षिते" इति । द्वितीयपक्षे तु यत्तदन्यज्ञानं तत्प्रत्यक्षमेव । पर्युदासवृत्त्या हि निषेध्याद् घटादेरन्यस्य भूतलादेर्ज्ञानमभावप्रमाणाख्यां प्रतिपद्यमानं तदन्याभावलक्षणाभावपरिच्छेदकमिष्टमेव । तृतीयपक्षे तु किमसौ सर्वथा ज्ञाननिर्मुक्तः कथञ्चिद्वा ? तत्राद्यविकल्पे माता मे वन्ध्येत्यादिवत्स्ववचनविरोधः । सर्वथा हि यद्यात्मा ज्ञाननिर्मुक्तः कथमभावपरिच्छेदकः ?–परिच्छेदस्य ज्ञानधर्मत्वात् । परिच्छेदकत्वे वा कथमसौ सर्वथा ज्ञाननिर्मुक्तः स्यात् ? अथ कथञ्चित् । तथा हि 'अभावविषयं ज्ञानमस्यास्ति निषेध्यविषयं तु नास्ति, इति तर्हि तज्ज्ञानमेवाभावप्रमाणं स्यान्नात्मा । तच्च भावान्तरस्वभावाभावग्राहकतयेन्द्रियैर्जनितत्वात्प्रत्यक्षमेव । ततो निराकृतमेतत्–न तावदिन्द्रियेणैषेत्यादि, वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यं समाश्रितेत्यादि च–तस्याः प्रत्यक्षादिप्रमाणत एव प्रसिद्धेः । कथं ततोऽभावपरिच्छित्तिरिति चेत् कथं भावस्य ? प्रतिभासाच्चेदितरत्र समानम् । न

१ निरुपाख्य स्यात्प्रमेयाभावपरिच्छेदकश्च स्यादित्युक्ते सत्याह ॥ २ निमित्तेऽयमुपचार प्रमाणभूतज्ञानजनकत्वेन प्रमाण प्रमाणपञ्चकाभावो, न साक्षात्प्रमाणमिति ॥ ३ तन ॥ ४ शशशृङ्गवत् ॥ ५ सद्रूपत्वाद् मृत्पिण्डवत् ॥
६ देशकालस्वभावतया ॥ ७ आदिशब्देन प्रमाणविषयत्वम् ॥ ८ समवायनिराकरणप्रघट्टके ॥ ९ अन्यथा ॥ १० ॥ प्रमाणपञ्चकाभावेपि प्रमेयाभावज्ञान न परचेतोवृत्तिविशेषेष्वस्ति–अतीन्द्रियत्वात् ॥ ११ पुरुषेण ॥ १२ प्रमे-
याभाव ॥ १३ वस ॥ १४ प्रमाणपञ्चकाभावलक्षणाभावप्रमाणादित्यर्थं ॥ १५ ग्रन्थानवस्था ॥ १६ अभावस्य ॥ १७ अन्धेनाज्ञातस्य धूमस्याग्निज्ञापकत्वप्रसङ्गात् ॥ १८ अक्षादेरज्ञातस्य कथ ज्ञापकत्वमित्युक्ते आह ॥ १९ आ-
दिपदेन अदृष्टम् ॥ २० ज्ञान प्रति कारणत्व कारकत्वम् ॥ २१ प्रमेयाभावज्ञान ॥ २२ प्रमाणपञ्चकाभावोऽभावज्ञानहेतुर्न भवति यत ॥ २३ तदा भवति ॥ २४ निषेध्यघटात् ॥ २५ भूतलस्य ॥ २६ घटाभाव भूतलमद्भाव
इति ॥ २७ (तस्माद् घटादन्यद्भूतलम् । तच्चासौ भावश्च (अयं) स तदन्यभावो लक्षण यस्याभावस्य) ॥ २८ उभयोरपि सम्मतोय (भावान्तरस्वभावलक्षण) विकल्प ॥ २९ आत्मा ॥ ३० प्रमेयाभावस्य ॥ ३१ अभाव ॥
३२ घटादन्यद्भूतल तदेव स्वभावो यस्याभावस्य ॥ ३३ अभावस्य प्रत्यक्षतो ग्रहण सिद्ध यत ॥ ३४ नास्तीत्युत्पाद्यते मति । भावांशेनेव सम्बन्धो योग्यत्वादिन्द्रियस्य हि ॥ ३५ अभावग्राहकताया ॥ ३६ प्रत्यक्षा-
दिप्रमाणात्तव मते परिच्छित्ति ॥

खलु प्रत्यक्षेणान्यसंसृष्टः प्रथमतोऽर्थो[2]ऽनुभूयते, पश्चा[3]दभावप्रमाणादन्या[4]संसृष्ट इति क्रमप्रतीति[5]रस्ति—प्रथममेवान्यासंसृष्टस्यार्थ[6]स्याध्यक्षे प्रतिभासनात्। न चान्या-
संसृष्टार्थ[7]वेदनादन्यत्तदभाववेदनं नाम। एतेनैतदपि प्रत्युक्तं स्वरूपपररूपाभ्यामित्यादि[8]—सैवं[9] सर्वदोभयरूप[10]स्यैवान्त[11]र्बहि[12]र्वाऽर्थस्य प्रतिसंवेदनात्—[13]अन्यथा तदभा-
वप्रसङ्गात्[14]। यदप्युक्तम्—यस्य[15] यत्र[16] यदोद्भूतिरित्यादि[17] तदप्ययुक्तम्।—नह्यनुभूतमनुद्भूतं[18] नाम। नापि जिघृक्षाप्रभवं सर्वज्ञानम्—इन्द्रियमनोमात्रभावे भावात्तदभा-
वे चाभावात्तस्य। यच्चान्यदुक्तं मेयो यद्वदभावो हीत्यादि[19], तत्र भावरूपेण प्रत्यक्षेण नाभावो वेद्यत इति प्रतिज्ञा[21] अन्यासंसृष्टभूतलग्राहिणा प्रत्यक्षेण निराक्रियतेऽनुष्णा-
ग्निप्रतिज्ञावत्। भावात्मके यथा मेये इत्याद्यप्ययुक्तम्—अभावादपि भावप्रतीतेर्यथा गगनतले पत्रादीनामधःपाता[22]भावाद्वायोरिति[23]। भावाच्चाग्न्यादेः शीताभावस्य
प्रतीतिः सकलजनप्रसिद्धा। यो यथाविधः स तथाविधेनैव गृह्यते इत्यभ्युपगमे चाभावस्य मुद्गरादि[24]हेतुत्वाभावः स्यात्। शक्यं हि वक्तुं यो यथाविधः स तथाविधे-
नैव क्रियते, यथा भावो भावेन[25], अभाव[26]श्चाभावः, तस्मादभावेनैव क्रियते। प्रत्यक्षबाधा[27] चान्यत्रापि[28] समाना। यदप्यभिहितं 'प्रागभावादिभेदाच्चतुर्विधश्चाभाव,
इत्यादि तदप्यभिधानमात्रम्—यतः स्वकारण[29]कलापात्स्वस्वभावव्यवस्थितयो भावाः[30] समुत्पन्ना नात्मानं परेण[31] मिश्रयन्ति—तस्या[32][33]परत्व[34]प्रसङ्गात्। न चान्यतोऽव्यावृत्त[35]-
स्वरूपाणां तेषां[36] भिन्नोऽभावांशः सम्भवति[37]। भावे[38] वा तस्यापि[39] पररूपत्वाद्भावेन[41] ततोपि व्यावर्तितव्यमित्यपरापराभावपरिकल्पनयानवस्था। अतो न कुतश्चिद्भावेन[42]
व्यावर्तितव्यमित्येक[43]स्वभावं[45] विश्वं[46] भवेत्, परभावाभावाच्च व्यावर्त्तमानस्यार्थस्य पररूपताप्रसङ्गः[48]। यदि चेतरेतराभाववशाद् घटः पटादिभ्यो व्यावर्त्तेत तर्हीतरेतरा-
भावोपि भावादभावान्तराच्च प्रागभावादेः किं स्वतो व्यावर्त्तेतान्यतो वा? स्वतश्चेत्तथैव घटोप्यन्येभ्यः[50] किन्न व्यावर्त्तेत? अन्यतश्चेत्किमसाधारणधर्मादितरेतरा-
भावान्तराद्वा? असाधारणधर्माभ्युपगमे स एव पटादिष्वपि युक्तः[52]। इतरेतराभावान्तराच्चेद्धेतुत्वमितरेतराभावस्यानवस्थाकारि स्यात्[53]। किञ्चेतरेतराभावोप्यसाधा-

---

१ घटेन ॥ २ भूतललक्षण ॥ ३ अन्यसस्पृष्टज्ञानानन्तरम् ॥ ४ घटेन ॥ ५ एकदैवोभयरूपार्थविषयतयानुभूयमान ज्ञान कथमितराशेऽनुद्भूतमिति भाव ॥ ६ भूतललक्षणस्य ॥ ७ भूतललक्षण ॥ ८ नित्य सद-
सदात्मके। वस्तुनि ज्ञायते किञ्चिद्रूप केश्चित्कदाचनेत्यन्तम् ॥ ९ प्रमाणे ॥ १० सदसदात्मकस्य ॥ ११ ज्ञानस्य ॥ १२ घटादे ॥ १३ उभयरूपार्थवेदन न चेत् ॥ १४ उभयरूपत्वादर्थस्य ॥ १५ सदशस्यासदशस्य वा ॥
१६ वस्तुनि ॥ १७ जिघृक्षा चोपजायते। वेद्यतेनुभवस्तस्य तेन च व्यपदिश्यते इत्यन्तम् ॥ १८ प्रत्यक्षप्रतिपन्नम् ॥ १९ अभावरूपम् ॥ २० मानम (अभावरूप) प्यवमिष्यताम्। भावात्मके यथा मेये नाऽभावस्य प्रमाणता ॥
तथैवाभावमेयेपि न भावस्य प्रमाणतेति च ॥२१अभावोऽभावपरिच्छेद्य तथाविषयत्वादिति वा प्रतिज्ञा ॥२२गगनतले वायुरस्ति पत्रादीनामध पाताभावान्यथानुपपत्ते ॥२३प्रतीति ॥२४भावरूप॥२५मृत्पिण्डादिना ॥२६ घटप्रध्व-
साभाव ॥ २७ घटाभाव प्रति मुद्गरादीना व्यापारोपलम्भात्॥२८ अभावप्रमाणेनाभावो गृह्यते इत्यत्रापि। कथम्? प्रत्यक्षेणैवाभावप्रतीतेरिति॥२९चक्रचीवरकुलालादि॥३०घटादय ॥३१पटादिभावेन॥३२अन्यथा॥३३ तस्य परस्य
पटादे ॥३४ घटत्वप्रसङ्गात् ॥ ३५ पटादिभ्य ॥ ३६ घटादिभावानाम् ॥ ३७ यतोऽभावात् तेषा ( घटादीना ) व्यावृत्ति ( पटादिभ्य ) युक्ता ॥ ३८ सम्भवति चेत् कस्य? घटस्य। पटादय पटरूपा घटादिभ्य सकाशाद्यथा
तथा अभावांशोपि ॥ ३९ अभावांशस्य ॥ ४० घटादिभ्य ॥ ४१ घटादिपदार्थेन ॥ ४२ भावादभावाद्वा ॥ ४३ अनवस्थादोषभयात् ॥ ४४ इति हेतो ॥ ४५ घटादिस्वभावम् ॥ ४६ व्यावर्त्तकस्येतरेतराभावस्याभावात् ॥
४७ ततश्च किं भवेत् ॥ ४८ घटस्य ॥ ४९ भिन्नत्वात् ॥ ५० पटादिभ्य ॥ ५१ पृथुबुध्नोदरादे ॥ ५२ व्यावर्त्तक ॥ ५३ इतरेतराभावान्तर किं स्वतो व्यावर्त्तते अन्यतो वेत्यादिप्रकारेण ॥

रणधर्मेणाव्यावृत्तस्य व्यावृत्तस्य[1] वा भेदकः? यद्यव्यावृत्तस्य, किं नैकव्यक्तेर्भेदकः[2]? अथ व्यावृत्तस्य तर्हि घटादिष्वपि स एवास्तु भेदकः। किमितरेतराभावकल्पनया। किञ्चानेन घटे पटः प्रतिषिध्यते पटत्वसामान्यं वोभयं[3] वा? प्रथमपक्षे किं पटविशिष्टे घटे पटः प्रतिषिध्यते पटविविक्ते वा? न तावदाद्यः पक्षो युक्तः—प्रत्यक्षविरोधात्। नापि द्वितीयः। तथा हि। किमितरेतराभावादन्या घटस्य पटविविक्तता[4]? स एव वा विविक्तताशब्दाभिधेयः? भेदे[5] तयैव घटे पटाभावव्यवहारसिद्धेः किमितरेतराभावेन। अथ स एव तच्छब्दाभिधेयस्तर्हि यस्मादभावात्पटविविक्ते घटे पटाभावव्यवहारः सोन्योऽभावो विविक्तताशब्दाभिधेयश्चान्य[6] इत्येकस्मिन्वस्तुनीतरेतराभावद्वयमायातम्। किञ्च घटे पटो नास्तीति पटरूपताप्रतिषेधः। सा किं प्राप्ता प्रतिषिध्यतेऽप्राप्ता वा? प्राप्तायाः प्रतिषेधे पटेपि पटरूपताप्रतिषेधः स्यात् प्राप्तेरविशेषात्[7]। अप्राप्तायास्तु प्रतिषेधानुपपत्तिः प्राप्तिपूर्वकत्वात्तस्य। न ह्यनुपलब्धोदकस्यानुदकः[8] कमण्डलुरिति प्रतिषेधो घटते। अथान्यत्र प्राप्तमेव पटरूपमन्यत्र प्रतिषिध्यते। तत्रापि समवायप्रतिषेधः संयोगप्रतिषेधो वा? न तावत्समवायप्रतिषेधः—रूपादेरेकत्र[11][12] समवायेन सम्बद्धस्यान्यत्र[13] वस्त्वन्तरेऽन्योन्याभावतोऽभावव्यवहारानुपलम्भात्। संयोगप्रतिषेधोप्यनुपपन्नः—घटपटयोः कदाचित्संयोगस्यापि सम्भवात्। अथ पटेन संयोगरहिते घटे पटप्रतिषेधो, न तत्संयोगवति। नन्वेवं पटसंयोगरहितत्वमेवाभावोस्तु, न त्वन्यस्मादभावात्[14]पटसंयोगरहिते घटे पटाभाव इति युक्तम्। तन्न घटे पटप्रतिषेधो युक्तः[15]। नापि पटत्वप्रतिषेधः[16]—तस्याप्येकत्र सम्बद्धस्यान्यत्र सम्बन्धाभावादेव प्रतिषेधानुपपत्तेः। नाप्युभयप्रतिषेधः[17] प्रागुक्ताशेषदोषानुषङ्गात्[18]। किञ्चेतरेतराभावप्रतिपत्तिपूर्विका घटप्रतिपत्तिर्घटग्रहणपूर्वकत्वं वेतरेतराभावग्रहणस्य? आद्यपक्षेऽन्योन्याश्रयत्वम्। तथा हि 'इतरेतराभावो घटसंबन्धित्वेनोपलभ्यमानो घटस्य विशेषणं, न पदार्थान्तरसम्बन्धित्वेन। अन्यथा सर्वं सर्वस्य विशेषणं स्यात्। घटसम्बन्धित्वप्रतिपत्तिश्च[20] घटग्रहणे सत्युपपद्यते। सोपि व्यावृत्त एव पटादिभ्यः प्रतिपत्तव्यः। ततो[21] यावत्पूर्वं घटसम्बन्धित्वेन व्यावृत्तेरुपलम्भो[22] न स्यान्न तावद्व्यावृत्तिविशिष्टतया घटः प्रत्येतुं शक्यः। यावच्च पटादिव्यावृत्तत्वेन न प्रतिपन्नो घटो, न तावत्स्वसम्बन्धित्वेन व्यावृत्तिं[23] विशेषयति, इति। अथ[24] घटग्रहणपूर्वकत्वमितरेतराभावग्रहणस्य। अत्राप्यभावो विशेष्यो घटो विशेषणम्। तद्ग्रहणं च पूर्वमन्वेषणीयम्—नागृहीतविशेषणा विशेष्ये बुद्धिरित्यभिधानात्[25]। तत्रापि[26] घटो गृह्यमाणः पटादिभ्यो व्यावृत्तो गृह्यतेऽव्यावृत्तो वा? तत्र[27] न तावत्पटादिभ्योऽव्यावृत्तस्य घटस्य घटरूपता घटते[28]। अन्यथा[29] पटादेरपि तथैव पटादिरूपताप्रसङ्गादभावकल्पनावैयर्थ्यम्। अथ तेभ्यो व्यावृत्तस्य घटस्य घटरूपताप्रतिपत्तिः प्रार्थ्यते[30]। तत्रापि किं कतिपयपटादिव्यक्ति-

१ पटादे सकाशाद्व्यावृत्तस्य घटादे ॥ २ घटस्य ॥ ३ उभय, पट पटत्वं चेत्यर्थं। तृतीयपक्षोयम् ॥ ४ असाधारणस्वरूपता ॥ ५ इतरेतराभावविविक्ततयो ॥ ६ इतरेतराभाव ॥ ७ पटस्वरूपस्य ॥ ८ एव परस्यानिष्टापादन भवति ॥ ९ उभयत्र ॥ १० पुरुषस्य ॥ ११ आतानवितानीभूतरूपादे ॥ १२ पटादौ ॥ १३ घटादौ ॥ १४ इतरेतराभावात् ॥ १५ द्वितीयपक्ष ॥ १६ घटे ॥ १७ तृतीयपक्ष ॥ १८ पटपटत्वयो ॥ १९ घटस्येतरेतराभावोयमिति ॥ २० इतरेतराभावस्य ॥ २१ इतरेतराभावप्रतिपत्तेर्घटप्रतिपत्तिपूर्वकत्व यत ॥ २२ इतरेतराभावस्य ॥ २३ घटसम्बन्धिनमितरेतराभावम् ॥ २४ द्वितीयपक्ष ॥ २५ प्रवर्त्तते ॥ २६ घटस्य पूर्वं ग्रहणेपि ॥ २७ पक्षद्वये ॥ २८ जैनमते स्वगतासाधारणधर्मे घट पटादिभ्यो व्यावृत्तो भवति, न तु इतरेतराभावादिति ॥ २९ पटादिभ्योऽव्यावृत्तस्य घटस्य घटरूपता यदि ॥ ३० समर्थ्यते परेण ॥

भ्योसौ व्यावर्त्तते सकलपटादिव्यक्तिभ्यो वा? प्रथमपक्षे कुतश्चिदेवासौ व्यावर्त्तेत, न सकलपटादिव्यक्तिभ्यः। द्वितीयपक्षेपि न निखिलपटादिभ्योऽस्य व्यावृत्ति-र्घटते–तासामानन्त्येन ग्रहणासम्भवात्। इतरेतराश्रयत्वं च। तथा हि 'यावत्पटादिभ्यो व्यावृत्तस्य घटस्य घटरूपता न स्यान्न तावद् घटात्पटादयो व्यावर्त्तन्ते यावच्च घटाद्व्यावृत्तानां पटादीनां पटादिरूपता न स्यान्न तावत्पटादिभ्यो घटो व्यावर्त्तते, इति। अस्तु वा यथाकथञ्चित्पटादिभ्यो घटस्य व्यावृत्तिः[3]। घटान्तरात्तु कथमसौ व्यावर्त्तते इति सम्प्रधार्यम्। किं घटरूपतयाऽन्यथा[4] वा? यदि घटरूपतया तर्हि सकलघटव्यक्तिभ्यो व्यावर्त्तमानो घटो घटरूपतामादाय व्यावर्त्तेत इत्या-यातमघटत्वमन्यासां घटव्यक्तीनाम्। अथाघटरूपतया[4]। तत्किमघटरूपता पटादिवद् घटेप्यस्ति? तथा चेत्तर्हि यो व्यावर्त्तते घटान्तरादघटत्वेन घटस्तस्याघटत्वं स्यात्। तच्च विप्रतिषिद्धम्। यद्यघटो घटः, कथं घटः? तस्मान्नार्थादर्थान्तरमभावः। ननु चाभावस्यार्थान्तरत्वानभ्युपगमे कथं तन्निमित्तको व्यवहारः। तथा हि। किं घटावष्टब्धं भूतलं घटाभावो व्यपदिश्यते तद्रहितं वा? प्रथमपक्षे प्रत्यक्षविरोधः। द्वितीयपक्षे तु नाममात्रं भिद्येत[10] घटरहितत्वं[11] घटाभावविशिष्टत्वमिति। तद-प्यसाम्प्रतम्–यतः किं घटाकारं भूतलं येन घटो न भवतीत्युच्यमाने प्रत्यक्षविरोधः स्यात्। यद्भूतलं तद्घटाकाररहितत्वाद्घटो न भवत्येव। ननु यद्यपि भूतला-न्नार्थान्तरं घटाभावस्तर्हि घटसम्बद्धेपि भूतले घटो नास्तीति प्रत्ययः स्यात्। न चैवम्। ततो यथा भूतलादर्थान्तरं घटस्तथा तदभावोपीति, तदप्यसारम्।-घटासम्भ-विभूतलगतासाधारणधर्मोपलक्षितं हि भूतलं घटाभावो व्यपदिश्यते। घटावष्टब्धं तु घटभूतलगतसंयोगलक्षणसाधारणधर्मविशिष्टत्वेन तथोत्पन्नमिति नाघटं भूतल-मिति व्यपदेशं लभते। तन्नेतरेतराभावो विचारक्षमः।

नापि प्रागभावः–तस्याप्यर्थादर्थान्तरस्य प्रमाणतोऽप्रतिपत्तेः। ननु स्वोत्पत्तेः प्राग्नासीद् घट इति प्रत्ययोऽसद्विषयः–सत्प्रत्ययविलक्षणत्वात्, यस्तु सद्विषयः स न सत्प्रत्ययविलक्षणो यथा सद्द्रव्यमित्यादिप्रत्ययः, सत्प्रत्ययविलक्षणश्चायं तस्मादसद्विषय इत्यनुमानात्ततोऽर्थान्तरस्य प्रागभावस्य प्रतीतिरित्यपि मिथ्या—प्राग-भावादौ नास्ति प्रध्वंसादिरिति प्रत्ययेनानेकान्तात्। तस्याप्यसद्विषयत्वेऽभावानवस्था। अथ भावे भूभागादौ नास्ति घटादिरिति प्रत्ययो मुख्याभावविषयः, प्राग-भावादौ नास्ति प्रध्वंसादिरिति प्रत्ययस्तूपचरिताभावविषयः। ततो नानवस्थेति, तदप्ययुक्तम्–परमार्थतः प्रागभावादीनां साङ्कर्यप्रसङ्गात्। न खलूपचरितेनाभा-

---

१ ग्रहणे वा सर्वज्ञतादिप्रसङ्गः ॥ २ इतरेतराभाव ॥ ३ विचार्यम् ॥ ४ अघटरूपतया ॥ ५ तर्हि ॥ ६ विरुद्धम् ॥ ७ नास्तीति विकल्पो नास्तीत्यभिधानं च ॥ ८ अर्थादर्थान्तरमभावं समर्थयन्ति परे ॥ ९ जैनैर्भवद्भिः ॥ १० नार्थभेदः ॥ ११ भूतलस्य ॥ १२ जैनमते ॥ १३ परमते ॥ १४ घटभूतलयोः किं तादात्म्यं प्रतिषिध्यते आधाराधेयभावो वा? तत्राद्यं पक्षं विवेचयति ॥ १५ भूतलगतं विविक्तत्वं भिन्नं घटगतं विविक्तत्व मिभम् ॥ १६ उभयगतत्वात् ॥ १७ घटाक्रान्तत्वेन ॥ १८ घटस्य प्रागभावो मृत्पिण्डलक्षणोर्थस्तस्मात् ॥ १९ प्रागभाव ॥ २० अर्थात् ॥ २१ अयं सत्प्रत्ययविलक्षणश्च भवति, न त्वसद्विषय ॥ २२ अभावे अभावोऽस्ति यतः ॥ २३ प्रागभावादौ नास्ति प्रध्वंसादिरिति व्यवहारः प्रयोजनमभावानामसङ्करो निमित्तमित्युपचारप्रवृत्ति –निमित्तप्रयोजनवशादुपचारप्रवृत्ते ॥

वेनान्योन्यमभावानां व्यतिरेकः[1] सिद्ध्येत्[2]—सर्वत्र मुख्याभावकल्पनानर्थक्यप्रसङ्गात्। यदप्युक्तं न भावस्वभावः प्रागभावादिः—सर्वदा[3] भावविशेषणत्वादिति तद-
प्युक्तिमात्रम्—हेतोः पक्षा[4]व्यापकत्वात्—न प्रागभावः प्रध्वंसादावित्यादेरभावविशे[5]षणस्याप्यभावस्य प्रसिद्धेः, गुणादिनानेकान्ताच्चास्य सर्वदा भावविशेषणत्वेपि भा-
वस्वभावात्। रूपं[6] पश्यामीत्यादिव्यवहारे गुणस्य स्वतन्त्रस्यापि प्रतीतेः सर्वदा भावविशेषणत्वाभावेऽभावस्तत्त्वमित्यभावस्यापि स्वतन्त्रस्य प्रतीतेः शश्वद्भावविशे-
षणत्वं न स्यात्। सामर्थ्यात्तद्विशेष्यस्य द्रव्यादेः सम्प्रत्ययात्सदास्य भावविशेषणत्वे गुणादेरपि सर्वदा भावविशेषणत्वमस्तु—तद्विशेष्यस्य द्रव्यस्य सामर्थ्यतो गम्य-
मानत्वात्। किञ्च प्रागभावः सादिः सान्तः[11] परिकल्प्यते सादिरनन्तो वानादिरनन्तो वानादिः सान्तो वा? प्रथमपक्षे प्रागभावात्पूर्वं घटस्योपलब्धिप्रसङ्गः—
तद्विरोधिनः प्रागभावस्याभावात्। द्वितीयेपि तदुत्पत्तेः पूर्वमुपलब्धिप्रसङ्गस्तत एव। उत्पन्ने तु प्रागभावे सर्वदानुपलब्धिः स्यात्तस्यानन्तत्वात्। तृतीये तु सदा-
नुपलब्धिः। चतुर्थे पुनर्घटोत्पत्तौ प्रागभावस्याभावे घटोपलब्धिवदशेषकार्योपलब्धिः स्यात्—सकलकार्याणामुत्पत्स्यमानानां प्रागभावस्यैकत्वात्। ननु[16] यावन्ति का-
र्याणि तावन्तस्तत्प्रागभावाः। तत्रैकस्य प्रागभावस्य विनाशेपि शेषोत्पत्स्यमानकार्यप्रागभावानामविनाशान्न घटोत्पत्तौ सकलकार्योपलब्धिरिति, तर्ह्यनन्ताः प्रागभा-
वास्ते किं स्वतन्त्रा भावतन्त्रा वा? स्वतन्त्राश्चेत्कथं न भावस्वभावाः? कालादिवत्। भावतन्त्राश्चेत्किमुत्पन्नभावतन्त्रा उत्पत्स्यमानभावतन्त्रा वा? न तावदादि-
विकल्पः—समुत्पन्नभावकाले तत्प्रागभावविनाशात्। द्वितीयविकल्पोपि न श्रेयान्—प्रागभावकाले स्वयमसतामुत्पत्स्यमानभावानां तदाश्रयत्वायोगात्। अन्यथा
प्रध्वंसाभावस्यापि प्रध्वस्तपदार्थाश्रयत्वप्रसङ्गः। न चानुत्पन्नः प्रध्वस्तो वार्थः कस्यचिदाश्रयो नाम—अतिप्रसङ्गात्। अथैक एव प्रागभावो विशेषणभेदाद्भिन्न उपचर्यते
घटस्य प्रागभावः पटादेर्वेति, तथोत्पन्नार्थविशेषणतया तस्य विनाशेप्युत्पत्स्यमानार्थविशेषणत्वेनाविनाशान्नित्यत्वमपीति। नन्वेवं प्रागभावादिचतुष्टयकल्पनानर्थ-
क्यम्—सर्वत्रैकस्यैवाभावस्य विशेषणभेदात्तथाभेदव्यवहारोपपत्तेः। कार्यस्य हि पूर्वेण कालेन विशिष्टोर्थः प्रागभावः, परेण विशिष्टः प्रध्वंसाभावो, नानार्थविशिष्टः स
एवेतरेतराभावः, कालत्रयेप्यत्यन्तनानास्वभावभावविशेषणोऽत्यन्ताभावः स्यात्—प्रत्ययभेदस्यापि तथोपपत्तेः, सत्तैकत्वेपि द्रव्यादिविशेषणभेदात्प्रत्ययभेदवत्।

१ भेद ॥ २ अन्यथा ॥ ३ दण्डेन रूपेण च व्यभिचार स्यात्तत्परिहारार्थं सर्वदेति विशेषण दण्डस्य कदाचिद्विशेष्यरूपतयापि भावात्। कथम्? दण्ड पश्यामीति ॥ ४ यतोऽभावोप्यभावस्य विशेषण भवेत् भावोऽभा-
वस्यापि ॥ ५ प्रागभावो विशेषणमत्र ॥ ६ अतोऽभावोऽभावस्य विशेषणमपि भवेद्भावोऽभावस्यापि ॥ ७ घटस्य ॥ ८ विशेष्यत्वेन ॥ ९ अभावस्तत्त्वम्। कस्य? घटस्येति ॥ १० यथा अभाव कस्येत्युच्यमाने पटस्येति तथा
गुणा कस्य? द्रव्यस्येति ॥ ११ विनाशोपेत ॥ १२ घटस्य ॥ १३ घटस्य ॥ १४ तद्विरोधिन प्रागभावस्य सर्वदा भावादेव ॥ १५ घटादिकार्यस्य ॥ १६ घटोत्पत्तौ घटोपलब्धिवदशेषकार्योपलब्धि परिहरति पर ॥ १७ तेषा
प्रागभावानाम् ॥ १८ प्रागभावस्य प्रध्वसाभावस्य वा ॥ १९ अनुत्पन्न प्रध्वस्तो वा स्तम्भ प्रासादस्याश्रयो भवेत् ॥ २० घटाद्यर्थ ॥ २१ प्रागभावस्य ॥ २२ घटादि ॥ २३ प्रागभावादिप्रकारेण ॥ २४ पटलक्षणस्योत्पत्ते सकाशात् ॥
२५ अर्थ ॥ २६ घटपटशकटादि ॥ २७ अभावलक्षणोर्थ ॥ २८ अत्यन्त सर्वथा नाना (भिन्ना) स्वभावा येषा तेऽत्यन्तनानास्वभावा गगनाम्भोजखरविषाणादयस्ते च ते भावाश्च ते विशेषण यस्याभावस्य ॥ २९ प्रत्ययो
ज्ञानम् ॥ ३० विशेषणभेदादेव। प्रागभावस्यैकत्वकल्पनाप्रकारेण ॥ ३१ द्रव्य सद्गुण सन्कर्म सत् ॥

यथैव हि सत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्चैकत्वं सत्तायास्तथैवासत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्चाभावस्यापि । अथ प्राग्नासीदित्यादिर्प्रत्ययविशेषाच्चतुर्विधो-ऽभावस्तर्हि प्रागासीत्पश्चाद्भविष्यति सम्प्रत्यस्तीति कालभेदेन पाटलिपुत्रेस्ति चित्रकूटेस्तीति देशभेदेन द्रव्यं गुणः कर्म चास्तीति द्रव्यादिभेदेन च प्रत्ययभेदसद्भा-वात्प्राक्सत्तादयः सत्ताभेदाः किंनेष्यन्ते । प्रत्ययविशेषात्तद्विशेषणान्येव भिद्यन्ते–तस्य तन्निमित्तकत्वान्न तु सत्ता । ततः सैकैवेत्यभ्युपगमेऽभावभेदोपि मा भूत्स-र्वथा विशेषाभावात् । अथाभिधीयते 'अभावस्य सर्वथैकत्वे विवक्षितकार्योत्पत्तौ प्रागभावस्याभावे सर्वत्राभावस्याभावानुषङ्गात्सर्वं कार्यमनाद्यनन्तं सर्वात्मकं च स्यात्, तदप्यभिधानमात्रम्–सत्तैकत्वेपि समानत्वात् । विवक्षितकार्यप्रध्वंसे हि सत्ताया अभावे सर्वत्राभावप्रसङ्गः–तस्या एकत्वात् । तथा च सकलशून्यता । अथ तत्प्रध्वंसेपि नास्याः प्रध्वंसो नित्यत्वात् । अन्यथार्थान्तरेषु सत्प्रत्ययोत्पत्तिर्न स्यात् । तदन्यत्रापि समानम् । समुत्पन्नैककार्यविशेषणतया ह्यभावस्याभावेपि न सर्वथाऽभावः–भावान्तरेप्यभावप्रतीत्यभावप्रसङ्गात् । यथा चाभावस्य नित्यैकरूपत्वे कार्यस्योत्पत्तिर्न स्यात्–तस्य तत्प्रतिबन्धकत्वात् तथा सत्ताया नित्यत्वे कार्यप्रध्वंसो न स्यात्–तस्यास्तत्प्रतिबन्धकत्वात् । प्रसिद्धं हि प्रध्वंसात्प्राक्प्रध्वंसप्रतिबन्धकत्वं सत्तायाः । अन्यथा सर्वदा प्रध्वंसप्रसङ्गात् कार्यस्य स्थितिरेव न स्यात् । यदि पुनर्बलवत्प्रध्वंसकारणोपनिपाते कार्यस्य सत्ता न प्रध्वंसं प्रतिबध्नाति, ततः पूर्वं तु बलवद्विनाशकारणोपनिपाताभावात्तं प्रतिबध्नात्येवातो न प्रागपि प्रध्वंसप्रसङ्ग इत्येतदन्यत्रापि न काकैर्भक्षितम् । अभावोपि हि बलवदुत्पादककारणोपनिपाते कार्यस्योत्पादं सन्नपि न प्रतिरुणद्धि । कार्योत्पादात्पूर्वं तूत्पादककारणाभावात्तं प्रतिरुणद्ध्येव । अतो न प्रागपि कार्योत्पत्तिप्रसङ्गो येन कार्यस्यानादित्वं स्यात् । तन्न प्रागभावोपि तुच्छस्वभावो घटते किन्तु भावान्तरस्वभावः । यदभावे हि नियमतः कार्योत्पत्तिः स प्रागभावः प्रागनन्तरपरिणामविशिष्टं मृद्द्रव्यम् । तुच्छस्वभावत्वे चास्य सव्येतरगोविषाणादीनां सहोत्पत्तिनियमवतामुपादानसङ्करप्रसङ्गः–प्रागभावाविशेषात् । यत्र यदा यस्य प्रागभावाभावस्तत्र तदा तस्योत्पत्तिरित्यप्ययुक्तम्–तस्यैवानियमात् । स्वोपादानेतरनियमात्तन्नियमेप्यन्योन्याश्रयः ।

---

१ परमते ॥ २ जैनमते एकत्वम् ॥ ३ घट ॥ ४ कारण ॥ ५ आदिपदेन पश्चात्सत्ता सम्प्रतिसत्ता च ग्राह्या ॥ ६ परेण भवता ॥ ७ घटादयो ॥ ८ प्रत्ययविशेषस्य ॥ ९ ( सत्ताया विशेषणनिमित्तकत्वाभावादित्यर्थः ) ॥ १० प्रागभावाभावादनादि प्रध्वसाभावाभावादनन्तम् ॥ ११ इतरेतराभावाभावात् ॥ १२ अभावे ॥ १३ प्रागभावस्य ॥ १४ प्रध्वसात्पूर्वं सत्ताया प्रध्वसप्रतिबन्धकत्व न स्याद्यदि ॥ १५ सर्वदा प्रध्वसप्रसङ्गात्कार्यस्य स्थितिरेव न स्यादेतत्परिहरति परः ॥ १६ कार्यकालादुत्तरेण कालेन ॥ १७ मुद्गरादि ॥ १८ विनाशकारणसन्निधानात्पूर्वम् ॥ १९ अभावे ॥ २० मृत्पिण्डादि ॥ २१ प्रागभाव क भावान्तर च किमित्युक्ते आह ॥ २२ यस्य मृत्पिण्डस्य ॥ २३ स्वस्य विनाशेन घटरूपेण परिणमते मृत्पिण्ड ॥ २४ मृत्पिण्डलक्षण ॥ २५ घटोत्पत्ते ॥ २६ स्यासादि ॥ २७ अस्योपादानमेतदस्यैतदिति विवेचयितुमशक्यत्वात् ॥ २८ तुच्छाभावस्य प्रागभावस्यैकत्वात् ॥ २९ उपादानकारणे ॥ ३० कार्यस्य ॥ ३१ सव्यगोविषाणस्याय प्रागभाव असव्यस्याय प्रागभाव इति प्रागभावस्यैव नियमाभावात् ॥ ३२ सव्यविषाणकार्ये ॥ ३३ स्वानुपादान ॥ ३४ प्रागभावनियमे ॥ ३५ सव्यविषाणस्योपादाननियमे सिद्धे सव्यस्य प्रागभावनियम सिध्येत् । प्रागभावनियमसिद्धौ च सव्यस्योपादाननियमसिद्धिरिति ॥

प्रध्वंसाभावोपि भावस्वभाव एव । यद्भावे[1] हि नियता कार्यस्य[3] विपत्तिः स प्रध्वंसः मृद्द्रव्यानन्तरोत्तरपरिणामः[4] । तस्य हि तुच्छस्वभावत्वे मुद्गरादिव्यापारवैयर्थ्य स्यात् । स हि तद्व्यापारेण[5] घटादेर्भिन्नोऽभिन्नो वा विधीयते? प्रथमपक्षे घटादेस्तदवस्थत्वप्रसङ्गाद्विनष्ट इति प्रत्ययो न स्यात् । विनाशसम्बन्धाद्विनष्ट इति प्रत्ययोत्पत्तौ विनाशतद्वतोः कश्चित्सम्बन्धो वक्तव्यः । स हि तादात्म्यलक्षणस्तदुत्पत्तिस्वरूपो वा स्यात्तद्विशेषणविशेष्यभावलक्षणो[6] वा? तत्र न तावत्तादात्म्यलक्षणोसौ घटते—तयोर्भेदाभ्युपगमात्[7] । नापि तदुत्पत्तिलक्षणः[8]—घटादेस्तदकारणत्वात्—तस्य मुद्गरादिनिमित्तकत्वात् । तदुभयनिमित्तत्वाददोष इत्यप्यसुन्दरम्—मुद्गरादिवद्विनाशोत्तरकालमपि घटादेरुपलम्भप्रसङ्गात् । तस्य स्वविनाशं प्रत्युपादानकारणत्वान्न तत्कालेऽपलम्भ इत्यप्यसमीचीनम्—अभावस्य भावान्तरस्वभावताप्रसङ्गात्[10]—तं[11] प्रत्येवास्योपादानकारणत्वप्रसिद्धेः । तयोर्विशेषणविशेष्यभावः सम्बन्ध इत्यप्यसत्—परस्परमसम्बद्धयोस्तदसम्भवात् । सम्बन्धान्तरेण सम्बद्धयोरेव हि विशेषणविशेष्यभावो दृष्टो दण्डपुरुषादिवत् । न च विनाशतद्वतोः सम्बन्धान्तरेण[12] सम्बद्धत्वमस्तीत्युक्तम् । तत्र तद्व्यापारेण[13] भिन्नो[14] विनाशो विधीयते । अभिन्नविनाशविधाने[15] तु घटादिरेव तेन विधीयते इत्यायातम् । तच्चायुक्तम्—तस्य प्रागेवोत्पन्नत्वात्[16] । ननु प्रध्वंसस्योत्तरपरिणामरूपत्वे[17] कपालोत्तरक्षणेषु घटप्रध्वंसस्याभावात्तस्य पुनरुज्जीवनप्रसङ्गस्तदप्यनुपपन्नम्—कारणस्य[18] कार्योपमर्दनात्मकत्वाभावात्[19] । कार्यमेव हि कारणोपमर्दनात्मकत्वधर्माधारतया प्रसिद्धम् । यच्च कपालेभ्योऽभावस्यार्थान्तरत्वं विभिन्नकारणप्रभवतयोच्यते । तथा हि[20] 'उपादानघटविनाशो वलवत्पुरुषप्रेरितमुद्गराद्यभिघातादवयवक्रियोत्पत्तेरवयवविभागतः[21] संयोगविनाशादेवोत्पद्यते । उपादेयकपालोत्पादस्तु स्वारम्भकावयवैकर्मसंयोगविशेषादेवाविर्भवति[22][23][24], इति । तदप्यसमीक्षिताभिधानम्—अस्य विनाशोत्पादैककारणप्रक्रियोद्घोषणस्याप्रातीतिकत्वात्[26] । केवलमन्यप्रतारितेन भवता[25] परः प्रतार्यते । तस्मादन्धपरम्परापरित्यागेन वलवत्पुरुषप्रेरितमुद्गरादिव्यापाराद् घटाकारविकलकपालाकारमृद्द्रव्योत्पत्तिरभ्युपगन्तव्या[26] । अलं प्रतीत्यपलापेन । क्षीरे दध्यादि यन्नास्तीत्याद्यप्यभावस्य भावस्वभावत्वे सत्येव घटते—दध्यादिविविक्तस्य[27] क्षीरादेरेव प्रागभावादितयाध्यक्षादिप्रमाणतोध्यवसायात् । ततोऽभावस्योत्पत्तिसामग्र्याः[28] विषयस्य चोक्तप्रकारेणासम्भवान्न पृथक्प्रमाणता । इति स्थितमेतत्प्रत्यक्षेतरभेदादेव द्वेधैव च प्रमाणमिति ।

तत्राद्यप्रकारं विशदमित्यादिना व्याचष्टे । विशदं स्पष्टं यद्विज्ञानं तत्प्रत्यक्षम् । तथा च प्रयोगः । विशदज्ञानात्मकं प्रत्यक्षं प्रत्यक्षत्वात् । यत्तु न विशदज्ञानात्मकं

१ उत्तरक्षणवर्तिकपाललक्षण ॥ २ यस्य कपालस्य ॥ ३ घटस्य ॥ ४ मृद्द्रव्य कुशूलरूप तस्यानन्तरपरिणामो घट । तस्योत्तरपरिणामस्तु कपाललक्षण ॥ ५ कर्त्रा ॥ ६ प्रध्वसाभावविशिष्टो घट इति ॥ ७ परेण ॥ ८ घटादुत्पत्ति प्रध्वसस्येति ॥ ९ त विनाश प्रति ॥ १० यथा घटस्य कपालादि भावान्तरम् ॥ ११ कपाललक्षण भावान्तरस्वभावम् ॥ १२ तादात्म्यतदुत्पत्तिलक्षणेन ॥ १३ मुद्गरादिव्यापारेण कर्त्रा ॥ १४ घटात् ॥ १५ द्वितीयपक्षे ॥ १६ मुद्गरादिव्यापारात् ॥ १७ कपाल ॥ १८ घटस्य ॥ १९ कपाल ॥ २० हेतोर्विभिन्नकारणत्व समर्थयति पर ॥ २१ चलनलक्षणाया ॥ २२ परमाणु ॥ २३ तत सयोगविशेष ॥ २४ ताद्वि ॥ २५ यौगेन ॥ २६ प्रध्वसाभावरूपा ॥ २७ भिन्नस्य ॥ २८ अभावप्रमाणस्य ॥

तत्र प्रत्यक्षम् । यथानुमानादि । प्रत्यक्षं च विवादाध्यासितम् । तस्माद्विशदज्ञानात्मकमिति । अनेनाऽकस्माद्धूमदर्शनाद्वह्निरत्रेति ज्ञानं, यावान् कश्चिद् भावः कृतको वा स सर्वः क्षणिको, यावान् कश्चिद्धूमवान्प्रदेशः सोऽग्निमानित्यादि व्याप्तिज्ञानं चास्पष्टमपि प्रत्यक्षमाचक्षाणः प्रत्याख्यातः—अनुमानस्यापि प्रत्यक्षताप्रसङ्गात् प्रत्यक्षमेवैकं प्रमाणं स्यात् । किञ्चाकस्माद्धूमदर्शनाद्वह्निरत्रेत्यादिज्ञाने सामान्यं वा प्रतिभासेत विशेषो वा? यदि सामान्यं न तर्हि प्रत्यक्षम्—तस्य तद्विषयत्वानभ्युपगमात् । अभ्युपगमे वा प्रमाणद्वैविध्यं प्रमेयद्वैविध्यादित्यस्य व्याघातः सविकल्पकत्वप्रसङ्गश्च । विशेषविषयत्वे ततः प्रवर्त्तमानस्यात्र सन्देहो न स्यात् तार्णो वात्राग्निः पार्णो वेति, सन्निहितवत् । न खलु सन्निहितं पावकं पश्यतस्तत्र सन्देहोऽस्ति । सन्देहे वा शब्दाल्लिङ्गाद्वा प्रतिपत्तितोऽप्यसौ स्यात् । तथा चेदमसङ्गतं शब्दाल्लिङ्गाद्वा विशेषप्रतिपत्तौ न तत्र सन्देह इति । तन्नेदं प्रत्यक्षम् । किं तर्हि? लिङ्गदर्शनप्रभवत्वादनुमानम् । दृष्टान्तमन्तरेणाप्यनुमानं भवतीत्येतच्चाग्रे वक्ष्यते । व्याप्तिज्ञानं चास्पष्टत्वेनाप्रत्यक्षं व्यवहारिणां सुप्रसिद्धम् । व्यवहारानुकूल्येन च प्रमाणचिन्ता प्रतन्यते—प्रामाण्यं व्यवहारेणेत्यादिवचनात् । न च तेषां सर्वे क्षणिका भावाः कृतका वाऽग्न्यादयो धूमादयो वा स्पष्टज्ञानविषया इत्यभ्युपगमोऽस्ति—अनुमानानर्थक्यप्रसङ्गात् । सर्वं हि व्याप्यं व्यापकं च स्पष्टतया युगपन्निश्चिन्वतो न किञ्चिदनुमानसाध्यम् । अन्यथा योगिनोऽप्यनुमानप्रसङ्गः । निश्चिते समारोपस्याप्यसम्भवो विरोधात् । कालान्तरभाविसमारोपनिषेधकत्वेनानुमानस्य प्रामाण्ये क्वचिदुपलब्धदेवदत्तस्य पुनः कालान्तरेऽनुपलम्भसमारोपे सति यदनन्तरं तत्स्मरणादिकं तदपि प्रमाणं भवेत् । तन्न व्याप्तिज्ञानमप्यस्पष्टत्वात् प्रत्यक्षं युक्तम् । ननु चास्पष्टत्वं ज्ञानधर्मोऽर्थधर्मो वा? यदि ज्ञानधर्मः कथमर्थस्यास्पष्टत्वम्?—अन्यस्यास्पष्टत्वादन्यस्यास्पष्टत्वेऽतिप्रसङ्गात् । अर्थधर्मत्वे कथमतो व्याप्तिज्ञानस्याप्रत्यक्षताप्रसिद्धिः । वैयधिकरण्याद्धेतोः साध्यसिद्धौ काकस्य कार्ष्ण्याद्धवलः प्रासाद इत्यादेरपि गमकत्वप्रसङ्ग इत्यप्यसमीक्षिताभिधानम्—स्पष्टत्वेपि समानत्वात् । तदपि हि यदि ज्ञानधर्मस्तर्हि कथमर्थे स्पष्टता—अतिप्रसङ्गात् । विषये विषयिधर्मस्योपचाराददोषेऽत एव सोऽन्यत्रापि मा भूत् । संवेदनस्यैव ह्यस्पष्टताधर्मः स्पष्टतावत् । तस्याः विषयधर्मत्वे सर्वदा तथा प्रतिभासप्रसङ्गात्कुतः प्रतिभासपरावृत्तिः? न चास्पष्टसंवेदनं निर्विषयमेव—संवादकत्वात्स्पष्टसंवेदनवत् ।

१ दृष्टान्तस्मरणमन्तरेण ॥ २ बौद्ध ॥ ३ उभयत्रास्पष्टत्वाविशेषात् ॥ ४ प्रत्यक्ष सामान्यविषय यदि । स्फुटाकारपरिणतम् ॥ ५ सौगतेन ॥ ६ प्रत्यक्ष विशेष गृह्णाति अनुमान सामान्य गृह्णाति इति बौद्धमत न घटेत—प्रत्यक्षेणैव सामान्यग्रहणादिति ॥ ७ ग्रन्थस्य ॥ ८ प्रत्यक्षस्य ॥ ९ सामान्यविषयतया ॥ १० नु ॥ ११ जानत ॥१२ सन्देहे सति ॥१३ जैन प्रति यदुक्तम् ॥१४ परीक्षा ॥ १५ पुस ॥ १६ समारोपव्यवच्छेदार्थमनुमानमिति चेनेत्याह ॥ १७ अर्थ ॥ १८ निश्चयश्चेत्समारोप कथमिति ॥ १९ सर्वं क्षणिक सत्त्वात्कृतकत्वाद्वेति ॥ २० नाहमद्राक्षमिति ॥ २१ यम ॥ २२ यस्योपलम्भस्य ॥ २३ तस्य पूर्वोपलब्धस्य देवदत्तस्य ॥ २४ आदिपदेन प्रत्यभिज्ञानम् ॥ २५ साधन विचारयति ॥ २६ दूरपादपास्पष्टत्वे पुरोवर्त्तिपदार्थस्यास्पष्टत्व स्यात् ॥ २७ भिन्नाधिकरणात् ॥२८ अस्पष्टत्व हेतुरर्थे, अप्रत्यक्षत्व साध्य ज्ञाने इति ॥ २९ सन्निहिते पादपादौ स्पष्टत्वमनुमेयेपि स्यात् ॥ ३० अतिप्रसङ्गलक्षणो दोष ॥ ३१ ज्ञानास्पष्टत्वस्यार्थधर्मत्वे ॥ ३२ ज्ञानस्यैवास्पष्टत्वलक्षणो धर्मोऽर्थे उपचर्यतेऽनश्चातिप्रसङ्गाभावात्कथं व्यधिकरणासिद्धो हेतु ॥ ३३ अस्पष्टतया ॥ ३४ गृहीतार्थाव्यभिचारित्वात् ॥

भासनाभावान्न प्रत्यक्षेति[1]। ततो निरवद्यमेवंविधं[2] वैशद्यं प्रत्यक्षलक्षणम्—साकल्येनाखिलाध्यक्षव्यक्तिषु सम्भवेनाव्याप्त्यसम्भवदोषाभावात् । अतिव्याप्तिस्तु दूरोत्सारितैव—अध्यक्षत्वानभिमते[3] क्वचिदप्येतल्लक्षणस्यासम्भवात् । समन्धकारादौ ध्यामलितवृक्षादिवेदनमप्यध्यक्षप्रमाणस्वरूपमेव—संस्थानमात्रे वैशद्याविसंवादित्वसम्भवात् । विशेषांशाध्यवसायस्त्वनुमानरूपो लिङ्गप्रतीत्या व्यवहितत्वान्नाध्यक्षरूपता प्रतिपद्यते । अतिदूरदेशे हि पूर्वं संस्थानमात्रं प्रतिपद्यायमेवंविधसंस्थानविशिष्टोऽर्थो वृक्षो हस्ती पलालकूटादिर्वा—एवंविधसंस्थानविशिष्टत्वान्यथानुपपत्तेरित्युत्तरकालं विशेषं विवेचयति । तरतमभावेन तत्प्रदेशसन्निधाने तु संस्थानविशेषविशिष्टमेवार्थं वैशद्यतरतमभावेनाध्यक्षत एव प्रतिपद्यते—विशदज्ञानावरणस्य तरतमभावेनैवापगमात् । ननु च परोक्षेऽपि स्मृतिप्रत्यभिज्ञादिस्वरूपसंवेदनेऽस्याध्यक्षलक्षणस्य सम्भवादतिव्याप्तिरेवेत्यप्यपरीक्षिताभिधानम्—तस्य परोक्षत्वासम्भवात्—क्षायोपशमिकसंवेदनानां स्वरूपसंवेदनस्यानिन्द्रियप्रधानतयोत्पत्तेरनिन्द्रियाध्यक्षव्यपदेशसिद्धेः सुखादिस्वरूपसंवेदनवत् । बहिरर्थग्रहणापेक्षया हि विज्ञानानां प्रत्यक्षेतरव्यपदेशः—तत्र प्रमाणान्तरव्यवधानाव्यवधानसद्भावेन वैशद्येतरसम्भवात्, न तु स्वरूपग्रहणापेक्षया—तत्र तदभावात् । ततो निर्दोषत्वाद्वैशद्यं प्रत्यक्षलक्षणं परीक्षादक्षैरभ्युपगन्तव्यं, नेन्द्रियार्थसन्निकर्षोत्पन्नमित्यादिकं तस्याव्यापकत्वादतीन्द्रियप्रत्यक्षे सर्वज्ञविज्ञानेऽस्यासत्त्वात् । न च तन्नास्तीत्यभिधातव्यम्—प्रमाणतोऽनन्तरमेवास्य प्रसाधयिष्यमाणत्वात् । तथा सुखादिसंवेदनेऽप्यस्यासत्त्वम् । न हीन्द्रियसुखादिसन्निकर्षात्तज्ज्ञानमुत्पद्यते—सुखादेरेव स्वग्रहणात्मकत्वेनोदयादित्युक्तम् । चाक्षुषसंवेदने चास्यासत्त्वम्—चक्षुषोऽर्थेन सन्निकर्षाभावात् ॥

अथोच्यते ।—स्पर्शनेन्द्रियादिवच्चक्षुषोऽपि प्राप्यकारित्वं प्रमाणात्प्रसाध्यते । तथा हि । प्राप्तार्थप्रकाशकं चक्षुः—बाह्येन्द्रियत्वात्स्पर्शनेन्द्रियादिवत् । ननु किमिदं बाह्येन्द्रियत्वं नाम ? बहिरर्थाभिमुख्यं बहिर्देशावस्थायित्वं वा ? प्रथमपक्षे मनसानेकान्तः—तस्याप्राप्यकारित्वेऽपि बहिरर्थग्रहणाभिमुख्येन बाह्येन्द्रियत्वसिद्धेः । द्वितीयपक्षे त्वसिद्धो हेतुः—रश्मिरूपस्य चक्षुषो बहिर्देशावस्थायित्वस्य भवतानभ्युपगमात् । गोलकान्तर्गततेजोद्रव्याश्रया हि रश्मयस्त्वन्मते प्रसिद्धाः । गोलकरूपस्य तु चक्षुषो बहिर्देशावस्थायिनो हेतुत्वे पक्षस्य प्रत्यक्षबाधनात्कालात्ययापदिष्टत्वम् । न च बाह्यविशेषणेन मनो व्यवच्छेद्यम् । न हि तत् सुखादौ संयुक्तसमवायादिसम्बन्धं व्याप्तौ च

---

१ लिङ्गादिप्रतीत्या व्यवधानात् ॥ २ अव्यवधानेन प्रतिभासनलक्षणम् ॥ ३ अनुमानादौ ॥ ४ अस्पष्ट ॥ ५ आकारमात्रे ॥ ६ द्वन्द्व ॥ ७ उक्तमेव समर्थयन्ति ॥ ८ कर्मणि ॥ ९ अव्यवधानेन प्रतिभासनत्वलक्षणस्य ॥ १० स्मृत्यादीनाम् ॥ ११ अनिन्द्रिय (ईषदिन्द्रिय) मन ॥ १२ मानसप्रत्यक्षत्वादित्यर्थः ॥ १३ एव चेत्स्मृत्यादीनां परोक्षव्यपदेशो न स्यादित्युक्ते आह ॥ १४ बहिरर्थग्रहणे ॥ १५ अनुमानलक्षणप्रमाणाल्लिङ्गप्रत्यक्षप्रमाणान्तरम् ॥ १६ स्वसंवेदन ॥ १७ प्रमाणान्तरव्यवधानाभावात् ॥ १८ अव्याप्त्यादिदोषत्रयासम्भवो यत ॥ १९ परोक्षप्रत्यक्षलक्षणम् ॥ २० परेण भवता ॥ २१ इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादिकस्य ॥ २२ मन ॥ २३ जैने । प्रथमपरिच्छेदे ॥ २४ प्रत्यक्षलक्षणस्य ॥ २५ प्राप्यकारि प्राप्य अर्थं जानातीत्यर्थः ॥ २६ नैयायिकेन ॥ २७ इन्द्रियत्वादित्युक्ते मनसा व्यभिचारस्तत्परिहारार्थं बाह्यग्रहणम् ॥ २८ बहिरर्थग्रहणाभिमुखत्वात् ॥ २९ नैयायिकेन ॥ ३० चक्षुः प्राप्तार्थप्रकाशकं बहिर्देशावस्थायित्वादित्यस्य ॥ ३१ प्रत्यक्षादिप्रमाणबाधिते पक्षे प्रवर्तमानो हेतुः कालात्ययापदिष्टः ॥ ३२ कर्तृ ॥ ३३ मनसा संयुक्ते आत्मनि सुखादेः समवाय इति ॥

सम्बन्धसम्बन्धमन्तरेण ज्ञानं जनयति, रूपादौ नेत्रादिवत्। अथासौ सम्बन्ध एव न भवति, तर्हि नेत्रादीनां रूपादिभिरप्यसौ न स्यात्–तस्यापि सम्बन्धसम्बन्धत्वात्। तथा चेन्द्रियत्वाविशेषेपि मनोऽप्राप्तार्थप्रकाशकं तथा बाह्येन्द्रियत्वाविशेषेपि चक्षुः किं नेष्यते? अथात्र हेतुभावात्तन्नेष्यते, अन्यत्रापीन्द्रियत्वादिति हेतुः केन वार्यते? ततो मनसि तत्साधने प्रमाणबाधनमन्यत्रापि समानम्। चक्षुश्चात्र धर्मित्वेनोपात्तं गोलकस्वभावं रश्मिरूपं वा? तत्राद्यविकल्पे प्रत्यक्षबाधा–अर्थदेशपरिहारेण शरीरप्रदेशे एवास्योपलम्भात्। अन्यथा तद्रहितत्वेन नयनपक्ष्मप्रदेशस्योपलम्भः स्यात्। अथ रश्मिरूपं चक्षुस्तर्हि धर्मिणोऽसिद्धिः। न खलु रश्मयः प्रत्यक्षतः प्रतीयन्ते–अर्थवत्तत्र तत्स्वरूपाप्रतिभासनात्। अन्यथा विप्रतिपत्त्यभावः स्यात्। न खलु नीले नीलतयानुभूयमाने कश्चिद्विप्रतिपद्यते। किञ्चेन्द्रियार्थसन्निकर्षजं प्रत्यक्षं भवन्मते। न चार्थदेशे विद्यमानैस्तैरपरेन्द्रियस्य सन्निकर्षोस्ति यतस्तत्र प्रत्यक्षमुत्पद्येत–अनवस्थाप्रसङ्गात्। अथानुमानात्तेषां सिद्धिः। किमेतस्मादेवानुमानान्तराद्वा? प्रथमपक्षेऽन्योन्याश्रयः। अनुमानोत्थाने ह्यतस्तत्सिद्धिरस्याश्चानुमानोत्थानमिति। अथानुमानान्तरात्तत्सिद्धिस्तदानवस्था–तत्राप्यनुमानान्तरात्तत्सिद्धिप्रसङ्गात्। यदि च गोलकान्तर्भूतात्तेजोद्रव्याद्बहिर्भूता रश्मयश्चक्षुःशब्दवाच्याः पदार्थप्रकाशकास्तर्हि गोलकस्योन्मीलनमञ्जनादिना संस्कारश्च व्यर्थः स्यात्। अथ गोलकाश्रयपिधाने तेषां विषयं प्रति गमनासम्भवात्तदर्थं तदुन्मीलनम्। घृतादिना च पादयोः संस्कारे तत्संस्कारो भवति। स्वाश्रयगोलकसंस्कारे तु नितरां स्यात्–इत्यस्यापि न वैयर्थ्यम्। तदापि गोलकादिलग्नस्य कामलादेः प्रकाशकत्वं तेषां स्यात्। न खलु प्रदीपकलिकाश्रयास्तद्रश्मयस्तत्कलिकावलग्नं शलाकादिकं न प्रकाशयन्तीति युक्तम्। न चात्र चक्षुषः सम्बन्धो नास्तीत्यभिधातव्यं, यतो व्यक्तिरूपं चक्षुस्तत्रासम्बद्धं शक्तिस्वभावं वा रश्मिरूपं वा? प्रथमपक्षे प्रत्यक्षविरोधः—व्यक्तिरूपचक्षुषः काचकामलादौ सम्बन्धप्रतीतेः। द्वितीयपक्षेपि तच्छक्तिरूपं चक्षुर्व्यक्तिरूपचक्षुषो भिन्नदेशमभिन्नदेशं वा? न तावद्भिन्नदेशम्–तच्छक्तिरूपताव्याघातानुषङ्गान्निराधारत्वप्रसङ्गाच्च। न ह्यन्यशक्तिरन्याधारा युक्ता। तद्देशद्वारेणैवार्थोपलब्धिप्रसङ्गश्च। ततोऽभिन्नदेशं चेत्तत्तत्र सम्बद्धमसम्बद्धं वा?

---

१ मन आत्मनात्मा चाशेषपदार्थं साध्यता मनस्यैवं सम्बध्यते इति ॥ २ इति सिद्धं प्रत्यक्षादिप्रमाणबाधनम् ॥ ३ नेत्रादिना संयुक्ते घटादौ रूपादेःसम्बन्धसम्बन्धो यथा ॥ ४ रूपादिषु नेत्रादीनां सम्बन्धसम्बन्धस्य ॥ ५ अत्र न्मतान्तरेण ॥ ६ मनसि ॥ ७ मनः प्राप्तार्थप्रकाशकमिन्द्रियत्वात्त्वगादिवदिति ॥ ८ प्राप्तार्थप्रकाशकत्वस्य ॥ ९ आगमप्रमाणबाधा ॥ १० चक्षुषि ॥ ११ प्रत्यक्षप्रमाणबाधनम् ॥ १२ अनुमाने ॥ १३ चक्षुः प्राप्तार्थप्रकाशकं बाह्येन्द्रियत्वात् ॥ १४ गोलक ॥ १५ अर्थस्य यथा प्रतिभासनम् ॥ १६ रश्मिस्वरूपं प्रतिभासते चेत् ॥ १७ रश्मिरूपं चक्षुर्गोलकरूपं वेति ॥ १८ रश्मिरूपं चक्षुरित्यस्मिन्पक्षे दूषणान्तरमाह ॥ १९ नैयायिक ॥ २० अपरलोकानां लोचनस्य ॥ २१ अन्यथा=उत्पद्यते चेत्तर्हि ॥ २२ ग्रन्थानवस्था ॥ २३ प्रथमानुमानात् ॥ २४ अनुमानात् ॥ २५ रश्मिरूपं चक्षुस्तैजसत्वात्प्रदीपवदित्यस्मात् ॥ २६ ग्रन्थानवस्था ॥ २७ भवत्प्रक्रियामात्रेण ॥ २८ चम ॥ २९ गोलकान्तर्भूततेजोद्रव्यस्य ॥ ३० स्वस्य रश्मिरूपचक्षुषः ॥ ३१ रश्मिरूपचक्षुषः संस्कारः ॥ ३२ गोलकस्याञ्जनादिना संस्कारस्य ॥ ३३ गोलकरूपम् ॥ ३४ शक्ते ॥ ३५ व्यक्तिरूपचक्षुषः ॥ ३६ शक्तिस्वभावम् ॥ ३७ व्यक्तिरूपे चक्षुषि ॥

सम्बद्धं चेद्बहिरर्थवस्त्वाश्रयं तत्सम्बद्धं चाञ्जनादिकमपि प्रकाशयेत्[2] । असम्बद्धं चेत्कथमाधेयं[3] नाम-अतिप्रसङ्गात् । अथ रश्मिरूपं चक्षुः ? तस्यापि काचकामला-
दिना सम्बन्धोस्त्येव । न खलु स्फटिकादिकूपिकामध्यगतप्रदीपादिरश्मयस्ततो निर्गच्छन्तस्तत्संयोगिनां न सम्बद्धास्तत्प्रकाशका वा न भवन्तीति प्रतीतम् ।
तथा चाञ्जनादेः प्रत्यक्षत एव प्रसिद्धेः परोपदेशस्य दर्पणादेश्च तदर्थस्योपादानमनर्थकमेव स्यात् । किञ्च यदि गोलकान्निःसृत्यार्थेनाभिसम्बध्यार्थं ते प्रकाश-
यन्ति तर्ह्यर्थं प्रति गच्छतां तैजसानां रूपस्पर्शविशेषवतां तेषामुपलम्भः स्यात् । न चैवम् । अतो दृश्यानामनुपलम्भात्तेषामभावः । अथादृश्यास्तेनुद्भूतरूपस्पर्श-
वत्त्वात्-अनुद्भूतरूपस्पर्शस्य तेजोद्रव्यस्याप्रतीतेः । जलहेम्नोर्भासुररूपोष्णस्पर्शयोरनुद्भूतिप्रतीतिरस्तीत्यसम्यक्-उभयानुद्भूतेस्तत्राप्यप्रतिपत्तेः । दृष्टानुसारेण चादृ-
ष्टार्थकल्पना-अन्यथातिप्रसङ्गात् । तथा हि । रात्रौ दिनकरकराः सन्तोपि नोपलभ्यन्तेऽनुद्भूतरूपस्पर्शत्वाच्चक्षूरश्मिवत् । प्रयोगश्च ।-मार्जारादीनां चक्षुषा रूप-
दर्शनं बाह्यालोकपूर्वकम्-तत्त्वाद्दिवाऽस्मदादीनां तद्दर्शनवत् । ननु मार्जारादीनां चाक्षुषं तेजोस्ति । तत एव तत्सिद्धेः किं बाह्यालोककल्पनयेत्यन्यत्रापि समानम् ।
ननु यथा यद्दृश्यते तथा तत्कल्प्यते । दिवास्मदादीनां चाक्षुषं सौर्यं च तेजो विज्ञानकारणं दृश्यते तत्तथैव कल्प्यते । रात्रौ तु चाक्षुषमेव । अतस्तदेव तत्कारणं क-
ल्प्यते । ननु किं मनुष्येषु नायनरश्मीनां दर्शनमस्ति ? अथानुमेयास्ते तर्हि रात्रौ सौर्यरश्मयोप्यनुमेयाः सन्तु । न च रात्रौ तत्सद्भावे नक्तञ्चराणामिव मनुष्या-
णामपि रूपदर्शनप्रसङ्गः—विचित्रशक्तित्वाद्भावानाम् । कथमन्यथोलूकादयो दिवा न पश्यन्ति । यथा चात्रालोकः प्रतिबन्धकस्तथान्यत्र तमः । ततो यथानुपल-
म्भान्न सन्ति रात्रौ भास्करकरास्तथान्यदा नायनकरा इति । एतेन दूरस्थितकुड्यादिप्रतिफलितानां प्रदीपरश्मीनामन्तराले सतामप्यनुपलम्भसम्भवात् तै-
रनुपलम्भो व्यभिचारीत्यपि निरस्तम्—आदित्यरश्मीनामपि रात्रावभावासिद्धिप्रसङ्गात् । अथोच्यते ।-चक्षुः स्वरश्मिसम्बद्धार्थप्रकाशकम्-तैजसत्वात्प्रदीपवत् ।
ननु किमनेन चक्षुषो रश्मयः साध्यन्तेऽन्यतः सिद्धानां तेषां ग्राह्यार्थसम्बन्धो वा ? प्रथमपक्षे पक्षस्य प्रत्यक्षबाधा-नरनारीनयनानां प्रभासुररश्मिरहितानां प्रत्य-

---

१ शक्तिरूपे [illegible] ॥ २ [illegible] विशेषात् ॥ ३ शक्तिरूपम् ॥ ४ सद्यस्य विन्ध्यावेयता स्यादसम्बन्धत्वाविशेषात् ॥ ५ तृतीयपक्षे ॥ ६ काचादि ॥ ७ आदिपदेन रत्नादि ॥ ८ स्फटि-
कादिकूपि[illegible] ॥ ९ [illegible] ॥ १० [illegible] ॥ ११ सम्बन्धं गति ॥ १२ अञ्जनादिपरिज्ञानार्थम् ॥ १३ रश्मय ॥ १४ भासुर॥ १५ उष्ण ॥ १६ रश्मीनाम् ॥ १७ इति चेन्नेत्यर्थः ॥ १८ अप्रतीतिं परिहरति पर ॥
१९ [illegible] ॥ २० [illegible] उभयानुद्भूतिर्न दृष्टा तथापि चक्षूरश्मिष्वभयानुद्भूतिः कल्प्यते इत्युक्ते आह ॥ २१ अदृष्टानुसारेणादृष्टार्थकल्पना यदि स्यात् ॥ २२ रात्रौ
२३ नरनेत्रे ॥ २४ [illegible] बाह्यालोककल्पनया ॥ २५ कारणत्वेन ॥ २६ तेज ॥ २७ कारणत्वेन ॥ २८ मार्जारादीनाम् ॥ २९ रूपदर्शनकारणम् ॥ ३० प्रतीति ॥ ३१ येनैव
परिहार [illegible] ॥ ३२ [illegible] ॥ ३३ [illegible] ॥ ३४ [illegible] रात्रौ विद्यमाना सौर्यरश्मयो नक्तञ्चराणां रूपज्ञानहेतवो न मनुष्याणामिति ॥ ३५ सौर्यरश्मीनाम् ॥ ३६ भावाना
[illegible] ॥ ३७ [illegible] ॥ ३८ [illegible] ॥ ३९ [illegible] ॥ ४० [illegible] ॥ ४१ रात्रौ ॥ ४२ नराणां प्रतिबन्धकम् ॥ ४३ दिवा ॥ ४४ अपि न सन्ति ॥ ४५ रात्रौ दिनकरकराणामभावसाधनपरेण ग्रन्थेन ॥
४६ प्रतिबिम्बितानाम ॥ ४७ [illegible] ॥ ४८ [illegible] ॥ ४९ [illegible] ॥ ५० [illegible] ॥ ५१ अनुमानेन ॥ ५२ प्रमाणात् ॥

तीति विशेषणेप्यालोकार्थसन्निकर्षेण चक्षूरूपयोः संयुक्तसमवायसम्बन्धेन चानेकान्तः । द्रव्यत्वे करणत्वे च सति तत्प्रकाशकत्वादिति विशेषणेपि चन्द्रादिनाने-
कान्तः । किञ्च द्रव्यं रूपप्रकाशकं भासुररूपमभासुररूपं वा ? प्रथमपक्षे उष्णोदकसंसृष्टमपि तत् तत्प्रकाशकं स्यात् । अनुद्भूतरूपत्वान्नेति चेन्नायनरश्मीनामप्यत
एव तन्माभूत् । तथा दृष्टत्वादित्यप्यनुत्तरम्–संशयात् । न हि तत्र निश्चयोस्ति ते तत्प्रकाशका, न गोलकमिति—अनुद्भूतरूपस्य तेजोद्रव्यस्य दृष्टा-
न्तेपि रूपप्रकाशकत्वाप्रतीतेः । तथा च न चक्षू रूपप्रकाशकमनुद्भूतरूपत्वाज्जलसंयुक्तानलवत् । द्वितीयपक्षेप्युष्णोदकतेजोरूपं तत्प्रकाशकं स्यात् ।
न हि तत्तत्र नष्टम्–अनुद्भूतमित्यभ्युपगमात् । उद्भूतं तत्तत्प्रकाशकमित्यभ्युपगमे रूपप्रकाशस्तदन्वयव्यतिरेकानुविधायी तस्यैव कार्यो न द्रव्यस्य । न
खलु देवदत्तं प्रति पश्वादीनामागमनं तद्गुणान्वयव्यतिरेकानुविधायि देवदत्तस्य कार्यम् । ततो द्रव्यत्वे सतीति विशेषणासिद्धिः । किञ्च सम्बन्धादेरिवाऽतैजस-
स्यापि द्रव्यरूपकरणस्य कस्यचिद्रूपज्ञानजनकत्वं किन्न स्यात्?–विपक्षव्यावृत्तेः सन्दिग्धत्वादतैजसत्वे रूपज्ञानजनकत्वस्याविरोधात् । तदेवं तैजसत्वासिद्धेर्नातश्चक्षुषो
रश्मिवत्त्वसिद्धिः । अथान्यतः सिद्धानां रश्मीना ग्राह्यार्थसम्बन्धोनेन साध्यते, न–अन्यतः कुतश्चित्तेषामसिद्धेः प्रत्यक्षादेस्तत्साधकत्वेन प्राक्प्रतिषिद्धत्वात् ।
तथा चेदमयुक्तं 'धत्तूरकपुष्पवदादौ सूक्ष्माणामप्यन्ते महत्त्वं तद्रश्मीनां महापर्वतादिप्रकाशकत्वान्यथानुपपत्तेः' इति–स्वरूपतोऽसिद्धानां तेषां महत्त्वादिधर्मस्य श्रद्धा-
मात्रगम्यत्वात् । ततो रश्मिरूपचक्षुषोऽप्रसिद्धेर्गोलकस्य च प्राप्यकारित्वे प्रत्यक्षबाधितत्वात्कस्य प्राप्तार्थप्रकाशकत्वं साध्येत? यदि च स्पर्शनादौ प्राप्यकारित्वोपल-
म्भाच्चक्षुषि तत्साध्येत तर्हि हस्तादीनां प्राप्तानामेवान्याकर्षकत्वोपलम्भादयस्कान्तादीनां तथा लोहाकर्षकत्वं किन्न साध्येत? प्रमाणबाधान्यत्रापि । अथार्थेन चक्षु-
षोऽसम्बन्धे कथं तत्र ज्ञानोदयः? क एवमाह तत्र ज्ञानोदय इति?–आत्मनि ज्ञानोदयाभ्युपगमात् । न चाप्राप्यकारित्वे चक्षुषः सकृत्सर्वार्थप्रकाशकत्वप्रसङ्गः–
प्रतिनियतशक्तित्वाद्भावानाम् । य एव यत्र योग्यः स एव तत्करोतीत्यनन्तरमेव वक्ष्यते । कार्यकारणयोरत्यन्तभेदेऽर्थान्तरत्वाविशेषात्सर्वमेकस्मात्कुतो न जाये-

---

१ सन्निकर्षा संयुक्तसमवायादय करण भवन्ति न तु तैजसम् ॥ २ चक्षुपा संयुक्ते घटे रूपस्य समवायसम्बन्ध इत्यत सन्निकर्षोपि संयुक्तसमवाय एवात्र ॥ ३ तेजोद्रव्ये सन्निकर्षादयो गुणास्तद्व्यवच्छेदार्थं द्रव्यत्वे सतीति विशेषणम् ॥ ४ चक्षुस्तैजस द्रव्यत्वे करणत्वे च सति रूपादीना मध्ये रूपस्यैव प्रकाशकत्वात् ॥ ५ रूप ॥ ६ चन्द्रे तैजसत्वाभावात् ॥ ७ तेजोद्रव्यम् ॥ ८ भासुररूपस्य ॥ ९ रूपप्रकाशकत्वम् ॥ १० अनुद्भूतरूपस्यापि तेजोद्रव्यस्य रूपप्रकाशकत्वेन ॥ ११ तेजोद्रव्ये ॥ १२ रूप ॥ १३ भासुर ॥ १४ उष्णोदकगततेजोरूपम् ॥ १५ रूप ॥ १६ परेण ॥ १७ रूप ॥ १८ उद्भूततेजोरूपस्य ॥ १९ गोलकगतोद्भूततेजोरूपस्य ॥ २० तेजोद्रव्यस्य ॥ २१ मन्त्रतन्त्रादि ॥ २२ किन्तु देवदत्तगुणस्यैव कार्यम् ॥ २३ सन्निकर्षादि ॥ २४ आदिपदेन संयोगस्य चन्द्रादेश्च ॥ २५ गोलकरूपस्य ॥ २६ विपक्षादतैजसाज्जलादे ॥ २७ रूपज्ञानजनकत्वहेतो ॥ २८ यत्तैजस न भवति तन्न रूपप्रकाशकमिति ॥ २९ जलादीनाम् ॥ ३० तैजसत्वादिति हेतो ॥ ३१ द्वितीयपक्ष ॥ ३२ इति चेन्न ॥ ३३ प्रमाणात् ॥ ३४ अप्राप्ताकर्षकाणाम् ॥ ३५ प्राप्तत्वप्रकारेण ॥ ३६ प्रत्यक्षबाधा ॥ ३७ चक्षुष्यपि ॥ ३८ जैने ॥ ३९ चक्षुरादीनाम् ॥ ४० कुत एतदित्याह ॥ ४१ कार्ये ॥ ४२ कार्यकारणभावनियमे न योग्यता कारण किन्त्वन्यदेव कारणमित्युक्ते आह ॥ ४३ कार्यम् ॥ ४४ कारणात् ॥ ४५ भिन्नत्वाविशेषात् ॥

तेति रश्मयो वा लोकान्तं कुतो न गच्छन्तीति चोद्ये[1] भवतोपि योग्यतैव शरणम् । किञ्च चक्षू रूपं प्रकाशयति संयुक्तसमवायसम्बन्धात् । स चास्य गन्धादावपि समान इति तमपि प्रकाशयेत् । तथा चेन्द्रियान्तरवैयर्थ्यम् । योग्यताऽभावात्तदप्रकाशने सर्वत्र[3] सैवास्तु । किमन्तर्गडुना सम्बन्धेनँ । यदि चायमेकान्तश्चक्षुषा सम्बद्धस्यैव ग्रहणमिति कथं तर्हि स्फटिकाद्यन्तरितार्थग्रहणम्?–तद्रश्मीनां[6] तं प्रति गच्छतां स्फटिकाद्यवयविना प्रतिबन्धात् । तैस्तस्य नाशितत्वाददोषे तद्व्यवहितार्थोपलम्भसमये स्फटिकादेरुपलम्भो नं स्यात् । तस्योपरि स्थितद्रव्यस्य च पातप्रसक्तिः–आधारभूतस्यावयविनो नाशात् । न हि परमाणवो दृश्याः कस्यचिदाधारा वा–अवयविकल्पनानर्थक्यप्रसङ्गात् । अवयव्यन्तरस्योत्पत्तेरदोषे तदा तद्व्यवहितार्थानुपलम्भप्रसङ्गः । न चैवम्–युगपत्तयोर्निरन्तरमुपलम्भात्[12] । अथाशु व्यूहान्तरोत्पत्तेर्निरन्तरस्फटिकादिविभ्रमः । तदभावस्याप्याशु प्रवृत्तेरभावविभ्रमः किन्न स्यात्? भावपक्षस्य बलीयस्त्वमित्ययुक्तं[13] भावाभावयोः परस्परं स्वकार्यकरणं प्रत्यविशेषात् । कथं च समलजलान्तरितार्थस्योपलम्भो न स्यात् । ये हि तद्रश्मयः कठिनमतितीक्ष्णलोहाऽभेद्यं स्फटिकादिकं भिन्दन्ति तेषां जलेऽतिद्रवस्वभावे काऽक्षमा? अथ नीरेण नाशितत्वान्न ते तद्भिन्दन्ति तर्हि स्वच्छजलव्यवस्थितस्याप्यनुपलम्भप्रसङ्गः । योग्यताङ्गीकरणे सर्वं सुस्थम् । ततः प्रोक्तदोषपरिहारमिच्छता प्रतीतिसिद्धमप्राप्यकारित्वं चक्षुषोऽभ्युपगन्तव्यम् । तथा हि 'चक्षुरप्राप्तार्थप्रकाशकमत्यासन्नार्थाप्रकाशकत्वात् । यत्पुनः प्राप्तार्थप्रकाशकं तदत्यासन्नार्थप्रकाशकं दृष्टं यथा श्रोत्रादि । अत्यासन्नार्थाप्रकाशकं च चक्षुस्तस्मादप्राप्तार्थप्रकाशकम्,' इति । न चायमसिद्धो हेतुः–काचकामलाद्यत्यासन्नार्थाप्रकाशकत्वस्य चक्षुषि प्रागेव प्रसाधितत्वात् । ननु साध्याविशिष्टोयं हेतुः[21] 'पर्युदासप्रतिषेधे[22] हि यदेवास्याप्राप्यकारित्वं तदेवात्यासन्नार्थाप्रकाशकत्वम्' इति । प्रसज्यप्रतिषेधस्तु[23] जैनैर्नाभ्युपगम्यते–अपसिद्धान्तप्रसङ्गादित्यप्यनुपपन्नम्–प्रसङ्गसाधनत्वादेतस्य । श्रोत्रादौ हि प्राप्यकारित्वात्यासन्नार्थप्रकाशकत्वयोर्व्याप्यव्यापकभावसिद्धौ सत्यां परस्य व्यापकाभावेऽत्यासन्नार्थाप्रकाशकत्वलक्षणयाऽनिष्टस्य प्राप्यकारित्वलक्षणव्याप्याभावस्यापादानमात्रमेवानेन[31] विधीयते । इत्युक्तदोषाप्रसङ्गः । नाप्यनैकान्तिको विरुद्धो वा–विपक्षस्यैकदेशे[33] तत्रैव वाऽस्याऽप्रवृत्तेः । न च स्पर्शनेन प्राप्यकारिणाप्यत्यासन्नस्याभ्यन्तरशरीरावयवस्पर्शस्याप्रकाशनादनेकान्तोऽस्य–तत्कारणत्वेन[34]

---

१ जैनै ॥ २ नैयायिकस्य ॥ ३ कार्यनियमे ॥ ४ सन्निकर्षेण ॥ ५ नियम ॥ ६ तस्य चक्षुष ॥ ७ नष्टत्वात् ॥ ८ कलशादे ॥ ९ अन्यथा ॥ १० एकस्य नाशेऽपरस्योत्पत्ते ॥ ११ स्फटिकस्फटिकान्तरितार्थयो ॥ १२ स्कन्धान्तरस्य ॥ १३ बलीयस्त्वादित्यर्थ ॥ १४ लघीयस्त्वस्य ॥ १५ समलजले शक्तिर्नास्ति स्वच्छजलेस्ति तर्हि योग्यतैव कारणम् ॥ १६ अप्राप्तार्थप्रकाशकत्वेपि न सकलार्थग्राहक चक्षु । यत्र योग्यता त प्रकाशयति यत्र योग्यता नास्ति त न प्रकाशयतीति ॥ १७ नैयायिकेन ॥ १८ कामलादि ॥ १९ शब्दादिक प्रकाशयत् ॥ २० आदिपदेनाञ्जनादि ॥ २१ साध्यसम इत्यर्थ ॥ २२ हेतुस्थितनञो विचार ॥ २३ अत्यासन्नार्थ न प्रकाशयतीति ॥ २४ सर्वथा तुच्छाभाव ॥ २५ अन्यथा ॥ २६ (जैनो वक्ति) परेष्टाऽनिष्टापादन प्रसङ्गसाधनम् ॥ २७ अनुमानस्य ॥ २८ नैयायिकस्य ॥ २९ चक्षुर्भीलव्याह्रियते ॥ ३० चक्षुषा ॥ ३१ अनुमानेन ॥ ३२ प्राप्यकारित्वस्य ॥ ३३ हेतो ॥ ३४ तस्य उपादानकारणत्वेन, न तु निमित्तकारणत्वेन ॥

तदविषयत्वात् स्वकारणव्यतिरिक्तो हि स्पर्शादिः स्पर्शनादीन्द्रियाणां विषयः—तत्रैवाभिमुख्यसम्भवेनामीषां प्रकाशनयोग्यतोपपत्तेः । कथमन्यथै[1]कशरीरप्रदेशान्तरगतस्पर्शनेन तत्प्रदेशान्तरगतः स्पर्शः प्रकाश्येत? न च कामलादयोऽञ्जनादयो वा चक्षुषः कारणं येन तेषामप्यनेन न्यायेन प्रकाशनं न स्यात्—स्वसामग्रीतस्तत्सन्निधानात्प्रागेवास्योत्पन्नत्वात् । नापि कालात्ययापदिष्टोयं[2] प्रत्यक्षस्य पक्षाबाधकत्त्वेन प्रागेव समर्थनादागमस्य च तद्बाधकस्यासम्भवात् । नापि सत्प्रतिपक्षः—विपरीतार्थोपस्थापकानुमानानां प्रागेव प्रतिध्वस्तत्वादिति । तथा[3] चक्षुर्गत्वा नाऽर्थेनाभिसम्बद्ध्यते—इन्द्रियत्वात्स्पर्शनादीन्द्रियवदित्यनुमानाच्चास्याप्राप्यकारित्वसिद्धिः । अर्थस्य च तद्देशागमने प्रत्यक्षविरोध इति ।

तच्चोक्तप्रकारं प्रत्यक्षं मुख्यसांव्यवहारिकप्रत्यक्षप्रकारेण द्विप्रकारम् । तत्र सांव्यवहारिकप्रत्यक्षप्रकारस्योत्पत्तिकारणस्वरूपे प्रकाशयति ।

**इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकम्** । विशदं प्रत्यक्षमित्यनुवर्त्तते । तत्र समीचीनोऽबाधितः प्रवृत्तिनिवृत्तिलक्षणो[4] व्यवहारः संव्यवहारः । स प्रयोजनमस्येति सांव्यवहारिकं प्रत्यक्षम् । नन्वेवंभूतमनुमानमप्यत्र[5] सम्भवतीति तदपि सांव्यवहारिकं प्रत्यक्षं प्राप्नोतीत्याशङ्कापनोदार्थम् "इन्द्रियानिन्द्रियनिमित्तं देशत" इत्याह । देशतो विशदं यत्तत्प्रयोजनं ज्ञानं तत्सांव्यवहारिकं प्रत्यक्षमित्युच्यते नान्यदित्यनेन तत्स्वरूपम्, इन्द्रियानिन्द्रियनिमित्तमित्यनेन पुनस्तदुत्पत्तिकारणं प्रकाशयति[6] । तत्रेन्द्रियं[7] द्रव्यभावेन्द्रियभेदाद्द्वेधा । तत्र द्रव्येन्द्रियं गोलकादिपरिणामविशेषपरिणतरूपरसगन्धस्पर्शवत्पुद्गलात्मकम्[8]—पृथिव्यादीनामत्यन्तभिन्नजातीयत्वेन द्रव्यान्तरत्वासिद्धितस्तस्य प्रत्येकं तदारब्धत्वासिद्धेः । द्रव्यान्तरत्वासिद्धिश्च तेषां विषयपरिच्छेदे प्रसाधयिष्यते । भावेन्द्रियं तु लब्ध्युपयोगात्मकम् । तत्राऽऽवरणक्षयोपशमप्राप्तिरूपार्थग्रहणशक्तिर्लब्धिः—तदभावे सतोप्यर्थस्याप्रकाशनात् । अन्यथातिप्रसङ्गः[12] । उपयोगस्तु रूपादिविषयग्रहणव्यापारः[13] । विषयान्तरासक्ते चेतसि सन्निहितस्यापि विषयस्याग्रहणात्तत्सिद्धिः । एवं मनोपि द्वेधा द्रष्टव्यम् । ततः पृथिव्यप्तेजोवायुभ्यो घ्राणरसनचक्षुःस्पर्शनेन्द्रियभाव[14] इति प्रत्याख्यातम्—पृथिव्यादीनामन्योन्यमेकान्तेन[15] द्रव्यान्तरत्वासिद्धेः । अन्यथा जलादेर्मुक्ताफलादिपरिणामाभावप्रसक्तिरात्मादिवत् । न चैवम्—प्रत्यक्षादिविरोधात् । अथ मतं 'पार्थिवं घ्राणं रूपादिषु सन्निहितेषु गन्धस्यैवाभिव्यञ्जकत्वान्नागकर्णिकाविमर्दककरतलवत्' तदप्यसङ्गतम्—हेतोः सूर्यरश्मिभिरुदकसेकेन चानेकान्तात्[17] । दृश्यते हि तैलाभ्यक्तस्यादित्यमरीचिकाभिर्गन्धाभिव्यक्तिर्भूमेस्तूदकसेकेनेति । आप्यं रसनं रूपादिषु सन्निहितेषु रसस्यैवाभिव्यञ्ज-

---

१ स्वकारणव्यतिरिक्ते स्पर्शादावाभिमुख्य नास्ति यदि ॥ २ पूर्वानुमानप्रकारेण ॥ ३ स्वेष्टानिष्टयोरर्थयो ॥ ४ लोके ॥ ५ अनुमानादि ॥ ६ आचार्य ॥ ७ इन्द्रियानिन्द्रिययोर्मध्ये ॥ ८ सर्वाङ्गगतत्वग्, जिह्वा, नासा, गोलकपक्ष्मपुट, कर्णशष्कुलीति पञ्चसत्यात्मकम् ॥ ९ सर्वथा ॥ १० चतुर्थे ॥ ११ तदभावेप्यर्थप्रकाशन चेत् ॥ १२ पिशाचपरमाण्वादेरपि ग्रहणप्रसङ्ग ॥ १३ विषय प्रत्यभिमुखता ॥ १४ नैयायिकमतम् ॥ १५ सर्वथा ॥ १६ आदिपदेन चन्द्रकान्तादेश्च ॥ १७ पार्थिवत्वाभावात् ॥ १८ तु ॥

कत्वाल्लालावदित्यत्रापि हेतोर्[1]लवणेन व्यभिचारः—तस्यानाप्यत्वेपि रसाभिव्यञ्जकत्वप्रसिद्धेः । चक्षुस्तैजसं रूपादिषु सन्निहितेषु रूपस्यैवाभिव्यञ्जकत्वात्प्रदीपवदित्यत्रापि हेतोर्माणिक्याद्युद्द्योतितेनानेकान्तः । वायव्यं स्पर्शनं रूपादिषु सन्निहितेषु स्पर्शस्यैवाभिव्यञ्जकत्वात्तोये[2]शीतस्पर्शव्यञ्जकवाय्व[3]ऽवयविवदित्यत्रापि कर्पूरादि[4]ना सलिल[5]शीतस्पर्शव्यञ्जकेनानेकान्त[6]ः । पृथिव्यप्तेजःस्पर्शाभिव्यञ्जकत्वाच्चास्य पृथिव्यादिकार्यत्वानुषङ्गो, वायुस्पर्शाभिव्यञ्जकत्वाद्वायुकार्यत्ववत् । चक्षुषश्च तेजोरूपाभिव्यञ्जकत्वात्तेजःकार्यत्ववत्पृथिव्यप्समवायिरूपव्यञ्जकत्वात्पृथिव्यप्कार्यत्वप्रसङ्गः । रसनस्य चाप्यरसाभिव्यञ्जकत्वादप्कार्यत्ववत्पृथिवीरसाभिव्यञ्जकत्वात्पृथिवीकार्यत्वप्रसङ्गः । नाभसं श्रोत्रं रूपादिषु सन्निहितेषु शब्दस्यैवाभिव्यञ्जकत्वादिति चाऽसाम्प्रतम्—शब्दे नभोगुणत्वस्याग्रे प्रतिषेधात् । ततश्चेदमप्ययुक्तं "शब्दः स्वसमानजातीयविशेषगुणवतेन्द्रियेण[8] गृह्यते सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वाद्बाह्यैकेन्द्रियप्रत्यक्षत्वे सत्यऽनात्मविशेषगुणत्वाद्वा रूपादिवत्" इति । ततो नेन्द्रियाणां प्रतिनियतभूतकार्यत्वं व्यवतिष्ठते—प्रमाणाभावात् । प्रतिनियतेन्द्रिययोग्यपुद्गलारब्धत्वं तु द्रव्येन्द्रियाणां प्रतिनियतभावेन्द्रियोप[9]करणभूतत्वान्यथानुपपत्तेर्घटते इति प्रेक्षादक्षैः प्रतिपत्तव्यम् ।

ननु चेन्द्रियानिन्द्रियनिमित्तं तदित्यसाम्प्रतम्—आत्मार्थालोकादे[12]रपि तत्कारणतया[13]त्राभिधानार्हत्वात् । तन्न—आत्मनः[15] समनन्तर[16]प्रत्ययस्य वा प्रत्ययान्तरे[17]ऽप्यविशेषात् । अत्रा[18]नभिधानमसाधारणकारणस्यैव निरूपयितुमभिप्रेतत्वात् । सन्निकर्षस्य चाऽव्यापकत्वादसाधकतमत्वाच्चानभिधानम् । अर्थालोकयोस्तदसाधारणकारणत्वादत्रा[23]भिधानं तर्हि कर्तव्यमित्यप्यसत्—तयोर्ज्ञानकारणत्वस्यैवासिद्धेः । तदाह ।—

---

१ तैजसत्वाभावात् ॥ २ तोयगत ॥ ३ यस ॥ ४ पार्थिवेन ॥ ५ सलिलगत ॥ ६ वायव्याभावात् ॥ ७ स्पर्शनेन्द्रियस्य ॥ ८ शब्दो विशेषगुणवतेन्द्रियेण गृह्यते इत्युच्यमाने सिद्धसाध्यता भविष्यति । न हि जैनेनापि रूपलक्षणगुणवता श्रोत्रेण शब्दो न गृह्यते इत्यभ्युपगम्यते । तद्व्यवच्छेदार्थं समानजातीयविशेषगुणवतेन्द्रियेण गृह्यते इत्युक्तम् । तथापि स्तम्भगतरूपेण समानजातीयरूपलक्षणविशेषगुणवतेन्द्रियेण शब्दो गृह्यत इत्यभ्युपगमात्सिद्धसाध्यता । तद्व्युदासार्थं स्वेन शब्दलक्षणेन समानजातीयविशेषगुणवतेन्द्रियेण गृह्यत इत्युक्तम् । साध्यविशेषणसाफल्यानन्तरं हेतुविशेषणसाफल्यमुच्यते । इन्द्रियग्राह्यत्वादित्युच्यमाने घटेनानेकान्त । घटो हि इन्द्रियग्राह्यो भवति न च स्वसमानजातीयविशेषगुणवतेन्द्रियेण गृह्यते—घटस्य द्रव्यत्वेन तत्समानजातीयस्य गुणस्याभावात् । तेनानेकान्तव्युदासार्थमेकेन्द्रियग्राह्यत्वादित्युक्तम् । न हि घटस्यैकेन्द्रियग्राह्यत्वं स्पर्शनादीन्द्रियेणापि ग्रहणात् । एकेन्द्रियग्राह्यत्वादित्युच्यमाने आत्मनानेकान्त । आत्मा हि मनोलक्षणैकेन्द्रियग्राह्यो भवति, न च समानजातीयविशेषगुणवतेन्द्रियेण गृह्यते—आत्मनो द्रव्यत्वेन तत्समानजातीयस्य गुणस्य मनस्यभावात् । तत्परिहारार्थं बाह्यैकेन्द्रियग्राह्यत्वादित्युक्तम् । तथा च रूपत्वादिनानेकान्त । रूपत्वादिकं बाह्यैकेन्द्रियग्राह्यं भवति, न च स्वसमानजातीयविशेषगुणवतेन्द्रियेण गृह्यते—रूपत्वस्य सामान्यभावेन तत्सजातीयगुणस्यैवासम्भवात् । तत्परिहारार्थं सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वादित्युक्तम् । न च रूपत्वसामान्यं सामान्यवद्भवति—निस्सामान्यानि सामान्यानीति वचनात् ॥ ९ न चैकपुद्गलजन्यत्वेनेन्द्रियस्य योग्यपुद्गलारब्धत्वात् ॥ १० सहाय ॥ ११ साव्यवहारिकम् ॥ १२ आदिपदेन सन्निकर्षादे ॥ १३ प्रत्यक्ष ॥ १४ सूत्रे ॥ १५ कारणरूपस्य ॥ १६ पूर्वम् ॥ १७ उपादानत्वेनात्मनासदृश ॥ १८ परोक्षज्ञाने ॥ १९ सूत्रे ॥ २० विशेष ॥ २१ चक्षुषः प्राप्यकारित्वनिराकरणात् ॥ २२ साव्यवहारिकस्य ॥ २३ सूत्रे ॥ २४ जैने ॥

नार्थाऽऽलोकौ कारणं परिच्छेद्यत्वात्तमोवत् । प्रसिद्धं हि तमसो विज्ञानप्रतिबन्धकत्वेनातत्कारणस्यापि परिच्छेद्यत्वम् । ननु ज्ञानानुत्पत्तिव्यतिरेकेणान्यस्य तमसोऽभावात्कस्य दृष्टान्ततेत्यप्यसङ्गतं तस्यार्थान्तरभूतस्यालोकस्येवात्रैवानन्तरं समर्थयिष्यमाणत्वात् । ननु परिच्छेद्यत्वं च स्यात्तयोस्तत्कारणत्वं च—अविरोधादित्यप्यपेशलम्—तत्कारणत्वे तयोश्चक्षुरादिवदपरिच्छेद्यत्वविरोधात् । किञ्चार्थकार्यतया ज्ञानं प्रत्यक्षतः प्रतीयते प्रमाणान्तराद्वा ? प्रत्यक्षतश्चेत्किं तत एव प्रत्यक्षान्तराद्वा ? न तावत्तत एवानेनार्थमात्रस्यैवानुभवात् । तद्धेतुत्वविशिष्टार्थानुभवे वा विवादो न स्यान्नीलत्वादिवत् । न खलु प्रमाणप्रतिपन्ने वस्तुरूपेऽसौ दृष्टो विरोधात् । न हि कुम्भकारादेर्घटादिहेतुत्वेनानुभवे सोस्ति । तन्न तदेवात्मनोऽर्थकार्यतां प्रतिपद्यते । नापि प्रत्यक्षान्तरं तेनाप्यर्थमात्रस्यैवानुभवात् । अन्यथोक्तदोषानुषङ्गः । ज्ञानान्तरस्यानेनाग्रहणाच्चैकार्थसमवेतानन्तरज्ञानग्राह्यमर्थज्ञानमित्यभ्युपगमेप्यनेनार्थाग्रहणम् । न चोभयविषयं ज्ञानमस्ति यतस्तत्प्रतिपत्तिः । अथ प्रमाणान्तरात्तस्यार्थकार्यता प्रतीयते । तत्किं ज्ञानविषयमर्थविषयमुभयविषयं वा स्यात्? तत्राद्यविकल्पद्वये तयोः कार्यकारणभावाप्रतीतिः—एकैकविषयज्ञानग्राह्यत्वात्कुम्भकारघटयोरन्यतरविषयज्ञानग्राह्यत्वे तद्भावाप्रतीतिवत् । नाप्युभयविषयज्ञानात्तत्प्रतीतिः—तद्विषयज्ञानस्यास्मादृशां भवतोऽनभ्युपगमात् । न खलु ज्ञाने प्रवृत्तं ज्ञानमर्थेपि प्रवर्त्ततेऽर्थे वा प्रवृत्तं ज्ञाने इत्यभ्युपगमो भवतः । अभ्युपगमे वा प्रमाणान्तरत्वप्रसक्तिरिति व्याप्तिज्ञानविचारे विचारयिष्यते ।

अथानुमानात्तत्कार्यतावसायः । तथा हि । 'अर्थालोककार्यं विज्ञानं तदन्वयव्यतिरेकानुविधानात् । यद्यस्यान्वयव्यतिरेकावनुविधत्ते तत्तस्य कार्यम् । यथाग्नेर्धूमः । अन्वयव्यतिरेकावनुविधत्ते चार्थालोकयोर्ज्ञानम्, इति । न चात्रासिद्धो हेतुस्तत्सद्भावे सत्येवास्य भावादभावे चाभावात् । इत्याशङ्क्याह ।—

तदन्वयव्यतिरेकानुविधानाभावाच्च । न केवलं परिच्छेद्यत्वात्तयोस्तदकारणताऽपि तु ज्ञानस्य तदन्वयव्यतिरेकानुविधानाभावाच्च नियमेन हि यद्यस्यान्वयव्यतिरेकावनुकरोति तत्तस्य कार्यम् । यथाग्नेर्धूमः । न चानयोरन्वयव्यतिरेकौ ज्ञानेनानुक्रियेते । अत्रोभयप्रसिद्धदृष्टान्तमाह ।

केशोण्डुकज्ञानवन्नक्तञ्चरज्ञानवच्च । कामलाद्युपहतचक्षुषो हि न केशोण्डुकज्ञानेऽर्थः कारणत्वेन व्याप्रियते । तत्र हि केशोण्डुकस्य व्यापारो नयनपक्ष्मादेर्वा तत्केशानां वा कामलादेर्वा ?—गत्यन्तराभावात् । न तावदाद्यविकल्पः । न खलु तज्ज्ञानं केशोण्डुकलक्षणेऽर्थे सत्येव भवति भ्रमाभावप्रसङ्गात् । नयनपक्ष्मादेस्तत्का-

---

१ ज्ञानस्य २ ज्ञेयत्वम् ॥ ३ ग्रन्थे ॥ ४ तत्र ज्ञाने ॥ ५ घटं विषयीकरोति यत्प्रत्यक्षम् ॥ ६ ज्ञान ॥ ७ आद्यप्रत्यक्षम् ॥ ८ स्वस्य ॥ ९ जानाति ॥ १० विचारलक्षणम् ॥ ११ अर्थज्ञानयोरनुभवश्चेत्प्रत्यक्षान्तरेण ॥ १२ प्रथमप्रत्यक्षज्ञानस्य १३ द्वितीयज्ञानापेक्षया ॥ १४ द्वितीयज्ञानेन ॥ १५ आत्मलक्षण ॥ १६ द्वितीय ॥ १७ परेण ॥ १८ अर्थकार्यतया ज्ञानस्य ॥ १९ अपि तु न कुतोपि ॥ २० ज्ञानस्य ॥ २१ वस ॥ २२ अर्थज्ञानयोः ॥ २३ प्रमाणान्तरात् ॥ २४ ज्ञानस्यार्थकार्यतायाः ॥ २५ भिन्नभिन्नज्ञानाम् ॥ २६ नैयायिकेन ॥ २७ उभयविषयज्ञानस्य ॥ ॥ २८ उभयविषयज्ञानस्य पञ्चमस्य ॥ २९ निश्चय ॥ ३० अनुकरोति ॥ ३१ अर्थालोक ॥ ३२ अर्थालोकयोर्ज्ञानं प्रति कारणत्वे साध्ये ॥ ३३ अर्थाभावे ( केशोण्डुकशब्द [illegible] ) ॥ ३४ आलोकाभावे ॥ ३५ भवति चेत्तर्हि ॥ ३६ केशोण्डुकज्ञानस्य ॥

रणत्वे तस्यैव प्रतिभासप्रसङ्गाद्गगनतलावलम्बितया पुरःस्थतया केशोण्डुकाकारतया च प्रतिभासो न स्यात्। न ह्यन्यदन्यत्रान्यथा प्रत्येतुं शक्यम्। अथ नयनकेशा एव तत्र तथाऽसन्तोपि प्रतिभासन्ते तर्हि तद्रहितस्य कामलिनोपि तत्प्रतिभासाभावः स्यात्। किञ्चासौ तद्देशे एव प्रतिभासो भवेन्न पुनर्देशान्तरे। न खलु स्थाणुनिबन्धना पुरुषभ्रान्तिस्तद्देशादन्यत्र दृष्टा। कथं च तद्देशता तदाकारता चाऽसती तज्ज्ञानं जनयेद्यतो ग्राह्या स्यात्। अथ भ्रान्तिवशात्तत्केशा एव तत्र तथा तज्ज्ञानं जनयन्ति, अस्माकमपि तर्हि चक्षुर्मनसी रूपज्ञानमुत्पादयेते इति समानम्। यथैव ह्यन्यविषयजनितं ज्ञानमन्यविषयस्य ग्राहकं तथान्यकारणजनितमपि स्यात्। अथ कामलादय एव तज्ज्ञानस्य हेतवः। तेभ्यश्चोत्पन्नं तदसदेव केशादिकं प्रतिपद्यते तर्हि निर्मललोचनमनोमात्रकारणादुत्पद्यमानं ज्ञानं सदेव वस्तु विषयीकरोतीति किन्नेष्यते? तत्कथमर्थकार्यता ज्ञानस्य?—अनेन व्यभिचारात् संशयज्ञानेन च। न हि तदऽर्थे सत्येव भवति—अभ्रान्तत्वानुषङ्गात् तद्विषयभूतस्य स्थाणुपुरुषलक्षणार्थद्वयस्यैकत्र सद्भावासम्भवाच्च। सद्भावे वारेको न स्यात्। अथोच्यते 'सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षादुभयविशेषस्मृतेश्च संशयः। विपर्ययः पुनस्तद्विपरीतविशेषस्मृतेः। इत्यर्थादेवानयोर्भावः' तदप्युक्तिमात्रम्।—तयोः खलु सामान्यं वा हेतुः स्याद्विशेषो वा द्वयं वा? न तावत्सामान्यं तत्र संशयाद्यभावात् सामान्यप्रत्यक्षादित्यभिधानात्—प्रत्यक्षे च संशयादिविरोधात्। विशेषविषयं च संशयादि ज्ञानम्। न चास्य सामान्यं जनकं युज्यते। न ह्यन्यविषयं ज्ञानमन्येन जन्यते—रूपज्ञानस्य रसादुत्पत्तिप्रसङ्गात्। यथा च सामान्यादुपजायमानं तदऽसतो विशेषस्य वेदकं तथेन्द्रियमनोभ्यां जायमानं सतः सामान्यादेरपीति व्यर्थार्थस्य तद्धेतुत्वकल्पना। सामान्यार्थजत्वे चास्यार्थानर्थजत्वप्रतिज्ञाविरोधः कामलिनश्च केशोण्डुकादिज्ञानानुत्पत्तिः। न खलु तत्र केशोण्डुकादिसमानधर्मा धर्मी विद्यते यद्दर्शनात्तत्स्यात्। तन्नास्य सामान्यं हेतुः। नापि विशेषस्तत्र तदभावात्। न खलु पुरोदेशे स्थाणुपुरुषलक्षणो विशेषोस्ति तज्ज्ञानस्याभ्रान्तत्वप्रसङ्गात्। स्थाणुरस्तीति चेत्कथं ततः किं पुरुषः पुरुष एवेति पुरुषांशावसायः?—अन्यथान्यत्रापि ज्ञानेर्थस्य कारणत्वकल्पना व्यर्था। तन्न विशेषोपि तद्धेतुः। नाप्युभयम्—उभयपक्षोक्तदोषानुषङ्गात्। ततः संशयादिज्ञानस्यार्थाभावेप्युपलम्भात्कथं तदभावे ज्ञानाभावसिद्धिर्यतोर्थकार्यतास्य स्यात्? ननु भ्रान्तं तत्तेनो-

१ नरस्य ॥ २ केशोण्डुक ॥ ३ नयनदेशे ॥ ४ नयनकेशानाम् ॥ ५ गगनतले ॥ ६ गगनतल ॥ ७ नयनकेशेषु ॥ ८ केशोण्डुक ॥ ९ केशोण्डुक ॥ १० नयन ॥ ११ गगनतले ॥ १२ केशोण्डुकतया ॥ १३ केशोण्डुक ॥ १४ नयनकेशेभ्यस्सकाशादन्यत्केशोण्डुकस्य ग्राहक चेत् ॥ १५ केशोण्डुकादन्ये नयनकेशा ॥ १६ नयनकेशेभ्यस्सकाशादन्यत्केशोण्डुक तस्य ॥ १७ अर्थादन्ये इन्द्रियमनसी ॥ १८ केशोण्डुक ॥ १९ भवता नैयायिकेन ॥ २० केशोण्डुकज्ञानेन ॥ २१ अन्यथा ॥ २२ संशयज्ञानस्य ॥ २३ संशय ॥ २४ परेण ॥ २५ ऊर्द्धतासामान्यस्य ग्राहक प्रत्यक्षमुपलम्भस्तस्मात् ॥ २६ स्थाणुत्वपुरुषत्वलक्षणो विशेषस्तस्याऽप्रत्यक्षमनुपलम्भस्तस्मात् ॥ २७ विद्यमानविशेषात् ॥ २८ तस्माद्विद्यमानविशेषात्सामान्यादिलक्षणात् ॥ २९ ज्ञानम् ॥ ३० सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षादिति सामग्रीत संशयोत्पत्तौ दूषणान्तरमाह ॥ ३१ संशयस्य ॥ ३२ स्थाणुपुरुषलक्षणयोरर्थयोरन्यतर एकस्तु विद्यमानोर्थोऽपरोऽविद्यमानोऽनर्थ ॥ ३३ स्थाणुस्थानीय ॥ ३४ आकाशे ॥ ३५ शुक्तिकास्थानीय ॥ ३६ संशयादे ॥ ३७ पुरोदेशे ॥ ३८ अन्यथा ॥ ३९ स्थाणावविद्यमानस्य पुरुषांशस्य व्यवसायो यदि ॥ ४० इन्द्रियमनोभ्यामुत्पन्ने सत्यज्ञानेपि ॥ ४१ संशयादिहेतु ॥ ४२ कारणेन ॥

पलभ्यते । न चान्यस्य व्यभिचारेन्यस्य व्यभिचारोऽतिप्रसङ्गादित्यप्यसमीक्षिताभिधानम् ।—स्वपरग्रहणलक्षणं हि ज्ञानम् । तत्र च यथा सत्याभिमतज्ञानं स्वपरग्राहकं तथा केशोण्डुकादिज्ञानमपि । एतावाँस्तु विशेषः किञ्चित्सत्परं गृह्णाति संवादसद्भावात्किञ्चिदसद्विसंवादात् । न चैतावता जात्यन्तरत्वेनानयोरन्यत्वं ताभ्यां व्यभिचाराभावो वा । अन्यथा प्रयत्नानन्तरीयकः शब्दः कृतकत्वाद् घटादिवदित्यादेरप्यप्रयत्नानन्तरीयकैर्विद्युद्वनकुसुमादिभिर्न व्यभिचारः—ताल्वादिदण्डादिजनिताच्छब्दघटादेस्तद्विपरीतस्य विद्युदादेरन्यत्वात् । न चान्यस्य व्यभिचारेऽन्यस्यापि व्यभिचारोऽतिप्रसङ्गात् । तथाप्यत्र व्यभिचारे प्रकृतेपि सोऽस्तु—विशेषाभावात् । किञ्च कारणमेव परिच्छेद्यमित्यभ्युपगमे योगिज्ञानात्प्राक्कालभाविन एवार्थस्यानेन परिच्छित्तिः स्यात्—तस्यैव तत्कारणत्वात्; न पुनस्तत्कालभाविनोऽभाविनो वा तस्यातत्कारणत्वात् । लब्धात्मलाभं हि किंचित्कस्यचित्कारणं नान्यथातिप्रसङ्गात् । तथाप्यनेन तत्परिच्छेदेऽन्यज्ञानेनाप्यतत्कारणस्याप्यर्थस्य परिच्छेदः स्यात् । तथा चेदमयुक्तमर्थसहकारितयार्थवत्प्रमाणमिति । तदपरिच्छेदे चास्यासर्वज्ञतानुषङ्गः । ज्ञानान्तरेण परिच्छेदे तस्यापि ज्ञानान्तरस्य समसमयभाविनोर्थस्यापरिच्छेदकत्वात्कथं सर्वज्ञतेति चिन्त्यम् । क्षणिकत्वे चार्थस्य ज्ञानकालेऽसत्त्वात्कथं तेन ग्रहणम्? तदाकारता चास्य प्राक्प्रत्युक्ता । सत्यां वा तस्या एव ग्रहणात्परमार्थतोर्थस्याग्रहणात्तदेवाऽसर्वज्ञत्वम् । न खलु चैत्रसदृशे मैत्रे दृष्टे परमार्थतश्चैत्रो दृष्टो भवत्यन्यत्रोपचारात् । साध्वी चोपचारेण सर्वज्ञत्वकल्पना सुगतस्य सर्वस्य तथाप्राप्तेः—एकस्य कस्यचित्सतो वेदने तत्सदृशस्य सत्त्वेन सर्वस्य वेदनसम्भवात् । सत्त्वेन सर्वस्य सर्वेण वेदनमन्यैस्तु धर्मैरवेदनमिति चेत्तर्हि कस्यार्थस्वभावस्येत्यादिग्रन्थविरोधः । सत्त्वेनापि तदग्रहणे न सादृश्यं ग्रहणकारणमिति कथं सुगतस्योपचारेणापि बहिः प्रमेयग्रहणम्? कथं चैवंवादिनो भावस्योत्पद्यमानता प्रतीयेत? सा ह्युत्पद्यमानार्थसमसमयभाविना ज्ञानेन प्रतीयते पूर्वकालभाविनोत्तरकालभाविना वा? न तावत्समसमयभाविना—तस्याऽतत्कार्यत्वात् । नापि पूर्वकालभाविना—तत्काले तस्याः सत्त्वाभावात् । न चासती प्रत्येतुं शक्या-अकारणत्वात् । तदा खलूत्पत्स्यमानतार्थस्य न तूत्पद्यमानता । नाप्युत्तरकालभाविना तदा विनष्टत्वात्तस्याः । न हि तदोत्पद्यमानतार्थस्य किं तूत्पन्नता । नित्येश्वरज्ञानपक्षे सिद्धमकारणस्याप्यर्थस्यानेन परिच्छेद्यत्वम् । तद्वदन्येनापि स्यात् । अथार्थाकार्यत्वे तद्व-

---

१ गोपालघटिकाधूमस्य पावकव्यभिचारे भूधरादिधूमस्यापि तद्व्यभिचार स्यात् ॥ २ भ्रान्ताभ्रान्तज्ञानयोः ॥ ३ संशयविपर्ययाभ्याम् ॥ ४ ज्ञानस्यार्थाभावे भावो व्यभिचारस्तस्याभावो न च ॥ ५ एतावतान्यत्व व्यभिचाराभावो वा स्याद्यदि तर्हि ॥ ६ अपेक्षितपरव्यापारो हि भाव कृतक उच्यते ॥ ७ ताल्वाद्यऽजनितस्य, मेघादिकारणकस्य ॥ ८ भिन्नजातीयत्वात् ॥ ९ प्रयत्नानन्तरीयकत्व विना भावे ॥ १० अन्यत्वेपि ॥ ११ कृतकत्वादित्यस्य हेतो ॥ १२ ज्ञाने ॥ १३ अन्यत्वस्य १४ ईश्वरज्ञानाद्वा ॥ १५ भविष्यतोर्थस्य ॥ १६ खरविषाणमपि कस्यचित्कारण स्यादित्यतिप्रसङ्ग ॥ १७ वर्तमानस्य भाविनो वार्थस्य ज्ञानाकारणत्वेपि ॥ १८ योगिन ॥ १९ भाविनोर्थस्य ॥ २० प्रथमपरिच्छेदे ॥ २१ प्राणिमात्रस्य ॥ २२ सन्निहितस्य ॥ २३ पुरुषेण ॥ २४ नीलपीतादिलक्षणै ॥ २५ नीललक्षणस्यार्थस्य प्रत्यक्षत प्रतीते कोन्यो भावो य प्रमाणान्तरैर्गम्यते इति ग्रन्थस्य विरोध ॥ २६ प्रतिबिम्बितस्य सादृश्यस्य ग्रहण स्यान्न त्वर्थस्य ॥ २७ कारणमेव परिच्छेद्यमिति वादिन ॥ २८ अस्मदादिज्ञानेन ॥

न्नित्यत्वान्निखिलार्थग्राहित्वानुषङ्गो न—चक्षुरादिकार्यत्वेनानित्यत्वात् । प्रतिनियतशक्तित्वाच्च प्रतिनियतार्थग्राहित्वम् । न खलु येकस्य शक्तिः सान्यस्योऽप्यन्यथा
सर्वस्य सर्वकर्तृत्वानुषङ्गो महेश्वरवत् । यथैव हीश्वरः कार्यग्रामेणानुपक्रियमाणोऽप्यविशेषेण तं करोति तथा कुम्भकारादिरपि कुर्यात् । न हि सोपि तेनोपक्रि-
यते येनोपकारकमेव कुर्यान्नान्यमिति नियमः स्यात् । शक्तिप्रतिनियमात्तदविशेषेपि कश्चित्कस्यचित्कर्त्तेत्यभ्युपगमो ग्राहकत्वपक्षेपि समानः । ननु यद्यर्थाभावेपि
ज्ञानोत्पत्तिः, कुतो न नीलाद्यर्थरहिते प्रदेशे तद्भवति ? भवत्येव । नयनमनसोः प्रणिधाने कथं न नीलाद्यर्थग्रहणम् ? तत्र तदभावात् । कथं तदुत्पन्नमित्यवगमः ?
न हि विषयमपरिच्छिन्दत् ज्ञानमस्तीति युक्तमन्यथा सर्वत्र सर्वदा सर्वस्य तदनिवार्यं भवेदित्यप्यसारम्—तत्रोपनीतस्य नीलादेस्तेनैव ग्रहणोपलम्भात् । तदैव तद-
न्यज्ज्ञातमिति चेत्किमिदानीं प्रतिविषयं प्रकाशकस्य भेदः ? तथाभ्युपगमे प्रदीपादेरपि प्रतिविषयमन्यत्वप्रसङ्गः । प्रत्यभिज्ञानमुभयत्र समानम् । नन्वर्थाभावेपि
ज्ञानसद्भावेऽतीतानागते व्यवहिते च तत्स्यात्सन्निहितवत् । न तु तत्र तत्स्यादिति कोर्थः ? किं तत्रोत्पद्येत तद्ग्राहकं वा भवेदिति ? न तावत्तत्रोत्पद्येतात्मनि तदु-
त्पत्त्यभ्युपगमात् । नापि तद्ग्राहकं भवेदयोग्यत्वात् । न खलु तदुत्पन्नमपि सर्वं वेत्ति योग्यस्यैव वेदनात् । कारणेपि चैतच्चोद्यं समानम् । तत्रापि हि कारणं कार्ये-
णानुपक्रियमाणं यावत्प्रतिनियतं कार्यमुत्पादयति तावत्सर्वं कस्मान्नोत्पादयतीति चोद्ये योग्यतैव शरणम् । ततो ज्ञानस्यार्थान्वयव्यतिरेकानुविधानाभावात्कथं त-
त्कार्यता यतोऽर्थवत्प्रमाणमित्यत्र भाष्ये प्रमातृप्रमेयाभ्यामर्थान्तरमव्यपदेश्याऽव्यभिचारिव्यवसायात्मके ज्ञाने कर्त्तव्येऽर्थसहकारितयार्थवत्प्रमाणमिति व्याख्या
शोभेत ? तन्नार्थकार्यता विज्ञानस्य । नाप्यालोककार्यता—अञ्जनादिसंस्कृतचक्षुषा नक्तञ्चराणां चालोकाभावेपि ज्ञानोत्पत्तिप्रतीतेः । अथालोकस्याकारणत्वेऽन्ध-
कारावस्थायामप्यस्मदादीनां ज्ञानोत्पत्तिः स्यात् । न चैवम् । ततस्तद्भावे भावात्तदभावे चाभावात्तत्कार्यताऽस्य । अन्यथा धूमोऽप्यग्निजन्यो न स्यात्—तद्व्यतिरेके-

१ असदादिज्ञानस्य । न=इति चेन्नेत्यर्थ ॥ २ असदादिज्ञानस्य ॥ ३ ईश्वरज्ञानस्य ॥ ४ अस्मदादिज्ञानस्य ॥ ५ एकस्य या शक्ति सान्यस्य यदि ॥ ६ नरस्य ॥ ७ सर्वकार्याणाम् ॥ ८ ग्राम समूह ९ अनुपकारककार्य-
कारणत्वस्याविशेषेपि ॥ १० घटपटादिषु मध्ये ॥ ११ अर्थकार्यताऽभावेपि ज्ञान कस्यचियोग्यस्य ग्राहक स्यादिति समानता ॥ १२ पुरोदेशे ॥ १३ अथ ॥ १४ पुरोदेशे ॥ १५ पूर्वज्ञानेनैव ॥ १६ अन्यज्ज्ञानामीत्यस्मि-
न्नवसरे ॥ १७ ज्ञानस्य ॥ १८ य एवाय प्रदीपो घटस्य प्रकाशक स एवाय पटस्य प्रकाशको यथा तथा य एव नीलज्ञानपरिणत आत्मा स एवान्यज्ञानपरिणत ॥ १९ कारणचोद्यपक्षेपि ॥ २० कुलालादिलक्षणम् ॥
२१ घटादिलक्षणेन ॥ २२ प्रमाण भवति । कीदृशम् ? अर्थवदर्थो विद्यते यस्य तत् । अर्थवत्प्रमाणमित्युक्ते ज्ञानमपि प्रमाण स्यात्तत्परिहारार्थमर्थसहकारितयेति । न च ज्ञानमर्थसहकारितयाऽर्थवत् किन्तु अर्थविषय-
तयाऽऽर्थवत् । अर्थसहकारितयाऽर्थवत्प्रमाणमित्युच्यमाने मनोपि प्रमाण स्यात् । कथम् ? सुखोत्पत्तौ स्रग्वनितादिसहकारितयाऽर्थवद्भवति मन । इति तद्व्यवच्छेदार्थमव्यपदेश्यादिविशेषणविशिष्टे ज्ञाने कर्त्तव्ये इत्युक्तम् ।
एव चेत्प्रमाता प्रमेय च प्रमाण स्यात् । कथम् ? प्रागुक्तविशेषणे ज्ञाने कर्त्तव्ये स्वस्वभावार्थसहकारितया अर्थवान्प्रमाता भवति । इति प्रागुक्तविशेषणे ज्ञाने कर्त्तव्ये खण्डमुण्डादिव्यक्तिलक्षणार्थसहकारितया अर्थवदिति
प्रमेय गोत्वादिसामान्यरूपम् । इति तत्परिहारार्थं प्रमातृप्रमेयाभ्यामर्थान्तरमित्युक्तम् ॥ २३ अन्वयव्यतिरेकसद्भावेपि आलोकज्ञानयो कार्यकारणभावो नास्ति यदि ॥ २४ अन्वयव्यतिरेकव्यतिरेकेण ॥

णान्यस्य तद्व्यवस्थापकस्य[1]भावादिति चेत्किं पुनरन्धकारावस्थाया ज्ञानं नास्ति? तथा चेत्कथमन्धकारप्रतीतिः? तदन्तरेणापि प्रतीतावन्यत्रापि[3] ज्ञानकल्पनानर्थक्यम्। [4]प्रतीयते, ज्ञानं नास्तीति च स्ववचनविरोधः–प्रतीतेरेव ज्ञानत्वात्। अथान्धकाराख्यो विषय एव नास्ति यो ज्ञानेन परिच्छिद्येत। अन्धकारव्यवहारस्तु लोके ज्ञानानुत्पत्तिमात्र इत्युच्यते[5]। यद्येवं[6]मालोकस्याप्यभावः स्याद्विशदज्ञानव्यतिरेकेणान्यस्यास्याप्यप्रतीतेः। तद्व्यवहारस्तु लोके विशदज्ञानोत्पत्तिमात्रः। ननु ज्ञानस्य वैशद्यमेव तदभावे कथमित्यप्यज्ञचोद्यं नक्तञ्चरादीनां रूपेऽस्मदादीनां रसादौ च तदभावेपि तस्य वैशद्योपलब्धेः। आलोकविषयस्य च ज्ञानस्यार्तं एवालोकाद्वैशद्यं तदन्तराद्वाऽन्यतो वा कुतश्चित्? यद्यन्यतो न तर्ह्यालोककृतं वैशद्यम्। न हि यद्यदभावेपि भवति तत्तत्कृतमतिप्रसङ्गात्। अथालोकान्तरात्, तद्विषयस्यापि तस्यालोकान्तरात्तदित्यनवस्था। न चालोकान्तरमस्ति। अथास्मा[10]देवालोकात्स्वविषयादेव तर्हि वैशद्यम्[11]। तथा घटादिरूपादप्यस्तु[12]। तस्याभासुरत्वान्नातस्तदित्यप्ययुक्तम्—बहलान्धकारनिशीथिन्या नक्तञ्चरादीनां तत्र वैशद्याभावप्रसङ्गात्। विशदं प्रत्यक्षमित्यत्र चोक्तं वैशद्यकारणम्[13]। यद्येवं प्रदीपाद्युपादानमनर्थकं तदन्तरेणापि ज्ञानोत्पत्तिप्रसङ्गात्। नाऽनर्थकम्—आवरणा[14]पनयनद्वारेण विषये ग्राह्यतालक्षणस्य विशेषस्येन्द्रियमनसोर्वा[15] तज्ज्ञानजनकलक्षणस्यातोऽञ्जनादेरिवोत्पत्तेः। न चैतावता[16] तस्य तत्कारणता–काण्डपटाद्यावरणापनेतुर्हस्तादेरपि तत्त्वप्रसङ्गात्[17]। ततो यथा ज्ञानानुत्पत्तिव्यतिरेकेण नान्यत्तमस्तथा विशदज्ञानोत्पत्तिव्यतिरेकेणालोकोप्यन्यो न स्यात्। नन्वत्र प्रदेशे बहल आलोकोऽत्र च मन्द इति लोकव्यवहारादन्यैः[18] सोस्तीति चेत्तर्हि गुहागह्वरादौ बहलं तमोऽन्यत्र मन्दमिति लोकव्यवहारः किं काकैर्भक्षितः? अत्रास्याऽप्रमाणत्वेऽन्यत्र कः समाश्वासः? ननु बहिर्देशादागत्य गृहान्तःप्रविष्टस्य[21] सत्यप्यालोके तमःप्रतीतेर्न पारमार्थिकं तत्। न चालोकतमसोर्विरुद्धयोरेकत्रावस्थानम्। ततो ज्ञानानुत्पत्तिमात्रमेव तदिति चेत्तर्हि नक्तञ्चरादीनामेव[22] विवरादौ प्रदीपाद्यालोकाभावेपि तत्प्रतीतेः सोपि पारमार्थिको न स्यात्। न चैकत्र तमोऽभावेपि तत्प्रतीतेः सर्वत्र तदभावो युक्तः। अन्यथा[23]ऽर्थाभावेपि क्वचित्तत्प्रतीतेः सर्वत्र तदभावः स्यात्। तस्मादालोकवत्तमोपि प्रतीतिसिद्धम्–तत्र[24] चालोकाभावेपि ज्ञानोत्पत्तिप्रतीतेः। न च तत्प्रति तस्य[25] कारणता। तन्नार्थालोकयोर्ज्ञानं प्रति कारणत्वम्॥

[26]एवं तर्हि तत्तयोः प्रकाशकमपि न स्यादित्याह—

---

१ कार्यकारणभावव्यवस्थापकस्य ॥ २ अन्धकारस्य ॥ ३ घटादिविषये ॥ ४ अर्थं ॥ ५ परेण भवता ॥ ६ ज्ञानानुत्पत्तिमात्रान्धकारप्रकारेण ॥ ७ प्रकृतज्ञानविषयात् ॥ ८ खराभावेपि जायमानो धूम खरहेतुकोन्यथा स्यात् ॥ ९ वैशद्यम् १० प्रथमालोकादेव ॥ ११ विज्ञानस्य ॥ १२ घटादिज्ञानवैशद्यम् ॥ ततश्च किमालोकपरिकल्पनेन ॥ १३ आवरणप्रक्षय ॥ १४ तम ॥ १५ सप्तमीद्वि ॥ १६ प्रदीपादिना मनोलोचनस्यार्थस्य च स्वविशेषजननेपि ॥ १७ वैशद्यकारणत्व ॥ १८ जैनमते ॥ १९ विशदज्ञानोत्पत्ते सकाशात् ॥ २० तमसि ॥ २१ नरस्य ॥ २२ तमसोऽभावेपि तम प्रतीतिप्रकारेण ॥ २३ एकत्राभावे सर्वत्राभावो यदि ॥ २४ तमसि ॥ २५ तमस ॥ २६ अर्थालोकयोर्ज्ञान प्रत्यकारणत्वप्रकारेण ॥

अतज्जन्यमपि तत्प्रकाशकम् । ताभ्यामर्थालोकाभ्यामजन्यमपि तयोः प्रकाशकम् । अत्रैवार्थे प्रदीपवदित्युभयप्रसिद्धं दृष्टान्तमाह । न खलु प्रकाश्यो घटादिः स्वप्रकाशकं प्रदीपं जनयति–स्वकारणकलापादेवास्योत्पत्तेः । प्रकाश्याभावे प्रकाशकस्य प्रकाशकत्वायोगात्स तस्य जनक एवेत्यभ्युपगमे प्रकाशकस्याभावे प्रकाश्यस्यापि प्रकाश्यत्वाघटनात् सोपि तस्य जनकोऽस्तु । तथा चेतरेतराश्रयः–प्रकाश्यानुत्पत्तौ प्रकाशकानुत्पत्तेस्तदनुत्पत्तौ च प्रकाश्यानुत्पत्तेरिति । स्वकारणकलापादुत्पन्नयोः प्रदीपघटयोरन्योन्यापेक्षया प्रकाश्यप्रकाशकत्वधर्मव्यवस्थाया एव प्रसिद्धेर्नेतरेतराश्रयावकाश इत्यभ्युपगमे ज्ञानार्थयोरपि स्वसामग्रीविशेषवशादुत्पन्नयोः परस्परापेक्षया ग्राह्यग्राहकत्वधर्मव्यवस्थाऽऽस्थीयताम् । कृतं प्रतीत्यपलापेन ।

ननु चाजनकस्याप्यर्थस्य ज्ञानेनावगतौ निखिलार्थावगतिप्रसङ्गात्प्रतिकर्मव्यवस्था न स्यात् । यद्धि यतो ज्ञानमुत्पद्यते तत्तस्यैव ग्राहकं नान्यस्येत्यस्यार्थजन्यत्वे सत्येव सा स्यादिति वदन्तं प्रत्याह ।—

स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं व्यवस्थापयति । तथा हि । यदर्थप्रकाशकं तत्स्वात्मन्यपेतप्रतिबन्धम् । यथा प्रदीपादि । अर्थप्रकाशकं च ज्ञानमिति । प्रतिनियतस्वावरणक्षयोपशमश्च ज्ञानस्य प्रतिनियतार्थोपलब्धेरेव प्रसिद्धः । न चान्योन्याश्रयः–अस्याः प्रतीतिसिद्धत्वात् । तल्लक्षणयोग्यता च शक्तिरेव । सैव ज्ञानस्य प्रतिनियतार्थव्यवस्थायामङ्गं; नार्थोत्पत्त्यादिः–तस्य निषिद्धत्वादन्यत्रादर्शनाच्च । न खलु प्रदीपः प्रकाश्यार्थैर्जन्यस्तेषां प्रकाशको दृष्टः । किञ्च प्रदीपोपि प्रकाश्यार्थाऽजन्यो यावत्काण्डपटाद्यनावृतमेवार्थं प्रकाशयति तावत्तदावृतमपि किन्न प्रकाशयेदिति चोद्ये भवतोप्यतो योग्यतातो न किञ्चिदुत्तरम् ।

कारणस्य च परिच्छेद्यत्वे करणादिना व्यभिचारः । नहीन्द्रियमदृष्टादिकं वा विज्ञानकारणमप्यनेन परिच्छेद्यते । न ब्रूमः कारणं परिच्छेद्यमेव किन्तु कारणमेव परिच्छेद्यमित्यवधार्यमस्तत्र–योगिविज्ञानस्य व्याप्तिज्ञानस्य चाशेषार्थग्राहिणोऽभावप्रसङ्गात् । न हि विनष्टानुत्पन्नाः समसमयभाविनो वार्थास्तस्य कारणमित्युक्तम् । केशोण्डुकादिज्ञानस्य चाजनकार्थग्राहित्वाभावप्रसङ्गः । कथं च कारणत्वाविशेषेपीन्द्रियादेरग्रहणम् ? अयोग्यत्वाच्चेद्योग्यतैव तर्हि प्रतिकर्मव्यवस्थाकारिणी । अलमन्य-कल्पनया । स्वाकारार्पकत्वाभावाच्चेन्न–ज्ञाने स्वाकारार्पकत्वस्याप्यपास्तत्वात् । कथं च कारणत्वाविशेषेपि किञ्चित्स्वाकारार्पकं किञ्चिन्नेति प्रतिनियमो योग्यतां

१ स्वरूप ॥ २ अभ्युपगम्यताम् ॥ ३ अलमित्यर्थः ॥ ४ प्रतिनियतविषयव्यवस्था ॥ ५ अर्थात् ॥ ६ ज्ञान कर्तृ ॥ ७ ज्ञानस्यापेतप्रतिबन्धत्व कारणमर्थप्रकाशे चेतर्हि सकलार्थप्रकाशक किमिति न स्यादित्युक्ते आह ॥ ८ आदिपदेन तादूप्यादि ॥ ९ प्रकाशके प्रदीपादौ ॥ १० तदुत्पत्त्यादे ॥ ११ धर्मी हेतुश्च ॥ १२ माध्यम् ॥ १३ घटादिवदिति दृष्टान्त ॥ १४ इन्द्रियादिना ॥ १५ ज्ञानेन ॥ १६ वय सुगता ॥ १७ यत्सत्तत्सर्वं क्षणिकमिति ॥ १८ उत्पत्त्यादि ॥ १९ इन्द्रियादे ॥ २० स्वस्य घटादिवस्तुन ॥

विना सिध्येत्? कथं च सकलं विज्ञानं सकलार्थकार्यं न स्यात्? प्रतिनियतशक्तित्वाद्भावानामित्युत्तरं[1] ग्राह्यग्राहकभावेऽपि समानम्।

अथेदानीं मुख्यप्रत्यक्षप्ररूपणस्यावसरप्राप्तत्वात् तदुत्पत्तिकारणस्वरूपप्ररूपणायाह।—

**सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम्।** विशदं प्रत्यक्षमित्यनुवर्त्तते तत्राशेषतो विशदमतीन्द्रियं यद्विज्ञानं तन्मुख्यं प्रत्यक्षम्। किंविशिष्टं तत्? सामग्रीविशेषविश्लेषिताखिलावरणम्। ज्ञानावरणादिप्रतिपक्षभूता हीहँ[3] सम्यग्दर्शनादिलक्षणान्तरङ्गा वहिरङ्गानुभवादिलक्षणा सामग्री गृह्यते। तस्या विशेषोऽविकलत्वम्। तेन विश्लेषितं क्षयोपशमक्षयरूपतया विघटितमखिलमवधिमनःपर्ययकेवलज्ञानसम्बन्ध्यावरणमखिलं निश्शेषं वाऽऽवरणं यस्यावधिमनःपर्ययकेवलज्ञानत्रयस्य तत्तथोक्तम्। अत्र च प्रयोगः। यद्यत्र स्पष्टत्वे सत्यवितथं ज्ञानं तत्तत्रापगताखिलावरणम्। यथा रजोनीहाराद्यन्तरितवृक्षादौ तदपगमप्रभवं ज्ञानम्। स्पष्टत्वे सत्यवितथं च कैंचिदुक्तप्रकारं ज्ञानमिति। तथाऽतीन्द्रियं तत्—मनोऽक्षानपेक्षत्वात्। तदनपेक्षं तत्—सकलकलङ्कविकलत्वात्। तद्विकलत्वं चास्यात्रैव प्रसाधयिष्यते। अत एव चाशेषतो विशदं तत्। यत्तु नातीन्द्रियादिस्वभावं न तत्तदनपेक्षत्वादिविशेषणविशिष्टम्। यथास्मदादिप्रत्यक्षम्। तद्विशेषणविशिष्टं चेदम्। तस्मात्तथेति। तथा मुख्यं तत्प्रत्यक्षम्—अतीन्द्रियत्वात्स्वविषयेऽशेषतो विशदत्वाद्वा। यत्तु नेत्थं तन्नैवम्। यथास्मदादिप्रत्यक्षम्। तथा चेदम्। तस्मान्मुख्यमिति। ननु चावरणप्रसिद्धौ तदपगमाज्ज्ञानस्योत्पत्तिर्युक्ता। न च तत्प्रसिद्धम्। तद्धि शरीरं रागादयो देशकालादिकं वा भवेत्? न तावच्छरीरं रागादयो वा तद्भावेप्यर्थोपलम्भसम्भवात्। तदुपलम्भप्रतिबन्धकमेव हि काण्डपटादिकं लोके प्रसिद्धमावरणम्। ननु मेर्वादेर्दूरदेशता रावणादेस्तत्कालता परमाण्वादेः सूक्ष्मस्वभावता मूलकीलोदकादेश्च भूम्यादिरावरणं प्रसिद्धमेवेति चेत्तदसारम्—तदभावस्य कर्त्तुमशक्यत्वात्। न खलु सातिशयर्द्धिमतापि योगिना देशाद्यभावो विधातुं शक्यः। न चान्यत् किञ्चिदावरणं प्रतीयते। ततः सामग्रीविशेषविश्लेषिताखिलावरणमित्ययुक्तम्। अत्रोच्यते। न शरीराद्यावरणम्। किं तर्हि? तद्व्यतिरिक्तं कर्म। तच्चानुमानतः प्रसिद्धम्। तथा हि। स्वपरप्रमेयबोधैकस्वभावस्यात्मनो हीनगर्भस्थानशरीरविषयेषु विशिष्टाऽभिरतिरात्मतद्व्यतिरिक्तकारणपूर्विका—तत्त्वोत्कुत्सितपरपुरुषे कमनीयकुलकामिन्यास्तत्रोद्युपयोगजनितविशिष्टाभिरतिवत्। तथा भवभृतां मोहोदयः शरीरादिव्यतिरिक्तसम्बन्ध्यन्तरपूर्वको मोहोदयत्वान्मदिरा-

---

१ स्तम्भलक्षणादर्थादनुत्पद्यमान ज्ञान स्तम्भस्य ग्राहक यथा तथा निश्शेषार्थग्राहक कुतो न स्यादित्युत्तर प्रतिनियतशक्तित्वाद्भावानामित्यत्रापि समानम्॥ २ मामस्त्येन॥ ३ सूत्रे॥ ४ आदिपदेन देशकालादिग्रहणम्॥ ५ समग्रलम्॥ ६ आवरणापाये॥ ७ अवधिमन पर्ययकेवलज्ञान स्वविषयेऽपगताखिलावरण तत्र स्पष्टत्वे सत्यवितथज्ञानत्वात्॥ ८ ज्ञानम्॥ ९ अर्थे॥ १० अनुमानादिना व्यभिचारपरिहारार्थम्॥ ११ संशयादिना व्यभिचारपरिहारार्थम्॥ १२ रूपिषु, परमनोगतार्थेषु, मूर्तामूर्तसकलवस्तुषु च॥ १३ क्रमेणावधिमन पर्ययकेवलाख्यम्॥ १४ अस्मिन्परिच्छेदे॥ १५ सकलकलङ्कविकलत्वादेव॥ १६ अवध्यादित्रयम्॥ १७ मुख्यम्॥ १८ बौद्ध प्राह॥ १९ आदिपदेन स्वभावो वा॥ २० ज्ञानस्य॥ २१ मीमांसकीयपूर्वरक्षे सति जैनै॥ २२ हीनशब्दो गर्भादिशब्दै प्रत्येकमभिसम्बन्धनीय॥ २३ विषयस्रग्वनिताचन्दनादिषु॥ २४ विशिष्टाभिरतित्वात्॥ २५ आदिपदेनौषधमन्त्रादि २६ अनुभव॥

द्युपयोगमत्तस्यात्मगृहादौ मोहोदयवत् । ननु चातः कर्ममात्रमेव प्रसिद्धं; नावरणम् । ततस्तत्सिद्धावेव प्रमाणमुच्यतां तत्रैव विवादादिति चेदुच्यते । येज्ज्ञानं स्वविषयेऽप्रवृत्तिमत्तत्सावरणं यथा कामलिनो लोचनविज्ञानमेकचन्द्र[3]मसि । स्वविषये अशेषार्थलक्षणेऽप्रवृत्तिमच्च ज्ञानमिति । ननु विज्ञानस्याशेषविषयत्वं कुतः सिद्धम्? आवरणापाये तत्प्रकाशकत्वाच्चेदन्योन्याश्रयः । सिद्धे हि सकलविषयत्वे तस्य आवरणापाये तत्प्रकाशनं सिद्ध्यत्यऽतश्च सकलविषयत्वमिति । तदप्यसमीक्षिताभिधानं-यतोनुमानमिच्छता भवताप्यवश्यं सकलावरणवैकल्यात्प्रागेव सकलस्य प्राणिमात्रस्याशेषविषयं व्याप्त्यादिज्ञानमभ्युपगतमेव । तथा यत्स्वविषयेऽस्पष्टं ज्ञानं तत्सावरणम् । यथा रजोनीहाराद्यन्तरिततरुनिकरादिज्ञानम् । अस्पष्टं च सर्वं सदनेकान्तात्मकमित्यादि व्याप्तिज्ञानम् । मिथ्यादृशा सर्वत्रानेकान्तात्मके भावे विपरीतज्ञानं सावरणं मिथ्याज्ञानत्वाद्धत्तूरकाद्युपयोगिनो मृच्छकले काञ्चनज्ञानवदिति । अतः सिद्धमावरणं पौद्गलिकं कर्मेति ।

ननु चाविद्यैवावरणं, न पौद्गलिकं कर्म-मूर्त्तेनानेनामूर्त्तस्य ज्ञानादेरावरणायोगादन्यथा शरीरादेरप्याव(वा)रकत्वानुषङ्गादित्यप्यसमीचीनं-मदिरादिना मूर्त्तेनाप्यमूर्त्तस्य ज्ञानादेरावरणदर्शनात् । अमूर्त्तस्य चाव(वा)रकत्वे गगनादेर्ज्ञानान्तरस्य च तत्प्रसङ्गः । तदविरुद्धत्वात्तस्य तन्नेति चेत्तर्हि शरीरादेरप्यत एव तन्मा भूत्तद्विरुद्धस्यैवावरकत्वप्रसिद्धेः । प्रवाहेण प्रवर्त्तमानस्य ज्ञानादेरविद्योदये निरोधात्तस्यास्तद्विरोधगतौ मदिरादिवत्पौद्गलिककर्मणोपि सास्तु-विशेषाभावात् । तथा हि । आत्मनो मिथ्याज्ञानादिः पुद्गलविशेषसम्बन्धनिबन्धनस्तत्स्वरूपान्यथाभावस्वभावत्वादुन्मत्तकादिजनितोन्मादादिवत् । न च मिथ्याज्ञानजनितापरमिथ्याज्ञानेनानेकान्तस्तस्यापरापरपौद्गलिककर्मोदये सत्येव भावादपरापरोन्मत्तकादिरससद्भावे तत्कृतोन्मादादिसन्तानवत् । ननु चात्मगुणत्वात्कर्मणा कथं पौद्गलिकत्वमित्यन्ये तेप्यपरीक्षकाः—तेषामात्मगुणत्वे तत्पारतन्त्र्यनिमित्तत्वविरोधात्सर्वदात्मनो बन्धानुपपत्तेः सदैव मुक्तिप्रसङ्गात् । न[22] खलु यो यस्य गुणः स तस्य पारतन्त्र्यनिमित्तम् । यथा पृथिव्यादे रूपादि । आत्मगुणश्च धर्माधर्मसंज्ञकं कर्म परैरभ्युपगम्यते इति न तदात्मनः पारतन्त्र्यनिमित्तं स्यात् । न चैवम्-आत्मनः परतन्त्रतया प्रमाणतः प्रतीतेः । तथा हि । परतन्त्रोऽसौ हीनस्था[23]नपरिग्रहवत्त्वान्मद्योद्रेकपरतन्त्राशुचिस्थानपरिग्रहवद्विशिष्टपुरुषवत् । हीनस्थानं हि शरीरम्-आत्मनो दुःखहेतुत्वात्कारागारवत् । तत्परिग्रहवांश्च संसारी प्रसिद्ध एव । न च देवशरीरे तदभावात्पक्षाव्या[24]प्तिः—तस्यापि मरणे दुःखहेतुत्वप्रसिद्धेः । यत्परतन्त्रश्चासौ तत्कर्म । इति

१ उक्तानुमानद्वयात् ॥ २ संसारिज्ञानमशेषार्थलक्षणे स्वविषये सावरणं भवति तत्राप्रवृत्तिमत्त्वादिति प्रतिज्ञाहेतू उपरिष्टाच्चेयौ ॥ ३ सावरणम् ॥ ४ अभावात् ॥ ५ आदिपदेनागमजम् ॥ ६ अस्पष्टज्ञानत्वादित्युच्यमाने स्व-सिन्नसद्व्य स्यात्तद्व्यवच्छेदार्थं स्वविषये इत्युक्तम् ॥ ७ एकान्तरूप विपरीतम् ८ अनुमानत्रयात् ॥ ९ पुरुषज्ञानाद्वैतवादिना वदत ॥ १० आत्मन ॥ ११ आदिपदेनात्मन ॥ १२ अविद्यास्वरूपस्य ॥ १३ गगनादिकं ज्ञानान्तरं च ज्ञानादेरावरकं भवति अमूर्त्तत्वादविद्यावत् ॥१४ तेन ज्ञानेन ॥ १५ मिथ्याज्ञानमविद्या ॥१६ प्रवाहेण प्रवर्त्तमानस्य ज्ञानादेः पौद्गलिककर्मोदये निरोधस्याविशेषात् ॥ १७ कर्मतापन्न ॥१८ सम्यग्ज्ञानादि ॥ १९ मिथ्याज्ञानादि ॥ २० योगा ॥ २१ धर्माधर्मसंज्ञकं कर्म आत्मनः पारतन्त्र्यनिमित्तं न भवति आत्मगुणत्वादि यध्याहार ॥ २२ रूपादि ॥ २३ शरीरादिलक्षण ॥ २४ भागासिद्धत्व दुःखहेतुत्वलक्षणस्य हेतो ॥

सिद्धं तस्य पौद्गलिकत्वम्। तथा हि। पौद्गलिकं कर्म—आत्मनः पारतन्त्र्यनिमित्तत्वान्निगलादिवत्। न च क्रोधादिभिर्व्यभिचारस्तेषां जीवपरिणामानां पारतन्त्र्यस्वभावत्वात्। क्रोधादिपरिणामो हि जीवस्य पारतन्त्र्यं न पुनः पारतन्त्र्यनिमित्तम्। सत्यम्। नात्मगुणोऽदृष्टं प्रधानपरिणामत्वात्तस्य "प्रधानपरिणामः शुक्लं कृष्णं च कर्म" इत्यभिधानात्। इत्यपि मनोरथमात्रं—प्रधानस्यासत्त्वेन तत्परिणामत्वस्य क्वचिदप्यसम्भवात्। तदसत्त्वं चात्रैवानन्तरं वक्ष्यामः। तत्परिणामत्वेपि वा तस्यात्मपारतन्त्र्यनिमित्तत्वाभावे कर्मत्वायोगादन्यथातिप्रसङ्गः। प्रधानपारतन्त्र्यनिमित्तत्वात्तस्य कर्मत्वमिति चेन्न—प्रधानस्य तेन बन्धोपगमे मोक्षोपगमे चात्मकल्पनावैयर्थ्यप्रसङ्गात्। बन्धमोक्षफलानुभवनस्यात्मनि प्रतिष्ठानान्न तत्कल्पनावैयर्थ्यमित्यसत्—प्रधानस्य तत्कर्तृत्ववत्तत्फलानुभोक्तृत्वस्यापि प्रमाणसामर्थ्यप्राप्तत्वात्। अन्यथा कृतनाशाकृताभ्यागमदोषानुषङ्गः। अथात्मनश्चेतनत्वात्तत्फलानुभवनं, न तु प्रधानस्याऽचेतनत्वात्तदप्ययुक्तं—मुक्तात्मनोपि तत्फलानुभवनानुषङ्गात्। तस्य प्रधानसंसर्गाभावान्न तत्फलानुभवनमिति चेत्तर्हि संसारिणः प्रधानसंसर्गाद्बन्धफलानुभवनम्। तथा चात्मन एव बन्धः सिद्धः—तत्संसर्गस्य बन्धफलानुभवननिमित्तस्य बन्धरूपत्वात्, बन्धस्यैव संसर्ग इति पुद्गलस्य च प्रधानमिति नामान्तरकरणात्। ननु प्रसिद्धस्यापि यथोक्तप्रकारस्य कर्मणः कार्यकारणप्रवाहेण प्रवर्त्तमानस्यानादित्वाद्विनाशहेतुभूतसामग्रीविशेषस्य चाभावात्कथं तेन विश्लेषिताखिलावरणत्वं ज्ञानस्येत्यप्यपेशलं—सम्यग्दर्शनादित्रयलक्षणस्य तद्विनाशहेतुभूतसामग्रीविशेषस्य सुप्रतीतत्वात्। सञ्चितं हि कर्म निर्जरातश्चारित्रविशेषरूपायाः प्रलीयते। सा च निर्जरा द्विविधा उपक्रमेतरभेदात्। तत्रौपक्रमिकी तपसा द्वादशविधेन साध्या। अनुपक्रमा तु यथाकालं संसारिणः स्यात्। कुतः पुनः साकल्येन पूर्वोपात्तकर्मणां निर्जरा निश्चीयते इति चेदनुमानात्। तथा हि। साकल्येन क्वचिदात्मनि कर्माणि निर्जीर्यन्ते—विपाकान्तत्वात्। यानि तु न निर्जीर्यन्ते न तानि विपाकान्तानि यथा कालादीनि। विपाकान्तानि च कर्माणि तस्मात्साकल्येन क्वचिन्निर्जीर्यन्ते। न चेदमसिद्धं साधनम्। तथा हि। विपाकान्तानि कर्माणि फलावसानत्वाद्व्रीह्यादिवत्। न चेदमप्यसिद्धं—तेषा नित्यत्वानुषङ्गात्। न च नित्यानि कर्माणि—नित्यं तत्फलानुभवनप्रसङ्गात्। भावि पुनः कर्म संवरान्निरुध्येत—अपूर्वकर्मणामास्रवनिरोधः संवर इत्यभिधानात्। आस्रवो हि मिथ्यादर्शनाविरतिप्रमादकषाययोगविकल्पात्पञ्चविधः—तस्मिन्सति कर्मणामास्रवणात्। स च संवरो गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैर्विधीयते। इत्यागमे विस्तरतः प्ररूपितं द्रष्टव्यम्। निर्जरासंवरयोश्च सम्यग्दर्शनाद्यात्मकत्वात्तत्प्रकर्षे कर्मणां सन्तानरूपतयाऽनादित्वेपि प्रक्षयः प्रसिध्यत्येव। न ह्यनादिसन्ततिरपि शीतस्पर्शो विपक्षस्योष्ण-

---

१ सुखदुःखरागद्वेषादिकृत पारतन्त्र्यम् ॥ २ निगल गलबन्धनम् ( शृङ्खलादि ) ॥ ३ माहुश ॥ ४ पुण्यम् ॥ ५ पापम् ॥ ६ बुद्ध्यादौ विकारे ॥ ७ वय जैना ॥ ८ घटादेरपि कर्मत्व स्यात् ॥ ९ प्रधान बन्धफलानुभोक्तृ भवति बन्धाधिकरणत्वान्निगलबद्धदेवदत्तवत् ॥ १० तत्कृतकर्तृत्वेपि तत्फलानुभोक्तृत्व न स्यायदि तर्हि ॥ ११ कृतस्य कर्मण प्रधानसम्बन्धित्वेन नाश ॥ १२ अकृतस्य फलस्यात्मनि आगम ॥ १३ तस्य कर्मण फल बन्धमोक्षौ ॥ १४ तस्य कर्मण ॥ १५ पौद्गलिकस्य ॥ १६ फलदानपरिणतिर्विपाकः ॥ १७ परमतापेक्षया ॥ १८ सम्यग्दर्शनादे कर्मविनाशहेतुत्वमुक्तमिदानीमन्यदेवोक्तमिति कथ न पूर्वापरविरो ध. १ इत्युक्ते आह ॥ १९ सति ॥

स्पर्शस्य प्रकर्षे निर्मूलतलं प्रलयमुपव्रजन्नोपलब्धः, कार्यकारणरूपतया बीजाङ्कुरसन्तानो वाऽनादिः प्रतिपक्षभूतदहनेन निर्दग्धबीजो निर्दग्धाङ्कुरो वा न प्रतीयते इति वक्तुं शक्यम्। ननु तत्प्रकर्षमात्रात्कर्मप्रक्षयमात्रमेव सिध्येन्न पुनः साकल्येन तत्प्रक्षयः–सम्यग्दर्शनादेः परमप्रकर्षसम्भवाभावादित्यप्यसङ्गतं–तत्प्रकर्षस्य क्वचिदात्मनि प्रसिद्धेः। तथा हि। यस्य तारतम्यप्रकर्षस्तस्य क्वचित्परमप्रकर्षो, यथोष्णस्पर्शस्य। तारतम्यप्रकर्षश्चासंयतसम्यग्दृष्ट्यादौ सम्यग्दर्शनादेरिति। न च दुःखप्रकर्षेण व्यभिचारः–सप्तमनरकभूमौ नारकाणां तत्परमप्रकर्षप्रसिद्धेः सर्वार्थसिद्धौ देवाना सांसारिकसुखपरमप्रकर्षवन्मिथ्यादृष्टिष्वनन्तानुबन्धिक्रोधादिपरमप्रकर्षवद्वा। नापि ज्ञानहानिप्रकर्षेणानेकान्तस्तस्यापि क्षायोपशमिकस्य हीयमानतया प्रकृष्यमाणस्य केवलिनि परमापकर्षप्रसिद्धेः। क्षायिकस्य तु हानेरेवासम्भवात्कुतस्तत्प्रकर्षो यतोऽनेकान्तः। इत्थं वा साकल्येन कर्मप्रक्षये प्रयोगः कर्तव्यः। यस्यातिशये यद्धान्यतिशयस्तस्यात्यन्तातिशयेऽन्यस्यात्यन्तहानिः। यथाग्नेरत्यन्तातिशये शीतस्य। अस्ति च सम्यग्दर्शनादेरत्यन्तातिशयः क्वचिदात्मनीति। यद्वाऽऽवरणहानिः क्वचित्पुरुषविशेषे परमप्रकर्षप्राप्ता–प्रकृष्यमाणत्वात् परिमाणवत्। न चात्रासिद्धं साधनम्। तथा हि। प्रकृष्यमाणावरणहानिरावरणहानित्वान्माणिक्याद्यावरणहानिवत्। तद्धानिपरमप्रकर्षे च ज्ञानस्य परमः प्रकर्षः सिद्धः। यद्धि प्रकाशात्मकं तत्स्वावरणहानिप्रकर्षे प्रकृष्यमाणं दृष्टम्। यथा नयनप्रदीपादि। प्रकाशात्मकं च ज्ञानमिति। तदेवमावरणप्रसिद्धिवत्तदभावोप्यनवयेन प्रमाणतः प्रसिद्धः। तत्प्रभवमेव चाशेषार्थगोचरं ज्ञानमभ्युपगन्तव्यं–लेशतोप्यावरणसद्भावे तस्याशेषार्थगोचरत्वासम्भवात्–यत्रैवावरणसद्भावस्तत्रैवास्य प्रतिबन्धसम्भवात्। आगमद्वारेणाशेषार्थगोचरं ज्ञानमित्यप्यसुन्दरं विशदज्ञानस्य प्रस्तुतत्वात्। न चागमज्ञानं विशदम्। न चागमोप्यशेषार्थगोचरः–अर्थपर्यायेषु तस्याप्रवृत्तेः। ते चार्थस्य प्रतिक्षणमर्थक्रियाकारित्वात्सत्त्वाद्वा सन्तीत्यवसीयन्ते। अन्यथास्याऽवस्तुत्वप्रसङ्गः। करणजन्यत्वे चाशेषज्ञज्ञानस्यातीन्द्रियार्थेषु प्रतिबन्धः प्रसिद्ध एव–इन्द्रियाणां रूपादिमत्यऽव्यवहितेऽनेकावयवप्रचयात्मकेऽर्थे प्रवृत्तिप्रतीतेः। ननु योगजधर्मानुगृहीतानामिन्द्रियाणां गगनाद्यशेषातीन्द्रियार्थसाक्षात्कारिज्ञानजनकत्वसम्भवात् कथं तत्राशेषज्ञानस्येन्द्रियजत्वेपि प्रतिबन्धसम्भव इत्यप्यसमीक्षिताभिधानं–योगजधर्मानुग्रहस्येन्द्रियाणां प्रथमपरिच्छेदे प्रतिविहितत्वात्। भावनाप्रकर्षपर्यन्तजत्वाद्योगिविज्ञानस्य नोक्तदोषानुषङ्गः। भावना हि द्विविधा श्रुतमयी चिन्तामयी च। तत्र श्रुतमयी श्रूयमाणेभ्यः परार्थानुमानवाक्येभ्यः समुत्पद्यमानज्ञानेन श्रुतशब्दवाच्यतामास्कन्दता निर्वृत्ता परमप्रकर्षं प्रतिपद्यमाना स्वार्थानुमानज्ञानलक्षणया चिन्तया निर्वृत्तां चिन्तामयी भावनामारभते। सा च

---

१ सम्यग्दर्शनादि क्वचिदात्मनि परमप्रकर्षं प्राप्नोति तारतम्यप्रकर्षवत्त्वादित्युपरिष्टादध्याहियते ॥ २ केवलज्ञानस्य ॥ ३ तारतम्यप्रकर्ष ॥ ४ विपाकान्तत्वादित्यनुमानापेक्षया वाशब्दोऽत्र ॥ ५ क्वचित्कर्मणामत्यन्तहान्यतिशयो धर्मो सम्यग्दर्शनादेरत्यन्तातिशये भवति–तस्यातिशये तद्धान्यतिशयदर्शनादित्युपरिष्टादध्याहियते ॥ ६ कर्मण ॥ ७ साकल्येन ॥ ८ आवरणाभावप्रभवम् ॥ ९ परेण ॥ १० अर्थे ॥ ११ प्रकृतत्वात् ॥ १२ अर्थपर्याया ॥ १३ अर्थोऽवस्तु–असत्त्वात्। अमरार्थोऽर्थक्रियाशून्यत्वात्। अर्थक्रियाशून्योर्थ –अर्थपर्यायरहितत्वात् खपुष्पवत् ॥ १४ सौगतो वक्ति ॥ १५ आचार्यात् ॥ १६ सर्वं क्षणिकं सत्त्वादिति ॥ १७ प्राप्नुवता ॥ १८ श्रुतमयी भावना कर्त्री ॥

प्रकृष्यमाणा परं प्रकर्षपर्यन्तं सम्प्राप्ता योगिप्रत्यक्षं जनयतीति । तत्कथमस्यावरणापायप्रभवत्त्वमित्यप्यसारं क्षणिकनैरात्म्यादिभावनायाश्चिन्तामय्याः श्रुतमय्याश्च मिथ्यारूपत्वात् । न च मिथ्याज्ञानस्य परमार्थविषययोगिज्ञानजनकत्वमतिप्रसङ्गात् । यथा च न क्षणिकत्वं नैरात्म्यं शून्यत्वं वा वस्तुनस्तथा वक्ष्यते । किञ्चाखिलप्राणिनां भावनावतां तथाविधज्ञानोत्पत्तिः किन्न स्यात् ? सुगतवत्तेषां तथाभूतभावनाऽभावाच्चेन्न । प्रतिपन्नतत्त्वानां भावनाप्रवृत्तमनसां सर्वेषां समाना भावनैव कुतो न स्यात् ? प्रतिबन्धककर्मसद्भावाच्चेत्तर्हि भावनाप्रतिबन्धककर्मापाये भावनावद्योगिज्ञानप्रतिबन्धककर्मापाये तज्ज्ञानोत्पत्तिरभ्युपगन्तव्या । इति सिद्धं साकल्येनावरणापाये एवातीन्द्रियमशेषार्थविषयं विशदं प्रत्यक्षम् ।

ननु चाशेषार्थज्ञातुस्तज्ज्ञानवतः कस्यचित्पुरुषविशेषस्यैवासम्भवात्कथं तज्ज्ञानसम्भवः ? तथा हि । न कश्चित्पुरुषविशेषः सर्वज्ञोऽस्ति सदुपलम्भकप्रमाणपञ्चकागोचरचारित्वाद्वन्ध्यास्तनन्धयवत् । न चायमसिद्धो हेतुः । तथा हि । सकलपदार्थवेदी पुरुषविशेषः प्रत्यक्षेण प्रतीयतेऽनुमानादिप्रमाणेन वा ? न तावत्प्रत्यक्षेण । प्रतिनियतासन्नरूपादिविषयत्वेनान्यसन्तानस्थसंवेदनमात्रेऽप्यस्य सामर्थ्य नास्ति; किमङ्ग पुनरनाद्यनन्तातीतानागतवर्त्तमानसूक्ष्मादिस्वभावसकलपदार्थसाक्षात्कारिसंवेदनविशेषे तदध्यासिते पुरुषविशेषे वा तत्स्यात् ? न चातीतादिस्वभावनिखिलपदार्थग्रहणमन्तरेण प्रत्यक्षेण तत्साक्षात्करणप्रवृत्तज्ञानग्रहणं ग्राह्याग्रहणे तन्निष्ठग्राहकत्वस्याप्यग्रहणात् । नाप्यनुमानेनासौ प्रतीयते । तद्धि निश्चितस्वसाध्यप्रतिबन्धाद्धेतोरुदयमासादयत्प्रमाणतां प्रतिपद्यते । प्रतिबन्धश्चाखिलपदार्थज्ञसत्त्वेन स्वसाध्येन हेतोः किं प्रत्यक्षेण गृह्येतानुमानेन वा ? न तावत्प्रत्यक्षेणास्याऽत्यक्षज्ञानवत्सत्त्वसाक्षात्करणाक्षमत्वेन तत्प्रतिपत्तिनिमित्तहेतुप्रतिबन्धग्रहणेऽप्यक्षमत्वात् । न ह्यप्रतिपन्नसम्बन्धिनस्तद्गतसम्बन्धावगमो युक्तोऽतिप्रसङ्गात् । नाप्यनुमानेनानवस्थेतरेतराश्रयदोषानुषङ्गात् । न चात्र धर्मी प्रत्यक्षेण प्रतिपन्नः—अनक्षज्ञानवत्यत्यक्षेऽध्यक्षस्याप्रवृत्तेः । प्रवृत्तौ वाध्यक्षेणैवास्य प्रतिपन्नत्वान्न किञ्चिदनुमानेन । नाप्यनुमानेन—हेतोः पक्षधर्मतावगममन्तरेणानुमानस्यैवाप्रवृत्तेः । न चाप्रतिपन्ने धर्मिणि हेतोस्तत्सम्बन्धावगमः । नाप्यप्रतिपन्नपक्षधर्मत्वो हेतुः प्रतिनियतसाध्यप्रतिपत्त्यङ्गम् । किञ्च सत्तासाधने सर्वो हेतुरसिद्धविरुद्धानैकान्तिकत्वलक्षणां त्रयीं दोषजातिं नातिवर्त्तते । तथा हि । सर्वज्ञसत्त्वे साध्ये भावधर्मो हेतुरभावधर्मो वा स्यादुभयधर्मो वा ? प्रथमपक्षेऽसिद्धो—भावेऽसिद्धे तद्धर्मस्य सिद्धिविरोधात् । द्वितीयपक्षे तु विरुद्धो—भावे साध्येऽभावधर्मस्याभावाव्यभिचारित्वेन विरुद्धत्वात् । उभयधर्मोऽप्यनैकान्तिकः सत्तासाधने तदुभयव्यभिचारित्वात् । अपि चाविशेषेण सर्वज्ञः कश्चित्साध्यते विशेषेण वा ? तत्राद्यपक्षे विशेषतोऽर्हत्प्रणीतागमाश्रयणमनुपपन्नम् । द्वितीयपक्षे तु

---

१ मुख्यप्रत्यक्षस्य ॥ २ द्विचन्द्रादिज्ञानस्यापि योगिज्ञानजनकत्वप्रसङ्गात् ॥ ३ अशेषविषय ॥ ४ सर्वज्ञ ॥ ५ परेण त्वया ॥ ६ मुख्यम् ॥ ७ मीमांसक ॥ ८ अन्यस्य पुरुषान्तरस्य ॥ ९ अहो ॥ १० तत्सहिते ॥ ११ कश्चित्पुरुष सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वादित्यनेन ॥ १२ परमाणोरप्रतिपत्तावपि घटस्य परमाणुना सम्बन्धप्रतिपत्तिप्रसङ्गात् ॥ १३ निश्चिताविनाभावपूर्वकत्वादनुमानस्य ॥ १४ साध्यसाधकानुमाने ॥ १५ परोक्षे ॥ १६ धर्मी प्रतिपन्न ॥ १७ सर्वज्ञलक्षणे ॥ १८ सर्वज्ञस्य ॥ १९ त्रयोऽवयवा यस्या ॥ २० भावस्वरूप ॥ २१ सर्वज्ञसत्त्वे ॥ २२ सर्वज्ञस्य ॥ २३ भावाभावोभय ॥ २४ जैने ॥

हेतोरपरसर्वज्ञस्याभावेन दृष्टान्तानुवृत्त्यसम्भवादसाधारणानैकान्तिकत्वम्[1][2]। किञ्च यतो हेतोः प्रतिनियतोऽर्हन्सर्वज्ञः साध्यते ततो बुद्धोपि साध्यतां विशेषाभावात्[3]। न चात्र सर्वज्ञत्वसाधने हेतुरस्ति[4]। यदप्युच्यते सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षाः प्रमेयत्वात्पावकादिवत् तदप्युक्तिमात्रं यतोऽत्रैकज्ञानप्रत्यक्षत्वं सूक्ष्माद्यर्थानां साध्यत्वेनाभिप्रेतं प्रतिनियतविषयानेकज्ञानप्रत्यक्षत्वं वा ? तत्राद्यकल्पनायां विरुद्धो हेतुः प्रतिनियतरूपादिविषयग्राहकानेकप्रत्ययप्रत्यक्षत्वेन व्याप्तस्याग्न्यादिदृष्टान्तधर्मिणि प्रमेयत्वस्योपलम्भात्। साध्यविकलता च दृष्टान्तस्य। द्वितीयकल्पनायां सिद्धसाध्यता—अनेकप्रत्यक्षैरनुमानादिभिश्च तत्परिज्ञानाभ्युपगमात् "यदि षड्भिः प्रमाणैः स्यात्सर्वज्ञः केन वार्यते । एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ॥ नूनं स चक्षुषा सर्वान् रसादीन्प्रतिपद्यते" इत्यभिधानात् । किञ्च प्रमेयत्वं किमशेषज्ञेयव्यापिप्रमाणप्रमेयत्वव्यक्तिलक्षणमभ्युपगम्यतेऽस्मदादिप्रमाणप्रमेयत्वव्यक्तिस्वरूपं वा स्यादुभयव्यक्तिसाधारणसामान्यस्वभावं वा? प्रथमपक्षोऽयुक्तो विवादाध्यासितपदार्थेषु तथाभूतप्रमाणप्रमेयत्वस्यासिद्धत्वात्। अन्यथा साध्यस्यापि सिद्धेर्हेतूपादानमपार्थकम्। सन्दिग्धान्वयश्चायं हेतुः स्यात्तथाभूतप्रमाणप्रमेयत्वस्य दृष्टान्तेऽसिद्धत्वात्। द्वितीयपक्षेऽसिद्धो हेतुरस्मदादिप्रमाणप्रमेयत्वस्य विवादगोचरार्थेष्वसम्भवात्। सम्भवे वा ततस्तथाभूतप्रत्यक्षत्वसिद्धिरेव स्यात् । तत्र चाविवादान्न हेतूपन्यासः फलवान्। नाप्युभयप्रमेयत्वव्यक्तिसाधारणं प्रमेयत्वसामान्यं हेतुरत्यन्तविलक्षणातीन्द्रियेन्द्रियविषयप्रमाणप्रमेयत्वव्यक्तिद्वयसाधारणसामान्यस्यैवासम्भवात्। तन्नानुमानात्तत्सिद्धिः। नाप्यागमात्। सोपि हि नित्योऽनित्यो वा तत्प्रतिपादकः स्यात्? न तावन्नित्यस्तत्प्रतिपादकस्य तस्याभावात्; भावेपि प्रामाण्यासम्भवात् कार्येऽर्थे तत्प्रामाण्यप्रसिद्धेः। अनित्योपि किं तत्प्रणीतः पुरुषान्तरप्रणीतो वा ? प्रथमपक्षेऽन्योन्याश्रयः। सर्वज्ञप्रणीतत्वे तस्य प्रामाण्यं ततस्तत्प्रतिपादकत्वमिति । नापि पुरुषान्तरप्रणीतस्तस्योन्मत्तवाक्यवदप्रामाण्यात्। तन्नागमादप्यस्य सिद्धिः। नाप्युपमानात्। तत्खलूपमानोपमेययोरनवयवेनाध्यक्षत्वे सति सादृश्यावलम्बनमुदयमासादयति नान्यथातिप्रसङ्गात्। न चोपमानभूतः कश्चित्सर्वज्ञत्वेनाध्यक्षतः सिद्धो येन तत्सादृश्यादन्यस्य सर्वज्ञत्वमुपमानात्साध्येत। नाप्यर्थापत्तितस्तत्सिद्धिः सर्वज्ञसद्भावमन्तरेणानुपपद्यमानस्य प्रमाणषट्कविज्ञातार्थस्य कस्यचिदभावात्, धर्माद्युपदेशस्य बहुजनपरिगृहीतस्यान्यथापि भावात् । तथा चोक्तं "सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः। दृष्टो न चैकदेशोस्ति लिङ्गं वा योनुमापयेत् । १ । न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधकः। न च मन्त्रार्थवादानां

१ दृष्टान्तप्रवर्तनाभावात् ॥ २ विपक्षसपक्षाभ्यां व्यावर्तमानो हेतुरसाधारणानैकान्तिकः । अस्योदाहरणमनित्यः शब्दः श्रावणत्वादिति ॥ ३ हेतो ॥ ४ जगति ॥ ५ अनुमाने ॥ ६ सूक्ष्मान्तरितदूरार्थ ॥ ७ जैनादिभि ॥ ८ प्रत्यक्षत्वाप्रत्यक्षत्वेन कारणेन विवादाध्यासितत्वम् ॥ ९ सूक्ष्मादिषु ॥ १० विवादाध्यासितपदार्थेषु अशेषज्ञेयव्यापिप्रमाणप्रमेयत्वं च सिद्धं चेत् ॥ ११ असाधारणानैकान्तिकः ॥ १२ अशेषज्ञेयप्रमाणप्रमेयत्वादित्ययम् ॥ १३ पावकादौ ॥ १४ अस्मदादिप्रमाणप्रमेयत्वादिति हेतु ॥ १५ सूक्ष्मादिषु ॥ १६ अस्मदादिप्रमाणभूत ॥ १७ अतीन्द्रियश्चेन्द्रियविषयश्च तेषां ग्राहकप्रमाणम् ॥ १८ सर्वज्ञ ॥ १९ हिरण्यगर्भप्रकृत्यसर्वज्ञ इति ॥ २० अग्निष्टोमेन यजेत स्वर्गकाम इति क्रियमाणेर्थे ॥ २१ सर्वज्ञ ॥ २२ साकल्येन ॥ २३ भूभवनवद्वितीयितस्योपमानज्ञानप्रसङ्गात् ॥ २४ तस्योपमानभूतसर्वज्ञस्य ॥ २५ नु ॥ २६ सर्वज्ञाभावेपि ॥ २७ सम्बन्ध्यन्तर हेतु ॥ २८ लिङ्ग भूत्वेति शेष ॥ २९ सर्वज्ञम् ॥ ३० प्रशमामन्त्रभावनादि ॥

तात्पर्यमवकल्पते । २ । न चान्यार्थप्रधानैस्तैस्तदस्तित्वं[3] विधीयते । न चानुवदितुं शक्यः पूर्वमन्यैरबोधितः । ३ । अनादेरागमस्यार्थो न च सर्वज्ञ आदिमान् । कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते । ४ । अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते । प्रकल्पेत कथं सिद्धिरन्योन्याश्रययोस्तयोः ? । ५ । सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता । कथं तदुभयं सिद्ध्येत् सिद्धमूलान्तरादृते । ६ । असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् । सर्वज्ञमवगच्छन्तः स्ववाक्यात्किन्न जानते ? । ७ । सर्वज्ञसदृशं कश्चिद्यदि पश्येम सम्प्रति । उपमानेन सर्वज्ञं जानीयाम ततो वयम् । ८ । उपदेशो हि बुद्धादेर्धर्माऽधर्मादिगोचरः । अन्यथा नोपपद्येत सार्वज्ञं यदि नाऽभवत् । ९ । बुद्धादयो ह्यवेदज्ञास्तेषां वेदादसम्भवः । उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात् । १० । ये तु मन्वादयः सिद्धाः प्राधान्येन त्रयीविदाम् । त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः । ११ ।" इति । न च प्रमाणान्तरं सदुपलम्भकं सर्वज्ञस्य साधकमस्ति । मा भूदत्रत्येदानीन्तनास्मदादिजनाना सर्वज्ञस्य साधकं प्रत्यक्षाद्यन्यतमं देशान्तरकालान्तरवर्त्तिनां केषाञ्चिद्भविष्यतीति चाऽयुक्तं "यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् । दृष्टं सम्प्रति लोकस्य तथा कालान्तरेऽप्यभूत्" इत्यभिधानात् । तथा हि । विवादाध्यासिते देशे काले च प्रत्यक्षादिप्रमाणमत्रत्येदानीन्तनप्रत्यक्षादिग्राह्यसजातीयार्थग्राहकं तद्विजातीयसर्वज्ञाद्यर्थग्राहकं वा न भवति–प्रत्यक्षादिप्रमाणत्वादत्रत्येदानीन्तनप्रत्यक्षादिप्रमाणवत् । ननु च यथाभूतमिन्द्रियादिजनितं प्रत्यक्षादि सर्वज्ञाद्यर्थासाधकं दृष्टं तथाभूतमेव देशान्तरे कालान्तरे च तथा साध्यतेऽन्यथाभूतं वा ? तथाभूतं चेत्सिद्धसाधनम् । अन्यथाभूतं चेदप्रयोजको हेतुर्जगतो बुद्धिमत्कारणत्वे साध्ये संनिवेशविशिष्टत्वादिवत् । तदसाम्प्रतं–तथाभूतस्यैव तथा साधनात् । न च सिद्धसाधनमन्यादृशप्रत्यक्षाद्यभावात् । तथा हि । विवादापन्नं प्रत्यक्षादिप्रमाणमिन्द्रियादिसामग्रीविशेषापनपेक्षं न भवति प्रत्यक्षादिप्रमाणत्वात्प्रसिद्धप्रत्यक्षादिप्रमाणवत् । न गृध्रवराहपिपीलिकादिप्रत्यक्षेण सन्निहितदेशविशेषानपेक्षिणा नक्तञ्चरप्रत्यक्षेण वालोकानपेक्षिणानेकान्तः–कात्यायनाद्यनुमानातिशयेन जैमिन्याद्यागमातिशयेन वा तस्यापीन्द्रियादिप्रणिधानसामग्रीविशेषमन्तरेणासम्भवात्–अतीन्द्रियाननुमेयाद्यर्थाविषयत्वेन स्वार्थातिलङ्घनाभावात् । तथा चोक्तं "यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तितः । १ । येऽपि सातिशया दृष्टाः प्रज्ञामेधादिभिर्नराः । स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् । २ ।

---

१ घटेत ॥ २ यागार्थं ॥ ३ आगमे ॥ ४ आगमान् ॥ ५ अनुमापणात् ॥ ६ प्रमाणान्तरे ॥ ७ सर्वज्ञ ॥ ८ अस्मदादिभि ॥ ९ सर्वज्ञागममत्यार्थयो ॥ १० कथमन्योन्याश्रय इत्युक्ते सत्याह ॥ ११ वस ॥ १२ आगमप्रामाण्यलक्षणात् मूलादन्यत् सर्वज्ञप्रामाण्यलक्षण मूलान्तरं वा द्रष्टव्यम् ॥ १३ मूल प्रामाण्यम् ॥ १४ सर्वज्ञसदृशदर्शनात् ॥ १५ भूता ॥ १६ न विद्यते सभव उत्पत्तिर्यस्योपदेशस्य ॥ १७ अज्ञानात् ॥ १८ सिद्धा प्रसिद्धा ॥ १९ मध्ये ॥ २० त्रयीविद्भिराश्रितो ग्रन्थो येषा ते ॥ २१ वेदात्प्रभव उत्पत्तिर्यासामुक्तीना ता वेदप्रभवा । वेदप्रभवा उक्तयो येषा मन्वादीना ते ॥ २२ रूपादिमदलासनादि ॥ २३ अस्मदादिप्रमाणसदृशप्रमाणप्रकारेण ॥ २४ सर्वज्ञवादी ब्रूते ॥ २५ अतीन्द्रियप्रत्यक्षम् ॥ २६ सपक्षव्यापकपक्षव्यावृत्त प्रतिनियतार्थग्राहित्वे सतीति विशेषणजनितोपाध्याहितसम्बन्धो हेतुरप्रयोजक ॥ २७ अक्रियादर्शिनोपि कृतबुद्ध्युत्पादकत्वे सति ॥ २८ अतीन्द्रिय ॥ २९ देशान्तरकालान्तरवर्त्ति ॥ ३० अत्रत्येदानीन्तन प्रसिद्धम् ॥ ३१ वररुचि ॥ ३२ अश्रुतवेदार्थलक्षण ॥ ३३ एकाग्रता ॥ ३४ स्वस्य प्रत्यक्षादे ॥ ३५ गृध्रादीन्द्रिये ॥ ३६ क्रियमाणायाम् ॥ ३७ इन्द्रियाणामतिशयो नास्ति चेन्मा भूत्पुरुषाणा भविष्यतीत्युक्ते सत्याह ॥ ३८ अर्थग्रहणशक्ति प्रज्ञा ॥ ३९ मेधा पाठग्रहणशक्ति ॥

प्राज्ञोपि[1] हि नरः सूक्ष्मानर्थान्द्रष्टुं क्षमोपि सन्। सजातीरनतिक्रामन्नतिशेते परान्नरान्। ३। एकशास्त्रविचारेषु[2] दृश्यतेऽतिशयो महान्। न तु शास्त्रान्तरज्ञानं तन्मात्रेणैव लभ्यते। ४। ज्ञात्वा[3] व्याकरणं दूरं[4] बुद्धिः शब्दापशब्दयोः। प्रकृष्यते[5] न नक्षत्रतिथिग्रहणनिर्णये। ५। ज्योतिर्विच्च[6][7] प्रकृष्टोपि चन्द्रार्कग्रहणादिषु। न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति। ६। तथा वेदेतिहासादिज्ञानातिशयवानपि। न स्वर्गदेवताऽपूर्वप्रत्यक्षीकरणे[8] क्षमः। ७। देशहस्तान्तरं[9] व्योम्नि यो नामोत्लुत्य गच्छति। न योजनमसौ गन्तुं शक्तोऽभ्यासशतैरपि। ८।” इति। प्रसङ्गविपर्ययाभ्यां[10] चास्याशेषार्थविषयत्वं[11] बाध्यते। तथा हि। सर्वज्ञस्य ज्ञानं प्रत्यक्षं यद्यभ्युपगम्यते[12] तदा तद्धर्मादिग्राहकं[13] न स्याद्विद्यमानोपलम्भनत्वात्। विद्यमानोपलम्भनं तत्–सत्सम्प्रयोगजत्वात्। सत्सम्प्रयोगजं तत्–प्रत्यक्षशब्दवाच्यत्वादस्मदादिप्रत्यक्षवत्[14]। तद्धर्मादिग्राहकं चेन्न विद्यमानोपलम्भनं–धर्मादेरविद्यमानत्वात्। तत्त्वे[15] चासत्सम्प्रयोगजत्वे चाऽप्रत्यक्षशब्दवाच्यत्वम्[16][17]। धर्मज्ञत्वनिषेधे चान्याशेषार्थप्रत्यक्षत्वेपि न प्रेरणा[18] प्रामाण्यप्रतिबन्धो धर्मे तस्या एव प्रामाण्यात्। तदुक्तं “सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात्। केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः। १। धर्मज्ञत्वनिषेधस्तु केवलोत्रोपयुज्यते[19]। सर्वमन्यद्विजानंस्तु[20] पुरुषः केन[21] वार्यते। २।” किञ्चास्य[22] ज्ञानं चक्षुरादिजनितं धर्मादिग्राहकमभ्यासजनितं वा स्याच्छब्दप्रभवं वानुमानाविर्भूतं वा? प्रथमपक्षे धर्मादिग्राहकत्वायोगश्चक्षुरादीनां प्रतिनियतरूपादिविषयत्वेन तत्प्रभवज्ञानस्याप्यत्रैव प्रवृत्तेः। अथाभ्यासजनितं ज्ञानाभ्यासादिप्रकर्षतरतमादिक्रमेण तत्प्रकर्षसम्भवे सकलस्वभावातिशयपर्यन्तं[23] संवेदनमवाप्यते इत्यपि मनोरथमात्रम्।–अभ्यासो हि कस्यचित्प्रतिनियतशिल्पकलादौ तदुपदेशाद् ज्ञानाच्च दृष्टः। न चाशेषार्थोपदेशो ज्ञानं वा सम्भवति। तत्सम्भवे किमभ्यासप्रयासेनाशेषार्थज्ञानस्य सिद्धत्वात्। अन्योन्याश्रयश्च। अभ्यासात्तज्ज्ञानं ततोऽभ्यास इति। शब्दप्रभवं[24] तदित्यप्ययुक्तं[25] परस्पराश्रयणानुपङ्गात्। सर्वज्ञप्रणीतत्वेन हि तत्प्रामाण्येऽशेषार्थविषयज्ञानसम्भवस्तत्सम्भवे चाशेषज्ञस्य तथाभूतशब्दप्रणेतृत्वमिति[26]। अभ्युपगम्यते च प्रेरणाप्रभवज्ञानवतो[27] धर्मज्ञत्वं “चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं[28] विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलं[29] नान्यत् किंचनेन्द्रियादिकम्”इत्यभिधानात्। अनुमानाविर्भूतमित्यप्यसङ्गतं–धर्मादेरतीन्द्रियत्वेन तज्ज्ञापकलिङ्गस्य तेन सह सम्बन्धासिद्धेरसिद्धसम्बन्धस्य चाज्ञापकत्वात्। किञ्चानुमानेनागेषज्ञत्वेऽस्मदादीनामपि तत्प्रसङ्गो–भावाभावोभयरूपं जगत्प्रमेयत्वादित्याद्यनुमानस्यास्मदादीनामपि भावात्। अनुमानागमज्ञानस्य चास्पष्टत्वात्तज्ज-

---

१ पूर्वोक्तं भावयति ॥ २ तत्र दृष्टान्तमाह ॥ ३ दृष्टान्तं भावयति ॥ ४ न्यासपर्यन्तम् ॥ ५ प्रकृष्टा भवति ॥ ६ पुनरपि दृष्टान्तं भावयति ॥ ७ चकारो दृष्टान्तसमुच्चये ॥ ८ अदृष्ट ॥ ९ लोकप्रसिद्ध दृष्टान्तमाह ॥ १० प्रसङ्गविपर्ययोर्लक्षणमुत्तरपक्षे वदिष्यति ॥ ११ सर्वज्ञज्ञानस्य ॥ १२ जैनादिभि सर्वज्ञवादिभि ॥ १३ पुण्यपापादि ॥ १४ इति प्रसङ्गेन तस्याशेषार्थविषयत्व बाध्यते ॥ १५ तस्य परोक्षत्वमित्यर्थ ॥ १६ इति विपर्ययेण तस्याशेषार्थविषयत्व बाध्यते ॥ १७ अविद्यमानोपलम्भनत्वे ॥ १८ वैदिकी ॥ १९ प्रेरणाप्रामाण्ये ॥ २० धर्माधर्माभ्यामन्यत् ॥ २१ न केनापि ॥ २२ सर्वज्ञस्य ॥ २३ सकलार्थग्रहणलक्षणातिशय ॥ २४ आगम ॥ २५ धर्मादिग्राहक सर्वज्ञज्ञानम् ॥ २६ अशेषार्थविषय ॥ २७ मन्वादे ॥ २८ कालेन ॥ २९ देशेन ॥

नितस्याप्यवैशद्यसम्भवान्न तज्ज्ञानवान्सर्वज्ञो[1] युक्तः । न च वक्तव्यं—पुनःपुनर्भाव्यमानं भावनाप्रकर्षपर्यन्ते योगिज्ञानरूपतामासादयत्तद्वैशद्यभाग् भविष्यति । दृश्यते चाभ्यासबलात्कामशोकाद्युपप्लुतज्ञानस्य वैशद्यमिति—तद्वदस्याप्युपप्लुतत्वप्रसङ्गात् । किञ्चास्याखिलार्थग्रहणं सकलज्ञत्वं प्रधानभूतकतिपयार्थग्रहणं वा ? तत्राद्यपक्षे क्रमेण तद्ग्रहणं युगपद्वा ? न तावत्क्रमेणातीतानागतवर्त्तमानार्थानां परिसमाप्त्यऽभावात्तज्ज्ञानस्याप्यपरिसमाप्तेः सर्वज्ञत्वायोगात् । नापि युगपत्—परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्र ज्ञाने प्रतिभासासम्भवात् । सम्भवे वा प्रतिनियतार्थस्वरूपप्रतीतिविरोधः । किञ्चैकक्षण एवाशेषार्थग्रहणाद् द्वितीयक्षणेऽकिञ्चिज्ज्ञः स्यात् । तथा परस्थरागादिसाक्षात्करणाद्रागादिमानन्यथा सकलार्थसाक्षात्करणविरोधः । नापि प्रधानभूतकतिपयार्थग्रहणम् ।—इतरार्थव्यवच्छेदेनैतेषामेव प्रयोजननिष्पादकत्वात्प्राधान्यमिति निश्चयो हि सकलार्थज्ञाने सत्येव घटते नान्यथा । तच्च प्रागेव कृतोत्तरम् । कथं चातीतानागतग्रहणं तत्स्वरूपासम्भवाद् ? असतो ग्रहणे तैमिरिकज्ञानवत्प्रामाण्याभावः । सत्त्वेन ग्रहणेऽतीतादेर्वर्त्तमानत्वम् । तथा चान्यकालस्यान्यकालतया वस्तुनो ग्रहणात्तज्ज्ञानस्याऽप्रामाण्यम् । कथं चासौ तद्व्याख्यातार्थाज्ञाने तत्कालेप्यसर्वज्ञैर्ज्ञातुं शक्यते ? तदुक्तं "सर्वज्ञोयमिति ह्येतत्तत्कालेपि बुभुत्सुभिः । तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् । १ । कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव । य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते । २ । सर्वज्ञो नावबुद्धश्च येनैव स्यान्न तं प्रति । तद्वाक्यानां प्रमाणत्वं मूलाज्ञाने[10]ऽन्यवाक्यवत्[11] । ३ ।" इति ।

अत्र प्रतिविधीयते[12] । यत्तावदुक्तं सदुपलम्भकप्रमाणपञ्चकाविषयत्वं साधनं—तदसिद्धं—तत्सद्भावावेदकस्यानुमानादेः सद्भावात् । तथा हि । कश्चिदात्मा सकलपदार्थसाक्षात्कारी—तद्ग्रहणस्वभावत्वे सति प्रक्षीण[13]प्रतिबन्धप्रत्ययत्वात् । यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययं तत्तत्साक्षात्कारि । यथापगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारि । तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च कश्चिदात्मेति । न तावत्सकलार्थग्रहणस्वभावत्वमात्मनोऽसिद्धं चोदनाबलान्निखिलार्थज्ञानोत्पत्त्यन्यथानुपपत्तेस्तस्य तत्सिद्धेः सकल[14]मनेकान्तात्मकं सत्त्वादित्यादिव्याप्तिज्ञानोत्पत्तेर्वा । यद्धि[15] यद्विषयं तत्तद्ग्रहणस्वभावम् । यथा रूपादिपरिहारेण रसविषयं रासनविज्ञानं रसग्रहणस्वभावम् । सकलार्थविषयश्चात्मा व्याप्त्यागमज्ञानाभ्यामिति । सोयं[16] चोदना हि भूतं भवन्तं भविष्यन्तं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलं पुरुषानिति स्वयं ब्रुवाणो विधिप्रतिषेधविचारणानिबन्धनं साकल्येन व्याप्तिज्ञानं च प्रतिपद्यमानः सकलार्थग्रहणस्वभावतामात्मनो निराकरोतीति कथं स्वस्थः[17] ? प्रक्षीणप्रतिबन्धप्रत्ययत्वं च प्रागेव प्रसाधितत्वान्नासिद्धम्[18] । साध्यसाधनयोश्च प्रतिबन्धो न प्रत्यक्षानुमानाभ्यां प्रतिज्ञायते येनोक्त-

---

१ अनुमानादिज्ञानजनितास्पष्टज्ञानवान् ॥ २ आगमानुमानजनितास्पष्ट ज्ञानम् ॥ ३ व्याहत ॥ ४ सर्वज्ञज्ञानस्य ॥ ५ मोक्षलक्षण ॥ ६ सर्वज्ञ ॥ ७ तेनसर्वज्ञज्ञानेन ॥ ८ तर्हि सर्वज्ञैरेव सर्वज्ञो ज्ञायते इत्युक्ते सत्याह ॥ ९ यत ॥ १० मूलस्य वाक्यकारणस्य सर्वज्ञलक्षणस्य ॥ ११ अन्यस्य रथ्यापुरुषस्य ॥ १२ जैनै ॥ १३ प्रक्षीण प्रतिबन्धलक्षण प्रत्यय कारण यस्य ॥ १४ वस्तु ॥ १५ आत्मा सकलार्थग्रहणस्वभावो भवति सकलार्थविषयत्वादित्युपरिष्टाद्योज्यम ॥ १६ मीमांसक ॥ १७ बुद्धिमान् ॥ १८ विशेष्यम ॥

दोषानुषङ्गः स्यात्—तर्काख्यप्रमाणान्तरात्तत्सिद्धेः। यच्चाप्रतिपन्नपक्षधर्मत्वो हेतुर्न प्रतिनियतसाध्यप्रतिपत्त्यङ्गमित्युक्तं तदप्यमङ्गलम्। न हि सर्वज्ञोऽत्र धर्मित्वेनोपात्तो येनास्यासिद्धिरयं दोषः। किं तर्हि? कश्चिदात्मा। तत्र चाविप्रतिपत्तेः। न चापक्षधर्मस्य हेतोरगमकत्वं "पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते" इति स्वयमभिधानात्। यदप्युक्तं—सत्तासाधने सर्वा हेतुत्रयी दोषजाति नातिवर्तत इति तत्सर्वानुमानोच्छेदकारित्वादयुक्तम्। शक्यं हि वक्तुं "धूमत्वादिर्ययग्निमत्पर्वतधर्मस्तदाऽसिद्धः। को हि नामाग्निमत्पर्वतधर्मं हेतुमिच्छन्नग्निमत्त्वमेव नेच्छेत्। तद्विपरीतधर्मश्चेद्विरुद्धः—साध्यविरुद्धसाधनात्। उभयधर्मश्चेद्व्यभिचारी—सपक्षेतरयोर्वर्त्तनात्। विमत्यधिकरणभावापन्नधर्मिधर्मत्वे धूमवत्त्वादेः सर्वं सुस्थम्। यथा चाचलस्यानलवत्त्वादिना प्रसिद्धसत्ताकस्य सन्दिग्धाग्निमत्त्वादिसाध्यधर्मस्य धर्मो हेतुर्न विरुध्यते तथा प्रसिद्धात्मत्वादिविशेषणसत्ताकस्याप्रसिद्धसर्वज्ञत्वोपाधिसत्ताकस्य च धर्मिणो धर्मः प्रकृतो हेतुः कथं विरुध्येत?" यदप्यविशेषेण सर्वज्ञः कश्चित्साध्यते विशेषेण वेत्याद्यऽभिहित तदप्यभिधानमात्रं सामान्यतस्तत्साधनात्तस्य विवादात्। विशेषविप्रतिपत्तौ पुनर्दृष्टेष्टाविरुद्धवाक्त्वादर्हत एवाशेषार्थज्ञत्वं सेत्स्यति। कथं वा तत्प्रतिषेधः? अत्राप्यस्य दोषस्य समानत्वात्। अतो हि तत्प्रतिषेधसाधनेऽप्रसिद्धविशेषण पक्षो व्याप्तिश्च न सिध्येत् दृष्टान्तस्य साध्यशून्यतानुषङ्गात्। अनर्हतश्चेत्स एव दोषो बुद्धादेः परस्यासिद्धेः। अनिष्टानुषङ्गश्चार्हतस्तत्प्रतिषेधात्। सामान्यतस्तत्प्रतिषेधे सर्वं सुस्थम्। यच्चोक्तमेकज्ञानप्रत्यक्षत्वं सूक्ष्माद्यर्थानां साध्यत्वेनाभिप्रेतं प्रतिनियतविषयानेकज्ञानप्रत्यक्षत्वं वेत्यादि तदप्युक्तिमात्रं प्रत्यक्षसामान्येन कस्यचित्सूक्ष्माद्यर्थानां प्रत्यक्षत्वसाधनात्। प्रसिद्धे च तेषां सामान्यतः कस्यचित्प्रत्यक्षत्वे तत्प्रत्यक्षस्यैकत्वमिन्द्रियानिन्द्रियानपेक्षत्वात्सिध्येत्—तदपेक्षस्यैवास्यानेकत्वप्रसिद्धेः। तदनपेक्षत्वं च प्रमाणान्तरात्सिद्धेत्। तथा हि। योगिप्रत्यक्षमिन्द्रियानिन्द्रियानपेक्षं सूक्ष्माद्यर्थविषयत्वात्। यत्पुनरिन्द्रियानिन्द्रियापेक्षं तन्न सूक्ष्माद्यर्थविषयम्। यथाऽस्मदादिप्रत्यक्षम्। तथा च योगिनः प्रत्यक्षम्। तस्मात्तथेति। किञ्चैवं साध्यविकल्पनेनानुमानोच्छेदः। शक्यते हि वक्तुं 'साध्यधर्मिधर्मोऽग्निः साध्यत्वेनाभिप्रेतो दृष्टान्तधर्मिधर्म उभयधर्मो वा? प्रथमपक्षे विरुद्धो हेतुस्तद्विरुद्धेन दृष्टान्तधर्मिणि तद्धर्मेणाग्निना धूमस्य व्याप्तिप्रतीतेः। साध्यविकलश्च दृष्टान्तः स्यात्। द्वितीयपक्षे तु प्रत्यक्षादिविरोधः। अथोभयगताग्निसामान्यं साध्यते तर्हि सिद्धसाध्यता"। यच्चान्यदुक्तं प्रमेयत्वं किमशेषज्ञेयव्यापिप्रमाणप्रमेयत्वव्यक्तिलक्षणमस्मदादिप्रमाणप्रमेयत्व-

---

१ अनवस्थेतरेतरानुषङ्ग २ अर्थसाक्षात्कारित्वे सत्येव प्रक्षीणप्रतिबन्धप्रत्ययत्व [illegible] ६ ज्ञानवान् ॥ ७ अतश्च हेतूपन्यासो व्यर्थः ॥ ८ अनग्निमत्पर्वतधर्म ॥ ९ आदिशब्देन [illegible] ॥ १० [illegible] ॥ ११ [illegible] ॥ १२ [illegible] ॥ ३ परेण ॥ ४ अनुमाने ॥ ५ [illegible] ॥ पुरुष स सोऽर्हन् सन् सर्वज्ञो न भवतीति ॥ १४ अन्यथा ॥ १५ रथ्यापुरुषस्य ॥ १६ [illegible] ॥ १७ [illegible] ॥ १८ [illegible] ॥ १९ [illegible] ॥ २० [illegible] ॥ १३ [illegible] अप्रसिद्धविशेषण पक्ष इत्यादिदूषणानि विशेषपक्षोक्तानि नोपढौकन्ते इति ॥ २१ प्रत्यक्षस्य ॥ २२ [illegible] ॥ २३ [illegible] ॥ २४ [illegible] (जैनाः) [illegible] ॥

व्यक्तिस्वरूपं वेत्यादि तद्धूमादिसकलसाधनोन्मूलनहेतुत्वान्न वक्तव्यम् । तथा हि । साध्यधर्मिधर्मो धूमो हेतुत्वेनोपात्तो दृष्टान्तधर्मिधर्मो वा स्यादुभयगतसामान्यरूपो वा ? साध्यधर्मिधर्मत्वे दृष्टान्ते तस्याभावादनन्वयो[3] हेतुदोषः । दृष्टान्तधर्मिधर्मत्वे साध्यधर्मिण्यभावादसिद्धता । उभयगतसामान्यरूपत्वेऽप्यसिद्धतैव–प्रत्यक्षत्वाप्रत्यक्षत्वेनात्यन्तविलक्षणमहानसाचलप्रदेशव्यक्तिद्वयाश्रितसामान्यस्यैवासम्भवात् । अथ कण्ठाक्षिविक्षेपादिलक्षणधर्मकलापसाधर्म्यान्न महानसाचलप्रदेशाश्रितधूमव्यक्त्योरत्यन्तवैलक्षण्यं येनोभयगतसामान्यासिद्धेरसिद्धता स्यात् तर्हि स्वापूर्वार्थव्यवसायात्मकत्वादिधर्मकलापसाधर्म्यस्यातीन्द्रियेन्द्रियविषयप्रमाणव्यक्तिद्वयेऽत्यन्तवैलक्षण्यनिवर्तकस्य सम्भवादुभयसाधारणसामान्यसिद्धेः कथं प्रमेयत्वसामान्यस्यासिद्धिः ? यच्चेदमुक्तं प्रसङ्गविपर्ययाभ्यां चास्याशेषार्थविषयत्वं बाध्यत इत्यादि तन्मनोरथमात्रम् । साध्यसाधनयोर्व्याप्यव्यापकभावसिद्धौ हि व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको यत्र प्रदर्श्यते तत्प्रसङ्गसाधनम् । व्यापकनिवृत्तौ चावश्यं भाविनी व्याप्यनिवृत्तिः स विपर्ययः । न च प्रत्यक्षत्वसत्संप्रयोगजत्वविद्यमानोपलम्भनत्वधर्माद्यनिमित्तत्वानां व्याप्यव्यापकभावः क्वचित् प्रतिपन्नः । स्वात्मन्येवासौ प्रतिपन्न इत्यप्यसङ्गतं–चक्षुरादिकरणग्रामप्रभवप्रत्यक्षस्याव्यवहितदेशकालस्वभावाविप्रकृष्टप्रतिनियतरूपादिविषयत्वाभ्युपगमान्नियमस्य चाभावाद्विप्रकृष्टार्थग्राहकेऽपि प्रत्यक्षशब्दवाच्यत्वदर्शनात् । तथा हि । अनेकयोजनशतव्यवहितार्थग्राहि वैनतेयप्रत्यक्षं रामायणादौ प्रसिद्धं लोके चातिदूरार्थग्राहि गृध्रवराहादिप्रत्यक्षं स्मरणसव्यपेक्षेन्द्रियादिजन्यप्रत्यभिज्ञाप्रत्यक्षं च कालविप्रकृष्टस्यातीतकालसम्बन्धित्वस्यातीतदर्शनसम्बन्धित्वस्य च ग्राहि पुरोवस्थितार्थे भवतैवाभ्युपगम्यते । अन्यथा "देश[24]कालादिभेदेन तत्रा[25]स्त्यवसरो मितेः[26] । इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम्[27]" इत्यादिना तस्या[28]गृहीतार्थाधिगन्तृत्वं पूर्वापरकालसम्बन्धित्वलक्षणनित्यत्वग्राहकत्वं च प्रतिपाद्यमानं विरुध्येत । प्रातिभं च ज्ञानं शब्दलिङ्गाक्षव्यापारानपेक्षं श्वो मे भ्राता आगन्ता इत्याद्याकारमनागतातीन्द्रियकालविशेषणार्थप्रतिभासं जाग्रद्दशाया स्फुटतरमनुभूयते । किञ्च धर्मादेरतीन्द्रियत्वाच्चक्षुरादिनानुपलम्भोऽविद्यमानत्वाद्वा स्यादविशेषणत्वाद्वा ? न तावदाद्यः पक्षः–अतीन्द्रियस्याप्यतीतकालादेरुपलम्भाभ्युपगमात् । नाप्यविद्यमानत्वाद्वा विधर्मादेरतीतकालादेरिवाविद्यमानत्वेऽप्युपलम्भसम्भवात् । अविशेषणत्वं तु तस्यासिद्धं सकललो-

---

१ पर्वतधूमवत्त्वादित्युक्ते ॥ २ महानसे ॥ ३ यो य पर्वतधूमवान् स सोग्निमानित्यन्वयो न ॥ ४ महानसधूमवत्त्वादित्युक्ते ॥ ५ अतीन्द्रियविषयश्चेन्द्रियविषयश्च तयोर्ग्राहक प्रमाणम् ॥ ६ मद्दशास्त्रप्रवर्तकस्येत्यर्थ ॥ ७ सर्वज्ञस्य ॥ ८ अनुमाने ॥ ९ व्याप्य ॥ १० व्यापक ॥ ११ व्याप्य ॥ १२ व्यापक ॥ १३ दृष्टान्ते ॥ १४ समीपवार्त्ति ॥ १५ यस ॥ १६ यथाविधे प्रत्यक्षे व्याप्यव्यापकभाव साध्यसाधनाना प्रतिपनस्तथाविधेऽसौ स्यान्न सर्वज्ञप्रत्यक्षे तत्र व्याप्यव्यापकभावस्याप्रतिपन्नत्वादित्यर्थं ॥ १७ यत्प्रत्यक्षशब्दवाच्य तदव्यवहितदेशकालार्थग्राहकमिति नियमस्य ॥ १८ ज्ञाने ॥ १९ वराह पिपीलिका ॥ २० अनिन्द्रियमादिपदेन ॥ २१ धर्मस्य ॥ २२ देवदत्तलक्षणे ॥ २३ मीमासकेन ॥ २४ स्वभावादिरादिपदेन ॥ २५ पूर्वप्रमाणगृहीतेर्थे देवदत्तलक्षणे ॥ २६ प्रत्यभिज्ञाया ॥ २७ परिज्ञातम् ॥ २८ प्रत्यभिज्ञानस्य ॥ २९ भवता ॥ ३० योगजधर्मकारणधर्मोपलम्भे ॥

कोपभोग्यार्थजनकत्वेन द्रव्यगुणकर्मजन्यत्वेन चास्याखिलार्थविशेषणत्वसम्भवात् । अतीताद्यतीन्द्रियकालादेरिवास्यापि विशेषणग्रहणप्रवृत्तचक्षुरादिना ग्रहणोपपत्तेः कथं धर्म प्रत्यऽस्यानिमित्तत्वसाधने प्रसङ्गविपर्ययसम्भवः ? प्रश्नादिमन्त्रादिना च संस्कृतं चक्षुर्यथा कालविप्रकृष्टार्थस्य द्रव्यविशेषसंस्कृतं च निर्जीवकादिचक्षुर्जलाद्यन्तरितार्थस्य ग्राहकं दृष्टं तथा पुण्यविशेषसंस्कृतं सूक्ष्माद्यशेषार्थग्राहि भविष्यतीति न कश्चिद्दृष्टस्वभावातिक्रमः । स्वात्मनि च यावद्भिः कारणैर्जनितं यथाभूतार्थग्राहि प्रत्यक्षं प्रतिपन्नं तथा सर्वत्र सर्वदा प्राण्यन्तरेपीति नियमे नक्तञ्चराणामनालोकान्धकारव्यवहितरूपाद्युपलम्भो न स्यात्स्वात्मनि तथाऽनुपलम्भात् । प्राण्यन्तरे स्वात्मन्यनुपलब्धस्यानालोकान्धकारव्यवहितरूपाद्युपलम्भलक्षणातिशयस्य सम्भवे सूक्ष्माद्युपलम्भलक्षणातिशयोपि स्यात् । जात्यन्तरत्वं चोभयत्र समानम् । अभ्युपगम्य चाक्षजत्वं सर्वज्ञज्ञानस्यातीन्द्रियार्थसाक्षात्कारित्वं समर्थितं; नार्थतः—तज्ज्ञानस्य घातिकर्मचतुष्टयक्षयोद्भूतत्वात् । यच्चास्य ज्ञानं चक्षुरादिजनितं वेत्याद्यभिहितं तदप्यचारु—चक्षुरादिजन्यत्वेप्यनन्तरं धर्मादिग्राहकत्वाविरोधस्योक्तत्वात् । यच्चाभ्यासजनितत्वेऽभ्यासो हीत्याद्युक्तं तदप्ययुक्तम्—उत्पादव्ययध्रौव्ययुक्तं सदित्यखिलार्थविषयोपदेशस्याविसंवादिनो ज्ञानस्य च सामान्यतः सम्भवात् । न च तज्ज्ञानवत एवाशेषज्ञत्वाच्चक्ष्यर्थोऽभ्यासस्तस्य सामान्यतोऽस्पष्टरूपस्यैवाविर्भावात्—अभ्यासस्य तत्प्रतिबन्धकापायसहायस्याशेषविशेषविषयस्पष्टज्ञानोत्पत्तौ व्यापारात् । नाप्यन्योन्याश्रयोऽभ्यासादेवाखिलार्थविषयस्पष्टज्ञानोत्पत्तेरनभ्युपगमात् । शब्दप्रभवपक्षेप्यन्योन्याश्रयानुषङ्गोऽसङ्गतः—कारकपक्षे तदसम्भवात् । पूर्वसर्वज्ञप्रणीतागमप्रभवं ह्येतस्याशेषार्थज्ञानं तस्याप्यन्यसर्वज्ञागमप्रभवम् । न चैवमनवस्थादोषानुषङ्गो बीजाङ्कुरवदनादित्वेनाभ्युपगमादागमसर्वज्ञपरम्परायाः । यच्चानुमानाविर्भावितत्वपक्षे सम्बन्धासिद्धेरित्युक्तं तदसमीचीनं—प्रमाणान्तरात्सम्बन्धसिद्धेरभ्युपगमात् । न खलु कश्चित्तस्यागोचरोस्ति—सर्वत्रेन्द्रियातीन्द्रियविषये प्रवृत्तेरन्यथा तत्रानुमानाप्रवृत्तिप्रसङ्गात्—तस्य तन्निबन्धनत्वात् । यच्चानुमानागमज्ञानस्य चास्पष्टत्वादित्यभिहितं तदप्यसमीक्षिताभिधानम् ।—न हि सर्वथा कारणसदृशमेव कार्यं विलक्षणस्याप्यङ्कुरादेर्बीजादेरुत्पत्तिदर्शनात् । सर्वत्र हि सामग्रीभेदात्कार्यभेदः । अत्राप्यागमादिज्ञानेनाभ्यासप्रतिबन्धकापायादिसामग्रीसहायेनासादिताशेषविशेषवैशद्यं विज्ञानमाविर्भाव्यते । भावनाबलाद्वैशद्ये कामाद्युपप्लुतज्ञानवत्तस्याप्युपप्लुतत्वप्रसङ्ग इत्यप्यसाम्प्रतं—यतो भावनाबलाद् ज्ञानं वैशद्यमनुभवतीत्येतावन्मात्रेण तज्ज्ञानस्य दृष्टान्तोपपत्तेः । न चाशेषदृष्टान्तधर्माणां साध्यधर्मिण्यापादनं युक्तं सकलानुमानोच्छेदप्रसङ्गात् । न चाशेषज्ञज्ञानं क्रमेणाशेषार्थग्राहीष्यते येन तत्पक्षनिक्षिप्तदोषोपनिपातः सकलावरणपरिक्षये सहस्रकिरण-

१ अनागतमादिपदेन ॥ २ सर्वज्ञज्ञानस्य ॥ ३ अग्राह्यकलगावने ॥ ४ आदिपदेन सत्ता ॥ ५ तन्त्रमादिपदेन ॥ ६ कर्णवार ॥ ७ योगिचक्षु ॥ ८ नक्तचरादौ सर्वज्ञलक्षणे प्राण्यन्तरे च ॥ ९ परमार्थत ॥ १० सर्वज्ञस्य ॥ ११ पुरुषस्य ॥ १२ अशेषविशेषविषयस्पष्टज्ञान ॥ १३ केवलात् ॥ १४ जैनै ॥ १५ उत्तरसर्वज्ञस्य ॥ १६ तर्कलक्षणात् ॥ १७ इन्द्रियानीन्द्रियविषये प्रवृत्तिर्न स्यादिति ॥ १८ सर्वज्ञे ॥ १९ आदिपदेनानुमानम् ॥ २० आदिपदेन देशकालादि ॥ २१ अशेषज्ञज्ञानस्य ॥ २२ प्राप्नोति ॥ २३ सर्वज्ञज्ञाने ॥ २४ जैने ॥

न्द्युगपन्निखिलार्थोद्द्योतनस्वभावत्वात्तस्य करणक्रमव्यवधानातिवर्त्तित्वाच्च । यच्चोक्तं "युगपत्परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्र ज्ञाने प्रतिभासासम्भवः" तदप्य-सारम् ।–तत्र हि तेषामभावादप्रतिभासो ज्ञानस्यासामर्थ्याद्वा ? न तावदभावाच्छीतोष्णाद्यर्थानां सकृत्सम्भवात् । ज्ञानस्यासामर्थ्यादित्यसत्–परस्परविरुद्धानामन्ध-कारोद्द्योतादीनामेकत्र ज्ञाने युगपत्प्रतिभाससंवेदनात् । सकृदेकत्र विरुद्धार्थानां प्रतिभासासम्भवे यत्कृतकं तदनित्यमित्यादिव्याप्तिश्च न स्यात्साध्यसाधनरूपतया तयोर्विरुद्धत्वसम्भवात् । नाप्येकत्र तेषां प्रतिभासे तज्ज्ञानस्य प्रतिनियतार्थग्राहकत्वविरोधोऽन्धकारोद्द्योतादिविरुद्धार्थग्राहिणोऽपि प्रतिनियतार्थग्राहकत्वप्रतीतेः । यच्चान्यदुक्तम् "एकक्षण एवाशेषार्थग्रहणाद्द्वितीयक्षणेऽज्ञः स्यात्" तदप्यसम्बद्धम् ।–यदि हि द्वितीयक्षणेऽर्थानां तज्ज्ञानस्य चाभावस्तदाऽयं दोषः । न चैवम्–अनन्तत्वा-त्तद्द्वयस्य । पूर्वं हि भाविनोऽर्था भावित्वेनोत्पत्स्यमानतया प्रतिपन्ना न वर्त्तमानत्वेनोत्पन्नतया वा । साप्युत्पन्नता तेषां भवितव्यतया प्रतिपन्ना न भूततया । उत्तरकालं तु तद्विपरीतत्वेन ते प्रतिपन्नाः । यदा हि यद्धर्मविशिष्टं वस्तु तदा तज्ज्ञाने तथैव प्रतिभासते नान्यथा विभ्रमप्रसङ्गात् । इति कथं गृहीतग्राहित्वेनाप्यस्याप्रामा-ण्यम् ? यच्चेदं परस्थरागादिसाक्षात्करणाद्रागादिमानित्युक्तं तदप्ययुक्तम् । तथा परिणामो हि तत्त्वकारणं न संवेदनमात्रमन्यथा मद्यादिकमेवंविधरसमित्यादिवाक्यात्त-च्छोत्रियो यदा प्रतिपद्यते तदाऽस्यापि तद्रसास्वादनदोषः स्यात् । अरसनेन्द्रियजत्वात्तस्यादोषोऽयमित्यन्यत्रापि समानम् । न हि सर्वज्ञज्ञानमिन्द्रियप्रभवं प्रति-ज्ञायते । किञ्चाङ्गनालिङ्गनसेवनाद्यभिलापस्येन्द्रियोद्रेकहेतोराविर्भावाद्रागादिमत्त्वं प्रसिद्धम् । न चासौ प्रक्षीणमोहे भगवत्यस्तीति कथं रागादिमत्त्वस्याशङ्कापि । यदप्यभिहितं कथं चातीतादेर्ग्रहणं तत्स्वरूपासम्भवादित्यादि तदप्यसारं–यतोऽतीतादेरतीतादिकालसम्बन्धित्वेनासत्त्वं तज्ज्ञानकालसम्बन्धित्वेन वा ? नाद्यः पक्षो युक्तो वर्त्तमानकालसम्बन्धित्वेन वर्त्तमानस्येव स्वकालसम्बन्धित्वेनातीतादेरपि सत्त्वसम्भवात् । वर्त्तमानकालसम्बन्धित्वेन त्वतीतादेरसत्त्वमभि-मतमेव तत्कालसम्बन्धित्वतत्सत्त्वयोः परस्परं भेदात् । न चैतत्कालसम्बन्धित्वेनासत्त्वे स्वकालसम्बन्धित्वेनाप्यतीतादेरसत्त्वम् । वर्त्तमानकालसम्बन्धिनोप्य-तीतादिकालसम्बन्धित्वेनासत्त्वात् तस्याप्यसत्त्वप्रसङ्गात् सकलशून्यतानुषङ्गः । न चातीतादेः सत्त्वेन ग्रहणे वर्त्तमानत्वानुषङ्गः–स्वकालनियतसत्त्वरूपतयैव तस्य ग्रहणात् । ननु चातीतादेस्तज्ज्ञानकाले असन्निधानात्कथं प्रतिभासः ? सन्निधाने वा वर्त्तमानत्वप्रसङ्गः प्रसिद्धवर्त्तमानवदित्यपि मन्त्रादिसंस्कृतलोचनादिज्ञानेन व्याप्तिज्ञानेन च प्रागेव कृतोत्तरम् । अथोच्यते । "पूर्वं पश्चाद्वा यदि क्वचित्कदाचिन्निखिलदर्शिनो विज्ञानं विश्रान्तं तर्हि तावन्मात्रत्वात्संसारस्य कुतोऽनाद्यनन्तता ? अथ न विश्रान्तं तर्हि नानेकयुगसहस्रेणापि सकलसंसारसाक्षात्करणम्" इति तदप्युक्तिमात्रं–यतः किमिदं विश्रान्तत्वं नाम ? किं किञ्चित्परिच्छेद्याऽपरस्यापरिच्छेदः

१ रूपरहृनाद्यवयविनि ॥ २ आश्लिष्टेनाहिनकुलादीना च ॥ ३ कृतकत्वानित्यत्वयो ॥ ४ अग्न्यादिरूपस्य ॥ ५ भाविनोऽर्था ॥ ६ सर्वज्ञाने ॥ ७ उत्पत्स्यमानतादिनिरूपणप्रकारेण ॥ ८ सर्वज्ञानस्य ॥ ९ रागादिरूपतया ॥ १० तत्त्वस्य रागादिमत्त्वस्य ॥ ११ जानाति ॥ १२ मद्यादिज्ञानस्य ॥ १३ सर्वज्ञज्ञानेपि ॥ १४ वस ॥ १५ अर्थस्य ॥ १६ जैनानाम् ॥ १७ त्वस्यातीतार्थस्य ॥ १८ अन्यथा ॥ १९ अतीतकाल ॥ २० वर्त्तमानज्ञानकाले ॥ २१ उत्तरत्र ॥ २२ अर्थे ॥ २३ समाप्तम् ॥

सकलविषयदेशकालगमनासामर्थ्यादर्वान्तरेऽवस्थानं वा क्वचिद्विषये उत्पद्य विनाशो वा ? न तावदाद्यविकल्पो युक्तोऽनभ्युपगमात्। न खलु सर्वज्ञज्ञानं क्रमेणार्थपरिच्छेदकं, युगपदशेषार्थोद्द्योतकत्वात्तस्येत्युक्तम्। द्वितीयविकल्पोप्यनभ्युपगमादेवायुक्तः। न हि विषयस्य देशं कालं वा गत्वा ज्ञानं तत्परिच्छेदकमिति केनाप्यभ्युपगतम्–अप्राप्यकारिणस्तस्य क्वचिद्गमनाभावात्। केवलं यथाऽनाद्यनन्तरूपतया स्थितोर्थस्तथैव तत्प्रतिपद्यते। तृतीयविकल्पोप्ययुक्तः क्वचिद्विषये तस्योत्पन्नस्यात्मस्वभावतया विनाशासम्भवात्। न हि स्वभावो भावस्य विनश्यति स्फटिकस्य स्वच्छतादिवत्। अन्यथा तस्याप्यभावः स्यात्। औपाधिकमेव हि रूपं नश्यति। यथा तस्यैव रक्तिमादि। कथं चैवंवादिनो वेदस्यानाद्यनन्तताप्रतिपत्तिस्तत्राप्युक्तविकल्पानामवतारात्। कथं वा साध्यसाधनयोः साकल्येन व्याप्तिप्रतिपत्तिः ? सामान्येन व्याप्तिप्रतिपत्तावप्यनाद्यनन्तसामान्यप्रतिपत्तावुक्तदोषानुषङ्ग एव। यच्चोक्तं "कथं चासौ तत्कालेप्यऽसर्वज्ञैर्ज्ञातुं शक्यते" तदपि फल्गुप्रायम्।–विषयापरिज्ञाने विषयिणोप्यपरिज्ञानाभ्युपगमे कथं जैमिन्यादेः सकलवेदार्थपरिज्ञाननिश्चयोऽसकलवेदार्थविदाम् ? तदनिश्चये च कथं तद्व्याख्यातार्थश्रयणादग्निहोत्रादावनुष्ठाने प्रवृत्तिः ? कथं वा व्याकरणादिसकलशास्त्रार्थापरिज्ञाने तदर्थज्ञतानिश्चयो व्यवहारिणाम् ? यतो व्यवहारप्रवृत्तिः स्यात्। सुनिश्चितासम्भवद्बाधकप्रमाणत्वाच्चाशेषार्थवेदिनो भगवतः सत्त्वसिद्धिः। न चेदमसिद्धम्। तथा हि। सर्वविदोऽभावः प्रत्यक्षेणाधिगम्यः प्रमाणान्तरेण वा ? न तावत्प्रत्यक्षेण। तद्धि सर्वत्र सर्वदा सर्वः सर्वज्ञो न भवतीत्येवं प्रवर्त्तते क्वचित्कदाचित्कश्चिद्वा ? प्रथमपक्षे न सर्वज्ञाभावस्तज्ज्ञानवत एवाशेषज्ञत्वात्। न हि सकलदेशकालाश्रितपुरुषपरिषत्साक्षात्करणमन्तरेण प्रत्यक्षतस्तदाधारमसर्वज्ञत्वं प्रत्येतुं शक्यम्। द्वितीयपक्षे तु न सर्वथा सर्वज्ञाभावसिद्धिः। अथ न प्रवर्त्तमानं प्रत्यक्षं सर्वज्ञाभावसाधकं किन्तु निवर्तमानम्। ननु कारणस्य व्यापकस्य वा निवृत्तौ कार्यस्य व्याप्यस्य वा निवृत्तिः प्रसिद्धा नान्यनिवृत्तावन्यनिवृत्तिरतिप्रसङ्गात्। न चाशेषज्ञस्य प्रत्यक्षं कारणं व्यापकं वा येन तन्निवृत्तौ सर्वज्ञस्यापि निवृत्तिः। न चैवं घटाद्यभावासिद्धिरेकज्ञानसंसर्गिपदार्थान्तरोपलम्भात् क्वचित्तत्सिद्धेः। न चात्राप्ययं न्यायः समानस्तत्संसर्गिण एव कस्यचिदभावात्। अन्यथा सर्वत्र तदभावविरोधो घटादिवत्। तन्न प्रत्यक्षेणाधिगम्यस्तदभावः। नाप्यनुमानेन विवादाध्यासितः पुरुषः

---

१ ता ॥ २ कस्मिंश्चिद्वस्तुनि ॥ ३ जनानाम् ॥, ४ जैनानाम् ॥ ५ ज्ञानस्य ॥ ६ पदार्थस्य ॥ ७ जपाकुसुमादिजनितम् ॥ ८ सर्वज्ञज्ञानस्य क्वचिद्विश्रान्तत्वान्न सर्वज्ञत्वमित्येव वादिन ॥ ९ वेदस्यानाद्यनन्तताग्राहक जैमिन्यादिज्ञान क्वचिद्विश्रान्तमित्यादि ॥ १० किंच ॥ ११ व्याप्तिविशेषत प्रत्येतु नायाति व्यक्तीनामानन्त्यात्। अत सामान्येनेत्युक्तम् ॥ १२ सामान्यमनाद्यनन्तमीदृशसामान्यस्य ग्राहक व्याप्तिज्ञान क्वचिद्विश्रान्त न वेत्यादि ॥ १३ सर्वज्ञ ॥ १४ सर्वज्ञ ॥ १५ अर्थं ॥ १६ ज्ञानस्य ॥ १७ भवादृशाम् ॥ १८ स्वात्मनि सुखादिवत् ॥ १९ अस्मदादे ॥ २० अग्न्यादे ॥ २१ वृक्षत्वस्य ॥ २२ धूमादे ॥ २३ शिंशुपात्वस्य ॥ २४ अकारणस्याऽव्यापकस्य वा ॥ २५ अकार्यस्याऽव्याप्यस्य वा ॥ २६ घटनिवृत्तौ पटनिवृत्तिप्रसङ्गात् ॥ २७ अस्मदादे ॥ २८ सर्वज्ञाभावासिद्धिप्रकारेण। कथम् ? न प्रवर्त्तमान प्रत्यक्ष घटाभावसाधक किन्तु निवर्त्तमानमित्युक्ते ननु कारणस्येत्यादिग्रन्थो निवृत्तिपर्यन्त समान। किन्तु सर्वज्ञपदस्थाने घटपद पठनीयम ॥ २९ भूतल ॥ ३० घटाद्यभाव ॥ ३१ सर्वज्ञेपि ॥ ३२ एकज्ञानसंसर्गिपदार्थान्तरोपलम्भात् क्वचिद् घटाभावप्रतिपत्तिलक्षण ॥ ३३ प्रदेशस्य ॥ ३४ एकज्ञानसंसर्गिकोपि कश्चित्प्रदेशो भवेद्यदि ॥

सर्वज्ञो न भवति वक्तृत्वाद्रथ्यापुरुषवदित्यनुमाने हि प्रमाणान्तरसंवादिनोऽर्थस्य वक्तृत्वं हेतुस्तद्विपरीतस्य वा स्याद्वक्तृत्वमात्रं वा ? प्रथमपक्षे विरुद्धो हेतुः प्रमाणान्तरसंवादिसूक्ष्माद्यर्थवक्तृत्वस्याशेषज्ञे एवभावात्। द्वितीयपक्षे तु सिद्धसाधनं–तथाभूतस्य नकुरसर्वज्ञत्वेनास्माभिरभ्युपगमात्। वक्तृत्वमात्रस्य तु हेतोः साध्यविपर्ययेण सर्वज्ञत्वेनानुपलब्धेन सह सहानवस्थानपरस्परपरिहारस्थितिलक्षणविरोधासिद्धेस्ततो व्यावृत्त्यभावान्न स्वसाध्यनियतत्वं यतो गमकत्वं स्यात्। सर्वज्ञे वक्तृत्वस्यानुपलब्धेस्ततो व्यावृत्तिरित्यप्यसम्यक्सर्वसम्बन्धिनोऽनुपलम्भस्यासिद्धेस्तेनैव सर्वज्ञान्तरेण वा तत्र तस्योपलम्भसम्भवात्। सर्वज्ञस्य कस्यचिदभावात्सर्वसम्बन्धिनोऽनुपलम्भस्य सिद्धिरित्यसङ्गतं–प्रमाणान्तरात्तत्सिद्धावस्य वैयर्थ्यात्। अतः सिद्धौ चक्रकानुषङ्गः। नापि स्वसम्बन्धिनोऽनुपलम्भात्तद्व्यतिरेकनिश्चयोस्य परचेतोवृत्तिविशेषैरनैकान्तिकत्वात्। न चाखिलसाधनेषु दोषस्यास्य समानत्वान्निखिलानुमानोच्छेदस्तत्र विपक्षव्यावृत्तिनिमित्तस्यानुपलम्भव्यतिरेकेण प्रमाणान्तरस्य भावात्। न चात्र कार्यकारणभावः प्रसिद्धोऽसर्वज्ञत्वधर्मानुविधानाभावाद्वचनस्य। यद्धि यत्कार्यं तत्तद्धर्मानुविधायि प्रसिद्धं वन्ह्यादिसामग्रीगतसुरभिगन्धाद्यनुविधायिधूमवत्। तथा हि। असर्वज्ञत्व सर्वज्ञत्वादन्यत्पर्युदासवृत्त्या किञ्चिज्ज्ञत्वमभिधीयते। न च तत्तरतमभावाद्वचनस्य तथाभावो दृश्यते। तद्विप्रकृष्टमत्यल्पज्ञानेषु कृम्यादिषु। न च तत्र वचनप्रवृत्तेः प्रकर्षो दृश्यते। अथ प्रसज्यप्रतिषेधवृत्त्या सर्वज्ञत्वाभावोऽसर्वज्ञत्वं तत्कार्यं वचनं तर्हि ज्ञानरहिते मृतशरीरादौ तस्योपलम्भप्रसङ्गो ज्ञानातिशयवत्सु चाखिलशास्त्रव्याख्यातृषु वचनातिशयोपलम्भो न स्यात्। न चैवम्। ततो ज्ञानप्रकर्षतरतमाद्यनुविधानदर्शनात्तस्य तत्कार्यता सातिशयतक्षादिकारणधर्मानुविधायिप्रासादादिकार्यविशेषवत्। तन्नानुमानात्तदभावसिद्धिः। नाप्यागमात्। स हि तत्प्रणीतोन्यप्रणीतोऽपौरुषेयो वा तदभावसाधकः स्यात् ? तत्र यद्यागमप्रणेता सकलं सकलज्ञविकलं साक्षात्प्रतिपद्यते युक्तोसौ तत्र प्रमाणम्। किन्तु विद्यमानोपि न प्रकृतार्थोपयोगी–तथा प्रतिपद्यमानस्य तस्यैवाशेषज्ञत्वात्। न प्रतिपद्यते चेत्तर्हि रथ्यापुरुषप्रणीतागमवन्नासौ तत्र प्रमाणम्। न ह्यविदितार्थस्वरूपस्य प्रणेतुः प्रमाणभूतागमप्रणयनं नामातिप्रसङ्गात्। द्वितीयविकल्पेप्येतदेव वक्तव्यम्। अपौरुषेयोप्यागमो जैमिन्यादिभ्यो यदि सर्वत्र सर्वदा सर्वज्ञाभावं प्रतिपादयेत्तर्हि सर्वस्मै प्रतिपादयेत् केनचित् सह प्रत्यासत्तिवि-

---

१ आदिपदेनान्तरितदूरम् ॥ २ जैनै ॥ ३ सर्वज्ञाभाव ॥ ४ अतश्च सन्दिग्धविपक्षव्यावृत्तिको हेतु ॥ ५ वक्तृत्वमात्रस्य ॥ ६ अविनाभूतत्वम् ॥ ७ वक्तृत्वस्य ॥ ८ प्रकृतसर्वज्ञेन ॥ ९ प्रकृतानुमानस्य ॥ १० वक्तृत्वानुमानस्य ॥ ११ वक्तृत्वानुमानात्सर्वज्ञाभावसिद्धिस्तत्सिद्धौ च सर्वज्ञात्साधनस्य व्यावृत्तिसिद्धिरतश्चानुमानमिति ॥ १२ वक्तृत्वस्य ॥ १३ सर्वज्ञत्वलक्षणाद्विपक्षाद् व्यावृत्तिनिश्चय ॥ १४ अभावसाध्यसाधकाना निखिलसाधनाना पक्षेनुपलम्भ सर्वसम्बन्धी आत्मसम्बन्धी वेत्यायुक्ते असिद्धानैकान्तिकत्वलक्षणस्य ॥ १५ यत्राग्निर्नास्ति तत्र धूमोपि नास्ति ॥ १६ उक्तस्य ॥ १७ वक्तृत्वासर्वज्ञत्वयो ॥ १८ यस ॥ १९ वचनमसर्वज्ञकार्यं न भवति तद्धर्मानुविधानाभावात् ॥ २० सन्दिग्धानेकान्तिकत्वे सतीदमाह ॥ २१ यस ॥ २२ आदिपदेन धीगन्ध ॥ २३ यदि ॥ २४ सर्वथा ज्ञानाभाव ॥ २५ ज्ञानातिशय ॥ २६ यम ॥ २७ सातिशयत्व ॥ २८ सर्वसकलज्ञविकलो ॥ २९ सर्वज्ञाभावलक्षणेऽर्थे ॥ ३० सर्वज्ञाभावे ॥ ३१ रथ्यापुरुषस्य प्रमाणभूतागमप्रणेतृत्वं स्यात् ॥ ३२ मीमांसकेन। नैयायिकादिना च ॥

प्रकर्षविरहात्। तथा च—विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात्[1] । स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् । हिरण्यगर्भं प्रकृत्य सर्वज्ञ इत्यादौ न कस्यचिद्विप्रतिपत्तिः स्यात्—किमनेन सर्वज्ञः प्रतिपाद्यते कर्मविशेषो वा स्तूयते इति । न खलु प्रदीपप्रकाशिते घटादौ कस्यचिद्विप्रतिपत्तिः—किमयं घटः पटो वेति। न च स्वरूपेऽस्याप्रामाण्यम्। अविसंवादो हि प्रमाणलक्षणं कार्ये स्वरूपे वार्थे, नान्यत्। यत्र सोस्ति तत्प्रमाणम्। न चाशेषज्ञाभावावेदकं किञ्चिद्वेदवाक्यमस्ति—तत्सद्भावावेदकस्यैव श्रुतेः । तन्नागमादप्यस्याभावसिद्धिः। नाप्युपमानात्। तत्खलूपमानोपमेययोरध्यक्षत्वे सति सादृश्यावलम्बनमुदयमासादयति नान्यथा । न चात्रत्येदानीन्तनोपमानभूताशेषपुरुषप्रत्यक्षत्वमुपमेयभूताशेषान्यदेशकालपुरुषप्रत्यक्षत्वं चाभ्युपगम्यते सर्वज्ञसिद्धिप्रसङ्गात्—निखिलार्थप्रत्यक्षत्वमन्तरेणाशेषपुरुषपरिषत्साक्षात्कारित्वासम्भवात् । नाप्यर्थापत्तेस्तदभावावगमः—सर्वज्ञाभावमन्तरेणानुपजायमानस्य प्रमाणषट्कविज्ञातस्य कस्यचिदर्थस्यासम्भवात्। वेदप्रामाण्यस्य गुणवत्पुरुषप्रणीतत्वे सत्येव भावात्। अपौरुषेयत्वस्याग्रे विस्तरतो निषेधात् । न चार्थापत्तिरनुमानात्प्रमाणान्तरमित्यग्रे वक्ष्यते। तद्वदत्रापि व्याप्त्यादिचिन्तायां दोषान्तरं चापादनीयम्। नाप्यभावप्रमाणात्तदभावसिद्धिस्तस्यासिद्धेः। तदसिद्धिश्चाभावप्रमाणलक्षणस्य 'प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते। सात्मनो परिणामो वा विज्ञानं वान्यवस्तुनि' इत्यादेः प्रागेव विस्तरतो निराकरणात्सिद्धा। इत्यलमतिप्रसङ्गेन। न चानुमाने तत्सद्भावावेदके सत्येतत्प्रवर्त्तते—'प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता' इत्यभिधानात्। किञ्चाऽभावप्रमाणं 'गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया' इति सामग्रीतः प्रादुर्भवति । न चाशेषज्ञनास्तिताधिकरणाखिलदेशकालप्रत्यक्षता कस्यचिदस्त्यऽतीन्द्रियार्थदर्शित्वप्रसङ्गात्। नाप्यशेषज्ञः क्वचित्कदाचित्केनचित्प्रतिपन्नो येनासौ स्मृत्वा निषेध्येत—सर्वत्र सर्वदा तन्निषेधविरोधात् । न च निषेध्यनिषेध्याधारयोरप्रतिपत्तौ निषेधो नामातिप्रसङ्गात्। न ह्यप्रतिपन्ने भूतले घटे च घटनिषेधो घटते। यथा चाभावप्रमाणस्योत्पत्तिः स्वरूपं विषयो वा न सम्भवति तथा प्राक्प्रपञ्चेनोक्तमिति कृतमतिप्रसङ्गेन। तन्नाभावप्रमाणादप्यशेषज्ञाभावसिद्धिः। तदेवं सिद्धं सुनिश्चितासम्भवद्बाधकप्रमाणत्वमप्यशेषज्ञस्य प्रसाधकम्। इत्यलमतिप्रसङ्गेन।

ननु चावरणविश्लेषादशेषवेदिनो विज्ञानं प्रभवतीत्यसाम्प्रतं तस्यानादिमुक्तत्वेनावरणस्यैवासम्भवादिति चेत्तदयुक्तम्—अनादिमुक्तत्वस्यासिद्धेः । तथा हि। नेश्वरोऽनादिमुक्तो मुक्तत्वात्तदन्यमुक्तवत्। बन्धापेक्षया च मुक्तव्यपदेशः। तद्रहिते चास्याप्यभावः स्यादाकाशवत् । ननु चानादिमुक्तत्वं तस्यानादेः क्षित्यादि-

१ प्रस्तुत्य ॥ २ वेदवाक्येन ॥ ३ यागलक्षण ॥ ४ श्रुतिवाक्यस्य ॥ ५ प्रवर्त्तकम ॥ ६ प्रमाणत्वेनाङ्गीकृतवचनादो ॥ ७ अभ्युपगमम्यते चेत्तर्हि सर्वज्ञो वेदप्रामाण्यान्यथानुपपत्ते ॥ ८ सपक्षेऽन्वयादि ॥ ९ विचारणायाम् ॥ १० आश्रयासिद्धिलक्षणाद्दोषादन्यत्सम्नन्वाप्रतिपत्त्यनवस्थेतरेतराश्रयलक्षण दोषान्तरम् ॥ ११ अभावप्रमाणदूषणविस्तरेण ॥ १२ घटासदशलक्षणे ॥ १३ सर्वज्ञसद्भावे प्रमाणोपन्यासविस्तरेण ॥ १४ अशेषवेदी सावरणो न भवति अनादिमुक्तत्वाद्। य सावरण सोनादिमुक्तो न भवति यथा सम्भारि ॥ १५ मुक्तो भवति अनादिमुक्तो भवतीति सन्दिग्धानैकान्तिकत्वे सतीद वाक्यमाह ॥ १६ ईश्वरो मुक्तव्यपदेशभाग् न भवति वन्धरहितत्वादाकाशवत ॥

वार्च्यं—तस्याप्यचेतनतयाधिष्ठात्रऽपेक्षोपपत्तेः। तथा हि। अदृष्टं चेतनाधिष्ठितं कार्ये प्रवर्त्ततेऽचेतनत्वात्तन्त्वादिवत्। न चास्मदाद्यात्मैवाधिष्ठायकस्तस्यादृष्ट-परमाण्वादिविषयविज्ञानाभावात्। न च चेतनस्याकस्मात्प्रवृत्तिरुपलब्धा। प्रवृत्तौ वा निष्पन्नेपि कार्ये प्रवर्त्तेत–विवेकशून्यत्वात्। तथा वार्त्तिककारेणापि प्रमाण-द्वयं तत्सिद्धयेऽभ्यधायि। "महाभूतादि व्यक्तं चेतनाधिष्ठितं प्राणिनां सुखदुःखनिमित्तं रूपादिमत्त्वात्तुर्यादिवत्। तथा पृथिव्यादीनि महाभूतानि बुद्धिमत्कार-णाधिष्ठितानि स्वासु धारणाद्यासु क्रियासु प्रवर्त्तन्तेऽनित्यत्वाद्वास्यादिवत्"। तथाऽविद्धकर्णेन च—"तनुकरणभुवनोपादानानि चेतनाधिष्ठितानि स्वकार्यमारभन्ते–रूपादिमत्त्वात्तन्त्वादिवत्"। तथा द्वीन्द्रियग्राह्याग्राह्यं विमतिभावापन्नं बुद्धिमत्कारणपूर्वकं स्वारम्भकावयवसन्निवेशविशिष्टत्वाद् घटादिवत्। वैधर्म्येण परमाणवो यथा। द्वाभ्यां दर्शनस्पर्शनेन्द्रियाभ्यां ग्राह्यं पृथिव्यप्तेजोलक्षणं त्रिविध द्रव्यमऽग्राह्य वाय्वादिकम्। वायौ हि रूपसंस्काराभावादनुपलब्धिः। रूपसंस्कारो रूपसमवायः। द्व्यणुकादीना त्वऽमहत्वात्। उक्तं च "महत्यनेकद्रव्यत्वाद्रूपविशेषाच्च रूपोपलब्धिः"। प्रशस्तमतिना च—"सर्गादौ पुरुषाणा व्यवहारोऽन्योपदेशपूर्वकः उत्तरकालं प्रबुद्धानां प्रत्यर्थनियतत्वादप्रसिद्धवाग्व्यवहाराणां कुमाराणा गवादिषु प्रत्यर्थनियतो वाग्व्यवहारो यथा मात्राद्युपदेशपूर्वकः" इति। उद्द्योतकरेण च—"भुवनहेतवः प्रधानपरमाण्वदृष्टाः स्वकार्योत्पत्तावतिशयवद्बुद्धिमन्तमधिष्ठितारमपेक्षन्ते स्थित्वा प्रवृत्तेस्तन्तुतुर्यादिवत्। तथा बुद्धिमत्कारणाधिष्ठितं महाभूतादि व्यक्तं सुखदुःखनिमित्तं भवत्यचेतनत्वात्कार्यत्वाद्विनाशित्वाद्रूपादिमत्वाद्वा वास्यादिवत्"। इत्यनवद्यं भगवतः प्रलयकालेऽप्यलुप्तज्ञानाद्यतिशयस्य साधनम्।

अत्र प्रतिविधीयते। सावयवत्वात्कार्यत्वं क्षित्यादेः प्रसाध्यते। तत्र किमिदं सावयवत्वं नाम? सहावयवैर्वर्त्तमानत्वं तैर्जन्यमानत्वं वा सावयवमिति बुद्धिवि-षयत्वं वा? प्रथमपक्षे सामान्यादिनानेकान्तः। गोत्वादि सामान्यं हि सहावयवैर्वर्त्तते, न च कार्यम्। द्वितीयपक्षेप्यसिद्धो हेतुः परमाण्वाद्यवयवानां प्रत्यक्षतोऽसिद्धौ क्षित्यादेस्तज्जन्यमानत्वस्याप्यसिद्धेः। प्रत्यक्षानुपलम्भसाधनश्च कार्यकारणभावः। द्व्यणुकादिकं स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धं कार्यत्वात्पटादिवदित्यनु-मानात्तेषा प्रसिद्धिरित्यप्यसमीचीनं चक्रकप्रसङ्गात्। परमाणुप्रसिद्धौ हि क्षित्यादेस्तैर्जन्यमानत्वलक्षणसावयवत्वसिद्धिस्तत्सिद्धौ च कार्यत्वसिद्धिः ततश्च परमाणु-

---

१ जैनादिभि ॥ २ प्रेरितम् ॥ ३ प्रेरक ॥ ४ कारण विना ॥ ५ ईश ॥ ६ परमाणुव्यवच्छेदार्थं महदिति पदम् ॥ ७ पृथिव्यादि ॥ ८ कार्यम् ॥ ९ यथा वार्तिककारेणाभ्यधायीति पूर्वेण सम्बन्ध ॥ १० परमाण्वादिकारणानि ॥ ११ क्षित्यादिकम् ॥ १२ परमाणु ॥ १३ रचनाविशेष ॥ १४ व्यतिरेकेण ॥ १५ आदिपदेन द्व्यणुकादिकम् ॥ १६ अनेकद्रव्यत्वाद्रूपविशेषाच्चेत्युच्यमाने द्व्यणुकादौ रूपोपलब्धि स्यात्तद्व्यवच्छेदार्थ महतीति पदम् ॥ १७ महत्यनेकद्रव्यत्वादित्युच्यमाने वायावपि रूपोपलब्धि स्यात्तद्व्यवच्छेदार्थं रूपविशेषादित्युक्तम् ॥ १८ सृष्टिप्रारम्भे ॥ १९ आदिपदेन पित्रादि ॥ २० सांख्योद्देशेनास्य प्रयोग ॥ २१ मीमांसकाद्युद्देशेनास्य पदस्य प्रयोग ॥ २२ खण्डमुण्डशाबलेयत्वादिस्वव्यक्तिभि सह वर्त्तते ॥ २३ नित्यत्वात्तस्य ॥ २४ द्व्यणुकादि ॥ २५ घटमृत्पिण्डादौ कार्यकारणभाव प्रत्यक्षत सिद्धो द्व्यणुकपरमाण्वादौ तु कार्यकारणभावोऽनुमानादिति भाव ॥ २६ बुद्ध्या (व्यापकत्वान्महत्परिमाणोपेतात्मन कार्यत्वाद्बुद्ध्यादे) व्यभिचारपरिहारार्थं द्रव्यत्वे सतीति विशेषण द्रष्टव्यम् ॥ २७ परमाण्वादीनाम् ॥ २८ त्रिभिरावर्त्तन चक्रकदूषणम् ॥

प्रसिद्धिरिति । महापरिमाणोपेतप्रशिथिलावयवकर्पासपिण्डोपादानेनाऽतिनिविडावयवाल्पपरिमाणोपेतकर्पासपिण्डेनानेकान्तश्च । बलवत्पुरुषप्रयत्नप्रेरितहस्ताद्यभिघातादवयवक्रियोत्पत्तेरवयवविभागात्संयोगविनाशान्महाकर्पासपिण्डविनाशोऽल्पकर्पासपिण्डोत्पादस्तु स्वारम्भकावयवकर्मसंयोगविशेषवशादेव भवतीत्यपि विनाशोत्पादप्रक्रियोद्घोषणमात्रं—प्रमाणतोऽप्रतीतेः । कर्पासद्रव्यं हि महापरिमाणपिण्डाकारपरित्यागेनाल्पपरिमाणपिण्डाकारतयोत्पद्यमानं प्रमाणतः प्रतीयते । आशूत्पत्तेर्भेदानवधारणात्तथा प्रतीतिरित्यप्यसङ्गतं सकलभावानां क्षणिकत्वानुषङ्गात् । अभेदाध्यवसायस्तु सदृशापरापरोत्पत्तिविप्रलम्भादित्यनिष्टसिद्धिप्रसङ्गात् । नाप्यागमात्परमाण्वादिप्रसिद्धिस्तत्प्रामाण्याप्रसिद्धेः । सावयवमिति बुद्धिविषयत्वमप्यात्मादिनानैकान्तिकं तस्याकार्यत्वेपि तत्प्रसिद्धेः । सार्वयवार्थसंयोगान्निरवयवत्वेप्यस्य तद्बुद्धिविषयत्वमित्यौपचारिक तदप्यसङ्गतं तस्य निरवयवत्वे व्यापित्वविरोधात् परमाणुवत् । तदपि ह्यौपचारिकमेव स्यात् । तदेवं सावयवत्वासिद्धेः कथं ततः क्षित्यादेः कार्यत्वसिद्धिः ? प्रागसतः स्वकारणसमवायात्सत्तासमवायाद्वा तत्सिद्धिश्चेत्कुतः प्राक् ? कारणसमवायाच्चेत् तत्समवायसमये प्रागिवास्य स्वरूपसत्त्वस्याभावो न वा ? अभावे प्रागिति विशेषणमनर्थकम् । कार्यस्य हि कारणसमवायसमये स्वरूपेण सत्त्वसम्भवे तद्वत्प्रागपि सत्त्वे कार्यता न स्यात् । ततः प्रागित्यर्थवत्स्यात् । प्रागिव तत्समवायसमयेप्यस्य स्वरूपसत्त्वाभावे त्वसत इत्येवाभिधातव्यम् । न चासतः कारणसमवायः—खरविषाणादेरपि तत्प्रसङ्गात् । न चास्य कारणाभावान्न तत्प्रसङ्ग इत्यभिधातव्यम्—क्षित्यादेरपि तदभावप्रसङ्गादसत्त्वाविशेषात् । क्षित्यादेः कारणोपलम्भान्न दोष इत्यप्यसारम्—कार्यकारणयोरुपलम्भे हीदमस्य कारणं कार्यं चेदमिति प्रतिभागः स्यात् । न च प्रत्यक्षतः क्षित्यादेरुपलम्भोऽसतस्तस्य तज्जनकत्वविरोधात् खरविषाणवत् । न चाजनकं विषयः—उपलम्भकारणमुपलम्भविषय इत्यभ्युपगमात् । प्रागसतः सत्तासम्बन्धेप्येतत्सर्वं समानम् । न समानं—खरशृङ्गादेः क्षित्यादिकार्यस्य विशेषसम्भवात् । तद्ध्यत्यन्ताऽसत् । क्षित्यादिकं न तथाऽप्यसत्सत्तासम्बन्धात्तु सदित्यपि मनोरथमात्रं—सत्त्वासत्त्वयोरेकत्रैकदा प्रतिषेधविरोधात् । न सदित्यभिधानात्तस्य सत्तासम्बन्धात्प्रागभावः स्यात्सत्प्रतिषेधलक्षणत्वादस्य । नाप्यसदित्यभिधानात्तु भावः—असत्त्वप्रतिषेधरूपत्वात्तस्य रूपान्तराभावात् । ततोऽसदेव तदभ्युपगन्तव्यम् । तत्रास्य खरशृङ्गादेर्विशेषः । किञ्च सत्ता सत्यऽसती वा ? यद्यऽसती कथं तया वन्ध्यासुतयेव सम्बन्धादन्येषां सत्त्वम् ? सती चेत्स्वतोऽन्यसत्तातो वा ? यद्यन्यसत्तातोऽनवस्था । स्वतश्चेत्

---

१ क्रिया ॥ २ कथनमात्रम् ॥ ३ पूर्वपिण्डविनाश एवोत्तरपिण्डोत्पत्तिरित्यभेदतया ॥ ४ आशुवृत्ते ॥ ५ विसवादात् ॥ ६ क्षित्यादिक कार्यं सावयवत्वादित्यस्य ॥ ७ आदिपदेनाकाशादिना ॥ ८ शरीरादिमूर्तिमद्भिः ॥ ९ परमाणु ॥ १० इह तन्तुषु पटसमवायो यथा ॥ ११ क्षित्यादिकार्यत्वस्य ॥ १२ क्षित्यादिकार्यस्य ॥ १३ नासत इति विशेषणम् ॥ १४ कारण ॥ १५ न प्रागिति ॥ १६ परेण त्वया ॥ १७ प्रत्यक्षस्याजनक क्षित्यादिकम् ॥ १८ असत्त्वादेवाजनकम् ॥ १९ प्रत्यक्षस्य ॥ २० प्रत्यक्षकारण प्रत्यक्षजनकमित्यर्थ ॥ २१ प्रत्यक्षविषय ॥ २२ प्रागित्यादि ॥ २३ सत्तासम्बन्धवैयर्थ्यप्रसङ्गात् ॥ २४ खरविषाणादेरपि सत्तासम्बन्धप्रसङ्गात् ॥ २५ न सदित्यस्य ॥ २६ सद्भाव ॥ २७ परेण ॥ २८ क्षित्यादीनाम् ॥

पदार्थानामपि स्वत एव सत्त्वं स्यादिति व्यर्थं तत्परिकल्पनम्। एतेन द्वितीयविकल्पोऽप्यपास्तः। कार्यस्य हि स्वतः सत्त्वोपगमे किं तत्कल्पनया साध्यम्? अनवस्था-
प्रसङ्गात्। तदेवं कार्यत्वासिद्धेरसिद्धो हेतुः। किञ्च कथञ्चित्कार्यत्वं क्षित्यादेः सर्वथा वा? सर्वथा चेत्पुनरप्यसिद्धत्वं द्रव्यतोऽशेषार्थानामकार्यत्वात्। कथञ्चित् चेद्वि-
रुद्धत्वं–सर्वथा बुद्धिमन्निमित्तत्वात्साध्याद्विपरीतस्य कथञ्चिद्बुद्धिमन्निमित्तत्वस्य साधनात्। अनैकान्तिकं च–आत्मादिभिस्तेषां बुद्धिमन्निमित्तत्वाभावेपि तत्सम्भ-
वात्। कथञ्चिदप्यकार्यत्वे चैतेषां कार्यकारित्वस्याभावस्तस्याऽकर्तृरूपत्यागेन कर्तृरूपोपादानाविनाभावित्वात्। तत्त्यागोपादानयोश्चैकरूपे वस्तुन्यसम्भवात्सिद्धं कथ-
ञ्चित् कार्यत्वं तेषाम्। कर्तृत्वाकर्तृत्वरूपयोरात्मादिभ्योऽर्थान्तरत्वान्न तद्विनाशोत्पादाभ्यां तेषामपि तथाभावो यतः कार्यत्वं स्यादित्यपि श्रद्धामात्रं–तयोस्ततोऽर्था-
न्तरत्वे सम्बन्धासिद्धिप्रसङ्गात्। समवायादेश्च कृतोत्तरत्वादित्यलमतिप्रसङ्गेन। बुद्धिमत्कारणमित्यत्र च मत्वर्थस्य साध्यविशेषणस्यानुपपत्तिः। बुद्धिमतो हि बुद्धिर्व्यति-
रिक्ता वाऽव्यतिरिक्ता वा? तत्र तस्यास्ततो व्यतिरेकैकान्ते तस्येति सम्बन्धस्याभावः। सा हि तस्य तद्गुणत्वात्तत्समवायाद्वा तत्कार्यत्वाद्वा तदाधेयत्वाद्वा स्यात्? न तावत्त-
द्गुणत्वात्सा तस्येत्यभिधातव्यं–ततो व्यतिरेकैकान्ते सा तस्यैव गुणो नाकाशादेरिति व्यवस्थापयितुमशक्तेः। नापि तत्समवायात्–तस्यैवासम्भवात्। सम्भवे वा तस्य
तेभ्यां भेदैकान्ते व्यवस्थापकत्वायोगात्सर्वत्राविशेषाच्च। तत्कार्यत्वात्सा तस्येति चेत्कुतस्तत्कार्यत्वम्? तस्मिन्सति भावादाकाशादौ प्रसङ्गः। तदभावेऽभावाच्चेन्न नित्यव्या-
पित्वाभ्यां तस्य तदयोगात्। तदाधेयत्वात्सा तस्येति चेत्किमिदं तदाधेयत्वं नाम? समवायेन तत्र वर्त्तनं चेत्तत्कृतोत्तरम्। तादात्म्येन वर्त्तनं चेन्न–अनभ्युपगमात्।
सम्बन्धमात्रेण वर्त्तनं चेत्तर्हि घटादेर्भूतलादिगुणत्वप्रसङ्गः–सम्बन्धमात्रेण वर्त्तमानस्य तस्य तदाधेयत्वसम्भवात्। किञ्च व्याप्त्या तेनास्यास्तत्र वर्त्तनमव्याप्त्या वा? न
तावद्व्याप्त्या–आत्मविशेषगुणत्वादस्मदादिबुद्ध्यादिवत्। परममहापरिमाणेन व्यभिचार इत्ययुक्तं तत्र विशेषगुणत्वाभावात्। नन्वेवमस्मदादिबुद्ध्यादौ सकलार्थग्राहित्वा-
भावो दृष्टः सोपि तत्र स्यादिति चेदस्तु नाम–दृष्टान्ते व्याप्तिदर्शनमात्रात्सर्वत्र साध्यसिद्धेर्भवताभ्युपगमात्। कथमन्यथा प्रकृतसिद्धिः। यथा चास्मदादिबुद्धिवैलक्षण्यं
तद्बुद्धेरदृष्टं परिकल्प्यते तथा घटादौ कर्मकर्तृकरणनिर्वर्त्त्यकार्यत्वं दृष्टं वने वनस्पत्यादिषु चेतनकर्तृरहितमपि स्यादित्येतैर्व्यभिचारो हेतोः। अथाऽव्याप्त्या तर्हि दे-
शान्तरोत्पत्तिमत्कार्येषु कथं तस्या व्यापारः–असन्निधानात्। तथापि व्यापारेऽदृष्टस्याप्यग्न्यादिदेशेऽसन्निहितस्योर्ध्वज्वलनादिहेतुता स्यादित्यग्नेरूर्ध्वज्वलनमित्याद्यात्म-

---

१ न वेत्ययम् ॥ २ कारणसमवायसत्तासमवायकल्पनया ॥ ३ द्रव्यपर्यायाभ्याम् ॥ ४ कार्यत्व ॥ ५ कूटस्थनित्यस्यैव ॥ ६ नित्ये ॥ ७ विनाशोत्पाद ॥ ८ समवायादिसम्बन्धनिराकरणविस्तरेण ॥ ९ किञ्च ॥ १० साध्य कारण तस्य विशेषण बुद्धिमत् ॥ ११ परेण यौगेन ॥ १२ बुद्धिबुद्धिमद्भ्याम् ॥ १३ बुद्धिमत इय बुद्धिरिति ॥ १४ गगनादौ समवायस्य व्यापकत्वात् ॥ १५ चेत्तर्हि ॥ १६ समपि सर्वदाऽस्ति यत ॥ १७ सामस्त्येन ॥ १८ आ-त्मविशेषगुणेन ॥ १९ आकाशगुणत्वात्परममहापरिमाणस्य जैनानाम्। आत्मा तु तेषां देहपरिमाण इति ॥ २० व्याप्त्या वर्त्तमानत्वप्रतिषेधे ॥ २१ ईश्वरलक्षणे बुद्धिमति ॥ २२ नैयायिकेन ॥ २३ बुद्धिमत्कारणत्वस्य ॥ २४ का ॥ २५ परेण २६ घट ॥ २७ कुम्भकार ॥ २८ चक्रादि ॥ २९ सुकृतस्य ॥ ३० अग्नेरूर्ध्वस्थितमनादि। तस्य शुभपचन भोक्तृदेवदत्तादृष्टेनेति ॥ ३१ नैयायिकमते आत्मन सर्वगतत्वात्तद्गुणोऽदृष्टमपि सर्वगतमेवातो देशान्तरे का-लान्तरे चाम्रपाकपट्टसुक्ताफलादीन् तद्भोक्तृदेवदत्तादृष्ट तत्र गत्वा सहकारि भूयोत्पादयति ॥

सर्वगतत्वसाधनमयुक्तम् । अव्यतिरेकैकान्ते चात्ममात्रं बुद्धिमात्रं वा स्यात् । तत्कथं मत्वर्थः ? न हि तदेव तेनैव तद्वद्भवति । किञ्चासौ तद्बुद्धिः क्षणिकाऽक्षणिका वा ? यदि क्षणिका तदा तस्याः कथं द्वितीयक्षणे प्रादुर्भावः कारणत्रयाधीनत्वात्तस्य । न चेश्वरेऽसमवायिकारणमात्ममनःसंयोगस्तच्छरीरादिकं च निमित्तं कारणमस्ति । कारणत्रयाभावेप्यस्मदादिबुद्धिवैलक्षण्यात्तस्याः प्रादुर्भावे क्षित्यादिकार्यस्य घटादिकार्यवैलक्षण्याद्बुद्धिमत्कारणमन्तरेणाप्युत्पत्तिः किन्न स्यात् ? महेश्वरबुद्धिवच्च मुक्तात्मनामप्यानन्दादिकं शरीरादिनिमित्तकारणमन्तरेणाप्युत्पत्स्यत इति कथं बुद्ध्यादिविकलं जडात्मस्वरूपं मुक्तिः स्यात्[3] ? अथाऽक्षणिका तद्बुद्धिः । नन्वत्रापि क्षणिकश्शब्दोऽस्मदादिप्रत्यक्षत्वे सति विभुद्रव्यविशेषगुणत्वात् सुखादिवदित्यत्रानुमानेऽनयैव हेतोरनेकान्तोऽस्या इव विभुद्रव्यविशेषगुणत्वेऽन्यस्यास्मदादिप्रत्यक्षत्वेपि नित्यत्वासम्भवात् । तथा क्षणिका महेश्वरबुद्धिर्बुद्धित्वादस्मदादिबुद्धिवदित्यनुमानविरोधश्च । अथ बुद्धित्वाविशेषेपि ईशास्मदादिबुद्ध्योरक्षणिकत्वेतरलक्षणो विशेषः परिकल्प्यते तथा घटादिक्षित्यादिकार्ययोरप्यकर्तृकर्तृपूर्वकत्वलक्षणो विशेषः किन्नेष्यते ? तथा च कार्यत्वादिहेतोरनेकान्तः । तदेवं बुद्धिमत्त्वासिद्धेः कथं तत्कारणत्वेन कार्यत्वं व्याप्येत ? अस्तु वाऽविचारितरमणीयं बुद्धिमत्कारणत्वव्याप्तं कार्यत्वं तथाप्यत्र यादृग्भूतं बुद्धिमत्कारणत्वेनाऽभिनवकूपप्रासादादौ व्याप्तं कार्यत्वं प्रमाणतः प्रसिद्धं यदक्रियादर्शिनोपि जीर्णकूपप्रासादादौ लौकिकेतरयोः कृतबुद्धिजनकं तादृग्भूतस्य क्षित्यादावसिद्धेरसिद्धो हेतुः । सिद्धौ वा जीर्णकूपप्रासादादाविवाऽक्रियादर्शिनोपि कृतबुद्धिप्रसङ्गः । न च प्रकृत्याऽत्यन्तभिन्नोपि धर्मः शब्दमात्रेणाभेदी हेतुत्वेनोपादीयमानोऽभिमतसाध्यसिद्धये समर्थो भवत्यन्यत्राप्यस्याविरोधेनाशङ्काऽनिवृत्तेः । यथा वल्मीके धर्मिणि कुम्भकारकृतत्वसिद्धये मृद्विकारत्वमात्रं हेतुत्वेनोपादीयमानम्[15] । नन्वेतत्कार्यसमं नाम जात्युत्तरम् । तदुक्तं "कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनं तत्कार्यसमम्" इति । अस्य चासदुत्तरत्वाज्जातेः प्रकृतसाध्यसिद्धिप्रतिबन्धोऽन्यथा सकलानुमानोच्छेदः । शब्दानित्यत्वे हि साध्ये किं घटादिगतं कृतकत्वं हेतुत्वेनोपादीयते किं वा शब्दगतमुभयगतं वा ? प्रथमपक्षे हेतोरसिद्धिः[20] । न ह्यन्यगतो धर्मोऽन्यत्र वर्त्तते । द्वितीये तु साधनविकलो दृष्टान्तः । तृतीयेप्युभयदोषानुषङ्गः । इत्यप्यसारं कारणमात्रजन्यतालक्षणस्य कृतकत्वस्य विपक्षे[23] बाधकप्रमाणबलादनित्यत्वमात्रव्याप्तत्वेनाऽवधारितस्य शब्देप्युपलम्भात् । तत्रोक्तदूषणस्यासदुत्तरत्वाज्जात्युत्तरत्वम् । न चैवं कार्यसामान्यं बुद्धिमत्कारणत्वमात्रव्याप्तं

१ समवाय्यसमवायिनिमित्तेति ॥ २ समवायिकारण त्वात्मास्ति ॥ ३ नैयायिकमते ॥ ४ अक्षणिकबुद्धिपक्षेपि ॥ ५ परममहापरिमाणेन व्यभिचारपरिहारार्थमेतत् ॥ ६ पर ॥ ७ इतर परीक्षक ॥ ८ क्षित्यादौ ॥ ९ स्वभावेन ॥ १० कार्यत्वशब्देन ॥ ११ बुद्धिमद्धेतुकत्व ॥ १२ विपक्षेऽबुद्धिमद्धेतुकत्वादौ ॥ १३ कृतबुद्ध्युत्पादकरूपस्य कार्यस्य ॥ १४ क्षित्यादिक घटादिवद् बुद्धिमद्धेतुक तर्वादिवदबुद्धिमद्धेतुक वेत्याशङ्का ॥ १५ वल्मीक कुम्भकारकृतो भवति मृद्विकारत्वाद् घटादिवत् ॥ १६ पूर्वोक्तम् ॥ १७ भेदलेश स कीदृश कृतबुद्ध्यनुत्पादक ॥ १८ बुद्धिमद्धेतुकत्व ॥ १९ कार्यसमजात्युत्तरात् ॥ २० घटादिगतकृतकत्वस्य शब्देऽभावात् ॥ २१ शब्दगतकृतकत्वस्य घटादावभावात् ॥ २२ नित्ये ॥ २३ यन्नित्य तन्न कृतक यथाकाशमिति ज्ञानबलात् ॥

क्षित्यादावुपलभ्यते, विपक्षे[1] वाधकप्रमाणाभावेन सन्दिग्धानैकान्तिकत्वात्तस्य[2][3] । अन्यथाऽक्रियादर्शिनोपि[4] कृतवुद्धिप्रसङ्गः[5] । यदि च घटादिलक्षणं विशिष्टकार्यं तन्मात्रव्याप्तं प्रतिपद्याऽविशिष्टकार्यस्यापि क्षित्यादेस्तत्पूर्वकत्वं साध्यते तर्हि पृथ्वीलक्षणभूतस्य रूपरसगन्धस्पर्शवत्त्वं प्रतिपद्य भूतत्वादेव वायोरपि तत्साध्यताम् । अथाऽत्र प्रत्यक्षादिप्रमाणवाधः सोन्यत्रापि समानः । यदप्युक्तं—व्युत्पन्नप्रतिपत्तॄणां[9] नासिद्धत्वं कार्यत्वादेस्तदप्ययुक्तं यतः प्रतिवन्धप्रतिपत्तिलक्षणा[11] व्युत्पत्तिस्तेषां तद्व्यतिरिक्ता वा स्यात् ? प्रथमपक्षे क्षित्यादिगतकार्यत्वादौ[12] प्रकृतसाध्यसाधनाभिप्रेते व्युत्पत्त्यसम्भवः—यथोक्तसाध्यव्याप्तस्य तत्र[13] तस्याभावात् । भावे वा सशरीरस्यास्मदादीन्द्रियग्राह्यस्यानित्यवुद्ध्यादिधर्मकलापोपेतस्य घटादौ तद्व्यापकत्वेन[14] प्रतिपन्नस्यात्र[15] ततः सिद्धिः । न खलु हेतुव्यापकं विहायाव्यापकस्यात्यन्तविलक्षण[16]साध्यधर्मस्य धर्मिणि प्रतिपत्तौ हेतोः सामर्थ्यम् । कारणमात्रप्रतिपत्तौ[17] तु सिद्धसाध्यता । ननु वुद्धिमत्कारणमात्रं ततस्तत्र सिध्यत्पक्षधर्मतावलाद्विशिष्टविशेषाधार[18]मेव सेत्स्यति—निर्विशेषस्य सामान्यस्यासम्भवात्, घटादौ प्रतिपन्नस्य चास्मदादेस्तन्निर्माणासामर्थ्यात्[19] । नन्वेवं क्षित्यादौ वुद्धिमत्कारणत्वासिद्धिरेव स्यादस्मदादेस्तन्निर्माणासामर्थ्यादन्यस्य[20] च हेतुव्यापकत्वेन[21] कदाचनाप्यप्रतिपत्तेः खरविषाणवत्, निराधारस्य च सामान्यस्यासम्भवात् । न हि गोत्वाधारस्य खण्डादिव्यक्तिविशेषस्यासम्भवे तद्विलक्षणमहिष्याद्याश्रितं गोत्वं कुतश्चित्प्रसिद्ध्यति । अस्मादृशान्यादृशविशेषपरित्यागेन कर्तृत्वमात्रानुमाने च चेतनेतरविशेषत्यागेन कारणमात्रानुमानं किन्नानुमन्यते ? धूममात्रात्पावकमात्रानुमानवत् । यादृशमेव हि पावकमात्रं पैङ्गल्यादिधर्मोपेतं कण्ठाक्षिविक्षेपकादित्वापाण्डुरत्वादिधर्मोपेतधूममात्रस्य[22] प्रत्यक्षानुपलम्भप्रमाणजनितोहाख्यप्रमाणात्सर्वोपसंहारेण[23][24] व्यापकत्वेन महानसादौ[25] प्रतिपन्नं तादृशस्यैवान्यत्राप्यतोनुमानं[26] नात्यन्तविलक्षणस्य[27]—व्यक्तिसम्वन्धित्वमात्रस्यैव भेदात् । न च व्यक्तीनामप्यात्यन्तिको भेदो महानसादिवदन्यासामपि[28] दृश्यतेयोपगमात्[29] । न च कार्यविशेषस्य[30] कर्तृविशेषमन्तरेणानुपलम्भात् तन्मात्रमपि[31] कर्तृविशेषानुमापकं युक्तं—तस्य[32] कारणत्वमात्रेणैवाविनाभावनिश्चयात्, धूममात्रस्याग्निमात्रेणाविनाभावनिश्चयवत् । घटादिलक्षणकार्यविशेषस्य तु कारणविशेषेणाविनाभावावगमश्चान्दनादिधूमविशेषस्याग्निविशेषेणाविनाभावावगमवत् । तथापि[33][34] कार्यमात्रस्य कारणविशेषानुमापकत्वे धूमादिकार्यविशेषस्य महानसादौ तत्कालव-

---

१ वुद्धिमत्कारणरहिते तर्वादौ ॥ २ वुद्धिमत्कारणरहिते तर्वादौ कार्यसामान्य वर्त्तते वुद्धिमत्कारणसहिते घटादौ च कार्यसामान्य वर्त्तते । तत्किं वुद्धिमद्धेतुकमवुद्धिमद्धेतुक वेति सन्दिग्धानैकान्तिकत्वम् ॥ ३ कार्यत्वस्य ॥ ४ विपक्षे वाधक प्रमाण यदि स्यात् ॥ ५ क्षित्यादौ ॥ ६ दृष्टान्ते इव ॥ ७ अक्रियादर्शिनोपि कृतवुद्ध्युत्पादकत्वमात्रव्याप्तम् ॥ ८ अक्रियादर्शिन कृतवुद्ध्यनुत्पादकस्य ॥ ९ परेण ॥ १० क्षित्यादौ वुद्धिमद्धेतुपूर्वकत्वेपि ॥ ११ प्रतिवन्धोऽविनाभाव ॥ १२ अक्रियादर्शिनोपि कृतवुद्ध्युत्पादकत्वलक्षणे ॥ १३ क्षित्यादौ ॥ १४ कार्यत्व ॥ १५ क्षित्यादौ ॥ १६ अशरीरसर्वज्ञनित्यज्ञानत्वादिलक्षण ॥ १७ प्रोक्तक्षित्यादिके ॥ १८ वस ॥ १९ क्षित्यादि ॥ २० सर्वज्ञत्वादिधर्मकलापोपेतस्येश्वरस्य ॥ २१ कार्यत्वेति ॥ २२ नेत्रादि ॥ २३ परोक्ष ॥ २४ स्वीकारेण ॥ २५ पर्वतादौ ॥ २६ जलस्य ॥ २७ महानसादेः ॥ २८ पर्वतादिरूपव्यक्तीनाम् ॥ २९ उभयत्र ॥ ३० अक्रियादर्शिन कृतवुद्ध्युत्पादकत्वलक्षणस्य ॥ ३१ वुद्धिमदर्थलक्षण ॥ ३२ कार्यमात्रम् ॥ ३३ कार्यमानस्य ॥ ३४ कार्यविशेषस्यैव कारणविशेषेण व्याप्तिसिद्धावपि ॥

न्यविनाभावोपलम्भाद् धूमघटिकादौ[1] तन्मात्रं तत्कालवन्ह्यनुमापकं स्यात् । अथ तत्र तत्कालवन्ह्यनुमाने प्रत्यक्षविरोधः, सोऽकृष्टजाते भूरुहादौ कर्त्रऽनुमानेपि समानः । तत्कर्त्तुरतीन्द्रियत्वात्तदविरोधे धूमघटिकादौ[2] वह्नेरप्यतीन्द्रियत्वात्सोस्तु । भास्वररूपसम्बन्ध्यवयविद्रव्यत्वान्नातीन्द्रियत्वं तस्येति चेदेतदेव कुतोऽवसितम् ? महानसादौ तथाभूतस्यास्योपलम्भाच्चेत्तर्हि क्षित्यादिकर्त्तुः शरीरसम्बन्धिनोऽतीन्द्रियत्वं मा भूत्कुम्भकारादौ तस्यानुपलम्भात् । ननु वृक्षशाखाभङ्गादौ पिशाचादिः, स्वशरीरावयवप्रेरणे चात्मा[3]ऽशरीरोऽपि कर्त्तोपलब्ध इत्यप्यसुन्दरं पिशाचादेः शरीरसम्बन्धरहितस्य कार्यकारित्वानुपपत्तेर्मुक्तात्मवत् । तत्सम्बन्धेनैव हि कुम्भकारादौ कार्यकारित्वं दृष्टं नान्यथा । तत्सम्बन्धोपगमे चास्य दृश्यत्वप्रसङ्गः कुम्भकारादिवत् । तच्छरीरस्य दृश्यत्वाददृश्यो[4]सौ न पिशाचादिर्विपर्ययादिति चेन्ननु शरीरत्वाविशेषेपि यथास्मदादिशरीरविलक्षणं तच्छरीरमभ्युपगम्यते[5] तथा घटादिकार्यविलक्षणं भूरुहादिकार्यं कार्यत्वाविशेषेप्यभ्युपगम्यताम् । तथा चानेन[6] प्रकृतो हेतुर्व्यभिचारी । तथास्मदादेः शरीरसम्बन्धमात्रेणैव तदवयवानां प्रेरकत्वोपपत्तेर्नापरशरीरसम्बन्धस्तत्रोपयोगी । तत्सम्बन्धमन्तरेण हि चेतनस्य स्वशरीरावयवेष्वन्यत्र वा कार्यकारित्वं नास्त्यनुपलम्भादित्येतावन्मात्रमेव नियम्यत इति महेश्वरस्यापि शरीरसम्बन्धेनैव कर्तृत्वमभ्युपगन्तव्यम् । तच्छरीरं च तत्कृतं यद्यभ्युपगम्यते तर्हि शरीरान्तरं तस्याभ्युपगन्तव्यमित्यनवस्थातः प्रकृतकार्ये तस्याव्यापारोऽपरापरशरीरनिर्वर्त्तने एवोपक्षीणशक्तिकत्वात् । तदनिष्पाद्यं चेत्तत्किं कार्यं नित्यं वा? प्रथमपक्षे तेनैव हेतोर्व्यभिचारस्तस्य कार्यत्वेप्यबुद्धिमत्पूर्वकत्वात् । बुद्धिमत्कारणान्तरपूर्वकत्वे चानवस्था—तच्छरीरस्याप्यपरबुद्धिमत्कारणान्तरपूर्वकत्वात् । नित्यं चेत्तर्हि तच्छरीरस्य शरीरत्वाविशेषेपि नित्यत्वलक्षणः स्वभावातिक्रमो यथाभ्युपगम्यते तथा भूरुहादेः कार्यत्वे सत्यप्यकर्तृपूर्वकत्वलक्षणोप्यभ्युपगम्यताम् । इति स एव[16] तैर्व्यभिचारः कार्यत्वादेः । तत्र प्रतिबन्धप्रतिपत्तिलक्षणा व्युत्पत्तिस्तेषाम् । अथ तद्व्यतिरिक्ता व्युत्पत्तिः, सा स्वदुरागमाहितवासनावतां भवतु । न पुनस्तावन्मात्रेण कार्यत्वादेः साध्यं प्रति गमकत्वम् । अन्यथा वेदे मीमांसकस्य वेदाध्ययनवाच्यत्वादेरपौरुषेयत्वं प्रति गमकत्वं स्यात् । यच्चोक्तं "साध्याभावेपि प्रवर्त्तमानो हेतुर्व्यभिचारीत्युच्यते। न च तत्र कर्त्रभावो निश्चितः किन्त्वग्रहणम्" इति तदुक्तिमात्रम् । प्रमाणाविषयत्वेपि स्थावरादौ कर्त्रऽभावानिश्चये गगनादौ रूपाद्यभावानिश्चयः स्यात् । तत्र रूपादीनां बाधकप्रमाणसद्भावेनाभावनिश्चयेऽत्रापि तथा कर्त्रभावनिश्चयोस्तु । न चास्यानुपलब्धिलक्षणप्राप्तत्वादभावानिश्चयः । शरीरसम्बन्धेन हि कर्तृत्वं नान्यथा मुक्तात्मवत् । तत्सम्बन्धे चोपलब्धिलक्षणप्राप्तत्वप्रसङ्गः कुम्भकारादिवत् । तस्य हि शरीरसम्बन्ध एव दृश्यत्वं नान्यत, स्वरूपेणात्मनोऽदृश्यत्वात् पिशाचादिशरीरवत् । तच्छरीरस्यादृश्यत्वोपगमे च किञ्चित्कार्यमप्यबुद्धिपूर्वकं स्यादित्युक्तम् । यत्तूक्तं "क्षित्याद्यन्वयव्यतिरेकानुविधा-

---

१ गोपालघटिकादौ ॥ २ गोपालघटिकादौ ॥ ३ अस्मदाद्यात्मा ॥ ४ परेण ॥ ५ ईश्वरस्य ॥ ६ भूरुहादिना ॥ ७ अवयवप्रेरणे ॥ ८ अवयवप्रेरणे ॥ ९ तर्हि ॥ १० परेण ॥ ११ हि ॥ १२ परेण ॥ १३ क्षित्यादिकार्ये ॥ १४ अनिलजलरूपस्वभावस्य ॥ १५ पूर्वोक्त एव ॥ १६ स्थावरादिभि ॥ १७ भूरुहादीनाम् ॥ १८ व्युत्पन्नानाम् ॥ १९ यौग ॥ २० परेण ॥ २१ कर्त्तु ॥ २२ कर्त्तु ॥ २३ ईश्वरस्य ॥ २४ अशरीरत्वात्तस्य ॥ २५ ईश्वर ॥

नात्तेषामेव कारणत्वे धर्माधर्मयोरपि तन्न स्यात्" तन्न सूक्तं–जगद्वैचित्र्यान्यथानुपपत्त्या तयोस्तत्कारणत्वप्रसिद्धेः। भूम्यादेः खलु सकलकार्यं प्रति साधारणत्वाद्-दृष्टाख्यविचित्रकारणमन्तरेण तद्वैचित्र्यानुपपत्तिः सिद्धा। यदप्युक्तं "तत्र बुद्धिमतोऽभावादग्रहणं भावेप्यनुपलब्धिलक्षणप्राप्तत्वाद्वेति सन्दिग्धव्यतिरेकित्वे सकलानुमानोच्छेदः। यया सामग्र्या धूमादिर्जन्यमानो दृष्टस्तां नातिवर्त्तत इत्यन्यत्रापि समानं" तदप्ययुक्तम्। यादृग्भूतं हि घटादिकार्यं यादृग्भूतसामग्रीप्रभवं दृष्टं तादृग्भूतस्यैव[3] तदतिक्रमाभावो नान्यादृग्विधस्य धूमादिवदेवेत्युक्तं प्राक्। यच्चेदमुक्तं "ज्ञानचिकीर्षाप्रयत्नाधारता हि कर्तृता न सशरीरेतरता" इत्यप्यसङ्गतं–शरीराभावे तदाधारत्वस्याप्यसम्भवान्मुक्तात्मवत्। तेषां खलूत्पत्तौ आत्मा समवायिकारणमात्ममनःसंयोगोऽसमवायिकारणं शरीरादिकं निमित्तकारणम्। न च कारणत्रयाभावे कार्योत्पत्तिरनभ्युपगमात्। अन्यथा मुक्तात्मनोपि ज्ञानादिगुणोत्पत्तिप्रसङ्गान्नवानां गुणानामत्यन्तोच्छेदो मुक्तिरित्यस्य व्याघातः। निमित्त-कारणमन्तरेणाप्येषामुत्पत्तौ च बुद्धिमत्कारणमन्तरेणाप्यङ्कुरादेः किं नोत्पत्तिः स्यात्? नित्यत्वाभ्युपगमात्तेषामदोषोयमित्ययुक्तं–प्रमाणविरोधात्। तथा हि। नेश्वरज्ञानादयो नित्यास्तत्त्वादस्मदादिज्ञानादिवत्। तज्ज्ञानादीनां दृष्टस्वभावातिक्रमे भूरुहादीनामपि स स्यात्। न चाऽचेतनस्य चेतनानधिष्ठितस्य वास्यादि-वत्प्रवृत्त्यसम्भवात्, सम्भवे वा निरभिप्रायाणां देशादिनियमाभावप्रसङ्गात् तदधिष्ठातेश्वरः सकलजगदुपादानादिज्ञाताभ्युपगन्तव्य इत्यभिधातव्यं–तज्ज्ञत्वे-नास्याद्याप्यसिद्धेः। न चास्य तत्कर्तृत्वादेव तज्ज्ञत्वमितरेतराश्रयानुषङ्गात्। सिद्धे हि सकलजगदुपादानाद्यभिज्ञत्वे तत्कर्तृत्वसिद्धिस्तत्सिद्धौ च तदभिज्ञत्वसिद्धिः। अचेतनवच्चेतनस्यापि चेतनान्तराधिष्ठितस्य विष्टिकर्मकरादिवत्प्रवृत्त्युपलम्भान्महेश्वरेप्यधिष्ठातृ चेतनान्तरं परिकल्पनीयम्। स्वामिनोऽनधिष्ठितस्यापि प्रवृत्त्युपलम्भोऽ-कृष्टोत्पन्नाङ्कुराद्युपादाने समानः। घटाद्युपादानस्यानधिष्ठितस्याप्रवृत्त्युपलम्भात् तथाङ्कुराद्युपादानस्यापि कल्पने विष्टिकर्मकरादेः स्वाम्यनधिष्ठितस्याप्रवृत्तेर्महेश्वरेपि तथा स्यात्। तथा चानवस्था। चेतनस्याप्यपरचेतनाधिष्ठितस्य प्रवृत्त्यभ्युपगमे चाचेतनं चेतनाधिष्ठितमित्यत्र प्रयोगेऽचेतनमिति धर्मिविशेषणस्याचेतनत्वादिति हेतोश्चापार्थकत्वं व्यवच्छेद्याभावात्स्वहेतुप्रतिनियमाच्च। अचेतनस्यापि देशादिनियमो ज्यायान्–तस्य भवताप्यवश्याभ्युपगमनीयत्वात्। अन्यथा सर्वत्र सर्वदा सर्वकार्याणामुत्पत्तिः स्यात्–चेतनस्याधिष्ठातुर्नित्यव्यापित्वाभ्यां सर्वत्र सर्वदा सन्निधानात्। न च कारकशक्तिपरिज्ञानाविनाभावि तत्प्रयोक्तृत्वं–तस्याने-कधोपलम्भात्। किञ्चित्खलूपादानाद्यपरिज्ञानेपि प्रयोक्तृत्वं दृष्टं, यथा स्वापमदमूर्च्छाद्यवस्थायां शरीरावयवानाम्। किञ्चित्पुनः कतिपयकारकपरिज्ञाने; यथा कुम्भकारादेः करादिव्यापारेण दण्डादिप्रयोक्तृत्वम्। न खलु तस्याखिलकारकोपलम्भोस्ति–धर्माधर्मयोस्तद्धेतुभूतयोरनुपलम्भात्। उपलम्भे वा तयोर्देशादिनियतेषु

---

१ अक्रियादर्शिन कृतबुद्ध्युत्पादकम् २ चक्रादिरूप ॥ ३ कार्यस्य ॥ ४ अन्यस्य ॥ ५ अप्रेरितस्य ॥ ६ ज्ञानशून्यानाम् (कारणानां) ॥ ७ परेण ॥ ८ पालकी डोली इति वा लोके ख्याता संस्कृते च शिविकेति ॥ ९ तर्हि ॥ १० चेतनस्य ॥ ११ फलाभावात् ॥ १२ स्वस्य कार्यस्य ॥ १३ उपादानकारण ॥ १४ अदृष्टादे ॥ १५ युक्त इत्यर्थः ॥ १६ यौगेन ॥ १७ प्रेरकत्वम् ॥ १८ प्रेरकत्वम् ॥ १९ प्रेरकत्वम् ॥ २० तस्य घटादिकार्यस्य ॥

कार्येष्विच्छा[1]व्याघातो न स्यात्। सर्वश्चाऽतीन्द्रियार्थदर्शी स्यात् । न हि कश्चित्तादृशो बुद्धिमानस्ति यो न किञ्चित्करोति कार्यं वा तादृशं विद्यते यत्राऽदृष्टं नोपयुज्यते । कारणशक्तेश्चातीन्द्रियत्वात्तदपरिज्ञानं सर्वप्राणिनां सुप्रसिद्धम् । यथास्थानं चास्याः सद्भावो निवेदितः । अन्यत्तु[3] शरीराऽनायासतो वाग्व्या[4]पारमात्रेण । यथा स्वामिनः कर्मकरादिप्रयोक्तृत्वम् । अस्तु वा कारकप्रयोक्तृत्वस्य परिज्ञानेनाविनाभावस्तथाप्यशरीरेश्वरे तस्यासम्भवः—सर्वत्र शरीरसम्बन्धे सत्येवास्योपलम्भात् । यदप्यभ्यधायि "बुद्धिमत्कारणपूर्वकत्वमात्रस्य साध्यत्वान्न विशेषविरुद्धता कार्यत्वस्य। अन्यथा धूमाद्यनुमानोच्छेदः" तदप्यभिधानमात्रम् । कार्यमात्राद्धि कारणमात्रानुमाने विशेषविरुद्धताऽसम्भवस्तस्य तेन व्याप्तिप्रसिद्धेः । न पुनर्बुद्धिमत्कारणानुमाने—तस्य[6] तेना[7]व्याप्तेः प्रतिपादितत्वात् । व्याप्तौ[8] वाऽनीश्वरासर्वज्ञत्वादिधर्मकलापोपेत एव कर्त्ता[9]त्र सिद्ध्येत्—तथाभूतेनैव घटादौ व्याप्तिप्रसिद्धेः; न पुनरीश्वरत्वादिविरुद्धधर्मोपेतः—तस्य[10] तद्व्यापकत्वेन[11] स्वप्नेऽप्य-प्रतिपत्तेः । तथाप्यस्य[12] तं[13] प्रति गमकत्वे महानसप्रदेशे वन्हिव्याप्तो धूमः प्रतिपन्नो गिरिशिखरादौ प्रतीयमानो वन्हिविरुद्धधर्मोपेतोदकं प्रति गमकः स्यात् । धूमाद्यनुमानोच्छेदासम्भवश्च प्राक्प्रबन्धेन[14] प्रतिपादितः । यच्चान्यदुक्तं सर्वज्ञता चाशेषकार्यकरणादित्यादि तदप्ययुक्तं—कार्यकारित्वस्य कारणपरिज्ञानाविनाभावासम्भवस्योक्तत्वात् । एकस्याशेषकार्यकारिणो व्यवस्थापकप्रमाणाभावात् कार्यत्वादेश्च कृतोत्तरत्वात्कथमतः सर्वज्ञतासिद्धिः ? यच्चोक्तं तथा विश्वतश्चक्षुरित्यागमादप्यसौ[15] सिद्धस्तदप्युक्तिमात्रमन्योन्याश्रयानुषङ्गात् । प्रसिद्धप्रामाण्यो ह्यागमस्तत्[16]प्रसाधको नान्यथातिप्रसङ्गात्[17] । ततस्तत्[18]प्रामाण्यप्रसिद्धौ महेश्वरसिद्धिस्तत्सिद्धौ च तत्प्रणीतत्वेनागमप्रामाण्यप्रसिद्धिः । अन्येश्वरप्रणीतागमात्तत्सिद्धौ तस्याप्यन्येश्वरप्रणीतागमात्सिद्धावीश्वरागमानवस्था । पूर्वेश्वरप्रणीतागमात्तत्सिद्धौ परस्पराश्रयः । स्वप्रणीतागमात्तत्सिद्धौ चान्योन्यसंश्रयः । नित्यस्य त्वागमस्य परैः[19] प्रामाण्यं नेष्यते—महेश्वर[20]कल्पनानर्थक्यप्रसङ्गात्; प्रामाण्यस्योत्पत्तौ ज्ञप्तौ चेश्वरसद्भावस्याकिञ्चित्करत्वात् । यदप्युक्तं कारुण्याच्छरीरादिसर्गे प्राणिनां प्रवर्त्तते तदप्ययुक्तं—सुखोत्पादकस्यैव शरीरादिसर्गस्योत्पादकस्य प्रसङ्गात् । न हि करुणावतां या[21]तनाशरीरोत्पादकत्वेन प्राणिनां दुःखोत्पादकत्वं युक्तम् । धर्माधर्मसहकारिणः कर्तृत्वात्सुखवद्दुःखस्याप्युत्पादकोऽसौ । फलोपभोगेन हि तयोः प्रक्षयादपवर्गः प्राणिनां स्यात् । इति करुणयापि तद्[22]विधाने प्रवृत्त्यविरोधे[23] इत्यप्यसङ्गतं—तयोरीश्वरानायत्तत्वे[24] कार्यत्वे चाभ्यामेव कार्यत्वादेरनैकान्तिकत्वप्रसङ्गात् । तदुत्पत्तौ तस्याव्यापारे च विनाशेऽप्यव्यापारोऽस्तु । कारणान्तरोत्पन्नसुखदुःखलक्षणफलोपभोगेनानयोः प्रक्षयसम्भवात् । न हीश्वरस्यापि तत्फलोत्पादनादन्यत्तयोः क्षयकर्तृत्वम् ।

१ अस्माददृष्टेनेदं कार्यं भवत्वेवेदं न भवत्वेवेतीच्छा ॥ २ न च तथा ॥ ३ नेति सबन्ध ॥ ४ प्रयोक्तृत्वम् ॥ ५ विशेषविरुद्धताया असम्भवो न च ॥ ६ कार्यत्वस्य ॥ ७ बुद्धिमत्कारणपूर्वकत्वेन ॥ ८ क्षित्यादौ ॥ ९ कर्त्ता ॥ १० ईश्वर-सर्वज्ञत्वादिधर्मकलापोपेतसाध्यस्य ॥ ११ कार्यत्व ॥ १२ कार्यत्वस्य ॥ १३ ईश्वरसर्वज्ञत्वादिधर्मकलापोपेतसाध्य प्रति ॥ १४ विस्तरेण ॥ १५ ईश ॥ १६ ईश्वर ॥ १७ अप्रसिद्धप्रामाण्यादागमादन्येषामीश्वराभाव स्याद्यदि ॥ १८ यत प्रसिद्धप्रामाण्यागम ईश्वरप्रतिपादक ॥ १९ नैयायिकैः ॥ २० अन्यथा ॥ २१ तीव्रवेदनाजनक ॥ २२ सुखदु ख ॥ २३ महेश्वरस्य ॥ २४ ईशकारणरहितत्वे ॥

किञ्च धर्माधर्मौ निष्पाद्य पुनस्तयोः क्षयकरणे किमुत्पत्तिकरणप्रयासेन? न हि प्रेक्षाकारी खात्वा पुनः समीकरणन्यायेनात्मानमायासयति प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति प्रसिद्धेश्च । अन्यथा प्रक्षालिताशुचिमोदकपरित्यागन्यायानुसरणप्रसङ्गः । अपवर्गविधानार्थं चास्य प्रवृत्तौ कथमपूर्वकर्मसञ्चयकर्तृत्वम् । तत्सहकारिणश्चास्य सुखदुःखोत्पादकशरीरोत्पादकत्वे वरं तत्फलोपभोक्तृप्राणिगणस्यैव तत्सव्यपेक्षस्य तदुत्पादकत्वमस्तु । किमदृष्टेश्वरपरिकल्पनया ? सर्वत्र कार्येऽदृष्टस्य व्यापारात् । तथा हि । यद्यदुपभोग्यं तत्तददृष्टपूर्वकम् । यथा सुखादि । उपभोग्यं च प्राणिनां निखिलं कार्यमिति । ननु यथा प्रभुः सेवाभेदानुरोधात्फलप्रदो नाप्रभुस्तथेश्वरोपि कर्मापेक्षः फलप्रदो नान्य इत्यपि मनोरथमात्रम् । राज्ञो हि सेवायत्तफलप्रदस्य यथा रागादियोगो नैर्घृण्यं सेवायत्तता च प्रतीता तथेशस्याप्येतत्सर्वं स्यात्–अन्यथा भूतस्यान्यपरिहारेण क्वचिदेव सेवके सुखादिप्रदत्वानुपपत्तेः । अथ यथा स्थपत्यादीनामेकसूत्रधारनियमितानां महाप्रासादादिकार्यकरणे प्रवृत्तिस्तथात्राप्येकेश्वरनियमितानां सुखाद्यनेककार्यकरणे प्राणिनां प्रवृत्तिरित्यप्यसाम्प्रतं–नियमाभावात् । न ह्ययं नियमो निखिलं कार्यमेकेनैव कर्त्तव्यं; नाप्येकनियतैर्बहुभिरिति—अनेकधा कार्यकर्तृत्वोपलम्भात् । तथा हि । क्वचिदेक एवैककार्यस्य कर्त्तोपलभ्यते । यथा कुविन्दः पटस्य । क्वचिदेकोऽप्यनेककार्याणाम् । यथा घटघटीशरावोदञ्चनादीनां कुलालः । क्वचिदनेकोप्यनेककार्याणाम् । यथा घटपटमकुटशकटादीनां कुलालादिः । क्वचिदनेकोऽप्येककार्यस्य । यथा शिविकोद्वहनादिकार्यस्यानेकपुरुषसंघातः । न चानेकस्थपत्यादिनिष्पाद्ये प्रासादादिकार्येऽवश्यतयैकसूत्रधारनियमितानां तेषां तत्र व्यापारः—प्रतिनियताभिप्रायाणामप्येकसूत्रधाराऽनियमितानां तत्करणाविरोधात् । किञ्चादृष्टापेक्षस्यास्य कार्यकर्तृत्वे तत्कृतोपकारोऽवश्यंभावी–अनुपकारकस्यापेक्षायोगात् । तस्य चातो भेदे सम्बन्धासम्भवः । सम्बन्धकल्पनायां चानवस्था । अभेदे तत्करणे महेश्वर एव कृत इत्यदृष्टकार्यतास्य । नाऽस्यादृष्टेन किञ्चित्क्रियते; सम्भूय कार्यमेव विधीयते सहकारित्वस्यैककार्यकारित्वलक्षणत्वादित्यप्यसाम्प्रतम् । सहकारिसव्यपेक्षो हि कार्यजननस्वभावस्तस्यादृष्टादिसहकारिसन्निधानाद्यदि प्रागप्यस्ति तदोत्तरकालभाविसकलकार्योत्पत्तिस्तदैव स्यात् । तथा हि । यद्यदा यज्जननसमर्थं तत्तदा तज्जनयत्येव यथान्त्यावस्थाप्राप्तं बीजमङ्कुरम् । प्रागप्युत्तरकालभाविसकलकार्यजननसमर्थश्चैकस्वभावतयाभ्युपगतो महेश्वर इति । तदा तदजनने वा तज्जननसामर्थ्याभावः । यद्धि यदा यन्न जनयति न तत्तदा तज्जननसमर्थस्वभावम् ।

---

१ भूमिं खनित्वा ॥ २ तयोर्धर्माधर्मयो ॥ ३ अप्रसिद्धस्य ॥ ४ निखिलं कार्यं धर्मि प्राण्यदृष्टपूर्वकं भवतीति साध्यो धर्मः तदुपभोग्यत्वात् ॥ ५ वस्तु ॥ ६ यस्य पुरुषस्य ॥ ७ स्वामी ॥ ८ विशेष ॥ ९ अनुसरणात् ॥ १० निष्कृपत्वम् ॥ ११ तक्षकादीनाम् ॥ १२ ईश्वरस्य ॥ १३ ईश्वरात् ॥ १४ ततश्चेश्वरस्य नित्यत्वं विलीयते ॥ १५ ईश्वरादृष्टाभ्यामेकीभूय ॥ १६ एकस्वभावतयाभ्युपगतो महेश्वरो धर्मी उत्तरकालभावि सकलं कार्यमदृष्टादिसन्निधानात्प्रागपि जनयतीति साध्यो धर्मः तदा नस्य तज्जननसामर्थ्यादिति शेष ॥ १७ नश्यदवस्थाप्राप्तम् ॥

यथा कुसूलस्थं वीजमङ्कुरमजनयन्न तज्जननसमर्थस्वभावम् । न जनयति चोत्तरकालभावि सकलं कार्यं पूर्वकार्योत्पत्तिसमये महेश्वर इति । तज्जननसमर्थस्वभावोप्यसौ सहकार्यऽभावात्तथा तन्न जनयतीत्यपि वार्त्तं समर्थस्वभावस्यापरापेक्षाऽयोगात् । समर्थस्वभावश्चापरापेक्षश्चेति विरुद्धमेतदनाधेयाऽप्रहेयातिशयत्वात्तस्य । किञ्चैते सहकारिणः किं तदायत्तोत्पत्तयोऽतदायत्तोत्पत्तयो वा? प्रथमपक्षे किं नैकदैवोत्पद्यन्ते? तदुत्पादकान्यसहकारिवैकल्याच्चेदनवस्था । तथा चास्यापरापरसहकारिजनने एवोपक्षीणशक्तिकत्वान्न प्रकृतकार्ये व्यापारः । वीजाङ्कुरादिवदनादित्वात्तत्प्रवाहस्य नानवस्था दोषायेत्यभ्युपगमे महेश्वरकल्पनावैयर्थ्य—स्वसामग्र्यधीनोत्पत्तितया पूर्वपूर्वसामग्रीविशेषवशादपरापराखिलकार्योत्पत्तिप्रसिद्धेः । अथातदायत्तोत्पत्तयस्तर्हि तैरेव कार्यत्वादिहेतवोऽनैकान्तिकाः । इत्येतेन महाभूतादि व्यक्तं चेतनाधिष्ठितं प्राणिनां सुखदुःखनिमित्तं रूपादिमत्त्वात्तुर्यादिवदित्यादीनि वार्त्तिककारादिभिरुपन्यस्तप्रमाणानि निरस्तानि—यादृशं हि रूपादिमत्त्वमनित्यत्वं च चेतनाधिष्ठितं वास्यादौ प्रसिद्धं तादृशस्य क्षित्यादावसिद्धेः । रूपादिमत्त्वमात्रस्य च चेतनाधिष्ठितत्वेन प्रतिबन्धासिद्धेराशङ्कितविपक्षवृत्तितयाऽनैकान्तिकत्वम् । प्रतिवन्धाभ्युपगमे चेष्टविपरीतसाधनाद्विरुद्धमित्यादि पूर्वोक्तं सर्वमत्रापि योजनीयम् । किञ्चेश्वरवुद्धेरनित्यत्वप्रसाधनात्तदभिन्नस्येश्वरस्यानित्यत्वप्रसिद्धेस्तस्याप्यपरवुद्धिमदधिष्ठितत्वप्रसङ्गः स्यादित्यनवस्था । तदनधिष्ठितत्वे वा तेनैवानेकान्तो हेतोः । यच्चोक्तं सर्गादौ पुरुषाणां व्यवहार इत्यादि तत्रोत्तरकालं प्रवुद्धानामित्येतद्विशेषणमसिद्धम् । न खलु प्रलयकाले प्रलुप्तज्ञानस्मृतयो वितनुकरणाः पुरुषाः सन्ति तस्यैव सर्वथाऽप्रसिद्धेः । सिद्धौ वा स्वकृतकर्मवशाद्विशिष्टज्ञानान्तरेपूत्पत्तेस्तेषां कथं वितनुकरणत्वं प्रलुप्तज्ञानस्मृतित्वं वा? सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकश्च हेतुः । किञ्चान्योपदेशपूर्वकत्वमात्रे साध्ये सिद्धसाध्यता—अनादेर्व्यवहारस्याशेषपुरुषाणामन्योपदेशपूर्वकत्वेनेष्टत्वात् । ईश्वरोपदेशपूर्वकत्वे तु साध्येऽनैकान्तिकता—अन्यथापि तत्सम्भवात् । साध्यविकलता च दृष्टान्तस्य । न चास्योपदेष्टृत्वसम्भवो विमुखत्वान्मुक्तात्मवत् । तच्च वितनुकरणतयोपगमात्प्रसिद्धम् । स्थित्वा प्रवृत्तेरिति चेश्वरेणैवानैकान्तिकम् । स हि क्रमवत्कार्येषु स्थित्वा प्रवर्त्तते; न च चेतनान्तराधिष्ठितोऽनवस्थाप्रसङ्गात् । इत्यनयैव दिशा सप्तभुवनान्येकवुद्धिमन्निर्मितानि एकवस्त्वन्तर्गतत्वादेकावसथान्तर्गतापवरकवदित्यादिपरकीयप्रयोगोऽभ्यूह्यः । न ह्येकावसथान्तर्गतानामपवरकादीनामेकसूत्रधारनिर्मितत्वनियमो; येनेश्वरः सकलभुवनैकसूत्रधारः सिद्ध्येत्—अनेकसूत्रधारनिर्मितत्वस्या-

---

१ आरोपयितुमशक्योऽतिशयोऽनाधेय ॥ २ अन्यै स्फोटयितुमशक्योऽतिशयोऽप्रहेय ॥ ३ ईश्वरानपेक्षोत्पत्तय ॥ ४ सहकारिभि ॥ ५ सावयवकार्यत्वहेतुनिराकरणपरेण ग्रन्थेन ॥ ६ अविनाभावासिद्धे ॥ ७ भूरुहादिवचेतनानधिष्ठिते महाभूतादिव्यक्ते रूपादिमत्त्व वर्त्तते वास्यादिवचेतनाधिष्ठिते वा इति ॥ ८ सर्वज्ञत्वादिधर्मोपेताद्विपरीतस्यासर्वज्ञत्वादिधर्मोपेतस्य ॥ ९ प्रलयकालसमये एव न तु पश्चात् ॥ १० परोपदेशरहिते मैथुनादिव्यवहारवति पुंसि ॥ ११ (हेतु) ॥ १२ ईश्वरोपदेश विनापि ॥ १३ व्यवहारे प्रत्यर्थनियतत्वस्य ॥ १४ पुत्रादीना मात्राद्युपदेशपूर्वकत्वेनेश्वरोपदेशपूर्वकत्वाभावात् ॥ १५ विगतमुखत्वात् ॥ १६ साधनम् ॥ १७ आकाश ॥ १८ मन्दिर ॥

प्युपलम्भात् । एकाधिष्ठाना ब्रह्मादयः पिशाचान्ताः परस्परातिशयवृत्तित्वात् । इह येषां परस्परातिशयवृत्तित्वं तेषामेकायत्तता दृष्टा । यथेह लोके गृहग्रामनगरदेशाधिपतीनामेकस्मिन्सार्वभौमनरपतौ । तथा भुजगरक्षोयक्षप्रभृतीनां परस्परातिशयवृत्तित्वं च । तेन मन्यामहे–तेषामेकस्मिन्नीश्वरे पारतन्त्र्यमित्यसम्यक् । अत्र हीश्वराख्येनाधिष्ठायकेनैकाधिष्ठाना इति साध्येऽनैकान्तिकता हेतोर्विपर्यये[3] बाधकप्रमाणाभावात् प्रतिबन्धासिद्धेः । दृष्टान्तस्य च साध्यविकलता । अधिष्ठायकमात्रेण साधिष्ठाना इति साध्ये सिद्धसाध्यता–स्वर्निकायस्वामिनः शक्रादेर्भवान्तरोपात्ताऽदृष्टस्य चाधिष्ठायकतयाऽभ्युपगमात् । ततो महेश्वरस्याशेषजगत्कर्तृत्वप्रसाधकस्यानवद्यप्रमाणस्यासम्भवात्कुतोऽनादिमुक्तत्वसिद्धिर्यतोऽनाद्यशेषज्ञत्वमस्य स्यात्? प्रयोगः । क्षित्यादिकं नैकैकस्वभावभावपूर्वकं विभिन्नदेशकालाकारत्वाद्यदित्थं तदित्थं, यथा घटपटमकुटशकटादि । विभिन्नदेशकालाकारं चेदं तस्मान्नैकैकस्वभावभावपूर्वकमिति । न चेदमसिद्धं साधनमुर्वीपर्वततर्वादौ धर्मिणि विभिन्नदेशकालाकारत्वस्य सुप्रसिद्धत्वात् । नाप्यनैकान्तिकं विरुद्धं वा–विपक्षस्यैकदेशे तत्रैव वा वृत्तेरभावात् । नन्वेकस्याप्यनेककार्यकरणकुशलस्य कर्त्तुर्विचित्रसहकारिसान्निध्ये विचित्रकार्यकारित्वं दृश्यते । अतोऽनेकान्त इत्यप्यनुपपन्नं–तत्राप्येकस्वभावत्वस्यासिद्धेः–स्वरूपमभेदर्यतां सहकारित्वस्यासम्भवप्रतिपादनात् । नापि कालात्ययापदिष्टं प्रत्यक्षागमाभ्यां पक्षस्याबाध्यमानत्वात् । न हि क्षित्यादौ विचित्रकार्ये प्रत्यक्षेणैकैकस्वभावः कर्त्तोपलभ्यते—तस्यातीन्द्रियतया प्रत्यक्षागोचरत्वस्य प्रागेव प्रतिपादनादागमस्यापि तत्प्रतिपादकस्य प्रागेव प्रतिषेधात् । नापि सत्प्रतिपक्षं–विपरीतार्थोपस्थापकस्यानुमानान्तरस्याभावात् कार्यत्वादिहेतूनां चात्रैवानेकदोषदुष्टत्वप्रतिपादनादिति ।

ननु साधूक्तमावरणापाये सर्वज्ञत्वमिति । तत्तु प्रकृतेरेव–अत्रैवावरणसम्भवात् । नात्मनस्तस्यावरणाभावात्–प्रधानपरिणामः शुक्लं कृष्णं च कर्मेत्यभिधानात् । निखिलजगत्कर्तृत्वाच्चास्या एवाशेषज्ञत्वमस्तु । तदेतदप्यसमीक्षिताभिधानं–कर्मणः प्रधानपरिणामताप्रतिषेधात् सकलजगत्कर्तृत्वस्य चासिद्धेः । ननु प्रकृतिप्रभवैवेयं जगतः सृष्टिप्रक्रिया । तत्कथं तस्यास्तत्कर्तृत्वासिद्धिः? तथा हि । प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ।१। प्रथमं हि प्रकृतेर्महान्=विषयाध्यवसायलक्षणा बुद्धिरुत्पद्यते । बुद्धेश्चाहङ्कारोऽहं सुभगोऽहं दर्शनीय इत्याद्यभिमानलक्षणः । अहङ्कारात्पञ्च तन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानि इन्द्रियाणि चैकादश । पञ्च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणलक्षणानि । पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थसंज्ञानि । मनश्च सङ्कल्पलक्षणम् ।

---

१ ईश्वराश्रिता कार्यकरणे ॥ २ सन्दिग्धानैकान्तिकता ॥ ३ विपक्षे=कदाचित्स्वतन्त्रेषु गृहग्रामनगरदेशाधिपतिषु ॥ ४ ईश्वराख्येनैकाधिष्ठायकेन परस्परातिशयवृत्तित्वस्याविनाभावासिद्धेः ॥ ५ सार्वभौमनरपतौ ईश्वरप्रेरणत्वासिद्धेः ॥ ६ कथनातिशयमकुर्वताम् ॥ ७ प्रकृते ॥ ८ क्रम ॥

भोजनार्थं हि तत्र गृहे यास्यामि किं दधि भविष्यति गुडो वा भविष्यतीत्येवं सङ्कल्पवृत्तिर्मनः । पञ्चभ्यश्च तन्मात्रेभ्यः पञ्च भूतानि । शब्दादाकाशं, स्पर्शाद्वायू, रूपात्तेजो, रसादापो, गन्धात्पृथ्वीति । पुरुषश्चेति पञ्चविंशतितत्त्वानि । प्रकृत्यात्मकाश्चैते महदादयो भेदा; न त्वऽतोऽत्यन्तभेदिनो–लक्षणभेदाभावात् । तथा हि । त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि । व्यक्तं[1] तथा प्रधानं तद्विपरीतस्तथा च पुमान् ।१। लोके[3] हि यदात्मकं कारणं तदात्मकमेव कार्यमुपलभ्यते । यथा कृष्णैस्तन्तुभिरारब्धः पटः कृष्णः । एवं प्रधानमपि त्रिगुणात्मकम् । तथा बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतात्मकं व्यक्तमपि । तथाऽविवेकि । इमे सत्त्वाद्य[4] इदं च महदादि व्यक्तमिति पृथक्कर्त्तुं न शक्यते । किन्तु ये गुणास्तद्व्यक्तं यद्व्यक्तं ते गुणा इति । तथा व्यक्ताव्यक्तद्वयमपि विषयो[5]–भोग्यस्वभावत्वात् । सामान्यं च–सर्वपुरुषाणां भोग्यत्वात्पण्यस्त्रीवत् । अचेतनात्मकं च–सुखदुःखमोहावेदकत्वात्प्रसवधर्मिवत् । तथा हि । प्रधानं बुद्धिं जनयति । बुद्धिरप्यहङ्कारम् । अहङ्कारोपि तन्मात्राणीन्द्रियाणि चैकादश । तन्मात्राणि च महाभूतानीति[6] । प्रकृतिविकृतिभावेन[7] परिणामविशेषाल्लक्षणभेदोप्यविरुद्धः । यथोक्तं–"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं[8] विपरीतमव्यक्तम्[9]" । १ । व्यक्तमेव हि कारणवत् । तथा हि । प्रधानेन हेतुमती बुद्धिः । बुद्ध्या चाहङ्कारः[10] । अहङ्कारेण पञ्च तन्मात्राण्येकादश चेन्द्रियाणि । भूतानि[11] तन्मात्रैः । न त्वेवमव्यक्तं—तस्य कुतश्चिदनुत्पत्तेः[12] । तथा व्यक्तमनित्यम्–उत्पत्तिधर्मकत्वात्; नाव्यक्तं–तस्यानुत्पत्तिमत्त्वात् । यथा च प्रधानपुरुषौ दिवि चान्तरिक्षेऽत्र सर्वत्र व्यापितया वर्तेते न तथा व्यक्तम्[13] । यथा च संसारकाले त्रयोदशविधेन बुद्ध्यऽहङ्कारेन्द्रियलक्षणेन संयुक्तं सूक्ष्मशरीरादिकं व्यक्तं संसरति[14], नैवमव्यक्तं–तस्य विभुत्वेन[15] सक्रियत्वायोगात् । बुद्ध्यहङ्कारादिभेदेन चानेकविधं व्यक्तं; नाव्यक्तं–तस्यैकस्यैव सतो लोकत्रयकारणत्वात् । आश्रितं च व्यक्तं–यद्यस्मादुत्पद्यते तस्य तदाश्रितत्वात् । न त्वेवमव्यक्तं–तस्याकार्यत्वात् । लिङ्गं च लयं[16] गच्छतीति कृत्वा प्रलयकाले हि भूतानि तन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रियाणि चाहङ्कारेऽहङ्कारो बुद्धौ बुद्धिश्च प्रधाने । न चाव्यक्तं क्वचिदपि लयं गच्छतीति–तस्याविद्यमानकारणत्वात् । सावयवं च व्यक्तं–शब्दस्पर्शरूपरसगन्धात्मकैरवयवैर्युक्तत्वात् । न त्वेवमव्यक्तं–प्रधानात्मनि शब्दादीनामनुपलब्धेः । यथा च पितरि जीवति पुत्रो न स्वतन्त्रो भवति तथा व्यक्तं सर्वदा कारणायत्तत्वात्परतन्त्रम् । न त्वेवमव्यक्तं–तस्य नित्यमकारणाधीनत्वात् । ननु प्रधानात्मनि कुतो महदादीनां सद्भावसिद्धिर्यतः प्रागुत्पत्तेः सदेव कार्यमिति चेत् 'असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ।१।' इति हेतुपञ्चकात् ।

१ महदादि कार्यं त्रिगुणादिरूपेण व्यक्तम् ॥ २ व्यक्ताऽव्यक्ताभ्याम् ॥ ३ प्रधानमेव त्रिगुणात्मकम् । महदादिकार्यं कथं त्रिगुणात्मकं स्यादित्युक्ते सत्याह ॥ ४ आदिपदेन रजस्तमसी ॥ ५ पुरुषेण ॥ ६ स्वरूपावस्थानम् ॥ ७ लक्षणभेदाभावात्कथं कार्यकारणभाव स्यादित्युक्ते आह ॥ ८ महदादि ॥ ९ प्रधानम् ॥ १० हेतुमान् ॥ ११ महदादि कार्यम् ॥ १२ कारणात् ॥ १३ प्रवर्तते ॥ १४ गच्छति ॥ १५ व्यापकत्वेन ॥ १६ तिरोभावम् ॥

यदि हि कारणात्मनि प्रागुत्पत्तेः कार्यं नाभविष्यत्तदा तन्न केनचिदकरिष्यत । यदसत्तन्न केनचित्क्रियते । यथा गगनाम्भोरुहम् । असच्च प्रागुत्पत्तेः परमते
कार्यमिति । क्रियते च तिलादिभिस्तैलादिकार्यम् । तस्मात्तच्छक्तितः प्रागपि सत्–व्यक्तिरूपेण तु कापिलैरपि प्राक् सत्त्वस्यानिष्टत्वात् । यदि चासद्भवेत्कार्यं तर्हि
पुरुषाणां प्रतिनियतोपादानग्रहणं[3] न स्यात् । यथा हि शालिबीजादिषु शाल्यादीनामसत्त्वं तथा कोद्रवबीजादिष्वपि । तथा च कोद्रवबीजादयोपि शालिफलार्थि-
भिरुपादीयेरन् । न चैवम् । तस्मात्तत्र तत्कार्यमस्तीति गम्यते । यदि चासदेव कार्यं सर्वस्मात्तृणपांशुलोष्टादिकात्सर्वं सुवर्णरजतादि कार्यं स्यात्—ता-
दात्म्यविगमस्य सर्वस्मिन्नविशिष्टत्वात् । न च सर्वं सर्वतो भवति तस्मात्तत्रैव तस्य सद्भावसिद्धिः । ननु कारणानां प्रतिनियतेष्वेव कार्येषु प्रतिनियताः शक्त-
यः । तेन कार्यस्यासत्त्वाविशेषेपि किञ्चिदेव कार्यं कुर्वन्तीत्यप्यनुत्तरम् । शक्ता अपि हि हेतवः शक्यक्रियमेव कार्यं कुर्वन्ति नाशक्यक्रियम् । यच्चासत्तन्न शक्यक्रियं
यथा गगनाम्भोरुहम् । असच्च परमते कार्यमिति । बीजादेः कारणभावाच्च सत्कार्य–कार्यासत्त्वे तदयोगात् । तथा हि । न कारणभावो बीजादेरविद्यमान-
कार्यत्वात्खरविषाणवत् । तत्सिद्धमुत्पत्तेः प्राक्कारणे कार्यम् । तच्च कारणं प्रधानमेवेत्यावेदयति हेतुपञ्चकात्–'भेदानां[13] परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ।१।' लोके हि यस्य कर्ता भवति तस्य परिमाणं दृष्टम् । यथा कुलालः परिमितान्मृत्पिण्डात्परिमितं प्रस्थग्राहिणमाढकग्रा-
हिणं च घटं करोति । इदं च महदादि व्यक्तं परिमितं दृष्टम्–एका बुद्धिरेकोऽहङ्कारः, पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, पञ्चभूतानीति । अतो यत्परिमितं व्यक्तमु-
त्पादयति तत्प्रधानमित्यवगमः । इतश्चास्ति प्रधानं–भेदानां समन्वयदर्शनात् । यज्जातिसमन्वितं हि यदुपलभ्यते तत्तन्मयकारणसम्भूतम् । यथा घटशरावादयो भेदा
मृज्जातिसमन्विता मृदात्मककारणसम्भूताः । सत्त्वरजस्तमोजातिसमन्वितं चेदं व्यक्तमुपलभ्यते । सत्त्वस्य हि प्रसादलाघवोर्ध्वप्रीत्यादयः कार्यम् । रजसस्तु ता-
पशोषोद्वेगादयः । तमसश्च दैन्यबीभत्सगौरवादयः । अतो महदादीनां प्रसाददैन्यतापादिकार्योपलम्भात्प्रधानान्वितत्व[18]सिद्धिः । इतश्चास्ति प्रधानं–शक्तितः प्र-
वृत्तेः । लोके हि यो यस्मिन्नर्थे प्रवर्त्तते स तत्र शक्तः । यथा तन्तुवायः पटकरणे । प्रधानस्य चास्ति शक्तिर्यया व्यक्तमुत्पादयति । सा च निराधारा न सम्भवतीति
प्रधानास्तित्वसिद्धिः । कार्यकारणविभागाच्च । दृष्टो हि कार्यकारणयोर्विभागः । यथा मृत्पिण्डः कारणं घटः कार्यम् । स च मृत्पिण्डाद्विभक्तस्वभावो घटो मध्वोदकादि

---

१ परमते प्रागुत्पत्ते कार्यं धर्मि, न केनचित्क्रियते इति साध्यो धर्मः –असत्त्वात् ॥ २ जैनादिमते ॥ ३ मृत्पिण्डे घटो नास्ति पटोपि नास्ति तदा मृत्पिडो घटस्योपादान, पटस्य न । तस्य तु तन्तव एवेति नियतोपादानम् ॥ ४ शाल्यादि ॥ ५ तर्हि ॥ ६ अभावस्य ॥ ७ उपादानेऽनुपादाने च ॥ ८ कारणे ॥ ९ तदुपादाने ॥ १० शक्यक्रियेषु ॥ ११ परमते कार्यं धर्मि शक्यक्रिय न भवति असत्त्वादिति शेष ॥ १२ महदादि ॥ १३ महदादीनाम् ॥ १४ कार्यस्य ॥ १५ महदादिव्यक्तमेककारणपूर्वकं परिमितत्वाद् घटादिवत् ॥ १६ महदादिव्यक्तमेककारणसम्भूतमेकरूपान्वितत्वाद्वा घटघटीशरावोदञ्चनादिवत् ॥ १७ उरसत्व ॥ १८ महदादिव्यक्तस्य ॥ १९ महदादिभेदानाम् ॥ २० कार्यप्रवृत्ति शक्तिपूर्विका प्रवृत्तित्वात्तन्तुवायप्रवृत्तिवत् ॥ २१ महदादिव्यक्तमेककारणपूर्वकं कार्यत्वाद् घटादिवत् ॥

धारणाहरणसमर्थो न तु मृत्पिण्डः । एवं महदादि कार्यं दृष्ट्वा साधयामः—अस्ति प्रधानं यतो महदादिकार्यमुत्पन्नमिति । इतश्चास्ति प्रधानं—वैश्वरूप्यस्याविभागात् । वैश्वरूप्यं हि लोकत्रयमभिधीयते । तच्च प्रलयकाले क्वचिदविभागं गच्छति । उक्तं च—प्राक् पञ्चभूतानि पञ्चसु तन्मात्रेष्वविभागं गच्छन्तीत्यादि । अविभागो हि नामाविवेकः । यथा क्षीरावस्थायामन्यत्क्षीरमन्यद्दधीति विवेको न शक्यते कर्त्तुं तद्वत्प्रलयकाले व्यक्तमिदमव्यक्तं चेदमिति । अतो मन्यामहेस्ति प्रधानं यत्र महदाद्यऽविभागं गच्छतीति[1] ।

अत्र प्रतिविधीयते[3] । प्रकृत्यात्मकत्वे महदादिभेदानां कार्यतया ततः[4] प्रवृत्तिविरोधः । न खलु यद्यस्मात्सर्वथाऽव्यतिरिक्तं तत्तस्य कार्यं कारणं वा युक्तं[5]—भिन्नलक्षणत्वात्तयोः । अन्यथा[6] तद्व्यवस्था सङ्कीर्येत । तथा च यद्भवद्भिर्मूलप्रकृतेः कारणत्वमेव, भूतेन्द्रियलक्षणपोडशकगणस्य कार्यत्वमेव, बुद्ध्यहङ्कारतन्मात्राणां पूर्वोत्तरापेक्षया कार्यत्वं कारणत्वं चेति प्रतिज्ञातं तन्न स्यात् । तथा चेदमसङ्गतं[7]—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ।१।' इति । सर्वेषामेव हि परस्परमव्यतिरेके कार्यत्वं कारणत्वं वा प्रसज्येत । आपेक्षिकत्वाद्वा[8] तद्भावस्य रूपान्तरस्य चापेक्षणीयस्याभावात्सर्वेषां पुरुषवत्प्रकृतिविकृतित्वाभावः । अन्यथा[11] पुरुषस्यापि प्रकृतिविकृतिव्यपदेशः स्यात् । यच्चेदं हेतुमत्त्वादिधर्मयोगि व्यक्तं विपरीतमव्यक्तं तदपि बालप्रलापमात्रम् । न हि यद्यस्मादभिन्नस्वभावं[12] तत्तद्विपरीतं युक्तं भिन्नस्वभावलक्षणत्वाद्विपरीतत्वस्य । अन्यथा[13] भेदव्यवहारोच्छेद्यः(दः) स्यात् । सत्त्वरजस्तमसां चान्योन्यं भिन्नस्वभावनिबन्धनो भेदो न स्यादिति विश्वमेकरूपमेव स्यात् । ततो व्यक्तरूपाव्यतिरेकादव्यक्तमपि हेतुमत्त्वादिधर्मयोगि स्यात् व्यक्तस्वरूपवत् । व्यक्तं वाऽहेतुमत्त्वादिधर्मयोगि स्यादऽव्यक्तस्वरूपाव्यतिरेकात्तत्स्वरूपवदित्येकान्ते[14] । किञ्चान्वयव्यतिरेकनिश्चयसमधिगम्यो लोके कार्यकारणभावः प्रसिद्धः । न च प्रधानादिभ्यो महदाद्युत्पत्तिनिश्चयेऽन्वयो व्यतिरेको वा प्रतीतोस्ति येन प्रधानान्महान्महतोऽहङ्कार इत्यादि सिद्ध्येत् । न च नित्यस्य कारणभावोस्ति—क्रमाऽक्रमाभ्यां तस्यार्थक्रियाविरोधात् । ननु नित्यमपि प्रधानं कुण्डलादौ[15] सर्पवन्महदादिरूपेण परिणामं गच्छत्तेषां कारणमित्युच्यते । ते च तत्परिणामरूपत्वात्तत्कार्यतया व्यपदिश्यन्ते । परिणामश्चैकवस्त्वऽधिष्ठानत्वादभेदेपि न विरुध्यते । इत्यप्यनेकान्तावलम्बने प्रमाणोपपन्नं—नित्यैकान्ते परिणामस्यैवासिद्धेः । स हि तत्र भवन्

१ महदाद्यविभाग क्वचिदाश्रित अविभागत्वात्क्षीरे दध्याद्यविभागवत् ॥ २ एकत्वम् ॥ ३ जैनै ॥ ४ प्रकृते ॥ ५ प्रधान महदादे कारण न भवति तस्मात्सर्वथाऽव्यतिरिक्तत्वात् । महदादि प्रधानकार्यं न भवति तस्मात्सर्वथाऽव्यतिरिक्तत्वात् ॥ ६ भिन्नलक्षणाभावे ॥ ७ प्रकृत्यादि कार्यरूप कार्यरूपान्महदादेरव्यतिरेकात् ॥ ८ अपेक्षणीयाभावेपि प्रकृतिविकृतिभावो भविष्यतीत्युक्ते आह ॥ ९ भिन्नलक्षणत्वात्कार्यकारणभावयोरित्यस्यापेक्षया वाशब्द ॥ १० कार्यकारणभावस्य ॥ ११ अपेक्षणीयस्याभावेपि कस्यचित्प्रकृतित्व वा घटते चेत् ॥ १२ अव्यक्त धर्मि व्यक्ताद्विपरीत न भवति तस्मादभिन्नस्वभावत्वात् ॥ १३ विपरीतत्व भिन्नस्वभावनिबन्धन न भवतीति चेत् ॥ १४ सर्वं व्यक्तरूपमेवाऽव्यक्तरूपमेव वा स्यादिति ॥ १५ ऋजु सर्पो यथा कुण्डलाकारेण जायते स एव ऋज्वाकारेण जायते ॥ कुण्डलादौ स्वर्णवदिति पाठान्तरम् ॥

[illegible]त्यागाद्वा भवेदत्यागाद्वा? यद्यत्यागात्तदाऽवस्थासाङ्कर्यं-वृद्धाद्यवस्थायामपि युवाद्यवस्थोपलब्धिप्रसङ्गात् । अथ त्यागात्तदा स्वभावहानिप्रसङ्गः । किञ्च सर्वथा तत्त्यागः कथञ्चिद्वा? सर्वथा चेत्कस्य परिणामः? पूर्वरूपस्य सर्वथा त्यागादपूर्वस्य चोत्पादात् । कथञ्चित् चेन्न किञ्चिद्विरुद्धं-तस्यैवार्थस्य प्राच्यरूपत्यागेनान्यथाभावलक्षणपरिणामोपपत्तेः । नित्यैकान्तता तु तस्य व्याहन्येत । अत्र हि नैकदेशेन तत्त्यागो निरंशस्यैकदेशाभावात् । नापि सर्वात्मना नित्यत्वव्याघातात् । किं च प्रवर्त्तमानो निवर्त्तमानश्च धर्मो धर्मिणोऽर्थान्तरभूतो वा स्यादनर्थान्तरभूतो वा? यद्यर्थान्तरभूतस्तर्हि धर्मी तदवस्थ एवेति कथमसौ परिणतो नाम? न ह्यर्थान्तरभूतयोरर्थयोरुत्पादविनाशे सत्यविचलितात्मनो वस्तुनः परिणामो भवति । अन्यथाऽऽत्मापि परिणामी स्यात् । तत्सम्बद्धयोर्धर्मयोरुत्पादविनाशात्तस्य परिणाम इत्यप्यसुन्दरं-धर्मिणा सदसतोः सम्बन्धाभावात् । सम्बन्धो हि धर्मस्य सतो भवेदसतो वा? न तावत्सतः स्वातन्त्र्येण प्रसिद्धाशेषस्वभावस्य [illegible]तेरनपेक्षतया क्वचित्पारतन्त्र्यासम्भवात् । नाप्यसतस्तस्य सर्वोपाख्याविरहलक्षणतया क्वचिदप्याश्रितत्वानुपपत्तेः । न खलु खरविषाणादिः क्वचिदाश्रितो युक्तः । न च प्रवर्त्तमानाप्रवर्त्तमानधर्मद्वयव्यतिरिक्तो धर्मी उपलब्धिलक्षणप्राप्तो दर्शनपथप्रस्थायी कस्यचिदिति । अतः स तादृशोऽसद्व्यवहारविषय एव विदुषाम् । अथानर्थान्तरभूतस्तथाप्येकस्माद्धर्मिस्वरूपादव्यतिरिक्तत्वात्तयोरेकत्वमेवेति कथं परिणामो धर्मिणो धर्मयोर्वा विनाशप्रादुर्भावौ धर्मिस्वरूपवत्? धर्माभ्यां च धर्मिणो-[illegible] [illegible]पूर्वस्योत्पादः पूर्वस्य विनाश इति नैव कस्यचित्परिणामः सिध्यति । तस्मान्न परिणामवशादपि भवतां कार्यकारणव्यवहारो युक्तः । यच्चेदमु-[illegible] [illegible]समर्थनार्थमसदकरणादिहेतुपञ्चकमुक्तं तदसत्कार्यवादपक्षेऽपि तुल्यम् । शक्यते ह्येवमप्यभिधातुं 'न सदकरणादुपादानग्रहणात्सर्वसम्भवाभा-[illegible] [illegible]कारणभावाच्च सत्कार्यम् । १ ।' न सत्कार्यमिति सम्बन्धः । किञ्च सर्वथा सत्कार्यं कथञ्चिद्वा? प्रथमपक्षोऽसम्भाव्यः । यदि हि [illegible] सर्वथा विशिष्टरसवीर्यविपाकादिना विभक्तरूपेण मध्यावस्थावत्सन्ति तर्हि तेषां किमुत्पाद्यमस्ति येन तानि कारणैः क्षीरादिभिर्जन्यानि [illegible] । [illegible] केनापि जन्यं यथा प्रधानमात्मा वा । सच्च सर्वात्मना परमते दध्यादीति न महदादेः कार्यता । नापि प्रधानस्य कार-[illegible] [illegible]कार्यं [illegible] कारणं यथात्मा । अविद्यमानकार्यं च प्रधानमिति । क्षीराद्यवस्थायामपि दध्यादीनां पश्चादिवोपलम्भप्रसङ्गश्च ।

[illegible] ४ युवावस्थाया ॥ ५ प्रधानस्य ॥ ६ पूर्वरूपत्याग ॥ ७ उत्तरपरिणामलक्षण ॥ ८ पूर्वपरिणामलक्षण ॥ ९ पुरुषादे ॥ १० मा[illegible] [illegible] १४ पारतन्त्र्यं हि सम्बन्ध इति वचनात् ॥ १५ उपाख्या स्वभाव ॥ १६ धर्मिधर्मयो ॥ १७ धर्मयोर्विनाशप्रादुर्भावौ धर्मिणो न भवत[illegible] [illegible] १९ समाशात् ॥ २० सर्वस्य कारणेन ॥ २१ कारणे ॥ २२ आदिना नवनीततक्रादि ॥ २३ दध्याद-[illegible] [illegible] २५ इति अनुमानात् ॥ २६ प्रधानं कस्यचित्कारणं न भवति ॥

अथ कथञ्चिच्छक्तिरूपेण सत्कार्यम् । ननु शक्तिर्द्रव्यमेव । तद्रूपतया सतः पर्यायरूपतया चासतो घटादेरुत्पत्त्यभ्युपगमे जिनपतिमतानुसरणप्रसङ्गः । किञ्च तच्छक्तिरूपं दध्यादेर्भिन्नमभिन्नं वा ? भिन्नं चेत्कथं कारणे कार्यसद्भावसिद्धिः ? कार्यव्यतिरिक्तस्य शक्त्याख्यपदार्थान्तरस्यैव सद्भावाभ्युपगमात् । आविर्भूतविशिष्टरसादिगुणोपेतं हि वस्तु दध्यादि कार्यमुच्यते । तच्च क्षीराद्यवस्थायामुपलब्धिलक्षणप्राप्तानुपलब्धेर्नास्ति । यच्चास्ति शक्तिरूपं तत्कार्यमेव न भवति । न चान्यस्य भावेऽन्यदस्त्यतिप्रसङ्गात् । अथाभिन्नं तर्हि दध्यादेर्नित्यत्वात्कारणव्यापारवैयर्थ्यम् । अभिव्यक्तौ कारणानां व्यापारान्न वैयर्थ्यमित्यप्यसत्–यतोऽभिव्यक्तिः पूर्वं सत्यसती वा ? सती चेत्कथं क्रियेत ? अन्यथा कारकव्यापारानुपरमः स्यात् । अथासती तथाप्याकाशकुशेशयवत्कथं क्रियेत ? असदकरणादित्यभ्युपगमाच्च । सर्वस्य सर्वथा सत्त्वेन च कार्यत्वासम्भवादुपादानपरिग्रहोपि न प्राप्नोति । सर्वसम्भवाभावोपि प्रतिनियतादेव क्षीरादेर्दध्यादीनां जन्मोच्यते । तच्च सत्कार्यवादपक्षे दूरोत्सारितम् । शक्तस्य शक्यकरणादिति चात्रासम्भाव्यम् । यदि हि केनचित् किञ्चिन्निष्पाद्येत तदा निष्पादकस्य शक्तिर्व्यवस्थाप्येत निष्पाद्यस्य च करणं नान्यथा । कारणभावोप्यर्थानां न घटते–कार्यत्वाभावादेव । किञ्चैते हेतवो भवत्पक्षे प्रवृत्ताः किं कुर्वन्ति ? स्वविषये हि प्रवृत्तं साधनं द्वयं करोति–प्रमेयार्थविषये प्रवृत्तौ संशयविपर्यासौ निवर्त्तयति निश्चयं चोत्पादयति । तच्च सत्कार्यवादे न सम्भवति । संशयविपर्यासौ हि भवतां मते चैतन्यात्मकौ बुद्धिमनःस्वभावौ वा ? पक्षद्वयेपि न तयोर्निवृत्तिः सम्भवति चैतन्यबुद्धिमनसां नित्यत्वेनानयोरपि नित्यत्वात् । नापि निश्चयस्योत्पत्तिस्तस्यापि सदा सत्त्वात् । इति साधनोपन्यासवैयर्थ्यम् । तस्मात्साधनोपन्यासस्यार्थवत्त्वमिच्छता निश्चयोऽसन्नेव साधनेनोत्पाद्यत इत्यङ्गीकर्त्तव्यम् । तथा चासदकरणादेर्हेतुगणस्यानैकान्तिकता । यथा चासतोपि निश्चयस्य करणं, तन्निष्पत्तये च यथा विशिष्टसाधनपरिग्रहो, यथा चास्य न सर्वस्मात्साधनाभासादेः सम्भवो, यथा चासावसन्नपि शक्तैर्हेतुभिः क्रियते तत्र च हेतूनां कारणभावोस्ति तथान्यत्रापि भविष्यति । अथ यद्यपि साधनप्रयोगात्प्राक्सन्नेव निश्चयस्तथापि न तत्प्रयोगवैयर्थ्यं तदभिव्यक्तौ तस्य व्यापारात् । तत्र केयमभिव्यक्तिः ? किं स्वभावातिशयोत्पत्तिस्तद्विषयज्ञानं वा तदुपलम्भावरणापगमो वा ? न तावत्स्वभावातिशयः । स हि निश्चयस्वरूपादभिन्नो भिन्नो वा ? यद्यभिन्नस्तर्हि निश्चयस्वरूपवत्सर्वदा सत्त्वान्नोत्पत्तिर्युक्ता । अथ भिन्नस्तस्यासाविति सम्बन्धाभावः । स ह्याधाराधेयभावलक्षणो वा जन्यजनकभावलक्षणो वा ? तत्राद्यपक्षोऽयुक्तः परस्परमनुपकार्योपकारकयोस्तदसम्भवात् । उपकारे वा तस्याप्यर्थान्तरत्वे सम्बन्धासिद्धिरनवस्था च । अनर्थान्तरत्वे साधनप्रयोगवैयर्थ्यं निश्च-

१ दध्यादिकार्यं धर्मि शक्तिरूपे कारणे नास्ति ततो भिन्नत्वात् ॥ २ ततो भिन्नत्व स्यात्कारणे विद्यमानत्व च स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ३ शक्तिरूपस्य ॥ ४ व्यक्तिरूप दध्यादिकार्यम् ॥ ५ पटस्य भावे पटस्य भावप्रसङ्गात् ॥ ६ विद्यमानापि क्रियमाणा चेत् ॥ ७ अविश्रान्ति ॥ ८ परेणैव ॥ ९ पदार्थस्य ॥ १० जैनै ॥ ११ कारणस्य ॥ १२ कार्यस्य ॥ १३ निष्पाद्यनिष्पादकभावाभावे शक्ति करण वा न व्यवस्थाप्यते ॥ १४ कार्यस्य सर्वथा सत्त्वात् ॥ १५ कारणापेक्षया ॥ १६ महदादावपि ॥ १७ निश्चयस्वभावातिशययो ॥ १८ निश्चयेनातिशयस्य ॥ १९ अतिशयात् ॥ २० ग्रन्थस्य ॥ २१ निश्चयेनातिशयस्य क्रियमाण उपकार अतिशयादनर्थान्तरमित्यस्मिन् दूषणमाह ॥ २२ उपकाराय ॥

यादेवोपकाराऽनर्थान्तरस्यातिशयस्योत्पत्तेः[1] । अमूर्त्तत्वाच्चातिशयस्याधोगमनाभावान्न तस्य कश्चिदाधारो युक्तोऽधोगतिप्रतिबन्धकत्वेनाधारस्यावस्थितेः । नापि जन्यजनकभावलक्षणः सर्वदैव निश्चयाख्यकारणस्य सन्निहितत्त्वेन नित्यमतिशयोत्पत्तिप्रसङ्गात् । न च साधनप्रयोगापेक्षया निश्चयस्यातिशयोत्पादकत्वं युक्तमनुपकारिण्यपेक्षाऽयोगात् । उपकारित्वे वा पूर्ववद्दोषोऽनवस्था च । अपि चायमतिशयः सन्नसन्वा क्रियेत ? असत्त्वे पूर्ववत्साधनानामनैकान्तिकतापत्तिः । सत्त्वे च साधनवैयर्थ्यम् । तत्राप्यभिव्यक्तावनवस्था[4] । तन्न स्वभावातिशयोत्पत्तिरभिव्यक्तिः । नापि तद्विषयज्ञानं सत्कार्यवादिनो मते तस्यापि नित्यत्वात्, द्वितीयज्ञानस्यासम्भवाच्च । एकमेव हि भवतां मते विज्ञानम्–आसर्गप्रलयादेका बुद्धिरिति सिद्धान्तस्वीकारात् । तदुपलम्भावरणापगमोप्यभिव्यक्तिर्न युक्ता–तदावरणस्य नित्यत्वेनापगमासम्भवात् । तिरोभावलक्षणोप्यपगमो न युक्तोऽत्यक्तपूर्वरूपस्य तिरोभावासम्भवात् । द्वितीयोपलम्भस्य चासम्भवात्कथं तदावरणसम्भवो येनास्यापगमोभिव्यक्तिः स्यात् ? न ह्यावरणमसतो युक्तं सद्वस्तुविषयत्वात्तस्य । बन्धमोक्षाभावश्च सत्कार्यवादिनोनुपज्यते । बन्धो हि मिथ्याज्ञानात् । तस्य च सर्वदावस्थितत्वेन सर्वदा सर्वेषां बद्धत्वात्कुतो मोक्षः ? प्रकृतिपुरुषयोः कैवल्योपलम्भलक्षणतत्त्वज्ञानाच्च मोक्षः । तस्य च सदावस्थितत्वेन सर्वदा सर्वेषां मुक्तत्वात्कुतो बन्धः ? सकलव्यवहारोच्छेदप्रसङ्गश्च । लोकः खलु हिताहितप्राप्तिपरिहारार्थं प्रवर्त्तते । सत्कार्यवादपक्षे तु न किञ्चिदप्राप्यमहेयं चास्तीति निरीहमेव जगत्स्यात् । यदसत्तन्न केनचित्क्रियते इति चासङ्गतं हेतोर्विपक्षे[14] बाधकप्रमाणाभावेनानेकान्तात् । कारणशक्तिप्रतिनियमाद्धि किञ्चिदेवासत्क्रियते यस्योत्पादकं कारणमस्ति । यस्य तु गगनाम्भोरुहादेर्नास्ति कारणं तन्न क्रियते । न हि सर्वं सर्वस्य कारणमिष्टम् । नापि यद्यदसत्तत्तत्क्रियते एवेति व्याप्तिरिष्टा । किं तर्हि ? यत्क्रियते तत्प्रागुत्पत्तेः कथञ्चिदसदेवेति । ननु तुल्येप्यसत्कारित्वे कारणानां किमिति सर्वं सर्वस्मात्सतः कारणं न स्यादित्यन्यत्रापि समानम् । समाने हि सत्कारित्वे किमिति सर्वं सर्वस्य सतः कारणं न स्यात् ? कारणशक्तिप्रतिनियमात्सदप्यात्मादि न क्रियत इत्यन्यत्रापि समानम् । प्रतिपादितप्रकारेण सर्वथा सतः कार्यत्वासम्भवात्कथञ्चिदसत्कार्यवादे एव चोपादानग्रहणादित्यादेर्हेतुचतुष्टयस्य विरुद्धता–साध्यविपर्ययसाधनात् । तन्नोत्पत्तेः प्राक्कारणकार्यसद्भावसिद्धिः । यच्चोक्तं–भेदानां परिमाणादित्यादिहेतोः कारणं च प्रधानमेवैकं सिद्ध्यति तदप्युक्तिमात्रं–भेदानां परिमाणादित्यस्यैककारणपूर्वकत्वेनाविनाभावासिद्धेः–अनेककारणपूर्वकत्वेप्यस्याविरोधात् । कारणमात्रपूर्वकत्वेनैव हि तस्याविनाभावः । तत्साधने च सिद्धसाधनम् । भेदानां समन्वयदर्शनादिति चासिद्धम् । न खलु सुखदुःखमोहसमन्वितं प्रमाणतः प्रसिद्धं शब्दादि-

---

१ न तूपकारकस्योत्पत्ति ॥ २ स्वभावातिशयेपि ॥ ३ साधनेन ॥ ४ प्रागुक्तप्रकारेण ग्रन्थानवस्था ॥ ५ तन्निश्चयम् ॥ ६ निश्चयलक्षणज्ञानापेक्षया निश्चयव्यवस्थापकज्ञानस्य (तद्विषयज्ञानस्य) द्वितीयत्वम् ॥ ७ सांख्यानाम् ॥ ८ निश्चयस्य ॥ ९ निश्चयज्ञानस्य ॥ १० आवरणस्य अव्यक्तरूप न सम्भवति–नित्यत्वात् ॥ ११ ॥ प्राणिनाम् ॥ १२ विवेकख्यातिलक्षणादे ॥ १३ बन्धमोक्षलक्षणस्य ॥ १४ परमते व्याद्यिकार्यं धर्मि न केनचित्क्रियते ॥ १५ असन्नपि क्रियत इत्यस्मिन् ॥ १६ खरविषाणादे ॥ १७ आत्मादे ॥ १८ असत्कार्यवादपक्षेपि ॥ १९ पर्यायरूपतया ॥ २० परमते सर्वथा सत्कार्यं साध्यम् ॥ २१ कथञ्चिदसत्कार्यस्य ॥ २२ शब्दादिव्यक्तम् ॥

व्यक्तस्याचेतनतया चेतनसुखादिसमन्वयविरोधात्। प्रयोगः—ये चैतन्यरहिता न ते सुखादिसमन्वयाः। यथा गगनाम्भोजादयः। चैतन्यरहिताश्च शब्दादय इति। ननु चैतन्येन सुखादिसमन्वयस्य यदि व्याप्तिः प्रसिद्धा तदा तन्निवर्त्तमानं शब्दादिषु सुखादिसमन्वयत्वं निवर्त्तयेत्। न चासौ सिद्धा—पुरुषस्य चेतनत्वेपि सुखादिसमन्वयासिद्धेरित्यप्यपेशलं—स्वसंवेदनसिद्धिप्रस्तावे सुखादिस्वभावतयात्मनः प्रसाधनात्। यच्चान्यदुक्तं—प्रसादतापदैन्यादिकार्योपलम्भात्प्रधानान्वितत्वसिद्धिस्तदप्ययुक्तम्—अनेकान्तात्। कापिलयोगिनां हि पुरुषं प्रकृतिविभक्तं भावयतां पुरुषमालम्ब्य स्वभ्यस्तयोगानां प्रसादो भवति प्रीतिश्च। अनभ्यस्तयोगानां क्षिप्रतरमात्मानमपश्यतामुद्वेगः। प्रकृत्या जडमतीनां मोहो जायते। न चासौ पुरुषः प्रधानान्वितः परैरिष्टः। सङ्कल्पात्प्रीत्याद्युत्पत्तिर्न पुरुषादिति शब्दादिष्वपि समानम्। सङ्कल्पमात्रभावित्वे च प्रीत्यादीनामात्मरूपताप्रसिद्धिः—सङ्कल्पस्य ज्ञानरूपत्वात्—ज्ञानस्य चात्मधर्मतया स्वसंवेदनसिद्धिप्रस्तावे प्रतिपादितत्वात्। इत्यलमतिप्रसङ्गेन। अस्तु वा प्रीत्यादिसमन्वयो व्यक्ते तथापि न प्रधानप्रसिद्धिः—साधनस्यान्वयासिद्धेः। न खलु यथाभूतं त्रिगुणात्मकमेकं नित्यं व्यापि चास्य कारणं साधयितुमिष्टं तथाभूतेन क्वचिद्धेतोः प्रतिबन्धः सिद्धः। नापि यदात्मकं कार्यमुपलभ्यते कारणेनाप्यवश्यं तदात्मना भाव्यम्। अन्यथा महदादौ हेतुमत्त्वानित्यत्वाव्यापित्वादिधर्मोपलम्भात्प्रधानेपि तादृप्यप्रसिद्धिप्रसङ्गाद्धेतोर्विरुद्धतानुषङ्गः। यच्चेदं निदर्शनमुक्तं—यथा घटशरावादयो मृज्जातिसमन्विता इति तदप्यसङ्गतं—साध्यसाधनविकलत्वादस्य। न हि मृत्त्वसुवर्णत्वादिजातिर्नित्यनिरंशव्याप्येकरूपा प्रमाणतः प्रसिद्धा येन तदात्मककारणसम्भूतत्वं तत्समन्वितत्वं च प्रसिद्ध्येत्—प्रतिव्यक्ति तस्याः प्रतिभासभेदाद्भेदसिद्धेः। विस्तरेण चास्याः सिद्ध्यभावं सामान्यविचारप्रस्तावे प्रतिपादयिष्याम इत्यलमतिविस्तरेण। तथा समन्वयादिर्हेतुस्यानेकान्तश्चेतनत्वभोक्तृत्वादिधर्मैः पुरुषाणां प्रधानपुरुषाणां च नित्यत्वादिधर्मैः समन्वितत्वेपि तथाविधैककारणपूर्वकत्वानभ्युपगमात्। एतेन शक्तितः प्रवृत्तेरित्यादेप्यनैकान्तिकत्वादिदोषदुष्टत्वादेककारणपूर्वकत्वासाधनमित्यवसातव्यम्। तथा हि। प्रेक्षावत्कारणमेतेभ्यः प्रसाध्यते कारणमात्रं वा? प्रथमविकल्पेऽनेकान्तो विनापि हि प्रेक्षावता कर्त्रा स्वहेतुसामर्थ्यप्रतिनियमात्प्रतिनियतकार्यस्योत्पत्त्यविरोधात्। न च प्रधानं प्रेक्षावद्युक्तं तस्याचेतनत्वात्प्रेक्षायाश्च चेतनापर्यायत्वात्। अथ कारणमात्रं साध्यते तर्हि सिद्धसाध्यता। न ह्यस्माकं कारणमन्तरेण कार्यस्योत्पादोऽभीष्टः। कारणमात्रस्य च प्रधानमिति संज्ञाकरणे न किञ्चिद्विरुध्यतेऽर्थभेदाभा-

१ तया इति मूलपुस्तके पाठ ॥ २ भिन्नम् ॥ ३ मनस ॥ ४ सङ्कल्पात्प्रीत्यादिहेतु शब्दादिरिति ॥ ५ ज्ञानस्यात्मधर्मत्वसमर्थनविस्तरेण ॥ ६ समन्वयदर्शनादित्यस्य ॥ ७ व्याप्त्यसिद्धे ॥ ८ दृष्टान्ते ॥ ९ सत्त्वादि ॥ १० समन्वयादिति हेतुर्नित्यत्वादिधर्मोपेते प्रधाने साध्ये प्रयुक्तोऽनित्यत्वादिधर्मोपेतप्रधानप्रसाधनाद्विरुद्ध ॥ ११ सा नित्यनिरंशव्याप्येकरूपजाति ॥ १२ तया नित्यनिरंशव्याप्येकरूपजात्या ॥ १३ नित्यनिरंशव्याप्येकरूपजातिनिराकरणविस्तरेण ॥ १४ नित्यनिरंशव्याप्येकरूपजात्या ॥ १५ हेतो ॥ १६ निरंशत्वादिभिश्च ॥ १७ परेण ॥ १८ हेतुद्वयनिराकरणपरेण ग्रन्थेन ॥ १९ हेतुत्रयमपि ॥ २० नित्यत्वमेषा यत ॥ २१ हेतुभ्य ॥ २२ अकृष्यभूरुहादिक प्रेक्षावत्कारणमन्तरेणापि दृश्यतेऽत सर्वं प्रेक्षावत्कारणपूर्वकं वा नेति सन्दिग्धानेकान्त ॥ २३ कारणसामान्यम् ॥ २४ जैनानाम् ॥

वांत् । किञ्च शक्तितः प्रवृत्तेरित्यनेन यदि कथञ्चिदव्यतिरिक्तशक्तियोगिकारणमात्रं साध्यते तदा सिद्धसाध्यता । अथ व्यतिरिक्तविचित्रशक्तियुक्तमेकं नित्यं कारणं तदानैकान्तिकता हेतोः । तथाभूतेन क्वचिदन्वयासिद्धेरसिद्धता च । न खलु व्यतिरिक्तशक्तिवशात्कस्यचित्कारणस्य क्वचित्कार्ये प्रवृत्तिः प्रसिद्धा—शक्तीनां स्वात्मभूतत्वात् । यच्चेदमुक्तमविभागाद्वैश्वरूप्यस्य तदप्यसाम्प्रतं—प्रलयकालस्यैवाप्रसिद्धेः । सिद्धौ वा तदासौ महदादीनां लयो भवन् पूर्वस्वभावप्रच्युतौ भवेदप्रच्युतौ वा ? यदि प्रच्युतौ तर्हि तेषां तदा विनाशसिद्धिः स्वभावप्रच्युतेर्विनाशरूपत्वात् । अथाप्रच्युतौ तर्हि लयानुपपत्तिः । न ह्यविकलमात्मनस्तत्त्वमनुभवतः कस्यचिल्लयो युक्तोऽतिप्रसङ्गात् । परस्परविरुद्धं चेदमविभागो वैश्वरूप्यमिति च । वैश्वरूप्यं च प्रधानपूर्वत्वे नोपपद्यत एव—तन्मयत्वेन सर्वस्य जगतस्तत्स्वरूपवदेकत्वप्रसङ्गात् । इति कस्याऽविभागः स्यादिति ? तत्र प्रधानस्य सकलजगत्कर्तृत्वं सिद्धं यतस्तत्सिद्धौ प्रधानस्य सर्वज्ञता—कर्तृत्वस्य कारणशक्तिपरिज्ञानाविनाभावासिद्धेरित्युक्तं प्रागीश्वरनिराकरणे । तदलमतिप्रसङ्गेन ।

एतेन सेश्वरसाङ्ख्यैर्यदुक्तं 'न प्रधानादेव केवलादमी कार्यभेदाः प्रवर्त्तन्ते तस्याचेतनत्वात् । न ह्यचेतनोऽधिष्ठायकमन्तरेण कार्यमारभमाणो दृष्टः । न चान्यात्माधिष्ठायको युक्तः—सृष्टिकाले तस्याज्ञत्वात् । तथा हि । बुद्ध्यध्यवसितमेवार्थं पुरुषश्चेतयते । बुद्धिसंसर्गाच्च पूर्वमसावज्ञ एव, न जातु कञ्चिदर्थं विजानाति । न चाज्ञातमर्थं कश्चित्कर्त्तुं शक्तः । अतो नासौ कर्त्ता । तस्मादीश्वर एव प्रधानापेक्षः कार्यभेदानां कर्त्ता । न केवलः । न खलु देवदत्तादिः केवलः पुत्रं कुम्भकारो वा घटं जनयति' इति तदपि प्रतिव्यूढं—प्रत्येकं तयोः कर्तृत्वस्यासम्भवे सहितयोरप्यसम्भवात् । अन्यथा प्रत्येकपक्षनिक्षिप्तदोषानुषङ्गः । अथोच्यते 'यदि नाम प्रत्येकं तयोः कर्तृत्वासम्भवस्तथापि सहितयोः कथं तदभावः ? न हि केवलानां चक्षुरादीनां रूपादिज्ञानोत्पत्तिसामर्थ्याभावे सहितानामप्यसौ युक्तः' तदप्युक्तिमात्रं—यतः साहित्यं नामानयोरन्योन्यं सहकारित्वम् । तच्चान्योन्यातिशयाधानाद्वा स्यादेकार्थकारित्वाद्वा ? न तावदाद्यकल्पना युक्ता—नित्यत्वेनानयोर्विकाराभावात् । नापि द्वितीयकल्पना युक्ता—कार्याणा यौगपद्यप्रसङ्गात् । अप्रतिहतसामर्थ्यस्येश्वरप्रधानाख्यकारणस्य सदा सन्निहितत्वेनाविकलकारणत्वात्तेषाम् । तथा हि । यद्यदाऽविकलकारणं तत्तदा भवत्येव । यथाऽन्त्यक्षणप्राप्तायाः सामग्रीतोऽङ्कुरः । अविकलकारणं चाशेषं कार्यमिति । ननु यद्यपि कारणद्वयमेतन्नित्यं सन्निहितं तथापि क्रमेणैवामी कार्यभेदाः प्रवर्त्स्यन्ते । महेश्वरस्य हि प्रधानगताः सत्त्वादयस्त्रयो गुणाः सहकारिणः । तेषां च क्रमवृत्तित्वात्कार्याणामपि क्रमः । तथा हि । यदोद्भूतवृत्तिना रजसा युक्तो भवत्यसौ तदा सर्गहेतुः प्रजानां भवति प्रसवकार्यत्वाद्रजसः । यदा

---

१ अस्माभि कारणमात्र भवद्भि प्रधान प्रतिपाद्यते इत्यत्र ॥ २ द्रव्यस्वभावेन ॥ ३ कार्यनिष्पादने ॥ ४ धर्म्मस्वभावे भेद ॥ ५ साध्यते इति शेष ॥ ६ सन्दिग्धरूपा ॥ ७ स्वस्य ॥ ८ स्वरूपम् ॥ ९ वस्तुन ॥ १० प्रधानात्मनोरपि लयप्रसङ्गात् ॥ ११ अविभागाद्वैश्वरूप्यमिति ॥ १२ एकत्वम् ॥ १३ अनेकत्वम् ॥ १४ लोके आदौ विभागोस्ति यदि तदा पश्चाद्विभागानामविभाग स्यात् ॥ १५ कर्तृत्व कारणशक्तिज्ञानाविनाभावि न भवतीति समर्थनेन ॥ १६ प्रकृतीश्वरनिराकरणपरेण ग्रन्थेन ॥ १७ महदाद्य ॥ १८ ईश्वर प्रेरकम् ॥ १९ ससारात्मा ॥ २० कार्यम् ॥ २१ सहितयोस्तयो कर्तृत्वसम्भवश्चेत् ॥ २२ आलोकादीना च ॥ २३ प्रसव उत्पत्ति ॥

तु सत्त्वमुद्भूतवृत्ति संश्रयंते तदा लोकानां स्थितिकारणं भवति–सत्त्वस्य स्थितिहेतुत्वात् । यदा तमसोद्भूतशक्तिना समायुक्तो भवति तदा प्रलयं सर्वजगतः करोति–तमसः प्रलयहेतुत्वात् । तदुक्तं "रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः । १ ।" इत्यप्यसाम्प्रतं यतः प्रकृतीश्वरयोः सर्गस्थितिप्रलयानां मध्येऽन्यतमस्य क्रियाकाले तदपरकार्यद्वयोत्पादने सामर्थ्यमस्ति न वा? यद्यस्ति तर्हि सृष्टिकालेपि स्थितिप्रलयप्रसङ्गोऽविकलकारणत्वादुत्पादवत् । एवं स्थितिकालेप्युत्पादविनाशयोर्विनाशकाले च स्थित्युत्पादयोः प्रसङ्गः । न चैतद्युक्तम् । न खलु परस्परपरिहारेणावस्थितानामुत्पादादिधर्माणामेकत्र धर्मिण्येकदा सद्भावो युक्तः । अथ नास्ति सामर्थ्यं तदैकमेव स्थित्यादीनां मध्ये कार्यं सदा स्यात्, यदुत्पादने तयोः सामर्थ्यमस्ति, नापरं कदाचनापि–तदुत्पादने तयोः सदा सामर्थ्याभावात्–अविकारिणोश्च प्रकृतीश्वरयोः पुनः सामर्थ्योत्पत्तिविरोधात् । अन्यथा नित्यैकस्वभावताव्याघातः । अथ तत्स्वभावेपि प्रधाने सत्त्वादीनां मध्ये यदेवोद्भूतवृत्ति तदेव कारणतां प्रतिपद्यते नान्यत् । तत्कथं स्थित्यादीनां यौगपद्यप्रसङ्ग इति? अत्रोच्यते–तेषामुद्भूतवृत्तित्वं नित्यमनित्यं वा? न तावन्नित्यं कादाचित्कत्वात् स्थित्यादीनां यौगपद्यप्रसङ्गाच्च । अथानित्यम् । कुतोऽस्य प्रादुर्भावः? प्रकृतीश्वरादेवान्यतो वा हेतोः स्वतन्त्रो वा? प्रथमपक्षे सदास्य सद्भावप्रसङ्गः–प्रकृतीश्वराख्यस्य हेतोर्नित्यरूपतया सदा सन्निहितत्वात् । न चान्यतस्तत्प्रादुर्भावो युक्तः–प्रकृतीश्वरव्यतिरेकेणापरकारणस्यानभ्युपगमात् । तृतीयपक्षे तु कादाचित्कत्वविरोधोऽस्य स्वातन्त्र्येण भवतो देशकालनियमायोगात् । स्वभावान्तरायत्तवृत्तयो हि भावाः कादाचित्काः स्युस्तद्भावाभावप्रतिबद्धत्वात्तत्सत्त्वासत्त्वयोः । नान्ये–तेषामपेक्षणीयस्य कस्यचिदभावात् । किञ्चात्मानं जनयति भावो निष्पन्नोऽनिष्पन्नो वा? न तावन्निष्पन्नस्तस्यामवस्थायामात्मनोपि निष्पन्नरूपाव्यतिरेकितया निष्पन्नत्वान्निष्पन्नस्वरूपवत् । नाप्यनिष्पन्नोऽनिष्पन्नस्वरूपत्वादेव गगनाम्भोजवत् । तस्मात्प्रकारान्तरेणाशेषज्ञत्वासिद्धेरावरणापाये एवाशेषविषयं विज्ञानम् । तच्चात्मन एवेति परीक्षादक्षैः प्रतिपत्तव्यम् । तच्च विज्ञानमनन्तदर्शनसुखवीर्याविनाभावित्वादनन्तचतुष्टयस्वभावत्वमात्मनः प्रसाधयतीति सिद्धो मोक्षो जीवस्यानन्तचतुष्टयस्वरूपलाभलक्षणः–तस्यापेतप्रतिबन्धकस्यात्मस्वरूपतया जीवन्मुक्तिवत्परममुक्तावप्यभावासिद्धेः ॥

ये त्वात्मनो जीवन्मुक्तौ कवलाहारमिच्छन्ति तेषां तत्रास्यानन्तचतुष्टयस्वभावाभावोऽनन्तसुखविरहात् । तद्विरहश्च बुभुक्षाप्रभवपीडाक्रान्तत्वात् । तत्पीडाप्रतीकारार्थो हि निखिलजनानां कवलाहारग्रहणप्रयासः प्रसिद्धः । ननु भोजनादेः सुखाद्यनुकूलत्वात्कथं भगवतोऽतोऽनन्तसुखाद्यभावः? दृश्यते ह्यस्मदादौ

१ ईश्वर कर्ता ॥ २ न जायते इत्यजो रुद्रस्तस्मै ॥ ३ त्रयी वेदास्त्रयी ॥ ४ सत्त्वरजस्तमोरूपाय ॥ ५ स्थितिप्रलयौ धर्मिणौ सृष्टिकाले भवत तदा अविकलकारणत्वात् ॥ ६ प्रजालक्षणे ॥ ७ सामर्थ्यमुत्पद्यते चेत् ॥ ८ कारणस्य ॥ ९ जायमानस्य ॥ १० कार्यलक्षणाद्भावादपर कारणलक्षणो भाव स्वभावान्तरम् ॥ ११ कारणाधीनवृत्तय इत्यर्थ ॥ १२ तस्य कार्यस्य ॥ १३ स्वरूपम् ॥ १४ कार्यलक्षण ॥ १५ निष्पन्नायाम् ॥ १६ जगत्कर्तृत्वादिलक्षणेन ॥ १७ जीवमयत्वेन ॥ १८ श्वेतपटा ॥

क्षुत्पीडिते निश्शक्तिके च भोजनसद्भावे सुखं वीर्यं चोत्पद्यमानमित्यप्ययुक्तम्—अस्मदादिसुखादेः कादाचित्कतया विषयेभ्य एवोत्पत्तिसम्भवात् । भगवत्सुखादेश्च तत्सम्भवेऽनन्तताव्याघातः । तथा हि । क्षुत्क्षामकुक्षिर्निश्शक्तिकश्चासौ यदा कवलाहारग्रहणे प्रवृत्तस्तदैव तदीयसुखवीर्ययोर्नष्टत्वात्कुतोऽनन्तता ? वीतरागद्वेषत्वाच्चास्य तद्ग्रहणप्रयासायोगः । प्रयोगः । केवली न भुङ्क्ते रागद्वेषाभावानन्तवीर्यसद्भावान्यथानुपपत्तेः । ननु सममित्रशत्रूणां साधूनां भोजनादिकं कुर्वतामपि वीतरागद्वेषत्वसम्भवादनैकान्तिको हेतुरित्यप्यसाम्प्रतं—मोहनीयकर्मणः सद्भावे भोजनादिकं कुर्वतां प्रमत्तगुणस्थानप्रवृत्तीना साधूनां परमार्थतो वीतरागत्वासम्भवात् । तन्नानैकान्तिकोयं हेतुः । नापि विरुद्धो विपक्षे वृत्तेरभावात् । कवलाहारित्वे चास्य सरागत्वप्रसङ्गः । प्रयोगः । यो यः कवल भुङ्क्ते स स न वीतरागो यथा रथ्यापुरुषः । भुङ्क्ते च कवलं भवन्मतः केवलीति । कवलाहारो हि सरणाभिलाषाभ्यां भुज्यते । भुक्तवता च कण्ठोष्ठप्रमाणतस्तृप्तेनाऽरुचितस्त्यज्यते । तथा चाभिलाषाऽरुचिभ्यामाहारे प्रवृत्तिनिवृत्तिमत्त्वात्कथं वीतरागत्वम् ? तदभावान्नाप्तता । अथाभिलाषाद्यभावेप्याहारं गृह्णात्यसौ तथाभूतातिशयत्वात् । ननु चाहाराभावलक्षणोप्यतिशयोऽस्याभ्युपगन्तव्योऽनन्तगुणत्वाद्गगनगमनाद्यतिशयवत् । अथाहाराभावे देहस्थितिरेवास्य न स्यात् । तथा हि । भगवतो देहस्थितिराहारपूर्विका देहस्थितित्वादस्मदादिदेहस्थितिवत् । नन्वनेनानुमानेनास्याहारमात्रं कवलाहारो वा साध्येत ? प्रथमपक्षे सिद्धसाध्यता—आसयोगकेवलिनो जीवा आहारिण इत्यभ्युपगमात्, तत्र च कवलाहाराभावेप्यन्यस्य कर्मनोकर्मादानलक्षणस्याविरोधात् । षड्विधो ह्याहारः "णोकम्म कम्महारो कवलाहारो य लेप्पमाहारो । ओज मणो वि य कमसो आहारो छव्विहो णेयो" इत्यभिधानात् । न खलु कवलाहारेणैवाहारित्वं जीवानाम्—एकेन्द्रियाण्डजत्रिदशानामभुञ्जानतिर्यग्मनुष्याणां चानाहारित्वप्रसङ्गात् । न चैवं "विग्गहगइमावण्णा केवलिणो समुहदो अजोगी[10] य । सिद्धा य अणाहारा सेसा आहारिणो जीवा" इत्यभिधानात् । द्वितीयपक्षे तु त्रिदशादिभिर्व्यभिचारस्तेषां कवलाहाराभावेपि देहस्थितिसम्भवात् । अथौदारिकशरीरस्थितित्वादिति विशेष्योच्यते । तथा हि । या या औदारिकशरीरस्थितिः सा सा कवलाहारपूर्विका यथास्मदादीनाम् । औदारिकशरीरस्थितिश्च भगवतः । इति न त्रिदशशरीरस्थित्या व्यभिचार इत्यप्यसारं—तदीयौदारिकशरीरस्थितेः परमौदारिकशरीरस्थितिरूपतयाऽस्मदाद्यौदारिकशरीरस्थितिविलक्षणत्वात् । तस्याश्च केवलावस्थायां केशादिवृद्ध्यभाववत्तद्भुक्त्यभावोप्यविरुद्ध एव । कथं चैवं वादिनो भगवत्प्रत्यक्षमतीन्द्रियं स्यात् ? शक्यं हि वक्तुं—तत्प्रत्यक्षमिन्द्रियजं—प्रत्यक्षत्वादस्मदादिप्रत्यक्षवत् । तथा

१ भगवदीय ॥ २ कवलाहाराभावमन्तरेणानुपपत्तेस्तयो ॥ ३ हेतोरेकाश गृहीला दूषयति ॥ ४ त्कवलाहारिणि ॥ ५ अभिलाषाद्यभावेप्याहारग्रहणलक्षण ॥ ६ जैने ॥ ७ नोकर्म (१), कर्माहार (२), कवलाहार (३), च लेप्य (४) आहार । ओज (५), मानसिक (६) अपि च क्रमश आहार षड्विधो ज्ञेय ॥ ८ विग्रहगतिमापन्ना केवलिन् समुद्घात (दण्डकपाटेति समुद्घातद्वय) गता अयोगिनश्च । सिद्धाश्च अनाहारा शेषा आहारिणो जीवा ॥ ९ दण्डकवाटावस्थायाम् ॥ १० अर्हदवस्थात अन्ते सिद्धावस्थात आदौ या अवस्था सा अयोगावस्था ॥ ११ ओदारिकशरीरस्थितिलास्कवलाहारित्वमेवेति ॥

सरागोऽसौ वक्तृत्वात्तद्वदेव । न ह्यस्मदादौ दृष्टो धर्मः कश्चित्तत्र साध्यः कश्चिन्नेति वक्तुं युक्तं–स्वेच्छाकारित्वानुषङ्गात् । तथा च न कश्चित्केवली वीतरागो वा । इति कस्य भुक्तिः प्रसाध्यते? यदि चैकत्र तच्छरीरस्थितेः कवलाहारपूर्वकत्वोपलम्भात्सर्वत्र तथाभावः साध्यते तर्हि घटादौ सन्निवेशादेर्बुद्धिमत्पूर्वकत्वोपलम्भात्तन्वादीनामप्यतो बुद्धिमत्पूर्वकत्वसिद्धिः स्यात् । द्विचन्द्रादिप्रत्ययस्य निरालम्बनत्वोपलम्भाच्चाखिलप्रत्ययाना निरालम्बनत्वप्रसङ्गः स्यात् । अथ यादृशं बुद्धिमत्कारणव्याप्तं सन्निवेशादि घटादौ दृष्टं तादृशस्य तन्वादिष्वभावान्नातस्तेषां तत्पूर्वकत्वसिद्धिस्तर्हि यादृशमौदारिकशरीरस्थितित्वमस्मदादौ तद्भुक्तिपूर्वकं दृष्टं तादृशस्य भगवत्परमौदारिकशरीरस्थितावभावान्नातस्तस्यास्तद्भुक्तिपूर्वकत्वसिद्धिः । यथा च प्रत्ययत्वाविशेषेपि कस्यचिन्निरालम्बनत्वमन्यस्यान्यत्वं तथा च तच्छरीरस्थितेस्तत्त्वाविशेषेपि निराहारत्वमितरेच्चेष्यतामविशेषात् । अथान्यादृशमौदारिकशरीरस्थितित्वमन्यादृशाश्च पुरुषा न सन्तीत्युच्यते तर्हि मीमांसकमतानुप्रवेशः । अतो यथान्यादृशाः सन्ति पुरुषास्तथा तत्स्थितित्वमपि । कथमन्यथा सप्तधातुमलापेतत्वं तच्छरीरस्य स्यात्? तत्सम्भवे तत्स्थितेरतद्भुक्तिपूर्वकत्वमपि स्यात् । तपोमाहात्म्याच्चतुरास्यत्वादिवच्चाभुक्तिपूर्वकत्वे तस्याः को विरोधः? दृश्यते च पञ्चकृत्वो भुञ्जानस्य यादृशी तच्छरीरस्थितिस्तादृश्येव प्रतिपक्षभावनोपेतस्य चतुस्त्रिद्व्येकभोजनस्यापि । तथा प्रतिदिनं भुञ्जानस्य यादृशी सा तादृश्येवैकद्व्यादिदिनान्तरितभोजिनोपि । श्रूयते च बाहुबलिप्रभृतीनां संवत्सरप्रमिताहारवैकल्येपि विशिष्टा शरीरस्थितिः । आयुःकर्मैव हि प्रधानं तत्स्थितेर्निमित्तम् । भुक्त्यादिस्तु सहायमात्रम् । तच्छरीरोपचयोपि लाभान्तरायविनाशात्प्रतिसमयं तदुपचयनिमित्तभूतानां दिव्यपरमाणूनां लाभाद् घटते । एवं छद्मस्थावस्थावच्च केवल्यवस्थायामप्यस्य भुक्त्यऽभ्युपगमेऽक्षिपक्ष्मनिमेषो नखकेशवृद्ध्यादिश्चाभ्युपगम्यताम् । तदभावातिशयाभ्युपगमे वा भुक्त्यभावातिशयोप्यभ्युपगन्तव्यो विशेषाभावात् । ननु मासं वर्षं वा तदभावे तत्स्थितावपि नाऽऽकालं तत्स्थितिः–पुनस्तदाहारे प्रवृत्त्युपलम्भादिति चेत्कुत एतत्? आकालं तत्स्थितेरनुपलम्भाच्चेत्सर्वज्ञवीतरागस्याप्यत एवासिद्धेर्लाभमिच्छतो मूलोच्छेदः स्यात् । दोषावरणयोर्हान्यतिशयोपलम्भेन क्वचिदात्यन्तिकप्रक्षयसिद्धेस्तत्सिद्धौ क्वचिच्छरीरिण्यात्यन्तिको भुक्तिप्रक्षयोपि प्रसिध्येत् तदुपलम्भस्यात्राप्यविशेषात् । तन्न शरीरस्थितेर्भगवतो भुक्तिसिद्धिः । अथोच्यते 'वेदनीयकर्मणः सद्भावात्तत्सिद्धिः । तथा हि । भगवति वेदनीयं स्वफलदायि–कर्मत्वादायुःकर्मवत्' तदप्युक्तिमात्रं–यतोऽतोप्यनुमानात्तत्फलमात्रं सिध्येन्न

---

१ कवलाहारलक्षण ॥ २ सरागत्वसेन्द्रियत्वलक्षण ॥ ३ भगवत सरागत्वे तत्प्रत्यक्षसेन्द्रियजत्वे च ॥ ४ अस्मदादौ ॥ ५ अक्रियादर्शिन कृतबुद्ध्युत्पादकत्वम् ॥ ६ सप्तधातुमलोपेतम् ॥ ७ तस्य=कवलस्य ॥ ८ औदारिकशरीरस्थितित्वादिति हेतो ॥ ९ कवलस्य ॥ १० द्विचन्द्रादिप्रत्ययस्य ॥ ११ घटादिप्रत्ययस्य ॥ १२ सालम्बनत्वम् ॥ १३ आहारपूर्वकत्वम् ॥ १४ परमौदारिकम् ॥ १५ अनाहारिण ॥ १६ मीमांसकमतेपि सर्वज्ञलक्षणोऽन्यादृश पुरुषो नास्ति ॥ १७ अन्यादृशौदारिकशरीरस्थिते ॥ १८ अकवल ॥ १९ भोजने विरक्तभावनोपेतस्य ॥ २० पुष्टि ॥ २१ वीतरागस्य ॥ २२ अतिशये ॥ २३ कालमभिव्याप्य । मरणपर्यन्तमित्यर्थ ॥ २४ कवलाहारमन्तरेण ॥ २५ तस्य कवलस्य ॥ २६ सर्वज्ञसद्भावम् ॥ २७ सर्वज्ञसद्भावोच्छेद ॥ २८ दोषा रागादिभावकर्म ॥ २९ आवरण द्रव्यकर्म ॥ ३० दृष्टान्ते ॥ ३१ आत्मनि ॥ ३२ स्वफल क्षुदादिदु राम् ॥

पुनर्भुक्तिलक्षणम् । अथ क्षुदादिनिमित्तवेदनीयसद्भावाद्भुक्तिसिद्धिः । ननु तन्निमित्तं तत्तत्रास्तीति कुतः ? क्षुदादिफलाच्चेदन्योन्याश्रयः । सिद्धे हि भगवति तन्निमित्तकर्मसद्भावे तत्फलसिद्धिस्तस्याश्च तन्निमित्तकर्मसद्भावसिद्धिरिति । अथाऽसातवेदनीयोदयात्तत्र तत्सिद्धिर्न–सामर्थ्यवैकल्यात् तस्य । अविकलसामर्थ्यं ह्यसातादिवेदनीयं स्वकार्यकारि । सामर्थ्यवैकल्यं च मोहनीयकर्मणो विनाशात्सुप्रसिद्धम् । यथैव हि पतिते सैन्यनायकेऽसामर्थ्यं सैन्यस्य तथा मोहनीयकर्मणि नष्टे भगवत्यसामर्थ्यमघातिकर्मणाम् । यथा च मन्त्रेण निर्विषीकरणे कृते मन्त्रिणोपभुज्यमानमपि विषं न दाहमूर्च्छादिकं कर्त्तुं समर्थं तथा असातादिवेदनीयं विद्यमानोदयमप्यसति मोहनीये निःसामर्थ्यत्वान्न क्षुद्दुःखकरणे प्रभु–सामग्रीतः कार्योत्पत्तिप्रसिद्धेः । मोहनीयाभावश्च प्रसिद्धो भगवतस्तीव्रतरशुक्लध्यानानलनिर्दग्धघनघातिकर्मेन्धनत्वात् । यदि च तदभावेपि तदुदयः स्वकार्यकारी स्यात्तर्हि परघातकर्मोदयात्परान् यष्ट्यादिभिस्ताडयेत् स एव वा परैस्ताड्येत । परघातोदयोपि हि संयतानामर्हदवसानानामस्ति । अथ परमकारुणिकत्वात्तदुदयेपि न परांस्ताडयत्युपसर्गाभावाच्च न च तैस्ताड्यते तर्ह्यनन्तसुखवीर्यत्वाद्बाधाविरहाच्चासातादिवेदनीयोदये सत्यपि भोजनादिकं न कुर्यात् । मोहकार्यत्वाच्च करुणायाः कथं तत्क्षये परमकारुणिकत्वं तस्य स्यात् ? किञ्च कर्मणां यद्युदयो निरपेक्षः कार्यमुत्पादयति तर्हि त्रिवेदानां कषायाणां वा प्रमत्तादिषूदयोस्तीति मैथुनं भ्रूकुट्यादिकं च स्यात् । ततश्च मनसः संक्षोभात्कथं शुक्लध्यानाप्तिः क्षपकश्रेण्यारोहणं वा ? तदभावाच्च कथं कर्मक्षपणादि घटेत ? नन्वेवं नामाद्युदयोपि तत्र स्वकार्यकारी न स्यादित्यप्यसङ्गतं–शुभप्रकृतीनां तत्राप्रतिबद्धत्वेन स्वकार्यकारित्वसम्भवात् । यथा हि बलवता राज्ञा स्वमार्गानुसारिणा लब्धे देशे दुष्टा जीवन्तोपि न स्वदुष्टाचरणस्य विधातारः सुजनास्त्वप्रतिहततया स्वकार्यस्य विधातारस्तथा प्रकृतमपि । कथं पुनरशुभप्रकृतीनामेवार्हति प्रतिबद्धं सामर्थ्यं; न पुनः शुभप्रकृतीनामिति चेदुच्यते । अशुभप्रकृतीनामर्हत्त्रऽनुभागं घातयति, न तु शुभानां; यतो गुणघातिनां दण्डो नाऽदोषाणाम् । यदि च प्रतिबद्धसामर्थ्यमप्यसातादिवेदनीयं स्वकार्यकारि स्यात्तर्हि दण्डकवाटप्रतरादिविधानं भगवतो व्यर्थम् । तद्धि यदा न्यूनमायुर्वेदनीयादिकमधिकस्थितिकं भवति तदाऽनेन कर्मणां समस्थित्यर्थं विधीयते । न चाधिकस्थितिकत्वेन फलदानसमर्थं कर्मोपायशतेनाप्यन्यथा कर्त्तुं शक्यमिति न कश्चिन्मुक्तः स्यात् । अथ तपोमाहात्म्यान्निर्जीर्णमधिकस्थितिकत्वेन फलदानासमर्थमायुःकर्म समानं क्रियते तथा वेद्यमपि क्रियतामविशेषात् । एतेनेदमप्यपास्तं–यदि वेदनीयमफलं, तत्र तन्नास्त्येव ज्ञानावरणादिवत् । तथा च कर्मपञ्चकस्याभावस्तत्र प्राप्नोतीति । कथम् ? यद्यायुरधिकानि वेद्यादीनि स्वफलदानसमर्थानि तर्हि

१ इति चेन ॥ २ केवलिगुणस्थानान्तानाम् ॥ ३ उदितस्य कर्मण स्वकार्यकारित्वाभावप्रकारेण ॥ ४ दुष्टनिग्रहशिष्टपालनकारिणा ॥ ५ शुभाशुभकर्म ॥ ६ शक्तिम् ॥ ७ शुक्लध्यानतपोमाहात्म्येन भगवता ॥ ८ फलदानासमर्थम् ॥ ९ अघातिकर्मलस्य ॥ १० फलदानासमर्थम् ॥ ११ कथमपास्तमित्युच्यते ॥

मुक्त्यभावः । नो चेन्न[1] तेषां[2] कर्मत्वमिति[3] तदपनयनाय योगिनो लोकपूरणादिप्रयासो व्यर्थः । अनुष्ठानविशेषेणापहृतसामर्थ्यानां नामवस्थानं[4] वेद्येपि समानम् । न च कारणमस्तीत्येतावतैव कार्योत्पत्तिः । अन्यथेन्द्रियादिकार्यस्याप्यनुपङ्गाद्भगवतो मतिज्ञानस्य रागादीनां च प्रसङ्गः । अथावरणक्षयोपशमस्य मोहनीयकर्मणश्च सहकारिणो विरहान्नेन्द्रियादि स्वकार्ये व्याप्रियते । अत एव वेदनीयमपि न व्याप्रियेत । न ह्यत्यन्तमात्मनि परत्र वा विरतव्यामोहस्तदर्थं किञ्चिदादातुं हातुं वा प्रवर्त्तते । प्रयोगः । यो यत्रात्यन्तं व्यावृत्तव्यामोहः स तदर्थं किञ्चिदादातुं हातुं वा न प्रवर्त्तते । यथा व्यावृत्तव्यामोहा माता पुत्रे । व्यावृत्तात्यन्तव्यामोहश्च भगवान् । ततः सोपि भोजनमादातुं क्षुदादिकं वा हातुं न प्रवर्त्तते । प्रवृत्तौ वा मोहवत्त्वप्रसङ्गः । तथा हि । यस्तदादातुं हातुं वा प्रवर्त्तते स मोहवान् यथाऽस्मदादिस्तथा चायं श्वेतपटाभिमतो जिन इति । तथा च कुतोऽस्याप्तता रथ्यापुरुषवत् ? न चेयं बुभुक्षा मोहनीयानपेक्षस्य वेदनीयस्यैव कार्यं येनात्यन्तव्यावृत्तव्यामोहेप्यस्याः सम्भवः । भोक्तुमिच्छा हि बुभुक्षा । सा कथं वेदनीयस्यैव कार्यम् ? इतरथा योन्यादिषु रन्तुमिच्छा रिरंसा तत्कार्यं स्यात् । तथा च कवलाहारवत् स्यादावपि तत्प्रवृत्तिप्रसङ्गान्नेश्वरादस्य विशेषः । यथा च रिरंसा प्रतिपक्षभावनातो निवर्त्तते तथा बुभुक्षापि । प्रयोगः । भोजनाकाङ्क्षा प्रतिपक्षभावनातो निवर्त्तते–आकाङ्क्षात्वात् स्त्र्याद्याकाङ्क्षावत् । नन्वस्तु तद्भावनाकाले तन्निवृत्तिः, पुनस्तदभावे प्रवृत्तिरित्येतत्स्त्र्याद्याकाङ्क्षायामपि समानम् । यथा चास्याश्चेतसः प्रतिपक्षभावनामयत्वादत्यन्तनिवृत्तिस्तथा प्रकृताकाङ्क्षाया अपि । अथाकाङ्क्षारूपा क्षुन्न भवति । तेन वीतमोहेप्यस्याः सम्भवस्तदप्ययुक्तमनाकाङ्क्षारूपत्वेप्यस्या दुःखरूपतयाऽनन्तसुखे भगवत्यसम्भवात् । तथा हि । यत्र यद्विरोधि बलवदस्ति न तत्राभ्युदितकारणमपि तद्भवति । यथाऽत्युष्णप्रदेशे शीतम् । अस्ति च क्षुद्दुःखविरोधि बलवत् केवलिन्यनन्तसुखम् । तथा यत्[11]कार्य[12]विरोध्य[13]निवर्त्त्य[14] यत्रास्ति तत्र तद[15]विकलमपि स्वकार्यं न करोति । यथा श्लेष्मादिविरुद्धानिवर्त्यपित्तविकाराक्रान्ते[16] न दध्यादि[17] श्लेष्मादि करोति । वेद्यफलविरुद्धाऽनिवर्त्य[18]सुखं च भगवतीति । अस्तु वा वेद्यं[19] तत्र बुभुक्षाफलप्रदायि । तथापि बुभुक्षातः समवसरणस्थित एवासौ भुङ्क्ते चर्यामार्गेण वा गत्वा ? प्रथमपक्षे मार्गस्तेन[20] नाशितः स्यात् । कथं च बुभुक्षोदयानन्तरमाहारासम्पत्तौ ग्लानस्य[21] यथावद्बोधहीनस्य मार्गोपदेशो घटेत ? अथ तदुदयानन्तरं देवास्तत्राहारं सम्पादयन्ति न; अत्र[22] प्रमाणाभावात् । आगम इति चेन्नोभयप्रसिद्धस्यास्याप्यभावात् । स्वप्रसिद्धस्य[23] भावेपि नातस्तत्सिद्धिः–भुक्त्युपसर्गाभाव इत्यादेरपि प्रमाणभूतागमस्य[24] भावात् । अथ चर्यामार्गेण गत्वासौ भुङ्क्ते । तत्रापि किं गृहं गृहं गच्छत्येकस्मिन्नेव वा गृहे भिक्षालाभं ज्ञात्वा प्रवर्त्तते ? तत्राद्यपक्षे भिक्षार्थं

---

१ फलदानसमर्थानि न भवन्तीति चेत् ॥ २ तर्हीत्यध्याह्रियते ॥ ३ इति सत्तानामभावेन परस्यानिष्टापादनम् ॥ ४ नामगोत्रविशेषाणाम् ॥ ५ कर्मत्वेन ॥ ६ आदिना त्रिवेदम् ॥ ७ मतिज्ञानस्य रागादेश्च ॥ ८ इच्छा हि लोभभेदत्वेन मोहनीयस्य कार्यम् ॥ ९ नरस्य ॥ १० क्षुदादिदुःखं वमि ॥ ११ यस्य वेदनीयस्य ॥ १२ कार्ये क्षुत् ॥ १३ अनन्तसुखम् ॥ १४ न केनापि निराकर्तुं शक्यम् ॥ १५ वेदनीयम् ॥ १६ (नरे) ॥ १७ श्लेष्मादिलक्षणस्य कार्यस्य करणे अविकलमपि ॥ १८ अनन्तसुखम् ॥ १९ वेदनीयम् ॥ २० श्वेतपटस्य ॥ २१ भगवत ॥ २२ अर्थे ॥ २३ श्वेतपटमते प्रसिद्धस्यागमस्य ॥ २४ जैनागमस्य ॥

गृहं गृहं पर्यटतो जिनस्याज्ञानित्वप्रसङ्गः । द्वितीयपक्षे तु भिक्षाशुद्धिस्तस्य न स्यात् । कथं चासौ मत्स्यादीन् व्याधलुब्धकप्रभृतिभिः सर्वत्र सर्वदा व्याहन्यमाना-
न्प्राणिनस्तेषां पिशितानि च तथाऽशुच्यादींश्चार्थान् साक्षात्कुर्वन्नाहारं गृह्णीयात् ? अन्यथा निष्करुणः स्यात् । जीवानां हि वधं विष्ठादिकं च साक्षात्कुर्वन्तो व्रतशी-
लविहीना अपि न भुञ्जते । भगवांस्तु व्रतादिसम्पन्नस्तत्साक्षात्कुर्वन् कथं भुञ्जीत? अन्यथा तेभ्योप्यसौ हीनसत्त्वः स्यात् । यदप्युच्यते-यत्किञ्चिद्दृष्टं शुद्धमशुद्धं
तत्स्मरन्तो यथास्मदादयो भोजनं कुर्वन्ति तथा केवली साक्षात्कुर्वन्निति तदप्युक्तिमात्रम् । न ह्यस्मदादीनां परमचारित्रपदप्राप्तेनाशेषज्ञेन भगवता साम्यमस्ति ।
अस्मदादयोपि हि यथाकथञ्चित्किञ्चिदशुद्धं वस्तु दृष्टं स्मरन्तो भोजनपरित्यागेऽसमर्थास्तद्भुञ्जते तदा तद्दोषविशुद्ध्यर्थं गुरुवचनादात्मानं निन्दन्तः प्रायश्चित्तं
कुर्वन्ति । ये तु तत्त्यागे समर्थाः पिण्डविशुद्धावुद्यतमनसो निर्वेदस्य परां काष्ठामापन्नास्त्यक्तशरीरापेक्षा जितजिह्वा अन्तरायविषये निपुणमतयस्ते स्मरन्तोपि न
भुञ्जते । किञ्चासौ भोजनं कुर्वाणः किमेकाकी करोति शिष्यैर्वा परिवृतः ? यदैकाकी पश्चाल्लग्नान् शिष्यान्विनिवार्य श्रावकानां गृहे गत्वा भुङ्क्ते तर्हि दीनः स्यात् ।
अथ तैः परिवृतस्तर्हि सावद्यप्रसङ्गः । किञ्चासौ भुक्त्वा प्रतिक्रमणादिकं करोति वा न वा ? करोति चेदवश्यं दोषवान् सम्भाव्यते-तत्करणान्यथानुपपत्तेः । न
करोति चेत्तर्हि भुजिक्रियातः समुत्पन्नं दोषं कथं निराकुर्यात् ? आहारकथामात्रेणापि ह्यप्रमत्तोपि सन् साधुः प्रमत्तो भवति, नार्हन्भुञ्जानोपीति श्रद्धामात्रम् ।
प्रमत्तत्वे चास्य श्रेणितः पतितत्वान्न केवलभाक्त्वम् । किमर्थं चासौ भुङ्क्ते ? शरीरोपचयार्थं ज्ञानध्यानसंयमसंसिद्ध्यर्थं वा क्षुद्वेदनाप्रतीकारार्थं वा प्राणत्राणार्थं वा ?
न तावच्छरीरोपचयार्थं-लाभान्तरायप्रक्षयात्प्रतिसमयं विशिष्टपरमाणुलाभतस्तत्सिद्धेः । तदर्थं तद्ग्रहणे चासौ कथं निर्ग्रन्थः स्यात् प्राकृतपुरुषवत् ? नापि ज्ञानादि-
सिद्ध्यर्थं यतो ज्ञानं तस्याखिलार्थविषयमक्षयस्वरूपं संयमश्च यथाख्यातः सर्वदा विद्यते।ध्यानं तु परमार्थतो नास्ति निर्मनस्कत्वाद्योगनिरोधत्वेनोपचारतस्तत्रास्य सम्भ-
वात् । नापि प्राणत्राणार्थमपमृत्युरहितत्वात् । नापि क्षुद्वेदनाप्रतीकारार्थमनन्तसुखवीर्ये भगवत्यस्याः सम्भवाभावस्योक्तत्वात् । ननु भगवतो भोजनाभावे कथमेकादश
जिने परीषहा इत्यागमविरोधो न स्यात् ? तदसत्तेषां तत्रोपचारेणैव प्रतिपादनात् । उपचारनिमित्तं च वेदनीयसद्भावमात्रम् । परमार्थतस्तु तत्र तेषां सद्भावे क्षुदादि-
परीषहसद्भावाद्बुभुक्षावद्रोगवधतृणस्पर्शपरीषहसद्भावान्महद्दुःखं स्यात् । तथा च दुःखितत्वान्नासौ जिनोऽस्मदादिवत् । तथा भोजनं रसनेन शीतादिकं च स्पर्शनादि-
नेन्द्रियेण यद्यसावनुभवेत्तर्हि भगवतो मतिज्ञानानुषङ्गः । अथ केवलज्ञानेन; तत्रापि सर्वं भोजनादिकं परशरीरस्थमप्यस्यानुपज्यते । न चात्मशरीरस्थमेवास्य तन्नान्यदि-
त्यभिधातव्यं-भगवतो वीतमोहस्य स्वपरशरीरमतिविभागाभावात् । यच्चोपचारतोप्यस्यैकादश परीषहा न सम्भाव्यन्ते तत्र तन्निषेधपरत्वात् सूत्रस्य—एकेनाधिका

---

१ केनचित्प्रकारेण मार्गादिगमनलक्षणेन ॥ २ यतय ॥ ३ पृष्ठे ॥ ४ भगवतो भुक्तिक्रियातो दोष एव न सम्पद्यते इत्युक्ते आह ॥ ५ प्रमत्तो न भवतीति यावत् ॥ ६ प्राकृतो नीच ॥ ७ आयुषोऽपवर्तरहितत्वात् ॥ ८ जिने ॥ ९ द्रव्यरूपेण ॥ १० भोजन रसनेनानुभवेद्वा केवलज्ञानेन वेति विकल्प्य क्रमेण दूषयन्नाह ॥ ११ तर्हि ॥ १२ केवलज्ञानेन तत्राप्यनुभवोस्तीति भाव ॥ १३ (एकादश जिने इति सूत्रस्य जिननिष्ठैकादशपरीषहाणा निषेधपरत्वात् ) ॥

न दश परीपहा जिने एकादश जिने, इति व्युत्पत्तेः । प्रयोगः । भगवान् क्षुदादिपरीपहरहितोऽनन्तसुखत्वात्सिद्धवत् । किञ्च भोजनं कुर्वाणो भगवान्किल लोकैर्नावलोक्यते चक्षुपेत्यभिधीयते भवता । तत्रादर्शनेऽयुक्तसेवित्वादेकान्तमाश्रित्य भुङ्क्ते इति कारणं बहलान्धकारस्थितभोजनं वा विद्याविशेषेण स्वस्य तिरोधानं वा ? तत्राद्यपक्षे पारदारिकवद्दीनवद्वा[1][2] दोपसम्भावनाप्रसङ्गः । अन्धकारस्तु न सम्भाव्यते तद्देहदीप्त्या तस्य निहतत्वात् । विद्याविशेषोपयोगे[3] चास्य निर्ग्रन्थत्वाभावः । कथं चाहश्याय तस्मै दानं दातृभिर्दीयते ? अथातिशयविशेषः कश्चित्तस्य, येन भुञ्जानो नावलोक्यते तर्हि भोजनाभावलक्षण एवास्यातिशयोस्तु । किं मिथ्याभिनिवेशेन ? ततो जीवन्मुक्तस्यात्मनोऽनन्तचतुष्टयस्वभावत्वमिच्छता कवलाहाररहितत्वमेवैष्टव्यमित्यलमतिप्रसङ्गेन[4] ।

ननु चानन्तचतुष्टयस्वरूपलाभो मोक्ष इत्ययुक्तं-बुद्ध्यादिविशेषगुणोच्छेदरूपत्वात्तस्य । तदुच्छेदे च प्रमाणं 'नवानामात्मविशेषगुणानां[5] सन्तानो[6]ऽत्यन्तमुच्छिद्यते[7]-सन्तानत्वात्प्रदीपसन्तानवत्' । न चायमसिद्धो हेतुः-पक्षे प्रवर्त्तमानत्वात् । नापि विरुद्धः-सपक्षे प्रदीपादौ सत्त्वात् । नाप्यनैकान्तिकः-पक्षसपक्षवद्विपक्षे परमाण्वादावप्रवृत्तेः । नापि कालात्ययापदिष्टो विपरीतार्थोपस्थापकयोः प्रत्यक्षागमयोरसम्भवात् । नापि सत्प्रतिपक्षः[9] प्रतिपक्षसाधनाभावात् । ननु सन्तानोच्छेदरूपेपि मोक्षे हेतुर्वाच्यो[8] निर्हेतुकविनाशानभ्युपगमादित्यप्यचोद्यं-तत्त्वज्ञानस्य विपर्ययज्ञानव्यवच्छेदक्रमेण निःश्रेयसहेतुत्वोपपत्तेः । दृष्टं च सम्यग्ज्ञानस्य मिथ्याज्ञानोच्छेदे शुक्तिकादौ सामर्थ्यम् । ननु चातत्त्वज्ञानस्यापि[12] तत्त्वज्ञानोच्छेदे[13] सामर्थ्यं दृश्यते-ज्ञानस्य ज्ञानान्तरविरोधित्वेन मिथ्याज्ञानोत्पत्तौ सम्यग्ज्ञानोच्छेदप्रतीतेरित्यप्ययुक्तं-यतो नानयोरुच्छेदमात्रमभिप्रेतम् । किं तर्हि ? सन्तानोच्छेदः[14] । यथा च सम्यग्ज्ञानान्मिथ्याज्ञानसन्तानोच्छेदो[15] नैवं मिथ्याज्ञानात्सम्यग्ज्ञानसन्तानस्य[16]-अस्य सत्यार्थत्वेन वलीयस्त्वात् । निवृत्ते च मिथ्याज्ञाने तन्मूला रागादयो न सम्भवन्ति कारणाभावे कार्यानुत्पादात् । रागाद्यभावे तत्कार्या मनोवाक्कायप्रवृत्तिर्व्यावर्त्तते । तदभावे च धर्माधर्मयोरनुत्पत्तिः । आरब्धशरीरेन्द्रियविषयकार्ययोस्तु[17] सुखदुःखफलोपभोगात्प्रक्षयः । अनारब्धतत्कार्ययोरप्यवस्थितयोस्तत्फलोपभोगादेव प्रक्षयः । तथा चागमः-नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति । अनुमानं च । पूर्वकर्माण्युपभोगादेव क्षीयन्ते कर्मत्वात्प्रारब्धशरीरकर्मवत्[18] । न चोपभोगात्प्रक्षये कर्मान्तरस्यावश्यं

---

१ अन्ये ॥ २ मा दृष्ट्वा कश्चिद्भोजन याचिष्यत इति दीनचित्तस्य दोषो दीनचित्तस्य ॥ ३ व्यापारे ॥ ४ प्रपञ्चेन ॥ ५ बुद्धिसुखदु खेच्छाद्वेपप्रयत्नधर्माधर्मसंस्कारलक्षणानाम् ॥ ६ धर्माधर्माभ्या बुद्धिरुत्पद्यते बुद्धे संस्कार संस्कारादिच्छाद्वेषौ इच्छाद्वेषाभ्या प्रयत्नस्तस्मात्सुखदु खे भवत इति नवाना गुणाना सन्तान ॥ ७ सर्वथा ॥ ८ नित्ये ॥ ९ प्रतिपक्षसाधको हेतु सत्प्रतिपक्ष ॥ १० मिथ्या ॥ ११ सम्यग्ज्ञानान्मिथ्याज्ञानाभावस्तदभावाद्रागाद्यभावस्तदभावाच्च मनोवाक्कायप्रवृत्तिरूपप्रयत्नाभावस्तदभावाद्धर्माधर्मयोरभाव इति ॥ १२ द्विचन्द्रादिज्ञानस्य ॥ १३ एकचन्द्रज्ञानस्य ॥ १४ आमूलत सन्ततिच्छेदे एवाभिप्राय ॥ १५ स्रग्वनितादिक सुखहेतुरिति अहिकण्टकादिक दु खहेतुरिति च सम्यग्ज्ञानात् ॥ १६ स्रग्वनितादिक दु खहेतुरिति ज्ञानात् ॥ १७ धर्माधर्मयो (वस ) ॥ १८ प्रारब्ध शरीर येन तच्च तत्कर्म च ॥

भावात्संसारानुच्छेदः—समाधिवलादुत्पन्नतत्त्वज्ञानस्यावगतकर्मसामर्थ्योत्पादितयुगपदशेषशरीरद्वारावाप्ताशेषभोगस्योपात्तकर्मप्रक्षयात्, भाविकर्मोत्पत्तिनिमित्तमिथ्याज्ञानजनितानुसन्धानविकलत्वाच्च संसारोच्छेदोपपत्तेः । अनुसन्धानं हि रागद्वेषौ—अनुसन्धीयेते गतं चित्तमाभ्यामिति व्युत्पत्तेः । न च मिथ्याज्ञानाभावेभिलापस्यैवासम्भवाद्भोगानुपपत्तिः—तदुपभोगं विना हि कर्मणां प्रक्षयानुपपत्तेः—तत्त्वज्ञानिनोपि कर्मक्षयार्थितया प्रवृत्तेर्वैद्योपदेशेनातुरवदौपधाचरणे । यथैव ह्यातुरस्यानभिलषितेप्यौपधाचरणे व्याधिप्रक्षयार्थं प्रवृत्तिः—तद्व्यतिरेकेण तत्प्रक्षयानुपपत्तेस्तथात्रापि । ननु तत्त्वज्ञानिनां तत्त्वज्ञानादेव सञ्चितकर्मप्रक्षय इत्यप्यागमोस्ति 'यथैधांसि समिद्धोग्निर्भस्मसात्कुरुते क्षणात् । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति । तथा च विरुद्धार्थत्वादुभयोरेकत्रार्थे कथं प्रामाण्यमित्ययुक्तं—तत्त्वज्ञानस्य साक्षात्तद्विनाशे व्यापाराभावात् । तद्धि कर्मसामर्थ्यावगमतोऽशेषशरीरोत्पत्तिद्वारेणोपभोगात्कर्मणा विनाशे व्याप्रियते इत्यग्निरिवोपचर्यते ज्ञानमित्यागमव्याख्यानादविरोधः । न चैतद्वाच्यं—तत्त्वज्ञानिनां कर्मविनाशस्तत्त्वज्ञानादितरेषां तूपभोगादिति—ज्ञानेन कर्मविनाशे प्रसिद्धोदाहरणाभावात्, फलोपभोगात्तु तत्प्रक्षये तत्सद्भावात् । अन्ये तु मिथ्याज्ञानजनितसंस्कारस्य सहकारिणोऽभावाद्विद्यमानान्यपि कर्माणि न जन्मान्तरे शरीराद्यारम्भकाणीति मन्यन्ते तेषामनुत्पादितकार्यस्यादृष्टस्याप्रक्षयान्नित्यत्वप्रसङ्गः । अनागतयोर्धर्माधर्मयोरुत्पत्तिप्रतिषेधे तत्त्वज्ञानिनो नित्यनैमित्तिकानुष्ठानं किमर्थमिति चेत् प्रत्यवायपरिहारार्थम् । न च मिथ्याज्ञानाभावे दुष्कर्मणोऽभावात् कस्य परिहारार्थं तदित्यभिधातव्यं—यतो मिथ्याज्ञानाभावे निषिद्धाचरणनिमित्तस्यैव प्रत्यवायस्याभावो, न विहितानुष्ठाननिमित्तस्य—अकुर्वन्विहितं कर्म प्रत्यवायेन लिप्यते इत्यागमात् । ततस्तदनुष्ठानं तत्परिहारार्थं युक्तम् । तदुक्तं "नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया । मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः ।१। नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ।२। अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः । काम्ये निषिद्धे च परं प्रवृत्तिप्रतिषेधतः ।३।" स्वर्गकाम इत्याद्यागमजनितकामेन यागाभिलापेण निर्वर्त्यं हि काम्यमग्निष्टोमादि । कैवल्यं तु सकलविशेषगुणोच्छेदविशिष्टात्मस्वरूपं निर्वाणम् । न च विपर्ययज्ञानप्रध्वंसादिक्रमेण तद्विशिष्टात्मस्वरूपनिर्वाणस्य तत्त्वज्ञानकार्यत्वादनित्यत्वं वाच्यं—यतो विशेषगुणोच्छेदस्यानित्यत्वमापाद्यते तद्विशिष्टात्मनो वा । न तावद्विशेषगुणोच्छेदस्य—अस्य प्रध्वं-

१ ध्यान ॥ २ नु ॥ ३ पूर्वोपात्त ॥ ४ सम्बध्यते ॥ ५ अनेन पूर्वं ममेदमिव दु न्यादिकं दत्तमिति ॥ ६ बुद्धि ॥ ७ तत्त्वज्ञानिन पुरुषस्य ॥ ८ कर्मफलस्य ॥ ९ कर्मफलोपभोगे ॥ १० उक्तमेव समर्थयति ॥ ११ कर्मफलोपभोगे तत्त्वज्ञानिन ॥ १२ दीप्त ॥ १३ तथाप्यागमसद्भावे च ॥ १४ आगमयो ॥ १५ मोक्षोपायलक्षणे ॥ १६ अग्रे वक्ष्यमाणम् ॥ १७ अतत्त्वज्ञानिनाम् ॥ १८ कुत ? ॥ १९ प्रारब्धशरीरकर्मवदिति ॥ २० तत्त्वज्ञाने समुत्पन्ने सतीति शेष ॥२१ भावनारूपस्य ॥२२ इन्द्रियविषयादेश्च ॥२३ नैयायिकविशेषा ॥२४ धर्माधर्मस्य ॥२५ ततोऽनुभवनप्रकारेणैव मोक्षोऽभ्युपगन्तव्य ॥२६ सति । प्रागुक्तन्यायेन ॥२७ नरस्य ॥२८ दुष्कर्म ॥ २९ जैनादिना ॥ ३० विप्रवधादि ॥ ३१ नित्यनैमित्तिकादे ॥ ३२ कर्मणां ॥ ३३ काम्य याग ॥ ३४ निषिद्ध विप्रवधादि ॥ ३५ कर्मणो ॥ ३६ अनुष्ठाने ॥ ३७ मनुष्य ॥ ३८ विस्तारयेत् ॥ ३९ उत्कृष्टविज्ञान ॥ ४० मोक्षम ॥ ४१ ( मूलपाठस्तत्र 'केवल' इति । अनेन त्रिमात्रिकाक्षरेण छन्दोभङ्ग स्यादिति 'पर' शब्दो नियोजित । केवलशब्दस्य पर्यायोऽर्थं टिप्पण्या लिखितश्च ) ॥ ४२ निष्पाद्यमनुष्ठानम् ॥ ४३ मिथ्याज्ञान ॥

संभावरूपत्वात् । कार्यवस्तुनो ह्यनित्यत्वं प्रसिद्धम् । तद्विशिष्टात्मनश्च वस्तुत्वेपि कार्यत्वाभावान्नानित्यत्वम् । न च बुद्ध्यादिविनाशे गुणिनस्तथाभावो युक्तस्तयोरत्यन्तभेदात् । तत्तादात्म्ये त्वयं दोषः स्यादेव ।

अथ मोक्षावस्थायां चैतन्यस्याप्युच्छेदान्न कृतबुद्धयस्तत्र प्रवर्त्तन्ते इत्यानन्दरूपो मोक्षोऽभ्युपगन्तव्यः—आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते इत्यागमात् । आत्मा सुखस्वभावोऽत्यन्तप्रियबुद्धिविषयत्वादनन्यपरतयोपादीयमानत्वाच्च । यद्यदेवंविधं तत्तत्सुखस्वभावं यथा वैषयिकं सुखम् । तथा चात्मा एवंविधस्तस्मात्सुखस्वभाव इत्यनुमानाच्चास्यानन्दस्वभावताप्रतीतिरित्यप्यसाम्प्रतं—यतस्तत्सुखं नित्यमनित्यं वा ? न तावदनित्यं तत्स्वभावतयात्मनोप्यनित्यत्वप्रसङ्गात् । नित्यं चेत्तत्संवेदनमपि नित्यमनित्यं वा ? यदि नित्यं मुक्तेतरावस्थयोरविशेषप्रसङ्गस्तत्सुखसंवेदनयोर्नित्यत्वेनोभयत्र सत्त्वाविशेषात् । स्मरणानुपपत्तिश्चानुभवस्यैवावस्थानात् । संस्कारानुपपत्तिश्चानुभवस्य निरतिशयत्वात् । करणजन्यसुखेन चास्य संसारावस्थायां साहचर्यग्रहणप्रसङ्गात् सुखद्वयोपलम्भः सदा स्यात् । अथ धर्माधर्मफलेन सुखादिना शरीरादिना वा नित्यसुखसंवेदनस्य प्रतिबद्धत्वेनानुभवाभावान्न मुक्तेतरावस्थयोरविशेषः सदा सुखद्वयोपलम्भो वा । तदयुक्तं—शरीरादेः सुखार्थत्वेन तत्प्रतिबन्धकत्वायोगात् । न हि यद्यदर्थं तत्तस्यैव प्रतिबन्धकं युक्तम् । नापि वैषयिकसुखाद्यनुभवेन तत्प्रतिबन्धः । तेन हि नित्यसुखस्य तदनुभवस्य वा प्रतिबन्धोऽनुत्पत्तिलक्षणो विनाशलक्षणो वा न युक्तः—द्वयोरपि नित्यत्वाभ्युपगमात् । न च संसारावस्थायां बाह्यविषयव्यासङ्गाद्विद्यमानस्याप्यनुभवस्यासंवेदनं, तदभावात्तु मोक्षावस्थायां संवेदनमित्यभिधातव्यं—तदनुभवस्य नित्यत्वेन व्यासङ्गानुपपत्तेः । आत्मनो हि व्यासङ्गो रूपादौ विषये ज्ञानोत्पत्तौ विषयान्तरे ज्ञानानुत्पत्तिरिन्द्रियस्याप्येकस्मिन्विषये ज्ञानजनकत्वेन प्रवृत्तस्य विषयान्तरे ज्ञानाजनकत्वम् । स चात्रानुपपन्नः—सुखवत्तज्ज्ञानस्यापि सदा सत्त्वात् । शरीरादेस्तु प्रतिबन्धकत्वे तदपहन्तुर्हिंसाफलं न स्यात्प्रतिबन्धकविघातकारकस्योपकारकत्वेन लोके प्रतीतेः । अथानित्यं तत्संवेदनं तदोत्पत्ति-

---

१ निस्स्वरूपत्वात् ॥ २ गुणगुणिनो ॥ ३ गुणगुणिनो ॥ ४ गुणविनाशे गुणिविनाशलक्षण ॥ ५ वेदान्ती भास्करीय ॥ ६ उद्वे ॥ ७ विनाशात् ॥ ८ प्रेक्षावन्त ॥ ९ वैशेपिकेण ॥ १० आत्मन ॥ ११ व्यक्ती क्रियते ॥ १२ ससारिमुक्तात्मनो साधारणमनुमानम् ॥ १३ पुत्रादिशरीरेण व्यभिचारपरिहारार्थमत्यन्तपदोपादानम् ॥ १४ आत्मन ॥ १५ वनिताशरीरेण व्यभिचारपरिहारार्थमनन्यपरतयेत्युक्तम् ॥ १६ स्वप्रधानत्वेनेत्यर्थ ॥ १७ अनन्यपरतयोपादीयमानत्वादिति कोर्थ ? आत्मन आत्मनि लीनतया स्वस्वरूपस्योपादीयमानत्व आख्यमाणत्व यस्यात्मन इति ॥ १८ वैषयिकसुखप्रकारेण ॥ १९—२० ससारावस्थाया मुक्तावस्थाया च ॥ २१ अस्ति च ससारावस्थाया सुखस्मरणम् ॥ २२ प्रत्यक्षस्य ॥ २३ प्रत्यक्षविशेषो धारणाज्ञान सस्कार ॥ २४ अस्ति च सस्कारस्योत्पत्ति ससारावस्थायाम् ॥ २५ भावरूपस्य ॥ २६ नित्यसुखस्य ॥ २७ नित्यानित्यसुखद्वयस्य ॥ २८ यदा यदा वैषयिक सुखमुत्पद्यते तदा तदा द्वयोरुपलम्भ इत्यर्थ ॥ २९ कार्येण ॥ ३० दु खादिना च ॥ ३१ इन्द्रियादिना च ॥ ३२ प्रतिहतत्वेन ॥ ३३ अत्रार्थ प्रयोजनम् ॥ ३४ भोगायतन शरीरमिति वचनात् ॥ ३५ प्रतिपक्षम् ॥ ३६ वनितादिवत ॥ ३७ नित्यसुखसवेदनयो ॥ ३८ वेदान्तिना ॥ ३९ नित्यसुखानुभवस्य ॥ ४० वेदान्तिना ॥ ४१ आत्मन इन्द्रियस्य वा ॥ ४२ तत्समये ॥ ४३ व्यासङ्ग ॥ ४४ रूपे ॥ ४५ रसे ॥ ४६ नित्यसुखे ॥ ४७ सुखतत्सवेदनयो ॥ ४८ नरस्य ॥

कारणं वाच्यम् । अथ योगजधर्मापेक्षः[1] पुरुषान्तःकरणसंयोगो[2]ऽसमवायिकारणम्[3] । ननु[4] योगजधर्मस्य[5] मुक्तावसम्भवात् कथमसौ तत्संयोगेनापेक्ष्येत ? यतस्तत्र ततस्त[6]दुत्पत्तिः स्यात् । अथाद्यं[7] योगजधर्मापेक्षान्तःकरणसंयोगो विज्ञानं जनयति तच्चापेक्ष्योत्तरोत्तरं[8] ज्ञानम् । तदप्ययुक्तम् । न हि शरीरसम्बन्धानपेक्षं[9] विज्ञानमेवान्तःकरणसंयोगस्य ज्ञानोत्पत्तौ सहकारिकारणं दृष्टम् । न च दृष्टविपरीतं शक्यं कल्पयितुमतिप्रसङ्गात्[10] । आकस्मिकं तु कार्यं न भवत्येवाऽहेतोः–सर्वत्र सर्वदा भावप्रसङ्गात् । किञ्च यथा मुक्तावस्थायामनित्यसुखमतिक्रम्य नित्यं परिकल्प्यते[11] तथा नित्यत्वधर्माधिकरणं शरीरादिकमपि[12] परिकल्पनीयम् । कार्यत्वात् तस्य कथं नित्यत्वधर्माधिकरणत्वं–दृष्टविरोधादप्रमाणकत्वाच्चेत्यन्यत्रापि[13] समानम् । न खलु नित्यसुखसाधकत्वेन प्रत्यक्षानुमानागमानां मध्ये किञ्चित्प्रवर्त्तते अस्मदादीन्द्रियजप्रत्यक्षस्यात्र व्यापारानुपलम्भात् । योगिप्रत्यक्षं[14] त्वेवं प्रवर्त्ततेऽन्यथा[15] वेत्यद्यापि विवादपदापन्नम् । यच्चात्मा सुखस्वभाव इत्यनुमानं तदपि न नित्यसुखस्वभावतासाधकं–सुखस्वभावतामात्रस्यैवातः प्रसिद्धेः । किञ्च सुखस्वभावत्वं सुखत्वजाति[16]सम्बन्धित्वम् । तन्नात्मनि सम्भाव्यते[17]–गुणे[18] एवास्योपलम्भात् । न ह्येका काचिज्जातिर्द्रव्य[19]गुणयोः साधारणोपलभ्यते । अथ सुखाधि[20]करणत्वम् । तन्न[21]–अस्य नित्यानित्यविकल्पानुपपत्तेः[22] । तथा[23] सुखत्वस्य सुखस्य वाधिकरण[24]तायां तज्ज्ञानस्यापि नित्यानित्यविकल्पः समानः । साधनं चात्यन्तप्रियबुद्धिविषयत्वमनन्यपरतयोपादीयमानत्वं चानैकान्तिकत्वादसाधनं—दुःखाभावे[25]पि भावात्[26] । अनन्यपरतयोपादीयमानत्वं चासिद्धम् । न ह्यात्माऽन्यार्थं नोपादीयते–सुखार्थ[27]मस्योपादानात् । अत्यन्तप्रियबुद्धिविषयत्वमप्यसिद्धं–दुःखिताया[28]मप्रियबुद्धेरपि भावात् । आनन्दं ब्रह्मणो रूपमित्याद्यागमो नित्यसुखसद्भावावेदक इत्यप्यसमीचीनं–तस्यैतदर्थत्वासिद्धेः । आनन्दशब्दो ह्यात्यन्तिकदुःखाभावे प्रयुक्तत्वाद्गौणः । दृष्टश्च[29] दुःखाभावे सुखशब्दप्रयोगः । यथा भाराक्रान्तस्य ज्वरादिसन्तप्तस्य वा तदपाये । किञ्चात्मस्वरूपात्तन्नित्यसुखमव्यतिरिक्तं तद्व्यतिरिक्तं वा ? प्रथमपक्षे आत्मस्वरूपवत् सर्वदा सुखसंवित्तिप्रसङ्गाद्बद्ध[30]मुक्तयोरविशेषप्रसङ्गः । अनाद्यऽविद्याच्छादितत्वान्न स्वप्रकाशानन्दसंवित्तिः संसारिण इत्यप्यपेशलम् । आच्छाद्यते ह्यप्रकाशस्वरूपं वस्तु । यत्तु प्रकाशस्वरूपं तत्कथमन्येनाच्छाद्येत ? मेघादिना त्वादित्यादेराच्छादनं युक्तं–तस्यातोऽर्थान्तरत्वान्मूर्त्तस्य मूर्त्तेनाच्छादनापत्तेः । अविद्यायास्तु[31] सत्त्वान्यत्वाभ्या[32]मनिर्वचनीयतया तुच्छस्वभावत्वान्न स्वप्रकाशानन्दाच्छादकत्वम् । त-

१ वेदान्तिना ॥ २ मन ॥ ३ आत्मा तु समवायिकारणम् ॥ ४ नित्यसुखसवेदनस्य ॥ ५ वैशेषिक ॥ ६ नित्यसुखसवेदनस्य ॥ ७ नित्यसुखसवेदनम् ॥ ८ आत्मान्त करणसयोगो जनयति ॥ ९ किन्तु शरीरसम्बन्धापेक्ष सद्विज्ञान सहकारिकारण दृष्टम् ॥ १० सौगतादेरपि क्षणिकत्वादिसिद्धिप्रसङ्गात् ॥ ११ वेदान्तिना भवता ॥ १२ इन्द्रिय च ॥ १३ नित्यसुखे ॥ १४ नित्यसुखग्राहकत्वेन ॥ १५ नित्यसुखाग्राहकत्वेन ॥ १६ जाति =सामान्यम् ॥ १७ निश्चीयते ॥ १८ सुखलक्षणे ॥ १९ सुखाधिकरणत्वस्य सुखस्वभावत्वस्य ॥ २० अन्यलीनतया ॥ २१ वैशेषिक ॥ २२ नित्य चेन्मुक्तेतरावस्थाया अविशेषप्रसङ्ग इत्यादि दूषणम् । अनित्य चेदुत्पत्तिकारण वाच्यमित्यादि दूषणम् ॥ २३ तथा दूषणान्तरसमुच्चये ॥ २४ आत्मन ॥ २५ दु खाभावो हि त्यक्तभारस्यात्यन्तप्रियबुद्धिविषय अनन्यपरतयोपादीयमानश्च । न त्वसौ सुखस्वभावस्तस्य तुच्छरूपत्वात् ॥ २६ अभावस्य नि स्वरूपत्वान्नैयायिकादिमते ॥ २७ सुखलीनतयाऽह सुखीत्युल्लेखेन ॥ २८ अवस्थायाम् ॥ २९ आगमे ॥ ३० बद्ध ससारी ॥ ३१ ब्रह्मण सकाशात् ॥ ३२ विद्यमानत्वाविद्यमानत्वाभ्याम् ॥

ज्ञावः पक्षो युक्तः । द्वितीयपक्षोप्ययुक्तो नित्यसुखस्यात्मनोऽर्थान्तरस्य प्रत्यक्षादेः प्रतिपादकस्य प्रतिपिद्धत्वाद्बाधकस्य च प्रदर्शितत्वात् । तत्र परमानन्दाभिव्यक्तिर्मोक्षः । नापि विशुद्धज्ञानोत्पत्तिः—रागादिमतो विज्ञानात्तद्रहितस्यास्योत्पत्तेरयोगात् । यथैव हि बोधाद्बोधरूपता ज्ञानान्तरे तथा रागादेरपि स्यात्तादात्म्यात् । अन्यथा तादात्म्याभावः स्यात् । न च बोधादेव बोधरूपतेति प्रमाणमस्ति विलक्षणादपि कारणाद्विलक्षणकार्यस्योत्पत्तिदर्शनात् । बोधस्य च बोधान्तरहेतुत्वे पूर्वकालभावित्वं समानजातीयत्वमेकसन्तानत्वं वा न हेतुः—व्यभिचारात् । तथा हि । पूर्वकालभावित्वं तत्समानक्षणैः समानजातीयत्वं च सन्तानान्तरज्ञानैर्व्यभिचारि । तेषां हि पूर्वकालभावित्वे तत्समानजातीयत्वे च सत्यपि न विवक्षितज्ञानहेतुत्वम् । एकसन्तानत्वं चान्त्यज्ञानेन व्यभिचारि । अथ नेष्यत एवान्त्यज्ञानं—सर्वदाऽऽरम्भात् । तथा हि । मरणशरीरज्ञानमपि ज्ञानान्तरहेतुर्जाग्रदवस्थाज्ञानं च सुषुप्तावस्थाज्ञानस्येति । नन्वेवं मरणशरीरज्ञानस्यान्तराभवशरीरज्ञानहेतुत्वे गर्भशरीरज्ञानहेतुत्वे वा सन्तानान्तरेपि ज्ञानजनकत्वं किन्न स्यान्नियतहेतोरभावात् । अथेष्यत एवोपाध्यायज्ञानं शिष्यज्ञानस्य हेतुः । अन्यस्य कस्मान्न भवति? कर्मवासना नियामिका चेन्न—तस्या ज्ञानव्यतिरेकेणासम्भवात् । तत्तादात्म्ये हि विज्ञानं बोधरूपतया अविशिष्टं बोधाच्च बोधरूपतेत्यविशेषेण ज्ञानं विदध्यात् । सुषुप्तावस्थाज्ञानस्य जाग्रदवस्थाज्ञानं कारणमित्यप्यसम्भाव्यं सुषुप्तावस्थायां च ज्ञानाभ्युपगमे जाग्रदवस्थातो विशेषो न स्यादुभयत्रापि स्वसंविदितज्ञानसद्भावाविशेषात् । मिद्धेनाभिभूतत्वं विशेष इत्यप्यसत्तस्यापि तद्धर्मतया तादात्म्येनाभिभावकत्वायोगात् । तद्व्यतिरेके तु रूपवेदनादिपदार्थस्वरूपव्यतिरिक्तं तत्स्वरूपं निरूप्यताम् । अभिभवश्च यदि विनाशः, कथं तत्र ज्ञानस्य सत्त्वं विनाशस्य वा निर्हेतुकत्वम्? अथ तिरोभावो, न विज्ञानसत्त्वैव संवेदनमित्यभ्युपगमे तस्यानुपपत्तेः । अतः सुषुप्तावस्थायां विज्ञानासत्त्वेनान्त्यज्ञानसद्भावादेकसन्तानत्वं व्यभिचारीति । यच्चोच्यते । विशिष्ट-

१ सौगतमाशङ्क्य ॥ २ मोक्ष ॥ ३ पूर्वज्ञानात् ॥ ४ उत्तरज्ञाने ॥ ५ बोधस्य रागादिना ॥ ६ रागादिर्यदि न स्यात् ॥ ७ बीजादे ॥ ८ अङ्कुरादे ॥ ९ प्रथमस्य ॥ १० एकाऽरमलम् ॥ ११ उत्तरज्ञानजनकप्राक्तनबोधस्य ॥ १२ पुरुषान्तरबोधै पूर्वकालभाविभि ॥ १३ ज्ञानत्वेन समानजातीयत्वम् ॥ १४ पुरुषान्तरबोधै पूर्वकालभाविभि ॥ १५ पूर्वज्ञानस्य ॥ १६ विवक्षितमुत्तरम् ॥ १७ बौद्धाना मते योगिना मरणे चरमचित्तमुत्तरचित्त नोत्पादयतीति भाव ॥ १८ योगिचरमचित्तेन ॥ १९ मया ॥ २० पूर्वविज्ञानेन विज्ञानान्तरस्य ॥ २१ जननात् ॥ २२ गर्भशरीरज्ञानस्य ॥ २३ (जाग्रदवस्थाज्ञानवदिति सुष्ठुतरम्) ॥ २४ जैनमतमङ्गीकृत्य यौग प्रति सौगतेनोक्तम् ॥ २५ मध्यभवशरीरस्य कार्मणस्य ॥ २६ बौद्धेन ॥ २७ वैशेषिक ॥ २८ शिष्यात् ॥ २९ बौद्ध ॥ ३० वासना ज्ञानरूपैव ॥ ३१ अदृष्ट क्रिया च ॥ ३२ कथ नियामिका? मरणशरीरज्ञानादन्तराभवशरीरज्ञान गर्भशरीरज्ञान चोत्पद्यते उपाध्यायज्ञानाच्छिष्यज्ञान चेति ॥ ३३ वैशेषिक ॥ ३४ विज्ञानस्य ॥ ३५ साधारणम् ॥ ३६ विशेषरहितम् ॥ ३७ हेतो ॥ ३८ सन्तानान्तरेपि ॥ ३९ उत्तरम् ॥ ४० पूर्वज्ञान कर्तृ ॥ ४१ बौद्धेन त्वया ॥ ४२ सुषुप्तावस्थाजाग्रदवस्थयो ॥ ४३ सुषुप्तावस्थाजाग्रदवस्थयो ॥ ४४ अतिजाड्येनातिनिद्रया वा ॥ ४५ पराभव ॥ ४६ बौद्धाना मते यथा नैर्मल्यादिगुणो ज्ञानस्य तथा मिद्धादिदोषोपि ज्ञानस्य धर्म इति ॥ ४७ ज्ञानात् ॥ ४८ मिद्धस्य ॥ ४९ आदिशब्देन विज्ञानसज्ञासस्कारा गृह्यन्ते ॥ ५० सुषुप्तावस्थायाम् ॥ ५१ विज्ञानस्य ॥ ५२ बौद्धेन ॥

भावनाभ्यासवशाद्रागादिविनाशस्तदप्यसङ्गतं निर्हेतुकत्वाद्विनाशस्य, अभ्यासानुपपत्तेश्च । अभ्यासो ह्यवस्थिते ध्यातर्यतिशयाधायकत्वेन स्यान्न क्षणिकज्ञानमात्रे । न च सन्तानापेक्षयाऽतिशयो युक्तस्तस्यावास्तवत्वात्, अविशिष्टाद्विशिष्टोत्पत्तेरयोगाच्च । अविशिष्टाद्धि पूर्वज्ञानादुत्तरोत्तरं सातिशयं कथमुत्पद्येत ? तत्कथं योगिनां सकलकल्पनाविकलज्ञानसम्भव इति ? यच्च सन्तानोच्छित्तिर्निःश्रेयसमिति मतं तत्र निर्हेतुकतया विनाशस्योपायवैयर्थ्यमयत्नसिद्धत्वादिति । अन्ये त्वनेकान्तभावनातो विशिष्टप्रदेशेऽक्षयशरीरादिलाभो निःश्रेयसमिति मन्यन्ते । तथा हि । नित्यत्वभावनायां ग्रहोऽनित्यत्वे च द्वेष इत्युभयपरिहारार्थमनेकान्तभावना । इत्यप्यपरीक्षिताभिधानं मिथ्याज्ञानस्य निःश्रेयसकारणत्वायोगात् । अनेकान्तज्ञानं मिथ्यैव विरोधवैयधिकरण्याद्यऽनेकबाधकोपनिपातात् । स्वदेशादिषु सत्त्वं परदेशादिषु चासत्त्वमितरेतराभावादिष्यते एव । स्वकार्येषु कर्तृत्वं कार्यान्तरेषु चाकर्तृत्वं न प्रतिषिध्यते—यद्यस्यान्वयव्यतिरेकाभ्यामुत्पत्तौ व्याप्रियमाणमुपलब्धं तत्तस्य कारणं नान्यस्येत्यभ्युपगमात् । तथा मुक्तावप्यनेकान्तो न व्यावर्त्तत इति स एव मुक्तः संसारी चेति प्रसक्तम् । तथाऽनेकान्तेप्यनेकान्तप्रसङ्गात्सदसन्नित्यानित्यादिरूपव्यतिरिक्तं रूपान्तरमपि प्रसज्येतेति । अन्ये त्वात्मैकत्वज्ञानात्परमात्मनि लयः सम्पद्यते इति ब्रुवते । तथा हि । आत्मैव परमार्थसंस्ततोऽन्यत्र भेदे प्रमाणाभावात् । प्रत्यक्षं हि पदार्थानां सद्भावस्यैव ग्राहकं न भेदस्येत्यविद्यासमारोपितो भेदः । तेप्यतत्त्वज्ञा—आत्मैकत्वज्ञानस्य मिथ्यारूपतया निःश्रेयसाऽसाधकत्वात् । तन्मिथ्यात्वं चार्थानां प्रमाणतो वास्तवभेदप्रसिद्धेः । एवं शब्दाद्वैतज्ञानमपि मिथ्यारूपतया निःश्रेयसाप्रसाधकं द्रष्टव्यम् । निरस्तं चात्माद्वैतं शब्दाद्वैतं च प्राक्प्रबन्धेनेत्यलमतिप्रसङ्गेन । प्रकृतिपुरुषविवेकोपलम्भः स्वरूपे चैतन्यमात्रेऽवस्थानलक्षणनिःश्रेयसस्य साधनमित्यन्ये । तथा हि । पुरुषार्थसम्पादनाय प्रधानं प्रवर्त्तते । पुरुषार्थश्च द्वेधा शब्दादिविषयोपलब्धिः प्रकृतिपुरुषविवेकोपलम्भश्च । सम्पन्ने हि पुरुषार्थे चरितार्थत्वात्प्रधानं न शरीरादिभावेन परिणमते । विज्ञातं वा दुष्टतया कुट्टिनीस्त्रीवद्भोगसम्पादनाय पुरुषं नोपसर्पतीत्यप्यसाम्प्रतं—प्रधानासत्त्वस्य प्रागेवोक्तत्वात् । सति हि प्रधाने पुरुषस्य तद्विवेकोपलम्भः स्यात् । अस्तु वा तत्तथापि पुरुषस्थं निमित्तमनपेक्ष्य तत्प्रवर्त्ततापेक्ष्य वा ? न तावदनपेक्ष्य मुक्तात्मन्यपि शरीरादिसम्पादनाय तत्प्रवृत्तिप्रसङ्गात् । अथापेक्ष्य प्रवर्त्तते । किं तदपेक्ष्यम् ? विवेकानुपलम्भोऽदृष्टं वा ? न तावद्विवेकानुपलम्भः—तस्य विवेकोपलम्भविनष्टत्वेन मुक्तात्मन्यपि सम्भवात् ।

१ क्षिप्र ॥ २ रागादिरहितत्वेन ॥ ३ विशुद्धज्ञानोत्पत्तेः ॥ ४ क्षिप्र ॥ ५ निर्विशेषस्य ॥ ६ योगाचारस्य ॥ ७ ध्यानादेः ॥ ८ विनाशस्य ॥ ९ जैना ॥ १० मोक्षशिलोपरि ॥ ११ स्वरूपदेहो वा ॥ १२ आदिशब्देन ज्ञानादि ॥ १३ स्नेह ॥ १४ युक्ता ॥ १५ वैशेषिकेणापि मया ॥ १६ कारणम् ॥ १७ कार्यस्य ॥ १८ दूषणान्तरम् ॥ १९ सत्त्वे सत्त्वमसत्त्व चेत्यनेन प्रकारेण ॥ २० ब्रह्माद्वैतवादिन ॥ २१ प्रवेश ॥ २२ मोक्षम् ॥ २३ निर्विकल्पकम् ॥ २४ घटपटादीनाम् ॥ २५ हेतो ॥ २६ मिथ्याज्ञानेन ॥ २७ कल्पित ॥ २८ घटपटादीनाम् ॥ २९ प्रत्यक्षादे ॥ ३० परमार्थ ॥ ३१ वास्तवभेदसिद्धिप्रकारेण ॥ ३२ अद्वैतनिराकरणस्य ॥ ३३ का ॥ ३४ भेदभावनाज्ञानम् ॥ ३५ प्रधानं प्रति ॥ ३६ भेदभावनाभावः ॥ ३७ भेदभावनाया योग्यवस्थायां सम्भवात् । मुक्त्यवस्थायां तु तस्या विनाशात्प्रयोजनाभावात ॥

न[1] चानुत्पत्तिविनाशयोरसत्त्वेन विशेषं पश्यामः । द्वितीयविकल्पोऽप्ययुक्तोऽदृष्टस्यापि प्रधाने शक्तिरूपतया व्यवस्थितस्योभयत्रा[3]विशेषात् । दुष्टतया च विज्ञातं प्रधानं पुरुषं नोपसर्पतीति चायुक्तं तस्याचेतनतयाऽहमनेन[4] दुष्टतया विज्ञातमिति ज्ञानासम्भवात् । ततः पूर्ववत्प्रवृत्तिरविशेषेणैव स्यात् । इत्यलमतिप्रसङ्गेन । तदा[6] द्रष्टुः स्वरूपेऽवस्थानं मोक्ष इति चाभ्युपगतमेव विशेषगुणरहितात्मस्वरूपे तस्यावस्थानाभ्युपगमात् । चिद्रूपेऽवस्थानमित्येतत्तु न घटतेऽनित्यत्वेन चिद्रूपताया विनाशात् । न चाक्षाद्यन्वयव्यतिरेकानुविधायिन्यास्तस्या नित्यत्वे प्रमाणमस्ति । आत्मस्वरूपतास्तीति चेन्ननु चिद्रूपतात्मनोऽभिन्ना भिन्ना वा स्यात् ? अभेदे पर्यायमात्रमात्मा चिद्रूपता चेति । तस्य च नित्यत्वाभ्युपगमात् सिद्धसाध्यता । भेदे तु संयोगादिभिरनैकान्तिकत्वं तेषामात्मधर्मत्वेपि नित्यत्वाभावात् । गुणगुणिनोश्च तादात्म्यविरोधादित्युपरम्यते । ततो बुद्ध्यादिविशेषगुणोच्छेदविशिष्टात्मस्वरूप एव मोक्षस्तत्त्वज्ञानादिति स्थितम् ।

अत्र प्रतिविधीयते । यत्तावदुक्तं नवानामात्मविशेषगुणानां सन्तानोऽत्यन्तमुच्छिद्यते । तत्रात्मनो भिन्नानां बुद्ध्यादिविशेषगुणानामात्मन्येव समवायादिना वृत्त्यसिद्धेः[17] प्रागेवोक्तत्वात् कथमात्मविशेषगुणानां सन्तानः सिद्धो यतः हेतोराश्रयासिद्धिर्न स्यात् ? तथा तेषां परेणास्वसंविदितत्वेनाभ्युपगमात् । ज्ञानान्तरग्राह्यत्वे चानवस्थादिदोषप्रसक्तेरज्ञातस्य च सत्त्वाप्रसिद्धेः पुनरप्याश्रयासिद्धत्वम् । आत्मनोऽभिन्नानां तत्साधने तु तस्याप्यत्यन्तोच्छेदप्रसङ्गात् कस्यासौ मोक्षः ? कथञ्चिदभेदस्तु नाभ्युपगम्यते । अभ्युपगमे वा नात्यन्तोच्छेदसिद्धिरित्यनन्तरं वक्ष्यामः । सन्तानत्वं च हेतुः सामान्यरूपं विशेषरूपं वा ? सामान्यरूपं चेत्परसामान्यरूपमपरसामान्यरूपं वा ? प्रथमपक्षे गगनादिनानेकान्तोऽत्यन्तोच्छेदाभावेप्यत्र हेतोर्वर्तनात् । सत्तासामान्यरूपत्वे च सन्तानत्वस्य सत्सदिति प्रत्ययहेतुत्वमेव स्यान्न पुनः सन्तानप्रत्ययहेतुत्वम् । अथ विशेषगुणाश्रिता जातिः सन्तानत्वं तर्हि द्रव्यविशेषे प्रदीपदृष्टान्ते तस्याऽसम्भवात्साधनविकलो दृष्टान्तः । न च सन्तानत्वं परमपरं वा सामान्यं सर्वथा भिन्नं बुद्ध्यादिषु वृत्तिमत्प्रसिद्धं—तद्वृत्तेः समवायस्य प्रतिषिद्धत्वात् । इति स्वरूपासिद्धत्वम् । अथ विशेषरूपं—तत्राप्युपादानोपादेयभूतबुद्ध्यादिलक्षणक्षणविशेषरूपं पूर्वापरसमानजातीयक्षणप्रवाहमात्ररूपं वा ? प्रथमपक्षे सन्तानत्वस्यासाधारणानैकान्तिकत्वं तथाभूतस्यास्यान्यत्रानुवृत्तेः । अभ्युपगमविरोधश्च । न खलु परेण बुद्ध्यादिक्षणोपादानोऽपरोऽखिलो बुद्ध्यादिक्षणोऽभ्युपगम्यते । अन्यथा मुक्त्यवस्थायामपि पूर्वपूर्वबुद्ध्याद्युपादानक्षणा-

---

१ किञ्च ॥ २ विवेकानुपलम्भो नाम विवेकोपलम्भाभाव । कथम्? विवेकोपलम्भस्यानुत्पत्ति ससार्यात्मनि विवेकोपलम्भस्य विनाशो मुक्तात्मनि ॥ ३ ससारिमुक्तात्मनो ॥ ४ पुरुषेण ॥ ५ साङ्ख्यपरिकल्पितमुक्त्युपाय-
निराकरणेन ॥ ६ उक्तरीत्या मोक्षोपायस्वरूप विचार्यमाण नास्ति चेन्मा भून्मोक्षस्वरूप तु स्यादित्युक्ते आह ॥ ७ मुक्त्यवस्थायाम् ॥ ८ आत्मन ॥ ९ ( आत्मन ) ॥ १० यौगेन ॥ ११ स्वरूपे निर्दिष्टमेतत् ॥ १२ यौ-
गमते चिद्रूप बुद्धि ॥ १३ नाममात्रम् ॥१४ पराभ्युपगतमोक्षनिराकरणे ॥१५ मया ॥१६ तदाधेयत्व तद्गुणत्वादि ॥१७उच्छेद इत्यन्वय ॥१८ बुद्ध्यादीनाम् ॥ १९ वैभाषिकेण ॥२० बुद्ध्यन्तर ॥ २१ आदिनेतरेतराश्रय ॥
२२ सन्तानस्य ॥ २३ परेण ॥ २४ असिनेव वादे ॥ २५ सत्ताख्यम् ॥ २६ साध्याभावे ॥ २७ किञ्च ॥ २८ द्वितीयविकल्प ॥ २९ सामान्यम् ॥ ३० किम ॥ ३१ सन्तानत्वम् ॥ ३२ सह ॥ ३३ रूपत्वेन
सजातीयत्वम् ॥ ३४ दृष्टान्ते प्रदीपे ॥ ३५ उपादेय ॥

दुत्तरोत्तरोपादेयबुद्ध्यादिक्षणोत्पत्तिप्रसङ्गान्न बुद्ध्यादिसन्तानस्यात्यन्तोच्छेदः स्यात् । द्वितीयपक्षे तु पाकजपरमाणुरूपादिनानेकान्तस्तथाविधसन्तानत्वस्यात्र सद्भावेप्यत्यन्तोच्छेदाभावात् । विरुद्धश्चायं हेतुः कार्यकारणभूतक्षणप्रवाहलक्षणसन्तानत्वस्यैकान्तनित्यवदनित्येप्यसम्भवात्, अर्थक्रियाकारित्वस्यानेकान्ते एव प्रतिपादयिष्यमाणत्वात् । शब्दविद्युत्प्रदीपादीनामप्यत्यन्तोच्छेदासम्भवात्साध्यविकलो दृष्टान्तः । न च ध्वस्तस्यापि प्रदीपादेः परिणामान्तरेण स्थित्यभ्युपगमे प्रत्यक्षबाधा— वारि स्थिते तेजंसि भासुररूपाभ्युपगमेपि तत्प्रसङ्गात् । अथोष्णस्पर्शस्य भासुररूपाधिकरणतेजोद्रव्याभावेऽसम्भवात्तत्रानुद्भूतस्यास्य परिकल्पनमनुमानतस्तर्हि प्रदीपादेरप्यनुपादानोत्पत्तेरिवान्त्यावस्थातोऽपरापरपरिणामाधारत्वमन्तरेण सत्त्वकृतकत्वादिकं न सम्भवतीत्यनुमानतस्तत्सन्तत्यनुच्छेदः किन्न कल्प्यते? तथा हि । प्रदीपादिः सत्त्वात्कृतकत्वाद्वा घटादिवत् । सत्प्रतिपक्षश्च । तथा हि । बुद्ध्यादिसन्तानो नात्यन्तोच्छेदवानऽखिलप्रमाणानुपलभ्यमानतथोच्छेदत्वात् । य एवं स न तत्त्वेनोपेयो, यथा पाकजपरमाणुरूपादिसन्तानः । तथा चायं तस्मान्नात्यन्तोच्छेदवानिति । न च प्रस्तुतानुमानत एव सन्तानोच्छेदप्रतीतेः सर्वप्रमाणानुपलभ्यमानतथोच्छेदत्वमसिद्धं सन्तानत्वसाधनस्यासत्प्रतिपक्षत्वासिद्धेः । तत्सिद्धौ हि हेतोर्गमकत्वम् । कालात्ययापदिष्टत्वं चानेनैवानुमानेन बाधितपक्षनिर्देशानन्तरं प्रयुक्तत्वात् । यच्च तत्त्वज्ञानस्य विपर्ययज्ञानव्यवच्छेदक्रमेण निःश्रेयसहेतुत्वमित्युक्तं तदप्युक्तिमात्रं ततो विपर्ययज्ञानव्यवच्छेदक्रमेण धर्माधर्मयोस्तत्कार्यस्य च शरीरादेरभावेप्यनन्तातीन्द्रियाखिलपदार्थविषयसम्यग्ज्ञानसुखादिसन्तानस्याभावासिद्धेः । इन्द्रियजज्ञानादिसन्तानोच्छेदसाधने च सिद्धसाधनम् । इन्द्रियाद्यपाये ज्ञानादिसन्तानसद्भावश्चाशेषज्ञसिद्धिप्रस्तावे प्रतिपादितः । कथं चातीन्द्रियज्ञानाद्यनभ्युपगमे महेश्वरे तत्सद्भावः स्यात्? नित्यत्वं चेश्वरज्ञानस्येश्वरनिराकरणे प्रतिषिद्धम् । शरीराद्यपायेप्यस्य ज्ञानाद्यभ्युपगमेऽन्यात्मनोपि सोस्तु तत्स्वभावत्वात् । न च स्वभावापाये तद्वतोऽवस्थानमतिप्रसङ्गात् । यत्तूक्तमारब्धकार्ययोश्चोपभोगात्प्रक्षयस्तदपि न सूक्तमुपभोगात्कर्मणः प्रक्षये तदुपभोगसमये अपरकर्मनिमित्तस्याभिलापपूर्वकमनोवाक्कायव्यापारादेः सम्भवात् । अविकलकारणस्य प्रचुरतरकर्मणो भवतः कथमात्यन्तिकः प्रक्षयः? सम्यग्ज्ञानस्य तु मिथ्याज्ञानोच्छेदक्रमेण बाह्याभ्यन्तरक्रियानिवृत्तिलक्षणचारित्रोपबृंहितस्यागामिकर्मानुत्पत्तिसामर्थ्यवत्सञ्चितकर्मक्षयेपि सामर्थ्यं सम्भाव्यत एव । यथोष्णस्पर्शस्य भाविशीतस्पर्शानुत्पत्तौ सामर्थ्यवत्प्रवृत्ततत्स्पर्शादिध्वंसेपि सामर्थ्यं प्रतीयते । किन्तु परिणामिजीवाजीवादिवस्तुविषयमेव सम्यग्ज्ञानं, न पुनरेकान्तनित्यानित्यात्मादिविषयं—तस्य विपरीतार्थग्राहकत्वेन मिथ्यात्वोपपत्तेरि-

१ आदिना गन्धरसादि ॥ २ कथञ्चिन्नित्यानित्ये ॥ ३ तमोरूपेण ॥ ४ उष्णे ॥ ५ अग्नौ ॥ ६ ईप् ॥ ७ सन्तानत्व हेतु ॥ ८ अभ्युपगम्य ॥ ९ सन्तानत्वादित्यत ॥ १० किन्न ॥ ११ तद्=ज्ञानम् ॥ १२ पृथुबुध्नोदराद्याकाराभावे घटावस्थानप्रसङ्गात् ॥ १३ तस्य कर्मफलस्य ॥ १४ उत्पद्यमानस्य ॥ १५ सम्यग्ज्ञानान्मिथ्याज्ञानाभाव, मिथ्याज्ञानाभावाद्रागाद्यभाव, रागाद्यभावाद्बाह्य (वचनादि) +अन्तर (चिन्तन) क्रियानिवृत्तिरिति ॥ १६ सहितस्य ॥ १७ अङ्गकम्पउद्धर्षणादे ॥ १८ असदीयमपि तत्त्वज्ञान सञ्चितकर्मक्षयनिबन्धनमागामिकर्मानुत्पत्तिकारण स्यादित्युक्ते आह । नित्यादिवस्तुविषयज्ञानस्य सम्यग्ज्ञानता न प्रतीयते किन्तु इत्यादि ॥ १९ नित्यात्मादिविपर्ययज्ञानस्य ॥

त्यग्रे निवेदयिष्यते । अतो यदुक्तं यथैधांसीत्यादि तत्सर्वं संवररूपचारित्रोपबृंहितसम्यग्ज्ञानाग्नेरशेषकर्मक्षये सामर्थ्याभ्युपगमात्सिद्धसाधनम् । यच्चाभ्यधायि समाधिबलादुत्पन्नतत्त्वज्ञानस्येत्यादि तदप्यभिधानमात्रमभिलापरूपरागाद्यभावेऽङ्गनाद्युपभोगासम्भवात् । तत्सम्भवे चावश्यंभावी गृद्धिमतो भवदभिप्रायेण योगिनोपि प्रचुरतरधर्माधर्मसम्भवो नृपत्यादेरिवातिभोगिनः । वैद्योपदेशादातुरोप्यौषधाद्याचरणे नीरुग्भावाभिलाषेणैव प्रवर्त्तते, न पुनर्ज्ञानमात्रात् । तन्नाशेषशरीरद्वारावाप्ताशेषभोगस्य कर्मान्तरानुत्पत्तिः । किं तर्हि? परिपूर्णसम्यग्दर्शनज्ञानचारित्रस्य । इत्यलं विवादेन जीवन्मुक्तेरपि त्रितयात्मकादेव हेतोः सिद्धेः । संसारकारणं हि मिथ्यादर्शनादित्रयात्मकं न पुनर्मिथ्याज्ञानमात्रात्मकम् । तच्चैकस्मात्सम्यग्ज्ञानमात्रात्कथं व्यावर्त्तेत इत्युक्तं सर्वज्ञसिद्धिप्रस्तावे । यच्चान्यदुक्तं नित्यनैमित्तिकानुष्ठानं केवलज्ञानोत्पत्तेः प्राक्काम्यनिषिद्धानुष्ठानपरिहारेण ज्ञानावरणादिदुरितक्षयनिमित्तत्वेन केवलज्ञानप्राप्तिहेतुस्तदिष्टमेवास्माकम् । आनन्दरूपता तु मोक्षस्याभीष्टैव । एकान्तनित्यता तु तस्याः प्रतिषिध्यते । चिद्रूपतावदानन्दरूपताप्येकान्तनित्येत्यप्ययुक्तं चिद्रूपताया अप्येकान्तनित्यत्वासिद्धेः सकलवस्तुस्वभावानां परिणामिनित्यत्वेनाग्रे समर्थयिष्यमाणत्वात् । अथानित्यत्वे तस्याः तत्संवेदनस्य चोत्पत्तिकारणं वक्तव्यम् । ननूक्तमेव प्रतिबन्धापायलक्षणं तत्कारणं सर्वज्ञसिद्धिप्रस्तावे । आत्मैव हि प्रतिबन्धकापायोपेतो मोक्षावस्थायां तथाभूतज्ञानसुखादिकारणं–घटाद्यावरणापायोपेतप्रदीपक्षणवत्स्वपरप्रकाशकापरप्रदीपक्षणोत्पत्तौ तदुत्पादनभावस्यान्यापेक्षायोगात् । यद्धि यदुत्पादनस्वभावं न तत्तदुत्पादनेऽन्यापेक्षं, यथान्त्या कारणसामग्री स्वकार्योत्पादने । तदुत्पादनस्वभावश्चातीन्द्रियज्ञानसुखाद्युत्पत्तौ प्रतिबन्धकापायोपेत आत्मेति संसारावस्थायामप्युपलभ्यते वासीचन्दनकल्पानां सर्वत्र समवृत्तीनां विशिष्टध्यानादिव्यवस्थितानां सेन्द्रियशरीरव्यापाराऽजन्यः परमाल्हादरूपोऽनुभवः । अस्यैव भावनावशादुत्तरोत्तरावस्थामासादयतः परमकाष्ठा गतिः सम्भाव्यत एव । आनन्दरूपताभिव्यक्तिश्चानाद्यऽविद्याविलयादित्यभीष्टमेवाऽष्टप्रकारपारमार्थिककर्मप्रवाहरूपाऽनाद्यविद्याविलयादनन्तसुखसंज्ञानादिस्वरूपप्रतिपत्तिलक्षणमोक्षावाप्तेरभीष्टत्वात् । विशुद्धज्ञानसन्तानोत्पत्तिलक्षणोप्यसौ मोक्षोऽभ्युपगम्यते । स तु चित्तसन्तानः सान्वयो युक्तः । बद्धो हि मुच्यते नाबद्धः । न च निरन्वये चित्तसन्ताने बद्धस्य मुक्तिः । तत्र ह्यन्यो बद्धोऽन्यश्च मुच्यते । सन्तानैक्याद्बद्धस्यैव मुक्तिरपीति चेन्ननु यदि सन्तानार्थः परमार्थसंस्तदात्मैव सन्तानशब्देनोक्तः स्यात् । अथ

१ अनेकान्तसिद्धौ ॥ २ आकाङ्क्षावत ॥ ३ न केवल योगी ॥ ४ सम्यग्दर्शनादित्रयमोक्षकारणविषयविवादेन ॥ ५ न केवल परममुक्ते ॥ ६ कारणात् ॥ ७ चतुर्थपरिच्छेदे ॥ ८ अतीन्द्रिय ॥ ९ एव ॥ १० घटस्थप्रदीपवत् ॥ ११ उत्तर ॥ १२ आत्मन ॥१३ इन्द्रियवनितादे ॥१४ प्रतिबन्धकापायोपेत आत्मा धर्मी अतीन्द्रियज्ञानसुखाद्युत्पत्तौ अन्य नापेक्षते इति साध्य, तदुत्पादनस्वभावत्वादिति शेष ॥१५ अन्त्यतन्तुसयोग ॥१६ पटलक्षणस्य ॥ १७ स प्रसिद्ध उत्पादनस्वभावो यस्यात्मन ॥ १८ असिद्धत्वे हेतोरुद्भाविते परिहारमाह ॥ १९ कुठार ॥ २० तुल्यानाम् ॥ २१ शत्रुमित्रयो ॥ २२ आदिना दानम् ॥ २३ भेद ॥ २४ निश्चीयते ॥ २५ प्राप्ति ॥ २६ बौद्धविशेषैरभ्युपगत ॥ २७ ज्ञानस्य ॥ २८ सद्रव्य ॥ २९ पूर्वक्षण ॥ ३० उत्तरक्षण ॥ ३१ अपिशब्दाद्बन्धोपि ॥ ३२ बौद्धाना मते पूर्वोत्तरक्षणानामेक आधारभूत सन्तान स अपरमार्थ सन्केवल पूर्वक्षण उत्तरक्षण सन्तानी स तु परमार्थसन् ॥

संवृतिसंस्तदेकस्य[1][2] परमार्थसतोऽसत्त्वादन्यो बद्धोऽन्यश्च मुच्यते इति मुक्त्यर्थं प्रवृत्तिर्न स्यात्। अथात्यन्तनाना[3]त्वेपि दृढतरै[4]कत्वाध्यवसायाद्बद्धमात्मानं मोचयिष्यामीत्यभिसन्धान[5]वतः प्रवृत्तेर्नायं दोषो, न तर्हि नैरात्म्यदर्शन[6]म् । इति कुतस्तन्निबन्धना मुक्तिः?[7] अथास्ति तद्दर्शनं शास्त्रसंस्कारजं, न तर्ह्येकत्वाध्यवसायोऽस्खलद्रूप इति कुतो बद्धस्य मुक्त्यर्थं प्रवृत्तिः स्यात् ? तथा[8] च मिथ्याध्यारोपहानार्थं यत्नोऽसत्यपि मोक्तरीति प्लवते[9] । तस्मात्[10]सान्वया[11] चित्तसन्ततिरभ्युपगन्तव्या—सकलविज्ञानक्षणत्वेपि जीवाभावे बन्धमोक्षयोस्तदर्थं वा प्रवृत्तेरनुपपत्तेः। न चान्योन्यविलक्षणाऽपरापर[12][13]चित्तक्षणानामनुयायिजीवाभावो विरोधादित्यभिधातव्यं—स्वसंवेदन[14]प्रत्यक्षेण तत्रानुयायिरूपतया तस्य प्रतीतेः। प्रतीयमानस्य च कथं विरोधो नामानुपलम्भसाध्यत्वात्तस्य । तद्व्यापारे चासत्यात्मनि प्रत्यभिज्ञानप्रत्ययस्य प्रादुर्भावो न स्यात्। अथात्मन्यप्यारोपितैकत्वविषयत्वादस्य प्रादुर्भावो, न—अस्यारोपितैकत्वविषयत्वे स्वात्मन्यनुमानात्क्षणिकत्वं निश्चिन्वतो निवृत्तिप्रसङ्गात्, निश्चयारोपमनसोर्विरोधात्। निवर्तत एवेति चेत्तर्हि सहजस्याभिसंस्कारिकस्य च सत्त्वदर्शनस्याभावात्तदैव तन्मूलरागादिनिवृत्तेर्मुक्तिः स्यात् । भ्रान्तत्वे चास्य प्रत्यक्षस्याशेषस्यापि भ्रान्तत्वप्रसङ्गो बाह्याध्यात्मिकभावेष्वेकत्वग्राहकत्वेनैवाशेषप्रत्यक्षाणां प्रवृत्तिप्रतीतेः । तथा च प्रत्यक्षस्याभ्रान्तत्वविशेषणमसम्भाव्यमेव स्यात्। समर्थयिष्यते च प्रत्यभिज्ञानप्रत्ययस्यानारोपितार्थग्राहकत्वमभ्रान्तत्वं च। तन्नैकत्वाभावः। अनुभूयमानस्यापि चैकत्वस्यानेकत्वेन विरोधे ग्राह्यग्राहकसंवित्तिलक्षणविरुद्धरूपत्रयाध्यासितज्ञानस्यार्थस्वलक्षणस्य चैकदा स्वपरकार्यकर्तृत्वाकर्तृत्वलक्षणविरुद्धधर्मद्वयाध्यासितस्यैकत्वविरोधः स्यात् । यच्चान्यद्रागादिमतो विज्ञानात्तद्रहितस्यास्योत्पत्तिरित्याद्युक्तं तदप्यसाम्प्रतं रागादिरहितस्याखिलपदार्थविषयविज्ञानस्याशेषज्ञसाधनप्रस्तावे प्रतिपादितत्वात् । न च बोधाद्बोधरूपतेति प्रमाणमस्तीत्यप्ययुक्तम्। विलक्षणकारणाद्विलक्षणकार्यस्योत्पत्त्यभ्युपगमेऽचेतनाच्छरीरादेश्चैतन्योत्पत्तिप्रसङ्गाच्चार्वाकमतानुषङ्गः । प्रसाधितश्च परलोकी प्रागित्यलमतिप्रसङ्गेन। यच्चाभ्यधायि सुषुप्तावस्थाया विज्ञानसद्भावे जाग्रदवस्थातो न विशेषः स्यात्तदप्यभिधानमात्रं यतस्तदा विज्ञानसद्भावेपि अतिनिद्रयाभिभूतत्वान्न जाग्रदवस्थातोऽविशेषो मत्तमूर्च्छिताद्यवस्थायां मदिराद्युत्पादितमदवेदनाद्यभिभूतविज्ञानवत् । ननु कोयं मिद्धेनाभिभवः? ज्ञानस्य नाशश्चेत्कथं तस्य सत्त्वम् ?

---

१ कल्पनारान् ॥ २ आत्मन ॥ ३ क्षणानाम् ॥ ४ अभिप्रायवत ॥ ५ निर्विकल्पकस्य ॥ ६ भावना ॥ ७ बद्धस्य मुक्त्यर्थं प्रवृत्त्यभावे च ॥ ८ नैरात्म्यभावनालक्षण ॥ ९ विनश्यति ॥१० अन्वयाभावे बन्धो मोक्षो वा न घटते यत ॥ ११ सद्रूपा ॥ १२ अन्यथा ॥ १३ परेण ॥ १४ पूर्वक्षणे अहमेव दु खी उत्तरक्षणेऽहमेव सुखीति ॥ १५ खस्मिन् ॥ १६ न केवल बहि ॥ १७ सद्रूपा ॥ १८ चेदिति शेष ॥ १९ स्वरूपे ॥ २० यतस्ततक्षणिकमित्यादि ॥ २१ आरोपितैकत्वविषयस्य प्रत्यभिज्ञाप्रत्ययस्य ॥ २२ अनुमानेन ॥ २३ सोह प्रत्यभिज्ञानरूपो विकल्प ॥ २४ मन =ज्ञानम् ॥ २५ एकत्र ॥ २६ अनुमानमनिलत्वसाधने एकस्मिन्वस्तुनि प्रवृत्त प्रत्यभिज्ञानेकत्वसाधने इति विरोध ॥ २७ क्षणिकत्वनिश्चयसमये एकत्वविषय प्रत्यभिज्ञानम् ॥ २८ ग्राम्यजनसम्बन्धिन ॥ २९ पण्डितजनसम्बन्धिन ॥ ३० जीव ॥ ३१ प्रत्यभिज्ञानस्य ॥ ३२ क्षणिकत्वनिश्चयसमये एव ॥ ३३ सौगतस्य ॥ ३४ प्रत्यक्ष कल्पनापोढमभ्रान्तमित्यत्र सूत्रे ॥ ३५ किञ्च ॥ ३६ सुखदु खनानालक्षणोपलम्भेन ॥ ३७ नीलस्वलक्षणस्य ॥ ३८ उत्तरनीलादिक्षणस्य ॥ ३९ अर्थान्तरपीतादे ॥ ४० अचेतनादात्मन ॥ ४१ ज्ञानलक्षणस्य ॥ ४२ दूरस्थितेन चार्वाकेणोक्तमस्मदीयमतमेवास्तु । तत्राह ॥ ४३ सुप्तावस्था ज्ञानवती आत्मन अवस्थात्वान्मत्तमूर्च्छिताद्यवस्थावत् ॥ ४४ मत्तता ॥ ४५ पीडा ॥ ४६ विषयपीडा ॥ ४७ सुषुप्तावस्थायाम् ॥

तिरोभावश्चेन्न–स्वपरप्रकाशरूपज्ञानाभ्युपगमे तस्याप्यसम्भवात्। इत्यप्यचर्चिताभिधानं मणिमन्त्रादिनाऽग्न्यादिप्रतिवन्धे शरावादिना प्रदीपादिप्रतिवन्धे च समानत्वात्।
न हि तत्राप्यग्न्यादेर्नाशः प्रतिवन्धः प्रत्यक्षविरोधात् । नापि तिरोभावः स्वपरप्रकाशस्वभावस्य स्फोटादिकार्यजननसमर्थस्य तिरोभावस्याप्यसम्भवात् । प्रती-
त्यनतिक्रमेणात्र स्वरूपसामर्थ्यप्रतिवन्धाभ्युपगमोऽन्यत्रापि समानः । मिद्धादिसामग्रीविशेषवशाद्धि वाह्याध्यात्मिकार्थविचारविधुरं गच्छत्तृणस्पर्शज्ञानसमानं
सुषुप्तावस्थायां ज्ञानमास्ते । न हि स्वपरप्रकाशस्वभावत्वमात्रेणैवास्य तन्निरूपणसामर्थ्यं सर्वत्रानभिभूतस्यैवार्थस्य स्वकार्यकारित्वप्रतीतेः । अन्यथा दहनादिस्व-
भावस्याग्नेः सदा दाहकत्वप्रकाशकत्वप्रसङ्गः । गच्छत्तृणस्पर्शसंवेदनस्य वा तदर्थनिरूपकत्वानुषङ्गः।अथात्र मनोव्यासङ्गोऽस्मरणकारणमन्यत्र मिद्धादिकमित्यविशेषः।
अस्ति चात्र स्वापलक्षणार्थनिरूपणमेतावत्कालं निरन्तरं सुप्तोहमेतावत्कालं सान्तरमित्यनुस्मरणप्रतीतेः । न च स्वापलक्षणार्थाननुभवेपि सुप्तोत्थानानन्तरं गाढोहं
तदा सुप्त इत्यनुस्मरणं घटते–तस्यानुभूतवस्तुविषयत्वेनानुभवाविनाभावित्वात् । अन्यथा घटाद्यर्थाननुभवेपि तत्रानुस्मरणसम्भवात्कुतस्तदनुभवोपि सिद्ध्येत् ? न च
मत्तमूर्च्छिताद्यवस्थायामपि विज्ञानाभावाद्दृष्टान्तस्य साध्यविकलतेत्याशङ्कनीयं तदवस्थातः प्रच्युतस्योत्तरकालं मया न किञ्चिदप्यनुभूतमित्यनुभवाभावप्रसङ्गात्
स्मृतेरनुभवपूर्वकत्वात्। अतो येनानुभवेन सतात्मा निखिलानुभवविकलोऽनुभूयते तस्यामवस्थायां सोऽवश्याभ्युपगन्तव्यः । किञ्च सुप्ताद्यवस्थायां विज्ञानाभावं स
एवात्मा प्रतिपद्यते पार्श्वस्थो वा ? स एव चेत्तत एव ज्ञानात्तदभावाद्वा ज्ञानान्तराद्वा ? न तावत्तत एव–अस्यासत्त्वात्–तदेव नास्ति तत्र, तत एव चाभावगति-
रित्यन्योन्यं विरोधात् । ज्ञानाभावात्तत्र तदभावपरिच्छित्तिरित्ययुक्तं परिच्छेदस्य ज्ञानधर्मतयाऽभावेऽसम्भवात् । अन्यथा ज्ञानस्यैवाभाव इति नामकृतं स्यात् ।
अथ ज्ञानान्तरात्तत्र तदभावगतिः । किं तत्कालभाविनो जाग्रत्प्रबोधकालभाविनो वा ? प्रथमपक्षे कथं सुषुप्ताद्यवस्थायां सर्वथा ज्ञानाभावः ? अथ जाग्रत्प्र-
वोधकालभाविज्ञानाभ्यामन्तराले ज्ञानाभावोऽवसीयते । ननु तद्दशाभाविविज्ञानयोः सुषुप्ताद्यवस्थाभाविविज्ञानं नोपलब्धिलक्षणप्राप्तम् । तत्कथं ताभ्यां तदभावोऽव-
सीयेत ? अन्यथाऽदृष्टस्यापि परलोकादेरभावोऽध्यक्षत एव स्यात् । तथा च प्रमाणेतरसामान्यस्थितेरित्याद्यसङ्गतम् । नापि पार्श्वस्थोन्यस्तत्र तदभावं प्रतिपद्यते
कारणस्वभावव्यापकानुपलब्धेर्विरुद्धविधेर्वा तदभावाविनाभाविनो लिङ्गस्यात्रानुपलब्धेः । न तत्र विज्ञानसद्भावेपि लिङ्गाभावः समान इत्यभिधातव्यं स्वात्मनि
स्वसंविदितज्ञानाविनाभावित्वेनाऽवधारितस्य प्राणापानशरीरोष्णताकारविशेषादेस्तत्सद्भावावेदिनो लिङ्गस्यात्रोपलब्धेर्जाग्रद्दशायामप्यन्यचेतोवृत्तेस्तद्व्यतिरेकेणान्य-

१ मणिमन्त्रशरावादिना अग्निप्रदीपप्रतिवन्धे ॥ २ ज्ञानस्य स्वपरप्रकाशरूप तिरोहितमतिरोहित चैतन्यम् ॥ ३ चैतन्यस्य ॥ ४ देशे ॥ ५ अभिभूतस्य स्वकार्यकारित्व यदि स्यात् ॥ ६ प्रतिवन्धसमयेपि ॥ ७ कार्यान्तरे
प्रवृत्ति ॥ ८ असावधानत्व वा ॥ ९ किंच ॥ १० सुप्तोहमिति शेष ॥ ११ प्रत्यक्षेण ॥ १२ अनुभवाविनाभावित्व स्मरणस्य यदि न स्यात् ॥ १३ स्मृति ॥ १४ अन्य ॥ १५ सुषुप्तावस्थाया यस्य ज्ञानस्याभावस्तस्मादेव
ज्ञानात् ॥ १६ ज्ञानस्य ॥ १७ ज्ञानाभावे परिच्छेदो यदि स्यात् ॥ १८ ज्ञानमन्तरेण परिच्छेदानुपपत्तिर्यत ॥ १९ सन्ध्याकालप्रात काल । तत्र भावि ॥ २० ताद्धि ॥ २१ यथा घट उपलब्धिलक्षणप्राप्तो भवति तदा पश्चादन्यत्र
घटाभावोऽवसीयते ॥ २२ अनुपलब्धिलक्षणप्राप्तस्य प्रत्यक्षाद्यभाव स्यादि ॥ २३ प्रतिषेधाच्च कस्यचिदितिपर्यन्तम् ॥ २४ अन्यपुरुषै ॥

तोऽप्रतीतेः । ननु द्विविधोऽत्र[1] प्राणादिश्चैतन्यप्रभवो जाग्रद्दशायां प्राणादिप्रभवश्च सुषुप्ताद्यवस्थायामिति । तत्र[2] चैतन्यप्रभवप्राणादेर्जाग्रद्दशायां चैतन्यानुमानं युक्तं, न पुनः प्राणादि[3]प्राणादेः । न खलु गोपालघटादौ धूमप्रभवधूमादग्न्यनुमानं दृष्टम्—अग्निप्रभवधूमादेव तद्दर्शनात् । इत्यप्यसङ्गतं—सुषुप्तेतरावस्थयोः प्राणादेर्विशेषाऽप्रतीतेः । यथैव हि सुषुप्तः[4] प्राणिति तथेतरोऽपि । अन्यथा किमयं सुषुप्तः किं वा जागर्तीति सन्देहो न स्यात् । यदि[9] चैते सुषुप्तस्य चैतन्यप्रभवा न स्युः किन्तु प्राणादिप्रभवास्तर्हि जाग्रतः परवञ्चनाभिप्रायेण सुषुप्तव्याजेनावस्थितस्य तादृशामेव तेषां भावो न स्यात् । न ह्यग्नेर्जायमानो धूमः प्रयत्नशतैरपि धूमादन्यतो[12] वा जायते धूमप्रभवो[13] वाग्नेरिति । दृश्यन्ते च ते यादृशा एव सुषुप्तस्य तादृशा एवास्यापि । तन्नैते भिन्नकारणप्रभवाः । चैतन्येतरप्रभवांश्च[16] प्राणादीन्विवेचयन्वीतरागेतरप्रभवव्यापारादीनपि विवेचयतु । तथा च सरागा अपि वीतरागवच्चेष्टन्ते वीतरागाश्च सरागवदिति वीतरागेतरविभागो निश्चेतुमशक्य इति ब्रुवते । धूमश्चाग्नेर्धूमाच्चोत्पद्यमानो यथा प्रतिपन्नस्तथा प्राणादिश्चैतन्यात्तदभावाच्चोत्पद्यमानः स्वात्मनि परत्र चानेन प्रत्येतुं न शक्यते । क्वचित्तदभावस्य निश्चेतुमशक्यत्वादित्युक्तम् । धूमे च किमयं धूमोऽग्नेर्धूमान्तराद्वेति सन्देहः प्रवृत्तस्याग्निदर्शनेतराभ्यां निवर्त्तते । प्राणादौ तु किमयमनन्तरचैतन्यप्रभवः किं वा भूतभाविजन्मान्तरचैतन्यप्रभव इति सन्देहः कुतो निवर्त्तेत ? परचैतन्यस्य द्रष्टुमशक्यत्वात् । ततोऽस्य न निश्शङ्कं परप्रतिपादनार्थं शास्त्रप्रणयनं युक्तम् । सन्देहात्तु तत्प्रणयनं चार्वाकस्याप्यविरुद्धमित्ययुक्तमुक्तमन्यधियो गतेरिति । सुषुप्तादौ चाद्यः प्राणादिः कुतो जायताम् ? जाग्रद्विज्ञानसहकारिणो जाग्रत्प्राणादेरिति चेन्नैकस्माज्जाग्रद्विज्ञानादनन्तरभावी प्राणादिः कालान्तरभावि च प्रबोधज्ञानमित्यस्यासम्भाव्यमानत्वात् । न ह्येकस्मात्सामग्रीविशेषात्क्रमभाविकार्यद्वयसम्भवो नाम । अन्यथा[22] नित्यादप्यक्रमात्क्रमवत्कार्योत्पत्तिप्रसङ्गः । तथा च नाऽक्रमात्क्रमिणो भावा इत्यस्य विरोधः । तस्मात्तत्कालभाविन[24] एव ज्ञानात्प्राणादिप्रभवोऽभ्युपगन्तव्यः । तत्कथं तत्र ज्ञानाभावसिद्धिः ? स्वापसुखसंवेदनं चात्र[27] सुप्रतीतं सुखमहमस्वापमित्युत्तरकालं तत्प्रतीत्यन्यथानुपपत्तेः । न ह्यननुभूते वस्तुनि स्मरणं प्रत्यभिज्ञानं चोपपद्यते । न च तदा स्वापसुखनिरूपणाभावात्तत्संवेदनाभावस्तदहर्जातबालकस्य मुखप्रक्षिप्तस्तन्यजनितसुखसंवेदनेन व्यभिचारात् । न खलु तत्तेनेदमित्थमिति निरूप्यते । न च दुःखाभावात्सुखशब्दप्रयोगोऽत्र[32][33] गौणोऽभावस्य[34] प्रतियोगिभावान्तरस्वभावतया व्यवस्थितेः । इत्यलमतिप्रसङ्गेन[36] ।

---

१ आत्मावस्थायाम् ॥ २ उभयोर्मध्ये ॥ ३ प्रभव ॥ ४ पुरुषः ॥ ५ श्वासोच्छ्वास गृह्णाति ॥ ६ जीवति ॥ ७ जाग्रत् ॥ ८ उभयो श्वासे विशेषश्चेत् ॥ ९ यत सादृश्ये एव सन्देह । अस्ति च सन्देह ॥ १० किंच ॥ ११ सुषुप्तस्य यादृश प्राणा ॥ १२ घटादे ॥ १३ धूम ॥ १४ न जायते ॥ १५ प्राण ॥ १६ सौगतेन ॥ १७ इतरमन्यदर्शनम् ॥ १८ जाग्रद्दशायाम् १९ तथागतस्य ॥ २० किंच ॥ २१ मतस्य ॥ २२ एतस्मात्कार्यद्वयसम्भवश्चेत् ॥ २३ एकरूपात् ॥ २४ स्वापदशा ॥ २५ सुषुप्तावस्थायाम् ॥ २६ किंच ॥ २७ सुषुप्तावस्थायाम् ॥ २८ सुखसंवेदन विना ॥ २९ सुषुप्तावस्थायाम् ॥ ३० दुग्ध ॥ ३१ दुःखाभावे सुखशब्दो न पारमार्थिकसुखस्य वाचक इति हेतो ॥ ३२ सुखमहमस्वापमित्यस्मिन्वाक्ये ॥ ३३ औपचारिक ॥ ३४ दुःखस्य ॥ ३५ दुःखलक्षणाद्भावादपरं सुखलक्षण भावान्तरम् ॥ ३६ स्वापावस्थाया ज्ञानसद्भावसाधनविस्तरेण ॥

यच्चोक्तमनेकान्तज्ञानस्य बाधकसद्भावेन मिथ्यात्वोपपत्तेर्न निःश्रेयससाधकत्वं तदप्युक्तिमात्रं तज्ज्ञानस्यैवाबाधिततया सम्यक्त्वेन वक्ष्यमाणत्वात् । नित्यानित्यत्वयो-
र्विधिप्रतिषेधरूपत्वादभिन्ने धर्मिण्यभाव इत्याद्यप्ययुक्तं प्रतीयमाने वस्तुनि विरोधासिद्धेः । न च येन रूपेण नित्यत्वविधिस्तेनैवानित्यत्वविधिः, येनैकत्र विरोधः
स्यात्—अनुवृत्तव्यावृत्ताकारतया नित्यानित्यत्वविधेरभ्युपगमात् । विभिन्नधर्मनिमित्तयोश्च विधिप्रतिषेधयोर्नैकत्र प्रतिषेधोऽतिप्रसङ्गात् । न चानुवृत्तव्यावृत्ता-
कारयोः सामान्यविशेषरूपतयात्यन्तिको भेदः पूर्वोत्तरकालभाविस्वपर्यायतादात्म्येनावस्थितस्यानुगताकारस्य बाह्याध्यात्मिकार्थेषु प्रत्यक्षप्रतीतौ प्रतिभासनादित्यग्रे
प्रपञ्चयिष्यते । स्वदेशादिषु सत्त्वं परदेशादिष्वसत्त्वं च वस्तुनोऽभ्युपगम्यते एवेतरेतराभावादित्यप्यसमीक्षिताभिधानमितरेतराभावस्य घटादभेदे तद्विनाशे
पटोत्पत्तिप्रसङ्गात् पटाभावस्य विनष्टत्वात् । अथ घटाद्भिन्नोऽसौ तर्हि घटादीनामन्योन्यं भेदो न स्यात् । यथैव हि घटस्य घटाभावाद्भिन्नत्वाद् घटरूपता तथा
पटादेरपि स्यात् । नाप्येषां परस्पराभिन्नानामभावेन भेदः कर्तुं शक्यो भिन्नाभिन्नभेदकरणे तस्याकिञ्चित्करत्वप्रसङ्गात् । नापि भेदव्यवहारः स्वहेतुभ्योऽसाधारणत-
योत्पन्नानां सकलभावानां प्रत्यक्षे प्रतिभासनादेव भेदव्यवहारस्यापि प्रसिद्धेः । प्रतिक्षिप्तश्चेतरेतराभावः प्रागेवेति कृतं प्रयासेन । कार्यान्तरेषु वा कर्तृत्वं न प्रति-
षिध्यते इत्याद्यप्यसारमेकान्तपक्षे कार्यकारित्वस्यैवासम्भवात् । यच्च मुक्तावप्यनेकान्तो न व्यावर्तते तदिष्यते एव । अनेकान्तो हि द्वेधा क्रमानेकान्तोऽक्रमानेकान्तश्च ।
तत्र क्रमानेकान्तापेक्षया य एव प्रागमुक्तः स एवेदानीं मुक्त इति स एव मुक्तः संसारी चेत्यविरोधः । अनेकान्तेऽनेकान्ताभ्युपगमोऽप्यदूषणमेव—प्रमाणपरिच्छे-
द्यस्यानेकधर्माध्यासितवस्तुस्वरूपानेकान्तस्य नयपरिच्छेद्यैकान्ताविनाभावित्वात् । आत्मैकत्वज्ञानादित्यादिग्रन्थस्तु सिद्धसाध्यतया न समाधानमर्हति । न च
गुणपुरुषान्तरविवेकदर्शनं निःश्रेयससाधनं घटते प्रकर्षपर्यन्तावस्थायामप्यात्मनि शरीरेण सहावस्थानान्मिथ्याज्ञानवत् । अथ फलोपभोगकृतोपात्तकर्मक्षयापेक्षं
तत्त्वज्ञानं परनिःश्रेयसस्य साधनं तदनपेक्षं चाऽपरनिःश्रेयसस्येत्युच्यते तदप्युक्तिमात्रं—फलोपभोगस्यौपक्रमिकानौपक्रमिकविकल्पानतिक्रमात् । तस्यौपक्रमिकत्वे
कुतस्तदुपक्रमोऽन्यत्र तपोतिशयात् ।—इति तत्त्वज्ञानं तपोतिशयसहायमन्तर्भूततत्त्वार्थश्रद्धानं परनिःश्रेयसकारणमित्यनिच्छतोऽप्यायातम् । तस्यानौपक्रमिकत्वे तु
सदा सद्भावानुषङ्गः । यच्च स्वरूपे चैतन्यमात्रेऽवस्थानं मोक्ष इत्युक्तं तदयुक्तं—चैतन्यविशेषेऽनन्तज्ञानादिस्वरूपेऽवस्थानस्य मोक्षत्वसाधनात् । न ह्यनन्तज्ञानादि-

१ अनेकान्तसिद्धौ ॥ २ एकस्मिन् ॥ ३ नित्यानित्यात्मकतया ॥ ४ वस ॥ ५ अन्यथा ॥ ६ कर्तृत्वाकर्तृत्वधर्मयोरेकत्र धर्मिणि प्रतिषेधप्रसङ्गात् ॥ ७ अनेकान्तसिद्धौ ॥ ८ घटे पटाभाव पटे घटाभाव इतीतरेतराभाव ॥
९ कपालेषु ॥ १० घटे ॥ ११ घटाभावाद्भिन्नरूपत्वाद् घटरूपता ॥ १२ बस ॥ १३ अभिन्नभेदकरणे पदार्थ एव कृतो भवेद् । भिन्नभेदकरणे पदार्थसाङ्कर्यम् ॥ १४ अभावकृत ॥ १५ इतरेतराभावनिराकरणप्रया-
सेनालम् ॥ १६ अनेकान्त एवेति योऽभावेकान्त (सर्वथा) सोऽनेकान्ते प्रतिषिध्यते। केन ? द्वितीयानेकान्तपदेन । कथम् ? न विद्यते अनेकान्त एवेति एकान्तो यस्यानेकान्तस्य तस्याभ्युपगम ॥१७ अनवस्थादिकम् ॥ १८ यस ।
कथम् ? स चासावनेकान्तश्च तस्य ॥ १९ प्रकृतिसत्त्वादिगुणयोरभेदाद्गुण इत्युक्ते प्रकृतिर्ग्राह्या ॥ २० पुरुषविशेष ॥ २१ भेदभावनाज्ञानम्॥ २२ विवेकदर्शनस्य ॥ २३ असन्मते तु सम्यग्दर्शनादिक परमप्रकर्षप्राप्त
शरीरेण सहावस्थायि न भवति अयोगिचरमसमये एव शरीराभावलक्षणे तत्सद्भावात् ॥ २४ जीवन्मुक्ति ॥ २५ सकामनिर्जरा अकामनिर्जरा चेति ॥ २६ भेद ॥ २७ वर्जने ॥ २८ योगस्य ॥ २९ फलोपभोगश्चेति कृत्वा ॥
३० सदा मुक्तिप्रसङ्ग ॥

कमात्मनोऽस्वरूपं सर्वज्ञत्वादिविरोधात् । प्रधानस्य सर्वज्ञत्वादिस्वरूपं नात्मन इत्यसत्तस्याचेतनत्वेनाकाशादिवत्तद्विरोधात् । ज्ञानादेरप्यचेतनत्वात्प्रधानस्वभ(भा)वत्वाविरोधश्चेत्कुतस्तदचेतनत्वसिद्धिः ? अचेतना ज्ञानादय उत्पत्तिमत्त्वाद् घटादिवदित्यनुमानाच्चेन्न हेतोरनु[2]भवेनानेकान्तात् तस्य चेतनत्वेऽप्युत्पत्तिमत्त्वात् । न चोत्पत्तिमत्त्वमसिद्धं परापेक्षत्वाद्बुद्ध्यादिवत् । परापेक्षोसौ बुद्ध्यध्यवसा[3]यापेक्षत्वात् 'बुद्ध्यध्यवसित[4]मर्थं पुरुष[5]श्चेतयते[6]' इत्यभिधानात् । कालात्ययापदिष्टश्चायं हेतुर्ज्ञानादीनां स्वसंवेदनप्रत्यक्षाच्चेतनत्वप्रसिद्धेरध्यक्षबाधितपक्षानन्तरं प्रयुक्तत्वात् । चेतनसंसर्गात्तेषां चेतनत्वप्रसिद्धिरित्यप्यचर्चिताभिधानं शरीरादेरपि तत्प्रसिद्धिप्रसङ्गात् चेतनप्र(त्व)संसर्गाविशेषात् । शरीराद्यसम्भवी तेषां संसर्गविशेषोस्तीति चेत्स कोन्योऽन्यत्र[7] कथञ्चित्तादात्म्यात् ? तददृष्टकृतकत्वादे[8]ः शरीरादावपि भावात् । ततो नाचेतना ज्ञानादयः स्वसंवेद्यत्वादनुभववत् । स्वसंवेद्यास्ते पर[10]संवेदनान्यथा[11]नुपपत्तेरिति स्वसंवेदनसिद्धिप्रस्तावे प्रतिपादितम् । तथा[12] चात्मस्वभावास्ते चेतनत्वादनुभववत् । सुखमप्यात्मस्वभाव एव मोक्षेऽभिव्यज्यमानत्वाद् ज्ञानवत् । अनात्मस्वभाव[13]त्वे तत्र तदभिव्यक्तिर्न स्याद्दुःखवत् । तथा सुखात्मको मोक्षश्चेतनात्म[14]कत्वे सत्यखिलदुःखविवेका[15]त्मकत्वात्संहृतसकलविकल्पध्यानावस्थावत् । तथानन्तं तत्-आत्मस्वभावत्त्वे सत्य[16]पेतप्र[17]तिवन्धत्वात् । ज्ञानवदेव । अपेतप्रतिवन्धत्वं तु मोहनीयादेः प्रतिवन्धकस्य कर्मणोऽपायात्प्रसिद्धमेव । इति सिद्धमनन्तज्ञानादिचैतन्यविशेषे[18]ऽवस्थानं पुंसो मोक्ष इति ।

ननु[19] पुंस एवानन्तज्ञानादिस्वरूपलाभलक्षणो मोक्ष इत्ययुक्तं स्त्रीणामप्यस्योपपत्तेः । तथा हि । अस्ति स्त्रीणां मोक्षोऽविकलकारणत्वात्पुरुषवत् । तदसद्धेतोरसिद्धेः । तथा हि । मोक्षहेतुर्ज्ञानादिपरमप्रकर्षः स्त्रीषु नास्ति परमप्रकर्षत्वात्सप्तमपृथ्वीगमनकारणापुण्यपरमप्रकर्षवत् । यदि नाम तत्र तत्कारणापुण्यपरमप्रकर्षाभावो, मोक्षहेतोः परमप्रकर्षाभावे किमायातम् ? कार्यकारणव्याप्यव्यापकभावाभावे हि तयो[20]ः कथमन्यस्या[21]भावेऽन्यस्या[22]भावोऽतिप्रसङ्गात्[23] ? इति चेत्सत्यम् । अयं हि तावन्नियमो[24]स्ति । यद्वेदस्य[25] मोक्षहेतुपरमप्रकर्ष[26]स्तद्वेदस्य तत्कारणापुण्यपरमप्रकर्षो[27]स्त्येव[28] । यथा पुंवेदस्य । न च चरमशरीरेण[29] व्यभिचारः पुंवेदसामान्यापेक्षयोक्तेः ।

---

१ दर्शनेन ॥ २ अनुभवस्य ॥ ३ अर्थप्रतिबिम्बन ॥ ४ निश्चितम् ॥ ५ आत्मा ॥ ६ अनुभवति ॥ ७ विना ॥ ८ पुरुषादृष्टकृत अन्य संसर्गविशेषो ज्ञानादिभिरात्मनोऽस्तीत्युक्ते आह ॥ ९ संसर्गस्य ॥ १० परादि पर ॥ ११ ज्ञानस्य स्वसंविदितत्वाभावे ॥ १२ चेतनत्वसिद्धितया ॥ १३ सुखस्य ॥ १४ अखिलदुःखविवेकात्मकत्वादित्युक्ते घटेन व्यभिचारस्तत्परिहारार्थं चेतनात्मकत्वे सतीत्युक्तम् ॥ १५ चेतनात्मकत्वादित्युच्यमाने खण्ड्यमानानन्तरेण व्यभिचारस्तत्परिहारार्थमखिलदुःखविवेकात्मकत्वादित्युक्तम् ॥ १६ आत्मस्वभावत्वादित्युच्यमाने दुःखेन व्यभिचारस्तत्परिहारार्थमपेतप्रतिवन्धत्वादित्युक्तम् ॥ १७ अपेतप्रतिवन्धत्वादित्युच्यमाने प्रदीपेन व्यभिचारस्तत्परिहारार्थमात्मस्वभावत्वे सतीत्युक्तम् ॥ १८ लक्षणम् ॥ १९ श्वेतपट ॥ २० मोक्षहेतुज्ञानादिपरमप्रकर्षतत्कारणापुण्यपरमप्रकर्षयो ॥ २१ अकारणस्याव्यापकस्य वा ॥ २२ अकार्यस्याव्यापकस्य वा ॥ २३ घटाभावे त्रैलोक्याभावो भवेत् ॥ २४ अविनाभाव ॥ २५ पुंसि सप्तमपृथ्वीगमनकारणापुण्यप्रकर्षोस्ति मोक्षहेतुज्ञानादिपरमप्रकर्षत्वात् ॥ २६ व्याप्यो हेतु ॥ २७ साध्यो व्यापक ॥ २८ इति पुंसि अनयोर्व्याप्यव्यापकभाव सिद्ध सन् स्त्रीषु व्यापकाभावे व्याप्याभाव साधयत्येवेति भाव ॥ २९ आत्मना ॥

विपरीतस्तु नियमो[2] न सम्भवत्येव नपुंसकवेदे तत्कारणापुण्यपरमप्रकर्षे सत्यप्यन्यस्यानभ्युपगमात् पुंस्यभ्युपगमाच्च, अनित्यत्वस्य[3] प्रयत्नानन्तरीयकत्वेतरत्व-वत्। ततश्च[4] स्त्रीवेदस्यापि यदि मोक्षहेतुः परमप्रकर्षः स्यात्तदा तदभ्युपगमादेवापरोप्यनिष्टोऽवश्यमापद्यते। अन्यथा[5] पुंस्यपि न स्यात्। सिद्धे च प्रतिबन्ध-द्वयाभावेपि[6] कृतिकोदयादिवदुक्तप्रकर्षयोरविनाभावे स्त्रीणां तत्कारणापुण्यपरमप्रकर्षप्रतिषेधेन मोक्षहेतुपरमप्रकर्षो निषिध्यते। न च 'नपुंसकस्य मोक्षहेतुपरमप्र-कर्षोस्ति[7] तत्कारणापुण्यपरमप्रकर्षसद्भावात्पुंवत्। पुंसो वा नास्त्यत[8] एव नपुंसकवत्। तत्कारणाऽपुण्यपरमप्रकर्षो वा नपुंसके नास्ति परमप्रकर्षत्वात्स्त्रीवदित्य-प्यनिष्टापत्तिरुभयप्रसिद्धाद्धेतोरुभयप्रसिद्धस्य[9] निषेधेनोभयोस्तुल्यत्वात्[10] [11]' इत्यभिधातव्यम्–उभयाभिप्रेतागमेन वाधनात्[12]। स्त्रीणां तु तत्कारणापुण्यपरमप्रकर्ष परा[13]भ्युपगतेनैव मोक्षहेतुपरमप्रकर्षेणापाद्य तत्प्रतिषेधेन तद्धेतुरेव प्रतिषिध्यत इत्यस्ति विशेषः[14]। यद्वा[15] नोक्तानुमाने तत्कारणापुण्यपरमप्रकर्षाभावाद्धेतोर्मोक्षहेतु[16]-परमप्रकर्षः स्त्रीषु निषिध्यतेऽपि तु परमप्रकर्षत्वाद् दृष्टान्ते दृष्टसाध्यव्याप्तिकात्[17]। न चात्र[18] केनचिद्व्यभिचारः स्त्रीसम्बन्धिनः कस्यचित्परमप्रकर्षस्यासम्भवात्। मायापरमप्रकर्षोस्तीति चेन्न स्त्रीणां मायाबाहुल्यमात्रस्यैवागमे[19] प्रसिद्धेः। अन्यथा[20] पुंवत्सप्तमपृथिवीगमनानुषङ्गः। मायापरमप्रकर्षादन्यत्वे सतीति विशेषणाद्वा[21] न दोषः[22]। तत्र ज्ञानादिपरमप्रकर्षो मोक्षहेतुस्तत्रास्तीत्यसिद्धो[23] हेतुः[24]। न खलु ज्ञानादयो यथा पुरुषे प्रकृष्यमाणाः प्रमाणतः प्रतीयन्ते तथा स्त्रीष्वपि। अन्यथा[25] नपुंसके ते तथा स्युः। तथा[26] चास्याप्यपवर्गप्रसङ्गः। संयमस्तु[27] तद्धेतुस्तत्रासम्भाव्य एव। तथा हि। स्त्रीणां संयमो न मोक्षहेतुः–नियमेनर्द्धिविशेषाहेतुत्वान्यथानु[28]-पपत्तेः। यत्र हि संयमः सांसारिकलब्धीनाम[29]प्यहेतुस्तत्रासौ कथं निःशेषकर्मविप्रमोक्षलक्षणमोक्षहेतुः स्यात्? नियमेन च स्त्रीणामेव ऋद्धिविशेषहेतुः संयमो नेष्यते, न तु पुरुषाणाम्। यदि हि नियमेन लब्धिविशेषस्याजनकः संयमः क्वचिदन्यत्राविवादास्पदीभूते मोक्षहेतुः प्रसिद्ध्येत् तदा तद्दृष्टान्तावष्टम्भेनात्राप्यसौ[30] तथा प्रत्येतुं शक्येत, नान्यथातिप्रसङ्गात्[31]। संयममात्रं तु सदप्यासां न तद्धेतुस्तिर्यग्गृहस्थादिसंयमवत्। सचेलसंयमत्वाच्च नासौ तद्धेतुर्गृहस्थसंयमवत्। न चायमसिद्धो हेतुः। न

---

१ मोक्षहेतुपरमप्रकर्षो व्यापक साध्य, तत्कारणापुण्यपरमप्रकर्षो व्याप्यो हेतुरिति ॥ २ अविनाभाव ॥ ३ शब्द प्रयत्नानन्तरीयक अनित्यत्वादित्यत्रानित्यत्वस्य व्याप्यरूपस्य हेतोर्यथा प्रयत्नानन्तरीयकत्वम् ॥ ४ नियम सिद्धो यत ॥ ५ मोक्षहेतुपरमप्रकर्षसद्भावेपि अपरोऽनिष्टो नोपपद्यते चेत् ॥ ६ तादात्म्यतदुत्पत्तिलक्षणे द्वे ॥ ७ मोक्षहेतुपरमप्रकर्षसप्तमपृथ्वीगमनकारणापुण्यपरमप्रकर्षलक्षणयो ॥ ८ मोक्षहेतुपरमप्रकर्ष ॥ ९ साध्यस्य ॥ १० वादिप्रतिवादिनो ॥ ११ सितपटप्रसिद्धस्य स्त्रीनिर्वाणस्यास्माभि प्रतिषेधादस्मत्प्रसिद्धस्य सितपटेन प्रतिषेधात्। इति तुल्यत्वम् ॥ १२ सितपटपक्षस्य ॥ १३ पर सितपट ॥ १४ इति कथ तुल्यत्वमुभयो ? ॥ १५ प्रागुक्तस्य परिहारान्तरे यद्वाशब्द ॥ १६ व्यापकाभावाद् व्याप्याभाव न कुर्म इत्यर्थ ॥ १७ यो य परमप्रकर्ष स स स्त्रीषु नास्तीति ॥ १८ स्त्रीषु मोक्षप्रतिषेधे ॥ १९ प्राचुर्यमात्र, न तु परमप्रकर्ष ॥ २० मायापरमप्रकर्षे स्त्रीष्वस्ति यदि ॥ २१ परमप्रकर्षत्वे ॥ २२ व्यभिचारलक्षण ॥ २३ परमप्रकर्षत्वादित्यत्रानुमाने ॥ २४ अविकलकारणत्वादिति ॥ २५ स्त्रीषु ज्ञानादय प्रकृष्यमाणाश्चेत्तर्हि ॥ २६ स्त्रीणा मोक्षहेतुसयमो विद्यते चेत् ॥ २७ तु पुन ॥ २८ स्त्रीणा मोक्षहेतुसयमो विद्यते चेत्तर्हि ॥ २९ ऋद्धीनाम् ॥ ३० दृष्टान्तत्वमन्तरेण ॥ ३१ गृहस्थस्यापि मोक्ष स्यात् स्वसयमात् ॥

हि स्त्रीणां निर्वस्त्रः संयमो दृष्टः प्रवचनप्रतिपादितो वा। न च प्रवचनाभावेपि मोक्षसुखाकाङ्क्षया तासां वस्त्रत्यागो युक्तोऽर्हत्प्रणीतागमोल्लङ्घनेन मिथ्यात्वाराधनाप्राप्तेः। यदि पुनर्नृणामचेलोऽसौ तद्धेतुः स्त्रीणां तु सचेलस्तर्हि कारणभेदान्मुक्तेरप्यनुषज्येत भेदः स्वर्गादिवत्। देशसंयमिनश्चैवं मुक्तिः प्रसज्यते। तथा च लिङ्गग्रहणमनर्थकम्। सचेलसंयमश्च मुक्तिहेतुरिति कुतोऽवगतम्? स्वागमाच्चेन्नास्यास्मान् प्रत्यागमाभासत्वाच्छ्वेतो यज्ञानुष्ठानागमवत्। स्त्रियो न मोक्षहेतुसंयमवत्यः साधूनामवन्द्यत्वाद्गृहस्थवत्। न चात्रासिद्धो हेतुः 'वरिससयदिक्खियाए अज्जाए अज्ज दिक्खिओ साहू। अभिगमणवंदणणमंसणविणएण सो पुज्जो' इत्यभिधानात्। बाह्याभ्यन्तरपरिग्रहवत्त्वाच्च न तास्तद्वत्यस्तद्वत्। न चायमसिद्धो हेतुः। प्रत्यक्षेणावगतो हि वस्त्रग्रहणादिबाह्यपरिग्रहोऽभ्यन्तरं स्वशरीरानुरागादिपरिग्रहमनुमापयति। न च शरीरोष्मणा वातकायिकादिजन्तूपघातनिवारणार्थं स्वशरीरानुरागाद्यभावेप्यसावुपादीयते इत्यभिधेयं पुंसामाचेलक्यव्रतस्य हिंसात्वानुषङ्गात्। तथा चार्हदादयो मुक्तिभाजस्तदुपदेष्टारो वा न स्युः। किन्तु सवस्त्रा एव गृहस्था मुक्तिभाजो भवेयुः। न चाचेलक्यं नेष्यते 'आचेलक्कुद्देसिय सेज्जाहररायपिंडकिदिकम्म' इत्यादेः पुरुषं प्रति दशविधस्य स्थितिकल्पस्य मध्ये तदुपदेशात्। किञ्च गृहीतेपि वस्त्रे जन्तूपघातस्तदवस्थः—तेनानावृतपाणिपादादिप्रदेशोष्मणा तदुपघातस्य परिहर्त्तुमशक्तेः, वस्त्रस्य यूकालिक्षाद्यनेकजन्तुसम्मूर्च्छनाधिकरणत्वाच्च। तथाविधस्यापि स्वीकरणे मूर्द्धजानां लुञ्चनादिक्रिया न स्यात्। वस्त्राकुञ्चनादेर्जातवातेनाकाशप्रदेशावस्थितजन्तूपपीडनाच्च व्यंजनादिवातवत्। किञ्चैवमनेकप्राण्युपघातनिवारणार्थमविहारोप्यनुष्ठेयो वस्त्रग्रहणवदविशेषात्। प्रयत्नेन गच्छतो जन्तूपघातेप्यहिंसा निश्चेलेपि समा। यथा च यज्ञानुष्ठानं पशुहिंसाङ्गत्वेनाऽश्रेयस्करत्वात्त्याज्यं तथा वस्त्रग्रहणमप्यविशेषात्। एतेन संयमोपकरणार्थं तदित्यपि निरस्तम्। किञ्च बाह्याभ्यन्तरपरिग्रहपरित्यागः संयमः। स च याचनसीवनप्रक्षालनशोषणनिक्षेपादानचौरहरणादिमनःसंक्षोभकारिणि वस्त्रे गृहीते कथं स्यात्? प्रत्युत संयमोपघातकमेव तत्स्याद्बाह्याभ्यन्तरनैर्ग्रन्थ्यप्रतिपन्थित्वात्। ह्रीशीतार्त्तिनिवृत्त्यर्थं वस्त्रादि यदि गृह्यते। कामिन्यादिस्तथा किन्न कामपीडादिशान्तये। १। येन येन विना पीडा पुंसां समुपजायते। तत्तत्सर्वमुपादेयं लावकादिपलादिकम्। २। वस्त्रखण्डे

---

१ निर्वस्त्रसयम ॥ २ अदृष्टलक्षणकारणभेदाद्यथा स्वर्गादि प्रथमद्वितीयादिप्रकारेण भेद ॥ ३ सचेलसयमवत्स्त्रीमुक्तिप्रकारेण ॥ ४ निर्ग्रन्थतालक्षणम् ॥ ५ सितपटस्य ॥ ६ महेश्वराय ॥ ७ अनुमाने ॥ ८ वर्षशतदीक्षिताया आर्यिकाया अद्य दीक्षित साधु। अभिगमनवन्दनानमस्कारेण विनयेन स पूज्य ॥ ९ सम्मुखगमन ॥ १० गुरुभक्तिपूर्वक ॥ ११ नमस्कार ॥ १२ परेण ॥ १३ आचेलक्यौद्देशिकशय्याधरराजकीयपिण्डोक्षाकृतिकर्मव्रतारोपणयोग्यत्व ज्येष्ठता प्रतिक्रमण मासिकवासिता स्थितिकल्पो योगश्च वार्षिको दशम ॥ १४ अनुप्रेक्षासयमस्य ॥ १५ यूकाद्यनेकजन्तुसम्मूर्छनाधिकरणत्वाविशेषात्। एषा निवारणार्थम् ॥ १६ प्रसारणाच्च ॥ १७ व्यञ्जक ॥ १८ जन्तूपघातपरिहारार्थं वस्त्रस्योपादानप्रकारेण ॥ १९ अगमनम् ॥ २० वस्त्रस्य जन्तूपघातसमर्थनपरेण ग्रन्थेन ॥ २१ विशेषत ॥ २२ विरोधित्वात् ॥ २३ ताम्बूलादिश्च ॥ २४ वस्त्रग्रहणप्रकारेण ॥ २५ गृह्यते ॥ २६ यदि तर्हीति शेष ॥ २७ लावक पक्षिविशेष। पलमासम् ॥ २८ उपादेयम् ॥

गृहीतेपि विरक्तो यदि तत्त्वतः । स्त्रीमात्रेपि तथा किन्न तुल्याक्षेपसमाधितः ।[1] ३ । नापि तन्वीमनःक्षोभनिवृत्त्यर्थं तदादृतम् । तद्वाञ्छाऽहेतुकत्वेन तन्निषेधस्य सम्भवात् । ४ । चक्षुरुत्पाटनं पट्टबन्धनं च प्रसज्यते । लोचनादेस्तदुत्पत्तौ निमित्तत्वाविशेषतः । ५ । चलचित्ताङ्गना काचित्संयतं च तपस्विनम् । यदीच्छति भ्रातृवत्किं दोषस्तस्य मतो नृणाम् । ६ । बीभत्सं मलिनं साधुं दृष्ट्वा शवशरीरवत् । अङ्गना नैव रज्यन्ते विरज्यन्ते तु तत्त्वतः । ७ । स्त्रीपरीषहभग्नैश्च वस्त्ररागैश्च विग्रहे । वस्त्रमादीयते यस्मात्सिद्धं ग्रन्थद्वयं ततः । ८ । न चैवं जन्तुरक्षागण्डादिप्रतीकारार्थं पिच्छौषधादौ गृह्यमाणेप्ययं दोषः समानस्त्रिचतुरपिच्छग्रहणस्य जन्तुरक्षार्थत्वात् शरीरे ममेदम्भावाऽसूचकत्वाच्च औषधस्यापि प्रतिपन्नसामर्थ्यस्य गण्डादेर्व्यावृत्तिहेतुत्वान्नाद्यविरोधित्वाच्च, वस्त्रे तु विपर्ययात्, परमनैर्ग्रन्थ्यसिद्ध्यर्थं पिच्छस्याप्यग्रहणाच्चौषधवत् । पिण्डौषध्यादयो हि सिद्धान्तानुसारेणोद्गमादिदोषरहिता रत्नत्रयाराधनहेतवो गृह्यमाणा न कस्यापि मोक्षहेतोर्हन्तारः । न हि तद्ग्रहणे रागादयोन्तरङ्गा वहिरङ्गा वा स्वभूषावेषादयो ग्रन्था जायन्ते । अतस्ते मोक्षहेतोरुपकर्त्तार एव । पिण्डग्रहणमन्तरेण ह्यपूर्णकालेपि विपत्तेरापत्तेरात्मघातित्वं स्यात्, न तु वस्त्रे । षष्ठाष्टमादिक्रमेण च मुमुक्षुभिः पिण्डोपि त्यज्यते । न तु स्त्रीभिः कदाचिद्वस्त्रम् । अथ वस्त्रादन्यस्याखिलस्य त्यागात्साकल्येनासां बाह्यं नैर्ग्रन्थ्यं तर्हि लोभादन्यकषायत्यागादेवाबाह्यमपि स्यात् । न च गृहीतेपि वस्त्रे ममेदम्भावस्याभावात्तदवतिष्ठते—विरोधात् । बुद्धिपूर्वकं हि हस्तेन पतितवस्त्रमादाय परिदधानोपि तन्मूर्च्छारहित इति कश्चेतनः श्रद्दधीत ? तन्वीमाश्लिष्यतोपि तद्रहितत्वप्रसङ्गात् । ततो वस्त्रग्रहणे बाह्याभ्यन्तरपरिग्रहप्राप्तेर्नैर्ग्रन्थ्यद्वयासम्भवान्न स्त्रीणां मोक्षः । स हि बाह्याभ्यन्तरकारणजन्यः कार्यत्वान्मापपाकादिवत् । तच्च बाह्यमाभ्यन्तरं च कारणमाकिञ्चन्यम् । तदभावे कथं स स्यात् ? इति परहेतोरसिद्धेर्नानुमानात्स्त्रीमुक्तिसिद्धिः । नाप्यागमात्तन्मुक्तिप्रतिपादकस्यास्याभावात् । 'पुंवेदं वेदंतो जे पुरिसा खवगसेढिमारूढा । सेसोदयेण वि तहा झाणुवजुत्ता य ते दु सिज्झंति' इत्यादेरप्यागमस्य स्त्रीमुक्तिप्रतिपादकत्वाभावः । स हि पुंवेदोदयवत् शेषवेदोदयेनापि पुंसामेवापवर्गावेदक उभयत्रापि पुरुषा इत्यभिसम्बन्धात् । उदयश्च भावस्यैव न द्रव्यस्य । स्त्रीत्वान्यथानुपपत्तेश्चासां न मुक्तिः । आगमे हि जघन्येन सप्ताष्टभिर्भवैरुत्कर्षेण द्वित्रैर्जीवस्य रत्नत्रयाराधकस्य मुक्तिरुक्ता । यदा चास्य सम्यग्दर्शनारा-

१ रागादिसद्भावे सत्येव स्त्रीपरिग्रह इत्याक्षेपो वस्त्रेपि समान इति समाधानम् । एव यदि वस्त्रमात्रे गृहीते न रागस्तर्हि स्त्रीमात्रपरिग्रहेपि न राग ॥ २ स्वस्य ॥ ३ श्रोत्रादेश्च ॥ ४ यथा भ्रातृसमानत्व वनितायाम् । कुत एतत्तस्याम् ? इच्छारहितत्वात्तस्य तपस्विन ॥ ५ शरीरे ॥ ६ कारणात् ॥ ७ वस्त्ररागलक्षणवाह्याभ्यन्तरपरिग्रह ॥ ८ तत इत्यय शब्द श्लोकादौ द्रष्टव्यस्तेनायमर्थ वस्त्रस्वीकरणे अपर प्रयोजन नास्ति यतस्तत ॥ ९ वस्त्रप्रकारेण ॥ १० गण्डो रोगविशेष ॥ ११ मूर्च्छा— ॥ १२ नैर्ग्रन्थ्य— ॥ १३ जन्तुरक्षार्थाभावान्ममेदम्भावसूचकत्वाद् गण्डाद्यव्यावृत्तिहेतुत्वाद् नाद्यविरोधित्वाच्च ॥ १४ किंच ॥ १५ औषधादेर्यथाऽग्रहणम् ॥ १६ सम्यग्दर्शनादे ॥ १७ अलङ्कार— ॥ १८ मण्डन— ॥ १९ देशनैयत्येन वस्त्रपरिधानादिलक्षणो वेष ॥ २० अगृह्यमाणे आत्मघातित्व स्यादिति शेष ॥ २१ तत्=रागादि ॥ २२ वाद्यमभ्यादिकमन्तरा शक्तिरेव यथा न हेतु ॥ २३ सितपटप्रयुक्तस्य अविकलकारणत्वादित्यस्य ॥ २४ अनुभवन्त ॥ २५ नपुसकस्त्रीवेदोदयेनापि ॥ २६ ध्यानोपयुक्ता ॥ २७ पुरुषा ॥ २८ मुक्तिसद्भावे सति ॥

धकत्वं, तत्प्रभृति सर्वासु स्त्रीपूत्पत्तिरेव न सम्भवतीति कथं स्त्रीमुक्तिसिद्धिः । ननु चानादिमिथ्यादृष्टिरपि जीवः पूर्वभवनिर्जीर्णाशुभकर्मा प्रथमतरमेव रत्नत्रय-माराध्य भरतपुत्रादिवन्मुक्तिमासादयत्यतः स्त्रीत्वेनोत्पन्नस्यापि मुक्तिरविरुद्धेति तदप्ययुक्तं–पूर्वं निर्जीर्णाशुभकर्मणः स्त्रीवेदेनोत्पत्तेरसम्भवात्तस्याप्यशुभकर्मत्वेन निर्जीर्णत्वात् । कथं पुनः स्त्रीवेदस्याशुभकर्मत्वमिति चेत्सम्यग्दर्शनोपेतस्य तत्त्वेनोत्पत्तेरयोगात् । ततो[1] नास्ति स्त्रीणां मोक्षः पुरुषादन्यत्वान्नपुंसकवत् । अन्य[2]-थाऽस्याप्यसौ[3] स्यात् । न चैतद्वाच्यं[4] 'नास्ति पुंसो मोक्षः स्त्रीतोन्यत्वान्नपुंसकवत्'–उभयवादिसम्मतागमेन बाधितत्वात्, भवदागमस्य चास्मान्प्रति अप्रमाण-त्वात् । तथा स्त्रीणां मोक्षो नास्त्युत्कृष्टध्यानफलत्वात्सप्तमपृथ्वीगमनवत् । अतोपि न तासां मुक्तिसिद्धिः । ततोऽनन्तचतुष्टयस्वरूपलाभलक्षणो मोक्षः पुरुषस्यैवेति प्रेक्षादक्षैः प्रतिपत्तव्यम् ।

मुख्यं[5] सांव्यवहारिकं च गदितं भानुप्रदीपोपमं प्रत्यक्षं विशदस्वरूपनियतं साकल्यवैकल्यतः । निर्बाधं निर्यतस्वहेतुजनितं[6] मिथ्येतरैः[7] कल्पितं तल्लक्ष्मेति विचारचारुधिषणैश्चेतस्यलं चिन्त्यताम्[8] ॥ १ ॥

इति श्रीप्रभाचन्द्रविरचिते प्रमेयकमलमार्त्तण्डे परीक्षामुखालङ्कारे द्वितीयः परिच्छेदः समाप्तः ॥ २ ॥

---

१ दिव्यरूपादिपु ॥ २ अन्यथानुपपत्ति सिद्धा यत ॥ ३ स्त्रीणा मोक्षश्चेत् ॥ ४ पुरुषादन्यत्वादित्यनुमान न वक्तव्यमस्मदागमेन बाधितत्वादिति सितपटेनोक्त त प्रत्याह सूरि ॥ ५ अनेन पद्येन परिच्छेदार्थमुपसहर-न्नाह ॥ ६ सामग्रीविशेषेत्यादिकमिन्द्रियानिन्द्रिय च ॥ ७ नैयायिकादिभि ॥ ८ रूतम् ॥



श्रीः ।

## अथ तृतीयः परिच्छेदः ॥

अथेदानीं परोक्षप्रमाणस्वरूपनिरूपणाय "परोक्षमितरत्" इत्याह । प्रतिपादितविशदस्वरूपविज्ञानाद्यदन्यदऽविशदस्वरूपं विज्ञानं तत्परोक्षम् । तथा च प्रयोगः । अविशदज्ञानात्मकं परोक्षं[1] परोक्षत्वात् । यन्नाऽविशदज्ञानात्मकं तन्न परोक्षं, यथा मुख्येतरप्रत्यक्षम् । परोक्षं चेदं वक्ष्यमाणं विज्ञानम् । तस्मादविशदज्ञानात्मकमिति । तन्निमित्त[2]प्रकार[3]प्रकाशनाय प्रत्यक्षेत्याद्याह । प्रत्यक्षा[4]दिनिमित्तं यस्य, स्मृत्यादयो भेदा यस्य तत्तथोक्तम् ।

तत्र स्मृतेस्तावत्संस्कारेत्यादिना कारणस्वरूपे निरूपयति । संस्कारः सांव्यवहारिकप्रत्यक्षभेदो धारणा । तस्योद्बोधः[5] प्रबोधः[6] । स निबन्धनं यस्यास्तदित्याकारो यस्याः सा तथोक्ता स्मृतिः । विनेयानां सुखावबोधार्थं दृष्टान्तद्वारेण तत्स्वरूपं निरूपयति । यथेत्युदाहरणप्रदर्शने । स देवदत्त इति । एवंप्रकारं तच्छब्दपरामृष्टं यद्विज्ञानं तत्सर्वं स्मृतिरित्यवगन्तव्यम् । न चासावप्रमाणं संवादकत्वात् । यत्संवादकं तत्प्रमाणं यथा प्रत्यक्षादि । संवादिका च स्मृतिस्तस्मात्प्रमाणम् । ननु कोयं स्मृतिशब्दवाच्योर्थः ? ज्ञानमात्रमनुभूतार्थविषयं वा विज्ञानम् ? प्रथमपक्षे प्रत्यक्षादेरपि स्मृतिशब्दवाच्यत्वानुषङ्गः । तथा च कस्य दृष्टान्तता ? न खलु तदेव तस्यैव दृष्टान्तो भवति । द्वितीयपक्षेपि देवदत्तानुभूतार्थे यज्ञदत्तादिज्ञानस्य स्मृतिरूपताप्रसङ्गः । अथ येनैव यदेव पूर्वमनुभूतं वस्तु पुनः कालान्तरे तस्यैव तत्रैवोपजायमानं ज्ञानं स्मृतिरित्युच्यते । नन्वनुभूते जायमानमित्येतत्केन प्रतीयताम् ? न तावदनुभवेन तत्काले स्मृतेरेवासत्त्वात् । न चासती विषयीकर्त्तुं शक्या । न चाविषयीकृता तत्रोपजायते इत्यधिगतिः । न चानुभवकालेऽर्थस्यानुभूततास्ति तदा तस्यानुभूयमानत्वात् । तथा चानुभूयमाने स्मृतिरिति स्यात् । अथानुभूते स्मृतिरित्येतत्स्मृतिरेव प्रतिपद्यते, न—अनयातीतानुभवार्थयोरविषयीकरणे तथा प्रतीत्ययोगात् । तद्विषयीकरणे वा निखिलातीतविषयीकरणप्रसङ्गोऽविशेषात् । यदि चानुभूतता प्रत्यक्षगम्या स्यात्तदा स्मृतिरपि जानीयादहमनुभूते समुत्पन्नेति—अनुभवानुसारित्वात्तस्याः । न चासौ प्रत्यक्षगम्येत्युक्तम् । इत्यप्यसमीक्षिताभिधानं—स्मृतिशब्दवाच्यार्थस्य प्रागेव प्ररूपितत्वात् । तदित्याकारानुभूतार्थविषया हि प्रतीतिः स्मृतिरित्युच्यते । ननु चोक्तमनुभूते स्मृतिरित्येतन्न स्मृति-

---

१ स्मृतिप्रत्यभिज्ञानतर्कानुमानागमविशेषा स्वभाविनो धर्मिण प्रसिद्धा । तत्र परोक्षत्व सामान्यरूप वादिप्रतिवादिनो प्रसिद्धस्वभाव –तेन वस्तुनोऽनेकधर्मात्मकत्वात् । तत्र स्थितो द्वितीयोऽविशदज्ञानात्मकोऽप्रसिद्ध साध्यते इति विशेष स्वभाविन ( स्वभावस्वभाविनोर्भेदात् ) सामान्यस्वभाव ब्रुवता दोषाभावात् ॥ २ कारण ॥ ३ भेद ॥ ४ स्मृति प्रत्यक्षपूर्विका । प्रत्यभिज्ञान प्रत्यक्षस्मरणपूर्वकम् । तर्क प्रत्यक्षस्मरणप्रत्यभिज्ञानपूर्वक । अनुमान प्रत्यक्षस्मरणप्रत्यभिज्ञानतर्कपूर्वकम् । आगमस्तु श्रावणाध्यक्षसङ्केतस्मृतिपूर्वक ॥ ५ संस्कारस्य कारणमाद्य देवदत्तदर्शनम् । उद्बोधस्य कारण पाश्चात्य तत्सदृशतत्कार्यादिदर्शनम् ॥ ६ प्राकट्यम् ॥ ७ सौगतो वक्ति ॥ ८ अनुत्पन्नत्वेन ॥ ९ अनुभूतेऽर्थे ॥ १० अनुभवकालेऽर्थस्यानुभूयमानत्वे च ॥ ११ अनुभवश्चार्थश्च अनुभवार्थौ । अतीतौ च तावनुभवार्थौ च ॥ १२ अतीतत्वस्य ॥ १३ कर्त्ता ॥

प्रत्यक्षाभ्यां प्रतीयते । तदप्यपेशलं मतिज्ञानापेक्षेणात्मनाऽनुभूयमानोऽनुभूतार्थविषयतायाः स्मृतिप्रत्यक्षाकारयोश्चानुभवसम्भवाच्चित्राकारप्रतीतिवत् चित्रज्ञानेन । यथा चाशक्यविवेचनत्वाद्युगपच्चित्राकारतैकस्याविरुद्धा तथा क्रमेणाप्यवग्रहेहावायधारणास्मृत्यादिचित्रस्वभावता । न च प्रत्यक्षेणानुभूयमानतानुभवे तदेवार्थेऽनुभूतताया अप्यनुभवोऽनुपज्यते स्मृतिविशेषणापेक्षत्वात्तत्र तत्प्रतीतेः । नीलाद्याकारविशेषणापेक्षया ज्ञाने चित्रप्रतिपत्तिवत् । न चानुभूतार्थविषयत्वे स्मृतेर्गृहीतग्राहित्वेनाऽप्रामाण्यं रि(वि)च्छित्तिविशेषसम्भवात् । न खलु यथा प्रत्यक्षे विशदाकारतया वस्तुप्रतिभासस्तथैव स्मृतौ तत्र तस्या वैशद्याऽप्रतीतेः । पुनः पुनर्भावयतो वैशद्यप्रतीतिस्तु भावनाज्ञानम् । तच्च तद्रूपतया भ्रान्तमेव स्वप्नादिज्ञानवत् । तथाप्यनुभूतार्थविषयत्वमात्रेणास्याः प्रामाण्यानभ्युपगमेऽनुमानेनाधिगतेऽग्नौ यत्प्रत्यक्षं तदप्यप्रमाणं स्यात् । असत्यतीतेर्थे प्रवर्त्तमानत्वात्तदप्रामाण्ये प्रत्यक्षस्यापि तत्प्रसङ्गस्तदर्थस्यापि तत्कालेऽसत्त्वात् । तज्जन्मादेस्तत्रास्य प्रामाण्ये स्मरणेपि तदस्तु । निराकृतं चार्थजन्मादि ज्ञानस्य प्रागेवेति कृतं प्रयासेन । न चाविसंवादकत्वं स्मृतेरसिद्धं स्वयं स्थापितनिक्षेपादौ तद्गृहीतार्थे प्राप्तिप्रमाणान्तरप्रवृत्तिलक्षणाविसंवादप्रतीतेः । यत्र तु विसंवादः सा स्मृत्याभासा प्रत्यक्षाभासवत् । विसंवादकत्वे चास्याः कथमनुमानप्रवृत्तिः? सम्बन्धस्यातोऽप्रसिद्धेः । न च सम्बन्धस्मृतिमन्तरेणानुमानमुदेत्यतिप्रसङ्गात् । किञ्च सम्बन्धाभावात्तस्याः विसंवादकत्वं कल्पितसम्बन्धविषयत्वाद्वा सतोप्यस्याऽनया विषयीकर्त्तुमशक्यत्वाद्वा? प्रथमपक्षे कुतोनुमानप्रवृत्तिः? अन्यथा यतः कुतश्चित्सम्बन्धरहितादपि यत्र क्वचिदनुमानं स्यात् । कल्पितसम्बन्धविषयत्वेनास्याः विसंवादित्वे दृश्यप्राप्यैकत्वे प्राप्यविकल्प्यैकत्वे च प्रत्यक्षानुमानयोरविसंवादो न स्यात् । तत्सम्बन्धस्य कल्पितत्वे चानुमानमप्येवंविधमेव स्यात् । तथा च कथमतोऽभीष्टतत्त्वसिद्धिः? अथ सन्नपि सम्बन्धोनया विषयीकर्त्तुं न शक्यते, यत्तु विषयीक्रियते सामान्यं तस्याऽसत्त्वात्स्मृतेर्विसंवादित्वम् । तदेतदनुमानेपि समानम् । अध्यवसितस्वलक्षणाव्यभिचारित्वं स्मृतावपि । किञ्च लिङ्गलिङ्गिसम्बन्धः सत्तामात्रेणानुमानप्रवृत्तिहेतुस्तद्दर्शनात्तत्स्मरणाद्वा? तत्राद्यविकल्पे नालिकेरद्वीपायातस्याप्रतिपन्नाग्निधूमसम्बन्धस्यापि धूमदर्शनादग्निप्रतिपत्तिः स्यात् । न चाविज्ञातः सम्बन्धोस्त्युपलम्भनिबन्धनत्वात्सद्व्यवहारस्यान्यथातिप्रसङ्गात् । तद्दर्शनमात्रेण तत्प्रवृत्तौ वा-

---

१ प्रत्यक्षस्मरणयो २ विज्ञानस्य ॥ ३ आदिना प्रत्यभिज्ञानादि ॥ ४ एकस्यात्मनोऽविरुद्धा ॥ ५ उत्तरकालमात्मन ॥ ६ तमेव दर्शयति ॥७वैशद्यमेव नास्ति कुत परिच्छित्तिविशेष इत्यभिप्राय वक्ति बौद्ध ॥८अवग्रहादिभेदेनानुभवतो नरस्य ॥ ९ क्षणिकत्वात् ॥ १० आदिना ताद्रूप्यम् ॥ ११ अर्थजन्मादिनिराकरणप्रयासेन ॥ १२ प्रत्यक्ष ॥१३ विस्मृतसम्बन्धस्यापि अनुमानोत्पत्तिप्रसङ्गात् ॥१४ दृष्टान्तसाध्यसाधनयो ॥१५सम्बन्धाभावे अनुमानप्रवृत्तिर्यदि स्यात् ॥ १६ अर्थालिङ्गस्थानीयात् ॥ १७ यदेव दृष्ट जलस्वलक्षण तदेव प्राप्तमिति ॥ १८ अनुमानलक्षणो विकल्प ।विकल्पस्य विषयो विकल्प्यो यो जलादि । पूर्व विकल्प्य पश्चात्प्राप्य इति । कथम् विवादापन्नो देश प्रवृत्तस्य स्नानादिमान् जलत्वात्सम्प्रतिपन्नदेशवत् । इति यदेवानुमित स्नानादिक तदेव प्राप्तमिति ॥ १९ स्मृतिगृह्यमाण ॥ २० सर्वं क्षणिक सत्त्वादिति क्षणिकत्वसिद्धि ॥ २१ तादात्म्यतदुत्पत्तिलक्षण ॥ २२ अन्यापोह ॥ २३ न्यायरूपमनुमानेन स्वलक्षण विद्यमान तद्विषयीक्रियते सामान्य तद्विद्यमान न भवतीति ॥ २४ प्रत्यक्षेण ॥ २५ यस्य ॥ २६ स्वलक्षण न व्यभिचरतीति न स्मृतेश्चेति ॥ २७ समानम् ॥ २८ परपक्षप्रतिक्षेप करोति सूरि ॥ २९ ग्रहण ॥ ३० अज्ञातस्यापि सत्त्वसिद्धिश्चेत् ॥ ३१ ईश्वरादेरपि सत्त्वसिद्धिप्रसङ्गात् ॥

लावस्थायां प्रतिपन्नाग्निधूमसम्बन्धस्य पुनर्वृद्धदशायां धूमदर्शनादग्निप्रतिपत्तिप्रसङ्गः । न चैवम् । तत्स्मृतावस्त्येवेति चेत्कथं नास्याः प्रमाणम् ? को हि स्मृतिपूर्वकमनुमानमभ्युपगम्य पुनस्तां निराकुर्यात् ? अनुमानस्यापि निराकरणानुषङ्गात् । न खलु कारणाभावे कार्योत्पत्तिर्नामाऽतिप्रसङ्गात् । समारोपव्यवच्छेदकत्वाच्चास्याः प्रामाण्यमनुमानवत् । न च स्मृतिविषयभूते सम्बन्धादौ समारोपस्यैवासम्भवात्कस्य व्यवच्छेद इत्यभिधातव्यं साधर्म्यदृष्टान्ताभिधानानर्थक्यप्रसङ्गात् । तत्र स्मृतिहेतुभूतं हि तत् । अन्यथा हेतुरेव केवलोऽभिधीयेत । ततस्तदभिधानान्यथानुपपत्तेस्तद्विषयभूते सम्बन्धादौ विस्मरणसंशयविपर्यासलक्षणः समारोपोऽस्तीत्यवगम्यते । तन्निराकरणाच्चास्याः प्रामाण्यमिति ।

अथेदानीं प्रत्यभिज्ञानस्य कारणस्वरूपप्ररूपणार्थं दर्शनेत्याद्याह । दर्शनस्मरणे कारणं यस्य तत्तथोक्तम् । सङ्कलनं विवक्षितधर्मयुक्तत्वेन प्रत्यवमर्शनं प्रत्यभिज्ञानम् । ननु प्रत्यभिज्ञायाः प्रत्यक्षप्रमाणस्वरूपत्वात्परोक्षरूपतयात्राभिधानमयुक्तम् । तथा हि । "प्रत्यक्षं प्रत्यभिज्ञा–अक्षान्वयव्यतिरेकानुविधानात्तदन्यप्रत्यक्षवत् । न च स्मरणपूर्वकत्वात्तस्याः प्रत्यक्षत्वाभावः सत्सम्प्रयोगजत्वेन स्मरणपश्चाद्भावित्वेऽप्यस्याः प्रत्यक्षत्वाविरोधात् । उक्तं च । 'न हि स्मरणतो यत्प्राक् तत् प्रत्यक्षमितीदृशम् । वचनं राजकीयं वा लौकिकं वापि विद्यते । १ । न चापि स्मरणात्पश्चादिन्द्रियस्य प्रवर्त्तनम् । वार्यते केनचिन्नापि तत्तदानीं प्रदुष्यति । २ । तेनेन्द्रियार्थसम्बन्धात्प्रागूर्ध्वं चापि यत्स्मृतेः । विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ।३।' अनेकदेशकालावस्थासमन्वितं सामान्यं द्रव्यादिकं च वस्त्वस्याः प्रमेयमित्यपूर्वप्रमेयसद्भावः । तदुक्तम् । गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि । तथापि व्यतिरेकेण पूर्वबोधात्प्रतीयते । १ । देशकालादिभेदेन तत्रास्त्यवसरो मितेः । यः पूर्वमवगतोंऽशः स न नाम प्रतीयते ।२। इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ।" तदप्यसमीचीनं–प्रत्यभिज्ञानेऽक्षान्वयव्यतिरेकानुविधानस्यासिद्धेः । अन्यथा प्रथमव्यक्तिदर्शनकालेऽप्यस्योत्पत्तिः स्यात् । पुनर्दर्शने पूर्वदर्शनाहितसंस्कारप्रबोधोत्पन्नस्मृतिसहायमिन्द्रियं तज्जनयति इत्यप्यसाम्प्रतं–प्रत्यक्षस्य स्मृतिनिरपेक्षत्वात् ।

---

१ स्मृतसम्बन्धस्य ॥ २ अनुमानप्रवृत्ति ३ मृत्पिण्डाभावे घटोत्पत्तिप्रसङ्गात् ॥ ४ साध्यसाधनविषये ॥ ५ समारोपाभावे इति शेषः ॥ ६ यत्सत्तत्सर्वं क्षणिकं यथा जलधरः ॥ ७ सम्बन्धः स्मृतिहेतुभूतो दृष्टान्तो यदि न स्यात् ॥ ८ एकत्वसादृश्यादिलक्षण ॥ ९ पुनर्ग्रहणम् ॥ १० मीमांसक ॥ ११ परोक्षप्रमाणे ॥ १२ सतो विद्यमानस्यार्थस्येन्द्रियेण सह संयोगः सम्प्रयोगस्तस्माज्जात सत्सम्प्रयोगजस्तस्य भावस्तत्त्वं तेन ॥ १३ ज्ञानम् ॥ १४ स्मरणानन्तरमिन्द्रियमर्थग्रहणाय न प्रवर्त्तते इत्युक्ते आह ॥ १५ स्मरणोत्तरकालम् ॥ १६ दुष्टं भवति ॥ १७ राजकीयं लौकिकं वचनं न विद्यते येन । स्मरणादिन्द्रियस्य प्रवर्त्तनं वा केनचिद्वा न निवार्यते येन । इन्द्रियं वा दुष्टं न भवति येन कारणेन ॥ १८ प्रत्यक्षस्मरणगृहीतग्राहित्वात्प्रत्यभिज्ञानं प्रत्यक्षमप्रमाणं स्यादित्याशङ्कायामाह ॥ १९ तिर्यक्सामान्यम् ॥ २० आदिना गुण ॥ २१ भेदेन ॥ २२ स्मरणप्रत्यक्षरूपात् ॥ २३ एव पूर्वबोधाद्भेदेन प्रतीयते इत्युक्ते आह ॥ २४ अवस्थाभेदेन ॥ २५ प्रत्यभिज्ञानलक्षणप्रत्यक्षप्रमाणस्य ॥ २६ प्रत्यभिज्ञानलक्षणप्रत्यक्षस्य ॥ २७ पूर्वादिपर्याय ॥ २८ आद्य ॥ २९ यस ॥ ३० भास ॥ ३१ यस ॥ ३२ तास ॥ ३३ कास ॥ ३४ यस ॥ ३५ बस ॥

तत्सापेक्षत्वेऽपूर्वार्थसाक्षात्कारित्वाभावः स्यात्। देशकालेत्याद्यप्ययुक्तमुक्तं यतो देशादिभेदेनाप्यध्यक्षं चक्षुःसम्बद्धमेवार्थं प्रकाशयत्प्रतीयते । न च प्रत्यभिज्ञातं प्रकाशयति–पूर्वोत्तरविवर्त्तवर्त्त्येकत्वविषयत्वात्तस्याः । वर्त्तमानश्चायं चक्षुःसम्बद्धः प्रसिद्धः। यदप्युच्यते–स्मरतः पूर्वदृष्टार्थानुसन्धानादुत्पद्यमाना मतिश्चक्षुःसम्बद्धत्वे प्रत्यक्षमिति, तदप्यसारम्। न हीन्द्रियमतिः स्मृतिविषयपूर्वरूपग्राहिणी। तत्कथं सा तत्सन्धानमात्मसात्कुर्यात्? पूर्वदृष्टसन्धानं हि तत्प्रतिभासनम्। तत्सम्भवे चेन्द्रियमतेः परोक्षार्थग्राहित्वात् परिस्फुटप्रतिभासता न स्यात्। यदि च स्मृतिविषयस्वभावतया दृश्यमानोऽर्थः प्रत्यक्षप्रत्ययैरवगम्येत तर्हि स्मृतिविषयः पूर्वस्वभावो वर्त्तमानतया प्रतिभातीति विपरीतख्यातिः सर्वं प्रत्यक्षं स्यात्। अव्यवधानेन प्रतिभासनलक्षणवैशद्याभावाच्च न प्रत्यभिज्ञानं प्रत्यक्षम्। इत्यलमतिप्रसङ्गेन।

तच्च तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादिप्रकारं प्रतिपत्तव्यम्। तदेवोक्तप्रकारं प्रत्यभिज्ञानमुदाहरणद्वारेणाखिलजनाववोधार्थं स्पष्टयति। यथा स एवायं देवदत्तः, गोसदृशो गवयः, गोविलक्षणो महिषः, इदमस्माद्दूरं, वृक्षोऽयमित्यादि। ननु स एवायमित्यादि प्रत्यभिज्ञानं नैकं विज्ञानं–स इत्युल्लेखस्य स्मरणत्वादयमित्युल्लेखस्य चाध्यक्षत्वात्। न चाभ्यां व्यतिरिक्तं ज्ञानमस्ति यत्प्रत्यभिज्ञाशब्दाभिधेयं स्यात्। नाप्यनयोरैक्यं प्रत्यक्षानुमानयोरपि तत्प्रसङ्गात्। स्पष्टेतररूपतया तयोर्भेदेऽत्रापि सोऽस्तु। तदसाम्प्रतं–स्मरणप्रत्यक्षजन्यस्य पूर्वोत्तरविवर्तवर्त्त्येकद्रव्यविषयस्य सङ्कलनज्ञानस्यैकस्य प्रत्यभिज्ञानत्वेन सुप्रतीतत्वात्। न खलु स्मरणमेवातीतवर्त्तमानविवर्त्तवर्त्तिद्रव्यं सङ्कलयितुमलं–तस्यातीतविवर्त्तमात्रगोचरत्वात्। नापि दर्शनं–तस्य वर्तमानमात्रपर्यायविषयत्वात्। तदुभयसंस्कारजनितं कल्पनाज्ञानं तत्सङ्कलयतीति कल्पने तदेव प्रत्यभिज्ञानं सिद्धम्। प्रत्यभिज्ञानानभ्युपगमे च यत्सत्तत्सर्वं क्षणिकमित्याद्यनुमानवैयर्थ्यम्। तद्ध्येकत्वप्रतीतिनिरासार्थं, न पुनः क्षणक्षयप्रसिद्ध्यर्थं–तस्याध्यक्षसिद्धत्वेनाभ्युपगमात्। समारोपनिषेधार्थं तदित्यप्यपेशलं–सोयमित्येकत्वप्रतीतिमन्तरेण समारोपस्याप्यसम्भवात्। तदभ्युपगमे चायं स इत्यध्यक्षस्मरणव्यतिरेकेण नापरमेकत्वज्ञानमित्यस्य विरोधः। न चाध्यक्षस्मरणे एव समारोपः। तेनानयोर्व्यवच्छेदेऽनुमानस्यानुत्पत्तिरेव स्यात्–तत्पूर्वकत्वात्तस्य। कथं चास्याः प्रतिक्षेपेऽभ्यासेतरावस्थायां प्रत्यक्षानुमानयोः प्रामाण्यप्रसिद्धिः? प्रत्यभिज्ञाया अभावे हि यद्दृष्टं यच्चानुमितं तदेव प्राप्तमित्येकत्वाध्यवसायाभावेनानयोरविसंवादासम्भवात्। तथा च प्रमाणमविसंवादि ज्ञानमिति प्रमाणलक्षणप्रणयनमयुक्तम्। अन्यद्दृष्टमनुमितं वा प्राप्तं

---

१ सन्दिग्धानेकान्तिकत्वे उद्भाविते इद वाक्य परिहार ॥ २ पुरुपस्य ॥ ३ प्रतिभासात् ॥ ४ तर्कस्य प्रत्यक्षतापरिहारार्थमाह ॥ ५ इन्द्रियमति स्मृतिविपयरूपग्राहिणी न भवति इन्द्रियमतित्वादित्यस्मिन्ननुमाने सन्दिग्धानैकान्तिकत्वेपरिहारे इद वाक्यम् ॥ ६ दृश्यमानार्थाद्विपरीतस्मृतिविपयो विपरीतख्याति ॥ ७ इत्यापद्यते ॥ ८ पूर्वस्मरणमुत्तरदर्शन च व्यववायक प्रत्यभिज्ञानस्य ॥ ९ प्रत्यभिज्ञानभेदलक्षणप्रत्यक्षप्रमाणस्य निराकरणविस्तरेण ॥ १० प्रत्यभिज्ञानभेद दर्शयति ॥ ११ प्रागुक्तलक्षणलक्षितमेव ॥ १२ तेन सदृश इत्यादि च ॥ १३ अत्राह सौगत ॥ १४ तदुभयस्य कार्यं सस्कार सौगताभिप्रायेण वा सता तेन जनितम् ॥ १५ प्रथममेव विशारव (क्षणक्षयिन) परमाणव प्रत्यक्षेण निश्चीयन्ते इति वचनात् ॥ १६ ग्रन्थस्य ॥ १७ किञ्च ॥ १८ अर्थाव्यभिचारित्वमविसवाद ॥ १९ प्रमाणे अविसवादित्वादिति प्रसिद्धहेतुभूतधर्मेण प्रामाण्यमप्रसिद्धधर्मं साध्यते इति प्रामाण्याविसवादयोर्भेद ॥

चान्यदित्येकत्वाध्यवसायाभावेप्यविसंवादे प्रामाण्ये चानयोरभ्युपगम्यमाने मरीचिकाचक्रे जलज्ञानस्यापि तत्प्रसङ्गः । न चैवंवादिनो नैरात्म्यभावनाभ्यासो युक्तः फलाभावात् । न चात्मदृष्टिनिर्वृत्तिः फलं-तस्या एवासम्भवात् । सोहमित्यस्तीति चेन्न-स्मरणप्रत्यक्षोल्लेखव्यतिरेकेण तदनभ्युपगमात् । तथा च कुतस्तन्निमित्ता रागादयो यतः संसारः स्यात्? ननु पूर्वापरपर्याययोरेकत्वग्राहिणी प्रत्यभिज्ञा । तस्य चासम्भवात्कथमियमविसंवादिनी यतः प्रमाणं स्यात्? प्रत्यक्षेण हि तद्रूपयोः प्रतीतिः स्वकालनियतार्थविषयत्वात्तस्येत्यपि मनोरथमात्रं-सर्वथा क्षणिकत्वस्याग्रे निराकरिष्यमाणत्वात् । प्रत्यक्षेणाऽतद्रूपतयार्थप्रतीतेश्चानुभवात्कथं विसंवादकत्वं तस्याः? ततः प्रमाणं प्रत्यभिज्ञा-स्वगृहीतार्थाविसंवादित्वात्प्रत्यक्षादिवत् । नीलाद्यनेकाकाराक्रान्तं चैकं ज्ञानमभ्युपगच्छतः स एवायमित्याकारद्वयाक्रान्तैकज्ञाने को विद्वेषः? ननु स एवायमित्याकारद्वयं किं परस्परानुप्रवेशेन प्रतिभासतेऽननुप्रवेशेन वा? प्रथमपक्षेऽन्यतराकारस्यैव प्रतिभासः स्यात् । द्वितीयपक्षे तु परस्परविविक्तप्रतिभासद्वयप्रसङ्गः । अथ प्रतिभासद्वयमेकाधिकरणमित्युच्यते, न-एकाधिकरणत्वासिद्धेः । न खलु परोक्षापरोक्षरूपौ प्रतिभासावेकमधिकरणं बिभ्राते सर्वसंविदामेकाधिकरणत्वप्रसङ्गात् । इत्यप्यसारं-तदाकारयोः कथञ्चित्परस्परानुप्रवेशेनात्माधिकरणतयात्मन्येवानुभवात् । कथं चैवंवादिनश्चित्रज्ञानसिद्धिः? नीलादिप्रतिभासानां परस्परानुप्रवेशे सर्वेषामेकरूपतानुषङ्गात्कुतश्चित्रतैकनीलाकारज्ञानवत्? तेषां तदननुप्रवेशे भिन्नसन्ताननीलादिप्रतिभासानामिवात्यन्तभेदसिद्धेर्नितरां चित्रताऽसम्भवः । एकज्ञानाधिकरणतया तेषां प्रत्यक्षतः प्रतीतेः प्रतिपादितदोषाभावे प्रकृतेप्यसौ मा भूत्तत एव । अथोच्यते 'पूर्वमुत्तरं वा दर्शनमेकत्वेऽप्रवृत्तं कथं स्मरणसहायमपि प्रत्यभिज्ञानमेकत्वे जनयेत्? न खलु परिमलस्मरणसहायमपि चक्षुर्गन्धे ज्ञानमुत्पादयति' इति तदप्युक्तिमात्रं तथा च तज्जनकत्वस्यात्र प्रमाणप्रतिपन्नत्वात् । न च प्रमाणप्रतिपन्नं वस्तुस्वरूपं व्यलीकविचारसहस्रेणाप्यन्यथाकर्तुं शक्यं-सहकारिणां चाचिन्त्यशक्तित्वात् । कथमन्यथाऽसर्वज्ञज्ञानमभ्यासविशेषसहायं सर्वज्ञज्ञानं जनयेत्? एकत्वविषयत्वं च दर्शनस्याप्यन्यथा निर्विषयकत्वमेवास्य स्यादेकान्ताऽनित्यत्वस्य कदाचनाप्यप्रतीतेः । केवलं तेनैकत्वं प्रतिनियतवर्त्तमानपर्यायाधारतयार्थस्य प्रतीयते स्मरणसहायप्रत्यक्षजनितप्रत्यभिज्ञानेन तु स्मर्यमाणानुभूयमानपर्यायाधारतयेति विशेषः । न च लूनपुनर्जातनखकेशादिवत्सर्वत्र निर्विषया प्रत्यभिज्ञा क्षणक्षयैकान्तस्यानुपलम्भात् । तदुपलम्भे हि सा निर्विषया स्यादेकचन्द्रोपलम्भे द्विचन्द्रप्रतीतिवत् । लूनपुनर्जातनखकेशादौ च स एवायं नखकेशादिरित्येकत्वपरामर्शि प्रत्यभिज्ञानं लूननखकेशादिसदृशोयं पुनर्जातनखकेशादिरिति सादृश्यनिबन्धनप्रत्यभि-

१ जलम् ॥ २ अन्यजलमित्यर्थः ॥ ३ प्रत्यभिज्ञानाभावादित्येववादिनः ॥ ४ पश्चादात्मदर्शनाभाव ॥ ५ कुत ॥ ६ नस्यद्रूपयो ॥ ७ चतुर्थपरिच्छेदे ॥ ८ अन्यरूपतया ॥ ९ परस्परतादात्म्येन ॥ १० उभयोर्मध्ये ॥ ११ एकज्ञानस्य ॥ १२ भिन्न ॥ १३ एकत्वहानिः स्यादिति दूषणम् ॥ ॥ १४ एकज्ञान ॥ १५ जैनैः ॥ १६ देवदत्तयज्ञदत्तादि ॥ १७ द्रव्यापेक्षया ॥ १८ एकाधिकरणप्रतीते ॥ १९ प्रत्यक्षम् ॥ २० पूर्वोत्तरविवर्तवर्त्येकस्मिन्वे ॥ २१ दर्शनस्य ॥ २२ प्रत्यक्ष ॥ २३ अभावरूपत्वेन ॥ २४ सहकारिणामचिन्त्यशक्तित्वं यदि न स्यात् ॥ २५ न केवलं प्रत्यभिज्ञानस्य ॥ २६ दर्शनमेकत्वविषयं यदि न स्यात् ॥

ज्ञानान्तरेण वाध्यमानत्वादप्रमाणं प्रसिद्धं, न पुनः सादृश्यप्रत्यवमार्शि—तत्रास्याऽवाध्यमानतया प्रमाणत्वप्रसिद्धेः । न चैकत्रैकत्वपरामार्शिप्रत्यभिज्ञानस्य मिथ्यात्वदर्शनात्[1]सर्वत्रास्य मिथ्यात्वं, प्रत्यक्षस्यापि सर्वत्र भ्रान्तत्वानुषङ्गान्न किञ्चित्[2]कुतश्चित्[3]कस्यचित्[4]प्रसिद्ध्येत्[5] । ततो[6] यथा शुक्ले शङ्खे पीताभासं प्रत्यक्षं तत्रैव शुक्लाभासप्रत्यक्षान्तरेण वाध्यमानत्वादप्रमाणं, न पुनः पीते कनकादौ तथा प्रकृतमपीति । कथं च प्रत्यभिज्ञानविलोपेऽनुमानप्रवृत्तिः? येनैवं[7] हि पूर्वं धूमोऽग्नेर्[8]दृष्टस्तस्यैव पुनः पूर्वधूमसदृशधूमदर्शनादग्निप्रतिपत्तिर्युक्ता नान्यस्यान्यदर्शनात्[9] । न च प्रत्यभिज्ञानमन्तरेण तेनेदं सदृशमिति प्रतिपत्तिरस्ति—पूर्वप्रत्यक्षेणो-त्तरस्य[10] तत्प्रत्यक्षेण च पूर्वस्या[11]ग्रहणात्—द्वयप्रतिपत्तिनिवन्धनत्वादुभयसादृश्यप्रतिपत्तेः सम्बन्ध[12]प्रतिपत्तिवत् । ततः प्रत्यभिज्ञा प्रमाणमभ्युपगन्तव्या । तदप्रामाण्यं हि गृहीतग्राहित्वात्स्मरणानन्तरभावित्वात् शब्दाकारधारित्वाद्वाध्यमानत्वाद्वा स्यात्? न तावदाद्यविकल्पो युक्तः । न हि तद्विषयभूतमेकं द्रव्यं स्मृतिप्रत्यक्षग्राह्यमित्युक्तम् । तद्गृहीतातीतवर्त्तमानविवर्त्ततादात्म्येनावस्थितद्रव्यस्य कथञ्चित्[13]पूर्वार्थत्वेपि तद्विषयप्रत्यभिज्ञानस्य नाप्रामाण्यं लैङ्गिका[14]देरप्यप्रामाण्यप्रसङ्गात् तस्यापि सर्वथैवापूर्वार्थत्वासिद्धेः । सम्वन्धग्राहिविज्ञान[15]विषयसाध्या[16]दिसामान्यात् कथञ्चिदभिन्नस्यानुमेयस्य[17] देशकालविशिष्टस्य तद्विषयत्वात्कथञ्चित्पूर्वार्थत्वसिद्धेः । तन्न गृहीतग्राहित्वात्तत्राप्रामाण्यम् । नापि स्मरणानन्तरभावित्वात्—रूपस्मरणानन्तरं रससन्निपाते[18] समुत्पन्नरसज्ञानस्याप्यप्रामाण्यप्रसङ्गात् । तत्र हि रूपस्मृतेः पूर्वकालभावित्वात्समनन्तरकारणत्वं—वोधाद्वोधरूपतेत्यभ्युपगमात् । न[19] चात्र वोधरूपतया समनन्तरकारणत्वमन्यत्र[20] स्मृतिरूपतयेत्यभिधातव्यं—स्मृतिरूपवोधरूपयोस्तादात्म्ये क्वचिद्वोधरूपतया तत्तस्य क्वचित्तु स्मृतिरूपतयेति व्यवस्थापयितुमशक्तेः । कथं चैवंवादिनो[21]ऽनुमानं प्रमाणम्? तद्धि लिङ्गलिङ्गिसम्वन्धस्मरणानन्तरमेवोपजायते । अन्यथा साधर्म्यदृष्टान्तोपन्यासो व्यर्थः स्यात् । शब्दा[22]कारधारित्वं च प्रागेव[23] प्रतिषिद्धम् । वाध्यमानत्वं चासिद्धम् । न खलु प्रत्यक्षं तद्वाधकं तस्य तद्विषयप्रवृत्त्यऽसम्भवात् । यद्धि यद्विषये न प्रवर्त्तते न तत्र तस्य साधकं वाधकं वा । यथा रूपज्ञानस्य रसज्ञानम् । न प्रवर्त्तते च प्रत्यभिज्ञानस्य विषये प्रत्यक्षमिति । नाप्यनुमानं तद्वाधकं प्रत्यभिज्ञानविषये तस्याप्यप्रवृत्तेः । क्वचि[24]दनुमेयमात्रे प्रवृत्तिप्रसिद्धेस्तस्य तद्विषये प्रवृत्तौ वा सर्वथा वाधकत्वविरोधः । ततः प्रमाणं प्रत्यभिज्ञा सकलवाधकरहितत्वात्प्रत्यक्षादिवत् । एतेनैव[25] गोसदृशो गवय इत्यादि[26] सादृश्यनिवन्धनं प्रत्यभिज्ञानं प्रमाणमावेदितं प्रतिपत्तव्यं तस्यापि स्वविषये वाधविधुरत्वस्य संवादकत्वस्य च प्रसिद्धेः । ननु सादृश्यस्यार्थेभ्यो भिन्नाभिन्ना[27]दिविकल्पैर्विचार्यमाणस्यायोगात्तद्विषयप्रत्यभिज्ञानस्य वाधविधुरत्वमविसंवादकत्वं चासिद्धमित्यप्यास्तां तावत्[28]—प्रत्यक्षादिप्रमाण[29]-

१ देवदत्तादावपि ॥ २ किञ्चिद्वस्तु ॥ ३ प्रमाणात् ॥ ४ प्रतिपत्तु ॥ ५ अप्रसिध्येयत ॥ ६ एकत्वनिवन्धनस्य सादृश्यनिवन्धनस्य च ॥ ७ देवदत्तेन ॥ ८ यज्ञदत्तस्य ॥ ९ विपक्षलक्षणप्रम्तरदर्शनात् ॥ १० ऊर्द्धत्वादिपर्यायस्य ॥ ११ युवादिपर्यायस्य ॥ १२ सयोगादि ॥ १३ द्रव्यापेक्षया ॥ १४ आदिना शब्दस्य ॥ १५ तर्के ॥ १६ आदिना साधनम् ॥ १७ अग्न्यादे ॥ १८ सान्निध्ये ॥ १९ स्मृतिरूपता वोधरूपता चास्ति स्मरणज्ञानस्य ॥ २० स्मृतौ ॥ २१ स्मरणानन्तरभावित्वान्न प्रमाण प्रत्यभिज्ञा इत्येवम् ॥ २२ ज्ञाने ॥ २३ शब्दाद्वैतनिराकरणे ॥ २४ अग्न्यादौ ॥ २५ एकत्वनिवन्धनप्रत्यभिज्ञानप्रामाण्यसमर्थनग्रन्थेन ॥ २६ देवदत्तेन सदृशो यज्ञदत्त इत्यादि च ॥ २७ आदिना उभय=ग्रहणम् ॥ २८ पुन ॥ २९ आदिनानुमानादि ॥

विषयभूतत्वेनाबाधिततत्स्वरूपस्य सामान्यसिद्धिप्रक्रमे प्रतिपादयिष्यमाणत्वात् । न च तस्मिन्[1]नेव स्वपुत्रादौ[2] तादृशोयमिति प्रत्यभिज्ञानं सादृश्यनिबन्धनं स एवायमित्येकत्वनिबन्धनप्रत्यभिज्ञानेन बाध्यमानमप्रमाणं प्रतिपाद्य स्वपुत्रादिना सदृशे पुरुषे तादृशोयमित्यपि प्रत्यभिज्ञानमप्रमाणं प्रतिपादयितुं युक्तं–तस्याबाध्यमानत्वेन प्रमाणत्वात् । स्यान्मतं 'प्रत्यभिज्ञानमनुमानत्वेन प्रमाणमिष्यत एव । तथा हि । पूर्वोत्तरार्थक्षणयो[3]रनर्थान्तरभूतं सादृश्यं तत्प्रत्यक्षाभ्यां प्रतीयत एव । यस्तु तथा प्रतिपद्यमानोपि सादृश्यव्यवहारं न करोति घटविविक्तभूतलप्रतिपत्तावपि घटाभावव्यवहारवत्[4]स, प्रागुपलब्धार्थ[5]समानोयं[6] तत्सदृशाकारोपलम्भादित्युभयगतसदृशाकारदर्शनेन तथा व्यवहारं कार्यते, दृश्यानुपलम्भोपदर्शनेन घटाभावव्यवहारवत्' तदप्यसङ्गतं–प्राक्प्रतिपन्नधूमसदृशोयं धूम इत्यादिलिङ्गप्रत्यभिज्ञानस्य[11] लैङ्गिकत्वे[12] तल्लिङ्ग[13]प्रत्यभिज्ञाज्ञानस्यापि लैङ्गिकत्वमित्यनवस्थाप्रसङ्गात्[14] । किञ्चार्थे[15] सादृश्यव्यवहारस्य सदृशाकारनिबन्धनत्वे सदृशाकारेपि कुतस्तद्व्यवहारसिद्धिः? अपरतद्गतसदृशधर्मदर्शनाच्चेदनवस्था[16] । धर्मिसादृश्य[17]व्यवहारे चान्योन्याश्रयः । तन्नेयं सादृश्यप्रत्यभिज्ञा लिङ्गजाभ्युपगन्तव्या । ननु[18] गोदर्शनाहितसंस्कारस्य पुनर्गवयदर्शनाद्[19]गवि स्मरणे सत्यनेन समानः स इत्येवमाकारस्य ज्ञानस्योपमानरूपत्वान्न प्रत्यभिज्ञानता । सादृश्यविशिष्टो[20] हि विशेषो विशेषविशिष्टं वा सादृश्यमुपमानस्यैव प्रमेयम् । उक्तं च । तस्माद्[22]यत्[23]स्मर्यते[24] तत्स्यात्सादृश्येन विशेषितम् । प्रमेयमुपमानस्य सादृश्यं वा तदन्[25]वितम्[26] । १ । प्रत्यक्षेणावबुद्धेपि[27] सादृश्ये गवि च स्मृते । विशिष्टस्यान्यतः[29] सिद्धेरुपमानप्रमाणता । २ । इति । तदप्यसमीक्षिताभिधानमेकत्वसादृश्यप्रतीत्योः सङ्कलनाज्ञानरूपतया प्रत्यभिज्ञानतानतिक्रमात् । स एवायमिति हि यथोत्तरपर्यायस्य पूर्वपर्यायेणैकताप्रतीतिः प्रत्यभिज्ञा तथा सादृश्यप्रतीतिरप्यनेन सदृश इत्यविशेषात् । पूर्वोत्तरप्रत्ययवेद्यैकत्वगोचरत्वात्तस्याः प्रत्यभिज्ञानत्वे सादृश्यप्रतीतावपि तत्स्यात् । न हि तत्ताभ्यां न परिच्छिद्यते–'वस्तुत्वे सति चास्यैवं सम्बद्धस्य च चक्षुषा । द्वयोरेकत्र वा दृष्टौ प्रत्यक्षत्वं न वार्यते ।१। सामा-

---

१ एकस्मिन् ॥ २ बौद्धसिद्धान्तोयम् ॥ ३ गोगवयलक्षणौ पूर्वोत्तरकालभाविप्रत्यक्षसम्बन्धित्वेन पूर्वोत्तरार्थक्षणौ ॥ ४ यथा घटाभावे व्यवहार न करोति साङ्ख्य इत्यर्थ ॥ ५ पूर्वदृष्टेन यज्ञदत्तादिना ॥ ६ दृश्यमानो देवदत्तादि ॥ ७ अयं दृश्यमानो गवयो गोसदृश गोसदृशाकारत्वाद्गोगवयप्रत्यक्षत्वे सति सादृश्यव्यवहारात् ॥ ८ व्यक्तिद्वयगत ॥ ९ अत्र घटो नास्ति दृश्यत्वे सत्यनुपलब्धेरिति ॥ १० इयं शिंशपा पूर्वदृष्टशिंशपासमाना इति च ॥ ११ लिङ्गरूपस्य ॥ १२ अनुरूपत्वे अङ्गीक्रियमाणे ॥ १३ तद्गतधर्मस्य ॥ १४ पर्वतधूम पूर्वदृष्टधूमसदृशस्तत्सदृशाकारत्वात्सम्प्रतिपन्नधूमवत् । तत्सदृशाकारत्वेन समान सदृशाकारत्वात् सम्प्रतिपन्नसदृशाकारवत् ॥ १५ गोगवयलक्षणे ॥ १६ गोगवयौ सदृशौ सदृशाकारत्वाद्देवदत्तयज्ञदत्तवत् । गोगवयाकारौ सदृशौ सदृशाकारत्वात् तद्वत् । द्वितीयौ आकारौ सदृशौ सदृशाकारत्वादित्यादि ॥ १७ त्वादि ॥ १८ मीमासक ॥ १९ पश्चात् ॥ २० गोलक्षणो धर्मी ॥ २१ धर्म ॥ २२ दृश्यमानात् ॥ २३ गवयात् ॥ २४ स्मर्यमाणम् ॥ २५ वस्तु ॥ २६ स्मर्यमाणगवान्वितम् ॥ २७ उपमानस्यैवेत्यत्र य एवकारस्तस्य सवाद दर्शयति ॥ २८ गवयगते ॥ २९ सादृश्यविशिष्टस्य गोस्तद्विशिष्टस्य वा साज्ञादे ॥ ३० स्मरणप्रत्यक्षाभ्याम् ॥ ३१ स्मरणप्रत्यक्षाभ्या सकाशादन्यदुपमान तत ॥ ३२ प्रत्यभिज्ञा ॥ ३३ सङ्कलनरूपताया ॥ ३४ पूर्वोत्तरप्रत्ययवेद्यत्वाविशेषात् ॥ ३५ अन्यथा ॥ ३६ उक्तप्रकारेण मीमासकग्रन्थापेक्षया सादृश्यस्य वस्तुत्व कथमिति प्रश्ने अवयवसामान्ययोगप्रकारेण वस्तुत्वम् ॥ ३७ गोगवयलक्षणयोर्विशेषयो. ॥ ३८ गवये वा ॥ ३९ प्रत्यक्षे सति ॥ ४० एकत्र प्रत्यक्षत्व कथ न वार्यते इत्युक्ते आह ॥

न्यत्र च सादृश्यमेकैकत्र समाप्यते । प्रतियोगिन्यदृष्टेपि तत्तस्मादुपलभ्यते, इत्यस्य विरोधानुषङ्गात् । यथा च पूर्वोत्तरप्रत्ययाभ्यां गवयगवादिविशिष्टमप्रतिपन्नं सादृश्यमनेन प्रतीयते तथा पूर्वोत्तरपर्यायविशिष्टमेकत्वं प्रत्यभिज्ञानेन । यदि चैकत्वज्ञानमेव प्रत्यभिज्ञा, सादृश्यज्ञानं तूपमानमित्यभ्युपगमस्तर्हि वैलक्षण्यज्ञानं किन्नाम प्रमाणं स्यात् ? यथैव हि गोदर्शनाहितसंस्कारस्य गवयदर्शिनोऽनेन समानः स इति प्रतिपत्तिस्तथा महिष्यादिदर्शिनोनेन विलक्षणः स इति वैलक्षण्ये प्रतीतिरप्यस्ति । सा च न प्रत्यभिज्ञोपमानयोरन्यतरा तदेकत्वसादृश्याऽविषयत्वात् । अतः प्रमाणान्तरं प्रमाणसंख्यानियमविघातकृद्भवेत्परस्य । ननु सादृश्याभावो वैलक्षण्यम् । तस्याभावप्रमाणविषयत्वान्न प्रमाणसंख्यानियमविघातस्तर्हि वैलक्षण्याभावः सादृश्यमिति स एव दोषः । नन्वनेकस्य समानधर्मयोगः सादृश्यं तत्कथं वैलक्षण्याभावमात्रं स्यादिति चेत्तर्हि वैलक्षण्यमपि विसदृशधर्मयोगस्तत्कथं सादृश्याभावमात्रं स्यादिति समानम् ।

एतेन 'गौरिव गवय इत्युपमानवाक्याहितसंस्कारस्य पुनर्वने गवयदर्शनादयं गवयशब्दवाच्य इति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुपमानमिति नैयायिकमतमपि प्रत्युक्तम् । यथैव ह्येकदा घटमुपलब्धवतः पुनस्तस्यैव दर्शने स एवायं घट इति प्रतिपत्तिः प्रत्यभिज्ञा तथा गोसदृशो गवय इति सङ्केतकाले गोसदृशगवयाभिधानयोर्वाच्यवाचकसम्बन्धं प्रतिपद्य पुनर्गवयदर्शनात्तत्प्रतिपत्तिः प्रत्यभिज्ञा किन्नेष्यते ? न खलु पूर्वमप्रतिपन्नेऽपूर्वदर्शनात्स्मृतिर्युक्ता । यतस्तथा प्रतिपत्तिः स्यात् । गोविलक्षणमहिष्यादिदर्शनाच्चायं गवयशब्दवाच्यो न भवतीति तत्संज्ञासंज्ञिसम्बन्धप्रतिषेधप्रतिपत्तिश्च यद्युपमानं प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति व्याहन्येत । अथ प्रसिद्धार्थवैधर्म्यादपीष्यते तर्हि प्रसिद्धार्थवैधर्म्याच्च साध्यसाधनमुपमानमित्युपसंख्यानं सूत्रे कर्त्तव्यम् । किञ्च प्रसिद्धार्थैकत्वात्साध्यसाधनमुपमानमित्यप्यभ्युपगम्यताम् । तथा च प्रत्यभिज्ञानस्य प्रत्यक्षेन्तर्भावोऽयुक्तः । तथा स्वसमीपवर्तिप्रासादादिदर्शनोपजनितसंस्कारस्य तत्प्रतियोगिभूधराद्युपलम्भादिदमस्माद्दूरमिति प्रतिपत्तिरामलकदर्शनाहितसंस्कारस्य विल्वादिदर्शनादतस्तत्सूक्ष्ममिति स्वदर्शनाविर्भूतसंस्कारस्य तद्विपरीतार्थोपलम्भादतोयं प्रांशुरिति च प्रतिपत्तिः किं नाम मानं स्यात् ? तथा वृक्षाद्यनभिज्ञो यदा कश्चित्कञ्चित्पृच्छति कीदृशो वृक्षादिरिति । स तं प्रत्याह 'शाखादिमान्वृक्ष एकशृङ्गो गण्डकोऽष्टपादः

---

१ ग्रन्थस्य ॥ २ एतावता ग्रन्थेन एकत्वप्रतीतिवत्सादृश्यप्रत्यभिज्ञानस्यापि पूर्वोत्तरप्रत्ययवेद्यसादृश्यगोचरत्वमस्तीति समर्थितम् ॥ ३ अप्रतिपन्न प्रतीयते ॥ ४ प्रत्यभिज्ञानस्य उपमानस्य च ॥ ५ वैलक्षण्यज्ञाने ॥ ६ मीमांसकस्य ॥ ७ वैलक्षण्याभावलक्षणसादृश्यस्याभावप्रमाणवेद्यत्वात् । उपमानप्रमाणभावे सति ॥ ८ गोगवयलक्षणार्थस्य ॥ ९ गवय ॥ १० तुच्छाभावरूपम् ॥ ११ अवयव ॥ १२ मीमांसकं प्रत्युपमानस्य प्रत्यभिज्ञानत्वसमर्थनपरेण ग्रन्थेन ॥ १३ उपमानस्य ॥ १४ गवयशब्दस्य ॥ १५ गवयपिण्डस्य ॥ १६ ज्ञानवत ॥ १७ आटविकाद् ज्ञाला ॥ १८ वाच्यवाचकसम्बन्धे ॥ १९ गवय ॥ २० गो ॥ २१ ज्ञातार्थसम्बन्धसाधर्म्यात् ॥ २२ गवयस्य ॥ २३ साध्यस्याय गवयशब्दवाच्य इति सञ्ज्ञासञ्ज्ञिसम्बन्धस्य ॥ २४ गवा ॥ २५ महिषस्य ॥ २६ साध्यसाधनमुपमानम् ॥ २७ गोगवयलक्षणेन ॥ २८ महिषस्य ॥ २९ साध्यस्याय गवयशब्दवाच्य इति सञ्ज्ञासञ्ज्ञिसम्बन्धस्य ॥ ३० गणना ॥ ३१ तन्नास्त्येव भवदीये सूत्रे ॥ ३२ पूर्वपर्यायेण ॥ ३३ उत्तरपर्यायस्य ॥ ३४ स एवायमित्यादि ॥ ३५ दूषणान्तरसमुच्चये ॥ ३६ कुब्ज ॥ ३७ प्रमाणम् ॥

शरभः चारुसटान्वितः सिंह' इत्यादि । तद्वाक्याहितसंस्कारः प्रष्टा[1] यदा शाखादिमतोऽर्थान् प्रतिपद्य अयं स वृक्षशब्दवाच्य इत्यादिरूपतया तत्संज्ञासंज्ञिसम्बन्धं[2] प्रतिपद्यते तदा किं नाम तत्प्रमाणं[3] स्यात् ? उपमानमित्यसम्भाव्यं सर्वत्रोक्तप्रकारप्रतिपत्तौ[4] प्रसिद्धार्थसाधर्म्यासम्भवात्[5] । ततः प्रतिनियतप्रमाणव्यवस्थामभ्युपगच्छता[6] प्रतिपादितप्रकारा प्रतीतिः प्रत्यभिज्ञैवेत्यभ्युपगन्तव्यम् ।

अथेदानीमूहस्योपलम्भेत्यादिना कारणस्वरूपं निरूपयति । उपलम्भानुपलम्भौ साध्यसाधनयोर्यथाक्षयोपशमं सकृत्[7] पुनःपुनर्वा दृढतरं निश्चयानिश्चयौ न भूयोदर्शनादर्शने[8] । तेनातीन्द्रियसाध्यसाधनयोरागमानुमाननिश्चयानिश्चयहेतुकसम्बन्धबोधस्यापि संग्रहान्न[12] व्याप्तिः । यथास्त्यस्य प्राणिनो धर्मविशेषो विशिष्टसुखादिसद्भावान्यथानुपपत्तेरित्यादौ[13], आदित्यस्य गमनशक्तिसम्बन्धोऽस्ति गतिमत्त्वान्यथानुपपत्तेरित्यादौ[15] च । न खलु धर्मविशेषः प्रवचनादन्यतः प्रतिपत्तुं शक्यः । नाप्यतोऽनुमानादन्यतः कुतश्चित्प्रमाणादादित्यस्य गमनशक्तिसम्बन्धः साध्यत्वाभिमतः । साधनं वा गतिमत्त्वं देशाद्देशान्तरप्राप्तिमत्त्वानुमानादन्यत इति । तौ निमित्तं यस्य व्याप्तिज्ञानस्य तत्तथोक्तम् । व्याप्तिः साध्यसाधनयोरविनाभावः । तस्य ज्ञानमूहः । न च बालावस्थायां निश्चयानिश्चयाभ्यां प्रतिपन्नसाध्यसाधनस्वरूपस्य पुनर्वृद्धावस्थायां तद्विस्मृतौ तत्स्वरूपोपलम्भेऽप्यविनाभावप्रतिपत्तेरभावात्तयोस्तदहेतुत्वं[16] स्मरणादेरपि[18] तद्धेतुत्वात् । भूयो निश्चयानिश्चयौ हि स्मर्यमाणप्रत्यभिज्ञायमानौ तत्कारणमिति स्मरणादेरपि तन्निमित्तत्वप्रसिद्धिः । मूलकारणत्वेन तूपलम्भादेरत्रोपदेशः[19] स्मरणादेस्तु प्रकृतत्वादेव[21] तत्कारणत्वप्रसिद्धेरनुपदेश इत्यभिप्रायो गुरूणाम् ।

तच्च व्याप्तिज्ञानं तथोपपत्त्यन्यथानुपपत्तिभ्यां प्रवर्त्तत इत्युपदर्शयति । इदमस्मिन्नित्यादि । इदं[22] साधनत्वेनाभिप्रेतं वस्तु, अस्मिन्साध्यत्वेनाभिप्रेते वस्तुनि सत्येव सम्भवतीति तथोपपत्तिः । अन्यथा साध्यमन्तरेण न भवत्येवेत्यन्यथानुपपत्तिः । वाशब्द उभयप्रकारसूचकः । तावेवोभयप्रकारौ[23] सुप्रसिद्धव्यक्तिनिष्ठतया सुखावबोधार्थं प्रदर्शयति । यथाग्नावेव धूमस्तदभावे न भवत्येवेति च । ननु चास्याऽप्रमाणत्वात्किं कारणस्वरूपनिरूपणप्रयासेनेत्यप्यसाम्प्रतं–यतोऽस्याप्रामाण्यं गृहीतग्राहित्वाद्विसंवादित्वाद्वा स्यात्प्रमाणविषयपरिशोधकत्वाद्वा[24] ? प्रथमपक्षे साध्यसाधनयोः साकल्येन व्याप्तिः प्रत्यक्षात्प्रतीयतेऽनुमानाद्वा ? न तावत्प्रत्यक्षात्तस्य

---

१ पृच्छ्यमानपुरुषस्य ॥ २ ते च ते संज्ञासंज्ञिनश्च । वृक्ष इति संज्ञा, शाखादिमान् पदार्थः संज्ञी ॥ ३ अत्र वृक्षशब्दवाच्य इत्यादिकम् ॥ ४ इदमस्माद्दूरमित्यादौ च ॥ ५ प्रसिद्धार्थेन पूर्वप्रतिपन्नेन प्रासादादिना शाखादिमान्वृक्ष इत्यादिवाक्येन ॥ ६ तत्सदृश तद्विलक्षणमित्यादिरूपा ॥ ७ एकवारम् ॥ ८ अग्नेरनुपलम्भो भावान्तरोपलम्भोऽनिश्चय ॥ ९ प्रत्यक्षेण साध्यसाधनयो ॥ १० उपलम्भानुपलम्भौ निश्चयानिश्चयो येन कारणेन ॥ ११ तौ हेतू यस्य सम्बन्धबोधस्य ॥ १२ प्रत्यक्षपूर्वकनिश्चयानिश्चययो सङ्ग्रह अपिशब्दात् ॥ १३ निश्चयानिश्चयहेतुकसम्बन्धबोधस्य सङ्ग्रह क इत्युक्ते आह ॥ १४ अस्य प्राणिनोऽधर्मविशेषोऽस्ति दुःखादिसद्भावादित्यादौ च ॥ १५ चन्द्रो गमनशक्तियुक्तो गतिमत्त्वादित्यादौ च ॥ १६ केवलमुपलम्भानुपलम्भयो ॥ १७ साध्यसाधनयो ॥ १८ आदिना प्रत्यभिज्ञानम् ॥ १९ अनुपलम्भस्य च ॥ २० सूत्रे ॥ २१ प्रस्तुतत्वात् ॥ २२ उल्लेखोऽयम् ॥ २३ तथोपपत्त्यन्यथानुपपत्तिरूपौ ॥ २४ अनुमान ॥ २५ अनिर्णयरूपत्वात्तर्कस्याप्रामाण्यमित्यभिप्राये सत्याह ॥

सन्निहितमात्रगोचरतया देशादिविप्रकृष्टाशेषार्थालम्बनत्वानुपपत्तेः, तत्रास्य वैशद्यासम्भवाच्च । न खलु सत्त्वानित्यत्वादयोऽग्निधूमादयो वा सर्वे भावाः सन्निधानवत्प्रत्यक्षे विशदतया प्रतिभान्ति प्राणिमात्रस्य सर्वज्ञतापत्तेरनुमानानर्थक्यप्रसङ्गाच्च । अविचारकतया चाध्यक्षं यावान् कश्चिद्धूमः स सर्वोऽपि देशान्तरे कालान्तरे वाग्निजन्माऽन्यजन्मा वा न भवतीत्येतावतो व्यापारान्कर्तुमसमर्थम् । पुरो व्यवस्थितार्थेषु प्रत्यक्षतो व्याप्तिं प्रतिपद्यमानः सर्वोपसंहारेण प्रतिपद्यते इत्यप्यसुन्दरमविषये सर्वोपसंहारायोगात् । प्रत्यक्षपृष्ठभाविनो विकल्पस्यापि तद्विषयमात्राध्यवसायत्वात्सर्वोपसंहारेण व्याप्तिग्राहकत्वाभावः । तथा चानिश्चित-प्रतिबन्धकत्वाद्देशान्तरादौ साधनं साध्यं न गमयेत् । ननु कार्यं धूमो हुतभुजः कार्यधर्मानुवृत्तितो विशिष्टप्रत्यक्षानुपलम्भाभ्यां निश्चितः स देशान्तरादौ तदभावेऽपि भवंस्तत्कार्यतामेवातिवर्त्तेत । इत्याकस्मिकोऽग्निनिवृत्तौ न क्वचिदपि निवर्त्तेत । नाप्यवश्यंतया तत्सद्भावे एव स्यादिति-अहेतोः । खरविषाणवत्तस्या-सत्त्वात्क्वचिदप्युपलम्भो न स्यात् सर्वत्र सर्वदा सर्वाकारेण वोपलम्भः स्यात् । स्वभावश्च 'तद्धेतोर्थस्याभावेऽपि यदि स्यात्तदार्थस्य निःस्वभावत्वं स्वभावस्य वाऽसत्त्वं स्यात् । तत्स्वभावतया चास्य कदाचिदप्युपलम्भो न स्यात् । उक्तं च 'कार्यं धूमो हुतभुजः कार्यधर्मानुवृत्तितः । सम्भवंस्तदभावेऽपि हेतुमत्तां विलङ्घयेत् । १ । स्वभावेऽप्यविनाभावो भावमात्रानुबन्धिनि । तदभावे स्वयं भावस्याभावः स्यादभेदतः । २ ।' इति । व्याप्तिप्रतिपत्तावपि तन्निश्चयकालोपल-ब्धेनैव व्यापकेन व्याप्यस्य व्याप्तिः स्यात् तस्यैव तथा निश्चयात्, न तादृशस्य । तादृशस्यापि साध्यव्याप्तत्वग्रहणे तद्ग्राहिणो विकल्पस्यागृहीतग्राहित्वं कथं न स्यात्? यत्तु प्रत्यक्षेण क्वचित्प्रदेशे साध्यव्याप्तत्वेन प्रतिपन्नं ततस्तस्यानुमाने विशेषतो दृष्टानुमानं स्यात् । अन्यदेशादिस्थसाध्येनास्याव्याप्तेः । पारिशेष्यात्तादृशेन व्यापकेनान्यत्र तादृगस्य व्याप्तिसिद्धिश्चेत् ननु किमिदं पारिशेष्यम्? प्रत्यक्षमनुमानं वा? न तावत्प्रत्यक्षं देशान्तरस्थस्यानुमेयस्य प्रत्यक्षेणाप्रतिपत्तेः । अन्यथा-नुमानानर्थक्यानुषङ्गः । नाप्यनुमानं तत्राप्यनुमानान्तरेण व्याप्तिप्रतिपत्तावनवस्थाप्रसङ्गात् । तेनैव तत्प्रतिपत्तावन्योन्याश्रयः । एतेन साध्यसाधनयोः साकल्येना-नुमानाद्व्याप्तिप्रतिपत्तेस्तर्कस्याप्रामाण्यमिति प्रत्युक्तम् । तन्न प्रत्यक्षानुमानयोः साकल्येन व्याप्तिप्रतिपत्तौ सामर्थ्यम् । अथास्मदादिप्रत्यक्षस्य व्याप्तिप्रतिपत्ता-

---

१ क्षणिकत्व ॥ २ अन्यथेति शेष ॥ ३ निर्विकल्पकस्य परामर्शशून्यत्वात् ॥ ४ न विद्यते विचार यावान्कश्चिद्धूम स सर्वोऽप्यग्नेरेव कार्यं नार्थान्तरस्येति ॥ ५ जन ॥ ६ प्रत्यक्षस्य ॥ ७ प्रत्यक्षत सर्वोपसहारे व्याप्तिग्रहणाभावे च ॥ ८ कर्तुं ॥ ९ अग्ने ॥ १० कार्यस्य धर्मे कारणे सति भवनलक्षणस्तदभावे अभवनलक्षण ॥ ११ अतिक्रमेत् ॥ १२ अकारणक ॥ १३ भूधरप्रदेशे ॥ १४ सत्त्वलक्षणहेतुर्व्याप्य ॥ १५ स्वलक्षणो हेतुर्व्याप्य ॥ १६ अनित्यत्वलक्षणस्य साध्यस्य व्यापकस्य ॥ १७ अनुयायिनि ॥ १८ इति स्थिति ॥ १९ स्वभावस्य भावस्य वा ॥ २० स्वभावस्य अ[illegible]स्य वा ॥ २१ साध्यसाधनयो ॥ २२ स्वातन्त्र्येणानवस्थानाभावात्स्वभावस्य ॥ २३ अविशेषादित्यर्थ ॥ २४ व्याप्तिनिश्चयकालोपलब्धस्य व्याप्यस्य साधनस्य ॥ २५ साध्येन व्याप्तत्वप्रकारेण ॥ २६ पूर्वदृष्टधूमसदृशस्य धूमस्य न तथा निश्चय ॥ २७ पूर्वदृष्टसदृशस्यापि धूमस्य ॥ २८ सादृश्यमगृहीतम् ॥ २९ महानसे ॥ ३० साधनम् ॥ ३१ साध्यस्य ॥ ३२ विशेषत खदिरादिरूपतया दृष्टस्य महानसादौ यादृशाग्नि प्रतिपन्नस्तस्य भूधरादौ अनुमानस्य ॥ ३३ महानसस्थाग्निदर्शनेन ॥ ३४ भूधरनितम्बादौ ॥ ३५ अय धूमोऽग्निना व्याप्तो धूमत्वान्महानसधूमवदिति ॥ ३६ अनुमानेन व्याप्तिग्रहणेऽनवस्थेतरेतराश्रयत्वनिरूपणपरेण ग्रन्थेन ॥ ३७ तद्ग्राहित्वादस्याप्रामाण्यमित्यत्रासौ यो वितर्क ॥

वसामर्थ्येपि योगिप्रत्यक्षस्य तत् स्यादित्यप्यसत्तस्याप्यविचारकतया तावतो व्यापारात्कर्तुमसमर्थत्वाविशेषात् । कुतश्चास्योत्पत्तिर्विकल्पमात्राभ्यासादनुमानाभ्यासाद्वा ? प्रथमपक्षे कामशोकादिज्ञानवत्तस्याप्रामाण्यप्रसङ्गः । द्वितीयपक्षेप्यन्योन्याश्रयः व्याप्तिविषये हि योगिप्रत्यक्षे सत्यनुमानं तस्मिंश्च सति तदभ्यासाद्योगिप्रत्यक्षमिति । अस्तु वा योगिप्रत्यक्षं तथापि तत्प्रतिपन्नार्थेष्वनुमानवैयर्थ्यम् । साध्यसाधनविशेषेषु स्पष्टं प्रतिभातेष्वपि अनुमाने सर्वत्रानुमानानुषङ्गात् स्वरूपस्याप्यध्यक्षतोऽप्रसिद्धिः । परार्थं तस्यानुमानमिति चेत्तर्हि योगी परार्थानुमानेन गृहीतव्याप्तिकमगृहीतव्याप्तिकं वा परं प्रतिपादयेत् ? गृहीतव्याप्तिकं चेत्कुतस्तेन गृहीता व्याप्तिः ? न तावत्स्वसंवेदनेन्द्रियमनोविज्ञानैस्तेषां तदविषयत्वात् । योगिप्रत्यक्षेण व्याप्तिप्रतिपत्तावनुमानवैयर्थ्यमित्युक्तम् । अगृहीतव्याप्तिकस्य च प्रतिपादनानुपपत्तिरतिप्रसङ्गात् । मानसप्रत्यक्षाद्व्याप्तिप्रतिपत्तिरित्यन्ये तेप्यतत्त्वज्ञाः प्रत्यक्षस्येन्द्रियार्थसन्निकर्षप्रभवत्वाभ्युपगमात् । अणुस्वभावमनसो युगपदशेषार्थैस्तत्सम्बन्धस्य च प्रागेव प्रतिविहितत्वात्कथं तत्प्रत्ययेनापि व्याप्तिप्रतिपत्तिः ? ननु साध्यसाधनधर्मयोः क्वचिद्व्यक्तिविशेषे प्रत्यक्षत एव सम्बन्धप्रतिपत्तिरित्यप्ययुक्तं साकल्येन तत्प्रतिपत्त्यभावानुषङ्गात् । साध्यं च किमग्निसामान्यमग्निविशेषोग्निसामान्यविशेषो वा ? न तावदग्निसामान्यं तदनुमाने सिद्धसाध्यतापत्तेः । विशेषतोऽसिद्धेश्च ? नाप्यग्निविशेषस्तस्यानन्वयात् । अग्निसामान्यविशेषस्य साध्यत्वे तेन धूमस्य सम्बन्धः कथं सकलदेशकालव्याप्त्याध्यक्षतः सिद्ध्येत् ? तथा तत्सम्बन्धासिद्धौ च यत्र यत्र यदा यदा धूमोपलम्भस्तत्र तत्र तदा तदाग्निसामान्यविशेषविषयमनुमानं नोदयमासादयेत् । न ह्यन्यथा सम्बन्धग्रहणमन्यथानुमानोत्थानं नाम, अतिप्रसङ्गात् । ततः सर्वाक्षेपेण व्याप्तिग्राही तर्कः प्रमाणयितव्यः । ननु यावान्कश्चिद्धूमः स सर्वोप्यग्निजन्माऽनग्निजन्मा वा न भवतीत्यूहापोहविकल्पज्ञानस्य सम्बन्धग्राहिप्रत्यक्षफलत्वान्न प्रामाण्यमित्यप्यसमीचीनं प्रत्यक्षस्य सम्बन्धग्राहित्वप्रतिषेधात् । तत्फलत्वेन चास्याऽप्रामाण्ये विशेषणज्ञानफलत्वाद्विशेष्यज्ञानस्याप्यप्रामाण्यानुषङ्गो हानोपादानोपेक्षाबुद्धिफलत्वात्तस्य । प्रामाण्ये चोहापोहज्ञानस्यापि प्रमाणत्वमस्तु सर्वथा विशेषाभावात् । तन्नास्य गृहीतग्राहित्वादप्रामाण्यम् । नापि विसंवादित्वात्स्वविषयेस्य संवादप्रसिद्धेः । साध्यसाधनयोरविनाभावो हि तर्कस्य विषयः । तत्र चाविसंवादकत्वं सुप्रसिद्धमेव । कथमन्यथानुमानस्याविसंवादकत्वम् ? न खलु तर्कस्यानुमाननिबन्धनसम्बन्धे संवादाभावेऽनुमानस्यासौ घटते । ननु चास्य निश्चितः संवादो नास्ति विप्रकृष्टार्थविषय-

---

१ निर्विकल्पकत्वेन ॥ २ विकल्पस्याप्रमाणत्वेनाऽङ्गीकरणात् ॥ ३ उत्पन्ने ॥ ४ स्वस्वरूपादौ ॥ ५ भूभवनवर्द्धितोत्थितमपि नरं प्रतिपादयेत् ॥ ६ यौगा ॥ ७ तैरेव ॥ ८ अणुपरिमाण मन ॥ ९ ते एव धर्मौ ॥ १० अग्नित्वसामान्यम् ॥ ११ यत्र यत्र धूमस्तत्र तत्र खदिराग्निरिति ॥ १२ अग्नित्वस्य ॥ १३ साधनवैयर्थ्यमिति भाव ॥ १४ तत्राविवादाद्व्याप्तिग्रहणकाले एवास्य प्रसिद्धे । कथमन्यथा साध्यसाधनयोर्व्याप्तिनिर्णीति स्यात् ? ॥ १५ देशादिना ॥ १६ अग्निस्य ॥ १७ अग्निसामान्यविशेषेण ॥ १८ देशान्तरकालान्तरसम्बन्धित्वेन ॥ १९ अग्न्यविनाभूतधूमाज्जलानुमानोत्पत्तिप्रसङ्गात् ॥ २० स्वीकारेण ॥ २१ अन्वय ॥ २२ व्यतिरेक ॥ २३ साकल्येन ॥ २४ ॥ दण्डज्ञान ॥ २५ दण्डि ॥ २६ अनुमानलक्षणफलसद्भावात् ॥ २७ तर्कस्य ॥ २८ साकल्येन ॥ २९ तर्कस्य विसवादकत्व सुप्रसिद्ध यदि न स्यात् ॥ ३० विषये ॥

त्वात्तदऽसत्। तर्कस्य संवादसन्देहे[2] हि कथं निस्सन्देहानुमानोत्थानम् ? तदभावे च कथं सामस्त्येन प्रत्यक्षस्याप्रामाण्यव्यवच्छेदेन प्रामाण्यप्रसिद्धिः[1] ? ततो निस्सन्देहमनुमानमिच्छता साध्यसाधनसम्बन्धग्राहि प्रमाणमसंदिग्धमेवाभ्युपगन्तव्यम् । समारोपव्यवच्छेदकत्वाच्चास्य प्रामाण्यमनुमानवत् । प्रमाणविषयपरिशोधकत्वान्नोहः[5] प्रमाणमित्यपि वार्त्तं प्रमाणविषयस्याप्रमाणेन परिशोधनविरोधान्मिथ्याज्ञानवत्प्रमेयार्थवच्च। प्रयोगः—प्रमाणं तर्कः प्रमाणविषयपरिशोधकत्वादनुमानादिवत्[4] । यस्तु न प्रमाणं स न प्रमाणविषयपरिशोधकः । यथा मिथ्याज्ञानं प्रमेयो वार्थः । प्रमाणविषयपरिशोधकश्चायं, तस्मात्प्रमाणम् । तथा प्रमाणं तर्कः प्रमाणानामनुग्राहकत्वात् । यत्प्रमाणानामनुग्राहकं तत्प्रमाणं यथा प्रवचनानुग्राहकं प्रत्यक्षमनुमानं वा । प्रमाणानामनुग्राहकश्चायमिति । न चायमसिद्धो हेतुः । प्रमाणानुग्रहो हि प्रथमप्रमाणप्रतिपन्नार्थस्य प्रमाणान्तरेण तथैवावसायः—प्रतिपत्तिदार्ढ्यविधानात् । स चात्रास्ति प्रत्यक्षादिप्रमाणेनावगतस्य देशतः साध्यसाधनसम्बन्धस्य दृढतरमनेनावगमात् । ततः साध्यसाधनयोरविनाभावावबोधनिबन्धनमूहज्ञानं परीक्षादक्षैः प्रमाणमभ्युपगन्तव्यम् । न चोहः सम्बन्धज्ञानजन्मा यतोऽपरापरोहानुसरणादनवस्था स्यात्—प्रत्यक्षानुपलम्भजन्मत्वात्तस्य । स्वयोग्यताविशेषवशाच्च प्रतिनियतार्थव्यवस्थापकत्वं प्रत्यक्षवत् । प्रत्यक्षे हि प्रतिनियतार्थपरिच्छेदो योग्यतात एव, न पुनस्तदुत्पत्त्यादेः, ततस्तत्परिच्छेदकत्वस्य प्राक्प्रतिषिद्धत्वात् । योग्यताविशेषः पुनः प्रत्यक्षस्येवास्य स्वविषयज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषः प्रतिपत्तव्यः । ननु यथा तर्कस्य स्वविषये सम्बन्धग्रहणनिरपेक्षा प्रवृत्तिस्तथानुमानस्याप्यस्तु—सर्वत्र ज्ञाने स्वावरणक्षयोपशमस्य स्वार्थप्रकाशनहेतोरविशेषात् । तथा चानर्थकं सम्बन्धग्रहणार्थं तर्कपरिकल्पनं तदप्यसमीचीनं यतोऽनुमानस्याभ्युपगम्यत एव स्वयोग्यताग्रहणनिरपेक्षमनुमेयार्थप्रकाशनम् । उत्पत्तिस्तु लिङ्गलिङ्गिसम्बन्धग्रहणनिरपेक्षा नास्त्यऽगृहीततत्सम्बन्धस्य प्रतिपत्तुः क्वचित्कदाचित्तदुत्पत्त्यप्रतीतेः । न च प्रत्यक्षस्याप्युत्पत्तिः करणार्थसंबन्धग्रहणापेक्षा प्रतिपन्ना स्वयमगृहीततत्सम्बन्धस्यापि प्रतिपत्तुस्तदुत्पत्तिप्रतीतेः । तद्वदूहस्यापि स्वार्थसम्बन्धग्रहणानपेक्षस्योत्पत्तिप्रतिपत्तेर्नोत्पत्तौ सम्बन्धग्रहणापेक्षा युक्तिमतीत्यनवद्यम् ।

अथेदानीमनुमानलक्षणं व्याख्यातुकामः साधनादित्याद्याह । साध्याऽभावाऽसम्भवनियमनिश्चयलक्षणात्साधनादेव हि शक्याऽभिप्रेताप्रसिद्धत्वलक्षणस्य साध्यस्यैव यद्विज्ञानं तदनुमानं प्रोक्तविशेषणयोरन्यतरस्याप्यपाये ज्ञानस्यानुमानत्वासम्भवात् । ननु चास्तु साधनात्साध्यविज्ञानमनुमानम् । तत्तु साधनं निश्चित-

---

१ प्रत्यक्ष प्रमाणमविसवादकत्वादिति ॥ २ तर्कस्य सवादसन्देहे निस्सन्देहानुमानोत्थान न स्यात ॥ ३ तर्क ॥ ४ अनुमान ॥ ५ तर्क ॥ ६ दूरस्थितस्यार्थस्य प्रत्यक्षविषयस्य यथानुमान परिशोधकम् ॥ ७ प्रत्यक्ष ॥ ८ दूरस्थजललक्षणस्य ॥ ९ द्वितीयप्रत्यक्षेण ॥ १० एकदेशत ॥ ११ निश्चयात् ॥ १२ यथानुमान साध्यसाधनसम्बन्धग्राहितर्कपूर्वकमूहोपि तथा स्यात् । तथा चानवस्था इत्युक्ते आह ॥ १३ धूमधूमध्वजविषय एक एवोह सकलानुमानव्यवस्थापक कुतो न स्यादित्युक्ते आह ॥ १४ तस्य अर्थस्य ॥ १५ स्वस्यानुमानस्य कारणभूता योग्यता ॥ १६ अपिशब्देनानुमानस्य सङ्ग्रह ॥ १७ इन्द्रिय ॥ १८ घटादि ॥ १९ स्वमात्मीय तत्किमुपलम्भानुपलम्भौ अर्थ इति सम्बन्ध । वा उपलम्भानुपलम्भयोश्च सम्बन्ध ॥ २० व्याप्तिज्ञानस्य कारणस्वरूपनिरूपणम् ॥ २१ स्वरूपम् ॥ २२ शक्य=प्रत्यक्षाद्यबाधितम् ॥ २३ अभिप्रेतम्=इष्टम् ॥ २४ अप्रसिद्धत्वम्=असिद्धम् ॥ २५ बस ॥ २६ साध्यसाधनयो ॥ २७ साध्यस्य साधनस्य वा ॥

पक्षधर्मत्वादिरूपत्रययुक्तम् । पक्षधर्मत्वं हि तस्यासिद्धत्वव्यवच्छेदार्थं लक्षणं निश्चीयते । सपक्ष एव सत्त्वं तु विरुद्धत्वव्यवच्छेदार्थम् । विपक्षे चासत्त्वमेवानैकान्तिकत्वव्यवच्छित्तये । तदनिश्चये साधनस्यासिद्धत्वादिदोषत्रयपरिहारासम्भवात् । उक्तं च । हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः । असिद्धविपरीतार्थव्यभिचारिविपक्षतः । इत्याशङ्क्याह । **साध्याविनाभावित्वेन निश्चितो हेतुः ।** असाधारणो हि स्वभावो भावस्य लक्षणमव्यभिचारादग्नेरौष्ण्यवत् । न च त्रैरूप्यस्यासाधारणता—हेतौ तदाभासे च तत्सम्भवात्पञ्चरूपत्वादिवत् । असिद्धत्वादिदोषपरिहारश्चास्यान्यथानुपपत्तिनियमनिश्चयलक्षणत्वादेव प्रसिद्धः स्वयमसिद्धस्यान्यथानुपपत्तिनियमनिश्चयासम्भवाद्विरुद्धानैकान्तिकवत् । किञ्च त्रैरूप्यमात्रं हेतोर्लक्षणं विशिष्टं वा त्रैरूप्यम् ? तत्राद्यविकल्पे धूमवत्त्वादिवद्वक्तृत्वादावप्यस्य सम्भवात्कथं तल्लक्षणत्वम् ? न खलु बुद्धोऽसर्वज्ञो वक्तृत्वादे रथ्यापुरुषवदित्यत्र हेतोः पक्षधर्मत्वादिरूपत्रयसद्भावे परैर्गमकत्वमिष्यतेऽन्यथानुपपन्नत्वविरहात् । द्वितीयविकल्पे तु कुतो वैशिष्ट्यं त्रैरूप्यस्यान्यत्रान्यथानुपपन्नत्वनियमनिश्चयात् । इति स एवास्य लक्षणमस्तु पूर्णं परीक्षादक्षैरुपलक्ष्यते—तद्भावे पक्षधर्मत्वाद्यभावेपि उदेष्यति शकटं कृत्तिकोदयादित्यादेर्गमकत्वेन वक्ष्यमाणत्वात् सपक्षे सत्त्वरहितस्य च श्रावणत्वादेः शब्दानित्यत्वे साध्ये गमकत्वप्रतीतेः । ननु नित्यादाकाशादेर्विपक्षादिव सपक्षादप्यनित्याद् घटादेः सतो व्यावृत्तत्वेन श्रावणत्वादेरसाधारणत्वादनैकान्तिकता तदसत्यम्—असाधारणत्वस्यानैकान्तिकत्वेन व्याप्त्यऽसिद्धेः । सपक्षविपक्षयोर्हि हेतुरसत्त्वेन निश्चितोऽसाधारणः संशयितो वा ? निश्चितश्चेत्कथमनैकान्तिकः ? पक्षे साध्याभावेनुपपद्यमानतया निश्चितत्वेन संशयहेतुत्वाभावात् । श्रावणत्वं हि श्रवणज्ञानग्राह्यत्वं तज्ज्ञानं च शब्दादात्मानं लभमानं तस्य ग्राहकं, नान्यथा—नाकारणं विषय इत्यभ्युपगमात् । शब्दश्च नित्यस्तज्जननैकस्वभावो यदि तर्हि श्रवणप्रणिधानात्पूर्वं पश्चाच्च तज्ज्ञानोत्पत्तिप्रसङ्गः । न ह्यविकले कारणे कार्यस्यानुत्पत्तिर्युक्ता अतत्कार्यत्वप्रसङ्गात् । प्रयोगः । यस्मिन्नविकले सत्यपि यन्न भवति न तत्तत्कार्यं यथा सत्यप्यविकले कुलाले अभवन्पटो न तत्कार्यः । सत्यपि शब्दे पूर्वं पश्चाच्चाविकले न भवति च तज्ज्ञानमिति । ननु च श्रोत्रप्रणिधानात्पूर्वं पश्चाच्च तज्ज्ञानजननैकस्वभावोपि शब्दस्तन्न जनयत्यावृतत्वात् । तदप्यसङ्गतम् । आवरणं हि द्रष्टृदृश्ययोरन्तराले वर्तमानं वस्तु लोके प्रसिद्धम् । यथा काण्डपटादिकम् । श्रोत्रशब्दयोश्च व्यापकत्वे सर्वत्र सर्वदा तत्करणैकस्वभावयोरत्यन्तसंश्लिष्टयोः किं नामान्तराले वर्त्तेत ? वृत्तौ वा तयोर्व्यापकत्वव्याघातस्तदवष्टब्धदेशपरिहारेणानयोर्वर्तनादित्याप्तवचनादिनिबन्धनमर्थज्ञानमागम इत्यत्र विस्तरेण विचारयिष्यामः । तत्रास्याऽऽवृतत्वात्तज्ज्ञानाजन-

१ सपक्षे एव सत्त्वमित्युच्यमाने विपक्षे एकदेशेन सत्त्वनिवृत्तिः स्यात् । तद्व्यवच्छेदार्थं साध्येन विपक्षे हेतोरसत्त्वं यथा स्यादिति विपक्षे चासत्त्वं चेत्युक्तम् ॥ २ दिग्नागेन ॥ ३ एते एव विपक्षास्तेभ्यस्तत ॥ ४ स्वरूपेण ॥ ५ यस ॥ ६ तर्हि ॥ ७ अनुमाने ॥ ८ बौद्धे ॥ ९ वजने ॥ १० परिपूर्णम् ॥ ११ शब्दत्वादेश्च ॥ १२ विद्यमानात् ॥ १३ यद्यदसाधारण तत्तदनैकान्तिकमिति ॥ १४ शब्दे ॥ १५ अनित्यत्वस्य ॥ १६ श्रावणत्वहेतो १७ साध्याभावे अनुपपद्यमानतया निश्चितत्व हेतो कथमित्युक्ते आह ॥ १८ एकाग्रतायां ॥ १९ शब्दक्षणे ॥ २० श्रवणज्ञानस्य ॥ २१ श्रवणज्ञान शब्दकार्यं न भवति शब्देऽविकले सति पूर्वं पश्चाच्चानुत्पद्यमानत्वात् ॥ २२ आवारकवायुभिः ॥ २३ द्रष्टृदृश्ययो ॥ २४ मध्ये ॥ २५ वस्त्रविशेष ॥ २६ आवरणाभाव ॥ २७ शब्दस्य ॥

कत्वं किन्त्वसत्त्वादेव । इति श्रावणत्वादेः सपक्षविपक्षाभ्यां व्यावृत्तत्वेपि पक्षे साध्याविनाभावित्वेन निश्चितत्वाद्गमकत्वमेव । न च सपक्षविपक्षयोरसत्त्वेन निश्चितः
पक्षे साध्याविनाभावित्वेन निश्चेतुमशक्यः सर्वानित्यत्वे साध्ये सत्त्वादेरहेतुत्वप्रसङ्गात् । न खलु सत्त्वादिर्विपक्ष एवासत्त्वेन निश्चितः सपक्षेपि तदसत्त्वनिश्चयात् ।
सपक्षस्याभावात्तत्र सत्त्वादेरसत्त्वनिश्चयान्निश्चयहेतुत्वं न पुनः श्रावणत्वादेः सद्भावेपीति चेन्ननु श्रावणत्वादिरपि यदि सपक्षे स्यात्तदा तं व्याप्नुयादेवेति समाना-
न्तर्व्याप्तिः । सति विपक्षे धूमादिश्चासत्त्वेन निश्चितो निश्चयहेतुर्मा भूत् । विपक्षे सत्यसति चासत्त्वेन निश्चितः साध्याविनाभावित्वाद्धेतुरेवेति चेत्तर्हि सपक्षे
सत्यसति चासत्त्वेन निश्चितो हेतुरस्तु तत एव । नन्वेवं सपक्षे तदेकदेशे वा सन्कथं हेतुः सपक्षेऽसन्नेव हेतुरित्यनवधारणात् । विपक्षेपि तदसत्त्वानवधारणमस्त्वित्य-
युक्तं-साध्याविनाभावित्वव्याघातानुषङ्गात् । यदि पुनः सपक्षविपक्षयोरसत्त्वेन संशयितोऽसाधारण इत्युच्यते तदा पक्षत्रयवृत्तितया निश्चितया संशयितया
वाऽनैकान्तिकत्वं हेतोरित्यायातम् । न च श्रावणत्वादौ सास्तीति गमकत्वमेव । विरुद्धताप्येतेन प्रत्युक्ता । यो हि विपक्षैकदेशेपि न वर्त्तते स कथं तत्रैव वर्त्तेत
असिद्धता तु दूरोत्सारितैव श्रावणत्वस्य शब्दे सत्त्वनिश्चयात् । तन्न पक्षधर्मत्वं सपक्षे सत्त्वं वा हेतोर्लक्षणम् । विपक्षे पुनरसत्त्वमेव निश्चितं साध्याविनाभा-
वनियमनिश्चयस्वरूपमेव । इति तदेव हेतोः प्रधानं लक्षणमस्तु । किमत्र लक्षणान्तरेण ? न च सपक्षे सत्त्वाभावे हेतोरनन्वयत्वानुषङ्गः अन्तर्व्याप्तिलक्षणस्य
तथोपपत्तिरूपस्यान्वयस्य सद्भावादन्यथानुपपत्तिरूपव्यतिरेकवत् । न खलु दृष्टान्तधर्मिण्येव साधर्म्यं वैधर्म्यं वा हेतोः प्रतिपत्तव्यमिति नियमो युक्तः सर्वस्य
क्षणिकत्वादिसाधने सत्त्वादेरहेतुत्वप्रसङ्गात् । ननु त्रैरूप्यं हेतोर्लक्षणं मा भूत् पक्वान्येतानि फलान्येकशाखाप्रभवत्त्वादुपयुक्तफलवदित्यादौ मूर्खोयं देवदत्तस्त-
त्पुत्रत्वादितरतत्पुत्रवदित्यादौ च तदाभासेपि तत्सम्भवात् । पञ्चरूपत्वं तु तल्लक्षणं युक्तमेवानवद्यत्वात् । एकशाखाप्रभवत्वस्याबाधितविषयत्वासम्भवादामता-
ग्राहिप्रत्यक्षेणैव तद्विषयस्य बाधितत्वात् । तत्पुत्रत्वादेश्चासत्प्रतिपक्षत्वाभावात्तत्प्रतिपक्षस्य शास्त्रव्याख्यानादिलिङ्गस्य सम्भवात् । प्रकरणसमस्याप्यसत्प्रति-
पक्षत्वाभावादहेतुत्वम् । तस्य हि लक्षणं 'यस्मात् प्रकरणचिन्ता स प्रकरणसम' इति । प्रक्रियेते साध्यत्वेनाधिक्रियेते अनिश्चितौ पक्षप्रतिपक्षौ यौ तौ प्रकरणम् ।

---

१ हेतु ॥ २ सर्वमनित्यं सत्त्वादिति ॥ ३ नित्ये ॥ ४ निश्चयहेतुत्वम् ॥ ५ सपक्षस्य ॥ ६ सपक्षेऽसत्त्वनिश्चयादिति शेष ॥ ७ सपक्षे ॥ ८ श्रावणत्वादे सति विपक्षे तत्रासत्त्वेन निश्चितस्य स्वसाध्यसाधकत्वे अङ्गीक्रियमाणे ॥
९ पक्षे ॥ १० स्वसाध्यस्य ॥ ११ सति विपक्षे असत्त्वाविशेषात् ॥ १२ हेतु १३ सपक्षे असत्त्वेन निश्चितस्य हेतुत्वप्रकारेण ॥ १४ चेतनास्तरव- स्वापादिमत्त्वात् सत्त्वादिति हेतु सिद्धेषु न प्रवर्त्तते अन्यत्र प्रवर्त्तते ॥
१५ नित्ये ॥ १६ न केवल सपक्षे ॥ १७ अनैकान्तिकत्त्वनिराकरणपरेण ग्रन्थेन ॥ १८ पक्षधर्मत्वसपक्षेसत्त्वलक्षणेन ॥ १९ पक्षे एव ॥ २० अन्वय ॥ २१ व्यतिरेक ॥ २२ दृष्टान्तस्यासत्त्वात् ॥ २३ योग ॥
२४ भक्षित ॥ २५ स श्यामस्तत्पुत्रत्वादित्यादौ च ॥ २६ अनुष्णोग्निर्द्रव्यत्वाज्जलवत् इति च ॥ २७ साध्यस्य ॥ २८ तत्पुत्रो विद्वान् शास्त्रव्याख्यानसद्भावात् ॥ २९ तत्पुत्रत्वादिति हेतो ॥ ३० हेतो ॥ ३१ स्वीक्रियेते ॥
३२ वादिना य पक्षो निश्चित स प्रतिवादिना अनिश्चित । य प्रतिवादिना निश्चित स वादिना न निश्चित ॥ ३३ वादिप्रतिवादिभ्याम् ॥

तस्य चिन्ता संशयात्प्रभृत्याऽऽनिश्चयात्पर्यालोचना यतो भवति स एव । तन्निश्चयार्थं प्रयुक्तः प्रकरणसमः । पक्षद्वयेप्यस्य समानत्वादुभयत्राप्यन्वयादिसद्भावात् । तद्यथा । अनित्यः शब्दो नित्यधर्मानुपलब्धेर्घटादिवत् । यत्पुनर्नित्यं तन्नानुपलभ्यमाननित्यधर्मकं यथात्मादि । एवमेकेनान्यतरानुपलब्धेरनित्यत्वसिद्धौ साधकत्वेनोपन्यासे सति द्वितीयः प्राह । यद्यनेन प्रकारेणानित्यत्वं प्रसाध्यते तर्हि नित्यतासिद्धिरप्यस्त्वन्यतरानुपलब्धेस्तत्रापि सद्भावात् । तथा हि । नित्यः शब्दोऽनित्यधर्मानुपलब्धेरात्मादिवत् । यत्पुनर्न नित्यं तन्नानुपलभ्यमानाऽनित्यधर्मकं यथा घटादीत्यप्यविचारितरमणीयम् । साध्याविनाभावित्वव्यतिरेकेणापरस्याबाधितविषयत्वादेरसम्भवात् तदेव प्रधानं हेतोर्लक्षणमस्तु । किं पञ्चरूपप्रकल्पनया । न च प्रमाणप्रसिद्धत्रैरूप्यस्य हेतोर्विषये बाधा सम्भवति । अनयोर्विरोधात् । साध्यसद्भावे एव हि हेतोर्धर्मिणि सद्भावस्त्रैरूप्यम् । तदभावे एव च तत्र तत्सम्भवो बाधा । भावाभावयोश्चैकत्रैकस्य विरोधः । किञ्चाध्यक्षागमयोः कुतो हेतुविषयबाधकत्वम् ? स्वार्थव्यभिचारित्वाच्चेद्धेतावपि सति त्रैरूप्ये तत्समानमित्यसावप्यनयोर्विषये बाधकः स्यात् । दृश्यते हि चन्द्रार्कादिस्थैर्यग्राह्यऽध्यक्षं देशान्तरप्राप्तिलिङ्गप्रभवानुमानेन बाध्यमानम् । अथैकशाखाप्रभवत्वाद्यनुमानस्य भ्रान्तत्वाद्बाध्यत्वम् । कुतस्तद्भ्रान्तत्वम् ? अध्यक्षबाध्यत्वात् त्रैरूप्यवैकल्याद्वा ? प्रथमपक्षेऽन्योन्याश्रयः । भ्रान्तत्वेऽध्यक्षबाध्यत्वं ततश्च भ्रान्तत्वमिति । द्वितीयपक्षस्त्वयुक्तस्त्रैरूप्यसद्भावस्यात्र परेणाभ्युपगमात् । अनभ्युपगमे वाऽत एवास्याऽगमकत्वोपपत्तेः किमध्यक्षबाधासाध्यम् ? किञ्चाबाधितविषयत्वं निश्चितमनिश्चितं वा हेतोर्लक्षणं स्यात् ? न तावदनिश्चितमतिप्रसङ्गात् । नापि निश्चितं तन्निश्चयासम्भवात् । स हि स्वसम्बन्धी सर्वसम्बन्धी वा ? स्वसम्बन्धी चेत्तत्कालीनः सर्वकालीनो वा ? न तावत्तत्कालीनस्तस्यासम्यगनुमानेपि सम्भवात् । नापि सर्वकालीनस्तस्यासिद्धत्वात् । कालान्तरेप्यत्र बाधकं न भविष्यतीत्यसर्वविदा निश्चेतुमशक्यत्वात् । सर्वसम्बन्धिनोपि तत्कालस्योत्तरकालस्य वा तन्निश्चयस्यासिद्धत्वमर्वाग्दृशा सर्वत्र सर्वदा सर्वेषामत्र बाधकस्याभाव इति निश्चेतुमशक्तेस्तन्निश्चयनिबन्धनस्याभावात् । तन्निबन्धनं ह्यनुपलम्भः संवादो वा स्यात् ? न तावदनुपलम्भः सर्वात्मसम्बन्धिनोऽस्याऽसिद्धानैकान्तिकत्वात् । नापि संवादः प्रागनुमानप्रवृत्तेस्तस्यासिद्धेः । अनुमानोत्तरकालं तत्सिद्ध्यभ्युपगमे परस्पराश्रयः । अनुमानात्प्रवृत्तौ संवादनिश्चयस्ततश्चाबाधितविषयत्वावगमेऽनुमानप्रवृत्तिरिति । न चाविनाभावनिश्चयादेवाबाधितविषयत्वनिश्चयो हेतौ, पञ्चरूपयोगिन्यऽविना-

१ बाधकादिमध्ये ॥ २ आ मर्यादायाम् ॥ ३ हेतो ॥ ४ हेतु ॥ ५ हेतो ॥ ६ पक्षधर्मत्वादि ॥ ७ सपक्षधर्मत्वादि ॥ ८ तथा हि ॥ ९नित्यत्व ॥ १० यौगेन ॥ ११ अनित्यधर्मस्य ॥ १२ मीमासक ॥ १३ असत्प्रतिपक्षत्वस्य च ॥ १४ यौगमतमालम्ब्य सूरिभिरुच्यते ॥ १५ वस ॥ १६ कि त्रैरूप्य का च बाधा कथ च तयोर्विरोध इत्युक्ते आह ॥ १७ पर्वते ॥ १८ यदा हेतोर्धर्मिणि सद्भावस्तदा पक्षधर्मत्वम् । यदा च साध्यसद्भावे हेतोर्धर्मिणि सद्भावस्तदान्वय । यदा च साध्यसद्भावे एव हेतोर्धर्मिणि सद्भावस्तदा विपक्षेऽसत्त्वम् । कथ साध्यसद्भाव एव इत्येवकारेण विपक्षेऽसत्त्व गम्यम् ॥ १९ साध्यस्य ॥ २० साध्य ॥२१ एकशाखाप्रभवत्वलक्षणे ॥ २२ यौगेन ॥ २३ पक्षधर्मत्वादेरप्यनिश्चितस्य हेतुलक्षणत्वप्रसङ्गात् ॥ २४ अनुमानकालीन ॥ २५ एकशाखाप्रभवत्वलक्षणे ॥ २६ सम्यगनुमाने ॥ २७ अनुमान ॥ २८नृणाम् ॥२९ अनुमानविषये ॥३० भावुकस्य ॥३१आत्मन स्वस्य ॥

भावपरिसमाप्तिवादि[1]नामवाधितविषयत्वाऽनिश्चये[2]ऽविनाभावनिश्चयस्यैवासम्भवात् । तन्नैकशाखाप्रभवत्वादेर्वाधितविषयत्वाद्धेत्वाभासत्वम् । नापि तत्पुत्रत्वादेः सत्प्रतिपक्षत्वात् । यतः प्रतिपक्षस्तुल्यवलोऽतुल्यवलो वा सन् स्यात् ? न तावदाद्यः पक्षो द्वयो[3]स्तुल्यवलत्वे एकस्य वाधकत्वमपरस्य च वाध्यत्वमिति विशेषानुपपत्तेः । न च पक्षधर्मत्वाद्यभाव [4]एकस्य विशेपस्तस्यान[5]भ्युपगमात् । अभ्युपगमे वाऽत एवैकस्य[6] दुष्टत्वसिद्धेर्न[7] किञ्चिदनुमानवाधया । द्वितीयपक्षेप्यतुल्यवलत्वं तयोः[8] पक्षधर्मत्वादिभावाभावकृतमनुमानवाधाजनितं वा स्यात् ? प्रथमपक्षोनभ्युपगमादेवायुक्तः पक्षधर्मत्वादेरुभयोर[9]प्यभ्युपगमात् । द्वितीयोप्यसम्भाव्यस्तस्याद्यापि विवादपदापन्नत्वात् । न खलु द्वयोस्त्रैरूप्याविशेपतस्तुल्यत्वे सत्येकस्य वाध्यत्वमपरस्य च वाधकत्वमिति व्यवस्थापयितुं शक्यमविशेपेणैव तत्प्रसङ्गात् । इतरेतराश्रयश्च । अतुल्यवलत्वे सत्यनुमानवाधा तस्यां चातुल्यवलत्वमिति । यच्च प्रकरणसमस्यानित्यः शब्दोऽनुपलभ्यमाननित्यधर्मकत्वादित्युदाहरणं तत्रानुपलभ्यमाननित्यधर्मकत्वं शब्दे तत्त्वतोऽप्रसिद्धं न वा ? प्रथमपक्षे पक्षवृत्तितयाऽस्याऽसिद्धेरसिद्धत्वम् । द्वितीयपक्षे तु साध्यधर्मान्विते धर्मिणि तत्प्रसिद्धं तद्रहिते वा ? आद्यविकल्पे साध्यवत्येव धर्मिण्यस्य सद्भावसिद्धिः । कथमगमकत्वम् ? न हि साध्यधर्मसन्तरेण धर्मिण्यऽभवनं विहायापरं हेतोरविनाभावित्वम् । तच्चेत्समस्ति, कथं न गमकत्वम् ? अविनाभावनिवन्धनत्वात्तस्य । द्वितीयपक्षे तु विरुद्धत्वं साध्यधर्मरहिते धर्मिणि प्रवर्त्तमानस्य विपक्षवृत्तितया विरुद्धत्वोपपत्तेः । अथ सन्दिग्धसाध्यधर्मवति तत्तत्र प्रवर्त्तते तर्हि सन्दिग्धविपक्षव्यावृत्तिकत्त्वादस्याऽनैकान्तिकत्त्वम् । न[10]न्वेवं सर्वो हेतुरनैकान्तिकः स्यात्साध्यसिद्धेः प्राक्साध्यधर्मिणः[11] साध्यधर्मसदसत्त्वाश्रयत्त्वेन सन्दिग्धत्वात् । ततोऽनु[12]मेयव्यतिरिक्ते साध्य[13]धर्मवति धर्म्यन्तरे [14]साध्या[15]भावे च प्रवर्त्तमानो हेतुरनैकान्तिकः साध्याभाववत्येव तु पक्षधर्मत्वे सति विरुद्धः[16] । यस्तु विपक्षाद्व्यावृत्तः सपक्षे चानुगतः पक्षधर्मो निश्चितः [17]स्वसाध्यं गमयत्येवेत्यभ्युपगन्तव्यमित्यप्यसुन्दरं यतो यदि साध्य[18]धर्मिव्यतिरिक्ते धर्म्यन्तरे[19] हेतोः स्वसाध्येन प्रतिवन्धोऽभ्युपगम्यते तर्हि साध्यधर्मि[20]ण्युपादीयमानो हेतुः कथं साध्यं साधयेत्? तत्र साध्यमन्तरेणाप्यस्य सद्भावाभ्युपगमात् । तद्व्यतिरिक्ते एव धर्म्यन्तरे[21] साध्येनास्य प्रतिवन्धग्रहणात् । न चान्यत्र साध्याविनाभावित्वेन निश्चितो हेतु[22]रन्यत्र साध्यं गमयत्यतिप्रसङ्गात्[23] । ततः साध्यधर्मिण्येव हेतोर्व्याप्तिः प्रतिपत्तव्या । ननु यदि साध्यधर्मान्वितत्वेन साध्यधर्मिण्य[24]सौ [25]पूर्वमेव प्रतिपन्नस्तर्हि साध्यधर्मस्यापि पूर्वमेव प्रतिपन्नत्वाद्धेतोः पक्षधर्मताग्रहणस्य वैयर्थ्यं तदप्यसङ्गतं–यतः

---

१ यौगादीनाम् ॥ २ उक्तन्यायेन ॥ ३ तत्पुत्रत्वव्याख्यानवत्त्वहेत्वो ॥ ४ तत्पुत्रत्वादित्येतस्य ॥ ५ यौगेन ॥ ६ तत्पुत्रत्वादित्येतस्य ॥ ७ तत्पुत्रत्वव्याख्यानवत्त्वहेत्वो ॥ ८ तत्पुत्रत्वस्य पक्षधर्माद्यभाव व्याख्यानवत्त्वस्य च पक्षधर्मादिसद्भाव ॥ ९ तत्पुत्रत्वव्याख्यानवत्वहेत्वो ॥ १० सन्दिग्धसाध्यधर्मवति प्रवर्त्तमानस्यानैकान्तिकत्वप्रकारेण ॥ ११ पर्वतस्य शब्दस्य वा ॥ १२ अनित्यतयाऽनुमेयाच्छब्दात् ॥ १३ घटे ॥ १४ आकाशादौ ॥ १५ सपक्षविपक्षयोरिति यावत् ॥ १६ शब्दो नित्य कृतकत्वाद्घटवत् । साध्याभाववत्येव घटे कृतकत्वस्य शब्दलक्षणपक्षधर्मत्वे सति प्रवर्तमानस्य विरुद्धत्वम् ॥ १७ शब्दात् पर्वतात् वा ॥ १८ घटे महानसादौ वा ॥ १९ शब्दे पर्वते वा ॥ २० घटे महानसे वा ॥ २१ घटे महानसे वा ॥ २२ शब्दे पर्वते वा ॥ २३ काष्ठे लोहलेख्यत्वोपलम्भाद्वज्रेपि तथाप्रसङ्गात् ॥ २४ शब्दे ॥ २५ पक्षधर्मताग्रहणात् ॥

प्रतिबन्धसाधकप्रमाणेन सर्वोपसंहारेण साधनधर्मः साध्यधर्माभावे क्वचिदपि न भवतीति सामान्येन प्रतिबन्धः प्रतिपन्नः । पक्षधर्मताग्रहणकाले तु यत्रैव धर्मिण्युपलभ्यते हेतुस्तत्रैव साध्यं साधयतीति पक्षधर्मताग्रहणस्य विशेषविषयप्रतिपत्तिनिबन्धनत्वान्नानुमानस्य वैयर्थ्यम् । न खलु विशिष्टधर्मिण्युपलभ्यमानो हेतुस्तद्गतसाध्यमन्तरेणोपपत्तिमान्, तस्य तेन व्याप्तत्वाभावप्रसङ्गात् । अत एव प्रतिपन्नप्रतिबन्धैकहेतुसद्भावे धर्मिणि न विपरीतसाध्योपस्थापकहेत्वन्तरस्य सद्भावः । अन्यथा द्वयोरप्यनयोः स्वसाध्याविनाभावित्वान्नित्यत्वानित्यत्वयोश्चैकत्रैकदैकान्तवादिमते विरोधतोऽसम्भवात्तद्व्यवस्थापकहेत्वोरप्यसम्भवः । सम्भवे वा तयोः स्वसाध्याविनाभूतत्वान्नित्यत्वानित्यत्वधर्मसिद्धिर्धर्मिणः स्यादिति कुतः प्रकरणसमस्यागमकता एकान्तत्वसिद्धिर्वा ? अथान्यतरस्यात्र स्वसाध्याविनाभाववैकल्यं तथाप्यत एवास्यागमकतेति किं तत्प्रतिपादनप्रयासेन ? किञ्च नित्यधर्मानुपलब्धिः प्रसज्यप्रतिषेधरूपा पर्युदासरूपा वा शब्दानित्यत्वे हेतुः स्यात् ? तत्राद्यः पक्षोऽयुक्तस्तुच्छाभावस्य साध्यासाधकत्वान्निषिद्धत्वाच्च । द्वितीयपक्षे त्वनित्यधर्मोपलब्धिरेव हेतुः । सा च शब्दे यदि सिद्धा, कथं नानित्यतासिद्धिः ? अथ तच्चिन्तासम्बन्धिपुरुषेणासौ प्रयुज्यत इति तत्रासिद्धा तर्हि कथं न सन्दिग्धो हेतुर्वादिनं प्रति ? प्रतिवादिनस्त्वसौ स्वरूपासिद्ध एव नित्यधर्मोपलब्धेस्तत्रास्य सिद्धेः । तन्न पञ्चरूपत्वमप्यस्य लक्षणं घटते अबाधितविषयत्वादेर्विचार्यमाणस्यायोगात्पक्षधर्मत्वादिवत् । यदि चैकस्य हेतोः पक्षधर्मत्वाद्यनेकधर्मात्मकत्वमिष्यते तदानेकान्तः समाश्रितः स्यात् । न च यदेव पक्षधर्मस्य सपक्षे एव सत्त्वं तदेव विपक्षात्सर्वतोऽसत्त्वमित्यभिधातव्यमन्वयव्यतिरेकयोर्भावाभावरूपयोः सर्वथा तादात्म्यायोगात् । तत्त्वे वा केवलान्वयी केवलव्यतिरेकी वा सर्वो हेतुः स्यात्, न त्रिरूपवान् । व्यतिरेकस्य चाभावरूपत्वाद्धेतोस्तद्रूपत्वेऽभावरूपो हेतुः स्यात् । न चाभावस्य तुच्छरूपत्वात्स्वसाध्येन धर्मिणा सम्बन्धः । यदि च सपक्ष एव सत्त्वं विपक्षासत्त्वं, न ततो भिन्नं तर्हि तदेवास्यासाधारणं कथं स्यात् ? वस्तुभूतान्योन्याभावमन्तरेण प्रतिनियतस्यास्याप्यत्रासम्भवात् । अथ ततस्तदन्यधर्मान्तरं तर्ह्येकस्यानेकधर्मात्मकस्य हेतोस्तथाभूतसाध्याविनाभावित्वेन निश्चितस्यानेकान्तात्मकार्थप्रसाधकत्वात्कथं न परोपन्यस्तहेतूनां विरुद्धता ? एकान्तविरुद्धेनानेकान्तेन व्याप्तत्वात् । किञ्च

---

१ ऊहेन ॥ २ हेतु ॥ ३ ननु यथास्माक साध्यधर्मव्यतिरिक्ते एव धर्म्यन्तरे स्वसाध्येन हेतो प्रतिबन्धग्रहणाभ्युपगमे साध्यधर्मिणि साध्यधर्ममन्तरेणाप्यस्य सद्भावादगमकत्वम् । तथा भवतामपि प्रतिबन्धप्रसाधकप्रमाणेन सामान्येनैवाविनाभावप्रतिपत्तेर्विशिष्टधर्मिणि उपलभ्यमानस्य हेतोस्तद्गतसाध्यमन्तरेणाप्युपपत्तिसम्भवादित्युक्ते वक्ति न रातिवति ॥ ४ अन्यथा ॥ ५ सर्वत्र ॥ ६ अनुपलभ्यमाननित्यधर्मत्वलक्षणस्य ॥ ७ शब्दे ॥ ८ नित्यत्वलक्षण ॥ ९ अनुपलभ्यमानानित्यधर्मकत्वलक्षणस्य ॥ १० हेत्वो ॥ ११ शब्दे धर्मिणि ॥ १२ अनित्यत्वमेव शब्दस्येति ॥ १३ द्वयोर्मध्ये एकस्यापस्य ॥ १४ प्रकरण ॥ १५ नित्यधर्मानुपलब्धेरनित्यत्व प्रतिपादयाम । अनित्यधर्मानुपलब्धेर्नित्यत्व साधयाम इति ॥ १६ शब्दे धर्मिणि ॥ १७ शब्दे ॥ १८ असत्प्रतिपक्षत्वस्य च ॥ १९ हेतो ॥ २० सपक्षे सत्त्वम् ॥ २१ विपक्षेऽसत्त्वम् ॥ २२ अस्मिन्पक्षे व्यतिरेकस्यान्वयरूपत्वे तादात्म्यम् ॥ २३ अत्र पक्षे अन्वयस्य व्यतिरेकरूपत्वे तादात्म्यम् ॥ २४ केवलव्यतिरेकीत्यस्मिन्पक्षे ॥ २५ हेतुरूपस्य ॥ २६ अभावपक्षे हेतो ॥ २७ यस ॥ २८ भिन्न ॥ २९ यस ॥ ३० विपक्षासत्त्वलक्षणम् ॥ ३१ वैशेषिक ॥

परैः सामान्यरूपो हेतुरुपादीयते विशेषरूपो वा उभयमनुभयं वा ? सामान्यरूपश्चेत्तर्कि व्यक्तिभ्यो भिन्नमभिन्नं वा ? भिन्नं चेन्न व्यक्तिभ्यो भिन्नस्य सामान्यस्याऽप्रतिभासमानतयाऽसिद्धत्वात् । तथाभूतस्यास्य सामान्यविचारे निराकरिष्यमाणत्वाच्च । अथाभिन्नम् । कथञ्चित्सर्वथा वा ? सर्वथा चेन्न सर्वथा व्यक्त्यव्यतिरिक्तस्यास्य व्यक्तिस्वरूपवद्व्यक्त्यन्तराननुगमतः सामान्यरूपतानुपपत्तेः । कथञ्चित्पक्षस्त्वनभ्युपगमादेवायुक्तः । नापि व्यक्तिरूपो हेतुस्तस्यासाधारणत्वेन[3] गमकत्वायोगात् । नाप्युभयं परस्परानानुविद्धमुभयदोषप्रसङ्गात्[4] । नाप्यनुभयमन्योन्यव्यवच्छेदरूपाणामेकाभावे द्वितीयविधानादनुभयस्यासत्त्वेन हेतुत्वायोगात् । ततः पदार्थान्तरानुवृत्तव्यावृत्तरूपमात्मानं विभ्रदेकमेवार्थस्वरूपं प्रतिपत्तुर्भेदाभेदप्रत्ययप्रसूतिनिबन्धनं हेतुत्वेनोपादीयमानं तथाभूतसाध्यसिद्धिनिबन्धनमभ्युपगन्तव्यम् । किञ्चैकान्तवाद्युपन्यस्तहेतोः किं सामान्यं साध्यं विशेषो वोभयं वा अनुभयं वा ? न तावत्सामान्यं केवलस्यास्यासम्भवादर्थक्रियाकारित्वविकलत्वाच्च । नापि विशेषस्तस्याननुयायितया हेत्वऽव्यापकस्य साधयितुमशक्तेः । नाप्युभयमुभयदोषानतिवृत्तेः । नाप्यनुभयं तस्यासतो हेत्वव्यापकत्वेन साध्यत्वायोगात् । यच्चान्यदुक्तं 'प्रत्यक्षपूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोऽदृष्टं चेति, तत्र पूर्ववच्छेषवत्केवलान्वयि । यथा सदसद्वर्गः कस्यचिदेकज्ञानालम्बनमनेकत्वात् पञ्चाङ्गुलवत् । पञ्चाङ्गुलव्यतिरिक्तस्य सदसद्वर्गस्य पक्षीकरणादन्यस्याभावाद्विपक्षाभावः । अत एव व्यतिरेकाभावः । पूर्ववत्सामान्यतोऽदृष्टं केवलव्यतिरेकि । यथा सात्मकं जीवच्छरीरं प्राणादिमत्त्वादिति । पूर्ववच्छेषवत्सामान्यतोऽदृष्टमन्वयव्यतिरेकि । यथा विवादास्पदं तनुकरणभुवनादि बुद्धिमत्कारणं कार्यत्वादिभ्यो घटादिवत् । यत्पुनर्बुद्धिमत्कारणं न भवति न तत्कार्यत्वादिधर्माधारो यथात्मादिरिति ।' तदप्येतेन प्रत्याख्यातं सर्वत्रान्यथानुपपन्नत्वस्यैव हेतुलक्षणतोपपत्तेस्तस्मिन्सत्येव हेतोर्गमकत्वप्रतीतेः । केवलान्वयिनो हि यद्यन्यथानुपपन्नत्वं प्रमाणनिश्चितमस्ति, किमन्वयाभिधानेन ? अथान्वयाभावे तदभावस्तदनिश्चयो वेति तदभिधानं, स्यादेतद्यद्यविनाभावस्तेन व्याप्तः स्यात्–अव्यापकनिवृत्तेरव्याप्यनिवृत्तावतिप्रसङ्गात् । व्याप्तश्चेत्तर्हि प्राणादौ तन्निवृत्तावविनाभावनिवृत्तेरगमकत्वं स्यात् । न खलु यद्यस्य व्यापकं तत्तदभावे भवति वृक्षत्वाभावे शिंशपात्ववत् । गमकत्वे वास्य नान्वयेनासौ व्याप्तः स्यात् । यदभावे हि यद्भवति न

---

१ पराभ्युपगतसामान्य धर्मिसामान्यरूपता न भजति व्यक्त्यन्तराननुगमात् । व्यक्तिस्वरूपवत् । सामान्य व्यक्त्यन्तर नानुगच्छति व्यक्तिभ्योऽभिन्नत्वात् । व्यक्तिस्वरूपवत् ॥ २ परेण ॥ ३ दृष्टान्तेऽसत्त्वेन ॥ ४ परस्परानुविद्ध तु परैर्नाभ्युपगम्यते ॥ ५ निरपेक्षम् ॥ ६ व्यक्त्यन्तरेषु ॥ ७ सदृशपरिणामेन ॥ ८ व्यक्तिभेदेषु ॥ ९ देशकालादिभेदेन भेदप्रत्यय ॥ १० धूमो धूम इत्यभेदप्रत्यय ॥ ११ व्यक्तिरहितस्य ॥ १२ पाकादि ॥ १३ अन्यत्र व्यक्तिनिषेधेषु ॥ १४ लिङ्गप्रत्यक्ष यत ॥ १५ समासरहितानि पदान्यत्र ॥ १६ सर्वावयवापेक्षयाऽऽदो प्रयुज्यमानत्वात्पक्ष पूर्व पूर्वमस्य हेतोरस्तीति पूर्ववत्पक्षधर्म इत्यर्थ ॥ १७ शेषो दृष्टान्त सोऽस्य हेतोरस्तीति शेषवत्सपक्षे सन्नित्यर्थ ॥ १८ सपक्षे सत्साध्यम् ॥ १९ द्रव्यगुणादि ॥ २० प्रागभावादि ॥ २१ पक्षीभूताद् दृष्टान्तभूतादन्यस्य व्यतिरिक्तस्य विपक्षस्य ॥ २२ साधनसामान्यस्य साध्यसामान्येन व्याप्ति सामान्य ततोऽदृष्ट व्यतिरेकिदृष्टान्ते ॥ २३ व्यतिरेकिदृष्टान्त ॥ २४ गगन च ॥ २५ अन्यथानुपपन्नत्वमेव हेतुलक्षणमिति समर्थनपरेण ग्रन्थेन ॥ २६ अनुमाने ॥ २७ तर्कलक्षण ॥ २८ दृष्टान्ते हेतो सत्त्वमन्वय ॥ २९ अन्वयस्य ॥ ३० अविनाभावस्य ॥ ३१ सत्याम् ॥ ३२ घटनिवृत्तौ पटनिवृत्तिप्रसङ्गात् ॥ ३३ अविनाभावोऽन्वयेन ॥ ३४ अविनाभावस्य ॥ ३५ अन्वय ॥ ३६ अविनाभाव. ॥

तत्तेन व्याप्तम् । यथा रासभाभावे भवन्धूमादिर्न तेन व्याप्त । भवति चान्वयाभावेपि तदविनाभाव इति । सदसद्वर्गः कस्यचिदेकज्ञानालम्बनमनेकत्वादित्ययं च हेतुः कुतः केवलान्वयी ? व्यतिरेकाभावाच्चेदयमपि कुतः ? तद्विषयस्य विपक्षस्याभावाच्चेदथ कोयं विपक्षाभावः ? पक्षसपक्षावेव निवृत्तिमात्रं वा ? प्रथमपक्षे[1] पर[2]मतप्रसङ्गोऽभावस्य भावान्तरस्वभावतास्वीकारात्[3] । द्वितीयपक्षे तु स तथाविधः प्रतिपन्नो न वा ? न प्रतिपन्नश्चेत्तर्हि विपक्षाभावसन्देहाद्व्यतिरेकाभावोपि सन्दिग्ध इति केवलान्वयोपि तादृगेव । अथ प्रतिपन्नः । स यदि साध्यनिवृत्त्या साधननिवृत्त्याधारः प्रतिपन्नस्तर्हि स एव विपक्षः[4], कथं विपक्षाभावो यतो व्यतिरेकाभावः ? साध्यसाधनाभावाधारतया निश्चितस्य विपक्षत्वात् । तच्च[5] भाववदभावस्यापि न विरुध्यते । कथमन्यथा[6] सदसद्वर्गः कस्यचिदेकज्ञानालम्बनमित्यत्रासन्[7] पक्षः स्यात् ? असन्पक्षो भवति न विपक्ष[8] इति किङ्कृतो विभागः ? अथाऽसद्वर्गशब्देन[9] सामान्यसमवायान्त्यविशेषा एवोच्यन्ते, नाभावस्तर्हि तद्विषयं ज्ञानं न कस्यचिदनेनं[10] प्रसाधितमिति सुव्यवस्थितम्[11] । ईश्वरस्याखिलकार्यकारणग्रामपरिज्ञाने[12] प्रागभावाद्यज्ञाने कार्यत्वादेरप्यज्ञानात्[13] । किञ्च यद्यभावोऽत्र[14] पक्षसपक्षाभ्यां बहिर्भूतस्तर्ह्यनेनानेकत्वादित्यनैकान्तिको हेतुस्तदनेकत्वेपि कस्यचिदेकज्ञानावलम्बनत्वानभ्युपगमात्[15] । अभ्युपगमे वा कथमभावो न पक्षः ? तथा विपक्षोप्यस्तु[16] । नन्वेवं विपक्षाभावोपि तदालम्बनमिति पक्ष एव स्यात् । तथा च पुनरपि विपक्षाभाव[17] एव । इति चेत्तर्हि पुनरपि तदेव[18] चोद्यं—कोयं विपक्षाभाव इति । यदि पक्षसपक्षावेव[19], भावाद्भिन्नस्याभावस्याभावः । अथ तुच्छा विपक्षनिवृत्तिस्तदभावः, सोपि यद्यप्रतिपन्नस्तर्हि सन्दिग्धः । तत्सन्देहे च व्यतिरेकाभावोपि तादृगेवेति न निश्चितः केवलान्वय इत्यादि तदवस्थं[20] पुनः पुनरावर्त्तते इति चक्रकप्रसङ्गः[21] । ततः केवलान्वयित्वेनाभ्युपगतस्य विपक्षाभाव एव तुच्छो विपक्षः । ततः साध्यनिवृत्त्या साधननिवृत्तिश्चेति कथं न व्यतिरेकः ? अत[22] एवाविनाभावस्य तत्परिज्ञानस्य च प्राणादिमत्त्ववद्भावात्किमन्वयेन[23] ? अथ विपक्षाभावस्योपादानत्वायोगान्न[24] ततः साध्यसाधनयोर्व्यावृत्तिस्तन्न । भावः प्रागभावादिभ्यो भिन्नस्ते वा परस्परतो भिन्ना इत्यादावप्यभावस्यापादानत्वाभावप्रसङ्गात् सर्वेषां[25] साङ्कर्यं स्यात् । किञ्चान्वयो व्याप्तिरभिधीयते । सा च त्रिधा—वहिर्व्याप्तिः साकल्यव्याप्तिरन्तर्व्याप्तिश्चेति । तत्र प्रथमव्याप्तौ भग्नघटव्यतिरिक्तं

---

१ प्रसज्य ॥ २ जैनमत ॥ ३ जैनेन ॥ ४ विपक्षाभावो विपक्षो भवति साध्यनिवृत्त्या साधननिवृत्त्याधार स्यात्मम्प्रतिपन्नविपक्षवत् ॥५ भाव एव महान्हृदलक्षण आकाशलक्षणो वा विपक्ष स्यात् न त्वभाव इत्युक्ते आह ॥ ६ अभावस्य विपक्षत्वे विरोधश्चेत् ॥ ७ असन् ॥ ८ केन ॥ ९ ये सत्तासम्बन्धात्सन्तस्ते सद्वर्गवाच्या । ये तु स्वत सन्तस्ते असद्वर्गशब्दवाच्या इत्यर्थ ॥ १० अनेकत्वादित्यनेन अनुमानेन ॥ ११ उपहास ॥ १२ प्रागसत्कार्यं यस्मिन् कपाले उत्पन्ने यस्य वस्तुनो घटलक्षणस्य नियमेन प्रध्वसस्तत्कारणम् ॥ १३ कारणत्वस्य ॥ १४ प्रागभावादिरूप ॥ १५ अनुमाने ॥ १६ अभावस्यैकभावावलम्बनत्वम् ॥ १७ तुच्छरूपोऽभाव ॥ १८ अभावस्य विपक्षतासद्भावप्रकारेण ॥ १९ विपक्षश्चासावभावश्चेति ॥ २० एकज्ञानरूप ॥ २१ पूर्वोक्तमेव ॥ २२ विपक्षाभावस्तर्हि ॥ २३ सा प्राक्तनी अवस्था यस्य ॥ २४ ग्रन्थचक्रक ॥ २५ हेतो ॥२६व्यतिरेकसद्भावादेव॥२७ईश्वर्थे वत् ॥ २८ अनेकत्वादिगतेन ॥ २९ तुच्छरूपत्वादपादानत्वायोग ॥ ३० भावाभावाना प्रागभावादीना भावाभावादीनाम् ॥

सर्वं क्षणिकं सत्त्वात्कृतकत्त्वाद्वा । तद्वत् विवादापन्नाः प्रत्यया निरालम्बनाः प्रत्ययत्वात्स्वप्नप्रत्ययवत्, ईश्वरः किञ्चिज्ज्ञो रागादिमान्वा-वक्तृत्वादिभ्यो रथ्यापुरुषवदित्यादेर्गमकत्वं स्यात् केवलान्वयस्यात्र सुलभत्वात् । ननु सर्वं न सत्त्वादिकं क्षणिकत्वादिना व्याप्तमात्मादौ क्षणिकत्त्वाद्यसत्त्वात्-तन्न तदसत्त्वे तत्रार्थक्रियासत्त्वात्सत्त्वं न स्यात् । किञ्च घटादिदृष्टान्ते सत्त्वादिकं क्षणक्षयादौ सति दृष्टमपि यदि क्वचित्तदभावेपि स्यान्न तर्हि वहिर्व्याप्तिरन्वयो, लक्षणयुक्ते[3] वाधासम्भवे[4] तल्लक्षणमेव दूषितं स्यात् । अथ सकलव्याप्तिरन्वयः । ननु केयं सकलव्याप्तिः? दृष्टान्तधर्मिणीव साध्यधर्मिण्यन्यत्र च साध्येन साधनस्य व्याप्तिः सेति चेत् सा कुतः प्रतीयताम्? प्रत्यक्षतोऽनुमानाद्वा? प्रत्यक्षतश्चेत् किमिन्द्रियान्मानसाद्वा? न तावदिन्द्रियाच्चक्षुरादेरिन्द्रियस्य सकलसाध्यसाधनार्थसन्निकर्षवैधुर्ये तदनुपपत्तेः । न हि तद्वैधुर्ये तद्युक्तमिन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमऽव्यभिचारि व्यवसायात्मकं ज्ञानं प्रत्यक्षमित्यभिधानात् । तस्य तत्सन्निकर्षे वा प्राणिमात्रस्याशेषज्ञत्वप्रसङ्गान्न कश्चिदीश्वराद्विशेष्येत । ननु साध्यसाधनयोः साकल्येन ग्रहणं सकलव्याप्तिग्रहणम् । साध्यं चाग्निसामान्यं साधनं च धूमसामान्यम् । तयोश्चानवयवयोरेकत्रापि साकल्येन ग्रहणमस्ति । विशेषप्रतिपत्तिस्तु सर्वत्र पक्षधर्मतावलादेवेति चेत् तर्हि क्षणिकत्त्वादि साध्यं, सत्त्वादि साधनं तयोश्चानवयवयोः प्रदीपादौ सहदर्शनादेव सकलव्याप्तिग्रहः किन्न स्यात्? मानसप्रत्यक्षादपि व्याप्तिप्रतिपत्तावयमेव दोषः । तन्न प्रत्यक्षतः सकलव्याप्तिग्रहः । नाप्यनुमानतोऽनवस्थाप्रसङ्गात् । सामान्यस्य च साध्यत्वे साधनवैफल्यं तत्राविवादात् व्याप्तिग्रहणकाल एवास्य प्रसिद्धेः । कथमन्यथा सामान्यधर्मयोः साकल्येन व्याप्तिर्निर्णीता स्यात्? साध्यत्वं चास्यासतः करणं सतो ज्ञापनं वा? प्रथमपक्षे सामान्यस्यानित्यत्वाऽसर्वगतत्वप्रसङ्गः । द्वितीयपक्षेप्यस्य दृश्यत्वे धर्मिवत्प्रत्यक्षत्वमिति किं केन ज्ञाप्यते? अन्यथा धूमसामान्यमप्यग्निसामान्येन ज्ञाप्येत । अथ व्यक्तिसहायत्वाद्धूमसामान्यमेव प्रत्यक्षं नान्यत् । ततोऽयमदोषः । न-अस्य सामान्यविचारे सहायापेक्षाप्रतिक्षेपात् । यच्चोक्तं-विशेषप्रतिपत्तिस्तु पक्षधर्मतावलादेवेति, तत्र पक्षधर्मता धूमस्य तत्सामान्यस्य वा? तत्राद्यः पक्षोऽसङ्गतो विशेषेण व्याप्तेरप्रतिपत्तितस्तद्गमकत्वायोगात् । द्वितीयपक्षेप्यग्निसामान्यस्यैव धूमसामान्यात्सिद्धिः स्यात्-तेनैव तस्य व्याप्तेः । नाग्निविशेषस्य-अनेनाव्याप्तेः । अथ साधनसामान्यात्साध्यसामान्यप्रतिपत्तेरेवेष्टविशेषप्रतिपत्तिः, सामान्यस्य विशेषनिष्ठत्वात् । ननु तत्सामान्यमपि विशेषमात्रेण व्याप्तं सत्तदेव गमयेन्नान्यत् ।

---

१ यौग प्रति ॥ २ लक्षणम् ॥ ३ लक्ष्यम् ॥ ४ सत्त्वादिलक्षणे हेतौ ॥ ५ वहिर्व्याप्तिरूपस्यान्वयस्य कथं वाधासम्भव ? आत्मादौ क्षणिकत्वाभावेपि सत्त्वमस्ति यत ॥ ६ सकलेषु साध्यसाधनेषु ॥ ७ व्यक्त्यन्तरेषु ॥ ८ अशब्दजम् ॥ ९ सकलयो ॥ १० अनुमाने ॥ ११ अनुमाने ॥ १२ हेतो ॥ १३ निरंशयो ॥ १४ युगपत् ॥ १५ पर्वतोग्निमान्धूमवत्त्वादिति सत्यानुमाने धूमोग्निकार्यं तदन्वयव्यतिरेकानुविधायित्वादित्यनेनानुमानेन व्याप्तिं प्रतीयते इत्यादिप्रकारेण ॥ १६ साध्यसामान्यस्य ॥ १७ व्याप्तिग्रहणकाले साध्यसामान्यस्य सिद्धिर्नास्ति चेत् ॥ १८ साध्यसाधनयो ॥ १९ निष्पादनम् ॥ २० हेतुना ॥ २१ साध्यसामान्यस्य ॥ २२ हेतुना ॥ २३ प्रत्यक्षमपि ज्ञाप्यते चेत् ॥ २४ धूमविशेष ॥ २५ अग्निसामान्यम् ॥ २६ साध्यसाधनसामान्यस्य ॥ २७ ग्रन्थे ॥ २८ स. यसाधनयो ॥ २९ यत्र यत्र पुरो भवति पर्वतस्थधूमस्तत्राग्निरिति ॥ ३० सिद्धि ॥ ३१ धूमसामान्यस्य ॥ ३२ यस ॥ ३३ अग्निविशेष ॥ ३४ प्रेष्टविशेषम् ॥

अथ विशिष्टविशेषाधारं[1] लिङ्गसामान्यं प्रतीयमानं विशिष्टविशेषाधिकरणं[2] साध्यसामान्यं गमयतीत्युच्यते, तदप्युक्तिमात्रं–तथा[3] व्याप्तेरभावात्[4]। अथ विपक्षे सद्भाव-बाधकप्रमाणवशात्तत्सिद्धिरिष्यते तर्हि तावतैव पर्याप्तत्वात् किमन्वयेन परस्य ? एतेनान्तर्व्याप्तिरपि चिन्तिता। न खलु प्रत्यक्षादितः सापि प्रसिद्ध्यति। तत्र पूर्ववच्छेषवदिति सूक्तम्। यच्चान्यदुक्तं 'पूर्ववत्सामान्यतो दृष्टं चेति। चशब्दो भिन्नप्रक्रमः, सामान्यत इत्यस्यानन्तरं द्रष्टव्यः। ततोयमर्थः–पूर्ववत्पक्षवत्सामान्यतोपि न केवलं विशेषतो दृष्टं विपक्षे। अनेन केवलव्यतिरेकी हेतुर्दर्शितः। सात्मकं जीवच्छरीरं प्राणादिमत्त्वादित्यादिः' तदप्ययुक्तं–यतः प्राणादेरन्वयाभावे कुतोऽविनाभावावगतिः ? व्यतिरेकाच्चेत्। तथा हि। यस्माद् घटादेः सात्मकत्वनिवृत्तौ प्राणादयो नियमेन निवर्त्तन्ते तस्मात्सात्मकत्वाभावः प्राणाद्यभावेन व्याप्तो धूमाभावेनेव पावकाभावः। जीवच्छरीरे च प्राणाद्यभावविरुद्धः प्राणादिसद्भावः प्रतीयमानस्तदभावं निवर्त्तयति। स च निवर्त्तमानः स्वव्याप्यं सात्मकत्वाभावमादाय निवर्त्तते इति सात्मकत्वसिद्धिस्तत्र। इत्यप्यसारं–यतोनुमानान्तरेप्येवमविनाभावप्रसिद्धेः -।- केवलव्यतिरेक्येव सर्वमनुमानं स्यादन्वयमात्रेण तत्सिद्धावतिप्रसङ्गस्योक्तत्वात्। किञ्च साध्यनिवृत्त्या साधननिवृत्तिर्व्यतिरेकः। स च कंचित्कदाचित्सर्वत्र सर्वदा वा स्यात् ? न तावदाद्यः पक्षस्तथा व्यतिरेकस्य साधनाभासेपि सम्भवात्। द्वितीयपक्षोप्ययुक्तः साकल्येन व्यतिरेकप्रतिपत्तेः प्रत्यक्षादिप्रमाणतः परेषामन्वयप्रतिपत्तेरिवासम्भवात्। एतेन पूर्ववच्छेषवत्सामान्यतो दृष्टमन्वयव्यतिरेक्यनुमानं प्रत्याख्यातं पक्षद्वयोपक्षिप्तदोषानुषङ्गात्। यच्च तदुदाहरणं–विवादापन्नं तनुकरणभुवनादिकं बुद्धिमद्धेतुकं कार्यत्वादिभ्यो घटादिवदित्युक्तं तदपीश्वरनिराकरणप्रकरणे विशेषतो दूषितमिति पुनर्न दूष्यते। अथ पूर्ववत्–कारणात्कार्यानुमानं, शेषवत्–कार्यात्कारणानुमानं, सामान्यतो दृष्टम्–अकार्यकारणादकार्यकारणानुमानं सामान्यतोऽविनाभावमात्रादिति व्याख्यायेते तदप्यविनाभावनियमनिश्चायकप्रमाणाभावादेवायुक्तं परेषाम्। स्याद्वादिनां तु तद्युक्तं तत्सद्भावात्। इत्याचार्यः स्वयमेव कार्यकारणेत्यादिना हेतुप्रपञ्चे प्रपञ्चयिष्यति। यदपि पूर्ववत्पूर्वं लिङ्गलिङ्गिसम्बन्धस्य कंचिन्निश्चयादन्यत्र

१ पर्वतस्थधूम ॥ २ पर्वतस्थाग्नि ॥ ३ वस ॥ ४ यो य पुरोवर्त्तिपर्वतस्थधूम स पुरोवर्त्तिपर्वतस्थाग्निमानिति ॥ ५ हेतो ॥ ६ अनुपलम्भ ॥ ७ व्याप्ति ॥ ८ व्याप्ते ॥ ९ यौगस्य ॥ १० साकल्यव्याप्तिशोधनपरेण ग्रन्थेन ॥ ११ निराकृता ॥ १२ अन्वयदृष्टान्तस्य ॥ १३ कारणात् ॥ १४ कारणात् ॥ १५ व्यापकेन ॥ १६ धूमाभाव पावकाभावे सत्यसति च भवति धूमाभावस्य व्यापकत्वेन तदतन्निष्ठत्वात् ॥ १७ देशे ॥ १८ स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यादौ ॥ १९ केवलान्वयिकेवलव्यतिरेकिलक्षणपक्षद्वयनिराकरणपरेण ग्रन्थेन ॥ २० पूर्वं कारण तल्लिङ्गमस्यानुमानस्यास्तीति पूर्ववत्। कारणलिङ्गजनितमनुमानमित्यर्थं ॥ २१ असौ पुमान् रूपादिज्ञानवान् चक्षुरादिमत्त्वान्मद्वदित्युदाहरणम्। शेषवदिति शेष कार्यं तल्लिङ्गमस्यानुमानस्यास्तीति शेषवत्। कार्यलिङ्गजनितमनुमानमित्यर्थं। सात्मक जीवच्छरीर प्राणादिमत्त्वादित्युदाहरणम् ॥ २२ दृष्टान्ते ॥ २३ कार्यं यो हेतुर्न भवति कारण वा यो हेतुर्न भवति तस्माद्धेतो कार्यं यन्न भवति साध्य कारण वा यन्न भवति साध्य तस्यानुमानम्। मातुलिङ्ग रूपवद्रसवत्त्वात्सम्प्रतिपन्नमातुलिङ्गवदित्युदाहरणम् ॥ २४ सूत्रम् ॥ २५ व्याख्यानम् ॥ २६ ऊह ॥ २७ जटाधराणाम् ॥ २८ अनुमानत्रितयम् ॥ २९ लिङ्गलिङ्गिसम्बन्ध पूर्वं निश्चीयमानत्वात् पूर्वं सोस्यानुमानस्यास्तीति पूर्ववत्। अग्निमान्पर्वतो धूमवत्त्वान्महानसवदित्युदाहरणम् ॥ ३० महानसे ॥ ३१ पर्वते ॥

प्रवर्त्तमानमनुमानम् । शेष[1]वत्परिशेषा[2]नुमानं-प्रसक्तप्रतिषेधे परिशिष्टस्य प्रतिपत्तेः । सामान्यतो दृष्टं[3] विशिष्टव्यक्तौ[4] सम्बन्धाग्रहणात्[5] सामान्येन दृष्टम् । यथा गतिमानादित्यो देशाद्देशान्तरप्राप्तेर्देवदत्तवदिति[6] । तदप्येतेन प्रत्याख्यातमुक्त[7]प्रकाराणां प्रमाणतः प्रसिद्धाविनाभावानां प्रतिपादयिष्यमाणहेतुप्रपञ्चत्वेन स्याद्वादिनामेव सम्भवात् । न चायं भेदो[8] घटते । सर्वं हि लिङ्गं पूर्ववदेव परिशेषानुमानस्यापि पूर्ववत्त्वप्रसिद्धेः । प्र[9]सक्त[10]प्रतिषेधस्य [11]परिशि[12]ष्ट[13]प्रतिपत्त्यविनाभूतस्य पूर्वं क्वचि[14]न्निश्चितस्य विवादाध्यासितपरिशिष्ट[15]प्रतिपत्तौ साधनस्य[16] प्रयोगात्, सामान्यतो दृष्टस्याऽपि पूर्ववत्त्वप्रतीतेः, क्वचिद्देशान्तरप्राप्तेर्गतिमत्त्वाविनाभाविन्या एव देवदत्तादौ प्रतिपत्तेः, अन्यथा[17] तद[18]नुमानाप्रवृत्तेः । परिशेषानुमानमेव वा सर्वं-पूर्ववतोपि धूमात्पावकानुमानस्य प्रसक्ताऽपावकप्रतिषेधात्प्रवृत्तिघटनात् । तदप्रसक्तौ विवादानुपपत्तेरनुमानवैयर्थ्यं स्यात् । सामान्यतो दृष्टस्यापि देशान्तरप्राप्तेरादित्यगत्यनुमानस्य तदगतिमत्त्वस्य प्रसक्तस्य प्रतिषेधादेवोपपत्तेः । स[19]कलं सामान्यतो दृष्टमेव वा-सर्वत्र[20] सामान्येनैव लिङ्गलिङ्गिसम्बन्धस्य प्रतिपत्तेः, विशेषतस्तत्सम्बन्धस्य प्रतिपत्तुमशक्तेः । ततोनुमानं तत्प्रभेदं चेच्छता[21]ऽविनाभाव एवैकं हेतोः प्रधानं लक्षणं प्रतिपत्तव्यम् ।

ननु चास्तु प्रधानं लक्षणमविनाभावो हेतोः । तत्स्वरूपं तु निरूप्यतामप्रसिद्धस्वरूपस्य लक्षणत्वायोगादित्याशङ्क्य सहक्रमेत्यादिना तत्स्वरूपं निरूपयति । सहभावनियमः क्रमभावनियमश्चाविनाभावः प्रतिपत्तव्यः । कयोः पुनः सहभावः कयोश्च क्रमभावो ये[22]न्नियमोऽविनाभावः स्यादित्याह-सहचारिणो रूपरसादिलक्षणयोर्व्याप्यव्यापकयोश्च शिंशपात्ववृक्षत्वादिस्वभावयोः सहभावः प्रतिपत्तव्यः । पूर्वोत्तरचारिणोः कृत्तिकाशकटोदयादिस्वरूपयोः कार्यकारणयोश्चाग्निधूमादिस्वरूपयोः क्रमभाव इति । कुतोसौ प्रोक्तप्रकारोऽविनाभावो निर्णीयते इत्याह—

तर्कात्[23]तन्निर्णयः । न पुनः प्रत्यक्षादेरित्युक्तं तर्कप्रामाण्यप्रसाधनप्रस्तावे ।

ननु साधनात्साध्यविज्ञानमनुमानमित्युक्तम् । तत्र किं साध्यमित्याह-ईष्ट[24]मबाधितमसिद्धं साध्यम् । संशयादिव्यवच्छेदेन हि प्रतिपन्नमर्थस्वरूपं सिद्ध-

---

१ शेष परिशिष्यमाणोर्थं सोस्यास्तीति शेषवत् । अत्रोदाहरण शब्द क्वचिदाश्रितो गुणत्वाद्रूपवदिति ॥ २ उद्धरितार्थस्याकाशादे ॥ ३ अनुमानम् ॥ ४ साध्यसाधन नास्तीति चेत् ॥ ५ हेतूनाम् ॥ ६ देवदत्ते गतिमत्त्वदेशाद्देशान्तरप्राप्त्यो साध्यसाधनयोर्धर्मयो सामान्येन प्रतिपत्ति ॥ ७ पूर्ववच्छेषवत्सामान्यतोदृष्टलक्षणानाम् ॥ ८ ऊहलक्षणात् ॥ ९ क्वचिदनाश्रितत्वस्य ॥ १० घटस्य ॥ ११ क्वचिदाश्रितत्वस्य ॥ १२ आकाशस्य ॥ १३ क्वचिदाश्रितत्वस्य ॥ १४ रूपादौ ॥ १५ शब्दे क्वचिदाश्रितत्वस्य ॥ १६ गुणवत्त्वस्य ॥ १७ देशाद्देशान्तरप्राप्तेर्गतिमत्त्वाविनाभाविन्या देवदत्ते प्रतिपत्तिर्नास्तीति चेत् ॥ १८ आदित्यगतिमत्त्वस्य १९ पूर्ववच्छेषवदित्यनुमानद्वयम् ॥ २० अनुमाने ॥ २१ यौगेन भवता ॥ २२ ताद्वि (षष्ठीद्विवचनमित्यर्थं) । ययो ॥ २३ तस्य अविनाभावस्य ॥ २४ साध्यत्वेनाभिप्रेतम् ॥

मुच्यते। तद्विपरीतमसिद्धम् । तच्च सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यासिद्धपदम्। किमयं स्थाणुः पुरुषो वेति चलितप्रतिपत्तिविषयभूतो ह्यर्थः सन्दिग्धोभिधीयते । शुक्तिकाशकले रजताध्यवसायलक्षणविपर्यासगोचरस्तु विपर्यस्तः । गृहीतोऽगृहीतोपि वार्थो यथावदनिश्चितस्वरूपोऽव्युत्पन्नः–तथाभूतस्यैवार्थस्य साधने साधनसामर्थ्यात्, न पुनस्तद्विपरीतस्य–तत्र तद्वैफल्यात् ।

इष्टाऽबाधितविशेषणद्वयस्यानिष्टेत्यादिना फलं दर्शयति । अनिष्टं हि सर्वथा नित्यत्वं शब्दे जैनस्य । अश्रावणत्वं तु प्रत्यक्षबाधितम् । आदिशब्देनानुमानादिबाधितपक्षपरिग्रहः । तत्रानुमानबाधितो यथा, नित्यः शब्द इति । आगमबाधितो यथा, प्रेत्याऽसुखप्रदो धर्म इति । स्ववचनबाधितो यथा, माता मे वन्ध्येति। लोकबाधितो यथा, शुचि नरशिरःकपालमिति। तयोरनिष्टाध्यक्षादिबाधितयोः साध्यत्वं मा भूदितीष्टाबाधितवचनम् ।

ननु यथा शब्दे कथञ्चिदनित्यत्वं जैनस्येष्टं तथा सर्वथाऽनित्यत्वमाकाशगुणत्वं चान्यस्येति तदपि साध्यमनुपज्यते। न च वादिनो यदिष्टं तदेव साध्यमित्यभिधातव्यं सामान्याभिधायित्वेनेष्टस्यान्यत्रोप्यविशेषात्। इत्याशङ्कापनोदार्थमाह–

'न चासिद्धवदिष्टं प्रतिवादिनो' विशेषणम्। न हि सर्वं सर्वापेक्षया विशेषणं प्रतिनियतत्वाद्विशेषणविशेष्यभावस्य। तत्रासिद्धमिति साध्यविशेषणं प्रतिवाद्यपेक्षया । न पुनर्वाद्यपेक्षया–तस्यार्थस्वरूपप्रतिपादकत्वात् । न चाविज्ञातार्थस्वरूपः प्रतिपादको नामातिप्रसङ्गात्। प्रतिवादिनस्तु प्रतिपाद्यत्वात्तस्य चाविज्ञातार्थस्वरूपत्वाविरोधात् तदपेक्षयैवेदं विशेषणम् । इष्टमिति तु साध्यविशेषणं वाद्यपेक्षया । वादिनो हि यदिष्टं तदेव साध्यं न सर्वस्य । तदिष्टमप्यध्यक्षाद्यबाधितं साध्यं भवतीति प्रतिपत्तव्यं तत्रैव साधनसामर्थ्यात् ।

तदेव समर्थयमानः प्रत्यायनाय हीत्याद्याह। इच्छया खलु विषयीकृतमिष्टमुच्यते। स्वाभिप्रेतार्थप्रतिपादनाय चेच्छा वक्तुरेव।

तस्य चोक्तप्रकारस्य साध्यस्य हेतोर्व्याप्तिप्रयोगकालापेक्षया साध्यमित्यादिना भेदं दर्शयति। क्वचिद्व्याप्तिकाले साध्यं धर्मो नित्यत्वादिस्तेनैव हेतोर्व्याप्तिसम्भवात्। प्रयोगकाले तु तेन साध्यधर्मेण विशिष्टो धर्मी साध्यमभिधीयते। प्रतिनियतसाध्यधर्मविशेषणविशिष्टतया हि धर्मिणः साधयितुमिष्टत्वात् साध्यव्यपदेशाविरोधः। अस्यैव पर्यायमाह–पक्ष इति यावत्। ननु च कथं धर्मी पक्षो धर्मधर्मिसमुदायस्य तत्त्वात् । तत्र–साध्यधर्मविशेषणविशिष्टतया हि धर्मिणः साधयितुमिष्टस्य पक्षाभिधाने दोषाभावात्।

---

१ अर्थानाम् ॥ २ पूर्णम् ॥ ३ सिद्धौ ॥ ४ सूत्रेण ॥ ५ शब्द अश्रावण इत्युक्ते ॥ ६ प्रत्यभिज्ञायमानत्वादिति हेतु ॥ ७ कृतकत्वादिति हेतुना बाध्य पक्षोत्र ॥ ८ पुरुषाश्रितत्वादधर्मवत् ॥ ९ पुरुषसंयोगेपि अगर्भत्वात् प्रसिद्धवन्ध्यावत् ॥ १० प्राण्यङ्गत्वान्छङ्खशुक्तिवत् ॥ ११ साध्ययो ॥ १२ वैशेषिकस्य ॥ १३ जैनस्य ॥ १४ प्रतिवादिन्यपि ॥ १५ इष्टाऽसिद्धयोर्मध्ये ॥ १६ मम्बन्धिन ॥ १७ शब्दस्य ॥ १८ इति ॥ १९ पक्ष इति ॥

स च पक्षत्वेनाभिप्रेतः प्रसिद्धो धर्मी । तत्प्रसिद्धिश्च क्वचिद्विकल्पतः क्वचित्प्रत्यक्षादितः क्वचिच्चोभयत इति प्रदर्शनार्थं, प्रत्यक्षसिद्धस्यैव धर्मित्वमित्येकान्तनिराकरणार्थं च विकल्पसिद्धे इत्याद्याह । विकल्पेन सिद्धे तस्मिन्धर्मिणि सत्तेतरे[3] साध्ये—हेतुसामर्थ्यतः । यथा अस्ति सर्वज्ञः सुनिश्चितासम्भवद्बाधकप्रमाणत्वात्, नास्ति खरविषाणं तद्विपर्ययादिति । न खलु सर्वज्ञखरविषाणयोः सदसत्तायां साध्यायां विकल्पादन्यतः सिद्धिरस्ति, तत्रेन्द्रियव्यापाराभावात् । ननु चेन्द्रियप्रतिपन्न एवार्थे मनोविकल्पस्य प्रवृत्तिप्रतीतेः कथं तत्रेन्द्रियव्यापाराभावे विकल्पस्यापि प्रवृत्तिरित्यप्यपेशलं—धर्माधर्मादौ तत्प्रवृत्त्यभावानुषङ्गात्[4] । आगमसामर्थ्यप्रभवत्वेनास्यात्र प्रवृत्तौ[5] प्रकृतेप्यतस्तत्प्रवृत्तिरस्तु विशेषाभावात् । प्रमाणं प्रत्यक्षादिकम् । उभयं प्रमाणविकल्पौ । ताभ्यां सिद्धे पुनर्धर्मिणि साध्यधर्मेण विशिष्टता साध्या । यथाग्निमानयं देशः, परिणामी शब्द इति । देशो हि धर्मित्वेनोपात्तोऽध्यक्षप्रमाणत एव प्रसिद्धः, शब्दस्तूभाभ्याम्[7] । न खलु देशकालान्तरिते ध्वनौ प्रत्यक्षं प्रवर्त्तते श्रूयमाणमात्र एवास्य प्रवृत्तिप्रतीतेः । विकल्पस्य त्वऽनियतविषयतया तत्र प्रवृत्तिरविरुद्धैव । ननु चैवं[8] देशस्याप्यग्निमत्त्वे साध्ये कथं प्रत्यक्षसिद्धता ? तत्र हि दृश्यमानभागस्याग्निमत्त्वसाधने प्रत्यक्षबाधनं साधनवैफल्यं वा[9]—तत्र साध्योपलब्धेः । अदृश्यमानभागस्य तु तत्साधने कुतस्तत्प्रत्यक्षतेति? तदप्यसमीचीनमवयविद्रव्यापेक्षया पर्वतादेः सांव्यवहारिकप्रत्यक्षप्रसिद्धताभिधानात् । अतिसूक्ष्मेक्षिकापर्यालोचने[11] न किञ्चित्प्रत्यक्षं स्यात् । बहिरन्तर्वाऽस्मदादिप्रत्यक्षस्याशेषविशेषतोऽर्थसाक्षात्करणेऽसमर्थत्वात् । योगिप्रत्यक्षस्यैव तत्र सामर्थ्यात् । ननु प्रयोगकालवद्व्याप्तिकालेपि तद्विशिष्टस्य[12] धर्मिण एव साध्यव्यपदेशः कुतो न स्यादित्याशङ्क्याह—

व्याप्तौ तु साध्यं धर्म एव, न पुनस्तद्वान्—अन्यथा तदघटनात्, अनेन हेतोरन्वयासिद्धेः । न खलु यत्र यत्र कृतकत्वादिकं प्रतीयते तत्र तत्रानित्यत्वादिविशिष्टशब्दाद्यन्वयोस्ति ।

ननु[13] प्रसिद्धो धर्मीत्यादिपक्षलक्षणप्रणयनमयुक्तम्—अस्ति सर्वज्ञ इत्याद्यनुमानप्रयोगे पक्षप्रयोगस्यैवासम्भवात्, अर्थादापन्नत्वात्तस्य । अर्थादापन्नस्याप्यभिधाने पुनरुक्तत्वप्रसङ्गः—अर्थादापन्नस्य स्वशब्देनाभिधानं[14] पुनरुक्तमित्यभिधानात् । तत्प्रयोगेपि च हेत्वादिवचनमन्तरेण साध्याप्रसिद्धेस्तद्वचनादेव च तत्प्रसिद्धेर्व्यर्थः पक्षप्रयोगः । इत्याशङ्क्य साध्यधर्माधारेत्यादिना प्रतिविधत्ते । साध्यधर्मोस्तित्वादिः । तस्याधार आश्रयः [यत्रासौ साध्यधर्मो वर्त्तते] तत्र सन्देहः—किमसौ साध्यधर्मोस्तित्वादिः सर्वज्ञे वर्त्तते सुखादौ वेति । तस्यापनोदाय गम्यमानस्यापि[15] पक्षस्य वचनम् । साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मो-

१ अनुमाने ॥ २ निश्चितसवाद सवाद शब्दप्रत्ययो विकल्पस्तेन ॥ ३ अमत्ता ४ इन्द्रियव्यापाराभावात् ॥ ५ शब्दगम्यत्वाविशेषात् ॥ ६ प्रसिद्ध ॥ ७ शब्दस्य केवलप्रत्यक्षत सिद्ध्यभावप्रकारेण ॥ ८ स्यात् ॥ ९ नाऽवयव (प्रदेश) द्रव्यापेक्षया ॥ १० असर्वज्ञप्रत्यक्ष ॥ ११ विचार ॥ १२ साध्यधर्म ॥ १३ बौद्ध ॥ १४ अर्थादापन्नस्य ॥ १५ व्याप्तिप्रदर्शनद्वारेण ॥

पसंहारवत् । तस्याऽवचनं साध्यसिद्धिप्रतिबन्धकत्वात्प्रयोजनाभावाद्वा ? तत्र प्रथमपक्षोऽयुक्तो वादिना साध्याविनाभावनियमैकलक्षणेन हेतुना स्वपक्षसिद्धौ साध-
यितुं प्रस्तुतायां प्रतिज्ञाप्रयोगस्य तत्प्रतिबन्धकत्वाभावात् ततः प्रतिपक्षासिद्धेः । द्वितीयपक्षोऽप्ययुक्तस्तत्प्रयोगे प्रतिपाद्यप्रतिपत्तिविशेषस्य प्रयोजनस्य सद्भावात्;
पक्षाऽप्रयोगे तु केषाचिन्मन्दमतीनां प्रकृतार्थाप्रतिपत्तेः । ये तु तत्प्रयोगमन्तरेणापि प्रकृतार्थं प्रतिपद्यन्ते तान्प्रति तदप्रयोगोऽभीष्ट एव । "प्रयोगपरिपाटी तु
प्रतिपाद्यानुरोधतः" इत्यभिधानात् । ततो युक्तो गम्यमानस्याप्यस्य प्रयोगः । कथमन्यथा शास्त्रादावपि प्रतिज्ञाप्रयोगः स्यात् ? न हि शास्त्रे नियतकथाया
प्रतिज्ञा नाभिधीयते–अग्निरत्र धूमात्, वृक्षोयं शिंशपात्वादित्याद्यभिधानानां तत्रोपलम्भात् । परानुग्रहप्रवृत्तानां शास्त्रकाराणां प्रतिपाद्यावबोधनाधीन-
धियां शास्त्रादौ प्रतिज्ञाप्रयोगो युक्तिमानेवोपयोगित्वात्तस्येत्यभिधाने वादेपि सोऽस्तु–तत्रापि तेषां तादृशत्वात् ॥ अमुमेवार्थं को वेत्यादिना परोपहसनव्याजेन
समर्थयते । को वा प्रामाणिकः कार्यस्वभावानुपलम्भभेदेन पक्षधर्मत्वादिरूपत्रयभेदेन या त्रिधा हेतुमुक्त्वाऽसिद्धत्वादिदोषपरिहारद्वारेण समर्थयमानो न पक्षयति ।
अपि तु पक्षं करोत्येव । न चाऽसमर्थितो हेतुः साध्यसिद्ध्यङ्गमतिप्रसङ्गात् । ततः पक्षप्रयोगमनिच्छता हेतुमनुक्त्वैव तत्समर्थनं कर्त्तव्यम् । हेतोरवचने कस्य सम-
र्थनमिति चेत् । पक्षस्याप्यनभिधाने क्व हेत्वादि प्रवर्त्तताम् ? गम्यमाने प्रतिज्ञाविषय एवेति चेद्गम्यमानस्य हेत्वादेरपि समर्थनमस्तु । गम्यमानस्यापि हेत्वादे-
र्मन्दमतिप्रतिपत्त्यर्थं वचने तदर्थमेव प्रतिज्ञावचनमप्यस्तु विशेषाभावात् । ततः साध्यप्रतिपत्तिमिच्छता हेतुप्रयोगवत्पक्षप्रयोगोप्यभ्युपगन्तव्यः । तद्द्वयस्य-
वानुमानाङ्गत्वात् । इत्याह–एतद्द्वयमेवानुमानाङ्गम् ।

ननु पक्षहेतुदृष्टान्तोपनयनिगमनान्यवयवा इत्यभिधानाद् दृष्टान्तादेरप्यनुमानाङ्गत्वसम्भवादेतद्द्वयमेवाङ्गमित्ययुक्तमुक्तम् । प्रतिज्ञा ह्यागमः । हेतुरनुमानं
प्रतिज्ञातार्थस्य तेनानुमीयमानत्वात् । उदाहरणं प्रत्यक्षं–वादिप्रतिवादिनोर्यत्र बुद्धिसाम्यं तदुदाहरणमिति वचनात् । उपनय उपमानं–दृष्टान्तधर्मिसाध्य-
धर्मिणोः सादृश्यात्, प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमित्यभिधानात् । सर्वेषामेकविषयत्वप्रदर्शनफलं निगमनमित्याशङ्क्योदाहरणस्य तावत्तदङ्गत्वं नि-
राकुर्वन्नाह ॥ नोदाहरणम् । अनुमानाङ्गमिति सम्बन्धः । तद्धि किं साक्षात्साध्यप्रतिपत्त्यर्थमुपादीयते हेतोः साध्याविनाभावनिश्चयार्थं वा व्याप्तिस्मरणार्थं वा?
प्रकारान्तरासम्भवात् । तत्राद्यविकल्पोऽयुक्तः । न हि तत्साध्यप्रतिपत्त्यङ्गं तत्र यथोक्तहेतोरेव साध्याविनाभावनियमैकलक्षणस्य व्यापारात् । द्वितीयविकल्पो-

१ सुनिश्चिताऽसम्भवद्बाधकप्रमाणत्वायमिति साधनस्य पक्षधर्मत्वेन प्रदर्शनमुपसंहारस्तद्वत् ॥ २ अस्ति सर्वज्ञ इति ॥ ३ गम्यमानस्य पक्षस्य प्रयोगो न स्यादिति ॥ ४ सुगोटाम् ॥ ५ धर्मकीर्त्यादीनाम् ॥ ६ सौगतेन ॥ ७ मि-
थ्येण ॥ ८ हेत्वाभासस्यापि साध्यसिद्ध्यङ्गताप्रसङ्गात् ॥ ९ न केवल हेतो ॥ १० साध्य न ॥ ११ साध्यमानस्यैव परिहारेण दृष्टान्तस्य समर्थनादिशब्देन ग्राह्यम् ॥ १२ एतत् ॥ १३ करणे युट् ॥ १४ म-
हानसादि ॥ १५ धूमवत्त्वेन ॥ १६ प्रसिद्ध महानस तेन सा सम्यं पर्वतस्य धूमवत्त्वेन ॥ १७ धूमनाशायम् ॥ १८ धूमवत्त्वशब्दाच्यत्र पर्वतस्य साध्य तस्य साधन ज्ञानम् ॥ १९ प्रमाणानाम् ॥ २० अमित्व ॥
२१ अक्रमपरम्परया साध्यप्रतिपत्ति कथमेवावि गद्धेतो साध्यसिद्धिरिति ॥

प्यसम्भाव्यः । न हि हेतोस्तेन साध्येनाविनाभावस्य निश्चयार्थं वा तदुपादानं युक्तं विपक्षे बाधकादेव तत्सिद्धेः । न हि सपक्षे सत्त्वमात्राद्धेतोर्व्याप्तिः[2] सिद्ध्यति । स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यत्र तदाभासेपि तत्सम्भवात् । ननु साकल्येन साध्यनिवृत्तौ साधननिवृत्तेरत्रासम्भवात्परत्र गौरेपि तत्पुत्रे तत्पुत्रत्वस्य भावान्न व्याप्तिस्तर्हि साकल्येन साध्यनिवृत्तौ साधननिवृत्तिनिश्चयरूपाद्बाधकादेव व्याप्तिप्रसिद्धेरलं दृष्टान्तकल्पनया । किञ्च वादिप्रतिवादिनोर्यत्र बुद्धिसाम्यं स दृष्टान्तो भवति प्रतिनियतव्यक्तिरूपः । यथाऽग्नौ साध्ये महानसादिः । व्यक्तिरूपं च निदर्शनं कथं तदविनाभावनिश्चयार्थं स्यात् ? प्रतिनियतव्यक्तौ तन्निश्चयस्य कर्तुमशक्तेः । [6]अनियतदेशकालाकाराधारतया सामान्येन तु व्याप्तिः । कथमन्यथान्यत्र साधनं साध्यं साधयेत् ? तत्रापि दृष्टान्तेपि तस्यां व्याप्तौ विप्रतिपत्तौ सत्यां दृष्टान्तान्तरान्वेषणेऽनवस्थानं स्यात् । नापि व्याप्तिस्मरणार्थं दृष्टान्तोपादानं तथाविधस्य प्रतिपन्नाविनाभावस्य हेतोः प्रयोगादेव तत्स्मृतेः । एवं चाप्रयोजनं तदुदाहरणम् । परं केवलमभिधीयमानं साध्यसाधने साध्यधर्मिणि सन्देहयति–सन्देहवती करोति । कुतोऽन्यथोपनयनिगमने ?

मा भूद्दृष्टान्तस्यानुमानं प्रत्यङ्गत्वमुपनयनिगमनयोस्तु स्यादित्याशङ्कापनोदार्थमाह—न च ते तदङ्गे साध्यधर्मिणि हेतुसाध्ययोर्वचनादेव हेतुसाध्यप्रतिपत्तौ संशयाभावात् । तथापि दृष्टान्तादेरनुमानावयवत्वे हेतुरूपत्वे वा समर्थनमेव वरं हेतुरूपमनुमानावयवो वास्तु साध्ये तस्योपयोगात् । [14]समर्थनं हि नाम हेतोरसिद्धत्वादिदोषं निराकृत्य स्वसाध्येनाऽविनाभावसाधनम् । साध्यं प्रति हेतोर्गमकत्वे च तस्यैवोपयोगो नान्यस्येति ।

ननु व्युत्पन्नप्रज्ञानां साध्यधर्मिणि हेतुसाध्ययोर्वचनादेवासंशयादर्थप्रतिपत्तेर्दृष्टान्तादिवचनमनर्थकमस्तु । बालानां त्वऽव्युत्पन्नप्रज्ञानां व्युत्पत्त्यर्थं तन्नानर्थकमित्याह ।

बालव्युत्पत्त्यर्थं तत्त्रयोपगमे दृष्टान्तोपनयनिगमनत्रयाभ्युपगमे, शास्त्र एवासौ तदभ्युपगमः कर्तव्यः, न वादेऽनुपयोगात् । न खलु वादकाले शिष्या व्युत्पाद्यन्ते व्युत्पन्नप्रज्ञानामेव वादेऽधिकारात् । शास्त्रे चोदाहरणादौ व्युत्पन्नप्रज्ञा वादिनो वादकाले ये प्रतिवादिनो यथा प्रतिपद्यन्ते तान् तथैव प्रतिपादयितुं समर्था भवन्ति प्रयोगपरिपाट्याः प्रतिपाद्यानुरोधतो जिनपतिमतानुसारिभिरभ्युगमात् ।

तत्र तद्व्युत्पादनार्थं दृष्टान्तस्य स्वरूपं प्रकारं चोपदर्शयति । दृष्टान्तो द्वेधाऽन्वयव्यतिरेकभेदात् । दृष्टो हि विधिनिषेधरूपतया वादिप्रतिवादिभ्यामविप्रतिपत्त्या

---

१ ऊहात् ॥ २ अविनाभाव ॥ ३ ऊहात् ॥ ४ पर्वते ॥ ५ साध्यसाधनयो ॥ ६ प्रतिनियतव्यक्तौ तन्निश्चयस्य कर्तुमशक्तेरित्येतद्भावयति ॥ ७ सामान्येन व्याप्तिर्न स्याद्यदि ॥ ८ दृष्टान्तादन्यत्र ॥ ९ यदि सन्देहवती न करोति ॥ १० उपनयनिगमनादेश्च ॥ ११ सपक्षे दृष्टान्ते सत्त्वमुपनयश्च हेतुस्वरूपम् । कुत ? त्रिरूपो हेतुर्यत इति सौगत ॥ १२ हेतुलक्षण कीदृशम् ? दृष्टान्तोपनयनिगमनलक्षणत्रिरूपलप्रदर्शनस्वरूपम् ॥ १३ हेतुरूपोस्तु । कथम् ? हेतो समर्थन हेतुरेवेत्यनेन प्रकारेण ॥ १४ विपक्षे साकल्येन बाधकप्रमाणप्रदर्शन हेतुसमर्थनम् ॥ १५ एतदेव ॥ १६ शास्त्रे यदुदाहरणादि तस्मिन् ॥ १७ वा ॥ १८ एवं च सति ॥ १९ सामान्यत स्वरूप दृष्टान्तेनोक्त शेषतस्तत्स्वरूप तु साध्यव्याप्तमित्यादिना दर्शयति ॥

प्रतिपन्नोऽन्तः साध्यसाधनधर्मौ यत्रासौ दृष्टान्त इति व्युत्पत्तेः । अथ कोऽन्वयदृष्टान्तः कश्च व्यतिरेकदृष्टान्त इति चेत् साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोन्वयदृष्टान्तः । यथाग्नौ साध्ये महानसादिः । साध्याभावे साधनव्यतिरेको यत्र कथ्यते स व्यतिरेकदृष्टान्तः । यथा तस्मिन्नेव साध्ये महाह्रदादिः ।

अथ को नाम उपनयो निगमनं वा किमित्याह—हेतोरुपसंहार उपनयः । प्रतिज्ञायास्तूपसंहारो निगमनम् । उपनयो हि साध्याविनाभावित्वेन विशिष्टे साध्यधर्मिण्युपनीयते येनोपदर्श्यते हेतुः सोभिधीयते । निगमनं तु प्रतिज्ञाहेतूदाहरणोपनयाः साध्यलक्षणैकार्थतया निगम्यन्ते सम्बद्ध्यन्ते येन तदिति । तच्चानुमानं द्व्यवयवं [1]त्र्यवयवं पञ्चा[2]वयवं वा ? [3]द्विप्रकारं भवतीति दर्शयन् तदनुमानं द्वेधेत्याह । कुतस्तद् द्वेधेति चेत् स्वार्थपरार्थभेदात् । तत्र स्वार्थमनुमानं साधनात्साध्यविज्ञानमित्युक्तलक्षणम् । किं पुनः परार्थानुमानमित्याह परार्थमित्यादि । तस्य स्वार्थानुमानस्यार्थः साध्यसाधने तत्परामर्शिवचनाज्जातं यत्साध्यविज्ञानं तत्परार्थानुमानम् ।

ननु वचनात्मकं परार्थानुमानं प्रसिद्धम् । तच्चोक्तप्रकारं साध्यविज्ञानं परार्थानुमानमिति वर्णयता कथं सङ्गृहीतमित्याह 'तद्वचनमपि तदर्थपरामर्शि वचनमपि तद्धेतुत्वात् ज्ञानलक्षणमुख्यानुमानहेतुत्वादुपचारेण परार्थानुमानमुच्यते' । उपचारनिमित्तं चास्य प्रतिपादकप्रतिपाद्यापेक्षयानुमानकार्यकारणत्वम् । तत्प्रतिपादकज्ञानलक्षणानुमानहेतुः कारणं यस्य तद्वचनस्य तस्य वा प्रतिपाद्यज्ञानलक्षणानुमानस्य हेतुः कारणम् । तद्भावस्तद्धेतुत्वम् । तस्मादिति । मुख्यरूपतया तु ज्ञानमेव प्रमाणं परनिरपेक्षतयाऽर्थप्रकाशकत्वादिति प्राक्प्रतिपादितम् ।

यथा चानुमानं द्विप्रकारं तथा हेतुरपि द्विप्रकारो भवतीति दर्शनार्थं स हेतुर्द्वेधेत्याह । योऽविनाभावलक्षणलक्षितो हेतुः प्राक्प्रतिपादितः स द्वेधा भवति उपलब्ध्यनुपलब्धिभेदात् । तत्रोपलब्धिर्विधिसाधिकैवानुपलब्धिश्च प्रतिषेधसाधिकैवेत्यनयोर्विषयनियमसुपलब्धिरित्यादिना विघटयति । अविनाभावनिमित्तो हि साध्यसाधनयोर्गम्यगमकभावः । यथा चोपलब्धेर्विधौ साध्येऽविनाभावाद्गमकत्वं तथा प्रतिषेधेपि । अनुपलब्धेश्च यथा प्रतिषेधे ततो गमकत्वं तथा विधावपीत्यग्रे स्वयमेवाचार्यो वक्ष्यति । सा चोपलब्धिर्द्विप्रकारा भवत्यविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्चेति । तत्र साध्येनाविरुद्धस्य व्याप्यादेरुपलब्धिर्विधौ साध्ये षोढा भवति [13]व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदात् । [14]ननु कार्यकारणभावस्य कुतश्चित्प्रमाणादप्रसिद्धेः कथं कार्यं कारणस्य तद्वा कार्यस्य गमकं स्यादित्यप्यास्तां तावद्विषयपरिच्छेदे सम्बन्धपरीक्षायां कार्यकारणतादिसम्बन्धस्य प्रसाधयिष्यमाणत्वात् । ननु प्रसिद्धेपि कार्यकारणभावे कार्यमेव कारणस्य गमकं तस्यैव तेना-

१ वस ॥ २ जैनस्य ॥ ३ मीमांसकस्य ॥ ४ यौगस्य ॥ ५ अनेन प्रकारेण ॥ ६ तद्द्योति ॥ ७ परार्थानुमानमुच्यते इति सम्बन्ध ॥ ८ हेतो ॥ ९ अनेन प्रकारेण ॥ १० साध्ये । अविनाभावाद्गमकत्वमुपलब्धे ॥ ११ साध्ये ॥ १२ साध्ये । ततो गमकत्वमनुपलब्धे ॥ १३ स्वभावहेतुरयम् ॥ १४ ज्ञानाद्वैतवादी शून्यवादी वा बौद्धविशेष आह ॥ १५ न केवलमग्रे प्राक्तन वक्ष्यतीत्यपि ॥ १६ आदिना सयोगादिग्रहणम् ॥

विनाभावात् । न पुनः कारणं कार्यस्य–तदभावात् । इत्यसङ्गतं–कार्याविनाभावितयाऽवधारितस्यानुमानकालप्राप्तस्य च्छत्रादे[2]र्विशिष्टकारणस्य च्छायादिकार्यानुमापकत्वेन सुप्रसिद्धत्वात् । न ह्यनुकूलमात्रमन्त्य[3]क्षणप्राप्तं वा कारणं लिङ्गमुच्यते, येन प्रति[4]वन्ध[5]वैकल्य[6]सम्भवाद्व्यभिचारि स्यात्, द्वितीयक्षणे कार्यस्य प्रत्यक्षीकरणादनुमानानर्थक्यं वा ।

तदेव समर्थयमानो रसादेकसामग्र्यनुमानेनेत्याद्याह । आस्वाद्यमानाद्धि रसात्त[7]ज्जनिका सामग्र्यनुमीयते । पश्चात्तदनुमानेन रूपानुमानम् । सजातीयं हि रूपक्षणान्तरं जनयन्नेव प्राक्तनो रूपक्षणो विजातीयरसादिक्षणान्तरोत्पत्तौ प्रभु[8]र्भवेन्नान्यथा । तथा चैकसामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं[9] हेतुर्यत्र सामर्थ्या[10]प्रतिवन्धकारणान्तरा[11]वैकल्ये भवतः । अथ पूर्वोत्तरचा[12]रिणोः[13] प्रतिपादितहेतुभ्योऽर्थान्तरत्वसमर्थनार्थमाह 'न च पूर्वोत्तरकालवर्त्तिनो[14]स्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेः' । प्रयोगो–य[16]द्यत्काले अनन्तरं वा नास्ति न तस्य तेन तादात्म्यं तदुत्पत्तिर्वा । यथा भविष्यच्छङ्खचक्रवर्त्तिकाले असतो रावणादेः[17] । नास्ति च शकटोदयादिकाले अनन्तरं वा कृत्तिकोदयादिकमिति । ता[15]दात्म्यं हि समसमयस्यैव कृतकत्वानित्यत्वादेः प्रतिपन्नम् । अग्निधूमादेश्चान्योन्यमव्यवहितस्यैव तदुत्पत्तिः, न पुनर्व्यवहितकालस्य, अतिप्रसङ्गात् । ननु प्रज्ञा[18]कराभिप्रायेण भाविरोहिण्युदयकार्यतया कृत्तिकोदयस्य गमकत्वात्कथं कार्यहेतौ नास्या[19]न्तर्भाव इति चेत् कथमेवं[20]मभूद्भरण्युदयः कृत्तिकोदयादित्यनुमानम् ? अ[21]थ भरण्युदयोपि कृत्तिकोदयस्य कारणं तेनायमदोषः[22] । ननु येन स्वभावेन भरण्युदयात्कृत्तिकोदयस्तेनैव यदि शकटोद[23]यात्तदा भरण्युदयादिवाऽतोपि पश्चादसौ स्यात् । यथा च शकटोदयात्[24]प्राक्[25]तथैव भरण्युदया[26]दपि । यदि चातीतानागतयोरेकत्र कार्ये व्यापारस्तर्ह्यास्वाद्यमानरसस्यातीतो रसो भावि च रूपं हेतुः स्यात् । ततो न वर्त्तमानस्य रूपस्य वातीतस्य वा प्रतीतिरित्ययुक्तमुक्तमित्यतीतैकका[27]लानां[28] गतिर्नानागतानामिति । अथान्यतरकार्यमसौ तर्ह्यन्यतर[29]स्यैवातः प्रतीतिर्भवेत् । ननु स्वस[30]त्तासमवायात्पूर्वमसन्तोपि मरणा[31]दयोऽरिष्टा[32]दिकार्यकारिणो दृष्टास्ततोऽनेका[33]न्तो हेतोरित्याशङ्क्य भाव्यतीतयोरित्यादिना प्रतिविधत्ते । त[34]द्व्यापाराश्रितं हि त[35]द्भावभावित्वम् । न च पूर्वमेवोत्पन्नमरिष्टं करतलरे-

---

१ चन्द्रवृद्धेर्वा ॥ २ आदिना समुद्रवृद्धि ॥ ३ तन्तुसंयोगरूप ॥ ४ मन्त्रौषधादिना प्रतिवन्ध ॥ ५ द्वन्द्व ॥ ६ सहकारिणा क्षित्यादीना वैकल्यम् ॥ ७ तस्य सहकारिकारणस्य ॥ ८ समर्थ ॥ ९ विशिष्ट नानुकूलादिरूप कारणम् ॥ १० मणिमन्त्रादिना ॥ ११ क्षित्युदकादिकस्य ॥ १२ हेत्वो ॥ १३ साध्यसाधनयो ॥ १४ तादात्म्यतदुत्पत्ती धर्मिणौ कृत्तिकोदयशकटोदययोर्न भवत शकटोदयकालेऽनन्तर वा कृत्तिकोदयस्यानुपलब्धे ॥ १५ तादात्म्य तदुत्पत्तिर्वा ॥ १६ सन्दिग्धानैकान्तिकत्वे सतीदं वाक्यम् ॥ १७ रावणशङ्खचक्रवर्त्तिनोरतीतानागतयोस्तादात्म्यतदुत्पत्तिप्रसङ्गात् ॥ १८ बौद्धाना मध्ये प्रज्ञाकरबौद्धो नाम भाविकारणवादी कश्चिद्ग्रन्थकार ॥ १९ पूर्वचरस्य ॥ २० पूर्वचरस्य कार्यहेतावन्तर्भावप्रकारेण ॥ २१ भूतकारणवादिमतमाश्रित्योच्यते ॥ २२ अनुमानाभावलक्षण ॥ २३ कृत्तिकोदय ॥ २४ रोहिणी ॥ २५ कृत्तिकोदय ॥ २६ प्राक् कृत्तिकोदय स्यात् ॥ २७ अतीतश्चैकश्च अतीतैकौ कालौ येषा रूपादीनाम् ॥ २८ साध्यार्थानाम् ॥ २९ शकटोदयभरण्युदययोर्मध्ये ॥ ३० कारणस्य ॥ ३१ आदिना राज्यादयश्च ॥ ३२ उत्पातहस्तरेखादि ॥ ३३ अरिष्टादिना ॥ ३४ कारणस्य ॥ ३५ कारणस्य ॥

खादिकं वा भाविनो मरणस्य राज्यादेर्व्यापारमपेक्षते स्वयमुत्पन्नस्यापरापेक्षायोगात् । अथास्योत्पत्तिर्मरणादिनैव क्रियते, न–असतःखरविषाणवत्कर्तृत्वायोगात् । कार्यकालेऽसत्त्वेपि स्वकाले सत्त्वाददोषश्चेन्ननु किं भाविनो मरणादेः स्वकाले पूर्वं सत्त्वमरिष्टादेर्वा । भाविनः पूर्वं सत्त्वे ततः पश्चादरिष्टादिकमुपजायमानं पाश्चात्यं न पूर्वमित्ययुक्तमुक्तं पूर्वमसन्तोपि मरणादयोऽरिष्टादिकार्यकारिण इति । अथान्यभाविमरणाद्यपेक्षयारिष्टादिकं पूर्वमुच्यते । ननु तदपि सत् स्वकाले यदि ततः प्रागेव स्यात्तर्हि पाश्चात्यमरिष्टादिकं कथं ततः पूर्वमुच्यते ? अन्यभाविमरणाद्यपेक्षया चेदनवस्था । अथ पूर्वमरिष्टादिकं स्वकाले पश्चाद्भाविमरणादिकं स्वकालनियतं भवेत्तर्हि निष्पन्नस्य निराकाङ्क्षस्यास्य पश्चादुपजायमानेन मरणादिना कथं करणं कृतस्य करणायोगात् । अन्यथा न क्वचित्कार्ये कस्यचित्कारणस्य कदाचिदुपरमः स्यात् पुनःपुनस्तस्यैव करणात् । अथ निष्पन्नस्याप्यनिष्पन्नं किञ्चिद्रूपमस्ति तत्करणात्तत्कारणं कल्प्यते । तत्ततो यद्यभिन्नं तदेव तत्तस्य च न करणमित्युक्तम् । भिन्नं चेत्तदेव तेन क्रियते नारिष्टादिकमित्यायातम् । तत्सम्बन्धिनस्तस्य करणात्तदपि कृतमिति चेद्भिन्नयोः कार्यकारणभावान्नान्यः सम्बन्धः स्वयं सौगतैस्तथांऽभ्युपगमात् । तत्र चारिष्टादिना तत्क्रियेत तेन वारिष्टादिकम् ? प्रथमपक्षेऽरिष्टादेरेव तन्निष्पत्तेर्मरणादिकमकिञ्चित्करमेव क्वचिदप्यनुपयोगात् । तेनारिष्टादिकरणे पूर्वनिष्पन्नस्य पश्चादुपजायमानेन तेन किं क्रियत इत्युक्तम् । अथाऽनिष्पन्नं किञ्चिदस्ति, तत्रापि पूर्ववच्चर्चानवस्था च, ननु यद्यत्र कार्यकारणभावो न स्यात्कथं तर्हि एकदर्शनादन्यानुमानमिति चेदविनाभावादिति ब्रूमः । तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धेप्यविनाभावादेव गमकत्वम् । तदभावे वक्तृत्वतत्पुत्रत्वादेस्तादात्म्यतदुत्पत्तिप्रतिबन्धे सत्यप्यसर्वज्ञत्वे श्यामत्वे च साध्ये गमकत्वाप्रतीतेः । तदभावेपि चाविनाभावप्रसादात्कृत्तिकोदयचन्द्रोदयोद्गृहीताण्डकपिपीलिकोत्सर्पणैकाम्रफलोपलभ्यमानमधुररसस्वरूपाणां हेतूनां यथाक्रमं शकटोदयसमानसमयसमुद्रवृद्धिभाविवृष्टिसमसमयसिन्दूरारुणरूपस्वभावेषु साध्येषु गमकत्वप्रतीतेश्च । तदुक्तं "कार्यकारणभावादिसम्बन्धानां द्वयी गतिः । नियमानियमाभ्यां स्यादनियमादनङ्गता । १ । सर्वेप्यनियमा ह्येते नानुमोत्पत्तिकारणम् । नियमात्केवलादेव न किञ्चिन्नानुमीयते । २ ।" ततः शरीरनिर्वर्त्तकाऽदृष्टादिकारणकलापादरिष्टकरतलरेखादयो निष्पन्नाः भाविनो मरणराज्यादेरनुमापका इति प्रतिपत्तव्यम् । जाग्रद्बोधस्तु प्रबोधबोधस्य हेतुरित्येतत्प्रागेव प्रतिविहितं स्वापाद्यवस्थायामपि ज्ञानस्य प्रसाधितत्वात् । ततो भाव्यतीतयोर्मरणजाग्रद्बोधयोरपि नारिष्टोद्बोधौ प्रति हेतुत्वम् । येनाभ्यामनैकान्तिको हेतुः स्यादिति स्थितम् । यथा च पूर्वोत्तरचारिणोर्न तादात्म्यं तदुत्पत्तिर्वा

१ इति चेत् ॥ २ अरिष्टादिकाले ॥ ३ मरणादे सकाशात्पूर्वं सत्त्वम् ॥ ४ सकाशात् ॥ ५ द्वितीयविकल्पोयम् ॥ ६ अरिष्टादे ॥ ७ परेण ॥ ८ निष्पन्नानिष्पन्नयो ॥ ९ सयोगादि ॥ १० अन्यसम्बन्धाभावप्रकारेण ॥ ११ अनिष्पन्नम् ॥ १२ अनिष्पन्नरूपेण ॥ १३ कार्ये ॥ १४ अरिष्टादि ॥ १५ चटन ॥ १६ अन्धकारावस्थायामास्वाद्यमानमाम्रफल सिन्दूराकणरूपयुक्त भवति मधुररसोपेतत्वादुपभुक्ताम्रफलवत् ॥ १७ आदिना तादात्म्यसयोगादि ॥ १८ प्रकार ॥ १९ अविनाभावाभावात् ॥ २० अनुमान प्रति ॥ २१ अनियमादनङ्गतेत्येतदेवानष्टे सर्वे इत्यादिना ॥ २२ कार्यकारणतादात्म्यादय ॥ २३ वक्तृत्वतत्पुत्रत्वादीनां हेत्वाभासाना येऽविनाभावरहिता कार्यकारणादिसम्बन्धास्ते सर्वे अनुमानोत्पत्तिकारण न भवन्ति ॥ २४ तर्ह्यनुमोत्पत्तौ प्रति किं कारणमित्युक्ते सत्याह ॥ २५ अविनाभावात् ॥ २६ साध्यम् ॥ २७ आदिनात्मादि ॥ २८ योगेन ॥ २९ मोक्षविचारावसरे ॥ ३० साध्यसाधनयो ॥

तथा सहचारिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च । येयोः परस्परपरिहारेणावस्थानं न तयोस्तादात्म्यं, यथा घटपटयोः । परस्परपरिहारेणाव-स्थानं च सहचारिणोरिति । एककालत्वाच्चानयोर्न तदुत्पत्तिः । ययोरेककालत्वं न तयोस्तदुत्पत्तिर्यथा सव्येतरगोविषाणयोः । एककालत्वं च सहचारिणोरिति । न चास्वाद्यमानाद्रसात्सामग्र्यनुमानं ततो रूपानुमानमनुमितानुमानादित्यभिधातव्यं तथा व्यवहाराभावात् । न हि आस्वाद्यमानाद्रसाद् व्यवहारी साम-ग्रीमनुमिनोति रससमसमयस्य रूपस्यानेनानुमानात् । व्यवहारेण च प्रमाणचिन्ता भवता प्रतन्यते । प्रामाण्यं व्यवहारेणेत्यभिधानात् । सामग्रीतो रूपानुमाने च कारणात्कार्यानुमानप्रसङ्गाल्लिङ्गसंख्याव्याघातः स्यात् । तानेव व्याप्यादिहेतून् बालव्युत्पत्त्यर्थमुदाहरणद्वारेण स्फुटयति । तत्र व्याप्यो हेतुर्यथा-परिणामी शब्दः कृतकत्वात् । य एवं स एवं दृष्टो, यथा घटः । कृतकश्चायं तस्मात्परिणामीति ।

'दृष्टान्तो द्वेधा अन्वयव्यतिरेकभेदात्' इत्युक्तम् । तत्रान्वयदृष्टान्तं प्रतिपाद्य व्यतिरेकदृष्टान्तं प्रतिपादयन्नाह । यस्तु न परिणामी स न कृतको दृष्टो, यथा वन्ध्यास्तनन्धयः । कृतकश्चायं तस्मात्परिणामीति । कृतकत्वं हि परिणामित्वेन व्याप्तं-पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामशून्यस्य सर्वथा नित्यत्वे क्षणिकत्वे वा शब्दस्य कृतकत्वानुपपत्तेर्वक्ष्यमाणत्वात् ।

किं पुनः कार्यलिङ्गस्योदाहरणमित्याह 'अस्त्यत्र शरीरे बुद्धिर्व्याहारादेः' । व्याहारो वचनम् । आदिशब्दाद्व्यापाराकारविशेषपरिग्रहः । ननु ताल्वाद्यन्वयव्यतिरेकानुविधायितया शब्दस्योपलम्भात्कथमात्मकार्यत्वं येनातस्तदस्तित्वसिद्धिः स्यात् ? न खल्वात्मनि विद्यमानेपि विवक्षाविकलपरिकरे कफादिदोषकण्ठादिव्यापाराभावे वचनं प्रवर्त्तते । तदप्यसारं शब्दोत्पत्तौ ताल्वादिसहायस्यैवात्मनो व्यापाराभ्युपगमात् । घटाद्युत्पत्तौ चक्रादिसहायस्य कुम्भकारादेर्व्यापारवत् । कथमन्यथा घटादेरप्यात्मकार्यता ? कार्यकार्यादेश्च कार्यहेतावेवान्तर्भावः । कारणलिङ्गं यथा-अस्त्यत्र छाया छत्रात् । कारणकारणादेरत्रैवानुप्रवेशान्नार्थान्तरत्वम् । पूर्वचरलिङ्गं यथा-उदेष्यति शकटं कृत्तिकोदयात् । पूर्वपूर्वचराद्यनेनैव सङ्गृहीतम् । उत्तरचरं लिङ्गं यथा-उदगाद्भरणिस्तत एव, कृत्तिकोदयादेव । उत्तरोत्तरचरमेतेनैव सङ्गृह्यते । सहचरं लिङ्गं यथा—अस्त्यत्र मातुलुङ्गे रूपं रसात् । संयोगिनं एकार्थसमवायिनश्च साध्यसमकालस्यात्रैवान्तर्भावो द्रष्टव्यः ।

---

१ तादात्म्यतदुत्पत्त्योरभाव ॥ २ तादात्म्यं सहचारिणोर्नास्ति परस्परपरिहारेणावस्थानात् ॥ ३ रूतम् ॥ ४ अनुमितायाः सामग्र्याः सकाशादनुमानं रूपस्य ॥ ५ परेण भवता ॥ ६ सौगतेन ॥ ७ त्रि ८ उद्दिष्टानेव ॥ ९ अपेक्षितपरव्यापार कृतक उच्यते ॥ १० आत्मा ॥ ११ मुखआयतादि ॥ १२ सहित ॥ १३ सहाय ॥ १४ कण्ठादिव्यवहारभाव एव कारणम् ॥ १५ जैन ॥ १६ ताल्वाद्यन्वयव्यतिरेकानुविधायित्वेन ताल्वादेरेव कार्यं शब्द इत्येव यदि ॥ १७ अमुत्र शिवक स्थासात् ॥ १८ महोऽगलाना कण्ठाद्यभिक्षेपकारी धूमत्वप्रगमित्वात् । कण्ठादिभिक्षेपस्य कारणं धूमत्वस्य न कारणं वह्निरिति ॥ १९ उदाह्रियते ॥ २० आत्मनोनाऽखिल विशिष्टशरीरात् । अत्रापि नैयायिकमतानुसरणे कार्यहेतोरेव धूमादेरिव संज्ञा ॥ २१ नैयायिकमतानुसरणे सहचरहेतोरिव संज्ञा ॥ २२ हेतो. ॥

अथाविरुद्धोपलब्धिमुदाहृत्येदानीं विरुद्धोपलब्धिमुदाहर्त्तुं विरुद्धेत्याद्याह । प्रतिषेध्येन यद्विरुद्धं तत्सम्बन्धिनां तेषां व्याप्यादीनामुपलब्धिः प्रतिषेध्ये साध्ये तथाऽविरुद्धोपलब्धिवत् षट्प्रकारा । तानेव षट् प्रकारानन्यथेत्यादिना प्रदर्शयति । यथेत्युदाहरणप्रदर्शने । नास्त्यत्र शीतस्पर्श औष्ण्यात् । औष्ण्यं हि व्याप्यमग्नेः । स च विरुद्धः शीतस्पर्शेन प्रतिषेध्येनेति । विरुद्धकार्यं लिङ्गं यथा—नास्त्यत्र शीतस्पर्शो धूमात् । विरुद्धकारणं लिङ्गं यथा—नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात् । सुखेन हि प्रतिषेध्येन विरुद्धं दुःखम् । तस्य कारणं हृदयशल्यम् । तत्कुतश्चित्तदुपदेशादेः सिद्ध्यत्सुखं प्रतिषेधतीति । विरुद्धपूर्वचरं यथा—नोदेष्यति मुहूर्त्तान्ते शकटं रेवत्युदयात् । शकटोदयविरुद्धो ह्यश्विन्युदयस्तत्पूर्वचरो रेवत्युदय इति । विरुद्धोत्तरचरं यथा—नोदगाद्भरणिर्मुहूर्त्तात्पूर्वं पुष्योदयात् । भरण्युदयविरुद्धो हि पुनर्वसूदयस्तदुत्तरचरः पुष्योदय इति । विरुद्धसहचरं यथा—नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागात् । परभागाभावेन हि विरुद्धस्तत्सद्भावस्तत्सहचरोऽर्वाग्भाग इति ।

अथोपलब्धिं व्याख्यायेदानीमनुपलब्धिं व्याचष्टे । सा चानुपलब्धिरुपलब्धिवद्विप्रकारा भवति । अविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्चेति । तत्राद्यप्रकारं व्याख्यातुकामोऽविरुद्धेत्याद्याह । प्रतिषेध्येनाविरुद्धस्यानुपलब्धिः प्रतिषेध्ये साध्ये सप्तधा भवति । स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलब्धिभेदात् । तत्र स्वभावानुपलब्धिर्यथा—नास्त्यत्र भूतले घट उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः । पिशाचादिभिर्व्यभिचारो मा भूदित्युपलब्धिलक्षणप्राप्तस्येति विशेषणम् । कथं पुनर्यो नास्ति स उपलब्धिलक्षणप्राप्तस्तत्प्राप्तत्वे वा कथमसत्त्वमिति चेदुच्यते । आरोप्यैतद्रूपं निषिध्यते सर्वत्रारोपितरूपविषयत्वान्निषेधस्य । यथा नायं गौर इति । न ह्यत्रैतच्छक्यं वक्तुं, सति गौरत्वे न निषेधो निषेधे वा न गौरत्वमिति । नन्वेवमदृश्यमपि पिशाचादिकं दृश्यरूपतयाऽऽरोप्य प्रतिषेध्यतामिति चेन्न । आरोपयोग्यत्वं हि यस्यास्ति तस्यैवारोपः । यश्चार्थो विद्यमानो नियमेनोपलभ्येत स एवारोपयोग्यो, न तु पिशाचादिः । उपलम्भकारणसाकल्ये हि विद्यमानो घटो नियमेनोपलम्भयोग्यो गम्यते, न पुनः पिशाचादिः । घटस्योपलम्भकारणसाकल्यं चैकज्ञानसंसर्गिणि प्रदेशादावुपलभ्यमाने निश्चीयते । घटप्रदेशयोः खलूपलम्भकारणान्यविशिष्टानीति । यश्च यद्देशाधेयतया कल्पितो घटः स एव तेनैकज्ञानसंसर्गी, न देशान्तरस्थः । ततश्चैकज्ञानसंसर्गिपदार्थान्तरोपलम्भे

---

१ साध्येन ॥ २ प्रतिषेध्येन ॥ ३ व्याप्य ॥ ४ प्रतिषेध्येन घटेनाविरुद्ध क तत्स्वभावो घटस्वभाव इत्यर्थ ॥ ५ कृतम् ॥ ६ प्रकल्प्य घटसम्बन्धित्वेन भूतलम् ॥ ७ क्वचिदपि न निषेध्यस्यारोपितरूपविषयत्वमित्युक्ते आह ॥ ८ वस्तुनि ॥ ९ आरोपितस्य प्रतिषेध्यत्वे ॥ १० विद्यमानत्वे पिशाचादिरप्युपलभ्येतेत्युक्ते आह ॥ ११ पिशाचादिरप्यारोपयोग्य कुतो न स्यादित्युक्ते आह ॥ १२ प्रत्यक्ष ॥ १३ इन्द्रियालोकादिना ॥ १४ निषेध्यस्य घटस्य कथमुपलम्भकारणसाकल्यं निश्चीयत इत्युक्ते आह ॥ १५ इन्द्रिय ॥ १६ घटेन ॥ १७ घटस्योपलम्भकारणसाकल्यं च न स्यात् एकज्ञानसंसर्गिपदार्थान्तरोपलम्भश्च भविष्यतीत्युक्ते आह ॥ १८ समानानि ॥ १९ घटप्रदेशयोर्भिन्नज्ञानग्राह्यत्वादेकज्ञानसंसर्गित्वाभावो भूतलस्येत्युक्ते आह ॥ २० कल्पितस्य घटस्यैकज्ञानसंसर्गित्वं सिद्ध यत ॥ २१ भूतल ॥

योग्यतया सम्भावितस्य घटस्योपलब्धिलक्षणप्राप्तानुपलम्भः सिद्धः । ननु चैकज्ञानसंसर्गिण्युपलभ्यमाने[1] सत्यपीतरविषयज्ञानोत्पादनशक्तिः[3] सामग्र्याः समस्तीत्यवसातुं न शक्यते-प्रभाववतो[4] योगिनः पिशाचादेर्वा प्रतिबन्धात्ततोपि घटस्यैकज्ञानसंसर्गिणि प्रदेशादावुपलभ्यमानेप्यनुपलम्भसम्भवात् । तदयुक्तं-यतः प्रदेशादिनैकज्ञानसंसर्गिण एव घटस्याभावो नान्यस्य । यस्तु पिशाचादिनाऽन्यत्वमापादितः[5] स नैव निषेध्यते । इह[6] चैकज्ञानसंसर्गिभासमानोर्थस्तज्ज्ञानं च पर्युदासवृत्त्या घटस्याऽसत्तानुपलब्धिश्चोच्यते । ननु चैवं[10] केवलभूतलस्य प्रत्यक्षसिद्धत्वात्तद्रूपो घटाभावोपि सिद्ध एवेति किमनुपलम्भसाध्यम्[11] ? सत्यमेवैतत्तथापि प्रत्यक्षप्रतिपन्नेप्यभावे यो व्यामुह्यति साङ्ख्यादिः सोनुपलम्भं निमित्तीकृत्य प्रतिपाद्यते[12] । अनुपलम्भनिमित्तो[13] हि सत्त्वरजस्तमःप्रभृतिष्वसद्व्यवहारः[14] । स[15] चात्राप्यस्तीति निमित्तप्रदर्शनेन व्यवहारः[16] प्रसाध्यते । दृश्यते हि विशाले गवि सास्नादिमत्त्वात्प्रवर्त्तितगोव्यवहारो मूढमतिर्विशङ्कटे[17] सादृश्यमुत्प्रेक्षमाणोपि न गोव्यवहारं प्रवर्त्तयतीति विशङ्कटे वा प्रवर्त्तितो गोव्यवहारो न विशाले स निमित्तप्रदर्शनेन[18] गोव्यवहारे प्रवर्त्त्यते । सास्नादिमन्मात्रनिमित्तको हि गोव्यवहारस्त्वया प्रवर्त्तितपूर्वो न विशालत्वविशङ्कटत्वनिमित्तक इति । तथा[19] महत्यां शिंशपायां प्रवर्त्तितवृक्षव्यवहारो मूढमतिः स्वल्पायां तस्यां तद्व्यवहारमप्रवर्त्तयन्निमित्तोपदर्शनेन प्रवर्त्त्यते वृक्षोयं शिंशपात्वादिति । व्यापकानुपलब्धिर्यथा-नास्त्यत्र शिंशपा वृक्षाऽनुपलब्धेः । कार्यानुपलब्धिर्यथा-नास्त्यत्राऽप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः । नास्त्यत्र धूमोऽनग्नेरिति कारणानुपलब्धिः । न भविष्यति मुहूर्त्तान्ते शकटं कृत्तिकोदयानुपलब्धेरिति पूर्वचरानुपलब्धिः । नोदगाद्भरणिर्मुहूर्त्तात्प्राक् तत एव । कृत्तिकोदयानुपलब्धेरेव । इत्युत्तरचरानुपलब्धिः । नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेरिति[21] सहचरानुपलब्धिः ।

अथानुपलब्धिः प्रतिषेधसाधिकैवेति नियमप्रतिषेधार्थं विरुद्धेत्याद्याह । विधेयेन[22] विरुद्धस्य कार्यादेरनुपलब्धिर्विधौ साध्ये सम्भवन्ती त्रिधा भवति-विरुद्ध[23]कार्यकारणस्वभावानुपलब्धिभेदात् । तत्र विरुद्धकार्यानुपलब्धिर्यथा-अस्मिन्प्राणिनि व्याधिविशेषोस्ति निरामयचेष्टानुपलब्धेः । आमयो हि व्याधिः । तेन विरुद्धस्तदभावः । तत्कार्या विशिष्टचेष्टा तस्या अनुपलब्धिर्व्याधिविशेषास्तित्वानुमानम् । विरुद्धकारणानुपलब्धिर्यथा-अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् । दुःखेन हि विरुद्धं सुखम् । तस्य कारणमभीष्टार्थेन संयोगः । तदभावस्तदनुपलब्धिर्दुःखास्तित्वं गमयतीति । विरुद्धस्वभावानुपलब्धिर्यथा-अनेकान्ता-

---

१ दृश्यत्वेन ॥ २ प्रदेशे ॥ ३ घट ॥ ४ अतिशयवतो मायाविन कुतश्चित् ॥ ५ भिन्नज्ञानसंसर्गिण ॥ ६ अदृश्यलम् ॥ ७ कुतो न प्रतिपेध्येवेत्युक्ते आह ॥ ८ भूतललक्षण ॥ ९ जैनै ॥ १० भूतलसद्भाव एव घटाभाव इत्येवम् ॥ ११ अनेन हेतुना ॥ १२ प्रतिबोध्यते ॥ १३ प्रत्यक्षसिद्धेऽभावे व्यवहार स्वयमेव स्यात्रान्यस्मात् । ततोऽनुपलम्भो व्यर्थं इत्युक्ते आह ॥ १४ सत्त्वे रजो नास्त्यनुपलब्धेरिति ॥ १५ कथ निमित्तप्रदर्शनमित्याह स चात्राप्यस्तीति ॥ १६ अस्मिन् ॥ १७ हखे ॥ १८ सास्नादिमत्त्वादि निमितम् ॥ १९ कथम् ॥ २० काष्ठादिसहकारिवैकल्याभावत. ॥ २१ नमन ॥ २२ साध्येन ॥ २३ एतेषामनुपलब्धय ॥

त्मकं वस्त्वेकान्तानुपलब्धेः[1] । अनेकान्तेन हि विरुद्धो नित्यैकान्तः क्षणिकैकान्तो वा । तस्य चानुपलब्धिः प्रत्यक्षादिप्रमाणेनाऽस्य ग्रहणाभावात्सुप्रसिद्धा । यथा च प्रत्यक्षादेस्तद्ग्राहकत्वाभावस्तथा विषयविचारप्रस्तावे विचारयिष्यते ।

ननु चैतत्साक्षाद्विधौ निषेधे वा परिसङ्ख्यातं साधनमस्तु । यत्तु परम्परया विधेर्निषेधस्य वा साधकं तदुक्तसाधनप्रकारेभ्योऽन्यत्वादुक्तसाधनसङ्ख्याव्याघातकारि छलसाधनान्तरमनुषज्येत । इत्याशङ्क्य परम्परयेत्यादिना प्रतिविधत्ते । यतः परम्परया सम्भवत्[2]कार्यकार्यादि[3] साधनमत्रैव अन्तर्भावनीयं ततो नोक्तसाधनसङ्ख्याव्याघातः । तत्र विधौ कार्यकार्यं कार्याविरुद्धोपलब्धौ अन्तर्भावनीयम् । यथाऽभूदत्र चक्रे शिवकः स्थासात् । शिवकस्य हि साक्षाच्छत्रकः कार्यं स्थासस्तु परम्परयेति । निषेधे तु कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथाऽन्तर्भाव्यते[6] तद्यथा । नास्त्यत्र गुहायां मृगक्रीडनं मृगारिशब्दनात् । मृगक्रीडनस्य हि कारणं मृगः । तेन च विरुद्धो मृगारिः । तत्कार्यं च तच्छब्दनमिति ।

ननु यद्यव्युत्पन्नानां व्युत्पत्त्यर्थं दृष्टान्तादियुक्तो हेतुप्रयोगस्तर्हि व्युत्पन्नानां कथं तत्प्रयोग इत्याह—

**व्युत्पन्नप्रयोगस्तु तथोपपत्त्याऽन्यथाऽनुपपत्त्यैव वा ।** एतदेवोदाहरणद्वारेण दर्शयति। **अग्निमानयं देशस्तथैव धूमवत्त्वोपपत्तेर्धूमवत्त्वान्यथानुपपत्तेर्वा ।** कुतो व्युत्पन्नानां तथोपपत्त्यन्यथानुपपत्तिभ्यां प्रयोगनियम इत्याशङ्क्य हेतुप्रयोगो हीत्याद्याह । यतो हेतोः प्रयोगो व्याप्तिग्रहणानतिक्रमेण विधीयते । सा च व्याप्तिस्तावन्मात्रेण तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेण व्युत्पन्नैर्निश्चीयते इति न दृष्टान्तादिप्रयोगेण व्याप्त्यवधारणार्थेन किञ्चित्प्रयोजनम् । नापि साध्यसिध्यर्थं तत्प्रयोगः फलवान्—यतस्तावतैव [ चकार एवकारार्थे ] निश्चितविपक्षासम्भवहेतुप्रयोगमात्रेणैव साध्यसिद्धिः । तेन पक्षो गम्यमानोपि व्युत्पन्नप्रयोगे तदाधारसूचनाय साध्याधारसूचनायोक्तः । यथा च गम्यमानस्यापि पक्षस्य प्रयोगो नियमेन कर्त्तव्यस्तथा प्रागेव प्रतिपादितम् ।

अथेदानीमवसरप्राप्तस्यागमप्रमाणस्य कारणस्वरूपे प्ररूपयन्नाप्तेत्याद्याह । आप्तेन प्रणीतं वचनमाप्तवचनम् । आदिशब्देन हस्तसंज्ञादिपरिग्रहः । तन्निबन्धनं[11] यस्य तत्तथोक्तम् । अनेनाक्षरश्रुतमनक्षरश्रुतं च सङ्गृहीतं भवति । अर्थज्ञानमित्यनेन चान्यापोहज्ञानस्य[16] शब्दसन्दर्भस्य[17] चागमप्रमाणव्यपदेशाभावः । शब्दो

१ एकान्तस्वरूपानुपलब्धेरिति पाठान्तरम् ॥ २ विद्यमानम् ॥ ३ कार्यादिष्वेव ॥ ४ साध्ये ॥ ५ ता ॥ ६ तथा कार्यकार्यं कार्याऽविरुद्धोपलब्धावन्तर्भावनीयमिति सम्बन्ध ॥ ७ अग्निमत्त्वे सति ॥ ८ अनुमानप्रमाणप्रतिपादनानन्तरम् ॥ ९ मुखेन सञ्ज्ञा ॥ १० अर्थज्ञानमित्येतावत्युच्यमाने प्रत्यक्षादावतिव्याप्तिरत उक्त वाक्यनिबन्धनमिति । वाक्यनिबन्धनमर्थज्ञानमित्युच्यमानेपि यादृच्छिकसंवादिषु विप्रलम्भवाक्यजन्येषु सुप्तोन्मत्तादिवाक्यजन्येषु वा नदीतीरफलससर्गादिज्ञानेष्वतिव्याप्ति अत उक्तमाप्तेति । आप्तवाक्यनिबन्धनज्ञानमित्युच्यमानेप्याप्तवाक्यकर्मके (कारणे) श्रावणप्रत्यक्षेऽतिव्याप्तिरत उक्तमर्थेति । अर्थस्तात्पर्यरूढप्रयोजनारूढ इति यावत् । तात्पर्यमेव वचसीत्यभियुक्तवचनात् वचसा प्रयोजनस्य प्रतिपादकत्वात् ॥ ११ आप्तवचनादि ॥ १२ अर्थज्ञानस्य ॥ १३ आदिपदेन ॥ १४ आप्तशब्दोपादानादपौरुषेयव्यवच्छेद ॥ १५ अन्यस्मात्पदार्थादन्यस्य पदार्थस्यापोहो निराकरण तस्य व्यावृत्तिरूपापोहविषय एव शब्दो न त्वर्थविषय इति बौद्ध ॥ १६ अगो व्यावृत्तिर्गौः । व्यावृत्तिस्तुच्छा अर्थरूपा न भवति ॥ १७ शब्द एवार्थो न वाह्यार्थ ॥

हि प्रमाणे[1]कारण[3]कार्यत्वादुपचारत एव प्रमाणव्यपदेशमर्हति । ननु चातीन्द्रियार्थस्य द्रष्टुः कस्यचिदाप्तस्याभावात् तत्राऽपौरुषेयस्यागमस्यैव प्रामाण्यात्कथमाप्तवचननिबन्धनं तदित्यपि मनोरथमात्रम्–अतीन्द्रियार्थद्रष्टुर्भगवतः प्राक्प्रसाधितत्वादागमस्य चाऽपौरुषेयत्वासिद्धेः । तद्धि पदस्य वाक्यस्य वर्णानां वाऽभ्युपगम्येत ? प्रकारान्तराऽसम्भवात् । तत्र न तावत्प्रथमद्वितीयविकल्पौ घटेते । तथा हि । वेदपदवाक्यानि पौरुषेयाणि पदवाक्यत्वाद्भारतादिपदवाक्यवत् । अपौरुषेयत्वप्रसाधकप्रमाणाभावाच्च कथमपौरुषेयत्वं वेदस्योपपन्नम् ? न च तत्प्रसाधकप्रमाणाभावोऽसिद्धः । तथा हि । तत्प्रसाधकं प्रमाणं प्रत्यक्षमनुमानमर्थापत्त्यादि वा स्यात् ? न तावत्प्रत्यक्षं तस्य शब्दस्वरूपमात्रग्रहणे चरितार्थत्वेन पौरुषेयत्वापौरुषेयत्वधर्मग्राहकत्वाभावात् । अनादिसत्त्वस्वरूपं चापौरुषेयत्वं कथमक्षप्रभवप्रत्यक्षपरिच्छेद्यमक्षाणां प्रतिनियतरूपादिविषयतया अनादिकालसम्बन्धाऽभावतस्तत्सम्बन्धसत्त्वेनाप्यसम्बन्धात् । सम्बन्धे वा तद्वदनागतकालसम्बद्धधर्मादिस्वरूपेणापि सम्बन्धसम्भवान्न धर्मज्ञप्रतिषेधः स्यात् । नाप्यनुमानं तत्प्रसाधकम् । तद्धि कर्त्रऽस्मरणहेतुप्रभवं वेदाध्ययनशब्दवाच्यत्वलिङ्गजनितं वा स्यात् कालत्वसाधनसमुत्थं वा ? तत्राद्यपक्षे किमिदं कर्त्तुरस्मरणं नाम कर्तृस्मरणाभावोऽस्मर्यमाणकर्त्तृकत्वं वा ? प्रथमपक्षे व्यधिकरणाऽसिद्धो हेतुः । कर्तृस्मरणाभावो ह्यात्मन्यपौरुषेयत्वं वेदे वर्त्तते इति । द्वितीयपक्षे तु दृष्टान्ताभावः । नित्यं हि वस्तु न स्मर्यमाणकर्तृकं, नाप्यस्मर्यमाणकर्त्तृकं प्रतिपन्नं, किन्त्वकर्तृकमेव । हेतुश्च व्यर्थविशेषणः । सति हि कर्तरि स्मरणमस्मरणं वा स्यान्नासति, खरविषाणवत् । अथाऽकर्त्तृकत्वमेवात्र विवक्षितं तर्हि स्मर्यमाणग्रहणं व्यर्थं, जीर्णकूपप्रासादादिभिर्व्यभिचारश्च । अथ सम्प्रदायाऽविच्छेदे सत्यऽस्मर्यमाणकर्तृकत्वं हेतुस्तथाप्यनेकान्तः । सन्ति हि प्रयोजनाभावादस्मर्यमाणकर्तृकाणि वटे वटे वैश्रवण इत्याद्यनेकपदवाक्यान्यविच्छिन्नसम्प्रदायानि । न च तेषामपौरुषेयत्वं भवतापीष्यते । असिद्धश्चायं हेतुः–पौराणिका हि ब्रह्मकर्तृकत्वं स्मरन्ति 'वक्त्रेभ्यो वेदास्तस्य विनिःसृताः' इति । 'प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयते' इति चाभिधानात् । यो वेदांश्च प्रहिणोतीत्यादिवेदवाक्येभ्यश्च तत्कर्त्ता स्मर्यते । स्मृतिपुराणादिवच्च । ऋषिनामाङ्किताः काण्वमाध्यन्दिनतैत्तिरीयादयः शाखाभेदाः कथमस्मर्यमाणकर्तृकाः ? तथा हि । एतास्तत्कृतकत्वात्तन्नामभिर-

१ ज्ञान ॥ २ ता ॥ ३ गणधरादिप्रतिपाद्यज्ञानापेक्षया कारणत्व शब्दस्य (दिव्यध्वने) ॥ ४ प्रतिपादकज्ञानस्य (सर्वज्ञज्ञानस्य) हि कार्यं शब्द ॥ ५ अर्थज्ञानम् ॥ ६ परेण मीमांसकेन ॥ ७ श्रावणप्रत्यक्षम् ॥ ८ वस ॥ ९ ता ॥ १० न केवलमनादिकालेन ॥ ११ अनुष्ठेयत्वेन ॥ १२ पुण्य ॥ १३ आदिना पापम् ॥ १४ इति ॥ १५ कर्तृविषय यत्स्मरण ज्ञान तस्याभाव ॥ १६ स्मर्यमाणकर्तृप्रतिषेध ॥ १७ आकाशवदिति दृष्टान्त ॥ १८ भिन्नाधिकरण सन् ॥ १९ दृष्टान्ते ॥ २० व्यर्थविशेषण कथमित्युक्ते आह ॥ २१ खरविषाणे यथा स्मरणमस्मरण वा नास्ति कर्त्रऽभावात् ॥ २२ अनुमाने ॥ २३ वेदे वर्णक्रम पाठक्रम उदात्तादिक्रमश्च सम्प्रदाय ॥ २४ चत्वरे चत्वरे ईश्वर पर्वते पर्वते राम सर्वत्र मधुसूदन । सा ते भवतु सुप्रीता देवी गिरिनिवासिनी । विद्यारम्भ करिष्यामि सिद्धिर्भवतु मे सदा ॥ २५ कथम् ॥ २६ चतुर्भ्य ॥ २७ ब्रह्मण ॥ २८ अस्मर्यमाणकर्तृकस्य हेतोरनैकान्तिकत्वासिद्धत्वे ते उद्भाव्य पुनरप्यसिद्धत्वमुद्भावयन्ति ॥ २९ एकस्मान्मनो सकाशादपरो मनु मन्वन्तरम् । तत्तत्प्रति प्रतिमन्वन्तरम् ॥ ३० वेद ॥ ३१ स्मृति ॥ ३२ भिन्ना ॥ ३३ करोति ॥ ३४ प्रसन्नो भवतु इत्यादिभ्यश्च ॥ ३५ सन्तान ॥ ३६ गोत्रभेदा ॥

ङ्कितास्तंदृष्टत्वात्तत्प्रकाशितत्वाद्वा ? प्रथमपक्षे कथमासामपौरुषेयत्वमस्मर्यमाणकर्तृकत्वं वा ? उत्तरपक्षद्वयेपि यदि तावदुत्सन्ना शाखा कण्वादिना दृष्टा प्रकाशिता वा तदा कथं सम्प्रदायाऽविच्छेदोऽतीन्द्रियार्थदर्शिनः प्रतिक्षेपश्च स्यात् । अथानवच्छिन्नैव सा सम्प्रदायेन दृष्टा प्रकाशिता वा तर्हि यावद्भिरुपाध्यायैः सा दृष्टा प्रकाशिता वा तावतां नामभिस्तस्याः किन्नाङ्कितत्वं स्याद्विशेषाभावात् ? एतेनं 'छिन्नमूलं वेदे कर्तृस्मरणं तस्य ह्यनुभवो मूलम् । न चासौ तत्र तद्विषयत्वेन विद्यते' इत्यपि प्रत्युक्तम् । यतोऽध्यक्षेण तदनुभवाभावात् तत्र तच्छिन्नमूलं प्रमाणान्तरेण वा ? अध्यक्षेण चेत् किं भवत्सम्बन्धिना सर्वसम्बन्धिना वा ? यदि भवत्सम्बन्धिना तर्ह्यागमान्तरेपि कर्तृग्राहकत्वेन भवत्प्रत्यक्षस्याप्रवृत्तेस्तत्कर्तृस्मरणस्य छिन्नमूलत्वेनास्मर्यमाणकर्तृकत्वस्य भावाद्व्यभिचारी हेतुः । अथागमान्तरे कर्तृग्राहकत्वेनास्मत्प्रत्यक्षस्याप्रवृत्तावपि परैः कर्तृसद्भावाभ्युपगमात् ततो व्यावृत्तमस्मर्यमाणकर्तृकत्वमपौरुषेयत्वेनैव व्याप्यते । इति अव्यभिचारः, न–परकीयाभ्युपगमस्याप्रमाणत्वात् । अन्यथा वेदेपि परैः कर्तृसद्भावाभ्युपगमतोऽस्मर्यमाणकर्तृकत्वादित्यसिद्धो हेतुः स्यात् । अथ वेदे सर्विगीनकर्तृविशेषे विप्रतिपत्तेः कर्तृस्मरणमऽतोऽप्रमाणम् । तत्र हि केचिद्धिरण्यगर्भमपरेष्टकादीन् कर्तॄन् स्मरन्तीति । नन्वेवं कर्तृविशेषे विप्रतिपत्तेस्तद्विशेषस्मरणमेवाप्रमाणं स्यात्, न कर्तृमात्रस्मरणम् । अन्यथा कादम्बर्यादीनामपि कर्तृविशेषे विप्रतिपत्तेः कर्तृमात्रस्मरणत्वेनास्मर्यमाणकर्तृकत्वस्य भावात्पुनरप्यनेकान्तः । अथ वेदे कर्तृविशेषे विप्रतिपत्तिवत्कर्तृमात्रेपि विप्रतिपत्तेस्तत्स्मरणमप्यप्रमाणम् । कादम्बर्यादीनां तु कर्तृविशेषे एव विप्रतिपत्तेस्तत्प्रमाणमित्यनैकान्तिकत्वाभावोऽस्मर्यमाणकर्तृकत्वस्य–विपक्षे प्रवृत्त्यभावात् । ननु वेदे सौगतादयः कर्त्तारं स्मरन्ति न मीमांसका इत्येवं कर्तृमात्रे विप्रतिपत्तेर्यदि तदप्रमाणं तर्हि तद्वदस्मरणमप्यऽप्रमाणं किन्न स्याद्विप्रतिपत्तेरविशेषात् । तथा चासिद्धो हेतुः । अथ यद्यनुपलम्भपूर्वकमस्मर्यमाणकर्तृकत्वं हेतुत्वेनोच्येत तदोक्तप्रकारेणाऽसिद्धानैकान्तिकत्वे स्याताम् । तदभावपूर्वके तु तस्मिंस्तयोरनवकाशः । न–अत्र कर्त्रऽभावग्राहकस्य प्रमाणान्तरस्यैवाऽसम्भवात् । अस्मादेवानुमानात्तदभावसिद्धावन्योन्याश्रयः । अतो ह्यऽनुमानात्तदभावसिद्धौ तत्पूर्वकमस्मर्यमाणकर्तृकत्वं सिद्ध्यति । तत्सिद्धौ चातोऽनुमानात्तदभावसिद्धिरिति । ननु वेदे कर्तृसद्भावाभ्यु-

१ कण्वादि ॥ २ कण्वादि ॥ ३ नष्टा ॥ ४ कर्तृस्मरणमूलस्य वेदपदवाक्यानीत्याद्यनुमानेऽस्य पुराणस्मृतिवेदवाक्यस्य च प्रवर्त्तनपरेण ग्रन्थेन ॥ ५ कारणम् ॥ ६ कथम् ॥ ७ ज्ञानादिपिटकत्रये ॥ ८ सौगते ॥ ९ व्याघुटितम् ॥ १० सविप्रतिपत्तिक ॥ ११ यदि कर्तृविशेषे विप्रतिपत्ति कर्तृमात्रस्मरणस्याऽप्रामाण्यम् ॥ १२ बाण शङ्करो वेति ॥ १३ कादम्बर्यादौ ॥ १४ उक्तप्रकारेण हेतोरसिद्धत्वे प्रतिपादितेऽनुमानबलेन हेतुसिद्धिं करोति पर ॥ १५ अनुपलम्भेन हेतुना साधित यदस्मर्यमाणकर्तृकत्व साधनं तत् ॥ १६ अनुपलम्भ स्वसम्बन्धी सर्वसम्बन्धी वा स्यात् ? पौरस्त्यपक्षेऽसिद्धत्वम् । पाश्चात्यपक्षेऽनेकान्तिकत्वम् ॥ १७ वेद अस्मर्यमाणकर्तृक अनुपलभ्यमानकर्तृकत्वात् आकाशवत् । इत्यनेनानुमानेन हेतुसिद्धिं विदधाति ॥ १८ अनुपलम्भलक्षणस्य हेतोरुभयदोषदुष्टत्वाद्धेत्वन्तरेण प्रकृतहेतु साधयति ॥ १९ वेद अस्मर्यमाणकर्तृक कर्त्रभावाद्व्योमवत् इत्यनेनानुमानेन साधिते ॥ २० अस्मर्यमाणकर्तृकत्वादेव ॥ २१ अस्मर्यमाणकर्तृकत्वात् ॥ २२ अस्मर्यमाणकर्तृकत्वात् ॥

पगमे तत्कर्त्तुः पुरुषस्यावश्यं तदनुष्ठानसमये अनुष्ठातॄणामनिश्चितप्रामाण्यानां तत्प्रामाण्यप्रसिद्धये स्मरणं स्यात् । ते ह्यदृष्टफलेषु कर्मस्वत्र निःसंशयाः प्रवर्त्तन्ते । यदि तेषां तद्विषयः सत्यत्वनिश्चयः सोपि तदुपदेष्टुः स्मरणात्स्यात् । यथा पित्रादिप्रामाण्यवशात्स्वयमदृष्टफलेष्वपि कर्मसु तदुपदेशात्प्रवर्त्तन्ते 'पित्रादिभिरेतदुपदिष्टं तेनानुष्ठीयते' । एवं वैदिकेष्वपि कर्मस्वनुष्ठीयमानेषु कर्त्तुः स्मरणं स्यात् । न चाभियुक्तानामपि वेदार्थानुष्ठातॄणां त्रैवर्णिकानां तत्स्मरणमस्ति । तथा चैवं प्रयोगः 'कर्त्तुः स्मरणयोग्यत्वे सत्यस्मर्यमाणकर्तृकत्वादपौरुषेयो वेदः' । तदप्यसम्बद्धमागमान्तरेप्यस्य हेतोः सद्भावबाधकप्रमाणाऽसम्भवेन सद्भावसम्भवतः सन्दिग्धविपक्षव्यावृत्तिकत्वेनानैकान्तिकत्वात् । किञ्च विपक्षविरुद्धं विशेषणं विपक्षाद्व्यावर्त्तमानं स्वविशेष्यमादाय निवर्त्तेत । न च पौरुषेयत्वेन सह कर्त्तुः स्मरणयोग्यत्वस्य सहानवस्थानलक्षणः परस्परपरिहारस्थितिलक्षणो वा विरोधः सिद्धः । सिद्धौ वा तत एव सौध्यप्रसिद्धेरस्मर्यमाणकर्तृकत्वादिति विशेष्योपादानं व्यर्थम् । यच्चोक्तं तदनुष्ठानसमय इत्यादि तदागमान्तरेपि समानम् । न चेति चिन्त्यतां "न चायं नियमः—अनुष्ठातारोऽभिप्रेतार्थानुष्ठानसमये तत्कर्त्तारमनुस्मृत्यैव प्रवर्त्तन्ते" । न खलु पाणिन्यादिप्रणीतव्याकरणप्रतिपादितशब्दव्यवहारानुष्ठानसमये तदर्थानुष्ठातारोऽवश्यन्तया व्याकरणप्रणेतारं पाणिन्यादिकमनुस्मृत्यैव प्रवर्त्तन्त इति प्रतीतम् । निश्चिततत्समयानां कर्तृस्मरणव्यतिरेकेणाप्याशुतरं भवत्यादिसाधुशब्दोपलम्भात् । तत्र भवत्सम्बन्धिप्रत्यक्षेणानुभवाभावात् तत्र तच्छिन्नमूलम् । नापि सर्वसम्बन्धिप्रत्यक्षेण । तेन ह्यनुभवाभावोऽसिद्धः । न ह्यर्वाग्दृशां सर्वेषां तत्र कर्तृग्राहकत्वेन प्रत्यक्षं न प्रवर्त्तेत इत्यवसातुं शक्यमिति । तत्र तत्स्मरणस्य च्छिन्नमूलत्वासिद्धेरस्मर्यमाणकर्तृकत्वादित्यसिद्धो हेतुः । अथ प्रमाणान्तरेणानुभवाभावः । तन्न—अनुमानस्य आगमस्य च प्रमाणान्तरस्य तत्र कर्तृसद्भावावेदकस्य प्राक्प्रतिपादितत्वात् । किञ्चास्मर्यमाणकर्तृकत्वं वादिनः प्रतिवादिनः सर्वस्य वा स्यात् ? वादिनश्चेत्तदनैकान्तिकं—सा ते भवतु सुप्रीतेत्यादौ विद्यमानकर्तृकेप्यस्य सम्भवात् । प्रतिवादिनश्चेत्तदसिद्धम् । तत्र हि प्रतिवादी स्मरत्येव कर्त्तारम् । एतेन सर्वस्यास्मरणं प्रत्याख्यातम् । सर्वात्मज्ञानविज्ञानरहितो वा कथं सर्वस्य तत्र कर्त्रऽस्मरणमवैति ? किञ्चातः स्वातन्त्र्येणापौरुषेयत्वं साध्येत पौरुषेयत्वसाधनमनुमानं वा बाध्येत ? प्राच्यविकल्पे स्वातन्त्र्येणापौरुषेयत्वस्यादेः साधनं प्रसङ्गो वा ? स्वातन्त्र्यपक्षे नाऽतोऽपौरुषेयत्वसिद्धिः पदवाक्यत्वतः पौरुषेयत्वप्रसिद्धेः । अतो न

---

१ कुत एतदित्याह ॥ २ अनिरीक्षितफलेषु ॥ ३ यागेषु ॥ ४ वक्ष्यमाणप्रकारेण ॥ ५ कथं नि संशया प्रवर्त्तन्ते ॥ ६ कर्म ॥ ७ कारणेन ॥ ८ व्यापृतानाम् ॥ ९ उक्तप्रकारेण ॥ १० वक्ष्यमाणरीत्या ॥ १२ पिटके ॥ १३ पौरुषेयपिटके ॥ १४ पौरुषेयत्वं विपक्ष ॥ १५ विरोधस्य ॥ १६ अपौरुषेयत्वमिति ॥ १७ अभिप्रेतार्थप्रतिपादकवाक्य ॥ १८ भवतीत्यादि ॥ १९ उच्चारण ॥ २० अस्य शब्दस्यायमर्थ इति ॥ २१ सङ्केतानाम् ॥ २२ तस्मात् ॥ २३ असर्वज्ञानाम् ॥ २४ वेदे ॥ २५ वेदे ॥ २६ प्रसना ॥ २७ वेदे ॥ २८ वेदे ॥ २९ अस्मर्यमाणकर्तृकत्वात् ॥ ३० अस्मर्यमाणकर्तृकत्वादिति ॥ ३१ साधनम् ३२ अस्मर्यमाणकर्तृकत्वात् ॥

ज्ञायते किमस्मर्यमाणकर्तृत्वादपौरुषेयो वेदः पदवाक्यात्मकत्वात्पौरुषेयो वा ? न च सन्देहहेतोः[1] प्रामाण्यम्[2] । ननु न प्रकृताद्धेतोः[3] सन्देहोत्पत्तिर्येनास्याऽप्रामाण्यम् । किन्तु प्रतिहेतुतः[5] । तस्य चैतस्मिन्सत्यऽप्रवृत्तेः कथं संशयोत्पत्तिः ? तदयुक्तम् । यथैव हि प्रकृतहेतोः सद्भावे पौरुषेयत्वसाधकहेतोरप्रवृत्तिरभिधीयते तथा पदवाक्यत्वलक्षणहेतुसद्भावे सत्यस्मर्यमाणकर्तृकत्वस्याप्यप्रवृत्तिरस्तु विशेषाभावात्[6] । तन्न स्वतन्त्रसाधनमिदम् । नापि प्रसङ्गसाधनम् । तत्खलु पौरुषेयत्वाभ्युपगमे वेदस्य तत्कर्तुः पुरुषस्य स्मरणप्रसंङ्गः स्यात् । इत्यनिष्टापादनस्वभावम् । न च कर्तृस्मरणं परस्यानिष्टम् । स हि पदवाक्यत्वेन हेतुना तत्कर्तुः स्मरणं प्रतीयन् कथं तत्स्मरणस्याऽनिष्टतां ब्रूयात् ? पौरुषेयत्वसाधनानुमानबाधापक्षेपि किमनेनास्य स्वरूपं बाध्यते विषयो वा ? न तावत्स्वरूपमपौरुषेयत्वानुमानस्याप्यनेन स्वरूपबाधनानुषङ्गात् तयोस्तुल्यबलत्वेनान्योन्यं विशेषाभावात् । अतुल्यबलत्वे वा किमनुमानबाधया ? येनैव दोषेणास्याऽतुल्यबलत्वं तत एवाप्रामाण्यप्रसिद्धेः । विपर्ययबाधाप्यनुपपन्ना तुल्यबलत्वेन हेत्वोः[13] परस्परविषयप्रतिबन्धे वेदस्योभयधर्मशून्यत्वानुषङ्गात् । एकस्य वा स्वविषयसाधकत्वेऽन्यस्यापि तत्प्रसङ्गाद् धर्मद्वयात्मकत्वं स्यात् । अतुल्यबलत्वे तु यत एवातुल्यबलत्वं तत एवाऽप्रामाण्यप्रसिद्धेः किमनुमानबाधयेत्युक्तम् । एतेन[17] "वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा" इत्यनेनानुमानेन पौरुषेयत्वप्रसाधकानुमानस्य बाधेत्यपि प्रत्याख्यातं प्रकृतदोषाणामत्राप्यविशेषात् । किञ्चात्र निर्विशेषणमध्ययनशब्दवाच्यत्वमपौरुषेयत्वं प्रतिपादयेत्कर्त्रऽस्मरणविशिष्टं वा ? निर्विशेषणस्य हेतुत्वे निश्चितकर्तृकेषु भारतादिष्वपि भावादनैकान्तिकत्वम् । किञ्च यथाभूतानां पुरुषाणामध्ययनपूर्वकं दृष्टं तथाभूतानामेवाध्ययनशब्दवाच्यत्वमध्ययनपूर्वकत्वं साधयत्यन्यथाभूतानां वा ? यदि तथाभूतानां तदा सिद्धसाधनम् । अथान्यथाभूतानां तर्हि सन्निवेशादिवदऽप्रयोजको हेतुः । अथ तथाभूतानामेव तत्तथा ततः साध्यते । न च सिद्धसाधनं सर्वपुरुषाणामतीन्द्रियार्थदर्शनशक्तिवैकल्येनातीन्द्रियार्थप्रतिपादकप्रेरणाप्रणेतृत्वासामर्थ्येनेदृशत्वात् । तदप्यसाम्प्रतं यतो यदि प्रेरणायास्तथाभूतार्थप्रतिपादने अप्रामा-

---

१ कारणस्य ॥ २ अस्मर्यमाणकर्तृत्वस्य ॥ ३ अपौरुषेयत्वलक्षणस्वसाध्यसाधकस्य ॥ ४ अस्मर्यमाणकर्तृत्वादिति ॥ ५ विप्रतिकूलहेतुत ॥ ६ प्रतिकृतहेतौ सति पदवाक्यत्व हेत्वन्तरं न प्रवर्त्तते । पदवाक्यत्वे तु सत्यपि प्रकृतो हेतु वर्तते इति योऽसौ विशेषस्तस्याभावात् ॥ ७ वेद स्मर्यमाणकर्तृक पौरुषेयत्वाद्भारतवत् । हेतुरूपव्याप्याभ्युपगमेनानिष्टस्य साध्यरूपव्यापकाभ्युपगमस्यापादन प्रसङ्ग ॥ ८ जैनस्य ॥ ९ जानन् ॥ १० पदवाक्यत्वलक्षण ॥ ११ पौरुषेयत्वाऽपौरुषेयत्वानुमानयो ॥ १२ पौरुषेयत्वलक्षणस्य विषयस्य ॥ १३ पदवाक्यत्वाऽस्मर्यमाणकर्तृकत्वलक्षणयो ॥ १४ अपौरुषेयत्वपौरुषेयत्वलक्षण ॥ १५ पौरुषेयत्वाऽपौरुषेयत्वलक्षण ॥ १६ वेदस्य ॥ १७ अस्मर्यमाणकर्तृकत्वानुमानस्यापौरुषेयत्वप्रसाधनानुमान प्रति बाधकत्वानिराकरणपरेण ग्रन्थेन ॥ १८ विशेषणमेतत् ॥ १९ अधुनातनसदृशानाम् ॥ २० अस्माभिरपि तथाभूताना गुर्वऽध्ययनपूर्वकत्व प्रतिपाद्यते ॥ २१ अतीन्द्रियार्थदर्शिनाम् ॥ २२ आदिना कार्यत्वादिवत् ॥ २३ अकिञ्चित्करो हेतुस्तेषा गुर्वध्ययनपूर्वकत्व नास्ति यत ॥ २४ सपक्षव्यापकपक्षव्यावृत्तो ह्युपाध्याहितसम्बन्धो हेतुरप्रयोजक ॥ २५ जैनाना तु मते सर्वपुरुषाणामतीन्द्रियार्थदर्शने शक्तिवैकल्य नास्ति केषाञ्चिदतीन्द्रियार्थदर्शनशक्तिरस्तीति भाव. ॥ २६ अग्निष्टोमेन यजेतेति लिङादिश्रवणानन्तर शब्दो मा प्रेरयतीति दर्शनात् प्रेरणान्विततया कृति (याग) प्रतीयते । सा च प्रेरणा वेद इत्यर्थ. ॥

ण्याभावः सिद्धः स्यात् । स्यादेतत् यावता गुणवद्वक्त्रभावे तद्गुणैरनिराकृतैर्दोषैरपोहितत्वात् तत्र सापवादं प्रामाण्यं, तथाभूतां प्रेरणामतीन्द्रियार्थदर्शनशक्तिविरहिणोपि कर्त्तुं समर्था इति कुतस्तथाभूतप्रेरणाप्रणेतृत्वासामर्थ्येनाऽशेषपुरुषाणामीदृशत्वसिद्धिर्यतः सिद्धसाधनं न स्यात् ? अथ न गुणवद्वक्तृकत्वेनैव शब्देऽप्रामाण्यनिवृत्तिरपौरुषेयत्वेनाप्यस्याः सम्भवात् । तेनायमदोषः । तदुक्तं "शब्दे दोषोद्भवस्तावद्वक्त्रधीन[13] इति स्थितम् । तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः ॥ १ ॥ तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यऽसम्भवात् । यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ २" इति । तदप्यसमीचीनं यतोऽपौरुषेयत्वमस्याः किमन्यतः प्रमाणात्प्रतिपन्नमत एव वा ? यद्यन्यतस्तदाऽस्य वैयर्थ्यम् । अत एव चेन्नन्वतोऽनुमानादपौरुषेयत्वसिद्धौ प्रेरणायामप्रामाण्याभावः स्यात् । तदभावाच्च तथाभूतप्रेरणाप्रणेतृत्वासामर्थ्येन सर्वपुरुषाणामीदृशत्वसिद्धिरितरेतराश्रयः । तन्न निर्विशेषणोयं हेतुः प्रकृतसाध्यसाधनः । अथ सविशेषणस्तदा विशेषणस्यैव केवलस्य गमकत्वाद्विशेष्योपादानमनर्थकम् । भवतु विशेषणस्यैव गमकत्वम् । का नो हानिः ? सर्वथाऽपौरुषेयत्वसिद्ध्या प्रयोजनात् । तदप्ययुक्तं यतः कर्त्रऽस्मरणं विशेषणं किमभावाख्यं प्रमाणमर्थापत्तिरनुमानं वा ? तत्राद्यः पक्षो न युक्तोऽभावप्रमाणस्य स्वरूपसामग्रीविषयाऽनुपपत्तितः प्रामाण्यस्यैव प्रतिषिद्धत्वात् । किञ्च सदुपलम्भकप्रमाणपञ्चकनिवृत्तिनिबन्धनास्य प्रवृत्तिः 'प्रमाणपञ्चकं यत्र' इत्याद्यभिधानात् । न च प्रमाणपञ्चकस्य वेदे पुरुषसद्भावावेदकस्य निवृत्तिः—पदवाक्यत्वलक्षणस्य पौरुषेयत्वप्रसाधकत्वेनानुमानस्य प्रतिपादनात्[21] । न चास्याऽप्रामाण्यमभिधातुं शक्यं यतोऽस्याऽप्रामाण्यम् । किमनेन बाधितत्वात्साध्याविनाभावित्वाभावाद्वा स्यात् ? तत्राद्यपक्षे चक्रकप्रसङ्गः । तथा हि । न[22] यावदभावप्रमाणप्रवृत्तिर्न तावत्प्रस्तुतानुमानबाधा । यावच्च न तस्य बाधा न तावत्सदुपलम्भकप्रमाणनिवृत्तिः । यावच्च न तस्य निवृत्तिर्न तावत्तन्निबन्धनाऽभावाख्यप्रमाणप्रवृत्तिः । तदप्रवृत्तौ च नानुमानबाधेति । द्वितीयपक्षस्त्वयुक्तः स्वसाध्याविनाभावित्वस्यात्र सम्भवात् । न खलु पदवाक्यात्मकत्वं पौरुषेयत्वमन्तरेण क्वचिद्दृष्टं येनास्य स्वसाध्याविनाभावाभावः स्यात् । एतेन[23] कर्तुरस्मरणमन्यथानुपपद्यमानं कर्त्रऽभावनिश्चायकमर्थापत्तिगम्यमपौरुषेयत्वं वेदानामित्यपास्तम्—अन्यथानुपपद्यमानत्वासम्भवस्यात्र[26] प्रागेव[27] प्रतिपादितत्वात् । कर्त्रऽस्मरणमनुमानरूपमऽपौरुषेयत्वं प्रसाधयतीत्यप्यनुपपन्नं प्रागेव कृतोत्तरत्वात् । एतेन 'अतीतानागतौ कालौ वेदकारविवर्जितौ । कालत्वात्तद्यथा[28] कालो वर्त्तमानः समीक्ष्यते । १ ।'

---

१ तर्हि ॥ २ न कुतोपि ॥ ३ येन कारणेन ॥ ४ प्रामाण्यनिराकृतत्वात् ॥ ५ सदोषम् ॥ ६ अप्रामाण्यभूताम् ॥ ७ सक्षम ॥ ८ न तु स्वभावत ॥ ९ अपौरुषेयवेदवाक्यानन्तरोत्पन्नेषु स्मृतिग्रन्थेषु ॥ १० एतदेव समर्थयत्यग्रे ॥ ११ अपौरुषेयवेदे ॥ १२ निराकृतानाम् ॥ १३ असबन्धादय ॥ १४ आश्रय पुरुष ॥ १५ वेदाध्ययनवाच्यत्वादिति ॥ १६ वेदाध्ययनवाच्यत्वस्य ॥ १७ वेदाध्ययनवाच्यत्वात् ॥ १८ वेदाध्ययनवाच्यत्वात् ॥ १९ अप्रामाण्याभावात् ॥ २० अनुमानबाधेति ॥ २१ कथम् ? ॥ २२ एव ॥ २३ अभावप्रमाणप्रवृत्तौ प्रस्तुतानुमानबाधा तस्या सदुपलम्भकप्रमाणनिवृत्तिस्तस्या च पदवाक्यत्वस्य स्वसाध्याविनाभावित्वमिति समर्थनपरेण ग्रन्थेन ॥ २४ अपौरुषेयत्व विना ॥ २५ वेदोऽपौरुषेय कर्त्रऽस्मरणान्यथानुपपत्ते ॥ २६ कर्तृस्मरणादित्यत्र ॥ २७ पिटकादौ ॥ २८ वटे वटे वैश्रवण इत्यादिनाऽनैकान्तिकसमर्थनेन ॥

इत्यपि प्रत्युक्तं—प्राक्तनानुमानद्वयोक्ताशेषदोषाणामत्राप्यविशेषात् । आगमान्तरेप्यस्य तुल्यत्वाच्च । किञ्चेदानीं यथाभूतो वेदाकरणसमर्थपुरुषयुक्तस्तत्कर्तृ-
पुरुषरहितो वा कालः प्रतीतोऽतीतोऽनागतो वा तथाभूतः कालत्वात्साध्येताऽन्यथाभूतो वा? यदि तथाभूतस्तदा सिद्धसाध्यता । अथान्यथाभूतस्तदा सन्निवे-
शादिवदप्रयोजको हेतुः । अथ तथाभूतस्यैवातीतस्यानागतस्य वा कालस्य तद्रहितत्वं साध्यते । न च सिद्धसाध्यताऽन्यथाभूतस्य कालस्यासम्भवात् । नन्व-
न्यथाभूतः कालो नास्तीत्येतत्कुतः प्रमाणात्प्रतिपन्नम्? यद्यन्यतस्तर्हि तत एवापौरुषेयत्वसिद्धेः किमनेन? अत एवेति चेत् । नन्वन्यथाभूतकालाभावसिद्धावतो-
ऽनुमानात्तद्रहितत्वसिद्धिस्तत्सिद्धेश्चान्यथाभूतकालाभावसिद्धिरित्यन्योन्याश्रयः । नाप्यागमतोऽपौरुषेयत्वसिद्धिरितरेतराश्रयानुषङ्गात् । तथा हि । आगमस्याऽपौरु-
षेयत्वसिद्धावप्रामाण्याभावसिद्धिस्तत्सिद्धेश्चातोऽपौरुषेयत्वसिद्धिरिति । न चाऽपौरुषेयत्वसिद्धिरिति । न चाऽपौरुषेयत्वप्रतिपादकं वेदवाक्यमस्ति । नापि
विधिवाक्यादंऽपरस्य परैः प्रामाण्यमिष्यते । अन्यथा पौरुषेयत्वमेव स्यात्तत्प्रतिपादकानां "हिरण्यगर्भः समवर्त्ततोग्रे" इत्यादिप्रचुरतरवेदवाक्यानां श्रव-
णात् । अपौरुषेयत्वधर्माधारतया प्रमाणप्रसिद्धस्य कस्यचित्पदवाक्यादेरसम्भवान्न तत्सादृश्येनोपमानादप्यपौरुषेयत्वसिद्धिः । नाप्यर्थापत्तेः—अपौरुषेयत्व-
व्यतिरेकेणानुपपद्यमानस्यार्थस्य कस्यचिदप्यभावात् । स ह्यप्रामाण्याभावलक्षणो वा स्यादतीन्द्रियार्थप्रतिपादनस्वभावो वा परार्थशब्दोच्चारणरूपो वा? न ताव-
दाद्यः पक्षोऽप्रामाण्याभावस्यागमान्तरेपि तुल्यत्वात् । न चासौ तत्र मिथ्या वेदेपि तन्मिथ्यात्वप्रसङ्गात् । अथागमान्तरे पुरुषस्य कर्तुरभ्युपगमात्, पुरुषाणां
तु रागादिदोषदुष्टत्वेन तज्जनितस्याऽप्रामाण्यस्यात्र सम्भवात्तत्रासौ मिथ्या, न वेदे—तत्राप्रामाण्योत्पादकदोषाश्रयस्य कर्त्तुरभावात् । नन्वत्र कुतः कर्तुरभावो निश्चि-
तः? अन्यतोऽत एव वा? यद्यन्यतस्तदेवोच्यतां, किमर्थापत्त्या? अर्थापत्तेश्चेन्न—इतरेतराश्रयानुषङ्गात् । अर्थापत्तितो हि पुरुषाभावसिद्धावप्रामाण्याभावसिद्धिस्तत्सिद्धौ
चार्थापत्तितः पुरुषाभावसिद्धिरिति । द्वितीयपक्षोप्ययुक्तोऽतीन्द्रियार्थप्रतिपादनलक्षणोर्थस्यागमान्तरेपि सम्भवात् । परार्थशब्दोच्चारणान्यथानुपपत्तेर्नित्यो वेद
इत्यप्यसमीचीनं धूमादिवत्सादृश्यादप्यर्थप्रतिपत्तेः प्रतिपादयिष्यमाणत्वात् । किञ्चापौरुषेयत्वं प्रसज्यप्रतिषेधरूपं वेदस्याभ्युपगम्यते पर्युदासस्वभावं वा? प्रथ-
मपक्षे तत्किं सदुपलम्भकप्रमाणग्राह्यमुताऽभावप्रमाणपरिच्छेद्यम्? तत्राद्यः पक्षोऽयुक्तः सदुपलम्भकप्रमाणपञ्चकस्यापौरुषेयग्राहकत्वप्रतिषेधात् । तद्ग्राह्यस्य
तुच्छस्वभावाभावरूपत्वानुपपत्तेश्च । प्रतिक्षिप्तश्च तुच्छस्वभावाभावः प्राक्प्रबन्धेन । द्वितीयपक्षस्तु श्रद्धामात्रगम्योऽभावप्रमाणस्याऽसम्भवतस्तेन तद्ग्रहणानुप-
पत्तेः । तदसम्भवश्च तत्सामग्रीस्वरूपयोः प्राक्प्रबन्धेन प्रतिषिद्धत्वात्सिद्धः । अथ पर्युदासरूपं तदभ्युपगम्यते । नन्वत्रापि किं पौरुषेयत्वादन्यत्पर्युदासवृत्त्या-

---

१ कालत्वादित्यनेनानुमानेन पौरुषेयत्वसाधकानुमानस्य स्वरूपं बाध्येत विषयो वेलादिप्रकारेण ॥ २ वेद ॥ ३ साधनात् ॥ ४ तेन वेदकर्त्रा ॥ ५ वेदकर्त्रा ॥ ६ अस्तु वा वेदवाक्यमपौरुषेयत्वप्रतिपादकं तथापि ॥
७ प्रतिषेधवाक्यादे ॥ ८ मीमांसकैः ॥ ९ अपरस्य प्रामाण्यं यदीष्यते ॥ १० जात ॥ ११ आदौ ॥ १२ प्रमाणात् ॥ १३ इति ॥ १४ नित्यत्वादपौरुषेयत्वम् ॥

ऽपौरुषेयत्वशब्दाभिधेयं स्यात्? तत्सत्त्वमिति चेत् तत्किं निर्विशेषणमनादिविशेषणविशिष्टं वा ? प्रथमपक्षे सिद्धसाध्यता ततोऽन्यस्य वेदसत्त्वमात्रस्याध्यक्षादिप्रमाणप्रसिद्धस्यास्माभिरभ्युपगमात् । पौरुषेयत्वं हि कृतकत्वं ततश्चान्यत्सत्त्वमित्यत्र को वै विप्रतिपद्यते ? द्वितीयपक्षः पुनरविचारितरमणीयो वेदानादिसत्त्वे प्रत्यक्षादिप्रमाणतः प्रसिद्ध्यसम्भवस्याऽनन्तरमेव प्रतिपादितत्वात् । अस्तु वाऽपौरुषेयो वेदस्तथाप्यसौ व्याख्यातोऽव्याख्यातो वा स्वार्थे प्रतीतिं कुर्यात् ? न तावदव्याख्यातोऽतिप्रसङ्गात् । व्याख्यातश्चेत्कुतस्तद्व्याख्यानम्? स्वतः पुरुषाद्वा ? न तावत्स्वतोऽयमेव मदीयपदवाक्यानामर्थो नायमिति स्वयं वेदेनाऽप्रतिपादनात् । अन्यथा व्याख्याभेदो न स्यात् । पुरुषाच्चेत्कथं तद्व्याख्यानात्पौरुषेयादर्थप्रतिपत्तौ दोषाशङ्का न स्यात् । पुरुषा हि विपरीतमप्यर्थं व्याचक्षाणा दृश्यन्ते । संवादेन प्रामाण्याभ्युपगमे चापौरुषेयत्वकल्पनाऽनर्थिका—तद्वद्वेदस्यापि प्रमाणान्तरसंवादादेव प्रामाण्योपपत्तेः । न च व्याख्यानानां संवादोस्ति परस्परविरुद्धभावनानियोगादिव्याख्यानानामन्योन्यं विसंवादोपलम्भात् । किञ्चासौ तद्व्याख्याताऽतीन्द्रियार्थद्रष्टा तद्विपरीतो वा? प्रथमपक्षेऽतीन्द्रियार्थदर्शिनः प्रतिषेधविरोधो धर्मादौ चास्य प्रामाण्योपपत्तेः । धर्मे चोदनैव प्रमाणमित्यवधारणानुपपत्तिश्च । अथ तद्विपरीतः । कथं तर्हि तद्व्याख्यानाद्यथार्थप्रतिपत्तिः—अयथार्थाभिधानाशङ्कया तदनुपपत्तेः । न च मन्वादीनां सातिशयप्रज्ञत्वात्तद्व्याख्यानाद्यथार्थप्रतिपत्तिस्तेषां सातिशयप्रज्ञत्वासिद्धेः । तेषां हि प्रज्ञातिशयः स्वतो वेदार्थाभ्यासाददृष्टाद्ब्रह्मणो वा स्यात् ? स्वतश्चेत्सर्वस्य स्याद्विशेषाभावात् । वेदार्थाभ्यासाच्चेत्किं ज्ञातस्याज्ञातस्य वा तदर्थस्याभ्यासः स्यात् ? न तावदज्ञातस्याऽतिप्रसङ्गात् । ज्ञातस्य चेत्कुतस्तज्ज्ञप्तिः स्वतोऽन्यतो वा ? स्वतश्चेदन्योन्याश्रयः । सति हि वेदार्थाभ्यासे स्वतस्तत्परिज्ञानं, तस्मिंश्च तदर्थाभ्यास इति । अन्यतश्चेत्तस्यापि तत्परिज्ञानमन्यत इत्यतीन्द्रियार्थदर्शिनोऽनभ्युपगमेऽन्धपरम्परातो यथार्थनिर्णयानुपपत्तिः । अदृष्टोपि प्रज्ञातिशयाऽसा[illegible]कस्तस्यात्मान्तरेपि सम्भवात् । न तथाविधोऽदृष्टोऽन्यत्र—मन्वादावेवास्य सम्भवादिति चेत्कुतोऽत्रैवास्य सम्भवः ? वेदार्थानुष्ठानविशेषाच्चेत्स तर्हि वेदार्थस्य [illegible]ज्ञातस्याऽज्ञातस्य वाऽनुष्ठाता स्यात् ? अज्ञातस्य चेदतिप्रसङ्गः । ज्ञातस्य चेत्परस्पराश्रयः । सिद्धे हि वेदार्थज्ञानातिशये तदर्थानुष्ठानविशेषसिद्धिस्तत्सिद्धौ च त[illegible]ज्ञानातिशयसिद्धिरिति । ब्रह्मणोपि वेदार्थज्ञाने सिद्धे सत्यऽतो मन्वादेस्तदर्थपरिज्ञानातिशयः स्यात् । तच्चास्य कुतः सिद्धम् ? धर्मविशेषाच्चेत्स एवेतरेतरा[illegible]श्रयः । वेदार्थपरिज्ञानाभावे हि तत्पूर्वकानुष्ठानजनितधर्मविशेषानुत्पत्तिस्तदनुत्पत्तौ च वेदार्थपरिज्ञानाभाव इति । तन्नातीन्द्रियार्थदर्शिनोऽनभ्युपगमे वेदार्थप्रति-

१ [illegible] ॥ २ [illegible] ॥ ३ द्विजवत्सौगतानामप्यर्थप्रतीतिं कुर्यात् ॥ ४ [illegible] वक्तुमशक्यत्वात् ॥ ५ यदि वेद प्रतिपादयति ॥ ६ भावनाविधिनियोगादि ॥ ७ व्याख्यानानाम् ॥ ८ व्याख्यानानाम् ॥ [illegible] प्रत्यक्षं संवादकमनुमेयेर्थे अनुमानमेव संवादक, परोक्षे [illegible] संवाद ॥ १० मीमांसकमते ॥ ११ तस्मादतीन्द्रियार्थद्रष्टु ॥ १२ अतीन्द्रियार्थद्रष्टुर्विपरीतस्य किञ्चिज्ज्ञस्य ॥ १३ गोपालादीनामपि [illegible] ॥ १४ पुरुषात् ॥ १५ परस्य तव ॥ १६ [illegible] ॥ १७ प्रज्ञातिशयसाधक ॥ १८ प्रज्ञातिशयसाधकादृष्टस्य ॥ १९ प्रज्ञातिशयसाधकादृष्टस्य ॥ २० गोपालादीनामपि वे[illegible] ॥

पत्तिर्घटते । ननु व्याकरणाद्यभ्यासाल्लौकिकपदवाक्यार्थप्रतिपत्तौ तदविशिष्टवैदिकपदवाक्यार्थप्रतिपत्तिरपि प्रसिद्धेरश्रुतकाव्यादिवत् । तन्न वेदार्थप्रतिपत्तावऽतीन्द्रियार्थदर्शिना किञ्चित्प्रयोजनमित्यप्यसारं—लौकिकवैदिकपदानामेकत्वेप्यनेकार्थत्वव्यवस्थितेरन्यपरिहारेण व्याचिख्यासितार्थस्य नियमयितुमशक्तेः । न च प्रकरणादिभ्यस्तन्नियमस्तेषामप्यनेकप्रवृत्तेर्द्विसन्धानादिवत् । यदि च लौकिकेनाग्न्यादिशब्देनाविशिष्टत्वाद्वैदिकस्याग्न्यादिशब्दस्यार्थप्रतिपत्तिस्तर्हि पौरुषेयेणाविशिष्टत्वात्पौरुषेयोसौ कथं न स्यात्? लौकिकस्य ह्यग्न्यादिशब्दस्यार्थवत्त्वं पौरुषेयत्वेन व्याप्तम् । तत्रायं वैदिकोऽग्न्यादिशब्दः कथं पौरुषेयत्वं परित्यज्य तदर्थमेव ग्रहीतुं शक्नोति? उभयमपि हि गृह्णीयाज्जह्याद्वा । न च लौकिकवैदिकशब्दयोः शब्दस्वरूपाविशेषे सङ्केतग्रहणसव्यपेक्षत्वेनाऽर्थप्रतिपादकत्वे अनुच्चार्यमाणयोश्च पुरुषेणाऽश्रवणे समानेऽन्यो विशेषो विद्यते यतो वैदिका अपौरुषेयाः शब्दा लौकिकास्तु पौरुषेयाः स्युः । सङ्केतेनतिक्रमेणार्थप्रत्यायनं चोभयोरपि । न चापौरुषेयत्वे पुरुषेच्छावशादर्थप्रतिपादकत्वं युक्तम् । उपलभ्यन्ते च यत्र पुरुषैः सङ्केतिताः शब्दास्तं तमर्थमविगानेन प्रतिपादयन्तः । अन्यथा तत्सङ्केतभेदपरिकल्पनानर्थक्यं स्यात् । ततो ये नररचितवचनरचनाऽविशिष्टास्ते पौरुषेया यथाऽभिनवकूपप्रासादादिरचनाऽविशिष्टा जीर्णकूपप्रासादादयः । नररचितवचनाऽविशिष्टं च वैदिकं वचनमिति । न चात्राश्रयासिद्धो हेतुर्वैदिकीनां वचनरचनानां प्रत्यक्षतः प्रतीतेः । नाप्यप्रसिद्धविशेषणः पक्षोऽभिनवकूपप्रासादादौ पुरुषपूर्वकत्वेनास्य साध्यविशेषणस्य सुप्रसिद्धत्वात् । न च हेतोः स्वरूपासिद्धत्वं तद्वचनरचनासु विशेषग्राहकप्रमाणाभावेनास्याऽभावात् । न चाप्रामाण्याभावलक्षणो विशेषस्तत्रेत्यभिधातव्यं तस्य विद्यमानस्यापि तन्निराकारकत्वाभावाद् । यादृशो हि विशेषः प्रतीयमानः पौरुषेयत्वं निराकरोति तादृशस्यास्याऽभावादऽविशिष्टत्वम् । न पुनः सर्वथा विशेषाभावात्—एकान्तेनाऽविशिष्टस्य कस्यचिद्वस्तुनोऽभावात् । अप्रामाण्याभावलक्षणश्च विशेषो दोषवन्तमप्रामाण्यकारणं पुरुषं निराकरोति । न गुणवन्तमप्रामाण्यनिवर्तकम् । न च गुणवतः पुरुषस्याभावादन्यस्य चानेन विशेषेण निराकृतत्वात्सिद्धमेवापौरुषेयत्वं तत्रेत्यभ्युपगन्तव्यं तत्सद्भावस्य प्राक्प्रतिपादितत्वात् । तदभावेऽप्रामाण्याभावलक्षणविशेषाभावप्रसङ्गाच्च । पौरुषेये प्रासादादौ हेतोर्दर्शनादपौरुषेये चाकाशादावऽदर्शनान्नानैकान्तिकत्वम् । अत एव न विरुद्धत्वम् । पक्षधर्मत्वे हि सति विपक्षे वृत्तिर्यस्य

---

१ आदिना निघण्टु ॥ २ तस्मात्कारणात् ॥ ३ सदृशत्वे ॥ ४ अन्यार्थस्य ॥ ५ द्विसन्धानकाव्यवत् ॥ ६ सदृशत्वात् ॥ ७ शब्देन ॥ ८ अग्न्यादिशब्दस्यार्थवत्त्वे पौरुषेयत्वेन व्याप्ते सति ॥ ९ अपौरुषेयत्वपौरुषेयत्वद्वयम् ॥ १० वैदिकाना शब्दाना कश्चन विशेषोस्ति ततोऽमीषामपौरुषेयत्वमित्याशङ्क्याह ॥ ११ समानत्वे ॥ १२ अस्य शब्दस्यायमर्थ इति ॥ १३ समाने ॥ १४ समानम् ॥ १५ वेदे ॥ १६ अर्थे ॥ १७ वैदिक वचन धर्मि पौरुषेय भवति नररचितवचनरचनाऽविशिष्टत्वात् ॥ १८ अनुमाने ॥ १९ श्रवणेन ॥ २० स्वमतापेक्षया ॥ २१ साध्य पौरुषेयत्वम् ॥ २२ सपक्षे ॥ २३ पौरुषेयत्वस्य ॥ २४ लोकिक नररचितरचनाऽविशिष्ट वैदिक नेति भेद ॥ २५ पौरुषेयत्व ॥ २६ वैदिकलौकिकशब्दयोरभिन्नत्वम् ॥ २७ अविभिन्नत्वम् ॥ २८ सर्वथा वैदिकलौकिकशब्दयोरविशेषादभेदो भविष्यतीत्युक्ते आह ॥ २९ सर्वप्रकारेण ॥ ३० अभेदरूपस्य ॥ ३१ वैदिकलौकिकशब्दयोरतीन्द्रियार्थेन्द्रियार्थप्रतिपादकत्वाद्भेदो यत ॥ ३२ वेदे ॥ ३३ सर्वज्ञसिद्धिप्रस्तावे ॥

स विरुद्धः[1] । न चास्य[2] विपक्षे वृत्तिः । नापि कालात्ययापदिष्टत्वम् । तद्धि हेतोः प्रत्यक्षागमबाधित[3]कर्म[4]निर्देशानन्तरप्रयुक्तं भवतीष्यते । न च यत्र स्वसाध्या-विनाभूतो हेतुर्धर्मिणि प्रवर्त्तमानः स्वसाध्यं प्रसाधयति तत्रैव प्रमाणान्तरं प्रवृत्तिमासादयत्तमेव धर्मं व्यावर्त्तयति एकस्यैकदैकत्र विधिप्रतिषेधयोर्विरोधात् । प्रकरणसमत्वमपि प्रतिहेतोर्विपरीतधर्मप्रसाधकस्य प्रकरणचिन्ताप्रवर्त्तकस्य तत्रैव धर्मिणि सद्भावोऽभिधीयते । न च स्वसाध्याविनाभूतहेतुप्रसाधितधर्मिणो वि-परीतधर्मोपेतत्वं सम्भवतीति न विपरीतधर्माधायिनो हेत्वन्तरस्य तत्र प्रवृत्तिरिति । तत्र वेदपदवाक्ययोर्नित्यत्वं घटते । नापि वर्णानां कृतकत्वतः शब्दमात्र-स्यानित्यत्वसिद्धौ तेषामप्यनित्यत्वसिद्धौ तेषामप्यनित्यत्वोपपत्तेः । तथा हि । अनित्यः शब्दः कृतकत्वाद् घटवत् । न च कृतकत्वमसिद्धम् । तथा हि । कृ-तकः शब्दः कारणान्वयव्यतिरेकानुविधायित्वात्तद्वदेव । न चेदमप्यसिद्धं ताल्वादिकारणव्यापारे सत्येव शब्दस्यात्मलाभप्रतीतेस्तदभावे वाऽप्रतीतेश्चक्रादिव्या-पारसद्भावासद्भावयोर्घटस्यात्मलाभाऽलाभप्रतीतिवत् । ननु शब्दस्याऽनित्यत्वोपगमे ततोऽर्थप्रतीतिर्न स्यात् । अस्ति चासौ । ततो नित्यः शब्दः स्वार्थप्रतिपा-दकत्वान्यथानुपपत्तेरित्यभ्युपगन्तव्यम् । स्वार्थेनावगतसम्बन्धो हि शब्दः स्वार्थं प्रतिपादयति । अन्यथाऽगृहीतसङ्केतस्यापि प्रतिपत्तुस्ततोऽर्थप्रतीतिप्रसङ्गः । सम्ब-न्धावगमश्च प्रमाणत्रयसम्पाद्यः । तथा हि । 'यदैको वृद्धोऽन्यस्मै प्रतिपन्नसङ्केताय प्रतिपादयति 'देवदत्त गामभ्याज शुक्लां दण्डेन' इति, तदा पार्श्वस्थोऽन्यो-ऽव्युत्पन्नसङ्केतः शब्दार्थौ प्रत्यक्षतः प्रतिपद्यते श्रोतुश्च तद्विषयक्षेपणादिचेष्टोपलम्भानुमानतो गवादिविषयां प्रतिपत्तिं प्रतिपद्यते । तत्प्रतिपत्त्यन्यथानुपपत्त्या च तच्छब्दस्यैव तत्र वाचिकां शक्तिं परिकल्पयति । पुनः पुनस्तच्छब्दोच्चारणादेव तदर्थस्य प्रतिपत्तेः सोयं प्रमाणत्रयसम्पाद्यः सम्बन्धावगमो न सकृद्वाक्यप्रयोगा-त्सम्भवति । न चाऽस्थिरस्य पुनः पुनरुच्चारणं घटते । तदभावे नान्वयव्यतिरेकाभ्यां वाचकशक्त्यवगमः । तदसत्त्वान्न प्रेक्षावद्भिः परावबोधाय वाक्यमुच्चार्येत । न चैवम् । ततः परार्थवाक्योच्चारणान्यथानुपपत्त्या निश्चीयते नित्योसौ । तदुक्तं 'दर्शनस्य परार्थत्वान्नित्यः शब्दः' । अथ मतं 'पुनः पुनरुच्चार्यमाणः शब्दः सादृश्यादेकत्वेन निश्चीयमानोऽर्थप्रतिपत्तिं विदधाति न पुनर्नित्यत्वात्' तदसमीचीनं सादृश्येन ततोऽर्थाऽप्रतिपत्तेः । न हि सदृशतया शब्दः प्रतीयमानो वाचकत्वे-

---

१ यथा शब्दो नित्यः कृतकत्वादिति कृतकत्वस्य शब्दधर्मत्वेपि नित्यात्साध्याद्विपरीतेऽनित्ये विपक्षे वृत्तिमत्त्वाद्विरुद्ध ॥ २ हेतो ॥ ३ पक्ष ॥ ४ इतिक्रियाविषयत्वात्कर्मत्वमभिधानम् ॥ ५ प्रत्यक्षागमलक्षणम् ॥ ६ धर्मस्य ॥ ७ प्रतिपक्षसाधकस्य ॥ ८ संशयात्प्रभृत्या निश्चयात्पर्यालोचना ॥ ९ सत्प्रतिपक्षो हेतु प्रकरणसम इति वचनात् ॥ १० प्रसाधकस्य ॥ ११ विधिप्रतिषेधरूपयो ॥ १२ नित्यत्वमन्तरेण ॥ १३ जैनेन त्वया ॥ १४ गृहीत ॥ १५ प्रत्यक्षानुमानार्थापत्तीति ॥ १६ पूर्वं गुरो सकाशात् ॥ १७ ना ॥ १८ वालकाय ॥ १९ तृतीय ॥ २० गुरुसन्निधौ गवानयनसमये ॥ २१ गोशब्द श्रावणप्रत्यक्षेण, गोलक्षणमर्थ नायनप्रत्यक्षेण ॥ २२ य देवदत्त प्रति वाक्य प्रोक्त तस्य ॥ २३ आदिना ताडनप्रेरणादि ॥ २४ तृतीय ॥ २५ शिष्यो गोलक्षणार्थे ज्ञानवान् तद्विषयचेष्टावत्त्वान्मद्वत् ॥ २६ गोशब्दो गोलक्षणार्थवाचकशक्तियुक्तो गोप्रतीत्यन्यथानुपपत्तेरिति ॥ २७ गो इति ॥ २८ अनित्यस्य शब्दस्य ॥ २९ गोशब्दे उच्चारिते गोलक्षणार्थप्रतिपत्तिर्भवति । अनुच्चारिते गोलक्षणार्थप्रतिपत्तिर्न भवतीति ॥ ३० वाचकशक्त्यवगमस्य ॥ ३१ शब्द ॥ ३२ उच्चारणस्य ॥ ३३ घटोय पुनर्देशकालान्तरे घटोयमिति ॥ ३४ उत्तर ॥

नाध्यवसीयते किन्त्वेकत्वेन । य एव हि सम्बन्धग्रहणसमये मया प्रतिपन्नः शब्दः स एवायमिति प्रतीतेः । किञ्च सादृश्यादर्थप्रतीतौ भ्रान्तः शाब्दः प्रत्ययः स्यात् । न ह्यन्यस्मिन्गृहीतसङ्केतेऽन्यस्मादर्थप्रत्ययोऽभ्रान्तो गोशब्दे गृहीतसङ्केतेऽश्वशब्दाद्गवार्थप्रत्ययेऽभ्रान्तत्वप्रसङ्गात् । न च भूयोऽवयवसाम्ययोगस्वरूपं सादृश्यं शब्दे सम्भवति विशिष्टवर्णात्मकत्वाच्छब्दानां वर्णानां च निरवयवत्वात् । न च गत्वादिविशिष्टानां गादीनां वाचकत्वं युक्तं गत्वादिसामान्यस्याऽभावात् । तदभावश्च गादीनां नानात्वायोगात् । सोपि प्रत्यभिज्ञया तेषामेकत्वनिश्चयात् । न चात्र प्रत्यभिज्ञा सामान्यनिबन्धना भेदनिष्ठस्य सामान्यस्यैव गादिष्वसम्भवात् । किञ्च गत्वादीनां वाचकत्वं गादिव्यक्तीनां वा ? न तावद्गत्वादीनां–नित्यस्य वाचकत्वेऽस्मन्मताश्रयणप्रसङ्गात् । नापि गादिव्यक्तीनाम् । तथा हि । गादिव्यक्तिविशेषो वाचको व्यक्तिमात्रं वा ? न तावद्गादिव्यक्तिविशेषस्तस्यानन्वयात् । नापि व्यक्तिमात्रम् । तद्धि सामान्यान्तःपाति व्यक्त्यन्तर्भूतं वा ? सामान्यान्तःपातित्वे स एवास्मन्मतप्रवेशः । व्यक्त्यन्तर्भूतत्वे तदवस्थोऽनन्वयदोष इति । ततोऽर्थप्रतिपादकत्वान्यथानुपपत्तेर्नित्यः शब्दः । तदुक्तम् । अर्थापत्तिरियं चोक्ता पक्षधर्मादिवर्जिता । यदि नाशिनि नित्ये वा विनाशिन्येव वा भवेत् । १ । शब्दे वाचकसामर्थ्यं ततो दूषणमुच्यताम् । फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता । २ । निष्फलत्वेन शब्दस्य योग्यत्वादवगम्यते । परीक्ष(क्ष्य)माणस्तेनास्य युक्त्या नित्यविनाशयोः । ३ । स धर्मोऽभ्युपगन्तव्यो यः प्रधानं न बाधते । न ह्यङ्गाङ्ग्यनुरोधेन प्रधानफलबाधनम् । ४ । युज्यते नाशिपक्षे च तदेकान्तात्प्रसज्यते । न ह्यदृष्टार्थसम्बन्धः शब्दो भवति वाचकः । ५ । तथा च स्यादपूर्वोपि सर्वः सर्वं प्रकाशयेत् । सम्बन्धदर्शनं चास्य नाऽनित्यस्योपपद्यते । ६ । सम्बन्धज्ञानसिद्धिश्चेद्ध्रुवं कालान्तरस्थितिः । अन्यस्मिन् ज्ञा-

---

१ एकत्वानित्यत्वम् ॥ २ ज्ञानम् ॥ ३ शब्दे ॥ ४ शब्दात् ॥ ५ अन्यत्वाऽविशेषात् ॥ ६ अन्यथा ॥ ७ नष्टे सति ॥ ८ गृहीतसङ्केतशब्दस्य नष्टत्वात् ॥ ९ बहु ॥ १० सम्बन्ध ॥ ११ सामान्यम् ॥ १२ सादृश्यधर्मरहिते-रुत्वधर्मे । स एव विशेषस्तेनोपलक्षितो वर्णे । स आत्मा स्वरूप यस्य शब्दस्य ॥ १३ वर्णाना पुद्गलात्मकत्वात् शब्दस्य च वर्णात्मकत्वाच्छब्दे तथाविध सादृश्य भविष्यतीत्यारेकायामाह ॥ १४ निरशत्वात् । अशाभावे कि केन सादृश्य स्यात् ? ॥ १५ अत्वादिना च ॥ १६ अकारादीना च ॥ १७ अनेकसमवेतत्वात्सामान्यस्य ॥ १८ स एवाय गकार इति ॥ १९ गत्वादि ॥ २० विशेष ॥ २१ अभेदरूपेषु ॥ २२ गकार एक एवेति गभेदाभावात् ॥ २३ सामान्यरूपाणाम् ॥ २४ अन्यथानुपपत्तिरसिद्धेत्युक्ते आह ॥ २५ गोपिण्डस्य ॥ २६ मीमासक ॥ २७ सङ्केतकाले गृहीतस्य शब्दस्य व्यवहारकाले आगमनाभावात् सङ्केतव्यवहारशब्दयोर्भेदो यत ॥ २८ सामान्यस्य नित्यत्वात् ॥२९ विपक्षेऽनित्यत्वे शब्दस्यार्थप्रतिपादकत्व न घटते यत ॥३० वाचकसामर्थ्यमित्यर्थ ३१ आदिना सपक्षे सत्त्वम् ॥३२ अर्थापत्तो पक्षधर्मादीना प्रयोजन नास्ति यत ॥३३ अर्थापत्तिरेवास्ता तथाप्यन्यथासिद्धत्वमन्यथवैसिद्धत्व वा स्यादित्युक्ते आह ॥ ३४ उभयात्मके ॥ ३५ केवलेऽनित्ये ॥ ३६ नित्यानित्यात्मके केवलेऽनित्ये शब्दे वाचकसामर्थ्यस्य वर्तमानात् ॥ ३७ न चेत्तमिति भाव ॥ ३८ फलवाश्चासौ प्रवृत्तिनिवृत्तिलक्षणव्यवहारश्च तस्याङ्गभूत कारणभूत च तदर्थप्रत्ययश्च । तस्याङ्गता कारणता शब्दस्य ॥ ३९ अन्यथा ॥ ४० हेतुना ॥ ४१ अर्थप्रतीतिलक्षणफलराहित्ये ॥ ४२ अर्थप्रतिपत्ति ॥ ४३ उक्तप्रकारेण सफलत्वमायात शब्दस्येति फल भवतु । शब्दे को दोष इत्युक्ते आह परीक्षेत्यादि ॥ ४४ फलवत्त्व सिद्ध शब्दस्य येन कारणेन ॥ ४५ नित्यफललक्षण ॥ ४६ द्वयोर्धर्मयोर्मध्ये ॥ ४७ नित्यधर्मस्य फलम् ॥ ४८ नित्यत्व वाचक भविष्यति प्रधानफलस्येत्युक्ते आह न हीत्यादि ॥ ४९ कारण ॥ ५० भावेन ॥ ५१ लक्षणत ॥ ५२ अर्थप्रतीतिलक्षणमुख्यफलस्य ॥ ५३ नित्यपक्षवनाशिपक्षेपि प्रधानफलबाधन नास्तीत्युक्ते आह ॥ ५४ नियमेन ॥ ५५ अज्ञातार्थ ॥ ५६ शब्दस्य ॥ ५७ गृहीतसम्बन्ध एव प्रकाशकोस्त्वित्याह ॥ ५८ अवश्यम् ॥

तसम्बन्धे न चान्यो वाचको भवेत् ।७। गोशब्दे[1] ज्ञातसम्बन्धे नाऽश्वशब्दो हि वाचकः। इति। अथ विभिन्नदेशादितयो[2]पलभ्यमानत्वाद्गकारादीनां नानात्वाऽनित्यत्वे साध्येते[3]। तन्न—अनेकप्रतिपत्तृभिर्विभिन्नदेशादितयोपलभ्यमानेनादित्येनानेकान्तात्। विभिन्नदेशादितयोपलम्भश्चैषां व्यञ्जकध्वन्यधीनो, न स्वरूपभेदनिबन्धनः। तदुक्तं "नित्यत्वं व्यापकत्वं च सर्ववर्णेषु संस्थितम्। प्रत्यभिज्ञानतो मानाद्[4]बाधसङ्ग[5]मवर्जितात् ।१। यो यो[6] गृहीतः सर्वस्मिन्देशे शब्दो हि विद्यते। न चास्या[7]ऽवयवाः सन्ति येन वर्त्तेत भागशः ।२। शब्दो वर्त्तेत इत्येव तत्र सर्वात्मकश्च सः। व्यञ्जक[9]ध्वन्यऽधीनत्वात्तद्देशे स च गृह्यते ।३। नं[10] च ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम्। तेनाऽविच्छिन्नरूपेण नासौ सर्वत्र गृह्यते ।४। ध्वनीनां भिन्नदेशत्वं[11] श्रुति[12]स्तत्रानुरुध्यते। अपूरितान्तरालत्वाद्विच्छेदश्चावसीयते ।५। तेषां[13] चाल्पकदेशत्वाच्छब्देऽप्यऽविभुतामतिः[14]। गतिमद्वेगवत्त्वाभ्यां[15] ते चायान्ति यतो यतः ।६। श्रोता ततस्ततः शब्दमायान्तमिव मन्यते"। अथैकेन भिन्नदेशोपलम्भाद् घटादिवन्नानात्वं, न—आदित्येनानेकान्तात्। दृश्यते ह्येकेनादित्यो भिन्नदेशो, न चैतावतासौ नाना। अथ युगपदेकेन भिन्नदेशोपलब्धेरिति विशेष्योच्यते। तथाप्यनेनैवानेकान्तः। जलपात्रेषु हि भिन्नदेशेषु सवितैकोप्येकेन युगपद्भिन्नदेशो गृह्यते। उक्तं च "सूर्यस्य देशभिन्नत्वं न त्वेकेन न गृह्यते। न[16] नाम सर्वथा तावद्दृष्टस्या[17]नेकदेशता ।१। सविशेषणे[18] हेतुश्चेत्तथापि व्यभिचारिता। दृश्यते[19] भिन्नदेशोयमित्येकोपि हि बुध्यते ।२। जलपात्रेषु[20] चैकेन नानैकः सवितेक्ष्यते। युगपन्न[21] च भेदेस्य प्रमाणं तुल्यवेदनात्[22] ।३।" कश्चिदाह[23]। न तत्र सवितेक्ष्यते—तस्य नभसि व्यवस्थानात्। तन्निमित्तानि[24] तु तेषु प्रतिबिम्बानि प्रतीयन्ते। ततो नानेकान्तः[25]। आहैकेन निमित्तेन प्रतिपात्रं पृथक्पृथक्। भिन्नानि प्रतिबिम्बानि गृह्यन्ते युगपन्मया ।१। एतत्कुमारिलः परिहरन्नाह। "अत्र ब्रूमो—यदा यावज्जले सौर्येण तेजसा। स्फुरता चाक्षुषं तेजः प्रतिस्रोतैः[26] प्रवर्त्तितम् ।१। स्वदेशमेव[27] गृह्णाति सवितारमनेकधा। भिन्नमूर्त्तिं यथापात्रं[28] तदास्या[29]नेकता कुतः ।२। यथा[30] च प्रदीपः। ईषत्[31]सम्मिलितेऽङ्गुल्या यथा चक्षुषि दृश्यते। पृथगेकोपि[32] भिन्नत्वाच्चक्षुर्वृत्ते[33]स्तथैव[34] नः ।१।" अन्ये तु चोदयन्त्यत्र प्रति-

---

१ शब्दस्य कालान्तरस्थितिपक्षे ॥ २ आदिना काल ॥ ३ गादयो धर्मिणो नाना अनित्याश्च भवन्ति विभिन्नदेशकालत्वादित्यनुमानेन ॥ ४ प्रमाणात् ॥ ५ सङ्गम =सम्बन्ध ॥ ६ प्रत्यभिज्ञानाच्छब्दस्य व्यापकत्वं कथमित्युक्ते आह ॥ ७ अवयवसद्भावात् खण्डशो वर्त्तते इत्युक्ते आह ॥ ८ भागशो न वर्त्तते तर्हि कथं वर्त्तते इत्युक्ते आह ॥ ९ सर्वत्र विद्यते चेत्तर्हि सर्वत्रैवोपलम्भः स्यादित्युक्ते आह ॥ १० ध्वनयोऽपि सकलदेशं कथं न व्याप्नुवन्तीत्युक्ते आह ॥ ११ नानादेशेषूपलभ्यमानत्वम् ॥ १२ शब्दश्रवणम् ॥ १३ शब्दव्यञ्जकवायूनाम् ॥ १४ अत एव श्रवणव्यभिचारो दृश्यते ॥ १५ गति =क्रियारूपा । वेग =संस्कारविशेष ॥ १६ भिन्नदेशश्चेदुपलभ्यते तदा भिन्नदेशो भविष्यतीत्युक्ते आह नेति ॥ १७ सूर्यस्य ॥ १८ युगपदिति ॥ १९ कथं व्यभिचारो दृश्यते इत्यारेकायामाह ॥ २० एकः सूर्यो भिन्नदेशतया कथं बुध्यते इत्युक्ते आह ॥ २१ एवं चेत्तर्हि सूर्यो नानारूपो भविष्यतीत्युक्ते आह ॥ २२ आदित्य आदित्य इति समानरूपतावेदनाद्धेतोरेक एवायमित्यनुमीयते। न चास्य भेदे प्रमाणं किंचिदित्यर्थः ॥ २३ जैनादि ॥ २४ स सूर्यो निमित्तं येषां तानि ॥ २५ सूर्येण ॥ २६ नानात्वेन ॥ २७ क्रियाविशेषणमेतत् ॥ २८ पात्राण्यनतिक्रम्य ॥ २९ यदा दृश्यते ॥ ३० अग्रेतनश्लोकान्तर्यथाशब्द केन सह सम्बन्धनीय इत्यन्वयार्थो 'यथा च प्रदीप' शब्द उक्तः ॥ ३१ एक एव सविता नाना कथं दृश्यते इत्याह ईषदिति ॥ ३२ नानारूपेण ॥ ३३ चक्षुः प्रवृत्तिर्नानारूपास्ति यत इत्यर्थः ॥ ३४ न =अस्माकमपि, तथैव=प्रदीपप्रकारेणैव। एकोप्यादित्यो नानात्वेन दृश्यते चक्षुषः प्रवृत्तेर्भिन्नत्वात् ॥

बिम्बोदयैषिणः । स एव चेत्प्रतीयेत कस्मान्नोपरि दृश्यते ।२। कूपादिषु कुतोऽधस्तात्प्रतिबिम्बाद्विनेक्षणम् । प्राङ्मुखो दर्पणं पश्यन् स्याच्च प्रत्यङ्मुखः कथम् ।३। तत्रैव बोधयेदर्थं बहिर्यातं यदीन्द्रियम् । तत एतद्भवेदेवं शरीरे तत्तु बोधकम् ।४। अत्राह । अप्सूर्यदर्शिनां नित्यं द्वेधा चक्षुः प्रवर्त्तते । एकमूर्द्ध्वमधस्ताच्च तत्रोर्द्ध्वांशप्रकाशितम् ।१। अधिष्ठानानृजुत्वाच्च नात्मा सूर्यं प्रपद्यते । पारम्पर्यार्पितं स तमर्वाग्वृत्या तु बुध्यते ।२। ऊर्द्ध्ववृत्ति तदेकत्वादर्वागिव च मन्यते । अधस्तादेव तेनार्कः सान्तरालः प्रतीयते ।३। एवं प्राग्गतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम् । बुध्यमानो मुखं भ्रान्तेः प्रत्यगित्यवगच्छति ।४। अनेकदेशवृत्तौ च सत्यपि प्रतिबिम्बके । समानबुद्धिगम्यत्वान्नानात्वं नैव विद्यते ।५। किञ्च । देशभेदेन भिन्नत्वं मतं तच्चानुमानिकम् । प्रत्यक्षस्तु स एवेति प्रत्ययस्तेन बाधकः ।६। पर्यायेण यथा चैको भिन्नदेशान् व्रजन्नपि । देवदत्तो न भिद्येत तथा शब्दो न भिद्यते ।७। ज्ञातैकत्वो यथा चासौ दृश्यमानः पुनः पुनः । न भिन्नः कालभेदेन तथा शब्दो न देशतः ।८। पर्यायादविरोधश्चेद्व्यापित्वादपि दृश्यताम् । दृष्टसिद्धो हि यो धर्मः सर्वथा सोऽभ्युपेयताम् । इति ।

अत्र प्रतिविधीयते । नित्यः शब्दोऽर्थप्रतिपादकत्वान्यथानुपपत्तेरित्ययुक्तं-धूमादिवदनित्यस्यापि शब्दस्यावगतसम्बन्धस्य सादृश्यतोऽर्थप्रतिपादकत्वसम्भवात् । न खलु य एव सङ्केतकाले दृष्टस्तेनैवार्थप्रतीतिः कर्त्तव्येति नियमोस्ति-महानसदृष्टधूमसदृशादपि पर्वतधूमादग्निप्रतिपत्त्युपलम्भात् । न हि महानसप्रदेशोपलब्धैव धूमव्यक्तिरन्यत्राप्यग्निं गमयति सदृशपरिणामाक्रान्तव्यक्त्यन्तरस्य तद्गमकत्वप्रतीतेः । अन्यथा सर्वस्य सर्वगतत्वानुषङ्गः । सदृशपरिणामप्रधानतया च साध्यसाधनयोः सम्बन्धावधारणम् । न ह्यनाश्रितसमानपरिणतीनां निखिलधूमादिव्यक्तीनां स्वसाध्येनाऽर्वाग्दृशा सम्बन्धः शक्यो ग्रहीतुमसाधारणरूपेण तस्य तासामप्रतिभासनात् । अथ धूमसामान्यमेवाग्निप्रतिपत्तिकारणं, न-व्यक्तिसादृश्यव्यतिरेकेण तदसम्भवात् । न च धूमत्वान्मया प्रतिपन्नोग्निरिति प्रतिपत्तिः, किं तु धूमात् । सा च सामान्यविशिष्टव्यक्तिमात्रयोः सम्बन्धग्रहणे घटते । न तु धूमाग्निसामान्ययोरवश्यं चानुमेयानुमापकयोः सामान्यविशिष्टविशेषरूपतोपगन्तव्या । अन्यथा सामान्यमात्रस्य दाहाद्यर्थक्रियासाधकत्वाऽभावात् । ज्ञानाद्यर्थक्रियायाश्च तत्साध्यायास्तदैवोत्पत्तेर्दाहाद्यर्थिनामनुमेयार्थप्रतिभासात् । प्रवृत्त्यभावतोऽस्याप्रामाण्यप्रसङ्गः । सामान्यविशिष्टविशेषरूपता चात्र वाच्यवाचकयोरपि समाना न्यायस्य समानत्वात् । यदप्युक्तं 'सदृशत्वात्प्र-

१ कूपादिषु कुत इत्यस्य समाधानमिदमग्रेतनम् ॥ २ गच्छला ॥ ३ समुखम् ॥ ४ सूर्यस्योपलम्भद्वारेण ॥ ५ इत्यस्यापि प्रतिबिम्बके सूर्यस्योपलम्भद्वारेणानेकदेशवृत्तित्व ततश्चानैकान्तिकत्व प्रकृतसाधनस्यानेनेति चेन्न तस्यापि नानात्वसभवात् । इति वदन्त प्रति ॥ ६ एवमनेकान्तदूषणमुद्राव्य कालात्ययापदिष्टत्वमुद्भावयति । भिन्नदेशस्यैकत्व नास्तीति प्रत्यक्ष कथमनुमानबाधकमित्युक्ते चाह ॥ ७ गकारादीनाम् ॥ ८ कारणेन ॥ ९ कालक्रमेण ॥ १० व्यवहारकाले ॥ ११ समानत्वमित्यर्थं ॥ १२ अग्निधूमयो शब्दार्थयोश्च ॥ १३ शब्दप्रकरणे-शब्दव्यक्तिर्भवति पक्षे शब्दत्वादिति वक्तव्यम् ॥ १४ असर्वज्ञेन ॥ १५ शब्दपक्षे शब्दसामान्यमेवार्थप्रतिपत्तिकारणमिति वाच्यम् ॥ १६ धूमसामान्यात् ॥ १७ सादृश्यपरिणामविशिष्टा व्यक्तिरेव मात्रा स्वरूप ययो साध्यसाधनयोस्तयो ॥ १८ साध्यसाधनयो ॥ १९ शब्दस्योच्चारणसमये, अग्न्याद्यनुमानसमये च ॥ २० विशेषे पर्वतादौ ॥ २१ सामान्यस्य ॥ २२ नहीत्यादिपूर्वोक्तस्य ॥ २३ सकेतकालोपलब्धशब्देन व्यवहारकालोपलब्धशब्दस्य ॥

तीतिश्चेत्तद्द्वारेणाप्यवाचकः । कस्य[1] चैकस्य सादृश्यात्कल्प्यतां वाचकोऽपरः[2] ।१। अदृष्टसङ्गतत्वेन[3] सर्वेषां[4] तुल्यता यदा । अर्थवान्[5]पूर्वदृष्टश्चेत्तस्य तावान्क्षणः कुतः ।३। द्विस्तावानुपलब्धो हि अर्थवान्सम्प्रतीयते' इत्यादि, तदप्यसारमनुमानवार्त्तोच्छेदप्रसङ्गात् । धूमादिलिङ्गात्पूर्वोपलब्धधूमादिसादृश्यतोऽग्न्यादिसाध्य- प्रतिपत्तावप्यस्य सर्वस्य समानत्वात् । एतेनैवमपि प्रत्युक्तं "शब्दं तावदनुच्चार्य सम्बन्धकरणं कुतः । न चोच्चारितनष्टस्य सम्बन्धेन प्रयोजनम्" इत्यादि । यतोऽदृष्टे धूमे सम्बन्धो न शक्यते कर्त्तुम् । नापि दृष्टनष्टस्यास्य, सम्बन्धेन प्रयोजनं किञ्चित् । यच्च सादृश्ये दूषणमुक्तं "तथा भिन्नमभिन्नं वा सादृश्यं व्यक्तितो भवेत् । एवमेकमनेकं वा नित्यं वानित्यमेव वा ।१। भिन्ने चैकत्वनित्यत्वे जातिरेव प्रकल्पिता । व्यक्त्यऽनन्यदथैकं च सादृश्यं नित्यमिष्यते ।२। व्यक्ति- नित्यत्वमापन्नं तथा सत्यसंदीहितम्" इत्यादि, तदप्ययुक्तं–स्वहेतोरेकस्य हि यादृशः परिणामस्तादृश एवापरस्य सादृश्यं, न तु स एव । स च व्यक्ति- भ्यो भिन्नोऽभिन्नश्च–तथा प्रतीतेः । न च जातिस्तथाभूता, नित्यव्यापित्वेनाभ्युपगमात् । तथाभूतायाश्चास्याः सामान्यनिराकरणे निराकरिष्यमाणत्वात् । ततः प्रवृत्तिमिच्छता लिङ्गाच्छब्दाद्वा न सामान्यमात्रस्य प्रतिपत्तिरभ्युपगन्तव्या । ननु सामान्यस्य विशेषमन्तरेणानुपपत्तितो लक्षितलक्षणया विशेषप्रतिपत्तेर्न प्रवृ- त्त्याद्यभावानुषङ्ग इत्यप्रातीतिकं क्रमप्रतीतेरभावात् । न हि वाचकोद्भूतवाच्यप्रतिभासे प्राक् सामान्यावभासः पश्चाद्विशेषप्रतिभास इत्यनुभवोस्ति । किञ्च सा- मान्याद्विशेषः प्रतिनियतेन रूपेण लक्ष्येत साधारणेन वा? न तावदाद्यः पक्षः प्रतिनियतरूपतयाऽस्याऽप्रतीतेः । न हि शब्दोच्चारणवेलायां जातिपरिमितो विशेषोऽसाधारणरूपतयाऽनुभूयते प्रत्यक्षप्रतिभासाऽविशेषप्रसङ्गात् । प्रतिनियतरूपेण जातेरविनाभावाभावाच्च कुतस्तया तस्य लक्षणम्? नापि द्वितीयः–साधा- रणरूपतया प्रतिपन्नस्यापि विशेषस्यार्थक्रियाकारित्वाऽसामर्थ्येन प्रवृत्त्यहेतुत्वात् प्रतिनियतस्यैव रूपस्य तत्र सामर्थ्योपलब्धेः । पुनरपि साधारणरूपतातो विशे- षप्रतिपत्तावनवस्था स्यात् । साधारणरूपतया चातो विशेषप्रतिपत्तौ सामान्यात्सामान्यप्रतिपत्तौ सामान्यप्रतिपत्तिरेव स्यान्न विशेषप्रतिपत्तिः–साधारणरूपतायाः सामान्यस्वभावत्वात् । किं च यदि नाम शब्दाज्जातिः प्रतिपन्ना, व्यक्तेः किमायातम्? येनासौ तां गमयति । तयोः संबन्धाच्चेत्सम्बन्धस्तयोस्तदा प्रतीयते पूर्वं वा? न तावत्तदा–व्यक्तेरनधिगतेः 'जातिरेव हि केवला तदा प्रतिभासते' इत्यभ्युपगमात् । अन्यथा किं लक्षितलक्षणया? न च व्यक्त्यनधिगमे तत्सम्ब-

१ तदेति शेष । कथमवाचक इत्युक्ते कस्येत्याह । कस्य=सकेतकालोपलब्धस्य ॥ २ व्यवहारकालोपलब्ध शब्द ॥ ३ अदृष्टसम्बन्धेन ॥ ४ शब्दानाम् ॥ ५ वाच्यवाचकसम्बन्धवान् शब्द ॥ ६ द्विवारम् ॥ ७ वाच्येन सह ॥ ८ साध्येनाग्निना सह ॥ ९ तथाशब्द सम्बन्धापेक्षया दूषणान्तरमुच्यते ॥ १० अनेक सादृश्य चेत्तर्कि नित्यमनित्य वा? अनित्य चेन्न सम्बन्धप्रतिपत्ति । नित्य चेत्तदैकेनैव सादृश्येनार्थप्रतिपत्तेरनेकनित्यसादृश्य- परिकल्पन व्यर्थम् ॥ ११ परोक्तौ परिहारमाह ॥ १२ असाभिजेने ॥ १३ धूमादे ॥ १४ धूमादे ॥ १५ सादृश्यपरिणाम ॥ १६ भिन्नाभिन्नत्वप्रकारेण ॥ १७ भिन्नाभिन्नरूपा ॥ १८ परेण त्वया ॥ १९ सा- मान्यस्यानुमेयरूपत्वे प्रवृत्तिर्न घटते यत ॥ २० सामान्यस्य विशेषनिष्ठत्वात् ॥ २१ सामान्यजनितप्रतिपत्त्या ॥ २२ सामान्यस्य नित्यसर्वगतत्वात् ॥ २३ पूर्वोक्तस्य समर्थनमेतत् ॥ २४ अन्ययेति शेष ॥ २५ ज्ञा- नम् ॥ २६ व्यक्तिम् ॥ २७ शब्दाज्जातिप्रतिपत्तिकाले ॥ २८ शब्दोच्चारणसमये व्यक्तिरपि प्रतिभासते चेत्तर्हि ॥ २९ लक्षितेन ज्ञातेन सामान्येन लक्षणा=विशेषप्रतिपत्तिस्तया ॥

न्धाधिगमो द्विष्ठत्वात्तस्य । अथ पूर्वमसौ प्रतीतस्तथापि तदैवासौ भवतु । न ह्येकदा तत्सम्बन्धेऽन्यदाप्यसौ भवत्यतिप्रसङ्गात् । न च जातेर्विशेषनिष्ठतैव स्वरूपं व्यक्त्यन्तराले तत्स्वरूपाऽसत्त्वप्रसङ्गात् । तत्कथं व्यक्त्यऽविनाभावोऽस्याः? किञ्च सर्वदा जातिर्व्यक्तिनिष्ठेति प्रत्यक्षेण प्रतीयतेऽनुमानेन वा? प्रत्यक्षेण चेत्किं युगपत्क्रमेण वा? तत्राद्यपक्षोऽयुक्तः सर्वव्यक्तीनां युगपदप्रतिभासनात् । न च तासामप्रतिभासे तथा सम्बन्धावसायोऽतिप्रसङ्गात् । नापि द्वितीयः–क्रमेण निरवधेः सकलव्यक्तिपरम्परायाः परिच्छेत्तुमशक्तेः । कादाचित्के तु जातेर्व्यक्तिनिष्ठताधिगमे सर्वत्र सर्वदा न तन्निष्ठताधिगमः स्यात् । तन्न प्रत्यक्षेण जातेस्तन्निष्ठताधिगमः । नाप्यनुमानेनास्याऽध्यक्षपूर्वकत्वेनाभ्युपगमात् । तस्य चात्राऽप्रवृत्तावनुमानस्याप्यप्रवृत्तिः । तन्न लक्षितलक्षणया विशेषप्रतिपत्तिः सम्भवति । इति वाच्यवाचकयोः सामान्यविशिष्टविशेषरूपतोपगन्तव्या धूमादिवत् । ननु 'धूमादेः सामान्यसद्भावात्तद्विशिष्टस्योक्तन्यायेन गमकत्वमस्तु । शब्दे तु तस्याभावात्कथं तद्विशिष्टस्य गमकत्वम्? तदभावश्च वर्णान्तरग्रहणे वर्णान्तरानुसन्धानाभावात् । यत्र हि सामान्यमस्ति तत्रैकग्रहणेऽपरस्यानुसन्धानं दृष्टं यथा शावलेयग्रहणे बाहुलेयस्य । वर्णान्तरे च गादौ गृह्यमाणे न कादीनामनुसन्धानम् ।' तदसाम्प्रतम् । गादौ हि वर्णान्तरे गृह्यमाणे यद्यऽयमपि वर्ण इत्यनुसन्धानाभावः । सोऽसिद्धस्तथानुभूतानुसन्धानस्यानुभूयमानत्वेनाऽभावासिद्धेः । अथ गादौ वर्णान्तरे गृह्यमाणेऽयमपि कादिरित्यनुसन्धानाभावान्न सामान्यसद्भावस्तर्हि शावलेयादावपि व्यक्त्यन्तरे गृह्यमाणेऽयमपि बाहुलेय इत्यनुसन्धानाभावाद्गोत्वस्याप्यभावः । अथ गौर्गौरित्यनुगताकारप्रत्ययसद्भावान्न गोत्वाऽसत्त्वं तदन्यत्रापि समानम् । तत्रापि हि वर्णो वर्ण इत्यनुगताकारप्रत्ययोस्तु । तत्कथं वर्णेषु वर्णत्वस्य गादिषु गत्वादेः शब्दे शब्दत्वस्याभावः? निमित्ताऽविशेषात् । तथा हि । समानासमानरूपासु व्यक्तिषु कचित्समाना इति प्रत्ययोऽन्वेत्यन्यत्र व्यावर्त्तते । यत्र च प्रत्ययानुवृत्तिस्तत्र सामान्यव्यवस्था, नान्यत्र । सा च प्रत्ययानुवृत्तिर्गादिष्वपि समानेति कथं न तत्र सामान्यव्यवस्था? तथाप्यत्र सामान्यानभ्युपगमे शावलेयादावपि सोस्तु । न हि तत्रापि तथाभूतप्रत्ययानुवृत्तिमन्तरेण सामान्याभ्युपगमेऽन्यन्निमित्तमुत्पश्यामः । यदि चात्राऽनुगताऽबाधिताऽक्षजप्रत्ययविषयत्वे सत्यपि गत्वादेरभावस्तर्हि गादेरपि व्यावृत्तप्रत्ययविषयस्याभावः स्यात् । तथा च कस्य दर्शनस्य परार्थत्वान्नित्यत्वं साध्येत? यच्चोक्तं सादृश्येन ततोऽर्थाप्रतिपत्तेरिति, तत्सदृशपरिणामलक्षणसामान्यविशिष्टव्यक्तेरर्थप्रतिपादकत्वसमर्थनात्प्रत्युक्तम् । यदप्यभिहितं 'सादृश्यादर्थप्रतीतौ भ्रान्तः शाब्दः प्रत्ययः स्यात्' तद्धूमादेरग्न्यादिप्रतिपत्तौ समानम् । यदप्युक्तं 'गत्वादीनां

१ सम्बन्धस्य ॥ २ घटपटयोरेकदा सम्बन्धे सर्वदा सम्बन्धप्रसङ्गात् ॥ ३ सम्बन्धो नास्ति यत ॥ ४ कदाचिद्वेत्यप्यत्र द्रष्टव्यम् ॥ ५ पिशाचाप्रतिभासे पिशाचेन कूटस्य सम्बन्धप्रत्यक्षप्रसङ्गात् ॥ ६ विशेषस्य ॥ ७ अर्थज्ञापकत्वम् ॥ ८ अनुसधान=प्रत्यभिज्ञानम् ॥ ९ व्यक्तिषु ॥ १० गत्वाभावात् कादिषु ॥ ११ अनुसंधानाभाव ॥ १२ गत्वलक्षणं सामान्यं नास्ति तथापि वर्णत्वलक्षणं सदृशसामान्यं कादिष्वस्त्येवेति जैनाभिप्राय ॥ १३ अभावे सति ॥ १४ गादे ॥ १५ उच्चारणस्य ॥ १६ हेतो ॥

वाचकत्वं गादिव्यक्तीनां वा' इत्यादि, तत्सामान्यविशिष्टव्यक्तेर्वाचकत्वसमर्थनादेव प्रत्युक्तम् । यच्चोक्तं 'यो यो गृहीतः' इत्यादि, तदप्युक्तिमात्रं पक्षस्यानुमानबाधितत्वात् । तथा हि । अनेको गोशब्द एकैनैकदा भिन्नदेशस्वभावतयोपलभ्यमानत्वाद् घटादिवत् । न चानेकप्रतिपत्तृभिर्भिन्नदेशतयोपलभ्यमानेनादित्यादिना, कालभेदेन भिन्नदेशादितयोपलभ्यमानेन देवदत्तेन वा व्यभिचारः–एकैनैकदेति विशेषणद्वयोपादानात् । एकैनैकदा दर्शनस्पर्शनाभ्यां भिन्नस्वभावतयोपलभ्यमानेन घटादिना वा भिन्नदेशतयेति विशेषणात् । जलपात्रसङ्क्रान्तादित्यादिप्रतिबिम्बैस्तद्व्यभिचारस्तेषामग्रेऽनेकत्वप्रसाधनात् । तथाप्यत्र सर्वगतत्वादिधर्मसम्भवे घटादावपि सोऽस्तु–'न चास्याऽवयवाः सन्ति येन वर्त्तेत भागशः । घटो वर्त्तेत इत्येव तत्र सर्वात्मकश्च सः' इत्यादेरत्राप्यभिधातुं शक्यत्वात् । यथा च– क्वचिद्रक्तः क्वचित्पीतः क्वचित्कृष्णश्च गृह्यते । प्रतिदेशं घटस्तेन विभिन्नो मम युक्तिमान् ॥१॥ तथा–उदात्तः कुत्रचिच्छब्दोऽनुदात्तश्च तथा क्वचित् । अकारो मिश्रितोऽन्यत्र विभिन्नः स्याद् घटादिवत् ॥१॥ ननु 'व्यञ्जकध्वनिधर्मा एवोदात्तादयो नाऽकारादिधर्माः । ते तु तत्रारोपात्तद्धर्मा इवावभासन्ते जपाकुसुमरक्ततेव स्फटिकादाविति । उक्तं च । बुद्धितीव्रत्वमन्दत्वे महत्त्वाल्पत्वकल्पना । सा च पट्वी भवत्येव महातेजःप्रकाशिते ॥१॥ मन्दप्रकाशिते मन्दा घटादावपि सर्वदा । एवं दीर्घादयः सर्वे ध्वनिधर्मा इति स्थितम् ॥२॥' तदप्यसारं–यतो यद्युदात्तादिधर्मरहितोऽकारादिस्तत्सहितश्च ध्वनिः रक्तेतरस्वभावजपाकुसुमस्फटिकवत् क्वचिदुपलब्धः स्यात् तदा स्यादेतदऽन्यधर्मस्तदारोपात्तद्धर्मतयेवावभातीति । न चासौ स्वप्नेऽपि तथोपलभ्यते । शब्दधर्मतया चैते प्रतीयमाना यद्यन्यस्येष्यन्तेऽन्यत्र कः समाश्वासहेतुः ? बाधकाभावश्चेत्सोऽत्रापि समानः । विपरीतदर्शनं हि बाधकम् । यथा द्विचन्द्रदर्शनस्यैकचन्द्रदर्शनम् । न चात्र तदस्ति उदात्तादिधर्मात्मकस्यैवाकारादेः सर्वदा प्रतीतेः । तथापि तत्कल्पने रक्तादिधर्मरहितस्य घटादेर्दर्शनं तथैव कल्प्यताम् । तथाविधस्यानुपलम्भादसत्त्वं शब्देऽपि समानम् । किञ्चेदं बुद्धेस्तीव्रत्वं नाम ? किं महत्त्वरहितस्यार्थस्य महत्त्वेनोपलम्भो, यथाऽवस्थितस्याऽत्यन्तस्पष्टतया वा ? प्रथमे विकल्पे भ्रान्तताऽस्याः स्यात् । सा च पट्वी भवत्येव महातेजःप्रकाशिते घटादौ सर्वदेति च निदर्शनमयुक्तम् । न हि महातेजःसामर्थ्यादल्पोऽपि घटो महानित्यवभासते, किन्त्वत्यन्तस्पष्टतया । द्वितीयविकल्पे तु महत्त्वादिधर्मरहितस्यास्याऽत्यन्तस्पष्टतया ग्रहणं स्यात् । तथा च न व्यञ्जकध्वनिधर्मानुविधायित्वं स्यात् । एतेन बुद्धिमन्दत्वेऽल्पता निरस्ता । न खलु मन्दतेजसः प्रकाशिने घटादौ महति बुद्धिमन्दत्वेनाल्पत्वप्रतीतिरस्ति । ततो महाताल्वादिव्यापारे महत्त्वादिधर्मार्पितोऽल्पे चाल्पत्वादिधर्मार्पितः शब्द एवोत्पद्यते इत्यभ्युपगन्तव्यम् । यदि च ताल्वादयो ध्वनयो वास्य व्यञ्जकास्तर्हि तद्व्यापारे तद्धर्मार्पितस्यास्य नियमेनोपलब्धिर्न स्यात् । कारकव्यापारो ह्येष स्वसन्निधाने नियमेन कार्यसन्निधापनं नाम. न व्यञ्जकव्यापारः । न खलु यत्र यत्र व्यञ्जकः प्रदीपादिस्तत्र तत्र व्यङ्ग्यघटादिसन्निधापनमुपलब्धिर्वा नियमतोऽस्ति—अन्यथा तयोरविशेषप्रसङ्गात् । चक्रादिव्यापारवैयर्थ्यानुषङ्गाच्च । अथ घटादेरसर्वगतत्वान्न तद्व्यञ्जनसन्निधाने सर्वत्रोपलम्भः, शब्दस्य तु सम्भवति,

१ न चेति पूर्वो स्वन्योत्र नेत्र ।

विपर्ययादित्यप्यनिरूपिताभिधानं–तस्य सर्वगतत्वाऽसिद्धेः । तथा हि। न सर्वगतः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वाद् घटादिवत् । ततो घटादिभ्यः शब्दस्य विशेषाभावादुभयोः कार्यत्वं व्यङ्ग्यत्वं चाभ्युपगन्तव्यम् । किञ्चैते ध्वनयः श्रोत्रग्राह्या न वा? श्रोत्रग्राह्यत्वेऽत एव शब्दाः तल्लक्षणत्वात्तेषाम्। तत्र च तात्त्विका एवोदात्तादयो धर्माः। तथा चापरशब्दकल्पनानर्थक्यम्। अथ न श्रोत्रग्राह्याः, कथं तर्हि तद्धर्मा उदात्तादयस्तद्ग्राह्याः? न हि रूपादीनां धर्मा भासुरत्वादयो रूपादेरग्रहणे श्रोत्रेण गृह्यन्ते । अथ न भावतस्तेन ते गृह्यन्ते, किन्त्वारोपात् । ननु चाऽगृहीतस्यारोपोपि कथम्? अन्यथा भासुरत्वादेरपि तत्रारोपः स्यात् । अथ व्यञ्जकत्वाद् ध्वनीनां तद्धर्मा एव तत्रारोप्यन्ते, न रूपादीनां–विपर्ययात् । ननु ज्ञानजनकत्वान्नापरं व्यञ्जकत्वम्। तथा सत्यल्पेन चक्षुपा व्यज्यमानः पर्वतो महानपि तद्धर्मारोपात्तत्परिमाणतया प्रतीयेत सर्षपश्च बृहत्परिमाणतया । न चैवम् । तन्नैते ध्वनिधर्मा उदात्तादयोऽपि तु शब्दधर्माः। तथाप्यस्यैकव्यक्तिकत्वे घटादेरपि तदस्तु विशेषाभावात् । ननु चास्यैकत्वे नभोवत्कारणानायत्तत्वान्न तदुत्कर्षापकर्षाभ्यामुत्कर्षापकर्षौ स्याताम्। तच्छब्देपि समानम् । तस्यापि हि प्रत्येकमेकव्यक्तिकत्वे ताल्वोत्कर्षाऽपकर्षाभ्यामुत्कर्षापकर्षयोगो न स्यात् । किन्तु सर्वत्र तुल्यप्रतीतिविषयता स्यात्। ननु चासिद्धं ताल्वादेर्महत्त्वादेः शब्दस्य महत्त्वादिकम् । तथा हि । कारणानुविधायित्वं यच्चाल्पत्वमहत्त्वयोः। तदसिद्धं न वर्णो हि वर्द्धते न पदं क्वचित्। वर्णान्तरजनौ तावत्तत्पदत्वं विहन्यते । अपदं हि भवेदेतद्यदि वा स्यात्पदान्तरम् ।१। वर्णोऽनवयवत्वात्तु वृद्धिह्रासौ न गच्छति । व्योमादिवदतोऽसिद्धा वृद्धिरस्य स्वभावतः ।१। अत्रोच्यते 'किं कारणानुविधायित्वमल्पत्वमहत्त्वयोः स्वभावसिद्धत्वादसिद्धमाहोस्वित्कारणाल्पत्वमहत्त्वाभ्यां शब्दस्याल्पत्वमहत्त्वे एव न विद्येते? स्वभावतस्तद्रहितत्वात्" इति। तत्राद्यपक्षे स्वभावे एव वास्याऽल्पत्वमहत्त्वे विद्येते, न तु ते तस्य कारणाल्पत्वमहत्त्वाभ्यां कृते इत्यायातम्। तथा च घटादेरपि तथा तत्सत्त्वप्रसङ्गः । निर्हेतुकत्वेन सर्वदा भावानुपङ्गश्चोभयत्र समानः । द्वितीयस्तु पक्षोऽसङ्गतस्तयोस्तत्र प्रतीयमानत्वेन स्वभावतस्तद्रहितत्वासिद्धेः । न खलु महति ताल्वादौ महानऽल्पे चाल्पः शब्दो न प्रतीयते सर्वत्र तयोरनाश्वासप्रसङ्गात् । यदप्युक्तं 'न हि वर्णो वर्द्धते' इत्यादि। तत्र यदि तावदल्पताल्वादिजनितो वर्णादिरल्पो महतस्ताल्वादिव्यापारान्न वर्द्धते इत्युच्यते तदा सिद्धसाधनम् । न हि घटोऽल्पान्मृत्पिण्डात्तथाविधो जातोऽन्यत स एव वर्द्धते अघटत्वप्रसङ्गाद्। घटान्तरमेव वा स्यात् । अथान्योपि वृद्धिमान्न जायते तन्न तथाविधस्य दृष्टत्वात् । दृष्टस्य चाऽपह्नवाऽयोगात् । एतेनैतन्निरस्तम् 'अथ ताद्रूप्यविज्ञानं हेतुरित्यभिधीयते । तथापि व्यभिचारित्वं शब्दत्वेपि हि तन्मतिः ।१। व्यक्त्यल्पत्वमहत्त्वे हि तद्यथानुविधीयते । तथैवानुविधातायं ध्वन्यल्पत्वमहत्त्वयोः ।२।' इति। सदृशपरिणामो हि सामान्यम् । तस्य च वर्णवदऽल्पत्वमहत्त्वसम्भवात् कथं तेनानेकान्तः? भवत्कल्पितं तु सामान्यमग्रे निषिद्धत्वात्खरविषाणप्रख्यमिति कथं तेन व्यभिचारोद्भावनम्? यदप्युच्यते 'व्यङ्ग्यानां चैतदस्तीति लोकेऽप्यैकान्तिकं न तत् । दर्पणाल्पमहत्त्वे हि दृश्यतेऽनुपतन्मु-

खम् ।१। न स्यादव्यङ्ग्यता तस्मिंस्तत्क्रियाजन्यतापि वा । न चास्योच्चारणादन्या विद्यते जनिका क्रिया ।२।' तदप्यचारु भ्रान्तेनाऽभ्रान्तस्य व्यभिचाराऽयोगात् ।
शब्दे हि महत्त्वादिप्रत्ययोऽभ्रान्तो बाधवर्जितत्वादित्युक्तम्। मुखे तु भ्रान्तो विपर्ययात्। न चान्यस्य भ्रान्तत्वेऽन्यस्यापि तत्। अन्यथा सकलशून्यतानुषङ्गः स्वप्ना-
दिप्रत्ययवत्सकलप्रत्ययानां भ्रान्ततापत्तेः। न च खड्गे प्रतिविम्बितदीर्घतया मुखमेवाऽऽभाति दर्पणे तु वर्त्तुलतया गौरनीले काचे नीलतया । किन्तु तदाकारस्तत्र
प्रतिविम्बितस्तद्धर्मानुकारी प्रतिभाति । न च शब्दस्याप्याकारो ध्वनौ ध्वनेर्वा शब्दे प्रतिविम्बितस्तद्धर्मानुकारी भवतीत्यभिधातव्यं शब्दस्याऽमूर्त्तत्वेन मूर्त्ते
ध्वनौ तत्प्रतिविम्बनाऽसम्भवात् । मूर्त्तानामेव हि मुखादीनां मूर्त्ते दर्पणादौ तत्प्रतिविम्बनं दृष्टं नाऽमूर्तानामात्मादीनाम् । न चाऽश्रोत्रग्राह्यत्वे ध्वनेः प्रति-
विम्बितोप्याकारः श्रोत्रेण ग्रहीतुं शक्योऽतिप्रसङ्गात् । तद्ग्राह्यत्वे वाऽपरशब्दकल्पना व्यर्थेत्युक्तम्। यच्चाप्युक्तं "यथा महत्यां खातायां मृदि व्योम्नि महत्त्वधीः ।
अल्पायामल्पधीरेवमत्यन्ताऽकृतके मतिः । तेनात्रैवं परोपाधिः शब्दवृद्धौ मतिर्भ्रमः। न च स्थूलत्वसूक्ष्मत्वे लक्ष्येते शब्दवर्त्तिनी" तदप्यसमीचीनं व्योम्नोऽतीन्द्रिय-
त्वेन महत्त्वादिप्रत्ययविषयत्वायोगात्। तद्योगे चाल्पया खातयाऽवष्टब्धो व्योमप्रदेशोऽल्पो महत्या च महानिति नाऽनेनाऽनेकान्तः। निरवयवत्वे हि तस्याणुवद्व्या-
पित्वासम्भवोऽत्यन्ताकृतकत्वेन च क्रमयौगपद्याभ्यामर्थक्रियाविरोध इति वक्ष्यते। तथा शब्दस्यापि सावयवत्वाभ्युपगमे 'पृथङ्न चोपलभ्यन्ते वर्णस्यावयवाः क्वचित् ।
न च वर्णेष्वनुस्यूता दृश्यन्ते तन्तुवत्पटे ।१। तेषामनुपलब्धेश्च न जाता लिङ्गतो गतिः। नागमस्तत्परश्चास्मिन्नाऽऽदृश्ये चोपमा क्वचित् ।२। न चास्यानुपपत्तिः स्याद्वर्ण-
स्यावयवैर्विना । यथान्यावयवानां हि विनाप्यवयवान्तरैः ।३। प्रत्यक्षेणावबुद्धश्च वर्णोऽवयववर्जितः । किन्न स्याद्व्योमवच्चाऽत्र लिङ्गं तद्रहिता मतिः ।४।'
इति वचो विरुध्येत । यत्पुनरुक्तं 'व्यञ्जकध्वन्यधीनत्वात्तद्देशे स च गृह्यते' इत्यादि, तत्र कुतो ध्वनयः प्रतिपन्ना येन तदधीना शब्दश्रुतिः स्यात्? प्रत्यक्षेणा-
नुमानेनार्थापत्त्या वा? प्रत्यक्षेण चेत्किं श्रोत्रेण स्पर्शनेन वा? न तावच्छ्रोत्रेण तथा प्रतीत्यभावात् । न खलु शब्दवत्तत्र ध्वनयः प्रतिभासन्ते विप्रतिपत्त्य-
भावप्रसङ्गात् । तत्र ध्वनिप्रतिभासे चापरशब्दकल्पनावैयर्थ्यमित्युक्तम् । अथ स्पार्शनप्रत्यक्षेण ते प्रतीयन्ते । स्वकरपिहितवदनो हि वदन् स्वकरसंस्पर्शनेन
तान्प्रतिपद्यते । वदतो मुखाग्रे स्थिततूलादेः प्रेरणोपलम्भादनुमानेनेति तदप्यसाम्प्रतं वायुवत्ताल्वादिव्यापारानन्तरं कफांशानामप्युपलम्भेन शब्दाभिव्यञ्जक-
त्वप्रसङ्गात् । वक्तृवक्त्रप्रदेश एवैषां प्रक्षयेण श्रोतृश्रोत्रप्रदेशे गमनाभावान्न तदित्यन्यत्रापि समानम्। न हि वायवोपि तत्र गच्छन्तः समुपलभ्यन्ते । शब्दप्रति-
पत्त्यन्यथानुपपत्त्या प्रतिपत्तिस्तूभयत्र समाना । यथा च स्तिमितभाषिणो न कफांशोपलम्भस्तथा वायूपलम्भोपि नास्ति । स्तिमितस्य कल्पनमुभयत्र समानम्।
तन्न प्रत्यक्षेणानुमानेन वा तत्प्रतिपत्तिः । अथार्थापत्त्या तेषां प्रतिपत्तिः । तथा हि । शब्दस्तावन्नित्यत्वान्नोत्पद्यते संस्कृतिरेव तु क्रियते। सा च विशिष्टा

१ शब्दस्य । अभिव्यक्ति ॥

नोपपद्येत यदि ध्वनयो न स्युः । तदुक्तं "शब्दोत्पत्तेर्निषिद्धत्वादन्यथानुपपत्तितः । विशिष्टसंस्कृतेर्जन्म ध्वनिभ्यो व्यवसीयते ।१। तद्भावभाविता चात्र श-
त्यस्तित्वावबोधिनी । श्रोत्रशक्तिवदेवेष्टा बुद्धिस्तत्र हि संहृता ।२। कुड्यादिप्रतिबन्धोपि युज्यते मातरिश्वनः । श्रोत्रादेरभिघातोपि युज्यते तीव्रवर्तिना ।३।'
इति तत्र केयं विशिष्टा संस्कृतिर्नाम? शब्दसंस्कारः श्रोत्रसंस्कार उभयसंस्कारो वा? परेण हि त्रेधा संस्कारोऽभ्युपगम्यते । स च-स्याच्छब्दस्य हि संस्कारा-
दिन्द्रियस्योभयस्य वा । स्थिरवाय्वपनीत्या च संस्कारोस्य भवन्भवेत् इत्यभिधानात् । तत्राद्ये पक्षे कोयं शब्दसंस्कारः? शब्दस्योपलब्धिस्तस्यात्मभूतः कश्चि-
दतिशयोऽनतिशयव्यावृत्तिर्वा स्वरूपपरिपोषो वा व्यक्तिसमवायो वा तद्ग्रहणापेक्षग्रहणता वा व्यञ्जकसन्निधानमात्रं वाऽऽवरणविगमो वा स्यात्? यदि शब्दो-
पलब्धिः, कथमसौ ध्वनीनां गमिका शब्दे श्रोत्रमात्रभावित्वात्तस्याः । तथाप्यन्यनिमित्तकल्पने हेतूनामनवस्थितिः स्यात् । तस्यात्मभूतः कश्चिदतिशयोऽनति-
शयव्यावृत्तिर्वेत्यत्रापि अतिशयो दृश्यस्वभाव एवानतिशयव्यावृत्तिस्त्वदृश्यस्वभावखण्डनमेव । ते चेत्ततोऽन्ये । तत्करणेपि शब्दस्य न किञ्चित्कृतमिति
तदवस्थाऽस्याऽश्रुतिः । अथाऽनन्ये तदा शब्दस्यापि कार्यतया अनित्यत्वानुषङ्गः । यो हि यस्मादसमर्थस्वभावपरित्यागेन समर्थस्वभावं लभते । स चेन्न तस्य
जन्यः, केदानीं जन्यताव्यवहारः? न च समर्थस्वभाव एव जन्यो, न शब्द इत्यभिधातव्यं-तस्याऽतो विरुद्धधर्माध्यासतो भेदानुषङ्गात् । तत्र चोक्तो दोषः ।
श्रोत्रप्रदेशे एव चास्य संस्कारे तावन्मात्रक एव शब्दो, न सर्वगतः स्यात् । तस्यैवान्यत्र तद्विपर्ययेणावस्थाने दृश्याऽऽदृश्यत्वप्रसङ्गात् । निरंशत्वव्याघातो विप्र-
तिपत्त्यभावश्चास्य-परिणामित्वप्रसिद्धेः । यदस्माभिः श्रावणस्वभावविनाशोत्पत्तिमत्पुद्गलद्रव्यमित्यभिधीयते तद्युष्माभिर्वर्ण इत्याख्यायते । यौ च श्रावणस्वभा-
वोत्पादविनाशौ शब्दोत्पादविनाशावस्माभिरिष्टौ तौ युष्माभिः शब्दाभिव्यक्तितिरोभावाविति नाम्न्येव विवादो नार्थे । दृश्येतररूपता चैकस्य ब्रह्मवादं समर्थयते
तद्वच्चेतनेतररूपतयाप्येकस्याऽवस्थित्यविरोधात् । घटादेरपि चैवं सर्वगतत्वानुषङ्गः । सोपि हि दृष्टप्रदेशे दृश्योऽन्यत्र चादृश्य इति वदतो न वक्त्रं वक्री-
भवेत् । सर्वत्र चास्य संस्कारे सर्वदोपलब्धिः स्यात्, न वा क्वचित्कदाचित्-विशेषाभावात् । स्वरूपपरिपोषः संस्कारोस्येत्यप्यऽचर्चिताभिधानं-नित्यस्य स्वभा-

---

१ निश्चीयते । ध्वनय सन्ति शब्दसंस्कारान्यथानुपपत्तेरिति ॥ २ तद्भावभावित्वमसिद्धमित्युक्ते आह बुद्धिरिति । बुद्धि =प्रत्यक्षबुद्धि ॥ ३ नियता ॥ ४ शब्दस्यामूर्तत्वे कुड्यादिप्रतिबन्धो न स्याच्छ्रोत्राभिघातो वा न
स्यादित्युक्ते आह ॥ ५ शब्दव्यञ्जकवायो ॥ ६ शब्दव्यञ्जकवायुना ॥ ७ ध्वने सकाशात् ॥ ८ मीमांसकेन ॥ ९ शब्दस्य ॥ १० नियमाभाव ॥ ११ शब्दस्य ॥ १२ तस्य=अतिशयस्य अनतिशयव्यावृत्तेर्वा ॥
१३ शब्दस्य ॥ १४ शब्दात् ॥ १५ ध्वने ॥ १६ असमर्थस्वभाव =पूर्वावस्था (शब्दाप्राकट्यम्) ॥ १७ अपि तु न क्वापीत्यर्थः ॥ १८ शब्दस्य ॥ १९ श्रोत्रप्रदेशादन्यत्र ॥ २० स्वभावस्य जन्यता शब्दस्य त्वजन्यतेति
भेदे ॥ २१ सर्वगतत्वे च शब्दस्य ॥ २२ शब्दस्य ॥ २३ जैनै ॥ २४ पुद्गले एव श्रावणस्वभावतोत्पद्यते नश्यति च ॥ २५ तदेव शब्द ॥ २६ मीमांसकै ॥ २७ शब्दरूप ॥ २८ जैनै ॥ २९ मीमांसकै ॥
३० (एकस्यैव शब्दस्य दृश्यत्वादृश्यत्वरूपतास्वीकारादद्वैत सिद्ध्यतीत्यर्थः) ॥ ३१ ब्रह्मवादसमर्थने हेतुमाह ॥ ३२ द्वितीयपक्षोयम् ॥ ३३ सरूपत्वेन ॥ ३४ ध्वनिभि ॥

वान्यथाकरणाऽसम्भवात् । करणे वा स्वभावातिशयपक्षभावी दोषोनुषज्यते । नापि व्यक्तिसमवायो वर्णस्य व्यक्त्यऽसम्भवात् । अन्यथा सामान्यात्कोस्य विशेषः ? अत एव न तद्ग्रहणापेक्षग्रहणता । नापि व्यञ्जकसन्निधानमात्रं सर्वत्र सर्वदा सर्वप्रतिपत्तृभिः सर्ववर्णानां ग्रहणप्रसङ्गात् । ननु प्रतिनियतेन ध्वनिना प्रतिनियतो वर्णः संस्कृतः प्रतिनियतेनैव प्रतिपत्रा प्रतीयते तथैव सामर्थ्यात् । उक्तं च "विषयस्यापि संस्कारे तेनैकस्यैव संस्कृतिः । नरैः सामर्थ्यभेदाच्च न सर्वैरवगम्यते ।१। यथैवोत्पद्यमानोयं न सर्वैरवगम्यते । दिग्देशाद्यविभागेन सर्वान्प्रति भवन्नपि ।२। तथैव यत्समीपस्थैर्नादैः स्याद्यस्य संस्कृतिः । तैरेव श्रूयते शब्दो न दूरस्थैः कथञ्चन ।३।" इति, तदप्यपेशलं-तेषां तदुपलम्भाऽसामर्थ्ये सर्वदाऽनुपलम्भप्रसङ्गाद्बधिरवत् । यदा तत्समीपस्थैर्व्यञ्जकैर्व्यज्यतेऽसौ तदा तैरेवोपलभ्यते इत्यप्यसुन्दरं यतस्तेषा व्यञ्जकैः किं क्रियते येन ते तैर्नियमेनापेक्षन्तेऽकिञ्चित्करेऽपेक्षाऽसम्भवात् । तद्ग्रहणे योग्यतेति चेत् किमात्मनः शब्दस्येन्द्रियस्य वा ? आद्यविकल्पद्वये सर्वदोपलम्भोऽनुपलम्भो वा स्यात् । इन्द्रियसंस्कारस्तु निराकरिष्यते । यदप्युक्तं यथैवोत्पद्यमानोऽयमित्यादि, तदप्यसङ्गतम् । न हि दिगाद्यपेक्षयाऽस्माभिस्तद्ग्रहणमिष्यतेऽपि तु श्रवणान्तर्गतत्वेन । अतो यस्यैव श्रवणान्तर्गतो यः शब्दः स तेनैव गृह्यते । सर्वगतवर्णपक्षे तु नायं परिहारो निखिलवर्णानां सकलप्रतिपत्तृश्रवणान्तर्गतत्वेन तथैवोपलम्भप्रसङ्गात् । आवरणविगमः शब्दसंस्कार इत्यप्यसत्यं यतः प्रमाणान्तरेण शब्दसद्भावे सिद्धे तस्यावरणं सिद्ध्येत् स्पार्शनप्रत्यक्षप्रतिपन्ने घटेऽन्धकारादिवत् । न चासौ सिद्धः । तत्कथमस्यावरणं नित्यस्याऽस्याऽनाधेयाऽप्रहेयाऽतिशयात्मतयाऽस्याकिञ्चित्करत्वाच्च । न चाऽकिञ्चित्करः कस्यचिदावरणमतिप्रसङ्गात् । उपलब्धिप्रतिबन्धकारणात्तच्चेन्न तज्जननैकस्वभावस्य तदयोगात् । न हि कारणाऽक्षये कार्यक्षयो युक्तस्तस्याऽतत्कार्यत्वप्रसङ्गात् । कथमेवं कुड्यादयो घटादीनामावारका इति चेत्तज्जनकस्वभावखण्डनात् । कथमन्यस्योपलब्धिं जनयन्तीति चेत्तं प्रति तत्स्वभावत्वात् । कथमेकस्योभयरूपतेत्यप्यचोद्यं तथा दृष्टत्वात् । शब्दस्यापि स्वभावखण्डनेऽनित्यतेत्युक्तम् । सर्वगतत्वे चास्यावृियमाणत्वायोगः । आवार्यो हि येनाव्रियते तदावारकम् । यथा पटो घटस्य । शब्दस्त्वावारकमध्ये तद्देशे तत्पार्श्वे च सर्वत्र विद्यमानत्वात्कथं केनचिदाव्रियेत । प्रत्युत स एवावारकः स्यात् । तद्वत्तदावारकमपि सर्वगतमिति चेन्न तर्ह्यावारकम् । न ह्याकाशमात्मादीनामावारकम् । मूर्त्तत्वात्तदिति चेन्न तर्हि सर्वगतं घटादिवत् । अथ यावद्व्योमव्यापिनो वहव एवास्यावारकास्ते किं सान्तरा निरन्तरा वा ? यदि सान्तरा न तर्हि तस्यावरणं, तन्मध्ये तद्देशे तत्पार्श्वे च विद्यमानत्वात् । अथ स्वमाहात्म्यात्तथापि स्वदेशे तदावारकास्तर्ह्यन्तराले तदुपलम्भप्रसङ्गः । तथा च सान्तरा प्रतिपत्तिः प्रतिवर्ण खण्डशः प्रतिपत्तिश्च स्यात् । सर्वत्र सर्वदा सर्वात्मना विद्यमानत्वान्न दोषश्चेन्नैवं प्रतिप्रदेशमकारादिवहुत्वस्य ध्वन्यादिवैफल्यस्य चानुषङ्गात् । तदभावेप्यन्तराले उपलम्भसम्भवात् । अथान्तराले-

१ स स्वभावस्ततो भिन्नोऽभिन्नो वा ? भिन्नश्चेत् तेऽनिभि शब्दस्य करणम् । इत्यादि ॥ २ अन्यथा=शब्दस्य व्यक्तिसत्त्वे सामान्यतादिरूपताप्रसङ्गोपि स्यादित्यर्थ ॥ ३ तस्य=शब्दसंस्कारस्य ॥ ४ शब्दस्य ॥ ५ आदिना देशकालादिर्ग्राह्य ॥ ६ जैने. ॥ ७ अन्धकारादिर्यथाऽऽवरण घटस्य ॥ ८ आवारकेण ॥

ऽसन्तोप्यावारकास्तर्ह्येकमेवावारकं प्रदेशनियतं कल्पनीयं किं तद्बहुत्वेन । अन्यत्रा[1]विद्यमानं कथमावारकमिति चेदन्तरालवदिति ब्रूमः[2] । तन्मते सान्तराः । निरन्तरत्वे चैषां तद्वच्छब्दस्यापि निरन्तरत्वादावार्यावारकभावः समान एवोभयत्र । अथ वस्तुस्वाभाव्यात् स्तिमिता वायव एव तदावारकाः । ननु दृष्टे वस्तुन्येतद्वक्तुं शक्यते । यथा दृष्टेऽग्नौ दाहकत्वेन वस्तुस्वाभाव्यादग्निर्दहति न जलमित्युच्यते । न च तथाविधा वायवो दृष्टाः । नापि सन् शब्दस्तैराव्रियमाणो येनैवं स्यात् । [3]अदृष्टकल्पनमुभयत्र समानम् । तन्न किञ्चित्तस्यावारकम् । अस्तु वा तत्तथाप्यस्य कुतो विगमः ? ध्वनिभ्यश्चेन्न तत्सद्भावावेदकप्रमाणप्रतिषेधतस्तेषामसत्त्वात् । सत्त्वे वा कुतस्तेषामुत्पत्तिः ? ताल्वादिव्यापाराच्चेन्न तद्वच्छब्दस्यापि तद्व्यापारे सत्युपलम्भतस्तत्कार्यतानुषङ्गात् । ननु खननाद्यनन्तरं व्योमोपलभ्यते । न च तत्कार्यमतोऽनैकान्तिकत्वम् । तदुक्तम् "अनैकान्तिकता तावद्धेतूनामिह कथ्यते । प्रयत्नानन्तरं दृष्टिर्नित्येपि न विरुध्यते ।१। आकाशमपि नित्यं सद्यदा भूमिजलावृतम् । व्यज्यते तदपोहेन खननोत्सेचनादिभिः ।२। प्रयत्नानन्तरं ज्ञानं तदा तत्रापि दृश्यते । तेनानैकान्तिको हेतुर्यदुक्तं तत्र दर्शनम् ।३। अथ स्थगितमप्येतदस्त्येवेत्यनुमीयते । शब्दोपि प्रत्यभिज्ञानात्प्रागस्तीत्यवगम्यताम् ।४।" तदप्यसङ्गतं-ध्वनीनामप्येवं ताल्वादिव्यापारकार्यत्वाभावप्रसङ्गात् । एकरूपता चाकाशस्याप्यसिद्धा स्वविज्ञानजननैकस्वभावत्वे हि तस्य न खननाद्यनन्तरमेवोपलब्धिः किन्तु पूर्वमपि स्यात् । तदस्वभावत्वे वा न कदाचनाप्युपलब्धिः स्याद्विशेषाभावात् । विशेषे वा एकरूपताव्याघातः । प्रत्यभिज्ञानाच्छब्दे प्राक् सत्त्वसिद्धिश्च ध्वनावपि समाना य एव पूर्वमकारस्य व्यञ्जको ध्वनि स एव पश्चादपीति प्रतीतेः । तथा च व्यञ्जनस्यापि सर्वत्र सर्वदा सद्भावे ताल्वादिव्यापारवैफल्यं सर्वत्र सर्वदा व्यङ्ग्यप्रतीतिश्च स्यात् । तन्न ताल्वादिव्यापारकार्यता ध्वनीनामेव । अतः कथं तेषां सत्त्वमुत्पादकाभावात् । सन्तु वा ते तथाप्यतः क्वचिदावरणविगमे विवक्षितवर्णवन्निखिलवर्णोपलब्धिप्रसङ्गो व्यापकत्वेन सर्वेषां तत्र सद्भावात् । तथा च ध्वन्यन्तरस्य वैफल्यम् । ननु चावार्याणामिवावारकाणां तद्वच्च तदपनेतॄणां भेदस्तेनायमदोषः । उक्तं च । "व्यञ्जकानां हि वायूनां भिन्नावयवदेशता । जातिभेदश्च तेनैवं संस्कारो व्यवतिष्ठते ।१। अन्यार्थं प्रेरितो वायुर्यथान्यं न करोति वः । तथान्यवर्णसंस्कारशक्तो नान्यं करिष्यति ।२। अन्यैस्ताल्वादिसंयोगैर्वर्णो नान्यो यथैव हि । तथा ध्वन्यन्तराक्षेपो न ध्वन्यन्तरसारिभिः ।३। तस्मादुत्पत्त्यभिव्यक्त्योः कार्यार्थापत्तितः समः । सामर्थ्यभेदः सर्वत्र स्यात्प्रयत्नविवक्षयोः ।४।" तदप्यसमीक्षिताभिधानमभिन्नदेशेऽभिन्नेन्द्रियग्राह्ये चावार्ये आवरणभेदस्याभिव्यञ्जकभेदस्य चाऽप्रतीतेः । न खलु घटशरावोदञ्चनादीनां तथाविधानामावरणव्यञ्जकभेदो दृष्टः-काण्डपटादेरेकस्यैवावरणत्वस्य प्रदीपादेश्चैकस्यैवाभिव्यञ्जकत्वस्य प्रसिद्धेः । तथा च प्रयोगः । शब्दाः प्रतिनियतावरणावार्याः प्रतिनियतव्यञ्जकव्यङ्ग्या वा न भवन्ति समानदेशैकेन्द्रियग्राह्यत्वाद् घटादिवत् । न चाऽऽवार्यवर्णानां देशभेदो युक्तो व्यापकत्वाभावप्रसङ्गात् ।

१ मूलपुस्तके 'अन्यत्वा–' इति ॥ २ जैना ॥ ३ शब्दो वायोरावारक कुतो न स्यादिति जैनेनोक्ते पर प्राह–अदृष्टकल्पना स्यादिति । तस्योपरि जैनेनोच्यते ॥

देशभेदो हि परस्परदेशपरिहारेणावस्थानात्प्रसिद्धो गोकुञ्जरवत् । तथा चावरणभेदस्याऽसतः कथं जातिभेदप्रकल्पनं तदपनेतृजातिभेदप्रकल्पनं च श्रेयो यतो जातिभेदश्चेत्यादि शोभेत । नन्वेकेन्द्रियग्राह्यस्यापि व्यङ्ग्यस्य व्यञ्जकभेदो दृष्टः । यथा भूमिगन्धस्य जलसेकः । न शरीरगन्धस्य । अस्यापि मरीचिचक्रसहायस्तैलाभ्यङ्गो न भूमिगन्धस्येति । सत्यं दृष्टः । स तु विषयसंस्कारकस्य व्यञ्जकस्य, न त्वावरणविगमहेतोः । नैव वा गन्धस्याभिव्यञ्जका जलसेकादयोऽपि तु कारकास्तत्सहकारिणः पृथिव्यादेर्विशिष्टस्य गन्धस्योत्पत्तेः पूर्वं तत्र तत्सद्भावावेदकप्रमाणाभावात् । कारकाणां चैकेन्द्रियग्राह्ये समानदेशे च कार्ये नियमो दृष्टः । यथैकत्र स्थिता अपि यवबीजादयो न सर्वे शाल्यङ्कुरं यवाङ्कुरं चोत्पादयन्ति । किन्तु शालिबीजमेव शाल्यङ्कुरं यवबीजं च यवाङ्कुरम् । इत्येतेनान्यैस्ताल्वादिसंयोगैरित्यादि निरस्तम् । कथम्? ध्वन्यन्तरसारिभिस्ताल्वादिभिर्यद्यपि ध्वन्यन्तराक्षेपो नास्ति तथापि य एव तैराक्षिप्यते तत एव सर्ववर्णश्रुतेर्ध्वन्यन्तराक्षेपपक्षदोषस्तदवस्थः । तत्र शब्दसंस्कारोभिव्यक्तिर्घटते । अथेन्द्रियसंस्कारोसौ । तदुक्तम् "अथापीन्द्रियसंस्कारः सोप्यधिष्ठानदेशतः । शब्दं न श्रोष्यति श्रोत्रं तेनाऽसंस्कृतशष्कुलि ।१। अप्राप्तकर्णदेशत्वाद्ध्वनेर्न श्रोत्रसंस्क्रिया । अतोऽधिष्ठानभेदेन संस्कारनियमस्थितिः ।२। यद्यपि व्यापि चैकं च तथापि ध्वनिसंस्कृतिः । अधिष्ठानेषु सा यस्य तच्छब्दं प्रतिपत्स्यते ।३।" इत्यत्रापि सकृत्संस्कृतं श्रोत्रं युगपत्सर्ववर्णान् शृणुयात् । न ह्यञ्जनादिना संस्कृतं चक्षुः सन्निहितं नीलधवलादिकं कश्चित्पश्यति कश्चिन्नेति । बलातैलादिना[1] संस्कृतं श्रोत्रं वा कांश्चिदेव गकारादीन् शृणोति कांश्चिन्नेतीति नियमो दृष्टो येनात्रापि तथा कल्पना स्यात् । ततो निराकृतमेतत् "तथा घटादेर्दीपादिरभिव्यञ्जक इष्यते । चक्षुषोऽनुग्रहादेवं ध्वनिः स्याच्छ्रोत्रसंस्कृतेः ।१। न चापर्यनुयोगोत्र केनाकारेण संस्कृतिः । उत्पत्तावपि तुल्यत्वाच्छक्तिस्तत्राप्यतीन्द्रिया ।२।" इति । प्रदीपादिनानुगृहीतचक्षुषा पटाद्यनेकार्थग्रहणवत् ध्वन्यनुगृहीतश्रोत्रेणाप्येकदानेकशब्दश्रवणप्रसङ्गात् । प्रयोगः । श्रोत्रमेकेन्द्रियग्राह्याभिन्नदेशावस्थितार्थग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं न भवति इन्द्रियत्वाच्चक्षुर्वत् । तत्र श्रोत्रसंस्कारोप्यभिव्यक्तिर्घटते । अस्तु तर्ह्युभयसंस्कारः । न चात्रोक्तदोषानुषङ्गः । तदुक्तं "द्वयसंस्कारपक्षे तु वृथा दोषद्वये वचः । येनान्यतरवैकल्यात्सर्वैः सर्वो न गृह्यते ।१।" तदप्ययुक्तमुक्तदोषादेव । तथा हि । यदैकवर्णग्राहकत्वेन संस्कृतं श्रोत्रं संस्कृतं वर्णं प्रतिपद्यते तदा तत्रत्यसर्ववर्णान्प्रतिपद्येत संस्कृतं च वर्णं सर्वत्र सर्वदाऽवस्थितत्वेन । अन्यथा तत्प्रतीतिरेव न भवेत्तदात्मकत्वात्तस्य । अतो व्यङ्ग्यव्यञ्जकभावस्य विचार्यमाणस्याऽयोगान्न व्यञ्जकध्वन्यधीनो विभिन्नदेशकालस्वभावतया शब्दस्योपलम्भोऽपि तु तत्स्वभावभेदनिबन्धनः । यच्चोक्तं जलपात्रेषु चेत्यादि, तदप्यसाम्प्रतं–तत्रोपलभ्यमानस्यादित्यप्रतिबिम्बस्यानेकत्वात् । गगनतलावलम्बी हि सविता तत्रोपलभ्यते इत्यत्र न प्रत्यक्षं प्रमाणं तत्स्वरूपाप्रतिभासनात् । तस्य हि स्वरूपं गगनतलावलम्बि चैकं च । तन्नावभासते । यच्चावभासि जलपात्रावलम्बि चानेकं च तद्रू-

[1] सर्वशब्दश्रवणोत्पादितैलविशेषोयम् ॥

क्षच्छायादिवद्वस्त्वन्तरमेव । न चान्यप्रतिभासेऽन्यप्रतिभासो नामाऽतिप्रसङ्गात् । न च जलभानोर्गगनभानुना सादृश्यादेकत्वं कमनीयकामिनीनयनयोरपि तत्प्रसङ्गात् । नापि तद्विकारे जलभानुविकारादेकत्वं वृक्षच्छाययोरपि तत्प्रसङ्गात् । ननु तत्र तत्प्रतिविम्वानां वस्त्वन्तरत्वे कुतः प्रादुर्भावः स्यादिति चेज्जलादित्यादिलक्षणस्वसामग्रीविशेषात् । तर्हि स्वच्छताविशेषसद्भावाज्जलादर्शादयो मुखादित्यादिप्रतिविम्वाकारविकारधारिणः कस्मान्न सर्वदोपलभ्यन्ते इति चेत्स्वसामग्र्यऽभावतोऽभावाच्छब्दसुखादिवत् । कश्चिद्धि विकारः सहकारिनिवृत्तावप्यनिवर्त्तमानो दृष्टो, यथा घटादिः । कश्चित्तु निवर्त्तमानो, यथा शब्दादिः । अचिन्त्यशक्तित्वाद्भावानाम् । तौल्वादिव्यापारसहकारिनिवृत्तौ हि पुद्गलस्य श्रावणस्वभावव्यावृत्तिः । स्रग्वनितानिवृत्तौ चाल्हादनाकारव्यावृत्तिरात्मनः सकलजनप्रसिद्धा । एवमादित्यादिसहकारिनिवृत्तौ जलादेस्तत्प्रतिविम्वाकारनिवृत्तिरविरुद्धा । ततो निराकृतमेव तत्—अत्र ब्रूमो यदा तावज्जले सौर्येणेत्यादि । स्वप्रदेशस्थतया सवितुर्ग्रहणासिद्धेः । चाक्षुपं तेजः प्रतिस्रोतः प्रवर्त्तितमिति चातीवाऽसङ्गतं प्रमाणाभावात् । न हि चक्षुस्तेजांसि जलेनाभिसम्वन्ध्य पुनः सवितारं प्रति प्रवर्त्तितानि प्रत्यक्षादिप्रमाणतः प्रतीयन्ते । यथा च चक्षूरश्मीनां विषयं प्रति प्रवृत्तिर्नास्ति तथा चक्षुरप्राप्यकारित्वप्रघट्टके प्रतिपादितम् । इत्यलमतिविस्तरेण । यच्चान्यदुक्तं देशभेदेन भिन्नत्वमित्यादि, तदप्यसारं—यतो यदि प्रत्यक्षमेवानुमानस्य वाधकं नानुमानं प्रत्यक्षस्य तर्हि चन्द्रार्कादौ स्थैर्याध्यक्षं देशादेशान्तरप्राप्तिलिङ्गजनितगत्यनुमानेन वाध्यं न स्यात् । अथास्य प्रत्यक्षरूपतैव नास्ति वाधितविषयत्वात् । तत्प्रकृतेपि समानं लूनपुनर्जातनखकेशादिवत्सादृश्यप्रतीत्या तन्नानात्वप्रसाधकानुमानेन वाचाऽत्राप्येकत्वप्रतीतेर्वाधितविषयत्वाऽविशेषात् । अतोऽयुक्तमेतत्—स एवेति मतिर्नापि सादृश्यं न च तत्क्वचित् । विनावयवसामान्यैर्वर्णेष्ववयवो न च, इति—अवयवसामान्यस्याप्यत्रात एव प्रसिद्धेः । तेनायुक्तमुक्तं पर्यायेणेत्यादि—देवदत्ते हि स एवायमिति प्रत्ययोऽत्र तु तेनानेन चायं सदृश इति । न च सदृशप्रत्ययादेकत्वं गोर्गवययोरपि तत्प्रसङ्गात् । यद्यप्युच्यते । जैनकापिलनिर्दिष्टं शब्दश्रोत्रादिसर्पणम् । साधीयोऽस्मात्तदप्यत्र युक्त्या नैवावतिष्ठते ।१। जैनेन हि निर्दिष्टं श्रोतारं प्रति शब्दस्य सर्पणं कापिलेन तु वक्तारम् । श्रोत्रादेर्यत्तदेव साधीयोऽस्मान्नैयायिकोपकल्पितात् । वीचीतरङ्गन्यायेन शब्दस्यामूर्त्तस्यागमनात् । तदप्यत्र युक्त्या नैवावतिष्ठते । यस्मात्—शब्दस्यागमनं तावददृष्टं परिकल्पितम् । मूर्त्तिस्पर्शादिमत्त्वं च तेषामभिभवः सताम् ।१।

१ सुखादिप्रतिविम्वाकारस्य ॥ २ चकचीवरादि ॥ ३ उत्पत्तेरुत्तरकाले ॥ ४ आदिना सुखम् ॥ ५ कथम् ॥ ६ शब्दरूपस्य ॥ ७ व्याघुटनम् ॥ ८ यस्माद्वस्त्वन्तरत्व सिद्ध प्रतिविम्वानाम् ॥ ९ पुन ॥ १० सौर्येण तेजसा ॥
११ घटादिपदार्थम् ॥ १२ चक्षूरश्मीना विषय प्रति गमननिराकरणेन ॥ १३ वाधकम् ॥ १४ ग्राहि ॥ १५ स्थैर्यलक्षणस्य ॥ १६ गकारे ॥ १७ कथम् ॥ १८ गकार ॥ १९ गकारे ॥ २० सादृश्यप्रतीत्यैकत्वप्रतीतेर्वाधितविषयत्व यत ॥ २१ स एवाय गकारादि ॥ २२ गकारादौ ॥ २३ वर्णाना निरंशत्वात् ॥ २४ अशा ॥ २५ तेन सदृशोय गकार ॥ २६ वर्णेन ॥ २७ वर्ण ॥ २८ अन्यथा ॥ २९ मीमासकेन ॥ ३० साङ्ख्य ॥ ३१ श्रेय ॥ ३२ अग्रे वक्ष्यमाणात् ॥ ३३ जगति वर्णेषु वा ॥ ३४ मीमासकस्य ॥ ३५ गमनम् ॥ ३६ लहरी ॥ ३७ कुत ॥ ३८ प्रत्यक्षादिप्रमाणेनाप्रातीतिकम् ॥ ३९ कुड्यादिना तिरोभाव ॥

त्वगग्राह्यत्वमन्ये च [1]भागाः सूक्ष्मा[2]ः प्रकल्पिताः । तेषामदृश्यमानानां कथं च रच[3]नाक्रमः ।२। कीदृशाद्रचनाभेदाद्वर्णभेदश्च जायताम् । द्रवित्वेन विना चैषां संक्षेपः कल्प्यते कथम् ।३। आग[6]च्छतां च विश्लेपो न भवेद्वायुना कथम् । लघवोऽवयवा [10]ह्येते निबद्धा[11] न च केनचित्[12][13] ।४। वृक्षाद्यभिहतानां[14] च विश्लेपो लोष्ठवद्भवेत् । एक[15]श्रोत्रप्रवेशे च नान्येषां[16] स्यात्पुनः श्रुतिः[17] ।५। न चावान्तरवर्णानां[18] नानात्वस्यास्ति कारणम्[19] । न चैकस्यै[20]व सर्वासु गमनं दिक्षु युज्यते[21] ।६। इत्यादि । तद्व्यञ्जकवा[22]य्वागमनेपि समानम् । शक्यते हि शब्दस्थाने वायुं पठित्वा वायोरागमनं तावददृष्टं परिकल्पितमित्याद्यभिधातुम् । किञ्चाऽदृष्टकल्पनागौरवदोषो [23]भवत्पक्ष एवानुपज्यते । तथा हि । शब्दस्य पूर्वापरकोट्योः सर्वत्र च देशेऽनुपलभ्यमानस्य सत्त्वम् । तस्य चावारकाः स्तिमिता वायवः प्रमाणतोऽनुपलभ्यमानाः कल्पनीयास्तदपनोदकाश्चा[24]न्ये । तेषां शक्तिनानात्वं कल्पनीयं, नास्म[25]त्पक्षे । पौद्गलिकत्वं च यथावसरं गुणनिषेधप्रक्रमे प्रसाधयिष्यामः । तत्सिद्धं घटस्य चक्रादिव्यापारकार्यत्ववच्छब्दस्य ताल्वादिव्यापारकार्यत्वमिति साधूक्तमाप्तवचनमित्यादि ।

[26]ननु शब्दार्थयोः सम्बन्धासिद्धेः कथमाप्तप्रणीतोपि शब्दोर्थे ज्ञानं कुर्याद्यत आप्तवचननिबन्धनमित्यादि वचः शोभेतेत्याशङ्कापनोदा[27]र्थं सहजयोग्यतेत्याद्याह । सहजा [28]स्वाभाविकी योग्यता शब्दार्थयोः प्रतिपाद्यप्रतिपादकश[29]क्तिः ज्ञानज्ञेययोर्ज्ञाप्यज्ञापकशक्तिवत् । न हि तत्राप्यतो योग्यतातोऽन्य[30]ः कार्यकारणभावादिः सम्बन्धोस्तीत्यु[31]क्तम् । तस्यां सत्यां सङ्के[32]तः । तद्वशाद्धि स्फुटं श[33]ब्दाद[34]यो वस्तुप्रतिपत्तिहेतवः ॥ य[35]था मेर्वादयः सन्तीति ।

ननु चासौ सहजयोग्यताऽनित्या नित्या वा ? न तावदनित्या[36]ऽनवस्थाप्रसङ्गात्[37] । येन हि प्रसिद्धस[38]म्बन्धेनायमित्या[39]दिना शब्देनाप्रसिद्धसम्बन्धस्य घटादेः शब्दस्य सम्बन्धः क्रि[40]यते तस्याप्य[41]न्येन प्रसिद्धसम्बन्धेन सम्बन्धस्तस्याप्यन्येनेति । नित्यत्वे चास्याः सिद्धं नित्यसम्बन्धाच्छब्दानां वस्तुप्रतिपत्तिहेतुत्वमिति मीमांसका[42]स्तेप्यतत्त्वज्ञाः—हस्तसंज्ञा[43]दिसम्बन्धवच्छब्दार्थसम्बन्धस्यानित्यत्वेप्यर्थप्रतिपत्तिहेतुत्वसम्भवात् । न खलु हस्तसंज्ञादीनां स्वार्थेन सम्बन्धो नित्यस्तेषामनित्यत्वे तदाश्रि-

---

१ अवयवा ॥ २ अदृष्टा ॥ ३ रचनाऽन्वय ॥ ४ अदृष्ट ॥ ५ भेद ॥ ६ वर्णोत्पत्तौ ॥ ७ शब्दाना पुद्गलरूपाणाम् ॥ ८ जैनानाम् ॥ ९ शब्दाना वायूना च ॥ १० जैनोक्ता ॥ ११ सम्बद्धा ॥ १२ कारणेन ॥ १३ वर्णवायूत्पत्तौ ॥ १४ पुद्गलरूपाणा वर्णानाम् ॥ १५ एकस्य नरस्य ॥ १६ नृणाम् ॥ १७ अव्यापक शब्दो जैनमते यत ॥ १८ मध्योत्पन्नानाम् ॥ १९ नैयायिकस्य ॥ २० गस्य ॥ २१ जैनस्य ॥ २२ ताल्वादिजनितशब्दाभिव्यञ्जकध्वने ॥ २३ मीमासकपक्षे ॥ २४ व्यञ्जका ॥ २५ जैन ॥ २६ सौगत ॥ २७ निराकरणार्थम् ॥ २८ न त्वौपाधिकी ॥ २९ वाच्यवाचकसामर्थ्यम् ॥ ३० अपर ॥ ३१ पूर्व प्रथमपरिच्छेदे ॥ ३२ अस्य शब्दस्यायमर्थ, अस्य गोशब्दस्य सास्नादिमानर्थ इति च ॥ ३३ प्रागुक्ता ॥ ३४ आदिना हस्ताङ्गुलीसज्ञा ॥ ३५ उदाहरणे ॥ ३६ अन्यथा॥३७कथम् ? तथा हि॥३८अर्थेन सह॥३९इदमित्यादिना च॥४० यया प्रसिद्धसम्बन्धेन घटशब्देन घट एव वाच्यस्तथाऽप्रसिद्धसम्बन्धेनापि घटशब्देन घट एव वाच्य इति ॥ ४१ शब्देन ॥ ४२ वदन्ति ॥ ४३ आदिना नयनाङ्गुल्यादिसज्ञा ॥

तसम्बन्धस्य नित्यत्वविरोधात् । न हि भित्तिव्यपाये[1] तदाश्रितं चित्रं न व्यपैती[2]त्यभिधातुं[3] शक्यम् । न[4] चानित्यत्वेऽस्यार्थप्रतिपत्तिहेतुत्वं न दृष्टं प्रत्यक्षविरो[5]धात् । एवं[6] शब्दार्थसम्बन्धेप्येतद्[7]वाच्यम्[8] । स हि न तावदनाश्रितो[9] नभोवद[10]नाश्रितस्य[11] सम्बन्धत्वाऽसम्भवात् । आश्रितश्चेत्किं तदाश्रयो नित्योऽनित्यो वा ? नित्यश्चेत् कोयं नित्यत्वेनाभिप्रेत[12]स्तदाश्रयो नाम? जाति[13]र्व्यक्ति[14]र्वा ? न तावज्जातिस्तस्याः शब्दार्थत्वे[15] प्रवृत्त्यादि[16]भावप्रतिपादनात्[17] । निराकरिष्यमाणत्वा[18]च्च[19] । व्यक्तेस्तु तदाश्रयत्वे कथं नित्य[20]त्वमनभ्युपगमा[21]त्तथा प्रतीत्यभावाच्च । अनित्यत्वे च तदाश्रयत्वे[22]स्य सिद्धं तद्व्यपाये[23] सम्बन्धस्या[24]नित्यत्वं भित्तिव्यपाये चित्रवत् । ततो[25]ऽयुक्तमुक्तं 'नित्याः शब्दार्थसम्बन्धा[26]स्तत्रा[27]म्नाता[28] महर्षिभिः । सूत्राणां सानुतन्त्राणां[29] भाष्याणां च प्रणेतृभिः' इति—सदृशपरिणामविशिष्टस्यार्थस्य शब्दस्य तदाश्रितसम्बन्धस्य चैकान्ततो[30] नित्यत्वासम्भवात् । सर्वथा नित्यस्य वस्तुनः क्रमयौगपद्याभ्यामर्थक्रियासम्भवतोऽसत्त्वं चाऽश्वविषाणवत् । अनवस्थादूषणं चायुक्तमेवाऽयमित्यादेः शब्दस्यानादिपरम्परातो[31]ऽर्थमात्रे[32] प्रसिद्धसम्बन्धत्वात्तेनावगत[33]सम्बन्धस्य घटादिशब्दस्य सङ्केतकरणात् । नित्यसम्बन्धवादिनो[34]पि चानवस्थादोषस्तुल्य एव[35] । अनभिव्यक्तसम्बन्धस्य[36] हि शब्दस्याभिव्यक्तसम्बन्धेन शब्देन सम्बन्धाभिव्यक्तिः कर्त्तव्या । तस्याप्यन्येनाभिव्यक्तसम्बन्धेनेति । यदि[37] पुनः कस्यचित्स्वत एव[38] सम्बन्धाभिव्यक्तिरपरस्यापि सा तथैवास्तीति[39] सङ्केतक्रिया[40] व्यर्था । शब्दविभागा[41]भ्युपगमे चालं सम्बन्धस्य नित्यत्वकल्पनया । कल्पने[42] चाऽगृहीतसङ्केत[43]स्याप्यतोऽर्थप्रतिपत्तिः स्यात्[44] । सङ्केतस्त[45]स्य व्यञ्जक इत्यप्ययुक्तं नित्यस्य व्यङ्ग्य[46]त्वायोगात् । नित्यं हि वस्तु यदि व्यक्तं व्यक्तमेव, अथाव्यक्तमप्यव्यक्तमेवाभिन्न[47]स्वभावत्वात्तस्य । शब्दाभिव्यक्तिपक्षनिक्षिप्तदोषा[48]नुषङ्गश्चात्रापि तुल्य एव । किञ्च सङ्केतः पुरुषाश्रयः स चातीन्द्रियार्थज्ञानविकलतयान्यथापि वेदे सङ्केतं कुर्यादिति कथं न मिथ्यात्वलक्षणमस्याप्रामाण्यम् । किञ्चासौ नित्यसम्बन्धवशादेकार्थनियतोऽनेकार्थनियतो वा स्यात्? एकार्थनियतश्चेत्किमेकदेशेन सर्वात्मना[49] वा ? सर्वात्मनैकार्थनियमेर्थान्तरे वेदात्प्रतिपत्तिर्न स्यात्[50] । ततश्चा[51]स्याज्ञानलक्षणमप्रामाण्यम् । एकदेशेन चेत्स किमेकदेशोऽभिमतैकार्थनियतोऽनभिमतैकार्थनियतो

---

१ विनाशे ॥ २ विनश्यति ॥ ३ वक्तुम् ॥ ४ अन्यथा ॥ ५ प्रत्यक्षेण सिद्धा हस्तसञ्ज्ञादयोऽनित्या यत ॥ ६ अनित्यहस्तसञ्ज्ञादिसम्बन्धस्यार्थप्रतिपत्तिप्रतिपादकत्वप्रकारेण ॥ ७ तद्धि ॥ ८ वक्ष्यमाणम् ॥ ९ अन्यथा ॥
१० अमूर्त्तनभोवत् ॥ ११ गगनस्य लयेन सम्बन्ध उपचारत एव, न तु साक्षात्तस्याऽमूर्त्तत्वात् ॥ १२ दृष्ट ॥ १३ सामान्यम् ॥ १४ विशेष ॥ १५ यदा सामान्यरूपौ शब्दार्थौ सम्बन्धस्य वाच्यवाचकरूपस्याधारभूतौ
तदा तावेव विपर्यीकुर्याच्छब्द इति भाव ॥ १६ आदिना निवृत्ति ॥ १७ पूर्वम् ॥ १८ चतुर्थपरिच्छेदे ॥ १९ नित्यजाते ॥ २० सम्बन्धस्य ॥ २१ परेण ॥ २२ व्यक्तेर्नित्यत्वस्य ॥ २३ व्यक्तिरूपस्य ॥ २४ अनित्य सम्बन्धो
यत ॥ २५ सामान्य ॥ २६ वाच्यवाचकलक्षणा ॥ २७ मीमांसाया ग्रन्थे ॥ २८ अभ्युपगता ॥ २९ विषमपदव्याख्यानमनुतन्त्र तेन सह वर्त्तन्ते इति । तेषा सूत्राणाम् ॥ ३० सर्वथा ॥ ३१ प्रवाहत ॥ ३२ पुरोवर्त्तिन्य-
निर्द्धारितार्थे ॥ ३३ अर्थेन सह ॥ ३४ मीमांसकस्य ॥ ३५ कथम् ॥ ३६ अर्थेन सह ॥ ३७ अनवस्थापरिहारार्थम् ॥ ३८ नापरेण ॥ ३९ हेतो ॥ ४० पुरुषेण क्रियमाणा ॥ ४१ अयमित्यादिशब्दस्य स्वत एव सम्बन्ध ।
घटादिशब्दस्य तु अयमित्यादिना शब्देनापरेण सम्बन्ध इति ॥ ४२ नित्यत्वस्य ॥ ४३ तु ॥ ४४ सम्बन्धस्य नित्यत्वात् ॥ ४५ नित्यशब्दस्य ॥ ४६ सङ्केतेन ॥ ४७ एकस्वभावत्वात् ॥ ४८ नित्यसम्बन्धाभिव्यक्तौ अष्ट-
विकल्पप्रकारेण ॥ ४९ सर्वस्वरूपेण ॥ ५० पुरुषाणाम् ॥ ५१ वेदेनार्थान्तरप्रतिपत्त्यभावात् ॥

वा[1] ? अनभिमतैकार्थनियतश्चेत्कथं न मिथ्यात्वलक्षणमप्रामाण्यम् ? अभिमतैकार्थनियतश्चेत्किं पुरुषात्स्वभावाद्वा ? प्रथमपक्षे अपौरुषेयत्वसमर्थनप्रयासो व्यर्थः । पुरुषो हि रागाद्यन्धत्वात्प्रतिक्षिप्यते । तस्माच्चेद्वेदैकदेशोऽर्थनियमं प्रतिपद्यते । किमपौरुषेयत्वेन[5] ? अनेकार्थनियमे च विरुद्धोप्यर्थः सम्भवेत् । तथा चास्य मिथ्यात्वम् । किञ्चासौ सम्बन्ध ऐन्द्रियोऽतीन्द्रियोऽनुमानगम्यो वा स्यात् ? न तावदैन्द्रियः[6] स्वेन्द्रिये[7] स्वेन रूपेणाप्रतिभासमानत्वात्[8] । अतीन्द्रियश्चेत्कथं प्रतिपत्त्यङ्गं ज्ञापकंस्य निश्चयापेक्षणात् । संन्निधिमात्रेण ज्ञापनेऽतिप्रसङ्गात् । अनुमानगम्यश्चेन्न लिङ्गाभावात् । तस्य हि लिङ्गं ज्ञानमर्थः शब्दो वा ? न तावज्ज्ञानं सम्बन्धासिद्धौ[17] तत्कार्यत्वेनास्याऽनिश्चयात् । नार्प्यर्थस्तस्य तेन सम्बन्धासिद्धेः[19] । न हि सम्बन्धार्थयोस्तादात्म्यं संम्बन्धस्यानित्यत्वानुषङ्गात् । नापि तदुत्पत्तिरनभ्युपगमात् । असम्बद्धश्चार्थः कथं सम्बन्धं ज्ञापयत्यतिप्रसङ्गात् । ज्ञापने वा शब्दा एवं सम्बन्धविकलाः किमर्थं न ज्ञापयन्त्यलं सिद्धोपस्थायिना नित्यसम्बन्धेन । तन्नार्थोपि लिङ्गम् । नापि शब्दोऽर्थपक्षोक्तदोषानुषङ्गात् । ततो नित्यसम्बन्धस्य प्रमाणतोऽप्रसिद्धेर्न तद्वशाद्वेदोऽर्थप्रतिपादकः । अथ स्वभावादेवासौ तत्प्रतिपादकस्तन्न—अयमेवास्माकमर्थो नायमिति वेदेनानुक्तेः । तदुक्तम् “अयमर्थो नायमर्थ इति शब्दा वदन्ति न । कल्प्योयमर्थः पुरुषैस्ते च रागादिविप्लुताः ।१।” इति । ततो लौकिको वैदिको वा शब्दः सहजयोग्यतासङ्केतवशादेवार्थप्रतिपादकोऽभ्युपगन्तव्यः प्रकारान्तरासम्भवात् । ननु चार्थप्रतिपादकत्वमेषामसम्भाव्यम् । य एव हि शब्दाः सत्यर्थे दृष्टास्ते एवातीतानागतादौ तदभावेपि दृश्यन्ते । यदभावे च यद्दृश्यते न तत्तत्प्रतिबद्धम् । यथा श्वाऽभावेपि दृश्यमानो गौर्न तत्प्रतिबद्धः । अर्थाभावेपि दृश्यन्ते च शब्दास्तन्नैतेर्थप्रतिपादकाः । किन्त्वन्यापोहमात्राभिधायकाः । तदप्यविचारितरमणीयमर्थवतः शब्दात्तद्रहितस्यास्यान्यत्वात्[33] । न चान्यस्य व्यभिचारेऽन्यस्याप्यसौ युक्तोऽन्यथा गोपालघटिकादिधूमस्याग्निव्यभिचारोपलम्भात्पर्वतादिप्रदेशवर्तिनोपि स स्यात् । तथा च कार्यहेतवे दत्तो जलाञ्जलिः । सकलशून्यता च स्वप्नादिप्रत्ययानां क्वचिद्विभ्रमोपलम्भतो निखिलप्रत्ययानां तत्प्रसङ्गात् । यत्नतः परीक्षितं कार्यं कारणं नातिवर्त्तत इत्यन्यत्रापि समानम् । यत्नतो हि शब्दोर्थवत्त्वेतरस्वभावतया परीक्षितोर्थे न व्यभिचरतीति । तथा चान्यापोहमात्राभिधायित्वं शब्दानां

---

१ मीमांसकस्य ॥ २ मीमांसकै ॥ ३ वेदस्य ॥ ४ द्वितीयपक्षे ॥ ५ वेदस्य ॥ ६ इन्द्रियविषय ॥ ७ श्रोत्रलोचनलक्षणे ॥ ८ असाधारणरूपेण ॥ ९ वाच्यवाचकसामर्थ्यस्यातीन्द्रियत्वात् ॥ १० सम्बन्धस्य ॥ ११ नाज्ञात ज्ञापक नाम ॥ १२ शब्दार्थयो सारूप्येण सम्बन्धस्यार्थज्ञापने ॥ १३ सम्बन्धमात्रेण ॥ १४ मीमांसकवत्सौगतानपि बोधयेदिति ॥ १५ सम्बन्धेन सहाविनाभाविलिङ्गस्य ॥ १६ सम्बन्धोस्ति ज्ञानात् ॥ १७ सम्बन्धासिद्धेरिति स्पुस्तकीय पाठ ॥ १८ सम्बन्धोस्ति अर्थात् ॥ १९ कथम् ॥ २० अन्यथा ॥ २१ अर्थवत् ॥ २२ सम्बन्धाद्गुणरूपादर्थोत्पत्ति ॥ २३ सम्बन्धेन सह ॥ २४ तथा च खरविषाण सम्बन्ध ज्ञापयतु ॥ २५ असम्बद्धार्थेन ॥ २६ सम्बन्धस्य ॥ २७ सौगत ॥ २८ विद्यमाने ॥ २९ काले ॥ ३० भा ॥ ३१ अपोह्यते व्यावर्त्यतेनेनाभावेनेति ॥ ३२ एव ॥ ३३ भिन्नत्वात् ॥ ३४ धूमात् ॥ ३५ परेण ॥ ३६ कथम् ॥ ३७ अर्थे ॥ ३८ धूमादि ॥ ३९ अग्न्यादि ॥ ४० शब्दे ॥ ४१ कथम् ? तथा हि ॥ ४२ व्यभिचाराभावे च,॥

श्रद्धामात्रगम्यम् । किञ्चान्यापोहमात्राभिधायित्वे प्रतीतिविरोधो गवादिशब्देभ्यो विधिरूपावसायेन प्रत्ययप्रतीतेः । अन्यनिषेधमात्राभिधायित्वे च तत्रैव चरितार्थत्वात्सास्नादिमतोऽर्थस्यातोऽप्रतीतेः तद्विषयाया गवादिबुद्धेर्जनकोऽन्यो ध्वनिरन्वेषणीयः । अथैकेनैव गोशब्देन बुद्धिद्वयस्योत्पादान्न परो ध्वनिर्मृग्यो, न-एकस्य विधिकारिणो निषेधकारिणो वा ध्वनेर्युगपद्विज्ञानद्वयलक्षणफलानुपलम्भाद्विधिनिषेधज्ञानयोश्चान्योन्यं विरोधात् कथमेकस्मात्सम्भवः । यदि च गोशब्देनागोशब्दनिवृत्तिर्मुख्यतः प्रतिपद्यते तर्हि गोशब्दश्रवणानन्तरं प्रथमतरमगौरित्येषा श्रोतुः प्रतिपत्तिर्भवेत् । न चैवम्—अतो गोबुद्ध्यनुत्पत्तिप्रसङ्गात् । तदुक्तम् । नन्वन्यापोहकृच्छब्दो युष्मत्पक्षेऽनुवर्णितः । निषेधमात्रं नैवेह प्रतिभासेऽवगम्यते ।१। किन्तु गौर्गवयो हस्ती वृक्ष इत्यादिशब्दतः । विधिरूपावसायेन मतिः शाब्दी प्रवर्त्तते ।२। यदि गौरित्ययं शब्दः समर्थोऽन्यनिवर्त्तने ।[27] जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ।३। ननु ज्ञानफलाः शब्दा न चैकस्य फलद्वयम् । अपवादविधिज्ञानं फलमेकस्य वः कथम् ।४। प्रागगौरिति विज्ञानं गोशब्दश्राविणो भवेत् । येनाऽगोः प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ।५। किञ्चापोहलक्षणं सामान्यं वाच्यत्वेनाभिधीयमानं पर्युदासलक्षणं चाभिधीयेत प्रसज्यलक्षणं वा ? प्रथमपक्षे सिद्धसाध्यता ।[41] यदेव ह्यगोनिवृत्तिलक्षणं सामान्यं गोशब्देनोच्यते भवता तदेवास्माभिर्गोत्वाख्यं भावलक्षणं सामान्यं गोशब्दवाच्यमित्यभिधीयेत—अभावस्य भावान्तरात्मकत्वेन व्यवस्थितत्वात् । कश्चायं भवतामश्वादिनिवृत्तिस्वभावो भावोऽभिप्रेतः ? न तावदसाधारणो गवादिस्वलक्षणात्मा—तस्य सकलविकल्पगोचरातिक्रान्तत्वात् । नापि शावलेयादिव्यक्तिविशेषोऽसामान्यप्रसङ्गतः । यदि गोशब्दः शावलेयादिवाचकः स्यात्तर्हि तस्यानन्वयान्न स सामान्यविषयः स्यात् । तस्मात्सर्वेषु सजातीयेषु शावलेयादिपिण्डेषु यत्प्रत्येकं परिसमाप्तं तन्निबन्धना गोबुद्धिः । तच्च गोत्वाख्यमेव सामान्यम् । तस्याऽगोऽपोहशब्देनाभिधानान्नाममात्रं भिद्येत । उक्तं च । अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् । गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम् ।१। भावान्तरात्मकोऽभावो येन सर्वो व्यवस्थितः । तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम् ।२। नेष्टोऽसाधा-

१ कुत ॥ २ अस्तित्वरूपनिश्चयेन ॥ ३ स्नानादिमदर्थस्य ॥ ४ अगवादिव्यावृत्ति ॥ ५ एव ॥ ६ द्वितीय ॥ ७ शब्द ॥ ८ ध्वने ॥ ९ गवायस्तित्व ॥ १० अगवादिव्यावृत्ति ॥ ११ परस्परविरुद्धार्थप्रतिपादनविरोधात् ॥ १२ यत्र विधिविज्ञान तत्र निषेधविज्ञान नास्ति । यत्र निषेधज्ञान न तत्र विधिज्ञानमिति ॥ १३ बुद्धिद्वयस्य ॥ १४ परेण भवता ॥ १५ अगो निवृत्ते पूर्वम् ॥ १६ एव ॥ १७ अश्वादि ॥ १८ अन्यथा १९ गौरिति बुद्धिस्तस्या अनुत्पत्ति ॥ २० त करोतीति ॥ २१ बौद्ध ॥ २२ प्रतिपादित ॥ २३ गौरयमित्यस्मिन् ॥ २४ तर्हि कथ प्रतिभास ? ॥ २५ अर्थस्य ॥ २६ अश्वादि ॥ २७ तर्हि ॥ २८ भान्तु ॥ २९ विधिनिषेधज्ञान ॥ ३० शब्दस्य ॥ ३१ विधिनिषेधलक्षणम ॥ ३२ निषेध ॥ ३३ शब्दस्य ॥ ३४ बौद्धानाम् ॥ ३५ अगोर्निवृत्ते पूर्वम् ॥ ३६ अश्व ॥ ३७ जनस्य ॥ ३८ कुत ॥ ३९ गोशब्दस्यार्थत्वेन ॥ ४० बौद्धमते ॥ ४१ कथम् ॥ ४२ सौगतेन ॥ ४३ जैने ॥ ४४ सत्ता ॥ ४५ अगोनिवृत्तिलक्षणोऽभावो भावान्तरेण गोत्वेन व्यवतिष्ठते ॥ ४६ क्षणिकनिरशनिरन्वयरूप ॥ ४७ अन्यथा ॥ ४८ सामान्यस्यापोहस्याभावोऽसामान्य तस्य प्रसङ्गात् ॥ ४९ विशेष ॥ ५० शावलेयादिना ॥ ५१ यो य शब्द स स शावलेयाद्यर्थवाचक इति ॥ ५२ सास्नादिमत्त्वम् ॥ ५३ अगोव्यावृत्ति ॥ ५४ नार्थत ॥ ५५ गोशब्दस्य ॥ ५६ सौगत ॥ ५७ गोत्व वस्त्वेवाऽगोपोहगिरा उक्तम् । कुतस्तथा हि ॥ ५८ कारणेन ॥ ५९ पर्युदासपक्षे ॥

रणस्तावद्विशेषो निर्विकल्पनात् । तथा च शावलेयादिरसामान्यप्रसङ्गतः ।३। तस्मात्सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम् । गोबुद्धिस्तन्निमित्ता स्याद्गोत्वादन्यच्च नास्ति तत् ।४। द्वितीयपक्षे तु न किञ्चिद्वस्तु वाच्यं शब्दानामित्यतोऽप्रवृत्तिनिवृत्तिप्रसङ्गस्तुच्छरूपाभावस्य चानभ्युपगमान्न प्रसज्यप्रतिषेधाभ्युपगमो युक्तः— परमतप्रवेशानुषङ्गात्। अपि च ये विभिन्नसामान्यशब्दा गवादयो ये च विशेषशब्दाः शावलेयादयस्ते भवदभिप्रायेण पर्यायाः प्राप्नुवन्त्यर्थभेदाभावाद्वृक्षपादपादिशब्दवत् । न खलु तुच्छरूपाभावस्य भेदो युक्तो वस्तुन्येव संसृष्टत्वैकत्वनानात्वादिविकल्पानां प्रतीतेः । भेदाभ्युपगमे वाऽभावस्य वस्तुरूपतापत्तिः । तथा हि । ये परस्परं भिद्यन्ते ते वस्तुरूपा, यथा स्वलक्षणानि । परस्परं भिद्यन्ते चाऽपोहा इति । न चापोह्यलक्षणसम्बन्धिभेदादपोहानां भेदः प्रमेयाभिधेयादिशब्दानामप्रवृत्तिप्रसङ्गात् । तदभिधेयापोहानामपोह्यलक्षणसम्बन्धिभेदाभावतो भेदासम्भवात् । अत्र हि यत्किञ्चिद्व्यवच्छेद्यत्वेन कल्प्यते तत्सर्वं व्यवच्छेद्याकारेणालम्ब्यमानं प्रमेयादिस्वभावमेवावतिष्ठते । न ह्यविषयीकृतं व्यवच्छेत्तुं शक्यमतिप्रसङ्गात् । न च सम्बन्धिभेदो भेदकोऽन्यथा बहुषु शावलेयादिव्यक्तिष्वेकस्याऽगोपोहस्याऽभावप्रसङ्गः । यस्य चान्तरङ्गाः शावलेयादिव्यक्तिविशेषा न भेदकास्तस्याऽश्वादयो भेदका इत्यतिसाहसम् । सम्बन्धिभेदाच्च वस्तुन्यपि भेदो नोपलभ्यते किमुताऽवस्तुनि । तथा हि । देवदत्तादिकमेकमेव वस्तु युगपत्क्रमेण वानेकैराभरणादिभिरभिसम्बध्यमानमनासादितभेदमेवोपलभ्यते । भवतु वा सम्बन्धिभेदाद्भेदः । तथापि वस्तुभूतसामान्यानभ्युपगमे भवतां स एवापोहाश्रयः सम्बन्धी न सिद्धिमासादयति यस्य भेदात्तद्भेदः स्यात् । तथा हि । गवादीनां यदि वस्तुभूतं सारूप्यं प्रसिद्धं भवेत्तदाश्वाद्यपोहाश्रयत्वमविशेषेणैषां प्रसिद्ध्येन्नान्यथा । अतोऽपोहविषयत्वमेषामिच्छताऽवश्यं सारूप्यमङ्गीकर्त्तव्यम् । तदेव च सामान्यं वस्तुभूतं भविष्यतीत्यपोहकल्पना वृथैव। यदि वाऽसत्यपि सारूप्ये शावलेयादिष्वगोपोहकल्पना तदा गवाश्वयोरपि कस्मान्न कल्प्येताऽसौ विशे-

---

१ नेष्ठ इति शेष ॥ २ अन्यथा ॥ ३ असाधारणशावलेयद्वय न घटते यस्मात् ॥ ४ सकलगोव्यक्तिषु ॥ ५ वर्त्तते ॥ ६ सामान्यम् ॥ ७ प्रसज्यपक्षे ॥ ८ प्रवृत्तिश्च निवृत्तिश्च प्रवृत्तिनिवृत्ती तयोरभावोऽप्रवृत्तिनिवृत्ती तयो प्रसङ्ग ॥ ९ सौगते ॥ १० अन्यथा युक्तश्चेत् ॥ ११ नैयायिकादि ॥ १२ सौगतस्य ॥ १३ यस ॥ १४ अश्वशब्दगोशब्दादि ॥ १५ सामान्यस्याभिधायका ॥ १६ बौद्ध ॥ १७ भवन्ति ॥ १८ सर्वेषा पदार्थाना तुच्छस्वरूपत्व यत ॥ १९ नि स्वभावस्य ॥ २० अपोहस्य ॥ २१ न तुच्छरूपाभावे ॥ २२ अन्येन सम्बद्धत्व ॥ २३ आदिना प्रमेयत्वादि ॥ २४ भेदानाम् ॥ २५ सौगते ॥ २६ अपोहस्य ॥ २७ तल्लक्षणत्वाद्वस्तुत्वस्य ॥ २८ कथम् ॥ २९ अश्वादिनिवृत्तय (गवादय) ॥ ३० अपोह्या व्यावर्त्या अश्वादय ॥ ३१ अभावानाम् ॥ ३२ अन्यथा ॥ ३३ प्रमेयादि ॥ ३४ स्वरूप ॥ ३५ स्वरूपेण नास्ति यत ॥ ३६ प्रमेयादिशब्देषु ॥ ३७ अप्रमेयादि ॥ ३८ व्यावर्त्यत्वेन ॥ ३९ व्यावर्त्याकारेण ॥ ४० विषयीक्रियमाणम् ॥ ४१ वर्त्तते ॥ ४२ व्यवच्छेद्यमप्रमेयादि ॥ ४३ परिच्छेत्तुम् ॥ ४४ गगनकुसुममपि परिच्छेत्तु शक्य स्यात् ॥ ४५ अपोहानाम् ॥ ४६ किन्तु प्रतिव्यक्ति भिन्न एव स्यात् ॥ ४७ अव्यभिचारि प्रतिनियतमन्तरङ्गम् ॥ ४८ अपोहे ॥ ४९ कटककुण्डलादिभि ॥ ५० सम्बन्धिभि ॥ ५१ अपोहस्य ॥ ५२ परमार्थसत्य ॥ ५३ गोत्वादि ॥ ५४ विवक्षित ॥ ५५ सन् ॥ ५६ सम्बन्धिन ॥ ५७ अपोहस्य ॥ ५८ अर्थानाम् ॥ ५९ सदृशरूपम् ॥ ६० शावलेयादिषु ॥ ६१ सामान्यम् ॥ ६२ गोत्वादि ॥ ६३ साधारणेन ॥ ६४ सारूप्याभावे ॥ ६५ सामान्यानभ्युपगमे विवक्षितोऽपोहाश्रय सम्बन्धी न सिद्ध्यति यत ॥ ६६ सौगतेन ॥ ६७ नियमेन ॥ ६८ अश्वाद्यभाव ॥ ६९ एक ॥ ७० सारूप्यासत्त्वाविशेषात् ॥

पाभावात् । तदुक्तम् । अथाऽसत्यपि सारूप्ये स्यादपोहस्य कल्पना । गवाश्वयोरयं कस्मादगोपोहो न कल्प्यते ।१। शावलेयाच्च भिन्नत्वं बाहुलेयाश्वयोः समम् । सामान्यं नान्यदिष्टं चेत्क्वागोपोहः प्रवर्त्तताम् ।२। यथा च स्वलक्षणादिषु समयासम्भवान्न शब्दार्थत्वं तथाऽपोहेपि । निश्चितार्थो हि समयकृत्समयं करोति । न चापोहः केनचिदिन्द्रियैर्व्यवसीयते तस्यावस्तुत्वादिन्द्रियाणां च वस्तुविषयत्वात् । नाप्यनुमानेन—वस्तुभूतसामान्यमन्तरेणानुमानस्यैवाऽप्रवृत्तेः । अस्तु वा समयस्तथापि कथमश्वादीनां गोशब्दानभिधेयत्वम् ? सम्बन्धानुभवक्षणेऽश्वादेस्तद्विषयत्वेनादृष्टेरित्यनुत्तरं यतो यदि यद्गोशब्दसङ्केतकाले दृष्टं ततोऽन्यत्र गोशब्दप्रवृत्तिर्नेष्यते तदैकस्मात्सङ्केतेन विषयीकृताच्छावलेयादिगोपिण्डादन्यद्बाहुलेयादि गोशब्देनापोह्यं न भवेत् । इतरेतराश्रयश्चाऽगोव्यवच्छेदेन हि गोः प्रतिपत्ति. । स चाऽगौर्गोनिषेधात्मा ततश्चागौरित्यत्रोत्तरपदार्थो वक्तव्यो यो न गौरित्यत्र नञा प्रतिषेध्येत । न ह्यनिर्ज्ञातस्वरूपस्य निषेधो विधातुं शक्यः । अथाऽगोनिवृत्यात्मा गौरेव । नन्वेवमगोनिवृत्तिस्वभावत्वाद्गोरगोप्रतिपत्तिद्वारेणैव प्रतीतिः । अगोश्च गोप्रतिषेधात्मकत्वाद्गोप्रतिपत्तिद्वारेणेति स्फुटमितरेतराश्रयत्वम् । अथाऽगोशब्देन यो गौर्निषिध्यते स विधिरूप एवागोव्यवच्छेदलक्षणापोहसिद्ध्यर्थम् । तेनेतरेतराश्रयत्वं न भविष्यति । यद्येव सर्वस्य शब्दस्यापोहोऽर्थ इत्येवमपोहकल्पना वृथा विधिरूपस्यापि शब्दार्थस्य भावात् । अन्यथेतरेतराश्रयो दुर्निवारः । तदुक्तम् । सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः । तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ।१। स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयः । सिद्धश्चेद्गौरपोहार्थं वृथापोहप्रकल्पनम् ।२। गव्यसिद्धे त्वगौर्नास्ति तदभावेप्यगौः कुतः । नाधाराधेयवृत्त्यादिसम्बन्धश्चाप्यभावयोः ।३। दिग्नागेन विशेषणविशेष्यभावसमर्थनार्थं नीलोत्पलादिशब्दा अर्थान्तरनिवृत्तिविशिष्टानर्थानाहुरित्युक्तम् । तदयुक्तम् । यस्य हि येन कश्चिद्वास्तवः सम्बन्धः सिद्धस्तत्तेन विशिष्टमिति वक्तुं युक्तम् । न च नीलोत्पलयोरनीलानुत्पल-

१ गदि ॥ २ शावलेयादौ ॥ ३ एकगो ॥ ४ कारणात् ॥ ५ गवाश्वयोर्भिन्नत्वादेकगोपोहाश्रयत्व नेत्युक्ते आह ॥ ६ समानम् ॥ ७ परमार्थभूतम् ॥ ८ भिन्नम् ॥ ९ विशेषेषु क्षणिकनिरंशादिषु ॥ १० शावलेयादिषु ॥ ११ गद्वेत ॥ १२ घटते इति शेष ॥ १३ अस्य शब्दस्यायमर्थ इति ॥ १४ ना ॥ १५ नरेण ॥ १६ निश्चीयते ॥ १७ स्वलक्षण ॥ १८ अपोहे ॥ १९ अपोहे समयसद्भावेपि ॥२० स्यात् ॥२१ अनुमानमप्यन्यापोह नाववोधयति ॥ २२ गोशब्देन सास्नादिमदर्थस्य अनुमानस्य कार्यस्वभावसम्भाव्यत्वात् । अन्यापोहस्य निरुपाख्यत्वेनानर्थक्रियाकारित्वेन च स्वभावकार्ययोरसम्भवात् ॥ २३ काले ॥ २४ ता ॥ २५ दर्शनाभावात् ॥ २६ दृष्ट ॥ २७ अन्ये ॥ २८ परेण ॥ २९ खण्डमुण्डादिनाना ॥ ३० गोशब्दस्याय वाच्य इति ॥ ३१ सौगतेन ॥ ३२ गोपिण्डम् ॥ ३३ अश्वादि व्यावर्त्यम् ॥ ३४ सङ्केतकाले सङ्केतेनाविषयीकृतत्वाद्बाहुलेयादे ॥ ३५ दूषणान्तरमाह ॥ ३६ कथम् ॥ ३७ गोशब्दा ॥ ३८ परेण त्वया ॥ ३९ समासारम्भे वाक्ये ॥ ४० पदार्थस्य ॥ ४१ पुरुषेण ॥ ४२ अश्वाद्यभावात्मा ॥ ४३ उत्तरपदार्थ ॥ ४४ भो सौगत ॥ ४५ ता ॥ ४६ उत्तरपदार्थस्य ॥ ४७ अभावे ॥ ४८ ता ॥ ४९ एव ॥ ५० प्रतीति ॥ ५१ पूर्वोक्तप्रकारेण ॥ ५२ साम्नादिमात्राभावरूप इति भाव ॥ ५३ नागोनिवृत्त्यात्मा ॥ ५४ स्वरूप ॥ ५५ तर्हि ॥ ५६ सति ५७ गोशब्देन ॥ ५८ एव सति ॥ ५९ उच्यते एव गौरित्युक्ते आह ॥ ६० विधिरूपेण ॥ ६१ अज्ञाते ॥ ६२ जैनेनोच्यते ॥ ६३ विशेष्यपदाभिधेयोऽभावो विशेष्य आधारश्च विशेषणपदाभिधेयोऽभावो विशेषणमाधेयमित्यभिप्राय परस्य(सौगतस्य)नीलो घट इत्यादिवत् ॥ ६४ न केवल सङ्केत ॥ ६५ कारिकोत्तरार्धं व्याचष्टे ॥ ६६ अनील अनुत्पलक्षण ॥ ६७ अभावगर्हितान् ॥ ६८ कथम् ॥ ६९ विशेषणत्व ॥ ७० विशेषणे ॥ ७१ अर्थरूपो ॥

व्यवच्छेदरूपत्वेनाभावरूपयोराधाराधेयत्वादिः[1] सम्बन्धः सम्भवति–नीरूपत्वात् । आदिग्रहणेन[2] संयोगसमवायैकार्थसमवायादिसम्बन्धग्रहणम् । न चासति वास्तवे सम्बन्धे तद्विशिष्टस्य[5] प्रतिपत्तिर्युक्ताऽतिप्रसङ्गात् । [6]नास्माकमनीलादिव्यावृत्त्या विशिष्टोऽनुत्पलादिव्यवच्छेदोऽभिमतो यतोयं दोषः स्यात् । किं तर्हि? अनीलानुत्पलाभ्यां व्यावृत्तं वस्त्वेव तथा[13] व्यवस्थितम्[14] । तच्चार्थान्तरव्यावृत्त्या विशिष्टं शब्देनोच्यते इत्यप्यपेशलं–स्वलक्षणस्याऽवाच्यत्वात् । न च स्वलक्षणस्याव्यावृत्त्या विशिष्टत्वं[20] सिद्ध्यति[21] यतो न वस्त्वपोहोऽसाधारणं तु वस्तु । न च वस्त्वऽवस्तुनोः सम्बन्धो युक्तो वस्तुद्वयाधारत्वात्तस्य । अस्तु वा सम्बन्धस्तथापि विशेषणत्वमपोहस्याऽयुक्तम् । न हि सत्तामात्रेण[22] किञ्चिद्विशेषणम्[23] । किं तर्हि? ज्ञातं सद्यत्स्वाकारानुरक्तया[27] बुद्ध्या विशेष्यं[24] रञ्जयति तद्विशेषणम्[25] । न चापोहेऽयं प्रकारः सम्भवति[26] । न ह्यश्वादिबुद्ध्यापोहोऽध्यवसीयते । किं तर्हि? वस्त्वेव । अपोहज्ञानासम्भवश्चोक्तः प्राक् । न चाज्ञातोप्यपोहो विशेषणं भवति । नागृहीतविशेषणा विशेष्ये बुद्धिरित्यभिधानात् । अस्तु वाऽपोहज्ञापनं तथाप्यर्थे[28] तदाकारबुद्ध्यभावात्तस्याऽविशेषणत्वम् । सर्वं हि विशेषणं स्वाकारानुरूपां[30] विशेष्ये बुद्धिं जनयद्दृष्टम् । न त्वन्यादृशं[31] विशेषणमन्यादृशी[32] बुद्धिं विशेष्ये जनयति[33] । न खलु नीलमुत्पले रक्तमिति प्रत्ययमुत्पादयति । दण्डो[34] वा कुण्डलीति । न चाश्वादिष्व[35]भावानुरक्ता[36] शाब्दी[37] बुद्धिरुपजायते । किन्तर्हि? [38]भावाकाराध्यवसायिनी । तथापि[39] विशेषणत्वे[40], सर्वं सर्वस्य विशेषणं स्यात्[41] । अनुरागे[42] वाऽभावरूपेण[43] वस्तुनः[44] प्रतीतेरवस्तुत्वमेव न स्यात्[45]–भावाभावयोर्विरोधात् । शब्देनाऽगम्यमानत्वाच्चाऽसाधारणवस्तुनो[46] न व्यावृत्त्या[47] विशिष्टत्वं[48] प्रत्येतुं शक्यम्[49] । उक्तं च । न चासाधारणं वस्तु गम्यतेपोहवत्तया । कथं वा परिकल्प्येत सम्बन्धो वस्त्ववस्तुनोः ॥ १ ॥ [50]स्वरूपसत्त्वमात्रेण न स्यात्किञ्चिद्विशेषणम् । [51]स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्

---

१ एकार्थसमवाय मातुलिङ्गलक्षणे रूपवद्रसादे ॥ २ आदिना तादात्म्यम् ॥ ३ नील ॥ ४ उत्पलस्य ॥ ५ विशेषणविशेष्यतया सह्यविन्ध्ययोरपि प्रतिपत्ति स्यादिति ॥ ६ भवतामय प्रसङ्ग इत्युक्ते सत्याह ॥ ७ जैनानाम् ॥ ८ रक्तादि ॥ ९ विशेषणेन ॥ १० अपघ्नादि ॥ ११ विशेष्य ॥ १२ न कुतोपि ॥ १३ नीलोत्पलरूपेण ॥ १४ इति जैन ॥ १५ अर्थ स्वलक्षणरूप ॥ १६ अनीलाऽनुत्पलरूप ॥ १७ इति सौगत ॥ १८ कुत ॥ १९ यद्वस्तु तत्स्वलक्षणमेवेति शब्देन ॥ २० सौगतमते ॥ २१ अन्यव्यावृत्तिरूप तु सामान्यमेव ॥ २२ अपोहोस्तीत्यस्तित्वमात्रेण ॥ २३ लोके ॥ २४ उत्पलम् ॥ २५ स्यात् ॥ २६ अज्ञातत्वादपोहस्य ॥ २७ न तावत्प्रत्यक्षेणापोहग्रहणमित्यादि ॥ २८ स्वलक्षणरूपे ॥ २९ स्थिरस्थूलाकार स्वलक्षणोस्तीति ज्ञायते न त्वभावरूपापोहाकार ॥ ३० सती सदृशीम् ॥ ३१ अभावरूपम् ॥ ३२ भावरूपाम् ॥ ३३ कथम् ॥ ३४ पुरुषस्य ॥ ३५ स्वलक्षणरूपेषु ॥ ३६ अपोहाशक्ता ॥ ३७ शब्दजनिता सविकल्पेत्यर्थ । बौद्धाना मते निर्विकल्पकज्ञानानन्तरोत्पन्नसविकल्पकज्ञानेन स्वलक्षणस्य निश्चयो यत ॥ ३८ स्थिरस्थूलाकार पदार्थाकार ॥ ३९ स्वाकारानुरूपबुद्ध्यजनकत्वेपि ॥ ४० अपोहस्य ॥ ४१ स्वाकारानुरूपबुद्ध्यजनकत्वाविशेषात् ॥ ४२ अश्वादिषु शब्दजबुद्धेरभावेन सहानुरागे सति ॥ ४३ यदा भावाकारो धृतस्तदाऽभावरूपमेव स्वलक्षण निश्चिनुयादिति भाव ॥ ४४ स्वलक्षणस्य ॥ ४५ कुत ॥ ४६ स्वलक्षणस्य ॥ ४७ अपोहेन ॥ ४८ अर्थान्तरव्यावृत्त्या विशिष्ट स्वलक्षणरूप वस्तु शब्देनोच्यत इति वदन्त वादिन प्रति समर्थनमुक्तमिति ज्ञेयम् ॥ ४९ अपोहस्य ॥ ५० कथ तर्हि विशेषण स्यादित्युक्ते आह ॥ ५१ स्वस्य=विशेषणस्य ॥

। २ । न चाप्यश्वादिशब्देभ्यो जायतेपोहभासनम् । विशेष्ये बुद्धिरिष्टेह न चाज्ञातविशेषणा । ३ । न चान्यरूपमन्यादृक् कुर्याज्ज्ञानं विशेषणम् । कथं वाऽन्यादृशे ज्ञाने तदुच्येत विशेषणम् । ४ । अथान्यथा विशेष्येपि स्याद्विशेषणकल्पना । तथा सति हि यत्किञ्चित्प्रसज्येत विशेषणम् । ५ । अभावगम्यरूपे च न विशेष्येस्ति वस्तुता । विशेषितमपोहेन वस्तु वाच्यं न तेऽस्त्यतः । ६ । शब्देनागम्यमानं च विशेष्यमिति साहसम् । तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः । ७ । इतश्च सामान्यं वस्तुभूतं शब्दविषयो, यतो व्यक्तीनामसाधारणवस्तुरूपाणामशब्दवाच्यत्वान्न व्यक्तीनामपोह्यता—अनुक्तस्य निराकर्तुमशक्यत्वादपोह्येत सामान्यं—तस्य वाच्यत्वात् । अपोहानां त्वभावरूपतयाऽपोह्यत्वासम्भवात्, अभावानामभावाभावात्, वस्तुविषयत्वात्प्रतिषेधस्यापोह्यत्वेऽपोहानां वस्तुत्वमेव स्यात् । तस्मादश्वादौ गवादेरपोहो भवन् सामान्यभूतस्यैव भवेदित्यपोह्यत्वाद्वस्तुत्वं सामान्यस्य । तदुक्तम् । यदा चाऽशब्दवाच्यत्वान्न व्यक्तीनामपोह्यता । तदापोह्येत सामान्यं तस्यापोहाच्च वस्तुता । १ । नाऽपोह्यत्वमभावानामभावाऽभाववर्जनात् । व्यक्तोऽपोहान्तरेऽपोहस्तस्मात्सामान्यवस्तुनः । २ । किञ्चापोहानां परस्परतो वैलक्षण्यं वा स्यादवैलक्षण्यं वा ? तत्राद्यपक्षे भावस्यागोशब्दाभिधेयस्याभावो गोशब्दाभिधेयः । स चेत्पूर्वोक्तादभावाद्विलक्षणस्तदा भाव एव भवेदभावनिवृत्तिरूपत्वाद्भावस्य । न चेद्विलक्षणस्तदा गौरप्यगौः प्रसज्येत तदवैलक्ष्येण तादात्म्यप्रतिपत्तेः । तन्न वाच्याभिमतापोहानां भेदसिद्धिर्नापि वाचकाभिमतानाम् । तथा हि । शब्दानां भिन्नसामान्यवाचिनां विशेषवाचिनां च परस्परतोऽपोहभेदो वासनाभेदनिमित्तो वा स्याद्वाच्यापोहभेदनिमित्तो वा ? प्रथमपक्षोऽयुक्तोऽवस्तुनि वासनाया एवासम्भवात् । तदसम्भवश्च तद्धेतोर्निर्विषयप्रत्ययस्यायोगात् । नापि वाच्यापोहभेदनिमित्तस्तद्भेदस्य प्रागेव कृतोत्तरत्वात् । ननु प्रत्य-

१ प्रतीति ॥ २ जगति ॥ ३ अभावरूपम् ॥ ४ भावरूपम् ॥ ५ विशेष्ये ॥ ६ जैनानामिद दूपण न जायते तेपा सर्वं वस्तु भावाभावात्मक यत ॥ ७ भावरूपे ॥ ८ अभावरूपे ९ परेण ॥ १० यदि ११ भावरूपे ॥ १२ अपोहस्य ॥ १३ अनिर्वचनीयम् ॥ १४ स्वलक्षणरूपे ॥ १५ विशेषणेन ॥ १६ स्वलक्षणरूपम् ॥ १७ शब्देन ॥ १८ सौगतस्य ॥ १९ अपोहस्य विशेषणस्य ॥ २० स्वलक्षणम् ॥ २१ येन कारणेनापोहशब्दयोर्वाच्यवाचकभावो नास्ति तेन ॥ २२ शब्दजनितबुद्ध्या गम्य शब्देन वाच्यश्च ॥ २३ गोत्वादि ॥ २४ स्वलक्षणस्यावाच्यत्व कुत ? सङ्केताभावात् ॥ २५ शब्देनावाच्यस्य ॥ २६ अपोहितुम् ॥ २७ शब्देन ॥ २८ अन्यव्यावृत्तीनाम् (सर्वेषा पदार्थानामपोहरूपत्वात्सर्वे भावा अपोहा ) ॥ २९ व्यावर्त्यत्व ॥ ३० अत्र खरविषाणवद्दृष्टान्त ॥ ३१ अपोहानाम् ॥ व्यावर्त्यानाम् ॥ ३२ व्यावर्त्यत्वे ॥ ३३ अङ्गीक्रियमाणे परेण ॥ ३४ अभावाभावानाम् ॥ ३५ वर्तमान ॥ ३६ हेतो ॥ ३७ स्वलक्षणा ॥ ३८ वस्तुविषयो निषेधो यत ॥ ३९ निषेधस्य निषेधासम्भवात् ॥ ४० अपोह्या(?)न्तरेऽश्वादौ ॥ ४१ गौ ॥ ४२ व्यक्तीनामपोहाना चापोहता नास्ति यस्मात् ॥ ४३ एव ॥ ४४ ता ॥ ४५ गोशब्दाश्वशब्दवाच्यानामन्यव्यावृत्तीनाम् ॥ ४६ विसदृशता ॥ ४७ अश्व ॥ ४८ वाच्यस्य ॥ ४९ गोशब्दाभिधेयोऽभावो यत ॥ ५० अगोशब्दाभिधेयात् ॥ ५१ द्वितीयपक्षे दूषणमुद्भावयन्ति ॥ ५२ एकस्वरूप ॥ ५३ भवेत् ॥ ५४ भिन्नपदार्थ ॥ ५५ तस्मादगोशब्दवाच्यादपोहादवैलक्षण्य गोशब्दवाच्यस्यापोहस्य ॥ ५६ एकत्वात् ॥ ५७ गोशब्दाऽगोशब्दवाच्यापोहयो ॥ ५८ अर्थ ॥ ५९ शब्द ॥ ६० अपोहानाम् ॥ ६१ गोलक्षणाश्वलक्षण ॥ ६२ खण्डमुण्डादि ॥ ६३ शब्दापोहभेद ॥ ६४ पूर्वविकल्पज्ञान शब्दविषय वासना ॥ ६५ एव ॥ ६६ वस ॥ ६७ अर्थ ॥ ६८ वाचकापोहे ॥ ६९ वासनाकारणस्य ॥ ७० तुच्छरूपत्वानिर्विषयत्वमपोहस्य सविकल्पकज्ञानस्य ॥

क्षेणैव शब्दानां कारणभेदाद्विरुद्धधर्माध्यासाच्च भेदः प्रसिद्ध एवेत्यप्यसाम्प्रतं यतो वाचकं शब्दमङ्गीकृत्यैवमुच्यते । न च श्रोत्रज्ञानप्रतिभासिस्वलक्षणात्मा शब्दो वाचकः सङ्केतकालानुभूतस्य व्यवहारकालेऽचिरनिरुद्धत्वात् । इति न स्वलक्षणस्य वाचकत्वं भवदभिप्रायेण । तदुक्तम् । नार्थशब्दविशेषेण वाच्यवाचकतेष्यते । तस्य पूर्वमदृष्टत्वात्सामान्यं तूपदिश्यते । १ । तत्र शब्दान्तरापोहे सामान्ये परिकल्पिते । तथैवावस्तुरूपत्वाच्छब्दभेदो न कल्प्यते । २ । ततो ये अवस्तुनी न तयोर्गम्यगमकभावो, यथा खपुष्पखरविषाणयोः । अवस्तुनी च वाच्यवाचकापोहौ भवतामिति । ननु मेघाभावाद्वृष्ट्यभावप्रतिपत्तेरनैकान्तिकता हेतोरित्यप्ययुक्तम् । तद्विविक्ताकाशालोकात्मकं हि वस्तु मत्पक्षेऽत्रापि प्रयोगेस्त्येव–अभावस्य भावान्तरस्वभावत्वप्रतिपादनात् । भवत्पक्षे तु न केवलमपोहयोर्विवादास्पदीभूतयोर्गम्यगमकत्वाभावोपि तु वृष्टिमेघाद्यभावयोरपि । किञ्चापोहो वाच्योऽर्थोवाच्यो वा ? वाच्यश्चेत्किं विधिरूपेणान्यव्यावृत्त्या वा ? यदि विधिरूपेण, कथमपोहः सर्वशब्दार्थः ? अथान्यव्यावृत्या तर्हि नापोहोपि शब्दाधिगम्यो मुख्यः । अनवस्था च तद्व्यावृत्तेरपि व्यावृत्त्यन्तरेणाभिधानात् । अथाऽवाच्यस्तर्ह्यन्यशब्दार्थोऽपोहं शब्दः प्रतिपादयतीत्यस्य व्याघातः । किञ्च नान्यापोहः अनन्यापोह इत्यादौ विधिरूपादन्यद्वाच्यं नोपलभ्यते प्रतिषेधद्वयेन विधेरेवाध्यवसायात् । कश्चायमन्यापोहशब्दवाच्योर्थो यत्रान्यापोहसंज्ञा स्यात् ? अथ विजातीयव्यावृत्तानर्थानाश्रित्यानुभवादिक्रमेण यदुत्पन्नं विकल्पज्ञानं तत्र

---

१ गवादीनाम् ॥ २ ताल्वादि ॥ ३ भिन्न ॥ ४ अध्यासो ग्रहणम् ॥ ५ पारमार्थिकार्थस्य ॥ ६ परेण सौगतेन ॥ ७ स्वलक्षणरूपशब्दस्य ॥ ८ विनष्टत्वात् ॥ ९ हेतो ॥ १० शब्दस्वभावस्य ॥ ११ बौद्ध ॥ १२ अस्वलक्षणरूपै शब्दैरस्वलक्षणरूपार्थप्रतिपादने न किञ्चित्साध्यसिद्धिर्बौद्धमते इत्यभिप्राय ॥ १३ परेण ॥ १४ सङ्केतकालात् ॥ १५ अज्ञातत्वात् ॥ १६ उत्तरकाले ॥ १७ अर्थशब्दयो ॥ १८ तर्हि सामान्याकारेण वाच्यवाचकतास्त्वित्याशङ्कायामाह ॥ सामान्यस्य वाच्यवाचकतयोपदेशो च ॥ १९ गोशब्दादश्वशब्द शब्दान्तर तेन वाच्योऽपोहस्तत्र ॥ २० अवास्तवे ॥ परिकल्पितप्रकारेण ॥ २१ शब्दानाम् ॥ २२ सामर्थ्यते ॥ २३ सौगतानाम् ॥ २४ अभावरूपयोरपि गम्यगमकभावोस्तीति वक्ति बौद्ध ॥ २५ गम्यगमकभावसद्भावात् ॥ २६ अवस्तुत्वादिति ॥ २७ मेघादिभिन्न ॥ २८ जैन ॥ २९ सौगत ॥ ३० वाच्यवाचकयो ॥ ३१ तुच्छरूपत्वात् ॥ ३२ अन्यस्य ॥ ३३ शब्देन ॥ ३४ अथवा ॥ ३५ शब्देन ॥ ३६ अस्तित्वसद्भावेन ॥ ३७ एव ॥ ३८ अपोहस्य विधिरूपेण वाच्यत्वात्सर्वशब्दार्थोऽपोह एव न भवतीत्यर्थ ॥ ३९ अपोह ॥ ४० न केवल स्वलक्षणम् ॥ ४१ अन्यव्यावृत्तिरपि वाच्याऽवाच्या वा स्यात् ? अवाच्या तदाऽवाच्ययान्यव्यावृत्त्या कथमपोहो वाच्योतिप्रसङ्गात् । अथ वाच्या किं विधिरूपेणान्यव्यावृत्त्या वा ? न तावद्विधिरूपेणोक्तदोषानुषङ्गात् । अथान्यव्यावृत्त्या अन्यव्यावृत्तिर्वाच्या चेत्तत्राप्यन्यव्यावृत्तिर्यया वाच्या सापि वाच्याऽवाच्या वेत्यादिप्रकारेणानवस्था ॥ ४२ कुत ॥ ४३ शब्देन ॥ ४४ अश्व ॥ ४५ यस ॥ ४६ अश्वलक्षण ॥ ४७ गौरिति ॥ ४८ मतस्य ॥ ४९ अपोहस्याऽवाच्यत्वात् ॥ ५० सर्वेषा परस्परेण व्यावृत्तिस्वभावो यत ॥ ५१ अविधिरूपम् । वस्तु ॥ ५२ आदौ यो नञ् स एकोपोहो द्वितीयेन तस्याप्यपोह । द्वौ नञौ प्रकृतमर्थं गमयत ॥ ५३ इति ॥ ५४ सङ्केत ॥ ५५ ॥ कश्चिद्बौद्धविशेष प्राह ॥ ५६ अश्वादिभ्य ॥ ५७ खण्डमुण्डादिस्वलक्षणान् ॥ ५८ प्रथम खण्डमुण्डाद्यनुभवो नाम निर्विकल्पक दर्शन, तदनु विकल्पवासनाप्रबोधस्तदनु सङ्केतकालगृहीतवाच्यवाचकस्मरण तदन्वित वाच्यवाचकमिति योजन, तदनु विकल्पोय गौरिति ॥

यत्प्रतिभाति ज्ञानात्मभूतं विजातीयव्यावृत्तार्थाकारतयाध्यवसितमर्थप्रतिविम्बकं तत्रान्यापोह इति संज्ञा। ननु विजातीयव्यावृत्तपदार्थानुभवद्वारेण शाब्दं विज्ञानं तथाभूतार्थाध्यवसाय्युत्पद्यते इत्यत्राविवाद एव। किन्तु तत्तथाभूतपारमार्थिकार्थग्राह्यभ्युपगन्तव्यमध्यवसायस्य ग्रहणरूपत्वात्। विजातीयव्यावृत्तेश्च समानपरिणामरूपवस्तुधर्मत्वेन व्यवस्थापितत्वान्नाममात्रमेव भिद्येत। यच्चोक्तं 'तत्प्रतिविम्बकं च शब्देन जन्यमानत्वात्तस्य कार्यमेवेति। कार्यकारणभाव एव वाच्यवाचकभावः' तदप्ययुक्तं शब्दाद्विशिष्टसङ्केतसव्यपेक्षाद्वाह्यार्थे प्रतिपत्तिप्रवृत्तिप्राप्तिप्रतीतेः। स एवास्यार्थो युक्तो, न तु विकल्पप्रतिविम्बकमात्रं शब्दात्तस्य वाच्यतयाऽप्रतीतेः। अतोऽयुक्तमुक्तं "प्रतिविम्बस्य मुख्यमन्यापोहत्वं विजातीयव्यावृत्तस्वलक्षणस्यान्यव्यावृत्तेश्चौपचारिकम्" इति। अन्यापोहस्य हि वाच्यत्वे मुख्योपचारकल्पना युक्तिमती। तच्चास्य नास्तीत्युक्तम्। ततः प्रतिनियताच्छब्दात्प्रतिनियतेऽर्थे प्राणिनां प्रवृत्तिदर्शनात्सिद्धं शब्दप्रत्ययानां वस्तुभूतार्थविषयत्वम्। प्रयोगः। ये परस्परासङ्कीर्णप्रवृत्तयस्ते वस्तुभूतार्थविषयाः। यथा श्रोत्रादिप्रत्ययाः। परस्पराऽसङ्कीर्णप्रवृत्तयश्च दण्डीत्यादिशाब्दप्रत्यया इति। न चायमसिद्धो हेतुर्दण्डी विषाणीत्यादिधीध्वनी हि लोके द्रव्योपाधिकौ प्रसिद्धौ, शुक्लः कृष्णो भ्रमति चलतीत्यादिकौ तु गुणक्रियानिमित्तौ, गौरश्व इत्यादी सामान्यविशेषोपाधी, इहात्मनि ज्ञानमित्यादिकौ सम्बन्धोपाधिकावेवेति प्रतीतेः। ननु चाकृतसमया ध्वनयोऽर्थाभिधायकाः कृतसमया वा? प्रथमपक्षेऽतिप्रसङ्गः। द्वितीयपक्षे तु क तेषां सङ्केतः? स्वलक्षणे जातौ वा तद्योगे वा जातिमत्यर्थे वा बुद्ध्याकारे वा? प्रकारान्तरासम्भवात्। न तावत्स्वलक्षणे। समयो हि व्यवहारार्थं क्रियमाणः सङ्केतव्यवहारकालव्यापके वस्तुनि युक्तो, नान्यत्र। न च स्वलक्षणस्य सङ्केतव्यवहारकालव्यापकत्वं शावलेयादिव्यक्तिविशेषाणां देशादिभेदेन परस्परतोऽत्यन्तव्यावृत्ततयाऽन्वयाभावात्तत्रानन्त्येन सङ्केतासम्भवाच्च। विकल्पबुद्धावध्याहृत्य तेषु सङ्केताभ्युपगमे विकल्पस-

१ अश्वादिभ्य ॥ २ ज्ञानादभेदरूपम् ॥ ३ जैनवौद्धयो ॥ ४ ज्ञाने ज्ञानस्वरूपार्थाकारोऽपोह इति वौद्धविशेषस्याऽभिप्राय ॥ ५ श्रावणप्रत्यक्षम् ॥ ६ निश्चयस्य ॥ ७ सौगतेन ॥ ८ पदार्थाना ज्ञानस्य ॥ ९ वौद्धमते ॥ १० खण्डमुण्डादिस्वव्यक्त्यपेक्षया ॥ ११ विजातीयव्यावृत्ति समानपरिणामरूपसामान्य चेति ॥ १२ स्वग्रन्थे ॥ १३ अर्थे । ज्ञाने ॥ १४ घटपटादिलक्षणे ॥ १५ अर्थतया ॥ १६ सम्वन्धिन्या ॥ १७ तथा हि ॥ १८ शब्देन ॥ १९ किश्चापोहावाच्योथेत्यादिना ॥ २० शब्दार्थोऽपोहो विचार्यमाणो न घटते यत ॥ २१ परमार्थ ॥ २२ वस ॥ २३ असङ्कलित ॥ २४ लोचनादिज्ञानानि ॥ २५ द्वन्द्व ॥ २६ ध्वनि शब्द ॥ २७ उपाधि =विशेषण कारणमित्यर्थ ॥ २८ धीध्वनी ॥ २९ धीध्वनी ॥ ३० गोत्वादि ॥ ३१ अश्वादेर्व्यावर्त्तमानत्वात्तदेव विशेष ॥ ३२ धीध्वनी ॥ ३३ सवन्ध =समवाय ॥ ३४ अत्र प्रतिविधीयते इत्येतावत प्राक् सौगत पूर्वपक्षयति ॥ ३५ घटादिवाचका ॥ ३६ घटशब्द पटाभिधायको भवतु सङ्केताभावात् ॥ ३७ सदृशपरिणामलक्षणे सकेतोस्ति ॥ ३८ वुद्धावर्थाकारे ॥ ३९ प्रतिविम्बके ॥ ४० क्षणिकादिरूपे ॥ ४१ प्रवृत्तिनिवृत्तिरूप ॥ ४२ स्थायिनि ॥ ४३ अव्यापके क्षणिके ॥ ४४ आदिना खण्डमुण्डाशवलादीनाम् ॥ ४५ आदिना कालस्वरूपस्वभावा ॥ ४६ खण्डो मुण्डादत्यन्तव्यावृत्त इति सम्बन्धाभावात् ॥ ४७ यो यत्रैव स तत्रैव यो यदैव तदैव स । न देशकालयोर्व्याप्तिर्भावानामिह विद्यते ॥ ४८ यो यो गोशब्द स स मुण्डवाचक इति ॥ ४९ व्यक्तिषु ॥ ५० गोशब्दस्य ॥ ५१ सर्वव्यक्तयो गोशब्देन वाच्या इति आरोप्य ॥ ५२ जैनादिना ॥

मारोपितार्थविषय एव शब्दसङ्केतो, न परमार्थवस्तुविषयः स्यात् । स्थिरैकरूपत्वाद्धिमाचलादिभावानां सङ्केतव्यवहारकालव्यापकत्वेन समयसम्भवोऽप्यसम्भाव्यस्तेषामप्यनेकाणुप्रचयस्वभावानां प्रादुर्भावानन्तरमेवापवर्गितया तदसम्भवात् । किञ्चैतेषु समयः क्रियमाणोऽनुत्पन्नेषु क्रियेतोत्पन्नेषु वा ? न तावदनुत्पन्नेषु परमार्थतः समयो युक्तोऽसतः सर्वोपाख्यारहितस्याधारत्वानुपपत्तेः । नाप्युत्पन्नेषु तस्यार्थानुभवशब्दस्मरणपूर्वकत्वाच्छब्दस्मरणकाले चार्थस्य प्रध्वंसात् । सर्वेषां स्वलक्षणक्षणानां सादृश्यमैक्येनाध्यारोप्य सङ्केतविधाने सिद्धं स्वलक्षणस्याऽवाच्यत्वं—बुद्ध्यारोपितसादृश्यस्यैवाभिधानैरभिधानात् । वाच्यत्वे वा शब्दबुद्धेः स्पष्टप्रतिभासप्रसङ्गः । न चैवम् । न खलु यथेन्द्रियबुद्धिः स्पष्टप्रतिभासा प्रतिभासते तथा शब्दबुद्धिः । प्रयोगश्च । यो यत्कृते प्रत्यये न प्रतिभासते न स तस्यार्थः । यथा रूपशब्दप्रभवप्रत्यये रसाप्रतिभासने नासौ तदर्थः । न प्रतिभासते च शाब्दप्रत्यये स्वलक्षणमिति । उक्तं च । अन्यथैवाग्निसम्बन्धाद्दाहं दग्धो हि मन्यते । अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते । १ । न चैकस्य वस्तुनो रूपद्वयमस्ति येनास्पष्टं वस्तुगतमेव रूपं शब्दैरभिधीयेत एकस्य द्वित्वविरोधात् । तन्न स्वलक्षणे सङ्केतः । नापि जातौ । तस्याः क्षणिकत्वे स्वलक्षणस्यैवान्वयाभावान्न सङ्केतः फलवान् । अक्षणिकत्वे तु क्रमेण ज्ञानोत्पादकत्वाभावः । नित्यैकस्वभावस्य परापेक्षाप्यसम्भाव्या । प्रतिषिद्धा चेयं यथास्थानम् । इत्यलमतिप्रसङ्गेन । नापि तद्योगे सङ्केतस्तस्यापि समवायादिलक्षणस्य निराकृतत्वात् । जातितद्योगयोश्चासम्भवे तद्वतोप्यर्थस्यासम्भवात्कथं तत्रापि सङ्केतो बुद्ध्याकारे वा ? स हि बुद्धितादात्म्येन स्थितत्वान्न बुद्ध्यन्तरं प्रतिपाद्यमर्थं वानुगच्छति । किञ्चैतैः शब्दादर्थक्रियार्थी पुरुषोऽर्थक्रियाक्षमानर्थान्विज्ञाय प्रवर्तिष्यते इति मन्यमानैर्व्यवहर्तृभिरभिधायका नियुज्यन्ते, न व्यसनितया । न चासौ विकल्पबुद्ध्याकारोऽर्थिनोभिप्रेतं शीतापनोदादिकार्यं सम्पादयितुं समर्थः । किञ्च

---

१ नस ॥ २ वस ॥ ३ पदार्थानाम् ॥ ४ सङ्केत ॥ ५ विनाशितया ॥ ६ शावलेयादिविशेषेषु ॥ ७ अजातेषु ॥ ८ उपाख्या स्वभाव ॥ ९ समयस्य ॥ १० अयमस्य शब्दस्य वाच्य इति॥ ११ त्रिकालत्रिलोकोदरवर्तिनाम् ॥ १२ सदृशापरापरोत्पत्त्या यत्सादृश्यम् ॥ १३ अभेदेन ॥ १४ अङ्गीक्रियमाणे जैनादिना ॥ १५ शब्देन ॥ १६ आरोपितसामान्यस्यैव वाच्यत्व शब्देन यत ॥ १७ शब्दे जाताया १८ स्वलक्षणस्य ॥ १९ उपर्युक्तसमर्थनम् ॥ २० नेत्रादि ॥ २१ स्वलक्षणरूपोर्थ ॥ २२ सष्टत्वेन ॥ २३ ॥ रस ॥ २४ पर्शनेन्द्रियेण ॥ २५ साक्षात् ॥ २६ दाहमित्युक्ते मुख्य दह्यते ॥ २७ पुमान् ॥ २८ अस्पष्टत्वेन ॥ २९ सष्टत्वास्पष्टत्वे ॥ ३० युक्तिसिद्धम् ॥ ३१ स्पष्टास्पष्टत्वलक्षणम् ॥ ३२ रूपस्य ॥ ३३ परमार्थभूत ॥ ३४ कुत ॥ ३५ जाते ॥ ३६ गोत्वादिसामान्ये ॥ ३७ भवेत् ॥ ३८ अनुस्यूतत्वे ॥ ३९ तस्या जाते ॥ ४० पर=निमित्तम् ॥ ४१ जाति ४२ जातौ सङ्केतनिराकरणप्रसङ्गेन ॥ ४३ पक्षान्तरम् ॥ ४४ तयो स्वलक्षणजात्यो सम्बन्धे ॥ ४५ आदिना सयोगतादात्म्यादेश्च, ॥ ४६ शब्देन ४७ अर्थस्य ॥ ४८ नान्वेति ॥ ४९ अत केन साक सङ्केत , स्यात् ॥ ५० विवक्षितत्वात् ॥ ५१ जैनमताभिप्राय वक्ति सौगत ॥ ५२ अर्थ =प्रयोजनम् ५३ शब्दा ॥ ५४ कार्यं विना प्रवृत्तिर्व्यसनम् ॥ ५५ अर्थस्य ॥ ५६ पुरुषस्य ॥

बुद्ध्याकारे शब्दसङ्केताभ्युपगमेऽपोहवादिपक्ष एवाभ्युपगतो भवेत्। तथा हि। अपोहवादिनापि बुद्ध्याकारो बाह्यरूपतयाध्यवसितः शब्दार्थोऽभीष्ट एवार्थविवक्षां च कार्यतया शब्दो गमयति। यथा धूमोऽग्निमिति।

अत्र प्रतिविधीयते। कृतसमया एव ध्वनयोऽर्थाभिधायकाः। समयश्च सामान्यविशेषात्मकेऽर्थेऽभिधीयते, न जात्यादिमात्रे। तथाभूतश्चार्थो वास्तवः सङ्केतव्यवहारकालव्यापकत्वेन प्रमाणसिद्धः सामान्यविशेषात्मा तदर्थ इत्यत्रातिविस्तरेण वर्णयिष्यते। सामान्यविशेषयोर्वस्तुभूतयोस्तत्सम्बन्धस्य चात्र प्रमाणतः प्रसाधयिष्यमाणत्वात्। न चात्राप्यानन्त्याद्व्यक्तीनां परस्परानुगमाच्च सङ्केताऽसम्भवः समानपरिणामापेक्षया क्षयोपशमविशेषाविर्भूतोहाख्यप्रमाणेन तासां प्रतिभासमानतया सङ्केतविषयतोपपत्तेः। कथमन्यथानुमानप्रवृत्तिस्तत्राप्यानन्त्याननुगमरूपतया साध्यसाधनव्यक्तीनां सम्बन्धग्रहणासम्भवात्। अन्यव्यावृत्त्या सम्बन्धग्रहणमित्यप्यसत्—तस्या एव सदृशपरिणामसामान्यासम्भवे असम्भाव्यमानत्वात्। न चाऽसदृशेष्वप्यर्थेषु सामान्यविकल्पजनकेषु तद्दर्शनद्वारेण सदृशव्यवहारे हेतुत्वं—नीलादिविशेषाणामप्यभावानुषङ्गात्। यथा हि परमार्थतोऽसदृशा अपि तथाभूतविकल्पोत्पादकदर्शनहेतवः सदृशव्यवहारभाजो भावास्तथा स्वयमनीलादिस्वभावा अपि नीलादिविकल्पोत्पादकदर्शननिमित्ततया नीलादिव्यवहारभाक्त्वं प्रतिपत्स्यन्ते। सदृशपरिणामाभावे चार्थानां सजातीयेतरव्यवस्थाऽसम्भवात्कुतः कस्य व्यावृत्तिः? अन्यव्यावृत्त्या सम्बन्धावगमेऽपि चैतत्सर्वं समानं तत्रानन्त्याननुगमरूपत्वस्याऽविशेषात्। ततो ये यत्र भावतः

१ अर्थप्रतिविम्बरूपे ॥ २ जैनेन ॥ ३ सौगत ॥ ४ जैनस्य ॥ ५ सौगतेन ॥ ६ ज्ञानात्मा बुद्ध्याकार एव बाह्यार्थो नापर कश्चिदित्यभिप्रायो बौद्धविशेषस्य ॥ ७ आन्तरार्थस्य वक्तुमिच्छा ज्ञानस्वभावा शब्दस्य कारणभूताम् ॥ ८ कार्यरूप ॥ ९ ज्ञापयति ॥ १० ज्ञानस्वभावा विवक्षा एव बाह्यार्थ शब्दविषयो नापर कश्चिदित्यपि बौद्धविशेषाभिप्राय ॥ अन्यापोहरूपो बुद्ध्याकाररूपो विवक्षारूप एव त्रिविध शब्दविषयो बौद्धमते इति ज्ञेयम् ॥ ११ कार्यम् ॥ १२ कारणम् ॥ १३ परकृतपक्षे ॥ १४ शब्दा ॥ १५ वाचका ॥ १६ तादात्म्यस्वरूपे ॥ १७ परार्थे ॥ १८ क्रियते ॥ १९ केवलाया जातौ केवले विशेषे वा नाभिधीयते ॥ २० सङ्केतितार्थो नास्तीत्युक्ते आह ॥ २१ सूत्रे ॥ २२ जैनाचार्यै ॥ २३ प्रत्यक्षादित ॥ २४ व्यवहारकाले ॥ २५ अस्य शब्दस्यायमर्थ इत्येवरीत्या ॥ २६ सदृश ॥ २७ ये ये त्रिकालत्रिलोकोदरवर्तिन. सास्नादिमन्तस्ते ते गोशब्देन वाच्या इत्येवम् ॥ २८ कुत ॥ २९ अनुमानव्यवहारकाले ॥ ३० परस्पर ॥ ३१ असाध्यासाधनरूपेण ॥ ३२ अविनाभावलक्षण ॥ ३३ या गोव्यक्तयस्ता गोशब्देन वाच्या इति ॥ ३४ पूर्वं निराकृतत्वात् ॥ ३५ खण्डादिषु ॥ ३६ सामान्यरूपश्चासौ विकल्पश्च ॥ ३७ अयमनेन सदृश इति विकल्पोय गौरय गौरिति विकल्प ॥ ३८ विसदृशार्थे ॥ ३९ प्रतीति ॥ ४० मुखेन ॥ ४१ कथम् ? तथा हि ॥ ४२ खण्डमुण्डादय पदार्था ॥ ४३ सन्त ॥ ४४ स्यु ॥ ४५ स्वरूपेण ॥ ४६ नीललक्षणभावा ॥ ४७ विकल्प =ज्ञानम् ॥ ४८ सामान्य ॥ ४९ सास्नादिमत्त्वादिना ॥ ५० गोघटपटादीनाम् ॥ ५१ विजातीय ॥ ५२ कस्मात् ॥ ५३ साध्यसाधनव्यक्तीनाम् ॥ ५४ किंच ॥ ५५ सङ्केतपक्षे यत्परेणोच्यते ॥ ५६ अन्यव्यावृत्तिविषयकम् ॥ ५७ अन्यव्यावृत्तयोऽनन्ता इत्येवम् ॥ ५८ व्यावृत्तिग्रहणकाले ॥ ५९ साध्यसाधनव्यक्तीना सम्बन्धावगमो यथा वस्तुनि शब्दस्य सङ्केतपरिज्ञानमपि तथा स्याद्यत ॥ ६० वस्तुनि ॥ ६१ परमार्थत ॥

कृतसमया न भवन्ति न ते तस्याभिधायकाः । यथा सास्नादिमत्यर्थेऽकृतसमयोऽश्वशब्दः । न भवन्ति च भावतः कृतसमयाः सर्वस्मिन्वस्तुनि सर्वे ध्वनय इत्यत्र प्रयोगेऽसिद्धो हेतुरुक्तप्रकारेणार्थे ध्वनीना समयसम्भवात् । यच्च हिमाचलादिभावानामप्यनेकपरमाणुप्रचयात्मनां क्षणिकत्वेन समयासम्भव इत्युक्तं तदप्युक्तिमात्रं सर्वथा क्षणिकत्वस्य बाह्याध्यात्मिकार्थे प्रतिपेत्स्यमानत्वात् । तथा चोत्पन्नेष्वप्यर्थेषु सङ्केतसम्भवादयुक्तमुक्तमुत्पन्नेष्वनुत्पन्नेषु वा सङ्केतासम्भव इत्यादि । ननु शब्देनार्थस्याभिधेयत्वे साक्षादेवातोऽर्थप्रतिपत्तेरिन्द्रियसंहतेर्वैफल्यप्रसङ्गः + तन्नातोऽर्थस्याऽस्पष्टाकारतया प्रतिपत्तेः । स्पष्टाकारतया तत्प्रतिपत्त्यर्थमिन्द्रियसंहतिरप्युपपद्यते एवेति कथं तस्या वैफल्यम्? स्पष्टाऽस्पष्टाकारतयार्थप्रतिभासभेदश्च सामग्रीभेदान्न विरुध्यते दूरासन्नार्थोपनिबद्धेन्द्रियप्रतिभासवत् । अथाऽसत्यप्यर्थेऽतीतानागतादौ शब्दस्य प्रवृत्ति[त्ते]र्नास्यार्थाभिधायकत्वं तदसत्त्वस्येदानीमभावेपि स्वकाले भावात् । अन्यथा प्रत्यक्षस्याप्यर्थविषयत्वाभावः स्यात् तद्विषयस्यापि तत्कालेऽभावात् । अविसंवादस्तु प्रमाणान्तरप्रवृत्तिलक्षणोऽध्यक्षवच्छब्देप्यनुभूयत एव । आसीद्वह्निरित्याद्यतीतविषये वाक्ये विशिष्टभस्मादिकार्यदर्शनोद्भूतानुमानेन संवादोपलब्धेः +चन्द्रार्कग्रहणाद्यनागतार्थविषये तु प्रत्यक्षप्रमाणेनैव। क्वचिद्विसंवादात्सर्वत्र शाब्दस्याऽप्रामाण्ये प्रत्यक्षस्यापि क्वचिद्विसंवादात्सर्वत्राप्रामाण्यप्रसङ्गः । ततो निराकृतमेतत् "अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचरः । शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते । १ । अन्यथैवाग्निसम्बन्धाद्दाहं दग्धोभिमन्यते । अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते । २ ।" इत्यादि । सामग्रीभेदाद्विशदेतरप्रतिभासभेदो न पुनर्विषयभेदात्—सामान्यविशेषात्मकार्थविषयतया सकलप्रमाणानां तद्भेदाभावादित्यग्रे वक्ष्यमाणत्वात् । ततो यो यत्कृते प्रत्यये न प्रतिभासते इत्यादिप्रयोगे हेतुरसिद्धः सामान्यविशेषात्मार्थलक्षणस्वलक्षणस्य शाब्दप्रत्यये प्रतिभासनात् । प्रयोगः । यद्यत्र व्यवहृतिमुपजनयति तत्तद्विषयम् । यथा सामान्यविशेषात्मके वस्तुनि

१ सास्नादिमदर्थाभिधायको न भवति यत ॥ २ परकृते ॥ ३ भावतोऽकृतसमयत्वादिति ॥ ४ समानपरिणामापेक्षयेत्यादिना ॥ ५ परेण ॥ ६ घटादौ ॥ ७ ज्ञानादौ ॥ ८ परेण ॥ ९ प्रतिपाद्यते ॥ १० अव्यव धानेन ॥ ११ श्रूयमाणाच्छब्दात् ॥ १२ चक्षुरादिसमूहस्य ॥ १३ सूक्ष्म् ॥ १४ विवक्षिताच्छब्दात् ॥ १५ घटते ॥ १६ एकार्थे ॥ १७ एकार्थस्य ॥ १८ स्पष्टाऽस्पष्टतया ॥ १९ एकार्थस्य ॥ २० शब्दोच्चारणसमये ॥ २१ अर्थस्यानभिधायकत्वे ॥ २२ क्षणिकत्वात् ॥ २३ प्रत्यक्षोत्पत्तिकाले इव ॥ २४ ज्ञाने ॥ २५ कथम् ॥ २६ इह प्रदेशे ॥ २७ किञ्चिदुष्णताकाष्ठाद्याकारधारित्वविशिष्ट ॥ २८ भविष्यत् ॥ २९ वाच्ये ॥ ३० शब्दप्रतिपाद्ये ॥ ३१ अर्थे ॥ ३२ अङ्गीक्रियमाणे परेण ॥ ३३ अभिन्नविषयत्वेपि शाब्दप्रत्यक्षयो प्रतिभासभेदो दर्शितो यत ॥ ३४ स्वलक्षणम् ॥ ३५ सामान्यम् ॥ ३६ कुत ॥ ३७ अर्थम् ॥ ३८ जानाति ॥ ३९ उत्पादिताक्ष अन्ध इत्यर्थ ॥ ४० क्रियाविशेषणमेतत् ॥ ४१ परोक्ष जानातीत्यर्थ ॥ ४२ अर्थम् ॥ ४३ स्पर्शनेन्द्रियग्राह्यतया ॥ ४४ स्पष्टत्वेन ॥ ४५ जानाति ॥ ४६ अस्पष्टत्वेन ॥ ४७ आसन्नदूरत्वादि ॥ ४८ सामान्यविशेषात्मकार्थो विषयो भवतीति साध्य । शब्दो धर्मी ॥ ४९ वस ॥ ५० विषय ॥ ५१ चतुर्थोध्याये ॥ ५२ शब्दप्रत्ययेऽर्थप्रतिभास सिद्धो यत ॥ ५३ अनुमाने ॥ ५४ शब्दकृते प्रत्ययेऽप्रतिभासमानत्वात्स्वलक्षणस्येति ॥ ५५ कुत ॥ ५६ यस ॥ ५७ शब्दज्ञानजनितज्ञाने ॥ ५८ विकल्पज्ञानम् ॥

व्यवहृतिमुपजनयत्प्रत्यक्षं तद्विषयम्। तत्र व्यवहृतिमुपजनयति च शब्द इति। न चासिद्धो हेतुर्बहिरन्तश्च शाब्दव्यवहारस्य तथाभूते वस्तुन्युपलम्भात्। भवत्कल्पितस्वलक्षणस्य तु प्रत्यक्षेऽन्यत्र वा स्वप्नेऽप्यप्रतिभासनात्। प्रतिज्ञापदयोश्च व्याघातः। तथा हि। अन्यदेवेन्द्रियग्राह्यमित्यनेन शब्देन कश्चिदर्थोऽभिधीयते वा न वा? नाभिधीयते चेत्कथमिन्द्रियग्राह्यस्यान्यत्वमतः प्रतीयते? अथाभिधीयतेऽर्थस्तर्हि तस्यैव तद्विषयत्वप्रसिद्धेः कथन्न शब्दस्यार्थागोचरत्वप्रतिज्ञाऽतो व्याहन्येत? साक्षादिन्द्रियग्राह्यागोचरोऽसाविति चेत्पारम्पर्येणासौ तद्गोचरो भवति न वा? यदि न भवति तर्हि साक्षादिति विशेषणं व्यर्थम्। अथ भवति तर्हि तज्ज्ञा प्रतीतिः किमिन्द्रियजप्रतीतितुल्या तद्विलक्षणा वा? यदि तत्तुल्या तदा शब्दात्प्रत्येति विनष्टाक्षो न तु प्रत्यक्षमीक्षते इत्यनेन विरोधः। तद्विलक्षणा चेन्न तर्हि प्रतीतिवैलक्षण्यं विषयभेदसाधनमेकत्रापि विषये तदभ्युपगमात्। दाहशब्देन चात्र कोऽर्थोऽभिप्रेतः? किमग्निरुष्णस्पर्शो रूपविशेषः स्फोटस्तद्दुःखं वा? अस्तु यः कश्चित्। किमेभिर्विकल्पैर्भवतां सिद्धमिति चेदेतेषां मध्ये योऽर्थोऽभिप्रेतो भवतां तेनार्थेनार्थवत्त्वप्रसिद्धेस्तस्यानर्थविषयत्वाभावः सिद्ध इति। नन्वेवं दहनसम्बन्धाद्यथा स्फोटो दुःखं वा तथा दाहशब्दादपि किन्न स्यादर्थप्रतीतेरविशेषात् + तन्नान्यकार्यत्वात्तस्य। न खलु दहनप्रतीतिकार्यं स्फोटादि। किं तर्हि? दहनदेहसम्बन्धविशेषकार्य–सुषुप्ताद्यवस्थायामप्रतीतावप्यग्नेस्तत्सम्बन्धविशेषात् स्फोटादेर्दर्शनाद्दूरस्थस्य चक्षुषा प्रतीतावप्यदर्शनात्। मन्त्रादिबलेन त्वगिन्द्रियेणापि प्रतीतावप्यदर्शनात्। तस्मादभिन्नेऽपि विषये सामग्रीभेदाद्विशदेतरप्रतिभासभेदोऽभ्युपगन्तव्यः। तथा चेदमप्ययुक्तं–न चैकस्य वस्तुनो रूपद्वयमस्त्येकस्य द्वित्वविरोधादिति। यदि चाभावोऽभिधीयते शब्दैर्भावो नाभिधीयते इति क्रियाप्रतिषेधान्न किञ्चित्कृतं स्यात्। तथा च कथं नदीदेशद्वीपपर्वतस्वर्गापवर्गादिष्वाप्तप्रणीतवाक्यात्प्रतिपत्तिः श्रेयः–साधनानुष्ठाने प्रवृत्तिर्वा? अन्यथा सर्वस्मादपि वाक्यात्सर्वत्रार्थे प्रतिपत्तिप्रवृत्त्यादिप्रसङ्गः। सत्येतरव्यवस्था-

---

१ विकल्पम् ॥ २ नायनादि ॥ ३ तत्र व्यवहृतिजनकत्वात् ॥ ४ गवादौ ॥ ५ आत्मादौ ॥ ६ सौगत ॥ ७ अनुमानादौ ॥ ८ खरविषाणवत् ॥ ९ व्याघातमेव दर्शयति ॥ १० बौद्धमते शब्द कश्चिदप्यर्थं न वक्ति तर्हि ॥ ११ अर्थस्य ॥ १२ भिन्नत्वम् ॥ १३ अर्थोऽगोचरो यस्य ॥ १४ अव्यवधानेन ॥ १५ वस ॥ १६ स्वलक्षण प्रत्यक्ष गृह्णाति। प्रत्यक्षाच्च विकल्प ( नीलमिद पीतमिदमिति )। विकल्पाच्च शब्द उत्पद्यते। विकल्पयोनय शब्दा इत्यभिधानादिति ॥ १७ स गोचरो यस्य शब्दस्य ॥ १८ पारम्पर्येणेन्द्रियग्राह्यार्थगोचरो भवति शब्द ॥ १९ सामान्यार्थं जानाति ॥ २० अन्धो ना ॥ २१ क्रियाविशेषणम्। चक्षु प्रत्यक्षेण यादृशमीक्षते न तादृशमिति भाव ॥ २२ अर्थम् ॥ २३ शब्दजेन्द्रियजप्रतीत्यो समानत्वात् ॥ २४ दूरनिकटैकपादपादौ स्वलक्षणे ॥ २५ परेण ॥ २६ लोके ॥ २७ सौगतस्य तव ॥ २८ जैनानाम् ॥ २९ पदार्थानाम् ॥ ३० सौगतानाम् ॥ ३१ शब्दस्य ॥ ३२ तेनार्थेनार्थवत्त्वसिद्धिप्रकारेण ॥ ३३ वह्निदहनसम्बन्धादर्थप्रतीतिर्विद्यते शब्दादप्यर्थप्रतीतिरिति ॥ ३४ दहनस्य ॥ ३५ स्फोटादिकस्य ॥ ३६ दूरपादपादौ ॥ ३७ दूरनिकटादि ॥ ३८ परेण। अनेन कथनेन बौद्धस्य यथा स्वलक्षणस्य प्रत्यक्षेण स्पष्टतया प्रतिभासन तथा शब्देनाप्यस्पष्टतया प्रतिभासन जातमिति ॥ ३९ सामग्रीभेदात्प्रतिभासभेदे च ॥ ४० वैशद्यावैशद्यरूपम् ॥ ४१ अपोह ॥ ४२ भावस्य ॥ ४३ तर्हीति शेष ॥ ४४ शब्दे ॥ ४५ शब्देन किंचित् वाच्य स्यात् ॥ ४६ शब्देन कस्याप्यकरणेऽप्यर्थप्रतीतिरनुष्ठाने प्रवृत्तिश्च यदि ॥ ४७ अकृतत्वाविशेषात् ॥

भावश्च तत्त्वेतरप्रतिपत्तेरभावात्[1] । तथा च 'यत्सत्तत्सर्वमक्षणिकं क्षणिके क्रमयौगपद्याभ्याममर्थक्रियाविरोधात्'[2] इत्यादेरिव यत्सत्तत्सर्वं क्षणिकं नित्ये क्रमयौगपद्याभ्याममर्थक्रियानुपपत्तेरित्यादेरप्यसत्त्वानुषङ्गः । विपर्ययप्रसङ्गो वा—सर्वथार्थासंस्पर्शित्वाविशेषात्[3] । कस्यचिदनुमानवाक्यस्य[4] कथञ्चिदर्थसंस्पर्शित्वे[5] सर्वथार्थस्यानभिधेयत्वविरोधः । स्वपक्षविपक्षयोश्च सत्यासत्यत्वप्रदर्शनाय शास्त्रं प्रणयन्[6] वस्तु[7] सर्वथाऽनभिधेयं प्रतिजानातीत्युपेक्षणीयप्रज्ञः सर्वथाभिधेयरहितेन तेन[9] तस्य[8] प्रणेतुमशक्तेः । शक्तस्य[10] सूचकं हेतुवचोऽशक्तमपि[11] स्वयमित्यभिधानात्[12][13] । तत्कृता[14] तत्त्वसिद्धिमुपजीवति[15], नार्थस्य तद्वाच्यतामिति किमपि महाद्भुतम् । वस्तुदर्शनवंशप्रभवत्वाद्धेतुवचो[16][17] वस्तुसूचकमित्यक्षणिकवादिनोपि[18] समानम् । मद्वचनमेवार्थदर्शनवंशप्रभवं, न पुनः परवचनमित्यन्यत्रापि[19][20] समानम् । सकलवचसां विवक्षामात्रविषयत्वाभ्युपगमाच्च । तावन्मात्रसूचकत्वेन च शब्दस्य प्रामाण्ये सर्वं शाब्दविज्ञानं प्रमाणं स्यात्प्रत्यागमस्यापि प्रतिबोध्याभिप्रायप्रतिपादकत्वाविशेषात् । किञ्चार्थव्यभिचारवच्छब्दानां विवक्षाव्यभिचारस्यापि दर्शनात्कथं ते तामपि प्रतिपादयेयुः? गोत्रस्खलनादौ[22] ह्यन्यविवक्षायामप्यन्यशब्दप्रयोगो[23][24] दृश्यत एव । सुविवेचितं कार्यं[25] कारणं[26] न व्यभिचरतीति नियमोऽर्थविशेषप्रतिपादकत्वेप्यस्याऽस्तु । न चास्य विवक्षायास्तदधिरूढार्थस्य वा प्रतिपादकत्वं युक्तं ततो बहिरर्थे[27] प्रतिपत्तिप्रवृत्तिप्राप्तिप्रतीतेः प्रत्यक्षवत्[28] । यथैव हि प्रत्यक्षात्प्रतिपत्तृप्रणिधानसामग्रीसापेक्षात्प्रत्यक्षार्थप्रतिपत्तिस्तथा सङ्केतसामग्रीसापेक्षादेव शब्दाच्छब्दार्थप्रतिपत्तिः[29] सकलजनप्रसिद्धा । अन्यथाऽतो बहिरर्थे प्रतिपत्त्यादिविरोधः । न चार्थेऽर्थिनोऽर्थित्वादेव[30] प्रवृत्तेः शब्दोऽप्रवर्त्तकोऽध्यक्षादेरप्येवमप्रवर्त्तकत्वप्रसङ्गात्[31] तदर्थेप्यभिलापादेव[32] प्रवृत्तिप्रसिद्धेः[33] । परम्परया प्रवर्त्तकत्वं शब्देप्यस्तु[34][35] विशेषाभावात्[36] । का चेयं विवक्षा नाम? किं शब्दोच्चारणेच्छामात्रमनेन शब्देनामुमर्थं प्रतिपादयामीत्यभिप्रायो वा? प्रथमपक्षे वक्तृश्रोत्रोः शास्त्रादौ प्रवृत्तिर्न स्यात् । न खलु कश्चिदनुन्मत्तः[37] शब्दनिमित्तेच्छामात्रप्रतिपत्त्यर्थं[38] शास्त्रं वाक्यान्तरं वा प्रणेतुं श्रोतुं प्रवर्त्तते । दशदाडिमादिवाक्यैः सह सर्ववाक्यानामविशेषप्रसङ्गश्च सर्वेषां स्वप्रभवेच्छामात्रानुमापकत्वाविशेषात्[39][40] । अथानेन

---

१ सत्येतरव्यवस्थाऽभावे च ॥ २ पूर्वोक्तस्य सत्यत्वमुत्तरोक्तस्यासत्यत्वमित्यर्थं ॥ ३ अविषयत्व शब्दाना यत ॥ ४ सौगतोक्तस्य ॥ ५ कथञ्चित्पारम्पर्येण । कथम्? प्रथमतस्त्रिरूपधूमादिस्वलक्षणलिङ्गदर्शनं, तदनु सम्बन्धस्मरण,, तदनु शब्दप्रयोग इति ॥ ६ सौगतेनाङ्गीक्रियमाणे ॥ ७ दिग्नागादि ॥ ८ स्वलक्षणम् ॥ ९ शब्देन ॥ १० शास्त्रान्तरेपि स्वलक्षणसूचक वचोस्तीति वदति ॥ शक्तस्य समर्थस्य हेतोर्धूमादिस्वलक्षणस्य वाच्यस्य ॥ ११ साध्येऽशक्तमपि ॥ १२ स्वरूपेण ॥ १३ सौगतेन ॥ १४ वचन ॥ १५ अङ्गीकरोति ॥ १६ त्रिरूपधूमादिस्वलक्षणलिङ्ग ॥ १७ वंश =अन्वय ॥ १८ जैनस्य ॥ १९ ज्ञानस्य ॥ २० परवचनस्य ॥ २१ जैनादि ॥ २२ गोत्र=नाम ॥ २३ देवदत्त ॥ २४ जिनदत्त ॥ २५ शब्दलक्षणम् ॥ २६ विवक्षालक्षणम् ॥ २७ घटपटादौ ॥ २८ प्रणिधानमेव सामग्री ॥ २९ शब्दात् ॥ ३० पुरुषस्य ॥ ३१ पुरुषस्य ॥ ३२ अर्थित्वादेव ॥ ३३ प्रत्यक्षमभिलापमुत्पादयति । अभिलापाचार्थे प्रवृत्तिरिति ॥ ३४ प्रत्यक्षस्य ॥ ३५ शब्दोप्यभिलापमुत्पादयति । अभिलापात्प्रवृत्तिरिति ॥ ३६ परम्परया प्रवर्तकत्वस्य ॥ ३७ धीमान् ॥ ३८ शब्दस्य निमित्त कारण या सा । सा चासाविच्छा च सैवेच्छा एवभूता यत शब्दोच्चार पुरुषस्य ॥ ३९ स्वेषा वाक्याना प्रभव उत्पत्तिर्यस्या इच्छाया सा चासाविच्छा चेति ॥ ४० विवक्षा धर्मिणी अस्यास्तीति साध्य शब्दोच्चारणान्यथानुपपत्तेरिति ॥

शब्देनामुमर्थं प्रतिपादयामीत्यभिप्रायो विवक्षा । तत्सूचकत्वेन शब्दानामनुमानत्वं तदप्ययुक्तं–व्यभिचारात् । न हि शुकशारिकोन्मत्तादयस्तथाभिप्रायेण वाक्यमुच्चारयन्ति[1] । किञ्च समयानपेक्षं[2] वाक्यं तादृशमभिप्रायं गमयेत्तत्सापेक्षं वा ? आद्यविकल्पे सर्वेषामर्थप्रतिपत्तिप्रसङ्गान्न[3][4] कश्चिद्वापानभिज्ञः[5] स्यात्[6] । समयापेक्षस्तु शब्दोऽर्थमेव किं न गमयति ? न ह्ययमर्थाद्बिभेति येन तत्र साक्षान्न वर्तेत । यश्चाशक्यसमयत्वादिकेर्थे[7][8] शब्दाप्रवृत्तौ न्यायः सोऽभिप्रायेपि[9] समान इत्यभिप्रायावगमोपि शब्दान्न स्यात्[10] । तन्न स्वलक्षणस्याभिधानेनानिर्देश्यत्वम्[11][12][13] । किञ्च तच्छब्देनाऽप्रतिपाद्याऽनिर्देश्यत्वमस्योच्येत प्रतिपाद्य वा ? न तावद-प्रतिपाद्याऽतिप्रसङ्गात्[14][15] । प्रतिपाद्य चेन्न–स्ववचनविरोधात् । शब्देन हि स्वलक्षणं प्रतिपादयता निर्देश्यत्वमस्याभ्युपगतं स्यात् । पुनश्च तदेव प्रतिषिद्धमिति । कथं चानिर्देश्यशब्देनाप्यस्यानभिधानेऽनिर्देश्यत्वसिद्धिः[16][17][18] ? भ्रान्तिमात्रात् ततस्तत्सिद्धौ न परमार्थतस्तदनिर्देश्यमसाधारणं वा सिद्ध्येत्[19] । प्रत्यक्षात्तथाभूतस्यास्य प्रसिद्धिरित्यपि[20] मनोरथमात्रं निर्देश्ययोर्गस्य साधारणासाधारणरूपस्य वस्तुनस्तेन साक्षात्करणात् । वस्तुव्यतिरेकेण नापरा निर्देश्यता साधारणता वा प्रतिभातीत्यसाधारणतायामपि[21] समानम् । वस्तुस्वरूपमेव सेत्यन्यत्रापि[22] समानम्[23] । किञ्च विकल्पप्रतिभास्यऽन्यापोहगता[24][25] वाच्यता वस्तुनि प्रतिषिध्यते[26] वस्तुगता वा ? आद्यविकल्पे सिद्धसाध्यता । न ह्यन्यापोहवाच्यतैव वस्तुवाच्यता–तत्प्रतिषेधविरोधात्[29] । द्वितीयपक्षे तु स्ववचनविरोध इत्युक्तम्[30] । ततः प्रामाणिकत्वमा-त्मनोऽभ्युपगच्छता प्रतीतिसिद्धा वाच्यतार्थस्याभ्युपगन्तव्या[31] ।

सत्यं[32], वाच्य[33] एवार्थः । तद्वाचकस्तु पदादिस्फोट[34] एव, न पुनर्वर्णाः । ते हि[35] किं समस्ता[36] व्यस्ता वा तद्वाचकाः ? यदि व्यस्तास्तदैकेनैव वर्णेन गवाद्यर्थप्रतिपत्ति-रुत्पादितेति[37] द्वितीयादिवर्णोच्चारणमनर्थकम् । अथ समुदितास्तन्न क्रमोत्पन्नानामनन्तरविनष्टत्वेन[38][39] समुदायस्यैवासम्भवात् । न च युगपदुत्पन्नानां तेषां समुदाय-कल्पना–एकपुरुषापेक्षया युगपदुत्पत्त्यसम्भवात्, प्रतिनियतस्थानकरणप्रयत्नप्रभवत्वात्तेषाम्[40][41] । न च भिन्नपुरुषप्रयुक्तगकारौकारविसर्जनीयानां समुदायेप्यर्थप्रतिपाद-कं प्रतिपन्नं–प्रतिनियतवर्णक्रमे प्रतिपत्त्युत्तरकालभावित्वेन शब्दप्रतिपत्तेः प्रतिभासनात् । न चान्त्यो वर्णः[42] पूर्ववर्णानुगृहीतो[43] वर्णानां क्रमोत्पादे सत्यर्थप्रतिपादकः–

---

१ अस्येवविधोभिप्रायोस्ति तदभिधायकशब्दोच्चारणादिति ॥ २ समय =सकेत ॥ ३ स्वैतया ॥ ४ अविशेपत ॥ ५ क्वचिद्देशादौ ॥ ६ सकलभापात्मकशब्दश्रवणात् ॥ ७ द्वितीयविकल्प ॥ ८ अर्थानामानन्त्यात् ॥ ९ अभिप्रा-याणामानन्त्यात् ॥ १० शब्दश्रोतृणाम् ॥११ अशक्यसमयत्वाविशेपात् ॥१२ सामान्यविशेपात्मकस्यार्थस्य ॥ १३ शब्देन ॥१४ स्वलक्षणेति शब्देन ॥१५ घटादेरप्यनिर्देश्यत्वप्रसङ्गात् ॥१६ इति ॥ १७ इद स्वलक्षणमनिर्देश्यमिति अकथने ॥ १८ स्वलक्षणस्य ॥ १९ निर्विकल्पकात् ॥ २० शब्देन ॥ २१ स्वलक्षणव्यतिरेकेण साधारणतापि पृथक् नो भातीति ॥ २२ निर्देश्यताया साधारणताया च ॥ २३ वस्तुस्वरूपत्वम् ॥ २४ बुद्धि ॥ २५ शब्देन ॥ २६ स्वलक्षणे ॥ २७ स्वलक्षणमनिर्देश्यमित्यनेनोल्लेखेन ॥ २८ बुद्धिप्रतिबिम्बरूपस्यान्यापोहगतस्य ( वाच्यत्वस्य ) स्वलक्षणेऽस्माभिरपि प्रतिषेधाभ्युपगमात् ॥ २९ वस्तुनि अन्यापोहवाच्यता विद्यते चेन्न तर्हि प्रतिषेध । कथमिति विरोध ॥ ३० शब्देन हीत्यादि ॥ ३१ शब्देन ॥ ३२ लब्धावसरो मीमासकोऽवतिष्ठते ॥ ३३ शब्दै ॥ ३४ वर्णादिनाभिव्यज्यमानो नित्यो व्यापक पदादीनामर्थं पदादिस्फोट ॥ ३५ तदेव भावयति ॥ ३६ गौरित्यत्र गकारौकारविसर्जनीया ॥ ३६ गकारादिना ॥ ३७ हेतो ॥ ३८ औकारादि ॥ ३९ उत्पत्ते ॥ ४० तात्वादि ॥ ४१ क्रिया ॥ ४२ विसर्जनीयलक्षण ॥ ४३ गकारौकाराभ्याम् ॥

पूर्ववर्णानामन्त्यवर्णं प्रत्यनुग्राहकत्वायोगात्। तद्ध्यन्त्यवर्णं प्रति जनकत्वं तेषां स्यादर्थज्ञानोत्पत्तौ सहकारित्वं वा[1] न तावज्जनकत्वं–वर्णाद्वर्णोत्पत्तेरभावात्–प्रतिनियतस्थानकरणादिप्रभवत्वात्तस्य, वर्णाभावेऽप्याद्यवर्णोत्पत्त्युपलम्भाच्च[2]। नाप्यर्थज्ञानोत्पत्तौ सहकारित्वं तेषामन्त्यवर्णानुग्राहकत्वमविद्यमानानां[3] सहकारित्वस्यैवासम्भवात्। यथा चान्त्यवर्णं प्रति पूर्ववर्णाः सहकारित्वं न प्रतिपद्यन्ते[4] तथा तज्जनितसंवेदनान्यपि, तत्प्रभवसंस्काराश्च[5]। किंच संवेदनप्रभवसंस्काराः[6] स्वोत्पादकविज्ञानविषयस्मृतिहेतवो, नार्थान्तरे[8] ज्ञानमुत्पादयितुं समर्थाः। न खलु घटज्ञानप्रभवः संस्कारः पटे स्मृतिं विदधद्दृष्टः। न च तत्संस्कारप्रभवस्मृतीनां[11] तत्सहायता तासां युगपदुत्पत्त्यभावात्। अयुगपदुत्पन्नाना चावस्थित्यसम्भवात्[12]। न[13] चाखिलसंस्कारप्रभवैका स्मृतिः[14] सम्भवति–अन्योन्यविरुद्धानेकार्थानुभवप्रभवसंस्काराणामप्येकस्मृतिजनकत्वप्रसङ्गात्। न[16] चान्यवर्णाऽनपेक्ष एव गौरित्यत्रान्त्यो वर्णोऽर्थे प्रतिपादकः पूर्ववर्णोच्चारणवैयर्थ्यानुषङ्गात्। घटशब्दान्त्यव्यवस्थितस्यापि[17] ककुदादिमदर्थप्रतिपादकत्वप्रसङ्गाच्च। तन्न वर्णाः समस्ता व्यस्ता वार्थप्रतिपादकाः सम्भवन्ति। अस्ति[19] च गवादिशब्देभ्योऽर्थप्रतीतिः। तदन्यथानुपपत्त्या वर्णव्यतिरिक्तोऽर्थप्रतीतिहेतुः स्फोटोऽभ्युपगन्तव्यः। श्रोत्रविज्ञाने चासौ निरवयवोऽक्रमः[21] प्रतिभासते–श्रवणव्यापारानन्तरमभिन्नार्थावभासिन्याः[22,23,24] संविदोऽनुभवात्। न चासौ वर्णविषया वर्णानां परस्परव्यावृत्तरूपतयैकप्रतिभासजनकत्वविरोधात्। न चेयं सामान्यविषया वर्णत्वव्यतिरेकेणापरसामान्यस्य[25,26,27] गकारौकारविसर्जनीयेष्वसम्भवात्, वर्णत्वस्य च प्रतिनियतार्थप्रत्यायकत्वायोगात्[28,29]। न चेयं भ्रान्ता अबाध्यमानत्वात्। न चाबाध्यमानप्रत्ययगोचरस्यापि[30,31] स्फोटस्यासत्त्वमवयविद्रव्यादेरप्यसत्त्वप्रसङ्गात्[32]। नित्यश्चासौ स्फोटोऽभ्युपगन्तव्यः। अनित्यत्वे सङ्केतकालानुभूतस्य[33] तदैव ध्वस्तत्वात्कालान्तरे देशान्तरे च गोशब्दश्रवणात्ककुदादिमदर्थप्रतीतिर्न स्यादसङ्केतिताच्छब्दादर्थप्रतिपत्तेरसम्भवात्[34]। सम्भवे वा द्वीपान्तरादागतस्य[35] गोशब्दाद्गवार्थप्रतिपत्तिः स्यात्, सङ्केतकरणवैयर्थ्यं[36] चासज्येत।

अत्र प्रतिविधीयते। प्रतीयमानात्पूर्ववर्णध्वंसविशिष्टादन्त्यवर्णादर्थप्रतीतेरभ्युपगमादुक्तदोषाभावः[37,38,39,40]। न चाभावस्य सहकारित्वं विरुद्धं–वृन्तफलसंयोगाभा-

---

१ उत्पद्य विनष्टत्वात्पूर्ववर्णानाम् ॥ २ आद्यो गकार ॥ ३ असता पूर्ववर्णानाम् ॥ ४ उत्पत्त्यनन्तर विनष्टत्वात् ॥ ५ ( पूर्ववर्णाना ) धारणारूपा ॥ ६ अन्त्यवर्णश्रवणकाले प्राक्तनवर्णसवेदनसस्काराभावात् ॥ ७ पूर्ववर्णानाम् ॥ ८ पूर्ववर्णज्ञान ॥ ९ पूर्ववर्णलक्षण ॥ १० वहिरर्थे गवादौ ॥ ११ पूर्ववर्णस्मृतीनाम् ॥ १२ प्राक्तनप्राक्तनाना विनष्टत्वात् ॥ १३ सर्वेषामेका स्मृतिर्भविष्यतीत्युक्ते आह ॥ १४ अन्त्यवर्णसहाया ॥ १५ घटपटलकुटशकटादि ॥ १६ अन्त्यवर्णापेक्षया अन्यवर्णो=गकारौकारौ ॥ १७ विसर्जनीयस्य ॥ १८ गोरूप ॥ १९ मा भवन्त्वित्युक्ते आह ॥ २० स्फोट विना ॥ २१ निरश ॥ २२ अभिन्न –एक ॥ २३ अर्थ स्फोटेन ॥ २४ एकार्थेनावभासिन्या ॥ २५ अभिनरूप ॥ २६ एकज्ञानसूचक ॥ २७ गवादे ॥ २८ स्फोट एव प्रतिनियतार्थप्रत्यायको यत ॥ २९ अर्थ =गोलक्षण । तस्य । ककुदादिमतोर्थस्य च ॥ ३० घ ( घटवाचकघटशब्दे ) कारादावपि वर्णत्वस्य सत्त्वात् ॥ ३१ श्रोत्रप्रत्यक्षज्ञानेन ॥ ३२ प्रत्यक्षज्ञानगोचरस्य घटादे ॥ ३३ स्फोटस्य ॥ ३४ स्फोटात् ॥ ३५ गोरहितात् ॥ ३६ तथा च ॥ ३७ श्रूयमाणात् ॥ ३८ वाक्यपक्षे वर्णस्थाने पद ग्राह्यम् ॥ ३९ जैने ॥ ४० पूर्ववर्णोच्चारणादिवैयर्थ्यलक्षण उक्तदोष ॥

वस्याप्रतिबद्धगुरुत्वफलप्रपातक्रियाजनने तद्दर्शनात् । दृष्टं चोत्तरसंयोगं कुर्वत्प्राक्तनसंयोगाभावविशिष्टं कर्म । परमाण्वग्निसंयोगश्च परमाणौ तद्गतपूर्वरूपप्रध्वं-
सविशिष्टो रक्ततामुत्पादयन्प्रतीतेः । यद्वा पूर्ववर्णविज्ञानाभावविशिष्टस्तज्ज्ञानजनितसंस्कारसव्यपेक्षो वाऽन्त्यो वर्णोऽर्थप्रतीत्युत्पादकः । ननु संस्कारस्य कथं
विपर्यान्तरे विज्ञानजनकत्वमित्यप्यचोद्यं तद्भावभावितयार्थप्रतीतेरुपलब्धेः । पूर्ववर्णविज्ञानप्रभवसंस्कारश्च प्रणालिकयाऽन्त्यवर्णसहायतां प्रतिपद्यते । तथा हि ।
प्रथमवर्णे तावद्विज्ञानम् । तेन च संस्कारो जन्यते । ततो द्वितीयवर्णविज्ञानम् । तेन च पूर्वज्ञानाहितसंस्कारसहितेन विशिष्टः संस्कारो जन्यते । एवं तृतीया-
दावपि योजनीयं, यावदन्त्यः संस्कारोऽर्थप्रतिपत्तिजनकान्त्यवर्णसहायः । अथ वा शब्दार्थोपलब्धिनिमित्तक्षयोपशमप्रतिनियमादविनष्टा एव पूर्ववर्णसंविदस्त-
त्संस्कारांश्चाऽन्त्यवर्णसंस्कारं विदधति । तथाभूतसंस्कारप्रभवस्मृतिसव्यपेक्षो वान्त्यो वर्णः पदार्थप्रतिपत्तिहेतुः । वाक्यार्थप्रतिपत्तावप्ययमेव न्यायोऽङ्गी-
कर्त्तव्यः । वर्णाद्वर्णोत्पत्त्यभावप्रतिपादनं च सिद्धसाधनमेव । तदेवं यथोक्तसहकारिकारणसव्यपेक्षादन्त्यवर्णादर्थप्रतिपत्तेरन्वयव्यतिरेकाभ्यां निश्चयात्
स्फोटपरिकल्पनाऽसम्भव एव तदभावेप्यर्थप्रतिपत्तेरुक्तप्रकारेण सम्भवेऽन्यथानुपपत्तेः प्रक्षयात् । न खलु दृष्टादेव कारणात्कार्योत्पत्तावदृष्टकारणान्तरपरिक-
ल्पनायुक्तिः सङ्गताऽतिप्रसङ्गात् । न चैवं वादिनो वर्णेभ्यः स्फोटाभिव्यक्तिर्घटते । तथा हि । न समस्तास्ते स्फोटमभिव्यञ्जयन्ति उक्तप्रकारेण तेषां
सामस्त्यासम्भवात् । नापि प्रत्येकं वर्णान्तरोच्चारणानर्थक्यप्रसङ्गात् । एकेनैव वर्णेन सर्वात्मनाऽस्याभिव्यक्तत्वात् । पदार्थान्तरप्रतिपत्तिव्यवच्छेदार्थं तदुच्चारण-
मिति चेन्न तदुच्चारणेपि तत्प्रतिपत्तेरेवानुषङ्गात् । यथा हि गौरिति पदस्यार्थो गकारोच्चारणात्प्रतीयते तथौकारोच्चारणादौशनस इति पदार्थोपि । तथा च
गौरिति पदादेव गौरौशनस इत्यर्थद्वयं प्रतीयेत । संशयो वा स्यात् । किमेकपदस्फोटाभिव्यक्तये गाद्यनेकवर्णोच्चारणं पदान्तरस्फोटव्यवच्छेदेन किं वानेकपद-
स्फोटाभिव्यक्तयेऽनेकगाद्यवर्णोच्चारणमिति । न च पूर्ववर्णैः स्फोटस्य संस्कारेऽन्त्यो वर्णस्तस्याभिव्यञ्जकः । इति न वर्णान्तरोच्चारणवैयर्थ्यमभिव्यक्तिव्यतिरिक्त-
संस्कारस्वरूपानवधारणात् । न खलु तत्र तैर्वेगाख्यः संस्कारो निर्वर्त्यते तस्य मूर्त्तेष्वेव भावात् । नापि वासनारूपोऽचेतनत्वात् । स्फोटस्य तच्चैतन्याभ्युपगमे वा

१ शाखादिना ॥ २ वस ॥ ३ तस्य कारणत्वस्य ॥ ४ श्येनादे ॥ ५ गमनक्रिया ॥ ६ कृष्णादिरूप ॥ ७ घटादौ ॥ ८ पक्षेऽन्त्यपदम् ॥ ९ पूर्ववर्णानाम् ॥ १० गोपिण्डे ॥ ११ प्रवाहेण ॥ १२ पक्षे
प्रथमपदे ॥ १३ समुत्पद्यते ॥ १४ उभयविषय । धारणाऽपरनामक ॥ १५ भवति ॥ १६ द्रव्यलक्षणरूपापेक्षया ॥ १७ ये अविनष्टा ॥ १८ तत सस्कारस्य सव्यपेक्षोऽन्त्यवर्णोऽर्थप्रतीतिजनक इति ॥
१९ परेण ॥ २० जैनानाम् ॥ २१ उक्तप्रकारे ॥ २२ ताल्वादि ॥ २३ अन्त्यवर्णसद्भावेऽर्थप्रतिपत्तिस्तदभावेऽर्थप्रतिपत्त्यभाव इत्येवम् ॥ २४ स्फोटसद्भावेऽर्थप्रतिपत्ति स्फोटाभावे च तदभाव इति । स्फोटानुमापिकाया ॥
२५ दृष्टाग्निकारणाद्धूमो जलकार्यं स्यात् ॥ २६ समस्तेभ्यो व्यस्तेभ्यो वा वर्णेभ्योऽर्थप्रतीतिर्नास्तीत्येव वादिन ॥ २७ गौरित्यत्र गोभिव्यक्तस्फोटप्रतिपन्नार्थाद्गोलक्षणादन्यपदाभिव्यक्तस्फोटप्रतिपन्नार्थोऽर्थान्तरम् । प्रकृता
त्पदार्थादन्य पदार्थ पदार्थान्तरम् ॥ २८ घटादिपदस्फोट ॥ २९ पदार्थप्रतिपत्तिं दर्शयन्त्याचार्या ॥ ३० एकस्य गकारस्य ॥ ३१ उशनसि शब्दे भव औशनस शुक्र इत्यर्थ ॥ ३२ कुला ॥ ३३ हेतो ॥ ३४ उत्तरवर्ण ॥
३५ कथम् ? तथा हि ॥ ३६ वर्णे ॥ ३७ पदार्थेषु ॥ ३८ वासनायाश्चेतनत्वात् ॥

स्वशास्त्रविरोधः[1]। नापि स्थितस्थापकोऽस्यापि[2] मूर्त्तद्रव्यवृत्तित्वात्स्फोटस्य चाऽमूर्त्तत्वाभ्युपगमात्[3]। किञ्चासौ संस्कारः स्फोटस्वरूपस्तद्धर्मो वा? तत्राद्यविकल्पोऽयुक्तः स्फोटस्य वर्णोत्पाद्यत्वानुषङ्गात्[4]। द्वितीयविकल्पोऽसम्भाव्यो व्यतिरिक्ताव्यतिरिक्तविकल्पानुपपत्तेः। स्फोटात्तस्याव्यतिरेके तत्करणे स्फोट एव कृतो भवेत्। तथा चास्याऽनित्यत्वानुषङ्गात् स्वाभ्युपगमविरोधः। ततस्तद्धर्मस्य व्यतिरेके सम्बन्धानुपपत्तिस्तदनुपकारकत्वात्[5]। तस्योपकाराभ्युपगमे[6] व्यतिरिक्ताऽव्यतिरिक्तविकल्पानुषङ्गः[7]। तत्रापि पूर्वोक्त एव दोषोऽनवस्थाकारी। न च व्यतिरिक्तधर्मसद्भावेपि[9] स्फोटस्यानभिव्यक्तस्वरूपापरित्यागे पूर्ववदर्थप्रतिपत्तिहेतुत्वम्[10][11][12]। तत्त्यागे चाऽनित्यत्वप्रसक्तिः[13]। किञ्च पूर्ववर्णैः संस्कारः स्फोटस्य क्रियमाणः किमेकदेशेन क्रियते सर्वात्मना वा? यद्येकदेशेन तदा तद्देशानामप्यतोर्थान्तरानर्थान्तरपक्षयोः पूर्वोक्तदोषानुषङ्गः। सर्वात्मना तु संस्कारे[14] सर्वत्र सर्वेषां[15] ततोऽर्थप्रतिपत्तिः स्यात्[16]। किञ्च स्फोटसंस्कारः स्फोटविषयसंवेदनोत्पादनमावरणापनयनं[17] वा? यद्यावरणापनयनं तदैकत्रैकदावरणापगमे[18][19] सर्वदेशावस्थितैः सर्वदा व्यापिनित्यतयोपलभ्येत—नित्यव्यापित्वाभ्यामपगतावरणस्यास्य सर्वत्र सर्वदोपलभ्यस्वभावत्वात्। अनुपलभ्यस्वभावत्वे वा न क्वचित्कदाचित्केनचिदप्युपलभ्येत[20][21]। अथैकदेशेनावरणापगमः[22] क्रियते। नन्वेवमावृतानावृतत्वेन सावयवत्वमस्यानुषज्येत[23]। अथाऽविनिर्भागत्वादेकत्रानावृतः[24] सर्वत्रानावृतोऽभ्युपगम्यते[25] तर्हि तद्वस्थोऽशेषदेशावस्थितैरुपलब्धिप्रसङ्गः[26]। यथा च निरवयवत्वादेकत्रानावृतः सर्वत्रानावृतः तथैकत्रावृतः सर्वत्राप्यावृत इति मनागपि[27][28] नोपलभ्येत[29]। अथ स्फोटविषयसंवेदनोत्पादस्तत्संस्कारः[30], सोप्ययुक्तो—वर्णानामर्थप्रतिपत्तिजननवत् स्फोटप्रतिपत्तिजननेपि[31] सामर्थ्यासम्भवाद्[32] न्यायस्य समानत्वात्। अथ मतं[33] "पूर्ववर्णश्रवणज्ञानाहितसंस्कारस्यात्मनो[34][35]ऽन्त्यवर्णश्रवणज्ञानानन्तरं पदादिस्फोटस्याभिव्यक्तेरयमदोषस्तदप्यसङ्गतं पदार्थप्रतिपत्तेरप्येवं[36] प्रसिद्धेः स्फोटपरिकल्पनानर्थक्यात्। चिदात्मव्यतिरेकेण[37] तत्त्वान्तरस्यास्यार्थप्रकाशनसामर्थ्यासम्भवाच्च। स एव हि चिदात्मा विशिष्टशक्तिः स्फोटोऽस्तु[38]। स्फुटति[39] प्रकटीभवत्यर्थोस्मिन्निति स्फोटश्चिदात्मा। पदार्थज्ञानावरणवीर्यान्तरायक्षयोपशमविशिष्टः पदस्फोटः[40][41]। वाक्यार्थज्ञा-[42]

---

१ मीमासक ॥ २ स्थितस्थापकरूपस्य ॥ ३ मीमासकेन ॥ ४ तथा च स्फोटनित्यत्वव्याघात ॥ ५ स्फोटेन सह ॥ ६ स्फोटधर्मलक्षणसस्कारेण स्फोटस्योपकार क्रियते ॥ ७ परेण ॥ ८ स्फोटात् ॥ ९ धर्म =सस्कार ॥ १० सस्कारात्पूर्वं यथाऽकृतसस्कारस्य स्फोटस्यार्थप्रतिपत्तिहेतुत्व नास्ति ॥ ११ घटते ॥ १२ अन्यथा ॥ १३ स्फोटोऽनित्य पूर्वाकारपरित्यागात् घटाकारपरिणतमृत्पिण्डवत् ॥ १४ स्फोटस्य ॥ १५ प्राणिनाम् ॥ १६ व्यापकत्वनित्यत्वात् ॥ १७ प्रतिपत्तॄणाम् ॥ १८ एकस्थानेक ॥ १९ स्फोटकाले ॥ २० नरेण ॥ २१ नित्यव्यापिन सदैकस्वभावत्वात् ॥ २२ न सर्वात्मना ॥ २३ ततश्च निरशत्वव्याघात । स्फोटो न निरश आवृताऽनावृतदेशत्वात् ॥ २४ निरशत्वात् ॥ २५ मीमासकेन ॥ २६ पूर्ववत् ॥ २७ नृभि ॥ २८ ईषत् ॥ २९ स्फोट ॥ ३० प्रथमपक्ष ॥ ३१ पुरुष प्रति ॥ ३२ समस्ता व्यस्ता वा वर्णा स्फोटप्रतिपत्तिं जनयन्तीत्यादिप्रकारेण ॥ ३३ मीमांसकस्य तव ॥ ३४ जनित ॥ ३५ पुरुषस्य ॥ ३६ तथा च ॥ ३७ ज्ञान ॥ ३८ कथम् ? तथा हि ॥ ३९ हेतो ॥ ४० आत्मा ॥ ४१ भवति ॥ ४२ कथमिदानीं द्वैविध्यमस्य स्यादित्याशङ्कायामाह ॥

नावरणवीर्य[1]न्तरायक्षयोपशमविशिष्टस्तु[2] वाक्यस्फोटः । इति[3] भावश्रुतज्ञानपरिणतस्यात्मनस्तथाभिधानाऽविरोधात् । वायवः[4] स्फोटाभिव्यञ्जका इत्यप्ययुक्तं शब्दाभिव्यक्तिवत्स्फोटाभिव्यक्तेस्तेभ्योऽनुपपत्तेः[5] । तेषां च व्यञ्जकत्वे[6] वर्णकल्पनावैफल्यं स्फोटाभिव्यक्तावर्थप्रतिपत्तौ चामीषामनुपयोगात्[7] । स्थिते[8] च स्फोटस्य वर्णवायूत्पादात्पूर्वं[9] सद्भावे वर्णानां वायूनां वा व्यञ्जकत्वं परिकल्प्येत । न चास्य सद्भावः कुतश्चित्प्रमाणात्प्रतिपन्नः । यच्चोक्तं "नादेनाऽहितबीजायां[10] अन्त्येन[11] ध्वनिना सह । आवृत्तिपरिपाकायां[12] बुद्धौ[13] शब्दोऽवभासते[14]" इति[15] तदप्येतेनापाकृतम्[16] । नित्यत्वमन्तरेणापि[17] चार्थप्रतिपत्तिर्यथा भवति तथा प्रतिपादितमेव[18] । यच्च श्रवणव्यापारानन्तरमित्याद्युक्तं[19] तदप्यसारं घटादिशब्देषु परस्परव्यावृत्तकालप्रत्यासत्तिविशिष्टवर्णव्यतिरेकेण[20][21] स्फोटात्मनोऽर्थप्रकाशकस्यैकस्याध्यक्षप्रतिपत्तिविषयत्वेनाप्रतिभासनात् ।

न[22] चाभिन्नप्रतिभासमात्रादभिन्नार्थव्यवस्थाऽन्यथा दूरादविरलानेकतरुषु एकप्रतिभासादेकत्वव्यवस्था स्यात् । न चास्य वाध्यमानत्वान्नैकत्वव्यवस्थापकत्वं[23][24][25] स्फोटप्रतिभासेपि वाध्यमानत्वस्य प्रदर्शितत्वात् । न खलु निरवयवोऽक्रमो नित्यत्वादिधर्मोपेतोऽसौ[26] क्वचिदपि प्रत्ययेऽवभासते । कथं चैवं शब्दस्फोटवद्गन्धादिस्फोटोप्यऽर्थप्रतीतिनिमित्तं न स्यात्[27] । यथैव हि शब्दः कृतसङ्केतस्य[28] क्वचिदर्थे प्रतिपत्तिहेतुस्तथा गन्धादिरप्यविशेषात्[29][30] । एवंविधमेकं[31] गन्धं समाघ्राय स्पर्शं च संस्पृश्य रसं चास्वाद्य रूपं चालोक्य त्वयैवंविधोर्थः प्रतिपत्तव्य इति समयग्राहिणां पुनः क्वचित्तादृशगन्धाद्युपलम्भात्तथाविधार्थनिर्णयप्रसिद्धो[32][33] गन्धादिविशेषाभिव्यङ्ग्यो गन्धादिस्फोटोऽस्तु विशेषाभिव्यङ्ग्यपदादिस्फोटवत् । एतेन[34] हस्तपादकरणमात्रिकाङ्गहारादिस्फोटोप्यापादितो द्रष्टव्यः । पदादिस्फोट एव, न तु स्वावयवक्रियाविशेषाभिव्यङ्ग्यो[35][36] हंसपक्ष्मादिर्हस्तस्फोटो, विकुट्टितादिलक्षणः[37] पादस्फोटो, हस्तपादसमायोगलक्षणः[38] करणस्फोटः, करणद्वयरूपो मात्रिकास्फोटो, मात्रिका-

---

१ वीर्यं शक्ति ॥ २ आत्मा ॥ ३ तथाभिधाने विरोधो भविष्यतीत्यत्राह ॥ ४ वर्णा मा भवन्तु किन्तु ॥ ५ कुत ॥ ६ स्फोटस्य ॥ ७ उपकाराभावात् ॥ ८ सति ॥ ९ पूर्ववर्णेन वायुना वा ॥ १० बीज सस्कार ॥ ११ अन्त्यवर्णेन वायुना वा ॥ १२ आवृत्ति सामस्त्येनोच्चारणम् ॥ १३ पूर्णायाम् ॥ १४ ज्ञाने ॥ १५ स्फोट ॥ १६ वायुभ्य स्फोटाभिव्यक्तिनिराकरणेन ॥ १७ अनित्येभ्यो वर्णेभ्य कथ स्यादर्थप्रतिपत्तिरित्युक्ते सत्याह ॥ १८ पूर्वं वर्णविचारे ॥ १९ परेण ॥ २० घकारात् टकारो व्यावृत्त इत्यादिप्रकारेण ॥ २१ पूर्वक्षणे घकारोच्चारणमुत्तरक्षणे टकारोच्चारणमिति ॥ २२ यद्यपि घटादिशब्देषु परस्परव्यावृत्तकालप्रत्यासत्तिविशिष्टवर्णव्यतिरेकेण स्फोट प्रत्यक्षविषयत्वेन नावभासते तथापि अभिन्नप्रतिभासोस्ति । ननु तत स्फोटव्यवस्था भविष्यतीत्याशङ्कायामाह ॥ २३ शब्देषु स्फोटस्य ॥ २४ समीप गते सति ॥ २५ अनेकतरुप्रतीत्या ॥ २६ स्फोट ॥ २७ श्रवणेन्द्रियविषयभूते शब्दे शब्दस्यार्थप्रतिपादकत्वाभावादर्थप्रतिपत्त्यर्थं स्फोटकल्पने 'घ्राणेन्द्रियादिविषयेषु गन्धादिषु तदर्थं चत्वार स्फोटा कल्पनीयास्तेषामपि तदभावादिति भाव ॥ २८ गन्धादिस्फोटनिराकरणद्वारेण शब्दादिस्फोट निराकुर्वन्तीति भाव ॥ २९ अस्य शब्दस्यायमर्थ इति ॥ ३० जातिकुसुमादीनामन्यादीनामाम्रफलादीना कामिन्यादीना च प्रतिपत्तिहेतु ॥ ३१ अर्थे कृतसकेतस्य ॥ ३२ गन्धादिस्फोटस्य कथ सङ्केत इत्याशङ्कायामाह ॥ ३३ यथाविध पूर्वं श्रुत ॥ ३४ गन्धादिस्फोटापादनपरेण ग्रन्थेन ॥ ३५ नर्तनसमये नृत्यकारस्य ॥ ३६ अवयवा=हस्तपादादयोऽङ्गुल्यादयश्च ॥ ३७ विकुट्टित भ्रमणम् ॥ ३८ युगपद्व्यापार समायोग ॥

समूहलक्षणोऽङ्गहारस्फोटो वेति मनोरथमात्रं तस्यापि स्वस्वावयवाभिव्यङ्ग्यस्य स्वाभिनेयार्थ[1]प्रतिपत्तिहेतोरशक्यनिराकरणत्वात् । तन्निराकरणे वा शब्दस्फोटाभिनिवेशो दूरतः परित्याज्यः आक्षेप[2]समाधानानामुभयत्र[3] समानत्वात् । ततः शब्दस्फोटस्वरूपस्य विचार्यमाणस्यायोगान्नासौ पदार्थप्रतिपत्तिनिबन्धनं प्रेक्षादक्षैः प्रतिपत्तव्यम् । किन्तु पदं वाक्यं वा तन्निबन्धनत्वेन प्रतिपत्तव्यम् ।

किं पुनः पदं वाक्यं वा यन्निबन्धनाऽर्थप्रतिपत्तिरिति[4]अभिधीयेते[5] । वर्णानां परस्परापेक्षाणां निरपेक्षः[6] समुदायः पदम् । पदानां तु तदपेक्षाणां[7] निरपेक्षः[8] समुदायो वाक्यमिति । नन्वेवं[9] कथमिदं साधन[10]वाक्यं[11] घटते ? यत्सत्तत्सर्वं[12] परिणामि, यथा घटः, संश्च शब्द इति, तस्मात्परिणामी इत्याकाङ्क्षणात्[13] साकाङ्क्षस्य वाक्यत्वानिष्टि[14]रित्यप्यचोद्यं–कस्यचित्[15]प्रतिपत्तुस्तदनाकाङ्क्षत्वोपपत्तेः । निराकाङ्क्षत्वं हि प्रतिपत्तृ[16]धर्मो वाक्येष्वध्यारोप्यते । न पुनः शब्दधर्मस्तस्याचे[17]तनत्वात् । स चेत्प्रतिपत्ता तावता[18]अर्थं[19] प्रत्येति, [20]किमित्यपरमाकाङ्क्षेत् ? पक्षधर्मोपसंहारपर्यन्तसाधनवाक्यादर्थप्रतिपत्तावपि निगमनवचनापेक्षायां निगमनान्तपञ्चावयववाक्यादप्यर्थप्रतिपत्तौ परापेक्षाप्रसङ्गान्न [21]क्वचिन्निराकाङ्क्षत्वसिद्धिः । [22]तथा च वाक्याभावान्न वाक्यार्थप्रतिपत्तिः[23] कस्यचित्स्यात् । ततो[24] यस्य[25] प्रतिपत्तुर्यावत्सु परस्परापेक्षेषु पदेषु समुदितेषु निराकाङ्क्षत्वं तस्य तावत्सु वाक्यत्वसिद्धिरिति प्रतिपत्तव्यम् । एतेन[26] प्रकरणादि[27]गम्य[28]पदान्तरसापे[29]क्षश्रूयमाणसमुदायस्य निराकाङ्क्षस्य सत्यभामादिपदवद्[30]वाक्यत्वं प्रतिपादितं प्रतिपत्तव्यम् । यच्चोच्यते[31] "आख्यात[32]शब्दः[33] सङ्घातो[34] जातिः[35] संघातवर्त्तिनी । एकोऽनवयवः शब्दः[36] क्रमो[37] बुद्ध्यनुसंहृती[38] । १ । पदमाद्यं पदं चान्त्यं पदं सापेक्षमित्यपि । वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवेदिनाम् । २ ।" इति, तदप्युक्तिमात्रं–यस्मादाख्यातशब्दः पदान्तरनिरपेक्षः सापेक्षो वा वाक्यं स्यात् ? न तावदाद्यः पक्षः पदान्तरनिरपेक्षस्यास्य पदत्वात् ।

---

१ अभिनेय =अनुकरणम् ॥ २ (जैनमतापेक्षया) अवयवक्रियाभिनेयार्थव्यतिरेकेणान्यार्थस्य हस्तपादादिस्फोटलक्षणस्याप्रतिभासनलक्षण आक्षेपस्तर्हि वर्णार्थव्यतिरेकेणान्यस्य स्फोटलक्षणार्थस्याप्रतिभासनमिति समाधानम् । ननु वर्णानामनित्यत्वेनार्थप्रतिपादकत्वायोगात्स्फोट एवार्थप्रतिपत्तिहेतुरित्यभ्युपगन्तव्यम् । तत्र–क्रियाया अप्यनित्यत्वेनाभिनेयार्थप्रतिपादकत्वायोगाद्धस्तादिस्फोटोऽभ्युपगन्तव्य ( मीमांसकेन ) इति ॥ ३ पदादिस्फोटहस्तादिस्फोटयो ॥ ४ प्रश्ने सति ॥ ५ जैने ॥ ६ पदान्तरगतवर्णनिरपेक्ष ॥ ७ परस्पर ॥ ८ वाक्यान्तरपदात् ॥ ९ निरपेक्षस्य पदसमुदायस्य वाक्यत्वप्रकारेण ॥ १० साध्यसिद्धौ ॥ ११ जैनस्य तव ॥ १२ सर्वं परिणामि सत्त्वादिति योज्यम् ॥ १३ आकाङ्क्षणे वाक्यत्व कुतो न स्यादित्युक्ते सत्याह साकाङ्क्षस्येति ॥ १४ जैनस्य ॥ १५ व्युत्पन्नस्य यस्य हि प्रतिपत्तुस्तस्मात्परिणामीत्यत्राकाङ्क्षाक्षयस्तदपेक्षया तद्वाक्यं भवत्युक्तवाक्यलक्षणसद्भावात् , नान्यापेक्षया ॥ १६ चेतन ॥ १७ शब्दोऽचेतन इति वचनात् ॥ १८ साधनवाक्यमात्रेण ॥ १९ साध्यार्थम् ॥ २० तर्हीति शेष ॥ २१ वाक्ये ॥ २२ निराकाङ्क्षत्वसिद्ध्यभावे च ॥ २३ क्वचित् ॥ २४ वाक्याभावाद्वाक्यार्थप्रतिपत्तिर्नास्ति यत ॥ २५ अर्थप्रतिपत्तिमिच्छत पुरुषस्य ॥ २६ वाक्यसिद्धिप्रकारेण ॥ २७ आदिना सामर्थ्यम् ॥ २८ तिष्ठतिभवतीत्यादि ॥ २९ प्रकरणादिगम्यपदान्तरादपरवाक्यान्तरपदस्य ॥ ३० पदसमुदायस्य प्रकरणादिगम्यतिष्ठतीत्यादिपदान्तरसापेक्षस्य वाक्यत्व यथा तद्वदत्रापि विचारणीयम् ॥ ३१ वाक्यस्य लक्षणान्तरम् ॥ ३२ भवतिगच्छतीत्यादि ॥ ३३ वाक्यम् ॥ ३४ वर्णानाम् ॥ ३५ वर्णत्वलक्षणा ॥ ३६ स्फोट ॥ ३७ वर्णानाम् ॥ ३८ अनुसहृति =परामर्श ॥

अन्य[1]थाख्यातपदाभावः स्यात्। द्वितीयपक्षेपि क्वचि[2]न्निरपेक्षोसौ न वा? प्रथमपक्षेऽस्मन्[3]मत[4]प्रसङ्गः[5]। द्वितीयपक्षस्त्वयुक्तः पदान्तरसापेक्षस्याप्यस्य क्वचि[6]न्निरपेक्षत्वाभावे प्रकृतार्थापरिसमाप्त्या वाक्यत्वाऽयोगाद[7]र्द्धवाक्यवत्। संघातो वाक्यमित्यत्रापि देशकृतः कालकृतो वा[8] वर्णानां[9] संघातः स्यात्[10]? न तावदाद्यविकल्पो युक्तः क्रमोत्पन्नप्रध्वंसिनां तेषामेकस्मिन्देशेऽवस्थित्या संघा[11]तत्वासम्भवात्। द्वितीयविकल्पे तु पदरूपतामापन्नेभ्यो वर्णेभ्योऽसौ भिन्नोऽभिन्नो वा? न तावद्भिन्नोऽनं[12]शस्तथाविधस्यास्याऽप्रतीतेः, संघातत्वविरोधाच्च वर्णान्तर[13]वत्। अथ तेभ्योऽभिन्नोसौ, किं सर्वथा कथञ्चिद्वा? सर्वथा चेत्कथ[14]मसौ संघातः? संघा[15]तिस्वरूपवत्। अ[16]न्यथा प्रतिवर्णं संघातप्रसङ्गः। न चैको वर्णः संघातो ना[17]मातिप्रसङ्गात्। कथञ्चिच्चेज्जैनमतप्रसङ्गः[18]: परस्परापेक्षाऽना[19]काङ्क्षपदरूपतापन्नवर्णानां कालप्रत्यासत्तिरूपसंघातस्य कथञ्चिद्वर्णेभ्योऽभिन्नस्य जैनोक्त[20]वाक्यलक्षणानतिक्रमात्। साकाङ्क्षान्योन्यानपेक्षा[21]णां तु तेषां वाक्यत्वे प्राक्प्रतिपादितदोषानुषङ्गः। ए[22]तेन जा[23]तिः संघातवर्त्तिनी वाक्यमित्यपि नोत्सृष्टं–निराकाङ्क्षान्योन्यापेक्षपदसंघातवर्त्तिन्याः सदृशपरिणामलक्षणायाः क[24]थञ्चि[25]त्ततोऽभिन्नाया जातेर्वाक्यत्वघटनात्। अन्यथा संघातपक्षोक्ताशेषदोषानु[26]षङ्गः। एकोऽन[27]वयवः श[28]ब्दो वाक्यमित्येतत्तु मनोरथमात्रं तस्याप्रामाणिकत्वात् स्फोटस्यार्थप्रतिपादकत्वेन प्रागेव प्रतिविहितत्वात्। क्र[29]मो वाक्यमित्येतत्तु संघातवाक्यपक्षान्नातिशेते। इति तद्दोषेणैव तद्दुष्टं द्रष्टव्यम्। [30]बुद्धिर्वाक्यमि[31]त्यत्रापि भाववाक्यं द्रव्यवाक्यं वा सा स्यात्? प्रथमप्रकल्पनायां सिद्धसाध्यता–पूर्वपूर्ववर्णज्ञानाहितसंस्कारस्यात्मनो वाक्यार्थग्रहणपरिणतस्यान्त्यवर्णश्रवणाऽनन्तरं वाक्यार्थाववोधहेतोर्बुद्ध्यात्मनो भाववाक्यस्याऽस्मा[32]भिरभीष्टत्वात्। द्रव्यवाक्यरूपतां तु बुद्धेः कश्चेतनः श्रद्दधीत? प्रतीतिविरो[33]धात्। एतेना[34]नुसंहृति[35]र्वाक्यमित्यपि चिन्तितं यथोक्तपदानुसंहृतिरूपस्य चेतसि [36]परिस्फुरतो भाववाक्यस्य परामर्शात्मनोऽभीष्टत्वात्। आ[37]द्यं पदमन्त्य[38]मन्यद्वा पदान्तरापेक्षं वाक्यमित्यपि नोक्तवा[39]क्याद्भिद्यते परस्परापेक्षपदसमुदायस्य निराकाङ्क्षस्य

१ आख्यातशब्दस्य वाक्यत्वे ॥ २ वाक्यान्तरे ॥ ३ जैन ॥ ४ अस्मदुक्तस्येव वाक्यलक्षणस्येच्छयाभ्युपगमात् ॥ ५ निरपेक्षत्वात् ॥ ६ पदान्तरे ॥ ७ देवदत्त गामित्यादिवत् ॥ ८ पक्षे ॥ ९ पदाना वा ॥ १० वाक्यम् ॥
११ सकृत् ॥ १२ खपुस्तके 'नश' इति पाठो नास्त्येव । पदेभ्यो भिन्न इत्यर्थ ॥ १३ एकस्य वर्णस्य सघातत्व विरुद्ध यथा ॥ १४ वर्ण ॥ १५ सघात सर्वथा सघातिभ्यो वर्णेभ्योऽभिन्नोपि यदि स्यात्तर्हि ॥ १६ अस्तु इत्युक्ते सत्याह ॥ १७ एकार्थव्यक्तेरपि जातित्वप्रसङ्गात् ॥ १८ एकस्मिन्वर्णे विवर्तमाने ( वर्णसमूहानष्टे सति ) सघातो न निवर्त्तते इति भिन्न । वर्णभ्यो ( पक्षे पदेभ्य ) भेदेनानुपलभ्यमानत्वादभिन्न ( सघात ) इति
१९ वाक्यान्तरपदेभ्य ॥ २० पदाना परस्परापेक्षाणा निरपेक्ष समुदायो वाक्यमिति ॥ २१ वाक्यान्तरपदेभ्य ॥ २२ सघातो वाक्यमित्येतन्निराकरणपरेण ग्रन्थेन ॥ २३ सर्वेषु वर्णेषु वर्णत्वलक्षणा ॥ २४ श्रोत्रग्राह्यत्वेन तात्वादिव्यापारजनितत्वेन वा, न सर्वथा ॥ २५ पदेभ्यो वर्णेभ्यश्च ॥ २६ प्रतिवर्ण वाक्यत्वप्रसङ्गरूप ॥ २७ निरश ॥ २८ स्फोट ॥ २९ एको वर्ण समुत्पद्यते पश्चाद्द्वितीय ततस्तृतीय इत्यादिप्रकारेण वर्णाना क्रम ॥
३० वर्णानाम् ॥ ३१ पक्षे ॥ ३२ जैने ॥ ३३ अचेतनत्वाद्वाक्यानां चेतनत्वाद्बुद्धेश्च ॥ ३४ बुद्धिर्वाक्यमित्येतन्निराकरणपरेण ग्रन्थेन ॥ पदरूपतामापन्नाना वर्णाना परामर्शोनुसहृति ॥ ३५ एव ॥ ३६ प्रतिभाससमानस्य ॥
३७ 'देवदत्त' इति ॥ ३८ 'गच्छति' इति ॥ ३९ परस्परापेक्षादि इत्यस्मात् ॥

वाक्यत्वप्रसिद्धेः। अन्यथा[1] पदादिसिद्धेरभावानुषङ्गः [2]स्यात्। [3]अन्ये मन्यन्ते 'पदान्येव पदार्थप्रतिपादनपूर्वकं वाक्यार्थावबोधं विदधानानि वाक्यव्यपदेशं प्रति-[4]पद्यन्ते "पदार्थानां तु [5]मूलत्वमिष्टं तद्भावभावतः। पदार्थपूर्वकस्तस्माद्वाक्यार्थोऽयमवस्थितः" इत्यभिधानात्' तेऽप्यन्धसर्पविलप्रवेशन्यायेनोक्तवाक्यलक्षणमेवानु-सरन्ति अन्योन्यापेक्षानाकाङ्क्ष(क्ष)पदसमुदायस्य वाक्यत्वेन तैरप्यभ्युपगमात्।

[9]यदि च [10]पदान्तरार्थैरन्वितानामेवार्थानां [14]पदैरभिधानात्पदार्थप्रतिपत्तेर्वाक्यार्थप्रतिपत्तिः स्यात् तदा देवदत्त[15]पदेनैव देवदत्तार्थस्य गामभ्याजेत्यादिपदवाक्यार्थै-रन्वितस्याभिधानाच्छेषपदोच्चारणवैयर्थ्यम्। [18]प्रथमपदस्यैव च वाक्यरूपताप्रसङ्गः। यावन्ति वा पदानि तावतां वाक्यत्वं यावन्तश्च पदार्थास्तावतां वाक्यार्थत्वं स्यात्। [20]अविवक्षितपदार्थव्यवच्छेदार्थत्वान्न गामित्यादिपदोच्चारणवैयर्थ्यमित्यत्राप्यावृत्त्या [21] वाक्यार्थप्रतिपत्तिः स्यात् प्रथमपदेनाभिहितस्य द्वितीयादिपदाभिधे-यैरन्वितस्यार्थस्य द्वितीयादिपदैः पुनः पुनः प्रतिपादनात्[22]। अथ द्वितीयादिपदैः[23] स्वार्थस्य प्रधानभावेन पूर्वोत्तरपदाभिधेयार्थैरन्वितस्याभिधानं [24]नाद्यपदेन। [25]अतो-ऽयमदोषस्तर्हि यावन्ति पदानि तावन्तस्तदर्थाः पदान्तराभिधेयार्थान्विताः प्राधान्येन प्रतिपत्तव्या इति तावत्यो वाक्यार्थप्रतिपत्तयः कथं न स्युः? न [26]ह्यन्त्य-पदोच्चारणात्तदर्थस्याशेषपूर्वपदाभिधेयैरन्वितस्य प्रतिपत्तेर्वाक्यार्थावबोधो भवति, न पुनः प्रथमपदोच्चारणात् तदर्थस्यावान्तरपदाभिधेयैरन्वितस्य[29], द्वितीयादि-पदोच्चारणाच्चाऽशेषपदाभिधेयैरन्वितस्य तदर्थस्य [30]प्रतिपत्तेरित्यत्र निमित्तमुत्पश्यामः[31]। [32]अथ '[33]गम्यमानैस्तैस्तस्यान्वितत्वं, न पुनरभिधीयमानैः[35]। तेनायमदोषः। [36]किमिदानीमभिधीयमान एव पदस्यार्थः[37]? तथोपगमे[38] कथमन्विताभिधानं[39]—विवक्षितपदस्य[41] गम्यमानपदान्तराभिधेयार्थानामविषयत्वात्[42]। अथ पदानां द्वौ

---

१ परस्परापेक्षारहित पद यदि वाक्यम् ॥ २ सर्वस्य पदस्य वाक्यत्वात् ॥ ३ भट्टप्राभाकरा ॥ ४ अवयवार्थप्रतिपत्तिपूर्वकत्वाद्वाक्यार्थप्रतिपत्ते ॥ ५ कारणत्व वाक्यार्थं प्रति ॥ ६ वाक्यार्थस्य ॥ ७ पिपीलिकाद्युपद्रवभयाद्बि-लपरित्यागे भ्रमित्वा पुनरपि तत्रैव प्रवेशो यथा तथानिच्छया स्वीकारोऽन्धसर्पविलप्रवेशन्याय ॥ ८ जैनोक्त ॥ ९ वाक्यविचारानन्तर वाक्यार्थं विचारयन्नाह ॥ १० गामित्यादिपदान्तरार्थं ॥ ११ सम्बद्धानाम् ॥ १२ देवदत्तलक्ष-णोऽर्थो गामित्यादिपदार्थैरन्वितो गामित्यादिपदार्थाश्च पूर्वोत्तरपदार्थैरन्विता भवन्ति ॥ १३ सर्वेषा ॥ १४ केवलैर्देवदत्तादिकै ॥ १५ एकेन ॥ १६ गामभ्याज शुक्ला दण्डेनेति ॥ १७ पूर्वपदार्थस्योत्तरपदार्थ सर्वैरथान्वितत्वात् ॥ १८ तथा च ॥ १९ देवदत्तेति ॥ २० विवक्षिताद् देवदत्त इत्युक्ते गामभ्याज शुक्ला दण्डेनेत्यादिपदार्थादविवक्षितो देवदत्तेत्युक्ते पठ गच्छ याहि पिबेत्यादि पदार्थ तस्य व्यवच्छेदार्थत्वात् ॥ २१ पुन पुन प्रवृत्तिरावृत्ति ॥ २२ एकस्यैवार्थस्य ॥ २३ देवदत्तपदापेक्षया गामभ्याज शुक्ला दण्डेनेति पदे ॥ २४ द्वितीयादिपदार्थस्याभिधान प्रधानभावेन ॥ २५ न द्वितीयादिपदार्थस्याभिधान प्रधानभावेन यत ॥ २६ उक्तमेव समर्थयन्ति। सर्वेभ्य पदेभ्यो वाक्यार्थावबोधो भवतीति परस्याभिप्राय मनसि धृत्वा वक्ति जैन ॥ २७ दण्डेनेति ॥ २८ प्रकृतादुच्चार्यमाणात्पदादन्यत्पद पदान्तरम् ॥ २९ प्रतिपत्तेर्वाक्यार्थावबोधो, न पुनरिति। प्राक्तन न पुनरिति पदमत्र सम्बन्ध-नीयम् ॥ ३० वाक्यार्थावबोधो, न पुनरिति सम्बन्ध ॥ ३१ वय जैना ॥ ३२ पदान्तराभिधेयार्थैरन्वितत्वे आवृत्त्या वाक्यार्थप्रतिपत्तिलक्षणदोषो जायते तन्निरासार्थं पदान्तरार्थाना गम्यमानाभिधेयमानो द्वावर्थाविति परो वदति ॥ ३३ पदान्तरैर्ज्ञायमानैर्गोचरीकृतैरित्यर्थ ॥ ३४ उच्चार्यमाणपदार्थस्य ॥ ३५ उच्यमानैर्द्वितीयादिपदार्थै ॥ ३६ आक्षेप ॥ ३७ एव प्रतिपादनसमये ॥ ३८ ज्ञायमानो न भवति ॥ ३९ परेणाङ्गीकृते सति ॥ ४० पूर्वपदार्थ उत्तरपदार्थैरन्वित इति ॥ ४१ देवदत्तादे ॥ ४२ गामित्यादि ॥

व्यापारौ—स्वार्थाभिधानव्यापारः पदान्तरार्थगमकत्वव्यापारश्च[1]। कथमेवं[2] पदार्थप्रतिपत्तिरावृत्त्यौ[3] न स्यात्पदव्यापारात्प्रतीयमानस्येव गम्यमानस्यापि पदार्थत्वात्। न च पदव्यापारात्प्रतीयमानत्वाविशेषेपि कश्चिदभिधीयमानः कश्चिद्गम्यमान इति विभागो युक्तः। ननु पदप्रयोगः प्रेक्षावता पदार्थप्रतिपत्त्यर्थो वाक्यार्थप्रतिपत्त्यर्थो वाभिधीयेत? न तावत्पदार्थप्रतिपत्त्यर्थोऽस्य प्रवृत्त्यऽहेतुत्वात्[5]। अथ वाक्यार्थप्रतिपत्त्यर्थस्तदा पदप्रयोगानन्तरं[6] पदार्थे प्रतिपत्तिः साक्षाद्भवतीति तत्र पदस्याभिधानव्यापारः पदार्थान्तरे[7] तु गमकत्वव्यापारः।' तदप्यसाम्प्रतं—वृक्ष इति पदप्रयोगे शाखादिमदर्थस्यैव प्रतिपत्तेः। तदर्थाच्च प्रतिपन्नात्तिष्ठतीत्यादिपदवाच्यस्य स्थानाद्यर्थस्य सामर्थ्यतः प्रतीतेस्तत्र पदस्य साक्षाद्व्यापाराऽभावतो गमकत्वायोगात् तदर्थस्यैव तद्गमकत्वात्। परम्परया तत्रास्य[13] व्यापारे[14] लिङ्गवचनस्य[15] लिङ्गि[16]प्रतिपत्तौ व्यापारोऽस्तु। तथा च शाब्दमेवानुमानज्ञानं स्यात्। लिङ्गवाचकाच्छब्दाल्लिङ्गस्य प्रतिपत्तेः सैव शाब्दी न पुनस्तत्प्रतिपन्नलिङ्गाल्लिङ्गिप्रतिपत्तिरतिप्रसङ्गात्[21]। तर्हि वृक्षशब्दात्स्थानाद्यर्थप्रतिपत्तिर्भवन्ती शाब्दी मा भूत्तत एवास्य स्वार्थप्रतिपत्तावेव पर्यवसितत्वाल्लिङ्गशब्दवत्[22]। किञ्च[23] विशेष्यपदं[24] विशेष्यं विशेषणसामान्येनान्वितं विशेषणविशेषेण वाऽभिधत्ते तदुभयेन वा? प्रथमपक्षे विशिष्टवाक्यार्थप्रतिपत्तिविरोधः। द्वितीयपक्षे तु निश्चयासम्भवः—प्रतिनियतविशेषणस्य शब्देनानिर्दिष्टस्य स्वोक्तविशेष्येऽन्वयसंशीतेर्विशेषणान्तराणामपि सम्भवात्[33]। वक्तुरभिप्रायात्प्रतिनियतविशेषणस्य तत्रान्वयश्चेन्नयं प्रति शब्दोच्चारणं तस्य वक्त्रभिप्रायाऽप्रत्यक्षतस्तदनिर्णयप्रसङ्गात्, आत्मानमेव प्रति वक्तुः शब्दोच्चारणानर्थक्यात्। तृतीयपक्षे तूभयदोषानुषङ्गः। एतेन क्रियासामान्येन क्रियाविशेषेण तदुभयेन वान्वितस्य साधनस्य साधनसामान्येन साधनविशेषेण तदुभयेन वान्वितायाः प्रतिपादनमाख्यातेन प्रत्याख्यातम्। यदि च पदात्पदार्थे उत्पन्नं ज्ञानं वाक्यार्थाध्यवसायि स्यात्तर्हि चक्षुरादिप्रभवं रूपादिज्ञानं गन्धाध्यवसायि किन्न स्यात्? अथास्य गन्धादिसाक्षात्कारित्वाभावान्नायं दोषस्तर्हि पदोत्थपदार्थज्ञानस्यापि वाक्यार्थावभासित्वाभावात्कथं तदध्यवसायित्वं स्यात्? चक्षुरादेर्गन्धादाविव पदस्य वाक्यार्थसम्बन्धानवधारणतः[36] सामर्थ्यानुपपत्तेः। तन्नान्विताभिधानं[37]

१ द्वितीयादि ॥ २ सति ॥ ३ पुन पुन ॥ ४ केवल देवदत्तपदार्थस्य केवलमभ्याजेति पदार्थस्य चेति ॥ ५ प्रयोजनार्थिना पुसा प्रवृत्तिहेतुर्न भवति । नहि गौरिति शब्दश्रवणात्प्रवृत्तिर्निवृत्तिर्वा घटते ॥ ६ पदप्रयोग ॥ ७ गम्ये ॥ ८ ततश्चान्वितत्वमेव शब्दार्थं ॥ ९ वृक्ष इत्यादे ॥ १० वृक्षपदार्थस्य ॥ ११ सामर्थ्यात् ॥ १२ वृक्षशब्दाच्छाखादिमदर्थप्रतिपत्तिस्तस्या सकाशात्स्थानाद्यर्थप्रतिपत्तिरिति परम्परा ॥ १३ वृक्षपदस्य ॥ १४ परेणाङ्गीकृते सति ॥ १५ धूमवचनस्य ॥ १६ लिङ्गी=अग्नि ॥ १७ किंतु न लिङ्गप्रभवम् ॥ १८ शाब्दी ॥ १९ प्रत्यक्षप्रतीतिरिन्द्रियादुत्पद्यमाना शाब्दी स्यात् ॥ २० वृक्षशाखादिमत्यर्थे साक्षाद्व्यापार स्थानाद्यर्थे तु परम्परयेति ॥ २१ शाखादिमदर्थं ॥ २२ यथा लिङ्गवाचक शब्दो धूमप्रतिपत्तौ पर्यवसित सन्नग्निगमको न भवति, धूमस्येव गमकत्वया वृक्षशब्द शाखादिमदर्थस्य वाचको भवति, न पदार्थान्तरगमक ॥ २३ अन्विताभिधानपक्षे दूषणमाह ॥ २४ गामिति कर्तृ ॥ २५ गोलक्षणम् ॥ २६ शुक्लेति ॥ २७ प्रतिनियतविशेषविशिष्ट ॥ २८ शुक्लमिति शब्देन ॥ २९ गामिति शब्देन ॥ ३० सास्नादिमदर्थे गोपिण्डे ॥ ३१ या गौ सा किं शुक्लेन विशिष्टा कृष्णेन वेति ॥ ३२ कृष्णादीनाम् ॥ ३३ शब्देनानिर्दिष्टत्वाविशेषात् ॥ ३४ गामित्यादिकारकपदस्य क्रियाकाङ्क्षित्वे विकल्पत्रयम् ॥ ३५ अभ्याजेत्यादिक्रियापदस्य कारकपदाकाङ्क्षित्वे विकल्पत्रयम् ॥ ३६ वाच्यवाचकलक्षण ॥ ३७ पदार्थान्तरैरन्विता अर्था इति ॥

श्रेयः। नाप्यभिहितान्वयो[1]–यतोऽभिहिताः पदैरर्थाः[2] शब्दान्तरादन्वीयन्ते[3] बुद्ध्या वा? न तावदाद्यः पक्षः–शब्दान्तरस्याशेषपदार्थविषयस्याभिहितान्वयनिबन्धनस्याभावात्। द्वितीयपक्षे तु बुद्धिरेव वाक्यं ततो वाक्यार्थप्रतिपत्तेः। न पुनः पदान्येव। ननु पदार्थेभ्योऽपेक्षाबुद्धिसन्निधानात्परस्परमन्वितेभ्यो वाक्यार्थप्रतिपत्तेः परम्परया पदेभ्य एव भावान्नातो व्यतिरिक्तं वाक्यं तर्हि प्रकृत्यादिव्यतिरिक्तं पदमपि मा भूत्–प्रकृत्यादीनामन्वितानामभिधानेऽभिहितानां वान्वये पदार्थप्रतिपत्तिप्रसिद्धेः। ननु पदमेव लोके वेदे वार्थप्रतिपत्तये प्रयोगार्हं, न तु केवला प्रकृतिः प्रत्ययो वा–पदादपोद्धृत्य तद्व्युत्पादनार्थं यथाकथञ्चित्तदभिधानात्। तदुक्तम् 'अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः' इति। यथैव हि वर्णोऽनंशः प्रकल्पितमात्राभेदस्तथा गौरिति पदमप्यनंशमपोद्धृतौकारादिभेदं स्वार्थप्रतिपत्तिनिमित्तमवसीयते। इत्यप्यनालोचिताभिधानं–वाक्यस्यैव तात्त्विकत्वप्रसिद्धेः तद्व्युत्पादनार्थं ततोऽपोद्धृत्य पदानामुपदेशाद्वाक्यस्यैव लोके शास्त्रे वार्थप्रतिपत्तये प्रयोगार्हत्वात्। तदुक्तं "द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधापि वा। अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्" इति। ततः प्रकृत्याद्यवयवेभ्यः कथञ्चिद्भिन्नमभिन्नं च पदं प्रातीतिकमभ्युपगन्तव्यम्। न तु सर्वथाऽनंशं वर्णवत्तद्ग्राहकाभावात्। तद्वत्पदेभ्यः कथञ्चिद्भिन्नमभिन्नं च वाक्यं द्रव्यभाववाक्यभेदभिन्नं प्रोक्तलक्षणलक्षितं प्रतीतिपदमारूढमभ्युपगन्तव्यम्। अलं प्रतीत्यपलापेनेति।

प्रामाण्यं सुधियो धियो यदि मतं संवादतो निश्चितात्स्मृत्यादेरपि किन्न तन्मतमिदं तस्याऽविशेषात्स्फुटम्। तत्संख्या परिकल्पितेयमधुना सन्तिष्ठतेऽतः कथं तस्माज्जैनमते मतिर्मतिमतां स्थेयाच्चिरं निर्मले। १।

इति श्रीप्रभाचन्द्रदेवविरचिते प्रमेयकमलमार्तण्डे परीक्षामुखालङ्कारे तृतीयः परिच्छेदः ॥ श्रीः ॥

---

१ इति प्राभाकरमत निरस्य भाट्टमतनिरासार्थमाह ॥ २ वाक्यार्थ ॥ ३ देवदत्तादिकै ॥ ४ एकेन शब्दान्तरेण ॥ ५ परस्पर सम्बध्यन्ते ॥ ६ एकेन पदान्तरेण सर्वेषा पदार्थो ज्ञातो भवेत्तदा तेन कृत्वा सम्बन्धप्रतिपत्तिर्येत ॥ ७ पदपरिज्ञानम् ॥ ८ वाक्यम् ॥ ९ यस ॥ १० आदिपदेन प्रत्यय गत्वादिग्रहणम् ॥ ११ परस्पर सम्बद्धानाम् ॥ १२ क्रियाकारकरूपे विशेषणविशेष्यरूपे च ॥ १३ पृथक्कृत्य ॥ १४ पदनिष्पत्त्यर्थम् ॥ १५ अहो ॥ १६ पदसङ्क ॥ १७ (उपवर्षनामाऽपि) प्राह ॥ १८ मात्रा उदात्तादय ॥ १९ वस ॥ २० कल्पित ॥ २१ साक्षादिमदर्थ ॥ २२ उक्तप्रकारेण ॥ २३ पदानि ॥ २४ अर्थ प्रवृत्तिनिवृत्तिलक्षण ॥ २५ न तु गामिति पदेन कस्यचित्प्रवृत्तिर्निवृत्तिर्वा घटते यत ॥ २६ सुबन्त तिङन्त पदमित्यादि ॥ २७ पृथक्कृतम् ॥ २८ नामाऽऽख्यातनिपातकर्मप्रवचनीयभेदेन ॥ २९ उपसर्गाधिकम् ॥ ३० पदानि ॥ ३१ तयथा पदादपोध्रियते तथा वाक्येभ्य पदान्यपोध्रियन्ते इति भाव ॥ ३२ पद प्रकृतिर्न भवति, पद च प्रकृतिर्नेति व्यावृत्तिरूपेण ॥ ३३ समुदायरूपेण ॥ ३४ निरशस्य वर्णस्य यथा ग्राहक प्रमाण नास्ति तथाऽनशपदस्य च ॥ ३५ पद वाक्य न भवति, वाक्य च पद न भवतीति व्यावृत्तिरूपेण ॥ ३६ समुदायरूपेण ॥ ३७ वचनात्मक द्रव्यवाक्य, बोधात्मक तु भाववाक्यम् ॥ ३८ पदाना परस्परापेक्षाणा निरपेक्ष समुदायो वाक्यमिति ॥ ३९ सकल परिच्छेदार्थमुपसहरन्नाह ॥ ४० पुस ॥ ४१ प्रामाण्यम् ॥ ४२ सवादस्य ॥ ४३ तस्य-प्रमाणस्य ॥ ४४ स्मृत्यूहादीना प्रामाण्यप्रतिपादनसमये ॥

श्रीः ।

# अथ चतुर्थः परिच्छेदः ॥

अथोक्तप्रकारं प्रमाणं किं निर्विषयं सविषयं वा ? यदि निर्विषयं, कथं प्रमाणं, केशोण्डुकादिज्ञानवत् । अथ सविषयं, कोस्य विषयः ? इत्याशङ्क्य विषयविप्रतिपत्तिनिराकरणार्थं "सामान्यविशेषात्मेत्याद्याह । तस्य प्रतिपादितप्रकारप्रमाणस्यार्थो विषयः । किंविशिष्टः ? सामान्यविशेषात्मा[3] । कुत एतत्[4] ? अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात्[5] । यो हि यदाकारोल्लेखिप्रत्ययगोचरः[6] स तदात्मको दृष्टो, यथा नीलाकारोल्लेखिप्रत्ययगोचरो नीलस्वभावोर्थः । सामान्यविशेषाकारोल्लेख्यनुवृत्तव्यावृत्तप्रत्ययगोचरश्चाखिलो वाह्याध्यात्मिकप्रमेयोर्थः । तस्मात्सामान्यविशेषात्मेति । न केवलमतो हेतोः स तदात्मा । अपि तु पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनाऽर्थक्रियोपपत्तेश्च[7][8] । सामान्यविशेषात्मा तदर्थ इत्यभिसम्बन्धः । कतिप्रकारं सामान्यमित्याह, सामान्यं द्वेधा । कथमिति चेत् तिर्यगूर्ध्वताभेदात्[10] । तत्र तिर्यक्सामान्यस्वरूपं व्यक्तिनिष्ठतया सोदाहरणं प्रदर्शयति । सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत् । ननु[11] खण्डमुण्डादिव्यक्तिव्यतिरेकेणापरस्य भवत्कल्पित[12]सामान्यस्याप्रतीतितो गगनाम्भोरुहवदसत्त्वादसाम्प्रतमेवेदं तल्लक्षणप्रणयनमित्यप्यसमीचीनं गौर्गौरित्याद्यवाधितप्रत्ययविषयस्य सामान्यस्याऽभावासिद्धेः । तथाविधस्याप्यस्यासत्त्वे[13] विशेषस्याप्यसत्त्वप्रसङ्गस्तथाभूतप्रत्ययत्वव्यतिरेकेणापरस्य[14][15] तद्व्यवस्थानिवन्धनस्यात्राप्यसत्त्वात्[16] । अवाधितप्रत्ययस्य च विषयव्यतिरेकेणापि सद्भावाभ्युपगमे[18] ततो[19] व्यवस्थाऽभावप्रसङ्गः । न चानुगताकारत्वं[20] बुद्धेर्वाध्यते[22] सर्वत्र देशादावनुगतप्रतिभासस्याऽस्खलद्रूपस्य तथाभूतव्यवहारहेतोरुपलम्भात् । अतो[21] व्यावृत्ताकारानुभवानधिगतमनुगताकारमवभासयन्त्यऽवाधितरूपा बुद्धिरनुभूयमानानुगताकारं वस्तुभूतं सामान्यं व्यवस्थापयति । ननु विशेषव्यतिरेकेण नापरं सामान्यं बुद्धिभेदाभावात्[23] । न च बुद्धिभेदमन्तरेण पदार्थभेदव्यवस्थाऽतिप्रसङ्गात् । तदुक्तं "न भेदोऽभिन्नमस्त्यन्यत्सामान्यं[24][25] बुद्ध्यभेदतः[26] । बुद्ध्याकारस्य भेदेन पदार्थस्य विभिन्नता[27]" इति । तदप्यपेशलं सामान्यविशेषयोर्बुद्धिभेदस्य प्रतीतिसिद्धत्वात् ।

---

१ न्यापूर्वेत्यादि ॥ २ ज्ञान धर्मि प्रमाण न भवतीति साध्यो धर्मो निर्विषयत्वात्केशोण्डुकज्ञानवत् ॥ ३ सामान्य च विशेषश्च सामान्यविशेषो तावात्मानो यस्य स तथोक्त ॥ ४ सिद्धम् ॥ ५ गौर्गौरित्यादिप्रत्यय अनुवृत्त । श्याम शवलो न भवतीत्यादिप्रत्ययो व्यावृत्तरूप ॥ ६ उल्लेख =प्रतिभास ॥ ७ पूर्वोत्तराकारौ पर्यायौ=विशेष ॥ ८ स्थितिलक्षण द्रव्यमूर्द्धतासामान्यम् । ध्रौव्यमित्यर्थ ॥ ९ विशेषो व्यक्ति ॥ १० सास्नादिमत्त्वेन ॥ ११ सौगत ॥ १२ जैन ॥ १३ परेणाङ्गीक्रियमाणे मति ॥ १४ अवाधितप्रत्ययविषयत्वाविशेषादिति ॥ १५ प्रमाणान्तरस्य ॥ १६ विशिष्टस्थितिकारण व्यवस्था ॥ १७ विशेषसत्त्वेपि ॥ १८ परेण ॥ १९ गौर्गौरिति ॥ २० विशेषणम् ॥ २१ आदिना कालादौ ॥ २२ अनुगताकारत्व बुद्धेर्न वाध्यते यत ॥ २३ इद सामान्यमय विशेष इति ॥ २४ विशेषात् ॥ २५ खतन्त्रम् ॥ २६ अभेदे हेतुरयम् ॥ २७ यत ॥

रूपरसादेस्तुल्यकालस्याभिन्नाश्रयवर्त्तिनोऽप्यत[1] एव भेदप्रसिद्धेः[2] । एकेन्द्रियाध्यवसेयत्वाज्जातिव्यक्त्योरभेदे वातातपादावप्यभेद[3]प्रसङ्गः[4] । तत्रापि हि प्रतिभासभेदान्नान्यो[5] भेदव्यवस्थाहेतुः । स च सामान्यविशेषयोरप्यस्ति । सामान्यप्रतिभासो ह्यनुगताकारो विशेषप्रतिभासस्तु व्यावृत्ताकारो[6]ऽनुभूयते । दूराद्[7]दूर्ध्वता-सामान्यमेव च प्रतिभासते, न स्थाणुपुरुषविशेषौ–तत्र सन्देहात् । तत्परिहारेण प्रतिभासनमेव च सामान्यस्य ततो व्यतिरेकस्तल्लक्षणत्वाद्भेदस्य । यदप्युक्तं "ताभ्यां तद्व्यतिरेकश्च किन्नाऽदूरेऽवभासनम्[8] । दूरेऽवभासमानस्य सन्निधानेऽतिभासनम्" तदप्यसुन्दरं विशेषेपि समानत्वात् । सोपि हि यदि सामान्याद्व्यतिरिक्तस्तर्हि दूरे वस्तुनः स्वरूपे सामान्ये प्रतिभासमाने किन्नाव[9]भासते? न हीन्द्रधनुषि नीले रूपे प्रतिभासमाने पीतादि[11]रूपं दूरान्न प्रतिभासते । अथ निकटदेशसामग्री विशेषप्रतिभासस्य जनिका । दूरदेशवर्त्तिनां च प्रतिपत्तॄणां सा नास्तीति न विशेषप्रतिभासस्तर्हि[10] सामान्यप्रतिभासस्य जनिका दूरदेशसामग्री निकटदेशवर्त्तिनां चासौ नास्तीति न निकटे तत्प्रतिभासनमिति समः समाधिः । अस्ति च निकटे सामान्यस्य प्रतिभासनं स्पष्टं विशेषस्य प्रतिभासवत् यादृशं तु दूरे तस्यास्पष्टं प्रतिभासनं तादृशं न निकटे स्व[12]सामग्र्यभावात् । तद्वदेव । न चानुगतप्रतिभासो बहिः साधारण[13]निमित्तनिरपेक्षो घटते प्रतिनियतदेशकालाकारतया तस्य प्रतिभासाभावप्रसङ्गात् । न चाऽसाधारणा व्यक्तय एव[14] तन्निमित्तं तासां भेदरूपतयाऽऽविष्ट[15]त्वात् । तथापि तन्निमित्तत्वे[16] कर्का[17]दिव्यक्तीनामपि गौगौरिति बुद्धिनिमित्तत्वानुषङ्गः[18] । न चाऽतत्[19]कार्य[20]कारणव्यावृत्तिरेक[21]प्रत्यवमर्शाद्येकार्थ[22]साधनहेतुरत्यन्त[23]भेदेपीन्द्रियादि[24]वत्[25]समुदितेतर[26]गुडूच्यादिर्व्य[27]क्तिष्वभिधातव्यं–सर्वथा समानपरिणामानाधारे वस्तुन्य[28]तत्कार्यकारणव्यावृत्तेरेवासम्भवात् । अनुगतप्रत्ययाद्वस्तुनि प्रवृत्त्य[29]ऽभावप्रसङ्गाच्च । गुडूच्यादिदृष्टान्तोपि[30]

---

१ बीजपूरादि ॥ २ अय रस इद रूपमिति बुद्धिभेदात् ॥ ३ एकेन्द्रिया( स्पर्शनेन्द्रिय ) ध्यवसायस्याविशेषात् ॥ ४ अथ वातोऽयमातप इति ॥ ५ गौगौरित्येवम् ॥ ६ अयमस्माद्भिन्न इति ॥ ७ युक्त्यन्तरेण सामान्य व्यवस्थापयति जैन ॥ ८ ऊर्ध्वताकारमदृशसामान्यम् ॥ ९ ऊर्ध्वताकारसामान्यस्य ॥ १० विशेष ॥ ११ इन्द्रधनुषि विद्यमानम् ॥ १२ दूरदेशतादि ॥ १३ समानाकारलक्षणसामान्यपदार्थे ॥ १४ न वहि साधारणनिमित्त सामान्य तन्निमित्तम् ॥ १५ व्यापकत्वात् ॥ १६ परेणाङ्गीकृते ॥ १७ कर्क =श्वेताश्व ॥ १८ व्यक्तीना तन्निमित्तत्वाविशेषात् ॥ १९ या या व्यक्तयस्तास्ता भेदरूपा ॥ २० कार्य च कारण च कार्यकारणे तस्य खण्डादे कार्यकारणे न विद्येते ते अकार्यकारणे यस्याऽसावतत्कार्यकारण कर्कादिस्तस्माद्व्यावृत्ति । दृष्टान्ते समासयुक्तिं दर्शयति । दृष्टान्ते त्वेकेन्द्रियादिरूपे तच्छब्देन विवक्षितेन्द्रियादिरन्यत्र समुदितेतरगुडूच्यादिर्ग्राह्य । बहुव्रीहि-समासकरणानन्तर कर्कादिवदन्या विवक्षितेन्द्रियादिरन्या विवक्षितप्रयोगश्च ग्राह्य । तस्माद्व्यावृत्तिरित्यवसातव्य ॥ २१ कर्कादीनामुत्तरक्षणा कारणानि, तेभ्यो व्यावृत्ति ॥ २२ गौगौरित्यादि ॥ २३ आदिशब्देनैकव्य-वहारादिर्ग्राह्य ॥ २४ खण्डादयो विशेषा धर्मिण समानपरिणामरहिता एव एकप्रत्यवमर्शाद्येकार्थसाधनहेतव अतत्कार्यकारणकर्कादिव्यावृत्तित्वादिन्द्रियादिवत् ॥ २५ व्यक्तीनाम् ॥ २६ आदिना–अर्थालोकयोग्यतादिग्रहणम् ॥ २७ समुदितेतरगुडूच्यादयो विशेषा समानपरिणामरहिता एव एकप्रत्यवमर्शाद्येकार्थहेतवोऽतत्कार्यकारणाविवक्षितेन्द्रियादिव्यावृत्तित्वाद्यथा ॥ २८ शुण्ठ्या ॥ २९ खण्डादिव्यक्तौ ॥ ३० अभावरूपाया व्यावृत्तेर्ज्ञातत्वादनुगतप्रत्ययस्य ॥

साध्यविकलः । न खलु ज्वरोपशमनशक्तिसमानपरिणामाभावे गुडूच्यादयो ज्वरोपशमनहेतवः, न पुनर्दधित्रपुसादयोपीति शक्यव्यवस्थम् । चक्षुरादयो वा रूपज्ञानहेतवस्तज्जननशक्तिसमानपरिणामविरहिणोपि न पुना रसादयोपीति निर्निबन्धना व्यवस्थितिः । किञ्चानुगतप्रत्ययस्य सामान्यमन्तरेणैव देशादिनियमेनोत्पत्तौ व्यावृत्तप्रत्ययस्यापि विशेषमन्तरेणैवोत्पत्तिः स्यात् । शक्यं हि वक्तुमभेदाविशेषेप्येकमेव ब्रह्मादिरूपं प्रतिनियतानेकनीलाद्याभासनिबन्धनं भविष्यतीति किमपररूपादिस्वलक्षणपरिकल्पनया । ततो रूपादिप्रतिभासस्येवानुगतप्रतिभासस्याप्यालम्बनं वस्तुभूतं परिकल्पनीयम् । इत्यस्ति वस्तुभूतं सामान्यम् । एककार्यतासादृश्येनैकत्वाध्यवसायो व्यक्तीनामित्यप्यचारु कार्याणामभेदासिद्धेः, वाहदोहादिकार्यस्य प्रतिव्यक्ति भेदात् । तत्राप्यपरैककार्यतासादृश्येनैकत्वाध्यवसायेऽनवस्था । ज्ञानलक्षणमपि कार्यं प्रतिव्यक्ति भिन्नमेव । अनुभवानामेकपरामर्शप्रत्ययहेतुत्वादेकत्वम् । तद्धेतुत्वाच्च व्यक्तीनामित्युपचरितोपचारोपि श्रद्धामात्रगम्योऽनुभवानामप्यत्यन्तवैलक्षण्येनैकपरामर्शप्रत्ययहेतुत्वायोगात् । अन्यथा कर्कादिव्यक्त्यनुभवेभ्योपि खण्डमुण्डादिव्यक्तौ एकपरामर्शप्रत्ययस्योत्पत्तिः स्यात् । अथ प्रत्यासत्तिविशेषात्खण्डमुण्डाद्यनुभवेभ्य एवास्योत्पत्तिर्नान्यतः । ननु प्रत्यासत्तिविशेषः कोन्योऽन्यत्र समानाकारानुभवात्, एकप्रत्यवमर्शहेतुत्वेनाभिमतानां निर्विकल्पकबुद्धीनामप्रसिद्धेश्च । अतोऽयुक्तमेतत् “एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी । एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता” इति । ततोऽबाधबोधाधिरूढत्वात्सिद्धं सदृशपरिणामरूपं वस्तुभूतं सामान्यम् । तस्याऽनभ्युपगमे ‘नो चेद्भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् । शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनादित्यस्य, अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपताम् । तस्मात्प्रमेयोऽधिगतेः प्रमाणं मेयरूपता’ इत्यस्य च विरोधानुषङ्गः । तच्चाऽनित्यासर्वगतस्वभावमभ्युपगन्तव्यं नित्यसर्वगतस्वभावत्वेऽर्थक्रियाकारित्वायोगात् । न खलु गोत्वं वाहदोहादावुपयुज्यते तत्र व्यक्तीनामेव व्यापाराभ्युपगमात् । स्वविषयज्ञानजनकत्वेपि व्यापारोस्य केवलस्य व्यक्तिसहितस्य वा ? केवलस्य चेद्व्यक्त्यन्तरालेप्युपलम्भप्रसङ्गः । व्यक्तिसहितस्य चेत्किं प्रतिपन्नाखिलव्यक्तिसहितस्याऽप्रति-

१ तथा हि ॥ २ कर्कटी ॥ ३ निर्विकल्पस्य ॥ ४ बाह्यनीलादिस्वलक्षणम् ॥ ५ बाह्यनीलादिविशेषमन्तरेणैव ॥ ६ सौगतेन त्वया ॥ ७ व्यक्तीनामेककार्यत्वसमर्थनार्थम् ॥ ८ निर्विकल्पकप्रत्यक्षज्ञानानाम् ॥ ९ गौगारिति ॥
१० एकत्वम् ॥ ११ विकल्पगतमेकत्वमनुभवेऽनुभवगत चैकत्व व्यक्तिष्विति ॥ १२ निर्विकल्पकेभ्य ॥ १३ सौगतेन ॥ १४ उपचरितोपचारोपि श्रद्धामात्रगम्यो यत ॥ १५ निर्विकल्पिका बुद्धि ॥ १६ एका ॥
१७ परेण ॥ १८ चेत्पक्षान्तरसूचकम् । इति हेतो स्वलक्षणे भ्रान्तिनिमित्तेनाक्षणिकत्व नो सयोज्येत चेत्तर्हि स्वलक्षणस्य परमार्थभूतमक्षणिकत्व स्यात् स्वलक्षणस्य क्षणिकत्वसिद्ध्यर्थं सर्वं क्षणिक सत्त्वादित्यनुमान च व्यर्थं स्यादिति भाव ॥ १९ परमार्थभूतसादृश्यापरापरोत्पत्तिलक्षणेन ॥ २० पुरुषेण ॥ २१ क्षणिके स्वलक्षणे वस्तुनि ॥ २२ अक्षणिकत्वलक्षणम् ॥ २३ वायथार्थक ॥ २४ अपरमार्थभूत ॥ २५ परमार्थभूतरूपसादृश्यदर्शनात् ॥
२६ ग्रन्थस्य ॥ २७ विषयविषयिभाव न कारयतीत्यर्थं ॥ २८ निर्विकल्पकबुद्धिम् ॥ २९ अन्यत्सन्निकर्षादि कर्तृ ॥ ३० पदार्थसादृश्याकारधारित्वम् ॥ ३१ उभाभ्या श्लोकाभ्या परस्य सादृश्याङ्गीकारो विद्यत इति सूचितम् ॥
३२ सामान्यस्य ॥ ३३ व्यक्तिरहित केवलम् ॥ ३४ पुरुष प्रति ॥ ३५ सामान्यस्य । न च तथा ॥

द्वितीयपक्षे पुनरेकव्यक्तेरप्यग्रहणे सामान्यज्ञानानुषङ्गः । प्रतिपन्न-
पन्नाखिलव्यक्तिसहितस्य वा? तत्राद्यपक्षोऽयुक्तः—असर्वविदोऽखिलव्यक्तिप्रतिपत्तेरसम्भवात् । द्वितीयपक्षे पुनरेकव्यक्तेरप्यग्रहणे सामान्यज्ञानानुषङ्गः । प्रतिपन्न-
कतिपयव्यक्तिसहितस्य जनकत्वे तु तस्य ताभिरुपकारः क्रियते न वा? प्रथमपक्षे सामान्यस्य व्यक्तिकार्यता—तदभिन्नोपकारकरणात् । ततो भिन्नस्यास्य करणे
तस्येतिव्यपदेशासिद्धिः । तत्कृतोपकारेणाप्युपकारान्तरकरणेऽनवस्था । द्वितीयपक्षे तु व्यक्तिसहभाववैयर्थ्यं सामान्यस्य—अकिञ्चित्करस्य सहकारित्वासम्भवात् ।
सामान्येन सहैकज्ञानजनने व्यापाराद्व्यक्तीनां तत्सहकारित्वेपि किमालम्बनभावेन तत्र तासां व्यापारोधिपतित्वेन वा? प्राच्यकल्पनायामेकमनेकाकारं सामान्य-
विशेषज्ञानं सर्वदा स्यात् स्वालम्बनानुरूपत्वात्सकलविज्ञानानाम् । द्वितीयविकल्पे तु व्यक्तीनामनधिगमेपि सामान्यज्ञानप्रसङ्गः । न खलु रूपज्ञाने चक्षुषोधिगत-
स्याधिपतित्वेन व्यापारो दृष्टोऽदृष्टस्य वा/ सर्वथा नित्यवस्तुनः क्रमाऽक्रमाभ्यामर्थक्रियाविरोधाच्चास्य न कस्याञ्चिदर्थक्रियायां व्यापारः । व्यापारे वा
सहकारिनिरपेक्षितया सदा कार्यकारित्वानुषङ्गस्तदवस्थाभाविनः कार्यजननस्वभावस्य सदा सम्भवात् । अभावे चाऽनित्यत्वं स्वभावभेदलक्षणत्वात्तस्य । कार्या-
जननस्वभावत्वे वास्य सर्वदा कार्याजनकत्वप्रसङ्गः । यो हि यदऽजनकस्वभावः सोन्यसहितोपि न तज्जनयति यथा शालिबीजं क्षित्याद्यविकलसामग्रीयुक्तं
कोद्रवाङ्कुरम् । अजनकस्वभावं च सामान्यं कार्यस्य—इत्यवस्तुत्वापत्तिर्नित्यैकस्वभावसामान्यस्य—अर्थक्रियाकारित्वलक्षणत्वाद्वस्तुनः । तथा तत्सर्वसर्वगतं स्वव्य-
क्तिसर्वगतं वा? न तावत्सर्वसर्वगतं व्यक्त्यन्तरालेऽनुपलभ्यमानत्वाद्व्यक्तिस्वात्मवत् । तत्रानुपलम्भो हि तस्याऽव्यक्तत्वाद्व्यवहितत्वाद्दूरस्थितत्वाददृश्यत्वा-
त्स्वाश्रयेन्द्रियसम्बन्धविरहादाश्रयसमवेतरूपाभावाद्वा स्याद्गत्यन्तराऽभावात्? न तावदव्यक्तत्वात्—एकत्र व्यक्तौ सर्वत्र व्यक्तेरभिन्नत्वात् । अव्यक्तत्वाच्चान्तराले
तस्यानुपलम्भे व्यक्तिस्वात्मनोप्यनुपलम्भोऽत एवास्तु । तत्रास्य सद्भावावेदकप्रमाणाभावादसत्त्वादेवाऽनुपलम्भे सामान्यस्यापि सोऽसत्त्वादेवास्तु विशेषाभावात् ।
न खलु प्रत्यक्षतस्तत्तत्रोपलभ्यते विशेषरहितत्वात् खरविषाणवत् । किञ्च प्रथमव्यक्तिग्रहणवेलायां तदभिव्यक्तस्यास्य ग्रहणेऽभेदात्तस्य सर्वत्र सर्वदोपलम्भप्रसङ्गः
सर्वात्मनाभिव्यक्तत्वात् । अन्यथा व्यक्ताव्यक्तस्वभावभेदेनानेकत्वानुषङ्गादसामान्यरूपतापत्तिः । तस्मादुपलब्धिलक्षणप्राप्तस्यानुपलम्भाद्व्यक्त्यन्तराले सामान्य-

---

६ व्यक्तीनामने-
१ न विशेषज्ञानानुषङ्ग । न च तथा—विशेषमन्तरेण सामान्याप्रतीते ॥ २ अयमुपकार सामान्यस्येति ॥ ३ सम्बन्धसिद्ध्यर्थम् ॥ ४ गौगारित्यादि ॥ ५ सामान्यस्यैकत्वादेक सामान्यज्ञानम् ॥ ६ व्यक्तीनामने-
कत्वादनेकाकारम् ॥ ७ अपरिज्ञाता व्यक्तय सामान्यज्ञान कथ जनयन्तीत्युक्त सत्याहाचार्य ॥ ८ चक्षुर्धर्मस्य ॥ ९ सामान्यलक्षणस्य ॥ १० स्वविषयज्ञानलक्षण ॥ ११ तदवस्था=सहकारिरहितत्वम् ॥ १२ कूटस्थनित्य-
सामान्यस्य ॥ १३ सामान्य कार्यजनक न भवति तदजनकत्वादित्यध्याहार्य ॥ १४ सहकारिकारण ॥ १५ अर्थो घटादि तस्य क्रिया कार्यत्व जन्यत्वमिति यावत् । ता करोति य पदार्थो मृत्पिण्डलक्षण सोर्थक्रियाकारी ।
तस्य भावस्तत्वम् । तस्मात् ॥ १६ सर्वासु स्वसम्बन्धिखण्डमुण्डादिव्यक्तिषु ॥ १७ स्वव्यक्तौ विवक्षितैकव्यक्तौ ॥ १८ एकस्या व्यक्तौ ॥ १९ प्राकट्ये सति ॥ २० व्यक्तिषु ॥ २१ सामान्यस्याभिव्यक्ते ॥ २२ प्रकट-
रूपसामान्यस्यैकत्वात् ॥ २३ व्यक्त्यन्तराले ॥ २४ नाऽभावात् । ततश्च सामान्यवद्व्यक्तेरपि व्यापकत्वान्नित्यत्वप्रसङ्ग ॥ २६ सद्भावावेदकप्रमाणाभावस्य ॥ २७ व्यापकत्वनित्यत्वात् ॥ २८ विशेषरूपताप्रतिपत्तिरिति
भावस्तस्याऽनेकरूपत्वात् ॥

स्यासत्त्वं व्यक्तिस्वात्मवत् । व्यक्त्यन्तरालेऽस्ति सामान्यं युगपद्भिन्नदेशस्वाधारवृत्तित्वे सत्येकत्वाद्वंशादिवदित्यनुमानात्तत्र तद्भावसिद्धिरित्यप्यसङ्गतं हेतोः प्रतिवाद्यऽसिद्धत्वात् । न हि भिन्नदेशासु व्यक्तिषु सामान्यमेकं प्रत्यक्षतः स्थूणादौ वंशादिवत्प्रतीयते यतो युगपद्भिन्नदेशस्वाधारवृत्तित्वे सत्त्येकत्वं तस्य सिध्यत्स्वाधारान्तरालेऽस्तित्वं साधयेत् । तन्नाव्यक्तत्वात्तत्राऽनुपलम्भः । नापि व्यवहितत्वादभिन्नत्वादेव । नापि दूरस्थितत्वात्तत एव । नाप्यदृश्यात्मत्वात्स्वाश्रयेन्द्रियसम्बन्धविरहादाश्रयसमवेतरूपाभावाद्वा–अभेदादेव । तन्न सर्वसर्वगतं सामान्यम् । नापि स्वव्यक्तिसर्वगतं–प्रतिव्यक्ति परिसमाप्तत्वेनास्याऽनेकत्वानुषङ्गाद् व्यक्तिस्वरूपवत् । कार्त्स्न्यैकदेशाभ्यां वृत्त्यनुपपत्तेश्चाऽसत्त्वम् । किञ्चैकत्र व्यक्तौ सर्वात्मना वर्त्तमानस्यास्यान्यत्र वृत्तिर्न स्यात् । तत्र हि वृत्तिस्तद्देशे गमनात्पिण्डेन सहोत्पादात्तद्देशे सद्भावादंशवत्तया वा स्यात् ? न तावद्गमनादन्यत्र पिण्डे तस्य वृत्तिर्निष्क्रियत्वोपगमात् । किञ्च पूर्वपिण्डपरित्यागेन तत्तत्र गच्छेदपरित्यागेन वा ? न तावत्परित्यागेन प्राक्तनपिण्डस्य गोत्वपरित्यक्तस्यागोरूपताप्रसङ्गात् । नाप्यपरित्यागेनापरित्यक्तप्राक्तनपिण्डस्यास्यानंशस्य रूपादेरिव गमनासम्भवात् । न ह्यपरित्यक्तपूर्वाधाराणां रूपादीनामाधारान्तरसङ्क्रान्तिर्दृष्टा । नापि पिण्डेन सहोत्पादात्तस्याऽनित्यतानुषङ्गात् । नापि तद्देशे सत्त्वात्पिण्डोत्पत्तेः प्राक् तत्र निराधारस्यास्यावस्थानाभावात् । भावे वा स्वाश्रयमात्रवृत्तित्वविरोधः । नाप्यंशवत्तया–निरंशत्वप्रतिज्ञानात् । ततो व्यक्त्यन्तरे सामान्यस्याभावानुषङ्गः । परेषां प्रयोगः 'ये यत्र नोत्पन्ना नापि प्रागवस्थायिनो नापि पश्चादन्यतो देशादागतिमन्तस्ते तत्राऽसन्तः । यथा खरोत्तमाङ्गे तद्विषाणम् । तथा च सामान्यं तच्छून्यदेशोत्पादवति घटादिके वस्तुनि' इति । ये तु व्यक्तिस्वभावं सामान्यमभ्युपगच्छन्ति 'तादात्म्यमस्य कस्माच्चेत्स्वभावादिति गम्यताम्' इत्यभिधानात्, तेषां व्यक्तिवत्तस्यासाधारणरूपत्वानुषङ्गाद् व्यक्त्युत्पादविनाशयोश्चास्यापि तद्योगित्वप्रसङ्गान्न सामान्यरूपता । अथाऽसाधारणरूपत्वमुत्पादविनाशयोगित्वं चास्य नाभ्युपगम्यते तर्हि विरुद्धधर्माध्यासितो व्यक्तिभ्योऽस्य भेदः स्यात् । उक्तं च "न याति न च तत्रासीदस्ति पश्चान्न चांशवत् । जहाति पूर्वमाधारमहो व्यसनसन्ततिः । १ । तादात्म्यं चेन्मतं जातेर्व्यक्तिजन्मन्यजातता । नाशेऽनाशश्च केनेष्टस्तद्वच्चानन्वयो न किम् । २ । व्यक्तिजन्मन्यजाता चेदागता

१ देवदत्तेन व्यभिचारपरिहारार्थं विशेषणद्वयम् ॥ २ स्तम्भादौ ॥ ३ जैनादि ॥ ४ व्यक्तावऽभिव्यक्तस्य सामान्यस्य ॥ ५ एकस्वभावत्वात् (व्यक्त्या सह) ॥ ६ व्यापित्वात् ॥ ७ सामान्यस्याश्रया खण्डादय ॥ ८ इन्द्रियसम्बद्धत्वादिविशिष्टव्यक्तिरूपत्वात् ॥ ९ व्यक्तीनामानन्त्यात् ॥ १० अनेकत्वसाधनलक्षणं दूषणमुदेष्यतीति भाव ॥ ११ सामान्य निष्क्रियमिति वचनात् ॥ १२ परेण ॥ १३ व्यक्तिदेशे ॥ १४ जटिलानाम् ॥ १५ सामान्यमसत् अनुत्पद्यमानादित्वादित्युपरिष्टाद्योज्यम् ॥ १६ तच्छून्यौ च तद्देशोत्पादो चेति ॥ १७ मीमांसका ॥ १८ व्यक्तिरेव स्वभावो यस्य तयोरभेदात् ॥ १९ व्यक्त्या सह ॥ २० मीमांसकानाम् ॥ २१ असाधारणरूपताया व्यक्तेरभिन्नत्वात् ॥ २२ सामान्यस्य ॥ २३ व्यक्तिसामान्ययोरभेदात् ॥ २४ परेण ॥ २५ घटपटयोरिव ॥ २६ व्यक्त्यन्तरम् ॥ २७ व्यक्तिदेशे ॥ २८ व्यक्तौ भग्नाया सत्त्याम् ॥ २९ सामान्यस्य विशेषणम् ॥ ३० तथा स्थिति ॥ ३१ व्यक्त्या सह ॥ ३२ तदा इति शेष ॥ ३३ जाते ॥ ३४ व्यक्ते ॥ ३५ जाते ॥ ३६ व्यक्तिवत् ॥ ३७ असाधारणता ॥ ३८ किन्तु स्यादेव ॥ ३९ सति ॥

नाश्रयान्तरात् । प्रागासीन्न च तद्देशे सा तया सङ्गता कथम् । ३ । व्यक्तिनाशे न चेन्नष्टा गता व्यक्त्यन्तरं न च । तच्छून्ये न स्थिता देशे सा जातिः क्वेति कथ्यताम् । ४ । व्यक्तेर्जात्यादियोगेपि यदि जातेः स नेष्यते । तादात्म्यं कथमिष्टं स्यादनुपप्लुतचेतसाम् । ५ ।" ततो यदुक्तं कुमारिलेन "विपर्ययेण हि बुद्धीनां विना नोत्पत्तिरिष्यते । विशेपादन्यदिच्छन्ति सामान्यं तेन तद्ध्रुवम् । १ । तां हि तेन विनोत्पन्ना मिथ्याः स्युर्विपर्ययाद्दते । न त्वन्येन विना वृत्तिः सामान्यस्येह दुष्यति ।२।" इति तन्निरस्तं–नित्यसर्वगतसामान्यस्याश्रयादेकान्ततो भिन्नस्याभिन्नस्य वाऽनेकदोषदुष्टत्वेन प्रतिपादितत्वात् । अनुगतप्रत्ययस्य च सदृशपरिणामनिबन्धनत्वप्रसिद्धेः । स चानित्योऽसर्वगतोऽनेकव्यक्त्यात्मकतयाऽनेकरूपश्च रूपादिवत्प्रत्यक्षत एव प्रसिद्धः । ततो भट्टेनायुक्तमुक्तं "पिण्डभेदेषु गोबुद्धिरेकगोत्वनिबन्धना । गवाभासैकरूपाभ्यामेकगोपिण्डबुद्धिवत् ।१।" यच्चेदमुक्तं "न शाबलेयाद्गोबुद्धिस्ततोऽन्यालम्बनापि वा । तदभावेपि सद्भावाद् घटे पार्थिवबुद्धिवत्" तत्सिद्धसाधनं–व्यक्तिव्यतिरिक्तसदृशपरिणामालम्बनत्वात्तस्या । यच्च सामान्यस्य सर्वगतत्वसाधनमुक्तं 'प्रत्येकसमवेतार्थविषया वाथ गोमतिः । प्रत्येकं कृत्स्नरूपत्वात्प्रत्येकं व्यक्तिबुद्धिवत् । १ । प्रयोगः । येयं गोबुद्धिः सा प्रत्येकसमवेतार्थविषया प्रतिपिण्डं कृत्स्नरूपपदार्थाकारत्वात्प्रत्येकव्यक्तिविषयबुद्धिवत् । एकत्वमप्यस्य प्रसिद्धमेव । तथा हि । यद्यपि सामान्यं प्रत्येकं सर्वात्मना परिसमाप्तं तथापि तदेकमेवैकाकारबुद्धिग्राह्यत्वात् । यथा नञ्युक्तवाक्येषु ब्राह्मणादिनिवर्त्तनम् । न चेयं मिथ्या कारणदोषबाधकप्रत्ययाभावात् । उक्तं च । 'प्रत्येकसमवेतापि जातिरेकैकबुद्धितः । नञ्युक्तेष्विव वाक्येषु ब्राह्मणादिनिवर्त्तनम् ।१। नैकरूपा मतिर्गोत्वे मिथ्या वक्तुं च शक्यते । नात्र कारणदोषोस्ति बाधकप्रत्ययोपि वा ।२।' तदप्युक्तिमात्रं–प्रतिपिण्डं कृत्स्नरूपपदार्थाकारत्वस्य सदृशपरिणामाविनाभावित्वेन साध्यविपरीतार्थे साधनस्य विरुद्धत्वात् । नित्यैकरूपप्रत्येकपरिसमाप्तसामान्यसाधने दृष्टान्तस्य साध्यविकलता । तथाभूतस्य चास्य सर्वात्मना बहुषु परिसमाप्तत्वे

---

१ व्यक्त्यन्तरात् ॥ २ जाति =जन्म ॥ ३ आदिना विनाशग्रहणम् ॥ ४ जात्यादियोग ॥ ५ तर्हीतिशेष ॥ ६ जातिव्यक्त्यो ॥ ७ अभ्रान्तचेतसाम् ॥ ८ सामान्येन ॥ ९ अनुगताकाराणाम् ॥ १० यैर्वादिभि ॥ ११ ते ॥ १२ नित्यमचलम् ॥ १३ विपर्येण विनोत्पत्ति कथमित्युक्ते आह ॥ १४ यत ॥ १५ समवायेन ॥ १६ तादात्म्येन स्वभावाद्वर्त्तत इत्यर्थ ॥ १७ व्यक्ते सकाशात् ॥ १८ एकत्वापत्तिव्यपदेशाभावादयोनेके ॥ १९ सास्नादिमत्त्वेनायमनेन सदृश इति ॥ २० गौर्गौरिति ॥ २१ गवाभासश्चैकरूप च ताभ्याम् । एक( गौर्गौरित्याध्यात्मिककारण )ज्ञानत्वादेकरूप(गोरूपपिण्ड बाह्यकारण )त्वाचेत्यर्थ ॥ २२ सामान्यनिबन्धनेति ॥ २३ ततोन्यत्= खण्डादि ॥ २४ नेति सबन्ध ॥ २५ शावलेयाभावेपि खण्डादिगोबुद्धिसद्भावात् तदभावेऽपि शावलेयादेस्तत्सद्भावादित्यर्थ ॥ २६ गोबुद्धे ॥ २७ श्वेतपीतादिविशेषमन्तरेण यथा घटे पृथिवीत्वसामान्येन पार्थिवबुद्धि ॥ २८ न केवलमेकगोत्वनिबन्धना ॥ २९ एकामेका व्यक्तिं प्रति ॥ ३० गोमते ॥ ३१ गौर्गौरिति प्रत्यय ॥ ३२ अर्थो=गोत्वलक्षणसामान्यम् ॥ ३३ गोत्वादिसामान्य ॥ ३४ अय गोरय गौरिति ॥ ३५ नाय ब्राह्मणो नाय ब्राह्मण इत्यादि ॥ ३६ एकमेव ॥ ३७ इन्द्रियादि ॥ ३८ गौर्गौरिति ॥ ३९ हेतो ॥ ४० सदृशपरिणाम =साध्यम् ॥ ४१ सर्वगतत्व ॥ ४२ असर्वगतत्वे ॥ ४३ व्यक्तीना नित्यत्वमेकरूपत्व च नास्ति यतः ॥ ४४ एकत्वानुमाने दूषणमाह ॥ ४५ विशेषेषु ॥

सर्वेषां व्यक्तिभेदाना परस्परमेकरूपतापत्तिरेकव्यक्तिपरिनिष्ठितस्वभावसामान्यपदार्थसंसृष्टत्वादेकव्यक्तिस्वरूपवत्। सामान्यस्य वानेकत्वापत्तिर्युगपदनकेवस्तुपरिसमाप्तात्मरूपत्वाद्दूरतरदेशावच्छिन्नानेकभाजनगतबिल्वादिफलवत् । ततोऽयुक्तमुक्तं–नात्र बाधकप्रत्ययोस्तीति–प्राक्प्रतिपादितप्रकारेणानेकबाधकप्रत्ययोपनिपातात्। प्रत्येकसमवेतायाश्च जातेरसिद्धत्वादेकबुद्धिग्राह्यत्वादित्याश्रयासिद्धो हेतुः। स्वरूपासिद्धश्चाबाधसादृश्यबोधादिगम्यत्वेनैकाकारप्रत्ययग्राह्यत्वस्यासिद्धेः। ब्राह्मणादिनिवृत्तिश्च परमार्थतो नैकरूपास्तीति साध्यविकलमुदाहरणम् । एतेन यदुक्तमुद्द्योतकरेण 'गवादिष्वनुवृत्तिप्रत्ययः पिण्डादिव्यतिरिक्तान्निमित्ताद्भवति विशेषकत्वान्नीलादिप्रत्ययवत्। तथा गोतोऽर्थान्तरं गोत्वं भिन्नप्रत्ययविषयत्वाद्रूपादिवत् तस्येति च व्यपदेशविषयत्वात्। यथा चैत्रस्याश्वश्चैत्राद्व्यपदिश्यमान' इति, तन्निरस्तम्–अनुवृत्तिप्रत्ययस्य हि सामान्येन पिण्डादिव्यतिरिक्तनिमित्तमात्रसाधने सिद्धसाध्यतानुषङ्गात्सदृशपरिणामनिबन्धनतयाऽस्याभ्युपगमात्। नित्यैकानुगामिसामान्यनिबन्धनत्वसाधेन दृष्टान्तस्य साध्यविकलता। न ह्येवंभूतेन क्वचिदन्वयः सिद्धः। न चानुगतज्ञानोपलम्भादेव तथाभूतसामान्यसिद्धिः। यतः किं यत्रानुगतज्ञानं तत्र सामान्यसम्भवः प्रतिपद्यते यत्र वा सामान्यसम्भवस्तत्रानुगतज्ञानमिति ? तत्राद्यः पक्षोऽयुक्तो गोत्वादिसामान्येषु सामान्यं सामान्यमित्यनुगताकारप्रत्ययोपलम्भेनाऽपरसामान्यकल्पनाप्रसङ्गात्। न चात्रासौ प्रत्ययो गौणोऽस्खलद्वृत्तित्वेन गौणत्वासिद्धेः। तथा प्रागभावादिष्वप्यभावेष्वभावोऽभाव इत्यनुगतप्रत्ययप्रवृत्तिरस्ति। न च परैरभावसामान्यमभ्युपगतम्। न खलु तत्रानुगाम्येकं निमित्तमस्त्यन्यत्र सदृशपरिणामात्। ननु चापरसामान्यस्य प्रागभावादिष्वभावेपि सत्ताख्यं महासामान्यमस्ति। तद्बलादेवाभावप्रत्ययोऽनुगतो भविष्यति । उक्तं च "ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते । सत्तैव ह्यत्र सामान्यमनुत्पत्त्यादिरूपता। १। अनुत्पत्त्यादिविशिष्टेत्यर्थः ।" तदयुक्तमभिप्रेतपदार्थव्यतिरिक्तानां मतान्तरीयार्थानामुत्पाद्यकार्थानां वाऽभावप्रतीतिविषयतोपलम्भेन सत्त्वप्रसङ्गात्। तत्राभावेष्वनुवृत्तप्रतीतेरनुगाम्येकसामान्यनिबन्धनत्वमस्तीत्यन्यत्राप्यस्यास्तन्निबन्धनत्वाभावः । प्रयोगः । ये क्रमित्वानुगामित्ववस्तु-

---

१ अभिन्नत्वात्। तादात्म्यापन्नत्वात् ॥ २ सम्पूर्ण ॥ ३ भिन्नभिन्न ॥ ४ नित्याया एकरूपाया प्रत्येक परिसमाप्तायाश्च ॥ ५ अय गोरय गोरिति ॥ ६ आश्रयभूताया जातेरभावात् ॥ ७ अयमनेन सदृश इति ॥ ८ अनेकरूपवत् ॥ ९ कृत्वा ॥ १० एकाकारप्रत्ययेन ग्राह्य सामान्य परमते ॥ ११ सामान्यस्य ॥ १२ नाय क्षत्रियो ब्राह्मणो नाय वैश्यो ब्राह्मण इत्यादिना कृत्वाऽभावानामनेकत्वात्। अभाव अभाव इति प्रत्ययसयुक्तप्रागभावादिषु ॥ १३ एकत्वेन साध्येन ॥ १४ मीमासक प्रति नित्यसर्वगतजातिनिराकरणपरेण ग्रन्थेन ॥ १५ शवलशावलेयादिविशेषगोपिण्डादि ॥ १६ सर्वगनित्यत्वात् ॥ १७ भेदकत्वात् ॥ १८ गोरिद गोत्वमिति ॥ १९ भेदेनाभिधीयमान ॥ २० साधारणेन कृत्वा ॥ २१ जैनानाम् ॥ २२ पिण्डादिव्यतिरिक्तान्नित्यैकानुगामिसामान्यान्निमित्ताद्भवतीति साध्यम् ॥ २३ यो यो भेदकप्रत्यय स स नित्यैकानुगामिसामान्याद्भवतीति ॥ २४ परेण ॥ २५ गवादिव्यक्तिनिष्ठेषु गोत्वादिसामान्येषु घटत्वमपि सामान्य पटत्वमपि सामान्यमित्यनुगताकारप्रत्यय ॥ २६ गोत्वादिष्वन्य ॥ २७ कल्पित ॥ २८ अभावत्वस्य ॥ २९ परेण ॥ ३० एका सर्वगता ॥ ३१ आदिना नित्यसर्वगतत्वादिग्रहणम् ॥ ३२ ततोऽभावप्रत्ययोऽनुगतो भविष्यति ॥ ३३ अभिप्रेतानि द्रव्यगुणकर्माणि ॥ ३४ अद्वैतप्रधानादीनाम् ॥ ३५ लोके विचित्रकार्याणाम् ॥

त्वोत्पत्तिमत्त्वसत्त्वादिधर्मोपेतास्ते परकल्पितनित्यैकसर्वगतसामान्यनिबन्धना न भवन्ति । यथाऽभावेष्वभावोऽभाव इति प्रत्ययाः, सामान्येषु सामान्यं सामान्यमिति प्रत्यया वा । तथा चामी प्रत्यया इति । अथ यत्र सामान्यं तत्रैवानुगतज्ञानकल्पना,—न पाचकादिषु तदभावेष्यनुगतप्रत्ययप्रवृत्तेः । नै खलु तत्रानुगाम्येकं सामान्यमस्ति यत्प्रसादात्तत्प्रवृत्तिः स्यात् । निमित्तान्तरमस्तीति चेत्तत्किं कर्म कर्मसामान्यं वा स्याद् व्यक्तिः शक्तिर्वा? न तावत्कर्म तस्य प्रतिव्यक्ति विभिन्नत्वात् । विभिन्नं ह्यऽभिन्नस्य कारणं न भवतीति सर्वोयमारम्भः । तच्चेद्भिन्नमपि तथाभूतकार्यकारणं तदान्यत्र कः प्रद्वेषः ? किञ्च तत्कर्म नित्यं वा स्यादनित्यं वा ? न तावन्नित्यं तथानुपलब्धेरनभ्युपगमाच्च । अनित्यं तु न सर्वदा स्थितिमदिति विनष्टे तस्मिन्न तथाभूतो व्यपदेशो ज्ञानं वा स्यात्—अपचत क्रियाविरहात् । पचन्नेव हि तथा व्यपदिश्येत नान्यथा । तन्न कर्मैतस्य प्रत्ययस्य निबन्धनम् । नापि कर्मसामान्यम् । तद्धि कर्माश्रितं कर्माश्रयाश्रितं वा ? यदि कर्माश्रितं कथमन्यत्र ज्ञानं जनयेत् ? न ह्यन्यत्र वृत्तिमदन्यत्र ज्ञानकारणमतिप्रसङ्गात् । किञ्च कर्मसामान्यात्पाकः पाक इति प्रत्ययः स्यान्न पुनः पाचकः पाचक इति । अथ कर्माश्रयाश्रितं, तन्न—कर्माश्रितत्वात् । परम्परया कर्माश्रयाश्रितं तदित्यसारमपचतः कर्मविवेकात् । विविक्ते च कर्मणि न कर्मत्वं कर्मणि तदाश्रये वाऽऽश्रितमनाश्रितं च कथं तत्तत्र तथाज्ञानहेतुः स्यात् ? अथाऽपचतोऽतीतानागते कर्मणी तथाव्यपदेशज्ञाननिबन्धनं, न कर्मत्वम् । ननु सत्यसती वा ते तन्निबन्धनं स्याताम् । न तावत्सती—अतीतस्य प्रच्युतत्वादनागतस्य चालब्धात्मस्वरूपत्वात् । असती च कथं कस्यापि निबन्धनमतिप्रसङ्गात् । तन्न कर्मत्वमपि तत्प्रत्ययस्य निबन्धनम् । नापि व्यक्तिरनिष्टेर्विभिन्नत्वाच्च । नापि शक्तिः । सा हि पाचकादन्याऽनन्या वा स्यात् ? अनन्यत्वे तयोरन्यतरदेव स्यात् । अन्यत्वे चास्या एव कार्योपयोगित्वेन कर्तुरकर्तृत्वानुषङ्गः । अथ पारम्पर्येणोपयोगः । कर्त्ता हि शक्तावुपयुज्यते, शक्तिश्च कार्ये । नन्वसौ शक्तावुपयुज्यते स्वरूपेण शक्त्यन्तरेण वा ? शक्त्यन्तरेणोपयोगेऽनवस्था । स्वरूपेणोपयोगे कार्येप्यसौ तथा किन्नोपयुज्यते ? किं परम्परापरिश्रमेण? नं चान्यन्निमित्तमस्ति । पाचकत्वमस्तीति चेत्तत्किं द्रव्योत्पत्तिकाले व्यक्तमव्यक्तं वा ? व्यक्तं चेत्तर्हि पाकक्रियायाः प्रागेव तथा ज्ञानाभिधाने स्याताम् । अथाऽव्यक्तं तर्हि पश्चादपि न ते स्याताम्—विशेषाभावात् । तथा हि ।

---

१ पुरुषेषु ॥ २ पाचक पाचक इत्यादि ॥ ३ कथं सामान्यं नास्तीत्युक्ते आह ॥ ४ पचनक्रियाया पूर्वं नास्ति ॥ ५ देवदत्तयज्ञदत्तचैत्रमैत्रेषु पचनक्रियालक्षणं कर्म भिन्नम् ॥ ६ अनुगताकारस्य ॥ ७ जैनमताभ्युपगते प्रतिव्यक्ति भिन्ने सदृशपरिणामे ॥ ८ शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वाभ्युपगमात् ॥ ९ परेण ॥ १० पाचक इति ॥ ११ पाचक इति ॥ १२ पाचक इति ॥ १३ कर्मवत्पुरुषाश्रितम् ॥ १४ कर्माश्रये देवदत्ते ॥ १५ कर्मणि १६ देवदत्ते ॥ १७ गृहे वृत्तिमान्प्रदीपो गुहाया ज्ञानकारणं स्यादित्यतिप्रसङ्गः ॥ १८ कर्मत्वं कर्माश्रितं कर्म च देवदत्ताश्रितमिति ॥ १९ पुरुषस्य ॥ २० नष्टे ॥ २१ सामान्यम् ॥ २२ देवदत्ते ॥ २३ पाचक इति ॥ २४ पाचक पाचक इति ॥ २५ अनुगतप्रत्ययस्य ॥ २६ परेणानभ्युपगमात् ॥ २७ अनेकत्वात् ॥ २८ पचनलक्षणं कार्यम् ॥ २९ कर्मादिभ्योऽन्यन्निमित्तं भविष्यतीत्याह ॥ ३० पाचक पाचक इति ज्ञानव्यपदेशयोरनुगतप्रत्ययहेतु ॥ ३१ देवदत्तलक्षण ॥ ३२ पाचक इति ॥ ३३ भेदाभावान्नित्यत्वस्यैकस्वभावत्वात् ॥

यथान्यापेक्षो विशेषः स्वामर्थक्रियां व्यावृत्तिज्ञानलक्षणां कुर्वन्नर्थक्रियाकारी तथा सामान्यमप्यनुगतज्ञानलक्षणामर्थक्रियां कुर्वत्कथमर्थक्रियाकारि न स्यात् ? तद्वाह्यां[3] पुनर्वाहदोहाद्यर्थक्रियां यथा न केवलं[4] सामान्यं कर्तुमुत्सहते तथा विशेषोप्युभयात्मनो[5] वस्तुनो गवादेस्तत्रोपयोगात् । इत्यर्थक्रियाकारित्वेनापि[6] सामान्यविशेषाकारयोरभेदात्सिद्धं[7] वास्तवत्वम् । ततोऽपाकृतमेतत्[8] "सर्वे[9] भावाः स्वभावेन[10]–स्वस्वभावव्यवस्थितेः[11] । स्वभावपरभावाभ्यां[12] यस्माद्व्यावृत्तिभागिनः ।१। तस्माद्यतो यतोऽर्थानां[13] व्यावृत्तिस्तन्निबन्धनाः[14] । जातिभेदाः[15] प्रकल्प्यन्ते[16] तद्विशेषावगाहिनः[17] ।२।" इति[18] । ननु सादृश्ये[19] सामान्ये[20] स एवायं गौरिति प्रत्ययः कथं शबलं दृष्ट्वा धवलं पश्यतो घटेतेति चेदेकत्वोपचारादिति ब्रूमः । द्विविधं ह्येकत्वं मुख्यमुपचरितं च । मुख्यमात्मादिद्रव्ये[21] । सादृश्ये[22] तूपचरितम् । नित्यसर्वगतस्वभावत्वे सामान्यस्यानेकदोषदुष्टत्वप्रतिपादनात्[23] । तेन समानोयमिति प्रत्ययश्च कथं स्यात्[23] ? तयोरेकसामान्ययोगाच्चेन्न[24]–सामान्यवन्तावेताविति प्रत्ययप्रसङ्गात्[25] । तयोरभेदोपचारे[26] तु सामान्यमिति[27] प्रत्ययः स्यात्, न पुनस्तेन समानोयमिति । यष्टिपुरुषयोरभेदोपचाराद्यष्टिसहचरितः पुरुषो यष्टिरिति[28] यथा । ननु व्यक्तिवत्समानपरि-[29][30]णामेष्वपि समानप्रत्ययस्यापरसमानपरिणामहेतुकत्वप्रसङ्गादनवस्था स्यात् । तमन्तरेणाप्यत्र समानप्रत्ययोत्पत्तौ पर्याप्त खण्डादिव्यक्तौ समानपरिणामकल्पनयेत्यन्यत्रापि[31] समानम् । विसदृशपरिणामेष्वपि हि विसदृशप्रत्ययो यदि तदन्तरहेतुको[32][33]ऽनवस्था । स्वभावतश्चेत् सर्वत्र विसदृशपरिणामकल्पनानर्थक्यम् । न च सदृशपरिणामानामर्थवत्स्वात्मन्यपि समानप्रत्ययहेतुत्वेऽर्थानामपि[34] तत्प्रसङ्गः[35] प्रतिनियतशक्तित्वाद्भावानाम् । अन्यथा घटादेः प्रदीपात्स्वरूपप्रकाशोपलम्भात्प्रदीपेपि तत्प्रकाशः प्रदीपान्तरादेव स्यात्[36] । स्वकारणकलापादुत्पन्नाः सर्वेऽर्था विसदृशप्रत्ययविषयाः स्वभावत एवेत्यभ्युपगमे[37] समानप्रत्ययविषयास्ते तथा किं नाभ्युपगम्यन्ते । अलं प्रतीत्यपलापेन ।

---

१ सदृशपरिणामलक्षणम् ॥ २ अनुगतज्ञानलक्षणार्थक्रिया यत ॥ ३ विशेषनिरपेक्षम् ॥ ४ केवलतया ॥ ५ सामान्यविशेषात्मन ॥ ६ न केवलमनावितप्रत्ययविषयत्वेन ॥ ७ सामान्यविशेषावेव चाकारो तयोरभेदाद्विशेषाभावादित्यर्थ ॥ ८ सामान्यविशेषाकारौ सिद्धो यत ॥ ९ प्रतिक्षण ध्वसिन परस्परमसस्पृष्टा परमाणुरूपा, गवादिस्वलक्षणाः ॥ १० वर्तन्ते इति शेष ॥ ११ स्वेषा भावाना स्वरूपेण व्यवस्थिते ॥ १२ सजातीयविजातीयपरमाणुरूपार्थत ॥ १३ विजातीयादर्थात् ॥ १४ स्वलक्षणानाम् ॥ १५ व्यावृत्तिनिबन्धन येषा ते ॥ १६ सामान्यभेदा ॥ १७ वासनात ॥ १८ ते खण्डादिकर्कादयश्च विशेषाश्च तानवगाहन्ते इत्येवशीला ॥ १९ विशेषा एव सन्ति न सामान्यमिति भाव ॥ २० जैनेनाङ्गीक्रियमाणे सादृश्ये सामान्ये सति ॥ २१ स एवायमात्मादि पदार्थ इति ॥ २२ सास्रादिमत्त्वेन ॥ २३ भवता मीमासकानाम् ॥ २४ खण्डमुण्डयो शबलधवलयोर्वा ॥ २५ सामान्यतद्वतो ॥ २६ परेणाङ्गीक्रियमाणे ॥ २७ इद (व्यक्ति) सामान्यमिति ॥ २८ कुन्ता प्रविशन्ति अश्वा आगच्छन्तीत्यादिवद्वा ॥ २९ व्यक्तियथा सादृश्यपरिणामात्तेन मुण्डेन सदृश खण्ड इत्यादि ॥ ३० समान इति परिणामेषु ॥ ३१ विसदृशपरिणामपक्षेपि ॥ ३२ अपरविसदृश ॥ ३३ तर्हीति शेष ॥ ३४ विशेषरूपाणाम् ॥ ३५ स्वात्मनि समानप्रत्ययहेतुत्वप्रसङ्ग ॥ ३६ प्रतिनियतशक्तित्वाभावात् ॥ ३७ सौगतेन ॥

एतेन नित्यं निखिलब्राह्मणव्यक्तिव्यापकं ब्राह्मण्यमपि प्रत्याख्यातम्। न हि तत्तथाभूतं प्रत्यक्षादिप्रमाणतः प्रतीयते। ननु च ब्राह्मणोयं ब्राह्मणोयमिति प्रत्यक्षत एवास्य प्रतिपत्तिः। न चेदं विपर्ययज्ञान बाधकाभावात्। नापि संशयज्ञानमुभयांशानवलम्बित्वात्। पित्रादिब्राह्मण्यज्ञानपूर्वकोपदेशसहाया चास्य व्यक्तिर्व्यञ्जिका। तत्रापि तत्सहायेति। न चात्राऽनवस्था बीजाङ्कुरादिवदनादित्वात्तत्तद्रूपोपदेशपरम्परायाः। तथानुमानतोपि। तथा हि। ब्राह्मणपदं व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धं पदत्वात्पटादिपदवत्। न चायमसिद्धो हेतुर्धर्मिणि विद्यमानत्वात्। नापि विरुद्धो विपक्षे एवाभावात्। नाप्यनैकान्तिकः पक्षविपक्षयोरवृत्तेः। नापि दृष्टान्तस्य साध्यवैकल्यं पटादौ व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धत्वाभावे व्यक्तीनामानन्त्येनाऽनन्तेनापि कालेन सम्बन्धग्रहणाघटनात्। तथा वर्णविशेषाध्ययनाचारयज्ञोपवीतादिव्यतिरिक्तनिमित्तनिबन्धनं ब्राह्मण इति ज्ञानं तन्निमित्तबुद्धिविलक्षणत्वाद्गवाश्वादिज्ञानवदित्यतोपि तत्सिद्धिः। तथा ब्राह्मणेन यष्टव्यं ब्राह्मणो भोजयितव्य इत्याद्यागमाच्चेति।

अत्रोच्यते। यत्तावदुक्तं प्रत्यक्षत एवास्य प्रतिपत्तिस्तत्र किं निर्विकल्पकात्सविकल्पकाद्वा ततस्तत्प्रतिपत्तिः स्यात्? न तावन्निर्विकल्पकात्तत्र जात्यादिपरामर्शाभावात्। भावे वा सविकल्पकानुषङ्गः। अन्यथा "अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्।१। ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया। बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता।२।" इति वचो विरुध्येत। नापि सविकल्पकात्कठकलापादिव्यक्तीनां मनुष्यत्वविशिष्टतयेव ब्राह्मण्यविशिष्टतयापि प्रतिपत्त्यसम्भवात्। पित्रादिब्राह्मण्यज्ञानपूर्वकोपदेशसहाया व्यक्तिर्व्यञ्जिकास्येत्यप्यसारं यतः पित्रादिब्राह्मण्यज्ञानं प्रमाणमप्रमाणं वा? अप्रमाणं चेत्कथमतोर्थसिद्धिरतिप्रसङ्गात्। प्रमाणं चेत्किं प्रत्यक्षमनुमानं वा? प्रत्यक्षं चेन्नास्य तद्ग्राहकत्वेन प्रागेव प्रतिषेधात्। किञ्च ब्राह्मण्यजातेः प्रत्यक्षतासिद्धौ यथोक्तोपदेशस्य प्रत्यक्षहेतुतासिद्धिस्तत्सिद्धौ च तत्प्रत्यक्षतासिद्धिरित्यन्योन्याश्रयः। यथा च ब्राह्मण्यजातेः प्रत्यक्षत्वमुपदेशेन व्यवस्थाप्यते तथा ब्रह्माद्यद्वैतप्रत्यक्षत्वमपि। तत्कथमप्रतिपक्षा पक्षसिद्धिर्भवतः स्यात्? अथाद्वैताद्युपदेशस्याध्यक्षबाधितत्वान्न प्रत्यक्षाङ्गत्वं, तदन्यत्रापि समानम्। ब्राह्मण्यविविक्तपिण्डग्राहिणाध्यक्षेणैव हि

---

१ विस्फारिताक्षस्य पुरुषस्य पुरो व्यवस्थितेषु क्षत्रियादिसद्मेषु ॥ २ इति=अनुगतैकाकारप्रत्ययतया ॥ ३ पित्रादिब्राह्मण्यज्ञानादस्य पुत्रस्य ब्राह्मण्यमित्युपदेश ॥ ४ कठकलापादि ॥ ५ ब्राह्मणोय ब्राह्मणोयमिति सामान्यस्य वाचकत्वाद् ब्राह्मण इति सामान्यपदम् ॥ ६ ब्राह्मण्य तदेवाभिधेय तेन सम्बद्धम् ॥ ७ पदत्वस्य ॥ ८ नापि दृष्टान्तस्य साधनवैकल्य पटादिपदे पदत्वस्य विद्यमानत्वात् ॥ ९ पटत्व ॥ १० द्वितीयमनुमानम् ॥ ११ गोत्वादि ॥ १२ ब्राह्मण इति ज्ञानस्य ॥ १३ अपुरुषकृतात् ॥ १४ जात्यादिपरामर्शकत्वेपि निर्विकल्पकत्वे ॥ १५ इन्द्रिय ॥ १६ अक्षिविस्फालनानन्तरम् ॥ १७ तज्ज्ञान वक्तु न शक्यते यत । विशेषणविशेष्यरहित शुद्ध भेदरहितसन्मात्रलक्षणवस्तुतो जातम् ॥ १८ भेदसहित समन्वितमिति यावत् ॥ १९ कठ स्वरे कृचा भेद ॥ २० ब्राह्मणव्यक्तीनाम् ॥ २१ वैधर्म्यदृष्टान्तोयम् । यत्र दृष्टान्तदार्ष्टान्तयोरुभयोरस्तित्व तत्रान्वयदृष्टान्त । यत्रैकस्यास्तित्वमेकस्य नास्तित्व तत्र व्यतिरेकदृष्टान्त ॥ २२ संशयादपि स्वाभिमतार्थसिद्धिप्रसङ्गात् ॥ २३ ब्राह्मण्यजाति ॥ २४ अनन्तरमेव ॥ २५ व्यवस्थाप्यता शास्त्रोपदेशेन ॥ २६ परपक्षस्यानिराकरणात् ॥ २७ अङ्ग=कारणम् ॥

तदुपदेशो वाध्यते । अथाऽदृश्या ब्राह्मण्यजातिस्तेनायमदोषः । कथं तर्हि सा प्रत्यक्षेत्युक्तं शोभेत? किञ्चौपाधिकोयं ब्राह्मणशब्दः । तस्य च निमित्तं[1] वाच्यम् । तच्च किं पित्रोरविप्लुतत्वं[2] ब्रह्मप्रभवत्वं वा? न तावदविप्लुतत्वमनादौ काले तस्याध्यक्षेण ग्रहीतुमशक्यत्वात् । प्रायेण प्रमदानां कामातुरतयेह जन्मन्यपि व्यभिचारोपलम्भाच्च कुतो योनिनिवन्धनो ब्राह्मण्यनिश्चयः? न च विप्लुतेतरपित्रऽपत्येषु वैलक्षण्यं लक्ष्यते । न खलु वडवायां गर्दभाश्वप्रभवापत्येष्विव ब्राह्मण्यां ब्राह्मणशूद्रप्रभवापत्त्येष्वपि वैलक्षण्यं लक्ष्यते [क्रियाविलोपात्[4] + शूद्रान्नादेश्च जातिलोपः[5] स्वयमेवाभ्युपगतः 'शूद्रान्नाच्छूद्रसम्पर्काच्छूद्रेण सह भाषणात् । इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते' इत्यभिधानात् । कथं चैवं[6] वादिनो ब्रह्मव्यासविश्वामित्रप्रभृतीनां ब्राह्मण्यसिद्धिस्तेषां तज्जन्यत्वासंभवात्[7] । तन्न पित्रोरविप्लुतत्वं तन्निमित्तम्[8] । नापि ब्रह्मप्रभवत्वं सर्वेषां तत्प्रभवत्वेन ब्राह्मणशब्दाभिधेयतानुषङ्गात् । तन्मुखाज्जातो ब्राह्मणो नान्य इत्यपि भेदो ब्रह्मप्रभवत्वे प्रजानां दुर्लभः । न खल्वेकवृक्षप्रभवं फलं मूले मध्ये शाखायां च भिद्यते । ननु नागवल्लीपत्राणां मूलमध्यादिदेशोत्पत्तेः कण्ठभ्रामर्यादिभेदो[12] दृष्ट एवमत्रापि प्रजाभेदः स्यादित्यप्यसद्यतस्तत्पत्राणां जघन्योत्कृष्टप्रदेशोत्पादात्तत्पत्राणां तद्भेदो युक्तो ब्रह्मणस्तु तद्देशाभावान्न तद्भेदः । तद्देशभावे चास्य जघन्योत्कृष्टतादिप्रसङ्गः स्यात् । किञ्च ब्रह्मणो ब्राह्मण्यमस्ति वा न वा? नास्ति चेत्कथमतो ब्राह्मणोत्पत्तिः? न ह्यमनुष्यादिभ्यो मनुष्याद्युत्पत्तिर्घटते । अस्ति चेत्किं सर्वत्र मुखप्रदेश एव वा? सर्वत्र इति चेत्स एव प्रजानां भेदाभावोनुषज्यते । मुखप्रदेशे एव चेदन्यत्र प्रदेशे तस्य शूद्रत्वानुषङ्गः । तथा च न पादादयोस्य वन्द्या[13] वृषलादिवत् । मुखमेव हि विप्रोत्पत्तिस्थानं वन्द्यं स्यात् । किञ्च ब्राह्मण एव तन्मुखाज्जायते तन्मुखादेवासौ जायेत? विकल्पद्वयेप्यन्योन्याश्रयः । सिद्धे हि ब्राह्मणत्वे तस्यैव तन्मुखादेव जन्मसिद्धिस्तत्सिद्धेश्च ब्राह्मणत्वसिद्धिरिति । अथ जात्या ब्राह्मण्यस्य सिद्धिस्तन्मुखादेव तज्जन्मनश्चायमदोषो,[14] न-अस्याः प्रत्यक्षतोऽप्रतीतेः । न खलु खण्डमुण्डादिषु सादृश्यलक्षणगोत्ववद्देवदत्तादौ ब्राह्मण्यजातिः प्रत्यक्षतः प्रतीयते । अन्यथा किमयं ब्राह्मणोऽन्यो वेति संशयो न स्यात् । तथा च तन्निरासाय गोत्राद्युपदेशो व्यर्थः । न हि गौरयं मनुष्यो वेति निश्चयो गोत्राद्युपदेशमपेक्षते । ननु यथा सुवर्णादिकं परोपदेशसहायात्प्रत्यक्षात्प्रतीयते तथा सापीत्यप्ययुक्तं यतो न पीततामात्रं सुवर्णमतिप्रसङ्गात्[15] । किन्तु तद्विशेषः । स च नाध्यक्षो दाहच्छेदादिवैयर्थ्यप्रसङ्गात् । तस्यापि सहायत्वे[16] तज्जातौ[17] किञ्चित्तथाविधं सहायं वाच्यम् । तच्चाकारविशेषो वा स्यादध्ययनादिकं वा? न तावदाकारविशेषस्तस्याब्राह्मणेपि सम्भवात् । अत एवाध्ययनं क्रियाविशेषो वा तत्सहायतां

---

१ विशेष्यवाच्यस्य विशेषण ( तस्य वाचकत्वात् ) वच ( तद्वाचक ) इत्यभिधानात् ॥ २ प्रवृत्तेरिति शेष ॥ ३ अभ्रान्तत्वम् ॥ ४ पित्रो ॥ ५ ब्राह्मण्यस्य ॥ ६ जाते ब्राह्मण्यस्य ॥ ७ ततो नित्यत्वव्याघात ॥ ८ मीमांसकेन ॥ ९ पित्रोरविप्लुतत्व ब्राह्मणशब्दप्रवृत्तिनिवृत्तिनिमित्तमित्येव वादिन ॥ १० अविप्लुतपितृ ॥ ११ ब्राह्मणशब्दप्रवृत्तिनिमित्तम् ॥ १२ मूले उत्पन्नानि पत्राणि कण्ठस्य भ्रम कुर्वन्ति, मध्ये उत्पन्नानि कण्ठस्य सुस्वरत्व कुर्वन्तीति भेद ॥ १३ तत्र ब्राह्मण्याभावात् ॥ १४ सिद्धिरिति सम्बन्ध ॥ १५ रीतिकादे सुवर्णत्वप्रसङ्गात् ॥ १६ सुवर्णादिज्ञाने ॥ १७ ब्राह्मण्य ॥

न प्रतिपद्यते। दृश्यते हि शूद्रोपि स्वजातिविलोपाद्देशान्तरे ब्राह्मणो भूत्वा वेदाध्ययनं तत्प्रणीतां च क्रियां कुर्वाणः। ततो ब्राह्मण्यजातेः प्रत्यक्षतोऽप्रतिभासनात्कथं व्रतबन्धवेदाध्ययनादि विशिष्टव्यक्तावेव सिद्ध्येत्? यदप्युक्तं ब्राह्मणपदमित्याद्यनुमानं तत्र व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धत्वं[3] तत्पदस्याध्यक्षबाधितं कठकलापादिव्यक्तीनां ब्राह्मण्यविविक्तानां प्रत्यक्षतो निश्चयादश्रावणत्वविविक्तशब्दवत्[4]। अप्रसिद्धविशेषणश्च पक्षः। न खलु व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयाभिसम्बद्धत्वं मीमांसकस्यास्माकं वा क्वचित्प्रसिद्धं व्यक्तिभ्यो[6] व्यतिरिक्ताव्यतिरिक्तस्य सामान्यस्याभ्युपगमात्[7]। हेतुश्चानैकान्तिकः सत्ताकाशकालपदे अद्वैतादिपदे वा व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धत्वाभावेपि पदत्वस्य[8] भावात्। तत्रापि तत्सम्बद्धत्वकल्पनायां सामान्यवत्त्वेनाद्वैताश्वविषाणादेर्वस्तुभूतत्वानुषङ्गात् कुतोऽप्रतिपक्षा पक्षसिद्धिः स्यात्? सत्तायाश्च सामान्यवत्त्वप्रसङ्गो गगनादीनां चैकव्यक्तिकत्वात्कथं सामान्यसम्भवः? दृष्टान्तश्च साध्यविकलः पटादिपदे व्यक्तिव्यतिरिक्तैकनिमित्तत्वासिद्धेः। एतेन वर्णविशेषेत्याद्यनुमानं प्रत्युक्तम्। नगरादौ च व्यक्तिव्यतिरिक्तैकनिमित्तनिबन्धनाभावेपि तथाभूतज्ञानस्योपलम्भादनेकान्तः। न खलु नगरादिज्ञाने व्यतिरिक्तमनुवृत्तप्रत्ययनिबन्धनं किञ्चिदस्ति काष्ठादीनामेव प्रत्यासत्तिविशिष्टत्वेन प्रासादादिव्यवहारनिबन्धनानां नगरादिव्यवहारनिबन्धनत्वोपपत्तेः। अन्यथा पण्णगरीत्यादिष्वपि वस्त्वन्तरकल्पनानुषङ्गः। ब्राह्मणेन यष्टव्यमित्याद्यागमोपि नात्र प्रमाणं प्रत्यक्षबाधितार्थाभिधायित्वात्तृणाग्रे हस्तियूथशतमास्त इत्यागमवत्। ननु ब्राह्मण्यादिजातिविलोपे कथं वर्णाश्रमव्यवस्था तन्निबन्धनो वा तपोदानादिव्यवहारो जैनानां घटेतेत्यप्यसमीचीनं क्रियाविशेषयज्ञोपवीतादिचिन्होपलक्षिते व्यक्तिविशेषे तद्व्यवस्थायास्तद्व्यवहारस्य चोपपत्तेः। कथमन्यथा परशुरामेण निःक्षत्रीकृत्य ब्राह्मणदत्तायां पृथिव्यां क्षत्रियसम्भवः? यथा चानेन निःक्षत्रीकृतासौ तथा केनचिन्निर्ब्राह्मणीकृतापि सम्भाव्येत। ततः क्रियाविशेषादिनिबन्धन एवायं ब्राह्मणादिव्यवहारः। एतेनाविगानं त्रैवर्णिकोपदेशोत्र वस्तुनि प्रमाणमिति प्रत्युक्तं तस्याप्यव्यभिचारित्वाभावात्। दृश्यन्ते हि बहवस्त्रैवर्णिकैरविगानेन ब्राह्मणत्वेन व्यवह्रियमाणा विपर्ययभाजः[43]।

---

१ ब्राह्मणे ॥ २ ब्राह्मण्य ॥ ३ साध्यधर्मं ॥ ४ अश्रावणत्वविविक्तशब्दस्याध्यक्षतो निश्चयाद्यथाऽश्रावण शब्द इति पक्ष प्रत्यक्षबाधितस्तथेत्यर्थं ॥ ५ दृष्टान्ते ॥ ६ भिन्नज्ञानजनकत्वे भिन्न व्यक्तिभ्य, पृथक्कर्तुमशक्यत्वादभिन्न सामान्यमिति ॥ ७ मीमांसकैर्जैनैश्च ॥ ८ पदत्वादिति ॥ ९ आदिना अश्वविषाणादिपदे ॥ १० साध्याभावे ॥ ११ हेतो ॥ १२ इदमेव विवृणोति ॥ १३ घटादिवत् ॥ १४ अर्थस्य ॥ १५ परमते ॥ १६ एषा भेदा उपचरिता इत्यर्थं ॥ १७ नैकव्यक्तिक सामान्यमिति वचनात् ॥ १८ गगनत्वादि ॥ १९ इति साध्याभावो दर्शित ॥ २० पटादिपदवदिति ॥ २१ नित्यसर्वगतादिरूपसामान्य ॥ २२ पदत्वानुमाननिराकरणेन ॥ २३ पदे ॥ २४ साध्याभावे ॥ २५ वर्णविशेषादिनिमित्तबुद्धिवैलक्षण्यस्योपलम्भात् ॥ २६ नगरमिति ज्ञानोपलम्भात् ॥ २७ व्यक्ते सकाशात् ॥ २८ नगरपदव्यतिरिक्त पण्णगरीशब्दवाच्यवस्त्वन्तरम् ॥ २९ ब्राह्मण्ये ॥ ३० ब्राह्मण्य ॥ ३१ ब्रह्मचारी गृहीत्यादि ॥ ३२ वर्णाश्रमाणा तदधीनत्वात्। न तु शूद्रजात्यधीनत्वम् ॥ ३३ ब्राह्मणादौ ॥ ३४ अतो ज्ञायते क्रियाविशेषादिक चिह्न दृष्ट्वैव पुरुषेषु क्षत्रियव्यवहार कृत ॥ ३५ रावणेन ॥ ३६ पुनर्ब्राह्मणेति व्यवहार क्रियादिविशेषचिह्न दृष्ट्वैव कृतोस्तीति ज्ञायते ॥ ३७ क्षत्रियब्राह्मणयोर्निराकरणे पुनर्व्यवस्थापने च क्रियादिविशेष एव निबन्धनमित्यर्थं ॥ ३८ आगमनिराकरणपरेण ॥ ३९ अविवादत ॥ ४० यत्र ब्राह्मण्यजातिस्तत्र त्रैवर्णिकोपदेश इति ॥ ४१ ब्राह्मण्ये ॥ ४२ त्रैवर्णिकशास्त्रोपदेशे ॥ ४३ शूद्रा ॥

तत्र परपरिकल्पितायां जातौ प्रमाणमस्ति । यतोऽस्याः सद्भावः स्यात् । सद्भावे वा वेश्यापाटकादिप्रविष्टानां[1] ब्राह्मणीनां[2] ब्राह्मण्याभावो[3] निन्दा च न स्याज्जातिर्यतः पवित्रताहेतुः । सा च भवन्मते तदवस्थैव । अन्यथा गोत्वादपि ब्राह्मण्यं निकृष्टं स्यात् । गवादीना हि चाण्डालादिगृहे चिरोपितानामपीष्टं शिष्टैरादानं, न तु ब्राह्मण्यादीनाम् । अथ क्रियाभ्रंशात्तत्र ब्राह्मण्यादीनां निन्द्यता, न-तज्जात्युपलम्भे तद्विशिष्टवस्तुव्यवसाये च पूर्ववत्क्रियाभ्रंशस्याप्यऽसम्भवात्[4] । ब्राह्मणत्वजातिविशिष्टव्यक्तिव्यवसायो ह्यप्रवृत्ताया अपि क्रियायाः प्रवृत्तेर्निमित्तम् । स च तदवस्थ एव भवदभ्युपगमेन । क्रियाभ्रंशे तज्जातिनिवृत्तौ च व्रात्येप्यस्या निवृत्तिः स्यात्तद्भ्रंशाविशेषात् । किञ्च क्रियानिवृत्तौ तज्जातेर्निवृत्तिः स्याद् यदि क्रिया तस्याः कारणं व्यापिका वा स्यान्नान्यथातिप्रसङ्गात् । न चास्याः कारणं व्यापकं वा किञ्चिदिष्टम् । न च क्रियाभ्रंशे जातेर्विकारोस्ति भिन्नेष्वभिन्ना नित्या निरवयवा च जातिरित्यभिधानात् । न चाविकृताया निवृत्तिः सम्भवत्यतिप्रसङ्गात् । किञ्चेदं ब्राह्मणत्वं जीवस्य शरीरस्योभयस्य वा स्यात्संस्कारस्य वा वेदाध्ययनस्य वा ? गत्यन्तरासम्भवात् । न तावज्जीवस्य-क्षत्रियविड्शूद्रादीनामपि ब्राह्मण्यस्य प्रसङ्गात् । तेषामपि जीवस्य विद्यमानत्वात् । नापि शरीरस्यास्य पञ्चभूतात्मकस्यापि घटादिवद् ब्राह्मण्यासम्भवात् । न खलु भूताना व्यस्तानां समस्तानां वा तत्सम्भवति । व्यस्तानां तत्सम्भवे क्षितिजलपवनहुताशनाकाशानामपि प्रत्येकं ब्राह्मण्यप्रसङ्गः । समस्ताना च तेषां तत्सम्भवे घटादीनामपि तत्सम्भवः स्यात्तत्र तेषा सामस्त्यसम्भवात् । नाप्युभयस्योभयदोषानुषङ्गात् । नापि संस्कारस्यास्य शूद्रबालके कर्त्तुं शक्तितस्तत्रापि तत्प्रसङ्गात् । किञ्च संस्कारात्प्राग्ब्राह्मणबालस्य तदस्ति वा न वा? यद्यस्ति संस्कारकरणं वृथा । अथ नास्ति तथापि तद्वृथा । अब्राह्मणस्याप्यतो ब्राह्मण्यसम्भवे शूद्रबालकस्यापि तत्सम्भवः केन वार्येत? नापि वेदाध्ययनस्य-शूद्रेपि तत्सम्भवात् । शूद्रोपि हि कश्चिद्देशान्तरं गत्वा वेदं पठति पाठयति वा । न तावतास्य ब्राह्मणत्वं भवद्भिरभ्युपगम्यत इति । ततः सदृशक्रियापरिणामादिनिबन्धनैवेयं ब्राह्मणक्षत्रियादिव्यवस्था । इति सिद्धं सर्वत्र सदृशपरिणामलक्षणं समानप्रत्ययहेतुस्तिर्यक्सामान्यमिति ।

किं पुनरूर्ध्वतासामान्यमित्याह-परापरविवर्त्तव्यापिद्रव्यमूर्द्धता । सामान्यमित्यभिसम्बन्धः । तदेवोदाहरणद्वारेण स्पष्टयति-मृदिव स्थासादिषु । ननु पूर्वोत्तरविवर्त्तव्यतिरेकेणापरस्य तद्व्यापिनो द्रव्यस्याप्रतीतितोऽसत्त्वात्कथं तल्लक्षणमूर्द्धतासामान्यं सदित्यप्यसमीचीनं प्रत्यक्षत एवार्थानामन्वयिरूपप्रतीतेः प्रति-

---

१ गृह, प्रासाद, शालादिस्थानभेदे पाटकशब्द ॥ २ इय ब्राह्मणीति ॥ ३ वेश्यागृहादिप्रवेशात्पूर्ववत् ॥ ४ वेश्यादिगृहे ॥ ५ नमस्कारादे ६ वेश्यादिगृहादौ ॥ ७ नित्यत्वादिरूपाया जाते । ततो नास्ति क्रियाभ्रंश इत्यर्थ ॥ ८ कदाचिन्नमस्कारहीनेपि ॥ ९ अग्निनिवृत्तौ धूमनिवृत्तिरतोऽग्नि कारण धूमस्य । तद्वत् ॥ १० वृक्षनिवृत्तौ शिंशपात्वनिवृत्तिरतो वृक्ष शिंशपाया व्यापकस्तद्वत् ॥ ११ घटनिवृत्तौ पटनिवृत्ति स्यात् ॥ १२ क्रिया-सन्ध्यावन्दनादि ॥ १३ नाशरूप १४ आत्माकाशादेरपि निवृत्ति स्यादिति ॥ १५ वेदाध्ययनमात्रेण ॥ १६ पूर्वापरकालवर्त्ति त्रिकालानुयायीत्यर्थ ॥ १७ पर्यायरूपविशेषव्यापित्वाद्व्यक्तिनिष्ठत्वमूर्द्धतासामान्य सिद्धम् ॥ १८ विवर्त्तेषु ॥ १९ तदेव जैनैरुपादानकारण प्रोक्त नैयायिकादिभिश्च समवायिकारणमुक्तमित्यर्थ ॥ २० सौगत ॥ २१ विद्यमानम् ॥ २२ सर्वविवर्त्तानुगामी=अन्वयी ॥

क्षणविशरारुतया स्वप्नेपि तत्र तेषां प्रतीत्यभावात् । यथैव पूर्वोत्तरविवर्त्तयोर्व्यावृत्तप्रत्ययादन्योन्यमभावः प्रतीतस्तथा मृदाद्यनुवृत्तप्रत्ययात्स्थितिरपि । ननु कालत्रयानुयायित्वमेकस्य स्थितिः । तस्याश्चाऽक्रमेण प्रतीतौ युगपन्मरणावधि ग्रहणं, क्रमेण प्रतीतौ न क्षणिका बुद्धिस्तथा तां प्रत्येतुं समर्था क्षणिकत्वात् । इत्यप्ययुक्तं–बुद्धेः क्षणिकत्वेपि प्रतिपत्तुरक्षणिकत्वात् । प्रत्यक्षादिसहायो ह्यात्मैवोत्पादव्ययध्रौव्यात्मकत्वं भावानां प्रतिपद्यते । यथैव हि घटकपालयोर्विनाशोत्पादौ प्रत्यक्षसहायोसौ प्रतिपद्यते तथा मृदादिरूपतया स्थितिमपि । न खलु घटादिसुखादीनां भेदं एवावभासते, न त्वेकत्वमित्यभिधातुं युक्तं–क्षणक्षयानुमानोपन्यासस्यानर्थक्यप्रसङ्गात् । स ह्येकत्वप्रतीतिनिरासार्थो न क्षणक्षयप्रतिपत्त्यर्थस्तस्य प्रत्यक्षेणैव प्रतीत्यभ्युपगमात् । न चानन्तरातीतानागतक्षणयोः प्रत्यक्षस्य प्रवृत्तौ स्मरणप्रत्यभिज्ञानुमानानां वैफल्यं तत्र तेषां साफल्यानभ्युपगमात् । अतिव्यवहिते तदङ्गीकरणात् । न चाक्षणिकस्यात्मनोऽर्थग्राहकत्वे स्वगतबालवृद्धाद्यवस्थानामतीतानागतजन्मपरम्परायाः सकलभावपर्यायाणां चैकदैवोपलम्भप्रसङ्गो ज्ञानसहायस्यैवार्थग्राहकत्वाभ्युपगमात् । तस्य च प्रतिबन्धकक्षयोपशमाऽनतिक्रमेण प्रादुर्भावान्नोक्तदोषानुषङ्गः । न च द्रव्यग्रहणेऽतीताद्यवस्थानां ततोऽभिन्नत्वाद्ग्रहणप्रसङ्गोऽभिन्नत्वस्य ग्रहणं प्रत्यनङ्गत्वात् । अन्यथा ज्ञानादिक्षणानुभवे सच्चेतनादिवत् क्षणक्षयस्वर्गप्रापणशक्त्याद्यनुभवानुषङ्गः । तस्माद्यत्रैवास्य ज्ञानपर्यायप्रतिबन्धापायस्तत्रैव ग्राहकत्वनियमो नान्यत्रेत्यनवद्यमात्मा प्रत्यक्षसहायोऽनन्तरातीतानागतपर्याययोरेकत्वं प्रतिपद्यते इति, स्मरणप्रत्यभिज्ञानसहायश्चातिव्यवहितपर्यायेष्वपि । तयोश्च प्रामाण्यं प्रागेव प्रसाधितम् । ननु स्मरणप्रत्यभिज्ञानयोः पूर्वोपलब्धार्थविषयत्वे तद्दर्शनकाल एवोत्पत्तिप्रसङ्गस्तद्दर्शनवत्तद्विषयत्वेनानयोरप्यविकलकारणत्वात् । न चैवम् । तस्मान्न ते तद्विषये । प्रयोगः । यस्मिन्नविकलेपि यन्न भवति, न तत्तद्विषयम् । यथा रूपेऽविकले तत्राभवच्छ्रोत्रविज्ञानम् । न भवतोऽविकलेपि च पूर्वोपलब्धार्थे स्मृतिप्रत्यभिज्ञाने इति । तदप्यपेशलं

---

१ न केवल जाग्रदवस्थायाम् ॥ २ पूर्वनिवर्त्तादुत्तरविवर्त्तो व्यावृत्त ॥ ३ भेद ॥ ४ बौद्धमते ॥ ५ इद मृद्रूपमिद मृद्रूपमिति ॥ ६ द्रव्यरूपपदार्थस्य ॥ ७ सत्याम् ॥ ८ यथा भवति तथा ॥ ९ ज्ञान स्यादात्मद्रव्यादे. ॥ १० आत्मन ॥ ११ अक्षणिक आत्मा स चेत्सदैव कथ न जानातीत्युक्ते आह ॥ १२ आदिपदेन प्रत्यभिज्ञानादि ॥ १३ मृदादिपदार्थानाम् ॥ १४ बाह्यपदार्थ ॥ १५ आभ्यन्तरीयपदार्थ ॥ १६ आदिना आत्मादीनाम् ॥ १७ घटात्कपाल भिन्न कपालाद्घटो भिन्न इति भेद परस्पर तथा सुखदु खादेरात्मा भिन्नस्तस्मात्सुखादि भिन्नमिति भेद परस्परम् ॥ १८ अभिधीयते सौगतेन ॥ १९ सर्वथा नास्तिरूपस्य निषेधो न घटते गगनकुसुमवत् ॥ २० सौगतेन ॥ २१ प्रत्यक्षादिसहाय इत्यनादिग्रहण निरर्थकमित्युक्ते आह ॥ २२ घटकपाललक्षणयो ॥ २३ जैनेन ॥ २४ नित्य आत्मातीतानागतपर्यायानेकदैव ग्रहीष्यतीत्युक्ते आह ॥ २५ अङ्गीक्रियमाणे जैनै २६ स्वतोऽभिन्नाना पर्यायाणाम् ॥ २७ जैनै ॥ २८ ज्ञानेन युगपद्ग्रहीष्यतीत्युक्ते आह ॥ २९ ज्ञानस्य ॥ ३० प्रतिबन्धक कर्म ॥ ३१ युगपन्मरणावधिग्रहणलक्षण ॥ ३२ ज्ञानम् ॥ ३३ अकारणत्वात् ॥ ३४ ससारिण ॥ ३५ पदार्थ ॥ ३६ तत्र सौगतस्य । ज्ञानादिलक्षणादभिन्नसद्भावात् ॥ ३७ घटकपाललक्षणयो ॥ ३८ एकत्व प्रतिपद्यते ॥ ३९ स्मृतिप्रत्यभिज्ञानयो प्रामाण्य न विद्यते । तत्सहाय आत्मातिव्यवहितपर्यायेषु कथमेकत्व जानीयादित्युक्ते सत्याह ॥ ४० तृतीयाध्याये ॥ ४१ प्रत्यक्षेण ॥ ४२ स उपलब्धोर्थो विषयो ययोस्ते । तत्त्वे ॥ ४३ प्रत्यक्ष ॥ ४४ स उपलब्धार्थो विषयो ययोस्ते ॥ ४५ अनुत्पाद्यमानत्वात् ॥

तद्दर्शनकाले तयोः कारणाभावेनाऽप्रादुर्भावात् । न ह्यर्थस्तयोः कारणं ज्ञानं प्रति कारणत्वस्यार्थे प्रागेव प्रतिषेधात् । स्मरणं हि संस्कारप्रबोधकारणकम् । संस्कारश्च कालान्तराविस्मरणकारणलक्षणधारणारूपस्तद्दर्शनकाले नास्तीति कथं तदैवास्योत्पत्तिः प्रत्यभिज्ञानस्य वा ? तदुत्पत्तौ हि दर्शनं पूर्वदर्शनाहितसंस्कारप्रबोधप्रभवस्मृतिसहायं प्रवर्त्तते । तच्च प्राग्नास्तीति कथं तदैव तदुत्पत्तिः ? अथ मतम् । आत्मनः केवलस्यैवातीताद्यर्थग्रहणसामर्थ्ये स्मरणाद्यपेक्षावैयर्थ्यम् । तदसामर्थ्ये वा नितरां तद्वैयर्थ्यम् । न खलु केवलं चक्षुर्विज्ञानं गन्धग्रहणेऽसमर्थं सत्तत्स्मृतिसहायं समर्थं दृष्टमिति । तदप्यसङ्गतं यतः स्मरणादिरूपतया परिणतिरेवात्मनोऽतीताद्यर्थग्रहणसामर्थ्यम् । तत्कथं तदपेक्षावैयर्थ्यम् । चक्षुर्विज्ञानस्य तु गन्धग्रहणपरिणामस्यैवाभावान्न तत्स्मृतिसहायस्यापि गन्धग्रहणे सामर्थ्यमिति युक्तमुत्पश्यामः । ततो निराकृतमेतत्पूर्वोत्तरक्षणयोर्ग्रहणे कथं तत्र स्थास्नुताप्रतीतिरिति आत्मना तयोर्ग्रहणसम्भवात् । भवतां तु तयोरप्रतीतौ कथं मध्यक्षणस्य तत्राऽस्थास्नुताप्रतीतिरिति चिन्त्यताम् । पूर्वदर्शनाहितसंस्कारस्य मध्यक्षणदर्शनात्तत्क्षणस्मृतिस्तस्याश्च स इह नास्तीत्यस्थास्नुतावगमे स्थास्नुतावगमोऽप्येवं किन्न स्यात् ? ननु चास्थास्नुता पूर्वोत्तरयोर्मध्येऽभावस्तस्य वा तत्र ? स च तदात्मकत्वात्तद्ग्रहणेनैव गृह्यते । तदप्यसारं तदप्रतीतौ तत्रास्यात्र वा तयोर्निषेधस्याप्यसम्भवात् । न ह्यप्रतिपन्नघटस्यात्र घटो नास्तीति प्रतीतिरस्ति । कथं चैवं स्थास्नुता न प्रतीयेत । सापि हि पूर्वोत्तरयोर्मध्ये कथञ्चित्सद्भावस्तस्य वा तत्र ? स च तदात्मकत्वात्तद्ग्रहणेनैव गृह्येत । ननु स्थास्नुतार्थानां नित्यतोच्यते । सा च त्रिकालापेक्षा । तदप्रतिपत्तौ च कथ तदपेक्षनित्यताप्रतिपत्तिस्तदसाम्प्रतं वस्तुस्वभावभूतत्वेनान्यानपेक्षत्वान्नित्यतायास्तथाभूतायाश्चास्याः प्रत्यक्षादिप्रमाणप्रसिद्धत्वेन प्रतीतेः प्रतिपादनात् । न खलु स्वयं नित्यतारहितस्य त्रिकालेनासौ क्रियतेऽनित्यतावत् । न हि वर्तमानकालेनानित्यता क्रियते तस्याऽसत्त्वात् । सत्त्वे वा तदनित्यत्वस्याप्यपरेण करणेऽनवस्थाप्रसङ्गः । ततो यथा स्वभावतः पूर्वोत्तरकोटिविच्छिन्नः क्षणो जातः क्षणिको विधीयते कालनिरपेक्षश्च प्रतीयते तथाऽक्षणिकत्वमपि । ननु चाक्षणिकत्वमर्थानामतीतानागतकालसम्बन्धित्वेनातीतानागतत्वम् । न च कालस्यातीतानागतत्वं सिद्धम् । तद्धि किमपरातीतादिकालसम्बन्धात्तथाभूतपदार्थक्रियासम्बन्धाद्वा स्यात्स्वतो वा ? प्रथमपक्षेऽनवस्था । द्वितीयपक्षेपि पदार्थक्रियाणां कुतोऽतीतानागतत्वम् ? अपरातीतानागतप-

---

१ नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवदित्यत्र द्वितीयपरिच्छेदे ॥ २ तर्हि स्मरणप्रत्यभिज्ञानयो कारण किमित्युक्ते आह ॥ ३ कारणम् ॥ ४ द्वितीयम् ॥ ५ तस्य प्रत्यक्षादिसहायरहितस्य ॥ ६ क्षणिकबुद्ध्या ॥ ७ अक्षणिकेन ॥ ८ अत्र मध्यक्षणस्तत्र नाभूत् भविष्यतीति प्रतीति ॥ ९ परेण ॥ १० क्षण ॥ ११ दर्शनम्=अनुभव ॥ १२ सकाशात् ॥ १३ पूर्वदर्शनाहितसंस्कारस्य मध्यक्षणदर्शनात्तत्क्षणस्मृति- । तस्याश्च स इह द्रव्यरूपेणास्तीति ॥ १४ क्षणयो ॥ १५ क्षणे ॥ १६ अभाव ॥ १७ पूर्वोत्तरक्षणयोरभावात्मकत्वान्मध्यक्षणस्य ॥ १८ द्रव्यरूपेण ॥ १९ द्रव्यरूपेण ॥ २० द्रव्यरूपेण मध्यक्षणस्य ॥ २१ अग्रे ॥ २२ पदार्थस्य ॥ २३ सौगताभ्युपगमरीत्या ॥ २४ कालस्य ॥ २५ कालेन ॥ २६ कालनिरपेक्षम् ॥ २७ अपरस्यापरस्मात्सिद्धावन्योन्याश्रयप्रसङ्गात् ॥

दार्थक्रियासम्बन्धाच्चेदनवस्था । अतीतानागतकालसम्बन्धाच्चेदन्योन्याश्रयः । स्वतः कालस्यातीतानागतत्वेऽर्थानामपि स्वत एवातीतानागतत्वमस्तु । किमतीतानागतकालसम्बन्धित्वकल्पनया ? इत्यप्यसमीक्षिताभिधानं स्वरूपत एवातीतादिसमयस्यातीतादित्वप्रसिद्धेः । [3]अनुभूतवर्त्तमानत्वो हि समयोतीतो[4]भविष्यद्वर्त्तमानत्वश्चानागतः । तत्सम्बन्धित्वाच्चार्थानामतीतानागतत्वम् । न च कालवदर्थानामपि स्वरूपेणैवातीतानागतत्वं युक्तम् । न ह्येकस्य धर्मोन्यत्राप्यासञ्जयितुं युक्तोन्यथा निम्बादेस्तिक्ततादिधर्मो गुडादेरपि स्यात् । ज्ञानधर्मो वा स्वपरप्रकाशकत्वं घटादेरपि स्यात् । तद्धर्मो वा जडता ज्ञानस्यापि स्यात् । ननु चानुवृत्ताकारप्रत्ययोपलम्भादक्षणिकत्वधर्मोर्थानां साध्यते । स च बाध्यमानत्वादसत्यस्तदप्यसम्यक् यतोऽस्य बाधको विशेषप्रतिभास एव । स चानुपपन्नः । तथा हि । अनुवृत्ताकारे प्रतिपन्नेऽप्रतिपन्ने वासौ तद्बाधको भवेत् ? यदि प्रतिपन्ने तदा किमनुवृत्तप्रतिभासात्मको विशेषप्रतिभासस्तद्व्यतिरिक्तो वा ? प्रथमपक्षेऽनुवृत्तप्रतिभासस्य मिथ्यात्वे विशेषप्रतिभासस्यापि तदात्मकत्वात्तत्प्रसक्तेः कथमसौ तद्बाधकः ? द्वितीयपक्षेप्यनुवृत्ताकारप्रतिभासमन्तरेण स्थासकोशादिप्रतिभासस्य तद्व्यतिरिक्तस्यासंवेदनात्तद्बाधकत्वायोगात् । अनुवृत्ताकाराप्रतिपत्तौ च विशेषप्रतिभासस्यैवासम्भवात्कथं तद्बाधकता ? किञ्च विपरीतार्थव्यवस्थापकं प्रमाणं बाधकमुच्यते प्रतिक्षणविनाशिपदार्थव्यवस्थापकत्वेन च प्रत्यक्षमनुमानं वा प्रवर्त्तेतान्यस्य प्रमाणत्वेन सौगतैरनभ्युपगमात् । तत्र न तावत्प्रत्यक्षं तद्व्यवस्थापकं तत्र तथार्थानामप्रतिभासनात् । न हि प्रतिक्षणं [11]त्रुट्यद्रूपतां बिभ्राणास्तत्रार्थाः प्रतिभासन्ते स्थिरस्थूलसाधारणरूपतयैव तत्र तेषां प्रतिभासनात् । न चान्यादृग्भूतः प्रतिभासोऽन्यादृग्भूतार्थव्यवस्थापकोऽतिप्रसङ्गात् । न च तत्र तथा तेषां प्रतिभासेपि सदृशापरापरोत्पत्तिविप्रलम्भाद्यथानुभवं व्यवसायानुपपत्तेः स्थिरस्थूलादिरूपतया व्यवसाय इत्यभिधातव्यमनुपहतेन्द्रियस्यान्यादृग्भूतार्थनिश्चयोत्पत्तिकल्पनायां प्रतिनियतार्थव्यवस्थित्यभावानुषङ्गात् । नीलानुभवेपि पीतादिनिश्चयोत्पत्तिकल्पनाप्रसङ्गात् । तथा च यत्रैव जनयेदेनां तत्रैवास्य प्रमाणतेत्यस्य विरोधः । ततो यथाविधार्थाध्यवसायी विकल्पस्तथाविधार्थस्यैवानुभवो ग्राहकोभ्युपगन्तव्यः । न चार्थस्य प्रतिविनाशित्वात्तत्सामर्थ्यबलोद्भूतेनाध्यक्षेणापि तद्रूपमेवानुकरणीयमिति वाच्यमितरेतराश्रयानुषङ्गात् । सिद्धे हि क्षणक्षयित्वेऽर्थाना तत्सामर्थ्याविनाभाविनोध्यक्षस्य तद्रूपानुकरणं सिद्ध्यति । तत्सिद्धौ च क्षणक्षयित्वं तेषां सिध्यतीति । नाप्यनुमानं तद्ग्राहकं तत्र प्रत्यक्षाप्रवृत्तावनुमानस्याप्रवृत्तेः । तथा हि । [23]अध्यक्षाधिगतमविनाभावमाश्रित्य पक्षधर्मतावगमबलादनुमानमुदयमासादयति । प्रत्यक्षाविषये तु स्वर्गादाविवा-

१ कालस्यातीताऽनागतत्वे सिद्धे सति पदार्थक्रियाणामतीतानागतत्वसिद्धिस्तत्सिद्धौ च तत्सिद्धिरिति ॥ २ द्रव्यरूपेण पुरुषेण ॥ ३ भण्यते ॥ ४ समय ॥ ५ अतीतानागतकाल ॥ ६ संयोजयितुम् ॥ ७ बाधकत्वेनेति शेष ॥ ८ मिथ्यात्वा ॥ ९ द्वितीयविकल्पोऽयम् ॥ १० आगमादे ११ विनश्यद्रूपताम् ॥ १२ पटज्ञान घटव्यवस्थापकं स्यात् ॥ १३ क्षणिकोव क्षणिकोयमिति ॥ १४ जायते ॥ १५ निर्विकल्पकप्रत्यक्ष कर्तृ ॥ १६ सविकल्पका बुद्धिम् ॥ १७ निर्विकल्पकस्य ॥ १८ अतिप्रसङ्गो यत ॥ १९ तस्य विनाशधर्मस्य ॥ २० तस्य प्रतिक्षण विनाशधर्मस्य ॥ २१ तथा च सति तथाविधार्थस्यैवानुभवो ग्राहको भविष्यतीत्यर्थः ॥ २२ क्षणिकेर्थ ॥ २३ दृष्टान्तधर्मिणि ॥ २४ विनाशिपदार्थेन सह ॥

तुमानस्याप्रवृत्तिरेव । किञ्चात्र स्वभावहेतोः कार्यहेतोर्वा[1] व्यापारः स्यात्? न तावत्स्वभावहेतोः क्षणिकस्वभावतया कस्यचिदर्थस्वभावस्यानिश्चयात्, क्षणिकत्व-
स्याध्यक्षागोचरत्वात् । अध्यक्षगोचरे एव ह्यर्थे स्वभावहेतोर्व्यवहृतिप्रवर्तनफलत्वम्[2] । यथा विशददर्शनावभासिनि तरौ वृक्षत्वव्यवहारप्रवर्त्तनफलत्वं[3] शिंशपायाः ।
अथोच्यते[4] यो यद्भावं प्रत्यन्यानपेक्षः स तत्स्वभावनियतः । यथाऽन्त्या कारणसामग्री स्वकार्योत्पादने । विनाशं प्रत्यन्यानपेक्षाश्च भावा इति । तदप्युक्तिमात्रं—हेतोर-
सिद्धेः । न खलु मुद्गराद्यनपेक्षा घटादयो भावाः प्रमाणतो विनाशमनुभवन्तोनुभूयन्ते प्रतीतिविरोधात् । किञ्चात्रान्यानपेक्षत्वमात्रं हेतुस्तत्स्वभावत्वे सत्यन्यान-
पेक्षत्वं वा? प्रथमपक्षे यववीजादिभिरनेकान्तो[5] हेतोः । शाल्यङ्कुरोत्पादनसामग्रीसन्निधानावस्थायां तदुत्पादनेऽन्यानपेक्षाणामप्येषां तद्भावनियमाभावात् ।
द्वितीयपक्षे तु विशेष्यासिद्धो हेतुस्तत्स्वभावत्वे[6] सत्यप्यन्यानपेक्षत्वासिद्धेः । न ह्यन्त्या कारणसामग्री स्वकार्योत्पादनस्वभावापि द्वितीयक्षणानपेक्षा[7] तदुत्पादयति ।
दहनस्वभावो वा वह्निः करतलादिसंयोगानपेक्षो दाहं विदधाति । भागे[8] विशेषणासिद्धं च तत्स्वभावत्वे सत्यन्यानपेक्षत्वं शृङ्गोत्थशरादीनां[9] क्षणिकस्वभावाभावात् ।
किञ्च यदि नामाऽहेतुको विनाशस्तथापि यदैव मुद्गरादिव्यापारानन्तरमुपलभ्यते तदैवासावभ्युपगमनीयो नोदयानन्तरं[10] कस्यचित्तदा तदुपलम्भाभावात्[11] । न च[12]
मुद्गरादिव्यापारानन्तरमस्योपलम्भात्प्रागपि सद्भावः[13] कल्पनीयः प्रथमक्षणे[14] तस्यानुपलम्भान्मुद्गरादिव्यापारानन्तरमप्यभावानुषङ्गात् । न चान्ते[15] क्षयोपलम्भादा-
दावप्यसावभ्युपगन्तव्यः[16] सन्तानेनानेकान्तात्[17][18] । किञ्चोदयानन्तरध्वंसित्वं भावानां भिन्नाभिन्नविकल्पाभ्यामन्येन[19] ध्वंसस्यासम्भवादवसीयते प्रमाणान्तराद्वा?
तत्रोत्तरविकल्पोऽयुक्तः प्रत्यक्षादेरुदयानन्तरध्वंसित्वेनार्थग्राहकत्वाप्रतीतेः । प्रथमविकल्पे तु भिन्नाभिन्नविकल्पाभ्या[20] मुद्गराद्यनपेक्षत्वमेवास्य स्यान्न तूदयानन्तरं[21][22]
भावः । न खलु निर्हेतुकस्याश्वविषाणादेः पदार्थोदयानन्तरमेव[23] भावितोपलब्धा । अथाहेतुकत्वेन ध्वंसस्य सदा सम्भवात्कालाद्यनपेक्षातः पदार्थोदयानन्तरमेव
भावः । नन्वेवमहेतुकत्वेन सर्वदा भावात्[24] प्रथमक्षणे एवास्य भावानुषङ्गो नोदयानन्तरमेव । न ह्यनपेक्षत्वादहेतुकः क्वचित्कदाचिच्च भवति[25] तथाभावस्य[26] सापेक्षत्वेना[27]-
हेतुकत्वविरोधिना सहेतुकत्वेन व्याप्तत्वात्, तथा सौगतैरप्यभ्युपगमात् । ननु प्रथमक्षणे एव तेषां ध्वंसे सत्त्वस्यैवासम्भवात्[28] कुतस्तत्प्रच्युतिलक्षणो ध्वंसः स्यात्?

---

१ सत्त्वादिति ॥ २ दृष्टम् ॥ ३ अय वृक्ष शिंशपात्वादिति ॥ ४ 'भावा धर्मिण । विनाशस्वभावनियता इति साध्यधर्मे । विनाश प्रत्यन्यानपेक्षत्वादिति हेतु' इत्युपरित ॥ ५ साध्याभावे प्रवर्त्तमानत्वात् ॥ ६ विनाशहेतु ॥
७ बौद्धमतेऽपि एकस्मिन्क्षणे कारण कार्य न करोति यत ॥ ८ सर्वे भावा विनाशस्वभावनियता इति पक्षस्यैकदेशे भागासिद्धो हेतुरित्यर्थः ॥ ९ महिषमृगादिशृङ्गेऽन्यनिरपेक्षतयोत्थशरादीनाम् ॥ १० एकस्मिन्क्षणे पदार्थ उत्पन
द्वितीयक्षणे मुद्गरादिव्यापारमन्तरेण विनश्यतीति नाभ्युपगमनीय त्वया सौगतेन ॥ ११ तस्य विनाशस्य ॥ १२ मुद्गरादिव्यापारानन्तर विनाशोस्ति मुद्गरादिव्यापारात्पूर्वं (उत्पत्तिक्षणाद् द्वितीयक्षणे) मपि विनाशोस्तीत्युक्ते आह ॥
१३ विनाशस्य ॥ १४ मुद्गरादिव्यापारात्पूर्वक्षणे ॥ १५ मुद्गरादिव्यापारस्यान्ते ॥ १६ मुद्गरादिव्यापारात्पूर्वम् ॥ १७ निर्वाणस्यान्ते उत्तरक्षणोत्पत्ते क्षयोस्ति, नादौ ॥ १८ यद्यदन्ते क्षयि तत्तदादौ क्षयीति ॥ १९ मुद्गरादिना ॥
२० स्थितिपक्षे उत्पादपक्षे चाग्रे यदुक्तमस्ति तत्सर्वमत्र द्रष्टव्यम् ॥ २१ अर्थस्य ॥ २२ नाशस्य । निर्हेतुकत्वात् ॥ २३ अश्वलक्षण ॥ २४ कालाद्यनपेक्षत्वाविशेषात् ॥ २५ किंतु सदैव भवतीत्यर्थः ॥ २६ क्वचित्कदाचिद्भवत-
पदार्थस्य ॥ २७ कालादिना ॥ २८ अनुत्पन्नत्वात् ॥

ततः स्वहेतोरेवार्था ध्वंसस्वभावाः प्रादुर्भवन्तीत्यप्यविचारितरमणीयं यतो यदि भावहेतोरेव तत्प्रच्युतिस्तदा किमेकक्षणस्थायिभावहेतोस्तत्प्रच्युतिः कालान्तरस्थायिभावहेतोर्वा ? प्रथमपक्षोऽयुक्त एव क्षणस्थायिभावहेतुत्वस्याऽद्याप्यसिद्धेः । तत्कृतत्वं तत्प्रच्युतेरसिद्धमेव । द्वितीयपक्षे तु क्षणिकताऽभावानुषङ्गः । किञ्च भावहेतोरेव तत्प्रच्युतिहेतुत्वे किमसौ भावजननात्प्राक्तत्प्रच्युतिं जनयत्युत्तरकालं समकालं वा ? प्रथमपक्षे प्रागभावः प्रच्युतिः स्यान्न प्रध्वंसाभावः । द्वितीयपक्षे तु भावोत्पत्तिवेलायां तत्प्रच्युतेरुत्पत्त्यभावान्न भावहेतुस्तद्धेतुः । तथा चोत्तरोत्तरकालभाविभावपरिणतिमपेक्ष्योत्पद्यमाना तत्प्रच्युतिः कथं भावोदयानन्तरं भाविनी स्यात् ? तृतीयपक्षेपि भावोदयसमसमयभाविन्या तत्प्रच्युत्या सह भावस्यावस्थानाविरोधान्न कदाचिद्भावेन नष्टव्यम् । कथं चासौ मुद्गरादिव्यापारानन्तरमेवोपलभ्यमाना तदभावे चानुपलभ्यमाना तज्जन्या न स्यादन्यत्रापि हेतुफलभावस्यान्वयव्यतिरेकानुविधानलक्षणत्वात् । न च मुद्गरादीनां कपालसन्तत्युत्पादे एवं व्यापार इत्यभिधातव्यं घटादेः स्वरूपेणाविकृतस्यावस्थाने पूर्ववदुपलब्ध्यादिप्रसङ्गात् । न चास्य तदा स्वयमेवाभावान्नोपलब्ध्यादिप्रसङ्गस्तदभावस्यापि तदैवोपलभ्यमानतयाऽन्यदा चानुपलभ्यमानतया कपालादिवत्तत्कार्यतानुषङ्गात् । अथ घट एव मुद्गरादिकं विनाशकारणत्वेन प्रसिद्धमपेक्ष्य समानक्षणान्तरोत्पादनेऽसमर्थं क्षणान्तरमुत्पादयति तदप्यपेक्ष्य अपरमसमर्थतरं तदप्युत्तरमसमर्थतमं यावद्घटसन्ततेर्निवृत्तिरित्युच्यते । ननु चात्रापि घटक्षणस्यासमर्थक्षणान्तरोत्पादकत्वेनाभ्युपगतस्य मुद्गरादिना कश्चित्सामर्थ्यविघातो विधीयते वा न वा ? प्रथमविकल्पे कथमभावस्याहेतुकत्वम् ? द्वितीयविकल्पे तु मुद्गरादिसन्निपाते तज्जनकस्वभावाऽव्याहतौ समर्थक्षणान्तरोत्पादप्रसङ्गः समर्थक्षणान्तरजननस्वभावस्य भावात्प्राक्तनक्षणवत् । किं च भावोत्पत्तेः प्राग्भावस्याभावनिश्चये तदुत्पादककारणोपादनं कुर्वन्तः प्रतीयन्ते प्रेक्षापूर्वकारिणः तदुत्पत्तौ च निवृत्तव्यापारा विनाशकहेतुव्यापारानन्तरं च शत्रुमित्रध्वंसे सुखदुःखभाजोऽनुभूयन्ते । न चानयोः सद्भावः सुखदुःखहेतुः । ततस्तद्व्यतिरिक्तोऽभावस्तद्धेतुरभ्युपगन्तव्यः । किञ्चाभावस्यार्थान्तरत्वानभ्युपगमे किं घट एव प्रध्वंसोभिधीयते कपालानि तदपरं पदार्थान्तरं

---

१ अर्थोत्पत्तिकारणात् ॥ २ मृचक्रादे ॥ ३ भावस्य घटादे ॥ ४ घटादिभावस्य ॥ ५ घटप्रध्वंसस्य ॥ ६ भावोत्पत्तिवेलाया येन कारणेन भावोत्पत्तिर्जाता तस्मिन्नेव समये तेनैव कारणेन घटप्रध्वसो जायते तदा उभयो कारणमेक स्यादिति भाव ॥ ७ भावहेतोर्विनाशहेतुत्वाभावे च ॥ ८ कपालोत्पत्तौ ॥ ९ मुद्गरादिना सह ॥ १० न घटप्रच्युतौ ॥ ११ आदिना जलाहरणादिग्रहणम् ॥ १२ मुद्गरादिसन्निधानकाले ॥ १३ घटाभाव कार्यं भवति मुद्गराद्यन्वयव्यतिरेकानुविधायित्वात् ॥ १४ सहायमात्रम् ॥ १५ घटस्य घट एव ॥ १६ घटभङ्गलक्षणम् ॥ १७ मुद्गरादिक कर्मत्वेन ॥ १८ भवदुक्तपक्षे ॥ १९ घटस्य ॥ २० मुद्गरादिकारणजन्यत्वात् ॥ २१ समानक्षणान्तरोत्पादने ॥ २२ घटस्य ॥ २३ उत्पादात् ॥ २४ मृचक्रादि ॥ २५ स्वीकरणम् ॥ २६ कस्यचित्पुरुषस्य घट दृष्ट्वा स्नेहो जायते कस्यचित्तु द्वेषो जायते इति स्वभावद्वययुक्तत्वाद्घट एव शत्रुमित्ररूप । तस्य प्रध्वसे ॥ २७ अनेन वाक्येन सहेतुको विनाशोस्तीति दर्शितम् ॥ २८ स मुद्गरादिर्हेतुर्यस्य स ॥ २९ पटादिकमित्यर्थ ॥

वा ? प्रथमपक्षे घटस्वरूपेऽपरं नामान्तरं कृतम् । तत्स्वरूपस्य त्वविचलितत्वान्नित्यत्वानुपङ्गः । अथैकक्षणस्थायि घटस्वरूपं प्रध्वंसो, न-एकक्षणस्थायितया तद्रूप-
स्याद्याप्यप्रसिद्धेः । द्वितीयपक्षेपि प्राक्कपालोत्पत्तेः घटस्यावस्थितेः कालान्तरावस्थायित्वैवास्य, न क्षणिकता । किञ्च कपालकाले स न इति शब्दयोः किं भि-
न्नार्थत्वमभिन्नार्थत्वं वा ? भिन्नार्थत्वे कथं न नञ्शब्दवाच्यः पदार्थान्तरमभावः ? अभिन्नार्थत्वे तु प्रागपि नञ्प्रयोगप्रसक्तिः । न चानुपलम्भे सति नञ्प्रयोगं
इत्यभिधातव्यं व्यवधानाद्यभावे स्वरूपादप्रच्युतार्थस्यानुपलम्भानुपपत्तेः । स्वरूपात्प्रच्युतौ वा कथं न कपालकाले मुद्गरादिहेतुकं भावान्तरं प्रच्युतिर्भवेत् ।
अथ घटकपालव्यतिरिक्तं भावान्तरं घटप्रध्वंसः । नन्वत्रापि तेन सह घटस्य युगपदवस्थानाविरोधात् कथं तत्तत्प्रध्वंसः ? अन्यथोत्पत्तिकालेपि तत्प्रध्वंसप्रसङ्गा-
द्घटस्योत्पत्तिरेव न स्यात् । अन्यानपेक्षतया चाग्नेरुष्णत्ववत्स्वभावतोऽभावस्य भावे स्थितेरपि स्वभावतो भावः किन्न स्यात् ? शक्यते हि तत्राप्येवं
वक्तुं कालान्तरस्थायी स्वहेतोरेवोत्पन्नो भावो न तद्भावे भावान्तरमपेक्षते । अग्निरिवोष्णत्वे । भिन्नाभिन्नविकल्पस्य चाभाववत् स्थितावपि समानत्वात्,
तत्राप्यन्यानपेक्षतया निर्हेतुकत्वानुपङ्गः । तथा हि । न वस्तुनो व्यतिरिक्ता स्थितिस्तद्धेतुना क्रियते तस्याऽस्थास्नुतापत्तेः । स्थितिसम्बन्धात्स्थास्नुतेत्यप्ययुक्तं
स्थितितद्वतोर्व्यतिरेकपक्षाभ्युपगमे तावत्तादात्म्यसम्बन्धोऽसङ्गतः । कार्यकारणभावोप्यनयोः सहभावादयुक्तः । असहभावे वा स्थितेः पूर्वं तत्कारणस्यास्थिति-
प्रसङ्गः । स्थितेरपि स्वकारणादुत्तरकालमनाश्रयतानुपङ्गः । अव्यतिरिक्तस्थितिकरणे च हेतुवैयर्थ्यम् । ततः स्थितिस्वभावनियतार्थस्तद्भावं प्रत्यन्यानपेक्षत्वादिति
स्थितम् । अहेतुकविनाशाभ्युपगमे चोत्पादस्याप्यऽहेतुकत्वानुपङ्गो विनाशहेतुपक्षनिक्षिप्तविकल्पानामत्राप्यविशेषात् । तथा हि । उत्पादहेतुः स्वभावत एवोत्पित्सुं भाव-
मुत्पादयत्यनुत्पित्सुं वा ? आद्यविकल्पे तद्धेतुवैफल्यम् । द्वितीयविकल्पेप्यनुत्पित्सोरुत्पादे गगनाम्भोजादेरुत्पादप्रसङ्गः । स्वहेतुसन्निधेरेवोत्पित्सोरुत्पादाभ्युपगमे
विनाशहेतुसन्निधानाद्विनश्वरस्य विनाशोप्यभ्युपगमनीयो न्यायस्य समानत्वात् । ततः कार्यकारणयोरुत्पादविनाशौ न सहेतुकाऽहेतुकौ कारणानन्तरं सहभा-
वाद्रूपादिवत् । न चानयोः सहभावोऽसिद्धः—"नाशोत्पादौ समं यद्वन्नामोन्नामौ तुलान्तयोः" इत्यभिधानात् । न चाहेतुकेन पर्यायसहभाविना द्रव्येणानेकान्तः

---

१ प्रध्वस इति ॥ २ गगनादिवत् ॥ ३ वहुतरकालम् ॥ ४ यावत् कपालानि ॥ ५ घटे सत्यपि घटो नास्तीति ॥ ६ घटस्य ॥ ७ कर्तव्य ॥ ८ देशकालादिना ॥ ९ पृथुबुध्नोदरादे ॥ १० घटलक्षणस्य ॥ ११ घटात् ॥
१२ तृतीयविकल्प ॥ १३ पदार्थान्तरस्य सदैव सद्भावात् ॥ १४ भिन्नाभिन्नविकल्पाभ्या यथाऽभाव कारणान्तरनिरपेक्ष ( बौद्धमते )स्तथा ताभ्या स्थितिरपि कारणनिरपेक्ष ( जैनमते )ति भाव ॥ १५ घटपटयोरिव ॥
१६ सव्येतरगोविषाणवत् ॥ १७ घटस्य ॥ १८ स्वकारणस्य क्षणभङ्गुरत्वेन नष्टत्वादिति भाव ॥ १९ घटात् ॥ २० अव्यतिरिक्तस्थितिकरणे च स्थितिमद्वस्त्वेव कृत स्यात् । तस्य च स्वहेतुनैव कृतत्वात्स्थितेर्हेतुना करणमनु-
पपन्नमित्यस्य वैयर्थ्यम् ॥ २१ स्थितावन्यानपेक्षतया निर्हेतुकत्व सिद्ध यत ॥ २२ स्थितिस्वभावम् ॥ २३ भिन्नाऽभिन्नवक्ष्यमाणानाम् ॥ २४ स्वभावत एव भावस्योत्पत्तिसम्भवात् ॥ २५ कारणेन ॥ २६ ययो सहभावस्तयो
सहेतुकासहेतुकत्वभावेन न जननमिति ॥ २७ रूपरसादीना यथा ॥

कारणानन्तरमिति विशेषणात्। न चैवमसिद्धत्वं मुद्गरादिव्यापारानन्तरं कार्योत्पादवत्कारणविनाशस्यापि प्रतीतेर्विनष्टो घट उत्पन्नानि कपालानीति व्यवहारद्वयदर्शनात्। न च साध्यविकलमुदाहरणम्। न हि कारणभूतो रूपादिकलापः कार्यभूतस्य रूपस्यैव हेतुर्न तु रसादेरिति प्रतीतिः। नाप्यसहभावो रूपादीनां येन साधनविकलं स्यात्। तन्नोक्तहेतोरर्थानां क्षणक्षयावसायः। नापि सत्त्वात्प्रतिबन्धासिद्धेः। न च विद्युदादौ सत्त्वक्षणिकत्वयोः प्रत्यक्षत एव प्रतिबन्धसिद्धेर्घटादौ सत्त्वमुपलभ्यमानं क्षणिकत्वं गमयतीत्यभिधातव्यं तत्राप्यनयोः प्रतिबन्धासिद्धेः। विद्युदादौ हि मध्ये स्थितिदर्शनं पूर्वोत्तरपरिणामौ प्रसाधयति। न हि विद्युदादेरनुपादानोत्पत्तिर्युक्तिमती प्रथमचैतन्यस्याप्यनुपादानोत्पत्तिप्रसङ्गतः परलोकाभावानुषङ्गात्, विद्युदादिवत्तत्रापि प्रागुपादानाऽदर्शनात्। न चानुमीयमानमत्रोपादानं विद्युदादावपि तथात्वानुषङ्गात्। नाप्यस्य निरन्वया सन्तानोच्छित्तिश्चरमक्षणस्याकिञ्चित्करत्वेनावस्तुत्वापत्तितः पूर्वपूर्वक्षणानामप्यवस्तुत्वापत्तेः सकलसन्तानाभावप्रसङ्गः। विद्युदादेः सजातीयकार्याकरणेपि योगिज्ञानस्य करणान्नावस्तुत्वमिति चेन्नास्वाद्यमानरससमानकालरूपोपादानस्य रूपाकरणेपि रससहकारित्वप्रसङ्गात्। ततो रसाद्रूपानुमानं न स्यात्। तथा दृष्टत्वान्न दोष इत्यन्यत्रापि समानं विद्युच्छब्दादेरपि विद्युच्छब्दाद्यन्तरोपलम्भात्। न चैकत्र सत्त्वक्षणिकत्वयोः सहभावोपलम्भात्सर्वत्र ततस्तदनुमानं युक्तमन्यथा सुवर्णे सत्त्वादेव शुक्लतानुमितिप्रसङ्गः शुक्ले शङ्खे शुक्लतया तत्सहभावोपलम्भात्। अथ सुवर्णाकारनिर्भासिप्रत्यक्षेण शुक्लतानुमानस्य बाधितत्वान्न तत्र शुक्लतासिद्धिस्तर्हि घटादौ क्षणिकतानुमानस्य स एवायमित्येकत्वप्रतिभासेन बाधितत्वात्प्रतिक्षणविनाशितासिद्धिर्न स्यात्। अथैकत्वप्रत्यभिज्ञा भिन्नेष्वपि लूनपुनर्जातनखकेशादिष्वभेदमुल्लिखन्ती प्रतीयत इत्येकत्वे नाऽसौ प्रमाणम्। नन्वेवं कामलोपहताक्षाणां धवलिमानमाबिभ्राणेष्वपि पदार्थेषु पीताकारनिर्भासिप्रत्यक्षमुदेतीति सत्यपीताकारेपि न तत्प्रमाणम्। भ्रान्तादभ्रान्तस्य विशेषोन्यत्रापि समानः। प्रसाधितं च प्रत्यभिज्ञानस्याभ्रान्तत्वं प्रागित्यलमतिप्रसङ्गेन। अथ विपक्षे बाधकप्रमाणबलात्सत्त्वक्षणिकत्वयोरविनाभावोवगम्यते। ननु तत्र सत्त्वस्य बाधकं प्रत्यक्षमनुमानं वा स्यात्? न तावत्प्रत्यक्षं तत्र क्षणिकत्वस्याप्रतिभासनात्। न चाप्रतिभासमानक्षणक्षयस्वरूपं प्रत्यक्षं विपक्षाद्व्यावर्त्य सत्त्वं क्षणिकत्वनियतमादर्शयितुं समर्थम्। अथानुमानेन तत्ततो व्यावर्त्य क्षणिकनियततया साध्येत। ननु 'तदनुमानेप्यविनाभावस्यानुमानबलात्प्रसिद्धिः। तथा चानवस्था। न च तद्बाधकमनुमानमस्ति।

---

१ उपादानरूप ॥ २ सहकारिलक्षण ॥ ३ इत्युदाहरणस्य ॥ ४ उदाहरणम् ॥५ तत्स्वभावत्वे सत्यन्यानपेक्षत्वादिति ॥६ सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ७ प्रथमचैतन्य जन्मान्तरचैतन्यपूर्वकं चिद्विवर्त्तत्वान्मध्यचिद्विवर्त्तवदिति ॥ ८ विद्युदुत्तरपरिणामाविनाभाविनी न भविष्यतीत्युक्ते आह ॥ ९ उत्तराकारपरिणमनविषये ॥ १० अकिञ्चित्करत्वाविशेषात् ॥ ११ अन्त्यचित्तक्षणस्यार्थक्रियाशून्यत्वेनासत्त्वप्रसङ्गात् तस्यासत्त्वे तत्पूर्वक्षणस्याप्यर्थक्रियारहितत्वेनासत्त्वम्। तत एव तत्पूर्वक्षणानामप्यसत्त्वेन सर्वशून्यतापत्तिरेव स्यात् ॥ १२ पूर्वोत्तरक्षणाना समूह सन्तान । तन्मध्ये एकैकक्षण सन्तानी ॥ १३ विजातीयस्य ॥ १४ पूर्वरूपस्य ॥ १५ उत्तररूपाकरणे ॥ १६ अस्त्यत्र मातुलिङ्गे रूप रसादिति ॥ १७ उपादानकारणाद्रूपात् सजातीयरूपकरणप्रकारेण ॥ १८ तृतीयपरिच्छेदे ॥ १९ प्रत्यभिज्ञानस्याभ्रान्तत्वसमर्थनेन ॥ २० अक्षणिकत्वे ॥ २१ सत्त्वस्य ॥ २२ वस ॥ २३ सत्त्व क्षणिकत्वनियत तदन्वयव्यतिरेकानुविधानादिति ॥

ननु 'यत्र क्रमयौगपद्याभ्यामर्थक्रियाविरोधो न तत्सत् । यथा गगनाम्भोरुहम् । अस्ति च नित्ये स इत्यतोनुमानात्ततो व्यावर्त्तमानं सत्त्वमनित्ये एवावतिष्ठत इत्यवसीयते ।' तन्न—सत्त्वाक्षणिकत्वयोर्विरोधाऽसिद्धेः । विरोधो हि सहानवस्थानलक्षणः परस्परपरिहारस्थितिलक्षणो वा स्यात् ? न तावदाद्यः । स हि पदार्थस्य पूर्वमुपलम्भे पश्चात्पदार्थान्तरसद्भावादभावावगतौ निश्चीयते शीतोष्णवत्[2] । न च नित्यत्वस्योपलम्भोस्ति सत्त्वप्रसङ्गात् । नापि द्वितीयो विरोधस्तयोः सम्भवति नित्यत्वपरिहारेण सत्त्वस्य तत्परिहारेण वा नित्यत्वस्यानवस्थानात् । क्षणिकतापरिहारेण ह्यक्षणिकता व्यवस्थिता तत्परिहारेण च क्षणिकतेत्यनयोः परस्परपरिहारस्थितिलक्षणो [3]विरोधः । न चार्थक्रियालक्षणसत्त्वस्य क्षणिकतया व्याप्तत्वान्नित्येन विरोधोन्योन्याश्रयानुषङ्गात् । अर्थक्रियालक्षणं सत्त्वं क्षणिकतया व्याप्तं नित्यताविरोधात्सिध्यति, सोप्यस्य क्षणिकतया व्याप्तेरिति । ननु 'चार्थक्रियायाः क्रमयौगपद्याभ्यां व्याप्तत्वात्तयोश्चाक्षणिकेऽसम्भवात्कुतः क्रमवत्यऽर्थक्रिया नित्ये सम्भविनी ? न च सहकारिक्रमान्नित्ये क्रमवत्त्यप्यसौ सम्भवत्यस्योपकारकानुपकारकपक्षयोः सहकार्यऽपेक्षाया एवासम्भवात् । नापि यौगपद्येनासौ नित्ये सम्भवति पूर्वोत्तरकार्ययोरेकक्षण एवोत्पत्तेर्द्वितीयक्षणे तस्यानर्थक्रियाकारित्वेनावस्तुत्वप्रसङ्गात् ।' इत्यप्यसारमेकान्तनित्यवदऽनित्येपि क्रमाक्रमाभ्यामर्थक्रियाऽसम्भवात्, तस्याः [5]कथञ्चिन्नित्ये एव सम्भवात्, तत्र क्रमाक्रमवृत्त्यनेकस्वभावत्वप्रसिद्धेः । [6]अन्यत्र तु तत्स्वभावत्वाप्रसिद्धेः पूर्वापरस्वभावत्यागोपादानान्वितरूपाभावात्सकृदनेकशक्त्यात्मकत्वाभावाच्च । न खलु कूटस्थेर्थे पूर्वोत्तरस्वभावत्यागोपादाने स्तः क्षणिके चान्वितं रूपमस्ति—यतः [7]क्रमः कालकृतो देशकृतो वा । नापि युगपदनेकस्वभावत्वं यतो यौगपद्यं स्यात्—कौटस्थ्यविरोधान्निरन्वयविनाशित्वव्याघाताच्च । किञ्च क्षणिकं वस्तु विनष्टं सत्कार्यमुत्पादयत्यविनष्टमुभयरूपमनुभयरूपं वा ? न तावद्विनष्टं चिरतरनष्टस्येवानन्तरनष्टस्याप्यसत्त्वेन जनकत्वविरोधात् । नाप्यविनष्टं क्षणभङ्गभङ्गप्रसङ्गात् । सकलशून्यतानुषङ्गाद्वा सकलकार्याणामेकदैवोत्पद्य[12] विनाशात् । नाप्युभयरूपं निरंशैकस्वभावस्य विरुद्धोभयरूपासम्भवात् । नाप्यनुभयरूपमन्योन्यव्यवच्छेदरूपाणामेकनिषेधस्यापरविधाननान्तरीयकत्वेन[13]ानुभयरूपत्वायोगात् । कथं च निरन्वयनाशित्वे कारणस्योपादानसहकारित्वस्य [14]व्यवस्था? तत्स्वरूपापरिज्ञानात् । [15]उपादानकारणस्य हि स्वरूपं किं[16] स्वसन्ततिनिवृत्तौ कार्यजनकत्वम् ? यथा मृत्पिण्डः स्वयं निवर्तमानो घटमुत्पादयति । आहोस्विदनेकस्मा[17]दुत्पद्यमाने [18]कार्ये स्वगतविशेषाधायकत्वं समनन्तरप्रत्ययत्वमात्रं वा स्यान्नियमवदन्वयव्यतिरेकानु-

---

१ नित्य सत्र भवति क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् ॥ २ तम प्रकाशयोरिव वा ॥ ३ न तु सत्त्वाक्षणिकत्वयो ॥ ४ प्रथमभेदे वाध्यवाधकभावेन विरोध । द्वितीयभेदे तु स्वभावेनैव—यत्र क्षणिकत्व तत्र न सत्त्वमिति विरोध ॥ ५ द्रव्यत्वेन ॥ ६ सर्वथा क्षणिके ॥ ७ अवस्थितस्य पदार्थस्यैकस्य हि नानादेशकालकलाव्यापित्व देशक्रम कालक्रमश्च ॥ ८ नित्यक्षणिकाभ्यां कृतानां कार्याणाम् ॥ ९ एकानेकात्मकत्वप्रसक्ते ॥ १० क्षणिकस्य ॥ ११ युगपदनेकस्वभावत्ववन् क्रमेणापि तथा प्राप्ते ॥ १२ द्वितीयक्षणे कार्याजनकत्वात् ॥ १३ अविनाभूतत्वेन ॥ १४ एकं कार्यं प्रत्युपादानत्वमपर प्रति सहकारित्वमिति ॥ १५ जैनो बौद्ध प्रति वक्ति ॥ १६ बौद्धमते ॥ १७ ( ज्ञान प्रति ) इन्द्रियार्थालोकादिकारणकलापात् । ( घट प्रति ) मृदादिकारणकलापात् ॥ १८ ज्ञानलक्षणे घटादौ वा ॥

विधानं वा ? प्रथमपक्षे कथञ्चित्[1]सन्ताननिवृत्तिः सर्वथा[2] वा? कथञ्चिच्चेत्पर[3]मतप्रसङ्गः। सर्वथा चेत्परलोकाभावानुषङ्गो ज्ञान[4]सन्तानस्य सर्वथा निवृत्तेः। द्वितीयपक्षेपि किं स्वगतकतिपयविशेषाधायकत्वं सकलविशेषाधायकत्वं वा ? तत्राद्यविकल्पे सर्वज्ञज्ञाने स्वा[5]कारार्पकस्यास्मदादिज्ञा[6]नस्य तत्[7]प्रत्युपादानभावः। तथा च सन्तानसङ्करः। रूप[8]स्य वा रूप[9]ज्ञानं प्रत्युपादानभावोनुषज्येत स्व[10]गतकतिपयविशेषाधायकत्वाविशेषात्। रूपोपा[11]दानत्वे च परलोकाय दत्तो जला[12]ञ्जलिः। कतिपय[13]विशेषाधायकत्वेनोपादानत्वे चैकस्यैव ज्ञाना[14]दिक्षणस्यानुवृत्तव्यावृत्ताऽनेकविरु[15]द्धधर्माध्यासप्रसङ्गात्स एव पर[16]मतप्रसङ्गः। द्वितीयविकल्पे तु कथं निर्विकल्प[17]काद्विकल्पोत्पत्तिः ? रूपाकारात्समनन्तरप्र[18]त्ययाद्रसाकारप्रत्ययोत्पत्तिर्वा ? स्वगतसकलविशेषाधायकत्वाभावात्। सन्तानवहुत्वोप[19]गमात्सर्वस्य स्वसदृशादेवोत्प[20]त्तिरित्यभ्युपगमे त्वेकस्मिन्नपि पुरुषे प्रमातृवहु[21]त्वापत्तिः। तथा च गवाश्वादिदर्शनयोर्भिन्नसन्तानत्वादेकेन[22] दृष्टेर्थे पर[23]स्यानुसन्धा[24]नं न स्याद्देवदत्तेन दृष्टे यज्ञदत्तवत्। किञ्च[25] सकलस्वगतविशेषाधायकत्वे सर्वात्मनोपादेय[26]क्षणे एवास्यो[27]पयोगात्तत्रानुपयुक्तस्वभावान्तराभावाच्चैक[28]सामग्र्यन्त[29]र्गतं प्रति सहकारित्वा[30]भावः। तत्कथं रूपादेरसतो ग[31]तिः ? स्वभावान्तरोपगमे त्रैलोक्यान्तर्गतान्यजन्यकार्यान्तरापेक्षया तस्याजनकत्वमपि स्वभावान्तरमभ्युपगन्तव्यम्। इत्यायातमेक[32]स्यैवोपादानसहकार्यऽजनकत्वा[33]द्यनेकविरुद्धधर्माध्यासितत्वम्। न चैते धर्माः काल्पनि[34]कास्तत्कार्याणामपि तथात्वप्रसङ्गात्। स[35]मनन्तरप्रत्यय[36]त्वमप्युपादानलक्षणमनुपपन्नम्। कार्ये स[37]मत्वं कारणस्य सर्वात्मनैकदेशेन वा ? सर्वात्मना चेद्यथा कारणस्य प्राग्भावित्वं तथा कार्यस्यापि स्या[38]त्। तथा च सव्येतरगोविषाणवदेककालत्वात्तयोः कार्यकारणभावो न स्यात्। तथा कारणाभिमतस्यापि स्वकारणका[39]लता, तस्यापि सेति स[40]कलशून्यं जगदापद्येत। कथञ्चि[41]त्समत्वे योगिज्ञानस्याप्यस्मदादिज्ञानावल[42]म्बनस्य तदाकारत्वेनैकसन्तानत्वप्रसङ्गः स्या[43]त्। अनन्तरत्वं च देशकृतं कालकृतं वा स्यात् ? न तावद्देशकृतं तत्त्रोपयोगि व्यवहितदेशस्यापीह जन्ममरणचित्तस्य भाविजन्मचित्तोपादानत्वोप[44]गमात्।

---

१ पर्यायरूपेण ॥ २ द्रव्यरूपेणापि ॥ ३ तथैव जैनानामपीष्टत्वात् ॥ ४ एकजन्मनि वर्त्तमानस्य । उत्तरोत्तरज्ञानसन्तान एवात्मेति वचनात् ॥ ५ अकिञ्चिज्ज्ञत्व वर्जयित्वाऽन्यान् चेतनत्वादिज्ञानगतविशेषान् समर्पयतीति भाव ॥ ६ सहकारिकारणभूतस्य ॥ ७ अस्मदादिज्ञान यदा सर्वज्ञो विषयीकरोति तदा तत्स्वाकार कतिपय समर्पयति यत ॥ ८ सहकारिकारणभूतस्य ॥ ९ कार्यभूतम् ॥ १० कतिपयविशेषा =रूपगतजडत्व वर्जयित्वा स्वगतश्वेतपीताद्याकारविशेषा ॥ ११ रूपज्ञानस्य ॥ १२ अचेतनरूपादुपादानाच्चैतन्योत्पत्तिर्यत ॥ १३ रूप रूपज्ञाने रूप समर्पयति न तु जडत्वम् ॥ १४ आदिना अर्थादि ॥ १५ अर्पितानर्पितादिविशेषापेक्षयाऽनुवृत्तव्यावृत्त रूप ॥ १६ अनेकान्तात्मकत्वाज् ज्ञानस्य ॥ १७ उत्तरनिर्विकल्पकज्ञानस्योपादानात्सविकल्पकस्य सहकारिकारणात् ॥ १८ रूपज्ञानादुत्तररूपज्ञानस्योपादानादुत्तररसज्ञानस्य सहकारिकारणात् ॥ १९ एकस्मिन्पुरुषे ॥ २० निर्विकल्पकस्य निर्विकल्पकमुपादान सविकल्पकस्य सविकल्पकमुपादानमिति भाव ॥ २१ ज्ञानसन्तानस्य वहुत्वात् ॥ २२ गोदर्शनेन ॥ २३ अश्वादिदर्शनस्य ॥ २४ य एवाह पूर्व गामद्राक्ष स एवाहमिदानीमश्व पश्यामीति क्रमेण, युगपदश्वगावौ पश्यामीत्यक्रमेण च ॥ २५ स्वगतसकलविशेषाधायकत्वे दूषणान्तरमाह ॥ २६ कार्यजन्ये ॥ २७ रूपाद्युपादानस्य ॥ २८ पूर्वरूपरसौ एकसामग्री ॥ २९ उत्तररसम् ॥ ३० पूर्वरूपस्य ॥ ३१ ज्ञानम् ॥ ३२ रूपाद्युपादानस्य ॥ ३३ आदिपदेन पूर्वकालभावित्वमुत्तरकालनाशित्वम् ॥ ३४ अयथार्था ॥ ३५ तृतीयविकल्प ॥ ३६ प्रत्यय =कारणम् ॥ ३७ समकालत्वमित्यर्थ ॥ ३८ सर्वात्मना समानत्वात् ॥ ३९ पूर्वरूपक्षणे कार्ये पूर्वतररूपक्षणस्य कारणभूतस्य समत्वम् ॥ ४० कार्यकारणयोरभावात् ॥ ४१ ज्ञातत्वेन ॥ ४२ वहुव्रीहि ॥ ४३ कथञ्चित्समत्वेन सद्भावात् ॥ ४४ सौगतेन ॥

नापि कालानन्तर्यं तद्व्यवहितकालस्यापि जाग्रच्चित्तस्य प्रबुद्धचित्तोत्पत्तावुपादानत्वाभ्युपगमात् । अव्यवधानेन प्रागभावमात्रमनन्तरत्वमित्यप्ययुक्तं क्षणिकैकान्त-
वादिनां विवक्षितक्षणानन्तरं निखिलजगत्क्षणानामुत्पत्तेः सर्वेषामेकसन्तानत्वप्रसङ्गात् । नियमवदन्वयव्यतिरेकानुविधानं तल्लक्षणमित्यप्यसमीचीनं–बुद्धेतरचि-
त्तानामप्युपादानोपादेयभावानुषङ्गात्, तेषामव्यभिचारेण कार्यकारणभूतत्वाविशेषात् । निरास्रवचित्तोत्पादात्पूर्वं बुद्धचित्तं प्रति सन्तानान्तरचित्तस्याकारणत्वान्न
तेषामव्यभिचारी कार्यकारणभाव इति चेन्न–यतः प्रभृति तेषां कार्यकारणभावस्ततःप्रभृतितस्तस्याव्यभिचारात् । अन्यथाऽस्याऽसर्वज्ञत्वं स्यात्—नाकारणं विषय
इत्यभ्युपगमात् । अव्यभिचारेण कार्यकारणभूतत्वाविशेषेपि प्रत्यासत्तिविशेषवशात्केषाञ्चिदेवोपादानोपादेयभावो, न सर्वेषामिति चेत्स कोन्योन्यत्रैकद्रव्यतादा-
त्म्यात्? देशप्रत्यासत्ते रूपरसादिभिर्वातातपादिभिर्वा व्यभिचारात्, कालप्रत्यासत्तेरेकसमयवर्तिभिरशेषार्थैरनेकान्तात्, भावप्रत्यासत्तेश्चैकार्थोद्भूतानेकपुरुषवि-
ज्ञानैरनेकान्तात् । न चात्रान्वयव्यतिरेकानुविधानं घटते । न खलु समर्थे कारणे सत्यभवतः स्वयमेव पश्चाद्भवतस्तदन्वयव्यतिरेकानुविधानं नाम, नित्यवत् ।
स्वदेशवत्स्वकाले सति समर्थे कारणे कार्यं जायते नासतीत्येतावता क्षणिकपक्षेऽन्वयव्यतिरेकानुविधाने नित्येपि तत्स्यात् । स्वकालेऽनाद्यनन्ते सति समर्थे
नित्ये स्वसमये कार्यस्योत्पत्तेरसत्यऽनुत्पत्तेश्च प्रतीयमानत्वात् । सर्वदा नित्ये समर्थे सति स्वकाले एव कार्यं भवत्कथं तदन्वयव्यतिरेकानुविधायीति चेत्तर्हि का-
रणक्षणात्पूर्वं पश्चाच्चानाद्यनन्ते तदभावेऽविशिष्टे क्वचिदेव तदभावसमये भवत्कार्यं कथं तदनुविधायीति समानम् । नित्यस्य प्रतिक्षणमनेककार्यकारित्वे
क्रमशोनेकस्वभावत्वसिद्धेः कथमेकत्वं स्यादिति चेत्क्षणिकस्य कथमिति समः पर्यनुयोगः । स हि क्षणस्थितिरेकोपि भावोऽनेकस्वभावो विचित्रकार्यत्वान्नानार्थ-
क्षणवत् । न हि कारणशक्तिभेदमन्तरेण कार्यनानात्वं युक्तं रूपादिज्ञानवत् । यथैव हि कर्कटिकादौ रूपादिज्ञानानि रूपादिस्वभावभेदनिबन्धनानि तथा क्षण-
स्थितेरेकस्मात्प्रदीपादिक्षणाद्वर्तिकादाहतैलशोषादिविचित्रकार्याणि शक्तिभेदनिमित्तकानि व्यवतिष्ठन्ते । अन्यथा रूपादेरपि नानात्वं न स्यात् । ननु च शक्ति-
मतोऽर्थान्तरानर्थान्तरपक्षयोः शक्तीनामघटनात्तासां परमार्थसत्त्वाभावस्तर्हि रूपादीनामपि प्रतीतिसिद्धद्रव्यादर्थान्तरानर्थान्तरविकल्पयोरसम्भवात्परमार्थसत्त्वा-

---

१ निद्रायाम् ॥ २ अन्येन वस्तुना तिरोधायकेन ॥ ३ पूर्वरूपस्य कारणस्य ॥ ४ चेतनाऽचेतनाना कार्याणाम् ॥ ५ चतुर्थविकल्प ॥ ६ सुगत ॥ ७ किञ्चिज्ज्ञ ॥ ८ चित्त ज्ञानम् ॥ ९ अस्मदादिज्ञानसद्भावे सुगतस्या-
स्मदादिज्ञानविषयकज्ञानोत्पत्तिस्तदभावे नोत्पत्तिरित्यन्वयव्यतिरेकाभ्याम् ॥ १० आस्रवरहितचित्त ॥ ११ सास्रवम् ॥ १२ निरास्रवचित्तोत्पत्ते ॥ १३ यदैव घटस्तदैव मृत्पिण्ड इति ॥ १४ बुद्धस्य ॥ १५ यत्सुगतज्ञानोत्पत्तौ कारण
तदेव विषय ॥ १६ सुगतचित्ताना परस्परम् ॥ १७ अत्रात्मैव एकद्रव्यम् ॥ १८ प्रत्यासत्तिरत्रैक्यम्। यत्र यत्र देशप्रत्यासत्तिस्तत्र तत्रोपादानोपादेयभाव इत्युच्यमाने ॥ १९ भाव =स्वरूपम् ॥ २० क्षणिके ॥ २१ पूर्वक्षणे जाग्रद्-
शान्त्यचित्ते ॥ २२ उत्तरक्षणस्य प्रबुद्धचित्तस्य २३ कारण विना ॥ २४ सौगतेनाङ्गीक्रियमाणे ॥ २५ कारणे ॥ २६ अव्यापकत्वेनाभिमते ॥ २७ क्षणिकस्यानेकस्वभावत्व नास्त्यत' कथ सम पर्यनुयोग इत्याह ॥
२८ विचित्रकार्यत्वमस्तु न त्वनेकस्वभावत्वमिति सन्दिग्धानैकान्तिकत्वे सतीदम् ॥ २९ आदिना स्वपरप्रकाशनादिग्रहणम् ॥ ३० अर्थात्सकाशात् ॥ ३१ भिन्नाश्चेत्तस्येति सम्बन्धाभाव । सम्बन्धसिद्ध्यर्थमुपकारकल्पनेऽ-
नवस्था । अभिन्नाश्चेच्छक्तय एव शक्तिमन्त एव वा स्यु ॥

भावः स्यात्। प्रत्यक्षबुद्धौ प्रतिभासमानत्वाद्रूपादयः परमार्थसन्तो न पुनस्तच्छक्तयस्तासामनुमानबुद्धौ प्रतिभासमानत्वादित्यप्ययुक्तं क्षणक्षयस्वर्गप्रापणशक्त्यादीनामपरमार्थसत्त्वप्रसङ्गात्। ततो यथा क्षणिकस्य युगपदनेककार्यकारित्वेप्येकत्वाविरोधस्तथाऽक्षणिकस्य क्रमशोनेककार्यकारित्वेपीत्यनवद्यम्। यच्चार्थक्रियालक्षणं सत्त्वमित्युक्तं तत्र लक्षणशब्दः [3]कारणार्थः [4]स्वरूपार्थो ज्ञापकार्थो वा स्यात्? प्रथमपक्षे किमर्थक्रियालक्षणं कारणं सत्त्वस्य तद्वार्थक्रियायाः? [6]तत्रार्थक्रियातः सत्त्वस्योत्पत्तौ प्राक् पदार्थानां सत्त्वमन्तरेणाप्यस्याः प्रादुर्भावान्निर्हेतुकत्वं निराधारकत्वं वानुषज्येत। अथ सत्त्वादर्थक्रियोत्पद्यते तदार्थक्रियातः प्रागपि सत्त्वसिद्धेर्भावानां स्वरूपसत्त्वमायातम्। अथ स्वरूपार्थोसौ तत्रापि तद्धेतोरसत्त्वप्रसङ्गः। न ह्यर्थक्रियाकाले तद्धेतुर्विद्यते। न चान्यकालस्यास्यान्यकाला सा स्वरूपमतिप्रसङ्गात्। नापि ज्ञापकार्थोसावर्थक्रियाकालेर्थस्यासत्त्वादेव। असतश्चास्याऽतः कथं सत्ताज्ञप्तिरतिप्रसङ्गात्। न चार्थक्रियोदयात्प्राक् कारणमासीदिति व्यवस्थापयितुं शक्यम्। यतो यदि स्वरूपेण पूर्वं हेतुरवगतो भवेत्तदनन्तरं चार्थक्रिया, तदार्थक्रिया प्रतिपन्नसम्बन्धोपलभ्यमाना प्राग्धेतुसत्तां व्यवस्थापयतीति स्यात्। न चार्थक्रियामन्तरेण [14]हेतुः स्वरूपेण कदाचिदप्युपलब्धः [15]परैः—स्वरूपसत्त्वप्रसङ्गात्। अर्थक्रियायाश्चापरार्थक्रिया यदि सत्त्वव्यवस्थापिका तदानवस्था। न चार्थक्रियाऽनधिगतसत्त्वस्वरूपापि हेतुसत्त्वव्यवस्थापिकाऽश्वविषाणादेरपि तत्सत्त्वव्यवस्थापकत्वानुषङ्गात्। न च हेतुजन्यत्वादर्थक्रिया सती नार्थक्रियान्तरोदयादित्यभिधातव्यमितरेतराश्रयानुषङ्गात्। हेतुसत्त्वाद्ध्यर्थक्रिया सती तत्सत्त्वाच्च हेतोः सत्त्वमिति। अस्तु वार्थक्रियालक्षणं सत्त्वम्। तथाप्यतोर्थाना क्षणस्थायिता क्षणिकत्वं साध्येत क्षणादूर्ध्वमभावो वा? प्रथमपक्षे सिद्धसाध्यता नित्यस्याप्यर्थस्य क्षणावस्थित्यभ्युपगमात्। कथमन्यथास्य सदावस्थितिः क्षणावस्थितिनिबन्धनत्वात् क्षणान्तराद्यवस्थितेः। अथ क्षणादूर्ध्वमभावः साध्यते तत्राऽभावेन सहास्य प्रतिबन्धासिद्धेः। न चाप्रतिबन्धविषयोऽश्वविषाणादिवदनुमेयः। तन्न सत्त्वादप्यर्थानां क्षणिकत्वावगतिः। नापि कृतकत्वादुक्तप्रकारेण क्षणिके कार्यकारणभावप्रतिषेधतः कृतकस्याऽसिद्धस्वरूपत्वेन तदवगतिं प्रत्यनङ्गत्वात्। [16]ततः प्रतीत्यनुरोधेन स्थिरः स्थूलः साधारणस्वभावश्च भावोभ्युपगन्तव्यः।

ननु चा[17]णूनामयःशलाकाकल्पत्वेनान्योन्यं सम्बन्धाभावतः स्थूलादिप्रतीतेर्भ्रान्तत्वात्कथं तद्वशात्तत्स्वभावो भावः स्यात्? तथा हि। सम्बन्धोर्थानां पारतन्त्र्यलक्षणो वा स्याद्रूपश्लेषलक्षणो वा स्यात्? प्रथमपक्षे किमसौ निष्पन्नयोः सम्बन्धिनोः स्यादनिष्पन्नयोर्वा? न तावदनिष्पन्नयोः स्वरूपस्यैवाऽसत्त्वात्

१ तस्य प्रदीपस्य ॥ २ साधन विचार्यते ॥ ३ लक्ष्यते जन्यते कार्यमनेनेति लक्षण कारणमित्यर्थ —अनेकार्थत्वाद्धातूनाम् ॥ ४ सत्त्वस्य ॥ ५ सत्त्वस्य ॥ ६ द्वयो पक्षयोर्मध्ये ॥ ७ कारणभूतात् ॥ ८ सर्वथा क्षणिकत्वात् ॥ ९ न हि स्वरूपिस्वरूपयो कालभेदो यत ॥ १० गगनकुसुमादेरपि ज्ञापकत्वप्रसङ्गात् ॥ ११ अर्थक्रिया=स्नानपानादि ॥ १२ जलादिलक्षण । अर्थक्रियाया ॥ १३ कारणेन सह ॥ १४ अर्थक्रियाकारणम् ॥ १५ सौगतै ॥ १६ अनुमानत्रयेण क्षणिकत्व पदार्थाना न सिद्ध्यति यत ॥ १७ रूपरसगन्धस्पर्शपरमाणूना सजातीयविजातीयव्यावृत्ताना परस्परमसम्बद्धानाम् ॥

शशाश्वविषाणवत्। निष्पन्नयोश्च पारतन्त्र्याभावादसम्बन्ध एव। उक्तं च "पारतन्त्र्यं हि सम्बन्धः सिद्धे का परतन्त्रता। तस्मात्सर्वस्य भावस्य सम्बन्धो नास्ति तत्त्वतः। १।" नापि रूपश्लेषलक्षणोसौ सम्बन्धिनोर्द्वित्वे रूपश्लेषविरोधात्। तयोरैक्ये वा सुतरा सम्बन्धाभावः–सम्बन्धिनोरभावे सम्बन्धायोगात्, द्विष्ठत्वात्तस्य। अथ नैरन्तर्यं तयो रूपश्लेषो, नास्यान्तरालाभावरूपत्वेनाऽतात्त्विकत्वात् सम्बन्धरूपत्वायोगः। निरन्तरतायाश्च सम्बन्धरूपत्वे सान्तरतापि कथं सम्बन्धो न स्यात्? किञ्चासौ रूपश्लेषः सर्वात्मनैकदेशेन वा स्यात्? सर्वात्मना रूपश्लेषेऽणूनां पिण्डाणुमात्रः स्यात्। एकदेशेन तच्छ्लेषे किमेकदेशास्तस्यात्मभूताः परभूताः वा? आत्मभूताश्चेन्नैकदेशेन रूपश्लेषस्तदभावात्। परभूताश्चेत्तैरप्यणूनां सर्वात्मनैकदेशेन वा रूपश्लेषे स एव पर्यनुयोगोनवस्था च स्यात्। तदुक्तं "रूपश्लेषो हि सम्बन्धो द्वित्वे स च कथं भवेत्। तस्मात्प्रकृतिभिन्नानां सम्बन्धो नास्ति तत्त्वतः। १।" किञ्च परापेक्षैव सम्बन्धस्तस्य द्विष्ठत्वात्। तं चापेक्षते भावः स्वयं सन्नसन्वा? न तावदसन्नपेक्षाधर्माश्रयत्वविरोधात् खरशृङ्गवत्। नापि सन् सर्वनिराशंसत्वात्। अन्यथा सत्त्वविरोधात्। तन्न परापेक्षा नाम यद्रूपः सम्बन्धः सिद्ध्येत्। उक्तं च "परापेक्षा हि सम्बन्धः सोऽसन् कथमपेक्षते। संश्च सर्वनिराशंसो भावः कथमपेक्षते। १।" किञ्चासौ सम्बन्धः सम्बन्धिभ्यां भिन्नोऽभिन्नो वा? यद्यभिन्नस्तदा सम्बन्धिनावेव, न सम्बन्धः कश्चित्। स एव वा, न ताविति। भिन्नश्चेत्सम्बन्धिनौ केवलौ कथं सम्बधौ स्याताम्? भवतु वा सम्बन्धोर्थान्तरम्। तथापि तेनैकेन सम्बन्धेन सह द्वयोः सम्बन्धिनोः कः सम्बन्धः? यथा सम्बन्धिनोर्यथोक्तदोषान्न कश्चित्सम्बन्धस्तथात्रापि। तेनानयोः सम्बन्धान्तराभ्युपगमे चानवस्था स्यात्तत्रापि सम्बन्धान्तरानुषङ्गात्। तन्न सम्बन्धिनोः सम्बन्धबुद्धिर्वास्तवी तद्व्यतिरेकेणान्यस्य सम्बन्धस्यासम्भवात्। तदुक्तं "द्वयोरेकाभिसम्बन्धात्सम्बन्धो यदि तद्द्वयोः। कः सम्बन्धोनवस्था च न सम्बन्धमतिस्तथा। १।" ततः–तौ च भावौ तदन्येश्च सर्वे ते स्वात्मनि स्थिताः। इत्यमिश्राः स्वयं भावास्तान् मिश्रयति कल्पना। २। तौ च भावौ सम्बन्धिनौ। ताभ्यामन्यश्च सम्बन्धः। सर्वे ते स्वात्मनि स्वस्वरूपे स्थिता। तेनामिश्रा व्यावृत्तस्वरूपाः स्वयं भावास्तथापि तान्मिश्रयति योजयति कल्पना। अत एव तद्वास्तवसम्बन्धाभावेपि तामेव कल्पनामनुरुन्धानैर्व्यवहर्तृभिर्भावानां भेदोऽन्यापोहस्तस्य प्रत्यायनाय क्रियाकारकादिवाचिनः शब्दाः प्रयोज्यन्ते–देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादयः। न खलु कारकाणां क्रियया सम्बन्धोस्ति क्षणिकत्वेन क्रियाकाले

---

१ सम्बन्धिनि ॥ २ सह्यविन्ध्ययोरिव ॥ ३ अन्योन्यस्वभावानुप्रवेशलक्षण ॥ ४ इति चेदित्युपरित ॥ ५ अन्तराभावो नैरन्तर्यमिति ॥ ६ तुच्छभावरूपत्वादभावस्य ॥ ७ निरन्तरतावत्पदार्थद्वयापेक्षत्वाविशेषात् ॥ ८ अंशा ॥ ९ निरगलादणो ॥ १० सम्बन्धिनो ॥ ११ प्रकृत्या=स्वभावेन ॥ १२ अणूनाम् ॥ १३ सम्बन्धलक्षण ॥ १४ सर्वेषु निराकाङ्क्षत्वात् ॥ १५ परमपेक्षते चेत् ॥ १६ परम् ॥ १७ सम्बन्धरहितौ ॥ १८ सम्बन्धिभ्याम् ॥ १९ स च सम्बन्धिनौ च ॥ २० सम्बन्धसम्बन्धिनो ॥ २१ अन्ययेति शेष ॥ २२ सम्बन्ध ॥ २३ वासनारूपा। कर्त्री ॥ २४ अवास्तवी ॥ २५ कल्पनैव मिश्रयति यत ॥ २६ स्थिरस्थूलसाधारणाकाररूप ॥ २७ अगोव्यावृत्तिर्गा। अघटव्यावृत्तिर्घट इत्यादि ॥

कारकाणामसम्भवात्। उक्तं च "[1]तामेव चानुरुन्धानैः क्रियाकारकवाचिनः। भावभेदप्रतीत्यर्थं संयोज्यन्तेभिधायकाः ।१।" [2]कार्यकारणभावस्तर्हि सम्बन्धो भविष्यतीत्यप्यसमीचीनं कार्यकारणयोरसहभावतस्तस्यापि[3] द्विष्ठस्यासम्भवात्। न खलु कारणकाले कार्यं तत्काले वा कारणमस्ति तुल्यकालं कार्यकारणभावानुपपत्तेः सव्येतरगोविषाणवत्। तन्न सम्बन्धिनौ[4] सहभाविनौ विद्येते येनानयोर्वर्तमानोसौ[5] सम्बन्धः स्यात्। अद्विष्ठे च भावे सम्बन्धतानुपपन्नैव। कार्ये कारणे वा क्रमेणासौ सम्बन्धो वर्त्तते इत्यप्यसाम्प्रतं यतः क्रमेणापि भावः सम्बन्धाख्य एकत्र कारणे कार्ये वा वर्त्तमानोऽन्यनिस्पृहः[6]=कार्यकारणयोरन्यतरानपेक्षो नैकवृत्तिमान् सम्बन्धो युक्तस्तदभावेपि[7]=कार्यकारणयोर्भावेपि तद्भावात्। यदि पुनः कार्यकारणयोरेकं कार्यं कारणं वापेक्ष्यान्यत्र कार्ये कारणे वासौ सम्बन्धः क्रमेण वर्त्तत [8]इति सस्पृहत्वेन द्विष्ठ एवेष्यते तदानेनापेक्ष्यमाणेनोपकारिणा[11] भवितव्यं यस्मादुपकार्यंऽपेक्ष्यः[13] स्यान्नान्यः। कथं चोपकारोऽत्यऽसन् यदा कारणकाले कार्याख्यो भावोऽसन् तत्काले वा कारणाख्यस्तदा नैवोपकुर्यादसामर्थ्यात्[14][15]। किञ्च यद्येकार्थाभिसम्बन्धात्[16]कार्यकारणता तयोः कार्यकारणभावत्वेनाभिमतयोस्तर्हि द्वित्वसंख्यापरत्वापरत्वविभागादि[17][18]सम्बन्धात्प्राप्ता सा सव्येतरगोविषाणयोरपि[19]। न येन केनचिदेकेन सम्बन्धात्सेष्यते। किं तर्हि? सम्बन्धलक्षणेनैवेति[20] चेत्तन्न द्विष्ठो हि कश्चित्पदार्थः सम्बन्धः। नातोर्थद्वयाभिसम्बन्धादन्यत्तस्य लक्षणं, येनास्य संख्यादेर्विशेषो व्यवस्थाप्येत। केस्य[21]चिद्भावे[22] भावोऽभावे चाभावः। तावुपाधी[23] विशेषणं[24] यस्य योगस्य=सम्बन्धस्य स कार्यकारणता यदि, न सर्वसम्बन्धस्तदा[25] तावेव योगोपाधी भावाभावौ कार्यकारणताऽस्तु[22] किमसत्सम्बन्धकल्पनया। भेदाच्चेद्भावे[26] हि भावोऽभावे चाभाव[27] इति वहवोभिधेयाः[28]। कथं कार्यकारणतेत्येकार्थाभिधायिना शब्देनोच्यते? नन्वयं शब्दो[30] नियोक्तारं समाश्रितः। नियोक्ता हि यं शब्दं यथा[31] प्रयुङ्क्ते तथा प्राह[32]। इत्यनेकत्राप्येका[33] श्रुतिर्न विरुध्यते इति तावेव कार्यकारणता। यस्मात् पश्यन्नेकं कारणाभिमतमुपलब्धिलक्षणप्राप्तस्याऽदृष्टस्य[34] कार्याख्यस्य दर्शने सति तददर्शने च सत्यऽपश्यत्कार्यमन्वेति[35] इदमतो भवतीति प्रतिपद्यते[36]

---

१ कल्पनामऽवास्तवीं बुद्धिम् ॥ २ सामान्यसम्बन्ध सदूष्य सम्बन्धविशेष दूषयन्नाह ॥ ३ क्षणिकत्वात् ॥ ४ कार्यकारणलक्षणे ॥ ५ कार्यकारणलक्षणे ॥ ६ 'अन्यनिस्पृहस्य' प्रत्यर्थं ॥ ७ प्रत्यर्थं ॥ ८ अन्यतरस्य ॥ ९ अस्य कार्यस्येद कारणमिति ॥ १० हेतो ॥ ११ कार्येण कारणेन वा ॥ १२ सम्बन्धेन ॥ १३ लोके ॥ १४ कार्यं कारणमपेक्ष्य कारणे कार्यमपेक्ष्य यो वर्तते सम्बन्धस्तम् ॥ १५ खरविषाणादिवत् ॥ १६ सम्बन्धलक्षण ॥ १७ द्वन्द्व ॥ १८ आदिना पृथक्त्वादि ॥ १९ द्वित्वसंख्यालक्षणैकार्थाभिसम्बन्धस्याविशेषात् ॥ २० एकेन सह ॥ २१ कार्यस्य कारणस्य वा ॥ २२ कार्यकारणताया स्यात् ॥ २३ भावाभावौ ॥ २४ उपाधि =विशेषणम् ॥ २५ सम्बन्ध ॥ २६ जैनानाशङ्कयाह बौद्ध ॥ २७ भावाभावाभ्या कार्यकारणभावसम्बन्धस्य ॥ २८ सम्बन्धस्य ॥ २९ चत्वारोऽर्था ॥ ३० कार्यकारणसम्बन्धप्रतिपादक कार्यकारणलक्षण ॥ ३१ एकार्थमभिप्रेत्यानेकार्थं वाभिप्रेत्य ॥ ३२ एकार्थाननेकार्थान्वा ॥ ३३ यथोदविशब्द उदकानि अस्मिन्धीयन्ते स उदधिरित्यादि ॥ ३४ कारणाभिमतपदार्थदर्शनात्पूर्वम् ॥ ३५ कथम् ? तथा हि ॥ ३६ स्वयम् ॥

जनोऽत इदं जातमित्याख्यातृभिर्विनापि । तस्माद्दर्शनादर्शने[3] विषयिणि[4] विषयोपचाराद्भावाभावौ[5] मुक्त्वा कार्यबुद्धेरसम्भवात्[6] कार्यादिश्रुतिरप्यत्र[7] भावाभावयोर्मा[8] लोकः प्रतिपदमियतीं[9] शब्दमालामभिदध्यादिति व्यवहारलाघवार्थं निवेशितेति[10][11] । अन्वयव्यतिरेकाभ्यां कार्यकारणता, नान्या[12] चेत्कथं भावाभावाभ्यां सा प्रसाध्यते[13] तदभावाभावात्[14] । लिङ्गात्तत्कार्यतागतिर्याप्यनुवर्ण्यते[15]स्येदं कार्यं कारणं चेति सङ्केतविषयाख्या सा । यथा गौरयं सास्नादिमत्त्वादित्यनेन[16] गोव्यवहारस्य विषयः प्रदर्श्यते । यतश्च[17] भावे[18] भाविनि भवनधर्मिणि तद्भावः=कारणाभिमतस्य भाव एव कारणत्वं भावे एव कारणाभिमतस्य भाविता कार्याभिमतस्य कार्यत्वमिति प्रसिद्धे प्रत्यक्षानुपलम्भतो हेतुफलते, ततो भावाभावावेव कार्यकारणता, नान्या । तेनैतावन्मात्रं[19] भावाभावौ तावेव तत्त्वं[20] यस्यार्थस्यासावेतावन्मात्रतत्त्वः[21] । सोऽर्थो[21] येषां विकल्पानां[22] ते एतावन्मात्रतत्त्वार्थाः=एतावन्मात्रबीजाः[23] कार्यकारणगोचराः[24] । दर्शयन्ति[25] घटितानिव=सम्बद्धानिवाऽसम्बद्धानप्यर्थान्[26] । एवं घटनाच्च मिथ्यार्थाः[26] । किञ्चासौ कार्यकारणभूतोऽर्थो भिन्नोऽभिन्नो[27] वा स्यात्? यदि भिन्नस्तर्हि भिन्ने का घटना[28] स्वस्वभावव्यवस्थितेः[29] । अथाऽभिन्नस्तदाऽभिन्ने कार्यकारणतापि का? नैव स्यात् । स्यादेतत्—न भिन्नस्याभिन्नस्य[30] वा सम्बन्धः । किं तर्हि? सम्बन्धाख्येनैकेन सम्बन्धादित्यत्रापि भावे=सत्तायामन्यस्य[31] सम्बन्धस्य विश्लिष्टौ[32][33] कार्यकारणाभिमतौ श्लिष्टौ स्याताम् । कथं च तौ संयोगिसमवायिनौ? आदिग्रहणात्स्वस्वाम्यादिकम्[34][35]? सर्वमेतेनानन्तरोक्तेन सामान्यसम्बन्धप्रतिषेधेन चिन्तितम्[36] । संयोग्यादीनामन्योन्यमनुपकाराच्चाऽजन्यजनकभावाच्च न सम्बन्धी च तादृशोऽनुपकार्योपकारकभूतः । अथास्ति कश्चित्समवायी[37][38] योऽवयविरूपं कार्यं जनयति । अतो नानुपकारादसम्बन्धितेति । तन्न—यतो जननेऽपि कार्यस्य केनचित्समवायिनाभ्युपगम्यमाने[39] समवायी, नासौ[40] तदा—जननकाले कार्यस्यानिष्पत्तेः[41] । न च ततो जननात्समवायित्वं[42] सिद्ध्यति—कुम्भकारादेरपि घटे समवायित्वप्रसङ्गात् । तयोः[43] सम-

१ शब्दोक्तेरामन्तरेण उपदेशके पुरुषे ॥ २ कारणस्य ॥ ३ कार्यस्य ॥ ४ कार्यकारणाभिमतयो पदार्थयो कार्यकारणता भवत्विति ॥ ५ दर्शनादर्शनलक्षणे ज्ञाने ॥ ६ भावाभावावेव कार्यं, नान्यदित्यर्थः ॥ ७ श्रुतिः=शब्द ॥ ८ न केवल कार्यकारणश्रुति किंतु ॥ ९ भावे भाव अभावे चाऽभाव इत्येतावतीम् ॥ १० समर्थिता ॥ ११ इति=नन्ववादी ब्रूते ॥ १२ भावाभावाभ्यामनुमीयमाना यदि कार्यकारणता ताभ्यामन्या तदा दूषणम् ॥ १३ सम्बन्धवादिना ॥ १४ तस्य=कारणस्य ॥ १५ अस्य कारणस्येदं कार्यमस्य च कार्यस्येदं कारणमिति ॥ १६ अनुमानेन ॥ १७ प्रकारान्तरेण तावेव कार्यकारणतेति निरूपयति ॥ १८ कार्यलक्षणे ॥ १९ स्वरूपम् ॥ २० कार्यकारणस्य ॥ २१ अर्थ=विषय ॥ २२ भ्रान्तज्ञानानाम् ॥ २३ वस ॥ २४ विकल्पा ॥ २५ प्रत्यर्थं ॥ २६ विकल्पा ॥ २७ परस्परम् ॥ २८ सम्बन्ध ॥ २९ कार्यकारणयो ॥ ३० कार्यस्य कारणस्य वा ॥ ३१ प्रत्ययोगम् ॥ ३२ भिन्नस्य ॥ ३३ स्वरूपेण ॥ ३४ कारिकायाम् ॥ ३५ स्वामिभृत्यभावसम्बन्धादिकम् ॥ ३६ निराकृतम् ॥ ३७ अर्थ ॥ ३८ उपकारक ॥ ३९ तन्त्वादि ॥ ४० सम्बन्धवादिना ॥ ४१ कार्येण समम् ॥ ४२ समवायिना कारणेन कार्यस्य निष्पादनसमये कार्यस्यानिष्पन्नत्वात्कुत कार्येण समत्व कारणस्य? तत्करणे सति तस्य विनष्टत्वात् ॥ ४३ तन्तूनाम् ॥ ४४ तन्तुपटयो ॥

वायिनोः परस्परमनुपकारेपि ताभ्यां वा समवायस्य नित्यतया समवायेन वा तयोः परत्र[1] वा क्वचिदनुपकारेपि सम्बन्धो यदीष्यते तदा विश्वं परस्परासम्बद्धं समवायि परस्परं स्यात्। यदि च संयोगस्य[3] कार्यत्वात्तस्य ताभ्यां जननात्संयोगिता तयोस्तदा संयोगजननेपीष्टौ। ततः संयोगजननान्न तौ संयोगिनौ कर्मणोपि[6] संयोगितापत्तेः। संयोगो ह्यन्यतरकर्मज उभयकर्मजश्चेष्यते। आदिग्रहणात्संयोगस्यापि संयोगिता स्यात्। न संयोगजननात्संयोगिता। किन्तर्हि? स्थापनादिति चेन्न स्थितिश्च प्रतिवर्णिता=ग्रन्थान्तरे प्रतिक्षिप्ता–स्थाप्यस्थापकयोर्जन्यजनकत्वाभावान्नान्या स्थितिरिति[18]। "कार्यकारणभावोपि तयोरसहभावतः। प्रसिद्ध्यति कथं द्विष्ठोऽद्विष्ठे सम्बन्धता कथम्। १। क्रमेण भाव एकत्र वर्त्तमानोन्यनिस्पृहः। तदभावेपि तद्भावात्सम्बन्धो नैकवृत्तिमान्। २। यद्यपेक्ष्य तयोरेकमन्यत्रासौ प्रवर्त्तते। उपकारी ह्यपेक्ष्यः स्यात्कथं चोपकरोत्यसन्। ३। यद्येकार्थाभिसम्बन्धात्कार्यकारणता तयोः। प्राप्ता द्वित्वादिसम्बन्धात्सव्येतरविषाणयोः। ४। द्विष्ठो हि कश्चित्सम्बन्धो नातोन्यत्तस्य लक्षणम्। भावाभावोपधिर्योगः कार्यकारणता यदि। ५। योगोपाधी न तावेव कार्यकारणतात्र किम्। भेदाच्चेन्नन्वऽयं शब्दो नियोक्तारं समाश्रितः। ६। पश्यन्नेकमदृष्टस्य दर्शने तददर्शने। अपश्यत्कार्यमन्वेति विना व्याख्यातृभिर्जनः। ७। दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसम्भवात्। कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता। ८। तद्भावाभावात्तत्कार्यगतिर्याप्यनुवर्ण्यते। सङ्केतविषयाख्या सा सास्नादेर्गोगतिर्यथा। ९। भावे भाविनि तद्भावो भाव एव च भाविता। प्रसिद्धे हेतुफलते प्रत्यक्षानुपलम्भतः। १०। एतावन्मात्रतत्त्वार्थाः कार्यकारणगोचराः। विकल्पा दर्शयन्त्यर्थान् मिथ्यार्था घटितानिव। ११। भिन्ने का घटनाऽभिन्ने कार्यकारणतापि का। भावे ह्यन्यस्य विश्लिष्टौ श्लिष्टौ स्यातां कथं च तौ। १२। संयोगिसमवाय्यादि सर्वमेतेन चिन्तितम्। अन्योन्यानुपकाराच्च न सम्बन्धी च तादृशः। १३। जननेपि हि कार्यस्य केनचित्समवायिना। समवायी तदा नासौ न[36] ततोतिप्रसङ्गतः। १४। तयोरनुपकारेऽपि समवाये परत्र वा। सम्बन्धो यदि विश्वं स्यात्समवायि परस्परम्। १५। संयोगजननेपीष्टौ ततः संयोगिनौ न तौ। कर्मादियोगितापत्तेः स्थितिश्च प्रतिवर्णिता। १६।" इति।

---

१ असमवायिनि कारणे कार्ये वा॥ २ उपकारकत्वाभावाविशेषात् ॥ ३ सम्बन्धस्य ॥ ४ समवायिभ्याम् ॥ ५ संयोगिनो ॥ ६ क्रियाया ॥ ७ कर्मण सकाशात्सयोगजननात् ॥ ८ तथा च द्रव्ययोरेव हि सयोगो, न कर्मणोरेवेति मत विघटेत ॥ ९ शैलश्येनयो ॥ १० मल्लयो ॥ ११ कारिकायाम् ॥ १२ गुणरूपस्य ॥ १३ हस्तपुस्तकसयोगात्कायपुस्तकसयोगस्योत्पत्ते ॥ १४ सयोगिभ्या स्थाप्यपदार्थस्य सयोगलक्षणस्य स्थितिनिष्पादनात् ॥ १५ सयोगिनो स्योगस्य च ॥ १६ निराकृता ॥ १७ प्रत्यर्थ ॥ १८ जन्यजनकभावस्तु प्रागप्रतिक्षिप्त इत्यर्थ ॥ १९ कार्ये कारणे वा ॥ २० तयो कार्यकारणयो ॥ २१ तस्य=सम्बन्धस्य ॥ २२ सम्बन्ध ॥ २३ नरम् ॥ २४ कारणम् ॥ २५ कार्यस्य ॥ २६ तस्य=कारणस्य ॥ २७ तस्य=कारणस्य ॥ २८ तस्य=कारणस्य ॥ २९ साधनात् ॥ ३० कार्यता ॥ ३१ अन्वयव्यतिरेकत ॥ ३२ सम्बन्ध ॥ ३३ सम्बन्धस्य ॥ ३४ समवायिनो ॥ ३५ तर्हीति शेष ॥ ३६ कुत ? यत ॥

अस्तु वा कार्यकारणभावलक्षणः सम्बन्धः। तथाप्यस्य प्रतिपन्नस्याप्रतिपन्नस्य वा सत्त्वं सिद्ध्येत्? न तावदप्रतिपन्नस्यातिप्रसङ्गात्। प्रतिपन्नस्य चेत्कुतोऽस्य प्रतिपत्तिः?[1] प्रत्यक्षेण प्रत्यक्षानुपलम्भाभ्यां[2] वानुमानेन वा? प्रकारान्तराऽसम्भवात्[3]। प्रत्यक्षेण चेदग्निस्वरूपग्राहिणा धूमस्वरूपग्राहिणोभयस्वरूपग्राहिणा वा? न तावदग्निस्वरूपग्राहिणा। तद्धि तत्सद्भावमात्रमेव प्रतिपद्यते, न धूमस्वरूपम्। तदप्रतिपत्तौ च न तदपेक्षयाग्नेः कारणत्वावगमः[4]। न हि प्रतियोगिस्वरूपाप्रतिपत्तौ[5] तं[6] प्रति कस्यचित्कारणत्वमन्यद्वा धर्मान्तरं प्रत्येतुं शक्यमतिप्रसङ्गात्। नापि धूमस्वरूपग्राहिणा प्रत्यक्षेण कार्यकारणभावावगमोऽत एव। उभयस्वरूपग्रहणे खलु तन्निष्ठसम्बन्धावगमो युक्तो, नान्यथा। नाप्युभयस्वरूपग्राहिणा—तत्रापि हि तयोः[10] स्वरूपमात्रमेव[11] प्रतिभासते न त्वग्नेर्धूमं प्रति कारणत्वं तस्यैव तं प्रति कार्यत्वम्। न हि स्वस्वरूपनिष्ठपदार्थद्वयस्यैकज्ञानप्रतिभासमात्रेण[12] कार्यकारणभावप्रतिभासो[13] घटपटादेरपि तत्प्रसङ्गात्[14]। यत्प्रतिभासानन्तरमेकत्र ज्ञाने यस्य[16] प्रतिभासस्तयोस्तदवगम इत्यपि तादृग्[17] घटप्रतिभासानन्तरं पटस्यापि प्रतिभासनात्। न[18] च क्रमभाविपदार्थद्वयप्रतिभाससमन्वय्येकं ज्ञानमिति वक्तुं शक्यं सर्वत्र[20] प्रतिभासभेदस्य भेदनिबन्धनत्वात्[21]। अथाग्निधूमस्वरूपद्वयग्राहिज्ञानद्वयानन्तरभाविस्मरणसहकारीन्द्रियजनितविकल्पज्ञाने[22] तद्द्वयस्य पूर्वापरकालभाविनः प्रतिभासात्कार्यकारणभावनिश्चयो भविष्यतीत्युच्यते[23] तदप्युक्तिमात्रं—चक्षुरादीनां तज्ज्ञानजननासामर्थ्ये[24] स्मरणसव्यपेक्षाणामपि जनकत्वविरोधात्। न हि परिमलस्मरणसव्यपेक्षं लोचनं[25] सुरभि चन्दनमिति प्रत्ययमुत्पादयति। तत्सव्यपेक्षलोचनव्यापारानन्तरमेते कार्यकारणभूता इत्यवभासनात्तद्भावः सविकल्पकप्रत्यक्षप्रसिद्ध इत्यप्यसमीचीनं गन्धस्यापि लोचनज्ञानविषयत्वप्रसङ्गात्[30]। गन्धस्मरणसहकारिलोचनव्यापारानन्तरं सुरभि चन्दनमिति प्रत्ययप्रतीतेः। तन्न प्रत्यक्षेणासौ प्रतीयते। नापि प्रत्यक्षानुपलम्भाभ्यां प्रत्यक्षस्येवानुपलम्भस्यापि प्रतिषेध्य[31]विविक्तवस्तुमात्र[32]विषयत्वेनात्राऽसामर्थ्यात्। अथाग्निसद्भाव एव धूमस्य भावस्तदभावे चाभावः कार्यकारणभावः। स चैताभ्यां प्रतीयते इत्युच्यते तर्हि वक्तृत्वस्यासर्वज्ञत्वादिना व्याप्तिः[33] स्यात्। तद्धि

१ गगनाब्जादेरपि सत्त्वप्रसङ्गोऽप्रतिपन्नत्वाविशेषात् ॥ २ अन्वयव्यतिरेकज्ञानाभ्याम् ॥ ३ उक्तप्रकारेभ्य प्रमाणान्तरस्य परेणानभ्युपगमात् ॥ ४ अयमग्निर्धूमस्य कारणमिति ॥ ५ प्रतियोगी=धूम ॥ ६ धूमम् ॥ ७ अग्न्यादेर्वस्तुन ॥ ८ सादृश्यादिकम् ॥ ९ खकुसुमादिक प्रत्यपि कस्यचित्कारणत्वप्रसङ्गात् ॥ १० अग्निधूमयो ॥ ११ न त्वयमग्निर्धूमस्य कारण धूमोऽग्ने कार्यमिति प्रतिभाम ॥ १२ एव ॥ १३ युक्त ॥ १४ तस्य=कार्यकारणभावस्य ॥ १५ एकज्ञानप्रतिभासमानत्वस्याविशेषात् ॥ १६ अर्थस्य ॥ १७ कुत ॥ १८ एक ज्ञान परिहरति पर पदार्थद्वयप्रतिभासे ॥ १९ अनुयायि ॥ २० ज्ञाने ज्ञेये च ॥ २१ घटपटयोरिव ॥ २२ तौ अग्निधूमाविति । मीमासकाभ्युपगते प्रत्यभिज्ञाप्रत्यक्षे ॥ २३ सम्बन्धवादिना ॥ २४ अग्निधूमद्वयकार्यकारणभावज्ञानोत्पादनासामर्थ्ये ॥ २५ ज्ञानस्य ॥ २६ कर्तृपदम् ॥ २७ कर्मपदम् ॥ २८ परिमलस्मरणसव्यपेक्षत्वेपि लोचने सति चन्दन सुरभीति ज्ञान घ्राणेन्द्रियादेव जायत इत्यर्थ ॥ २९ अग्निधूमादय ॥ ३० तदपि कुत इत्याह ॥ ३१ अग्निधूमादि ॥ ३२ महाह्रदादि ॥ ३३ असर्वज्ञत्वादिसद्भावे वक्तृत्वस्य सद्भावस्तदभावे चाभाव इति ॥

रागादिमत्त्वाऽसर्वज्ञत्वसद्भावे स्वात्मन्येव दृष्टम् तदभावे चोपलशकलादौ न दृष्टम् । तथा च सर्वज्ञवीतरागाय दत्तो जलाञ्जलिः । वक्तृत्वस्य वक्तुकामताहेतुकत्वान्नायं दोषो रागादिसद्भावेपि वक्तृकामताभावे तस्यासत्त्वात् । नन्वेवं व्यभिचारे विवक्षाप्यस्य निमित्तं न स्यादन्यविवक्षायामप्यन्यशब्दोपलम्भात् । अन्यथा गोत्रस्खलनादेरभावप्रसङ्गात् । अथार्थविवक्षाव्यभिचारेपि शब्दविवक्षायामप्यव्यभिचारो न स्वप्नावस्थायामन्यत्र गतचित्तस्य वा शब्दविवक्षाभावेपि वक्तृत्वसंवेदनात् । न च व्यवहिता सा तन्निमित्तमिति वक्तव्यं प्रतिनियतकार्यकारणभावाभावप्रसङ्गात् सर्वस्य तत्प्राप्तेः । अथासर्वज्ञत्वाद्यभावे सर्वत्र वक्तृत्वं न सम्भवतीत्यत्र प्रमाणाभावान्न तस्य तेन कार्यकारणभावलक्षणः प्रतिबन्धः सिद्ध्यति, तदग्निधूमादावपि समानम् । अथाग्न्यभावे धूमस्य भावे तद्धेतुकताविरहात्सकृदप्यहेतोरग्नेस्तस्य भावो न स्यात् । दृश्यते च महानसादावग्नितः । ततो नानग्नेर्धूमसद्भाव इति प्रतिबन्धसिद्धिरित्यभिधीयते, तदप्यभिधानमात्रम् । यथैव हीन्धनादेरेकदा समुद्भूतोप्यग्निरन्यदारणिनिर्मथनान्मण्यादेर्वा भवन्नुपलभ्यते, धूमो वाग्नितो जायमानोपि गोपालघटिकादौ पावकोद्भूतधूमादप्युपजायते तथाग्न्यभावेपि कदाचिद्धूमो भविष्यतीति कुतः प्रतिबन्धसिद्धिः ? अथ यादृशोग्निरिन्धनादिसामग्रीतो जायमानो दृष्टो न तादृशोऽरणितो मण्यादेर्वा । धूमोपि यादृशोग्नितो न तादृशो गोपालघटिकादौ वन्हिप्रभवधूमादन्यादृशात्तादृशभावेतिप्रसङ्गात् । इति नाग्निजन्यधूमस्य तत्सदृशस्य चानग्नेर्भावः । भावे वा तादृशधूमजनकस्याग्निस्वभावतैवेति न व्यभिचारः । तदुक्तम् "अग्निस्वभावः शक्रस्य मूर्धा यद्यग्निरेव सः । अथानग्निस्वभावोसौ धूमस्तत्र कथं भवेत्" इत्यादि । तदेतद्वक्तृत्वेपि समानम् । तद्धि सर्वज्ञे वीतरागे वा यदि स्यादसर्वज्ञाद्रागादिमतो वा कदाचिदपि न स्यादहेतोः सकृदप्यसम्भवात् । भवति च तत्ततः । अतो न सर्वज्ञे तस्य तत्सदृशस्य वा सम्भव इति प्रतिबन्धसिद्धिः । किञ्च कार्यकारणभावः सकलदेशकालावस्थिताखिलाग्निधूमव्यक्तिक्रोडीकरणेनावगतोऽनुमाननिमित्तं, नान्यथा । न च निर्विकल्पकसविकल्पकप्रत्यक्षस्येयति वस्तुनि व्यापारः, प्रत्यक्षानुपलम्भयोर्वा । किञ्च कार्योत्पादनशक्तिविशिष्टत्वं कारणत्वम् । न

१ सर्वज्ञो वीतरागश्च नास्तीति भाव ॥ २ सर्वज्ञास्तित्ववादिना जैनादिना ॥ ३ सर्वज्ञास्तित्व सूचयन्नाह ॥ ४ साधनस्य ॥ ५ न तु रागादिहेतुकत्वात् ॥ ६ असर्वज्ञत्वलक्षण ॥ ७ आदिना द्वेषादि ॥ ८ उक्तप्रकारेण ॥ ९ वक्तृत्वसाधनस्य ॥ १० अग्निदत्त ॥ ११ जिनदत्तादि ॥ १२ नाम ॥ १३ वक्तृत्वस्य ॥ १४ कार्यान्तरे ॥ १५ शब्दविवक्षा यदासीत्तदा वक्तृत्वस्य निमित्त स्यात्कार्यान्तरेणाव्यवहिता । अतोऽव्यवहिता या शब्दविवक्षा पश्चात्तन्निमित्त भवतीत्युक्ते आह ॥ १६ व्यवहितस्य कार्यस्य १७ तस्य=व्यवहितकारणत्वस्य ॥ १८ आदिना रागादिमत्त्वादि ॥ १९ नृपु ॥ २० अविनाभाव ॥ २१ यतो युक्तिमन्तरेण बौद्धेनोक्तमिति भाव ॥ २२ धूमोग्न कार्यं न भवतीति भाव ॥ २३ तस्य भाव ॥ २४ अनेन प्रकारेण ॥ २५ कार्यकारणयोरविनाभावसिद्धि ॥ २६ जैनादिना भवता ॥ २७ सूर्यकान्तादे ॥ २८ धूमाग्निलक्षणकार्यकारणयो ॥ २९ मतम् ॥ ३० न दृष्ट इति सबन्ध ॥ ३१ वन्हिप्रभवधूम ॥ ३२ जलादग्निसद्भावप्रसङ्गात् ॥ ३३ अर्थस्य ॥ ३४ धूमाग्निलक्षणकार्यकारणयो ॥ ३५ तर्हि ॥ ३६ कुत ? ॥ ३७ वक्तृत्वस्य ॥ ३८ वक्तृत्वस्यासर्वज्ञत्वादिना ॥ ३९ आनन्त्येन । एकत्वेन च ॥

चासौ शक्तिः प्रत्यक्षावसेया किन्तु कार्यदर्शनगम्या "शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" इत्यभिधानात्। तत्र कार्यात्कारणत्वावगमेऽनुमानाच्छक्त्यवगमः स्यात्। तत्रापि शक्तिकार्ययोः प्रतिबन्धप्रतीतिर्न प्रत्यक्षादेरुक्तदोषानुषङ्गात्। अनुमानात्तदवगमेऽनवस्थेतरेतराश्रयानुषङ्गो वा स्यात्। एतेन तृतीयोपि पक्षश्चिन्तित इति।

तदेतत्सर्वमसमीचीनं सम्बन्धस्याध्यक्षेणैवार्थानां प्रतिभासनात्। तथा हि। पटस्तन्तुसम्बद्ध एवावभासते। रूपादयश्च पटादिसम्बद्धाः सम्बन्धाभावे तु तेषां विश्लिष्टः प्रतिभासः स्यात्। तमन्तरेणान्यस्य संश्लिष्टप्रतिभासहेतोरभावात्। कथं च सम्बन्धे प्रतीयमानेऽप्रतीयमानस्याप्यसम्बन्धस्य कल्पना प्रतीतिविरोधात्। अर्थक्रियाविरोधश्चाणूनामन्योन्यमसम्बन्धतो जलधारणाहरणाद्यर्थक्रियाकारित्वानुपपत्तेः। रज्जुवंशदण्डादीनामेकदेशाकर्षणे तदन्याकर्पणं चासम्बन्धवादिनो न स्यात्। अस्ति चैतत्सर्वम्। अतस्तदन्यथानुपपत्तेश्चासौ सिद्धः। यच्च पारतन्त्र्यं हीत्याद्युक्तं तदप्ययुक्तमेकत्वपरिणतिलक्षणपारतन्त्र्यस्यार्थानां प्रतीतितः सुप्रसिद्धत्वात्। अन्यथोक्तदोपानुषङ्गः। न चार्थानां सम्बन्धः सर्वात्मनैकदेशेन वाभ्युपगम्यते येनोक्तदोषः स्यात्। प्रकारान्तरेणैवास्याभ्युपगमात्। सर्वात्मैकदेशाभ्यां हि तस्यासम्भवात् प्रकारान्तरस्य वा भावात् तत्प्रतीत्यन्यथानुपपत्तेश्च ताभ्या जात्यन्तरतया श्लेपः स्निग्धरूक्षतानिबन्धनो बन्धोऽभ्युपगन्तव्योऽसौ सक्तुतोयादिवत्। विश्लिष्टरूपतापरित्यागेन हि संश्लिष्टरूपतया कथञ्चिदन्यथात्वलक्षणैकत्वपरिणतिः सम्बन्धोऽर्थानां चित्रसंवेदने नीलाद्याकारवत्। न हि चित्रसंविदो जात्यन्तररूपतयोत्पादादन्यो नीलाद्यनेकाकारैः सम्बन्धः सर्वात्मनैकदेशेन वा तैस्तस्याः सम्बन्धे प्रोक्ताशेपदोषानुषङ्गाविशेषात्। स चैवंविधः सम्बन्धोऽर्थानां क्वचिन्निखिलप्रदेशानामन्योन्यप्रदेशानुप्रवेशतः। यथा सक्तुतोयादीनाम्। क्वचित्तु प्रदेशसंश्लिष्टतामात्रेण यथाङ्गुल्यादीनाम्। न चान्तर्बहिर्वा साशवस्तुवादिनः सांशत्वानुषङ्गो दोपायेष्टत्वात्। न चैवमनवस्था तद्वतस्तत्प्रदेशानामत्यन्तभेदाभावात्। तद्भेदे हि तेपामपि तद्वता प्रदेशान्तरैः सम्बन्ध इत्यनवस्था स्यात्। नान्यथाऽनेकान्तात्मकवस्तुनोऽत्यन्तभेदाभेदाभ्यां जात्यन्तरत्वाच्चित्रसंवेदनवदेव। नन्वेवं परमाणूनाम-

१ वूमादे ॥ २ अभ्यादे ॥ ३ कार्यकारणभावरूपेण ॥ ४ अनुमानेन चासौ कार्यकारणभाव प्रतीयते इति ॥ ५ बौद्धोक्तम् ॥ ६ कथमर्थाना सम्बन्धस्याध्यक्षेण प्रतिभासनमित्युक्ते सत्याह ॥ ७ अवभासन्ते ॥ ८ पटादे सकाशाद्भिन्न ॥ ९ अन्य कश्चित्संश्लिष्टप्रतिभासहेतुर्भविष्यतीत्युक्ते सत्याह ॥ १० प्रत्यक्षेण ॥ ११ अर्थानाम् ॥ १२ अन्ययेति शेप ॥ १३ असम्बन्धपक्षे ॥ १४ अन्यस=शेप=सकलभागस्य ॥ १५ सौगतस्य ॥ १६ परस्परमसम्बद्धत्वात् ॥ १७ मा भवत्वित्युक्ते सत्याह ॥ १८ अनुमानत १९ स्कन्धरूपेण ॥ २० बाह्याध्यात्मिकानाम् ॥ २१ तव सौगतस्य स्यात् ॥ २२ जैने ॥ २३ सौगतोक्त ॥ २४ पिण्डोणुमात्र स्यादित्यादि ॥ २५ कथ तर्हि सम्बन्ध इत्युक्ते सत्याह ॥ २६ जैनै ॥ २७ अपरप्रकारस्य ॥ २८ प्रकारान्तरत्वेन ॥ २९ परेण ॥ ३० एकलोलीभावात्मलक्षणया ॥ ३१ पर्यायरूपेण ॥ ३२ आदौ दधिगुडौ पृथक् तिष्ठत पश्चात्सयोगेन कृत्वाऽन्यथास्वभाव पर्यायरूप पानक जातमिति ॥ ३३ ज्ञानस्य ॥ ३४ कथञ्चिन्नीलाकारेभ्योऽशक्यविवेचनत्वेन ॥ ३५ उत्पत्ते ॥ ३६ भिन्न ॥ ३७ सौगतेन ॥ ३८ पिण्डोणुमात्र स्यादित्यादि ॥ ३९ साशत्वादि ॥ ४० इति प्रतिबन्धविधानम् ॥ ४१ सम्बन्धिनि पदार्थे ॥ ४२ भवति ॥ ४३ सम्बन्धमात्रेण ॥ ४४ जैनस्य ॥ ४५ पदार्थात् ॥ ४६ सर्वथा ॥ ४७ कथञ्चिद्भेदे ॥ ४८ अन्तो=धर्म ॥ कथञ्चिद्भेदाभेदरूपस्य ॥ ४९ सर्वथानेकत्वैकत्वाभ्याम् ॥ ५० साशवस्तुप्रकारेण ॥

प्यंशवत्त्वप्रसङ्गः स्यादित्यप्यनुत्तरं यतोऽत्रांशशब्दः स्वभावार्थोऽवयवार्थो वा स्यात्? यदि स्वभावार्थो[1], न कश्चिद्दोषस्तेषां विभिन्नदिग्विभागव्यवस्थितानेकाणुभिः सम्बन्धान्यथानुपपत्त्या तावद्धा स्वभावभेदोपपत्तेः। अवयवार्थस्तु तत्रासौ[2] नोपपद्यते तेषामभेद्यत्वेनावयवासम्भवात्। न [3]चैवं तेषामविभागित्वं विरुध्यते यतोऽविभागित्वं भेदयितुमशक्यत्वं, न पुनर्निःस्वभावत्वम्। यत्तूक्तं—निष्पन्नयोरनिष्पन्नयोर्वा[4] पारतन्त्र्यलक्षणः सम्बन्धः स्यादित्यादि तदप्यसारं कथञ्चिन्निष्पन्नयोस्तदभ्युपगमात्। पटो[5] हि तन्तुद्रव्यरूपतया निष्पन्न एवान्वयिनो द्रव्यस्य पटपरिणामोत्पत्तेः प्रागपि सत्त्वात्। स्वरूपेण[6] त्वऽनिष्पन्नस्तन्तुद्रव्यमपि[7] स्वरूपेण निष्पन्नं पटपरिणामरूपतयाऽनिष्पन्नम्। तथाङ्गुल्यादिद्रव्यं स्वरूपेण निष्पन्नं संयोगपरिणामात्मकत्वेनानिष्पन्नमिति। किञ्च पारतन्त्र्यस्याऽभावाद्भावानां[8] सम्बन्धाभावे तेन व्याप्तः क्वचित्सम्बन्धः प्रसिद्धो[9] न वा? प्रसिद्धश्चेत्कथं सर्वत्र सर्वदा सम्बन्धाभावः? विरोधात्[10]। नो चेत्कथ[11]-[12]मव्यापकाभावाद्व्याप्यस्याभावसिद्धिरतिप्रसङ्गात्[13]। रूपश्लेषो हीत्याद्यप्येकान्तवादिनामेव दूषणं, नास्माकं[14]—कथञ्चित्सम्बन्धिनोरेकत्वापत्तिस्वभावस्य रूपश्लेषलक्षणसम्बन्धस्याभ्युपगमात्। अशक्यविवेचनत्वं[15] हि सम्बन्धिनो रूपश्लेषोऽसाधारणस्वरूपता[16] च तदऽश्लेषः[17]। स चानयोर्द्वित्वं[18] न विरुन्ध्यात् तथा प्रतीतेश्चित्राकारैकसंवेदनवत्[19]। न चापेक्षिकत्वात्सम्बन्धस्वभावो मिथ्याऽर्थानां[20] सूक्ष्मत्वादिवदित्यभिधातव्यमसम्बन्धस्वभावस्यापि[21] तथाभावानुषङ्गात्[22]। सोपि ह्यापेक्षिक एव कश्चिदर्थमपेक्ष्य कस्यचित्तद्व्यवस्थित्यन्यथानुपपत्तेः[23] स्थूलत्वादिवत्। प्रत्यक्षबुद्धौ प्रतिभासमानः सोनापेक्षिक[24] एव तत्पृष्ठभाविविकल्पेनाध्यवसीयमानो यथापेक्षिकस्तथाऽवास्तवोपीत्यन्यत्रापि समानम्। न खलु सम्बन्धोऽध्यक्षेण न प्रतिभासते यतोऽनापेक्षिको न स्यात्[25]। एतेन[26] परापेक्षा हीत्याद्यपि[27] प्रत्युक्तमसम्बन्धेपि समानत्वात्[28]। द्वयोरेकाभिसम्बन्धादित्याद्यप्यविज्ञातपराभिप्रायस्य[29] विजृम्भितं यतो नास्माभिः सम्बन्धिनोस्तथापरिणतिव्यतिरेकेणान्यः[30] सम्बन्धोभ्युपगम्यते, येनानवस्था स्यात्। तथा[31] च तामेव चानुरुन्धानैरित्याद्यप्ययुक्तं क्रियाकारकादीनां[32] सम्बन्धिनां तत्सम्बन्धस्य च प्रतीत्यर्थं तदभिधायकानां[33] प्रयोगप्रसिद्धेः। अन्यापोहस्य च प्रागेवापास्तस्वरूपत्वाच्छब्दार्थत्वमनुपपन्नमेव। चित्रज्ञानवच्चानेकसम्बन्धितादात्म्येप्येकत्वं[34] सम्बन्ध-

---

१ तर्हि ॥ २ स्वभावभेदाऽभावे ॥ ३ स्वभावभेदसम्भवे ॥ ४ कथम् ॥ ५ तन्त्वादे ॥ ६ पटरूपेण ॥ ७ पट ॥ ८ भावाना सम्बन्धो नास्ति पारतन्त्र्याभावात् ॥ ९ दृष्टान्ते ॥ १० ज्ञात ॥ ११ ज्ञातत्वस्य ॥ १२ अथ न प्रसिद्धस्तर्हि ॥ १३ असाध्य ॥ १४, असावनस्य ॥ १५ अन्यथा ॥ १६ घटाभावे पटाभावप्रसङ्गात् ॥ १७ अनेकान्तवादिना जेनानाम् १८ एकलोलीभाव ॥ १९ इद तोयमिमे सक्तव इति विभागस्य कर्तुमशक्यत्वात् ॥ २० सक्तुतोययोर्भिन्नस्वरूपता ॥ २१ पृथक्त्वम् ॥ २२ इद चित्रज्ञानमिमे चित्राकारा इति ॥ २३ परेण ॥ २४ अर्थानाम् ॥ २५ आपेक्षिकत्वाविशेषात् ॥ २६ आपेक्षिकत्वाभावे ॥ २७ निर्विकल्पकबुद्धौ ॥ २८ साधनमसिद्धमुद्भावयति ॥ २९ स्यादेव ॥ ३० भवदुक्त्या सम्बन्धस्य परापेक्षित्वसमर्थनेन ॥ ३१ दूषणम् ॥ ३२ सोगतोक्तन्यायस्य ॥ ३३ जेन ॥ ३४ सोगतस्य ॥ ३५ विश्लिष्टरूपतापरित्यागेन सश्लिष्टरूपताया एकलोलीभावलक्षणपरिणति ॥ ३६ सम्बन्धसिद्धौ ॥ ३७ देवदत्त गामभ्याजेत्यादीनाम् ॥ ३८ शब्दानाम् ॥ ३९ सम्बन्धिनामनेकत्वे सम्बन्धस्याप्यनेकत्व स्यादित्युक्ते सत्याह ॥ ४० चित्रेकज्ञानवत् ॥ ४१ तन्तुलक्षणे पक्षे नीलाकारादिभि ॥ ४२ पटस्य ॥

स्याविरुद्धमेव । यदप्युक्तं कार्यकारणभावोपीत्यादि तदप्यविचारितरमणीयं यतो नास्माभिः सहभावित्वं क्रमभावित्वं वा कार्यकारणभावनिबन्धनमिष्यते । किन्तु यद्भावे नियता यस्योत्पत्तिस्तत्तस्य कार्यमितरच्च कारणम् । तच्च किञ्चित्सहभावि । यथा घटस्य मृद्द्रव्यं दण्डादि वा । किञ्चित्तु क्रमभावि । यथा प्राक्तनः पर्यायः । तत्प्रतिपत्तिश्च प्रत्यक्षानुपलम्भसहायेनात्मना निर्यते व्यक्तिविशेषे तर्कसहायेन वा नियते प्रसिद्धा । एकमेव च प्रत्यक्षं प्रत्यक्षानुपलम्भशब्दाभिधेयम् । तद्धि कार्यकारणभावाभिमतार्थविषयं प्रत्यक्षम् । तद्विविक्तान्यवस्तुविषयमनुपलम्भशब्दाभिधेयम् । तथा हि । एतावद्भिः प्रकारैर्धूमोऽग्निजन्यो न स्यात् यद्यग्निसन्निधानात्प्रागपि तत्र देशे स्यात्, अन्यतो वा गच्छेत्, तदन्यहेतुको वा भवेत् । एतच्च सर्वमनुपलम्भपुरस्सरेण प्रत्यक्षेण प्रत्याख्यातम् । एतेन प्रागनुपलब्धस्य रासभस्य कुम्भकारसन्निधानानन्तरमुपलभ्यमानस्य तस्य तत्कार्यता स्यादिति प्रतिव्यूढम् । यदि हि तस्य तत्र प्राग्सत्त्वमन्यदेशादनागमनमन्याहेतुकत्वं च निश्चेतुं शक्येत, स्यादेव कुम्भकारकार्यता । तत्तु निश्चेतुमशक्यम् । न च भिन्नार्थग्राहि प्रत्यक्षद्वयं द्वितीयाग्रहणे तदपेक्षं कारणत्व कार्यत्वं वा ग्रहीतुमसमर्थमित्यभिधातव्यं क्षयोपशमविशेषवतां धूममात्रोपलम्भेप्यभ्यासवशाद्वह्निजन्यत्वावगमप्रतीतेः । अन्यथा वाष्पादिवैलक्षण्येनास्याऽनवधारणात्ततोऽग्न्यनुमाभावे सकलव्यवहारोच्छेदप्रसङ्गः । ततः कारणाभिमतपदार्थग्रहणपरिणामापरित्यागवतात्मना कार्यस्वरूपप्रतीतिरभ्युपगन्तव्या । नीलाद्याकारव्याप्येकज्ञाने तत्स्वरूपवत् । ननु नालिकेरद्वीपादिवासिनामकस्माद्धूमस्याग्नेर्वोपलम्भेपि कार्यकारणभावस्यानिश्चयान्नासौ वास्तवस्तद्व्यपेगलं बाह्यान्तःकारणप्रभवत्त्वात्तन्निश्चयस्य । क्षयोपशमविशेषो हि तस्यान्तःकारणम् । तद्भावभावित्वाभ्यासस्तु बाह्यम् । अकार्यकारणभावावगमस्य त्वतद्भावभावित्वाभ्यासः । तदभावान्न क्वचित्तेषां कार्यकारणभावस्याऽकार्यकारणभावस्य वा निश्चय इति । धूमादिज्ञानजननसामग्रीमात्रात्तत्कार्यत्वादिनिश्चयानुत्पत्तेर्न कार्यत्वादि धूमादेः स्वरूपमिति चेत्तर्हि क्षणिकत्वादिरपि तत्स्वरूपं मा भूत्तत एव । क्षणिकत्वाभावेऽवस्तुत्वमन्यत्रापि समानं

---

१ जैन ॥ २ मद्भवतीत्येवंशीलम् ॥ ३ यद् घटोत्पत्तिकाले भवति ॥ ४ कुशूलादि ॥ ५ उत्तरपर्यायस्य कारणम् ॥ ६ महानसे ॥ ७ महान्हदे ॥ ८ परिमिते ॥ ९ धूमाग्न्यो ॥ १० यावान् कश्चित्कार्यलक्षणपदार्थं स कारणे मति भवति, नान्यथेति ॥ ११ आत्मना ॥ १२ अनुपलम्भशब्देन किमुच्यते इत्याह ॥ १३ नानुमानादिकम् ॥ १४ अग्निधूम ॥ १५ घस ॥ १६ महान्हदादि ॥ १७ 'अनुपलम्भ' इति ॥ १८ प्रत्यक्षम् ॥ १९ तथा हीत्यादिना प्राक् प्रतिपादितार्थं व्यतिरेकद्वारेण समर्थयते ॥ २० प्राक् प्रतिपादितैः प्रत्यक्षानुपलम्भादिभि ॥ २१ तान्प्रकारानाह ॥ २२ एवमस्तु इत्युक्ते सत्याह ॥ २३ प्रत्यक्षानुपलम्भादिभि कार्यकारणभावसिद्धिसमर्थनेन ॥ २४ निराकृतम् ॥ २५ कुम्भकारावस्थितप्रदेशे ॥ २६ कुम्भकारसन्निधानात् ॥ २७ कुम्भकारापेक्षया ॥ २८ तर्हि ॥ २९ रासभस्य ॥ ३० अग्निधूम ॥ ३१ अग्निधूमयोर्मध्येऽन्यतरस्य ॥ ३२ एकेन ॥ ३३ अगृहीतकार्यकारणान्यतरापेक्षम् ॥ ३४ परेण ॥ ३५ कार्यकारणभावज्ञानाच्छादककर्मण ॥ ३६ नृणाम् ॥ ३७ धूमस्य ॥ ३८ पूर्वोक्तात्कारणाद्धूमस्य वन्हिजन्यत्वावगमाभावे ॥ ३९ दूरत ॥ ४० धूमोऽग्नेः कार्यमिति ॥ ४१ परेण ॥ ४२ कारण ॥ ४३ कार्यस्य ॥ ४४ पुन. पुनर्दर्शनम् ॥ ४५ कारणम् ॥ ४६ बाह्यान्त -कारणयो ॥ ४७ अग्निधूमयोरुपलम्भेपि येषां बाह्यान्त कारणे स्तस्तेषामेव तयो कार्यकारणभावपरिच्छित्तिर्नान्येषामिति भाव ॥ ४८ नेत्रादि ॥ ४९ वन्हि ॥ ५० आदिना कारणत्वादि ॥ ५१ आदिनाग्न्यादे ॥ ५२ धूमादिज्ञानसामग्रीमात्रात् क्षणिकत्वानिश्चयादेव ॥

सर्वथाप्यकार्यकारणस्य वस्तुत्वानुपपत्तेः खरशृङ्गवत् । न च कार्यस्यानुत्पन्नस्यैव कार्यत्वं धर्मोऽसत्त्वात् । नाप्युत्पन्नस्याऽत्यन्तं भिन्नं तत्तद्धर्मत्वात् । तत एव कारणस्यापि कारणत्वं धर्मो नैकान्ततो भिन्नम् । तच्च ततोऽभिन्नत्वात्तद्ग्राहिप्रत्यक्षेणैव प्रतीयते तद्व्यक्तिस्वरूपवत् । दृश्यते हि पिपासाद्याक्रान्तचेतसामितरार्थव्यवच्छेदेनाबालं तदपनोदसमर्थे जलादौ प्रत्यक्षात्प्रवृत्तिः । तच्छक्तिप्रधानताया तु कार्यदर्शनात्तन्निश्चीयते तद्व्यतिरेकेणार्थासम्भवात् । न च स्वरूपेणाकार्यकारणयोस्तद्भावः सम्भवति । नाप्युत्तरकालं भिन्नेन तेनानयोः कार्यकारणताऽभिन्ना कर्तुं शक्या विरोधात् । नापि भिन्ना तयोः स्वरूपेणाकार्यकारणताप्रसङ्गात् । न च स्वरूपेण कार्यकारणयोरर्थान्तरभूततत्सम्बन्धकल्पने किञ्चित्प्रयोजनं कार्यकारणतायाः स्वतः सिद्धत्वात् । ननु कार्याप्रतिपत्तौ कथं कारणस्य कारणताप्रतिपत्तिस्तदपेक्षत्वात्तस्याः । कथमेवं पूर्वापरभागाप्रतिपत्तौ मध्यभागस्यातो व्यावृत्तिप्रतिपत्तिरपेक्षाकृतत्वाविशेषात् । ततः पश्यन्नयं क्षणिकमेव पश्यतीति वचो विरुध्येत मध्यक्षणस्वभावत्वात्तद्व्यावृत्तेः । तद्ग्राहिज्ञानेन प्रतिपत्तिश्चेत्तर्हि कार्योत्पादनशक्तेः कारणस्वभावत्वात्तद्ग्राहिणैव ज्ञानेन प्रतिपत्तिरिष्यतां विशेषाभावात् । उक्ता च कार्यप्रतिपत्तिः प्रत्यक्षादिसहायेनात्मनेत्युपरम्यते । किञ्च कार्यानिश्चये शक्तेरप्यनिश्चये नीलादिनिश्चयोपि मा भूत् । यदेव हि तस्याः कार्यं तदेव नीलादेरप्यनयोरभेदात् । वक्तृत्वस्य चासर्वज्ञत्वादिना व्याप्त्यसम्भवः सर्वज्ञसिद्धिप्रघट्टके प्रतिपादितः । न चेन्धनादिप्रभवपावकस्य मण्यादिप्रभवपावकादभेदो येन नियतः कार्यकारणभावो न स्यात् । अन्यादृशाकारो हीन्धनप्रभवः पावकोऽन्यादृशाकारश्च मण्यादिप्रभवः । तद्विचारे च प्रतिपत्त्रा निपुणेन भाव्यम् । यत्नतः परीक्षितं हि कार्यं कारणं नातिवर्त्तते । कथमन्यथा वीतरागेतरव्यवस्था तच्चेष्टायाः साङ्कर्योपलम्भात् । कथं चैवं वादिनो मृतेतरव्यवस्था स्यात् । व्यापारव्याहाराकारविशेषस्य हि क्वचिच्चैतन्यकार्यतयोपलम्भे सत्यस्त्यत्र जीवच्छरीरे चैतन्यं व्यापारादिकार्यविशेषोपलम्भात् । मृतशरीरे तु नास्ति तदनुपलम्भादिति कार्यविशेषस्योपलम्भानुपलम्भाभ्यां कारणविशेषस्य भावाभावप्रसिद्धेस्तद्व्यवस्था युज्येत । अकार्यकारणभावेपि चैतत्सर्वं समानम् । सोपि हि द्विष्ठः कथमसहभाविनोः कार्यकारणत्वाभ्यां निषेध्ययोर्वर्तेत । न चाद्विष्ठोसौ सम्बन्धाभाव-

१ धूमादिक वर्म्यऽवस्तु भवतीति साध्यमकार्यकारणत्वाच्छशविषाणवत् ॥ २ धर्मधर्मिणोरत्यन्तभेदाभावात् ॥ ३ सन्दिग्धानैकान्तिकत्वेय परिहार ॥ ४ कारणभूते ॥ ५ कारणत्वम् ॥ ६ कार्यस्य ॥ ७ घटपटयोरिव ॥ ८ अकारणात् ॥ ९ सम्बन्धेन ॥ १० अभिन्ना चेत्कथ भिन्नेन सम्बन्धेन विधीयते ? विधीयते चेत्कथमभिन्नेति विरोध ॥ ११ अग्न्यादे ॥ १२ क्षणविशेषणम् ॥ १३ वर्तमानक्षणस्य ॥ १४ पूर्वापरभागाद्व्यावृत्तिर्मध्यक्षणस्येति प्रतिपत्ति कथ घटते ॥ १५ मध्यभागस्यातो व्यावृत्तिप्रतिपत्त्यभावत ॥ १६ योगी ॥ १७ बस ॥ १८ एव ॥ १९ कार्यस्य ॥ २० मध्यक्षणस्वभावत्वाद्व्यावृत्तेस्तद्ग्राहिज्ञानेन प्रतिपत्तिर्घटते । कार्योत्पादनशक्ते कारणभावत्वात्तद्ग्राहिज्ञानेन प्रतिपत्तिर्नेत्यत्र ॥ २१ कारणसम्बन्धिन्या कार्योत्पादनलक्षणाया ॥ २२ तव सौगतस्य ॥ २३ कुत ॥ २४ शक्तिनीलायो ॥ २५ निरंशवस्तुवादिमते ॥ २६ जैनै ॥ २७ किंतु भेद एव ॥ २८ सर्वज्ञेन ॥ २९ अग्न्यादिलक्षणम् ॥ ३० इन्धनमण्यादिकम् ॥ ३१ जपतपोध्यानादे ॥ ३२ दृष्टान्तभूते ॥ ३३ कथम् ॥ ३४ गोमहिषयो ॥ ३५ अकार्यकारणयो ॥ ३६ अनयो सम्बन्धाभावोय त ॥ ३७ अकार्यकारणभावत सम्बन्धाभावरूपो न भवत्यद्विष्ठत्वाद्घटसत्त्ववत् ॥

विरोधात् । पूर्वत्र भावे वर्त्तित्वा परत्र क्रमेणासौ वर्त्तमानोऽन्यनिस्पृहत्वेनैकवृत्तिमत्त्वात्कथं सम्बन्धाभावरूपता प्रतिपद्येत ? अथाकार्यकारणयोरेकमपेक्ष्यान्यत्रासौ क्रमेण वर्त्तत इति सस्पृहत्वेनास्य द्विष्ठत्वात्तदभावरूपतेष्यते तदा तेनापेक्ष्यमाणेनोपकारिणा भवितव्यम् । कथं चोपकरोत्यसन्नित्यादि सर्वमत्रापि योजनीयम् । अकार्यकारणभावस्याप्यर्थानामनभ्युपगमे तु कार्यकारणाभावो वास्तवः स्यात् । उभयाभावस्तु न युक्तो विरोधात्, क्वचिन्नीलेतरत्वाभाववत् । ततो यथा कुतश्चित्प्रमाणादकार्यकारणभावो गवाश्वादीनामतद्भावभावित्वप्रतीतेः परस्परं परमार्थतो व्यवतिष्ठते तथाग्निधूमादीनां तद्भावभावित्वप्रतीतेः कार्यकारणभावोपि-बाधकाभावात् । तत्र प्रमाणतः प्रतीयमानः सम्बन्धः स्वाभिप्रेततत्त्ववन्निह्नवनीयो, येन स्थूलादिप्रतीतेर्भ्रान्तत्वात्तत्स्वभावतार्थस्य न स्यात् । चित्रज्ञानवद्युगपदेकस्यानेकाकारसम्बन्धित्ववत्क्रमेणापि तत्तस्याविरुद्धम् । इति सिद्धं परापरविवर्त्तव्याप्येकद्रव्यलक्षणमूर्द्ध्वतासामान्यम् । यथा च द्वेधा सामान्यं तथा-विशेषश्च । चकारोपिशब्दार्थे । कथं तद्द्वैविध्यमित्याह—पर्यायव्यतिरेकभेदात् । तत्र पर्यायस्वरूपं निरूपयति । एकस्मिन्द्रव्ये क्रमभाविनः परिणामाः पर्यायाः । अत्रोदाहरणमाह—आत्मनि हर्षविषादादिवत् ।

ननु हर्षादिविशेषव्यतिरेकेणात्मनोऽसत्त्वादयुक्तमिदमुदाहरणमित्यन्यः । सोप्यप्रेक्षापूर्वकारी चित्रसंवेदनवदनेकाकारव्यापित्वेनात्मनः स्वसंवेदनप्रत्यक्षप्रसिद्धत्वात् । यद्यथा प्रतिभासते तत्तथैव व्यवहर्त्तव्यम् । यथा वेद्याद्याकारात्मसंवेदनरूपतया प्रतिभासमानं संवेदनम् । सुखाद्यनेकाकारैकात्मतया प्रतिभासमानश्चात्मेत्यनुमानप्रसिद्धत्वाच्च । सुखदुःखादिपर्यायाणामन्योन्यमेकान्ततो भेदे च प्रागहं सुख्यासं सम्प्रति दुःखी वर्ते इत्यनुसन्धानप्रत्ययो न स्यात् । तथाविधवासनाप्रबोधादनुसन्धानप्रत्ययोत्पत्तिरित्यप्यसत्यम् । अनुसन्धानवासना हि यद्यनुसन्धीयमानसुखादिभ्यो भिन्ना तर्हि सन्तानान्तरसुखादिवत्स्वसन्तानेप्यनुसन्धानप्रत्ययं नोत्पादयेदविशेषात् । तदभिन्ना चेत्तावद्धा भिद्येत । न खलु भिन्नादभिन्नमभिन्नं नामातिप्रसङ्गात् । तथा च तत्प्रबोधात्कथं सुखादिष्वेकमनुसन्धानज्ञानमुत्पद्येत । तेभ्यस्तस्याः कथञ्चिद्भेदे ना-

---

१ अभावात् ॥ २ अकारणे ॥ ३ अकार्ये ॥ ४ यथास्माकं सम्बन्धो न घटते तथा तवापीत्यर्थः ॥ ५ असम्बन्धस्य ॥ ६ सौगतेन मया ॥ ७ असम्बन्धेन ॥ ८ अकारणेनाऽकार्येण वा ॥ ९ अकार्यमकारणं वा ॥ १० असम्बन्धे ॥ ११ न केवलं कार्यकारणभावस्य ॥ १२ परेण ॥ १३ उक्तप्रकारेण सम्बन्धो निराकर्त्तुं न शक्यते यत ॥ १४ असम्बन्ध ॥ १५ नराश्ववत् ॥ १६ चैतन्यव्याहारादिकार्यवत् ॥ १७ परस्परं परमार्थतो व्यवतिष्ठते ॥ १८ उभयत्र ॥ १९ कार्यकारणाविनाभाव ॥ २० सौगत ॥ २१ असम्बन्धादिवत् ॥ २२ किंतु स्यादेव ॥ २३ ज्ञानस्य ॥ २४ जीवादिपदार्थस्य ॥ २५ ज्ञानसुखवीर्यदर्शनादय आत्मनः सहभावित्वाद्गुणाः स्युः । क्रमभावित्वाच्च पर्यायाश्च भवन्ति-कुतो वस्तुनोऽनेकधर्मात्मकत्वात् ॥ २६ भेद ॥ २७ अपरस्य ॥ २८ सौगत ॥ २९ आदिना वेदकसंवित्तिग्रह ॥ ३० हर्षविषादादिग्रह ॥ ॥ ३१ साधनमसिद्धमित्युक्ते सत्याह ॥ ३२ सर्वथा ॥ ३३ आत्मनः सकाशात् ॥ ३४ प्रत्यभिज्ञान ॥ ३५ गम्यमान ॥ ३६ सर्वथा ॥ ३७ सुखादिस्वरूपेण ॥ ३८ उभयत्र भिन्नत्वस्य ॥ ३९ तर्हि ॥ ४० सुखादयो यावन्त ॥ ४१ एकम् ॥ ४२ अन्यथा ॥ ४३ घटपटादिभ्योऽभिन्नाना तत्स्वरूपाणां भिन्नत्वप्रसङ्गात् ॥ ४४ वासनाया अचेतनत्वे च ॥ ४५ ॥ अनेकवासना ॥ ४६ अनेकसुखानुसन्धानज्ञानमुत्पद्येतेत्यर्थः. ॥ ४७ कारणबहुत्वे कार्यबहुत्वमिति वचनात् ॥ ४८ आत्मा वासनेति च ॥

ममात्रं भिद्येताऽहमहमिकया स्वसंवेदनप्रत्यक्षप्रसिद्धस्यात्मनः सहक्रमभाविनो गुणपर्यायानात्मसात्कुर्वतो[3] वासनेति नामान्तरकरणात् । क्रमवृत्तिसुखादीनामेकसन्ततिपतितत्वेनानुसन्धाननिवन्धनत्वमित्यपि तादृगेवात्मनः सन्ततिशब्देनाभिधानात् । तेषां[4] कथञ्चिदेकत्वाभावेनैकपुरुषसुखादिवदेकसन्ततिपतितत्वस्याप्ययोगात् । आत्मनोऽनभ्युपगमे च कृतनाशाकृताभ्यागमदोषानुषङ्गः[5] । कर्तुर्निरन्वयनाशे[6] हि कृतस्य कर्मणो नाशः कर्तुः[7] फलानभिसम्बन्धात्[8] । अकृताभ्यागमश्चाकर्तुरेव फलाभिसम्बन्धात् । ततस्तद्दोषपरिहारमिच्छतात्मनोनुगमोभ्युपगन्तव्यः[10] । न चाप्रमाणकोयं तत्सद्भावावेदकयोः स्वसंवेदनानुमानयोः प्रतिपादनात् । अहमेव ज्ञातवानहमेव वेद्मीत्यादेरेकप्रमातृविषयप्रत्यभिज्ञानस्य[12] च सद्भावात् । तथा चोक्तं भट्टेन "तस्मादुभयहानेन[13] व्यावृत्त्यनुगमात्मकः[14] । पुरुषोभ्युपगन्तव्यः कुण्डलादिषु[15] सर्पवत्[16]" इति । "तस्मात्तत्प्रत्यभिज्ञानात्सर्वलोकावधारितात् । नैरात्म्यवादबाधः[20] स्यादिति सिद्धं समीहितम्" इति च । अथ कथमतः प्रत्यभिज्ञानादात्मसिद्धिरिति चेदुच्यते । प्रमातृविषयं तदित्यत्र तावदावयोरविवाद[21] एव । स च प्रमाता भवन्नात्मा भवेद् ज्ञानं वा ? न तावदुत्तरः पक्षोऽहं ज्ञातवानहमेव च साम्प्रतं जानामीत्येकप्रमातृपरामर्शेन[22] ह्यहंबुद्धेरुपजायमानाया ज्ञानक्षणो विषयत्वेन कल्प्यमानोतीतो[23] वा कल्प्येत वर्तमानो वोभौ[24] वा सन्तानो वा ? प्रकारान्तरासम्भवात् । तत्राद्यविकल्पे ज्ञातवानित्ययमेवाकारावसायो[25] युज्यते–पूर्वं तेन ज्ञातत्वात् । सम्प्रति जानामीत्येतत्तु न युक्तम्[27] । न[28] ह्यसावतीतो ज्ञानक्षणो वर्त्तमानकाले वेत्ति पूर्वमेवास्य निरुद्धत्वात्[29] । द्वितीयपक्षे तु सम्प्रति जानामीत्येतद्युक्तं–तस्येदानीं वेदकत्वात् । ज्ञातवानित्याकारग्रहणं तु न युक्तं–प्रागस्यासम्भवात् । अत[30] एव न तृतीयोपि पक्षो युक्तः । न खलु वर्तमानातीतावुभौ ज्ञानक्षणौ ज्ञातवन्तौ[31], नापि जानीतः[32] । किं तर्हि ? एको ज्ञातवानन्यस्तु जानातीति[33] । चतुर्थपक्षोप्ययुक्तोतीतवर्त्तमानज्ञानक्षणव्यतिरेकेणान्यस्य सन्तानस्यासम्भवात् । कल्पितस्य सम्भवेपि न ज्ञातृत्वम् । न ह्यसौ ज्ञानवान्पूर्वं, नाप्यधुना जानाति कल्पितत्वेनास्याऽवस्तुत्वात् । न चावस्तुनो ज्ञातृत्वं सम्भवति वस्तुधर्मत्वात्तस्य[34] + इत्यतोऽन्यस्य प्रमातृत्वासम्भवादात्मैव प्रमाता सिद्ध्यति[35] + इति सिद्धोऽतः प्रत्यभिज्ञानादात्मेति । ननु चात्मा सुखादिपर्यायैः सम्बद्ध्यमानः परित्यक्तपूर्वरूपो वा सम्बद्ध्येताऽपरित्यक्तपूर्वरूपो वा ? प्रथमपक्षे निरन्वयनाशप्रसङ्गोऽवस्थातुः कस्यचिदभावात् । द्वितीयपक्षे तु पूर्वोत्तरावस्थयोरात्मनोऽविशेषादपरिणामित्वानुषङ्गः[36] । प्रयोगः । यत्पूर्वोत्तरावस्थासु[37] न विशिष्यते[38] न तत्परिणामि । यथाकाशम् । न विशिष्यते पूर्वोत्तरावस्था-

---

१ अह सुव्यह दु खीति ॥ २ स्वकर्मान् ॥ ३ हर्षविषादादीना च ॥ ४ आत्मद्रव्यापेक्षया ॥ ५ कथम्? ॥ ६ कर्मण ॥ ७ पुरुषस्य ॥ ८ कर्मण ॥ ९ कर्मफलकाले तदभावात् ॥ १० सौगतेन ॥ ११ पूर्वम् ॥ १२ इदानीम् ॥ १३ सुखादिपर्यायाणा सर्वथात्मन सकाशाद्भेदाभेदौ, तयो ॥ १४ परिहारेण ॥ १५ सुखादिस्वरूपतया ॥ १६ चिद्रूपतया ॥ १७ भेदाभेदात्मक ॥ १८ आकारेषु ॥ १९ स्वर्णवदिति पाठान्तरम् ॥ २० ज्ञानसन्ततिरेवात्मा नान्य कश्चिदिति हेतोर्नैरात्म्यम् ॥ २१ जैनबौद्धयो ॥ २२ प्रत्यभिज्ञानेन ॥ २३ सौगतेन ॥ २४ अतीतवर्तमानलक्षणो ॥ २५ निश्चय ॥ २६ अतीतज्ञानक्षणस्य ॥ २७ अतीतज्ञानक्षणस्य ॥ २८ कथम्? ॥ २९ विनष्टत्वात् ॥ ३० एकस्य ज्ञातवत्त्वशातृत्वासम्भवादेव ॥ ३१ इत्युल्लेख ॥ ३२ इत्युल्लेख ॥ ३३ इत्युल्लेखो युक्त ॥ ३४ अतीतज्ञानक्षणादे ॥ ३५ अवशिष्यमाणत्वात् ॥ ३६ पूर्वाकारापरित्यागात् ॥ ३७ 'आत्मा धर्मी, परिणामी न भवतीति साध्य, पूर्वोत्तरावस्थास्वविशिष्टत्वात्' इत्युपस्थितसयोल्यम् ॥ ३८ भिद्यते ॥

स्वात्मेति -।- तदपरीक्षिताभिधानमात्मनो भेदेन प्रसिद्धसत्ताकैः सुखादिपर्यायैः स्वस्य सम्बन्धानभ्युपगमात्[3]। आत्मैव हि तत्पर्यायतया परिणमते नीलाद्याकारतया चित्रज्ञानवत् स्वपरग्रहणशक्तिद्वयात्मकतयैकविज्ञानवद्वा । न[4] खलु ययैव शक्त्यात्मानं प्रतिपद्यते विज्ञानं तयैवार्थं तयोरभेदप्रसङ्गात्[6]। अन्यथात्मनो येन रूपेण सुखपरिणामस्तेनैव दुःखपरिणामेप्यनयोरभेदो न स्यात्। न च तच्छक्तिभेदे तदात्मनो ज्ञानस्यापि भेदोन्यथैकस्य स्वपरग्राहकत्वं न स्यात्। नापि चित्रज्ञानस्य नीलाद्यनेकाकारतया परिणामेप्येकाकारताव्याघातः। तद्वत्सुखाद्यनेकाकारतया परिणामेप्यात्मनो नैकत्वव्याघातो विशेषाभावात्। न चैकत्र युगपदन्यत्र तु कालभेदेन परिणामाद्विशेषः प्रतीतेर्नियामकत्वात्। यत्र हि प्रतीतिर्देशकालभिन्ने तदऽभिन्ने वा वस्तुन्येकत्वं प्रतिपद्यते तत्रैकत्वं प्रतिपत्तव्यम्। यत्र तु नानात्वं प्रतिपद्यते तत्र तु नानात्वमिति। ततो यदुक्तं 'सर्वात्मनैवाभेदे भेदस्तद्विपरीतः कथं भवेत्? न ह्येकदा विधिप्रतिषेधौ परस्परविरुद्धौ युक्तौ। प्रयोगः। यत्राभेदस्तत्र तद्विपरीतो न भेदः। यथा तेषामेव पर्यायाणां द्रव्यस्य च यत्प्रतिनियतमसाधारणमात्मस्वरूपं तस्य न स्वभावाद्भेदः। अभेदश्च द्रव्यपर्याययोरिति। किञ्च पर्यायेभ्यो द्रव्यस्याभेदो द्रव्यात्पर्यायाणां वा? प्रथमपक्षे पर्यायवद्द्रव्यस्याप्यऽनेकत्वानुषङ्गः। तथा हि। यद्व्यावृत्तिस्वरूपाऽभिन्नस्वभावं तद्व्यावृत्तिमत्। यथा पर्यायाणां स्वरूपम्। व्यावृत्तिमद्रूपाव्यतिरिक्तं च द्रव्यमिति। द्वितीयपक्षे तु पर्यायाणामप्येकत्वानुषङ्गः। तथा हि। यदनुगतस्वरूपाऽव्यतिरिक्तं तदनुगतात्मकमेव। यथा द्रव्यस्वरूपम्। अनुगतात्मस्वरूपाऽभिन्नस्वभावाश्च सुखादयः पर्याया' इत्यादि तन्निरस्तं–प्रमाणप्रतिपन्ने वस्तुरूपे कुचोद्योऽनवकाशात्। न खलु मदोन्मत्तो हस्ती सन्निहितं व्यवहितं वा परं मारयति -।- सन्निहितस्य मारणे मेण्ठस्यापि मारणप्रसङ्गः। व्यवहितस्य च मारणेऽतिप्रसङ्गः -।- इत्यनर्थानल्पकल्पनाभयात्स्वकार्यकरणादुपरमते । चित्रज्ञानादावपि चैतत्सर्वं समानम्। प्रतिक्षिप्तं च प्रतिक्षणं क्षणिकत्वं प्रागित्यलमतिप्रसङ्गेन ।

अथेदानीं व्यतिरेकलक्षणं विशेषं व्याचिख्यासुरर्थान्तरेत्याह । एकस्मादर्थात्सजातीयो विजातीयो वार्थोऽर्थान्तरम् । तद्गतो विसदृशपरिणामो व्यतिरेको

---

१ का (पञ्चमी) ॥ २ जैनै ॥ ३ कथम्? तथा हि ॥ ४ ज्ञानस्य शक्तिद्वय न विद्यते इत्याशङ्कायामाह ॥ ५ स्वस्य स्वरूपम् ॥ ६ एकयैव शक्त्या स्वरूपार्थयो प्रतिपत्तौ ॥ ७ आत्मनि ॥ ८ आत्मनि ॥ ९ ('प्रतीते' इति खपुस्तके पाठ ॥ १० सुखादिपर्यायै ॥ ११ परेण ॥ १२ नीलाद्यनेकाकारे ॥ १३ परेण ॥ १४ सति ॥ १५ द्रव्यपर्याययोर्भेद ॥ १६ भेदाभेदो ॥ १७ द्रव्यपर्यायौ धर्मिणौ भिन्नौ न भवतस्तयोरभेदादिति अनुमान सौगतप्रयुक्तमुपरितोन योज्यम् ॥ १८ पक्षे नीलाद्याकाराणाम् ॥ १९ प्रथमपक्षे आत्मन । द्वितीयपक्ष चित्रज्ञानस्य ॥ २० अन्योन्यम् ॥ २१ पक्षे नीलाद्याकारचित्रज्ञानयो ॥ २२ पक्षे नीलाद्याकारेभ्य ॥ २३ पक्षे चित्रज्ञानस्य ॥ २४ व्यावृत्तय =पर्याया ॥ २५ भेदवत् ॥ २६ तस्मादनेकमिति ॥ २७ अनुगतस्वरूप=द्रव्यम् ॥ २८ द्रव्यपर्यायात्मके ॥ २९ कुप्रश्न ॥ ३० मदोन्मत्तो हस्ती मारयत्येवेति प्रमाणप्रतिपन्न ॥ ३१ हस्तिपकस्य ॥ ३२ मारणात् ॥ ३३ हस्ती ॥ ३४ सर्वात्मनेत्यादि सौगतमते ॥ ३५ चित्रज्ञानाकारो भिन्नो न भवत तयोरभेदादित्येवम् ॥ ३६ खण्डलक्षणाद्गो सजातीयो मुण्डलक्षणो गौ, विजातीयो महिष खण्डापेक्षया मुण्डो विसदृशाकारो महिषापेक्षया च विसदृशाकार इत्यर्थ ॥

गोमहिषादिवत् । यथा गोषु खण्डमुण्डादिलक्षणो विसदृशपरिणामो महिषेषु विशालविसङ्कटत्वलक्षणो गोमहिषेषु चान्योन्यमसाधारणस्वरूपलक्षण इति । तावेवं-प्रकारौ सामान्यविशेषावात्मा यस्यार्थस्याऽसौ तथोक्तः । स प्रमाणस्य विषयः । न तु केवलं सामान्यं विशेषो वा–तस्य द्वितीयपरिच्छेदे विषयभेदात्प्रमाणभेद इति सौगतमतं प्रतिक्षिपता प्रतिक्षिप्तत्वात् । नाप्युभयं स्वतन्त्रं तथाभूतस्यास्याप्यप्रतिभासनात् ।

ननु चार्थस्य सामान्यविशेषात्मकत्वमयुक्तं तदात्मकत्वेनास्य ग्राहकप्रमाणाभावात् । सामान्यविशेषाकारयोश्चान्योन्यं प्रतिभासभेदेनात्यन्तं भेदात् । प्रयोगः । सामान्याकारविशेषाकारौ परस्परतोऽत्यन्तं भिन्नौ भिन्नप्रमाणग्राह्यत्वाद्घटपटवत् । पटादौ हि भिन्नप्रमाणग्राह्यत्वमत्यन्तभेदे सत्येवोपलब्धं तत्सामान्यविशेषाकारयोरुपलभ्यमानं कथं नात्यन्तभेदं प्रसाधयेत्? अन्यत्राप्यस्य तदप्रसाधकत्वप्रसङ्गात् । न खलु प्रतिभासभेदाद्विरुद्धधर्माध्यासाच्चान्यत्पटादीनामप्यन्योन्यं भेदनिबन्धनमस्ति । स चावयवावयविनोर्गुणगुणिनोः क्रियातद्वतोः सामान्यविशेषयोश्चास्त्येव । पटप्रतिभासो हि तन्तुप्रतिभासवैलक्षण्येनानुभूयते । तन्तुप्रतिभासश्च पटप्रतिभासवैलक्षण्येन । एवं पटप्रतिभासाद्रूपादिप्रतिभासवैलक्षण्यमप्यवगन्तव्यम् । विरुद्धधर्माध्यासोप्यनुभूयत एव । पटो हि पटत्वजातिसम्बन्धी विलक्षणार्थक्रियासम्पादकोतिशयेन महत्त्वयुक्तः तन्तवस्तु तन्तुत्वजातिसम्बन्धिनोल्पपरिमाणाश्च-इति कथं न भिद्यन्ते? तादात्म्यं चैकत्वमुच्यते । तस्मिंश्च सति प्रतिभासभेदो विरुद्धधर्माध्यासश्च न स्याद्विभिन्नविषयत्वात्तत्तयोः । यदि च तन्तुभ्यो नार्थान्तरं पटस्तर्हि तन्तवोपि नांशुभ्योर्थान्तरं, तेपि स्वावयवेभ्यः । इत्येवं तावच्चिन्त्यं यावन्निरंशाः परमाणवः । तेभ्यश्चाभेदे सर्वस्य कार्यस्यानुपलम्भः स्यात् । तस्मादर्थान्तरमेव पटात्तन्तवो रूपादयश्च प्रतिपत्तव्याः । तथा विभिन्नकर्तृकत्वात्तन्तुभ्यो भिन्नः पटो घटादिवत् । विभिन्नशक्तिकत्वाद्वा विषाऽगदवत् । पूर्वोत्तरकालभावित्वाद्वा पितापुत्रवत् । विभिन्नपरिमाणत्वाद्वा बदरामलकवत् । तथा तन्तुपटादीनां तादात्म्ये पटः तन्तव इति वचनभेदः पटस्य भावः पटत्वमिति षष्ठी तद्धितोत्पत्तिश्च न प्राप्नोतीति । किञ्च तादात्म्यमित्यत्र किं स पट आत्मा येषां तन्तूनां तेषां भावस्तादात्म्यमिति विग्रहः कर्तव्यः? ते वा तन्तवः आत्मा यस्य पटस्य स च, ते आत्मा यस्येति वा? प्रथमपक्षे पटस्यैकत्वात्तन्तूनामप्येकत्वप्रसङ्गः । तन्तूना वाऽनेकत्वात्पटस्याप्यनेकत्वानुषङ्गः । अन्यथा तत्तादात्म्यं न स्यात् । द्वितीयविकल्पेप्ययमेव दोषः । तृतीयपक्षश्चाविचारितरमणीयस्तद्व्यतिरिक्तस्य

१ वैशेषिक ॥ २ सर्वथा ॥ ३ सन्दिग्धानैकान्तिकत्वे प्रतिपादिते सत्याह ॥ ४ साधनमिदम् ॥ ५ स्वरूपम् ॥ ६ कथम् ? तथा हि ॥ ७ आदिपदेन क्रियादिग्रह ॥ ८ शीतापनोदादि ॥ ९ अवयवावयव्यादय ॥
१० प्रतिभासभेदे विरुद्धधर्माध्यासे च सत्यपि तादात्म्य भविष्यतीत्युक्ते सत्याह ॥ ११ तन्त्ववयवेभ्य ॥ १२ द्व्यणुकादिलक्षणस्य ॥ १३ परमाणुद्वयेन द्व्यणुकमारभ्यते । द्व्यणुकत्रितयेन त्र्यणुकमारभ्यते । तच्च प्रत्यक्षमेव तत उपरितननियमाभाव ॥ १४ जेनेन ॥ १५ प्रतिभासभेदविरुद्धधर्माध्यासप्रकारेण ॥ १६ योषित्कुविन्द ॥ १७ अगद =औषधम् ॥ १८ एकवचनबहुवचनत्वेन ॥ १९ भेदाभावे सति । भेदे षष्ठीति वचनात् ॥ २० वस्तुन ॥
२१ स तदात्मा । तस्य भावस्तादात्म्यम् ॥ २२ एकरूपपटादभिन्नास्तन्तव एकरूपमापन्ना इति ॥

वस्तुनोऽसम्भवात्। न हि तन्तुपटव्यतिरिक्तं वस्त्वन्तरमस्ति यस्य तन्तुपटस्वभावतो[1]च्येत । न च तन्तुपटादीनां[2] कथञ्चिद्भेदाभेदात्मकत्वमभ्युपगन्तव्यं संशयादिदोषोपनिपातानुषङ्गात्। केन[3] खलु स्वरूपेण तेषां भेदः केन चाभेद इति संशयः[4]। तथा यत्राभेदस्तत्र भेदस्य विरोधो यत्र च भेदस्तत्राभेदस्य शीतोष्णस्पर्शवदिति विरोधः। तथाऽभेदस्यैकत्वस्वभावस्यान्यदधिकरणं भेदस्य चानेकस्वभावस्यान्यदिति वैयधिकरण्यम्। तथैकान्तेनैकात्मकत्वे[5] यो दोषोऽनेकस्वभावत्वाभावलक्षणोऽनेकात्मकत्वे चैकस्वभावत्वाभावलक्षणः सोऽत्राप्यनुपज्यत इत्युभयदोषः[6]। तथा येन स्वभावेनार्थस्यैकस्वभावता तेनानेकस्वभावत्वस्यापि प्रसङ्गो येन चानेकस्वभावता तेनैकस्वभावत्वस्यापीति सङ्करप्रसङ्गः—'सर्वेषां[7] युगपत्प्राप्तिः सङ्करः' इत्यभिधानात्। तथा येन स्वभावेनानेकत्वं तेनैकत्वं प्राप्नोति। येन चैकत्वं तेनानेकत्वमिति व्यतिकरः—'परस्परविषयगमनं व्यतिकरः' इति प्रसिद्धेः। तथा येन रूपेण भेदस्तेन कथञ्चिद्भेदो येन चाभेदस्तेनापि कथञ्चिद्भेद इत्यनवस्था। अतोऽप्रतिपत्तितो[9]ऽभावस्तत्त्वस्यानुपज्येतानेकान्तवादिनाम्। एवं सत्त्वाद्य[10]नेकान्ताभ्युपगमेऽप्येतेऽष्टौ[8] दोषा द्रष्टव्याः। तत्र तदात्मार्थः[11] प्रमाणप्रमेयः[12]। किन्तु परस्परतोऽत्यन्तविभिन्ना[13] द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षडेव पदार्थाः[14]। तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि। पृथिव्यप्तेजोवायुरित्येतच्चतुःसंख्यं द्रव्यं नित्यानित्यविकल्पाद्द्विभेदम्। तत्र परमाणुरूपं नित्यं सदकारणवत्त्वात्[15]। तदारब्धं तु द्व्यणुकादि कार्यद्रव्य[16]मनित्यम्[17]। आकाशादिकं तु नित्यमेवानुत्पत्तिमत्त्वात्[18]। एषां[19] च द्रव्यत्वाभिसम्बन्धाद्द्रव्यरूपता[20]। एतच्चेतरे[21]भ्यव्यवच्छेदकमेषां लक्षणम्[22]। तथा हि। पृथिव्यादीनि मनःपर्यन्तानीतरेभ्यो भिद्यन्ते, द्रव्याणीति व्यवहर्त्तव्यानि द्रव्यत्वाभिसम्बन्धात्। यानि नैवं न तानि द्रव्यत्वाभिसम्बन्धवन्ति यथा गुणादीनीति[23]। पृथिव्यादीना[24]मप्य[25]वान्तरभेदवतां[26] पृथिवीत्वाद्यभिसम्बन्धो लक्षणम्। इतरेभ्यो[27] भेदे व्यवहारे तच्छब्दवाच्यत्वे वा साध्ये केवलव्यतिरेकिरूपं[28] द्रष्टव्यम्[29]। अभेदवतां त्वाका-

---

१ तन्तुपटौ स्वभावौ यस्य ॥ २ आदिपदेन गुणगुण्यादीनाम् ॥ ३ कथम्? तथा हि ॥ ४ भेदाभेदात्मकत्वे वस्तुनोऽसाधारणाकारेण निश्चेतुमशक्ते संशय ॥ ५ भेदाभेदात्मकत्वे ॥ ६ अयमपि वैयधिकरण्येऽन्तर्भवति ॥ ७ स्वभावानाम् ॥ ८ संशयादिदोषवत् ॥ ९ अनुपलम्भ ॥ १० आदिना=असत्त्वादि ॥ ११ सामान्यविशेषात्मा ॥ १२ ग्राह्य ॥ १३ विभिन्नप्रत्ययविषयत्वाद्भिन्नलक्षणलक्षितत्वाद्भिन्नकारणप्रभवत्वाद्भिन्नार्थक्रियाकारित्वाच्च । घटपटवत् ॥ १४ प्रमाणग्राह्या ॥ १५ खकुसुमादिना व्यभिचारपरिहारार्थं सदिति । तेनाव्यापिघटादिना व्यभिचारस्तन्निरासार्थमकारणवत्त्वादिति ॥ १६ अवयविरूपम् ॥ १७ उत्पत्तिमत्त्वात् ॥ १८ सत्त्वे सतीति योज्यम् १९ नवसंख्योपेतपृथिव्यादीनाम् ॥ २० प्रतिपत्तव्या ॥ २१ इतरे=गुणादय ॥ २२ असाधारणस्वरूपम् ॥ २३ अत्रापि साध्याभावे साधनाभावोऽस्ति ॥ २४ द्रव्याणां गुणादिभ्यो भेदादिकं प्रसाध्येदानीं नवद्रव्याणां तद्भेदानां च परस्परं भेदादिकं साधयति वैशेषिकः ॥ २५ ननु यद्यपि नवानां पृथिव्यादीनां गुणादिभ्यो भेदस्तथा व्यवहारस्तच्छब्दवाच्यत्वं च समर्थितं तथापि तेषां तद्भेदानां च परस्परं भेदस्तथा व्यवहारस्तच्छब्दवाच्यत्वमिति च साध्येषु किं साधनमित्युक्ते आह ॥ २६ घटपटादि मृष्टजलादि प्रतिपादिशीतवातादि इत्यादयोऽवान्तरभेदाश्च तेष्वेव सम्भवन्ति आकाशादीनां नित्यनिरंशत्वाभ्यामवान्तरभेदासम्भवात् ॥ २७ अबादिभ्य ॥ २८ साधनम् ॥ २९ पृथिवी धर्मिणीतरेभ्यो भिद्यते पृथिवीति वा व्यवहर्तव्या पृथिवीत्वाभिसम्बन्धादन्नादिवत् । एवमबादिष्वपि द्रष्टव्यम् ॥

शकालदिग्द्रव्याणामनादिसिद्धा तच्छब्दवाच्यता द्रष्टव्या । एवं रूपादयश्चतुर्विंशतिगुणाः । उत्क्षेपणादीनि पञ्च कर्माणि । परापरभेदभिन्नं द्विविधं सामान्यमनुगतज्ञानकारणम् । नित्यद्रव्यव्यावृत्तयोऽन्त्या विशेषा अत्यन्तव्यावृत्तिबुद्धिहेतवः । अयुतसिद्धानामाधार्याधारभूतानामिहेदमितिप्रत्ययहेतुर्यः सम्बन्धः स समवायः । अत्र पदार्थषट्के द्रव्यवद्गुणा अपि केचिन्नित्या एव केचित्त्वनित्या एव । कर्माऽनित्यमेव । सामान्यविशेषसमवायास्तु नित्या एवेति ।

अत्र प्रतिविधीयते । अनेकधर्मात्मकत्वेनार्थस्य ग्राहकप्रमाणाभावोऽसिद्धः । तथा हि । वास्तवानेकधर्मात्मकोर्थः परस्परविलक्षणानेकार्थक्रियाकारित्वात्पितृपुत्रपौत्रभ्रातृभागिनेयाद्यनेकार्थक्रियाकारिदेवदत्तवत् । न चायमसिद्धो हेतुरात्मनो मनोज्ञाङ्गनानिरीक्षणस्पर्शनमधुरध्वनिश्रवणताम्बूलादिरसास्वादनकर्पूरादिगन्धाघ्राणमनोज्ञवचनोच्चारणचङ्क्रमणावस्थानहर्षविषादानुवृत्तव्यावृत्तज्ञानाद्यन्योन्यविलक्षणानेकार्थक्रियाकारित्वेनाध्यक्षतोनुभवात् । घटादेश्च स्वान्यव्यक्तिप्रदेशाद्यपेक्षयानुवृत्तव्यावृत्तसदसत्प्रत्ययस्थानगमनजलधारणादिपरस्परविलक्षणानेकार्थक्रियाकारित्वेन प्रत्यक्षतः प्रतीतेरिति । दृष्टान्तोपि न साध्यसाधनविकलो वास्तवानेकधर्मात्मकत्वाऽन्योन्यविलक्षणानेकार्थक्रियाकारित्वयोस्तत्र सद्भावात् । ननु भिन्नप्रमाणग्राह्यत्वेन धर्मधर्मिणोरत्यन्तभेदप्रसिद्धेः सिद्धेपि धर्मिणि वास्तवानेकधर्माणां सद्भावे तादात्म्याप्रसिद्धिरित्यप्यसमीचीनमनैकान्तिकत्वाद्धेतोः । प्रत्यक्षानुमानाभ्यां हि भिन्नप्रमाणग्राह्यत्वेप्यात्मादिवस्तुनो भेदाभावः दूरेतरदेशवर्त्तिनामस्पष्टेतरप्रत्ययग्राह्यत्वेपि वा पादपस्याऽभेदः । ननु चात्र प्रत्ययभेदाद्विषयभेदोऽस्त्येव । प्रथमसमयवर्त्ति हि विज्ञानमूर्द्धताविषयमुत्तरं च शाखादिविशेषविषयमित्यप्यसाम्प्रतमेवंविषयभेदाभ्युपगमे यमहमद्राक्षं दूरस्थितः पादपमेतर्हि तमेव पश्यामीत्येकत्वाध्यवसायो न स्यात्स्पष्टेतरप्रतिभासानां सामान्यविशेषविषयत्वेन घटादिप्रतिभासवद्भिन्नविषयत्वात् । अथ पादपापेक्षया पूर्वोत्तरप्रत्ययानामेकविषयत्वं सामान्यविशेषापेक्षया तु विषयभेद । कथमेवमनेकान्ताभ्युपगमो न विशीर्येत? गुणगुण्यादिष्वप्येतस्तद्वत्कथञ्चिद्भेदाभेदप्रसिद्धेर्भिन्नप्रमाणग्राह्यत्वस्य विरुद्धत्वम् । एकान्ततोऽवयवावयव्यादीनां भिन्नप्रमाणग्राह्यत्वं चासिद्धं पटोयमित्याद्युल्लेखेनाभिन्नप्रमाणग्राह्यत्वस्यापि सम्भवात् । ननु पटोयमित्याद्युल्लेखेनावयव्येव प्रतिभासते नावयवास्तत्कथमभिन्नप्रमाणग्राह्यत्वमित्यप्य-

---

१ पृथिव्यादिप्रकारेण ॥ २ सत्तारूय ॥ ३ द्रव्यत्वादि ॥ ४ इद सदिद सत्, इद द्रव्यमिद द्रव्यमित्येवम् ॥ ५ अपृथक्सिद्धानाम् ॥ ६ गुणगुण्यादीनाम् ॥ ७ नित्यद्रव्याश्रिता ॥ ८ यथाकाशादो परममहत्त्वादि ॥ ९ अनित्यद्रव्याश्रिता ॥ १० स्वामिदासादय ॥ ११ वास्तवार्थस्य ॥ १२ स्वश्चान्यश्च तौ । व्यक्तिश्च प्रदेशादयश्च ते । स्वान्ययोर्व्यक्तिप्रदेशादय । तेषामपेक्षा, तया । ततश्चायमर्थ स्वव्यक्त्यपेक्षया स्वप्रदेशाद्यपेक्षयान्यव्यक्त्यपेक्षयाऽन्यप्रदेशाद्यपेक्षया यथाक्रममनुवृत्तव्यावृत्तप्रत्यय सदसत्प्रत्ययलक्षणार्थक्रियाकारित्वादि ॥ १३ आदिना कालभावग्रहणम् ॥ १४ घटस्तिष्ठति ॥ १५ घटो जले गच्छति पत्रमाकाशे गच्छतीत्यादि ॥ १६ सत्प्रतिपक्षत्व हेतो सद्भावयति पर ॥ १७ धर्म सह धर्मिणो धर्मिणा वा धर्मिणाम् ॥ १८ सर्वथा भेदाभावे ॥ १९ भिन्नप्रमाणग्राह्यत्वादित्यस्य ॥ २० अहं सुखी अहं दुःखीत्यादिस्वसंवेदनेन आत्मास्ति व्याहारादिकार्यदर्शनादित्याद्यनुमानेन च ॥ २१ पुरुषाणाम् ॥ २२ यथा ॥ २३ कुतस्तथा हि ॥ २४ दूरत ॥ २५ समीपे शाखादिमानिति ॥ २६ नर ॥ २७ तव परस्य ॥ २८ ययोर्भिन्नप्रमाणग्राह्यत्व तयो सर्वथा भेद इति ॥ २९ भिन्नप्रमाणग्राह्यत्वात् ॥ ३० साध्यविपर्ययव्याप्तो विरुद्ध ॥ ३१ साधनम् ॥ ३२ असिद्धत्व परिहरति पर ॥ ३३ पट ॥

पेशल तद्भेदाप्रसिद्धेः । तन्तव एव ह्यातानवितानीभूता अवस्थाविशेषविशिष्टाः पटोयमित्याद्युल्लेखेन प्रतिभासन्ते नान्यस्ततोर्थान्तरं. पटः । प्रमाणं हि यथाविधं वस्तुस्वरूपं गृह्णाति तथाविधमेवाभ्युपगन्तव्यम् । यत्रात्यन्तभेदग्राहकं तत्तत्रात्यन्तभेदो यथा घटपटादौ । यत्र पुनः कथञ्चिद्भेदग्राहकं तत्र कथञ्चिद्भेदो[2] यथा तन्तुपटादाविति । अतः[3] कालात्ययापदिष्टं चेदं[4] साधनं यथानुष्णोग्निर्द्रव्यत्वाज्जलवत् । न च घटादौ[6] तथाविधभेदेनास्य व्याप्त्युपलम्भात्सर्वत्रात्यन्तभेदकल्पना युक्ता क्वचित्तार्णत्वादिविशेषाधारेणाग्निना धूमस्य व्याप्त्युपलम्भेन सर्वत्राप्यतस्तथाविधविशेषसिद्धिप्रसङ्गात् । अथ तार्णत्वादिविशेषं परित्यज्य सकलविशेषसाधारणमग्निमात्रं धूमात्प्रसाध्यते । नन्वेवमत्यन्तभेदं परित्यज्यावयवावयव्यादिष्वपि भिन्नप्रमाणग्राह्यत्वाद्भेदमात्रं किं न प्रसाध्यते विशेषाभावात् । दृष्टान्तश्च[12] साध्यविकलत्वान्न[13] साधनाङ्गमत्यन्तभेदस्यात्राप्यसिद्धेः । तदसिद्धिश्च सद्रूपतया घटादीनामभेदात् । साधनविकलश्च स्फारिताक्षस्यैकस्मिन्नप्यध्यक्षे[14] घटादीनां प्रतिभाससम्भवात्[15] । न च प्रतिविषयं विज्ञानभेदोभ्युपगन्तव्यो[16] मेचकज्ञानाभावप्रसङ्गात् । घटादिवस्तुनोप्येकविज्ञानविषयत्वाभावानुपङ्गाच्च । अत्राप्यूर्द्ध्वाधोमध्यभागेषु तद्भेदस्य[17] कल्पयितुं शक्यत्वात् । तथा चावयविप्रसिद्धये दत्तो जलाञ्जलिः[19] । प्रतीतिविरोधोन्यत्रापि[20] न काकैर्भक्षितः । विरुद्धधर्माध्यासोपि[22] धूमादिनानैकान्तिकत्वान्नावयवावयविनोरात्यन्तिकं[23] [24] भेदं प्रसाधयति । न खलु[25] स्वसाध्येतरयोर्गमकत्वागमकत्वलक्षणविरुद्धधर्माध्यासेपि धूमो भिद्यते । नन्वत्रापि सामग्रीभेदोस्त्येव । धूमस्य हि पक्षधर्मत्वादिकारणोपचितस्य स्वसाध्यं प्रति गमकत्वं[26] तद्विपरीतकारणोपचितस्य सामग्र्यन्तरत्वात्साध्यान्तरेऽगमकत्वम्[27] । न त्वेकस्यैव गमकत्वागमकत्वं सम्भवति । इत्यप्यन्धसर्पविलप्रवेशन्यायेनानेकान्तावलम्बनं धूमस्याभिन्नत्वात् । य एव हि धूमोऽविनाभावसम्बन्धस्मरणादिकारणोपचितो[28] वन्हि प्रति गमकः स एव साध्यान्तरेऽगमक इति । अथान्यः स्वसाध्यं प्रति गमकोऽन्यश्चान्यत्रागमकस्तर्हि यो गमको धूमस्तस्य स्वसाध्यवत्साध्यान्तरेपि सामर्थ्यादेकस्मादेव धूमान्निखिलसाध्यसिद्धिप्रसङ्गाद्धेत्वन्तरोपन्यासो व्यर्थः स्यात् । किञ्चातोऽप्राप्तपटावस्थेभ्यः[29] प्राक्तनावस्थाविशिष्टेभ्यस्तन्तुभ्यः पटस्य भेदः साध्येत पटावस्थाभाविभ्यो वा? प्रथमपक्षे सिद्धसाध्यता पूर्वोत्तरावस्थयोः सकलभावाना भेदाभ्युपगमात्[30] । न

१ पर्यायतया ॥ २ अभ्युपगन्तव्य ॥ ३ प्रमाणेन सर्वथा भेदस्य वाधनात् ॥ ४ न केवलमसिद्धम् ॥ ५ भिन्नप्रमाणग्राह्यत्वादिति ॥ ६ घटपटयो ॥ ७ सर्वथा ॥ ८ तन्तुपटादौ ॥ ९ यथाग्निमात्रे साधिते सति खादिराग्निस्तथा पार्णाग्निरपि लभ्यते एव भेदमात्रे साधिते भेदो लभ्यतेऽभेदोपि लभ्यते इति भावार्थ ॥ १० परेण त्वया ॥ ११ विशेषपरित्यागस्य ॥ १२ घटपटवदिति ॥ १३ अत्यन्तभेद- साध्य ॥ १४ युगपत् ॥ १५ सेनावनादिज्ञानवत् ॥ १६ सर्वथा ॥ १७ तस्य ज्ञानस्य ॥ १८ घटादिवस्तुनो भेदे च ॥ १९ ज्ञानभेदेनेव सिद्धे ॥ २० एकोय घट इति ॥ २१ अवयवावयव्यादे सर्वथा भेदे साध्ये ॥ २२ हेतु ॥ २३ चक्षुरादिना च ॥ २४ ययोर्विरुद्धधर्माध्यासस्तयोरात्यन्तिको भेद इत्यनुमाने ॥ २५ उक्तमेव समर्थयन्ति ॥ २६ महानसादौ ॥ २७ जलादौ ॥ २८ आदिना पक्षधर्मत्वादिग्रहणम् ॥ २९ विरुद्धधर्माध्यासात् ॥ ३० जेने ॥

खलु यैवार्थस्य पूर्वावस्था सैवोत्तरावस्था—पूर्वाकारपरित्यागेनैवोत्तराकारोत्पत्तिप्रतीतेः[1]। द्वितीयपक्षे तु हेतूनामसिद्धिः। न खलु पटावस्थाभावितन्तुभ्यः पटस्य भेदाप्रसिद्धौ विरुद्धधर्माध्यासविभिन्नकर्तृकत्वादयो धर्माः सिद्धिमासादयन्ति[2]। कालात्ययापदिष्टत्वं चैतेषामातानवितानीभूततन्तुव्यतिरेकेणार्थान्तरभूतस्य पटस्याध्यक्षेणानुपलब्धेस्तेन भेदपक्षस्य बाधितत्वात्। तन्तवः पट इति संज्ञाभेदोऽप्यवस्थाभेदनिबन्धनो न पुनर्द्रव्यान्तरनिमित्तः। योषिदादिकरव्यापारोत्पन्ना हि तन्तवः कुविन्दादिव्यापारात्पूर्वं शीतापनोदाद्यर्थासमर्थास्तन्तुव्यपदेशं लभन्ते, तद्व्यापारात्तूत्तरकालं विशिष्टावस्थाप्राप्तास्तत्समर्थाः पटव्यपदेशमिति विभिन्नशक्तिकत्वाद्[3]व्यवस्थाभेदमेव तन्तूनां प्रसाधयति न त्ववयवावयवित्वेनात्यन्तिकं भेदम्। यच्चोक्तं 'पटस्य भावः' इत्यभेदे[4] षष्ठी न प्राप्नोतीति तदप्ययुक्तं षण्णां पदार्थानामस्तित्वं षण्णां पदार्थानां वर्ग[5] इत्यादौ भेदाभावेऽपि षष्ठ्याद्युत्पत्तिप्रतीतेः। न हि भवता षट्पदार्थव्यतिरिक्तमस्तित्वादीष्यते[6]। ननु सतो ज्ञापकप्रमाणविषयस्य भावः सत्त्वम्[7]। सदुपलम्भकप्रमाणविषयत्वं नाम धर्मान्तरं[8] षण्णामस्तित्वमिष्यते। अतो नानेनानेकान्तस्तदसत्—षट्पदार्थसंख्याव्याघातानुषङ्गात्[9], तस्य तेभ्योऽन्यत्वात्। ननु धर्मिरूपा एव ये भावास्ते षट्पदार्थाः प्रोक्ताः। धर्मरूपास्तु तद्व्यतिरिक्ता इष्टा[13] एव। तथा[14] च पदार्थप्रवेशकग्रन्थः[15]: "एवं धर्मैर्विना धर्मिणामेव निर्देशः कृतः" इति।

अस्त्वेवं तथाप्यस्तित्वादेर्धर्मस्य षट्पदार्थैः सार्धं कः सम्बन्धो येन तत्तेषां धर्मः स्यात्? संयोगः समवायो वा? न तावत्संयोगोऽस्य गुणत्वेन द्रव्याश्रयत्वात्। नापि समवायस्तस्यैकत्वेनेष्टत्वात्। समवायेन चास्य समवायसम्बन्धे समवायानेकत्वप्रसङ्गः। सम्बन्धमन्तरेण धर्मधर्मिभावाभ्युपगमे चातिप्रसङ्गः। किञ्चास्तित्वादेरपरास्तित्वाभावात्कथं तत्र व्यतिरेकनिबन्धना विभक्तिर्भवेत्? अथ तत्राप्यपरमस्तित्वमङ्गीक्रियेत तदानवस्था स्यात्। उत्तरोत्तरधर्मसमावेशेन च सत्त्वादेर्धर्मिरूपत्वानुषङ्गात्षडेव धर्मिण इत्यस्य व्याघातः। ये धर्मिरूपा एव ते षट्केनावधारिता इत्यप्यसारमेवं हि गुणकर्मसामान्यविशेषसमवायानामनिर्देशः स्यात्। न ह्येषां धर्मिरूपत्वमेव द्रव्याश्रितत्वेन धर्मरूपत्वस्यापि सम्भवात्। तथा खस्य भावः खत्वमित्यत्राभेदेऽपि तद्धितोत्पत्तेरुपलम्भान्न सापि

१ स्वात्मोपलब्धिम् ॥ २ विरुद्धधर्माध्यासादयो यदि भेदप्रसाधका न भवेयुस्तदा कथ सज्ञाभेदो भविष्यतीत्याह ॥ ३ साधनम् ॥ ४ सामान्यविशेषयो । तन्तुपटादीनाम् ॥ ५ षट् पदार्था एव समूह ॥
६ वस्तुन ॥ ७ तदेव ॥ ८ षट्पदार्थेभ्यो भिन्नम् ॥ ९ धर्मिधर्मरूपयो षट्पदार्थास्तित्वयो सर्वथा भेदाभेदसद्भावात् ॥ १० यत्र षष्ठीतद्धितोत्पत्तिस्तत्रात्यन्तिको भेद इत्यस्य ॥ ११ सप्तमपदार्थापत्ते ॥
१२ अस्तित्वादय ॥ १३ मम वैशेषिकस्य ॥ १४ धर्मिभ्यो धर्माणा व्यतिरिक्तान्वेषणप्रकारेण ॥ १५ श्रूयते ॥ १६ परेण ॥ १७ अन्यथेति शेष ॥ १८ समवायपदार्थेऽस्तित्वेन भाव्य तत्तु तत्रापरसमवायपदार्थेन कृत्वा वर्त्तते । एव तस्यानेकत्वापत्तिर्भवेत् ॥ १९ गगनकुसुमाद्यस्तित्वाद्योर्धर्मिधर्मभाव स्यादित्यतिप्रसङ्ग ॥ २० यत्र षष्ठी विभक्तिस्तत्रात्यन्तभेद इत्यस्मिन्पक्षेऽनैकान्तिक दूषणमुद्भावयति जैन ॥
२१ सामान्यस्य ॥ २२ सत्ताया अस्तित्व गोत्वादेरस्तित्वमित्यत्र ॥ २३ अनेकान्तदोषपरिहाराय । परेण ॥ २४ अपरापरास्तित्वसद्भावात् ॥ २५ दूषणान्तरम् ॥ २६ पूर्वस्य पूर्वस्य ॥ २७ अर्थात्—एकस्यैव द्रव्यस्य निर्देश स्यात् ॥

भेदपक्षमेवावलम्बते। यच्चोक्तं 'तादात्म्यमित्यत्र कीदृशो विग्रहः कर्तव्यः' इत्यादि तत्रेत्थं विग्रहो द्रष्टव्यः । तस्य वस्तुन आत्मानौ द्रव्यपर्यायौ[1] सत्त्वासत्त्वादिधर्मौ[2] वा तदात्मानौ । तच्छब्देन वस्तुनः परामर्शात्तयोर्भावस्तादात्म्यं=भेदाभेदात्मकत्वम् । वस्तुनो हि भेदः पर्यायरूपतैवाभेदस्तु द्रव्यरूपत्वमेव, भेदाभेदौ तु द्रव्यपर्यायस्वभावावेव । न खलु द्रव्यमात्रं पर्यायमात्रं वा वस्तूभयात्मनः समुदायस्य वस्तुत्वात् । द्रव्यपर्याययोस्तु न वस्तुत्वं, नाप्यवस्तुता । किन्तु वस्त्वेकदेशता । यथा समुद्रांशो न समुद्रो, नाप्यसमुद्रः, किन्तु समुद्रैकदेश इति । स पट आत्मा येषामित्यपि विग्रहे न दोषोऽवस्थाविशेषापेक्षया तन्तूनामेकत्वस्याभीष्टत्वात् । ते तन्तव आत्मा यस्येति विग्रहे तन्तूनामनेकत्वे पटस्याप्यनेकत्वं स्यादिति चेत्किमिदं तस्यानेकत्वं नाम ? किमनेकावयवात्मकत्वं प्रतितन्तु तत्प्रसङ्गो वा ? प्रथमपक्षे सिद्धसाध्यतातानवितानीभूतानेकतन्त्वाद्यवयवात्मकत्वात्तस्य । द्वितीयपक्षस्त्वयुक्तः प्रत्येकं तेषां तत्परिणामाभावात् । समुदितानामेव ह्यातानवितानीभूतः परिणामोऽमीषां प्रतीयते । तथाभूताश्च ते पटस्यात्मेत्युच्यते । वस्तुनो भेदाभेदात्मकत्वे संशयादिदोषानुषङ्गोऽयुक्तः । भेदाभेदाऽप्रतीतौ हि संशयो युक्तः क्वचित्स्थाणुपुरुषत्वाप्रतीतौ तत्संशयवत् । तत्प्रतीतौ तु कथमसौ ? स्थाणुपुरुषप्रतीतौ तत्संशयवदेव । चलिता च प्रतीतिः संशयः । न चेयं तथेति । न चानयोर्विरोधः कथञ्चिदर्पितयोः सत्त्वासत्त्वयोरिव भेदाभेदयोर्विरोधासिद्धेस्तथा प्रतीतेश्च । प्रतीयमानयोश्च कथं विरोधो नामास्यानुपलम्भसाध्यत्वात् । न च स्वरूपादिना वस्तुनः सत्त्वे तदैव पररूपादिभिरसत्त्वस्यानुपलम्भोऽस्ति । न खलु वस्तुनः सर्वथा भाव एव स्वरूपं स्वरूपेणेव पररूपेणापि भावप्रसङ्गात् । नाप्यभाव एव पररूपेणेव स्वरूपेणाप्यभावप्रसङ्गात् । न च स्वरूपेण भाव एव पररूपेणाभावः परात्मना चाभाव एव स्वरूपेण भावस्तदपेक्षणीयनिमित्तभेदात् । स्वद्रव्यादिकं हि निमित्तमपेक्ष्य भावप्रत्ययं जनयत्यर्थः, परद्रव्यादिकं त्वपेक्ष्याऽभावप्रत्ययम् । इत्येकत्वद्वित्वादिसंख्यावदेकवस्तुनि भावाभावयोर्भेदः । न ह्येकत्र द्रव्ये द्रव्यान्तरमपेक्ष्य द्वित्वादिसंख्या प्रकाशमाना स्वात्ममात्रापेक्षैकत्वसंख्यातो नान्या प्रतीयते । नापि सोभयी तद्वतो भिन्नैवास्याऽसंख्येयत्वप्रसङ्गात् । संख्यासमवायात्तत्त्वमित्यप्यसुन्दरं—कथञ्चित्तादात्म्यव्यतिरिक्तस्य समवायस्यासत्त्वप्रतिपादनात् । तत्सिद्धोऽपेक्षणीयभेदात्संख्यावत्सत्त्वासत्त्वयोर्भेदः । तथाभूतयोश्चानयोरेकवस्तुनि प्रतीयमानत्वात्कथं विरोधः ? द्रव्यपर्यायरूपत्वादिना भेदाभेदयोर्वा मिथ्येयं प्रतीतिरित्यप्यसङ्गतं बाधकाभावात् । विरोधो बाधक इत्यप्ययुक्तमितरेतराश्रयानुषङ्गात् । सति हि विरोधे तेनास्याबाध्यमानत्वान्मिथ्यात्वसिद्धिस्ततश्च तद्विरोधसिद्धिरिति ।

---

१ एतेनोर्ध्वतासामान्यपर्यायलक्षणविशेषात्मकवस्तु गृहीतम् ॥ २ एतेन तिर्यक्सामान्यव्यतिरेकविशेषात्मक वस्तु सङ्गृहीतम् ॥ ३ प्रत्येकम् ॥ ४ तन्तूनाम् ॥ ५ पटस्यैकत्वे तन्तूनामेकत्वाउपलक्षण ॥ ६ अवस्था=पटरूपा ॥ ७ आदिना अनुग्रहणम् ॥ ८ अस्माभिर्जैनैः ॥ ९ द्रव्यपर्यायापेक्षया ॥ १० विवक्षितयो (मुख्ययो ) ॥ ११ स्वपरद्रव्यादिचतुष्टयापेक्षया ॥ १२ पर्यायापेक्षया भेद । द्रव्यापेक्षया चाभेद ॥ १३ भेदाभेदप्रकारेण ॥ १४ भाव =अस्तित्वम् ॥ १५ तयो =भावाभावयो ॥ १६ कथम् ? तथा हि ॥ १७ स्वापेक्षया एकत्व यथा तथा परापेक्षया द्वित्व च ॥ १८ विशेष ॥ १९ सख्येयत्वम् ॥ २० अग्रे ॥ २१ भिन्नयो ॥ २२ सत्त्वासत्त्वयो ॥

विरोधश्चाविकलकारणस्यैकस्य भवतो द्वितीयसन्निधानेऽभावादवसीयते । न च भेदसन्निधानेऽभेदस्याऽभेदसन्निधाने वा भेदस्याभावोऽनुभूयते । किञ्चात्र विरोधः
सहानवस्थानलक्षणः परस्परपरिहारस्थितिस्वभावो वा वध्यघातकरूपो वा स्यात्? न तावत्सहानवस्थानलक्षणोऽन्योन्याव्यवच्छेदेनैकस्मिन्नाधारे भेदाभेदयो-
र्धर्मयोः सत्त्वासत्त्वयोर्वा प्रतिभासमानत्वात्[4] । परस्परपरिहारस्थितिलक्षणस्तु विरोधः सहैकत्राम्रफलादौ रूपरसयोरिवानयोः सम्भवतोरेव स्यान्न त्वसम्भवतोः
सम्भवदसम्भवतोर्वा । किञ्चायं विरोधो धर्मयोर्धर्मिणोर्वा? प्रथमपक्षे सिद्धसाधनमेतल्लक्षणत्वाद् धर्माणाम् । ऐकाधिकरण्यं तु तेषां न विरुध्यते मातुलि-
ङ्गद्रव्ये रूपादिवत् । धर्मधर्मिणोस्तु विरोधे धर्मिणि धर्माणां प्रतीतिरेव न स्यात् । न चैवमबाधबोधाधिरूढप्रतिभासत्त्वात्तत्र तेषाम् । वध्यघातकभावोपि
विरोधः फणिनकुलयोरिव बलवदबलवतोः प्रतीतः सत्त्वासत्त्वयोर्भेदाभेदयोर्वा नाशङ्कनीयस्तयोः समानबलत्वात् । अस्तु वा कश्चिद्विरोधः । तथाप्यसौ
सर्वथा कथञ्चिद्वा स्यात्? न तावत्सर्वथा[12] शीतोष्णस्पर्शादीनामपि सत्त्वादिना[13] विरोधासिद्धेः[14] । एकाधारतया चैकस्मिन्नपि हि धूपदहनादिभाजने क्वचित्प्रदेशे
शीतस्पर्शः क्वचिच्चोष्णस्पर्शः प्रतीयत एव । अथानयोः प्रदेशयोर्भेद एवेष्यते । अस्तु नामानयोर्भेदः । धूपदहनाद्यवयविनस्तु न भेदः । न चास्य शीतोष्ण-
स्पर्शाधारता नास्तीत्यभिधातव्यं प्रत्यक्षविरोधात् । तन्न सर्वथा विरोधः । कथञ्चिद्विरोधस्तु[16] सर्वत्र समानः । किञ्च भावेभ्योऽभिन्नो भिन्नो वा विरोधः
स्यात्? न तावत्तेभ्योऽभिन्नो विरोधो विरोधको युक्तः स्वात्मभूतत्वात्तत्स्वरूपवत् । विपर्ययानुषङ्गो वा । अथ भिन्नस्तथापि न विरोधकोऽनात्मभूतत्वादर्-
थान्तरवत् । अथार्थान्तरभूतोपि विरोधो विरोधको भावानां विशेषणभूतत्वात्[20], न पुनर्भावान्तरं तस्य तद्विशेषणत्वाभावात् । तदप्यसमीचीनम् । विरोधो हि
तुच्छरूपोऽभावः । स यदि शीतोष्णद्रव्ययोर्विशेषणं तर्हि तयोरदर्शनापत्तिस्तत्सम्बद्धरूपत्वात् । असम्बद्धस्य[23] च विशेषणत्वेतिप्रसङ्गात् । अन्यतरविशेषणत्वेप्ये-
तदेव दूषणम्[26] । तदेव[27] च विरोधि स्याद्यस्यासौ विशेषणं नान्येत् । न चैकत्र विरोधो नामास्य द्विष्ठत्वात् । अन्यथा सर्वत्र सर्वदा तत्प्रसङ्गः[33] । अथ

१ शीतस्य ॥ २ जायमानस्य ॥ ३ उष्ण ॥ ४ ययोस्तथा प्रतिभासमानत्व न तयोस्तथा विरोधो यथा रूपरसयो । तथा प्रतिभासमानत्व च भेदाभेदयोरिति ॥ ५ विद्यमानयो ॥ ६ अस्मिन्विरोधे सति दोषो नास्तीत्यर्थं ॥ ७ शशाश्वविषाणयोरिव ॥ ८ वन्ध्याऽवन्ध्यास्तनन्धययोरिव ॥ ९ जैनमते ॥ १० प्रदीपादौ ॥ ११ स्वपरप्रकाशादीनाम् ॥ १२ सत्त्वादिरूपाव्यवच्छेदत ॥ १३ शीतस्पर्श सन्नुष्णस्पर्श· सन्नित्यादिना धर्मेण ॥ १४ शीतोष्णस्पर्शादयो न विरुद्धा एकाधारतया प्रतीयमानत्वात् । यत्तथा प्रतीयते न तत्सर्वथा विरुद्ध यथा रूपरसादि, एकतुलाया नामोन्नामादिर्वा । एकाधारतया प्रतीयन्ते च धूपदहनादौ शीतोष्णस्पर्शादय इति ॥ १५ परेण ॥ १६ भावानामसाधारणस्वरूपप्रकारेण ॥ १७ घटाकारस्य पटेऽभावात् ॥ १८ घटपटादौ घटपटरूपादौ वा ॥ १९ भावा अपि विरोधस्य विरोधका कुतो न भवेयुर्विरोधादभिन्नत्वाविशेषात् ? ॥ २० भावा विशेष्या विरोधो विशेषणमनयोर्भावयोर्विरोध इति ॥ २१ घटपटादिरूप ॥ २२ विवादापन्ने शीतोष्णद्रव्ये धर्मिणी न दृश्येते इति साध्यो धर्म । अभावसम्बद्धरूपत्वात् क्वचित्प्रदेशे घटवत् ॥ २३ शीतोष्णद्रव्ययोर्मध्ये शीतद्रव्यस्योष्णद्रव्यस्य वा ॥ २४ शीतोष्णद्रव्ययोर्मध्ये ॥ २५ विरोधस्य ॥ २६ अदर्शनापत्तिलक्षणम् ॥ २७ द्वितीयम् ॥ २८ शीतद्रव्यस्योष्णद्रव्यस्य वा ॥ २९ उष्णद्रव्य शीतद्रव्य वा ॥ ३० उष्णद्रव्ये शीतद्रव्ये वा ॥ ३१ तथा च घटस्य सद्रूपतावत् (सत्तासम्बन्धात्सद्रूपाणीति भावो वैशेषिकमते) रूपादिस्वभावतापि न स्यात् । न चैतद्युक्त प्रतीतिविरोधात् ॥

विरुध्यमानत्वविरोधकत्वापेक्षया[3] कर्मकर्तृस्थो विरोधो विरोधसामान्यापेक्षयोभयविशेषणत्वाद्द्विष्ठोऽभिधीयते । नन्वेवं[4] रूपादेरपि द्विष्ठत्वापत्तिः किन्न स्यात्? तत्सामान्यस्यापि द्विष्ठत्वाविशेषात् । विरोधस्याभावरूपत्वे सामान्यविशेषत्वाभावानुपपत्तिश्च । गुणरूपत्वे गुणविशेषणत्वाभावानुषङ्गः[8] । अथ षट्पदार्थव्यतिरिक्तत्वात् पदार्थविशेषो विरोधोऽनेकस्थो विरोध्यविरोधकप्रत्ययविशेषप्रसिद्धेः समाश्रीयते तदाप्यस्यासम्बद्धस्य द्रव्यादौ विशेषणत्वं सम्बद्धस्य वा? न तावदसम्बद्धस्यातिप्रसङ्गाद्दण्डादौ[11] तथाऽप्रतीतेश्च । न खलु पुरुषेणासम्बद्धो दण्डस्तस्य विशेषणं प्रतीतो येनात्रापि तथाभावः । अथ सम्बद्धः । किं संयोगेन समवायेन विशेषणभावेन वा? न तावत्संयोगेनास्याद्रव्यत्वेन संयोगानाश्रयत्वात् । नापि समवायेनास्य द्रव्यगुणकर्मसामान्यविशेषव्यतिरिक्तत्वेनासमवायित्वात् । नापि विशेषणभावेन सम्बन्धान्तरेणासम्बद्धे वस्तुनि विशेषणभावस्याप्यसम्भवात् । अन्यथा दण्डपुरुषादौ संयोगादिसम्बन्धाभावेपि स स्यात् । इत्यलं संयोगादिसम्बन्धकल्पनाप्रयासेन । विरोध्यविरोधकप्रत्ययविशेषस्तु[13] विशिष्टं वस्तुधर्ममेवालम्बते[14] इति वक्ष्यते समवायसम्बन्धनिराकरणप्रक्रमे । ततो विरोधस्य विचार्यमाणस्यायोगान्नानयोरसौ[15] घटते । नापि वैयधिकरण्यं निर्बाधबोधे भेदाभेदयोः सत्त्वासत्त्वयोर्वा एकाधारतया प्रतीयमानत्वात् । नाप्युभयदोषश्चौरपारदारिकाभ्यामचौरपारदारिकवज्जैनाभ्युपगतवस्तुनो[16] जात्यन्तरत्वात् । न खलु भेदाभेदयोः सत्त्वासत्त्वयोर्वाऽन्योन्यनिरपेक्षयोरेकत्वं जैनैरभ्युपगम्यते येनायं दोषस्तत्सापेक्षयोरेव[17] तदभ्युपगमात् तथा[18] प्रतीतेश्च । नापि सङ्करव्यतिकरौ[19] स्वरूपेणैवार्थे तयोः प्रतीतेः । नाप्यनवस्था[20] । धर्मिणो ह्यनेकरूपत्वं, न धर्माणां कथञ्चनेति वस्तुनो ह्यभेदो धर्म्येव, भेदस्तु धर्मा एव, तत्कथमनवस्था? अभावदोषस्तु दूरोत्सारित एवाशेषप्राणिनामनेकान्तात्मकार्थस्यानुभवसम्भवात्[21] ।

ननु शरीरेन्द्रियबुद्धिव्यतिरिक्तात्मद्रव्यस्येच्छादिगुणाश्रयस्य[22] नित्यैकरूपत्वात्कथं सर्वस्यानेकान्तात्मकत्वम्? न च नित्यैकरूपत्वे कर्तृत्वभोक्तृत्वजन्ममरणजीवनहिंसकत्वादिव्यपदेशाभावः । ज्ञानचिकीर्षाप्रयत्नानां समवायो[23] हि कर्तृत्वम् । सुखादिसंवित्समवायस्तु[24] भोक्तृत्वम् । अपूर्वैः[25] शरीरेन्द्रियबुद्ध्यादिभिश्चाभि-

1 विरुध्यमान =शीत ॥ २ विरोधक =उष्ण ॥ ३ विरोध्यविरोधकभावसम्बन्धापेक्षया ॥ ४ ननु विशेषापेक्षया यत कर्तृस्थो विरोधो हि कर्मणि नास्ति कर्मस्थ कर्तरि नास्तीत्यद्विष्ठो विशेषापेक्षयेति भाव ॥ ५ विरोधप्रकारेण ॥ ६ भावाना विरोधकत्वापत्ति ॥ ७ विरोधस्याभावरूपत्व मा भूद्गुणरूपत्वं स्यादित्युक्ते आहाचार्य ॥ ८ गुणा निर्गुणा इति वचनाच्छीतोष्णस्पर्शयोर्गुणरूपयोर्विरोधो गुणरूप इति विशेषणत्वमस्य न घटतेऽन्यथा ॥ ९ सह्यो विन्ध्य प्रति विशेषण स्यादसम्बद्धत्वाविशेषात् ॥ १० असम्बद्धविशेषणत्वप्रकारेण ॥ ११ असम्बद्धत्वप्रकारेण ॥ १२ षट्सु पदार्थेषु समवायोस्ति यत ॥ १३ प्रत्ययो=ज्ञानम् ॥ १४ वस्तुनोऽव्यतिरिक्तमभावरूप विरोधमवलम्बते न तु व्यतिरिक्तम् ॥ १५ भेदाभेदयो सत्त्वासत्त्वयोर्वा ॥ १६ आत्मादिवस्तुन ॥ १७ द्रव्य पर्यायमपेक्ष्य वर्तते पर्यायो द्रव्यमपेक्ष्य वर्तते ॥ १८ परस्परापेक्षया ॥ १९ मेचकरत्नादौ ॥ २० धर्माणामपरधर्मोऽसम्भवात् ॥ २१ प्रत्यक्षादिप्रमाणत ॥ २२ येषा वादिना शरीरमेवात्मा इन्द्रियाण्येवात्मा बुद्धिरेवात्मा वा तेषा मतनिरासार्थमिद विशेषणम् ॥ २३ आत्मना सह ॥ २४ आदिना चिकीर्षाप्रयत्नादि ॥ २५ पर्यायापेक्षया व्यावृत्त्यात्मकस्य चैतन्यापेक्षयानुगमात्मकस्य ॥

सम्बन्धो जन्म। प्राणात्तैस्तैस्तु वियोगो मरणम् । जीवनं तु सदेहस्यात्मनो धर्माधर्मापेक्षो मनसा सम्बन्धः । हिंसकत्वं च शरीरचक्षुरादीनां वधान्न[1] पुनरात्मनो विनाशात्। तथा च सूत्रं "कार्याश्रयकर्तृवधाद्धिंसा" इति । कार्याश्रयः शरीरं सुखादेः कार्याश्रयत्वात् । कर्तृणीन्द्रियाणि विषयोपलब्धेः कर्तृत्वादिति । तदप्यसमीक्षिताभिधानं सर्वथाऽपरित्यक्तपूर्वरूपत्वेनास्याकाशकुशेशयवद् ज्ञानादिसमवायस्यैवासम्भवात्[3]। कथं तदपेक्षया कर्तृत्वादिस्वरूपसम्भवः? पूर्वरूपपरित्यागे वा कथं नानेकान्तात्मकत्वं व्यावृत्त्यनुगमात्मकस्यात्मनः स्वसंवेदनप्रत्यक्षतः प्रसिद्धेः। व्यावृत्तिः खलु सुखदुःखादिस्वरूपापेक्षया । आत्मनोनुगमश्च चैतन्यद्रव्यत्वसत्त्वादिस्वरूपापेक्षया । तदात्मकत्वं चाध्यक्षत एव प्रसिद्धम् । ननु चानुवृत्तव्यावृत्तस्वरूपयोः परस्परं विरोधात्कथं तदात्मकत्वमात्मनो युक्तमित्यप्यसत्प्रमाणप्रतिपन्ने वस्तुस्वरूपे विरोधानवकाशात्। न खलु सर्पस्य कुण्डलेतरावस्थापेक्षयाङ्गुल्यादेर्वा सङ्कोचितेतरस्वभावापेक्षया व्यावृत्त्यनुगमात्मकत्वं प्रत्यक्षप्रतिपन्नं विरोधमध्यास्ते । ननु सुखाद्यवस्थानामात्मनोऽत्यन्तभेदात्तद्व्यावृत्तावप्यात्मनः किमायातं येनास्यापि व्यावृत्त्यात्मकत्वं स्यादित्यप्यपेशलं सुखाद्यात्मनोरत्यन्तभेदस्य प्रथमपरिच्छेदे प्रतिविहितत्वात् । ननु चाकारवैलक्षण्येप्यात्मसुखादीनामनानात्वेऽन्यत्राप्यन्यतोऽन्यस्यान्यत्वं न स्यात्; तदप्यविचारितरमणीयं तद्वत्तादात्म्येनान्यत्रान्यस्य प्रमाणतोऽप्रतीतेः । प्रतीतौ तु भवत्येवाकारनानात्वेप्यनानात्वं, प्रत्यभिज्ञाज्ञानवत्सामान्यविशेषवत्संशयज्ञानवन्मेचकज्ञानवद्वेति ।

यच्चोक्तं "द्रव्यादयः षडेव पदार्थाः प्रमाणप्रमेयाः" इत्यादि तदप्युक्तिमात्रं-द्रव्यादिपदार्थषट्कस्य विचारासहत्वात्। तथा हि । यत्तावच्चतुःसंख्यं पृथिव्यादि नित्यानित्यविकल्पाद्द्विभेदमित्युक्तं, तदयुक्तमेकान्तनित्ये क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्[13] । तल्लक्षणसत्त्वस्यातो व्यावृत्त्याऽसत्त्वप्रसङ्गात् । यदि हि परमाणवो द्व्यणुकादिकार्यद्रव्यजननैकस्वभावास्तर्हि तत्प्रभवकार्याणां सकृदेवोत्पत्तिप्रसङ्गोऽविकलकारणत्वात्। प्रयोगः । येऽविकलकारणास्ते सकृदेवोत्पद्यन्ते यथा समानसमयोत्पादा बहवोऽङ्कुराः । अविकलकारणाश्चाणुकार्यत्वेनाभिमता भावा इति । तथाभूतानामप्यनुत्पत्तौ सर्वदानुत्पत्तिप्रसक्तिर्विशेषाभावात्[16] । ननु[17] समवाय्यऽसमवायिनिमित्तभेदात्त्रिविधं कारणम् । यत्र हि कार्यं समवैति[18] तत्समवायि कारणम् । यथा द्व्यणुकस्याणुद्वयम् । यच्च कार्यैकार्थसमवेतं[19]

१ घटते ॥ २ आत्मन ॥ ३ व्यापित्वाव्यापित्वरूपे ॥ ४ घटपटादौ ॥ ५ आकारवैलक्षण्याविशेषात् ॥ ६ आत्मसुखादिवत् ॥ ७ घटे ॥ ८ पटस्य ॥ ९ तादात्म्ये ॥ १० पूर्वोत्तरपर्यायज्ञानद्वयाकारवत् ॥ ११ घटादौ ॥ १२ पटादे ॥ १३ यथा गोत्व सामान्यमश्वत्वसामान्यापेक्षया विशेष- ॥ १४ एकान्तनित्यस्य ॥ १५ एकान्तनित्या ॥ १६ अविकलकारणत्वस्य ॥ १७ साधनमसिद्धमिति पर सम्भावयति ॥ १८ पृथग्रूपत्वेनोत्पद्यते ॥ १९ कार्य=पट तेनैकार्थे तन्तुलक्षणे समवेत पटम् ॥

कार्यकारणैकार्थसमवेतं वा कार्यमुत्पादयति तदसमवायि कारणम्। यथा पटारम्भे तन्तुसंयोगः। पटसमवेतरूपाद्यारम्भे पटोत्पादकतन्तुरूपादि[1] च। शेषं तूत्पादकं निमित्तकारणम्। यथाऽदृष्टाकाशादि[2]कम्। तत्र[3] संयोग[4]स्याऽपेक्षणीय[5]स्याभावादविकलकारणत्वमसिद्धम्। तदप्यसाम्प्रतं संयोगादिना[6]ऽनाधेयातिशय[7]त्वेनाऽणूनां तदपेक्षाया अयोगात्। अथ संयोग एवामीषामतिशयः। स किं नित्योऽनित्यो वा? नित्यश्चेत्सर्वदा[8] कार्योत्पत्तिः स्यात्। अनित्यश्चेत्तदुत्पत्तौ कोऽतिशय[10]ः स्यात्संयोग[11]ः क्रिया वा? संयोगश्चेत्किं स एव संयोगान्तरं वा? न तावत्स एवास्याद्याप्यसिद्धेः स्वोत्पत्तौ स्वस्यैव व्यापारविरोधा[12]च्च। नापि संयोगान्तरं तस्यानभ्युपगमात्[13]। अभ्युपगमे वा तदुत्पत्तावप्यपरसंयोगातिशयकल्पनायामनवस्था। नापि क्रियातिशयस्तदुत्पत्तावपि पूर्वोक्तदोषानुषङ्गात्। किञ्चादृष्टापेक्षादा[14]त्माणुसंयोगात्परमाणुषु क्रियोत्प[15]द्यते इत्यभ्युपगमा[16]दात्मपरमाणुसंयोगोत्पत्तावप्यपरोतिशयो वाच्यस्तत्र च तदेव[17] दूषणम्। किञ्चासौ संयोगो द्व्यणुकादिनिर्वर्त्तकः किं परमाण्वाद्याश्रितस्त[18]दन्याश्रितोऽनाश्रितो वा? प्रथमपक्षे[19] तदुत्पत्तौ[20] वाश्रये[21] उत्पद्यते न वा? यद्युत्पद्यते तदाणूनामपि कार्यतानुषङ्गः[22]। अथ नोत्पद्यते तर्हि संयोगस्तदा[23]श्रितो न स्यात्–समवाय[24]प्रतिषे[25]धात्, तेषा[26] च तं प्रत्यकारकत्वात्। तदकारकत्वं चाऽनतिशयत्वा[27]त्। अनतिशयानामपि कार्यजनकत्वे सर्वदा कार्यजनकत्वप्रसङ्गोऽविशेषा[28]त्। अतिशयान्तरकल्पने चानवस्था तदुत्पत्तावप्यपरातिशयान्तरपरिकल्पनात्। तत[29]स्तेषामसंयोग[30]रूपतापरित्यागेन संयोगरूपतया परिणतिरभ्युपगन्तव्या। इति सिद्धं तेषां कथञ्चिदनित्यत्वम्। अन्याश्रितत्वेपि पूर्वोक्तदोषप्रसङ्गः। अनाश्रितत्वे तु निर्हेतुकोत्पत्तिप्रसक्तेः सदा सत्त्वप्रसङ्ग[31]तः कार्य[32]स्यापि सर्वदा भावानुषङ्गः। कथं[33] चासौ गुणः स्यादनाश्रितत्वादाकाशादिवत्? किञ्चासौ संयोगः सर्वात्मनैकदेशेन वा तेषां स्यात्? सर्वात्मना चेत्पिण्डोणुमात्रः[34] स्यात्। एकदेशेन चेत्सांशत्वप्रसङ्गोऽमीषाम्। तदेवं संयोगस्य विचार्यमाणस्यायोगात्कथमसौ तेषामतिशयः स्यात्? निरतिशयाना च कार्यजनकत्वे तु सकृन्निखिलकार्याणामुत्पादः स्यात्। न चैवम्। ततोमीषां प्राक्तनाजनकस्वभावपरित्यागेन विशिष्ट[35]संयोगपरिणामपरि-

---

१ कार्यकारण पटगतरूपादि तेन सह एकार्थसमवेत तन्तुगतरूपम् ॥ २ आदिना कुविन्दादि ॥ ३ कारणत्रयमध्ये ॥ ४ द्व्यणुकादिकार्योत्पादने ॥ ५ परमाणुभि ॥ ६ परमाणूना परमाणुभि सह सयोग ॥ ७ नित्यत्वात् ॥ ८ सर्वदा नित्यसयोगलक्षणातिशयसद्भावात् ॥ ९ कारणम् ॥ १० परमाण्वो ॥ ११ परमाण्वो ॥ १२ स्वयमनुत्पन्नस्य स्वात्मनि व्यापार कथमिति विरोध ॥ १३ परेण ॥ १४ द्व्यणुकादीनि कार्याण्यात्मनोऽदृष्टवशाज्जायन्ते आत्मनो व्यापकत्वादिति हेतो ॥ १५ द्व्यणुकादिकार्योत्पादकलक्षणा ॥ १६ परेण ॥ १७ अनवस्थालक्षणम् ॥ १८ ततोऽन्यत्= अदृष्टाकाशादि निमित्तकारणम् ॥ १९ तस्य सयोगस्य ॥ २० द्व्यणुकोत्पादक सयोग परमाण्वाश्रित । त्र्यणुकोत्पादकसयोगो द्व्यणुकाश्रित स्कन्धोत्पादक सयोगस्त्र्यणुकाश्रित इति ॥ २१ परमाण्वादि ॥ २२ उत्पद्यमानत्वाद्धटवत् ॥ २३ तस्य परमाणो ॥ २४ समवायाद्भविष्यतीत्युक्ते सत्याह ॥ २५ अग्रे ॥ २६ कार्यकारणभावसम्बन्धेन तदाश्रितो भविष्यतीत्युक्ते सत्याहाचार्य ॥ २७ सयोगजनकस्वभावातिशयाभावात् ॥ २८ अनतिशयत्वस्य ॥ २९ मयोगाश्रयस्यानुत्पद्यमानत्वेन संयोगस्तदाश्रितो न स्यायत ॥ ३० पूर्वरूप ॥ ३१ सतो हेतुरहितस्य सर्वदा व्यवस्थिते ॥ ३२ द्व्यणुकादे ॥ ३३ अनाश्रितपक्षे दूषणान्तरमाहाचार्य ॥ ३४ अवयविनिषेधश्च भवेत् ॥ ३५ कथञ्चिदेकत्वलक्षण ॥

णतानां जनकस्वभावसम्भवात्सिद्धं कथञ्चिदनित्यत्वम् । प्रयोगः । ये क्रमवत्कार्यहेतवस्तेऽनित्या यथा क्रमवदङ्कुरादिनिर्वर्तका वीजादयस्तथा च परमाणव
इति । ततोऽयुक्तमुक्तं–'नित्याः परमाणवः सदकारणवत्त्वादाकाशवत् । न चेदमसिद्धमावयोः परमाणुसत्त्वेऽविवादात् । अकारणवत्त्वं चातोऽल्पपरिमाणका-
रणाभावात्तेषां सिद्धम् । कारणं हि कार्यादल्पपरिमाणोपेतमेव । तथा हि । द्व्यणुकाद्यवयवि द्रव्यं स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धं कार्यत्वात्पट-
वदित्येकारणवत्त्वाऽसिद्धिः । परमाणवो हि स्कन्धावयविद्रव्यविनाशकारणकास्तद्भावभावित्वाद्घटविनाशपूर्वककपालवत् । न चेदमसिद्धं साधनं द्व्यणुका-
द्यवयविद्रव्यविनाशे सत्येव परमाणुसद्भावप्रतीतेः । सर्वदा स्वतन्त्रपरमाणूनां तद्विनाशमन्तरेणाप्यत्रं सम्भवाद्भागासिद्धो हेतुरित्यप्यसुन्दरं तेषामसिद्धेः ।
तथा हि । विवादापन्नाः परमाणवः स्कन्धभेदपूर्वका एव तत्त्वाद् द्व्यणुकादिभेदपूर्वकपरमाणुवत् । ननु पटोत्तरकालभावितन्तूनां पटभेदपूर्वकत्वेपि पट-
पूर्वकालभाविनां तेषामतत्पूर्वकत्ववत्परमाणूनामप्यस्कन्धभेदपूर्वकत्वं केषाञ्चित्स्यादित्यप्यनुपपन्नं तेषामपि प्रवेणीभेदपूर्वकत्वेन प्रतीत्या स्कन्धभेदपूर्वकत्वसिद्धेः ।
वेलवत्पुरुषप्रेरितमुद्गराद्यभिघातादवयवक्रियोत्पत्तेरवयवविभागात्संयोगविनाशाद्विनाशोर्थानामित्यादि विनाशोत्पादप्रक्रियोद्घोषणं तु प्रागेव कृतोत्तरम् । ततो
नित्यैकत्वस्वभावाणूनां जनकत्वासम्भवात्तदारब्धं तु द्व्यणुकाद्यवयविद्रव्यमनित्यमित्यप्ययुक्तमुक्तं तन्त्वाद्यवयवेभ्यो भिन्नस्य च पटाद्यवयविद्रव्यस्योपल-
ब्धिलक्षणप्राप्तस्यानुपलम्भेनासत्त्वात् । न चास्योपलब्धिलक्षणप्राप्तत्वमसिद्धं महत्त्वेनेकद्रव्यत्त्वाद्रूपविशेषाच्च रूपोपलब्धिरित्यभ्युपगमात् । न च समानदेशत्वा-
दवयविनोऽवयवेभ्यो भेदेनानुपलब्धिर्वातातपादिभी रूपरसादिभिश्चानेकान्तात् । तेषां समानदेशत्वेपि भेदेनोपलम्भसम्भवात् । किञ्चावयवावयविनोः शास्त्रीय-
देशापेक्षया समानदेशत्वं लौकिकदेशापेक्षया वा? प्रथमपक्षेऽसिद्धो हेतुः । पटावयविनो ह्यन्ये एवारम्भकास्तन्त्वादयो देशास्तेषां चान्ये भवद्भिरभ्युपगम्यन्ते ।
द्वितीयपक्षेप्यनेकान्तः । लोके हि समानदेशत्वमेकभाजनवृत्तिलक्षणं भेदेनार्थानामुपलम्भेप्युपलब्धम् । यथा कुण्डे वदरादीनाम् । किञ्च कतिपयावयव-
प्रतिभासे सत्यऽवयविनः प्रतिभासो निखिलावयवप्रतिभासे वा? तत्राद्यविकल्पोऽयुक्तो जलनिमग्नमहाकायगजादेरुपरितनकतिपयावयवप्रतिभासेप्यखिलावय-

---

१ आदिना क्षितिजलवातातपादय ॥ २ परमाणूना कथञ्चिदनित्यत्व यत ॥ ३ आश्रयासिद्ध स्वरूपासिद्ध वा ॥ ४ जैनवैशेषिकयो ॥ ५ द्वितीयविशेषणम् ॥ ६ दृष्टान्ते तन्तव ॥ ७ कथम्?
तथा हि ॥ ८ अवयविद्रव्यभाव पूर्वमप्राप्तानामित्यर्थ ॥ ९ जगति ॥ १० स्वतन्त्रत्वेन ॥ ११ भेदो=विनाश ॥ १२ साधनस्यानैकान्तिकत्वमुद्भावयति पर ॥ १३ निष्पन्नपटासिष्कासितानाम् ॥
१४ स्कन्धभेदपूर्वकत्वेऽस्कन्धभेदपूर्वकत्वे च तत्त्वादिति हेतोर्वर्तनात् ॥ १५ घटविनाशपूर्वककपालवदिति दृष्टान्त साध्यसाधनविकल दर्शयन्नाह पर ॥ १६ एव प्रवेणीरूपस्यार्थस्याविनाशो ज्ञेय । तन्तवस्तु
स्वारम्भकावयवेभ्य समुत्पद्यन्ते । तत प्रवेणीभेदपूर्वकत्व पटपूर्वकालभाविनामपि तन्तूना नास्तीति भाव ॥ १७ उक्तन्यायात् ॥ १८ यौगपरिकल्पित स्थूलावयविद्रव्य निराकुर्वन्नाह जैन ॥ १९ सर्वथा ॥ २० भेदेन ॥
२१ विशेषणम् ॥ २२ परमाणुनाऽव्यभिचारार्थमेतत् ॥ २३ आकाशेन व्यभिचारपरिहारार्थं रूपविशेष इति ॥ २४ भेदे सत्यपि ॥ २५ अम्भ क्षीरवत् ॥ २६ पटस्य ॥ २७ अन्यथा समानदेशत्वाद्भेदेनानुपलब्धिर्यदि तर्हि ॥
२८ कथम्? तथा हि ॥ २९ प्रवेणिकासम्बन्धिनोशा ॥ ३० वैशेषिकै ॥

वव्यापिनो गजाद्यवयविनोऽप्रतिभासनात्[1]। नापि द्वितीयविकल्पो युक्तो मध्यपरभागवर्त्तिसकलावयवप्रतिभासासम्भवेनावयविनोऽप्रतिभासप्रसङ्गात्। [2]भूयोऽवयवग्रहणे सत्यवयविनो ग्रहणमित्यप्ययुक्तं यतोऽर्वाग्भागभाव्यवयवग्राहिणा प्रत्यक्षेण परभागभाव्यवयवाग्रहणान्न तेन तद्व्याप्तिरवयविनो ग्रहीतुं शक्या व्याप्याग्रहणे तद्व्यापकस्यापि ग्रहीतुमशक्तेः[3]। प्रयोगः। यद्येन रूपेण प्रतिभासते तत्तथैव तद्व्यवहारविषयः। यथा नीलं नीलरूपतया प्रतिभासमानं तद्रूपतयैव तद्व्यवहारविषयः। अर्वाग्भागभाव्यवयवसम्बन्धितया प्रतिभासते चावयवीति[4]। न च परभागभाविव्यवहितावयवाप्रतिभासनेप्यव्यवहितोऽवयवी प्रतिभातीत्यभिधातव्यं तदप्रतिभासने तद्गतत्वेनास्याऽप्रतिभासनात्। तथा हि। यस्मिन्प्रतिभासमाने यद्रूपं न प्रतिभाति तत्ततो भिन्नम्। यथा घटे प्रतिभासमानेऽप्रतिभासमानं पटस्वरूपम्। न प्रतिभासते चार्वाग्भागभाव्यवयवसम्बन्ध्यवयविस्वरूपे प्रतिभासमाने परभागभाव्यवयवसम्बन्ध्यवयविस्वरूपम्। इति[10] कथं निरंशैकावयविसिद्धिः[11][12]? अर्वाग्भागपरभागभाव्यवयवसम्बन्धित्वलक्षणविरुद्धधर्माध्यासेप्यस्याभेदे सर्वत्र[14] भेदोपरतिप्रसङ्गोऽन्यस्य[15] भेदनिबन्धनस्यासम्भवात्। प्रतिभासभेदो भेदनिबन्धनमित्यप्यपेशलं विरुद्धधर्माध्यासं भेदकमन्तरेण प्रतिभासस्यापि भेदकत्वासम्भवात्। नापि परभागभाव्यवयवावयविग्राहिणा प्रत्यक्षेणार्वाग्भागभाव्यवयवसम्बन्धित्वं तस्य[16] ग्रहीतुं शक्यमुक्तदोषानुषङ्गात्[17]। नापि स्मरणेनार्वाक्परभागभाव्यवयवसम्बन्ध्यवयविस्वरूपग्रहः प्रत्यक्षानुसारेणास्य प्रवृत्तेः। प्रत्यक्षस्य च तद्ग्राहकत्वप्रतिषेधात्। नाप्यात्मार्वाक्परभागावयवव्यापित्वमवयविनो ग्रहीतुं समर्थो जडतया[18] तस्य तद्ग्राहकत्वानुपपत्तेः। अन्यथा स्वापमदमूर्च्छाद्यवस्थास्वऽपि तद्ग्राहित्वानुषङ्गः। प्रत्यक्षादिसहायस्याप्यात्मनोवयविस्वरूपग्राहित्वायोगोऽवयविनो निखिलावयवव्याप्तिग्राहित्वेनाध्यक्षादेः प्रतिषेधात्। ननु चार्वाग्भागदर्शने सत्युत्तरकालं परभागदर्शनानन्तरस्मरणसहकारीन्द्रियजनितं स एवायमिति प्रत्यभिज्ञाज्ञानमध्यक्षमवयविनः पूर्वापरावयवव्याप्तिग्राहकं तदप्यसाम्प्रतं प्रत्यभिज्ञाज्ञानेऽध्यक्षरूपत्वस्यैवासिद्धेः। अक्षाश्रितं विशदस्वभावं हि प्रत्यक्षम्। न चास्यैतल्लक्षणमस्तीति। अक्षाश्रितत्वे चास्याखिलावयवव्याप्यवयविस्वरूपग्राहकत्वासम्भवोऽक्षाणां सकलावयवग्रहणे व्यापारासम्भवात्[20]। न च स्मरणसहायस्यापीन्द्रियस्याविषये व्यापारः सम्भवति। यद्यस्याविषयो न तत्तत्र

---

१ सर्वथा तयोर्भेदात् ॥ २ बहु ॥ ३ दण्डाग्रहणे तत्सम्बन्धवान्दण्डी पुमान् ग्रहीतु न शक्यते यथा ॥ ४ अवयवी धर्मी अर्वाग्भागभाव्यवयवसम्बन्धितया तद्व्यवहारविषयस्तथैव प्रतिभासमानत्वादित्युपरिष्टाद्योज्यम् ॥ ५ परभागभाविव्यवहितावयवाप्रतिभासमानेपि अव्यवहितोऽवयवी भाति । ततस्तथैव प्रतिभासमानत्वमसिद्धमित्युक्ते सत्याह ॥ ६ अवयवी परभागभाव्यऽवयवगतत्वेन न प्रतिभासतेऽगृहीताधारत्वान्मेरुमूर्ध्नि मोदकराशिवत् ॥ ७ भिन्नम् ॥ ८ तस्मिन्प्रतिभासमानेऽप्रतिभासमानत्वादिति हेतो ॥ ९ तस्माद्भिन्नमेव ॥ १० भागद्वये सति ॥ ११ तन्तुलक्षणैरंशै रुत्वा पटोंऽशी प्रतिपाद्यते तस्मात्सर्वथा भिन्ना अतो निरंशयवयवी ते तस्मात्सर्वथा भिन्ना अतस्तेषा विनाशेपि अस्य विनाशो नातो नित्यत्वमिति भाव ॥ १२ तव परस्य ॥ १३ व्यवहिताऽव्यवहितलक्षण ॥ १४ घटपटादौ ॥ १५ विरुद्धधर्माध्यासादपरस्य ॥ १६ अवयविन ॥ १७ व्याप्याग्रहणे तद्व्यापकस्यापि ग्रहीतुमशक्तेरित्यादि ॥ १८ परमते जड आत्मा ॥ १९ आदिना स्मरणग्रहणम् ॥ २० स्मरण हि पूर्वभागस्य ॥ २१ तदविषयत्वात् ॥

स्मरणसहायमपि प्रवर्त्तते। यथा परिमलस्मरणसहायमपि लोचनं गन्धे। अविषयश्च व्यवहितोऽक्षाणां परभागभाव्यवयवसम्बन्धित्वलक्षणोऽवयविनः स्वभाव इति। न चानेकावयवव्यापित्वमेकस्वभावस्यावयविनो घटते। तथा हि। यन्निरंशैकस्वभावं द्रव्यं तन्न सकृदनेकद्रव्याश्रितं, यथा परमाणु। निरंशैकस्वभावं चावयविद्रव्यमिति। यद्वा यदनेकं द्रव्यं तन्न सकृन्निरंशैकद्रव्यान्वितम्। यथा कुटकुड्यादि। अनेकद्रव्याणि चावयवा इति। अस्तु वानेकत्रावयविनो वृत्तिः। तथाप्यस्यासौ सर्वात्मनैकदेशेन वा स्यात्?[1] यदि सर्वात्मना प्रत्येकमवयवेष्ववयवी वर्तेत तदा यावन्तोऽवयवास्तावन्त एवावयविनः स्युः। तथा चानेककुण्डादिव्यवस्थितबिल्वादिवदनेकावयव्युपलम्भानुषङ्गः। अथैकदेशेनात्राप्यस्यानेकत्र वृत्तिः किमेकावयवक्रोडीकृतेन स्वभावेन स्वभावान्तरेण वा स्यात्? तत्राद्यविकल्पोऽयुक्तस्तस्य तेनैवावयवेन क्रोडीकृतत्वेनान्यत्र[3] वृत्त्ययोगात्। प्रयोगः। यदेकक्रोडीकृतं वस्तुस्वरूपं न तदेवान्यत्र वर्त्तते यथैकभाजनक्रोडीकृत-माम्रादि न तदेव भाजनान्तरमध्यमध्यास्ते। एकावयवक्रोडीकृतं चावयविस्वरूपमिति। वृत्तौ वान्यत्रात्रावयवे वृत्त्यनुपपत्तिरपरस्वभावाभावात्। एकावयव-सम्बद्धस्वभावस्याऽतद्देशावयवान्तरसम्बन्धाभ्युपगमे च तदवयवानामेकदेशतापत्तिः। एकदेशतायां चैकात्म्यमविभक्तरूपत्वात्। विभक्तरूपावस्थितौ चैकदेशत्वं न स्यात्। अथ स्वभावान्तरेणासाववयवान्तरे वर्त्तते तदास्य निरंशताव्याघातः। कथञ्चिदनेकत्वप्रसङ्गश्च स्वभावभेदात्मकत्वाद्वस्तुभेदस्य। ते च स्वभावा यद्यतोऽर्थान्तरभूतास्तदा तेष्वप्यसौ स्वभावान्तरेण वर्तेतेत्यनवस्था। अथानर्थान्तरभूतास्तर्ह्यवयवैः[11] किमपराद्धं येनैते तथा नेष्यन्ते। तदिष्टौ चावयविनोऽनेक-त्वमनित्यत्वं च स्वशिरस्ताडं पूत्कुर्वतोऽप्यायातम्[13]। यदि चावयव्यविभागः स्यात्तदैकदेशस्यावरणे रागे चाखिलस्यावरणं रागश्चानुपज्यते रक्तारक्तयोरावृतानावृतयोश्चावयविरूपयोरेकत्वेनाभ्युपगमात्। न चैवं प्रतीतिः प्रत्यक्षविरोधात्। न चान्योन्यं विरुद्धधर्माध्यासेऽप्येकं[14] युक्तमत एवानुमानविरोधाच्च। तथा हि। यद्विरुद्धधर्माध्यासितं तन्नैकं यथा कुटकुड्याद्युपलभ्यानुपलभ्यस्वभावमावृतानावृतादिस्वरूपेण। विरुद्धधर्माध्यासितं चावयविस्वरूपमिति[15]। तथाप्येकत्वे विश्वस्यैकद्रव्यत्वानुषङ्गः। ननु वस्त्रादे[16] रागः कुङ्कुमादिद्रव्येण संयोगः। स चाव्याप्यवृत्तिस्तत्कथमेकत्र[17] रागे सर्वत्र राग एकदेशावरणे सर्वस्यावरणम्? तद-प्यसारं यतो यदि पटादि निरंशमेकं द्रव्यं तदा कुङ्कुमादिना किं तत्राव्याप्तं येनाऽव्याप्यवृत्तिः संयोगो भवेत्? अव्याप्तौ वा भेदप्रसङ्गो व्याप्ताव्याप्तस्वरू-

---

१ परपरिकल्पितमवयविन स्वरूपमऽवयवप्रधानतया निराकुर्वन्नाह ॥ २ एकस्वभावत्व च नित्यनिरंशैकस्वभावत्वात्। अवयवान्तरे ॥ ३ अवयवान्तरे ॥ ४ विवक्षितावयवे ॥ ५ तेषा=विवक्षिताविवक्षितानाम् ॥ ६ विवादापन्ना अवयवा एकदेशत्वभाजो भवन्त्येकस्वभावेनावयविना व्याप्यत्वादेकावयववत् ॥ ७ अवयवानाम् ॥ ८ अविभक्तरूपत्वमसिद्धमित्युक्ते सत्याह ॥ ९ किंतु साशत्वप्रसङ्ग ॥ १० अवयविन सकाशादभिन्ना ॥ ११ तन्तुलक्षणे ॥ १२ अवयवी धर्म्यऽनेको भवतीति साध्यो धर्मोऽवयवेभ्योऽनर्थान्तरत्वात्तत्स्वरूपवत्। अवयवी धर्म्यऽनित्यो भवति अवयवेभ्योऽनर्थान्तरत्वात्तत्स्वरूपवत्। अवयवाना वहुत्वादनित्यत्वाच्चेति उभयत्र हेतु ॥ १३ वैशेषिकस्य ॥ १४ निरशम् ॥ १५ तस्मान्नैकम् ॥ १६ एकदेशे ॥ १७ अव्याप्यवृत्तिर्गुण मयोगलक्षण इति वचनात् ॥ १८ एकदेशे ॥ १९ देशे ॥ २० देशस्य ॥

पयोर्विरुद्धधर्माध्यासेनैकत्वायोगात्[1] । किञ्चास्याव्याप्यवृत्तित्वं सर्वद्रव्याव्यापकत्वमेकदेशवृत्तित्वं वा ? न तावत्प्रथमः पक्षो द्रव्यस्यैकस्य सर्वशब्दविषयत्वानभ्युपगमात्[2] । अनेकत्र हि सर्वशब्दप्रवृत्तिरिष्टा । नापि द्वितीयस्तस्यैकदेशासम्भवात् । अन्यथा सावयवत्वप्रसङ्गात् । ततो नास्त्यवयवी वृत्तिविकल्पाद्यनुपपत्तेरिति[3] । ननु चावयविनो निरासे यत्साधनं तत्किं स्वतन्त्रं[4] प्रसङ्गसाधनं[5] वा ? स्वतन्त्रं चेद्धर्मिसाध्यपदयो[6]र्व्याघातः[7] । यथेदं च नास्ति चेति । हेतोराश्रयासिद्धत्वं चावयविनो[8]ऽप्रसिद्धेः । न च वृत्त्या सत्त्वं व्याप्तं समवायवृत्त्यनभ्युपगमे[9]ऽपि भवतां रूपादेः सत्त्वाभ्युपगमात्[11] । एकदेशेन[12] सर्वात्मना वावयविनो वृत्तिप्रतिषेधे विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वात्[13] प्रकारान्तरेण[14] वृत्तिरभ्युपगता स्यात् । अन्यथा[15] न वर्तेत इत्येवाभिधातव्यम्[16] । वृत्तिश्च[17] समवायस्तस्य सर्वत्रैकत्वान्निरवयवत्वाच्च कार्त्स्न्यैकदेशशब्दाविषयत्वम् । अथ प्रसङ्गसाधनं परस्येष्ट्या[20]ऽनिष्टापादनात्[21] । ननु परेष्टिः[22] प्रमाणमप्रमाणं वा ? यदि प्रमाणं तर्हि तयैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य[23] । न चानेनैवास्या[24]ऽबाधा तामन्तरेणास्या[25]ऽपक्षधर्मत्वात् । अथाप्रमाणं तर्हि प्रमाणं विना प्रमेयस्यासिद्धिरित्यभिधातव्यम् ।-किमनुमानोपन्यासेनास्याऽपक्षधर्मतयाऽप्रमाणत्वात् -। इत्यप्यपरीक्षिताभिधानं यतः प्रसङ्गसाधनमेवेदम्[28] । तच्च साध्यसाधनयोर्व्याप्यव्यापकभावसिद्धौ व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको व्यापकाभावो वा व्याप्याभावाविनाभावी[30]त्येतत्प्रदर्शनफलम्[31,32] । व्यापकभावसिद्धिश्चात्र[33] लोकप्रसिद्धैव । लोको हि कस्यचित्क्वचित्सर्वात्मना वृत्तिमभ्युपगच्छति । यथा बिल्वादेः कुण्डादौ । कस्यचित्त्वेकदेशेन यथानेकपीठादिशयितस्य चैत्रादेः । यत्र[34] च प्रकारद्वयं व्यावृत्तं[35] तत्र वृत्तेरभाव एव । इति कथं न व्याप्तिर्यतोऽत्र[36] प्रसङ्गसाधनस्यावकाशो न स्यात् ? निरस्ता चानेकस्मिन्नेकस्य वृत्तिः प्रागेव । यच्चोक्तं 'परेष्टिः प्रमाणमप्रमाणं वा' इत्यादि, तदप्ययुक्तं यतः प्रमाणाप्रमाणचिन्ता संवादविसंवादाधीना । परेष्टिमात्रेण च प्रतिपन्नेऽवयविनि संवादकप्रमाणाभावादप्रामाण्यं स्वयमेव भविष्यति ।

---

१ परेण ॥ २ तथा च निरंशत्वव्याघात स्यात् ॥ ३ शशविषाणवत् ॥ ४ पक्षहेतुदृष्टान्तादयो यत्र विद्यन्ते तत्स्वतन्त्रम् ॥ ५ परेष्टानिष्टापादन यत्र तत्प्रसङ्गसाधनम् ॥ ६ अवयवी धर्मी । नास्तीति साध्यपदम् ॥ ७ स्वमतापेक्षया वक्ति वैशेषिक । लोकप्रसिद्धोऽस्ति नास्तीति प्रतिपाद्यते जैनैरिति विरोध इति भाव । परस्पर विरोध इत्यर्थ ॥ ८ वादिनो जैनस्यापेक्षयाऽवयविनो धर्मिण ॥ ९ समवायवृत्त्यावयवेष्ववयवी वर्तते यत ॥ १० जैनेन ॥ ११ तादात्म्येन, न तु समवायेनेति भाव ॥ १२ किञ्च ॥ १३ शेषाभ्यनुज्ञा=सामान्याभ्युपगम ॥ १४ समवायेन ॥ १५ विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वाभावे ॥ १६ न तु सर्वा मनेकदेशेनेत्यभिधातव्यम् ॥ १७ अवयवेष्ववयविन ॥ १८ अवयवेषु ॥ १९ अवयवेष्ववयविन समवाय कार्त्स्न्यैनैकदेशेन वेति शब्द ॥ २० प्रतिवादिनो वैशेषिकस्य ॥ २१ पराभ्युपगमेन परस्यैवानिष्टापादनात् ॥ २२ अवयवेभ्यो भिन्नोऽवयवी सर्वथा विद्यते इति परेष्टि ॥ २३ अवयवी नास्ति वृत्तिविकल्पाद्यनुपपत्तेरिति ॥ २४ अवयवी नास्ति वृत्तिविकल्पाद्यनुपपत्तेरित्यस्य ॥ २५ विपरीतानुमानेन परेष्टे पराभ्युपगमस्य यदा बाधा स्यात्तदा परेष्टिविषयस्यावयविनोऽसत्त्वात्तद्धर्मत्व हेतोर्नास्तीति भाव ॥ २६ अवयविरूपस्य ॥ २७ जैनेन ॥ २८ एवकार स्वतन्त्रसाधननिरासार्थ ॥ २९ क्वचिद्दृष्टान्ते ॥ ३० अविनाभूत ॥ ३१ धर्मिणि ॥ ३२ प्रसङ्गसाधन भवति ॥ ३३ कार्त्स्न्यैकदेशवृत्तित्वयो ॥ ३४ अवयवेषु ॥ ३५ अवयवेष्ववयविन सर्वात्मनैकदेशेन वा वृत्ते ॥ ३६ एकदेशेन सर्वात्मना वेति प्रकारद्वयेन वृत्तिर्व्याप्ता । तया चाऽवयविसत्त्व व्याप्तमिति हेतो ॥ ३७ एकस्यावयविनोऽनेकेष्ववयवेषु वृत्तिर्भविष्यति नन्वित्याशङ्कायामाहाचार्य ॥

ननु चेहेदमिति प्रत्ययप्रतीतेः प्रत्यक्षेणैवावयविनो वृत्तिसिद्धेः कथं संवादकप्रमाणाभावो यतोस्याः प्रामाण्यं न स्यादित्यप्यसङ्गतं तन्त्वाद्यवयवेषु व्यतिरिक्तस्य पटाद्यवयविनः समवायवृत्तेः स्वप्नेप्यप्रतीतेः। न च भेदेनाप्रतिभासमानस्येहेदं वर्त्तते इति प्रतीतिर्युक्ता। न हि भेदे[2]नाप्रतिभासमाने कुण्डे इह कुण्डे वदराणीति प्रत्ययो दृष्टः। यद्यप्युक्तं वृत्तिश्च समवायस्तस्य सर्वत्रैकत्वान्निरवयवत्वाच्च कार्त्स्न्यैकदेशशब्दाविषयत्वमिति तदपि स्वमनोरथमात्रं—समवायस्याग्रे प्रबन्धेन[3] प्रतिषेधात्। ननु तथाप्येकस्मिन्नवयविनि कार्त्स्न्यैकदेशशब्दाप्रवृत्तेरयुक्तोयं प्रश्नः किमेकदेशेन प्रवर्त्तते कार्त्स्न्येन वेति। कृत्स्नमिति ह्येकस्याशेषाभिधानम्। एकदेश इति चानेकत्वे[5] सति कस्य[6]चिदभिधानम्। ताविमौ कार्त्स्न्यैकदेशशब्दावेकस्मिन्नवयविन्यनुपपन्नावित्यप्यसमीचीनमेकत्रैकत्वेनावयविनोऽप्रतिभासमानात्प्रकारान्तरेण च वृत्ते[10]रसम्भवात्। न खलु कुण्डादौ वदरादेः स्तम्भादौ वा वंशादेः कार्त्स्न्यैकदेशं परित्यज्य प्रकारान्तरेण वृत्तिः प्रतीयते। ततोऽवयवेभ्यो भिन्न[11]स्यावयविनो विचार्यमाणस्यायोगान्नासौ तथाभूतोभ्युपगन्तव्यः। किं तर्हि? तन्त्वाद्यवयवानामेवावस्थाविशेषैः[12] स्वात्मभूतैः[13] शीतापनोदाद्यर्थक्रियाकारी प्रमाणतः प्रतीयमानः पटाद्यवयवीति प्रेक्षादक्षैः प्रतिपत्तव्यम्।

ननु[14] रूपा[15]दिव्यतिरेकेणापर[16]स्यावस्थातुः शीताद्यपनोदसमर्थस्याप्रतीतितोऽसत्त्वात्कस्यावयवित्वं भवतापि प्रसाध्यते? चक्षुः[17]प्रभवप्रत्यये हि रूपमेवावभासते नापरस्तद्वान्। एवं रसनादिप्रत्ययेपि वाच्यमित्यविचारितरमणीयं यतः किमेकस्य रूपादिमतोऽसम्भवो विरुद्धधर्माध्यासेनैकत्रै[18]कत्वा[19]नेकत्व[20]योस्तादात्म्यविरोधात्तद्ग्रहणोपायासम्भवाद्वा? प्रथमपक्षे तत्र तयोः कथञ्चित्तादात्म्यं विरुध्यते सर्वथा वा? सर्वथा चेत्सिद्धसाध्यता। कथञ्चि[21]देकत्वं तु रूपादिभिर्विरुद्धधर्माध्यासे[22]प्येकस्या[23]ऽविरुद्धं चित्रज्ञानस्येव नीलाद्याकारैर्विकल्पज्ञानस्येव वा विकल्पेतरा[24]कारैरिति। यथा[25] च रूपादिरहितं प्रत्यक्षे न प्रतिभासते तथा तद्रहिता रूपादयोपि। न खलु मातुलिङ्गद्रव्यरहितास्तद्रूपादयः स्वप्नेप्युपलभ्यन्ते। वस्तुन[26]श्चेदमेवाध्यक्षत्वं यदनात्मस्वरूपपरिहारेण बुद्धौ स्वरूपसमर्पणं नाम। इमे तु रूपादयो द्रव्यै[27]रहितास्तत्र स्वरूपं न समर्पयन्ति प्रत्यक्षतां च स्वीकर्तुमिच्छन्तीत्यमूल्यदानक्रयिणः[28]। किञ्चेदं स्तम्भादिव्यपदेशार्हं रूपं किमेकं प्रत्येक-

१ सकाशात् ॥ २ वदरेभ्य ॥ ३ विस्तरेण ॥ ४ अशेषाणा स्वभावानाम् ॥ ५ देशानाम् ॥ ६ देशस्य ॥ ७ सर्वथा ॥ ८ अवयवेषु ॥ ९ परमतापेक्षया ॥ १० वर्त्तनस्य ॥ ११ सर्वथा ॥ १२ आतानवितानीभूतपरिणामविशेष ॥ १३ अवयवेभ्य कथञ्चिदभिन्न. ॥ १४ रूपिप्रतिषेधक सौगत ॥ १५ आदिना रसगन्धवर्णशब्दा ॥ १६ अवयविरूपपदार्थस्य ॥ १७ हेतोरसिद्धत्व परिहरति पर ॥ १८ एकस्मिन्वस्तुनि ॥ १९ अवयविन ॥ २० रूपादीनाम् ॥ २१ द्रव्यरूपतया ॥ २२ साहित्ये ॥ २३ अवयविन ॥ २४ इतरो=निर्विकल्पक पूर्वसविकल्पकादुपादानभूतान्निर्विकल्पकात्सहकारिभूतात्सविकल्पकमुत्पद्यते तदा तदुभयोराकार विभ्रति ॥ २५ इदमेव सम्भावयति ॥ २६ तर्हि रूपादयो द्रव्यरहिता बुद्धौ स्वरूपसमर्पका भविष्यन्तीत्याह ॥ ॥ २७ द्रव्यरहितत्वादिति प्रथमान्तोपि हेतुर्ज्ञेय ॥ २८ मूल्य स्वरूपसमर्पणलक्षणमदत्त्वा क्रयिण इति भाव ॥

द्रव्यं स्व

मनेकानंशपरमाणुसञ्चयमात्रं वा? प्रथमपक्षेऽधोमध्योर्द्ध्वात्मकैकरूपवद्रसाद्यात्मकैकस्तम्भद्रव्यप्रसङ्गः । द्वितीयपक्षे तु किमेकमनेकरूपरमाण्वाकारं ज्ञानं तद्ग्राह-
कमेकैकपरमाण्वाकारमनेकं वा? प्रथमविकल्पे चित्रैकज्ञान[1]वद्रूपाद्यात्मकैकद्रव्यप्रसिद्धिरनिषेध्या स्यात् । द्वितीयविकल्पे तु परस्परविविक्तज्ञानपरमाणुप्रति-
भासं[2]स्यासंवे[3]दनात्सकलशून्यतानुषङ्गः[4] । अथ तद्ग्रहणोपायासम्भवाद्रूपादिमतो द्रव्यस्याभावस्तन्न यमहमद्राक्षं तमेतर्हि स्पृशामीत्यनुसन्धान[5]प्रत्ययस्य तद्ग्राहिणः
सद्भावात् । न च द्वाभ्यामिन्द्रियाभ्यां[6] रूपस्पर्शाधारैकार्थग्रहणं विना प्रतिसन्धानं न्याय्यं रूपस्पर्शयोश्च प्रतिनियतेन्द्रियग्राह्यत्वादेतन्न सम्भवति । चेतनत्वा-
च्चात्मनः स्मरणा[8]दिपर्यायसहायस्यार्वाक्परभागावयवै[9]र्व्यापित्वग्रहणमप्यवयविद्रव्यस्योपपन्नम् । प्रसाधितं चानुसन्धानस्य सविपर्ययत्वमित्यलमतिप्रसङ्गेन[12] । तन्न
परेषां[13] चतुःसंख्यं द्रव्यं यथोपवर्णितस्वरूपं घटते सर्वथा[14] नित्यस्वभावाणूनामनर्थक्रियाकारित्वेनासम्भवतस्तदारब्धद्व्यणुकाद्यवयविद्रव्यस्याप्यसम्भवात् । न हि
कारणाभावे कार्यं प्रभवत्यतिप्रसङ्गात् । स्वावयवेभ्योऽर्थान्तरस्यावयविनो ग्राहकप्रमाणाभावाच्चासत्त्वम् । जातिभेदेन[15] पृथिव्यादिद्रव्याणां भेदोपवर्णनं चानुपपन्नं
स्वरूपासिद्धौ शशशृङ्गवद्भेदोपवर्णनासम्भवात् । जातिभेदेनात्यन्तं तेषां भेदे चान्योन्यमुपादानोपादेयभावो न स्यात् । येषां हि जातिभेदेनात्यन्तिको भेदो
न तेषां तद्भावः । यथात्मपृथिव्यादीनाम् । तथा तद्भेदश्च पृथिव्यादिद्रव्याणामिति । तन्तुपटाद्युपादानोपादेयभावेन व्यभिचारपरिहारार्थमात्यन्तिकविशेषणम् । न
हि तत्रात्यन्तिकस्तद्भेदः पृथिवीत्वादिसामान्यस्याभिन्नस्यापीष्टेः । नन्वेवं द्रव्यत्वादिना पृथिव्यादीनामप्यभेदात्तद्भावोस्तु + तन्नात्मपृथिव्यादीनामप्येवं तद्भे-
दाभावादुपादानोपादेयभावः स्यात् । तथा चात्माद्वैतप्रसङ्गात्कुतः पृथिव्यादिभेदः स्यात्? तन्नात्यन्तिकभेदे पृथिव्यादीनां तद्भावो घटते । अस्ति[21] चासौ
चन्द्रकान्ताज्जलस्य जलान्मुक्ताफलादेः काष्ठादनलस्य व्यजनादेश्चानिलस्योत्पत्तिप्रतीतेः । चन्द्रकान्ताद्यन्तर्भूताज्जलादेरेव द्रव्याज्जलाद्युत्पत्तिरित्यप्यनुपपन्नं तत्र
तत्सद्भावावेदकप्रमाणाभावात् । तथापि चन्द्रकान्तादौ जलाद्यभ्युपगमे मृत्पिण्डादौ घटाद्यभ्युपगमोपि कर्तव्य[22] इति सांख्यदर्शनमेव स्यात् । ततो मृत्पिण्डादौ
घटादिवच्चन्द्रकान्तादौ जलादेरप्यप्रतीतितोऽभावादात्यन्तिकभेदे चोपादानोपादेयभावासम्भवात् पर्यायभेदेनान्योन्यं पृथिव्यादीनां भेदो रूपरसगन्धस्पर्शात्मक-

---

१ सौगतमते चित्रैकज्ञान स्वीकृतम् ॥ २ एकस्मिन्वस्तुनि ॥ ३ लोके ॥ ४ ज्ञेयग्राहकज्ञानाभावात् ज्ञेयस्याप्यभावात् ॥ ५ अनुसन्धान=प्रत्यभिज्ञानम् ॥ ६ चक्षु स्पर्शनाभ्याम् ॥ ७ अनेन प्रत्यक्षमपि तद्ग्राहकमुक्तम् । ततश्चात्म-
सिद्धिरिति ॥ ८ वैशेषिकमतनिरासार्थम् ॥ ९ बौद्धमतनिरासार्थम् ॥ १० रूपस्पर्शौ ॥ ११ प्रत्यभिज्ञानसमर्थनसमये ॥ १२ अनुसन्धानसमर्थनेन ॥ १३ वैशेषिकाणाम् ॥ १४ सर्वथा नित्यानित्यतया ॥ १५ पृथिवीत्वादिना ॥
१६ ययोर्जातिभेदेन भेदो न तयोरुपादानोपादेयभावोस्तीत्युक्ते ततस्तन्तुपटादौ व्यभिचारो भवति ॥ १७ तन्तुत्वपटत्वजातिभेदे सत्यपि ॥ १८ तन्तुपटादिषु ॥ १९ अयमात्मेमे पृथिव्यादय इति ॥ २० मा भव-
त्वित्युक्ते सत्याह ॥ २१ पृथिवीरूपात् ॥ २२ सर्वं सर्वत्र विद्यते इति वचनात् ॥

पुद्गलद्रव्यरूपतया चाभेद इत्यनवद्यम् । रूपादिसमन्वयश्च[1][2] गुणपदार्थपरीक्षायां चतुर्णामपि समर्थयिष्यते[3] । तत्र नित्यादिस्वभावमात्यन्तिकभेदभिन्नं च पृथिव्यादिद्रव्यं घटते ।

नाप्याकाशादि सर्वथा नित्यनिरंशत्वादिधर्मोपेतस्यास्याप्यप्रतीतेः । ननु चाकाशस्य तद्धर्मोपेतत्वं शब्दादेव लिङ्गात्प्रतीयते । तथा हि । ये विनाशित्वोत्पत्तिमत्त्वादिधर्माध्यासितास्ते क्वचिदाश्रिता[4], यथा घटादयः[5] । तथा च शब्दा इति । गुणत्वाच्च[6] ते क्वचिदाश्रिता, यथा रूपादयः । न च गुणत्वमसिद्धम् । तथा हि । शब्दो गुणः प्रतिपिध्यमानद्रव्यकर्मभावत्वे सति सत्तासंम्बन्धित्वाद्रूपादिवत् । न चेदं साधनमसिद्धम् । तथा हि । शब्दो द्रव्यं न भवत्येकद्रव्यत्वाद्रूपादिवत् । न चेदमप्यसिद्धम् । तथा हि । एकद्रव्यः शब्दः सामान्यविशेषवत्त्वे[11] सति वाह्यैकेन्द्रियप्रत्यक्षत्वात्तद्वदेव । सामान्यविशेषवत्त्वादित्युच्यमाने हि परमाणुभिर्व्यभिचारस्तन्निवृत्त्यर्थमिन्द्रियप्रत्यक्षत्वादित्युक्तम् । तथापि घटादिना व्यभिचारस्तन्निरासार्थमेकविशेषणम् । एकेन्द्रियप्रत्यक्षत्वादित्युच्यमाने आत्मना व्यभिचारस्तन्निवृत्त्यर्थं वाह्यविशेषणम् । रूपत्वादिना[16] व्यभिचारपरिहारार्थं च सामान्यविशेषवत्त्वे सतीति विशेषणम् । तथा कर्मापि न भवत्यसौ संयोगविभागाकारणत्वाद्रूपादिवदेवेति । तस्मात्सिद्धं प्रतिपिध्यमानद्रव्यकर्मभावत्वं शब्दस्य । सत्तासम्बन्धित्वादित्युच्यमाने च द्रव्यकर्मभ्यामनेकान्तः । तन्निवृत्त्यर्थं प्रतिपिध्यमानद्रव्यकर्मभावत्वे सतीति विशेषणम् । प्रतिपिध्यमानद्रव्यकर्मभावत्वादित्युच्यमानेपि सामान्यादिना व्यभिचारस्तन्निवृत्त्यर्थं सत्तासम्बन्धित्वादित्यभिधानम्[23] । तत्सिद्धं गुणत्वेन क्वचिदाश्रितत्वं शब्दानाम् । यश्चैषामाश्रयस्तत्पारिशेष्यादाकाशम् । तथा हि । न तावत्स्पर्शवतां परमाणूनां विशेषगुणः शब्दोऽस्मदादिप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवत् । नापि कार्यद्रव्याणां पृथिव्यादीनां विशेषगुणोसौ कार्यद्रव्यान्तराप्रादुर्भावेप्युपजायमानत्वात्सुखादिवत्,

१ पृथिव्यामेव गन्धोऽप्स्वेव रस इति वचनात्कथ चतुर्णामविशेषेण रूपाद्यात्मकत्वमित्याह ॥ २ समन्वय सम्बन्ध ॥ ३ जैनै ॥ ४ गगने ॥ ५ ॥ स्वावयवेषु ॥ ६ तस्मात्क्वचिदाश्रिता भवन्त्येव ॥ ७ आकाशविशेषगुण शब्द इति वचनात् ॥ ८ रूपिद्रव्ये ॥ ९ शब्दो द्रव्य न भवति कर्म च नेति ॥ १० त्रय पदार्था स्वरूपेणासन्त सत्तासम्बन्धात्सन्त इति वचनात् ॥ ११ गगनलक्षणमेक द्रव्य यस्य स एकद्रव्यस्तस्य भाव । दृष्टान्तपक्षे घटाद्येकद्रव्य यस्य रूपादे ॥ १२ सामान्यशब्देनात्रापरसामान्य गृह्यते ॥ १३ एकद्रव्यत्वाभावात् ॥ १४ घटादीनामेकद्रव्यत्त्वाभावात् ॥ १५ घटस्य स्पर्शनचक्षुरिन्द्रियाभ्या ग्राह्यत्वात् ॥ १६ यतो मनोलक्षणेन्द्रियप्रत्यक्ष आत्मा ॥ १७ अनेकद्रव्याश्रितत्वात् ॥ १८ विशेषणम् ॥ १९ इदानीं विशेष्य विचारयति ॥ २० सत्तासम्बन्धित्वे द्रव्यकर्मणोर्गुणत्वाभावात् ॥ २१ आदिना विशेषसमवाययोर्ग्रहणम् ॥ २२ गुणत्वाभावात् ॥ २३ सामान्यविशेषसमवाया स्वरूपेण सन्तो न तु सत्तासम्बन्धादित्यभिधानात् ॥ २४ पृथिव्यादिचतुर्णाम् ॥ २५ योगिप्रत्यक्षेण व्यभिचारपरिहारार्थम् ॥ २६ तेपामतीन्द्रियत्वात्तद्गुणोप्यतीन्द्रिय एवेति भाव ॥ २७ कार्य=द्व्यणुकादि ॥

अकारणगुणपूर्वकत्वादिच्छादिवत्, अयावद्द्रव्यभावित्वात्, अस्मदादिपुरुषान्तरप्रत्यक्षत्वे सति पुरुषान्तराप्रत्यक्षत्वाच्च तद्वत्, आश्रयाद्न्येयादेरन्यत्रोपलब्धेश्च। स्पर्शवतां हि पृथिव्यादीनां यथोक्तविपरीता गुणाः प्रतीयन्ते। नाप्यात्मविशेषगुणोऽहङ्कारेण विभक्तग्रहणाद्बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वाच्च। बुद्ध्यादीनां चात्मगुणानां तद्वैपरीत्योपलब्धेः। नापि मनोगुणोऽस्मदादिप्रत्यक्षत्वाद्रूपादिवत्। नापि दिक्कालविशेषगुणस्तयोः पूर्वापरादिप्रत्ययहेतुत्वात्। अतः पारिशेष्याद्गुणो भूत्वाकाशस्यैव लिङ्गम्। तच्च शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकम्। विभु च सर्वत्रोपलभ्यमानगुणत्वात्, नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वाच्चात्मादिवत्। नित्यं शब्दाधिकरणं द्रव्यं सामान्यविशेषवत्त्वे सत्यनाश्रितत्वादात्मादिवत्। अनाश्रितं शब्दाधिकरणं द्रव्यं गुणवत्त्वे सत्यस्पर्शवत्त्वात्तद्वत्। असमवायवत्त्वे सत्यनाश्रितत्वाच्चास्य द्रव्यत्वमिति।

अत्र प्रतिविधीयते। शब्दानां सामान्येनाश्रितत्वं किमेतैः साध्यते नित्यैकामूर्तविभुद्रव्याश्रितत्वं वा? प्रथमपक्षे सिद्धसाध्यता तेषां पुद्गलकार्यतया तदाश्रितत्वाभ्युपगमात्। द्वितीयपक्षे तु संदिग्धविपक्षव्यावृत्तिकत्वेनानैकान्तिको हेतुस्तथाभूतसाध्यान्वितत्वेनास्य क्वचिद्दृष्टान्तेऽप्रसिद्धेः। प्रतिषिध्यमानकर्मभावत्वे सत्यपि च प्रतिषिध्यमानद्रव्यभावत्वमसिद्धं द्रव्यत्वाच्छब्दस्य। तथा हि। द्रव्यं शब्दः स्पर्शाल्पत्वमहत्त्वपरिमाणसंख्यासंयोगगुणाश्रयत्वात्। यद्यदेवंविधं तत्तद्द्रव्यं यथा वदरामलकबिल्वादि। तथा चायं शब्दस्तस्माद्द्रव्यम्। तत्र न तावत्स्पर्शाश्रयत्वमस्यासिद्धम्। तथा हि। स्पर्शवाञ्छब्दः स्वसम्बद्धार्थान्तराभिघातहेतुत्वान्मुद्गरादिवत्। सुप्रतीतो हि कंसपात्र्यादिध्वानाभिसम्बन्धेन श्रोत्राद्यभिघातस्तत्कार्यस्य बाधिर्यादेः प्रतीतेः। स चास्याऽस्पर्शवत्त्वे न स्यात्। न ह्यस्पर्शवता कालादिनाभिसम्बन्धेऽसौ दृष्टः। न च शब्दसहचरितेन वायुना तदभिघात इत्यभिधातव्यं शब्दाभिसम्बन्धान्वयव्यतिरेकानुविधायित्वात्तस्य। तथाभूतेऽपि तदभिघातेऽन्यस्यैव हेतुकल्पने तत्रापि कः समाश्वासः?

---

१ कारणस्य गगनस्य गुण कारणगुण। न विद्यते कारणगुण पूर्वं यस्य शब्दस्यासावकारणगुणपूर्वकस्तस्य भावस्तस्मात्। पृथिव्यादिविशेषगुणे परमाणुरूपस्य कारणस्य गुणपूर्वकत्वमस्तीति ॥ २ दृष्टान्तपक्षे आत्मा कारणम् ॥ ३ गगने सर्वत्र न विद्यते यत ॥ ४ इच्छादिवदेव ॥ ५ योतिशयेन दूरान्तरित ॥ ६ सर्वत्र सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ७ कार्यद्रव्यान्तरप्रादुर्भावे समुपजायमानलक्षणा ॥ ८ अह सुख्यह दु खीत्यादिवद्दहशब्दवान्। इत्यहकारेण विभक्तस्य रहितस्य शब्दस्य ग्रहणात् ॥ ९ सन्दिग्धानैकान्तिकत्वे सत्याह ॥ १० हेतोरसिद्धत्वपरिहारार्थमिदम् ॥ ११ दिगाकाशकालादि सर्वगत परमते शब्दस्य दिक्कालविशेषगुणत्वे शब्द एव तयोस्सद्भावे लिङ्ग स्यादिति भाव ॥ १२ अविशेष एकलम् ॥ १३ पटेन व्यभिचारपरिहारार्थम् ॥ १४ परमाणुभिर्व्यभिचारपरिहारार्थम् ॥ १५ स गुण शब्द ॥ १६ नित्यत्वमसिद्धमित्युक्ते सत्याह ॥ १७ अभावेन वा व्यभिचारपरिहारार्थम् ॥ १८ घटेन व्यभिचारपरिहारार्थम् ॥ १९ असिद्धत्वे सत्याह ॥ २० गुणेन व्यभिचारपरिहारार्थ गुणवत्त्वमिति विशेषण गुणाना निर्गुणत्वात् ॥ २१ समवायेनाभावेन वा व्यभिचारपरिहारार्थम् ॥ २२ गुणत्वादिति हेतो ॥ २३ इति विशेषणम् ॥ २४ अतोऽनुमानान्नभसो द्रव्यसिद्धिराश्रयमात्रस्यैव सिद्धिप्रसङ्गात् ॥ २५ जैनानाम् ॥ २६ विपक्ष अनित्यानेकमूर्ताऽविभुद्रव्याश्रितम् ॥ २७ रूपादयो दृष्टान्तभूता अनित्यादिविशिष्टपक्षे वर्तन्तेऽतोऽयमपि हेतुस्तादृशे पक्षे वर्तते अन्यादृशे वेति सन्दिग्ध ॥ २८ गुणत्वात् ॥ २९ नित्यैकव्याप्याश्रयाश्रितत्वे साध्यविकलो दृष्टान्तो रूपादीनां तद्विपरीताश्रयाश्रितत्वात् ॥ ३० ते च ते गुणाश्च ॥

शक्यं हि वक्तुं न वाय्वाद्यभिसम्बन्धात्तदभिघातः किन्त्वन्येन[1] । इत्यनवस्थानं हेतूनाम् । गुणत्वेनास्य निर्गुणत्वात्स्पर्शाभावात्तदभिघाताहेतुत्वे चक्रकप्रसङ्गः[2] । गुणत्वं ह्यद्रव्यत्वे तदप्यस्पर्शवत्त्वे तदपि गुणत्वे इति । स्पर्शवतार्थेनाभिहन्यमानत्वाच्च स्पर्शवानसौ[3] । न चानेनाभिहन्यमानत्वमस्यासिद्धं प्रतिवातभित्त्यादिभिः शब्दस्याभिहन्यमानतया सकलजनसाक्षिकत्वात्[4] । मूर्तेन चामूर्तस्याविरोधेनाऽप्रतिघाताद्गगनभित्त्यादिवत् । तन्नास्य स्पर्शाश्रयत्वमसिद्धम् । नाप्यल्पमहत्त्व-परिमाणाश्रयत्वमल्पमहत्त्वप्रतीतिविषयत्वाद्बदरादिवत् । ननु चाल्पः शब्दो मन्द इत्यादिप्रतीत्या मन्दत्वमेव धर्मो गृह्यते । महान् पटुस्तीव्र इत्यादिप्रतीत्या च तीव्रत्वम् । न पुनः परिमाणमियत्तानवधारणात् । न ह्ययं महाञ्छब्द इति व्यवस्यन्नियानित्यवधारयति । यथा द्रव्याणि बदरामलकबिल्वादीनि[8] । मन्दतीव्रता चावान्तरो जातिविशेषो गुणवृत्तित्वाच्छब्दत्ववत् । तदप्यपेशलं यतः कथं शब्दस्य गुणत्वं सिद्धं यतस्तद्वृत्तित्वान्मन्दत्वादेर्जातिविशेषत्व सिद्ध्येत् ? अद्रव्यत्वाच्चेत्तदपि कथम् ? अल्पमहत्त्वपरिमाणानधिकरणत्वाच्चेत्तदपि कुतः ? गुणत्वाच्चेच्चक्रकप्रसङ्गः । द्रव्यान्तरवदियत्तानवधारणाच्चेन्न वायुनानैकान्तात्[12] । न खलु बिल्वबदरादेरिव वायोरियत्तावधार्यते । वायोरप्रत्यक्षत्वादियत्ता[13] सत्यपि नावधार्यते, न शब्दस्य विपर्ययादित्यप्ययुक्तं[14]-गुणगुणिनोः[15] कथञ्चिदेकत्वे[16] गुणप्रतिभासे गुणिनोपि प्रतिभाससम्भवात्[17] । वायुगतस्पर्शविशेषस्यैवाध्यक्षत्वाभ्युपगमे च स्पर्शोत्र शीतः खरो वेति प्रतीतिः स्यान्न वायुरिति[18] । न खलु रूपावभासिनि[19] प्रत्यये सोवभासते[20] स्पर्शविशेषपरिणामस्यैव[21] च वायुत्वात्कथं नास्य प्रत्यक्षत्वम्[22] ? इयत्ता[23] चेयं यदि परिमाणादन्या[24] कथमन्यस्यानवधारणेऽन्यस्या-भावः ? । न खलु घटानवधारणे पटाभावो युक्तः[25] । परिमाणं चेत्तर्हीयत्तानवधारणात्परिमाणं नास्तीत्यत्र परिमाणं नास्ति परिमाणानवधारणादित्येतावदेवोक्तं स्यात् । अल्पत्वमहत्त्वप्रत्ययतस्तत्परिमाणावधारणे च कथं तदनवधारणं नामामलकादावपि तत्प्रसङ्गात् । मन्दतीव्रताभिसम्बन्धात्तत्प्रत्ययसम्भवे च मन्द-

---

१ अनिर्वचनीयेन ॥ २ आदौ यत्प्रतिपादित तदेवान्ते स्यादिति चक्रकदोष इति भाव ॥ ३ मन्दिग्धानेकान्तिकत्वे इदम् ॥ ४ स्पर्शवद्धि ॥ ५ असिद्धमिति सम्बन्ध ॥ ६ शब्दस्य ॥ ७ अल्पत्वमहत्त्वपरिमाणम् ॥ ८ इयन्ति अवधारयति जन ॥ ९ तीव्रत्व मन्दत्व च परिमाणविशेषोऽस्त्वित्युक्ते सत्याह ॥ १० शब्दे ॥ ११ चक्रकपरिहारार्थं गुणत्वादिति हेतुस्थले इयत्तानवधारणादिति हेतु योजयति पर ॥ १२ अल्पत्वमहत्त्वपरिमाणा-धिकरणत्वेपि वायोरियत्ता नावधार्यते इति भाव ॥ १३ अनैकान्तिकत्व हेतो परिहरन्नाह ॥ १४ प्रत्यक्षत्वात् ॥ १५ इयत्तावाच्यो ॥ १६ प्रदेशभेदाभावात् ॥ १७ ततश्च वायुगतस्य स्पर्शस्य प्रत्यक्षत्वाद्वायोरपि प्रत्यक्षत्व स्यात् । तथा च वायोरप्रत्यक्षत्व वक्तुमशक्य तव परस्य ॥ १८ न वायु शीत खरो वेति प्रतीति ॥ १९ रूपी वायु ॥ २० तथा च वायोरभाव स्यात् ॥ २१ कथञ्चिदेकत्वेन ॥ २२ त्वगिन्द्रियग्राह्यत्वम् ॥ २३ इयत्ताया अनवधारणे शब्दस्याल्पत्वमहत्त्वपरिमाणस्याभाव इत्यस्मिन्पक्षे दूषणान्तरम् ॥ २४ इयत्ता परिमाणाद्भिन्नाभिन्ना वेति विकल्पद्वयम् ॥ २५ इयत्तालक्षणस्य ॥ २६ परिमाणलक्षणस्य ॥ २७ अन्येति विकल्पे ॥ २८ द्वितीयपक्षे ॥ २९ परेणाङ्गीक्रियमाणे ॥

वाहिनि नर्मदानीरेऽल्पमेतत्[1] तीव्रवाहिनि च कुल्याजले[2] महदेतदिति[3] प्रत्ययः स्यात् । न[4] चैवम् । तस्मान्न मन्दतीव्रतानिवन्धनोयं[5] प्रत्ययः । अपि त्वल्पमहत्त्वपरिमाणनिबन्धनः । अन्यथा बदरामलकादावपि तन्निबन्धनोसौ[6] न स्यात् । बदरादीनां द्रव्यत्वेन तत्परिमाणसम्भवात्तस्य[7] तन्निबन्धनत्वे शब्देप्यत एवासौ तन्निबन्धनोस्तु विशेषाभावात्[8] । कारणगतस्य[9] चाल्पमहत्त्वपरिमाणस्य[10] शब्दे[11] उपचारात्तथा प्रत्यये बदरादावप्यसौ तथानुपज्येत । तन्नाल्पमहत्त्वपरिमाणाश्रयत्वमप्यस्यासिद्धम् । नापि सङ्ख्याश्रयत्वमेकः शब्दो द्वौ शब्दौ बहवः शब्दा इति संख्यावत्त्वप्रतीतेर्घटादिवत् । अथोपचाराच्छब्दे संख्यावत्त्वप्रतीतिः । ननु किं कारणगता विषयगता वा शब्दे संख्योपचार्येत ? कारणगता चेत्किं समवायिकारणगता कारणमात्रगता वा ? आद्यपक्षे एकः शब्द इति सर्वदा व्यपदेशप्रसङ्गस्तस्यैकत्वात् । द्वितीयपक्षे तु बहवः शब्दा इति व्यपदेशः स्यात्तस्य[12] बहुत्वात् । विषय[13]संख्योपचारे तु गगनाकाशव्योमादिशब्दा[14] बहुव्यपदेशभाजो न स्युर्गगनलक्षणविषयस्यैकत्वात् । पश्वादीनां[15] च बहुत्वादेको गोशब्द इति स्वप्नेपि दुर्लभम् । यथाऽविरोधं[16] संख्योपचार[17] इत्यप्ययुक्तं स्वयं संख्यावत्त्वमन्तरेणाविरोधाऽसम्भवात् । किञ्च विपरीतोपलम्भस्य[18] बाधकस्य सद्भावे सत्युपचारकल्पना स्यान्न चाग्नित्वरहितपुरुषस्येवैकत्वादिसंख्यारहितस्य शब्दस्योपलम्भोस्तीति कथमुपचारकल्पना ? तथापि[19] तत्कल्पनेऽनुपचरितमेव न किञ्चित्स्यात् । तन्न संख्याश्रयत्वमप्यसिद्धम् । नापि संयोगाश्रयत्वं[20][21] वाय्वादिना भिहन्यमानत्वात्पांश्वादिवत् । संयुक्ता[22] एव हि पांश्वादयो वायुनान्येन वाऽभिहन्यमाना दृष्टाः । तेन[23] तदभिघातश्च देवदत्तं प्रत्यागच्छतः[24] प्रतिवातेन प्रतिनिवर्त्तनात्पांश्वादिवदेवावसीयते[25], तदप्यन्यदिगवस्थितेन[26] श्रवणात् । ननु[27] गन्धादयो देवदत्तं प्रत्यागच्छन्तस्तेन निवर्त्यन्ते । न च तेषां तेन संयोगो निर्गुणत्वाद्गुणानाम् । तन्न तद्वतो द्रव्यस्यैवानेन प्रतिनिवर्त्तनात् केवलानां[28] तेषां निष्क्रियत्वेनागमननिवर्त्तनायोगात् । ततः[29] सिद्धं गुणवत्त्वाद्द्रव्यत्वं शब्दस्य क्रियावत्त्वाच्च बाणादिवत् । निष्क्रियत्वे तस्य श्रोत्रेणाऽग्रहणमनभिसम्बन्धात् । तथापि ग्रहणे श्रोत्रस्याप्राप्यकारित्वं स्यात् । तथा च प्राप्यकारि चक्षुर्बाह्येन्द्रियत्वात्त्वगि-

---

१ जलम् ॥ २ अल्पा सरित् कुल्या ॥ ३ जलम् ॥ ४ भवलित्युक्ते सत्याहाचार्य ॥ ५ अल्पत्वमहत्त्वलक्षण ॥ ६ बदरादिष्वल्पत्वमहत्त्वप्रत्ययस्य ॥ ७ अल्पत्वमहत्त्वप्रत्यय ॥ ८ द्रव्यत्वेनाल्पत्वमहत्त्वपरिमाणसम्भवस्य ॥ ९ शब्दस्य कारणमाकाशम् ॥ १० द्रव्यस्य ॥ ११ कार्यरूपे ॥ १२ तात्वादिभेर्यादिकारणमात्रस्य ॥ १३ विषय =शब्दस्य वाच्य ॥ १४ वाग्दिग्भूरश्मिवारिवाणाख्यस्वर्गाणां ग्रहणमादिशब्देन ॥ १५ किन्तु गोशब्दा वहवो भवेयुरिति भाव । न तु गोशब्दो बहुप्रकार ॥ १६ एकस्मिन्घटे एक शब्द इत्यादिवत् ॥ १७ पदार्थानाम् ॥ १८ शब्दलक्षणार्थानाम् ॥ १९ असंख्यावत्त्वस्य ॥ २० एकत्वादिसंख्यारहितस्योपलम्भाभावेपि ॥ २१ संयोगो गुण ॥ २२ शब्दस्य ॥ २३ सन्दिग्धत्वे सत्याह ॥ २४ साधनमसिद्धमित्युक्ते सत्याह ॥ २५ शब्दस्य ॥ २६ निश्चीयते ॥ २७ न चेदमसिद्धम् ॥ २८ पुरुषेणावसीयते ॥ २९ अनैकान्तिकहेतुमुद्भावयति पर ॥ ३० द्रव्यरहितानाम् ॥ ३१ व्यभिचारो नास्ति प्रतिनिवर्त्तनादित्यस्य हेतोर्येत ॥

न्द्रियवदित्यस्यानैकान्तिकत्वम् । सम्बन्धकल्पने श्रोत्रं वा शब्दोत्पत्तिप्रदेशं[1] गत्वा शब्देनाभिसम्बध्येत शब्दो वा स्वोत्पत्तिदेशादागत्य श्रोत्रेणाभिसम्बध्येत? न तावद्धर्माधर्माभ्यां संस्कृतकर्णशष्कुल्यवरुद्धनभोदेशलक्षणश्रोत्रस्य शब्दोत्पत्तिदेशे गतिस्तथा प्रतीत्यभावात् निष्क्रियत्वाच्च । गतौ[3] वा विवक्षितशब्दान्तरालवर्त्तिनामल्पशब्दानामपि ग्रहणप्रसङ्गः सम्बन्धाविशेषात् । अनुवातप्रतिवाततिर्यग्वातेषु प्रतिपत्त्यप्रतिपत्तीषत्प्रतिपत्तिभेदाभावश्च श्रोत्रस्य गच्छतस्तत्कृतोपकाराद्ययोगात् । नापि शब्दस्य श्रोत्रप्रदेशागमनं निष्क्रियत्वोपगमात् । आगमने वा सक्रियत्वम् । ननु नाद्य एवाकाशतच्छङ्खमुखसंयोगेश्वरादेः[12] समवाय्यसमवायिनिमित्तकारणाज्जातः शब्दः श्रोत्रेणागत्य सम्बध्यते येनायं दोषः । अपि तु वीचीतरङ्गन्यायेनापरापर एवाकाशशब्दादिलक्षणात्समवाय्यसमवायिनिमित्तकारणाज्जातस्तेनाभिसम्बध्यते । तदप्यसमीचीनं सर्वत्र क्रियोच्छेदानुषङ्गात् । बाणादयोपि हि पूर्वपूर्वसमानजातीयलक्षणप्रभवा लक्ष्यप्रदेशव्यापिनो, न पुनस्त एवेति कल्पयितुं शक्यत्वात् । तत्र प्रत्यभिज्ञानान्नित्यत्वसिद्धेर्नैवं कल्पना चेन्नन्विदं प्रत्यभिज्ञानं शब्देपि समानमुपाध्यायोक्तं शृणोमि शिष्योक्तं वा शृणोमीति प्रतीतेः । ननु प्रत्यभिज्ञानस्य भवद्दर्शने दर्शनसरणकारणकत्वादत्र च तदभावात्कथं तदुत्पत्तिः? न खलूपाध्यायोक्ते शब्दे दर्शनवत्स्मरणं भवत्यस्य पूर्वदर्शनाद्याहितसंस्कारप्रबोधनिबन्धनत्वात् । न च कारणाभावे कार्यं भवत्यतिप्रसङ्गात् । इत्यप्यनुपपन्नं सम्बन्धितांप्रतिपत्तिद्वारेणात्रैकत्वस्य प्रतीतेः । सम्बन्धितायां च दर्शनसरणयोः सद्भावसम्भवात्प्रत्यभिज्ञानस्योत्पत्तिरविरुद्धा । तथा हि । प्रत्यक्षानुपलम्भतोनुमानतो वा तत्कार्यतया तत्संबन्धिनं शब्दं प्रतिपद्येदानीं तत्स्मृत्युपलम्भोद्भूतं प्रत्यभिज्ञानं तत्सम्बन्धितया तं प्रतिपद्यमानमेकत्वविशिष्टमेव प्रतिपद्यते । अन्यथोपाध्यायोक्तं शृणोमीति प्रतीतिर्न स्यात् । किन्तु तदुक्तोद्भूतं तत्सदृशं शब्दान्तरं शृणोमीति प्रतीतिः स्यात् । वीचीतरङ्गन्यायेन तदुत्पत्तिश्चात्रैव निषेत्स्यते । यदि पुनर्लूनपुनर्जातनखकेशादिवत्सदृशापरापरोत्पत्तिनिबन्धनमेतत्प्रत्यभिज्ञानं न कालान्तरस्थायित्वनिबन्धनं तद्बाणादावपि समानम् । न समानमत्र बाधकसद्भावात् तथा कल्पना, नान्यत्र विपर्ययात् ।

१ शब्दस्य ॥ २ ताल्वादिकम् ॥ ३ निष्क्रियत्वमसिद्धमित्याह ॥ ४ अन्तराल भेर्यादिशब्दे ॥ ५ अविवक्षितानां नरादिशब्दानाम् ॥ ६ श्रोत्रेण ॥ ७ सत्सु ॥ ८ शब्दोत्पत्तिदेश प्रति ॥ ९ आदिना अनुपकारेपदुपकारग्रहणम् ॥ १० परेण ॥ ११ तथा च द्रव्य शब्द इत्यायातम् शब्द क्रियावान्पूर्वदेशत्यागेन देशान्तरे समुपलभ्यमानत्वात् । यदित्थ तदित्थ यथा बाणादि । न चेदमसिद्ध वक्तृमुखप्रदेशत्यागेन श्रोत्रप्रदेशे समुपलभ्यमानत्वात् ॥ १२ आदिनानुकूलवातादिग्रह ॥ १३ आदिना ईश्वरादिग्रह ॥ १४ अन्त्य शब्द ॥ १५ प्रथममुक्ता ॥ १६ पूर्वक्षणे ॥ १७ उत्तरक्षणे ॥ १८ अह गुरु ॥ १९ एकत्वग्राहिण ॥ २० जैनमते ॥ २१ श्रोत्रेन्द्रियज्ञानवत् ॥ २२ अयमुपाध्यायोक्त शब्द इति ॥ २३ मया य शब्द श्रूयते स उपाध्यायेनोक्त इति ॥ २४ अन्वयव्यतिरेकत ॥ २५ श्रूयमाणम् ॥ २६ उपाध्यायसम्बन्धित्वेन तस्य शब्दस्य ॥ २७ दर्शनस्मृतिप्रभवम् ॥ २८ व्यजनानिलवत् ॥ २९ तेन उपाध्यायोक्तेन शब्देन ॥ ३० न चेवम् ॥ ३१ तथा चाशेषार्थानां क्षणिकत्वप्रसङ्गात्सौगतमतसिद्धि स्यात् ॥ ३२ शब्दे ॥ ३३ क्षणिकत्वेन ॥ ३४ नेमे ते बाणादय इत्यत्र बाधकाभावात् ॥

नन्वत्र[1] प्रत्यक्षमनुमानं वा बाधकं कल्प्येत? प्रत्यक्षं चेत्किमेकत्वविषयं क्षणिकत्वविषयं वा? न तावदेकत्वविषयं समविषयत्वेन[2] तदनुकूलत्वात्[3]। नापि क्षणिकत्ववि-
षयं[4] शब्देऽन्यत्र वा तस्य विवादगोचरापन्नत्वात्[5]। नाप्यनुमानम्। प्रत्यभिज्ञानं हि मानसप्रत्यक्षं भवन्मते[6]। तस्य कथमनुमानं बाधकम्? प्रत्यक्षमेव हि बा-
धकमाम्रताम्राद्येकशाखाप्रभवत्वानुमानस्य[7]। न पुनस्तदनुमानं प्रत्यक्षस्य। अथाध्यक्षाभासत्वादस्यानुमानं बाधकम्[8]। यथा स्थिरचन्द्रार्कादिविज्ञानस्य देशान्तर-
प्राप्तिलिङ्गजनितं गत्यनुमानम्। कथं पुनरस्याध्यक्षाभासत्वम्? अनुमानेन[9] बाधनाच्चेदनेनानुमानस्य बाधनादनुमानाभासता किन्न स्यात्? अथानुमानबाधित-
विषयत्वान्नेदमनुमानस्य बाधकमनुमानमप्येतद्[10]बाधितविषयत्वान्नास्य बाधकं स्यात्। न च तदनुमानमस्ति[11]। नन्विदमस्ति—क्षणिकः शब्दोऽस्मदादिप्रत्यक्षत्वे[12] सति
विभुद्रव्य[13]विशेष[14]गुणत्वात्सुखादिवत्। सत्यमस्ति[15], किन्त्वेकशाखाप्रभवत्ववदेतत्साधनं प्रत्यभिज्ञाप्रत्यक्षबाधितकर्म[16]निर्देशानन्तरं प्रयुक्तत्वान्न[17] साध्यसिद्धिनिबन्धनम्।
विभुद्रव्यविशेषगुणत्वं चासिद्धं शब्दस्य द्रव्यत्वप्रसाधनात्। धर्मादिना[18] व्यभिचारश्चास्य विभुद्रव्यविशेषगुणत्वेपि क्षणिकत्वा[19]भावात्। तस्यापि पक्षीकरणाद[20]व्य-
भिचारे न कश्चिद्धेतुर्व्यभिचारी सर्वत्र व्यभिचारविषयस्य पक्षीकरणात्। अस्मदादिप्रत्यक्षत्वे सतीति च विशेषणमनर्थकं[21] व्यवच्छेद्या[22]भावात्। धर्मादेश्च क्षणि-
कत्वे स्वोत्पत्तिसमयानन्तरमेव विनष्टत्वात्ततो जन्मान्तरे फलं न स्यात्[24] शब्दाच्छब्दोत्पत्तिवद्धर्मादेर्धर्माद्युत्पत्तिरित्यप्ययुक्तं तथाभ्युपगमाभावात्[23]। तद्वदपरापरत-
त्कार्योत्पत्तिप्रसङ्गाच्च[25][26]। परस्यानुकूलेष्वनुकूलाभिमानजनितोऽभिलापोऽभिलपितुरर्थाभिमुखक्रियाकारणमात्मविशेषगुणमारभतेऽनुकूलेष्वनुकूलाभिमानजनिताभिला-
पत्वादात्मनोऽनुकूलेष्वनुकूलाभिमानजनिताभिलापवदित्यस्य च विरोधः[40]। यस्माद्योसौ परस्यानुकूलेष्वनुकूलाभिमानजनिताभिलापजनित आत्मविशेषगुणो

---

१ शब्दाक्षणिकत्वप्रत्यभिज्ञाने ॥ २ प्रत्यभिज्ञानस्यैकविषयत्व प्रत्यक्षस्याप्येकविषयत्वम् ॥ ३ तेन=प्रत्यभिज्ञानेन ॥ ४ क्षणिकत्वविषयस्य प्रत्यक्षस्य ॥ ५ असिद्धत्वादिति भाव ॥ ६ वैशेषिकमते ॥ ७ पक्वान्येतानि फलानि एकशाखाप्रभवत्वादित्यनुमानस्याऽऽमताग्राहि प्रत्यक्ष बाधकम् ॥ ८ शब्दैकत्वविषयस्याध्यक्षस्य ॥ ९ शब्दस्य क्षणिकत्वसाधकेन ॥ १० एतेन=मानसप्रत्यक्षेण ॥ ११ शब्दक्षणिकत्वानुमानम् ॥ १२ परममहापरिमाणेन व्यभिचारपरिहारार्थमिद विशेषणम् ॥ १३ विभु आकाशमात्मा च ॥ १४ घटादिगतरूपादिना व्यभिचारनिरासार्थं विशेषेति ॥ १५ उपहासे ॥ १६ कर्म=प्रतिज्ञा ॥ १७ प्रत्यभिज्ञाप्रत्यक्षेण पूर्वं शब्दस्याक्षणिकत्व साधित यत ॥ १८ विभुद्रव्यविशेषगुणत्वादित्येवोच्यमाने ॥ १९ क्षणिकत्व=साध्यम ॥ २० अनेकान्तपरिहाराय । पक्षान्त पातित्वाद्धर्मादे क्षणिकत्वमायातमिति भाव ॥ २१ व्यवच्छेद्यफल हि विशेषणमिति वचनात् ॥ २२ अस्मदादिप्रत्यक्षत्वे सतीति विशेषणेन किलास्मदाद्यऽप्रत्यक्षो धर्मादिर्व्यवच्छेद्य । तस्यापि पक्षीकरणे व्यवच्छेद्यमस्य विशेषणस्य नास्तीति भाव । सर्वेषा पक्षीकरणाद्विशेषणेन परिहरणीयस्याभावात् ॥ २३ परेण ॥ २४ धर्माधर्मयो क्षणिकत्वे ॥ २५ अस्तु । न चेवम् । न खलु धर्माद्युत्पत्तिवदपरापरवनितायज्ञाद्युत्पत्ति प्रतीयते ॥ २६ प्रकृतसाध्ये हेत्वन्तरमिदम् ॥ २७ अनुष्ठातुर्वैशेषिकस्य ॥ २८ इज्यायागादिपूजादिषु धर्मोत्पादनकारणभूतेषु ॥ २९ धर्मजनकत्वेन ॥ ३० इमान्यनुकूलानीत्यभिमानस्तेन जनित ॥ ३१ अर्थ=स्रक्चन्दनादिक प्रति ॥ ३२ क्रिया=कार्यम् ॥ ३३ उत्तरजन्मनि ॥ ३४ धर्मलक्षण दृष्टान्तपक्षे प्रयत्नलक्षण च ॥ ३५ उत्पादयति, साधयति ॥ ३६ सामान्य हेतु ब्रुवता दोषाभावात् ॥ ३७ जीवस्य स्वस्य वा ॥ ३८ वस्त्रादिषु स्रक्चन्दनादिषु च ॥ ३९ अनुमानस्य ॥ ४० धर्मादेर्धर्माद्युत्पत्तो सत्त्याम् ॥ ४१ धर्मलक्षण ॥ ४२ अनुष्ठातुर्वैशेषिकस्य ॥

नासावभिलषितुरर्थाभिमुखक्रियाकारणं तत्समानस्य[1] तत्कारणत्वात्। यश्च[2] तत्क्रियाकारणं नासौ यथोक्ताभिलापजनित इति। इच्छाद्वेषनिमित्तौ[3] प्रवर्त्तकनिवर्त्तकौ[4] धर्माधर्मावव्यवधानेन हिताहितविषयप्राप्तिपरिहारहेतोः कर्मणः कारणत्वे[5] सत्यात्मविशेषगुणत्वात्[6] प्रवर्त्तकनिवर्त्तकप्रयत्नवदित्यत्र हेतोर्व्यभिचारश्च। जन्मान्तरफलोदययोर्धर्माधर्मयोरव्यवधानेन हिताहितविषयप्राप्तिपरिहारहेतोः कर्मणः कारणत्वे सत्यात्मविशेषगुणत्वेपीच्छाद्वेषजनितत्वाभावात्। ततः शब्दाच्छब्दोत्पत्तिवद्धर्मादेर्धर्माद्युत्पत्त्यभावात्। क्षणिकत्वे[11] चातो जन्मान्तरे फलासम्भवादक्षणिकत्वं[12] तस्याभ्युपगन्तव्यमित्यनेनानैकान्तिको[13] हेतुः। अथास्मदादिप्रत्यक्षत्वविशेषणविशिष्टस्य विभुद्रव्यविशेषगुणत्वस्यात्रासम्भवान्न व्यभिचारः। ननु मा भूद्व्यभिचारस्तथापि साकल्येन हेतोर्विपक्षाद्व्यावृत्त्यसिद्धिः। विपक्षविरुद्धं हि विशेषणं ततो हेतुं निवर्त्तयति। यथा सहेतुकत्वमहेतुकत्वविरुद्धं ततः कादाचित्कत्वम्। न चास्मदादिप्रत्यक्षत्वमक्षणिकत्वविरुद्धमक्षणिकेष्वपि सामान्यादिषु भावात्। ततो यथास्मदादिप्रत्यक्षा अपि केचित्प्रदीपादयो भावाः क्षणिकाः सामान्यादयस्त्वक्षणिकास्तथास्मदादिप्रत्यक्षा अपि विभुद्रव्यविशेषगुणाः केचित्क्षणिकाः केचिदक्षणिका भविष्यन्तीति सन्दिग्धो व्यतिरेकः। अथाक्षणिके क्वचिदस्मदादिप्रत्यक्षत्वविशेषणविशिष्टस्य विभुद्रव्यविशेषगुणत्वस्यादर्शनात्ततो व्यावृत्तिसिद्धिः, न–भवदीयादर्शनस्य साकल्येन भावाभावाप्रसाधकत्वात्। अन्यथा परलोकादेरप्यभावानुषङ्गः। सर्वस्यादर्शनं चासिद्धं सतोऽपि निश्चेतुमशक्यत्वात्। विपक्षेऽदर्शनमात्राद्व्यावृत्तिसिद्धौ 'यद्वेदाध्ययनं किञ्चित्तदध्ययनपूर्वकम्। वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा' इत्यस्यापि गमकत्वप्रसङ्गः। न खलु वेदाध्ययनमतदध्ययनपूर्वकं दृष्टम्। तथा चास्यानादित्वसिद्धेरीश्वरपूर्वकत्वेन प्रामाण्यं न स्यात्[42]। न च कृतकत्वादावप्ययं दोषः समानस्तत्र विपक्षे हेतोः सद्भाव-

१ परापरोत्पत्त्या तस्मादन्यत्वात्॥ २ अन्यो धर्मं ॥ ३ इच्छाद्वेषौ निमित्त कारण ययोर्धर्माधर्मयोरिति भाव ॥ ४ कार्यस्य निष्पादकानिष्पादकौ ॥ ५ कारणत्वादित्युच्यमाने चक्षुरादिना व्यभिचारस्तन्निवृत्त्यर्थमात्मविशेषगुणत्वादित्युक्तम्। तावत्युक्ते सुखादिनानेकान्तस्तत्परिहारार्थं कर्मण कारणत्वे सतीति विशेषणम्। तावत्युक्ते बुद्ध्यादिनानेकान्तस्तन्निरासार्थं हिताहितविषयप्राप्तिपरिहारहेतोरित्युपात्तम्। तावत्युक्ते इच्छाद्वेषाभ्यामनेकान्तस्तन्निरासार्थमव्यवधानेनेति विशेषणमुपादीयते ॥ ६ धर्माद्धितविषयप्राप्त्यहितविषयपरिहारो भवत। अधर्मादहितविषयप्राप्तिहितविषयपरिहारौ स्त इति सम्बन्ध ॥ ७ धर्माधर्मयो ॥ ८ अनुमाने ॥ ९ धर्मादे क्षणिकत्वे ॥ १० पूर्वधर्माधर्मसदृशयो ॥ ११ धर्मादे क्षणिकत्वे साध्ये ॥ १२ धर्मादे क्षणिकत्वाभावात्॥ १३ अस्मदादिप्रत्यक्षत्वे सतीति विशेषण त्यक्त्वा विभुद्रव्यविशेषगुणत्वादित्यय हेतु ॥ १४ व्यभिचारपरिहारार्थम्॥ १५ साधनस्य ॥ १६ धर्मादौ ॥ १७ शब्दे यथा सम्भवस्तथा धर्मादो नास्ति यत ॥ १८ अक्षणिकात्॥ १९ कथम्? तथा हि ॥ २० हेतोविपक्षे वृत्ति वारयति यत्तदेव हेतुविशेषणम्॥ २१ अनित्य शब्द कादाचित्कत्वाद् घटवदित्युक्ते खननोत्सेचनादिना कादाचित्केन नभसानेकान्तिकत्वम्। तद्व्यवच्छेदार्थं सहेतुकत्वे सति कादाचित्कत्वादिति साधन प्रयोक्तव्यम् ॥ २२ विशेषणम्॥ २३ अहेतुकम्–आकाशादि ॥ २४ हेतु निवर्तयति ॥ २५ अस्मदादिप्रत्यक्षत्वविशेषणस्य ॥ २६ पदार्था ॥ २७ सुखादय ॥ २८ धर्मादय ॥ २९ हेतोर्विपक्षाद्व्यावृत्ति ॥ ३० धर्मादो ॥ ३१ आदिना परमाण्वादेश्च ॥ ३२ भवदीयादर्शनस्य परलोकादौ सद्भावाविशेषात्। तथा च चार्वाकमतप्रसङ्ग ॥ ३३ नरस्य ॥ ३४ सर्वेषा हेतोर्विपक्षेऽदर्शन विद्यते तथापि तस्य ॥ ३५ सर्वेषा प्राणिना ग्रहणाभावात्। अन्यथाऽशेषज्ञत्वप्रसङ्ग ॥ ३६ अक्षणिके ॥ ३७ अदर्शनसामान्यात्॥ ३८ विपक्षात् ॥ ३९ अपौरुषेयत्वलक्षणसाध्यस्य ॥ ४० अवेदाध्ययनपूर्वके लोकवचने विपक्षे हेतोरदर्शनमात्राद्धेतोविपक्षाद्व्यावृत्तिसिद्धे सद्भावात्॥ ४१ ईश्वरकर्तृकत्वेन ॥ ४२ भवन्मते ॥ ४३ हेतौ ॥ ४४ नित्ये गगनादौ। यत्कृतक न भवति तदनित्य न भवति यथा गगनमिति ॥

बाधकप्रमाणसम्भवात् । धर्मादेश्चास्मदाद्यप्रत्यक्षत्वे देवदत्तं प्रत्युपसर्पन्तः पश्वादयो देवदत्तगुणाकृष्टास्तं प्रत्युपसर्पणवत्त्वाद्ग्रासादिवदित्यनुमानं न स्याद्व्यासेरग्रहणात्। मानसप्रत्यक्षेण व्याप्तिग्रहणे सिद्धं धर्मादेरस्मदादिप्रत्यक्षत्वम् । अथ बाह्येन्द्रियेणास्मदादिप्रत्यक्षत्वे सतीति हेतुर्विशेष्यते तदा साधनवैकल्यं दृष्टान्तस्य सुखादेस्तथा प्रत्यक्षत्वाभावात्। यदि च वीचीतरङ्गन्यायेन शब्दोत्पत्तिरिष्यते तदा प्रथमतो वक्तृव्यापारादेकः शब्दः प्रादुर्भवत्यनेको वा? यद्येकः, कथं नानादिक्कानेकशब्दोत्पत्तिः सकृदिति चिन्त्यम् । सर्वदिक्तताल्वादिव्यापारजनितवाय्वाकाशसंयोगानामसमवायिकारणाना समवायिकारणस्य चाकाशस्य सर्वगतस्य भावात् सकृत्सर्वदिक्कनानाशब्दोत्पत्त्यविरोधे शब्दस्यारम्भकत्वायोगः । यथैवाद्यः शब्दो न शब्देनारब्धस्ताल्वाद्याकाशसंयोगादेवासमवायिकारणादुत्पत्तेस्तथा सर्वदिक्कशब्दान्तराण्यपि-ताल्वादिव्यापारजनितवाय्वाकाशसंयोगेभ्य एवासमवायिकारणेभ्यस्तदुत्पत्तिसम्भवात् । तथा च संयोगाद्विभागाच्छब्दाच्च शब्दोत्पत्तिरिति सिद्धान्तव्याघातः। अथ शब्दान्तराणां प्रथमः शब्दोऽसमवायिकारणं तत्सदृशत्वात् । अन्यथा तद्विसदृशशब्दान्तरोत्पत्तिप्रसङ्गो नियामकाभावात्। नन्वेवं प्रथमस्यापि शब्दस्य शब्दान्तरसदृशस्यान्यशब्दादसमवायिकारणादुत्पत्तिः स्यात्तस्याप्यपरपूर्वशब्दादित्यनादित्वापत्तिः शब्दसन्तानस्य स्यात्। यदि पुनः प्रथमः शब्दः प्रतिनियतः प्रतिनियताद्वक्तृव्यापारादेवोत्पन्नः स्वसदृशानि शब्दान्तराण्यारभेत तर्हि किमाद्येन शब्देनासमवायिकारणेन प्रतिनियतवक्तृव्यापारात्तज्जनितप्रतिनियतवाय्वाकाशसंयोगेभ्यश्च सदृशापरापरशब्दोत्पत्तिसम्भवात्। तन्नैकः शब्दः शब्दान्तरारम्भकः। नाप्यनेकस्तस्यैकस्मात्ताल्वाद्याकाशसंयोगादुत्पत्त्यसम्भवात् । न चानेकस्ताल्वाद्याकाशसंयोगः सकृदेकस्य वक्तुः सम्भवति प्रयत्नस्यैकत्वात्। न च प्रयत्नमन्तरेण ताल्वादिक्रियापूर्वकोऽन्यतरकर्मजस्ताल्वाद्याकाशसंयोगः प्रसूते यतोनेकशब्दः स्यात्। अस्तु वा कुतश्चिदाद्यः शब्दोऽनेकस्तथाप्यसौ स्वदेशे शब्दान्तराण्यारभते देशान्तरे वा? न तावत्स्वदेशे देशान्तरे शब्दोपलम्भाभावप्रसङ्गात्। अथ देशान्तरे तत्रापि किं तद्देशे गत्वा स्वदेशस्थ एव वा देशान्तरे तान्यसौ जनयेत्? यदि स्वदेशस्थ एव तर्हि लोकान्तेपि तज्जनकत्वप्रसङ्गः। अदृष्टमपि च शरीरदेशस्थमेव देशान्तरवर्त्तिमणिमुक्ताफलाद्याकर्षणं कुर्यात् । तथा च धर्माधर्मौ स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभेते इत्यादिविरोधः । न च वीचीतरङ्गादावप्यप्राप्तकार्यदेशत्वे सत्यारम्भकत्वं दृष्टं येनात्रापि तथा तत्कल्प्येताध्यक्षविरोधात् । अथ तद्देशे गत्वा तर्हि

---

१ यद्यत्त प्रत्युपसर्पणवत्तत्तद्देवदत्तगुणाकृष्टमिति प्रत्यक्षेण धर्मादेरप्रत्यक्षत्वात् ॥ २ ततश्च धर्मादिना व्यभिचार पूर्ववदवस्थ एव ॥ ३ इति विशेषणेन ॥ ४ विभुद्रव्यविशेषगुणत्वादित्यगम् ॥ ५ बाह्येन्द्रियेण सुखादिवदिति दृष्टान्त प्रत्यक्षो न भवतीति भाव ॥ ६ शब्दादेव ॥ ७ सर्वदिक =सर्वगत ॥ ८ उपादानस्येत्यर्थ ॥ ९ भवन्मते ॥ १० प्रथमस्य ॥ ११ शब्दान्तर प्रति ॥ १२ शब्दान्तरेणारब्धानि ॥ १३ शब्दस्यारम्भकत्वायोगे च १४ भेरीदण्डयो ॥ १५ वंशादिविभागात् ॥ १६ वैशेषिकस्य तव ॥ १७ प्रतिनियतस्वरूप । विशिष्ट ॥ १८ कल्पितेन ॥ १९ न चेदमसिद्धम् ॥ २० ताल्वादिषु ॥ २१ स्वोत्पत्तिदेशे ताल्वादौ ॥ २२ स्वोत्पत्तिदेशादन्यदेशेषु ॥ २३ आद्योनेक शब्द ॥ २४ स्वाश्रय आत्मा आत्मनो व्यापकत्वात् ॥ २५ मणिमुक्ताफलादा । शरीरापेक्षया ॥ २६ आकर्षणादिलक्षणम ॥ २७ कार्यम्=उत्तरवीचीलक्षणम् ॥ २८ उत्तरतरङ्गाणाम् ॥

सिद्धं शब्दस्य क्रियावत्त्वं द्रव्यत्वप्रसाधकम् । किञ्चाकाशगुणत्वे शब्दस्यास्मदादिप्रत्यक्षता न स्यादाकाशस्यात्यन्तपरोक्षत्वात् । तथा हि । येत्यन्तपरोक्षगुणिगुणा न तेस्मदादिप्रत्यक्षाः । यथा परमाणुरूपादयः । तथा च परेणाभ्युपगतः शब्द इति । न च वायुस्पर्शेन व्यभिचारस्तस्य प्रत्यक्षत्वप्रसाधनात् । किञ्चाकाशगुणत्वेऽस्मदादिप्रत्यक्षत्वे चास्यात्यन्तपरोक्षाकाशविशेषगुणत्वायोगः । प्रयोगः । यदस्मदादिप्रत्यक्षं तन्नात्यन्तपरोक्षगुणिगुणो यथा घटरूपादयस्तथा च शब्द इति । यच्चोक्तं सत्तासम्बन्धित्वादिति, तत्र किं स्वरूपभूतया सत्तया सम्बन्धित्वं विवक्षितमर्थान्तरभूतया वा? प्रथमपक्षे सामान्यादिभिर्व्यभिचारस्तेषां प्रतिषिध्यमानद्रव्यकर्मभावत्वे सति तथाभूतया सत्तया सम्बन्धित्वेपि गुणत्वासिद्धेः । द्वितीयपक्षस्त्वयुक्तः । न हि शब्दादयः स्वयमसन्त एवार्थान्तरभूतया सत्तया सम्बध्यमानाः सन्तो नामाश्वविषाणादेरपि तथाभावानुषङ्गात् । प्रतिपेत्स्यते चार्थान्तरभूतसत्तासम्बन्धेनार्थानां सत्त्वमित्यलमतिप्रसङ्गेन । यच्चोक्तं 'शब्दो द्रव्यं न भवत्येकद्रव्यत्वात्' तत्रैकद्रव्यत्वं साधनमसिद्धं यतो गुणत्वे गगने एवैकद्रव्ये समवायेन वर्तने च सिद्धे तत्सिध्येत् । तच्चोक्तया रीत्याऽपास्तमिति कथं तत्सिद्धिः? यदप्येकद्रव्यत्वे साधनमुक्तम्—एकद्रव्यः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वादिति तदपि प्रत्यनुमानबाधितम् । तथा हि । अनेकद्रव्यः शब्दोऽस्मदादिप्रत्यक्षत्वे सत्यपि स्पर्शवत्त्वाद् घटादिवत् । वायुनानेकान्तश्च । स हि बाह्यैकेन्द्रियप्रत्यक्षोपि नैकद्रव्यः । चक्षुषैकेनाऽस्मदादिभिः प्रतीयमानैश्चन्द्रार्कादिभिश्च । अस्मदादिविलक्षणैर्बाह्येन्द्रियान्तरेण तत्प्रतीतौ शब्देपि तथा प्रतीतिः किन्न स्यात्? अत्र तथानुपलम्भोऽन्यत्रापि समानः । एतेनेदमपि प्रत्युक्तं गुणः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वाद्रूपादिवदिति वाय्वादिभिर्व्यभिचारात् । ते हि सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षा, न च गुणाः । अन्यथा द्रव्यसंख्याव्याघातः स्यात् । ततः शब्दानां गुणत्वासिद्धेरयुक्तमुक्तं—यश्चैषामाश्रयस्तत्पारिशेष्यादाकाशमिति । यच्चोक्तं—न तावत्स्पर्शवतां परमाणूनामित्यादि तत्सिद्धसाधनं तद्गुणत्वस्य तत्रानभ्युपगमात् । यथा चास्मदादिप्रत्यक्षत्वे शब्दस्य परमाणुविशेषगुणत्वस्य विरोधस्तथाकाशविशेषगुणत्वस्यापि । तथा हि । शब्दोत्यन्तपरोक्षाकाशविशेषगुणो न भवत्यस्मदादिप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवत् । न ह्यस्मदादिप्रत्यक्षत्वं परमाणुविशेषगुणत्वमेव निराकरोति शब्दस्य, नाकाशविशेषगुणत्वमुभयत्राविशेषात् । यथैव हि परमाणुगुणो रूपादिरस्मदाद्यप्रत्यक्षस्तथाकाशगुणो महत्त्वादिरपि । यच्चाप्युक्तं—नापि कार्यद्रव्याणामित्यादि

१ वायुस्पर्शो ह्यत्यन्तपरोक्षगुणिगुणो भवत्यस्मदादिप्रत्यक्षो न भवतीति न ॥ २ आकाशगुण शब्द ॥ ३ सामान्यविशेषसमवायवत् ( सामान्यविशेषसमवाया स्वत सन्त इति वचनात् ) ॥ ४ शब्दस्य ॥ ५ द्रव्यगुणकर्मवत् ॥ ६ उभयथा सत्तासम्बन्धित्वस्य दृष्टत्वात्प्रकारान्तरासम्भवात् ॥ ७ आदिना विशेषसमवाययोर्ग्रहणम् ॥ ८ रूपादिवत् ॥ ९ शब्दस्य ॥ १० अनेकानि द्रव्याणि यस्य परमाणुद्वयाद्यपेक्षया ॥ ११ योगिप्रत्यक्षेण परमाणुना व्यभिचारपरिहारार्थम् ॥ १२ एकेन वायुपरमाणुना व्यभिचारपरिहारार्थम् ॥ १३ परमाण्वपेक्षया ॥ १४ परमाण्वपेक्षया ॥ १५ अनेकान्त इति सवन्ध एकद्रव्यलक्षणसाध्याभावात् ॥ १६ योगिभि ॥ १७ चक्षुषोपेक्षयान्येन स्पर्शनलक्षणेन ॥ १८ तथा चानेकान्तिक एव हेतु स्यादिति भाव ॥ १९ एकद्रव्य शब्द इत्यादिनिराकरणेन ॥ २० आदिना पृथिव्यप्तेजसा ग्रह ॥ २१ नवद्रव्याणा पञ्चद्रव्यत्वप्रसङ्ग इत्यर्थ ॥ २२ शब्दो विशेषगुणो न भवत्यस्मदादिप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवत् ॥ २३ जेने ॥ २४ विशेषणे ॥ २५ भवन्मते ॥ २६ अस्मन्मते ॥ २७ अस्मदादिप्रत्यक्षत्वस्य २८ पृथिव्यादीनाम् ॥

तदप्ययुक्तम् । शब्दस्याकाशगुणत्वनिषेधे[1] कार्यद्रव्यान्तराप्रादुर्भावेऽप्युत्पत्त्यभ्युपगमे शब्दो निराधारो गुणः स्यात् । तथा च बुद्ध्यादयः क्वचिद्वर्तन्ते गुणत्वादित्यस्य व्यभिचारः[2] । ततः कार्यद्रव्यान्तरोत्पत्तिस्तत्राभ्युपगन्तव्येत्यसिद्धो हेतुः । अकारणगुणपूर्वकत्वं चासिद्धम् । तथा हि । नाकारणगुणपूर्वकः शब्दोऽस्मदादिबाह्येन्द्रियग्राह्यत्वे सति गुणत्वात्पटरूपादिवत् । न चाणुरूपादिना सुखादिना वा हेतोर्व्यभिचारो बाह्येन्द्रियग्राह्यत्वे सतीति विशेषणात् । नापि योगिबाह्येन्द्रियग्राह्येणाणुरूपादिनाऽस्मदादिग्रहणात् । नापि सामान्यादिना गुणग्रहणात् । अयावद्द्रव्यभावित्वं च विरुद्धं साध्यविपरीतार्थप्रसाधनत्वात् । तथा हि । स्पर्शवद्द्रव्यगुणः शब्दोऽस्मदादिबाह्येन्द्रियप्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वात्पटरूपादिवत् । अस्मदादिपुरुषान्तरप्रत्यक्षत्वे सति पुरुषान्तराप्रत्यक्षत्वादिति वास्वाद्यमानेन रसादिनानैकान्तिकः । आश्रयाद्भेर्यादेरन्यत्रोपलब्धेरिति चासङ्गतं भेर्यादेः शब्दाश्रयत्वासिद्धेस्तस्य तन्निमित्तकारणत्वात् । आत्मादिगुणत्वप्रतिषेधस्तु सिद्धसाधनान्न समाधानमर्हति । यच्च शब्दलिङ्गाविशेषादित्याद्युक्तं तद्वन्ध्यासुतसौभाग्यव्यावर्णनप्रख्यं कार्यद्रव्यस्य व्यापित्वादिधर्मासम्भवात् । एतेनेदमपि निरस्तं—दिवि भुव्यऽन्तरिक्षे च शब्दाः श्रूयमाणेनैकार्थसमवायिनः शब्दत्वात् श्रूयमाणाद्यशब्दवत् । श्रूयमाणः शब्दः समानजातीयासमवायिकारणः सामान्यविशेषवत्त्वे सति नियमेनास्मदादिबाह्यैकेन्द्रियप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवदिति । प्रतिशब्दं पुद्गलद्रव्यस्य तत्समवायिकारणस्य भेदात् । शब्दस्य क्षणिकत्वनिषेधाच्च कथं समानजातीयासमवायिकारणत्वम् ? यदि चाकाशमनवयवं शब्दस्य समवायिकारणं स्यात्तर्हि शब्दस्य नित्यत्वं सर्वगतत्वं च स्यादाकाशगुणत्वात्तन्महत्त्ववत् । क्षणिकैकदेशवृत्तिविशेषगुणत्वस्य शब्दे प्रमाणतः प्रतिषेधाच्च । तत्त्वे वा कथं न शब्दाधारस्याकाशस्य सावयवत्वम् ? न हि निरवयवत्वे तस्यैकदेशे एव शब्दो वर्त्तते न सर्वत्रेति विभागो घटते । किञ्च सावयवमाकाशं हिमवद्विन्ध्यावरुद्धविभिन्नदेशत्वाद्भूमिवत् । अन्यथा तयो रूपरसयोरिवैकदेशाकाशावस्थितिप्रसक्तिः । न चैतद् दृष्टमिष्टं वा । कथं वा तदाधेयस्य शब्दस्य विनाशः ? स हि न तावदाश्रयविनाशाद्घटते तस्य नित्यत्वाभ्युपगमात् । नापि विरोधिगुणसद्भावात्तन्महत्त्वादेरेकार्थसमवेतत्वेन

---

१ [illegible] ॥ २ परेण ॥ ३ [illegible] कस्यचिद्वर्त्तनाभावात् ॥ ४ कार्यद्रव्यान्तरात्परमाणुरूपाच्छब्दजनकात् ॥ ५ अकारण=गगनम् । तस्य गुणो महत्त्वादि ॥ ६ किंतु सशरसगन्धवर्णवत्पुद्गलद्रव्यहेतुक इति [illegible] ॥ ७ [illegible] ॥ ८ प्रसङ्गसाधनमेतत् ॥ ९ आत्मन स्वभावत्वात् ॥ १० वीचीतरङ्गन्यायेन शब्दाच्छब्दोत्पत्तेर्निषिद्धत्वात् ॥ ११ प्रसङ्गसाधनमेतत् ॥ १२ विशेषगुणो न [illegible] ॥ १३ [illegible] ॥ १४ आदिना मनोदिक्काला गृह्यन्ते ॥ १५ भेदाभावादेकमित्यर्थः ॥ १६ सदृशम् ॥ १७ शब्दस्य आकाशविशेषगुणत्वनिराकरणेन कार्यद्रव्यविशेषगुणत्वसाधनेन [illegible] ॥ १८ [illegible] ॥ १९ [illegible] ॥ २० गगनसमवायिकारणका ॥ २१ वीचीतरङ्गन्यायागतेन श्रूयमाणेन घटशब्देन आद्या घटशब्दा श्रूयमाणा घटशब्दस्यासमवायिकारणत्वेनाभिमता एकार्थसम[illegible] ॥ २२ [illegible] ॥ २३ [illegible] व्यभिचार इन्द्रियग्रहणात् । नापि घटादिना एकपदोपादानात् । नापि सुखादिना—बाह्यपदोपादानात् । नापि योगिबाह्यैकेन्द्रियप्रत्यक्षेण [illegible] । नापि [illegible] पदोपादानात ॥ २४ पटसमवेतरूपाद्यारम्भे पटोत्पादकतन्तुरूपादिवत् ॥ २५ अनेकात् ॥ २६ पर्यायरूपेण वस्तुनो विनाशात् ॥ [illegible] ॥ ३० परेण ॥ ३१ विरोधिगुणरूपस्य ॥

स्पर्शयोरिव विरोधित्वासिद्धेः। सिद्धौ वा श्रवणसमयेपि तदभावप्रसङ्गस्तदा तन्महत्त्वस्य भावात्। नापि संयोगादिर्विरोधिगुणस्तस्य तत्कारणत्वात्। नापि संस्कारस्तस्याकाशेऽसम्भवात्। सम्भवे वा तस्याभावे आकाशस्याप्यभावानुषङ्गस्तस्य तदव्यतिरेकात्। व्यतिरेके वा तस्येति सम्बन्धो न स्यात्। नापि शब्दोपलब्धिप्रापकादृष्टाभावात्तदभावस्तुच्छाभावस्यासामर्थ्यतो विनाशाहेतुत्वात् खरविषाणवत्। तन्न शब्दस्याकाशप्रभवत्वमभ्युपगन्तव्यम्। ननु चाऽस्य पौद्गलिकत्वेऽस्मदाद्यनुपलभ्यमानरूपाद्याश्रयत्वं न स्यात्पटादिवत्। तन्न–द्व्यणुकादिना हेतोर्व्यभिचारात्। नायनरश्मिषु जलसंयुक्तानले चानुद्भूतरूपस्पर्शवत् शब्दाश्रयद्रव्येऽस्मदाद्यनुपलभ्यमानानामप्यनुद्भूततया रूपादीनां वृत्त्यविरोधः। यथा च घ्राणेन्द्रियेणोपलभ्यमाने गन्धद्रव्येऽनुद्भूतानां रूपादीनां वृत्तिस्तथात्रापि। यथा च तैजसत्वात्पार्थिवत्वाच्चात्रानुपलम्भेपि रूपादीनामनुद्भूततयास्तित्वसम्भावना तथा शब्देपि पौद्गलिकत्वात्। न च पौद्गलिकत्वमसिद्धम्। तथा हि। पौद्गलिकः शब्दोऽस्मदादिप्रत्यक्षत्वेऽचेतनत्वे च सति क्रियावत्त्वाद्बाणादिवत्। न च मनसा व्यभिचारोऽस्मदादिप्रत्यक्षत्वे सतीति विशेषणत्वात्। नाप्यात्मनाऽचेतनत्वे सतीति विशेषणात्। नापि सामान्येनास्य क्रियावत्त्वाभावात्। ये चास्मदादिप्रत्यक्षत्वे सति स्पर्शवत्त्वादित्यादयो हेतवः प्रागुपन्यस्तास्ते सर्वे पौद्गलिकत्वप्रसाधका द्रष्टव्याः। ततः शब्दस्याकाशगुणत्वासिद्धेर्नासौ तल्लिङ्गम्। कुतस्तर्हि तत्सिद्धिरिति चेद् युगपन्निखिलद्रव्यावगाहकार्यादिति ब्रूमः। तथा हि। युगपन्निखिलद्रव्यावगाहः साधारणकारणापेक्षस्तथावगाहत्वान्यथाऽनुपपत्तेः। ननु सर्पिषो मधुन्यवगाहो भस्मनि जलस्य जलेऽश्वादेर्यथा तथैवालोकतमसोरशेषार्थावगाहघटनान्नाकाशप्रसिद्धिस्तन्न–अनयोरप्याकाशाभावेऽवगाहानुपपत्तेः। ननु निखिलार्थानां यथाकाशेऽवगाहस्तथाकाशस्याप्यन्यस्मिन्नधिकरणेऽवगाहेन भवितव्यमित्यनवस्था। तस्य स्वरूपेऽवगाहे सर्वार्थानां स्वात्मन्येवावगाहप्रसङ्गात्कथमाकाशस्यातः प्रसिद्धिरित्यप्यपेशलमाकाशस्य व्यापित्वेन स्वावगाहित्वोपपत्तितोऽनवस्थाऽसम्भवात्, अन्येषामव्यापित्वेन स्वावगाहित्वायोगाच्च। न हि किञ्चिदल्पपरिमाणं वस्तु स्वाधिकरणं दृष्टमश्वादेर्जलाद्यधिकरणोपलब्धेः। कथमेवं दिक्कालात्मनामाकाशेऽवगाहो व्यापित्वादित्यप्यसाम्प्रतं हेतोरसिद्धेः। तदसिद्धिश्च दिग्द्रव्यस्यासत्त्वात्। कालात्मनोश्चासर्वगतद्रव्यत्वेनाग्रे समर्थनात्प्रसिद्धेति। ननु तथाप्यमूर्त्तत्वेन कालात्मनोः पाताभावात्कथं तदाधेयतेत्यप्ययुक्तममूर्त्तस्यापि ज्ञानादेरात्मन्याधेयत्वप्रसिद्धेः। एतेनामूर्त्तत्वान्नाकाशं कस्यचिदधिकरणमित्यपि प्रत्युक्तममूर्त्तस्याप्यात्मनो ज्ञानाद्यधिकरणत्वप्रतीतेः। समानसमयवर्त्तित्वान्निखिलानाधाराधेयभावः अन्यथाकाशादुत्तरकालं भावस्तेषां स्यादित्यप्यसमीचीनं समसमयवर्तिनामप्यात्मामूर्त्तत्वादीनां तद्भावप्रतीतेः। न खलु परेणाप्यत्र तद्भावोभीष्टो नित्यत्वविरोधानुषङ्गात्। क्षणविशरारुतया निखिलार्थानां नाधाराधेयभाव इत्यपि मनोरथमात्रं क्षणविशरारुत्वस्यार्थानां प्रागेव प्रतिषेधात्। खे गवादयोऽबाधितप्रत्ययाच्च तद्भावप्रसिद्धेः। ततः परेषां निरवद्यलिङ्गाऽभावान्नाकाशद्रव्यस्य प्रसिद्धिः।

१ शब्द प्रति ॥ २ संयोगादि शब्दकारणमिति वचनात् ॥ ३ कार्यरूपेण ॥ ४ यत्पौद्गलिकं तदस्मदाद्युपलभ्यमानरूपाद्याश्रयमित्युक्ते द्व्यणुकादिना पौद्गलिकेन व्यभिचारोऽस्मदाद्युपलभ्यमानरूपाश्रयत्वलक्षणसाध्याभावात् ॥ [illegible]णस्पर्श ॥६ अत्र रूप शास्त्रम् ॥७ परमते ॥ ८ परमते ॥ ९ नायनरश्म्यादिषु (जलसंयुक्तानले गन्धद्रव्ये) त्रिषु ॥ १० परस्य तव ॥ ११ पौद्गलिकत्वाभावाद्भावमनस ॥ १२ जैनै ॥ १३ वयं जैना ॥ १४ सकलद्रव्याणा[illegible] कारणमाकाशम् ॥ १५ साधारणकारणमन्तरेण । आकाशाभावे ॥ १६ तदुत्पत्तिं ॥ १७ जैनापेक्षया ॥ १८ आत्मादीनाम् ॥ १९ वैशेषिकेण ॥ २० आत्मन २१ सौगतमतमालम्ब्य ॥

नापि कालद्रव्यस्य । यच्चोच्यते–कालद्रव्यं च परापरादिप्रत्ययादेव लिङ्गात्प्रसिद्धम् । कालद्रव्यस्य चेतरस्माद्भेदे काल इति व्यवहारे वा साध्ये स एव लिङ्गम् । तथा हि । काल इतरस्माद्भिद्यते काल इति वा व्यवहर्त्तव्यः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गत्वात् । यस्तु नेतरस्माद्भिद्यते काल इति वा न व्यवह्रियते नासावुक्तलिङ्गो यथा क्षित्यादिः । तथा च कालः । तस्मात्तथेति । विशिष्टकार्यतया चैते प्रत्ययाः काले एव प्रतिबद्धाः । यद्विशिष्टकार्यं तद्विशिष्टकारणादुत्पद्यते । यथा घट इति प्रत्ययाः । विशिष्टकार्यं च परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्यया इति । परापरयोः खलु दिग्देशकृतयोः व्यतिकरो विपर्ययः । यत्रैव हि दिग्विभागे पितर्युत्पन्नं परत्वं तत्रैव स्थिते पुत्रेऽपरत्वं, यत्र चापरत्वं तत्रैव स्थिते पितरि परत्वमुत्पद्यमानं दृष्टमिति दिग्देशाभ्यामन्यन्निमित्तान्तरं सिद्धं निमित्तान्तरमन्तरेण व्यतिकरासम्भवात् । न च परापरादिप्रत्ययस्यादित्यादिक्रियाद्रव्यं वलिपलितादिकं वा निमित्तं तत्प्रत्ययविलक्षणत्वात्पटादिप्रत्ययवत् । तथा च सूत्रम् "अपरस्मिन्परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि" । आकाशवच्चास्यापि विभुत्वनित्यैकत्वादयो धर्माः प्रतिपत्तव्या इति ।

अत्रोच्यते—परापरादिप्रत्ययलिङ्गानुमेयः कालः किमेकद्रव्यमनेकद्रव्यं वा ? न तावदेकद्रव्यं मुख्येतरकालभेदेनास्य द्वैविध्यात् । न हि समयावलिकादिर्व्यवहारकालो मुख्यकालद्रव्यमन्तरेणोपपद्यते यथा मुख्यसत्त्वमन्तरेण क्वचिदुपचरितं सत्त्वम् । स च मुख्यः कालोऽनेकद्रव्यं प्रत्याकाशप्रदेशं व्यवहारकालभेदान्यथानुपपत्तेः । प्रत्याकाशप्रदेशं विभिन्नो हि व्यवहारकालः कुरुक्षेत्रलङ्काकाशदेशयोर्दिवसादिभेदान्यथानुपपत्तेः । ततः प्रतिलोकाकाशप्रदेशं कालस्याणुरूपतया भेदसिद्धिः । तदुक्तं—"लोयायासपएसे एक्केक्के जे ठिया हु एक्केका । रयणाणं रासीविव ते कालाणू मुणेयव्वा । १ ।" यौगपद्यादिप्रत्ययाविशेषात्तस्यैकत्वमित्यप्यसत्तत्प्रत्ययाविशेषासिद्धेः । तेषां परस्परं विशिष्टत्वात्कालस्याप्यतो विशिष्टत्वसिद्धिः । सहकारिणामेव विशिष्टत्वं न कालस्येत्यप्यनुत्तरं स्वरूपमभेदयतां सहकारित्वप्रतिक्षेपात् । यदि चास्य निरवयवैकद्रव्यरूपताभ्युपगम्यते कथं तर्ह्यतीतादिकालव्यवहारः ? स हि किमतीताद्यर्थक्रियासम्बन्धात्स्वतो वा स्यात् ? अतीताद्यर्थक्रियासम्बन्धाच्चेत्कुतस्तासामतीतादित्वम् ? अपरातीताद्यर्थक्रियासम्बन्धाच्चेदनवस्था । अतीतादिकालसम्बन्धाच्चेदन्योन्याश्रयः । स्वतस्तस्यातीतादिरूपता

१ आदिपदेन यौगपद्यायौगपद्यचिरक्षिप्रादिग्रह ॥ २ वस ॥ ३ तर्ह्येते प्रत्यया अविशिष्टनिमित्तका भविष्यन्तीत्युक्ते सत्याह ॥ ४ घटे सत्येव प्रसिद्धा ॥ ५ कथम् ? तथा हि ॥ ६ प्रत्यर्थं ॥ ७ सन्निहितदिग्देशे ॥ ८ कालापेक्षया दूरत्वम् ॥ ९ कालापेक्षया सन्निहितत्वम् ॥ १० कालद्रव्यम् ॥ ११ कालद्रव्यं विनाऽन्यनिमित्त परापरादिप्रत्ययस्य भविष्यतीत्याशङ्कायामाह ॥ १२ प्रत्यय =प्रतीति ॥ १३ जैनादिभि ॥ १४ जैनै ॥ १५ व्यवहार ॥ १६ आदिना लवनिमेषघटिकामुहूर्त्तप्रहरादिग्रहणम् ॥ १७ अग्न्यादेरस्तित्वम् ॥ १८ माणवके ॥ १९ अग्ने ॥ २० कालपरमाणुलक्षणम् ॥ २१ मुख्यकालद्रव्यानेकत्वाभावे ॥ २२ हेतुरसिद्ध इत्युक्ते सत्याह ॥ २३ चन्द्रार्कादिदक्षिणायनोत्तरायणयो सतो ॥ २४ लोकाकाशप्रदेशे एकैके ये स्थिता खलु एकैके । रत्नाना राशिरिव ते कालाणवो ज्ञातव्या ॥ २५ सिद्धे हि क्रियाणामतीतादित्वे तत्सम्बन्धात्कालस्यातीतादित्वसिद्धिस्तत्सिद्धौ च तत्सम्बन्धात्तासा तत्सिद्धिरिति ॥

चायुक्ता निरंशत्वभेदरूपत्वयोर्विरोधात्[1]। यौगपद्यादिप्रत्ययाभावश्चैवंवादिनः स्यात् । तथा हि । यत्कार्यजात[2]मेकस्मिन्काले कृतं तद्युगपत्कृतमित्युच्यते । कालैकत्वे[3] चाखिलकार्याणामेककालोत्पाद्यत्वेनैकदैवोत्पत्तिप्रसङ्गान्न किञ्चिदयुगपत्कृतं स्यात्[4] । चिरक्षिप्रव्यवहाराभावश्चैवंवादिनः । यत्खलु बहुना कालेन कृतं तच्चिरेण कृतम् । यच्च स्वल्पेन कृतं तत्क्षिप्रं कृतमित्युच्यते । तच्चैतदुभयं कालैकत्वे दुर्घटम् । ननु चैकत्वेपि कालस्योपाधिभेदाद्भेदोपपत्तेर्न यौगपद्यादिप्रत्ययाभावः । तदुक्तं "मणिवत्पावकवद्वोपाधिभेदात्कालभेदः"[5] इति । तदप्ययुक्तं यतोऽत्रोपाधिभेदः कार्यभेद एव । स च युगपत्कृतमित्यत्राप्यस्त्येवेति किमित्ययुगपत्प्रत्ययो न स्यात्?[6] अथ क्रमभावी कार्यभेदः कालभेदव्यवहारहेतुः । ननु कोस्य क्रमभावः? युगपदनुत्पादश्चेद्युगपदनुत्पाद इत्यस्य भाषितस्य कोर्थः? एकस्मिन्कालेऽनुत्पादः[7] सोयमितरेतराश्रयः । यावद्धि कालस्य भेदो न सिद्ध्यति न तावत्कार्याणां भिन्नकालोत्पादलक्षणः क्रमः सिध्यति । यावच्च कार्याणां क्रमभावो न सिध्यति न तावत्कालस्योपाधिभेदाद्भेदः सिध्यतीति । ततः प्रतिक्षणं क्षणपर्यायः कालो भिन्नस्तत्समुदायात्मको लवनिमेषादिकालश्च । तथा चैककालमिदं चिरोत्पन्नमनन्तरोत्पन्नमित्येवमादिव्यवहारः स्यादुपपन्नो, नान्यथा । एतेन परापरव्यतिकरः[8] कालैकत्वे प्रत्युक्तः । तथा हि । भूम्यवयवैरालोकावयवैर्वा बहुभिरन्तरितं वस्तु विप्रकृष्टं परमिति चोच्यते स्वल्पैस्त्वन्तरितं सन्निकृष्टमपरमिति च । तथा बहुभिः क्षणैरहोरात्रादिभिर्वान्तरितं विप्रकृष्टं परमिति चोच्यते स्वल्पैस्त्वन्तरितं सन्निकृष्टमपरमिति च । बह्वल्पभावश्च[11] गुरुत्वपरिमाणादिवदपेक्षानिबन्धन[12]. कालैकत्वे दुर्घट इति यौगपद्यादिप्रत्ययाविशेषात्[13] । कालस्यैकत्वे च गुरुत्वपरिमाणादेरप्येकत्वप्रसङ्गस्तुल्याक्षेपसमाधानत्वात्[15] । ततो गुरुत्वपरिमाणादेरनेकगुणरूपतावत्कालस्यानेकद्रव्यरूपताभ्युपगन्तव्या[16] । ये[17] तु वास्तवं कालद्रव्यं नाभ्युपगच्छन्ति तेषां परापरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययानामभावः स्यात् । न खलु ते निर्निमित्ताः[18] कादाचित्कत्वाद्घटादिवत् । नाप्यविशिष्टनिमित्ता[19] विशिष्टप्रत्ययत्वात्[20] । न च दिग्गुणजातिनिमित्तास्ते[21] तज्जातप्रत्ययवैलक्षण्येनोपपत्तेः । तथा हि । अपरदिग्व्यवस्थिते[22]ऽप्रशस्ते[23]ऽधर्मजातीये[24] स्थविरपिण्डे परोयमिति

---

१ निरंशस्य कालस्यातीतत्ववर्तमानत्वभविष्यत्त्वलक्षणधर्माणा सद्भावो न घटते इति भाव ॥ २ कार्यसमूह ॥ ३ कालस्य निरंशकलादिरूपत्वे ॥ ४ अयौगपद्याभावे तदपेक्षया जायमानस्य यौगपद्यस्याप्यभाव इति भाव ॥ ५ यथा स्फटिकमणौ पावके च यथाक्रम जपाकुसुमादिरक्तादिरादिलक्षणोपाधिभेदाद्भेदस्तथा कायलक्षणोपाधिभेदाद्भेद कालस्यापीत्यर्थं ॥ ततश्च व्यतिकरो न स्यादिति भाव ॥ ६ कालक्रमेणोत्पाद इत्यर्थ ॥ ७ कालस्यैकत्वे यौगपद्याभावो यत ॥ ८ वस ॥ ९ विपर्यय ॥ १० कालस्य ॥ ११ अस्मादय गुरुरस्माल्लघुरिति व्यवहारो वस्तुन एकत्वे दुर्घटो यथा ॥ १२ स्वपरापेक्षा ॥ १३ गुरुत्वादिप्रत्ययाविशेषात् ॥ १४ अल्पपरिमाणस्यापि ॥ १५ गुरुत्वपरिमाणमल्पत्वपरिमाण च प्रतिपदार्थं भिद्येत इत्याक्षेप । समाधान—तर्हि यौगपद्यादिप्रत्ययोपि प्रतिपदार्थं भिद्यते इति समानम् ॥ १६ नित्यनिरंशैकद्रव्यरूपत्वे चार्थाना भूतभविष्यद्वर्तमानत्व दुर्घटमतीतानागतवर्तमानकालभेदाभावात् । सिद्धे हि तद्भेदे तत्सम्बन्धादर्थाना तथा व्यपदेश स्यान्नान्यथातिप्रसङ्गात् । न चास्य तत्सिद्धिर्घटते नित्यनिरंशैकरूपत्वात् । यदेवविध न तत्रातीतादिस्वरूपभेदा । यथा परमाणौ । नित्यनिरंशैकरूपश्च भवद्भि परिकल्पित काल ॥ १७ मीमासकसौगतद्राविडा ॥ १८ किंतु काललक्षणकारणोत्पाद्या इत्यर्थ ॥ १९ अविशिष्ट=साधारणम् ॥ २० परप्रत्यय, अपरप्रत्यय इत्यादिरूपेण ॥ २१ परापरादिप्रत्ययानाम् ॥ २२ निरुद्दिक् ॥ २३ गुणापेक्षया ॥ २४ मातङ्गादौ ॥

प्रत्ययो दृश्यते । परदिग्व्यवस्थिते चोत्तमजातीये प्रशस्ते यूनि पिण्डेऽपरोयमिति प्रत्ययो दृश्यते। अथादित्यादिक्रिया तन्निमित्तम् । जन्मनो हि प्रभृत्येकस्य प्राणिन आदित्यैर्[1]वर्तनानि भूयांसीति परत्वमन्यस्य चाल्पीयांसीत्यपरत्वम् । नन्वेवं कथं यौ[2]गपद्यादिप्रत्ययप्रादुर्भाव एकस्मिन्नेवादित्यपरिवर्त्तने सर्वेषामुत्पादात्, तथा व्यपदेशाभावाच्च[3] । युगपत्काल इति हि व्यपदेशो न पुनर्युगपदादित्यपरिवर्त्तनमिति[4] । न[5] च क्रियैव कालोस्याः क्रि[6]यारूपतयाऽविशेषतो युगपदादिप्रत्ययाभावानुषङ्गात् । तस्य चोक्तकार्यनिर्वर्त्तकस्य कालस्य क्रियेति नामान्तरकरणे नाममात्रं भिद्येत । न[8] च कर्तृकर्मणी एव यौगपद्यादिप्रत्ययस्य निमित्तं यतो यौगपद्यं बहूनां कर्तॄणां कार्ये व्यापारो युगपदेते कुर्वन्तीति प्रत्ययसमधिगम्यः । बहूनां च कार्याणामात्मलाभो युगपदेतानि कृतानीति–प्रत्ययसमधिगम्यः । न चा[10]त्र कर्तृमात्रं कार्यमात्रं वा[11]लम्बनमतिप्रसङ्गात् । यत्र हि क्रमेण कार्यं तत्रापि कर्तृकर्मणोः सद्भावात्स्यादेतद्विज्ञानम् । न चैवम् । अथाऽयौगपद्यप्रत्ययोप्ययुगपदेते कुर्वन्तीति, अयुगपदेतत्कृतमिति नाविशिष्टं कर्तृकर्ममात्रमालम्बतेऽतिप्रसङ्गादेव । अत[12]स्तद्विशेषणं कालोऽभ्युपगन्तव्यः । कथमन्यथा चिरक्षिप्रव्यवहारोपि स्यात् ? एक एव हि कर्ता किञ्चित्कार्यं चिरेण करोति व्यासङ्गादनर्थित्वाद्वा, किञ्चित्तु क्षिप्रमर्थितया । तत्र चिरेण कृतं क्षिप्रं कृतमिति प्रत्ययौ विशिष्टत्वाद्विशिष्टं निमित्तमाक्षिपत इति कालसिद्धिः । लोकव्यवहाराच्च । प्रतीयन्ते हि प्रतिनियत एव काले प्रतिनियता वनस्पतयः पुष्यन्तीत्यादिव्यवहारं कुर्वन्तो व्यवहारिणः[13] । यथा वसन्तसमये एव पाटलादिकुसुमानामुद्भवो, न कालान्तरे । इत्येवं कार्यान्तरे[14]ष्वप्यभ्यूह्यम् । प्रसवनकालमपेक्षते इति व्यवहारात् समयमुहूर्त्तयामाहोरात्रार्द्धमासर्त्वयनसंवत्सरादिव्यवहाराच्च तत्सिद्धिः । तन्न परपरिकल्पितं कालद्रव्यमपि घटते ।

नापि दिग्द्रव्यं तत्सद्भावे प्रमाणाभावात् । यच्च दिशः सद्भावे प्रमाणमुक्तं–मूर्तेष्वेव द्रव्येषु मूर्त्तद्रव्यमवधिं कृत्वेदमतः पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेणाऽपरोत्तरेणोत्तरपूर्वेणाधस्तादुपरिष्टादित्यमी दश प्रत्यया यतो भवन्ति सा दिगिति । तथा च सूत्रम् "अत इ[15]दमिति यतस्तद्दिशो लिङ्गम्" । [16]तथा च दिग्द्रव्यमितरेभ्यो भिद्यते दिगिति व्यवहर्त्तव्यं पूर्वादिप्रत्ययलिङ्ग[17]त्वात् । यत्तु न तथा न तत्पूर्वादिप्रत्ययलिङ्गम् । यथा क्षित्यादि । तथा चेदम् । तस्मात्तथेति । न चैते प्रत्यया निर्निमित्ताः कादाचित्क[18]त्वात् । नाप्यविशि[19]ष्टनिमित्ता विशिष्टप्रत्ययत्वाद्दण्डीति-

१ अतद्गुणसंविज्ञानोऽयं बहु० । यौगपद्यमादिर्येषामयौगपद्यादीनां ते यौगपद्यादय इति । तेनायौगपद्यादिप्रत्ययप्रादुर्भावः कथमित्यर्थः सम्पन्नः ॥ २ युगपदादित्यपरिवर्तनमिति ॥ ३ अमुना हेतुना यौगपद्यस्याभावः कृतः ॥ ४ कालव्यतिरिक्तस्य निमित्तस्य यौगपद्यादिप्रत्यये विचार्यमाणस्यानुपपद्यमानत्वात्तदादित्यपरिवर्तनं स्यात्क्रियाविशेषो वा ? न तावदादित्यपरिवर्तनमेकस्मिन्नप्यादित्यपरिवर्तने सर्वेषामुत्पादादिति । अस्य परिवर्तनं मेरुप्रादक्षिण्येन परिभ्रमणमहोरात्रमभिधीयते । तस्मिन्नेकस्मिन्नपि यौगपद्यादिप्रतीतिविषयभूतार्थानामुत्पादः प्रतीयते एव तथा व्यपदेशाभावाच्चेति ॥ ५ क्रिया कालो भविष्यतीत्याह ॥ ६ कालरूपतया यौगपद्यादिप्रत्ययो, न पुनः क्रियारूपतया ॥ ७ भेदाभावत ॥ ८ तर्हि कर्तृकर्मणी यौगपद्यादिप्रत्ययस्य निमित्तं भविष्यतीत्युक्ते सत्याह ॥ ९ यौगपद्यम् ॥ १० यौगपद्यप्रत्यये ॥ ११ विषयः, कारणमित्यर्थः ॥ १२ युगपदेते कुर्वन्ति युगपदेतानि कृतानीति तयोः कर्तृकर्मणोः ॥ १३ पुरुषाः ॥ १४ पुत्रोत्पत्त्यादिलक्षणेषु ॥ १५ ज्ञानं भवतीति शेषः ॥ १६ लिङ्गसिद्धौ ॥ १७ बहु० ॥ १८ पटादिवत् ॥ १९ साधारणाऽऽकाशादिकारणका न भवन्तीति भावः ॥

प्रत्ययवत् । न चान्योन्यापेक्षमूर्त्तद्रव्यनिमित्ताः परस्पराश्रयत्वेनोभयप्रत्ययाभावानुषङ्गात् । ततोऽन्यनिमित्तोत्पाद्यत्वासम्भवादेते दिश एवानुमापकाः । प्रयोगः । यदेतत्पूर्वापरादिज्ञानं तन्मूर्त्तद्रव्यव्यतिरिक्तपदार्थनिबन्धनं तत्प्रत्ययविलक्षणत्वात्सुखादिप्रत्ययवत् । विभुत्वैकत्वनित्यत्वादयश्चास्या धर्माः कालवदवगन्तव्याः । तस्याश्चैकत्वेपि प्राच्यादिभेदव्यवहारो भगवतः सवितुर्मेरुं प्रदक्षिणमावर्त्तमानस्य लोकैपालगृहीतदिक्प्रदेशैः संयोगाद्घटते । तदप्यसमीचीनं प्रोक्तप्रत्ययानामाकाशहेतुकत्वेनाकाशाद्दिशोऽर्थान्तरत्वासिद्धेः । तत्प्रदेशश्रेणिष्वेव ह्यादित्योदयादिवशात्प्राच्यादिदिग्व्यवहारोपपत्तेर्न तेषां निर्हेतुकत्वं नाप्यविशिष्टपदार्थहेतुकत्वम् । तथाभूतप्राच्यादिदिक्संबन्धाच्च । मूर्त्तद्रव्येषु पूर्वापरादिप्रत्ययविशेषस्योत्पत्तेर्न परस्परापेक्षया मूर्त्तद्रव्याण्येव तद्धेतवो येनैकतरस्य पूर्वत्वासिद्धावन्यतरस्यापरत्वासिद्धिः । तदसिद्धौ चैकतरस्य पूर्वत्वायोगादितरेतराश्रयत्वेनोभयाभावः स्यात् । नन्वेवमाकाशप्रदेशश्रेणिष्वपि कुतस्तत्सिद्धिः ? स्वरूपत एव तत्सिद्धौ तस्य परावृत्त्यभावप्रसङ्गः । अन्योन्यापेक्षया तत्सिद्धावन्योन्याश्रयणादुभयाभावस्तदेतद्दिक्प्रदेशेष्वपि पूर्वापरादिप्रत्ययोत्पत्तौ समानम् । यथैव हि मूर्त्तद्रव्यमवधिं कृत्वा मूर्त्तेष्वेवेदमतः पूर्वेणेत्यादिप्रत्यया दिग्द्रव्यहेतुकास्तथा दिग्भेदमवधिं कृत्वा दिग्भेदेष्वेवैयमतः पूर्वेत्यादिप्रत्यया द्रव्यान्तरहेतुकाः सन्तु विशिष्टप्रत्ययत्वाविशेषात् । तथा चानवस्था परस्परापेक्षया तत्सिद्धावितरेतराश्रयणादुभयाभावः । स्वरूपतस्तत्प्रत्ययप्रसिद्धौ तेनैवानेकान्तात् कुतो दिग्द्रव्यसिद्धिस्तत्प्रत्ययपरावृत्त्यभावश्चानुपज्यः । सवितुर्मेरुं प्रदक्षिणमावर्त्तमानस्येत्यादिन्यायेन दिग्द्रव्ये प्राच्यादिव्यवहारोपपत्तौ तत्प्रदेशपङ्क्तिष्वप्यत एव तद्व्यवहारोपपत्तेरलं दिग्द्रव्यकल्पनया देशद्रव्यस्यापि कल्पनाप्रसङ्गात् । अयमतः पूर्वो देश इत्यादिप्रत्ययस्य देशद्रव्यमन्तरेणानुपपत्तेः । पृथिव्यादिरेव देशद्रव्यमित्यसत्तत्र पृथिव्यादिप्रत्ययोत्पत्तेः । पूर्वादिदिक्कृतः पृथिव्यादिषु पूर्वदेशादिप्रत्ययश्चेत्तर्हि पूर्वाद्याकाशकृतस्तत्रैव पूर्वादिदिक्प्रत्ययोस्त्वऽलं दिक्कल्पनाप्रयासेन । नन्वेवमादित्योदयादिवशादेवाकाशप्रदेशपङ्क्तिष्विव पृथिव्यादिष्वपि पूर्वापरादिप्रत्ययसिद्धेराकाशप्रदेशश्रेणिकल्पनाप्यनर्थिका भवत्विति चेन्न पूर्वस्यां

१ एकस्य वस्तुन पूर्वत्वसिद्धौ सत्या तदपेक्षया इतरस्यापरत्वसिद्धिरितरस्यापरत्वसिद्धौ सत्या च तदपेक्षयाऽपरत्वसिद्धि(प्रथमस्य पूर्वत्वसिद्धि)रिति ॥ २ नान्यस्याकाशादे ॥ ३ इन्द्रादि ॥ ४ आकाशस्यैकत्वादिव्यवहार कथ स्यादित्याह ॥ ५ आकाशप्रदेशलक्षण ॥ ६ पूर्वादे ॥ ७ पश्चिमादे ॥ ८ मूर्त्तद्रव्येषु पूर्वापरादिप्रत्ययविशेषोत्पत्तिप्रकारेण ॥ ९ तस्य=पूर्वापरत्वस्य ॥ १० पूर्वापरादे ॥ ११ परावृत्ति=निवृत्ति ॥ १२ न च तथा पूर्वादिदिशामपि कस्यचिद्देशस्यापेक्षया पश्चिमादिव्यपदेशोस्ति ॥ १३ पूर्वापेक्षयाऽपर, अपरापेक्षया पूर्व इति ॥ १४ चोद्यम् ॥ १५ भवन्मते ॥ १६ दिक् ॥ १७ दिश सकाशात् ॥ १८ जैनमते ॥ १९ अन्या दिग्द्रव्यापेक्षयाऽनवस्था तत्रापि तत्प्रत्ययहेतुत्वस्यापरदिग्द्रव्यहेतुत्वप्रसङ्गात् ॥ २० दिग्भेदेषु दिग्द्रव्यव्यतिरिक्तद्रव्यान्तराभावेपि पूर्वापरादिप्रत्ययस्य स्वतो जायमानत्वात् ॥ २१ पूर्वापरेति ॥ २२ पूर्वापरादिप्रत्ययेन ॥ २३ तत्प्रत्ययविलक्षणत्वादित्यस्य हेतो ॥ २४ दिग्द्रव्य पूर्वापरादिप्रत्ययस्य कारण न भवतीति भाव ॥ २५ पूर्वापर ॥ २६ तस्य=आकाशस्य ॥ २७ प्राच्यादि ॥ २८ तथा च नव द्रव्याणीति द्रव्यसंख्याव्याघात स्यात् ॥ २९ तस्य पृथिव्यादिप्रत्ययहेतुत्वेनायमत पूर्वो देश इति प्रत्ययहेतुत्वाऽनुपपत्ते ॥

दिशि पृथिव्यादय इत्याद्याधाराधेयव्यवहारोपलम्भात्पृथिव्याद्यधिकरणभूतायास्तत्प्रदेशपङ्क्तेः परिकल्पनस्य सार्थकत्वात् । आकाशस्य च प्रमाणान्तरतः प्रसाधितत्वात् । तन्न परपरिकल्पितं दिग्द्रव्यमप्युपपद्यते ।

नाप्यात्मद्रव्यम् । तद्धि सर्वगतत्वादिधर्मोपेतं परैरभ्युपेयते । न चास्य तदुपेतत्वमुपपद्यते प्रत्यक्षविरोधात् । प्रत्यक्षेण ह्यात्मा सुख्यहं दुःख्यहं घटादिकमहं वेद्मीत्यहमहमिकया स्वदेह एव सुखादिस्वभावतया प्रतीयते, न देहान्तरे परसम्बन्धिनि, नाप्यन्तराले । इतरथा सर्वस्य सर्वत्र तथा प्रतीतिरिति सर्वदर्शित्वं भोजनादिव्यवहारसङ्कर[3]श्च स्यात् । अनुमानविरोधाच्चास्य तद्धर्मोपेतत्वायोगः । तथा हि । नात्मा परममहापरिमाणाधिकरणो द्रव्यान्तराऽसाधारणसामान्यवत्त्वे सत्यनेकत्वाद्धटादिवत् । अनेकत्वादित्युच्यमाने हि सामान्ये[5]नानैकान्तस्तत्परिहारार्थं सामान्यवत्त्वे सतीति विशेषणम् । त[6]थाकाशादिना व्यभिचारस्तत्परिहारार्थं द्रव्यान्तरासाधारणसामान्यवत्त्वे सतीत्युच्यते । एकस्मा[7]द्धि द्रव्यादन्यद्द्रव्यं द्रव्यान्तरम् । तदसाधारणसामान्यवत्त्वे सत्यनेकत्वमाकाशादौ[8] नास्तीति । अत[9] एव परममहापरिमाणलक्षणगुणेनापि नानैकान्तः । तथा नात्मा तत्परिमाणाधिकरणो दिक्कालाकाशान्यत्वे सति द्रव्यत्वाद्धटादिवत् । न सामान्येन परममहापरिमाणेन वानैकान्तस्तयोरद्रव्यत्वात् । नापि दिगादिना तदन्यत्वे सतीति विशेषणात् । तथा नात्मा तत्[10]परिमाणाधिकरणः क्रियावत्त्वाद्बाणादिवत् । न चेदमसिद्धं योजनमहमागतः क्रोशं वेत्यादिप्रतीतितस्तत्सिद्धेः । न च मनः शरीरं वागतमित्यभिधातव्यं तस्याहंप्रत्ययाऽवेद्यत्वात् । अन्यथा चार्वाकमतप्रसङ्गः स्यात् । प्रसाधयिष्यते चाग्रे[11] विस्तरतोस्य क्रियावत्त्वमित्यलमतिप्रसङ्गेन । तथात्माऽणुपरममहत्त्वपरिमाणानधिकरणश्चेतनत्वात् । ये तु तत्परिमाणाधिकरणा न ते चेतनाः । यथाकाशपरमाण्वादयः । चेतनश्चात्मा । तस्मान्न तत्परिमाणाधिकरण इति । ननु चात्मा परममहापरिमाणाधिकरणो न भवतीति प्रतिज्ञाऽनुमानबाधिता[12] । तच्चानुमानम्—आत्मा व्यापकोऽणु[13]परिमाणानधिकरणत्वे सति नित्यद्रव्यत्वादाकाशवत् । अणुपरिमाणानधिकरणोसावसर्वदा[14]दिप्रत्य[15]क्षविशेषगुणाधिकरणत्वाद्धटादिवत् । त[17]था नित्यद्रव्यमात्माऽस्पर्शवद्द्र[18]व्यत्वादाकाशवदेवेति । अत्रोच्य[19]ते । अणुपरिमाणप्रतिषेधोत्र पर्युदासः प्रसज्यो वाभिप्रेतः? यदि पर्युदासस्तदासौ भावान्तरस्वीकारेण प्रवर्त्तते । भावान्तरं च किं परममहापरिमाणमवान्तरपरिमाणं वा स्यात्? प्रथमपक्षे साध्याविशिष्ट[20]त्वं हेतुविशेषणस्य ।

---

१ व्योम ॥ २ निखिलद्रव्यावगाहान्यथानुपपत्ते ॥ ३ आत्मन सर्वैरात्मभि सम्बन्धात् ॥ ४ गोलाऽश्वमहिषत्वादिना ॥ ५ सामान्यवत्त्वादित्युच्यमाने ॥ ६ यतो द्रव्यत्व सत्त्व वा सामान्यमाकाशादिषु ॥ ७ आत्मलक्षणात् ॥ ८ आकाशम् ॥ ९ गुणत्वसामान्यसद्भावादनेकत्वाभावाच्च ॥ १० तत्—परममहत् ॥ ११ अत्रैवात्मसर्वगतत्वादिनिराकरणे ॥ १२ कालात्ययापदिष्टेन हेतुना ॥ १३ परमाणुभिरनेकान्तपरिहारार्थमेतत् । परमाणुषु नित्यत्वमस्ति व्यापकत्व च नास्तीति भाव ॥ १४ हेतोर्विशेषणसमर्थनार्थमेतत् ॥ १५ योगिप्रत्यक्षविशेषगुणाधिकरणै परमाणुभिर्व्यभिचारस्तत्परिहारार्थमसदादिपदम् ॥ १६ प्रत्यक्षाश्च ते विशेषगुणाश्च तेषामधिकरणम् ॥ १७ हेतोर्विशेष्यदलसमर्थनार्थम् ॥ १८ क्रिययाऽनेकान्तपरिहारार्थं द्रव्येति ॥ १९ हेतोर्विशेषणं निरस्यति जैन ॥ २० साध्यसमत्वम् । महापरिमाणस्यार्थो हि व्यापकत्वम् । एव सति आत्मा व्यापक व्यापकत्वादित्यायात महापरिमाणव्यापकत्वयो समानार्थत्वात् ॥

यथाऽनित्यः शब्दोऽनित्यत्वे सति बाह्येन्द्रियप्रत्यक्षत्वादिति । द्वितीयपक्षे तु विरुद्धत्वं यथा नित्यः शब्दोऽनित्यत्वे सति बाह्येन्द्रियप्रत्यक्षत्वादिति । प्रसज्यप्रतिषेध्यसिद्धत्वं तुच्छस्वभावाभावस्य प्रमाणाविषयत्वेन प्रतिपादनात् । सिद्धौ वा किमसौ साध्यस्य स्वभावः कार्यं वा? यदि स्वभावस्तर्हि साध्यस्यापि तद्वत्तुच्छरूपतानुषङ्गः । अथ कार्यं, तन्न—तुच्छस्वभावाभावस्य कार्यत्वायोगात् । कार्यत्वं हि किं स्वकारणसत्तासमवायः कृतमिति बुद्धिविषयत्वं वा? न तावदाद्यः पक्षोऽभावस्य स्वकारणसत्तासमवायानभ्युपगमात् । अन्यथा भावरूपतैवास्य स्यात् । नापि द्वितीयस्तुच्छस्वभावाभावस्य तद्विषयत्वासम्भवात् । तस्य हि प्रमाणागोचरत्वे कथं कृतबुद्धिविषयत्वं सम्भवेत्? अनैकान्तिकं चैतत् खननोत्सेचनानन्तरमकार्येप्याकाशे कृतबुद्धिविषयत्वसम्भवात् । नित्यद्रव्यत्वं च किं कथञ्चित्सर्वथा वा विवक्षितम्? कथञ्चिच्चेद्घटादिनानेकान्तस्तस्याणुपरिमाणानधिकरणत्वे कथञ्चिन्नित्यद्रव्यत्वे च सत्यपि व्यापित्वाभावात् । सर्वथा चेदसिद्धत्वं सर्वथा नित्यस्य वस्तुनोऽनर्थक्रियाकारित्वेनाश्वविषाणप्रख्यत्वप्रतिपादनात् । अस्मदादिप्रत्यक्षविशेषगुणाधिकरणत्वाच्चाणुपरिमाणप्रतिषेधमात्रमेव स्याद्घटादिवत् । तस्य चेष्टत्वात्सिद्धसाध्यता । अस्पर्शवद्द्रव्यत्वाच्चात्मनो यदि कथञ्चिन्नित्यत्वं साध्यते तदा सिद्धसाध्यता । अथ सर्वथा तर्हि हेतोरनन्वयत्वमाकाशादीनामपि सर्वथा नित्यत्वस्य प्रतिषिद्धत्वात् । ननु देहान्तरे परसम्बन्धिन्यन्तराले चात्मा न प्रतीयते इत्ययुक्तमुक्तमनुमानात्तत्रास्य सद्भावप्रतीतेः । तथा हि । देवदत्ताङ्गनाद्यङ्गं देवदत्तगुणपूर्वकं कार्यत्वे सति तदुपकारकत्वाद्ग्रासादिवत् । कार्यदेशे च सन्निहितं कारणं तज्जन्मनि व्याप्रियते नान्यथा । अतस्तदङ्गादिकार्यप्रादुर्भावदेशे तत्कारणवत्तद्गुणसिद्धिः । यत्र च गुणाः प्रतीयन्ते तत्र तद्गुण्यप्यनुमीयते एव तमन्तरेण तेषामसम्भवात् । इत्यप्यसाम्प्रतं यतो देवदत्ताङ्गनाद्यङ्गादिकार्यस्य कारणत्वेनाभिप्रेता ज्ञानदर्शनादयो देवदत्तात्मगुणा धर्माधर्मौ वा? न तावज्ज्ञानदर्शनसुखादयः स्वसंवेदनस्वभावास्तज्जन्मनि व्याप्रियमाणाः प्रतीयन्ते । वीर्यं तु शक्तिः । सापि तद्देह एवानुमीयते तत्रैव तल्लिङ्गभूतक्रियायाः प्रतीतेः । तज्ज्ञानादेस्तद्देह एव तत्कार्यकारणविमुखस्याध्यक्षादिना प्रतीतेस्तद्बाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टः कार्यत्वे सति तदुपकारकत्वादिति हेतुः । अथ धर्माधर्मौ तदङ्गादिकार्यं तन्निमित्तमस्माभिरपीष्यते एव । तदात्मगुणत्वं तु तयोरसिद्धम् । तथा हि । न धर्माधर्मावात्मगुणावऽचेतनत्वाच्छब्दादिवत् । न सुखादिना व्यभिचारोत्र हेतोरवर्त्तनात् तद्विरुद्धेन स्वसंवेदनलक्षणचैतन्येनास्याऽव्याप्तत्वासाधनात् । नाप्यसिद्धताऽचेतनौ तौ स्वग्रहणविधुरत्वात्पटादिवत् । न च बुद्ध्यास्य व्यभिचारोऽस्याः स्वग्रहणात्मकत्वप्रसाधनात् । प्रसाधितं च पौद्गलिकत्वं कर्मणा सर्वज्ञसिद्धि-

१ व्यापकत्वविशिष्टस्यात्मन ॥ २ हेतोर्विशेष्य निरस्यति ॥ ३ न तु परममहापरिमाणमवान्तरपरिमाण वा सिध्येत् ॥ ४ तथाविधसाध्येन व्याप्तस्य हेतोर्दृष्टान्ते सत्त्व नास्तीति भाव ॥ ५ महेश्वरेणानेकान्तपरिहारार्थं तमेत् ॥ ६ व्याघ्रादिना व्यभिचारपरिहारार्थं तदुपकारकेति ॥ ७ लिङ्ग—ज्ञापकम् ॥ ८ भारवाहादिकाया ॥ ९ देवदत्ताङ्गनाद्यङ्गादि ॥ १० वीर्यानुमान ॥ ११ पक्ष ॥ १२ वम ॥ १३ धर्माधर्मरूपाणाम् ॥

प्रस्तावे तदलमतिप्रसङ्गेन । तदेवं धर्माधर्मयोस्तदात्मगुणत्वनिषेधात्तन्निषेधानुमानबाधितमेतद्देवदत्ताङ्गनाद्यङ्गं देवदत्तगुणपूर्वकमिति । अस्तु वा तयोर्गुणत्वं तथापि न तदङ्गनाङ्गादिप्रादुर्भावदेशे तत्सद्भावसिद्धिः । न खलु सर्वं कारणं कार्यदेशे सदेव तज्जन्मनि व्याप्रियते—अञ्जनतिलकमन्त्राऽयस्कान्तादेराकृष्यमाणाङ्गनादिदेशेऽसतोप्याकर्षणादिकार्यकर्तृत्वोपलम्भात् । कार्यत्वे सतीति च विशेषणमनर्थकम् । यदि हि तद्गुणपूर्वकत्वाभावेपि तदुपकारकत्वं दृष्टं स्यात् तदा कार्यत्वे सतीति विशेषणं युज्येत—सति सम्भवे व्यभिचारे च विशेषणमुपादीयमानमर्थवद्भवतीति न्यायात् । कालेश्वरादौ दृष्टमिति चेत्तर्हि कालेश्वरादिकमतद्गुणपूर्वकमपि यदि तदुपकारकं, कार्यमपि किञ्चिदन्यपूर्वकमपि तदुपकारकं भविष्यतीति सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिको हेतुः क्वचित्सर्वज्ञत्वाभावे साध्ये वागादिवत् । न च नित्यैकस्वभावात्कालेश्वरादेः कस्यचिदुपकारः सम्भवतीत्युक्तम् । न च नकुलशरीरप्रध्वंसाभावोऽहेरुपकारकोस्ति तस्मिन्सति सुखावासभ्रमणादिभावादतः सोपि तद्गुणपूर्वकः स्यात् । तथा च कार्यत्वासम्भवेन सविशेषणस्य हेतोरवर्त्तमानाद्भागासिद्धो हेतुः । प्रत्युक्तं चाभावस्यानन्तरमेव कार्यत्वम् । अथाऽतद्गुणपूर्वकोऽन्यदप्यतद्गुणपूर्वकमपि तदुपकारकं किन्न स्यात् ? साध्यविकलं चेदं निदर्शनं ग्रासादिवदिति । तत्र ह्यात्मनः को गुणो धर्मादिः प्रयत्नो वा स्यात् ? धर्मादिश्चेत् साध्यवत्प्रसङ्गः । प्रयत्नश्चेत्कोयं प्रयत्नो नामाऽऽत्मनस्तदवयवाना वा हस्ताद्यवयवप्रविष्टानां परिस्पन्दः ? स तर्हि चलनलक्षणा क्रिया कथं गुणोऽन्यथा गमनादेरपि गुणत्वानुषङ्गात्क्रियावार्त्तोच्छेदः । तथा चायुक्तं क्रियावत्त्वं द्रव्यलक्षणम् । यदप्युक्तम् 'अदृष्टं स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभते एकद्रव्यत्वे सति क्रियाहेतुगुणत्वात्प्रयत्नवत् । न चास्य क्रियाहेतुत्वमसिद्धम् । तथा हि । अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्म देवदत्तविशेषगुणकारित कार्यत्वे सति तदुपकारकत्वात्पाण्यादिपरिस्पन्दवत् । नाप्येकद्रव्यत्वम् । तथा हि । एकद्रव्यमदृष्टं विशेषगुणत्वाच्छब्दवत् । एकद्रव्यगुणत्वादित्युच्यमाने रूपादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं क्रियाहेतुगुणत्वादिति विशेषणम् । क्रियाहेतुगुणत्वादित्युच्यमाने हस्तमुसलसंयोगेन स्वाश्रयासंयुक्तस्तम्भादिक्रियाहेतुनानेकान्तस्तन्निवृत्त्यर्थमेकद्रव्यत्वे सतीति । एकद्रव्यत्वे सति क्रियाहेतुत्वादित्युच्यमाने स्वाश्रयासंयुक्तलोहादिक्रियाहेतुनाऽयस्कान्तेनानेकान्तस्तत्परिहारार्थं गुणत्वादित्यु-

---

१ ततश्चाचेतनत्व कर्मणाम् ॥ २ कर्मणा पौद्गलिकत्वसमर्थनस्य ॥ ३ आदिना लोहादिदेशे ॥ ४ हेतोर्विपक्षे वृत्तिनिवृत्त्यर्थं हेतो विशेषण योजयन्त्याचार्या इति वचनात् ॥ ५ विपक्षे ॥ ६ कुत्रचिन्निदर्शने ॥ ७ विशेष्यस्य ॥ ८ हेतो ॥ ९ अकार्यरूपे ॥ १० अकार्यत्वे सति तदुपकारकत्वम् ॥ ११ तस्य=देवदत्तादे ॥ १२ अभावस्य कार्यत्वासम्भवेन ॥ १३ अणुपरिमाणानधिकरणत्वस्य प्रमज्यपक्षे ॥ १४ देवदत्ताङ्गनाद्यङ्गमपि ॥ १५ साध्यमसिद्ध यथा तथा धर्मादिगुणत्वमप्यसिद्धम् ॥ १६ स्वाश्रय =आत्मा ॥ १७ द्वीपान्तरवर्त्तिपदार्थे ॥ १८ एकद्रव्यमात्मा । यस ॥ १९ यस ॥ २० आत्ममनसो सर्वथा भेदात् ॥ २१ अणुमनसो शरीरोत्पत्तिदेश प्रति गमनक्रिया ॥ २२ असिद्धमिति सबन्ध ॥ २३ पुद्गललक्षणैकद्रव्य रूप यत ॥ २४ क्रिया=हननलक्षणा ॥ २५ हस्तमुसलद्रव्यद्वयसद्भावात् । उलूखले धान्यादिके खण्ड्यमाने सति , दूरतोऽसयुक्तस्तम्भादि पततीति भाव ॥ २६ स्वाश्रयो=भूम्यादि ॥ २७ क्रिया=आकर्षणम् ॥ २८ भूम्यादौ स्थितोऽयस्कान्त ऊर्ध्वस्थितमसयुक्त लोहादिकमाकर्षतीति भाव ॥

कम्।' तदेतदप्यविचारितरमणीयमदृष्टस्य गुणत्वप्रतिषेधात्। अतो विशेष्यासिद्धो हेतुर्विशेषणासिद्धश्चैकद्रव्यत्वाप्रसिद्धेः। तद्धि किमेकस्मिन्द्रव्ये संयुक्तत्वात्समवायेन वर्त्तमानादन्यतो वा स्यात्? न तावत्संयुक्तत्वात्संयोगस्य गुणत्वेन द्रव्याश्रयत्वाददृष्टस्य चाद्रव्यत्वात्। अन्यथा गुणवत्त्वेनास्य द्रव्यत्वानुषङ्गात्क्रियाहेतुगुणत्वादित्येतद्विघटते। समवायेन वर्त्तनं च समवाये सिद्धे सिद्ध्येत्। स चासिद्धोऽग्रे निषेधात्। तृतीयपक्षस्त्वनभ्युपगमादेव न युक्तः। क्रियाहेतुत्वं चास्याऽनुपपन्नम्। तथा हि। देवदत्तशरीरसंयुक्तात्मप्रदेशे वर्त्तमानमदृष्टं द्वीपान्तरवर्त्तिषु मणिमुक्ताफलप्रवालादिषु देवदत्तं प्रत्युपसर्पणवत्सु क्रियाहेतुरुत द्वीपान्तरवर्त्तिद्रव्यसंयुक्तात्मप्रदेशे किं वा सर्वत्र? तत्राद्यपक्षस्यानभ्युपगम एव श्रेयान्—अतिव्यवहितत्वेन द्वीपान्तरवर्त्तिद्रव्यैस्तस्यानभिसम्बन्धेन तत्र क्रियाहेतुत्वायोगात्। ननु स्वाश्रयसंयोगसम्बन्धसंभवात्तेषामनभिसम्बन्धोऽसिद्धः। अमुमेव ह्यात्मानमाश्रित्यादृष्टं वर्त्तते। तेन संयुक्तानि सर्वाण्यप्याकृष्यमाणद्रव्याणीत्यप्ययुक्तं—तस्य सर्वत्राविशेषेण सर्वस्याकर्षणानुषङ्गात्। अथ यददृष्टेन यज्जन्यते तददृष्टेन तदेवाकृष्यते, न सर्वं तर्हि देवदत्तशरीरारम्भकाणां परमाणूनां नित्यत्वेन तददृष्टाजन्यत्वात् कथं तददृष्टेनाकर्षणम्? तथाप्याकर्षणेऽतिप्रसङ्गः। तन्नाद्यः पक्षो युक्तः। नापि द्वितीयः। तथा हि। यथा वायुः स्वयं देवदत्तं प्रत्युपसर्पणवानन्येषां तृणादीनां तं प्रत्युपसर्पणहेतुस्तथाऽदृष्टमपि तं प्रत्युपसर्पत्स्वयमन्येषां तं प्रत्युपसर्पतां हेतुः द्वीपान्तरवर्त्तिद्रव्यसंयुक्तात्मप्रदेशस्थमेव वा? प्रथमपक्षे स्वयमेवादृष्टं तं प्रत्युपसर्पत्यदृष्टान्तराद्वा? स्वयमेवास्य तं प्रत्युपसर्पणे द्वीपान्तरवर्त्तिद्रव्याणामपि तथैव तदित्यदृष्टपरिकल्पनमनर्थकम्। यद्देवदत्तं प्रत्युपसर्पति तद्देवदत्तगुणाकृष्टं तं प्रत्युपसर्पणादिति हेतुश्चानैकान्तिकः स्यात्। वायुवच्चादृष्टस्य सक्रियत्वं गुणत्वं बाधेत। शब्दवच्चापरापरस्योत्पत्तावपरमदृष्टं निमित्तकारणं वाच्यं, तत्राप्यपरमित्यनवस्था। अन्यथा शब्देऽप्यदृष्टस्य निमित्तत्वकल्पना न स्यात्। अदृष्टान्तरात्तस्य तं प्रत्युपसर्पणे तदप्यदृष्टान्तरं तं प्रत्युपसर्पत्यदृष्टान्तरात्तदपि तदन्तरादिति तदवस्थमनवस्थानम्। अथ द्वीपान्तरवर्त्तिद्रव्यसंयुक्तात्मप्रदेशस्थमेव तत्तेषां तं प्रत्युपसर्पणहेतुर्न—अन्यत्र प्रयत्नादावात्मगुणे तथानभ्युपगमात्। न खलु प्रयत्नो ग्रासादिसंयुक्तात्मप्रदेशस्थ एव हस्तादिसञ्चलनहेतुर्ग्रासादिकं देवदत्तमुखं प्रापयत्यन्तरालप्रयत्नवैफल्यप्रसङ्गात्। ननु प्रयत्नस्य विचित्रतोपलभ्यते। कश्चिद्धि प्रयत्नः स्वयमपरापरदेशवानन्यत्र क्रियाहेतुर्यथानन्तरोदितः। अन्यश्चान्यथा यथा शरासनाध्यासंपदसयुक्तात्मप्रदेशस्थ एव शरीरादीनां लक्ष्यप्रदेशप्रासि-

---

१ परस्य तव ॥ २ तस्माददृष्टस्याश्रय आत्मा तेन सयोग॰ ॥ ३ अदृष्टस्य ॥ ४ द्रव्याणाम् ॥ ५ अदृष्टेन सह ॥ ६ कथम्? तथा हि ॥ ७ अनाकृष्यमाणेष्वपि ॥ ८ सयोगस्य ॥ ९ सर्वस्याप्याकर्षणप्रसङ्ग ॥ १० स्वयमुपसर्पताऽदृष्टेन ॥ ११ शब्दवदपरापरादृष्टस्योत्पत्ते कथ सक्रियत्वमित्याशङ्कायामाह ॥ १२ 'इति चेत्'इत्युपरिष्टाद्योज्यम् ॥ १३ हस्तादिगतात्मप्रदेशस्थ ॥ १४ येन प्रयत्नेन ग्रासो गृह्यते स प्रथम प्रयत्न । अन्तरालप्रयत्नस्तु येन ग्रासादिकमूर्ध्वं कृत्वा मुख प्रति नीयते स इति ॥ १५ य प्रयत्नो भिन्न भिन्न प्रदेश गृह्णातीत्यर्थं ॥ १६ ग्रासादौ ॥ १७ शरासनस्य धनुषोऽध्यास स्थितिस्तस्य पद स्थान हस्तरूप तत्र सयुक्तश्चासावात्मप्रदेशश्च तत्र तिष्ठतीति विग्रहवाक्यम् ॥

क्रियाहेतुरिति । सेयं चित्रता एकद्रव्याणां क्रियाहेतुगुणानां[1] स्वाश्रयसंयुक्तासंयुक्तद्रव्यक्रियाहेतुत्वेन किन्नेष्यते? विचित्रशक्तित्वाद्भावानाम् । दृश्यते हि भ्रामकाख्यस्यायस्कान्तस्य स्पर्शो गुण एकद्रव्यः स्वाश्रयसंयुक्तलोहद्रव्यक्रियाहेतुराकर्षकाख्यस्य तु स्वाश्रयासंयुक्तलोहद्रव्यक्रियाहेतुरिति । अथात्र द्रव्यं क्रियाहेतुर्न स्पर्शादिगुणः । कुत एतत्? द्रव्यरहितस्यास्य तद्धेतुत्वादर्शनाच्चेत्तर्हि वेगस्य[2] क्रियाहेतुत्वं क्रियायाश्च[3] संयोगहेतुत्वं संयोगस्य[4] च द्रव्यहेतुत्वं[5] न स्यात् । किन्तु द्रव्यमेवात्रापि[6] तत्कारणम् । ननु द्रव्यस्य तत्कारणत्वे वेगादिरहितस्यापि तत्स्यात्तर्हि स्पर्शस्य तदकारणत्वे तद्रहितस्यैवायस्कान्तादेस्तद्धेतुत्वं किन्न स्यात्? तथाविधस्यास्यादर्शनान्नेति चेत्तर्हि लोहद्रव्यक्रियोत्पत्तावुभयं दृश्यते उभयं कारणमस्तु विशेषाभावात् । तथा चैकद्रव्यत्वे सति क्रियाहेतुगुणत्वादित्यस्यानेकान्तः । सर्वत्र[11] चादृष्टस्य वृत्तौ सर्वद्रव्यक्रियाहेतुत्वं स्यात् । यददृष्टं यद्द्रव्यमुत्पादयति तददृष्टं तत्रैव क्रियां करोतीत्यत्रापि शरीरारम्भकाणुषु क्रिया न स्यादित्युक्तम्[12] । अदृष्टस्य चाश्रय आत्मा । स च हर्षविषादादिविवर्तात्मको द्वीपान्तरवर्त्तिद्रव्यैर्वियुक्तमेवात्मानं स्वसंवेदनप्रत्यक्षतः प्रतिपद्यते इति प्रत्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टो हेतुः । तद्वियुक्तत्वेनाऽतत्तत्प्रतीतावप्यात्मनस्तद्द्रव्यैः संयोगाभ्युपगमे पटादीनां मेर्वादिभिस्तेषां वा पटादिभिः संयोगः किन्नेष्यते? यतः साङ्ख्यदर्शनं न स्यात्[13] । प्रमाणबाधनमुभयत्र[14] समानम् । किञ्च धर्माधर्मयोर्द्रव्यान्तरसंयोगस्य चात्मैक आश्रयः । स च भवन्मते निरंशः । तथा च धर्माधर्माभ्यां सर्वात्मनास्यालिङ्गिततनुत्वान्न तत्संयोगस्य तत्रावकाशस्तेन वा न तयोरिति । अथ धर्माधर्मालिङ्गिततत्स्वरूपपरिहारेण तत्संयोगस्तत्स्वरूपान्तरे वर्त्तते तर्हि घटादिवदात्मनः सावयवत्वं स्वारम्भकावयवारभ्यत्वमनित्यत्वं च स्यात् । एतेनैतन्निरस्तं—देवदत्तं प्रत्युपसर्पन्तः पश्वादयो देवदत्तगुणाकृष्टास्तं प्रत्युपसर्पणवत्त्वाद्ग्रासादिवदिति । यथैव हि तद्विशेषगुणेन प्रयत्नाख्येन समाकृष्टास्तं प्रत्युपसर्पन्तः समुपलभ्यन्ते ग्रासादयस्तथा नयनाञ्जनादिना द्रव्यविशेषेणाप्याकृष्टाः स्त्र्यादयस्तं प्रत्युपसर्पन्तः समुपलभ्यन्ते एव । अतः किं प्रयत्नसधर्मणा[16] केनचिदाकृष्टाः पश्वादयः किं वाञ्जनादिसधर्मणेति[18] सन्देहः । शक्यं हि परेणाप्येवं[19] वक्तुं—विवादापन्नाः[20] पश्वादयोऽञ्जनादिसधर्मणा समाकृष्टास्तं प्रत्युपसर्पणवत्त्वात्स्त्र्यादिवत् । अथ तदभावेपि[21] प्रयत्नादपि तद्दृष्टेरनेकान्तस्तर्हि[22] प्रयत्नसधर्मणो गुणस्याभावेप्यञ्जनादेरपि तद्दृष्टेर्भवदीयहेतोरप्यनैकान्तिकत्वं स्यात् । अत्रानुमीयमानस्य प्रयत्नसधर्मणो हेतुत्वाद[24]व्यभिचारेऽन्यत्राप्यञ्जनादिसध-

---

१ अदृष्टलक्षणानाम् ॥ २ अवयवाश्रितस्य ॥ ३ अवयवेष्वेव ॥ ४ अवयवलक्षणतन्त्वाश्रितस्य संयोगस्य ॥ ५ अवयविलक्षणपटस्य ॥ ६ अवयविद्रव्यम् ॥ ७ क्रियासंयोगद्रव्येष्वेव ॥ ८ तस्य=क्रियाया संयोगस्य द्रव्यस्य च ॥ ९ स्पर्शायस्कान्तौ ॥ १० स्पर्शेन ॥ ११ 'किं वा सर्वत्र' इति तृतीयो विकल्पोयम् ॥ १२ पूर्वम् ॥ १३ सर्वं सर्वत्र विद्यते इति वचनात् ॥ १४ असदुक्ते भवदुक्ते च ॥ १५ द्रव्यस्यापि क्रियाहेतुत्वसमर्थनपरेण ग्रन्थेन एकद्रव्यत्वे सति क्रियाहेतुगुणत्वानुमाननिराकरणेन वा ॥ १६ प्रयत्नसदृशेनेत्यर्थः ॥ १७ गुणेन ॥ १८ अदृष्टलक्षणेन द्रव्यविशेषेण ॥ १९ जैनेनापि ॥ २० गुणेन समाकृष्टा द्रव्येण वेति ॥ २१ अञ्जनादिसधर्मद्रव्यविशेषाभावेपि ॥ २२ तस्य=ग्रासाद्याकर्षणस्य ॥ २३ तस्य=स्त्र्याद्याकर्षणस्य ॥ २४ उपसर्पणकारणत्वात् ॥

मेणोनुमीयमानस्य हेतुत्वादव्यभिचारः स्यात् । तत्र प्रयत्नस्यैव सामर्थ्यादस्य वैफल्येऽत्राप्यञ्जनादेरेव सामर्थ्यात्तद्वैफल्यं किं न स्यात् ? अथाञ्जनादेरेव तद्धेतुत्वे सर्वस्य तद्वतः स्त्र्याद्याकर्षणं स्यात् । न चाञ्जनादौ सत्यप्यविशिष्टे तद्वतः सर्वान्प्रति स्त्र्याद्याकर्षणं । ततोऽवसीयते तदविशेषेपि यद्वैकल्यात्तन्न स्यात्तदपि तत्कारणं नाञ्जनादिमात्रमित्यप्यपेशलं प्रयत्नकारणेपि समानत्वात् । न खलु सर्वं प्रयत्नवन्तं प्रति ग्रासादयः समुपसर्पन्ति तदपहारादिदर्शनात् । ततोऽत्राप्यन्यत्कारणमनुमीयताम् । अन्यथा न प्रकृतेप्यविशेषात् । अञ्जनादेश्च स्त्र्याद्याकर्षणं प्रत्यकारणत्वे घटादिवत्तदर्थिनां तदुपादानं न स्यात् । उपादाने वा सिकतासमूहात्तैलवन्न कदाचित्ततस्तत्स्यात् । न च दृष्टसामर्थ्यस्याञ्जनादेः कारणत्वपरिहारेणात्रान्यकारणत्वकल्पने भवतोऽनवस्थातो मुक्तिः स्यात् । अथाञ्जनादिकमदृष्टसहकारि तत्कारणं न केवलं, हन्तैवं सिद्धमदृष्टवदञ्जनादेरपि तत्कारणत्वम् । ततः सन्देह एव किं ग्रासादिवत्प्रयत्नसधर्मणाकृष्टाः पश्वादय किं वा स्त्र्यादिवदञ्जनादिसधर्मणा तत्संयुक्तेन द्रव्येणेति । परिस्पन्दमानात्मप्रदेशव्यतिरेकेण ग्रासाद्याकर्षणहेतोः प्रयत्नस्यापि तद्विशेषगुणस्य परं प्रत्यसिद्धेः साध्यविकलता दृष्टान्तस्य । यच्चोक्तं 'देवदत्तं प्रत्युपसर्पन्ते' इति तत्र देवदत्तशब्दवाच्यः कोर्थः ? शरीरमात्मा तत्संयोगो वात्मसंयोगविशिष्टं शरीरं वा शरीरसंयोगविशिष्ट आत्मा वा शरीरसंयुक्त आत्मप्रदेशो वा ? यदि शरीरं तर्हि शरीरं प्रत्युपसर्पणाच्छरीरगुणाकृष्टाः पश्वादय इत्यात्मविशेषगुणाकृष्टत्वे साध्ये शरीरगुणाकृष्टत्वसाधनाद्विरुद्धो हेतुः । अथात्मा, तस्य समाकृष्यमाणार्थदेशकालाभ्यां सदाभिसम्बन्धान्न तं प्रति किञ्चिदुपसर्पेत् । न ह्यत्यन्ताश्लिष्टकण्ठकामिनी कामुकमुपसर्पति । अन्यदेशो ह्यर्थोऽन्यदेशं प्रत्युपसर्पति । यथा लक्ष्यदेशार्थं प्रति बाणादिः । अन्यकालं वा प्रत्यन्यकालो यथाङ्कुरं प्रत्यपरापरशक्तिपरिणामलाभेन बीजादिः । न चैतदुभयं नित्यव्यापित्वाभ्यामात्मनि सर्वत्र सर्वदा सन्निहिते सम्भवत्यतो देवदत्तं प्रत्युपसर्पन्त इति धर्मिविशेषणं देवदत्तगुणाकृष्टा इति साध्यधर्मस्तं प्रत्युपसर्पणवत्त्वादिति साधनधर्मः परस्य स्वरुचिविरचित एव स्यात् । अथ शरीरात्मसंयोगो देवदत्तशब्दवाच्यो, नाऽस्य तच्छब्दवाच्यत्वे तं प्रति चैषामुपसर्पणे तद्गुणाकृष्टास्ते इत्यायातम् । न च गुणेषु गुणाः सन्ति निर्गुणत्वात्तेषाम् । आत्मसंयोगविशिष्टं शरीरं तच्छब्दवाच्यमित्यत्रापि पूर्ववद्विरुद्धत्वं द्रष्टव्यम् । शरीरसंयोगविशिष्ट आत्मा तच्छब्दवाच्य इत्यत्रापि प्राक्तन एव दोषो नित्यव्यापित्वेनास्य सर्वत्र सर्वदा सन्निधानानिवारणात् । न खलु घटसंयुक्तमाकाशं मेर्वादौ न सन्निहितम् । अथ शरीरसंयुक्त आत्मप्रदेशस्तच्छब्देनोच्यते स काल्पनिकः पारमार्थिको वा ? काल्पनिकत्वे काल्पनिकात्मप्रदेशगुणाकृष्टाः पश्वादयस्त-

१ अदृष्टलक्षणद्रव्यविशेषस्य ॥ २ स्त्र्याद्याकर्षणे ॥ ३ ग्रासाद्याकर्षणे ॥ ४ द्रव्यस्य ॥ ५ स्त्र्याद्याकर्षणेपि ॥ ६ प्राणिन. ॥ ७ अदृष्ट ॥ ८ यम ॥ ९ वैशेषिकस्य ॥ १० दृष्टसामर्थ्यस्यान्यकारणस्य परिहारेणेत्यादिप्रकारेण ॥ ११ कारणाना पूर्वपूर्वकारणपरित्यागेनाऽपरापरकारणपरिकल्पनात् ॥ १२ अदृष्ट ॥ १३ आत्मना ॥ १४ द्रव्यमिदम् ॥ १५ नित्यसर्वगतत्वादात्मन ॥ १६ देशकालकृतोपसर्पणम् ॥ १७ वैशेषिकस्य ॥ १८ इति चेदिति योज्यम् ॥ १९ पश्वादीनाम् ॥

थाभूतात्मप्रदेशं प्रत्युपसर्पणवत्त्वादिति तद्गुणानामपि काल्पनिकत्वं साधयेत् । तथा च सौगतस्येव तद्गुणकृतः प्रेत्यभावोपि न पारमार्थिकः स्यात् । न हि कल्पितस्य[1] पावकस्य रूपादयस्तत्कार्यं वा दाहादिकं पारमार्थिकं दृष्टम् । पारमार्थिकाश्चेदात्मप्रदेशास्ते ततोऽभिन्ना भिन्ना वा ? यद्यभिन्नास्तदात्मैव ते इति नोक्तदोषपरिहारः । भिन्नाश्चेत्तद्विशेषगुणाकृष्टाः[3] पश्वादय इत्येतत्तेषामेवात्मत्वं प्रसाधयतीत्यन्यात्मकल्पनानर्थक्यम् । कल्पने वा सावयवत्वेन[4] कार्यत्वमनित्यत्वं चास्य स्यादित्युक्तम् । यच्चान्यदुक्तं सर्वगत आत्मा सर्वत्रोपलभ्यमानगुणत्वादाकाशवदिति । तत्र किं स्वशरीर एव सर्वत्रोपलभ्यमानगुणत्वं हेतुरुत स्वशरीरवत्परशरीरेऽप्यन्यत्र च ? तत्र प्रथमपक्षे विरुद्धो हेतुस्तत्रैव ततस्तस्य सर्वगतत्वसिद्धेः । द्वितीयपक्षे त्वसिद्धस्तथोपलम्भाभावात् । न खलु बुद्ध्यादयस्तद्गुणाः सर्वत्रोपलभ्यन्ते । अन्यथा प्रतिप्राणि सर्वज्ञत्वादिप्रसङ्गः । अथ मन्याखेटवत्खेटान्तरे मनुष्यजन्मवज्जन्मान्तरे चोपलभ्यमानगुणत्वं विवक्षितम् । तत्किं युगपत्क्रमेण वा ? युगपच्चेदसिद्धो हेतुः । क्रमेण चेत्सर्वे सर्वगताः स्युर्घटादीनामपि तथा सर्वत्रोपलभ्यमानगुणत्वसम्भवात् । तेषां देशान्तरगमनात्तत्सम्भवे आत्मनोपि ततस्तत्सम्भवोस्तु तद्वत्तस्यापि सक्रियत्वात् । प्रत्यक्षेण हि सर्वो देशाद्देशान्तरमायातमात्मानं प्रतिपद्यते । तथा च वदत्यहमद्य योजनमेकमागतः । मनः शरीरं वागतमिति चेत्किं पुनस्तदहम्प्रत्ययवेद्यम् ? तथा चेच्चार्वाकमतानुषङ्गः । ननु चास्य सक्रियत्वे लोष्ठादिवन्मूर्त्तिमत्त्वं स्यात् । तत्र केयं मूर्त्तिर्नामासर्वगतद्रव्यपरिमाणं रूपादिमत्त्वं वा स्यात् ? तत्राद्यपक्षो न दोषावहोऽभीष्टत्वात् । न हीष्टमेव दोषाय जायते । रूपादिमती मूर्त्तिः स्यादिति चेन्न व्याप्त्यभावात् । रूपादिमन्मूर्तिमानात्मा सक्रियत्वाद्बाणादिवदित्यप्यसुन्दरं मनसाऽनैकान्तिकत्वात् । न चास्य पक्षीकरणं रूपादिविशेषगुणानधिकरणं सन्मनोर्थं प्रकाशयति शरीरादर्थान्तरत्वे सति सर्वत्र ज्ञानकारणत्वादात्मवदित्यनुमानविरोधानुषङ्गात् । ननु सक्रियत्वे सत्यात्मनोऽनित्यत्वं स्याद्घटादिवदित्यपि वार्त्तं परमाणुभिर्मनसा चानेकान्तात् । किञ्चास्यातः कथञ्चिदनित्यत्वं साध्येत सर्वथा वा ? कथञ्चिच्चेत्सिद्धसाधनम् । सर्वथा चानित्यत्वस्य घटादावप्यसिद्धत्वात्साध्यविकलता दृष्टान्तस्य । किञ्चात्मनो निष्क्रियत्वे संसाराभावो भवेत् । संसारो हि शरीरस्य मनस आत्मनो वा स्यात् ? न तावच्छरीरस्य मनुष्यलोके भस्मीभूतस्यामरपुराऽगमनात् । नापि मनसो निष्क्रियस्यास्यापि तद्विरहात् । सक्रियत्वेपि तत्क्रियायास्ततोऽभेदे तद्वत्तदनित्यत्वप्रसङ्गान्नास्य क्वचित्क्षणमात्रमवस्थानं स्यात् । भेदे सम्बन्धासिद्धिः समवा-

---

१ अग्निर्माणवक इत्यादौ ॥ २ आत्मन समाकृष्यमाणार्थदेशकालाभ्यामित्यादिना ॥ ३ तस्य=आत्मन ॥ ४ आत्मप्रदेशानाम् ॥ ५ घटवत् ॥ ६ अन्तराले ॥ ७ परशरीरादौ ॥ ८ आदिना दु खित्वादिग्रह ॥ ९ द्वितीयपक्षो [illegible] परमाणुवाद ॥ १० अय शब्दो ग्रामभेदे ॥ ११ तथा प्रतीतेरभावात् ॥ १२ तत आत्मना मूर्तिमता भाव्यमिति भाव ॥ १३ शरीरमसर्वगतद्रव्यमत्र ॥ १४ यद्यत्सक्रिय तत्तद्रूपादिमन्मूर्तिमदिति ॥ १५ मनस [illegible] स्पर्शादिमन्मूर्तिमत्त्वाभावात् ॥ १६ एव निरूपणे घटेन व्यभिचार ॥ १७ इष्टानिष्टार्थेषु ॥ १८ ज्ञानकारणत्वादित्युच्यमाने चक्षुषा व्यभिचारस्तन्निवृत्त्यर्थं सर्वत्रेति विशेषणम् । तथापि शरीरेण [illegible] शरीरादित्यादि ॥ १९ कारणमत्र सहकारि ॥ २० पर्यायापेक्षया ॥ २१ क्रियामनसो समवायेन सम्बन्धो भविष्यतीत्युक्ते सत्याहाचार्य ॥

यनिषेधात् । अचेतनं च तदनिष्टनरकादिपरिहारेणेष्टे स्वर्गादौ कथं प्रवर्त्तेत ? स्वभावत ईश्वरात्तदात्मनोऽदृष्टाद्वा ? प्रथमपक्षे दत्तः सर्वत्र ज्ञानाय जलाञ्जलिः । अथेश्वरप्रेरणात्, न–तन्निषेधात् । को वायमीश्वरस्याग्रहो यतस्तत्प्रेरयति, न तदात्मानम् ? अस्य प्रेरणे चेदमनुगृहीतं भवति "अज्ञो जन्तुरनीशोयमात्मनःसुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा" इति । तदात्मप्रेरणादित्यत्रापि ज्ञातमज्ञातं वा तेत्तेन प्रेर्येत ? न तावदाद्यो विकल्पो जन्तुमात्रस्य तत्परिज्ञानाभावात् । नापि द्वितीयोऽज्ञातस्य वाणादिवत्प्रेरणासम्भवात् । ननु स्वप्ने स्वहस्तादयोऽज्ञाता एव प्रेर्यन्ते, न–अहितपरिहारेण हिते प्रेरणासम्भवात् । ज्वलज्ज्वलनज्वालाजालेपि तत्प्रेरणोपलम्भात् । अदृष्टप्रेरणादित्यप्यसारमचेतनस्यापि तत्प्रेरकत्वायोगात् । तत्प्रेरितस्यात्मन एव वरं प्रवृत्तिरस्तु चेतनत्वात्तस्य । दृश्यते हि वशीकरणौषधसंयुक्तस्य चेतनस्यानिष्टगृहगमनपरिहारेण विशिष्टगृहगमनम् । तन्न मनसोपि संसारः । आत्मनस्तु स्याद्यद्येकदेहपरित्यागेन देहान्तरमसौ व्रजेत् । तथा च घटादिवत्तस्य सर्वत्रोपलभ्यमानगुणत्वमित्युभयोः सर्वगतत्वं न वा कस्यचिद्विशेषात् । यच्चाकाशवदित्युक्तं तत्राकाशस्य को गुणः सर्वत्रोपलभ्यते ? शब्दो महत्त्वं वा ? न तावच्छब्दोऽस्याकाशगुणत्वनिषेधात् । नापि महत्त्वमस्यातीन्द्रियत्वेनोपलम्भासम्भवात् । एतेन बुद्ध्यधिकरणं द्रव्यं विभु नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वादाकाशवदित्यपि प्रत्युक्तं साधनविकलत्वाद्दृष्टान्तस्य हेतोश्चानैकान्तिकत्वं परमाणूनां नित्यत्वे सत्यस्मदाद्युपलभ्यमानपाकजगुणाधिष्ठानत्वेपि विभुत्वाभावात् । तत्पाकजगुणानामस्मदाद्यप्रत्यक्षत्वे हि विवादाध्यासितं क्षित्यादिकमुपलब्धिमत्कारणं कार्यत्वाद्घटादिवदित्यत्र प्रयोगे व्याप्तिर्न स्यात् । अथ नित्यत्वे सत्यस्मदादिबाह्येन्द्रियोपलभ्यमानगुणत्वादित्युच्यते तर्हि बाह्येन्द्रियोपलभ्यमानत्वस्य बुद्धावसिद्धेर्विशेषणासिद्धो हेतुः । नित्यत्वं च सर्वथा कथञ्चिद्वा विवक्षितम् ? सर्वथा चेत्पुनरपि विशेषणासिद्धत्वम् । कथञ्चिच्चेद्घटादिनानेकान्तस्तस्य कथञ्चिन्नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वेपि विभुत्वाभावात् । यदप्युक्तं सर्वगत आत्मा द्रव्यत्वे सत्यमूर्त्तत्वादाकाशवत् । द्रव्यादित्युच्यमाने हि घटादिना व्यभिचारस्तत्परिहारार्थममूर्त्तत्वादित्युक्तम् । अमूर्त्तत्वादित्युच्यमाने च रूपादि

---

१ परमतेऽचेतन मन ॥ २ मन सम्बन्धिजीवात् ॥ ३ इष्टानिष्टवस्तुषु ॥ ४ ज्ञानाभावेप्यचेतनस्य मनस इष्टानिष्टवस्तुषु प्रवृत्तिनिवृत्तिदर्शनात् ॥ ५ मन एव॰ प्रेरयति नात्मानमयमेवाग्रह इत्याशङ्क्याह ॥ ६ अग्रे वक्ष्यमाण भवच्छास्त्रोक्तम् ॥ ७ भवता स्वीकृतम् ॥ ८ मनस प्रेरणे चेदमनुगृहीत न भवतीति भाव ॥ ९ तदात्मना ॥ १० अणुरूपमचेतनमतीन्द्रिय मनस्तस्य ॥ ११ अनैकान्तिकत्व भावयति ॥ १२ 'इति चेत्' इत्युपरित ॥ १३ तुर्यो विकल्प ॥ १४ मन एव ॥ १५ न मनस ॥ १६ अनिष्टनरकादिपरिहारेणेष्टस्वर्गादौ ॥ १७ चेतनत्वादात्मन प्रवृत्तिरसिद्धेत्युक्ते सत्याहाचार्य ॥ १८ घटपक्षे देशान्तरपरित्यागेन देशान्तरमसौ व्रजेत् ॥ १९ लोकत्रये ॥ २० आत्मघटयो ॥ २१ आत्मनोपीत्यर्थ ॥ २२ उभयोर्गमनस्य ॥ २३ अत साधनविकलो दृष्टान्त ॥ २४ सर्वत्रोपलभ्यमानगुणत्वादित्यस्य निराकरणपरेण ग्रन्थेन ॥ २५ परमाणुभिर्व्यभिचारपरिहारार्थम् ॥ २६ घटादिना व्यभिचारनिराकरणार्थम् ॥ २७ परेणाङ्गीक्रियमाणे ॥ २८ ईश्वरस्य ॥ २९ तत्पाकजगुणानामस्मदाद्यप्रत्यक्षत्वे यद्यत्कार्यं तत्तद्धीमद्धेतुकमिति मानसप्रत्यक्षेण साकल्येन व्याप्तिग्रहण न स्यादिति भाव । कार्याप्रत्यक्षत्वे कार्यकारणयोर्व्याप्त्यसम्भवात् ॥ ३० गुणरूपायाम् ॥ ३१ द्रव्यापेक्षया ॥ ३२ असर्वगतद्रव्यपरिमाणलक्षणमूर्त्तत्वस्य रूपादिष्वभावाद्रूपादीनाममूर्त्तत्वम् । रूपादीना तत्परिमाणाभाव कुत ? निर्गुणा गुणा इत्यभिधानात् ॥

गुणेन गमनादिकर्मणा वानेकान्तस्तन्निवृत्त्यर्थं द्रव्यत्वे सतीत्युक्तम् । तदप्यसमीचीनं यतोऽमूर्त्तत्वं मूर्त्तत्वाभावस्तत्र किमिदं मूर्त्तत्वं नाम? यत्प्रतिषे-
धोऽमूर्त्तत्वं स्यात् । रूपादिमत्त्वमसर्वगतद्रव्यपरिमाणं वा? प्रथमपक्षे मनसानेकान्तस्तस्य द्रव्यत्वे सत्यमूर्त्तत्वेपि सर्वगतत्वाभावात् । द्वितीयपक्षे तु
किमसर्वगतद्रव्यं भवतां प्रसिद्धं यत्परिमाणं मूर्त्तिर्वर्ण्यते? घटादिकमिति चेत्कुतस्तत्तथा? तथोपलम्भाच्चेत्किं पुनरसौ भवतः प्रमाणम्? तथा चेत्तद्वदात्म-
नोपि स एवासर्वगतत्वं प्रसाधयतीति मूर्त्तत्वम् । अतोऽमूर्त्तत्वादित्यसिद्धो हेतुः । तदसाधने न प्रमाणं लक्षणयुक्ते बाधासम्भवे तल्लक्षणमेव दूषितं स्यादिति
न्यायात् । तथा चातो घटादावप्यसर्वगतत्वमतिदुर्लभम् । शक्यं हि वक्तुं घटादयः सर्वगता द्रव्यत्वे सत्यमूर्त्तत्वादाकाशवदिति । पक्षस्य प्रत्यक्षबाधनं हेतोश्चा-
सिद्धिरुभयत्र समाना । ननु चात्मनः सर्वगतत्वात्तत्रास्त्यमूर्त्तत्वमसर्वगतद्रव्यपरिमाणसम्बन्धाभावलक्षणं न घटादौ विपर्ययात् । ननु चास्य कुतः सर्वगतत्वं
सिद्धं साधनान्तरादत एव वा? साधनान्तराच्चेत्तदैव समीहितसिद्धेर्द्रव्यत्वे सत्यमूर्त्तत्वादित्यस्य वैयर्थ्यम् । अत एव चेदन्योन्याश्रयः । सिद्धे हि तस्य
सर्वगतत्वेऽसर्वगतद्रव्योपरिमाणसम्बन्धरूपमूर्त्तत्वाभावोऽमूर्त्तत्वं सिध्यति । अतश्च तत्सर्वगतत्वमिति । किञ्चामूर्त्तत्वादिति किमयं प्रसज्यप्रतिषेधो मूर्त्तत्वाभाव-
मात्रममूर्त्तत्वं पर्युदासो वा मूर्त्तत्वादन्यद्भावान्तरमिति? तत्राद्यविकल्पोऽयुक्तस्तुच्छाभावस्य प्राक्प्रबन्धेन प्रतिषेधात् । सतोपि चास्य ग्रहणोपायाभावादज्ञातासिद्धो
हेतुः । न हि प्रत्यक्षस्तद्ग्रहणोपायस्तस्येन्द्रियार्थसन्निकर्षजत्वात्, तुच्छाभावेन सह मनसोऽन्यस्य चेन्द्रियस्य सन्निकर्षाभावात् । ननु मन आत्मना सम्बद्ध-
मात्मविशेषणं च तदभावः । ततः सम्बद्धविशेषणीभावस्तेन मनस इति । युक्तमिदं यद्यसावात्मनो विशेषणं भवेत् । न चास्यैतदुपपन्नम् । विशेष्ये हि विशि-
ष्टप्रत्ययहेतुर्विशेषणं, यथा दण्डः पुरुषे । न च तुच्छाभावस्तत्प्रत्ययहेतुर्घटते सकलशक्तिविरहलक्षणत्वादस्य । अन्यथा भाव एव स्यादर्थक्रियाकारित्वलक्षणत्वात्
परमार्थसतो लक्षणान्तराभावात् । सत्तासम्बन्धस्य तल्लक्षणस्य कृतोत्तरत्वात् । किञ्च गृहीतं विशेषणं भवति नाऽगृहीतविशेषणा विशेष्ये बुद्धिरित्यभिधानात् । ग्रहणे
चेतरेतराश्रयः । तथा हि । आत्मसम्बद्धेनेन्द्रियेणासौ गृहीतः सिद्धः सन्नात्मनो विशेषणं सिध्यति । तत आत्मसम्बद्धेनेन्द्रियेण ग्रहणमिति । यदि चात्मा स्वयमसर्व-
गतद्रव्यपरिमाणसम्बन्धविकलः सिद्धस्तर्हि तावतैव समीहितार्थसिद्धेः किमपरेण तदभावेनेति कथं विशेषणम्? अथ विपरीतः, कथं तदभावो यतो विशेषणम्? किञ्चा-
त्मतदभावाभ्यां सह विशेषणीभावः सम्बद्धोऽसम्बद्धो वा? सम्बद्धश्चेत्तर्हि यथात्मनि विशिष्टविज्ञानविधानादात्मनस्तदभावो विशेषणं तथा विशेषणीभावोप्यात्मा विशे-

१ वैशेषिकाणाम् ॥ २ असर्वगतत्वेन ॥ ३ उपलम्भ ॥ ४ असर्वगतद्रव्यपरिमाणोपलम्भ प्रमाणस्य लक्षणम् ॥ ५ प्रमाणे ॥ ६ प्रमाणस्यात्मन्यसर्वगतत्वासाधनलक्षणे वा बाधासम्भवे ॥ ७ तस्य=प्रमाणस्य ॥ ८ आत्मन्यसर्वगतत्वो-
पलम्भस्याप्रमाणत्वे च ॥ ९ आत्मनि घटादौ च ॥ १० असर्वगतत्वात् ॥ ११ अमूर्त्तत्वम् ॥ १२ अभावनिराकरणावसरे ॥ १३ तुच्छाभावेन सह मनस सन्निकर्षं दर्शयति पर ॥ १४ अमूर्त्तत्वाभाव ॥
१५ सम्बन्ध ॥ १६ परेणोक्त यत् ॥ १७ मूर्त्तत्वाभावलक्षण विशेषणम् ॥ १८ दण्डीति विशिष्टप्रत्ययहेतु ॥ १९ ज्ञातम् ॥ २० मनसा ॥ २१ मूर्त्तत्वाभाव ॥ २२ असर्वगतद्रव्य=शरीरम् ॥ २३ असर्वगतद्रव्यपरिमाणसम्ब-
न्धरहित ॥ २४ आत्मा अमूर्त इति ॥ २५ मूर्त्तत्वाभाव ॥

प्यस्तदभावो विशेषणमिति विशिष्टप्रत्ययजननात्[1]। विशेषणं समवायवत्प्रसक्तम्[2]। तथा च तत्राप्यपरेण तत्सम्बन्धेन भवितव्यमित्यनवस्था। अथासम्बद्धः, कथं विशेषणविशेष्याभिमतयोः स भवेत्? यतस्तत्र विशिष्टप्रत्ययप्रादुर्भावः सम्बन्धो[3] वा। विशिष्टप्रत्ययहेतुत्वाच्चेदीश्वरादौ[4] प्रसङ्गः। तथापि[5] स तयोरिति कल्पने भावस्याभावः समवायिनोऽसमवायस्तथैव स्यादित्यलं तत्र विशेषणीभावसम्बन्धकल्पनया। तन्न प्रत्यक्षं तद्ग्रहणोपायः। नाप्यनुमानं परस्य प्रत्यक्षाभावे तदभावात्तन्मूलत्वात्तस्य। नन्विदमस्त्यात्माऽमूर्त्त इति बुद्धिर्भिन्नाभावनिमित्ताऽभावविशेषणभावविषयबुद्धित्वादघटं भूतलमित्यादिबुद्धिवत्। इत्यप्यसारं–तथाविधाभावस्य विशेषणत्वासिद्धिप्रतिपादनात्। अभावविचारे चानयोर्हेतूदाहरणयोः प्रतिहतत्वान्न साध्यसाधकत्वम्। पर्युदासपक्षेऽप्यसर्वगतद्रव्यपरिमाणसम्बन्धभावान्मूर्त्तत्वादन्यदमूर्त्तत्वं सर्वगतद्रव्यपरिमाणेन परममहत्त्वेन सम्बन्धाभावः। स च न कुतश्चित्प्रमाणात्प्रसिद्ध इति हेतोरसिद्धिः। यच्चान्यदुक्तमात्मा व्यापको मनोन्यत्वे सत्यस्पर्शवद्द्रव्यत्वादाकाशवदिति, तदप्येतेनैव प्रत्युक्तं स्पर्शवद्द्रव्यप्रतिषेधेऽत्रापि प्रागुक्ताशेषदोषानुषङ्गात्। सन्दिग्धानैकान्तिकश्चायं हेतुः। तथा हि। अस्पर्शवद्द्रव्यत्वमाकाशादौ व्यापित्वे सत्युपलब्धं मनसि चाऽव्यापित्वे। तदिदानीमात्मन्युपलभ्यमानं किं व्यापित्वं प्रसाधयत्वव्यापित्वं वेति सन्देहः। ननु मनोद्रव्यत्वविशिष्टस्यास्पर्शवद्द्रव्यत्वस्य मनस्यनुपलम्भात्कथं सन्देहो[11]ऽत्रेति चेदत एव। यदि हि तद्विशिष्टं तत्त्रोपलभ्येत तदा निश्चितानैकान्तिकत्वमेवास्य स्यान्न तु सन्दिग्धानैकान्तिकत्वमिति। तन्नात्मनः कुतश्चित्प्रमाणात्सर्वगतत्वसिद्धिरित्यसर्वगत एवासौ यथाप्रतीत्यभ्युपगन्तव्यः। ननु चात्मनोऽसर्वगतत्वे दिग्देशान्तरवर्त्तिभिः परमाणुभिर्युगपत्संयोगाभावोऽतश्चाद्यकर्माभावः[12]। तदभावादन्त्यसंयोगस्य[13] तन्निमित्तशरीरस्य तेन तत्सम्बन्धस्य चाभावादनुपायसिद्धः सर्वदात्मनो मोक्षः स्यात्। स्यादेवं यदि यद्येन संयुक्तं तं प्रति तदेवोपसर्पतीत्ययं नियमः स्यात्।-न चास्त्ययस्कान्तं[14] प्रत्ययसस्तेनाऽसंयुक्तस्याप्युपसर्पणोपलम्भात्। यस्य चात्मा सर्वगतस्तस्यारब्धकार्यैरन्यैश्च परमाणुभिर्युगपत्संयोगात्तथैव तच्छरीरारम्भं प्रत्येकमभिमुखीभूतानां तेषामुपसर्पणमिति न जाने कियत्परिमाणं तच्छरीर स्यात्[15]। ननु ये तत्संयोगास्तदऽदृष्टापेक्षास्त एव स्वसंयोगिनां परमाणूनामाद्यं कर्म रचयन्तीति चेदथ केयं तददृष्टापेक्षा[16] नाम? एकार्थसमवाय[17] उपकारो वा सहाद्यकर्मजननं वा? तत्राद्यः पक्षोऽयुक्तः सर्व-

---

१ गुणगुणिनो समवाय इति ॥ २ विशेषणीभावस्य विशेषणत्वे च ॥ ३ स्वय सवन्धरूपोपि नैव ॥ ४ ईश्वरकालाकाशादयोपि विशिष्टप्रत्ययोत्पत्तौ निमित्तकारणकास्तेषामपि विशेषणीभाव सम्बन्धो भवतीति शेष ॥ ५ सवन्धस्य ॥ ६ सम्बन्धाभावेपि ॥ ७ अभावो विशेषणमस्य। स चासौ भावश्च स विषयो यस्यास्तस्या भाव इति वाक्यम् ॥ ८ द्रव्यत्वे सत्यमूर्त्तत्वादित्येतन्निरासेन ॥ ९ तुच्छरूपस्य ॥ १० असर्पवद्द्रव्यत्वादित्यत्र नञ् पर्युदास प्रसज्यो वेत्यादि ॥ ११ विपक्षे बाधक प्रमाण चेदस्ति तदा सन्देहो निवर्त्ततेऽनुपलम्भमात्रेण तु परचेतोवृत्तिविशेषवत् सन्देहो भवेदेवेति भाव ॥ १२ शरीरारम्भकाणूना शरीरोत्पत्तिप्रदेश प्रति गमनमाद्य कर्म ॥ १३ शरीरनिष्पत्त्यवसानकालभावस्य ॥ १४ शरीरारम्भकाणूना शरीरोत्पत्तिदेश प्रति गमनम् ॥ १५ अत एव महच्छरीर न स्यात् ॥ १६ परमाणुसयोगानाम् ॥ १७ एकस्मिन्नात्मलक्षणेऽर्थे समवायोऽदृष्टस्य ॥

परमाणुसंयोगानां तददृष्टैकार्थसमवायसद्भावात्[1] । उपकार इत्यप्ययुक्तमपेक्ष्यादपेक्षकस्यासम्बन्धानवस्थानुषङ्गेणोपकारस्यैवासम्भवात्[3] । सहाद्यकर्मजननमित्यप्यसत्त-
योरन्यतरस्यापि केवलस्य तज्जननसामर्थ्ये परापेक्षायोगात्[8] । यदि पुनः स्वहेतोरेवादृष्टसंयोगयोः[6] सहितयोरेव कार्यजननसामर्थ्यमिष्यते तर्हि तत एवादृष्टस्यैव
तत्संयोगनिरपेक्षस्य तत्सामर्थ्यमस्तु । दृश्यते हि हस्ताश्रयेणायस्कान्तादिना स्वाश्रयासंयुक्तस्य भूभागस्थितस्य लोहादेराकर्षणमित्यलमतिप्रसङ्गेन[11] । यदप्युक्तं सावयवं
शरीरं प्रत्यवयवमनुप्रविशंस्तदात्मा सावयवः स्यात् । तथा च घटादिवत्समानजातीयावयवारभ्यत्वम्[12] । समानजातीयत्वं चावयवानामात्मत्वाभिसम्बन्धादित्येकत्रात्म-
न्यनन्तात्मसिद्धिः । यथा चावयवक्रियातो विभागात्संयोगविनाशाद्घटविनाशस्तथात्मविनाशोपि स्यात् । इत्यप्यपरीक्षिताभिधानं सावयवत्वेन भिन्नावयवारब्धत्वस्य
घटादावप्यसिद्धेः । न खलु घटादिः सावयवोपि प्राक् प्रसिद्धसमानजातीयकपालसंयोगपूर्वको दृष्टो, मृत्पिण्डात्[14] प्रथममेव स्वावयवरूपाद्यात्मनोस्य प्रादुर्भावप्रतीतेः ।
न चैकत्र पटादौ स्वावयवतन्तुसंयोगपूर्वकत्वोपलम्भात्सर्वत्र[15] तद्भावो[16] युक्तः । अन्यथा काष्ठे लोहलेख्यत्वोपलम्भाद्वज्रेपि[17] तथाभावः स्यात् । प्रमाणबाधनमुभयत्र[18]
समानम् । किञ्चास्य तथाभूतावयवारब्धत्वमादौ मध्यावस्थायां वा साध्येत? न तावदादौ[19] स्तनादौ प्रवृत्त्यभावानुषङ्गात् । तद्धेत्वभिलाषप्रत्यभिज्ञानस्मरणदर्शनादे-[20]
रभावात् । तदारम्भकावयवानां[21] प्राक् सतां विषयदर्शनादिसम्भवे तेषामेवाहर्जातवेलायां सत्त्वान्तराणामिव प्रवृत्तिः स्यात् । मध्यावस्थायां तु तत्साधने प्रत्यक्ष-
विरोधः[22] । अन्त्यावस्थाया चास्यात्यन्तविनाशे स्मरणाद्यभावात्स्तनादौ प्रवृत्त्यभाव एव स्यात् । न चेयं विनाशोत्पादप्रक्रिया[23] क्वचिद्दृश्यते । न खलु कटकस्य केयूरी-
भावे कृतश्चिद्भागेषु[24][25] क्रियाविभागः संयोगविनाशो द्रव्यविनाशः पुनस्तदवयवाः केवलास्तदनन्तरं तेषु कर्मसंयोगक्रमेण[26] केयूरीभाव[27] इति । केवलं सुवर्णकारकादि-
व्यापारे कटकस्य केयूरीभावं पश्यामः[28] । अन्यथा कल्पने च प्रत्यक्षविरोधः । न च सावयवशरीरव्यापित्वे सत्यात्मनस्तच्छेदे छेदप्रसङ्गो दोषाय कथञ्चित्तच्छेदस्ये-[29]
ष्टत्वात्[30] । शरीरसम्बद्धात्मप्रदेशेभ्यो हि तत्प्रदेशानां छिन्नशरीरप्रदेशेऽवस्थानमात्मनश्छेदः । स चात्रास्त्येव[31] । अन्यथा शरीरात्पृथग्भूतावयवस्य कम्पोपलब्धिर्न स्यात् ।

---

१ तस्यात्मनोऽदृष्ट तेन सहैकस्मिन्नर्थे आत्मलक्षणे समवायस्य सद्भावात् ॥ २ व्यापित्वादात्मन ॥ ३ अपेक्ष्येणादृष्टेनापेक्षकस्याणुसयोगस्य क्रियमाण उपकारस्तस्मादभिन्नो भिन्नो वा स्यात् ? अभेदे सोपि तज्जन्य स्यात् । भेदे सबन्धासिद्धि । अथापकारमुपकार कृत्वा तत्सम्बन्धीत्यादिपरिकल्पने चानवस्था । अथ सयोगस्योपकार इति न घटते अन्यथातिप्रसङ्ग । यथा सयोगस्य तथान्यस्यापि । तथा चात्मपरमाणुसयोगस्य नित्यत्वव्याघात स्यात् ॥ ४ अदृष्टाणुसयोगयोर्मध्येऽदृष्टस्य परमाणुसयोगस्य वा ॥ ५ अविशेषत सर्वत्र तज्जननस्यापि प्रसङ्गात् ॥ ६ आत्मन ॥ ७ अदृष्टात्माणुसयोगयो ॥ ८ परेण ॥ ९ ततश्चाणुसयोगपरिकल्पनेन किम् ॥ १० वस ॥ ११ ततश्च स्वाश्रयासयुक्तमेव परमाण्वादिकमाकृष्यते आत्मना। ततश्च सर्वगतत्वपरिकल्पनेनालमात्मन ॥ १२ आत्मत्वेन ॥ १३ आत्मन ॥ १४ उपादानकारणात् ॥१५ आत्मादिषु ॥१६ स्वावयवसयोगपूर्वकत्वम् ॥ १७ वज्रे आत्मनि च ॥ १८ समानजातीयभिन्नावयव ॥ १९ गर्भावस्थायाम् ॥ २० सस्कारस्य ॥ २१ तस्य आत्मन ॥ २२ समानजातीयभिन्नावयवारभ्यत्व प्रत्यक्षेण न ज्ञायते यत ॥ २३ अग्रे वक्ष्यमाणा ॥ २४ कारणात् ॥ २५ अवयवेषु ॥ २६ क्रिया ॥ २७ केयूरोत्पाद ॥ २८ वय जैना ॥ २९ अवयवापेक्षया ॥ ३० जैनस्य ॥ ३१ आत्मनि ॥

न च च्छिन्नावयवप्रतिष्ठस्यात्मप्रदेशस्य पृथगात्मत्वानुषङ्गः[1]स्तत्रैवानुप्रवेशात्। कथमन्यथा छिन्ने हस्तादौ कम्पादितल्लिङ्गोपलम्भाभावः स्यात् । ननु कथं छिन्नाच्छि-न्नयोः[3] संघटनं पश्चात् ? न-एकान्तेन छेदानभ्युपगमात्। पद्मनालतन्तुवदविच्छेदस्याप्यभ्युपगमात्। तथाभूता[4]दृष्टवशाच्च तदविरुद्धमेव। ततो यद्यथा निर्बाधबोधे प्रतिभाति तत्तथैव सद्व्यवहारमवतरति। यथा स्वारम्भकतन्तुषु प्रतिनियतदेशकालाकारतया प्रतिभासमानः पटः । शरीरे एव प्रतिनियतदेशकालाकारतया निर्बाधबोधे प्रतिभासते चात्मेति। न चायमसिद्धो हेतुः[5] शरीराद्बहिस्तत्प्रतिभासाभावस्य प्रतिपादितत्वात्। उक्तप्रकारेण चानवद्यस्य बाधकप्रमाणस्य कस्यचिदसम्भवान्न विशेषणासिद्धत्वमिति । तन्न परेषां यथाभ्युपगतस्वभावमात्मद्रव्यमपि घटते।

नापि मनोद्रव्यं तस्य प्रागेव स्वसंवेदनसिद्धिप्रस्तावे निराकृतत्वात् । ततः पृथिव्यादेर्द्रव्यस्य यथोपवर्णि[6]तस्वरूपस्य प्रमाणतोऽप्रसिद्धेः पृथिव्यादीनि द्रव्याणीतरेभ्यो भिद्यन्ते द्रव्यत्वाभिसम्बन्धादित्यादिहेतूपन्यासोऽविचारितरमणीयस्तत्स्वरूपासिद्धौ हेतोराश्रयासिद्धत्वात्। स्वरूपासिद्धत्वाच्च। द्रव्यत्वाभिसम्बन्धो हि समवायलक्षणो भवता[7]भ्युपगम्यते। न चासौ प्रमाणतः प्रसिद्ध इति विशेषणासिद्धत्वं च द्रव्यत्वसामान्यस्य यथाभ्युपगतस्वभावस्यासम्भवात्। तन्न परपरिकल्पितो द्रव्यपदार्थो घटते।

नापि गुणपदार्थः। स हि चतुर्विंशतिप्रकारः परैरिष्टः। तथा हि। रूपरसगन्धस्पर्शाः संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च तु गुणा इति सूत्रसङ्गृहीताः सप्तदश [9]चशब्दसमुच्चिताः गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाश्च सप्तेति । तत्र रूपं चक्षुर्ग्राह्यं पृथिव्युदकज्वलनवृत्ति। रसो रसनेन्द्रियग्राह्यः पृथिव्युदकवृत्तिः। गन्धो घ्राणग्राह्यः पृथिवीवृत्तिः। स्पर्शस्त्वगिन्द्रियग्राह्यः पृथिव्युदकज्वलनपवनवृत्तिः संख्या त्वेकादिव्यवहारहेतुरेकत्वादि[10]लक्षणा एकद्रव्या चानेकद्रव्या च। तत्रैकसंख्या एकद्रव्या। अनेकद्रव्या तु द्वित्वादिसंख्या। सा च प्रत्यक्षत एव सिद्धा विशेष[11]बुद्धेश्च निमित्तान्तरापेक्षत्वादनुमानतोपि[12][13]। परिमाणव्यवहारकारणं परिमाणं महदणु दीर्घं ह्रस्वमिति चतुर्विधम्। तत्र महद्द्विविधं नित्यमनित्यं च। नित्यमाकाशकालदिगात्मसु परममहत्त्वम्। अनित्यं द्व्यणुकादिद्रव्येषु।। अण्वपि नित्यानित्यभेदाद्द्विविधम् । परमाणुमनस्सु पारिमाण्डल्य[14]लक्षणं नित्यम्। अनित्यं द्व्यणुके एव। [15]बदरामलकबिल्वादिषु तु महत्स्वपि त[16]त्प्रकर्षाभावमपेक्ष्य भाक्तो[17]ऽणुव्यवहारः। ननु महद्दीर्घत्वयोस्त्र्यणुकादिषु प्रवर्त्तमानयो[18]र्द्व्यणुके चाणुत्वह्रस्वत्वयोः को विशेषः? [19]महत्सु [20]दीर्घमानीयता

१ आत्मन्येव ॥ २ तस्य=आत्मन ॥ ३ प्रदेशयो ॥ ४ सङ्घटनकारिकर्मवशात् ॥ ५ शरीरे एव प्रतिनियतदेशकालाकाशतया निर्बाधबोधे प्रतिभासमानत्वादिति ॥ ६ वैशेषिकद्वारा ॥ ७ वैशेषिकेण ॥ ८ नित्यनिरंशत्वेन
॥९ 'च'इति कपुस्तके नास्ति। ख, ग, घपुस्तकेभ्य सयोजित ॥१० एव ॥११ विशेष=भेद ॥१२ एकादिप्रत्यया विशेषग्रहणापेक्षा विशिष्टप्रत्ययत्वाद्दण्डीत्यादिप्रत्ययवदिति ॥१३ तत्रैकत्वसख्या नित्यद्रव्येषु नित्या कार्यद्रव्ये-ष्वनित्या। द्वित्वादिसख्या तु परार्द्धान्ता अपेक्षाबुद्धिजन्या सर्वत्रानित्या ॥ १४ वर्तुलाकारमित्यर्थ ॥ १५ नन्वणुद्व्यणुके एव यदि वर्त्तते तर्हि बदरामलकादिष्वणुपरिमाणव्यवहार कथमित्याशङ्कायामाह ॥ १६तस्य=अतिशयस्य ॥
१७ उपचरित ॥ १८ परिमाणयो ॥ १९ वस्तुषु ॥ २० वस्तु ॥

दीर्घेषु महदानीयतामिति व्यवहारभेदप्रतीतेरस्त्यनयोः परस्परतो भेदः। अणुत्वह्रस्वत्वयोस्तु विशेषो योगिनां तद्दर्शिनां प्रत्यक्ष एव। महदादि च परिमाणं रूपादिभ्योऽर्थान्तरं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वात्सुखादिवत्। संयुक्तमपि द्रव्यं यद्वशादत्रेदं पृथगित्यपोद्ध्रियते[3] तदपोद्धारव्यवहारकारणं पृथक्त्वं घटादिभ्योऽर्थान्तरं[4] तत्प्रत्ययविलक्षणज्ञानग्राह्यत्वात्सुखादिवत्। अप्राप्तिपूर्विका प्राप्तिः संयोगः। प्राप्तिपूर्विका चाप्राप्तिर्विभागः। तौ च द्रव्येषु यथाक्रमं संयुक्तविभक्तप्रत्ययहेतू। इदं परमिदमपरमिति यतोऽभिधानप्रत्ययौ भवतस्तद्यथाक्रमं परत्वमपरत्वं[5] च। बुद्ध्यादयः प्रयत्नान्ताश्च गुणाः सुप्रसिद्धा एव। गुरुत्वं च पृथिव्युदकवृत्ति पतनक्रियानिबन्धनम्। द्रवत्वं तु पृथिव्युदकज्वलनवृत्ति स्पन्दनहेतुः[10]। पृथिव्यनलयो[11]र्नैमित्तिकम्[12]। अपां सांसिद्धिकम्[13]। स्नेहस्त्वम्भस्येव स्निग्धप्रत्ययहेतुः। संस्कारस्तु त्रिविधो वेगो भावना स्थितस्थापकश्चेति। तत्र वेगाख्यः पृथिव्यप्तेजोवायुमनस्सु मूर्तद्रव्येषु प्रयत्नाभिघातविशेषापेक्षात्कर्मणः समुत्पद्यते। नियतदिक्क्रियाप्रतिबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविरोधी[15] च। भावनाख्यः पुनरात्मगुणो ज्ञानजो ज्ञानहेतुश्च दृष्टानुभूतश्रुतेष्वप्यर्थेषु स्मृतिप्रत्यभिज्ञाकार्योन्नीयमानसद्भावः। मूर्तिमद्द्रव्यगुणः स्थितस्थापकः घनावयवसन्निवेशविशिष्टं स्वमाश्रयं कालान्तरस्थायिनमन्यथा व्यवस्थितमपि प्रयत्नतः पूर्ववद्यथावस्थितं स्थापयतीति कृत्वा। दृश्यते च तालपत्रादेः प्रभूततरकालसंवेष्टितस्य प्रसार्यमुक्तस्य पुनस्तथैवावस्थानं संस्कारवशात्। एवं धनुःशाखाशृङ्गदन्तादिषु भग्नापवर्तितेषु[17] वस्त्रादौ चास्य कार्यं परिस्फुटमुपलभ्यत एव। धर्मादयस्तु[18] सुप्रसिद्धा एवेति।

तदेतत्स्वगृहमान्यं परेषां रूपादिगुणानां यथोपवर्णितस्वरूपेणावस्थानासम्भवात्। न खलु रूपं पृथिव्युदकज्वलनवृत्त्येव वायोरपि तद्वत्तासम्भवात्। तथा हि। रूपादिमान्वायुः पौद्गलिकत्वात्स्पर्शवत्त्वाद्वा पृथिव्यादिवत्। एवं जलानलयोरपि गन्धरसादिमत्ता प्रतिपत्तव्या। रूपरसगन्धस्पर्शवन्तो हि पुद्गलास्तत्कथं तद्विकाराणां[20] प्रतिनियमः[21]। रूपाद्याविर्भावतिरोभावमात्रं[22] तु तत्राविरुद्धं जलकनकादि[23]संप्रयुक्तानले भासुररूपोष्णस्पर्शयोस्तिरोभावाविर्भाववत्। संख्यापि संख्येयार्थव्यतिरेकेणोपलब्धिलक्षणप्राप्ता नोपलभ्यते इत्यसती खरविषाणवत्। न च विशेषणमसिद्धं तस्या दृश्यत्वेनेष्टेः[24]। तथा च सूत्रम्। संख्यापरिमाणानि पृथक्त्वं

---

१ महदादिपरिमाणस्य रूपादिभ्योऽभेदो भविष्यतीत्युक्ते सत्याह ॥ २ विभागात्पृथक्त्वस्य भेदाभावात्पृथक्त्वप्रतिपादन किमर्थमित्युक्ते सत्याह ॥ ३ पृथक् क्रियते ॥ ४ अस्तु विभागात्पृथक्त्वस्य भेदस्तथापि घटादिभ्योऽभेदो भविष्यतीत्युक्ते वक्ति ॥ ५ अनित्यावेव ॥ ६ अनित्यमेव ॥ ७ अनित्यमेव ॥ ८ अनित्या एव ॥ ९ तच्च पार्थिवाप्याणुषु नित्यं द्व्यणुकादिष्वनित्यम् ॥ १० लाक्षालोहादिषु ॥ ११ सर्पिः सुवर्णयो ॥ १२ अनित्यमित्यर्थः ॥ १३ नित्यमित्यर्थः। आप्याणुषु नित्यमाप्यद्व्यणुकादिषु त्वनित्यम् ॥ १४ असर्वगतद्रव्यपरिमाणवत्त्वमित्यर्थः ॥ १५ कर्मधारय ॥ १६ वृक्षादिकेन स्पर्शवता द्रव्येण सह वेगाख्यस्य बाणादे संयोगे सति वेगाख्य संस्कार स्वय विनश्यतीत्यर्थः ॥ १७ आकृष्टमुक्तेषु ॥ १८ स त्रिविधोप्यय संस्कारो अनित्य एव। धर्माधर्मावात्मविशेषगुणावनित्यावेव। शब्दस्त्वाकाशविशेषगुणोऽनित्य एव ॥ १९ पृथिव्यादीनाम् ॥ २० पृथिव्यामेव गन्ध इत्यादि ॥ २१ तर्हि सर्वत्र तेषामाविर्भाव कुतो न स्यादित्युक्ते सत्याह ॥ २२ उष्ण ॥ २३ अग्नेरपत्य प्रथम सुवर्णमित्यागमत प्रसिद्धतेजसत्व कनकादीना तत कथमुक्त कनकादिसयुक्तानल इत्याशङ्कायामाह कनकेपि पृथिव्यंशोस्तीति ॥ २४ परस्य ॥

संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणीति । एकादिप्रत्यया विशेषग्रहणापेक्षा विशिष्टप्रत्ययत्वाद्दण्डीत्यादिप्रत्ययवदित्यनुमानतोपि न संख्यासिद्धिर्यतो यथैको गुणोपि वहवो गुणा इत्यादौ संख्यामन्तरेणाप्येकादिबुद्धिस्तथा घटादिष्वप्यसहायादिस्वभावेष्वेकादिबुद्धिर्भविष्यतीत्यलमर्थान्तरभूतयैकादिसंख्यया । न च गुणेषु संख्या सम्भवत्यद्रव्यत्वात्तेषां तस्याश्च गुणत्वेन द्रव्याश्रितत्वात् । न च गुणेषूपचरितमेकत्वादिज्ञानमस्खलद्वृत्तित्वात् । यदि चाश्रयगता संख्यैकार्थसमवायाद्गुणेषूपचर्येत तर्ह्येकस्मिन्द्रव्ये रूपादयो वहवो गुणा इति प्रत्ययोत्पत्तिर्न स्यात्तदाश्रयद्रव्ये वहुत्वसंख्याया अभावात् । षट् पदार्था इत्यादिव्यपदेशे च किं निमित्तमित्यभिधातव्यम् ? न ह्यत्रैकार्थसमवायिनी संख्या सम्भवति तया सह षट्पदार्थानां कंचित्समवायाभावात् । अस्तु वा संख्या । तथाप्यस्याः कथं गुणत्वसिद्धिः ? सत्त्वादिवत् - षट्स्वपि पदार्थेषु प्रवृत्तेः । ननु यदि संख्या गुणो न स्यात्तर्ह्यनित्यत्वमसमवायिकारणत्वं चास्या न स्यात् । अस्ति च तदुभयम् । तथा चोक्तम् । एकादिव्यवहारहेतुः संख्या । सा पुनरेकद्रव्या चानेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः । सलिलादिपरमाणवश्चेति विग्रहः । अनेकद्रव्या तु द्वित्वादिका परार्द्धान्ता । तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिनाशाच्च विनाशः क्वचिदाश्रयविनाशादुभयविनाशाच्चेति चार्थः । असमवायिकारणत्वं च द्वित्ववहुत्वसंख्यायाः द्व्यणुकादिपरिमाणं प्रतीतिति । एतदपि मनोरथमात्रं भेदवदस्याः कारणत्वाभावात् । यथैव हि कार्यभिन्नतायां कारणभिन्नताया असमवायिकारणत्वं भवता नेष्यते तथैकत्वस्यापि तन्नेष्टव्यं तस्या(ऽ)भेदपर्यायत्वात् । अभेदभेदौ च स्वात्मपरात्मापेक्षौ रूपादिष्वपि भवतः । यथा चैकमभिन्नमिति पर्यायस्तथानेकं भिन्नमित्यपि । तथा च द्वित्वादिरप्यनेकत्वपर्यायः । तस्योत्पत्त्यादिकल्पना न कार्या ।

---

१ अत्र दण्डपुरुषयो सयोगो विशेष ॥ २ निर्गुणा इति वचनात् ॥ ३ सख्यारहितेष्वित्यर्थ ॥४ अबाधित ॥५ आश्रयगतद्रव्यस्यैकलात् ॥६ केवलद्रव्यसमवेता ॥७ द्रव्यलक्षणेऽर्थे ॥ ८ उत्तरसख्योत्पत्तौ प्राक्तनसख्याऽसमवायिकारण, द्रव्य समवायिकारणमपेक्षाबुद्धिर्निमित्तकारणमिति ॥ ९ आदिशब्दोत्र लुप्तो द्रष्टव्य ॥ १० सलिलादि( कार्यलक्षण )रूपादीनामनित्यत्वनिष्पत्तिर्यथा तथाऽनित्यैकद्रव्यगताया एकसख्याया अनित्यत्वनिष्पत्ति । यथा च जलादिपरमाणुरूपादीना ( कारणरूपाणाम् ) तथा नित्यैकद्रव्यगताया एकसख्याया नित्यत्वमिति भाव ॥ ११ कार्यरूपा ॥ १२ कारणरूपपरमाणव ॥ १३ द्वित्वादिसख्या प्रत्यपेक्षाबुद्धे कारणत्वमेकत्वसख्यायास्त्वसमवायिकारणत्वमिति भाव १४ इमौ द्वावमी वहव ॥ १५ सख्येय आश्रय ॥ १६ सख्येयस्य च ॥ १७ सख्याम् ॥ १८ उत्तरगुण प्रति प्राक्तनगुणस्यासमवायिकारणत्वाभ्युपगमात् ॥ १९ द्वित्वादिसख्या प्रति ॥ २० द्वित्वादिसख्या प्रति ॥ २१ अभेदपर्यायत्वेप्यसमवायिकारणत्व कुतो न भवतीत्युक्ते सत्याह ॥ २२ एकनानात्वम् ॥ २३ रूपस्य स्वरूपापेक्षयाऽभेद । परापेक्षया भेद । एव रसादिषु वाच्यम् ॥ २४ अभेदोऽसमवायिकारण न भवति द्रव्यादन्यत्र वृत्तिमत्त्वाद्भेदवत्सत्त्वादिवद्वेति ॥ २५ अपिशब्देन द्रव्य ग्राह्य तत्रापि स्वपररूपापेक्षयाऽभेदभेदौ ॥ २६ आदिशब्देन नाशस्थितिसग्रह ॥ २७ द्वित्वादेरनेकपर्यायत्वे वस्तुस्वरूपमेवायातम् । तस्य च स्वकारणकलापादुत्पत्तेरनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरित्यादि निरर्थकमिति भाव ॥

नन्वेवं[1] सर्वत्र द्वे त्रीणीत्यादिप्रतिभासप्रसङ्गात्[2] प्रतिभासप्रविभागो न स्यादनेकत्वस्याविशिष्टत्वात्। तत्र—अपेक्षाबुद्धिविशेषवत्तत्सिद्धेरप्रतिबन्धात्। यथैव ह्यनेकविपयत्वाविशेषेपि काचिदपेक्षाबुद्धिर्द्वित्वस्योत्पादिका काचित्त्रित्वस्य। न[3] ह्यपेक्षाबुद्धेः पूर्वं द्वित्वादिगुणोस्त्यनवस्थाप्रसङ्गात्। अपेक्षाबुद्धिजनितस्य वा द्वित्वादेरानर्थक्यानुषङ्गात्। तथा द्वित्वादिप्रत्ययविभागोपि भविष्यति। यत एव चाभिन्नभिन्नत्वलक्षणाद्विशेषादपेक्षाबुद्धिविशेषस्तत एवैकत्वादिव्यवहारभेदोपि भविष्यति इत्यलमन्तर्गडुनैकत्वादिगुणेन। एवं च गुणेष्वप्येकत्वादिव्यवहारोऽकष्टकल्पनः स्यात्। गणितव्यवहारश्च षट्पञ्चविंशतिभिः सार्धं शतमित्यादिः सुगमः। तस्मादभिन्नं तावदेकमित्युच्यते तदपरेणाभिन्नेन सह द्वे इति, ते त्वपरेणाभिन्नेन सह त्रीणीत्येवमादिः समयो[11] लोके प्रसिद्धो गणितप्रसिद्धश्चैकत्वादिव्यवहारहेतुर्द्रष्टव्य इति। अथ द्वित्वबहुत्वसंख्याया द्व्यणुकादिपरिमाणं प्रत्यसमवायिकारणत्वोपपत्तेः सद्भावसिद्धिः, तत्र—अस्यास्तदसमवायिकारणत्वे प्रमाणाभावात्। परिशेषोस्तीति चेन्न कारणपरिमाणस्यैवासमवायिकारणत्वसम्भवाद्रूपादिवत्[13]। ननु परमाणुपरिमाणजन्यत्वे द्व्यणुकेपि परमाणुत्वप्रसङ्गः स्यात्तन्न कार्यकारणयोस्तुल्यपरिमाणत्वे दृष्टान्ताभावात्। सर्वत्र हि कारणपरिमाणादधिकमेव कार्यपरिमाणं दृश्यते। परिमाणवच्च कर्मण्यप्यसमवायिकारणत्वमस्याः स्यात्। दृश्यते हि द्वाभ्यां बहुभिर्वा पाषाणाद्युत्थापनम्। न चात्र संख्यायाः कारणत्वं भवद्भिरिष्टम्। अथास्यास्तत्रापि निमित्तत्वमिष्यते, को वै निमित्तत्वे विप्रतिपद्यते? सामान्यादीनामपि तदभ्युपगमात्। असमवायिकारणत्वं तु तस्याः परिमाणवदुत्थापनादिकर्मण्यभ्युपगन्तव्यम्[21]। न चान्यत्रापीत्यलमतिप्रसङ्गेन। यदप्युक्त "महदादिपरिमाणं रूपादिभ्योर्थान्तरं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वात्सुखादिवत्" तदप्ययुक्तं हेतोरसिद्धेर्घटाद्यर्थव्यतिरेकेण महदादिपरिमाणस्याध्यक्षप्रत्ययग्राह्यत्वेनासंवेदनात्। असत्यपि महदादौ प्रासादमालादिषु महदादिप्रत्ययप्रादुर्भावप्रतीतेरनैकान्तिकश्चायम्। न च यत्रैव प्रासादादौ समवेतो मालाख्यो गुणस्तत्रैव महत्त्वादिकमपीत्येकार्थसमवायवशान्महती प्रासादमालेतिप्रत्ययोत्पत्तेर्नानैकान्तिकत्वं स्वसमयविरोधात्। न खलु प्रासादो भवद्भिरवयवि द्रव्यमभ्युपगम्यते विजातीयानां द्रव्याणामनारम्भकत्वात्[31]। किं तर्हि? संयोगात्मको गुणः। न च गुणः परिमाणवान् निर्गुणा गुणा इत्यभिधानात्। ततो मा-

---

१ द्वित्वादेरनेकत्वपर्यायत्वप्रकारेण ॥ २ त्रिचतु पञ्चषडादिवस्तुषु ॥ ३ द्वित्वादेरनेकपर्यायत्वात् ॥ ४ उत्तरमिद—द्वित्वादिसंख्या प्रति करणत्वेनाभिमताया अपेक्षाबुद्धेरनेकत्वाविशेषेपि भेदो यथा तथा द्वित्वादिप्रत्ययविभागोपीति ॥ ५ अपेक्षाबुद्धे पूर्वमेव द्वित्वादिगुणोस्तीत्युक्ते सत्याह ॥ ६ द्वित्वादिगुणस्यापि द्वित्वादिकमपरस्माद्द्वित्वादिगुणात्तस्याप्यपरस्मादिति ॥ ७ भिन्नाभिन्नत्वलक्षणाद्विशेषादेकत्वादिभवनप्रकारेण ॥ ८ सत्येयात् ॥ ९ एकेन ॥ १० अपरसत्येयात् ॥ ११ सङ्केत ॥ १२ द्व्यणुकादिपरिमाणमसमवायिकारणक सद्रूपकार्यत्वाद्धटवदित्यनुमानम् ॥ १३ कारणरूपादेर्यथा कार्यरूपादिक प्रत्यसमवायिकारणत्वम् ॥ १४ द्व्यणुकादिपरिमाणस्य ॥ १५ परमाणुपरिमाणस्वरूपवत् ॥ १६ पाषाणाद्युत्थापनलक्षणे ॥ १७ नराभ्याम् ॥ १८ परै ॥ १९ विवाद करोति ॥ २० पुरुषत्वादीनाम् ॥ २१ अभ्युपगन्तव्य नेति सम्बन्ध ॥ २२ परिमाणे ॥ २३ सत्याया परिमाण प्रत्यसमवायिकारणत्वनिराकरणेन ॥ २४ गुणरूपे ॥ २५ आदिना पर्वतमालादिषु ॥ २६ अन्यथा ॥ २७ गुणे गुणसद्भावाभ्युपगमात् ॥ २८ वैशेषिकै ॥ २९ काष्ठादीनाम् ॥ ३० प्रासादलक्षणावयविद्रव्यम्। तस्य ॥ ३१ तन्त्वादिना सजातीया ये तन्त्वादयस्त एव पटाद्यवयविद्रव्यारम्भका इति भाव ॥

व्यतिरिक्तपृथक्त्वानाधारा[1] यथा रूपादयः। परस्परव्यावृत्तात्मानश्च घटादयोऽर्था इति। [2]ततो विभिन्नस्वभावतयोत्पन्नार्थस्यैव पृथगितिप्रत्ययविषयत्वप्रसिद्धेरलं पृथक्त्वगुणकल्पनया पृथक्प्रत्ययस्याप्यसाधारण[3]धर्मादेवोपपत्तेः। यदा ह्येकं वस्त्वितरेभ्यो भिन्नं पश्यति प्रतिपत्ता तदैकं पृथगिति प्रतिपद्यते। यदा तु द्वे वस्तुनीतरेभ्यो विलक्षणैकधर्मयोगाद्विभिन्ने पश्यति तदा द्वे पृथगिति मन्यते। यदा त्वेकदेशत्वादिना[4] धर्मेणेतरेभ्यो[5] बहूनि भिन्नानि पश्यति तदैतान्येतेभ्यः पृथगिति प्रतिपद्यते। यथा रूपादयो द्रव्यात्पृथगिति। संयोगस्तु समवायनिराकरणप्रघट्टके प्रतिपेत्स्यते। तदभावात्प्राप्तिपूर्विका अप्राप्तिर्विभाग इत्यपि निरस्तम्। न हि प्रागभाविसान्तरैरूपतापरित्यागेन[6] निरन्तररूपतयोत्पन्नवस्तुव्यतिरेकेणान्यः संयोगः संयुक्तप्रत्ययविषयोऽनुभूयते। [7]अविच्छिन्नोत्पत्तिकमेव हि वस्तु निरन्तरप्रत्ययविषयो, निरन्तरोपरचितदेवदत्तयज्ञदत्तगृहवत्। न खलु गृहयोः परेणापि[8] संयोगगुणाश्रयत्वमिष्टं[9] निर्गुणत्वाद्गुणानां तयोश्च संयोगात्मकत्वेन गुणत्वात्। नापि विच्छिन्नोत्पन्नवस्तुव्यतिरेकेणान्यो विभागो विभक्तप्रत्ययविषयो हिमवद्विन्ध्यवत्। न हि तयोर्विभागाश्रयत्वं प्राप्तिपूर्विकाया अप्राप्तेर्विभागलक्षणायास्तयोरभावात्। प्रयोगः—या संयुक्ताकारा बुद्धिः सा भवत्परिकल्पितसंयोगानास्पदवस्तुविशेषमात्रप्रभवा यथा संयुक्तौ प्रासादाविति बुद्धिः। संयुक्ताकारा च चैत्रः कुण्डलीत्यादिबुद्धिरिति। यद्वा यानेकवस्तुसन्निपाते सति सं[10]मुत्पद्यते सा भवत्परिकल्पितसंयोगविकलानेकवस्तुविशेषमात्रभाविनी यथाऽविरलाऽवस्थिताऽनेकतन्तुविषया बुद्धिः। तथा च विमत्यधिकरणभावापन्ना संयुक्तबुद्धिरिति। तथा मेषादिषु[11] विभक्तबुद्धिर्विभागरहितपदार्थमात्रनिबन्धना विभक्तत्वादनेकपदार्थसन्निधानाय[12]त्तोदयत्वाद्वा देवदत्तयज्ञदत्तगृहविभागबुद्धिवद्धिमवद्विन्ध्यविभागबुद्धिवद्वा। सत्यपि वा संयोगे विभागस्य तदभावलक्षणत्वान्न गुणरूपता। कथमन्यथा पुत्रादौ चिरनिवृत्तेपि संयोगे विभक्तप्रत्ययः स्यात्? न खलु तत्र विभागः संभवत्यस्य[13] कियत्कालस्थायिगुणत्वेनाभ्युपगमात्। कथं वा हिमवद्विन्ध्यादौ संयोगेनुत्पन्नेपि विभक्तप्रत्ययः स्यात्? संयोगाभावात्[14]। व्यतिरिक्त[15]विभागस्वरूपस्य क्वचिदप्यनुपलम्भान्नोपचारकल्पनापि साध्वी[16]। विभागाभावे कुतः संयोगनिवृत्तिरिति चेत्[17]कर्मण एवेति ब्रूमः[18] कर्ममात्रा[19]दपि [20]तन्निवृत्तिः स्यादित्यप्यदोष[21]ः। संयोगमात्रनिवृत्तेरिष्टत्वात्। संयोगविशेषनिवृत्तिस्तु [22]कर्मविशेषात्त्वन्[23]मते ततो विभागविशे-

---

१ स्वव्यतिरिक्तपृथक्त्वानाधारा घटादयो यत ॥ २ वस्तुव्यतिरिक्तपृथक्त्वासम्भवात्कथ पृथक्त्वप्रत्ययोत्पत्तिरित्युक्ते सत्याह ॥ ३ असाधारण =तन्मात्रवृत्ति ॥ ४ आदिना काललस्वरूपत्वग्रह ॥ ५ भिन्नरूपतेत्यर्थ ॥ ६ अभिन्नरूपतयेत्यर्थं ॥ ७ अपृथक् ॥ ८ न केवलमस्माभि ॥ ९ गृहस्य गुणत्वमसिद्धमित्याह ॥ १० इन्द्रियाणामनेकवस्तुभि सह सन्निपाते सन्निकर्षे समुत्पद्यते इत्यर्थ ॥ ११ अयमस्मान्मेषाद्भिन्नो मेष इत्यादिप्रकारेण ॥ १२ अनेकपदार्थ सह सन्निकर्ष इन्द्रियाणाम्। तस्यायत्त उदयो यस्या इति वाक्यम् ॥ १३ विभागस्य। १४ यतो यत्र सयोगपूर्वको विभक्तप्रत्ययस्तत्रैव विभागव्यवहारो युज्यते। न चानयो प्राक् सयोग पश्चाद्विभाग इति ॥ १५ व्यतिरिक्तस्य=वस्तुन सकाशाद्भिन्नरूपस्य ॥ १६ क्वचि मुख्यत्वेनाप्रसिद्धस्योपचाराभावात्। सति सभवेन्यत्र निमित्तप्रयोजनवशादुपचार प्रकल्प्यते यत ॥ १७ क्रियात ॥ १८ जैना ॥ १९ कस्माच्चिदेव कर्मण इत्यर्थ ॥ २० तस्य=सयोगस्य ॥ २१ जैनानाम् ॥ २२ यथा द्रव्यारम्भक(परमाणु)सयोगविशेषनिवृत्तिर्भिद्यमानवशाद्वयवद्रव्यस्यावयवक्रियात इति सबन्ध ॥ २३ तव=वैशेषिकस्य ॥

घोत्पत्तिवत्। कर्मणः संयोगोत्पादकत्वात्कथं तन्निवर्तकत्वमिति चेत्तर्हि हस्तबाणादिसंयोगस्य [1]कर्मोत्पादकत्वोपलम्भात् कथं वृक्षादौ [2]बाणादिसंयोगस्य तन्निवर्तकत्वं स्यात्? अन्यस्य तन्निवर्तकत्वमन्यत्रापि समानम्। न खलु येनैव कर्मणा यः संयोगो जनितः स तेनैव निवर्त्यते इति। [3]एतेन विभागजविभागोपि चिन्तित-स्तस्यापि संयोगाभावरूपस्य क्रियात एवोत्पत्तिप्रसिद्धेः। ननु यदि विभागजविभागो न स्यात्तर्हि हस्तकुड्यसंयोगविनाशेपि शरीरकुड्यसंयोगविनाशो न प्राप्नोति, तन्न–हस्तकुड्यसंयोगव्यतिरेकेण शरीरकुड्यसंयोगस्यैवासंभवात्। हस्तकुड्यसंयोगादेवासौ कल्प्यते इति चेत्तर्हि हस्तकर्मदर्शनाच्छरीरेपि कर्म कस्मान्न कल्प्यते? तुल्या-क्षेपसमाधानत्वात्। यच्चोच्यते तत्प्रसिद्धयेऽनुमानं–विवक्षितावयवक्रियाऽऽकाशादिदेशेभ्यो विभागं न करोति द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वात्। या पुनराकाशादिदेशविभागकर्त्री सा संयोगविशेषनिवर्त्तकविभागजनिकापि न भवति। यथाङ्गुलिक्रियेति। यदि भिद्यमानवंशाद्यवयविद्रव्यस्यावयवक्रिया आकाशादि-देशेभ्यो विभागं कुर्यात्तर्हि वंशादिद्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वमेवास्या न स्यादङ्गुल्याद्यवयविद्रव्यक्रियावत्। ततोऽवयविद्रव्यस्याकाशादिदेशवि-भागोत्पादकोऽवश्यं विभागोऽभ्युपगन्तव्यः। इत्यप्यसाम्प्रतं विभागोत्पादकत्वस्यासिद्धत्वात्। क्रियात एव संयोगनिवृत्तेरुक्तत्वात्। अथावयविनस्तत्क्रिया-ऽऽकाशादिदेशसंयोगं न निवर्त्तयति द्रव्यारम्भकसंयोगनिवर्त्तकत्वादितीदमत्र विवक्षितं तथाप्यसाधारणो हेतुः सपक्षेप्याकाशादिदेशसंयोगानिवर्त्तके रूपादौ वृत्तेरभावात्। न चावयवसयोगादवयविनः संयोगोन्यस्तद्भेदैकान्तस्य प्रागेव प्रतिक्षेपात्। विनाशोत्पादप्रक्रियायाश्च कृतोत्तरत्वात्। तन्न विभागो घटते।

नापि परत्वापरत्वे–परापरप्रत्ययाभिधानयोस्तदन्तरेणापि रूपादौ सम्भवात्। तथा हि। क्रमोत्पन्ननीलादिगुणेषु परं नीलमपरं चेति प्रत्ययोत्पत्तिरसत्यपि परत्वापरत्वलक्षणे गुणे दृष्टा गुणानां निर्गुणतयोपगमात्। तथा घटादिष्वपि स्यात्। अथात्र दिक्कालकृतः परापरप्रत्ययः। ननु घटादिष्वप्यसौ तत्कृतोस्तु विशे-षाभावात्। तथा च प्रयोगः। योयं परापरादिप्रत्ययः स परपरिकल्पितगुणरहितार्थमात्रकृतक्रमोत्पादव्यवस्थानिबन्धनः परापरप्रत्ययत्वात्। रूपादिषु पराप-रप्रत्ययवत्। विप्रकृष्टं परं संनिकृष्टमपरमिति चानयोरेकार्थत्वान्न भेदं पश्यामः। ततश्चायुक्तमुक्तं=विप्रकृष्टसंनिकृष्टबुद्धिभ्यां परत्वापरत्वयोरुत्पत्तिरिति। न हि घटबुद्धिमपेक्ष्य कुम्भ उत्पद्यते इति युक्तम्। नापि पर्यायशब्दभेदादर्थो भिद्यते इति। किं च सामान्येषु महापरिमाणाल्पपरिमाणगुणेषु च महदल्पाधारत्वबु-

१ अत्र देशाद्देशान्तरप्राप्तिलक्षणमेव कर्म गृह्यते ॥ २ वृक्षादौ सयुज्य बाणादि पुनर्न ततोग्रदेश यातीत्यर्थ ॥ ३ सयोगनिवृत्ते कर्मजत्वप्रतिपादनेन ॥ ४ भिद्यमानवशाद्यवयविद्रव्यस्य ॥ ५ भिद्यमानवशाद्यवयविन इति शेष ॥ ६ द्रव्य वशादि ॥ ७ परमाणु ॥ ८ प्रसारणसङ्कोचनरूपा ॥ ९ द्रव्यारम्भकसयोगविरोधिविभागोत्पादकत्व च स्यादाकाशादिदेशेभ्यो विभाग च कुर्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ १० विभागाद्विभागो जात इत्यर्थ ॥ ११ जैनादिना ॥ १२ तर्हि विभागाभावे सयोगनिवृत्ति कथमिति शङ्कायामाह ॥ १३ अनेकान्तिक ॥ १४ तयो अवयवावयविनो ॥ १५ अवयवेषु क्रिया क्रियात सयोग सयोगादवयविन उत्पत्तिरिति प्रक्रियातस्तयोर्भेद इत्युक्ते सत्याह ॥ १६ द्रव्यारम्भकसयोगविरोधिविभागोत्पादकत्वसाधनमसिद्ध यत ॥ १७ न तु स्वाभाविक ॥ १८ गुणो परत्वापरत्वलक्षणौ ॥ १९ अर्थो दिक्काललक्षण ॥ २० गुणरूपेषु ॥ २१ परविप्रकृष्टयोरपरसन्निकृष्टयोश्च ॥ २२ परापररूपेषु इत्यर्थ ॥

द्व्यपेक्षयोः परत्वापरत्वयोरुत्पत्तिः कल्प्यतामविशेषात् । किं च परत्वापरत्वयोर्गुणत्वमभ्युपगच्छता मध्यत्वं च गुणोऽभ्युपगन्तव्यः कालदिक्कृतमध्यव्यवहारस्याप्यत्र समानत्वात् । सुखदुःखेच्छादीनां चाबुद्धिरूपत्वे रूपादिवन्नात्मगुणता युक्ता बुद्धिरूपत्वे चातो भेदेनाभिधानमयुक्तम् । कंचिद्विशेषमादाय बुद्ध्यात्मकानामप्यतो भेदेनाभिधानेऽभिधानादीनामपि भेदेनाभिधानं कार्यम् । इत्यलमतिप्रसङ्गेन । गुरुत्वादीनां तु पुद्गलगुणत्वं युक्तमेव । अतीन्द्रियं गुरुत्वं पातोपलम्भेनानुमेयत्वादित्येतन्न युक्तं करतलाद्युपरिस्थिते द्रव्यविशेषे पातानुपलम्भेऽपि गुरुत्वस्य प्रतिभासनात् । रजःप्रभृतीनामपि गुरुत्वं कस्मान्न गृह्यते इति चेद्ग्रहणायोग्यत्वात् । तावतैवातीन्द्रियत्वे गन्धरसादीनामप्यतीन्द्रियत्वं स्यात् । क्वचिद्दूरे तदाश्रयस्याम्रफलादेः प्रत्यक्षत्वेऽपि तेषां ग्रहणाभावादिति । पृथिव्यनलयोरप्यस्ति द्रवत्वमित्यनुपपन्नं सुवर्णादीनाम् 'अग्नेरपत्यं प्रथमं सुवर्णम्' इत्यागमतः प्रसिद्धतैजसत्वानां जतुप्रभृतिपार्थिवद्रव्याणां चाप्यस्यैव द्रवत्वस्य संयुक्तसमवायवशात्प्रतीतिसम्भवात् । अथ सर्वं पार्थिवं तैजसं च द्रव्यं द्रवत्वसंयुक्तं रूपित्वात्तोयवदित्यनुमानात्तस्य द्रवत्वसिद्धिस्तन्न प्रत्यक्षेण स्पन्दनकर्मानुपलम्भेन च बाधितविषयत्वात् । अथेत्थम्भूतधर्मकं तत्र द्रवत्वं जातं यत्प्रत्यक्षं न भवति स्पन्दनक्रियां च न करोतीत्युच्यते तर्हि गुरुत्वरसावप्येवंधर्मकौ रूपित्वादेव किन्न तेजसोऽभ्युपगम्येते तुल्याक्षेपसमाधानत्वात् । तथा चास्योर्द्ध्वगतिस्वभावता न स्यात् । रसः पृथिव्युदकवृत्तिरित्यस्य च विरोध इति । स्नेहोऽम्भस्येवेत्यप्ययुक्तं घृतादेरपि लोके वैद्यकादिशास्त्रे च स्निग्धत्वेन प्रसिद्धत्वात् । घृतादावन्यनिमित्तत्वेनौपचारिकः स्निग्धप्रत्यय इत्यप्यसाम्प्रतं विपर्ययस्यापि कल्पयितुं शक्यत्वात् । तथा हि । तोयसम्पर्केऽप्योदनादौ च स्निग्धप्रत्ययो नास्ति घृतादिसम्पर्के तु स्निग्धप्रत्ययः सर्वेषामस्त्येवेति । कणिकादौ तोयस्य बन्धहेतुत्वोपलम्भात्तस्यैव स्नेहो विशेषगुण इत्यप्यसारं भवता स्नेहरहितत्वेनाभ्युपगतस्यापि क्षीरजतुप्रभृतेर्बन्धहेतुत्वेन प्रतीतेः । स्नेहस्य गुणत्वाभ्युपगमे च काठिन्यमार्दवादेरपि गुणत्वाभ्युपगमः कर्त्तव्यः । तथा च तत्संख्याव्याघातः स्यात् । ननु काठिन्यादेः संयोगविशेषरूपत्वात्कथं गुणसंख्याव्याघातहेतुत्वम् ? तथा चोक्तमवयवानां प्रशिथिलसंयोगो मृदुत्वमित्यादि । तदप्यसङ्गतं चक्षुषा संयोगेषु प्रतीयमानेष्वपि मार्दवादेरप्रतिभासनात् । यो हि यद्विशेषः स तस्मिन्प्रतीयमाने प्रतीयत एव । यथा रूपे प्रतीयमाने तद्विशेषो नीलादिः । न प्रतीयते च संयोगेषु प्रतीयमानेष्वपि काठिन्यादि । तस्मान्नासौ तद्विशेष इति । कटाद्यवयवानां प्रशिथिलसंयोगेऽपि मृदुत्वाप्रतीतेश्च विशिष्टचर्माद्यवयवानामप्यप्रशिथिलसंयोगित्वेऽपि मृदुत्वोपलब्धेश्चेति । ननु काठिन्यादेः संयोगविशेषरूपत्वाभावे कथं कठिनमेव कणिकादिद्रव्यं

---

१ उभयत्र । अपेक्षाबुद्धे ॥ २ आदिना मस्तकरुन्वादिग्रहणम् ॥ ३ आदिपदेन हरितालरीतिकाग्रहणम् ॥ ४ जलीयस्य ॥ ५ प्रत्यक्षौ न भवत पतनादिक्रिया च न कुरुत इति ॥ ६ प्रत्यक्षेण पतनादिकर्मानुपलम्भेन च बाधितविषयत्वात् तेजसो गुरुत्व रसत्वमित्याक्षेप । अथेत्थम्भूतधर्मकं तेजसि गुरुत्व रसत्व च जातं यत्प्रत्यक्ष न भवति तत्पतनादिक्रिया च न करोतीति समाधानम् ॥ ७ तेजोद्रव्यस्य गुरुत्वरसत्वोपगमे च ॥ ८ तेजस्यपि रसस्य भावात् ॥ ९ अन्यत्=जलम् ॥

मर्दनादिना मृदुत्वमापाद्यते? इत्यप्यसुन्दरम्। न हि तदेव द्रव्यं मृदु भवति। किं तर्हि? पूर्वकठिनपर्यायनिवृत्तौ मृदुपर्यायोपेतं द्रव्यान्तरमुत्पद्यते। संयोगविशेषमृदुत्ववादिनापि पूर्वद्रव्यनिवृत्तिरत्राभ्युपगतैव। ततः स्पर्शविशेषो मृदुत्वादिरभ्युपगन्तव्यः—कठिनः स्पर्शो मृदुः स्पर्श इति प्रतीतिदर्शनात्। तथा च पाकजत्वमपि स्पर्शस्योपपन्नं घटादिषु रूपादिवत्। विलक्षणस्पर्शोपलम्भान्नान्यथा। न च काठिन्यादिव्यतिरेकेण स्पर्शस्यान्यद्वैलक्षण्यं व्यवस्थापयितुं शक्यमिति। वेगाख्यस्तु संस्कारो न केवलं पृथिव्यादावेवास्त्यात्मन्यप्यस्य सम्भवात्। तस्यापि सक्रियत्वेन प्रसाधितत्वात्। न च क्रियातोऽर्थान्तरं वेगोऽस्याः शीघ्रोत्पादमात्रे वेगव्यवहारप्रसिद्धेः। वेगेन गच्छतीति प्रतीतेः क्रियातोऽर्थान्तरं वेग इत्यप्ययुक्तं वेगेन गच्छति शीघ्रं गच्छतीत्यनयोरेकत्वात्। न च कर्मणः कर्मारम्भकत्वेऽनुपरमप्रसङ्गः शब्दवत्तदुपरमोपपत्तेः। यथैव हि शब्दस्य शब्दान्तरारम्भकत्वेऽप्युपरमस्तथात्रापि। कर्म कर्मनाश्यं न विद्यते इत्यपि वचनमात्रत्वादविरोधकम्। न च विभिन्नः संस्कारो बाणादीनामपातहेतुः प्रतीयतेऽन्यथा कदाचिदपि तेषां पातो न स्यात्तत्प्रतिबन्धकस्य वेगस्य सर्वदावस्थानात्। न च मूर्तिमद्वाय्वादिसंयोगोपहतशक्तित्वाद्वेगस्य तेषां पतनं प्रथममेव पातप्रसक्तेः। तत्संयोगस्य तद्विरोधिनस्तदापि सम्भवात्। न च प्राग्वेगस्य बलीयस्त्वाद्विरोधिनमपि मूर्तद्रव्यसंयोगमपास्य शरं देशान्तरं प्रापयतीत्यभिधातव्यं पश्चादप्यस्य बलीयस्त्वात्तथैव तत्पातप्रसक्तेः। न खलु वेगस्य पश्चादन्यथात्वं तथोत्पत्तिकारणाभावात्। तत्समवायिकारणत्वस्येष्वादेः सर्वदाऽविशिष्टत्वात्। न च कर्माख्यं कारणं पश्चाद्विशिष्यते तस्यापि तुल्यपर्यनुयोगत्वात्। न च प्रभूताकाशप्रदेशसंयोगोत्पादनात् संस्कारप्रक्षयादिषोः पातः संस्कारस्यैकस्वभावत्वेनावस्थितस्य प्रागिव पश्चादपि प्रक्षयानुपपत्तेः। न चाकाशस्य प्रदेशाः परेणेष्यन्ते येन तत्संयोगानां भूयस्त्वं संस्कारप्रक्षयहेतुत्वं वा युक्तियुक्तं भवेत्। कल्पनाशिल्पिकल्पितानां संयोगभेदकत्वं तदायत्तभेदानां च संयोगानां संस्कारप्रक्षयहेतुत्वं दूरोत्सारितमेव।

भावनाख्यस्तु संस्कारो धारणापरनामा नानिष्टः पूर्वपूर्वानुभवाहितसामर्थ्यलक्षणस्यात्मनोऽनर्थान्तरभूतस्य स्मृत्यादिहेतुत्वेनास्यास्माभिरपीष्टत्वात्। स्थितस्थापकरूपस्तु संस्कारोऽसम्भाव्य एव। स हि किं स्वयमस्थिरस्वभावं भावं स्थापयति स्थिरस्वभावं वा? न तावदस्थिरस्वभावं तत्स्वभावानतिक्रमात्। तथावि-

१ मृदुरूपोऽपि संयोगगुणविशेष ॥ २ मृदुनाऽपि स्पर्शविशेषस्ते न ॥ ३ मृदुनाऽपि स्पर्शविशेषस्याभावे [illegible] ॥ ४ काठिन्यादि [illegible] स्पर्शस्यान्यद्वैलक्षण्यमभविष्यति ततश्च विलक्षणस्पर्शोपलम्भेन पाकजत्वमप्यविरुद्धं [illegible] ॥ ५ [illegible] ॥ ६ [illegible] ॥ ७ वेगस्य क्रियात्वे क्रियातः क्रियोत्पद्यत इति भावः ॥ ८ यद्यपि [illegible] तथापि [illegible] ॥ ९ [illegible] ॥ १० नित्यत्वाद्गुणानाम् ॥ ११ आकाशप्रदेशानाम् ॥ १२ संयोगानां नानाकारत्वम् ॥

धस्यापि स्थापनेतिप्रसङ्गः । क्षणादूर्ध्वं चार्थस्य स्वयमेवाभावात्कस्यासौ स्थापकः स्यात्? भावे वाऽस्थिरस्वभावताविरोधः । अथ द्वितीयः पक्षस्तदा स्थिरस्वभावेऽवस्थितानामर्थानां स्वयमेवावस्थानात्किमकिञ्चित्करस्थापकप्रकल्पनया? ततः स्वहेतुवशात्तथा तथा परिणतिरेवार्थानां स्थितस्थापकः संस्कारो, नान्यः । धर्माधर्मशब्दानां तु गुणत्वं प्रागेव प्रतिविहितमित्यलमतिप्रसङ्गेन । ततः कर्तुः फलदाय्यात्मगुण आत्ममनःसंयोगजः स्वकार्य[2]विरोधी[3] धर्माधर्मरूपतया भेदवानदृष्टाख्यो गुण इत्ययुक्तमुक्तम् । इदं तु युक्तं कर्तुः प्रियहितमोक्षहेतुर्धर्मः, अधर्मस्त्वप्रियप्रत्ययहेतुरिति । तन्न गुणपदार्थोऽपि श्रेयान् ।

नापि कर्मपदार्थः । स हि पञ्चप्रकारः परैः प्रतिपाद्यते उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणीत्यभिधानात् । तत्रोत्क्षेपणं यदूर्ध्वाधःप्रदेशाभ्यां संयोगविभागकारणं कर्मोत्पद्यते । यथा शरीरावयवे तत्सम्बद्धे वा मूर्त्तिमद्द्रव्ये ऊर्ध्वदिग्भाविभिराकाशदेशाद्यैः संयोगकारणमधोदिग्भागावच्छिन्नैश्च तैर्विभागकारणं तद्विपरीतसंयोगकारणं च कर्मावक्षेपणम् । ऋजुद्रव्यस्य कुटिलत्वकारणं च कर्माकुञ्चनम् । यथा ऋजुनोऽङ्गुल्यादिद्रव्यस्य येऽग्रावयवास्तेषामाकाशादिभिः स्वयं–योगिभिर्विभागे सति मूलप्रदेशैश्च संयोगे सति येन कर्मणाङ्गुल्यादिरवयवी कुटिलः संपद्यते तदाकुञ्चनम् । तद्विपर्ययेण संयोगविभागोत्पत्तौ येनावयवी ऋजुः सम्पद्यते तत्कर्म प्रसारणम् । अनियतदिग्देशैर्यत्संयोगविभागकारणं तद्गमनम् । उत्क्षेपणादिकं तु चतुःप्रकारमपि कर्म नियतदिग्देशसंयोगविभागकारणमिति । तदेतत्पञ्चप्रकारतोपवर्णनं कर्मपदार्थस्याविचारितरमणीयं देशाद्देशान्तरप्राप्तिहेतुः परिस्पन्दात्मको हि परिणामोऽर्थस्य कर्मोच्यते । उत्क्षेपणादीनां चात्रैवान्तर्भावः । अत्रान्तर्भूतानामपि कश्चिद्विशेषमादाय भेदेनाभिधाने भ्रमणस्पन्दनादीनामप्यतो भेदेनाभिधानानुषङ्गात्कथं पञ्चप्रकारतैवास्य? न चैकरूपस्यार्थस्य क्रियासमावेशो युक्तः, सर्वदाऽविशिष्टत्वात् । यत्सर्वदाऽविशिष्टं न तस्य क्रियासम्भवो यथाकाशस्य । अविशिष्टं चैकरूपं वस्त्विति । न चैकरूपत्वेप्यर्थानां गन्तृस्वभावता युक्ता निश्चलत्वाभावप्रसङ्गात् सर्वदा गन्तृत्वैकरूपत्वात् । अथाऽगन्तृत्वरूपताप्येषामङ्गीक्रियते तथा सत्याकाशवदगन्तृतैव स्यात् । एवं च गत्यवस्थायामप्यचलत्वमेषां प्रसक्तं तदपरित्यक्ताऽगतिरूपत्वान्निश्चलावस्थावत् । न चोभयरूपत्वादेषामयमदोषो गन्तृत्वागन्तृत्वविरुद्धधर्माध्यासेनैकत्वव्याघातानुषङ्गादचलोऽनिलवत् । यथा[16] चाक्षणिकैकरूपस्यार्थस्य क्रिया नोपपद्यते तथा क्षणिकैकरूपस्यापि–उत्पत्तिप्रदेश एवास्य प्रध्वंसेन प्रदेशान्तरप्राप्त्यसम्भ-

१ विद्युदादीनामपि स्थापक स्यादित्यतिप्रसङ्ग ॥ २ स्वकार्ये क्रियमाणे सति 'विरोधोऽभावो यस्य स ॥ ३ मुसलादिर्यथा ॥ ४ प्रिय सुखद ॥ ५ हित परिणामपथ्य ॥ ६ दु खकारणकारणम् ॥ ७ ऊर्ध्वाध - प्रदेशाभ्या विपरीतौ अधऊर्ध्वप्रदेशौ ॥ ८ ऊर्ध्वा ॥ ९ ऊर्ध्वाध प्रदेशयो ॥ १० गमनस्य यथाऽनियतदिग्देशै सयोगविभागकारणत्व तथोत्क्षेपणादेरनियतदिग्देशाभ्या सयोगविभागकारणत्व ततश्च कथमुत्क्षेपणादीना भेद इत्युक्ते सत्याह ॥ ११ पञ्चप्रकारात्कर्मण ॥ १२ निरशस्याऽविचलितस्य जीवादे ॥ १३ सर्वदाऽविशिष्टश्च स्यात्क्रियासमवेतश्च स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ १४ गन्तृत्वमेवागन्तृत्वमेवेत्येकान्तप्रसङ्गलक्षण ॥ १५ पर्वतवायुवत् ॥ १६ लब्धावसरो हि सौगतो ब्रूते–अर्थस्याक्षणिकैकरूपत्वे क्रिया न घटते तर्हि क्षणिकैकरूपत्वे घटिष्यत इत्याशङ्कायामाह ॥

वात् । यो ह्युत्पत्तिप्रदेश एव ध्वंसमुपगच्छति न सोन्यदेशमाक्रामति । यथा प्रदीपः । उत्पत्तिप्रदेशध्वंसमुपगच्छति च क्षणिको भाव इति । न चार्थस्य क्षणिकत्वा- देशाद्देशान्तरप्राप्तिर्भ्रान्ता क्षणिकवादस्य प्रतिषिद्धत्वात् । ततः परिणामिन्येवार्थे यथोक्तं कर्मोपपद्यते । न चेदमर्थादर्थान्तरं तथाभूतस्यास्योपलब्धिलक्षण- प्राप्तस्यानुपलम्भेनासत्त्वात् । प्रयोगः । यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तन्नास्ति यथा क्वचित्प्रदेशे घटः । नोपलभ्यते च विशिष्टार्थस्वरूपव्यतिरेकेण कर्मेति । न चोपलब्धिलक्षणप्राप्तत्वमस्याऽसिद्धं संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणीत्यभिधानात् । तन्न कर्मपदार्थोपि परेषां घटते ।

नापि सामान्यपदार्थस्तस्य पराभ्युपगतस्वभावस्य प्रागेवं प्रतिषिद्धत्वादिति ।

विशेषपदार्थोप्यनुपपन्नः । विशेषा हि नित्यद्रव्यवृत्तयः परमाण्वाकाशकालदिगात्ममनस्सु वृत्तेरत्यन्तव्यावृत्तिबुद्धिहेतवः । ते च जगद्विनाशारम्भकोटिभूतेषु परमाणुषु मुक्तात्मसु मुक्तमनस्सु चान्तेषु भवा अन्त्या इत्युच्यन्ते तेषु स्फुटतरमालक्ष्यमाणत्वात् । वृत्तिस्तेषां सर्वस्मिन्नेव परमाण्वादौ नित्ये द्रव्ये विद्यते एव । अत एव नित्यद्रव्यवृत्तयोऽन्त्या इत्युभयपदोपादानम् । व्यावृत्तिबुद्धिविषयत्वं च विशेषाणां सद्भावसाधकं प्रमाणम् । यथा ह्यस्मदादीनां गवादिष्वाकृतिगुणक्रियावयवसंयोगनिमित्तोऽश्वादिभ्यो व्यावृत्तः प्रत्ययो दृष्टस्तद्यथा । गौः शुक्लः शीघ्रगतिः पीनककुदो महाघण्ट इति यथाक्रमम् । तथास्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु चान्यनिमित्ताभावे प्रत्याधार यद्बलाद्विलक्षणोयं विलक्षणोयमिति प्रत्ययप्रवृत्तिस्ते योगिनां विशेषप्रत्ययोन्नीतसत्त्वा अन्त्या विशेषाः सिद्धाः । इत्यपि स्वाभिप्रायप्रकाशनमात्रं तेषां लक्षणासम्भवतोऽसत्त्वात् । तथा हि । यदेतेषां नित्यद्रव्य- वृत्तित्वादिकं लक्षणमभिहितं तदसम्भवदोषदुष्टत्वादलक्षणमेव । यतो न किञ्चित्सर्वथा नित्यं द्रव्यमस्ति तस्य पूर्वमेव निरस्तत्वात् । तदभावे च तद्वृत्तित्वं लक्षणमेषां दूरोत्सारितमेव । यच्चायोगिप्रभवविशेषप्रत्ययबलादेषां सत्त्वं साध्यते तदप्ययुक्तं यतोऽण्वादीनां स्वस्वभावव्यवस्थितं स्वरूपं परस्परासङ्कीर्णरूपं वा भवेत्सङ्कीर्णस्वभावं वा ? प्रथमे विकल्पे स्वत एवासङ्कीर्णाण्वादिरूपोपलम्भाद्योगिनां तेषु वैलक्षण्यप्रतिपत्तिर्भविष्यतीति व्यर्थमपरविशेषपदार्थपरिकल्पनम् ।

---

१ बौद्धमतापेक्षयोदाहरणम् ॥ २ सर्वथाऽक्षणिके क्षणिके वार्थेऽर्थक्रिया न घटते यत ॥ ३ कर्मरूपतया परिणतो विशिष्ट ॥ ४ विशेषणमसिद्धमित्युक्ते सत्याह ॥ ५ सामान्यनिराकरणसमये ॥ ६ घटपटादयोऽनित्यद्रव्यवृत्तयोऽत्यन्तव्यावृत्तिहेतवो विशेषा । विशेषा इति बहुवचनेनानन्त्यं विवक्षितम् ॥ ७ सामान्यरहितनित्यद्रव्यवृत्तयोऽन्त्या विशेषा ॥ ८ असादय सर्वथा व्यावृत्त इत्यादिरूपेण ॥ ९ अन्तेऽवसाने भवन्ति सन्तीति यावत् । येभ्योऽपरे विशेषा न सन्तीत्यर्थ । सामान्यरूपेभ्यो विशेषेभ्योऽपरे गुणादयो विशेषा सन्ति । एभ्यस्तु नापरे किन्त्वेष्वेव वैशिष्ट्य समाप्यते ॥ १० खण्डमुण्डादिरूपेषु विशेषेषु ॥ ११ आकृति = जाति ॥ १२ गुण.=श्वेतादि ॥ १३ क्रिया गच्छत्यादि. ॥ १४ अवयव. ककुदादि ॥ १५ घण्टादिभि. ॥ १६ उन्नीत=ज्ञातम् ॥ १७ द्रव्यपरीक्षाप्रघट्टके ॥

द्वितीये विशेषाख्यपदार्थान्तरसन्निधानेपि परस्परातिमिश्रितेषु परमाण्वादिषु तद्बलाद्व्यावृत्तप्रत्ययो योगिनां प्रवर्त्तमानः कथमभ्रान्तः स्वरूपतोऽव्यावृत्तरूपेष्वण्वादिषु व्यावृत्ताकारतया प्रवर्त्तमानस्यास्याऽतस्मिंस्[1]तद्[2]ग्रहणरूपतया भ्रान्तत्वानतिक्रमात् । तथा चैतत्[3]प्रत्यययोगिनस्तेऽयोगिन एव स्युः । यदि च विशेषाख्यपदार्थान्तरव्यतिरेकेण विलक्षणप्रत्ययोत्पत्तिर्न स्यात्कथं तर्हि विशेषेषु तस्योत्पत्तिस्तत्रापरविशेषाभावात् ? भावे वानवस्था नित्यद्रव्यवृत्तय इत्यभ्युपगमक्षतिश्च स्यात्[4] । अथ स्वत एवात्रान्योन्यवैलक्षण्यप्रतिपत्तिस्तर्हि परमाण्वादीनामप्यत एव तत्प्रत्ययप्रवृत्तिर्भविष्यतीति कृतं विशेषाख्यपदार्थपरिकल्पनया । अथ विशेषेष्वपरविशेषयोगाद्व्यावृत्तबुद्धिपरिकल्पनायामनवस्थादि[5]बाधकोपपत्तेरुपचारात्तेषु[6] तद्[7]बुद्धिः[8] । ननु कोयं तद्बुद्धेरुपचारो नाम? असतो[9] वस्तुस्वभावस्य विषयत्वेनाक्षेपश्चेत्कथं नास्या मिथ्यात्वं तद्योगिनां चायोगित्वम् ? किञ्चासौ[10] वस्तुस्वभावो विषयत्वेनाक्षिप्यमाणः संशयत्वेनाक्षिप्यते विपर्यस्तत्वेन वा?तत्राद्ये पक्षे व्यावृत्तरूपतया चलितप्रतिपत्तिविषयाणां विशेषाणां यथावत्प्रतिपत्त्यसम्भवात्तद्योगिनोऽयोगित्वमेव । द्वितीयेप्येतदेव दूषणं विशेषरूपविकलानपि तान् विशेषरूपतया प्रतिपद्यमानस्याऽयोगित्वप्रसङ्गाविशेषात् । यदि च बाधकोपपत्ते[13]र्विशेषेषु व्यावृत्तबुद्धिर्नापरविशेषनिबन्धना तर्हि परमाण्वादिष्वसौ तन्निबन्धना नाभ्युपगन्तव्या तदविशेषात् । परमाण्वादौ हि विशेषेभ्योऽन्योन्यं व्यावृत्तबुद्ध्युत्पत्तौ सकलविशेषेभ्य[14]ः परमाणूनां व्यावृत्तबुद्धिर्विशेषान्तरात्स्यादित्यनवस्था[15] । स्वतस्तेषां ततो व्यावृत्तबुद्धिहेतुत्वेऽन्योन्यमपि तद्धेतुत्वं स्वत एव स्यादिति व्यर्थमर्थान्तरविशेषपरिकल्पनम् । ननु यथाऽमेध्यादीनां स्वत एवाशुचित्वमन्येषां तु भावानां तद्योगात्तत्तथेहापि तत्स्वभावत्वाद्विशेषेषु स्वत एव व्यावृत्तप्रत्ययहेतुत्वं परमाण्वादिषु तु तद्योगात् । किञ्चातदात्मकेष्वप्य[16]न्यनिमित्तः[17] प्रत्ययो भवत्येव । यथा प्रदीपात्[18]पटादिषु[19], न पुनः पटादिभ्यः प्रदीपे । एवं विशेषेभ्य[20] एवाण्वादौ विशिष्टः प्रत्ययो नाण्वादिभ्यस्तत्र । इत्यप्यसमीचीनं यतोऽमेध्याद्यशुचिद्रव्यसंसर्गान्मोदकादयो भावा प्रच्युतप्राक्तनशुचिस्वभावा अन्ये एवाऽशुचिरूपतयोत्पद्यन्ते इति युक्तमेषामन्यसंसर्गादशुचित्वम् । न चाण्वादिष्वेतत्[22]सम्भवति तेषां नित्यत्वादेव प्राक्तनाविविक्तरूपपरित्यागेनापरविविक्तरूपतयानुपपत्तेः । प्रदीपदृष्टान्तोप्यत[23] एवासङ्गतः पटादीनां प्रदीपादिपदार्थान्तरोपाधिकस्य रूपान्तरस्यो[24]-

१ सङ्कीर्णस्वरूपे ॥ २ तस्यासङ्कीर्णस्य ॥ ३ भ्रान्तप्रत्ययसम्बन्धिन इत्यर्थ ॥ ४ विशेषेषु विशेषाणा प्रवृत्ते ॥ ५ आदिना नित्यद्रव्यवृत्तय इत्यभ्युपगमक्षतिश्चेति ॥ ६ विशेषेषु ॥ ७ तस्य=व्यावृत्तस्य ॥ ८ अपरविशेषा उपचारभूतास्तत्सयोगात्तेषु जातोपि प्रत्यय उपचाररूप इत्यर्थ ॥ ९ असतो वैलक्षण्यस्य ॥ १० अन्योन्यव्यावृत्तरूपस्य ॥ ११ वैलक्षण्यरूप ॥ १२ उपचाररूप ॥ १३ अनवस्थादिरूपो बाधक ॥ १४ परमाण्वादिभ्य सर्वथा भिन्नेभ्य ॥ १५ विशेषान्तराणामप्यन्येभ्य इत्यादिप्रकारेण ॥ १६ अव्यावृत्तेषु अणुषु मुक्तमनस्सु च ॥ १७ अन्यो=विशेष ॥ १८ अन्यनिमित्तात् ॥ १९ इमे पटादय इति प्रत्यय ॥ २० सर्वथा भिन्नेभ्य ॥ २१ परमते ॥ २२ विशेषेभ्यो व्यावृत्तस्वरूपत्वेनोत्पत्तिमत्त्वम् ॥ २३ परमाण्वादीना नित्यत्वादेव ॥ २४ प्रकाशलक्षणस्य ॥

त्पत्तेः प्रकृते च तदसम्भवात् । अनुमानबाधितश्च विशेषसद्भावाभ्युपगमः । तथा हि । विवादाधिकरणेषु भावेषु विलक्षणप्रत्ययस्तद्व्यतिरिक्तविशेषनिबन्धनो न भवति व्यावृत्तप्रत्ययत्वाद्विशेषेषु व्यावृत्तप्रत्ययवदिति । तत्र विशेषपदार्थोपि श्रेयान्साधकाभावाद्बाधकोपपत्तेश्च ।

नापि समवायपदार्थोऽनवद्यतल्लक्षणाभावात्[1] । ननु चायुतसिद्धानामाधार्याधारभूतानामिहेदम्प्रत्ययहेतुर्यः[2] सम्बन्धः[3] स समवाय इत्यनवद्यतल्लक्षणसद्भावात्तदभावोऽसिद्धः । न[4] चान्तरालाभावेन[5]ेह ग्रामे वृक्षा इतीहेदम्प्रत्ययहेतुना व्यभिचारः—संबन्धग्रहणात् । न चासौ सम्बन्धोऽभावरूपत्वात् । नापीहाकाशे शकुनिरितिप्रत्ययहेतुना[6] संयोगेनाधाराधेयभूतानामित्युक्तेः । न ह्याकाशस्य व्यापित्वेनाधस्तादेव भावोस्ति शकुनेरुपर्यपि भावात् । नापीह कुण्डे दधीतिप्रत्ययहेतुनाऽयुत[7]सिद्धानामित्यभिधानात् । न खलु तन्तुपटादिवद्दधिकुण्डादयोऽयुतसिद्धास्तेषां युतसिद्धेः सद्भावात् । युतसिद्धिश्च पृथगाश्रयवृत्तित्वं पृथग्गतिमत्त्वं चोच्यते । न चासौ तन्तुपटादिष्वप्यस्ति तन्तून्विहाय पटस्यान्यत्रावृत्तेः । तथा[8]पीहाकाशे वाच्ये वाचक आकाशशब्द इति वाच्यवाचकभावेनेहात्मनि ज्ञानमिति विषयविषयि[9]भावेन वा व्यभिचारोऽत्रा[10]युतसिद्धेराधाराधेयभावस्य[11] च भावादित्य[12]प्यसाम्प्रतमुभयत्रा[13]वधारणा[14]ऽऽश्रयणात्[15] । एतयोश्च युतसिद्धेष्वप्यनाधाराधेयभूतेष्वपि च भावाद्घटत[16]च्छब्द[17]ज्ञानवत् । नन्वेव[18]मयुतसिद्धानामेवेत्यवधारणेप्यव्यभिचारादाधाराधेयभूतानामिति वचनमनर्थकमाधाराधेयभूतानामेवेत्यवधारणेऽयुतसिद्धानामितिवचनवत् । ताभ्यामव्यभिचारादित्यप्यसारमेकद्रव्यसमवायिनां रूपरसादीनामयुतसिद्धानामेव परस्परं समवायाभावात् । एकार्थ[19]समवायसम्बन्धव्यभिचारनिवृत्त्यर्थमुत्तरावधारणम्[20] । न ह्ययं[21] वाच्यवाचकभावादिवद्युतसिद्धानामपि सम्भवति । तथोत्तरावधारणे सत्यप्याधाराधेयभावेन संयोगविशेषेण[22] सर्वदाऽनाधाराधेयभूतानामसम्भवताव्यभिचारो मा भूदित्येवमर्थं पूर्वा[23]वधारणम् । इति भेदक[24]लक्षणस्याशेषदोषरहितत्वादिद[25]मुच्यते । तन्तुपटादयः सामान्यतद्व[26]दादयो वा संयुक्ता न भवन्तीति व्यवहर्तव्यं नियमेनायुतसिद्धत्वादाधाराधेयभूतत्वाच्च । ये तु संयुक्ता न ते तथा । यथा कुण्डबदरादयः । तथा चैते । तस्मात्सं-

१ ग्राहकप्रमाणाभावाच्च ॥ २ गुणगुण्यादीनाम् ॥ ३ आकाशपरमाण्वादीना युतसिद्धत्वव्यवस्थापनार्थमिदं लक्षणम् ॥ ४ य इहेदम्प्रत्ययहेतु स समवाय इत्युच्यमाने ॥ ५ कारणभूतेन ॥ ६ कारणभूतेन ॥ ७ अयुत = अपृथक् ॥ ८ वस । मल्ल्योर्यथा ॥ ९ मेष्योर्यथा वा ॥ १० अयुतसिद्धानामाधार्याधारभूतानामित्युभयपदोपादानेपि ॥ ११ सम्बन्धेन ॥ १२ आकाशतद्वाचकशब्दयोरात्मज्ञानयोश्च ॥ १३ आधार्याधारभूतानामयुतसिद्धाना समवाय एवेति न नियम इति भाव ॥ १४ अयुतसिद्धानामाधार्याधारभूतानामित्यत्र ॥ १५ अवधारणम्=एवकार । अयुतसिद्धानामेवाधार्याधारभूतानामेव समवाय इति ॥ १६ शब्दश्च ज्ञान च शब्दज्ञाने । तस्य घटस्य शब्दज्ञाने तच्छब्दज्ञाने । घटश्च तच्छब्दज्ञाने चेति द्वन्द्व ॥ १७ भूम्याकाशौ घटतच्छब्दाधारौ तौ तत्र सिद्धो । घटतज्ज्ञाने आत्मभूम्याधारे ते तत्र सिद्धे इति ॥ १८ आधाराधेयभूतानामितिवचनस मर्थनार्थमिदम् । आधाराधेयभावस्य रूपरसादावभावात् ॥ १९ रूपरसादय एकार्था ॥ २० आधार्याधारभूतानामेवेति ॥ २१ प्रथमावधारणेनैव तद्व्यभिचारनिवृत्ति कुतो न भवतीत्याशङ्क्याह ॥ २२ अस्मिन्पर्वते वृक्षा इति ॥ २३ अयुतसिद्धानामेवेति ॥ २४ अनेन प्रकारेणाशेषदोषरहितत्वमयुतसिद्धेत्यादिभेदकलक्षणस्य । इतरेभ्यो द्रव्यादिभ्य समवायस्य भेदकत्वाल्लक्षण भेदकमयुतसिद्धेत्यादि ॥ २५ अग्रेतन प्रसक्तप्रतिषेधार्थमनुमानम् । संयोगाना प्रतिषेधात्समवायस्य सिद्धिर्यतो भवति तत परिशेषानुमानमित्यर्थ ॥ २६ आदिपदेन गुणगुणिन क्रियातद्वन्तश्च ॥

योगिनो न भवन्तीति । यद्वा तन्तुपटादिसम्बन्धः संयोगो न भवति नियमेनायुतसिद्धसम्बन्धत्वाद् ज्ञानात्मनोर्विषयविषयिभाववदिति । ननु समवायस्य प्रमाणतः प्रतीतौ संयोगाद्वैलक्षण्यसाधनं युक्तम् । न चासौ तस्यास्तीत्यप्यसत्प्रत्यक्षत[1] एवास्य प्रतीतेः । तथा हि । तन्तुसम्बद्ध एव पटः प्रतिभासते तद्रूपादयश्च पटादिसम्बद्धाः[2] । सम्बन्धाभावे सह्यविन्ध्यवद्विश्लेषप्रतिभासः स्यात् । अनुमानाच्चासौ प्रतीयते । तथा हि । इह तन्तुषु पट इत्यादीहप्रत्ययः सम्बन्धकार्यो- ऽबाध्यमानेहप्रत्ययत्वादिह[3] कुण्डे दधीत्यादिप्रत्ययवत् । न तावदयं प्रत्ययो निर्हेतुकः कादाचित्कत्वात् । नापि तन्तुहेतुकः पटहेतुको वा तत्र[4] तन्तवः पट इति वा प्रत्ययप्रसङ्गात् । नापि[5] वासनाहेतुकस्तस्याः कारणरहितायाः सम्भवाभावात् । पूर्वज्ञानस्य[6] तत्कारणत्वे तदपि कुतः स्यात्? तत्पूर्ववासनातश्चेदन- वस्था । ज्ञानवासनयोरनादित्वादयमदोषश्चेन्नैवं नीलादिसन्तानान्तरस्वसन्तानसंविदद्वैतादिसिद्धेरप्यभावानुषङ्गात्[7] । अनादिवासनावशादेव[8] नीलादिप्रत्ययस्य[11] स्वतो-[12] ऽवभासस्य[13] च सम्भवात् । नापि[9] तादात्म्यहेतुकोयम् । तादात्म्यं ह्येकत्वम् । तत्र च सम्बन्धाभाव एव स्यात्—द्विष्टत्वात्तस्य । न च तन्तुपटयोरेकत्वं प्रतिभासभेदाद्वि- रुद्धधर्माध्यासात् परिमाणसंख्याजातिभेदाच्च घटपटवत् । नापि संयोगहेतुको युतसिद्धेष्वेवार्थेषु संयोगस्य सम्भवात् । न चात्र समवायपूर्वकत्वं साध्यते येन दृष्टान्तः साध्यविकलो हेतुश्च विरुद्धः[16] स्यात् । नापि संयोगपूर्वकत्वं येनाभ्युपगमविरोधः स्यात् । किं तर्हि? सम्बन्धमात्रपूर्वकत्वम् । तस्मिंश्च सिद्धे परिशेषा- त्समवाय एव तज्जनको भविष्यति । तच्चेदं विवादास्पदमिदमिहेति ज्ञानं न समवायपूर्वकमबाधितेहज्ञानत्वादिह[17] कुण्डे दधीतिज्ञानवत् । इति विशेषविरुद्धानुमानं[18] तत्सकलानुमानोच्छेदकत्वादनुमानवादिना[20] न प्रयोक्तव्यम्[19] । यच्चोच्यते[21]—इदमिहेति ज्ञानं न समवायालम्बनं तत्सत्यं विशिष्टाधारविषयत्वात्[22] । न हीह तन्तुषु पट इत्यादीहप्रत्ययः केवलं समवायमालम्बते समवायविशिष्टतन्तुपटालम्बनत्वात् । वैशिष्ट्यं चानयोः सम्बन्ध इति । न चास्य संयोगवन्नानात्वमिहेति प्रत्ययाविशेषाद्विशे- षलिङ्गाभावाच्च सत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्च सत्तावत्[23] । न च सम्बन्धत्वमेव विशेषलिङ्गमस्यान्यथासिद्धत्वात्[24] । न हि संयोगस्य सम्बन्धत्वेन नानात्वं साध्यतेऽपि

---

१ प्रत्यक्षत ॥ २ पटतद्रूपादीनाम् ॥ ३ इहात्मनि रूपादय इत्यादीहप्रत्ययेन वाध्यमानेन व्यभिचारपरिहारार्थमिदम् ॥ ४ तन्त्वादौ ॥ ५ सौगत प्रत्याह ॥ ६ विकल्पज्ञानाद्वामना वासनातो विकल्पज्ञानमिति वीजाङ्कुरवत् ॥ ७ सन्तानान्तर च स्वसन्तानश्च तौ नीलादीना ग्राहको नीलसन्तानान्तरस्वसन्तानौ च स्वसंविदद्वैतादिश्च ज्ञानाद्वैतादिश्चेत्यर्थ । तेपा सिद्धिरिति वाक्यम् ॥ ८ नीलादे समुत्पद्यमानो नील नीलमिति प्रत्यय सन्नेव समुत्पद्यते विद्यमानान्नीलादे समुत्पद्यमानत्वान्न तु कल्पनाशिल्पिकल्पितवासनात समुत्पद्यमान सन्समुत्पद्यते कल्पितवासनात समुत्पत्ते ॥ ९ ततोनादिवासनाहेतुकत्वमस्य प्रत्ययस्य नेत्यर्थं ॥ १० कुत ॥ ११ न तु नीलादे ॥ १२ आदिना सन्तानसंग्रह ॥ १३ अन्यतोवभासमाने द्वैतप्रसक्तिस्तन्निरासार्थ 'स्वतो' विशेषणम् ॥ १४ संविदद्वैतस्य ॥ १५ जैनमतमाशङ्क्याह ॥ १६ सम्बन्धमात्रे साध्ये सम्बन्धविशेषसाधनात् ॥ १७ किन्तु संयोगपूर्वकम् ॥ १८ विशेषणसमवायपूर्वकत्वेन विरुद्धमसमवायपूर्वकत्व तस्यानुमानम् । विशेषविरुद्धानुमाने इदमुदाहरण पर्वत पर्वतस्थेनाग्निनाग्निमान भवति धूमवत्त्वान्महानसवदिति ॥ १९ पर्वतोग्निमान्धूमवत्त्वादित्यादे सम्यगनुमानस्य यदुच्छेदकानुमान तस्य वक्तुमशक्यत्वादिति भाव ॥ २० जैनादिना ॥ २१ जैनादिना ॥ २२ तस्य ज्ञानस्य ॥ २३ सत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्च सत्ताया नानात्व नास्ति यथा ॥ २४ समवायो नाना सम्बन्धत्वात्संयोगवदिति ॥

तु प्रत्यक्षेण भिन्नाश्रयसमवेतस्य[1] क्रमेणोत्पादोपलब्धेः । समवायस्य चानेकत्वे सत्यनुगतप्रत्ययोत्पत्तिर्न[2] स्यात् । संयोगे तु संयोगत्वबलान्नानात्वेपि स्यात् । न[3] चैतत्समवाये सम्भवति समवायत्वस्य[4] समवाये समवायाभावात्[5] । अन्यथानवस्था स्यात् । संयोगस्य[6] गुणत्वेन द्रव्यवृत्तित्वात् । संयोगत्वं[7] पुनः संयोगे समवेतमिति[8] । न चैकत्वे समवायस्य द्रव्यत्ववद्गुणत्वस्याप्यभिव्यञ्जकं[9] द्रव्यं कुतो न भवतीति[10] वाच्यमाधारशक्तेर्नियामकत्वात्[11][12] । द्रव्याणां[13] हि द्रव्यत्वाधार[14]-शक्तिरेव गुणादेस्तु गुणत्वाद्याधारशक्तिरिति[15]। न चानुगतप्रत्ययजनकत्वेन[16] सामान्यादस्याऽभेदो भिन्नलक्षणयोगित्वात्[17] । यद्वा समवायीनि द्रव्याणीत्यादिप्रत्ययो विशेषणपूर्वको विशेष्यप्रत्ययत्वाद्दण्डीत्यादिप्रत्ययवदित्यतः[18] समवायसिद्धिः । न चान्येषामत्रानुरागः[19][20][21] सम्भवति। किन्तर्हि? समवायस्यैव । अतः स एव विशेषणम् । अप्रतिपन्नसमयस्य समवायीतिप्रतिभासाभावादस्याऽविशेषणत्वं दण्डादावपि समानं तस्य[22] दण्डाद्युल्लेखेन दण्डीत्यादिप्रत्ययानुत्पत्तेः । दण्डादेरभिधानयोजनाभावेऽप्यनेन वस्तुना तद्वानयमित्यनुरागप्रतीतिः संसृष्टा एते तन्तुपटादय इति सम्बन्धमात्रेपि[23] तुल्या । केवलं सङ्केताभावादयं समवाय इति व्यपदेशाभावः । प्रतिपन्नसमयस्तु दण्डादेरिव समवायस्यापि विशेषणतामभिधानयोजनाद्वारेण प्रतिपद्यते । यच्चान्यत्समवाये बाधकमुच्यते[24]—नानिष्पन्नयोः[25] समवायः सम्बन्धिनोरनुत्पादे सम्बन्धाभावात् । निष्पन्नयोश्च संयोग एव । असम्बन्धे[26] चास्य समवायिनोः समवाय इति व्यपदेशानुपपत्तिः । सम्बन्धे[27] वा न स्वतोसौ संयोगादीनामपि तथा तत्प्रसङ्गात् । परतश्चेदनवस्था । न च गुणादीनामाधेयत्वं निष्क्रियत्वात् । गतिप्रतिबन्धकश्चाधारो जलादेर्घटादिवत् । तथा न स्वरूपसंश्लेषः[28] समवायो यतस्तस्मिन्सत्येकत्वमेव न सम्बन्धः । नापि पारतन्त्र्यमनिष्पन्नयोराधारस्यैवासत्त्वात् । स्वतन्त्रेण निष्पन्नयोश्च न पारतन्त्र्यम् । इत्यप्यसमीचीन यतो न निष्पन्नयोरनिष्पन्नयोर्वा समवायः स्वकारणसत्तासम्बन्धस्यैव निष्पत्तिरूपत्वात् । न हि निष्पत्तिरन्या समवायश्चान्यो येन पौर्वापर्यम् । एतेन[29] रूपसंश्लेषः पारतन्त्र्यं वेत्याद्य-

---

१ सयोगस्य ॥ २ अय समवायोऽय समवाय इति ॥ ३ ननु समवायेपि समवायत्वबलान्नानात्वेप्यनुगतप्रत्ययोत्पत्ति स्यादिति शङ्कायामाह ॥ ४ सामान्यस्य ॥ ५ समवायत्वस्य समवाये सद्भावेऽपर समवाय समायातस्तत्रापि समवायत्वसमवायेऽपर समवाय समायात इति ॥ ६ तर्हि सयोगस्याप्यपरसयोगपूर्वकत्वेनानवस्था कुतो न स्यादित्याह ॥ ७ कथ तर्हि सयोगत्वमित्याह ॥ ८ सयोगान्तरापेक्षा नास्तीति भाव ॥ ९ येन समवायेन द्रव्ये द्रव्यत्व समवेत तेनैव समवायेन गुणे गुणत्वमपि समवेत समवायस्यैकत्वात् । ततश्चात्मनि समवेतस्य द्रव्यत्वस्य द्रव्य यथाभिव्यञ्जक भवति तथा गुणत्वस्याप्यभिव्यञ्जक कुतो न भवति एकसमवायसमवेतत्वाविशेषादिति भाव ॥ १० जैनादिना ॥ ॥ ११ द्रव्यस्वरूपाया ॥ १२ द्रव्यस्य ॥ १३ घटादीनाम् ॥ १४ द्रव्यत्वमेव स्वरूपशक्तिरिति भाव । निजा हि शक्ति पृथिव्यादीना पृथिवीत्वादिकमेव ॥ १५ गुणत्वादिकमेव स्वरूप शक्ति ॥ १६ स्वाभिधेयस्यैवाभिव्यञ्जक नान्ययेति भाव ॥ १७ अवाधितानुगतप्रत्ययहेतु सामान्यमिति लक्षण सामान्यस्य । समवायस्य त्वयुतसिद्धेत्यादि ॥ १८ दण्डलक्षणविशेषणपूर्वकत्वमत्र ॥ १९ तादात्म्यसयोगादीनाम् ॥ २० समवायीनि द्रव्याणीति वचने ॥ २१ विशेषणत्वम् ॥ २२ अप्रतिपन्नदण्डस्य ॥ २३ समवायस्याभिधानयोजनाभावेपि सस्रष्टा एते तन्तुपटादय इति सम्बन्धमात्रेपि अनुरागप्रतीति ॥ २४ जैनादिना ॥ २५ असौ समवाय सम्बन्धिनोरनिष्पन्नयो स्वान्निष्पन्नयोर्वेति विकल्पद्वय हृदि निधाय दूषयति ॥ २६ किंवासौ समवाय समवायिभ्यामसम्बद्ध सम्बद्धो वेति विकल्पद्वय विधाय 'प्रथमविकल्पे दूषणमाह ॥ २७ सम्बद्धश्चेत्स्वत परतो वेति विकल्पद्वयमत्रापि योज्यम् ॥ २८ स्वरूपयो स्वभावयो सश्लेष सम्बन्ध ॥ २९ स्वकारणसत्तासम्बन्धस्यैव निष्पत्तिरूपत्वादित्यनेन ग्रन्थेन ॥

पास्तम्। नापि समवायस्य सम्बन्धान्तरे सम्बन्धो युक्तो येनानवस्था स्यात् सम्बन्धस्य समानलक्षणसम्बन्धेन[1] सम्बन्धस्यान्यत्रादृष्टेः[2] संयोगवत्[3]। अग्नेरुष्णतावत्तु स्वत एवास्य सम्बन्धो युक्तः स्वत एव सम्बन्धरूपत्वात्; न संयोगादीनां—तदभावात्। न ह्येकस्य स्वभावोऽन्यस्याप्यन्यथा स्वतोऽग्नेरुष्णत्वदर्शनाज्जलादीनामपि तत्स्यात्। यच्चोक्तं निष्क्रियत्वात्तेषां[6] नाधेयत्वमिति तदप्यसत्संयोगिद्रव्यविलक्षणत्वाद्गुणादीनां संयोगिनां सक्रियत्वेनैव तेषां निष्क्रियत्वेप्याधाराधेयभावस्य प्रत्यक्षेण प्रतीतेश्चेति[9]।

अत्र प्रतिविधीयते। यत्तावदुक्तमयुतसिद्धेत्यादि तत्रेदमयुतसिद्धत्वं शास्त्रीयं लौकिकं वा? तत्राद्यः पक्षोऽयुक्तस्तन्तुपटादीनां शास्त्रीयायुतसिद्धत्वस्यासम्भवात्। वैशेषिकशास्त्रे हि प्रसिद्धमपृथगाश्रयवृत्तित्वमयुतसिद्धत्वम्। तच्चेह नास्त्येव तन्तूनां स्वावयवांशुषु वृत्तेः, पटस्य च तन्तुषु। इति पृथगाश्रयवृत्तित्वसिद्धेरपृथगाश्रयवृत्तित्वमसदेव। एवं गुणकर्मसामान्यानामप्यपृथगाश्रयवृत्तित्वाभावः प्रतिपत्तव्यः। लोकप्रसिद्धैकभाजनवृत्तिरूपं त्वयुतसिद्धत्वं दुग्धाम्भसोर्युतसिद्धयोरप्यस्तीति[10]। ननु यथा कुण्डदध्यवयवाख्यौ[11] पृथग्भूतावाश्रयौ तयोश्च[12] कुण्डस्य दध्नश्च वृत्तिर्न तथात्र[13] चत्वारोऽर्थाः प्रतीयन्ते[14], द्वावाश्रयौ पृथग्भूतौ द्वौ चाश्रयिणौ[16] तन्तोरेव स्वावयवापेक्षयाश्रयित्वात् पटापेक्षया चाश्रयत्वात्त्रयाणामेवार्थानां प्रसिद्धेः[17]। पृथगाश्रयाश्रयित्वं[18] युतसिद्धिरित्यस्य युतसिद्धिलक्षणस्याभावादयुतसिद्धत्वं तेषामिति चेत्कथमेवमाकाशादीनां युतसिद्धिः स्यात्? तेषामन्याश्रयविवेकतः[21] पृथगाश्रयाश्रयित्वाभावात्। नित्यानां[22] च पृथग्गतिमत्त्वमित्यपि[23] तत्रासम्भाव्यम्। न खलु विभुद्रव्यपरमाणुवद्विभुद्रव्याणामन्यतरपृथग्गतिमत्त्वं परमाणुद्वयवदुभयपृथग्गतिमत्त्वं वा सम्भवत्यविभुत्वप्रसङ्गात्। तथैकद्रव्याश्रयिणा[26] गुणकर्मसामान्यानां परस्परं पृथगाश्रयवृत्तेरभावादयुतसिद्धिप्रसङ्गतोऽन्योन्यं समवायः स्यात्। स च नेष्टस्तेषामाश्रयाश्रयिसमवायभावात्। इतरेतराश्रयभावासिद्धौ हि पृथगाश्रयसमवायित्वलक्षणा युतसिद्धिस्तत्सिद्धौ च तन्निषेधेन समवायसिद्धिरिति। ननु लक्षणं विद्यमानस्यार्थस्यान्यतो भेदेनावस्थापकं न तु सद्भावकारकम्। तेनायमदोषश्चेन्ननु ज्ञापकपक्षे सुतरामितरेतराश्रयत्वम्। तथा हि। नाऽज्ञातया युतसिद्ध्या समवायो ज्ञातुं शक्यतेऽनधि-

1 समवायिना सह ॥ २ अपरसमवायेन ॥ ३ सयोगिनो सयोगस्य च समवायेन सम्बन्धसद्भावात् ॥ ४ कथ तर्ह्यस्य सम्बन्ध इत्याशङ्कायामाह ॥ ५ सयोगस्य ॥ ६ गुणादीनाम् ॥ ७ द्रव्याणाम् ॥ ८ सयोगिना सक्रियत्वादेव तेषामाधेयत्वमिति भाव ॥ ९ गुणादीना गुणवदादिषु वृत्तिरेषा च स्वावयवेष्वाश्रयभूतेषु वृत्तिरिति भाव ॥ ॥ १० अतिव्याप्तिदूषणमिदम् ॥ ११ कुण्ड च दधि च तथोक्ते तयोरवयवौ ॥ १२ अधिकरणभूतयो ॥ १३ तन्तुपटादिषु ॥ १४ ते के चत्वारोऽर्था इत्युक्ते सत्याह ॥ १५ कुण्डदध्यवयवौ ॥ १६ आश्रयौ दधिकुण्डावयवलक्षणौ विद्येते ययोर्दधिकुण्डयोस्तावाश्रयिणौ ॥ १७ समवाये ॥ १८ ततश्च ॥ १९ ततश्च तेषा समवायसिद्धिरिति भाव ॥ २० आदिना आत्मकालदिशा च ॥ २१ विवेक =अभाव । व्यापकत्वात्तेषामेकाश्रयवृत्ते ॥ २२ पृथगाश्रयाश्रयित्व युतसिद्धिलक्षण नित्येषु यद्यपि नास्ति तथापि पृथग्गतिमत्त्व भविष्यतीत्याह ॥ २३ लक्षणम् ॥ २४ मध्ये ॥ २५ एकद्रव्य=विभु आत्माकाशादि ॥ २६ वस ॥

गतश्चासौ न युतसिद्धिमवस्थापयितुमुत्सहते इति। न चातो लक्षणात्समवायः सिद्ध्यति व्यभिचारात्। तथा हि। नियमेनायुतसिद्धसम्बन्धत्वमाधाराधेयभूतसम्बन्धत्वं चाकाशे वाच्ये वाचकस्तच्छब्द इति वाच्यवाचकभावे आत्मनि विषयभूतेऽहमिति ज्ञानं विषयीति विषयविषयिभावे च विद्यते इति। ननु सर्वस्य वाच्यवाचकवर्गस्य विषयविषयिवर्गस्य च नियमेनायुतसिद्धसम्बन्धत्वासम्भवो युतसिद्धेष्वप्यस्य सम्भवाद्घटतच्छब्दज्ञानवत्। अतो न व्यभिचार इत्यप्यसारं वर्गापेक्षयापि लक्षणस्य विपक्षैकदेशवृत्तेर्व्यभिचारित्वात्। इष्टं च विपक्षैकदेशादव्यावृत्तस्य सर्वैरप्यनैकान्तिकत्वम्। यच्चोक्तं तन्तुपटादयः संयोगिनो न भवन्तीत्यादि तत्सत्यं तत्र तादात्म्योपगमात्। यत्तूक्तं प्रत्यक्षत एव समवायः प्रतीयत इत्यादि तदयुक्तम्। असाधारणस्वरूपत्वे हि सिद्धे सिध्येदथानां प्रत्यक्षता पृथुबुध्नोदराद्याकारघटादिवत्। न चास्य तत्सिद्धम्। तद्धि किमयुतसिद्धसम्बन्धत्वं सम्बन्धमात्रं वा? न तावदयुतसिद्धसम्बन्धत्वं सर्वैरप्रतीयमानत्वात्। यत्पुनर्यस्य स्वरूपं तत्तेनैव स्वरूपेण सर्वस्यापि प्रतिभासते। यथा पृथुबुध्नोदराद्याकारतया घट इति। न चैकस्य सामान्यात्मकं स्वरूपं युक्तं समानानामभावे सामान्याभावाद्गगने गगनत्ववत्। नापि सम्बन्धमात्रं समवायस्यासाधारणं स्वरूपं संयोगादावपि सम्भवात्। किञ्च तद्रूपतयासौ सम्बन्धबुद्धौ प्रतिभासेतेहेति प्रत्यये वा समवाय इत्यनुभवे वा? यदि सम्बन्धबुद्धौ, कोयं सम्बन्धो नाम? किं सम्बन्धत्वजातियुक्तः सम्बन्धोऽनेकोपादानजनितो वानेकाश्रितो वा सम्बन्धबुद्ध्युत्पादको वा सम्बन्धबुद्धिविषयो वा? न तावत्सम्बन्धत्वजातियुक्तः समवायस्यासम्बन्धत्वप्रसङ्गात्। द्रव्यादित्रयान्यतमरूपत्वाभावेन समवायान्तरासत्त्वेन चात्र सम्बन्धत्वजातेरप्रवर्त्तनात्। अथ संयोगवदनेकोपादानजनितस्तर्हि घटादेरपि सम्बन्धत्वप्रसङ्गः। नाप्यनेकाश्रितो घटत्वादेः सम्बन्धत्वानुषङ्गात्। नापि सम्बन्धबुद्ध्युत्पादको लोचनादेरपि तत्त्वप्रसक्तेः। नापि सम्बन्धबुद्धिविषयः सम्बन्धसम्बन्धिनोरेकज्ञानविषयत्वे सम्बन्धिनोपि तद्रूपतानुषङ्गात्। न च प्रतिविषयं ज्ञानभेदो मेचकज्ञानाभावप्रसङ्गात्। अथेहबुद्धौ समवायः प्रतिभासते, न–इहबुद्धेरधिकरणाध्यवसायरूपत्वात्। न चान्यस्मिन्नाकारे प्रतीयमानेऽन्याकारोर्थः कल्पयितुं युक्तोतिप्रसङ्गात्। अथ समवायबुद्ध्यासौ प्रतीयते तन्न समवायबुद्धेरसम्भवात्। न ह्येते तन्तवोयं पटोयं च समवाय इत्यन्योन्यविविक्तं त्रितयं वहिर्ग्राह्या-

---

१ विपक्षे ॥ २ शब्दश्च ज्ञानं च शब्दज्ञाने। तस्य घटस्य शब्दज्ञाने तच्छब्दज्ञाने इति द्वन्द्व ॥ ३ वाच्यवाचकभावविषयविषयिभावसमूहे विपक्षे नास्ति तथापि तस्यैकदेशवृत्तित्वादनैकान्तिक ॥ ४ असाधारणस्वरूपम् ॥ ५ समवायस्य ॥ ६ समवायेन सह समानाना वस्तूनाम् ॥ ७ तस्येकत्वात्सामान्यस्यानेकवृत्तित्वात् ॥ ८ अयं सम्बन्ध इति ज्ञाने ॥ ९ समवायस्य ॥ १० सम्बन्धत्वजातेर्वृत्त्यर्थं समवाये ॥ ११ समवायान्तरागमस्य च समवायस्यैकत्वादवगन्तव्यम् ॥ १२ अनेकोपादानजनितत्वाविशेषात् ॥ १३ आदिपदेन प्रकाशादेश्च ॥ लोचनादिरपि वस्तुषु सम्बन्धबुद्धिं जनयति ॥ १४ प्रतिविषयं ज्ञानभेदात्कथं सम्बन्धिनोरेकज्ञानविषयत्वं यत सम्बन्धिनोरपि सम्बन्धरूपता स्यादित्याशङ्कायामाह ॥ १५ इति चेदिति शेष ॥ १६ समवायस्याधाराधेयभावलक्षणसम्बन्धाकारोऽस्तीत्यात्समवाय इति न घटते ॥ १७ इहेति बुद्धेरपि सम्बन्धप्रत्ययत्वं तो न स्यादित्युक्ते सत्याह ॥ १८ अधिकरणलक्षणेर्थे ॥ १९ सम्बन्धलक्षण ॥ २० घटप्रतिभासे घटप्रतिभासप्रसङ्गात् ॥

कारतया कस्याञ्चित्प्रतीतौ प्रतीयते तथानुभवाभावात् । सर्वसमवाय्यनुगतैकस्वभावो धर्मो तत्र प्रतिभासेत तद्व्यावृत्तस्वभावो वा ? न तावत्तद्व्यावृत्तस्वभावः सर्वतो व्यावृत्तस्वभावस्यान्यासम्बन्धित्वेन गगनाम्भोजवत्समवायत्वानुपपत्तेः । नापि तदनुगतैकस्वभावः सामान्यादेरपि समवायत्वानुषङ्गात् । न चाखिलसमवाय्यऽप्रतिभासे तदनुगतस्वभावतयासौ प्रत्यक्षेण प्रत्येतुं शक्यः । अथानुगतव्यावृत्तरूपव्यतिरेकेण सम्बन्धरूपतयासौ प्रतीयते तत्र सम्बन्धरूपतायाः प्रागेव कृतोत्तरत्वात् । यदप्युक्तम् 'इह तन्तुषु पट इत्यादीहप्रत्ययः सम्बन्धकार्योऽबाध्यमानेहप्रत्ययत्वादिह कुण्डे दधीत्यादिप्रत्ययवदित्यनुमानाच्चासौ प्रतीयते' इत्यादि, तदप्यसमीक्षिताभिधानं हेतोराश्रयासिद्धत्वात् । तदसिद्धत्वं चेह तन्तुषु पट इत्यादिप्रत्ययस्य धर्मिणोऽसिद्धेः । अप्रसिद्धविशेषणश्चायं हेतुः पटे तन्तवो वृक्षे शाखा इत्यादिरूपतया प्रतीयमानप्रत्ययेनेह तन्तुषु पट इति प्रत्ययस्य बाध्यमानत्वात् । स्वरूपासिद्धश्चायं तन्तुपटप्रत्यये इहप्रत्ययत्वस्यानुभवाभावात् । पटोयमित्यादिरूपतया हि प्रत्ययोनुभूयते । अनैकान्तिकश्चेह प्रागभावेऽनादित्वमिह प्रध्वंसाभावे प्रध्वंसाभावाभाव उत्पत्तिरित्यबाध्यमानेहप्रत्ययस्य सम्बन्धपूर्वकत्वाभावात् । न चात्र विशेषणविशेष्यभावः सम्बन्धो वाच्यः सम्बन्धमन्तरेण विशेषणविशेष्यभावस्याऽसम्भवात् । अन्यथा सर्वं सर्वस्य विशेषणं विशेष्यं च स्यात् । सम्बन्धे सत्येव हि द्रव्यगुणकर्मादावेकस्य विशेषणत्वमपरस्य विशेष्यत्वं दृष्टम् । तदभावेपि विशेषणविशेष्यभावकल्पनायामतिप्रसङ्गः स्यात् । न चात्राऽदृष्टलक्षणः सम्बन्धो विशेषणविशेष्यभावनिबन्धनमित्यभिधातव्यं षोढासम्बन्धवादित्वव्याघातानुषङ्गात् । न चास्य सम्बन्धरूपता । सम्बन्धो हि द्विष्ठो भवताभ्युपेतः । अदृष्टश्चात्मवृत्तितया प्रागभावाऽनादित्वयोरतिष्ठन्कथं द्विष्ठो भवतीति चिन्त्यमेतत् । यदि चात्राऽदृष्टः सम्बन्धस्तर्हि गुणगुण्यादयोप्यत एव सम्बद्धा भविष्यन्तीत्यलं समवायादिसम्बन्धकल्पनया । किञ्चातोनुमानात्सम्बन्धमात्रं साध्यते तद्विशेषो वा ? प्रथमपक्षे सिद्धसाध्यता तादात्म्यलक्षणसम्बन्धस्येष्टत्वात्तन्तुपटादीनाम् । ननु तेषां तादात्म्ये सति तन्तवः पटो वा स्यात् । तथा च सम्बन्धिनोरेकत्वे कथं सम्बन्धो नामास्य द्विष्ठत्वात् ? तदप्ययुक्तम् । यो हि द्विष्ठः सम्बन्धस्तस्यैवैकत्वेऽभावो युक्तः । यस्तु तत्स्वभावतालक्षणः कथं तस्याभावो युक्तः ? तन्तुस्वभाव एव हि पटो नार्थान्तरमातानवितानीभूततन्तुव्यतिरेकेण देशभेदादिना पटस्यानुपलभ्यमानत्वात् । अथ सम्बन्धविशेषः साध्यते । स किं संयोगः समवायो वा ? संयोगश्चेदभ्युपगमबाधा । सम-

---

१ कोय सम्बन्धो नाम २ किं [illegible] ४ इत्यादिरीत्या ॥ ३ [illegible] प्रति ॥ ३ [illegible] ॥ ४ इह तन्तुषु पट इति [illegible] पटे तन्तवो वृक्षे शाखा इत्यादि [illegible] ॥ ५ यत ॥ ६ [illegible] ॥ ७ प्रागभावे ॥ ८ [illegible] ॥ ९ इह तन्तुषु पट इत्यादीहप्रत्यय [illegible] ॥ १० [illegible] ॥ ११ [illegible] ॥ १२ [illegible] ॥ [illegible] सत लक्षण यस्य सम्बन्धस्येति वच ॥

वायश्चेदृष्टान्तस्य साध्यविकलता । अथोच्यते, न संयोगः समवायो वा साध्यते किन्तु सम्बन्धमात्रम् । तस्मिन्सिद्धे च परिशेषात् समवायः सिध्यतीति तदप्युक्तिमात्रं परिशेषन्यायेन समवायस्य सिद्धेरसंभवात् तस्यानेकदोषदुष्टत्वेन प्रतिपादितत्वात् । यदि हि सम्बन्धान्तरमनेकदोषदुष्टं, समवायस्तु निर्दोषः स्यात्तदानीं तन्न्यायात् सिध्येत् । न चैवमित्युक्तम् । कश्चायं परिशेषो नाम ? प्रसक्तप्रतिषेधे विशिष्यमाणसंप्रत्ययहेतुः स इति चेत् स किं प्रमाणमप्रमाणं वा ? न तावदप्रमाणमभिप्रेतसिद्धौ समर्थमतिप्रसङ्गात् । प्रमाणं चेत्किं प्रत्यक्षमनुमानं वा ? न तावत्प्रत्यक्षं तस्य प्रसक्तप्रतिषेधद्वारेणाभिप्रेतसिद्धावसमर्थत्वात् । अथ केवलव्यतिरेक्यनुमानं परिशेषस्तर्हि प्रकृतानुमानोपन्यासवैयर्थ्यं तस्योपन्यासेपि परिशेषमन्तरेणाभिप्रेतसिद्धेरभावात् । परिशेषस्तु प्रमाणान्तरमन्तरेणापि तत्सिद्धौ समर्थ इति स एवोच्यताम् । न चासावुक्तः । तत् कथं समवायः सिध्येत् ? ननु चेहप्रत्ययस्य समवायाहेतुकत्वे निर्हेतुकत्वप्रसङ्गात् कादाचित्कत्वविरोधस्तदसत् तादात्म्यहेतुकतयास्य प्रतिपादितत्वात् । महेश्वरहेतुकत्वाद्वा कादाचित्कत्वाविरोधः । तस्य तदहेतुकत्वे वा तेनैव कार्यत्वादिहेतोर्व्यभिचारः । ननु महेश्वरोऽसंबन्धत्वात्कथं संबन्धबुद्धेः कारणमिति चेत् प्रभुशक्तेरचिन्त्यत्वात् । यो हीश्वरस्त्रैलोक्यकार्यकरणसमर्थः स कथं पटे रूपादय इति बुद्धिं न विदध्यात् ? प्रभुः खलु यदेवेच्छति तत्करोत्यन्यथा प्रभुत्वमेवास्य हीयते । न चेह कुण्डे दधीत्यादिप्रत्यये संबन्धपूर्वकत्वोपलम्भादत्रापि तत्पूर्वकत्वस्यैव सिद्धिस्तत्रापीश्वरहेतुकत्वं कार्यस्येच्छातस्तच्चोत्पत्तिनिवृत्तेः । संयोगश्चार्थान्तरभूतस्तन्निमित्तत्वेनात्राप्यसिद्धस्तस्यासिद्धस्वरूपत्वात् । ननु संयोगो नामार्थान्तरं न स्यात्तदा क्षेत्रे बीजादयो निर्विशिष्टत्वात् सर्वदैवाङ्कुरादिकार्यं कुर्युः । न चैवम् । तस्मात्सर्वदा कार्यानारम्भात् तेऽङ्कुरादिकार्योत्पत्तौ कारणान्तरसापेक्षा यथा मृत्पिण्डदण्डादयो घटकरणे कुम्भकारादिसापेक्षाः । योसावपेक्ष्यः स संयोग इति । किं च द्रव्ययोर्निःशेषणभावेनाध्यक्षत एवासौ प्रतीयते । तथा हि । केश्चित्केनचित्संयुक्ते द्रव्ये आहरेत्युक्ते ययोरेव द्रव्ययोः संयोगमुपलभते ते एवाहरति, न द्रव्यमात्रम् । किञ्च कुण्डली देवदत्त इत्यादिमतिरुपजायमाना किंनिबन्धनेत्यभिधातव्यम् ? न तावत्पुरुषकुण्डलमात्रनिबन्धना सर्वदा तस्याः सद्भावप्रसङ्गात् । किञ्च यदेव केनचित्कचिदुपलब्धसत्त्वं तस्यैवान्यत्र विधिप्रतिषेधमुखेन लोके व्यवहारप्रवृत्तिर्दृष्टा । यदि तु संयोगो न कदाचिदुपलब्धस्तत्कथमस्य चैत्रोऽकुण्डली कुण्डली वेत्येवं विभागेन व्यवहारो भवेत् ? चैत्रोऽकुण्डलीत्यत्र हि न कुण्डलं चैत्रो वा प्रतिषिध्यते

---

१ इह कुण्डे दधीत्यादिप्रत्ययवदित्यस्य ॥ २ संयोगतादात्म्यादिरूपम् ॥ ३ प्रसक्त=प्रसङ्गप्राप्त संयोगाप्रसिद्धो ?? संयोगतादात्म्यस्य । तस्य प्रतिषेधे सति विशिष्यमाण समवायरूपस्य सम्यक् प्रतीतिहेतुरित्यर्थः ॥ ४ परिशेष ॥ ५ प्रत्यक्षस्य सन्निहितरूपादिष्वेव प्रवर्तमानत्वात् ॥ ६ परिशेषोपि प्रमाणान्तरमन्तरेण तत्सिद्धावसमर्थो भविष्यतीत्युक्तत्वात् ॥ ७,८ इहेदमिति प्रत्ययस्य ॥ ९ इहेदमिति प्रत्ययस्य ॥ १० इह तन्तुषु पट इत्यादीहप्रत्ययेपि ॥ ११ इह कुण्डे दधीत्यादिप्रत्यये ॥ १२ दधीत्यादिप्रत्ययस्य ॥ १३ वैशेषिकस्य ॥ १४ तयोर्हि महेश्वरहेतुकत्वाद्वा कादाचित्कत्वाविरोध इत्यादि ॥ १५ अर्थो यो क्रियाकारी ताभ्यामन्यः संयोग इत्यर्थः ॥ १६ इहेति प्रत्ययनिमित्तत्वेन ॥ १७ इह कुण्डेपि ॥ १८ संयोगे सत्यप्यपूर्वसामर्थ्याद्यभावादित्यर्थः ॥ १९ गृहे स्थापिता गवादीत्यर्थः ॥ २० कारणान्तरं=संयोग ॥ २१ द्रव्ये संयोगवती इति ॥ २२ पुमान् ॥ २३ पुमा ॥ २४ संयोगरूपा पूर्वस्वभावप्रादुर्भावानपेक्षा ॥

प्रतिपिध्यते । तथा चैत्रः कुण्डलीत्यनेनापि विधिवाक्येन चैत्रकुण्डलयोर्नान्यतरस्य
देशादिभेदेनानयोः सतोः प्रतिषेधायोगात् । तस्माच्चैत्रस्य कुण्डलसंयोगः प्रतिपिध्यते । तथा चैत्रः कुण्डलीत्यनेनापि विधिवाक्येन चैत्रकुण्डलयोर्नान्यतरस्य
विधानं तयोः सिद्धत्वात् । पारिशेष्यात्संयोगस्यैव विधिर्विज्ञायते । इत्यप्युद्द्योतकरस्य मनोरथमात्रम् । तथा हि । यत्तावदुक्तं निर्विशिष्टत्वाद्बीजादयः सर्वदै-
वाङ्कुरं कुर्युस्तदयुक्तं तेषां निर्विशिष्टत्वासिद्धेः सकलभावानां परिणामित्वात् । ततो विशिष्टपरिणामापन्नानामेव तेषां जनकत्वं, नान्यथा । यच्चोक्तं सर्वदा कार्या-
नारम्भादित्यादि तत्रापि कारणमात्रसापेक्षत्वसाधने सिद्धसाध्यतास्माभिरपि विशिष्टपरिणामापेक्षाणां तेषां कार्यकारित्वाभ्युपगमात् । अथाभिमतसंयोगाख्यपदार्था-
न्तरसापेक्षत्वं साध्यते तदानेन हेतोरन्वयासिद्धेरनैकान्तिकता तमन्तरेणापि संभवाविरोधात् । दृष्टान्तस्य च साध्यविकलता । यदि च संयोगमात्रसापेक्षा एव
ते तज्जनकास्तर्हि प्रथमोपनिपाते एव क्षित्यादिभ्योऽङ्कुरादिकार्योदयप्रसङ्गः पश्चादिवाविकलकारणत्वात् । तदा तदनुत्पत्तौ वा पश्चादप्यनुत्पत्तिप्रसङ्गो विशेषाभावात् ।
यदप्युक्तं द्रव्ययोर्विशेषणभावेनेत्यादि तदप्ययुक्तं यतो न द्रव्याभ्यामर्थान्तरभूतः संयोगः प्रतिपत्तुः प्रत्यक्षे प्रतिभाति यतस्तद्दर्शनाद्विशिष्टे द्रव्ये आहरेत् । किं
तर्हि? प्राग्भाविसान्तरावस्थापरित्यागेन निरन्तरावस्थारूपतयोत्पन्ने वस्तुनी एव संयुक्तशब्दवाच्ये अवस्थाविशेषे प्रभावितत्वात् संयोगशब्दस्य । तेन यत्र
तथाविधे वस्तुनी संयोगशब्दविषयभावापन्ने पश्यति ते एवाहरति, नान्ये । यदप्युक्तं कुण्डलीत्यादि तदप्युक्तिमात्रं यतो यथैव हि चैत्रकुण्डलयोर्विशिष्टावस्था-
प्राप्तिः संयोगः सर्वदा न भवति तद्वत्कुण्डलीति मतिरप्यवस्थाविशेषनिबन्धना कथं तदभावे भवेत्? विधिप्रतिषेधावपि न केवलयोश्चैत्रकुण्डलयोः किन्त्ववस्था-
विशेषस्यैवेत्युक्तदोषानवकाशः । ततो ये अनेकवस्तुसन्निपाते सत्युपजायन्ते प्रत्यया न ते परपरिकल्पितसंयोगविषया यथा प्रविरलावस्थितानेकतन्तुविषयाः
प्रत्ययास्तथा चैते संयुक्तप्रत्यया इति । यच्चान्यदुक्तं विशेषविरुद्धानुमानं सकलानुमानोच्छेदकत्वान्न वक्तव्यमिति तत्किमनुमानाभासोच्छेदकत्वान्न वाच्यं
सम्यगनुमानोच्छेदकत्वाद्वा? तत्राद्यः पक्षोऽयुक्तः । न हि कालात्ययापदिष्टहेतूत्थानुमानोच्छेदकस्य प्रत्यक्षादेरनुमानवादिनोपन्यासो न कर्तव्योऽतिप्रसक्तेः ।
द्वितीयपक्षोप्ययुक्तः । न हि धूमादिसम्यगनुमानस्य विशेषविरुद्धानुमानसहस्रेणापि प्रत्यक्षादिभिरपहृतविषयेण बाधा विधातुं पार्यते । न च विशेषविरुद्धानुमा-
नत्वादेवेदमवाच्यं यतो न विशेषविरुद्धानुमानत्वमसिद्धत्वादिवद्धेत्वाभासनिरूपणप्रकरणे दोषो निरूपितो येनानुमानवादिभिस्तदसिद्धत्वादिवन्न प्रयुज्यते ।
ततो यद्दुष्टमनुमानं तदेव विशेषविघाताय न प्रयोक्तव्यम् । यथायं प्रदेशोऽत्रत्येनाग्निनाग्निमान्न भवति धूमवत्त्वान्महानसवदित्यादिकम् । यतस्ते न यो विशेषो

---

१ पुरुषकुण्डलयो पार्थक्येन स्थितावस्थायामपीत्यर्थ ॥ २ चैत्रोऽकुण्डलीति निषेधवाक्येन ॥ ३ अन्वय =अविनाभाव ॥ ४ मृत्पिण्डादय कुम्भकारापेक्षा घटकरणे प्रभवन्ति तथापि नासौ कुम्भकार सयोगस्वरूप इति ॥ ५ कुम्भकारस्य सयोगरूपत्वाभावादेव । उच्चारितत्वात् ॥ ६ अवस्थात्र सयुक्तरूपा ॥ ७ चैत्रकुण्डलयोर्विधिप्रतिषेधलक्षण उक्तदोष ॥ ८ इन्द्रियाणा सन्निकर्षे ॥ ९ अत्र प्रकरणे विशेष =समवाय ॥ १० कालात्ययापदिष्टहेत्वाभासस्येव प्रत्यक्षादेरप्युच्छेदानुप्रसङ्गात् ॥ ११ जैनाचै ॥

निराक्रियते स प्रत्यक्षेणैव तद्देशोपसर्पणे सति प्रतीयते । न चैतत् समवाये संभवति प्रत्यक्षाद्यगोचरत्वेनास्य प्रतिपादितत्वात् । न चातद्विषयं वाधकमतिप्रसङ्गात् । यत्पुनरुक्तं न चास्य संयोगवन्नानात्वमित्यादि तदप्यसमीचीनं तदेकत्वस्यानुमानवाधितत्वात् । तथा हि । अनेकः समवायो विभिन्नदेशकालाकारार्थेषु संवन्धवुद्धिहेतुत्वात् । यो य इत्थंभूतः स सोनेको यथा संयोगः । तथा च समवायस्तस्मादनेक इति । प्रसिद्धो हि दण्डपुरुषसंयोगात् कटकुड्यादिसंयोगस्य भेदः । निविडः संयोगः शिथिलः संयोग इति प्रत्ययभेदात्संयोगस्य भेदाभ्युपगमे नित्यं समवायः कदाचित्समवाय इति प्रत्ययभेदात्समवायस्यापि भेदोस्तु । समवायिनोर्नित्यकादाचित्कत्वाभ्यां समवाये तत्प्रत्ययोत्पत्तौ संयोगिनोर्निविडत्वशिथिलत्वाभ्यां संयोगे तथा प्रत्ययोत्पत्तिः स्यान्न पुनः संयोगस्य निविडत्वादिस्वभावभेदात् । इत्येकं संधित्सोरन्यत् प्रच्यवते । तथा नाना समवायोऽयुतसिद्धावयविद्रव्याश्रितत्वात् संख्यावदित्यतोप्यस्यानेकत्वसिद्धिः । न चेदमसिद्धम् । अनाश्रितत्वे हि समवायस्य षण्णामाश्रितत्वमन्यत्र नित्यद्रव्येभ्य इत्यस्य विरोधः । अथ न परमार्थतः समवायस्याश्रितत्वं नाम धर्मो येनानेकत्वं स्यात् । किन्तूपचारात् । निमित्तं तूपचारस्य समवायिषु सत्सु समवायज्ञानम् । तत्त्वतो ह्याश्रितत्वेस्य स्वाश्रयविनाशे विनाशप्रसङ्गो गुणादिवत् । इत्यप्ययुक्त विशेषपरित्यागेनाश्रितत्वसामान्यस्य हेतुत्वात्, दिगादीनामाश्रितत्वापत्तेश्च । मूर्त्तद्रव्येपूपलब्धिलक्षणप्राप्तेषु दिग्लिङ्गस्येदमतः पूर्वेणेत्यादिप्रत्ययस्य काललिङ्गस्य च परत्वापरत्वादिप्रत्ययस्य सद्भावात् । तथा चान्यत्र नित्यद्रव्येभ्य इति विरुध्यते सामान्यस्यानाश्रितत्वप्रसङ्गश्चाश्रयविनाशेप्यविनाशात् समवायवत् । अस्तु वानाश्रितत्वं समवायस्य तथाप्यनेकत्वमनिवार्यम् । तथा हि । अनेकः समवायोनाश्रितत्वात्परमाणुवत् । नाकाशादिभिर्व्यभिचारस्तेषामपि कथंचिन्नानात्वसाधनात् । ततोऽयुक्तमुक्तमिहेति प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्चैकः समवाय इति विशेषलिङ्गाभावस्यानन्तरप्रतिपादितलिङ्गसद्भावतोऽसिद्धत्वात् । इहेति प्रत्ययाविशेषोप्यसिद्ध इहात्मनि ज्ञानमिह पटे रूपादिकमितीहेति प्रत्ययस्य विशेषात् । विशेषणानुरागो हि प्रत्ययस्य विशिष्टत्वम् । न चानुगतप्रत्ययप्रतीतितः समवायस्यैकत्वं सिध्यति गोत्वादिसामान्येषु षट्पदार्थेषु चानुगतस्यैकत्वस्याभावेप्यनुगतप्रत्ययप्रतीतेः । सत्तावदिति दृष्टान्तोपि साध्यसाधनविकलः सर्वथैकत्वस्य सत्प्रत्ययाविशेषस्य चासिद्धत्वात् । सर्वथैकत्वे हि सत्तायाः पटः सन्निति प्रत्ययोत्पत्तौ सर्वथा सत्तायाः प्रतीत्यनुषङ्गात् क्वचित् सत्तासंदेहो न स्यात् । तस्याः सर्वथा प्रतीतावपि

---

१ तस्य=अग्रे ॥ २ गगनकुसुमस्यापि भावकत्वप्रसङ्गात् ॥ ३ सवन्ध इति वुद्धि सवन्धवुद्धि । तस्या ॥ ४ दृष्टान्त समर्थयति ॥ ५ परमाणुतद्व्यणुको ॥ ६ तन्तुपटयो ॥ ७ समवायस्य ॥ ८ वैशेषिकस्य ॥ ९ द्रव्यगुणकर्मसामान्यविशेषसमवायानाम ॥ १० ग्रन्थस्य ॥ ११ स्वरुपम् ॥ १२ तन्तुपटादिषु ॥ १३ समवाय इति ज्ञानम् ॥ १४ स्वाश्रयादभिन्नत्वात् ॥ १५ गुणो गुण्याश्रित , अवयवोवयव्याश्रित इति विशेषपरित्यागेन ॥ १६ आश्रयविनाशेप्याश्रितत्वसामान्यस्याविनाश एव तस्य नित्यत्वात् ॥ १७ दिगादीनामाश्रितत्वे च सति ॥ १८ नित्यद्रव्याणामाश्रितत्वात् ॥ १९ प्रदेशभेदापेक्षया ॥ २० समवायस्य नानात्व सिद्ध यत ॥ २१ भिन्नभिन्नविशेषणसवन्ध ॥ २२ इहेति प्रत्ययस्य ॥ २३ भिन्नत्वम् ॥ २४ गोत्वमपि सामान्य घटत्वमपि सामान्यमिति, अयमपि पदार्थ अयमपि पदार्थ इत्येव प्रकारेण ॥

तद्विशेष्यार्थानामप्रतीतेः क्वचित्सत्तासंदेहे पटविशेषणत्वं तस्या अन्यदन्यदर्थान्तरविशेषणत्वम् । इत्यायातमनेकरूपत्वं तस्याः । यदप्युक्तं समवायीनि द्रव्याणीत्या- दिप्रत्ययो विशेषणपूर्वको विशेष्यप्रत्ययत्वादित्यादि तदप्यनल्पतमोविलसितं हेतोर्विशेषणासिद्धत्वात् । तदसिद्धत्वं च समवायानुरागस्याप्रतीतेः । प्रतीतौ वानुमानान- र्थक्यम् । को हि नाम समवायानुरक्तं द्रव्यादिकं मन्यमानः समवायं न मन्येत तदनुरागाभावेपि तेनास्य विशेष्यत्वे खरशृङ्गेणापि तत्स्यादविशेषात् । ननु सत्रन्धा- नुरक्तं द्रव्यादिकं प्रतिभाति । सत्यं प्रतिभाति । समवाये तु किमायातम् ? न च स एव स इति वाच्यं तादात्म्यादपि तत्संभवात् संयोगवत् । तथाप्यत्रैवाग्रहे गरविषाणेप्याग्रहः किन्न स्यात् ? खरविषाणी पट इति प्रत्ययो विशेषणपूर्वको विशेष्यप्रत्ययत्वादिति । अत्राश्रयासिद्धतान्यत्रापि समाना । न खलु समवायी पट इति प्रत्ययः केनाप्यनुभूयते । अथाप्रतिपन्नसमयस्य संश्लेषमात्रं प्रतिपन्नसमयस्य तु समवायीति प्रतिभातीति चेन्न ज्ञानाद्वैयादेः प्रसङ्गात् । शक्यते हि तत्राप्येवं वक्तुमप्रतिपन्नसमयस्य वस्तुमात्रमभिधानयोजनारहितं प्रतिभाति संकेतवशाच्चैतत्सर्वं ज्ञानाद्वयादि । स्वशास्त्रजनितसंस्कारवशाद्विज्ञानाद्वयादिप्रतिभा- सोऽप्रमाणमित्यन्यत्रापि समानम् । न हि तत्रापि स्वशास्त्रसंस्कारादृते समवायीति ज्ञानमनुभवत्यन्यजनः । न चैतच्छास्त्रमप्रमाणमेतच्च प्रमाणमिति प्रे- क्षावतां वक्तुं युक्तमविशेषात् । समवाय इति प्रत्ययेनानैकान्तिकश्चायं[11] हेतुः । स हि विशेष्यप्रत्ययो न च विशेषणमपेक्षते । अथात्र समवायिनो विशेषणम् । नन्वस्तु तेषां विशेषणत्वं यत्र समवायिनां समवाय इति प्रतिभासते । यत्र तु समवाय इत्येतावाननुभवस्तत्र किं विशेषणमिति चिन्त्यताम् । अथ विशेषणाभावान्नेदं विशेष्यज्ञानं तर्ह्यन्यस्य विशेष्यस्यात्रासंभवाद्विशेषणज्ञानमपि तन्मा भूत् । न चैतद्युक्तम् । कथं चैवं पट इति प्रत्ययो विशेष्यः स्यात् ? विशेषणाभावाविशेषात् । अथात्र पटत्वं विशेषणं तर्हि समवाय इति प्रत्यये किं विशेषणम् ? न तावत्समवायत्वम- नभ्युपगमात् । अथ येन सता विशिष्टः प्रत्ययो जायते तद्विशेषणं तत्र समवाय इति प्रत्ययोत्पादे समवायत्वसामान्यस्यानभ्युपगमात्, द्रव्यादे- श्चाप्रतिभासनाददृष्टस्यैव विशेषणत्वमिति, तन्न—यतः किं येन सता विशेष्यज्ञानमुत्पद्यते तद्विशेषणं किं वा यस्यानुरागः प्रतिभासते तदिति? प्रथमपक्षे चक्षु- रालोकादेरपि तदनिवार्यम् । अथ यस्यानुरागस्तद्विशेषणं न तर्हि दण्डीति प्रत्यये दण्डवद्दण्डशब्दोल्लेखेन समवाय इति प्रत्ययेप्यदृष्टस्य तच्छब्दयोजनाद्वारेणा-

---

१ दण्डाभावे दण्डीति प्रत्ययो यथा न स्यात्तथा समवायलक्षणविशेषणाभावेपि विशेष्यप्रत्ययो न स्यादिति भाव ॥ २ समवाय एवानुराग सवन्धस्तस्य ॥ ३ समवायेन ॥ ४ द्रव्यादे ॥ ५ तस्य=अनुरागस्य ॥ ६ आदिना ब्रह्माद्वैतादेश्च ॥ ७ अभिधान शब्द ॥ ८ समवाये ॥ ९ वैशेषिक ॥ १० विशेषणपूर्वकलक्षणसाध्याभावात् ॥ ११ विशेष्यप्रत्ययत्वादिति ॥ १२ तन्तुपटादय ॥ १३ समवायिभ्या भिन्नस्य ॥ १४ समवायि प्रकरणे ॥ १५ उभय मा भूदिति ॥ १६ समवाय प्रतिभासते इति प्रत्यये विशेषणभूतस्य तन्तुपटादे ॥ १७ अदर्शनीभूतस्य ॥ १८ इद विशेष्यमिति ज्ञानम् ॥ १९ सवन्ध ॥ २० विशेष्ये ॥ २१ दण्डीति प्रत्यये दण्डशब्दोल्लेखेन दण्डस्य यथानुराग मन्यते जनो, न तथा प्रकृतेऽदृष्टशब्दयोजनाद्वारेणादृष्टस्यानुरागमिति सवन्ध ॥

नुरागं जनो मन्यते तथाप्यदृष्टस्य विशेषणत्वकल्पनायां दण्डीत्यादिप्रत्ययेप्यस्यैव तत्कल्पनास्तु किं द्रव्यादेर्विशेषणभावकल्पनया? यच्चोक्तं स्वकारणसत्ता-संबन्ध एवात्मलाभ इत्यादि तन्न—आत्मलाभस्य स्वकारणसत्तासमवायपर्यायतायां नित्यत्वप्रसङ्गात्। तन्नित्यत्वे च कार्यस्याविनाशित्वं स्यात्। किं चासौ सतां सत्तासमवायोऽसतां वा स्यात्? न तावदसतां व्योमोत्पलादीनामपि तत्प्रसङ्गात्। अथात्यन्तासत्त्वात्तेषां न तत्प्रसङ्गः। गुणगुण्यादीनामत्यन्तासत्त्वाभावः कुतः? समवायाच्चेदितरेतराश्रयः। सिद्धे हि समवाये तेषामत्यन्तासत्त्वाभावस्तदभावाच्च समवायः। नापि सताम्। समवायात्पूर्वं हि सत्त्वं तेषां समवायान्तरात्स्वतो वा? समवायान्तराच्चेन्नास्यैकत्वाभ्युपगमात्। अनेकत्वेप्यतोपि पूर्वसमवायान्तरात्तेषां सत्त्वमित्यनवस्था। स्वतः सत्त्वाभ्युपगमे तु समवायपरिकल्पनानर्थ-क्यम्। ननु न समवायात् पूर्वं तेषां सत्त्वमसत्त्वं वा सत्तासमवायात्सत्त्वाभ्युपगमादित्यप्यसङ्गतं परस्परव्यवच्छेदरूपाणामेकनिषेधस्यापरविधाननान्तरीयकत्वे-नोभयनिषेधविरोधात्। न चानुपकारिणोः सत्तासमवाययोः परस्परसंबन्धो युक्तोतिप्रसङ्गात्। अव्यापि चेदं सत्त्वलक्षणं सत्तासमवायान्त्यविशेषेषु तस्या-संभवात्, त्रिषु पदार्थेषु सत्करी सत्तेत्यभिधानात्। अतिव्यापि चाकाशकुशेशयादिष्वपि भावात्। न च तेषामसत्त्वान्न सत्तासमवायोन्योन्याश्रयानुषङ्गात्। असत्त्वे हि तेषां सत्तासमवायविरहस्तद्विरहाच्चासत्त्वमिति। न च सत्तासमवायः सत्त्वलक्षणं युक्तमर्थान्तरत्वात्। न ह्यर्थान्तरमर्थान्तरस्य स्वरूपमतिप्रसङ्गादर्था-न्तरत्वहानिप्रसङ्गाच्च। किं च सत्तासमवायात्पदार्थानां सत्त्वे तयोः कुतः सत्त्वम्? असत्संबन्धात्सत्त्वेतिप्रसङ्गात्। सत्तासमवायान्तराच्चेदनवस्था। स्वतश्चे-त्पदार्थानामपि तत्स्वत एवास्तु। किं सत्तासमवायेन? यदप्यभिहितमग्नेरुष्णतावदित्यादि तदप्यभिधानमात्रं यतः प्रत्यक्षसिद्धे पदार्थस्वभावे स्वभावैरुत्तरं वक्तुं युक्तम्। न च समवायस्य स्वतः संबन्धत्वं संयोगादीनां तु तस्मादित्यध्यक्षप्रसिद्धं तत्स्वरूपस्याध्यक्षाद्यगोचरत्वप्रतिपादनात्। समवायोन्येन संबध्यमानो न स्वतः संबध्यते संबध्यमानत्वाद्रूपादिवदित्यनुमानविरोधाच्च। यदि चाग्निप्रदीपगङ्गोदकादीनामुष्णप्रकाशपवित्रतावत्समवायः स्वपरयोः संबन्धहेतुस्तर्हि तद्दृष्टान्तावष्ट-म्भेनैव ज्ञानं स्वपरयोः प्रकाशहेतुः किन्न स्यात्? तथा च ज्ञानं ज्ञानान्तरवेद्यं प्रमेयत्वादिति ब्रुवते। यच्चोच्यते समवायः संबन्धान्तरं नापेक्षते स्वतः संबन्धत्वात्। ये तु संबन्धान्तरमपेक्षन्ते न ते स्वतः संबन्धा यथा घटादयः। न चायं न स्वतः संबन्धस्तस्मात्संबन्धान्तरं नापेक्षते इति। तदपि मनोरथमात्रं हेतोरसिद्धेः[22]।

१ अदृष्टानुरागाभ्युपगमाभावेपि ॥ २ दण्डादेस्तन्तुपटादेर्वा ॥ ३ कार्यरूपस्य वस्तुन स्वरूपोद्भव ॥ ४ सत्तासमवाययोर्नित्यत्वात् ॥ ५ व्योमोत्पलादीना सर्वथा असत्त्वे प्रतिपादिते आचार्या प्राहु ॥ ६ अस्य=समवायस्य ॥ ७ अतोपि=विवक्षितसमवायान्तरादपि ॥ ८ सताम् ॥ ९ व्यवच्छेदो हि परसर विरुद्धधर्मयोगिनामेव स्यात् ॥ १० परसरम् ॥ ११ द्वन्द्वोत्र ज्ञेय ॥ १२ तेषा स्वरूपेणैव सत्त्वस्वभावत्वात् ॥ १३ तेषा हि सत्तासंबन्धादेव सत्त्व, स्वय त्वसत्त्वमेवेति भाव ॥ १४ घटस्य पटस्वरूपत्वप्रसङ्गात् ॥ १५ सत्त्वा सत्तासमवायाभ्या सबन्ध सत्संबन्ध । न सत्संबन्धोऽसत्संबन्ध ॥ १६ गगनकुसुमादिषु ॥ १७ अपरसत्तासमवायाभ्या सबन्धाभावेपी-त्यर्थ ॥ १८ तस्य=समवायस्य ॥ १९ तन्तुपटादिलक्षणसंबन्धिना सह ॥ २० समवायसमवायिनो ॥ २१ अवष्टम्भोऽवलम्ब साहाय्य वा ॥ २२ स्वत सबन्धत्वादिति हेतो ॥

न हि समवायस्य स्वरूपासिद्धौ स्वतः संबन्धत्वं तत्र सिध्यति संयोगेनानेकान्ताच्चे । स हि स्वतः संबन्धः संबन्धान्तरं चापेक्षते । न हि स्वतोऽसंबन्धस्वभावत्वे संयोगादेः परतस्तद्युक्तमतिप्रसङ्गात् । घटादीनां च संबन्धित्वान्न परतोपि संबन्धत्वम् । इत्ययुक्तमुक्तं न ते स्वतःसंबन्धा इति । तन्नास्य स्वतः संबन्धो युक्तः । परतश्चेत्कि संयोगात्समवायान्तराद्विशेषणभावाददृष्टाद्वा ? न तावत्संयोगात्तस्य गुणत्वेन द्रव्याश्रयत्वात् समवायस्य चाद्रव्यत्वात् । नापि समवायान्तरात् तस्यैकरूपतयाभ्युपगमात्, तत्त्वं भावेन व्याख्यातमित्यभिधानात् । नापि विशेषणभावात् संबन्धान्तरैरभिसंबद्धार्थेष्वेवास्य प्रवृत्तिप्रतीतेर्दण्डविशिष्टः पुरुष इत्यादिवत् । अन्यथा सर्वं सर्वस्य विशेषणं विशेष्यं च स्यात् । समवायादिसंबन्धानर्थक्यं च तदभावेपि गुणगुण्यादिभावोपपत्तेः । समवायस्य समवायिविशेषणतानुपपत्तिश्चात्यन्तमर्थान्तरत्वेनातद्धर्मत्वादाकाशवत् । न खलु संयुक्ताविमावित्यत्र संयोगिधर्मतामन्तरेण संयोगस्य तद्विशेषणता दृष्टा । न च समवायसमवायिनां सम्बन्धान्तराभिसम्बद्धत्वमनभ्युपगमात् । किञ्च विशेषणभावोप्येतेभ्योत्यन्तं भिन्नस्तत्रैव कुतो नियाम्येत ? समवायाच्चेदितरेतराश्रयः । समवायस्य नियमसिद्धौ हि ततो विशेषणभावस्य नियमसिद्धिस्तत्सिद्धेश्च समवायस्य तत्सिद्धिरिति । किञ्चायं विशेषणभावः पट्पदार्थेभ्यो भिन्नोऽभिन्नो वा ? भिन्नश्चेत्किं भावरूपोऽभावरूपो वा ? न तावद्भावरूपः षडेव पदार्था इति नियमविरोधात् । नाप्यभावरूपोऽनभ्युपगमात् । अभेदेपि न तावद्द्रव्यं गुणाश्रितत्वाभावप्रसङ्गात् । अत एव न गुणोपि । नापि कर्म कर्माश्रितत्वाभावानुषङ्गात् । अकर्म कर्मेत्यभिधानात् । नापि सामान्यं समवाये तदनुपपत्तेः पदार्थत्रयवृत्तित्वात्तस्य । नापि विशेषो विशेषाणां नित्यद्रव्याश्रितत्वात् । अनित्यद्रव्ये चास्योपलम्भात् समवाये चाभावानुषङ्गात् । युगपदनेकसमवायिविशेषणत्वे चास्यानेकत्वप्राप्तिः । यदिह युगपदनेकार्थविशेषणं तदनेकं प्रतिपन्नम् । यथा दण्डकुण्डलादि । तथा च समवायः । तस्मादनेक इति । न च सत्त्वादिनाऽनेकान्तस्तस्यानेकस्वभावत्वप्रसाधनात् । तन्न विशेषणभावेनाप्यसौ सम्बद्धः । नाप्यदृष्टेनास्य सम्बन्धरूपत्वासम्भवात् । सम्बन्धो हि द्विष्ठो भवताभ्युपगतोऽदृष्टश्चात्मवृत्तितया समवायसमवायिनोरतिष्ठन् कथं द्विष्ठो भवेत् । पोढा सम्बन्धवादित्वव्याघातश्च । यदि चाऽदृष्टेन समवायः सम्बध्यते तर्हि गुणगुण्यादयोप्यत एव सम्बद्धा भविष्यन्तीत्यलं समवायादिकल्पनया । न चादृष्टोप्यसम्बद्धः समवायसम्बन्धहेतुरतिप्रसङ्गात् । सम्बद्धश्चेत्कुतोस्य सम्बन्धः ? समवायाच्चेदन्योन्यसंश्रयः ।

---

१ न केवल हेतोरसिद्धेरेव ॥ २ आदिना संयुक्तसमवायादिसंबन्धग्रहणम् ॥ ३ समवायात् ॥ ४ तत्=सम्बन्धत्वम् ॥ ५ दृष्टान्तभूतानाम् ॥ ६ संयोगात् ॥ ७ 'समवायस्य संबन्ध स्वसमवायिषु' इति शेष ॥ ८ समवायस्य ॥ ९ परेण ॥ १० एकत्वम् ॥ ११ सत्तया ॥ १२ संबन्धान्तर=तादात्म्यसंयोगादि । समवायसमवायिलक्षणेष्वित्यपरा टिप्पणी ॥ १३ विशेषणभावस्य ॥ १४ अतद्धर्मत्व च स्यात्समवायिना विशेषणत्व च स्यादिति सन्दिग्धानैकान्तिकत्वपरिहारार्थमिदमाह ॥ १५ समवायस्य ॥ १६ समवायिभ्य ॥ १७ विशेषा नित्यद्रव्यवृत्तय इति वचनात् ॥ १८ विशेषणभावस्य ॥ १९ पूर्वम् ॥ २० समवायसिद्धौ हि समवायेनादृष्टस्य सम्बन्धत्व सिध्यति तत्सिद्धौ चाऽदृष्टस्य सम्बद्धस्य समवायहेतुत्व सिध्यति ॥

अन्यतश्चेदभ्युपगमव्याघातः । तन्न सम्बद्धः समवायः । नाप्यसम्बद्धः षण्णामाश्रितत्वमिति[2] विरोधानुषङ्गात् । कथं चासम्बद्धस्य सम्बन्धरूपतार्थान्तरवत्? सम्बन्धबुद्धिहेतुत्वाच्चेन्महेश्वरादेरपि तत्प्रसङ्गः । कथं चासम्बद्धोसौ समवायिनोः सम्बन्धबुद्धिनिबन्धनम् । न ह्यङ्गुल्योः संयोगो घटपटयोरप्रवर्त्तमानस्तयोः सम्बन्धबुद्धिनिबन्धनं दृष्टः । तथेहात्मनि ज्ञानमित्यादिसम्बन्धबुद्धिर्न सम्बन्ध्यऽसम्बद्धः सम्बन्धपूर्विका सम्बन्धबुद्धित्वाद्दण्डपुरुषसम्बन्धबुद्धिवदित्यनुमानविरोधश्च । किञ्चायं समवायः समवायिनोः परिकल्प्यतेऽसमवायिनोर्वा? यद्यसमवायिनोर्घटपटयोरप्येतत्प्रसङ्गः । अथ समवायिनोः, कुतस्तयो समवायित्वम्? समवायात्स्वतो वा? समवायाच्चेदन्योन्याश्रयः । सिद्धे हि समवायित्वे तयोः समवायस्तस्माच्च तत्त्वमिति । किञ्चाभिन्नं तेनानयोः समवायित्वं विधीयते भिन्नं वा? न तावदभिन्नं तद्विधाने गगनादीनां विधानानुषङ्गात् । भिन्नं चेत्तयोस्तत्सम्बन्धित्वानुपपत्तिः । सम्बन्धान्तरकल्पने चानवस्था । तत एव तन्नियमे चेतरेतराश्रयः । सिद्धे हि समवायिनोः समवायित्वनियमे समवायनियमसिद्धिस्ततश्च तन्नियमसिद्धिरिति । स्वत एव तु समवायिनोः समवायित्वे किं समवायेन? ननु संयोगेप्येतत्सर्वं समानमित्यप्यवाच्यं संश्लिष्टतयोत्पन्नवस्तुस्वरूपव्यतिरेकेणास्याप्यसम्भवात् । भिन्नसंयोगवशात्तु संयोगिनोर्नियमे समानमेवैतत् । यच्चान्यदुक्तं संयोगिद्रव्यविलक्षणत्वाद्गुणत्वादीनामित्यादि तदप्यनुक्तसमं यतो निष्क्रियत्वेप्येषामाधेयत्वमल्पपरिमाणत्वात् तत्कार्यत्वात्तथा प्रतिभासाद्वा? तत्राद्यः पक्षोऽयुक्तः सामान्यस्य महापरिमाणगुणस्य चानाधेयत्वप्रसङ्गात् । द्वितीयपक्षोप्यत एवायुक्तः । तृतीयपक्षोप्यविचारितरमणीयस्तेषामाधेयतया प्रतिभासाभावात् । तदभावश्च रूपादीनां स्वाधारेष्वन्तर्बहिश्च सत्त्वात्[13] । न ह्यन्यत्र कुण्डादावधिकरणे बदरादीनामाधेयानां तथा सत्त्वमस्ति । अथ रूपादीनामाधेयत्वे सत्यपि युतसिद्धेरभावादुपरितनतया प्रतिभासाभावो, नन्न[15]—युतसिद्धत्वस्योपरितनत्वप्रतीत्यहेतुत्वात् । अन्यथोर्ध्वावस्थितवंशादेः क्षीरनीरयोश्च सम्बन्धे तत्प्रसङ्गात् ।

ततः परपरिकल्पितपदार्थानां विचार्यमाणानां स्वरूपाव्यवस्थितेः कथं षडेव पदार्था इत्यवधारणं घटते? स्वरूपासिद्धौ संख्यासिद्धेरभावात्, प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलनिग्रहस्थानानां नैयायिकाभ्युपगतषोडशपदार्थानां षट्पदार्थाधिक्येन व्यवस्थानाच्च । न च पदार्थषोडशकस्य षट्स्वेवान्तर्भावान्नातोधिकपदार्थव्यवस्थेत्यभिधातव्यं द्रव्यादीनामपि षण्णां प्रमाणप्रमेयरूपपदार्थद्वयेऽन्तर्भावात्पदार्थषट्कस्याप्यनुपपत्तेः । अथ तदन्तर्भावेप्यवान्तरविभिन्नलक्षणवशात्प्रयोजनवशाच्च द्रव्यादिषट्कव्यवस्था तर्हि तत एव प्रमाणादिषोडशव्यवस्थाप्यस्तु विशेषाभावात् । न च सापि युक्ता

१ समवाय स्वत एव सम्बद्ध इत्यभ्युपगम ॥ २ मतस्य ॥ ३ सम्बन्धी ॥ ४ घटपटाभ्या पृथग्भूत ॥ ५ शब्दगगनाभ्या समवायभिन्नस्य समवायित्वस्य समवायेन विधानात्तयोरपि विधानमित्यर्थ । एव ज्ञानात्मादिष्वपि ॥ ६ समवायिनोरिद समवायित्वमिति सम्बन्धाभाव इति भाव ॥ ७ तत्सम्बन्धित्वसिद्ध्यर्थम् ॥ ८ तस्य=गुण्यादे ॥ ९ आधेयतया ॥ १० गगनवर्त्तिन ॥ ११ अल्पपरिमाणत्वाभावात् ॥ १२ घटादिषु ॥ १३ आधेयस्य बहिरेव सत्त्वसद्भावादिति भाव ॥ १४ अन्तर्बहि प्रकारेण ॥ १५ इति चेन्न इत्यर्थ ॥ १६ युतसिद्धयो ॥ १७ उपरितनतया प्रतिभासस्य ॥ १८ प्रमाणप्रमेयपदार्थद्वयेन्तर्भाव षण्णा विश्वतत्त्वप्रकाशिकायाम् ॥ १९ विभिन्नलक्षणवशात्प्रयोजनवशाच्च द्रव्यादिषट्कव्यवस्था भवति प्रमाणादिषोडशव्यवस्था च न भवतीति विशेष नोत्पश्याम ॥

परोपगतस्वरूपाणां प्रमाणादीनां यथास्थानं प्रतिपेधाद्विपर्ययानध्यवसाययोश्च प्रमाणादिषोडशपदार्थेभ्योऽर्थान्तरभूतयोः प्रतीतेः । धर्माधर्मद्रव्ययोश्च । कुतः प्रमाणात्तत्सिद्धिरिति चेदनुमानात् । तथा हि। विवादापन्नाः सकलजीवपुद्गलाश्रयाः सकृद्गतयः साधारणबाह्यनिमित्तापेक्षा युगपद्भाविगतित्वादेकसरःसलिलाश्रयानेकमत्स्यगतिवत् । तथा सकलजीवपुद्गलस्थितयः साधारणबाह्यनिमित्तापेक्षा युगपद्भाविस्थितित्वादेककुण्डाश्रयानेकवदरादिस्थितिवत् । यत्तु साधारणं निमित्तं स धर्मोऽधर्मश्च ताभ्यां विना तद्गतिस्थितिकार्यस्यासम्भवात् । गतिस्थितिपरिणामिन एवार्थाः परस्परं तद्धेतवश्चेन्न—अन्योन्याश्रयानुषङ्गात् । सिद्धायां हि तिष्ठत्पदार्थेभ्यो गच्छत्पदार्थानां गतौ तेभ्यस्तिष्ठत्पदार्थानां स्थितिसिद्धिस्तत्सिद्धौ च गच्छत्पदार्थानां गतिसिद्धिरिति । साधारणनिमित्तरहिता एवाखिलार्थगतिस्थितयः प्रतिनियतस्वकारणपूर्वकत्वादिति चेत्कथमिदानी नर्त्तकीक्षणो निखिलप्रेक्षकजनानां नानातद्वेदनोत्पत्तौ साधारणं निमित्तम् । सहकारिमात्रत्वेन चेत्तर्हि सकलार्थगतिस्थितीना सकृद्भुवां धर्माधर्मौ सहकारिमात्रत्वेन साधारणं निमित्तं किन्नेष्यते ? पृथिव्यादिरेव साधारणं निमित्तं तासामित्यप्यसङ्गतं गगनवर्त्तिपदार्थगतिस्थितीनां तदसम्भवात् । तर्हि नभः साधारणं निमित्तं तासामस्तु सर्वत्र भावादित्यप्यपेशलं तस्यावगाहनिमित्तत्वप्रतिपादनात् । तस्यैकस्यैवानेककार्यनिमित्ततायामनेकसर्वगतपदार्थपरिकल्पनानर्थक्यप्रसङ्गात् । कालात्मदिक्सामान्यसमवायकार्यस्यापि यौगपद्यादिप्रत्ययस्य बुद्ध्यादेरिदमतः पूर्वेणेत्यादिप्रत्ययस्यान्वयज्ञानस्येहेदमिति प्रत्ययस्य च नभोनिमित्तस्योपपत्तेस्तस्य सर्वत्र सर्वदा सद्भावात् । कार्यविशेषात्कालादिनिमित्तभेदव्यवस्थायां तत एव धर्मादिनिमित्तभेदव्यवस्थाप्यस्तु सर्वथा विशेषाभावात् । एतेनादृष्टनिमित्तत्वमप्यासां प्रत्याख्यातं पुद्गलानामदृष्टासम्भवाच्च । ये यदात्मोपभोग्याः पुद्गलास्तद्गतिस्थितयस्तदात्माऽदृष्टनिमित्ताश्चेत्तर्हि साधारण निमित्तमदृष्टं तासां प्रतिनियतात्मादृष्टस्य प्रतिनियतद्रव्यगतिस्थितिहेतुत्वप्रसिद्धेः । न च तदनिष्टं तासा क्ष्मादेरिवासाधारणकारणस्यादृष्टस्यापीष्टत्वात् । साधारणं तु कारणं तासा धर्माधर्मावेवेति सिद्धः कार्यविशेषात्तयोः सद्भाव इति ।

अथेदानी फलविप्रतिपत्तिनिराकरणार्थमज्ञाननिवृत्तिरित्याद्याह । द्विविधं हि प्रमाणस्य फलं ततो भिन्नमभिन्नं च । तत्राज्ञाननिवृत्तिः प्रमाणादभिन्नं फलम् । ननु चाज्ञाननिवृत्तिः प्रमाणभूतज्ञानमेव । न तदेव तस्यैव कार्यं युक्तं विरोधात् । तत्कुतोसौ प्रमाणफलमित्यनुपपन्नम् । यतोऽज्ञानमज्ञप्तिः स्वपररूपयोर्व्यामोहः । तस्य निवृत्तिर्यथावत्तद्रूपयोर्ज्ञप्तिः प्रमाणधर्मत्वात् तत्कार्यतया न विरोधमध्यास्ते । स्वविषये हि स्वार्थस्वरूपे प्रमाणस्य व्यामोहविच्छेदाभावे निर्विकल्प-

---

१ वस ॥ २ बाह्य निमित्त धर्मं ॥ ३ अन निमित्तमधर्मं ॥ ४ तस्य=सकलजीवादे ॥ ५ नर्त्तकी एव क्षण पर्याय ॥ ६ कामोत्कटहर्षादि ॥७ तस्या ॥ ८ अनेकानि=गतिस्थित्यवगाहलक्षणानि ॥ ९ कार्यविशेषलस्य ॥ १० सकृद्भुवा सकलार्थगतिस्थितीना नभोनिमित्तत्वनिराकरणेन ॥११ तेषा पुद्गलानाम् ॥१२ येनात्मना ते पुद्गला उपभुज्यन्ते तस्य ॥१३ गत्यादीनाम् ॥१४ पृथिव्यादे ॥१५ जैनानाम् ॥१६ विषयविप्रतिपत्तिनिराकरणानन्तरम् ॥ १७ प्रमाणाद्भिन्नमेव फलमिति यौगा अभिन्नमेवेति सौगता इति भिन्नाभिन्नत्वाभ्यां फले विप्रतिपत्ति ॥१८ सौगत प्राह ॥१९ अज्ञाननिवृत्ते ॥ २० प्रमाणविषये ॥ २१ प्रमाणधर्मत्वादित्येतस्याऽसिद्धत्वनिरासार्थमिदम् ॥

कदर्शनात्सन्निकर्षाच्चाविशेषप्रसङ्गतः प्रामाण्यं न स्यात् । न च धर्मधर्मिणोः सर्वथा भेदोऽभेदो वा तद्भावविरोधानुषङ्गात् तदन्यतरवदर्थान्तरवच्च । अथाज्ञाननिवृत्तिर्ज्ञानमेवेत्यनयोः सामर्थ्यसिद्धत्वान्यथानुपपत्तेरभेदस्तन्न—अस्याऽविरुद्धत्वात् । सामर्थ्यसिद्धत्वं हि भेदे सत्येवोपलब्धं निमन्त्रणे आकारणवत् । कथं चैवं वादिनो हेतावन्वयव्यतिरेकधर्मयोर्भेदः सिध्येत्? साध्यसद्भावेऽस्तित्वमेव हि साध्याभावे हेतोर्नास्तित्वमित्यनयोरपि सामर्थ्यसिद्धत्वाविशेषात् । न चानयोरभेदे कार्यकारणभावो विरुध्यतेऽभेदस्य तद्भावाविरोधकत्वाज्जीवसुखादिवत् । साधकतमस्वभावं हि प्रमाणं स्वपररूपयोर्ज्ञप्तिलक्षणामज्ञाननिवृत्तिं निर्वर्त्तयति तत्रान्येनास्या निर्वर्त्तनाभावात् । साधकतमस्वभावत्वं चास्य स्वपरग्रहणव्यापार एव तद्ग्रहणाभिमुख्यलक्षणः । तद्धि स्वकारणकलापादुपजायमानं स्वपरग्रहणव्यापारलक्षणोपयोगरूपं सत्स्वार्थव्यवसायरूपतया परिणमते इत्यभेदेऽप्यनयोः कार्यकारणभावाऽविरोधः ।

नन्वेवमज्ञाननिवृत्तिरूपतयेव हानादिरूपतयाप्यस्य परिणमनसम्भवात् तदप्यस्याऽभिन्नमेव फलं स्यादित्यप्यसुन्दरमज्ञाननिवृत्तिलक्षणफलेनास्य व्यवधानसम्भवतो भिन्नत्वाविरोधात् । अत आह हानोपादानोपेक्षाश्च प्रमाणाद्भिन्नं फलम् । अत्रापि कथञ्चिद्भेदो द्रष्टव्यः सर्वथा भेदे प्रमाणफलव्यवहारविरोधात् । अमुमेवार्थं स्पष्टयन् यः प्रमिमीते इत्यादिना लौकिकेतरप्रतिपत्तिप्रसिद्धां प्रतीतिं दर्शयति । यः प्रतिपत्ता प्रमिमीते स्वार्थग्रहणपरिणामेन परिणमते स एव निवृत्ताज्ञानः स्वविषये व्यामोहविरहितो जहात्यभिप्रेतप्रयोजनाप्रसाधकमर्थं, तत्प्रसाधकं त्वादत्ते, उभयप्रयोजनाऽप्रसाधकं तूपेक्षणीयमुपेक्षते चेति प्रतीतेः प्रमाणफलयोः कथञ्चिद्भेदाभेदव्यवस्था प्रतिपत्तव्या । नन्वेवं प्रमातृप्रमाणफलानां भेदाभावात्प्रतीतिप्रसिद्धस्तद्व्यवस्थाविलोपः स्यात् । तदसाम्प्रतं कथञ्चिल्लक्षणभेदतस्तेषां भेदात् । आत्मनो हि पदार्थपरिच्छित्तौ साधकतमत्वेन व्याप्रियमाणं स्वरूपं प्रमाणं निर्व्यापारम् । व्यापारं तु क्रियोच्यते । स्वातन्त्र्येण पुनर्व्याप्रियमाणं प्रमाता । इति कथञ्चित्तद्भेदः । प्राक्तनपर्यायविशिष्टस्य कथञ्चिदवस्थितस्यैव बोधस्य परिच्छित्तिविशेषरूपतयोत्पत्तेरभेद इति । साधनभेदाच्च तद्भेदः । करणसाधनं हि प्रमाणं साधकतमस्वभावम् । कर्तृसाधनस्तु प्रमाता स्वतन्त्रस्वरूपः । भावसाधना तु क्रिया स्वार्थनिर्णीतिस्वभावा । इति कथञ्चिद्भेदाभ्युपग-

१ ज्ञानाज्ञाननिवृत्त्योः सामर्थ्यमस्ति तच्चाभेदमन्तरेण नोपपद्यते तस्मादनयोरभेद इति भाव ॥ २ अभेदमन्तरेण ॥ ३ भेदस्य ॥ ४ आह्वानवत् ॥ ५ अज्ञाननिवृत्तिर्ज्ञानमेवेत्यनयो सामर्थ्यसिद्धत्वान्यथानुपपत्तेरभेद इत्येव वादिन ॥ ६ नन्वज्ञाननिवृत्ति प्रमाणादभिन्न फलमित्यनेन प्रकारेण प्रमाणफलयोरभेदे कार्यकारणभावो विरुध्यते इत्युक्ते सत्याह ॥ ७ प्रमाणाज्ञाननिवृत्त्यो ॥ ८ सन्निकर्षादिना ॥ ९ अर्थग्रहणे व्यापारो ह्युपयोग इति वचनात् ॥ १० प्रमाणफलयो ॥ ११ साक्षात्फलमेतत् ॥ १२ परम्पराफलमेतत् ॥ १३ हानादे ॥ १४ प्रमाणादज्ञाननिवृत्ति फल स्यात् । अज्ञाननिवृत्तिफलात्पश्चाद्धानोपादानोपेक्षाश्च फलं स्यादिति भाव ॥ १५ इतर शास्त्रज्ञ ॥ १६ य प्रतिपत्ता प्रमिमीते इत्यादिप्रकारेण ॥ १७ आत्मस्वरूपम् ॥ १८ परिच्छित्तिरूपा ॥ १९ प्रमाणस्य ॥ २० फलरूपतया ॥ २१ साधन करणकर्त्रादि ॥ २२ प्रमातृप्रमाणपरिच्छित्ति भेद ॥ २३ करणे साधन व्युत्पादन यस्य । प्रमीयते वस्तुतत्त्व येनेति तत्करणसाधन प्रमाणम् ॥ २४ कर्तरि साधन व्युत्पादन यस्य प्रमातु । प्रमिमीते इति तथोक्त ॥ २५ प्रमिति प्रमाणम् ॥ २६ य प्रतिपत्ता प्रमिमीते इत्यनेन प्रकारेण प्रमाणफलयोरभेदे कार्यकारणभावविरोध इत्युक्ते सत्याह ॥

मादेव कार्यकारणभावस्याप्यविरोधः । यच्चोच्यते आत्मव्यतिरिक्तक्रियाकारि प्रमाणं कारकत्वाद्वास्यादिवत्, तत्र कथञ्चिद्भेदे साध्ये सिद्धसाध्यताऽज्ञाननिवृत्तेस्तद्धर्मतया हानादेश्च तत्कार्यतया प्रमाणात्कथञ्चिद्भेदाभ्युपगमात् । सर्वथा भेदे तु साध्ये साध्यविकलो दृष्टान्तः । वास्यादिना हि काष्ठादेश्छिदा निरूप्यमाणा छेद्यद्रव्यानुप्रवेशलक्षणैवावतिष्ठते । स चानुप्रवेशो वास्यादेरात्मगत एव धर्मो नार्थान्तरम् । ननु छिदा काष्ठस्था वास्यादिस्तु देवदत्तस्थ इत्यनयोर्भेद एवेत्यप्यसुन्दरं सर्वथा भेदस्यैवमसिद्धेः सत्त्वादिनाऽभेदस्यापि प्रतीतेः । न च सर्वथा करणाद्भिन्नैव क्रियेति नियमोऽस्ति प्रदीपः स्वात्मनात्मानं प्रकाशयतीत्यत्राभेदेनाप्यस्याः प्रतीतेः । न खलु प्रदीपात्मा प्रदीपाद्भिन्नस्तस्याऽप्रदीपत्वप्रसङ्गात् पटवत् । प्रदीपे प्रदीपात्मनो भिन्नस्यापि समवायात्प्रदीपत्वसिद्धिरिति चेन्नाऽप्रदीपेपि घटादौ प्रदीपत्वसमवायानुषङ्गात् । प्रत्यासत्तिविशेषात्प्रदीपात्मनः प्रदीप एव समवायो नान्यत्रेति चेत्स कोऽन्योन्यत्र कथञ्चित्तादात्म्यात् । एतेन प्रकाशनक्रियाया अपि प्रदीपात्मकत्वं प्रतिपादितं प्रतिपत्तव्यं तस्यास्ततो भेदे प्रदीपस्याऽप्रकाशकद्रव्यत्वानुषङ्गात् । तत्रास्याः समवायान्नायं दोष इत्यप्यसमीचीनमनन्तरोक्ताऽशेषदोषानुषङ्गात् । तन्नानयोरात्यन्तिको भेदः । नाप्यभेदस्तदऽव्यवस्थानुषङ्गात् । न खलु सारूप्यमस्य प्रमाणमधिगतिः फलमिति सर्वथा तादात्म्ये व्यवस्थापयितुं शक्यं विरोधात् । ननु सर्वथाऽभेदेप्यनयोर्व्यावृत्तिभेदात्प्रमाणफलव्यवस्था घटते एव । अप्रमाणव्यावृत्त्या हि ज्ञानं प्रमाणमफलव्यावृत्त्या च फलमित्यप्यविचारितरमणीयं परमार्थतः स्वेष्टसिद्धिविरोधात् । न च स्वभावभेदमन्तरेणान्यव्यावृत्तिभेदोप्युपपद्यते इत्युक्तं सारूप्यविचारे । कथं चास्याऽप्रमाणफलव्यावृत्त्या प्रमाणफलव्यवस्थावत्प्रमाणफलान्तरव्यावृत्त्याऽप्रमाणफलव्यवस्थापि न स्यात्? ततः पारमार्थिके प्रमाणफले प्रतीतिसिद्धे कथञ्चिद्भिन्ने प्रतिपत्तव्ये प्रमाणफलव्यवस्थान्यथानुपपत्तेरिति स्थितम् ।

योनेकान्तपदं प्रवृद्धमतुलं स्वेष्टार्थसिद्धिप्रदं प्राप्तोऽनन्तगुणोदयं निखिलविन्निःशेषतो निर्मलम् ।
स श्रीमानखिलप्रमाणविषयो जीयाज्जनानन्दनो मिथ्यैकान्तमहान्धकाररहितः श्रीवर्द्धमानोदितः ॥ ४ ॥

इति श्रीप्रभाचन्द्रविरचिते प्रमेयकमलमार्तण्डे परीक्षामुखालङ्कारे चतुर्थः परिच्छेदः ॥ श्रीः ॥

---

१ आत्मा=स्वरूपम् ॥ २ दृश्यमाना क्रियमाणा वा ॥ ३ भिन्नाधिकरणत्वेन ॥ ४ लोके ॥ ५ आत्मा=स्वरूप प्रदीपत्वमिति यावत् ॥ ६ अन्यथा ॥ ७ प्रदीपप्रदीपात्मनोरभेदप्रतिपादनेन ॥ ८ प्रमाणफलयो ॥ ९ सौगतमाशङ्क्योच्यते ॥ १० अर्थेन सादृश्य प्रमाणम् ॥ ११ निर्विकल्पकज्ञानस्य ॥ १२ स्वेष्ट प्रमाणफलयोर्भेद ॥ १३ पारमार्थिककथञ्चिद्भिन्नत्वव्यतिरेकेण ॥ १४ अखिलप्रमाणविषयपक्षे निखिलवित् केवलज्ञान यस्मादनेकान्तपदात्तन्निखिलविदनेकान्तपदम् । सर्वज्ञपक्षे तु निखिल वेत्तीति निखिलवित् । एततपद सर्वज्ञापरनामक विशेष्यमपराणि विशेषणानि । ततश्च निखिलवित्सर्वज्ञो जीयात् । विषयपक्षेऽखिलाना प्रमाणाना विषयोऽर्थ इति यत्पूर्वकस्तास । सर्वज्ञपक्षे तु निखिलवित्कथम्भूत अखिलप्रमाणविषय सर्वप्रमाणग्राह्य इत्यर्थ ॥

श्रीः।

# अथ पञ्चमः परिच्छेदः ॥



अथेदानीं तदाभासस्वरूपनिरूपणाय ततोन्यत्तदाभासमित्याद्याह । प्रतिपादितस्वरूपात्प्रमाणसंख्याप्रमेयफलाद्यदन्यत्तत्तदाभासमिति । तदेव तथा ही-
त्यादिना यथाक्रमं व्याचष्टे । तत्र प्रतिपादितस्वरूपात्स्वार्थव्यवसायात्मकप्रमाणादन्येऽस्वसंविदितगृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः प्रवृत्तिविषयो-
पदर्शकत्वाभावात् । पुरुषान्तरपूर्वार्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् । चक्षूरसयोर्द्रव्ये संयुक्तसमवायवच्च । एतच्च सर्वं प्रमाणसामान्यलक्षणपरिच्छेदे विस्तर-
तोऽभिहितमिति पुनर्नेहाभिधीयते । तथा विशदं प्रत्यक्षमित्युक्तं ततोन्यस्मिन्नवैशद्ये सति प्रत्यक्षं तदाभासं बौद्धस्याकस्मिकधूमदर्शनाद्वह्निविज्ञानवत् । इत्यप्युक्तं
प्रपञ्चतः प्रत्यक्षपरिच्छेदे । वैशद्येपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत् । न हि करणज्ञानेऽव्यवधानेन प्रतिभासलक्षणं वैशद्यमसिद्धं स्वार्थयोः प्रतीत्यन्तर-
निरपेक्षतया तत्र प्रतिभासनादित्युक्तं तत्रैव । तथाऽनुभूतेर्थे तदित्याकारा स्मृतिरित्युक्तम् । अननुभूतेऽतास्मिंस्तदिति ज्ञानं स्मरणाभासं जिनदत्ते स देवदत्तो यथेति ।
तथैकत्वादिनिबन्धनं तदेवेदमित्यादि प्रत्यभिज्ञानमित्युक्तम् । तद्विपरीतं तु सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमलकवदित्यादि प्रत्यभिज्ञानाभासम् । व्या-
प्तिज्ञानं तर्क इत्युक्तम् । ततोन्यत्पुनरसंबन्धेऽव्याप्तौ तज्ज्ञानं=व्याप्तिज्ञानं तर्काभासम् । यावांस्तत्पुत्रः स श्याम इति यथा । साधनात्साध्यविज्ञानमनुमानमित्युक्तम् ।
तद्विपरीतं त्विदं वक्ष्यमाणमनुमानाभासम् । पक्षहेतुदृष्टान्तपूर्वकश्चानुमानप्रयोगः प्रतिपादित इति । तत्रेत्यादिना यथाक्रमं पक्षाभासादीनुदाहरति । तत्रानु-
मानाभासेऽनिष्टादिः पक्षाभासः । तत्रानिष्टो मीमांसकस्याऽनित्यः शब्द इति । स हि प्रतिवाद्यादिदर्शनात्कदाचिदाकुलितबुद्धिर्विस्मरन्ननभिप्रेतमपि पक्षं करोति । तथा
सिद्धः पक्षाभासः यथा श्रावणः शब्द इति–वादिप्रतिवादिनोस्तत्राऽविप्रतिपत्तेः । तथा बाधितः प्रत्यक्षानुमानागमलोकस्ववचनैः पक्षाभासो भवति । तत्र प्रत्यक्षबाधितो
यथाऽनुष्णोग्निर्द्रव्यत्वाज्जलवत् । अनुमानबाधितो यथाऽपरिणामी शब्दः कृतकत्वाद्घटवत् । तथा हि । परिणामी शब्दोऽर्थक्रियाकारित्वात्कृतकत्वाद् घटवदिति ।

---

१ तेषां=प्रमाणसंख्याविषयफलानाम् ॥ २ अस्वसंविदितस्य स्वग्राहकत्वाभावेनार्थप्रतिपत्त्ययोगात्प्रवृत्तिविषयोपदर्शकत्वाभाव ॥ ३ निर्विकल्पक दर्शनम् । तस्य प्रवृत्तिविषयोपदर्शकत्वाभावस्तज्जनितविकल्पस्यैव तदुपदर्शकत्वात् ॥ ४ आदिना विपर्ययानध्यवसायौ ॥ ५ अत्रोदाहरणानि यथाक्रममाह ॥ ६ सन्निकर्षवादिनं प्रत्यपरं च दृष्टान्तमाह ॥ ७ अयमर्थो–यथा चक्षूरसयो संयुक्तसमवाय सन्नपि न प्रमाण तथा चक्षूरूपयोरपि । तस्मादयमपि प्रमाणाभास एवेति ॥ ८ यथा धूमबाष्पादिविवेकनिश्चयाभावाद्व्याप्तिग्रहणाभावादकस्माद्धूमदर्शनाज्जात यद्वह्निविज्ञान तत्तदाभास भवति कस्मादनिश्चयात् । तथा बौद्धपरिकल्पित यन्निर्विकल्पकप्रत्यक्ष तत् प्रत्यक्षाभास भवति कस्मादनिश्चयात् ॥ ९ एकत्वप्रत्यभिज्ञानाभासम् ॥ १० सादृश्यप्रत्यभिज्ञानाभासम् । स्वयं स्वेन सदृशमित्यर्थ ॥ ११ यमलक=युगलम् ॥ १२ अविनाभावाभावे ॥ १३ बाधित ॥ १४ आदिना सभ्यसभापत्यादिग्रह ॥ १५ स्वाभिप्रेत नित्य शब्द इति पक्षम् ॥

अर्थक्रियाकारित्वादयो हि हेतवो घटे परिणामित्वे सत्येवोपलब्धाः शब्देष्युपलभ्यमानाः परिणामित्वं प्रसाधयन्तीत्यपरिणामी शब्द इति पक्षस्यानुमानबाधा। आगमबाधितो यथा प्रेत्याऽसुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवदिति। आगमे हि धर्मस्याभ्युदयनिःश्रेयसहेतुत्वं तद्विपरीतत्वं चाधर्मस्य प्रतिपाद्यते। प्रामाण्यं चास्य प्रागेव प्रतिपादितम्। लोकबाधितो यथा शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खशुक्तिवदिति। लोके हि प्राण्यङ्गत्वाविशेषेपि किञ्चिदपवित्रं किञ्चित्पवित्रं च वस्तुस्वभावात्प्रसिद्धम्। यथा गोपिण्डोत्पन्नत्वाविशेषेपि वस्तुस्वभावतः किञ्चिद्दुग्धादि शुद्धं न गोमांसम्। यथा वा मणित्वाविशेषेपि कश्चिद्विषापहारादिप्रयोजनविधायी महामूल्योऽन्यस्तु तद्विपरीतो वस्तुस्वभाव इति। स्ववचनबाधितो यथा माता मे वन्ध्या पुरुषसंयोगेप्यगर्भत्वात्प्रसिद्धवन्ध्यावत्।

अथेदानी पक्षाभासानन्तरं हेत्वाभासेत्यादिना हेत्वाभासानाह। साध्याविनाभावित्वेन निश्चितो हेतुरित्युक्तं प्राक्। तद्विपरीतास्तु हेत्वाभासाः। के ते? असिद्धविरुद्धानैकान्तिकाऽकिञ्चित्कराः। तत्रासिद्धस्य स्वरूपं निरूपयति। असत्सत्तानिश्चयोऽसिद्ध इति। सत्ता च निश्चयश्च। असन्तौ सत्तानिश्चयौ यस्य स तथोक्तः। तत्राविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वादिति। कथमस्याऽसिद्धत्वमित्याह। स्वरूपेणासिद्धत्वादिति। चक्षुर्ज्ञानग्राह्यत्वं हि चाक्षुषत्वम्। तच्च शब्दे स्वरूपेणासत्त्वादसिद्धम्। पौद्गलिकत्वात्तत्सिद्धिरित्यप्यपेशलं तदविशेषेप्यनुद्भूतस्वभावस्यानुपलम्भसम्भवाज्जलकनकादिसंयुक्तानले भासुररूपोष्णस्पर्शवदित्युक्तं तत्पौद्गलिकत्वसिद्धिप्रघट्टके। ये च विशेष्यासिद्धादयोऽसिद्धप्रकाराः परैरिष्टास्तेऽसत्सत्ताकत्वलक्षणासिद्धप्रकारान्नार्थान्तरं तल्लक्षणभेदाभावात्। यथैव हि स्वरूपासिद्धस्य स्वरूपतोऽसत्त्वादसत्सत्ताकत्वलक्षणमसिद्धत्वं तथा विशेष्यासिद्धादीनामपि विशेष्यत्वादिस्वरूपतोऽसत्त्वात्तल्लक्षणमेवासिद्धत्वम्। तत्र विशेष्यासिद्धो यथा अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्। विशेषणासिद्धो यथा अनित्यः शब्दश्चाक्षुषत्वे सति सामान्यवत्त्वात्। आश्रयासिद्धो यथाऽस्ति प्रधानं विश्वपरिणामित्वात्। आश्रयैकदेशासिद्धो यथा नित्याः परमाणुप्रधानात्मेश्वरा अकृतकत्वात्। व्यर्थविशेष्यासिद्धो यथाऽनित्याः परमाणवः कृतकत्वे सति सामान्यवत्त्वात्। व्यर्थविशेषणासिद्धो यथाऽनित्याः परमाणवः सामान्यवत्त्वे सति कृतकत्वात्। व्यर्थविशेष्यविशेषणश्चासावसिद्धश्चेति। व्यधिकरणासिद्धो यथाऽनित्यः शब्दः पटस्य कृतकत्वात्। व्यधिकरणश्चासावसिद्धश्चेति। ननु शब्दे कृतकत्वमस्ति तत्कथमस्यासिद्धत्वम्?

---

१ श्रावणज्ञानग्राह्यत्वमस्येति ॥ २ रूपादिलक्षणस्य। यस ॥ ३ चक्षुषा ॥ ४ परमार्थत प्रधान नास्तीति भाव ॥ ५ अयमाश्रयस्तत्र प्रधानेश्वरौ न स्त एव ॥ ६ कृतकत्वेनाऽनित्यत्वसिद्धिर्यत ॥ ७ व्यर्थं विशेषणं यस्य स तथोक्त, स चासावसिद्धश्चेति विग्रह ॥ ८ विशेष्यं च विशेषणं च विशेष्यविशेषणे। व्यर्थे विशेष्यविशेषणे यस्येति विग्रह ॥ ९ विभिन्नमधिकरणमस्येति विग्रह ॥

तदयुक्तं तस्य हेतुत्वेनाप्रतिपादितत्वात्[1]। न चान्यत्र प्रतिपादितमन्यत्र सिद्धं भवत्यतिप्रसङ्गात्[2]। भागासिद्धो[3] यथा नित्यः शब्दः प्रयत्नानन्तरीयकत्वात्[4]। व्यधिकरणासिद्धत्वं भागासिद्धत्वं च परप्रक्रियाप्रदर्शनमात्रं[5] न वस्तुतो हेतुदोषो व्यधिकरणस्याप्युदेष्यति शकटं कृत्तिकोदयात्, उपरि वृष्टो देवोऽधः पूरदर्शनादित्यादेर्गमकत्वप्रतीतेः। अविनाभावनिबन्धनो हि गम्यगमकभावः। न तु व्यधिकरणाव्यधिकरणनिबन्धनः स श्यामस्तत्पुत्रत्वात्, धवलः प्रासादः काकस्य कार्ष्ण्यादित्यादिर्वत्[6]। न च व्यधिकरणस्यापि गमकत्वेऽविद्यमानसत्ताकत्वलक्षणमसिद्धत्वं विरुध्यते। न हि पक्षेऽविद्यमानसत्ताकोऽसिद्धोभिप्रेतो गुरूणाम्[7]। किं तर्हि? अविद्यमाना साध्येनासाध्येनोभयेन वाऽविनाभाविनी सत्ता यस्यासावसिद्ध इति[11]। भागासिद्धस्याप्यविनाभावसद्भावाद्गमकत्वमेव। न खलु प्रयत्नानन्तरीयकत्वमनित्यत्वमन्तरेण[12] क्वापि दृश्यते। यावति[13] च तत्प्रवर्त्तते तावतः शब्दस्यानित्यत्वं ततः प्रसिद्ध्यति। अन्यस्य[14] त्वन्यतः कृतकत्वादेरिति। यद्वा प्रयत्नानन्तरीयकत्वहेतूपादानसामर्थ्यात्प्रयत्नानन्तरीयक एव शब्दोत्र पक्षः। तत्र चास्य सर्वत्र प्रवृत्तेः कथं भागासिद्धत्वमिति? अथेदानीं द्वितीयमसिद्धप्रकारं व्याचष्टे। अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमादिति। कुतोस्याविद्यमाननियततेत्याह। मुग्धबुद्धेर्वाष्पादिभावेन भूतसंघाते सन्देहात्[15]। न खलु साध्यसाधनयोरव्युत्पन्नप्रज्ञो धूमादिरीदृशो वाष्पादिश्चेदृश इति विवेचयितुं समर्थः। साङ्ख्यं प्रति परिणामी शब्दः कृतकत्वादिति चाविद्यमाननिश्चयः। कुत एतत्? तेनाज्ञातत्वात्। न ह्यस्याविर्भावादन्यत्कारणव्यापारादसतो रूपस्यात्मलाभलक्षणं कृतकत्वं प्रसिद्धम्[17]। सन्दिग्धविशेष्यादयोप्यविद्यमाननिश्चयतालक्षणातिक्रमाभावान्नार्थान्तरम्। तत्र सन्दिग्धविशेष्यासिद्धो यथाऽद्यापि रागादियुक्तः कपिलः[18] पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात्[19]। सन्दिग्धविशेषणासिद्धो यथाद्यापि रागादियुक्तः कपिलः सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वात्। एते एवासिद्धभेदाः केचिदन्यतरासिद्धाः[20] केचिदुभयासिद्धाः[21] प्रतिपत्तव्याः। ननु नास्त्यन्यतरासिद्धो हेत्वाभासः[22]। तथा हि। परेणासिद्ध[23] इत्युद्भाविते यदि वादी तत्साधकं प्रमाणं न प्रतिपादयति तदा प्रमाणाभासवदुभयोरसिद्धः। अथ प्रमाणं प्रतिपादयेत्तर्हि प्रमाणस्यापक्षपातित्वादुभयोरप्यसौ सिद्धः। अन्यथा[24] साध्यमप्यन्यतरासिद्धं न कदाचित्सिद्ध्येदिति व्यर्थः प्रमाणोपन्यासः

---

१ शब्दस्यस्य कृतकत्वस्य ॥ २ तथा प्रतिपादितमपि कृतकत्व शब्दे सिद्धं भविष्यतीत्युक्ते सत्याह ॥ ३ एकत्र हेतूपन्यासे सर्वत्र साध्यसिद्धिप्रसङ्गात् ॥ ४ पक्षैकभागे असिद्ध । आश्रयैकदेशासिद्धभागासिद्धयोरय विशेष । तत्राश्रयैकदेशोऽसिद्धो हेतुश्च सिद्ध एव । अत्र त्वाश्रयैकदेशे हेतुरसिद्ध आश्रयेकदेशस्तु सिद्ध एव ॥ ५ प्रयत्नानन्तरीयकत्व पुरुषव्यापारोत्पन्ने शब्दे न तु मेघादिशब्दे इति भाव ॥६ परे नैयायिकादय ॥७ जैनानाम् ॥८ अव्यधिकरणव्यधिकरणत्वमुभयत्रास्ति तथाप्यविनाभावाभावेनासद्धेतुत्वमिति भाव ॥ ९ न चाशङ्कनीयम् ॥ १० दृष्टान्तेन ॥ ११ हेतो ॥ १२ साधनम् ॥ १३ पुरुषव्यापारोत्पन्ने शब्दे ॥ १४ मेघादिशब्दस्य धर्मिरूपस्य ॥ १५ पृथिव्यादिलक्षणाना भूताना सघातो धूमस्तस्मिन् धूमे ॥ १६ विद्यमानधूमेपि ॥१७ यतस्तस्य सर्वस्य वस्तुन सद्भाव सदेति वच ॥ १८ साङ्ख्यगुरु ॥ १९ साङ्ख्येनोक्त भवता जैनाना विशेष्यासिद्धो हेतुरिति भाव ॥ २० वादिप्रतिवादिनोर्मध्ये एकस्य ॥ २१ वादिप्रतिवादिनो ॥ २२ किन्तर्हि? उभयासिद्ध एव ॥ २३ प्रतिवादिना ॥ २४ उपन्यस्तेपि निर्दुष्टे हेतुसाधके प्रमाणे यद्यसौ नोभयो सिद्ध स्यात्तर्हि ॥

स्यात्। इत्यप्यसमीचीनं यतो वादिना प्रतिवादिना वा सभ्यसमक्षं स्वोपन्यस्तो हेतुः प्रमाणतो यावन्न परं प्रति साध्यते तावत्तं प्रत्यस्य प्रसिद्धेरभावात्कथं नान्यतरासिद्धता? नन्वेवमप्यस्यासिद्धत्वं गौणमेव स्यादिति चेदेवमेतत्। प्रमाणतो हि सिद्धेरभावादसिद्धोसौ न तु स्वरूपतः । न खलु रत्नादिपदार्थस्तत्त्वतोऽप्रतीयमानस्तावत्कालं मुख्यतस्तदाभासो भवतीति ।

अथेदानीं विरुद्धहेत्वाभासस्य विपरीतस्येत्यादिना स्वरूपं दर्शयति। साध्यस्वरूपाद्विपरीतेन प्रत्यनीकेन निश्चितोऽविनाभावो यस्यासौ विरुद्धः। यथाऽपरिणामी शब्दः कृतकत्वादिति । कृतकत्वं हि पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनैवाविनाभूतं वहिरन्तर्वा प्रतीतिविषयः सर्वथा नित्ये क्षणिके वा तदभावप्रतिपादनात् । ये चाष्टौ विरुद्धभेदाः परैरिष्टास्तेप्येतल्लक्षणलक्षितत्वाविशेषतोत्रैवान्तर्भवन्तीत्युदाह्रियन्ते। सति सपक्षे चत्वारो विरुद्धाः। पक्षविपक्षव्यापक सपक्षावृत्तिर्यथा नित्यः शब्द उत्पत्तिधर्मकत्वात् । उत्पत्तिधर्मकत्वं हि पक्षीकृते शब्दे प्रवर्त्तते । नित्यविपरीते चानित्ये घटादौ विपक्षे । नाकाशादौ सत्यपि सपक्षे इति । विपक्षैकदेशवृत्तिः पक्षव्यापक सपक्षावृत्तिश्च यथा नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वात् । बाह्येन्द्रियग्रहणयोग्यतामात्रं हि बाह्येन्द्रियप्रत्यक्षत्वमत्र विवक्षितम्। तेनास्य पक्षव्यापकत्वम् । विपक्षैकदेशव्यापकत्वं चानित्ये घटादौ भावात्सुखादौ चाभावात् सिद्धम् । सपक्षावृत्तित्वं चाकाशादौ नित्येऽवृत्तेः। सामान्ये वृत्तिस्तु सामान्यवत्त्वे सतीति विशेषणाद्व्यवच्छिन्ना । पक्षविपक्षैकदेशवृत्तिः सपक्षावृत्तिश्च यथा सामान्यविशेषवती अस्मदादिबाह्यकरणप्रत्यक्षे वाग्मनसे नित्यत्वात्। नित्यत्वं हि पक्षैकदेशे मनसि वर्त्तते न वाचि । विपक्षे चास्मदादिबाह्यकरणाप्रत्यक्षे गगनादौ नित्यत्वं वर्त्तते न सुखादौ । सपक्षे च घटादावस्याऽवृत्तेः सपक्षावृत्तित्वम्। सामान्यस्य च सपक्षत्वं सामान्याविशेषवत्त्वविशेषणाद्व्यवच्छिन्नम् । योगिबाह्यकरणप्रत्यक्षस्य चाकाशादेरस्मदाद्यग्रहणादसपक्षत्वम्। पक्षैकदेशवृत्तिः सपक्षावृत्तिर्विपक्षव्यापको यथा नित्ये वाग्मनसे उत्पत्तिधर्मकत्वात्। उत्पत्तिधर्मकत्वं हि पक्षैकदेशे वाचि वर्त्तते न मनसि सपक्षे चाकाशादौ नित्ये न वर्त्तते । विपक्षे च घटादौ सर्वत्र वर्त्तते इति। तथाऽसति सपक्षे चत्वारो विरुद्धाः। पक्षविपक्षव्यापकोऽविद्यमानसपक्षो यथाकाशविशेषगुणः शब्दः प्रमेयत्वात्। प्रमेयत्वं हि पक्षे शब्दे वर्तते। विपक्षे चानाकाशविशेषगुणे घटादौ । न तु सपक्षे तस्यैवाभावात्। न ह्याकाशे शब्दादन्यो विशेषगुणः कश्चिदस्ति यः सपक्षः स्यात्। परममहापरिमाणादेरन्यत्रापि प्रवृत्तितः साधारणगुणत्वात्। पक्षविपक्षैकदेशवृत्तिरविद्यमान-

---

१ साध्यस्यान्यतरासिद्धत्वात् ॥ २ यावत्प्रमाणत सिद्धेरेवाभावस्तावत्स्वरूपतोप्यसिद्ध कुतो न स्यादित्युक्ते सत्याह ॥ ३ सद्द ॥ ४ हेतो ॥ ५ एकान्वभाव्यऽक्षणिकलक्षणो नित्यैकलक्षण ॥ ६ साध्यविपरीतेन ॥ ७ नैयायिकादिभि ॥ ८ एतत्=विपरीतनिश्चिताविनाभावता ॥ ९ सपक्षे अवृत्तिरवर्त्तनं यस्य स तयोक्त ॥ १० नित्यरूपे सपक्षे ॥ ११ नित्यत्वस्य हेतो ॥ १२ सामान्यस्य सपक्षत्वं भविष्यतीत्युक्ते सत्याह ॥ १३ अनित्यत्वेन ॥ १४ आदिना सख्यादेश्च ॥ १५ आत्मादावपि ॥

विपक्षव्यापको यथा द्रव्याणि दिक्कालमनांस्यमूर्तत्वात् । अमूर्तत्वं हि पक्षस्यैकदेशे दिक्काले वर्तते न मनसि । सपक्षस्य च द्रव्यरूपस्यैकदेशे आत्मादौ वर्तते, न घटादौ । विपक्षे चाद्रव्यरूपे गुणादौ सर्वत्रेति । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथाऽद्रव्याणि दिक्कालमनांस्यमूर्तत्वात् । अत्रापि प्राक्तनमेव व्याख्यानमद्रव्यरूपस्य गुणादेस्तु सपक्षतेति विशेषः । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा पृथिव्यप्तेजोवाय्वाकाशान्यऽनित्यान्यऽगन्धवत्त्वात् । अगन्धवत्त्वं हि पृथिवीतोऽन्यत्र पक्षैकदेशे वर्तते, न तु पृथिव्याम् । सपक्षे चानित्ये गुणे कर्मणि च । विपक्षे चात्मादौ नित्ये सर्वत्र वर्तत इति ।

अथेदानीमकिञ्चित्करस्वरूपं सिद्ध इत्यादिना व्याचष्टे । सिद्धे निर्णीते प्रमाणान्तरात्साध्ये प्रत्यक्षादिबाधिते च हेतुर्न किञ्चित्करोतीत्यकिञ्चित्करोऽनर्थको यथा श्रावणः शब्दः शब्दत्वादिति । न ह्यसौ स्वसाध्यं साधयति तस्याध्यक्षादेव प्रसिद्धेः । नापि साध्यान्तरं तत्रावृत्तेरित्यत आह किञ्चिदकरणात् । प्रत्यक्षादिबाधिते च साध्येऽकिञ्चित्करोसौ, अनुष्णोग्निर्द्रव्यत्वादित्यादौ यथा । कुतोस्याऽकिञ्चित्करत्वमित्याह किञ्चित्कर्तुमशक्यत्वात् । ननु प्रसिद्धः प्रत्यक्षानुमानागमलोकस्ववचनैश्च बाधितः पक्षाभासः प्रतिपादितः । तद्दोषेणैव चास्य दुष्टत्वात् पृथगकिञ्चित्कराभिधानमनर्थकमित्याशङ्क्य लक्षण एवेत्यादिना प्रतिविधत्ते । लक्षणे लक्षणव्युत्पादनशास्त्रे एवासावकिञ्चित्करत्वलक्षणो दोषो विनेयव्युत्पत्त्यर्थं व्युत्पाद्यते । न तु व्युत्पन्नानां प्रयोगकाले । कुत एतदित्याह व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वात् ।

अथेदानीं दृष्टान्ताभासप्रतिपादनार्थं दृष्टान्तेत्याद्युपक्रमते । दृष्टान्तो ह्यन्वयव्यतिरेकभेदाद्द्विधेत्युक्तम् । तद्विपरीतस्तदाभासोपि तद्भेदाद्द्विधैव द्रष्टव्यः । तत्रान्वये दृष्टान्ताभासा असिद्धसाध्यसाधनोभयाः । अपौरुषेयः शब्दोऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवदिति । इन्द्रियसुखे हि साधनममूर्तत्वमस्ति । साध्यं त्वपौरुषेयत्वं नास्ति पौरुषेयत्वात्तस्य । परमाणुषु तु साध्यमपौरुषेयत्वमस्ति, साधनं त्वमूर्तत्वं नास्ति मूर्तत्वात्तेषाम् । घटे तूभयमपि पौरुषेयत्वान्मूर्तत्वाच्चास्येति । न केवलमेत एवान्वये दृष्टान्ताभासाः किन्तु विपरीतान्वयश्च । विपरीतोन्वयो व्याप्तिप्रदर्शनं यस्मिन्निति[6] । यथा यदपौरुषेयं तदमूर्तमिति । यदमूर्तं तदपौरुषेयमिति हि साध्येन व्याप्ते साधने प्रदर्शनीये कुतश्चिद्व्यामोहाद्यदपौरुषेयं तदमूर्तमिति प्रदर्शयति । न चैवं प्रदर्शनीयं विद्युदादिनातिप्रसङ्गादिति । विद्युद्वनकुसुमादौ ह्यऽपौरुषेयत्वेप्यमूर्तत्वं नास्तीति । व्यतिरेके दृष्टान्ताभासा असिद्धतद्व्यतिरेकाः । असिद्धस्तेषां साध्यसाधनोभयानां व्यतिरेको वृत्तिर्येषु ते तथोक्ताः । यथाऽपौरुषेयः शब्दोऽमूर्तत्वादित्युक्त्वा यन्नापौरुषेयं तन्नामूर्त्तं [ पौरुषेयं तन्नामूर्तं ] परमाण्विन्द्रियसुखाकाशवदिति व्यतिरेकमाह[7] । परमाणुभ्यो ह्यमूर्तत्वव्यावृत्तावप्यऽपौरुषेयत्वं न व्यावृत्तमपौरुषेयत्वात्तेषाम् ।

---

१ इयत्तावच्छिन्नपरिमाणयोगित्वं मूर्तिमत्त्वम् । निर्गुणा गुणा इति वचनादियत्तावच्छिन्नपरिमाणाभाव. ॥ २ अबादिषु ॥ ३ उपन्यासकाले ॥ ४ पक्षाभासलक्षणेन ॥ ५ अन्वयव्यतिरेकभेदात् ॥ ६ योग्निमान्स धूमवानितियथा ॥ ७ दृष्टान्तम् ॥

इन्द्रियसुखे त्वपौरुषेयत्वव्यावृत्तावप्यमूर्त्तत्वं न व्यावृत्तममूर्त्तत्वात्तस्य । आकाशे तूभयं न व्यावृत्तमपौरुषेयत्वादमूर्त्तत्वाच्चास्येति । न केवलमेत एव व्यतिरेके दृष्टान्ताभासाः किंतु विपरीतव्यतिरेकश्च । विपरीतो व्यतिरेको व्यावृत्तिप्रदर्शनं यस्येति । यथा यन्नामूर्त्तं तन्नापौरुषेयमिति । यन्नापौरुषेयं तन्नामूर्त्तमिति हि साध्यव्यतिरेके साधनव्यतिरेकः प्रदर्शनीयस्तथैव प्रतिबन्धादिति । अव्युत्पन्नव्युत्पादनार्थं पञ्चावयवोपि प्रयोगः प्राक् प्रतिपादितस्तत्प्रयोगाभासः कीदृश इत्याह बालप्रयोगाभासः पञ्चावयवेषु कियद्धीनता । यथाग्निमानयं देशो धूमवत्त्वात् । यदित्थं तदित्थं यथा महानस इति । धूमवांश्चायमिति वा । यो ह्यव्युत्पन्नप्रज्ञोऽनुमानप्रयोगे पञ्चावयवे गृहीतसङ्केतः स उपनयनिगमनरहितस्य निगमनरहितस्य वानुमानप्रयोगस्य तदाभासतां मन्यते । न केवलं कियद्धीनतैव बालप्रयोगाभासः किंतु तद्विपर्ययश्च । तेषामवयवानां विपर्ययस्तत्प्रयोगाभासो यथा तस्मादग्निमान्धूमवांश्चायमिति । स ह्युपनयपूर्वकं निगमनप्रयोगं साध्यप्रतिपत्त्यङ्गं मन्यते, नान्यथा । कुत एतदित्याह स्पष्टतया प्रकृतस्य साध्यस्य प्रतिपत्तेरयोगात् । यो हि यथा गृहीतसङ्केतः स तथैव वाक्यप्रयोगात्प्रकृतमर्थं प्रतिपद्येत नान्यथा लोकवत् । यस्तु सर्वप्रकारेण वाक्प्रयोगे व्युत्पन्नप्रज्ञः स यथा यथा वाक्प्रयुज्यते तथा तथा प्रकृतमर्थं प्रतिपद्येत लोके सर्वभाषाप्रवीणपुरुषवत् । तथा च न तं प्रत्यनन्तरोक्तः कश्चित्प्रयोगाभास इति ।

अथेदानीमागमाभासप्ररूपणार्थमाह । रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् । रागाक्रान्तो हि पुरुषः क्रीडावशीकृतचित्तो विनोदार्थं वस्तु किंचिदप्राप्नुवन्माणवकैरपि सह क्रीडाभिलाषेणेदं वाक्यमुच्चारयति । यथा नद्यास्तीरे मोदकराशयः सन्ति धावध्वं माणवका इति । तथा कश्चित्कार्ये व्यासक्तचित्तो माणवकैः कदर्थितो द्वेषाक्रान्तोप्यात्मीयस्थानात्तदुच्चाटनाभिलाषेणेदमेव वाक्यमुच्चारयति । मोहाक्रान्तस्तु सांख्यादिरङ्गुल्यग्रे हस्तियूथशतमास्त इति चोच्चारयति । न खल्वज्ञानमहामहीधराक्रान्तः पुरुषो यथावद्वस्तु विवेचयितुं समर्थः । ननु चैवंविधपुरुषवचनोद्भूतं ज्ञानं कस्मादागमाभासमित्याह विसंवादात् । प्रतिपन्नार्थविचलनं हि विसंवादो विपरीतार्थोपस्थापकप्रमाणावसेयः । स चैवात्रास्तीत्यागमाभासता ।

अथेदानीं संख्याभासोपदर्शनार्थमाह । प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्याभासम् । कस्मादित्याह लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिद्धेः । कुतोऽसिद्धिरित्याह अतद्विषयत्वात् । यथा चाध्यक्षस्य परलोकादिनिषेधादिरविषयस्तथा विस्तरतो द्वितीयपरिच्छेदे प्रतिपादितम् । अमुमेवार्थं समर्थयमानः सौगतादिपरिकल्पितां च संख्यां निराकुर्वाणः सौगतेत्याद्याह । यथैव हि सौगतसांख्ययौगप्राभाकरजैमिनीयानां मते प्रत्यक्षानु-

१ कुत इत्याह ॥ २ अविनाभावात् ॥ ३ अनुमानप्रयोग ॥ ४ बालव्युत्पत्त्यर्थमेव ॥ ५ पञ्चावयवानुमानवादी बालो वा ॥ ६ निगमनपूर्वकमुपनयप्रयोग न मन्यते ॥ ७ क्रीडाकारणम् ॥ ८ दृश्यमानव्यतिरिक्तम् ॥ ९ सांख्यमते सर्वं सर्वत्र विद्यते यत ॥ १० रजते नेदं रजतमिति यथा ॥ ११ रागाद्याक्रान्तपुरुषवचनजाते ज्ञाने ॥ १२ आदिना परबुद्ध्यादिग्रहः ॥

मानागमोपमानार्थापत्त्यभावैः प्रमाणैरेकैकाधिकैर्व्याप्तिर्न सिध्यत्यतद्विषयत्वात् तथा प्रकृतमपि । प्रयोगः । यद्यस्याऽविषयो न ततस्तत्सिद्धिः । यथा प्रत्यक्षानुमानाद्यविषयो व्याप्तिर्न ततः सिद्धिसौधशिखरमारोहति । अविषयश्च परलोकनिषेधादिः प्रत्यक्षस्येति । मा भूत्प्रत्यक्षस्य तद्विषयत्वमनुमानादेस्तु भविष्यतीत्याह अनुमानादेस्तद्विषयत्वे प्रमाणान्तरत्वं चार्वाकं प्रति, सौगतादीन्प्रति तर्कस्यैव व्याप्तिगोचरत्वे । कुत एतदित्याह अप्रमाणस्याऽव्यवस्थापकत्वात्, प्रतिभासादिभेदस्य च भेदकत्वादिति । प्रतिपादितश्चायं प्रतिभासभेदः सामग्रीभेदश्चाध्यक्षादीनां प्रपञ्चतस्तद्द्वेधेत्यत्रेत्युपरम्यते ।

अथेदानीं विषयाभासप्ररूपणार्थं विषयेत्याद्युपक्रमते । विषयाभासाः-सामान्यं यथा सत्ताद्वैतवादिनः । केवलं विशेषो वा यथा सौगतस्य । द्वयं वा स्वतन्त्रं यथा यौगस्य । कुतोस्य विषयाभासतेत्याह तथाऽप्रतिभासनात् कार्याऽकरणाच्च । स ह्येवंविधोर्थः स्वयमसमर्थः समर्थो वा कार्यं कुर्यात्? न तावत्प्रथमः पक्षः स्वयमसमर्थस्याऽकारकत्वात्पूर्ववत् । नापि द्वितीयः पक्षः समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात्, परापेक्षणे परिणामित्वमन्यथा तदभावादिति । एतच्च सर्वं विषयपरिच्छेदे विस्तरतोभिहितमिति नेहाभिधीयते ।

अथेदानीं फलाभासं प्ररूपयन्नाह फलाभासं प्रमाणादभिन्नं भिन्नमेव वा । कुतोस्य फलाभासतेत्याह । अभेदे तद्व्यवहारानुपपत्तेः । न खलु सर्वथा तयोरभेदे इदं प्रमाणमिदं फलमिति व्यवहारः शक्यः प्रवर्त्तयितुम् । ननु व्यावृत्त्या तयोः कल्पना भविष्यतीत्याह व्यावृत्त्यापि न तत्कल्पना फलान्तराद्व्यावृत्त्याऽफलत्वप्रसङ्गात् । प्रमाणान्तराद्व्यावृत्तौ वाऽप्रमाणत्वस्येति । एतच्च फलपरीक्षायां प्रपञ्चितमिति पुनर्नेह प्रपञ्च्यते । तस्माद्वास्तवो भेदः प्रमाणफलयोस्तद्व्यवहारान्यथानुपपत्तेरिति प्रेक्षादक्षैः प्रतिपत्तव्यम् । अस्तु तर्हि सर्वथा तयोर्भेद इत्याशङ्कापनोदार्थमाह भेदे त्वात्मान्तरवत्तदनुपपत्तिः । समवायेतिप्रसङ्ग इत्यप्युक्तं तत्रैव ।

अथेदानीं प्रतिपन्नप्रमाणतदाभासस्वरूपाणां विनेयानां प्रमाणतदाभासावित्यादिना फलमादर्शयति । प्रतिपादितस्वरूपौ हि प्रमाणतदाभासौ यथावत्प्रतिपन्नाप्रतिपन्नस्वरूपौ जयेतरव्यवस्थाया निबन्धनं भवतः । तथा हि । चतुरङ्गवादमुररीकृत्य विज्ञातप्रमाणतदाभासस्वरूपेण वादिना सम्यक्प्रमाणे स्वपक्ष-

---

१ अनुमानस्य ॥ २ परलोकनिषेधादे ॥ ३ अस्तु प्रामाण्यमनुमानस्य किन्तु तत्प्रत्यक्षे एवान्तर्भविष्यतीत्युक्ते सत्याह ॥ ४ तत प्रत्यक्षेऽनुमानस्यान्तर्भावाभाव इत्यर्थ ॥ ५ अन्योन्यनिरपेक्षम् ॥ ६ केवलसामान्यतया केवलविशेषतया द्वयस्य स्वतन्त्रतया वा ॥ ७ केवलसामान्यरूप केवलविशेषरूपश्च ॥ ८ पश्चादपि ॥ ९ परस्य ॥ १० अनपेक्षाकारपरित्यागेनापेक्षाकारेण परिणमनात् ॥ ११ सर्वथा ॥ १२ तयो प्रमाणफलयो ॥ १३ अफलाद्व्यावृत्ति कथ यथा तथा फलान्तराद्व्यावृत्त्या भाव्यम् । तथा सति फलान्तराद्व्यावृत्ति फलविशेषाद्व्यावृत्तिरित्यर्थ । अफलत्वप्रसङ्ग गोर्व्यावृत्त्याऽगोत्व भवति यथा ॥ १४ वास्तवभेदाभावे ॥ १५ वादिना प्रतिपन्नाप्रतिपन्नस्वरूपौ प्रतिवादिनापि तथेत्यर्थ ॥ १६ सभ्यसभापतिवादिप्रतिवादीनि चत्वार्यङ्गानि यस्य स तथोक्त ॥

हितत्वं च वादेऽसिद्धं तस्यैव तत्संरक्षणार्थत्वोपपत्तेः । तथा हि । वाद ऐव तत्त्वाध्यवसायसंरक्षणार्थः प्रमाणतर्कसाधनोपालम्भत्वे सिद्धान्ताविरुद्धत्वे पञ्चावयवोपपन्नत्वे च सति पक्षप्रतिपक्षपरिग्रहवत्त्वात् । यस्तु न तथा स न तथा । यथाक्रोशादिः । तथा च वादस्तस्मात्तत्त्वाध्यवसायसंरक्षणार्थ इति । न चायमसिद्धो हेतुः प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद इत्यभिधानात् । पक्षप्रतिपक्षपरिग्रहवत्त्वादित्युच्यमाने जल्पोपि तथा स्यादित्यवधारणविरोधः । तत्परिहारार्थं प्रमाणतर्कसाधनोपालम्भत्वविशेषणम् । न हि जल्पे तदस्ति यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यभिधानात् । नापि वितण्डा तथानुषज्यते जल्पस्यैव वितण्डारूपत्वात्, स प्रतिपक्षस्थापनाहीनो वितण्डेति वचनात् । स यथोक्तो जल्पः प्रतिपक्षस्थापनाहीनतया विशेपितो वितण्डात्वं प्रतिपद्यते । वैतण्डिकस्य च स्वपक्ष एव साधनवादिपक्षापेक्षया प्रतिपक्षो हस्तिप्रतिहस्तिन्यायेन । तस्मिन्प्रतिपक्षे वैतण्डिको हि न साधनं वक्ति । केवलं परपक्षनिराकरणायैव प्रवर्त्तते इति व्याख्यानात् । पक्षप्रतिपक्षौ च वस्तुधर्मावेकाधिकरणौ विरुद्धावेककालावनवसितौ । वस्तुधर्माविति वस्तुविशेपौ वस्तुनः । सामान्येनाधिगतत्वाद्विशेषतोऽनधिगतत्वाच्च विशेपावगमनिमित्तो विचारः । एकाधिकरणाविति नानाधिकरणौ विचारं न प्रयोजयत उभयोः प्रमाणोपपत्तेः । तद्यथा । अनित्या बुद्धिर्नित्य आत्मेति । अविरुद्धावप्येवं विचारं न प्रयोजयतः । तद्यथा । क्रियावद्द्रव्यं गुणवच्चेति । एककालाविति भिन्नकालयोर्विचाराप्रयोजकत्वं प्रमाणोपपत्तेः । यथा क्रियावद्द्रव्यं निष्क्रियं च कालभेदे सति । तथाऽवसितौ विचारं न प्रयोजयतो निश्चयोत्तरकालं विवादाभावादित्यनवसितौ तौ निर्दिष्टौ । एवंविशेपणौ धर्मौ पक्षप्रतिपक्षौ । तयोः परिग्रह इत्थंभावनियमः एवंधर्मायं धर्मी नैवंधर्मेति च । ततः प्रमाणतर्कसाधनोपालम्भत्वविशेपणस्य पक्षप्रतिपक्षपरिग्रहस्य जल्पवितण्डयोरसम्भवात् सिद्धं वादस्यैव तत्त्वाध्यवसायसंरक्षणार्थत्वं लाभपूजाख्यातिवत् । तत्त्वस्याध्यवसायो

---

१ हेतु ॥ २ न जल्पवितण्डे इत्यर्थ ॥ ३ एवकारेण ॥ ४ केवलम् ॥ ५ यथोक्तेन वादलक्षणेनोपपन्न । यथोक्तोपपन्नग्रहणेन प्रमाणतर्कसाधनोपालम्भमात्रमुपलक्ष्यते न समस्तं वादलक्षणं सिद्धान्ताविरुद्ध पञ्चावयवोपपन्न इत्युत्तरपदद्वयस्य निग्रहस्थाननियमनिबन्धनस्यात्र सम्बन्धाऽभावात् जल्पे समस्तनिग्रहस्थानासम्भवात् ॥ ६ तत्त्वाध्यवसायसंरक्षार्थत्वेन ॥ ७ प्रतिवादि ॥ ८ हस्त्येव प्रतिहस्ती हस्त्यन्तरापेक्षया । तस्य न्यायेन ॥ ९ स्वपक्षसाधनाय हेतुम् ॥ १० प्रतिवादी य कश्चन सिद्धान्तमवलम्ब्यावस्थित प्रतिपक्षभङ्गमात्रेण विजयी भवति न तु जल्पवत्स्वपक्षसाधनेनेति भाव ॥ ११ पक्षप्रतिपक्षयोर्लक्षणं कृत्वा जल्पवितण्डयो पक्षप्रतिपक्षपरिग्रहत्वं निराकरोति जैन ॥ १२ शब्दायाश्रितनित्यानित्यत्वादिलक्षणौ ॥ १३ शब्दादिलक्षणस्य ॥ १४ भवतीति शेष ॥ १५ एकाश्रयौ नित्यानित्यलक्षणौ यथा ॥ १६ प्रवर्त्तयते यत इत्यध्याहार्यम् ॥ १७ प्रति ॥ १८ वादिप्रतिवादिनौ ॥१९ नानाधिकरणयोर्वस्तुधर्मयो ॥२० वस्तुधर्मद्वयस्यैकाधिकरणत्वे सति विचारो भवति, न तु नानाधिकरणे सतीति भाव ॥२१ अनित्यस्य बुद्ध्यधिकरण नित्यस्य त्वात्माधिकरणम् । अत्र यथा प्रमाणोपपत्तेविचारो न स्यात् ॥ २२ वादिप्रतिवादिनौ ॥ २३ वादिप्रतिवादिनो ॥ २४ प्रति ॥ २५ अनित्यलक्षण ॥ २६ शब्दादि ॥ २७ नित्यलक्षण ॥ २८ प्रमाणतर्काभ्या पक्षप्रतिपक्षौ साधनोपालम्भस्वरूपो जल्पवितण्डयोर्न भवतस्तत्र तयोर्विचारत्वात् ॥ २९ लाभपूजाख्यातयो यथा वादस्यैव ॥

हि निश्चयस्तस्य संरक्षणं न्यायबलान्निखिलबाधक[1]निराकरणम्। न पुनस्तत्र बाधकमुद्भावयतो यथाकथञ्चिन्निर्मुखीकरणं लकुटचपेटादिभि[2]स्तत्करणस्यापि तत्त्वाध्यवसायसंरक्षणार्थत्वानुषङ्गात्। न[3] च जल्पवितण्डाभ्यां निखिलबाधकनिराकरणं छलजात्युपक्रम[4]परतया ताभ्यां संशयस्य विपर्ययस्य वा जननात्। तत्त्वाध्यवसाये सत्यपि हि पर[5]निर्मुखीकरणे प्रवृत्तौ प्राश्निकास्तत्र संशेरते[6] विपर्ययस्यन्ति वा। किमस्य तत्त्वाध्यवसायोस्ति किं वा नास्तीति नास्त्येवेति वा? परनिर्मुखीकरणमात्रे तत्त्वाध्यवसायरहितस्यापि प्रवृत्त्युपलम्भात् तत्त्वोपप्लववादिवत्। तथा[7] चाख्यातिरेवास्यं[8] प्रेक्षावत्सु स्यादिति'' कुतः पूजा लाभो वा? ततः[13] सिद्धश्चतुरङ्गो वादः स्वा[13]भिप्रेतार्थव्यवस्थापनफलत्वाद्वादत्वाद्वा लोकप्रख्यातवादवत्। एकाङ्गस्यापि वैकल्ये प्रस्तुतार्थाऽपरिसमाप्तेः। तथा हि। अहङ्कारग्रहग्रस्तानां मर्यादातिक्रमेण प्रवर्तमानानां शक्ति[14]त्रयसमन्वितौदासीन्या[15]दि[16]गुणोपेतसभापतिमन्तरेण "अपक्षपतिताः प्राज्ञाः सिद्धान्तद्वय[17]वेदिनः। असद्वादनिषेद्धारः प्राश्निकाः प्रग्रहा[18] इव" इत्येवंविधप्राश्निकांश्च विना को नाम नियामकः स्यात्? प्रमाणतदाभासपरिज्ञानसामर्थ्योपेतवादिप्रतिवादिभ्यां च विना कथं वादः प्रवर्तेत[19]? ननु चास्तु चतुरङ्गता वादस्य। जयेतरव्यवस्था तु च्छलजातिनिग्रहस्थानैरेव न पुनः प्रमाणतदाभासयोर्दुष्टतयोद्भावितयोः परिहृतापरिहृतदोषमात्रेणेत्यप्यपेशलं छलादीनामसदुत्तरत्वेन स्वपरपक्षयोः साधनदूषणत्वासम्भवतो जयेतरव्यवस्थानिबन्धनत्वायोगात्[21]। ततः परेषां[22] सामान्यतो विशेषतश्च च्छलादीनां लक्षणप्रणयनमयुक्तमेव। तत्र सामान्यतश्छललक्षणं "वचनविघातोर्थविकल्पोपपत्त्या[22] छलम्" इति। तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति। तत्र वाक्छललक्षणं तेषामविशेषाभिहितेर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलमिति। अस्योदाहरणम्:—आढ्यो वै वैधवेयोयं वर्तते नवकम्बल इत्युक्ते[23] प्रत्यवस्थानं[24]— कुतोस्य नवकम्बलाः? नवकम्बलशब्दे हि सामान्यवाचिन्यत्र प्रयुक्ते नवोस्य कम्बलो जीर्णो नैवेत्यभिप्रायो वक्तुः। तस्मादन्यस्यासम्भाव्यमानार्थस्य कल्पना नवास्य कम्बला नाष्टाविति। एवं प्रत्यवस्थातुरन्यायवादित्वात्पराजयः। न खलु प्रेक्षावतां तत्त्वपरीक्षायां छलेन प्रत्यवस्थानं युक्तमिति यौगा[25]स्तेप्यतत्त्वज्ञाः[26]। यतो यद्येतावतैव[27] जिगीषुर्निगृह्येत तर्हि पत्रवाक्यमनेकार्थं व्याचक्षाणोपि निगृह्यताम्। न चैवम्। यत्र हि पक्षे वादिप्रतिवादिनोर्विप्रतिपत्त्या प्रवृत्तिस्तत्सिद्धेरेवैकस्य जयोन्यस्य पराजयः न त्वनेकार्थत्वप्रतिपादनमात्रम्। एवं चाढ्यो वै वैधवेयो नवकम्बलत्वादेवदत्तवदिति प्रयोगे यदि वक्तुर्नवः कम्बलोस्येति नवास्य

१ बाधक विरुद्धप्रमाणम् ॥ २ तस्य परस्य ॥ ३ जल्पवितण्डाभ्या निखिलबाधकनिराकरण भविष्यतीत्युक्ते सत्याह ॥ ४ उपक्रम प्रस्ताव ॥ ५ पर प्रतिवादी ॥ ६ सत्याम् ॥ ७ सन्देह कुर्वन्ति ॥ ८ तत्त्वाध्यवसायाभावेन ॥ ९ प्रसिद्धि ॥ १० वादिन ॥ ११ हेतो ॥ १२ चतुरङ्गलाभावसाधनमविजिगीषुविषयत्वसाधन, तत्त्वाध्यवसायसरक्षणार्थरहितत्वसाधनमसिद्ध यत ॥ १३ सन्दिग्धानैकान्तिकत्वपरिहारमाह ॥ १४ प्रभूत्साहमन्त्रभेदात् ॥ १५ उदासीन पक्षपातरहित ॥ १६ आदिना पापभीरुतादिसग्रह ॥ १७ वादिप्रतिवादिनो ॥ १८ शकटोपयुक्तबलीवर्दद्वन्द्वधरणरज्जव (बलीवर्दावरोधकरज्जव) इव ॥ १९ इति चतुरङ्गत्व सिद्ध वादस्य ॥ २० इति चातुर्विध्यम् ॥ २१ छलजात्यादिवादिनाम् ॥ २२ न मुखविधानेन ॥ २३ प्रतिज्ञादिना ॥ २४ दूषणदातु प्रतिवादिन ॥ २५ गुरुशिष्याणाम् ॥ २६ ब्रुवन्ति ॥ २७ अनेकार्थप्रतिपादनमात्रेण ॥ २८ छलवादी ॥

कम्बला इति चार्थद्वयं नवकम्बल इति शब्दस्याभिप्रेतं भवति तदा कुतोस्य नव कम्बला इति प्रत्यवतिष्ठमानो[1] हेतोरसिद्धतामेवोद्भावयति । अन्यस्तु[2] तदुभयार्थसमर्थनेन तदेकतरार्थसमर्थनेन वा हेतुसिद्धिं प्रदर्शयति । नवस्तावदेकः कम्बलोस्य प्रतीतो भवता[3], अन्येऽप्यष्टौ[4] कम्बला गृहे तिष्ठन्तीत्युभयथा नवकम्बलत्वस्य सिद्धेर्नासिद्धतोद्भावनीया । नवकम्बलयोगित्वस्य[5] वा हेतुत्वेनोपादानात्सिद्ध एव हेतुः । इति स्वपक्षसिद्धौ सत्यामेव वादिनो जयः परस्य च पराजयो नान्यथा[6] । तन्न वाक्छलं युक्तम् । नापि सामान्यच्छलम् । तस्य हि लक्षणं सम्भवतोर्थस्या[7]तिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलमिति । तथा हि[8] । विद्याचरणसम्पत्तिर्ब्राह्मणे सम्भवेदित्युक्ते[9]ऽस्य वाक्यस्य विघातोऽर्थविकल्पोपपत्त्या[10]ऽसद्भूतार्थकल्पनया क्रियते । यदि ब्राह्मणे विद्याचरणसम्पत्सम्भवति[11] व्रात्येपि[12] सम्भवेद्ब्राह्मणत्वस्य तत्रापि सम्भवात् । तदिदं ब्राह्मणैरेवं[13] विवक्षितमर्थं विद्याचरणसम्पल्लक्षणं क्वचिद्ब्राह्मणे तादृश्येति[14][15] । क्वचित्तु व्रात्ये[16]ऽत्येति[17] तदभावेपि भावात्[18] । इत्यतिसामान्यम्[19] । तेन योगाद्वक्तुरभिप्रेतादर्थात्सद्भूतादन्यस्यासद्भूतार्थस्य कल्पना सामान्यच्छलम् । तच्चायुक्तं हेतुदोषस्यानैकान्तिकत्वस्यात्रापरेणो[20]द्भावनात् । न चानैकान्तिकत्वोद्भावनमेव सामान्यच्छलमनित्यः[21] शब्दः प्रमेयत्वाद्घटवदित्यादेरपि सामान्यच्छलत्वानुषङ्गात् । अत्रापि[22] हि प्रमेयत्वं क्वचिद्घटादावनित्यत्वमेति । आकाशादौ तदभावेपि भावादत्येतीति । तथाप्यस्या[23]नैकान्तिकत्वेपि प्रकृतेपि तदस्तु विशेषाभावात् । तन्न सामान्यच्छलमप्युपपन्नम् । नाप्युपचारच्छलम् । तस्य हि लक्षणं धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध[24] उपचारच्छलमिति । धर्मस्य हि क्रोशनादेर्विकल्पोऽध्यारोप[25]स्तस्य निर्देशे मञ्चाः क्रोशन्ति गायन्तीत्यादौ[26] तात्स्थ्यात्तच्छब्दोपचारेणासद्भूतार्थस्य तु परिकल्पनं कृत्वा परेण[27] प्रतिषेधो विधीयते, न मञ्चाः क्रोशन्ति किन्तु मञ्चस्थाः पुरुषाः क्रोशन्तीति । तच्च परस्य पराजयाय जायते यथावक्तुरभिप्रायमप्रतिषेधात्[28] । शब्दप्रयोगो हि लोके प्रधानभावेन गुणभावेन च प्रसिद्धः । ततो यदि वक्तुर्गौणोर्थोऽभिप्रेतस्तदा तस्यानुज्ञानं प्रतिषेधो वा विधातव्यः[29] । अथ प्रधानभूतस्तदा तस्य तौ[30] विति । यदा तु वक्ता गौणमर्थमभिप्रेति प्रधानभूतं परिकल्प्य परः प्रतिषेधति तदा तेन[31] स्वमनीषा प्रतिषिद्धा स्यान्न परस्या[32]भिप्राय[33] इति नास्यायमुपालम्भः[34] स्यात् । तदनुपालम्भाच्चासौ[35][36] पराजीयते इत्यप्यविचारितरमणीयं यतो यद्येतावतैवासौ[37] निगृह्येत तर्हि

१ प्रतिवादी ॥ २ वादी ॥ ३ प्रतिवादिना ॥ ४ अन्येऽप्यष्टौ गृहे तिष्ठन्तीति, नवकम्बलयोगित्वस्य वा हेतुत्वेनोपादानात्सिद्ध एव हेतुरित्युभयथा नवकम्बलत्वस्य सिद्धेर्नासिद्धताद्भावनीया । इति स्वपक्षसिद्धौ सत्यामेव वादिनो जय परस्य च पराजयो नान्यथेति वाक्यरचना द्रष्टव्या ॥ ५ नवो नूतन ॥ ६ स्वपक्षसिद्ध्यभावे जयपराजयौ न भवतो वादिप्रतिवादिनोरिति ॥ ७ जायमानस्य ॥ ८ अथ विद्याचरणसम्पत्तिमान्भवति ब्राह्मणत्वात्तादृशब्राह्मणवदिति ॥९ वादिना ॥ १० अर्थस्य विकल्पो भेदस्तस्योपपत्त्या कृत्वा ॥ ११ तर्हि ॥ १२ भ्रष्टे ब्राह्मणे ॥ ॥ १३ कर्तृ ॥ १४ व्यक्त्यन्तरे सपक्षे ॥ १५ प्राप्नोति ॥ १६ विपक्षरूपे ॥ १७ विद्याचरणसम्पल्लक्षणमर्थं ब्राह्मणत्व अतिक्रम्यवर्तते इत्यर्थ ॥ १८ ब्राह्मणत्वस्य ॥ १९ अतिशयेन ब्राह्मणत्वम् ॥ २० अनुमाने ॥ २१ अन्यथा ॥ २२ अनुमाने ॥ २३ अतिसामान्ययोगेपि ॥ २४ मुख्यार्थप्रतिषेध ॥ २५ उपचार ॥ २६ प्रयोगे कृते ॥ २७ प्रतिवादिना ॥ २८ वक्त्रऽभिप्रायानतिक्रमेण प्रतिषेध स्यादिति भाव ॥ २९ अनुज्ञानप्रतिषेधो विधातव्यौ । इय व्यवस्था भवतु ॥ ३० सा व्यवस्थात्रापि भविष्यतीत्युक्ते सत्याह ॥ ३१ प्रतिवादिना ॥ ३२ वादिन ॥ ३३ प्रतिषिद्ध ॥ ३४ वादिन ॥ ३५ पराजय ॥ ३६ तस्य=वादिन ॥ ३७ प्रतिवादी ॥ ३८ गौणेर्थेऽभिप्रेते मुख्यार्थप्रतिषेधमात्रेण ॥

यौगोपि सकलशून्यवादिनं प्रति मुख्यरूपतया प्रमाणादिप्रतिषेधं कुर्वन्निगृह्येत संव्यवहारेण प्रमाणादेस्तेनाभ्युपगमात् । ततः स्वपक्षसिद्ध्यैव परस्य पराजयो न पुनश्छलमात्रेण ।

नापि जातिमात्रेण । तथा हि । तस्याः सामान्यलक्षणं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरिति । तस्याश्चानेकत्वं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य भेदात् । तथा च न्यायभाष्यकारः "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति । ताश्च खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यऽप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुपपत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा" इति सूत्रकारवचनात् । तत्र साधर्म्यसमां जातिं न्यायभाष्यकारो व्याचष्टे–साधर्म्येणोपसंहारे कृते साध्यधर्मविपर्ययोपपत्तेः साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः प्रतिषेधः । निदर्शनं–क्रियावानात्मा क्रियाहेतुगुणाश्रयत्वात् । यो यः क्रियाहेतुगुणाश्रयः स स क्रियावान् यथा लोष्टस्तथा चात्मा तस्मात्क्रियावानिति ।–साधर्म्योदाहरणेनोपसंहारे कृते परः साध्यधर्मविपर्ययोपपत्तितः साधर्म्योदाहरणेनैव प्रत्यवतिष्ठते निष्क्रिय आत्मा विभुद्रव्यत्वादाकाशवदिति । न चास्ति विशेषः क्रियावत्साधर्म्यात्क्रियावता भवितव्यं न पुनर्निष्क्रियत्वसाधर्म्यान्निष्क्रियेणेति साधर्म्यसमो दूषणाभासः । न ह्यात्मनः क्रियावत्त्वे साध्ये क्रियाहेतुगुणाश्रयत्वस्य हेतोः स्वसाध्येन व्याप्तिर्विभुत्वान्निष्क्रियत्वसिद्धौ विच्छिद्यते । न च तदविच्छेदे तद्दूषणत्वं साध्यसाधनयोर्व्याप्तिविच्छेदसमर्थस्यैव दोषत्वेनोपवर्णनात् । वार्त्तिककारस्त्वेवमाह । साधर्म्येणोपसंहारे कृते तद्विपरीतसाधर्म्येण प्रत्यवस्थानं वैधर्म्येणोपसंहारे तत्साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः । यथाऽनित्यः शब्द उत्पत्तिधर्मकत्वात्कुम्भादिवदित्युपसंहृते परः प्रत्यवतिष्ठते यद्यऽनित्यघटसाधर्म्यादयमनित्यो नित्येनाप्याकाशेनास्य साधर्म्यममूर्त्तत्वमस्तीति नित्यः प्राप्तः । तथाऽनित्यः शब्द उत्पत्तिधर्मकत्वात् । यत्पुनरनित्यं न भवति तन्नोत्पत्तिधर्मकं यथाकाशमिति प्रतिपादिते परः प्रत्यवतिष्ठते यदि नित्याकाशवैधर्म्यादनित्यः शब्दस्तदा साधर्म्यमप्यस्याकाशेनास्त्यमूर्त्तत्वम् । अतो नित्यः प्राप्तः । अथ सत्यप्येतस्मिन्साधर्म्ये नित्यो न भवति न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चाऽनित्यः शब्द इति ।

---

१ ननु सकलशून्यवादिनाऽमुख्यरूपतयाभ्युपगतस्य प्रमाणादेर्मुख्यरूपतयैव प्रतिषेधं विदधानः कथं योगो निगृह्येतेत्याशङ्कायामाह ॥ २ उपचारेण ॥ ३ नैतावता प्रतिवादिनः पराजयो यतः ॥ ४ दूषणम् ॥ ५ भेदात् ॥ ६ विधिसाध्यस्य ॥ ७ कार्याणि, तैः समाः ॥ ८ जातिषु मध्ये ॥ ९ साध्यस्य ॥ १० साधनवादिना ॥ ११ सक्रियत्वलक्षणान्निष्क्रियत्वं यथा विपर्ययः ॥ १२ जातिवादिना ॥ १३ गमनादि ॥ १४ प्रयत्नोऽत्र गुणः ॥ १५ अन्वयेन ॥ १६ वादिना ॥ १७ प्रतिवादी ॥ १८ क्रियावत्साधर्म्यात्क्रियावान्भवतु निष्क्रियत्वसाधर्म्यान्निष्क्रियो न भविष्यतीत्युक्ते सत्याह ॥ १९ आत्मना ॥ २० निराक्रियते ॥ २१ व्याप्तिविच्छेदो मा भवतु तद्दूषणत्वं च भवत्वित्युक्ते सत्याह ॥ २२ साध्यसम इति, ॥ २३ उक्तसाधर्म्यात् ॥ २४ वैधर्म्यस्य ॥ २५ वादिना ॥ २६ जातिवादी ॥ २७ प्रतिकूलतया परिवर्त्तते ॥ २८ तर्हि ॥ २९ वादिना ॥ ३० जातिवादी ॥ ३१ उक्तवैधर्म्यात् ॥ ३२ यदि ॥ ३३ आकाशेन सह शब्दस्य ॥ ३४ घटेन सह शब्दस्य साधर्म्यात् ॥ ३५ शब्दस्य ॥

वैधर्म्यसमायास्तु जातेर्वैधर्म्येणोपसंहारे कृते साध्यधर्मविपर्ययाद्वैधर्म्येण साधर्म्येण वा प्रत्यवस्थानं लक्षणम् । यथात्मा निष्क्रियो विभुत्वात् । यत्पुनः सक्रियं तन्न विभु यथा लोष्टादि । विभुश्चात्मा तस्मान्निष्क्रियः । इत्युक्ते परः प्राह—निष्क्रियत्वे सत्यात्मनः क्रियाहेतुगुणाश्रयत्वं न स्यादाकाशवत् । अस्ति चैतत् । ततो नायं निष्क्रिय इति । साधर्म्येण तु प्रत्यवस्थानं क्रियावानेवात्मा क्रियाहेतुगुणाश्रयत्वात् । य ईदृशः स ईदृशो दृष्टो यथा लोष्टादिः । तथा चात्मा । तस्मात्क्रियावानेवेति ।

उत्कर्षसमादीनां लक्षणं साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा इति । तत्रोत्कर्षसमायास्तावल्लक्षणम् । दृष्टान्तधर्मं साध्ये समासञ्जयतो मतोत्कर्षसमा जातिः । तद्यथा । क्रियावानात्मा क्रियाहेतुगुणाश्रयत्वाल्लोष्टवदित्युक्ते परः प्रत्यवतिष्ठते—यदि क्रियाहेतुगुणाश्रयो जीवो लोष्टवत्क्रियावाँस्तदा तद्वदेव स्पर्शवान्भवेत् । अथ न स्पर्शवांस्तर्हि क्रियावानपि न स्यादविशेषात् । यस्तु तत्रैव क्रियावज्जीवसाधने प्रयुक्ते साध्ये साध्यधर्मिणि धर्मस्याभावं दृष्टान्तात्समासञ्जयन्वक्ति सोऽपकर्षसमां जातिं वक्ति । यथा लोष्टः क्रियाश्रयोऽसर्वगतो दृष्टस्तद्वदात्माप्यसर्वगतोऽस्तु विपर्यये विशेषो वा वाच्य[11] इति । ख्यापनीयो वर्ण्यो[12]ऽख्यापनीयोऽवर्ण्यः । तेन वर्ण्येनावर्ण्येन च समा जातिः । तद्यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते—यद्यात्मा क्रियावान् वर्ण्यः सा[13]ध्यस्तदा लोष्टादिरपि साध्योऽस्तु । अथ लोष्टादिरवर्ण्यस्तर्ह्यात्माप्यवर्ण्योऽस्तु विशेषाभावादिति ।

विकल्पो विशेषः । सा[16]ध्यधर्मस्य विक[17]ल्पं धर्मा[18]न्तरविकल्पात्प्रसञ्जय[19]तो विकल्पसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते—क्रियाहेतुगुणोपेतं किञ्चिद्गुरु दृश्यते, यथा लोष्टादि । किञ्चित्तु लघूपलभ्यते, यथा वायुः । तथा क्रियाहेतुगुणोपेतमपि किञ्चित्क्रियाश्रयं युज्येत, यथा लोष्टादि । किञ्चित्तु निष्क्रियं, यथात्मेति । हेत्वा[20]द्यवयवयोगी धर्मः साध्यः । तमेव दृष्टान्ते प्रसञ्जयतः साध्य[21]समा जातिः । यथात्रैव साधने प्रयुक्ते परः प्राह—यदि यथा लोष्टस्तथात्मा तदा यथात्मायं तथा लोष्टः स्यात् । [22]सक्रिय इति साध्यश्चात्मा लोष्टोपि त[23]था साध्योऽस्तु । अथ लोष्टः क्रियावान्न साध्यस्तदात्मापि क्रियावान्साध्यो मा भूद्विशेषो[24] वा वा[25]च्य इति । दूषणाभासता चै[26]षां सत्साधने दृष्टान्तादिसामर्थ्ययुक्ते सति साध्यदृष्टान्तयोर्धर्मविकल्प[27]मात्रात्प्रतिषेधस्य कर्तुमशक्यत्वात् । यत्र हि लौकिकेतरयो-

---

१ वादिना ॥ २ आत्मा ॥ ३ सामान्यलक्षणम् ॥ ४ साध्य =पक्ष ॥ ५ विकल्प =समारोप ॥ ६ समारोपयत ॥ ७ क्रियाहेतुगुणाश्रयत्वस्य ॥ ८ पक्षे ॥ ९ सर्वगतत्वलक्षणस्य ॥ १० सर्वगतत्वे ॥ ११ वादिना त्वया ॥ १२ साध्यधर्मिधर्मे ॥ १३ पक्ष ॥ १४ दृष्टान्तोपि ॥ १५ पक्षोऽस्तु ॥ १६ क्रियाश्रयत्वस्य ॥ १७ भेदम् ॥ १८ धर्मान्तरविकल्पेन प्रत्यवस्थान विकल्पसमा जाति ॥ १९ प्रतिवादिन ॥ २० आदिना प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनानि ॥ २१ उभयोरपि दृष्टान्तसाध्ययो साध्यत्वादनेन प्रत्यवस्थान साध्यसमा जाति ॥ २२ प्राक्तन वाक्य विवृणोति ॥ २३ सक्रिय इति ॥ २४ अस्ति चेत्तर्हि ॥ २५ त्वया वादिना ॥ २६ उत्कर्षसमादिपण्णाम् ॥ २७ विकल्प आरोप ॥

बुद्धिसाम्यं तस्य दृष्टान्तत्वान्न साध्यत्वमिति । सम्यक्साधने प्रयुक्ते प्राप्त्या यत्प्रत्यवस्थानं सा प्राप्तिसमा जातिः । अप्राप्त्या तु प्रत्यवस्थानमप्राप्तिसमेति । तद्यथा। हेतुः साध्यं प्राप्याप्राप्य वा साधयेत् ? प्राप्य चेद्धेतुसाध्ययोः प्राप्तयोर्युगपत्सम्भवात्कथमेकस्य हेतुतान्यस्य साध्यता युज्येतेति प्रत्यवस्थानं प्राप्तिसमा जातिः । अथाऽप्राप्य हेतुः साध्यं साधयेत्तर्हि सर्वसाध्यमसौ साधयेत् । न चाप्राप्तः प्रदीपः पदार्थानां प्रकाशको दृष्ट इति प्रत्यवस्थानमप्राप्तिसमेति । ताविमौ दूषणाभासौ प्राप्तस्यापि धूमादेरग्न्यादिसाधकत्वोपलम्भात् , कृत्तिकोदयादेस्त्वप्राप्तस्य शकटोदयादौ गमकत्वप्रतीतेरिति । दृष्टान्तस्यापि साध्यविशिष्टतया प्रतिपत्तौ साधनं वक्तव्यमिति प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते क्रियाहेतुगुणयोगात्क्रियावॉल्लोष्ट इति हेतुर्नोक्तः । न च हेतुमन्तरेण साध्यसिद्धिः । अस्याश्च दूषणाभासत्वम् । यथैव हि रूपं दिदृक्षूणां प्रदीपोपादानं प्रतीयते न पुनः स्वयं प्रकाशमानं प्रदीपं दिदृक्षूणाम् । तथा साध्यस्यात्मनः क्रियावत्त्वस्य प्रसिद्ध्यर्थं लोष्टस्य दृष्टान्तस्य ग्रहणमभिप्रेतं न पुनस्तस्यैव सिद्ध्यर्थं साधनान्तरस्योपादानं वादिप्रतिवादिनोरविवादविषयस्य दृष्टान्तस्य दृष्टान्तत्वोपपत्तेस्तत्र साधनान्तरस्याफलत्वादिति । प्रतिदृष्टान्तरूपेण प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः। यथात्रैव साधने प्रयुक्ते प्रतिदृष्टान्तेन परः प्रत्यवतिष्ठते क्रियाहेतुगुणाश्रयमाकाशं निष्क्रियं दृष्टमिति । कः पुनराकाशस्य क्रियाहेतुगुणः? संयोगो वायुना सह। कालत्रयेप्यसम्भवादाकाशे क्रियायाः, न क्रियाहेतुर्वायुना संयोग इत्यप्यसारं वायुसंयोगेन वनस्पतौ क्रियाकारणेन समानधर्मत्वादाकाशे वायुसंयोगस्य । यत्त्वसौ तत्र क्रियां न करोति तन्नाकारणत्वात्किन्तु परममहापरिमाणेन प्रतिबद्धत्वात् । अथ क्रियाकारणवायुवनस्पतिसंयोगसदृशो वाय्वाकाशसंयोगो न पुनः क्रियाकारणं, न कश्चिदप्येवं हेतुरनैकान्तिकः स्यात् । अनित्यः शब्दोऽमूर्तत्वात्सुखादिवदित्यत्राप्यमूर्तत्वं हेतुः शब्देऽन्योन्यश्चाकाशे तत्सदृश इति कथमस्याकाशेनानैकान्तिकत्वम् ? सकलानुमानोच्छेदश्चानुमानस्य सादृश्यादेव प्रवर्त्तनात् । न खलु ये धूमधर्माः क्वचिद्धूमे दृष्टास्त एवान्यत्र दृश्यन्ते तत्सदृशानामेव दर्शनात् । ततोनेन कस्यचिद्धेतोरनैकान्तिकत्वं क्वचिदनुमानात्प्रवृत्तिं चेच्छता तद्धर्मसदृशस्तद्धर्मोऽनुमन्तव्य इति क्रियाकारणवायुवनस्पतिसंयोगसदृशो वाय्वाकाशसंयोगोपि क्रियाकारणमेव । तथा च प्रतिदृष्टान्तेनाकाशेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः प्रतिषेधः । स चायुक्तोस्य दूषणाभासत्वात् । तथा हि । यदि तावदयं ब्रूते यथायं त्वदीयो दृष्टान्तो लोष्टादिस्तथा मदीयोप्याकाशादिरिति तदा व्याघातः । एकस्य हि दृष्टान्तत्वेन्यस्यादृष्टान्तत्वमेव उभयोस्तु दृष्टान्तत्वविरोधः । अथैवं ब्रूते यथायं मदीयो न दृष्टान्तस्तथा त्वदीयोपीति । तथापि व्याघातः । प्रतिदृष्टान्तस्य ह्यदृ-

१ विशेषाभावात् ॥ २ हेतुमन्तरेण साध्यसिद्धिर्भविष्यती युक्ते सत्याह ॥ ३ कथम् ? तथा हि ॥ ४ तद्वदात्मापि निष्क्रियो भवत्विति ॥ ५ तार्णत्वादय ॥ ६ महानसादो ॥ ७ वादिना ॥ ८ पर्वतादौ ॥ ९ जातिवादी ॥ १० दृष्टान्त ॥ ११ व्याघात भावयति ॥ १२ शब्दस्य ॥

ष्टान्तत्वे दृष्टान्तस्यादृष्टान्तत्वव्याघातः प्रतिदृष्टान्ताभावे तस्य दृष्टान्तत्वोपपत्तेः । दृष्टान्तस्य वाऽदृष्टान्तत्वे प्रतिदृष्टान्तस्यादृष्टान्तत्वव्याघातः दृष्टान्ताभावे तस्य तत्त्वोपपत्तेरिति । प्रागुत्पत्तेः कारणाभावाद्या[1] प्रत्यवस्थितिः[2] सानुत्पत्तिसमा जातिः । तद्यथा । विनश्वरः शब्दः प्रयत्नानन्तरीयकत्वात्कटकादिवदित्युक्ते परः प्राह–प्रागुत्पत्तेरनुत्पन्ने शब्दे विनश्वरत्वस्य यत्कारणं[3] प्रयत्नानन्तरीयकत्वं तन्नास्ति ततोयमविनश्वर इति । शाश्वतस्य च शब्दस्य न प्रयत्नानन्तरं जन्मेति । सेयमनुत्पत्त्या प्रत्यवस्था दूषणाभासो न्यायातिलङ्घनात्[4] । उत्पन्नस्यैव हि शब्दस्य धर्मिणः प्रयत्नानन्तरीयकत्वमुत्पत्तिधर्मकत्वं वा भवति नानुत्पन्नस्य । प्रागुत्पत्तेः शब्दस्याऽसत्त्वे किमाश्रयोयमुपालम्भः ? न ह्ययमनुत्पन्नोऽसन्नेव शब्द इति प्रयत्नानन्तरीयक इत्यनित्य इति वा व्यपदेष्टुं शक्यः । सत्त्वे तु सिद्धमेव प्रयत्नानन्तरीयकत्वकारणं नश्वरत्त्वे साध्ये । अतः कथमस्य प्रतिषेध इति ? सामान्यघटयोरैन्द्रियिकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमा जातिः । यथा-ऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते परः सद्दूषणमपश्यन् संशयेन प्रत्यवतिष्ठते प्रयत्नानन्तरीयकेपि शब्दे सामान्येन साधर्म्यमैन्द्रियिकत्वं नित्येनास्ति घटेन चानित्येनास्ति । संशयः शब्दे नित्यत्वानित्यत्वधर्मयोरिति । अस्याश्च दूषणाभासत्वं शब्दाऽनित्यत्वाऽप्रतिबन्धित्वात् । यथैव हि पुरुषे शिरःसंयमनादिना विशेषेण निश्चिते सति न स्थाणुपुरुषसाधर्म्यादूर्ध्वत्वात्संशयस्तथा प्रयत्नानन्तरीयकत्वेन विशेषेणानित्ये शब्दे निश्चिते न घटसामान्यसाधर्म्यादैन्द्रियिकत्वात्संशयो युक्त इति । उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमा जातिः । यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्यनित्यसाधर्म्यात्प्रयत्नानन्तरीयकत्वाच्छब्दस्यानित्यतां कश्चित्साधयति । अपरः पुनर्गोत्वादिना सामान्येन साधर्म्यात्तस्य नित्यताम् । इत्यतः पक्षे विपक्षे च प्रक्रिया समानेति । ईदृशं च प्रक्रियाऽनतिवृत्त्या प्रत्यवस्थानमयुक्तं विरोधात् । प्रतिपक्षप्रक्रियासिद्धौ हि प्रतिषेधो विरुध्यते । प्रतिषेधोपपत्तौ तु प्रतिपक्षप्रक्रियासिद्धिर्व्याहन्यते इति । त्रैकाल्यासिद्धेर्हेतोरहेतुसमा जातिः । यथा सत्साधने दूषणमपश्यन्परः प्राह साध्यात्पूर्वं वा साधनमुत्तरं वा सहभावि वा स्यात् ? न तावत्पूर्वमसत्यर्थे तस्य साधनत्वानुपपत्तेः । नाप्युत्तरमसति साधने पूर्वं साध्यस्य साध्यस्वरूपत्वासम्भवात् । नापि सहभावि स्वतन्त्रतया प्रसिद्धयोः साध्यसाधनभावासम्भवात्सह्यविन्ध्यवत् । इत्यहेतुसमत्वेन प्रत्यवस्थानमयुक्तं हेतोः प्रत्यक्षतो धूमादेर्वह्न्यादौ प्रसिद्धेरिति । अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्राह—यदि प्रयत्नानन्तरीयकत्वेनानित्यः शब्दो घटवत्तदार्थापत्तितो नित्याकाशसाधर्म्यान्नित्योस्तु । यथैव ह्यस्पर्शवत्त्वं खे नित्ये दृष्टं तथा शब्देपीति । अस्याश्च दूषणाभा-

---

१ कारण तात्वादि ॥ २ प्रतिकूलता ॥ ३ लिङ्गम् ॥ ४ न्यायातिलङ्घनमेव भावयति ॥ ५ भूयोदर्शनानिश्चितव्याप्ते साधर्म्यवैधर्म्योपाधिप्रतिकूलतर्कादिना पक्षे सन्देहोपादानं संशयसमा जाति ॥ ६ शब्दलक्षणेन ॥ ७ साधर्म्यम् ॥ ८ केशवन्धादिना ॥ ९ अनित्यनित्येन घटसामान्येन ॥ १० प्रत्यनुमानेन प्रत्यवस्थान प्रकरणसमा जाति ॥ ११ ऐन्द्रियिकत्वात् ॥ १२ प्रक्रिया अनुमानरचना ॥ १३ साध्यस्य प्रागेव सिद्धत्वात्किमनेन हेतुनेति भाव ॥ १४ अर्थापत्त्या प्रत्यवस्थानम् ॥ १५ घटसाधर्म्येण ॥

सत्त्वं सुखादिनानैकान्तिकत्वात्। न चानैकान्तिकाद्धेतोः प्रतिपक्षसिद्धिरिति। एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सत्त्वोपपत्तितोऽविशेषसमा जातिः। यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते प्रयत्नानन्तरीयकत्वलक्षणैकधर्मोपपत्तेर्घटशब्दयोरनित्यत्वाविशेषे सत्त्वधर्मस्याप्यखिलार्थेपूपपत्तेरनित्यत्वाविशेषः स्यात्। तस्याश्च दूषणाभासता तथा साधयितुमशक्यत्वात्। न खलु यथा प्रयत्नानन्तरीयकत्वं साधनधर्मः साध्यमनित्यत्वं शब्दे साधयति तथा सर्वार्थे सत्त्वं धर्मान्तरस्यापि नित्यत्वस्याकाशादौ सत्त्वे सत्युपलम्भात्, प्रयत्नानन्तरीयकत्वे च सत्यऽनित्यत्वस्यैवोपलम्भादिति। उभयकारणोपपत्तेरुपपत्तिसमा जातिः। यथात्रैव साधने प्रयुक्ते परः प्राह—यद्यनित्यत्वे कारणं प्रयत्नानन्तरीयकत्वं शब्दस्यास्तीत्यनित्योऽसौ तदा नित्यत्वेप्यस्य कारणमस्पर्शवत्त्वमस्तीति नित्योप्यस्तु। इत्युभयस्य नित्यत्वस्यानित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमो दूषणाभासः। एवं ब्रुवता स्वयमेवानित्यत्वकारणं प्रयत्नानन्तरीयकत्वं तावदभ्युपगतम्। एवं तदभ्युपगमाच्चानुपपन्नस्तत्प्रतिषेध इति। निर्दिष्टकारणाभावेप्युपलम्भादुपलब्धिसमा जातिः। यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते—शाखादिभङ्गजे शब्दे प्रयत्नानन्तरीयकत्वाभावेप्यनित्यत्वमस्तीति। दूषणाभासत्वं चास्याः प्रकृतसाधनाप्रतिबन्धित्वात्। न खलु साधनमन्तरेण साध्यं न भवतीति नियमोस्ति साधनस्यैव साध्याभावेऽभावनियमव्यवस्थितेः। न चानित्यत्वे प्रयत्नानन्तरीयकत्वमेव गमकमुत्पत्तिमत्त्वादेरपि तद्गमकत्वात्। तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमा जातिः। यथाऽविद्यमानः शब्द उच्चारणात्पूर्वमनुपलब्धेरुत्पत्तेः पूर्वं घटादिवत्। न खलूच्चारणात्प्राग्विद्यमानस्य शब्दस्यानुपलब्धिस्तदावरणानुपलब्धेरुत्पत्तेः प्राग्घटादेरिव। यस्य तु दर्शनात् प्राग्विद्यमानस्यानुपलब्धिस्तस्य नावरणानुपलब्धिः। यथा भूम्याद्यावृतस्योदकादेः। आवरणानुपलब्धिश्च श्रवणात्प्राक् शब्दस्य। इत्युक्ते परः प्राह—तस्य शब्दस्यानुपलब्धेरप्यनुपलम्भादभावसिद्धौ सत्यां शब्दस्याभावविपरीतत्वेन भावस्योपपत्तेरनुपलब्धिसमा जातिः। अस्याश्च दूषणाभासत्वमनुपलब्धेरनुपलब्धिस्वभावतयोपलब्धिविषयत्वात्। यथैव ह्युपलब्धिरुपलब्धेर्विषयस्तथानुपलब्धिरपि। कथमन्यथाऽस्ति मे घटोपलब्धिः, तदनुपलब्धिस्तु नास्तीति संवेदनमुपपद्यते? साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमा जातिः। यथाऽनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते परः प्रत्यवतिष्ठते—यदि शब्दस्य घटेन साधर्म्यं कृतकत्वादिनाऽनित्यत्वं साधयेत्तदा सर्वं वस्त्वनित्यं प्रसज्येत घटादिनाऽनित्येन सत्त्वेन

१ अखिलेन ॥ २ अस्पर्शवत्त्वादिति ॥ ३ परेणाङ्गीक्रियमाणे ॥ ४ यथा सर्वार्थेषु साधनधर्मं सत्त्वमनित्यत्वं न साधयति तथा प्रयत्नानन्तरीयकत्वसाधनधर्मोऽनित्यत्वं न साधयतीत्युक्ते सत्याह ॥ ५ निर्दिष्टस्य साध्यधर्मनिर्दिकारणस्याभावेपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानम् ॥ ६ साध्यस्य ॥ ७ तस्य=शब्दस्य ॥ ८ सन्दिग्धानैकान्तिकत्वपरिहारमाह ॥ ९ व्यतिरेकनिदर्शनमाह ॥ १० जातिवादी ॥ ११ अनुपलब्धेरप्यभावसिद्धि कथमित्युक्ते सत्याह ॥ १२ द्वितीयानुमानमाश्रित्य जातिं वदति ॥ १३ कुत ॥ १४ अनुपलब्धेरुपलब्धिविषयत्वं यदि न स्यात् ॥ १५ एकस्यानित्यत्वे सर्वस्यानित्यत्वापादनमनित्यसमा जाति ॥ १६ धर्मेण ॥

कृत्वा साधर्म्यमात्रस्य सर्वत्राऽविशेषात् । तस्याश्च दूषणाभासत्वं प्रतिषेधकस्याप्यसिद्धिप्रसङ्गात् । पक्षो हि प्रतिषेध्यः प्रतिषेधकस्तु प्रतिपक्षः । तयोश्च साधर्म्यं प्रतिज्ञादियोगस्तेन विना तयोरसम्भवात् । ततः प्रतिज्ञादियोगाद्यथा पक्षस्यासिद्धिस्तथा प्रतिपक्षस्यापि । अथ सत्यपि साधर्म्ये पक्षप्रतिपक्षयोः पक्षस्यैवासिद्धिर्न प्रतिपक्षस्य तर्हि घटेन साधर्म्यात्कृतकत्वाच्छब्दस्याऽनित्यतास्तु, सकलार्थानां त्वनित्यता तेन साधर्म्यमात्रान्मा भूदिति । शब्दाऽनित्यत्वोक्तौ नित्यत्वप्रत्यवस्थितिर्नित्यसमा जातिः । तद्यथा—अनित्यः शब्द इत्युक्ते परः प्रत्यवतिष्ठते शब्दाश्रयमनित्यत्वं किं नित्यमनित्यं वा ? यदि नित्यं तर्हि शब्दोपि नित्यः स्यात् । अन्यथास्य तदाधारत्वं न स्यात् । अथानित्यं तथाप्ययमेव दोषः । अनित्यत्वस्याऽनित्यत्वे हि शब्दस्य नित्यत्वमेव स्यात् । दूषणाभासत्वं चास्याः प्रकृतसाधनाऽप्रतिबन्धित्वात् । प्रादुर्भूतस्य हि पदार्थस्य प्रध्वंसोऽनित्यत्वमुच्यते । तस्य प्रतिज्ञाने प्रतिषेधविरोधः । स्वयं तदप्रतिज्ञाने च प्रतिषेधो निराश्रयः स्यात् । तन्नानित्यता शब्दे नित्यत्वप्रत्यवस्थितेर्निराकर्तुं शक्येति । प्रयत्नानेककार्यत्वात्कार्यसमा जातिः । यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते परः प्रत्यवतिष्ठते प्रयत्नानन्तरं घटादीनां प्रागऽसतामात्मलाभोपि प्रतीत आवारकापनयनात् प्राक्सतामेवाभिव्यक्तिश्च । तत्कथमतः शब्दस्यानित्यतेति ? दूषणाभासता चास्याः प्रकृतसाधनाप्रतिबन्धित्वादेव । शब्दस्य हि प्रागसतः स्वरूपलाभलक्षणं जन्मैव प्रयत्नानन्तरीयकत्वमुपपद्यते प्रागनुपलब्धिनिमित्तस्याभावेप्यनुपलब्धितः सत्त्वासम्भवादिति ।

तदेतद्यौगकल्पितं जातीनां सामान्यविशेषलक्षणप्रणयनमयुक्तमेव साधनाभासेपि साधर्म्यादिना प्रत्यवस्थानस्य जातित्वप्रसङ्गात् । तथेष्टत्वान्न दोषः । तथा हि । असाधौ साधने प्रयुक्ते यो जातीनां प्रयोगः सोनभिज्ञतया वा साधनदोषस्य स्यात् तद्दोषप्रदर्शनार्थं वा प्रसङ्गव्याजेन । इत्यप्यसमीचीनं साधनाभासप्रयोगे जातिप्रयोगस्योद्द्योतकरेण निराकरणात् । जातिवादी च साधनाभासमेतदिति प्रतिपद्यते वा न वा ? यदि प्रतिपद्यते तर्हि य एवास्य साधनाभासत्वं हेतुदोषोऽनेन प्रतिपन्नः स एव वक्तव्यो, न जातिः प्रयोजनाभावात् । प्रसङ्गव्याजेन दोषप्रदर्शनार्थं सेत्यप्ययुक्तमनर्थसंशयात् । यदि हि परप्रयुक्तायां जातौ साधनाभासवादी स्वप्रयुक्तसाधनदोषं पश्यन् सभायामेवं ब्रूयात् ‘ मया प्रयुक्ते साधनेऽयं दोषः स चानेन नोद्भावितः । जातिस्तु प्रयुक्ता" इति तदा तावज्जातिवादिनो न जयः प्रयोजनमुभयोरज्ञानसिद्धेः । नापि साम्यं सर्वथा जयस्यासम्भवे तस्याभिप्रेतत्वात् "ऐकान्तिकं पराजयाद्वरं सन्देह" इत्यभि-

---

१ पूर्वोक्ताया जाते ॥ २ अन्यथा ॥ ३ प्रतिपक्षस्य ॥ ४ स्वम् ॥ ५ प्रतिज्ञादियोगेन ॥ ६ पक्षस्यानित्यत्वधर्मस्य नित्यत्वापादनेन तृतीयास प्रत्यवस्थान नित्यसमा जाति ॥ ७ अङ्गीकारे ॥ ८ उत्पत्ते ॥ ९ प्रयत्नेन ॥ १० उच्चारणात् ॥ ११ शब्दस्यानुपलब्धेर्निमित्तमावारकम् ॥ १२ दूषणस्य ॥ १३ मम यौगस्य ॥ १४ पूर्वपक्षवादिना ॥ १५ जातिवादिना प्रयुक्त ॥ १६ पूर्वपक्षवादिना प्रयुक्ते ॥ १७ प्रतिवादिप्रयुक्तस्य ॥ १८ नैयायिकाचार्येण ॥ १९ वादिन- ॥ २० अनर्थं दोष ॥

धानात् । तदप्रयोगेपि चैतत्समानम् । पूर्वपक्षवादिनो हि साधनाभासाभिधाने प्रतिवादिनश्च तूष्णींभावे यत्किञ्चिदभिधाने वा द्वयोरज्ञानप्रसिद्धितः प्राश्निकैः साम्यव्यवस्थापनात् । यदा च साधनाभासवादी स्वसाधने दोषं प्रच्छाद्य परप्रयुक्तां जातिमेवोद्भावयति तदा न तद्वादिनो जयः साम्यं वा प्रयोजनं पराजयस्यैव सम्भवात् । अथ साधनाभासमेतदित्यप्रतिपद्य जातिं प्रयुङ्क्ते तथाप्यफलस्तत्प्रयोगः प्रोक्तदोषानुषङ्गात् । सम्यक्साधने तु प्रयुक्ते तत्प्रयोगः पराजयायैव । अथ तूष्णीभावे पराजयोऽवश्यंभावी । तत्प्रयोगे तु कदाचिदसदुत्तरेणापि निरुत्तरः स्यात् । इत्यैकान्तिकपराजयाद्वरं सन्देह इत्यसौ युक्त एवेति चेन्न तथाप्यैकान्तिकपराजयस्यानिवार्यत्वात् । यथैव ह्युत्तरपक्षवादिनस्तूष्णींभावे सत्युत्तराऽप्रतिपत्त्या पराजयः प्राश्निकैर्व्यवस्थाप्यते तथा जातिप्रयोगेप्युत्तराप्रतिपत्तेरविशेषात्, तत्प्रयोगस्यासदुत्तरत्वेनानुत्तरत्वात् । ननु चास्य पराजयस्तैर्व्यवस्थाप्येत यद्युत्तराभासत्वं पूर्वपक्षवाद्युद्भावयेत् । अन्यथा पर्यनुयोज्योपेक्षणात्तस्यैव पराजयः स्यात् । नन्वेवमुत्तराभासस्योत्तरपक्षवादिनोपन्यासेप्यपरस्योद्भावनशक्त्यशक्त्यपेक्षया जयपराजयव्यवस्थायामनवस्था स्यात् । न खलु जातिवादिवदस्यापि तूष्णीभावः सम्भवति सम्यगुत्तराप्रतिपत्तावप्युत्तराभासस्योपन्याससम्भवात् । ततश्चोपन्यस्तजातिस्वरूपस्यातोऽन्यस्य चोद्भावनेप्युत्तरपक्षवादिनस्तत्परिहारे शक्तिमशक्तिं चापेक्ष्यैव पूर्वपक्षवादिनो जयः पराजयो वा व्यवस्थाप्येत जातिवादिन इवेतरस्योद्भावनशक्त्यशक्त्यपेक्ष इति जातिलक्षणासदुत्तरप्रयोगादेव तत्परिहाराशक्तिनिश्चयात्पुनरुपन्यासवैफल्ये सत्साधनाभिधानादेवोत्तराभासत्वोद्भावनशक्तेरप्यवसायादितरस्यापि कथं तद्वैफल्यं न स्यात्? सत्साधनाभिधानात्तदभिधानसामर्थ्यमेवास्यावसीयते न परोपन्यस्तजात्युद्भावनसामर्थ्यं तर्हि जातिप्रयोगेप्युत्तराभासवादिनः सम्यगुत्तराभिधानासामर्थ्यमेवावसीयेत न परोद्भावितजातिपरिहारासामर्थ्यम् । ननु सदुत्तराभिधानासामर्थ्यादेव तत्परिहारासामर्थ्यनिश्चयः । तत्सद्भावे हि न सदुत्तराभिधानासामर्थ्यं स्यात् । एवं तर्हि सत्साधनाभिधानसामर्थ्यादेवास्य परोपन्यस्तजात्युद्भावनशक्त्यवसायोऽस्तु तदभावे तदभिधानसामर्थ्यायोगात् । सत्साधनाभिधानसमर्थस्यापि कदाचिदऽसदुत्तरेण व्यामोहसम्भवान्न तदुद्भावनसामर्थ्यमवश्यंभावीति चेत्तर्हि जातिवादिनः सदुत्तराभिधानासमर्थस्यापि स्वोपन्यस्तपरोद्भावितोत्तराभासपरिहारसामर्थ्यसम्भवात्पुनरुपन्यासश्चतुर्थोऽपेक्षणीयः स्यात् । साधनवादिनोपि तत्परिहारनिराकरणाय पञ्चमः । पुनर्जातिवादिनस्तन्निराकरणयोग्यतावबोधार्थं षष्ठ इत्यनवस्थानं स्यात् । ननु नायं दोषः पर्यनुयोज्योपेक्षणस्य प्रतिवादिनाऽनुद्भावनात् । कस्य पराजय इत्यनुयुक्ताः प्राश्निका एव हि पूर्वपक्षवादिनः पर्यनुयोज्योपेक्षणमुद्भावय-

---

१ पराजयायैव न जयायेति ॥ २ वादिना ॥ ३ प्रतिवादिन ॥ ४ जातिवादिन ॥ ५ त्वया जातिः प्रयुक्तेति वचनीय तस्योपेक्षणात् ॥ ६ तस्य उद्भावितस्य ॥ ७ उपन्यासो हि जाते ॥ ८ निश्चयात् ॥ ९ तस्य= जात्युद्भावनस्य ॥ १० प्राश्निकानाम् ॥ ११ आद्यपक्षवादिन ॥ १२ ततश्च तृतीया जातिरुद्भावनीयेत्यर्थं ॥ १३ पृष्टा ॥

न्ति । न खलु निग्रहप्राप्तो जाति[1]वादी स्वं कौ[2]पीनं विवृणुयात् । तर्हि जात्यादिप्रयोगमपि तं[3] एवोद्भावयन्तु न पुनः पूर्वपक्षवादी, पर्यनुयोज्योपेक्षणं ते पूर्वपक्षवादिन एवोद्भावयन्ति न जात्यादिवादिनो जात्यादिप्रयोगमिति महामाध्यस्थ्यं[4] तेषां[5] येनैकस्य दोषमुद्भावयन्ति नापरस्येति । ततः[6] पूर्वपक्षवादिनं तूष्णींभावादिकमारचयन्तमुत्तराप्रतिपत्तिमुद्भावयन्नेव जातिवादी निगृह्णातीत्यभ्युपगन्तव्यम् । तत्रापि[7] कथम्भूतेनोत्तराप्रतिपत्त्युद्भावनेनामौ[8] विजयते[9]? किं स्वोपन्यस्तजात्यपरिज्ञानोद्भावनरूपेण[10] परोद्भावितजात्यन्तरनिराकरणलक्षणेन[11] चोत्तराप्रतिपत्तिमात्रोद्भावनाऽऽकारेण वा ? तत्राद्यविकल्पे[15]ऽपकर्षसमाऽन्या[16] वा जातिर्मया प्रयुक्तापि न ज्ञातानेनेत्येवं[17] स्वोपन्यस्तजात्यपरिज्ञानमुद्भावयन्नात्मनः[18] सम्यगुत्तराप्रतिपत्तिमसम्बद्धाभिधायित्वं परकीयसाधनसम्यक्त्वं चोद्भावयतीति जात्युपन्यासवैयर्थ्यमवश्यम्भावित्वात्पराजयस्य । परेणा[19]विज्ञातमात्मनो दोषं स्वयमुद्भावयन्नपि न पराजयमास्कन्दतीति चेत्परेणाविज्ञातः स दोष इति कुतोऽवसितम् ? तूष्णीभावादन्यस्य चोद्भावनादिति चेन्न वादविस्तरपरिहारार्थत्वात्तस्य[20] । स्ववाग्यन्त्रिता हि वादिनो न विचलिष्यन्तीति स्वयमुद्भावनीयं[21] दोषं परेणोद्भावयितुं तूष्णीभावोऽन्यस्य चोद्भावनं नाज्ञानात् । स्वयमुद्भाविते[22] हि दोषे जात्यादिवादी तत्परिहारार्थं किञ्चिदन्यद्ब्रूयादिति न वादावसानं स्यात् । परस्या[23]ऽज्ञानमाहात्म्यख्यापनार्थं वा, पश्य[24]तैवंविधस्याज्ञानमाहात्म्यं येन स्वयमेव स्वदोषकलापमसत्साधनस्य सम्यक्त्वं चोद्भावयतीति । एवंसाध्येन[25] पूर्वपक्षवादिना प्रत्यवस्थिते[26] किमत्र जातिवादी ब्रूयात् ?–"जातिर्मया प्रयुक्तापि न ज्ञातानेनेति वचनादुत्तरकालमनेनावसितो[27] दोषकलापो, न प्राक् । अतोऽज्ञानेनैव प्रतिवादिना तूष्णीभूतमन्यद्वोद्भावितम्" इति । अत्रापि शपथः शरणम् । ननु यदि नाम जानतैव[28] पूर्वपक्षवादिना तूष्णीभूतमन्यद्वोद्भावितं तथापि तेन सदुत्तरानभिधानात्कथं नास्य पराजयः स्यात् ? तदेतज्जातिवादिनो जात्युपन्यासेपि समानं जातीनां दूषणाभासत्वात् । तस्मान्न स्वोपन्यस्तजात्यपरिज्ञानोद्भावनरूपेणोत्तराऽप्रतिपत्त्युद्भावनेन तूष्णीभूतमन्यद्वोद्भावयन्तमितरं निगृह्णाति[29] । द्वितीयविकल्पे स्वोपन्यस्ता जातिः कथं परोद्भावितजात्यन्तररूपा न भवतीति वादिनेतरः प्रतिपाद्यते, न तावत्स्वोपन्यस्तजातिस्वरूपानुवादेन यथा नेयमुत्कर्षसमा जातिरपकर्षसमत्वादस्या इति–प्रथमपक्षोदितदोष[31]प्रसङ्गात् । नाप्यनुप-

---

१ जातिवाद्यह जातिमुक्तवान् त्वया वादिना न सम्भावितेति न प्रतिपादयतीति भाव ॥ २ गुह्येन्द्रियम् ॥ ३ प्राश्निका ॥ ४ नोद्भावयन्तीति सबन्ध ॥ ५ उपहासवचनमिदम् ॥ ६ प्राश्निकानाम् ॥ ७ प्राश्निकाना माध्यस्थ्याभावो यत ॥ ८ जानन् ॥ ९ परेण ॥ १० पक्षे ॥ ११ वादिनम् ॥ १२ पूर्वपक्षवादिन ॥ १३ पर =वादी ॥ १४ जात्यन्तर=जातिविशेष ॥ १५ त्रिषु विकल्पेषु मध्ये ॥ १६ उत्कर्षसमा वा जाति ॥ १७ पूर्वपक्षवादिना ॥ १८ जातिवादी ॥ १९ वादिना ॥ २० तूष्णीभावादे ॥ २१ प्रतिवादिना ॥ २२ वादिना जात्युद्भावनेपि वादावसान न भविष्यति ततश्च तूष्णींभावोऽन्योद्भावन च वादावसानाय व्यर्थमित्युक्ते सत्याह ॥ २३ प्रयोजनान्तर तूष्णींभावादेराह ॥ २४ निरीक्षध्व यूय सभ्या ॥ २५ वस ॥ २६ पर्यनुयुक्ते सति ॥ २७ सकाशात् ॥ २८ पूर्वपक्षवादिना ॥ २९ दोषम् ॥ ३० पूर्वपक्षवादी ॥ ३१ दोष =उत्तराप्रतिपत्ति ॥

लम्भादनुपलम्भमात्रस्याप्रमाणत्वात्, अनुपलम्भविशेषस्यापि स्वोपन्यस्तजातिस्वरूपोपलम्भलक्षणत्वात्, तत्र चोक्तदोषप्रसङ्गात् । तन्न जातिवादी जात्यन्तरमुद्भावयन्तं प्रतिवादिनं तदुद्भावितजात्यन्तरनिराकरणलक्षणेनोत्तराप्रतिपत्त्युद्भावनेन विजयते । नाप्युत्तराप्रतिपत्तिमात्रोद्भावनरूपेण । त्वया न ज्ञातमुत्तरमित्युत्तराप्रतिपत्तिमात्रोद्भावने हि पूर्वपक्षवादिनस्तद्विशेषविषयः प्रश्नोऽवश्यंभावी "मया तावदुत्तरमुपन्यस्तमेतच्च कथमनुत्तरम्" इति । जातिवादिना चास्योत्तराप्रतिपत्तिर्विशेषेणोद्भावनीया "मयोपन्यस्ताप्येषा जातिस्त्वया न ज्ञाता जात्यन्तरं चोद्भावितम्" इति । अत्र च प्रा[2]गुक्ताशेषदोषानुषङ्गः । तदेवमुत्तराऽप्रतिपत्त्युद्भावनत्रयेऽपि जातिवादिनः पराजयस्यैकान्तिकत्वादैकान्तिकपराजयाद्वरं सन्देह इति जानन्नपि जात्यादिकं प्रयुङ्क्ते इत्येतद्वचो नैयायिकस्यानैयायिकतामाविर्भावयेत् । ततः स्वपक्षसिद्ध्यैव जयस्तदसिद्ध्या तु पराजयो, न तु मिथ्योत्तरलक्षणजातिशतैरपीति ।

ना[3]पि निग्रहस्थानैः । तेषां हि विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति सामान्यलक्षणम् । विपरीता कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः,–पक्षमभ्युपगम्य तस्याऽस्थापना, परेण स्थापितस्य वाऽप्रतिषेधः, प्रतिषिद्धस्य चाऽनुद्धार इति । प्रतिज्ञाहान्यादिव्यक्तिगतं तु विशेषलक्षणम् । तत्र प्रतिज्ञाहानेस्तावल्लक्षणं प्रतिदृष्टान्तधर्म्य(र्मा)नुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः । साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थितः प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । यथाऽनित्यः शब्द ऐन्द्रियिकत्वाद् घटवदित्युक्ते परः प्रत्यवतिष्ठते–सामान्यमैन्द्रियिकं नित्यं दृष्टम् । कस्मान्न तथा शब्दोऽपि ? इत्येवं स्वप्रयुक्तस्य हेतोराभासतामवस्यन्नपि कथावसानमकृत्वा प्रतिज्ञात्यागं करोति । यद्यैन्द्रियिकं सामान्यं नित्यं कामं घटोऽपि नित्योऽस्त्विति । न खल्वेवं ससाधनस्य दृष्टान्तस्य नित्यत्वं प्रसजन्निगमनान्तमेव पक्षं जहाति । पक्षं च परित्यजन्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्य । इति भाष्यकारमतमसङ्गतमेव साक्षाद्दृष्टान्तहानिरूपत्वात्तस्यास्तत्रैव साध्यधर्मपरित्यागात् । परम्परया तु हेतूपनयनिगमनानां त्यागो दृष्टान्तासाधुत्वे तेषामप्यसाधुत्वात् । तथा च प्रतिज्ञाहानिरेवेत्यसङ्गतम् । वार्तिककारस्त्वेवमाचष्टे दृष्टश्चासावन्ते स्थितश्चेति दृष्टान्तः पक्षः, स्वपक्षः–प्रतिदृष्टान्तः प्रतिपक्षः । प्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानन् प्रतिज्ञां जहाति । यदि सामान्यमैन्द्रियिक नित्यं शब्दोऽप्येवमस्त्विति । तदेतदप्युद्द्योतकरस्य जाड्यमाविष्करोति इत्थमेव प्रतिज्ञाहाने-

---

१ जातिवादी ॥ २ प्रागुक्त =उत्तराप्रतिपत्तिलक्षणादि ॥ ३ पराजयो न भवतीति ॥ ४ तत्त्वप्रतिपत्तेरभावो विप्रतिपत्ति ॥ ५ कथम् ? तथा हि ॥ ६ वादिपक्षस्य ॥ ७ अपरिहार ॥ ८ उक्ते हेतौ दूषणोद्भावने सति पक्षाभ्युपम प्रतिज्ञा ॥ ९ अभ्युपगम ॥ १० धर्मधर्मिसमुदाय प्रतिज्ञा तस्या हानि ॥ ११ प्रतिवादिना पर्यनुयुक्तो वादी ॥ १२ परकीयोदाहरणधर्मम् ॥ १३ वादिन ॥ १४ इन्द्रियग्राह्यत्वात् ॥ १५ वादिना ॥ १६ प्रतिवादी ॥ १७ जानन् ॥ १८ कथा वाद ॥ १९ साधनवादी ॥ २० वादी ॥ २१ अभ्युपगच्छन् ॥ २२ घटादिर्दृष्टान्त ॥ २३ प्रतिज्ञाहाने ॥ २४ शब्दानित्यत्व साध्यधर्म ॥ २५ विचारान्ते ॥ २६ नित्यत्वलक्षणम् ॥ २७ अनित्ये ॥ २८ वादी ॥ २९ ऐन्द्रियिकत्वाविशेषात् ॥ ३० प्रतिपक्षस्य स्वपक्षेऽभ्युपगमनेनैव ॥

रवधारयितुमशक्यत्वात् । प्रतिपक्षसिद्धिमन्तरेण च कस्यचिन्निग्रहाधिकरणत्वायोगात् । न खलु प्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानत एव प्रतिज्ञात्यागो येनायमेक एव प्रकारः प्रतिज्ञाहानौ स्यात् । अधिक्षेपादिभिराकुलीभावात् प्रकृत्या सभाभीरुत्वादन्यमनस्कत्वादेर्वा निमित्तात्किञ्चित्साध्यत्वेन प्रतिज्ञाय तद्विपरीतं प्रतिजानतोप्युपलम्भात् पुरुषभ्रान्तेरनेककारणत्वोपपत्तेरिति । तथा प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरं प्रतिज्ञातार्थस्याऽनित्यः शब्द इत्यादेरैन्द्रियिकत्वाख्यस्य हेतोर्व्यभिचारोपदर्शनेन प्रतिषेधे कृते तं दोषमनुद्धरन् धर्मविकल्पं करोति किमयं शब्दोऽसर्वगतो घटवत् किं वा सर्वगतः सामान्यवदिति । यद्यसर्वगतो घटवत्तर्हि तद्वदेवानित्योस्त्वित्येतत्प्रतिज्ञान्तरं नाम निग्रहस्थानं सामर्थ्याऽपरिज्ञानात् । स हि पूर्वस्या अनित्यः शब्द इति प्रतिज्ञायाः साधनायोत्तरामसर्वगतः शब्दोऽनित्य इति प्रतिज्ञामाह । न च प्रतिज्ञा प्रतिज्ञान्तरसाधने समर्थाऽतिप्रसङ्गात् । इत्यप्येतेनैव प्रत्युक्तं प्रतिज्ञाहानिवत्तस्याप्यनेकनिमित्तत्वोपपत्तेः । प्रतिज्ञाहानितश्चास्य कथं भेदः? पक्षत्यागस्योभयत्राऽविशेषात् । यथैव हि प्रतिदृष्टान्तधर्मस्य स्वदृष्टान्तेऽभ्यनुज्ञानात्पक्षत्यागस्तथा प्रतिज्ञान्तरादपि । यथा च स्वपक्षसिद्ध्यर्थं प्रतिज्ञान्तरं विधीयते तथा शब्दाऽनित्यत्वसिद्ध्यर्थं भ्रान्तिवशात्तद्वच्छब्दोपि नित्योस्त्वित्यभ्यनुज्ञानम् । यथा चाभ्रान्तस्येदं विरुध्यते तथा प्रतिज्ञान्तरमपि । निमित्तभेदाच्च तद्भेदेऽनिष्टनिग्रहस्थानान्तराणामप्यनुषङ्गः स्यात् । तेषां तत्रान्तर्भावे वा प्रतिज्ञान्तरस्यापि प्रतिज्ञाहानावन्तर्भावः स्यादिति । प्रतिज्ञाहेत्वोर्विरोधः-।-प्रतिज्ञाविरोधो|यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्यो भेदेनानुपलब्धेः । इत्यप्यसुन्दरं यतो हेतुना प्रतिज्ञायाः प्रतिज्ञात्वे निरस्ते प्रकारान्तरतः प्रतिज्ञाहानिरेवेयमुक्ता स्याद्धेतुदोषो वात्र विरुद्धतालक्षणः, न प्रतिज्ञादोष इति । पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः । यथाऽनित्यः शब्द ऐन्द्रियिकत्वाद् घटवदित्युक्ते पूर्ववत्सामान्येनानैकान्तिकत्वे हेतोरुद्भाविते प्रतिज्ञासंन्यासं करोतिः—क एवमाह? नित्यः शब्द इत्यपि प्रतिज्ञाहानितो न भिद्येत हेतोरनैकान्तिकत्वोपलम्भेनात्रापि प्रतिज्ञायाः परित्यागाविशेषादिति । अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् । निदर्शनम्—एकप्रकृतीदं व्यक्तं विकाराणां परिमाणान्मृत्पूर्वकघटशरावोदञ्चनादिवत् । इत्यस्य व्यभिचारेण प्रत्यवस्थानं नानाप्रकृतीनामेकप्रकृतीनां च दृष्टं परिमाणमित्यस्य हेतोरहेतुत्वं निश्चित्यैकप्रकृतिसमन्वये विकाराणां परिमाणादित्याह । तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं

---

१ वादिन प्रतिवादिनो वा ॥ २ प्रतिदृष्टान्तधर्मस्य स्वपक्षेभ्युपगम ॥ ३ अधिक्षेपस्तिरस्कार ॥ ४ सामान्येन ॥ ५ भेदम् ॥ ६ वादी ॥ ७ वादिन ॥ ८ ननु प्रतिज्ञान्तरात्पक्षत्यागस्तस्य स्वपक्षसिद्ध्यर्थं विधीयमानत्वादित्युक्ते सत्याह ॥ ९ प्रतिज्ञाहानादौ ॥ १० यत्र प्रतिज्ञा विरुध्यते हेतुना हेतुर्वा प्रतिज्ञया विरुध्यते स प्रतिज्ञाविरोध ॥ ११ उक्तहेतो दूषणोद्भावने स्वसाध्यपरित्याग प्रतिज्ञासन्यास ॥ १२ वादिना ॥ १३ त्यागम् ॥ १४ अविशेषोक्ते हेतौ व्यभिचारेण प्रतिषिद्धे पश्चाद्विशेषणोपादान हेत्वन्तरम् ॥ १५ प्रतिवादिना ॥ १६ प्रधानम् ॥ १७ महदादिकार्यम् ॥ १८ वस्तुभेदानाम् ॥१९ वादिनोक्तानुमानस्य ॥ २० घटमुकुटपटलकुटशकटादीनाम् ॥ २१ एककारणानुस्यूतत्वे सतीत्यर्थ ॥ २२ वादी ॥

ब्रुवतो हेत्वन्तरं नाम निग्रहस्थानम् । इत्यप्यसुन्दरमेवं सत्यविशेषोक्ते दृष्टान्तोपनयनिगमने प्रतिषिद्धे विशपमिच्छेतो दृष्टान्ताद्यन्तरमपि निग्रहस्थानान्तरम-
नुपज्येत तत्राक्षेपसमाधानानां समानत्वादिति । प्रकृतादर्थादप्रतिसम्बन्धार्थमर्थान्तरम् । यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां प्रकृतं
हेतुं प्रमाणसामर्थ्येनाहमसमर्थः समर्थयितुमित्यवस्यन्नपि कथामपरित्यजन्नर्थान्तरमुपन्यस्यति–नित्यः शब्दोऽस्पर्शवत्त्वादिति हेतुः । हेतुश्च हिनोतेर्धातो-
स्तुप्रत्यये कृदन्तं पदं च नामाख्यातोपसर्गनिपाता इति प्रस्तुत्य नामादीनि व्याचष्टे । तदेतदप्यर्थान्तरं निग्रहस्थानं समर्थे साधने दूषणे
वा प्रोक्ते निग्रहाय कल्प्येताऽसमर्थे वा? न तावत्समर्थे स्वसाध्यं प्रसाध्य नृत्यतोपि दोषाभावाल्लोकवत् । असमर्थेपि प्रतिवादिनः पक्षसिद्धौ तन्नि-
ग्रहाय स्यादसिद्धौ वा? प्रथमपक्षे तत्पक्षसिद्ध्यैवास्य निग्रहो न त्वतो निग्रहस्थानात् । द्वितीयपक्षेप्यतो न निग्रहः पक्षसिद्धेरुभयोरप्यभावा-
दिति । वर्णक्रमनिर्देशवन्निरर्थकम् । यथाऽनित्यः शब्दो जवगडदश्त्वात् । झभघढधष्वत् । इत्यपि सर्वथार्थशून्यत्वान्निग्रहाय कल्प्येत साध्यानुपयो-
गाद्वा? तत्राद्यविकल्पोऽयुक्तः सर्वथार्थशून्यस्य शब्दस्यैवासम्भवात् । वर्णक्रमनिर्देशस्याप्यनुकार्येणार्थेनार्थवत्त्वोपपत्तेः । द्वितीयविकल्पे तु सर्व-
मेव निग्रहस्थानं निरर्थकं स्यात्साध्यसिद्धावनुपयोगित्वाविशेषात् । केनचिद्विशेषमात्रेण भेदे वा खात्कृताकम्पहस्तास्फालनकक्षापिट्टिकादेरपि
साध्यसिद्ध्यनुपयोगिनो निग्रहस्थानान्तरत्वानुषङ्ग इति । परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् । अत्रेदमुच्यते—वादिना त्रि-
रभिहितमपि वाक्यं परिषत्प्रतिवादिभ्यां मन्दमतित्वादविज्ञातं गूढाभिधानतो वा द्रुतोच्चाराद्वा? प्रथमपक्षे सत्साधनवादिनोप्येतन्निग्रहस्थानं स्यात् ।
तत्राप्यनयोर्मन्दमतित्वेनाविज्ञातत्वसम्भवात् । द्वितीयपक्षे तु पत्रवाक्यप्रयोगेपि तत्प्रसङ्गो गूढाभिधानतया परिषत्प्रतिवादिनोर्महाप्राज्ञयोरप्यविज्ञातत्वोपलम्भात् ।
अथाभ्यामविज्ञातमप्येतद्वादी व्याचष्टे । गूढोपन्यासमप्यात्मनः स एव व्याचष्टाम् । अव्याख्याने तु जयाभाव एवास्य, न पुनर्निग्रहः परस्य पक्षसिद्धे-
रभावात् । द्रुतोच्चारेप्यनयोः कथञ्चित् ज्ञानं सम्भवत्येव सिद्धान्तद्वयवेदित्वात् । साध्यानुपयोगिनि तु वादिनः प्रलापमात्रे तयोरज्ञानं नाविज्ञातार्थं वर्ण-
क्रमनिर्देशवत् । ततो नेदमभिज्ञातार्थं निरर्थकाद्भिद्यते इति । पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् । यथा दश दाडिमानि षडपूपाः कुण्डमजाऽजिनं पलल-
पिण्ड इत्यपि निरर्थकान्न भिद्यते । यथैव हि जवगडदश्त्वादौ वर्णानां नैरर्थक्यं तथात्र पदानामिति । यदि पुनः पदनैरर्थक्यं वर्णनैरर्थक्यादन्यत्वान्निग्रहस्थानान्तर-
मभ्युपगम्यते तर्हि वाक्यनैरर्थक्यस्याप्याभ्यामन्यत्वान्निग्रहस्थानान्तरत्वं स्यात् पदवत् पौर्वापर्येणाप्रयुज्यमानानां वाक्यानामप्यनेकधोपलम्भात् ।

१ दृष्टान्ताद्यन्तरं निग्रहस्थानं न स्याच्चेद्धेत्वन्तरमपि निग्रहस्थानं मा भूदिति ॥ २ प्रकृतप्रमेयानुपयोगिवचनमर्थान्तरं नाम निग्रहस्थानम् ॥ ३ वस्तुधर्मानेकाधिकरणावित्यादि ॥ ४ अस्पर्शवत्त्वादिति ॥ ५ वादी ॥ ६ वादम् ॥
७ प्रकृतार्थं परित्यज्यान्यमर्थं ब्रूते इत्यर्थः ॥ ८ तस्य वादिनः ॥ ९ वादिप्रतिवादिनोः ॥ १० अर्थरहितशब्दोच्चारणं निरर्थकं नाम निग्रहस्थानम् ॥ ११ पश्चात्क्रियमाणेन ॥ १२ निरर्थकलानिग्रहस्थानानाम् ॥ १३ वादिना ॥
१४ वादिना त्रिरुपन्यस्तमपि परिषत्प्रतिवादिभ्यामविज्ञातमविज्ञातार्थं नाम निग्रहस्थानं वादिनः । प्रतिवादिनोप्येवम् ॥ १५ तात्पर्यम् ॥ १६ पूर्वापराऽसङ्गतपदकदम्बकोच्चारणादप्रतिष्ठितवाक्यार्थमपार्थकं नाम निग्रहस्थानम् ॥

"शङ्ख· कदल्यां कदली च भेर्यां तस्या च भेर्यां सुमहद्विमानम् । तच्छङ्खभेरीकदलीविमानमुन्मत्तगङ्गप्रतिमं बभूव" इत्यादिवत् । यदि पुनः पदनैरर्थक्यमेव वाक्यनैरर्थक्यं पदसमुदायात्मकत्वात्तस्य तर्हि वर्णनैरर्थक्यमेव पदनैरर्थक्यं स्याद्वर्णसमुदायात्मकत्वात्तस्य । वर्णानां सर्वत्र निरर्थकत्वात्पदस्यापि तत्प्रसङ्गश्चेत्तर्हि पदस्यापि निरर्थकत्वात्तत्समुदायात्मनो वाक्यस्यापि नैरर्थक्यानुषङ्गः । पदार्थापेक्षया पदस्यार्थवत्त्वे वर्णार्थापेक्षया वर्णस्यापि तदस्तु प्रकृतिप्रत्ययादिवर्णवत् । न[3] खलु प्रकृतिः केवला पदं प्रत्ययो वा । नाप्यनयोरनर्थकत्वम् । अभिव्यक्तार्थाभावादनर्थकत्वे पदस्यापि तत्स्यात् । यथैव हि प्रकृत्यर्थः प्रत्ययेनाभिव्यज्यते प्रत्ययार्थश्च प्रकृत्या तयोः केवलयोरप्रयोगात् तथा देवदत्तस्तिष्ठतीत्यादिप्रयोगे सुबन्तपदार्थस्य तिङन्तपदेन तिङन्तपदार्थस्य च सुबन्तपदेनाभिव्यक्तेः केवलस्याप्रयोगः । पदान्तरापेक्षस्य पदस्य सार्थकत्वं प्रकृत्यपेक्षस्य प्रत्ययस्य तदपेक्षस्य च प्रकृत्यादिवर्णस्य समानमिति । अवयवविपर्यासवचनमप्राप्तकालम् । अवयवानां प्रतिज्ञादीनां विपर्यासेनाभिधानमप्राप्तकालं नाम निग्रहस्थानम् । इत्यप्यपेशलं प्रेक्षावतां प्रतिपत्तॄणामवयवक्रमनियमं विनाप्यर्थप्रतिपत्त्युपलम्भाद्देवदत्तादिवाक्यवत् । ननु यथापशब्दाच्छ्रुताच्छब्दस्मरणं[10] ततोऽर्थप्रत्यय इति शब्दादेवार्थप्रत्ययः परम्परया तथा प्रतिज्ञाद्यवयवव्युत्क्रमात्तत्क्रमस्मरणं ततो वाक्यार्थप्रत्ययो न तद्व्युत्क्रमात, इत्यप्यसारमेवंविधप्रतीत्यभावात् । यस्माद्धि शब्दादुच्चरितादव्यत्रार्थे प्रतीतिः स एव तस्य वाचको नान्यः । अन्यथा शब्दात्तत्क्रमाच्चापशब्दे तद्व्युत्क्रमे च स्मरणं ततोऽर्थप्रतीतिरित्यपि वक्तुं शक्येत । एवं शब्दाद्यन्वाख्यानवैयर्थ्यं चेन्नैवं वादिनोऽनिष्टमात्रापादनात्, अपशब्देपि चान्वाख्यानस्योपलम्भात् । [17]संस्कृताच्छब्दात्सत्याद्धर्मोन्यस्मादऽधर्म इति नियमे चान्यधमाधर्मोपायानुष्ठानवैयर्थ्यम् । धर्माधर्मयोश्चाप्रतिनियमप्रसङ्गोऽधार्मिके धार्मिके च तच्छब्दोपलम्भात् । भवतु वा तत्क्रमादर्थप्रतीतिः । तथाप्यर्थप्रत्ययः क्रमेण स्थितो येन वाक्येन व्युत्क्रम्यते तन्निरर्थकं, न त्वऽप्राप्तकालमिति । शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । तत्रार्थपुनरुक्तमेवोपपन्नं न शब्दपुनरुक्तमर्थभेदे शब्दसाम्येप्यस्याऽसम्भवात् "हसति[19] हसति स्वामिन्युच्चैरुदत्यतिरोदिति कृतपरिकरं स्वेदोद्गारि प्रधावति धावति । गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति धनलवैपरिक्रीतं यैन्त्रं प्रनृत्यति नृत्यति" इत्यादिवत् । ततः स्वेष्टार्थवाचकैस्तैरेवान्यैर्वा शब्दैः सत्याः प्रतिपादनीयाः । तत्प्रतिपादकशब्दानां तु सकृत्पुनः

---

१ उन्मत्ता गङ्गा यस्मिन्प्रदेशेऽसावुन्मत्तगङ्ग ॥ २ वाक्ये पदे च ॥ ३ प्रकृत्यादावपि पदानामेवार्थवत्त्व न पुनर्वर्णाना येन दृष्टान्त सिद्ध स्यादित्युक्ते सत्याह ॥ ४ वर्णस्य ॥ ५ पदस्य ॥ ६ सार्थकत्वम् ॥ ७ यथाक्रमोल्लङ्घनेन प्रयुज्यमानमनुमानवाक्यम् ॥ ८ अप्राप्तावसरम् ॥ ९ देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादिवत् ॥ १० सत्य शब्दस्य ॥ ११ स्मृतशब्दात् ॥ १२ विपर्ययात् ॥ १३ स्मृतक्रमात् ॥ १४ स्मृतापशब्दात्स्मृततत्क्रमात् ॥ १५ शब्दादेरपशब्दादिस्मरणप्रकारेण ॥ १६ पुन पुन कथनमन्वाख्यानम् ॥ १७ स कृताच्छब्दाद्धर्मोऽन्यस्माद धर्म इति नियमात्पशब्देऽन्वाख्यापनमस्तीत्युक्ते सत्याह ॥ १८ इज्याऽध्ययनादिरन्य ॥ १९ सति ॥ २० क्रियाविशेषणम् ॥ २१ क्रियाविशेषणम् ॥ २२ मौल्येन सङ्गृहीतम् ॥ २३ यत्रमित्र यत्र=भृत्य ॥ २४ शब्दपौनरुक्त्यमुपपन्न न भवेयत ॥ २५ प्रथमोच्चारिते ॥ २६ कथनानन्तरमेकवारम् ॥

पुनर्वाभिधानं निरर्थकं, न तु पुनरुक्तम्। यद्यप्यर्थादापन्नस्य[1] स्वशब्देन पुनर्वचनं पुनरुक्तमुक्तम्। यथोत्पत्तिधर्मकमनित्यमित्युक्त्वाऽर्थादापन्नस्यार्थस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयान्नित्यमनुत्पत्तिधर्मकमिति । तदपि प्रतिपन्नार्थप्रतिपादकत्वेन वैयर्थ्यान्निग्रहस्थानं, नान्यथा[2]। तथा चेदं निरर्थकान्न विशेष्येतेति। विज्ञातस्य परिषदा त्रिरभिहितस्याऽप्रत्युच्चारणमननुभाषणम्। अप्रत्युच्चारयन्किमाश्रयं परपक्षप्रतिषेधं ब्रूयादित्यत्रापि किं सर्वस्य वादिनोक्तस्याननुभाषणं किं वा यन्नान्तरीयिका साध्यसिद्धिस्तस्येति? तत्राद्यः पक्षोऽयुक्तः परोक्तमशेषमप्रत्युच्चारयतोपि दूषणवचनाऽव्याघातात्। यथा सर्वमनित्यं सत्त्वादित्युक्ते सत्त्वादित्ययं हेतुर्विरुद्ध इति हेतुमेवोच्चार्य विरुद्धतोद्भाव्यते[6]—"क्षणक्षयाद्येकान्ते सर्वथार्थक्रियाविरोधात्सत्त्वानुपपत्तेः" इति। समर्थ्यते च तावता च परोक्तहेतोर्दूषणात्किमन्योच्चारणेन? अतो[10] यन्नान्तरीयिका साध्यसिद्धिस्तस्यैवाऽप्रत्युच्चारणमननुभाषणं प्रतिपत्तव्यम्। अथैवं दूषयितुमसमर्थः[11] शास्त्रार्थपरिज्ञानविशेषविकलत्वात्तदाऽयम्[12]उत्तराऽप्रतिपत्तेरेव तिरस्क्रियते न पुनरननुभाषणादिति। अविज्ञातं चाज्ञानम्। विज्ञातार्थस्य परिषदा प्रतिवादिना यदविज्ञातं तदज्ञानं नाम[13] निग्रहस्थानम्। अजानन्[14] कस्य प्रतिषेधं ब्रूयात्? इत्यप्यसारं प्रतिज्ञाहान्यादिनिग्रहस्थानानां भेदाभावानुषङ्गात्, तत्राप्यज्ञानस्यैव सम्भवात्। तेषां तत्प्रभेदत्वे वा निग्रहस्थानप्रतिनियमाभावप्रसङ्गः परोक्तस्यार्द्धाज्ञानादि[15]भेदेन निग्रहस्थानानेकत्वसम्भवात्। उत्तरस्याप्रतिपत्तिरप्रतिभासाप्यज्ञानान्न भिद्यत एव। निग्रहप्राप्तस्या[16]निग्रहः[17] पर्यनुयोज्योपेक्षणम्। पर्यनुयोज्यो हि निग्रहोपपत्त्या चोदनीय[18]स्तस्योपेक्षणं निग्रहं प्राप्तोसीत्यननुयोग एव। एतच्च कस्य पराजय इत्यनुयुक्तया[19] परिषदा वचनीयम्। न खलु निग्रहप्राप्तः स्वं कौपीनं[20] विवृणुयादित्यप्यज्ञानान्न व्यतिरिच्यत एव। अनिग्रहस्थाने[21] निग्रहस्थानानुयोगो निरनुयोज्यानुयोगः। तस्याप्यज्ञानात्पृथग्भावोनुपपन्न एव। कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः। सिसाधयिषितस्यार्थस्याऽशक्यसाध्यतामवसीय[22] कालयापनार्थं यत्कर्तव्यं व्यासज्यकथां विच्छिनत्तीदं मे करणीयं परिहीयते। तस्मिन्नवसिते पश्चात्कथयिष्यामि। इत्यप्यज्ञानतो नार्थान्तरमिति प्रतिपत्तव्यम्। स्वपक्षे[23] दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा। यः[24] परेण[25] चोदितं दोषम्[26]अनुद्धृत्य ब्रवीति भवत्पक्षेप्ययं दोषः समान इति स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसजन्[27] परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यते। इत्यप्यज्ञानान्न भिद्यते एव। अनैकान्तिकता चात्र हेतोः। तथा हि। तस्करोयं पुरुषत्वात्प्रसिद्धत-

---

१ अर्थस्य ॥ २ पुनरुक्तत्वप्रकारेण ॥ ३ वादिना ॥ ४ प्रतिवादिना ॥ ५ प्रतिवाद्युक्तस्य ॥ ६ प्रतिवादिना ॥ ७ अन्यत् धर्मिसाध्यादि ॥ ८ सर्वस्य वादिनोक्तस्याननुभाषण न घटते यत ॥ ९ परेण ॥ १० हेतूच्चारण कृत्वा ॥ ११ प्रतिवादी ॥ १२ प्रतिवादी ॥ १३ परिषदा विज्ञातस्यापि वादिवाक्यस्य प्रतिवादिना यदविज्ञात तदज्ञान नाम ॥ १४ प्रतिवादी ॥ १५ आदिना अर्द्धार्द्धादिग्रह ॥ १६ प्राप्तदोषानुद्भावन पर्यनुयोज्योपेक्षण नाम निग्रहस्थानम् ॥ १७ प्रतिवादिन ॥ १८ इद ते निग्रहस्थानमायातमतो निग्रहीतोसीति वचनीय ॥ १९ पृष्ट्या ॥ २० ॥ गुह्यम् ॥ २१ दोषरहिते दोषोद्भावन निरनुयोज्यानुयोगो नाम निग्रहस्थानम् ॥ २२ ज्ञात्वा ॥ २३ स्वपक्षोक्तदोषमपरिहृत्य परपक्षेपि दूषणमुद्भावयतो मतानुज्ञा नाम निग्रहस्थानम् ॥ २४ वादी ॥ २५ प्रतिवादिना ॥ २६ स्वपक्षे ॥ २७ मन्यन्वयन् ॥

स्करवदित्युक्ते त्वमपि तस्करः स्यादि(इ)ति हेतोरनैकान्तिकत्वमेवोक्तं स्यात् । [1]स चात्मीयहेतोरात्मनैवा[2]ऽनैकान्तिकत्वं [3]दृष्ट्वा प्राह—भवत्पक्षेप्ययं दोषः समानः । त्वमपि पुरुषोसीत्यनैकान्तिकत्वमेवोद्भावयतीति । हीनमन्यतमेनाप्यवयवेन न्यूनम् । यस्मिन्वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं हीनं नाम निग्रहस्थानं साधनाभावे साध्यसिद्धेरभावात्, प्रतिज्ञादीना च पञ्चानामपि साधनत्वात् । इत्यप्यसमीचीनं पञ्चावयवप्रयोगमन्तरेणापि साध्यसिद्धेः प्रतिपादितत्वात्, पक्षहेतुवचनमन्तरेणैव तत्सिद्धेरभावात् । अतस्तद्धीनमेव न्यूनं निग्रहस्थानमिति । हेतूदाहरणाधिकमधिकम् । यस्मिन्वाक्ये द्वौ हेतू द्वौ वा दृष्टान्तौ तदधिकं निग्रहस्थानमित्यपि वार्त्तं तथाविधाद्वाक्यात्पक्षप्रसिद्धौ पराजयायोगात् । कथं [4]चैवं प्रमाणसंप्लवो[5]भ्युपगम्यते[6]? अभ्युपगमे वाधिकत्वान्निग्रहाय जायेत । प्रतिपत्तिदार्ढ्यसंवादसिद्धिप्रयोजनसद्भावान्न निग्रह इत्यन्यत्रापि समानम् । हेतुना दृष्टान्तेन वैकेन प्रसाधितेप्यर्थे द्वितीयस्य हेतोर्दृष्टान्तस्य वा नानर्थक्यं तत्प्रयोजनसद्भावात् । न [7]चैवमनवस्था कस्यचित्क्वचिन्निराकांक्षतोपपत्तेः प्रमाणान्तरवत् । कथं चास्य[8] कृतकत्वादौ[9] स्वार्थिकप्रत्ययवचनं, यत्कृतकं तदनित्यमिति व्याप्तौ यत्तद्वचनं, वृत्ति[11]पदप्रयोगादेव चार्थप्रतिपत्तौ वाक्यप्रयोगोधिकत्वान्निग्रहस्थानं न स्यात्[12]? [13]तथाविधस्याप्यस्य प्रतिपत्तिविशेषोपायत्वात्तन्नेति चेत्कथमनेकस्य हेतोर्दृष्टान्तस्य वा तदुपायभूतस्य वचनं निग्रहाधिकरणम्? [14]निरर्थकस्य तु वचनं निरर्थकत्वादेव निग्रहस्थानं नाधिकत्वादिति ।

[15]सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः प्रतिज्ञातार्थपरित्यागान्निग्रहस्थानम् । यथा नित्यानऽभ्युपेत्य शब्दादीन् पुनरनित्यान् ब्रूते इत्यपि प्रतिवादिनः प्रतिपक्षसाधने सत्येव निग्रहस्थानं, नान्य[16]था । हेत्वाभासाश्च यथोक्ता असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमा निग्रहस्थानमित्यत्रापि विरुद्धहेतूद्भावने प्रतिपक्षसिद्धेर्निग्रहाधिकरणत्वं युक्तम् । असिद्धाद्युद्भावने तु प्रतिवादिना प्रतिपक्षसाधने कृते तद्युक्तं, नान्यथेति । एतेना[17]साधनाङ्गवचना[18]दि निग्रहस्थानं प्रत्युक्तमेकस्य स्वपक्षसिद्ध्यैवान्यस्य निग्रहप्रसिद्धेः । ततः स्थितमेतत् "स्वपक्षसिद्धेरेकस्य निग्रहोन्यस्य वादिनः । नासाधनाङ्गवचनमदोषोद्भावनं [19]द्वयोः" इति । इदं चानवस्थितम् 'असाधनाङ्गव[20]चनमदोषोद्भावन[21] द्वयोर्निग्रहस्थानमन्यत्तु न युक्त[22]मिति नेष्यते' इति । अत्र हि स्वपक्षं साधयन्वादिप्रतिवादिनोरन्यतरोऽसाधनाङ्गवचनादऽदोषोद्भावनाद्वा परं निगृह्णात्यसाधयन्वा? प्रथमपक्षे स्वपक्षसिद्ध्यैवास्य पराजयादन्यो[23]द्भावनं व्यर्थम् । द्वितीयपक्षे त्वसाधनाङ्गवचनाद्यु-

---

१ वादी ॥ २ स्वयम् ॥ ३ अनुमानस्य ॥ ४ अधिकस्य निग्रहस्थानत्वप्रकारेण ॥ ५ एकस्मिन्प्रमाणविषये प्रमाणान्तरवर्तनं प्रमाणसप्लव ॥ ६ परेण ॥ ७ हेतुदृष्टान्तान्तरान्वेषणप्रकारेण ॥ ८ अनुमाने ॥ ९ अधिकनिग्रहस्थानवादिन ॥ १० साधने ॥ ११ समासोत्र वृत्ति ॥ १२ स्यादेव ॥ १३ अधिकत्वान्निग्रहस्थानत्व क कारयेत्तद्वचनस्य ॥ १४ निरर्थकत्वान्निग्रहस्थान भविष्यतीत्युक्ते सत्याह ॥ १५ स्वीकृतागमविरुद्धप्रसाधनमपसिद्धान्तो नाम निग्रहस्थानम् ॥ १६ प्रतिपक्षसिद्ध्यभावे ॥ १७ सौगतमतमेतत् ॥ १८ आदिना अदोषोद्भावनादि ॥ १९ वादिप्रतिवादिनो ॥ २० एतदीय व्याख्यानमस्त्यग्रे ॥ २१ असाधनाङ्गवचन वादिन एव निग्रहस्थानमदोषोद्भावन तु प्रतिवादिन एवेति द्वयोरिति पदमुक्तम् ॥ २२ हेतो ॥ २३ अन्यस्य दोषस्य ॥

द्भावनेपि न कस्यचिज्जयः पक्षसिद्धेरुभयोरभावात् । यच्चास्य व्याख्यानं—साधनं सिद्धिस्तदङ्गं त्रिरूपं लिङ्गं तस्याऽवचनं तूष्णीभावो यत्किञ्चिद्भाषणं वा साधनस्य वा त्रिरूपलिङ्गस्याङ्गं समर्थनं विपक्षे बाधकप्रमाणदर्शनरूपं तस्याऽवचनं वादिनो निग्रहस्थानमिति, तत्पञ्चावयवप्रयोगवादिनोपि समानम् । शक्यं हि तेनाप्येवं वक्तुं सिद्ध्यङ्गस्य पञ्चावयवप्रयोगस्यावचनात्सौगतस्य वादिनो निग्रहः । ननु चास्य तदवचनेपि न निग्रहः प्रतिज्ञानिगमनयोः पक्षधर्मोपसंहारस्य सामर्थ्याद्गम्यमानत्वात् । गम्यमानयोश्च वचने पुनरुक्तत्वानुषङ्गात् । ननु तत्प्रयोगेपि हेतुप्रयोगमन्तरेण साध्यार्थाप्रसिद्धिरित्यप्ययपेशलं पक्षधर्मोपसंहारस्याप्येवमवचनानुषङ्गात् । अथ सामर्थ्याद्गम्यमानस्यापि यत्सत्तत्सर्वं क्षणिकं यथा घटः संश्च शब्द इति पक्षधर्मोपसंहारस्य वचनं हेतोरपक्षधर्मत्वेनासिद्धत्वव्यवच्छेदार्थं तर्हि साध्याधारसन्देहापनोदार्थं गम्यमानस्यापि पक्षस्य निगमनस्य च पक्षहेतूदाहरणोपनयानामेकार्थत्वप्रदर्शनार्थं वचनं किन्न स्यात्? न हि पक्षादीनामेकार्थत्वोपदर्शनमन्तरेण सङ्गतत्वं घटते भिन्नविषयपक्षादिवत् । ननु प्रतिज्ञातः साध्यसिद्धौ हेत्वादिवचनमनर्थकमेव स्याद्, अन्यथा नास्याः साधनाङ्गतेति चेत्तर्हि भवतोपि हेतुतः साध्यसिद्धौ दृष्टान्तोनर्थकः स्यात्, अन्यथा नास्य साधनाङ्गतेति समानम् । ननु साध्यसाधनयोर्व्याप्तिप्रदर्शनार्थत्वाद् दृष्टान्तो नानर्थकस्तत्र तदप्रदर्शने हेतोरगमकत्वादित्यप्यसङ्गतं सर्वानित्यत्वसाधने सत्त्वादेर्दृष्टान्ताऽसम्भवतोऽगमकत्वानुषङ्गात् । विपक्षव्यावृत्त्या सत्त्वादेर्गमकत्वे वा सर्वत्रापि हेतौ तथैव गमकत्वप्रसङ्गाद् दृष्टान्तोनर्थक एव स्यात् । विपक्षव्यावृत्त्या च हेतुं समर्थयन् कथं प्रतिज्ञां प्रतिक्षिपेत्? तस्याश्चानभिधाने क्व हेतुः साध्यं वा वर्त्तेत? गम्यमाने प्रतिज्ञाविषये एवेति चेत्तर्हि गम्यमानस्यैव हेतोरपि समर्थनं स्यान्न तूक्तस्य । अथ गम्यमानस्यापि हेतोर्मन्दमतिप्रतिपत्त्यर्थं वचनं तथा प्रतिज्ञावचने कोऽपरितोषः? यच्चेदमसाधनाङ्गमित्यस्य व्याख्यान्तरं साधर्म्येण हेतोर्वचने वैधर्म्यवचनं वैधर्म्येण वा प्रयोगे साधर्म्यवचनं गम्यमानत्वात् पुनरुक्तम् । अतो न साधनाङ्गमित्यप्यसाम्प्रतं यतः सम्यक्साधनसामर्थ्येन स्वपक्षं साधयतो वादिनो निग्रहः स्यादप्रसाधयतो वा? प्रथमपक्षे कथं साध्यसिद्ध्यऽप्रतिबन्धिवचनाधिक्योपलम्भमात्रेण.स्य निग्रहो विरोधात् । नन्वेवं नाटकादिघोषणातोप्यस्य निग्रहो न स्यात् । सत्यमेवैतत् । स्वसाध्यं प्रसाध्य नृत्यतोपि दोषाभावाल्लोकवत् । अन्यथा ताम्बूलभक्षणभ्रूक्षेपखात्कृताकम्पहस्तास्फालनादिभ्योपि सत्यसाधनवादिनो निग्रहः स्यात् । अथ स्वपक्षमप्रसाधयतोस्य निग्रहः । नन्वत्रापि किं प्रतिवादिना स्वपक्षे साधिते वादिनो वचनाधिक्योपलम्भान्निग्रहो लक्ष्येतासाधिते वा? प्रथमविकल्पे स्वपक्षसिद्ध्यैवास्य

---

१ व्याख्यानम् ॥ २ योगस्य ॥ ३ सौगतमतमालम्ब्याचार्येणोच्यते ॥ ४ प्रतिज्ञानिगमनप्रकारेण ॥ ५ व्यतिरेकेण ॥ ६ योगतस्य ॥ ७ हेतुत साध्यसिद्धिर्न भवतीति चेत् ॥ ८ साध्यस्याऽज्ञापको भवति हेतुरिति भाव ॥ ९ विपक्षेत्र नित्य ॥ १० सौगत ॥ ११ प्रतिपादनम् ॥ १२ हेतोर्वचने ॥ १३ प्रतिपादनम् ॥ १४ स-यक्साध्यसिद्धिश्चेन्निग्रह कथ, निग्रहश्चेत्सा कथमिति विरोध ॥ १५ साध्यसिद्ध्यप्रतिबन्धिवचनाधिक्यमात्रतोपि न निग्रह इति प्रकारेण ॥

निग्रहाद्वचनाधिक्योद्भावनमनर्थकं तस्मिन् सत्यपि स्वपक्षसिद्धिमन्तरेण जयायोगात्। द्वितीयपक्षे तु युगपद्वादिप्रतिवादिनोः पराजयप्रसङ्गो जयप्रसङ्गो वा स्यात्स्वपक्षसिद्धेरभावाविशेषात्। ननु न स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ जयपराजयौ तयोर्ज्ञानाज्ञाननिबन्धनत्वात्। साधनवादिना हि साधु साधनं ज्ञात्वा वक्तव्यं दूषणवादिना च तद्दूषणम्। तत्र साधर्म्यवचनाद्वैधर्म्यवचनाद्वाऽर्थस्य प्रतिपत्तौ तदुभयवचने वादिनः प्रतिवादिना सभायामसाधनाङ्गवचनस्योद्भावनात् साधुसाधनाभिधानाज्ञानसिद्धेः पराजयः प्रतिवादिनस्तु तद्दूषणज्ञाननिर्णयाज्जयः स्यात्। इत्यप्यविचारितरमणीयं विकल्पानुपपत्तेः। स हि प्रतिवादी निर्दोषसाधनवादिनो वचनाधिक्यमुद्भावयेत्साधनाभासवादिनो वा? तत्राद्यविकल्पे वादिनः कथं साधुसाधनाभिधानाऽज्ञानं तद्वचनेयत्ताज्ञानस्यैवासम्भवात्। द्वितीयविकल्पे तु न प्रतिवादिनो दूषणज्ञानमवतिष्ठते साधनाभासस्यानुद्भावनात्। तद्वचनाधिक्यदोषस्य ज्ञानाद्दूषणज्ञोसाविति चेत्साधनाभासाज्ञानाददूषणज्ञोपीति नैकान्ततो वादिनं जयेत्तददोषोद्भावनलक्षणस्य पराजयस्यापि निवारयितुमशक्तेः। अथ वचनाधिक्यदोषोद्भावनादेव प्रतिवादिनो जयसिद्धौ साधनाभासोद्भावनमनर्थकम्। नन्वेवं साधनाभासानुद्भावनात्तस्य पराजयसिद्धौ वचनाधिक्योद्भावनं कथं जयाय प्रकल्प्येत? अथ वचनाधिक्यं साधनाभासं चोद्भावयतः प्रतिवादिनो जयः। कथमेवं साधर्म्यवचने वैधर्म्यवचनं तद्वचने वा साधर्म्यवचनं पराजयाय प्रभवेत्? कथं चैवं वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहवैयर्थ्यं न स्यात्? क्वचिदेकत्रापि पक्षे साधनसामर्थ्यज्ञानाज्ञानयोः सम्भवात्। न खलु शब्दादौ नित्यत्वस्यानित्यत्वस्य वा परीक्षायामेकस्य साधनसामर्थ्ये ज्ञानमन्यस्य चाज्ञानं जयस्य पराजयस्य वा निबन्धनं न सम्भवति। युगपत्साधनसामर्थ्यस्य ज्ञानेन वादिप्रतिवादिनोः कस्य जयः पराजयो वा स्यात्तदविशेषात्। न कस्यचिदिति चेत्तर्हि साधनवादिनो वचनाधिक्यकारिणः साधनसामर्थ्याऽज्ञानसिद्धेः प्रतिवादिनश्च वचनाधिक्यदोषोद्भावनात्तद्दोषमात्रे ज्ञानसिद्धेर्न कस्यचिज्जयः पराजयो वा स्यात्। न हि यो यद्दोषं वेत्ति स तद्गुणमपि कुतश्चिन्मारणशक्तिवेदनेपि विषद्रव्यस्य कुष्ठापनयनशक्तौ संवेदनानुदयात्। तत्र तत्सामर्थ्यज्ञानाज्ञाननिबन्धनौ जयपराजयौ शक्यव्यवस्थौ यथोक्तदोषानुषङ्गात्। स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ तु तौ निरवद्यौ पक्षप्रतिपक्षपरिग्रहवैयर्थ्याभावात्। कस्यचित्कुतश्चित्स्वपक्षसिद्धौ सुनिश्चितायां परस्य तत्सिद्ध्यभावतः सकृज्जयपराजयाप्रसङ्गात्। यच्चेदमदोषोद्भावनमित्यस्य व्याख्यानं प्रसज्यप्रतिषेधे दोषोद्भावनाऽभावमात्रमदोषोद्भावनं पर्युदासे तु दोषाभासानामन्यदोषाणां चोद्भावनं प्रतिवादिनो निग्रहस्थानमिति, तद्वादिना दोषवति साधने प्रयुक्ते सत्यनुमतमेव यदि वादी स्वपक्षं साधयेन्नान्यथा। वचनाधिक्यं तु दोषः प्रागेव प्रतिविहितः। यथैव हि पञ्चावयवप्रयोगे वचनाधिक्यं निग्रहस्थानं तथा त्र्यवयव-

---

१ साधनदूषणं ज्ञात्वा वक्तव्यम् ॥ २ साध्यलक्षणस्य ॥ ३ एतावत्परिमाणेन साधुसाधनं वाच्यमिति ज्ञानस्य ॥ ॥ ४ सर्वथा ॥ ५ ततश्च जयायैवोभयवचनम् ॥ ६ वादिन ॥ ७ प्रतिवादिन ॥ ८ अत्यन्ताभावमात्रम् ॥ ९ प्रतिवादिना ॥ १० वचनाधिक्यदोषनिराकरणसमये ॥ ११ यौगस्य ॥

द्युपयोगमत्तस्यात्मगृहादौ मोहोदयवत्[1]। ननु चातः कर्ममात्रमेव प्रसिद्धं; नावरणम्। ततस्तत्सिद्धावेव प्रमाणमुच्यतां तत्रैव विवादादिति चेदुच्यते। येज्ज्ञानं स्वविषयेऽप्रवृत्तिमत्तत्सावरणं यथा कामलिनो लोचनविज्ञानमेकचन्द्रमसि[3]। स्वविषये अशेषार्थलक्षणेऽप्रवृत्तिमच्च ज्ञानमिति। ननु विज्ञानस्याशेषविषयत्व कुत॰ सिद्धम्? आवरणापाये तत्प्रकाशकत्वाच्चेदन्योन्याश्रयः। सिद्धे हि सकलविषयत्वे तस्य आवरणापाये तत्प्रकाशनं सिद्ध्यत्यऽतश्च सकलविषयत्वमिति। तदप्यसमीक्षिताभिधानं–यतोनुमानमिच्छता भवताप्यवश्यं सकलावरणवैकल्यात्प्रागेव सकलस्य प्राणिमात्रस्याशेषविषयं व्याप्त्यादिज्ञानमभ्युपगतमेव। तथा यत्स्वविषयेऽस्पष्टं ज्ञानं तत्सावरणम्। यथा रजोनीहाराद्यन्तरिततरुनिकरादिज्ञानम्। अस्पष्टं च सर्वं सदनेकान्तात्मकमित्यादि व्याप्तिज्ञानम्। मिथ्यादृशा सर्वत्रानेकान्तात्मके भावे विपरीतज्ञानं सावरणं मिथ्याज्ञानत्वाद्धत्तूरकाद्युपयोगिनो मृच्छकले काञ्चनज्ञानवदिति। अतः सिद्धमावरणं पौद्गलिकं कर्मेति।

ननु चाविद्यैवावरणं, न पौद्गलिकं कर्म–मूर्त्तेनानेनामूर्त्तस्य ज्ञानादेरावरणायोगादन्यथा शरीरादेरप्याव(वा)रकत्वानुषङ्गादित्यप्यसमीचीनं–मदिरादिना मूर्त्तेनाप्यमूर्त्तस्य ज्ञानादेरावरणदर्शनात्। अमूर्त्तस्य चाव(वा)रकत्वे गगनादेर्ज्ञानान्तरस्य च तत्प्रसङ्गः। तद्विरुद्धत्वात्तस्य तन्नेति चेत्तर्हि शरीरादेरप्यत एव तन्मा भूत्तद्विरुद्धस्यैवावरकत्वप्रसिद्धेः। प्रवाहेण प्रवर्त्तमानस्य ज्ञानादेरविद्योदये निरोधात्तस्यास्तद्विरोधगतौ मदिरादिवत्पौद्गलिककर्मणोपि सास्तु–विशेषाभावात्। तथा हि। आत्मनो मिथ्याज्ञानादिः पुद्गलविशेषसम्बन्धनिबन्धनस्तत्स्वरूपान्यथाभावस्वभावत्वादुन्मत्तकादिजनितोन्मादादिवत्। न च मिथ्याज्ञानजनितापरमिथ्याज्ञानेनानेकान्तस्तस्यापरापरपौद्गलिककर्मोदये सत्येव भावादपरापरोन्मत्तकादिरससद्भावे तत्कृतोन्मादादिसन्तानवत्। ननु चात्मगुणत्वात्कर्मणा कथं पौद्गलिकत्वमित्यन्ये तेप्यपरीक्षकाः—तेषामात्मगुणत्वे तत्पारतन्त्र्यनिमित्तत्वविरोधात्सर्वदात्मनो बन्धानुपपत्तेः सदैव मुक्तिप्रसङ्गात्। न खलु यो यस्य गुणः स तस्य पारतन्त्र्यनिमित्तम्। यथा पृथिव्यादे रूपादि। आत्मगुणश्च धर्माधर्मसंज्ञकं कर्म परैरभ्युपगम्यते इति न तदात्मनः पारतन्त्र्यनिमित्तं स्यात्। न चैवम्–आत्मनः परतन्त्रतया प्रमाणतः प्रतीते॰। तथा हि। परतन्त्रोऽसौ हीनस्थानपरिग्रहवत्त्वान्मद्योद्रेकपरतन्त्राशुचिस्थानपरिग्रहवद्विशिष्टपुरुषवत्। हीनस्थानं हि शरीरम्–आत्मनो दुःखहेतुत्वात्कारागारवत्। तत्परिग्रहवांश्च संसारी प्रसिद्ध एव। न च देवशरीरे तदभावात्पक्षाव्याप्तिः—तस्यापि मरणे दुःखहेतुत्वप्रसिद्धेः। यत्परतन्त्रश्चासौ तत्कर्म। इति

---

१ उक्तानुमानद्वयात् ॥ २ ससारिज्ञानमशेषार्थलक्षणे स्वविषये सावरण भवति तत्राप्रवृत्तिमत्त्वादिति प्रतिज्ञाहेतू उपरिष्टान्यौ ॥ ३ सावरणम् ॥ ४ अभावात् ॥ ५ आदिपदेनागमजम् ॥ ६ अस्पष्टज्ञानत्वादित्युच्यमाने स्वसिन्नसष्टत्व सात्तज्ञवच्छेदार्थं स्वविषये इत्युक्तम् ॥ ७ एकान्तरूप विपरीतम् ८ अनुमानत्रयात् ॥ ९ पुरुषज्ञानाद्वैतवादिना वदत ॥ १० आत्मन ॥ ११ आदिपदेनात्मन ॥ १२ अविप्राप्तस्वरूपस्य ॥ १३ गगनादिक ज्ञानान्तर च ज्ञानादेरावरक भवति अमूर्त्तत्वादविद्यावत् ॥१४ तेन ज्ञानेन ॥ १५ मिथ्याज्ञानमविद्या ॥१६ प्रवाहेण प्रवर्त्तमानस्य ज्ञानादे पौद्गलिककर्मोदये निरोधस्याविशेषात् ॥ १७ कर्मतापन्न ॥१८ सम्यग्ज्ञानादि ॥ १९ मिथ्याज्ञानादि ॥ २० योगा ॥ २१ धर्माधर्मसंज्ञक कर्म आत्मन पारतन्त्र्यनिमित्त न भवति आत्मगुणत्वादि यध्याहार ॥ २२ न्मंगा ॥ २३ शरीरादिलक्षण ॥ २४ भागासिद्धत्व दुःखहेतुत्वलक्षणस्य हेतो ॥

सिद्धं तस्य पौद्गलिकत्वम्। तथा हि। पौद्गलिकं कर्म—आत्मनः पारतन्त्र्यनिमित्तत्वान्निगलादिवत्। न च क्रोधादिभिर्व्यभिचारस्तेषां जीवपरिणामानां पारतन्त्र्यस्वभावत्वात्।
क्रोधादिपरिणामो हि जीवस्य पारतन्त्र्यं न पुनः पारतन्त्र्यनिमित्तम्। सत्यम्। नात्मगुणोऽदृष्टं प्रधानपरिणामत्वात्तस्य "प्रधानपरिणामः शुक्लं कृष्णं च कर्म" इत्य-
भिधानात्। इत्यपि मनोरथमात्रं—प्रधानस्यासत्त्वेन तत्परिणामत्वस्य क्वचिदप्यसम्भवात्। तदसत्त्वं चात्रैवानन्तरं वक्ष्यामः। तत्परिणामत्वेपि वा तस्यात्मपारत-
न्त्र्यनिमित्तत्वाभावे कर्मत्वायोगादन्यथातिप्रसङ्गः। प्रधानपारतन्त्र्यनिमित्तत्वात्तस्य कर्मत्वमिति चेन्न—प्रधानस्य तेन बन्धोपगमे मोक्षोपगमे चात्मकल्पनावैयर्थ्यप्रस-
ङ्गात्। बन्धमोक्षफलानुभवनस्यात्मनि प्रतिष्ठानान्न तत्कल्पनावैयर्थ्यमित्यसत्—प्रधानस्य तत्कर्तृत्ववत्तत्फलानुभोक्तृत्वस्यापि प्रमाणसामर्थ्यप्राप्तत्वात्। अन्यथा
कृतनाशाकृताभ्यागमदोषानुषङ्गः। अथात्मनश्चेतनत्वात्तत्फलानुभवनं, न तु प्रधानस्याऽचेतनत्वात्तदप्ययुक्तं—मुक्तात्मनोपि तत्फलानुभवनानुषङ्गात्। तस्य
प्रधानसंसर्गाभावान्न तत्फलानुभवनमिति चेत्तर्हि संसारिणः प्रधानसंसर्गाद्बन्धफलानुभवनम्। तथा चात्मन एव बन्धः सिद्धः—तत्संसर्गस्य बन्धफलानुभवननिमि-
त्तस्य बन्धरूपत्वात्, बन्धस्यैव संसर्ग इति पुद्गलस्य च प्रधानमिति नामान्तरकरणात्। ननु प्रसिद्धस्यापि यथोक्तप्रकारस्य कर्मणः कार्यकारणप्रवाहेण प्रवर्त्तमा-
नस्यानादित्वाद्विनाशहेतुभूतसामग्रीविशेषस्य चाभावात्कथं तेन विश्लेषिताखिलावरणत्वं ज्ञानस्येत्यप्यपेशलं—सम्यग्दर्शनादित्रयलक्षणस्य तद्विनाशहेतुभूतसामग्री-
विशेषस्य सुप्रतीतत्वात्। सञ्चितं हि कर्म निर्जरातश्चारित्रविशेषरूपायाः प्रलीयते। सा च निर्जरा द्विविधा उपक्रमेतरभेदात्। तत्रौपक्रमिकी तपसा द्वादशविधेन
साध्या। अनुपक्रमा तु यथाकालं संसारिणः स्यात्। कुतः पुनः साकल्येन पूर्वोपात्तकर्मणां निर्जरा निश्चीयते इति चेदनुमानात्। तथा हि। साकल्येन क्वचि-
दात्मनि कर्माणि निर्जीर्यन्ते—विपाकान्तत्वात्। यानि तु न निर्जीर्यन्ते न तानि विपाकान्तानि यथा कालादीनि। विपाकान्तानि च कर्माणि तस्मात्साकल्येन
क्वचिन्निर्जीर्यन्ते। न चेदमसिद्धं साधनम्। तथा हि। विपाकान्तानि कर्माणि फलावसानत्वाद्व्रीह्यादिवत्। न चेदमप्यसिद्धं—तेषां नित्यत्वानुषङ्गात्। न च नित्यानि
कर्माणि—नित्यं तत्फलानुभवनप्रसङ्गात्। भावि पुनः कर्म संवरान्निरुध्येत—अपूर्वकर्मणामास्रवनिरोधः संवर इत्यभिधानात्। आस्रवो हि मिथ्यादर्शनाविरतिप्रमाद-
कषाययोगविकल्पात्पञ्चविधः—तस्मिन्सति कर्मणामास्रवणात्। स च संवरो गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैर्विधीयते। इत्यागमे विस्तरतः प्ररूपितं द्रष्ट-
व्यम्। निर्जरासंवरयोश्च सम्यग्दर्शनाद्यात्मकत्वात्तत्प्रकर्षे कर्मणां सन्तानरूपतयाऽनादित्वेपि प्रक्षयः प्रसिध्यत्येव। न ह्यनादिसन्ततिरपि शीतस्पर्शो विपक्षस्योष्ण-

१ सुखदु खरागद्वेषादिकृत पारतन्त्र्यम् ॥ २ निगल गलबन्धनम् ( शृङ्खलादि ) ॥ ३ साङ्ख्य ॥ ४ पुण्यम् ॥ ५ पापम् ॥ ६ बुद्ध्यादौ विकारे ॥ ७ वय जैना ॥ ८ घटादेरपि कर्मत्व स्यात् ॥ ९ प्रधान बन्धफलानुभोक्तृ भवति बन्धाधिकरणत्वान्निगलबद्धदेवदत्तवत् ॥ १० तत्कृतकर्त्वेपि तत्फलानुभोक्तृत्व न स्याद्यदि तर्हि ॥ ११ कृतस्य कर्मण प्रधानसम्बन्धित्वेन नाश ॥ १२ अकृतस्य फलस्यात्मनि आगम ॥ १३ तस्य कर्मण फल बन्धमोक्षौ ॥ १४ तस्य कर्मण ॥ १५ पौद्गलिकस्य ॥ १६ फलदानपरिणतिर्विपाक ॥ १७ परमतापेक्षया ॥ १८ सम्यग्दर्शनादे कर्मविनाशहेतुत्वमुक्तमिदानीमन्यदेवोक्तमिति कथ न पूर्वापरविरोध. ? इत्युक्ते आह ॥ १९ सति ॥

स्पर्शस्य प्रकर्षे निर्मूलतलं प्रलयमुपव्रजन्नोपलब्धः, कार्यकारणरूपतया बीजाङ्कुरसन्तानो वाऽनादिः प्रतिपक्षभूतदहनेन निर्दग्धबीजो निर्दग्धाङ्कुरो वा न प्रतीयते इति वक्तुं शक्यम्। ननु तत्प्रकर्षमात्रात्कर्मप्रक्षयमात्रमेव सिध्येन्न पुनः साकल्येन तत्प्रक्षयः—सम्यग्दर्शनादेः परमप्रकर्षसम्भवाभावादित्यप्यसङ्गतं—तत्प्रकर्षस्य क्वचिदात्मनि प्रसिद्धेः। तथा हि। यस्य तारतम्यप्रकर्षस्तस्य क्वचित्परमप्रकर्षो, यथोष्णस्पर्शस्य। तारतम्यप्रकर्षश्चासंयतसम्यग्दृष्ट्यादौ सम्यग्दर्शनादेरिति। न च दुःखप्रकर्षेण व्यभिचारः—सप्तमनरकभूमौ नारकाणां तत्परमप्रकर्षप्रसिद्धेः सर्वार्थसिद्धौ देवाना सांसारिकसुखपरमप्रकर्षवन्मिथ्यादृष्टिष्वनन्तानुबन्धिक्रोधादिपरमप्रकर्षवद्वा। नापि ज्ञानहानिप्रकर्षेणानेकान्तस्तस्यापि क्षायोपशमिकस्य हीयमानतया प्रकृष्यमाणस्य केवलिनि परमापकर्षप्रसिद्धेः। क्षायिकस्य तु हानेरेवासम्भवात्कुतस्तत्प्रकर्षो यतोऽनेकान्तः। इत्थं वा साकल्येन कर्मप्रक्षये प्रयोगः कर्तव्यः। यस्यातिशये यद्धान्यतिशयस्तस्यात्यन्तातिशयेऽन्यस्यात्यन्तहानिः। यथाग्नेरत्यन्तातिशये शीतस्य। अस्ति च सम्यग्दर्शनादेरत्यन्तातिशयः क्वचिदात्मनीति। यद्वाऽऽवरणहानिः क्वचित्पुरुषविशेषे परमप्रकर्षप्राप्ता—प्रकृष्यमाणत्वात् परिमाणवत्। न चात्रासिद्धं साधनम्। तथा हि। प्रकृष्यमाणावरणहानिरावरणहानित्वान्माणिक्याद्यावरणहानिवत्। तद्धानिपरमप्रकर्षे च ज्ञानस्य परमः प्रकर्षः सिद्धः। यद्धि प्रकाशात्मकं तत्स्वावरणहानिप्रकर्षे प्रकृष्यमाणं दृष्टम्। यथा नयनप्रदीपादि। प्रकाशात्मकं च ज्ञानमिति। तदेवमावरणप्रसिद्धिवत्तदभावोप्यन्वयेन प्रमाणतः प्रसिद्धः। तत्प्रभवमेव चाशेषार्थगोचरं ज्ञानमभ्युपगन्तव्यं—लेशतोप्यावरणसद्भावे तस्याशेषार्थगोचरत्वासम्भवात्—यत्रैवावरणसद्भावस्तत्रैवास्य प्रतिबन्धसम्भवात्। आगमद्वारेणाशेषार्थगोचरं ज्ञानमित्यप्यसुन्दरं विशदज्ञानस्य प्रस्तुतत्वात्। न चागमज्ञानं विशदम्। न चागमोप्यशेषार्थगोचरः—अर्थपर्यायेषु तस्याप्रवृत्तेः। ते चार्थस्य प्रतिक्षणमर्थक्रियाकारित्वात्सत्त्वाद्वा सन्तीत्यवसीयन्ते। अन्यथास्याऽवस्तुत्वप्रसङ्गः। करणजन्यत्वे चाशेषज्ञज्ञानस्यातीन्द्रियार्थेषु प्रतिबन्धः प्रसिद्ध एव—इन्द्रियाणां रूपादिमत्यऽव्यवहितेऽनेकावयवप्रचयात्मकेऽर्थे प्रवृत्तिप्रतीतेः। ननु योगजधर्मानुगृहीतानामिन्द्रियाणां गगनाद्यशेषातीन्द्रियार्थसाक्षात्कारिज्ञानजनकत्वसम्भवात् कथं तत्राशेषज्ञानस्येन्द्रियजत्वेपि प्रतिबन्धसम्भव इत्यप्यसमीक्षिताभिधानं—योगजधर्मानुग्रहस्येन्द्रियाणां प्रथमपरिच्छेदे प्रतिविहितत्वात्। भावनाप्रकर्षपर्यन्तजत्वाद्योगिविज्ञानस्य नोक्तदोषानुषङ्गः। भावना हि द्विविधा श्रुतमयी चिन्तामयी च। तत्र श्रुतमयी श्रूयमाणेभ्यः परार्थानुमानवाक्येभ्यः समुत्पद्यमानज्ञानेन श्रुतशब्दवाच्यतामास्कन्दता निर्वृत्ता परमप्रकर्षं प्रतिपद्यमाना स्वार्थानुमानज्ञानलक्षणया चिन्तया निर्वृत्तां चिन्तामयी भावनामारभते। सा च

---

१ सम्यग्दर्शनादि क्वचिदात्मनि परमप्रकर्षं प्राप्नोति तारतम्यप्रकर्षवत्त्वादित्युपरिष्टादध्याह्रियते॥ २ केवलज्ञानस्य॥ ३ तारतम्यप्रकर्ष॥ ४ विपाकान्तत्वादित्यनुमानापेक्षया वाशब्दोऽत्र॥ ५ क्वचित्कर्मणामत्यन्तहान्यतिशयो धर्मी सम्यग्दर्शनादेरत्यन्तातिशये भवति—तस्यातिशये तद्धान्यतिशयदर्शनादित्युपरिष्टादध्याह्रियते॥ ६ कर्मण॥ ७ साकल्येन॥ ८ आवरणाभावप्रभवम्॥ ९ परेण॥ १० अर्थे॥ ११ प्रकृतत्वात्॥ १२ अर्थपर्याया॥ १३ अर्थोऽवस्तु—असत्त्वात्। असत्त्वोऽर्थक्रियाशून्यत्वात्। अर्थक्रियाशून्योर्थ—अर्थपर्यायरहितत्वात् खपुष्पवत्॥ १४ सौगतो वक्ति॥ १५ आचार्यात्॥ १६ सर्वं क्षणिकं सत्त्वादिति॥ १७ प्राप्नुवता॥ १८ श्रुतमयी भावना कर्त्री॥

प्रकृष्यमाणा परं प्रकर्षपर्यन्तं सम्प्राप्ता योगिप्रत्यक्षं जनयतीति । तत्कथमस्यावरणापायप्रभवत्त्वमित्यप्यसारं क्षणिकनैरात्म्यादिभावनायाश्चिन्तामय्याः श्रुतमय्याश्च मिथ्यारूपत्वात् । न च मिथ्याज्ञानस्य परमार्थविषययोगिज्ञानजनकत्वमतिप्रसङ्गात् । यथा च न क्षणिकत्वं नैरात्म्यं शून्यत्वं वा वस्तुनस्तथा वक्ष्यते । किञ्चाखिलप्राणिनां भावनावतां तथाविधज्ञानोत्पत्तिः किन्न स्यात् ? सुगतवत्तेषां तथाभूतभावनाऽभावाच्चेन्न । प्रतिपन्नतत्त्वानां भावनाप्रवृत्तमनसां सर्वेषां समाना भावनैव कुतो न स्यात् ? प्रतिबन्धककर्मसद्भावाच्चेत्तर्हि भावनाप्रतिबन्धककर्मापाये भावनावद्योगिज्ञानप्रतिबन्धककर्मापाये तज्ज्ञानोत्पत्तिरभ्युपगन्तव्या । इति सिद्धं साकल्येनावरणापाये एवातीन्द्रियमशेषार्थविषयं विशदं प्रत्यक्षम् ।

ननु चाशेषार्थज्ञातुस्तज्ज्ञानवतः कस्यचित्पुरुषविशेषस्यैवासम्भवात्कथं तज्ज्ञानसम्भवः ? तथा हि । न कश्चित्पुरुषविशेषः सर्वज्ञोस्ति सदुपलम्भकप्रमाणपञ्चकागोचरचारित्वाद्वन्ध्यास्तनन्धयवत् । न चायमसिद्धो हेतुः । तथा हि । सकलपदार्थवेदी पुरुषविशेषः प्रत्यक्षेण प्रतीयतेऽनुमानादिप्रमाणेन वा ? न तावत्प्रत्यक्षेण । प्रतिनियतासन्नरूपादिविषयत्वेनान्यसन्तानस्थसंवेदनमात्रेप्यस्य सामर्थ्यं नास्ति; किमङ्ग पुनरनाद्यनन्तातीतानागतवर्त्तमानसूक्ष्मादिस्वभावसकलपदार्थसाक्षात्कारिसंवेदनविशेषे तदध्यासिते पुरुषविशेषे वा तत्स्यात् ? न चातीतादिस्वभावनिखिलपदार्थग्रहणमन्तरेण प्रत्यक्षेण तत्साक्षात्करणप्रवृत्तज्ञानग्रहणं ग्राह्याग्रहणे तन्निष्ठग्राहकत्वस्याप्यग्रहणात् । नाप्यनुमानेनासौ प्रतीयते । तद्धि निश्चितस्वसाध्यप्रतिबन्धाद्धेतोरुदयमासादयत्प्रमाणतां प्रतिपद्यते । प्रतिबन्धश्चाखिलपदार्थज्ञसत्त्वेन स्वसाध्येन हेतोः किं प्रत्यक्षेण गृह्येतानुमानेन वा ? न तावत्प्रत्यक्षेणास्याऽत्यक्षज्ञानवत्सत्त्वसाक्षात्करणाक्षमत्वेन तत्प्रतिपत्तिनिमित्तहेतुप्रतिबन्धग्रहणेप्यक्षमत्वात् । न ह्यप्रतिपन्नसम्बन्धिनस्तद्गतसम्बन्धावगमो युक्तोऽतिप्रसङ्गात्[12] । नाप्यनुमानेनानवस्थेतरेतराश्रयदोषानुषङ्गात्[13] । न चात्र धर्मी प्रत्यक्षेण प्रतिपन्नः—अनक्षज्ञानवत्यत्यक्षेऽध्यक्षस्याप्रवृत्तेः । प्रवृत्तौ वाध्यक्षेणैवास्य प्रतिपन्नत्वान्न किञ्चिदनुमानेन । नाप्यनुमानेन—हेतोः पक्षधर्मतावगममन्तरेणानुमानस्यैवाप्रवृत्तेः । न चाप्रतिपन्ने धर्मिणि हेतोस्तत्सम्बन्धावगमः । नाप्यप्रतिपन्नपक्षधर्मत्वो हेतुः प्रतिनियतसाध्यप्रतिपत्त्यङ्गम् । किञ्च सत्तासाधने सर्वो हेतुरसिद्धविरुद्धानैकान्तिकत्वलक्षणां त्रयीं दोषजातिं नातिवर्त्तते । तथा हि । सर्वज्ञसत्त्वे साध्ये भावधर्मो हेतुरभावधर्मो वा स्यादुभयधर्मो वा ? प्रथमपक्षेऽसिद्धो—भावेऽसिद्धे तद्धर्मस्य सिद्धिविरोधात् । द्वितीयपक्षे तु विरुद्धो—भावे साध्येऽभावधर्मस्याभावाव्यभिचारित्वेन विरुद्धत्वात् । उभयधर्मोप्यनैकान्तिकः सत्तासाधने तदुभयव्यभिचारित्वात्[23] । अपि चाविशेषेण सर्वज्ञः कश्चित्साध्यते विशेषेण वा ? तत्राद्यपक्षे विशेषतोऽर्हत्प्रणीतागमाश्रयणमनुपपन्नम् । द्वितीयपक्षे तु

१ मुख्यप्रत्यक्षस्य ॥ २ द्विचन्द्रादिज्ञानस्यापि योगिज्ञानजनकत्वप्रसङ्गात् ॥ ३ अशेषविषय ॥ ४ सर्वज्ञ ॥ ५ परेण त्वया ॥ ६ मुख्यम् ॥ ७ मीमांसक ॥ ८ अन्यस्य पुरुषान्तरस्य ॥ ९ अहो ॥ १० तत्सहिते ॥ ११ कश्चित्पुरुष सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वादित्यनेन ॥ १२ परमाणोरप्रतिपत्तावपि घटस्य परमाणुना सम्बन्धप्रतिपत्तिप्रसङ्गात् ॥ १३ निश्चिताविनाभावपूर्वकत्वादनुमानस्य ॥ १४ साध्यसाधकानुमाने ॥ १५ परोक्षे ॥ १६ धर्मी प्रतिपन्न ॥ १७ सर्वज्ञलक्षणे ॥ १८ सर्वज्ञस्य ॥ १९ त्रयोऽवयवा यस्याः ॥ २० भावस्वरूप ॥ २१ सर्वज्ञसत्त्वे ॥ २२ सर्वज्ञस्य ॥ २३ भावाभावोभय ॥ २४ जैने ॥

हेतोरपरसर्वज्ञस्याभावेन दृष्टान्तानुवृत्त्यसम्भवादसाधारणानैकान्तिकत्वम्[2] । किञ्च यतो हेतोः प्रतिनियतोऽर्हन्सर्वज्ञः साध्यते ततो बुद्धोपि साध्यतां विशेषाभावात्[3] । न चात्र[4] सर्वज्ञत्वसाधने हेतुरस्ति । यदप्युच्यते सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षाः प्रमेयत्वात्पावकादिवत् तदप्युक्तिमात्रं यतोऽत्रैकज्ञानप्रत्यक्षत्वं सूक्ष्माद्यर्थानां साध्यत्वेनाभिप्रेतं प्रतिनियतविषयानेकज्ञानप्रत्यक्षत्वं वा ? तत्राद्यकल्पनायां विरुद्धो हेतुः प्रतिनियतरूपादिविषयग्राहकानेकप्रत्ययप्रत्यक्षत्वेन व्याप्तस्याग्न्यादिदृष्टान्तधर्मिणि प्रमेयत्वस्योपलम्भात् । साध्यविकलता च दृष्टान्तस्य । द्वितीयकल्पनायां सिद्धसाध्यता—अनेकप्रत्यक्षैरनुमानादिभिश्च[6] तत्परिज्ञानाभ्युपगमात् "यदि षड्भिः प्रमाणैः स्यात्सर्वज्ञः केन वार्यते । एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ॥ नूनं स चक्षुषा सर्वान् रसादीन्प्रतिपद्यते" इत्यभिधानात् । किञ्च प्रमेयत्वं किमशेषज्ञेयव्यापिप्रमाणप्रमेयत्वव्यक्तिलक्षणमभ्युपगम्यतेऽस्मदादिप्रमाणप्रमेयत्वव्यक्तिस्वरूपं वा स्यादुभयव्यक्तिसाधारणसामान्यस्वभावं वा? प्रथमपक्षोऽयुक्तो विवादाध्यासितपदार्थेषु तथाभूतप्रमाणप्रमेयत्वस्यासिद्धत्वात् । अन्यथा साध्यस्यापि सिद्धेर्हेतूपादानमपार्थकम् । सन्दिग्धान्वयश्चायं हेतुः स्यात्तथाभूतप्रमाणप्रमेयत्वस्य दृष्टान्तेऽसिद्धत्वात् । द्वितीयपक्षेऽसिद्धो हेतुरस्मदादिप्रमाणप्रमेयत्वस्य विवादगोचरार्थेष्वसम्भवात् । सम्भवे वा ततस्तथाभूतप्रत्यक्षत्वसिद्धिरेव स्यात् । तत्र चाविवादान्न हेतूपन्यासः फलवान् । नाप्युभयप्रमेयत्वव्यक्तिसाधारणं प्रमेयत्वसामान्यं हेतुरत्यन्तविलक्षणातीन्द्रियेन्द्रियविषयप्रमाणप्रमेयत्वव्यक्तिद्वयसाधारणसामान्यस्यैवासम्भवात् । तन्नानुमानात्तत्सिद्धिः । नाप्यागमात् । सोपि हि नित्योऽनित्यो वा तत्प्रतिपादकः स्यात्? न तावन्नित्यस्तत्प्रतिपादकस्य तस्याभावात्; भावेपि प्रामाण्यासम्भवात् कार्येऽर्थे तत्प्रामाण्यप्रसिद्धेः । अनित्योपि किं तत्प्रणीतः पुरुषान्तरप्रणीतो वा ? प्रथमपक्षेऽन्योन्याश्रयः । सर्वज्ञप्रणीतत्वे तस्य प्रामाण्यं ततस्तत्प्रतिपादकत्वमिति । नापि पुरुषान्तरप्रणीतस्तस्योन्मत्तवाक्यवदप्रामाण्यात् । तन्नागमादप्यस्य सिद्धिः । नाप्युपमानात् । तत्खलूपमानोपमेययोरनवयवेनाध्यक्षत्वे सति सादृश्यावलम्बनमुदयमासादयति नान्यथातिप्रसङ्गात् । न चोपमानभूतः कश्चित्सर्वज्ञत्वेनाध्यक्षतः सिद्धो येन तत्सादृश्यादन्यस्य सर्वज्ञत्वमुपमानात्साध्येत । नाप्यर्थापत्तितस्तत्सिद्धिः सर्वज्ञसद्भावमन्तरेणानुपपद्यमानस्य प्रमाणषट्कविज्ञातार्थस्य कस्यचिदभावात्, धर्माद्युपदेशस्य बहुजनपरिगृहीतस्यान्यथापि भावात् । तथा चोक्तं "सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः । दृष्टो न चैकदेशोस्ति लिङ्गं वा योनुमापयेत् । १ । न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधकः । न च मन्त्रार्थवादानां

१ दृष्टान्तप्रवर्तनाभावात् ॥ २ विपक्षसपक्षाभ्यां व्यावर्तमानो हेतुरसाधारणानैकान्तिक । अस्योदाहरणमनित्यः शब्द श्रावणत्वादिति ॥ ३ हेतो ॥ ४ जगति ॥ ५ अनुमाने ॥ ६ सूक्ष्मान्तरितदूरार्थ ॥ ७ जेनादिभि ॥ ८ प्रत्यक्षत्वाप्रत्यक्षत्वेन कारणेन विवादाध्यासितत्वम् ॥ ९ सूक्ष्मादिषु ॥ १० विवादाध्यासितपदार्थेषु अशेषज्ञेयव्यापिप्रमाणप्रमेयं च सिद्ध चेत् ॥ ११ असाधारणानैकान्तिक ॥ १२ अशेषज्ञेयप्रमाणप्रमेयत्वादित्ययम् ॥ १३ पावकादौ ॥ १४ अस्मदादिप्रमाणप्रमेयत्वादिति हेतु ॥ १५ सूक्ष्मादिषु ॥ १६ अस्मदादिप्रमाणभूत ॥ १७ अतीन्द्रियश्चेन्द्रियविषयश्च तेषां ग्राहकप्रमाणम् ॥ १८ सर्वज्ञ ॥ १९ हिरण्यगर्भप्रकृत्यसर्वज्ञ इति ॥ २० अग्निष्टोमेन यजेत स्वर्गकाम इति क्रियमाणेर्थे ॥ २१ सर्वज्ञ ॥ २२ साकल्येन ॥ २३ भूभवनवद्दितोषितस्योपमानज्ञानप्रसङ्गात् ॥ २४ तस्योपमानभूतसर्वज्ञस्य ॥ २५ नु ॥ २६ सर्वज्ञाभावेपि ॥ २७ मन्वन्तरादि हेतु ॥ २८ लिङ्गं भूत्वेति शेष ॥ २९ सर्वज्ञम् ॥ ३० प्रशमामन्त्रभावनादि ॥

तात्पर्यमवकल्पते । २ । न चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते । न चानुवदितुं शक्यः पूर्वमन्यैरबोधितः । ३ । अनादेरागमस्यार्थो न च सर्वज्ञ आदिमान् । कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते । ४ । अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते । प्रकल्पेत कथं सिद्धिरन्योन्याश्रययोस्तयोः ? । ५ । सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता । कथ तदुभयं सिध्येत् सिद्धमूलान्तराद्दते । ६ । असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् । सर्वज्ञमवगच्छन्तः स्ववाक्यात्किन्न जानते ? । ७ । सर्वज्ञसदृशं कश्चिद्यदि पश्येम सम्प्रति । उपमानेन सर्वज्ञं जानीयाम ततो वयम् । ८ । उपदेशो हि बुद्धादेर्धर्माऽधर्मादिगोचरः । अन्यथा नोपपद्येत सार्वज्ञं यदि नाऽभवत् । ९ । बुद्धादयो ह्यवेदज्ञास्तेषां वेदादसम्भवः । उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात् । १० । ये तु मन्वादयः सिद्धाः प्राधान्येन त्रयीविदाम् । त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः । ११ ।" इति । न च प्रमाणान्तरं सदुपलम्भकं सर्वज्ञस्य साधकमस्ति । मा भूदत्रत्येदानीन्तनास्मदादिजनाना सर्वज्ञस्य साधकं प्रत्यक्षाद्यन्यतमं देशान्तरकालान्तरवर्त्तिनां केषाञ्चिद्भविष्यतीति चाऽयुक्तं "यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् । दृष्टं सम्प्रति लोकस्य तथा कालान्तरेऽप्यभूत्" इत्यभिधानात् । तथा हि । विवादाध्यासिते देशे काले च प्रत्यक्षादिप्रमाणमत्रत्येदानीन्तनप्रत्यक्षादिग्राह्यसजातीयार्थग्राहकं तद्विजातीयसर्वज्ञाद्यर्थग्राहकं वा न भवति–प्रत्यक्षादिप्रमाणत्वादत्रत्येदानीन्तनप्रत्यक्षादिप्रमाणवत् । ननु च यथाभूतमिन्द्रियादिजनितं प्रत्यक्षादि सर्वज्ञाद्यर्थासाधकं दृष्टं तथाभूतमेव देशान्तरे कालान्तरे च तथा साध्यतेऽन्यथाभूतं वा ? तथाभूतं चेत्सिद्धसाधनम् । अन्यथाभूतं चेदप्रयोजको हेतुर्जगतो बुद्धिमत्कारणत्वे साध्ये संनिवेशविशिष्टत्वादिवत् । तदसाम्प्रतं–तथाभूतस्यैव तथा साधनात् । न च सिद्धसाधनमन्यादृशप्रत्यक्षाद्यभावात् । तथा हि । विवादापन्नं प्रत्यक्षादिप्रमाणमिन्द्रियादिसामग्रीविशेषानपेक्षं न भवति प्रत्यक्षादिप्रमाणत्वात्प्रसिद्धप्रत्यक्षादिप्रमाणवत् । न गृध्रवराहपिपीलिकादिप्रत्यक्षेण सन्निहितदेशविशेषानपेक्षिणा नक्तञ्चरप्रत्यक्षेण वालोकानपेक्षिणानेकान्तः–कात्यायनाद्यनुमानातिशयेन जैमिन्याद्यागमातिशयेन वा तस्यापीन्द्रियादिप्रणिधानसामग्रीविशेषमन्तरेणासम्भवात्–अतीन्द्रियाननुमेयाद्यर्थाविषयत्वेन स्वार्थातिलङ्घनाभावात् । तथा चोक्तं "यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तितः । १ । येऽपि सातिशया दृष्टाः प्रज्ञामेधादिभिर्नराः । स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् । २ ।

१ घटते ॥ २ यागार्थे ॥ ३ आगमे ॥ ४ आगमात् ॥ ५ अनुभापणात् ॥ ६ प्रमाणान्तरे ॥ ७ सर्वज्ञ ॥ ८ असदादिभि ॥ ९ सर्वज्ञागमसत्यार्थयो ॥ १० कथमन्योन्याश्रय इत्युक्ते सत्याह ॥ ११ वस ॥ १२ आगमप्रामाण्यलक्षणात् मूलादन्यत् सर्वज्ञप्रामाण्यलक्षण मूलान्तरं वा द्रष्टव्यम् ॥ १३ मूल प्रामाण्यम् ॥ १४ सर्वज्ञसदृशादर्शनात् ॥ १५ भूत्वा ॥ १६ न विद्यते सभव उत्पत्तिर्यस्योपदेशस्य ॥ १७ अज्ञानात् ॥ १८ सिद्धा प्रसिद्धा ॥ १९ मध्ये ॥ २० त्रयीविद्भिराश्रितो ग्रन्थो येषा ते ॥ २१ वेदात्प्रभव उत्पत्तिर्यासामुक्तीना ता वेदप्रभवा । वेदप्रभवा उक्तयो येषा मन्वादीना ते ॥ २२ रूपादिमद्व्यासनादि ॥ २३ अस्मदादिप्रमाणसदृशप्रमाणप्रकारेण ॥ २४ सर्वज्ञवादी ब्रूते ॥ २५ अतीन्द्रियप्रत्यक्षम् ॥ २६ सपक्षव्यापकपक्षव्यावृत्त प्रतिनियतार्थग्राहित्वे सतीति विशेषणजनितोपाध्याहितसम्बन्धो हेतुरप्रयोजक ॥ २७ अक्रियादर्शिनोपि कृतबुद्ध्युत्पादकत्वे सति ॥ २८ अतीन्द्रिय ॥ २९ देशान्तरकालान्तरवर्त्ति ॥ ३० अत्रत्येदानीन्तन प्रसिद्धम् ॥ ३१ वररुचि ॥ ३२ अश्रुतवेदार्थलक्षण ॥ ३३ एकाग्रता ॥ ३४ स्वस्य प्रत्यक्षादे ॥ ३५ गृध्रादीन्द्रिये ॥ ३६ क्रियमाणायाम् ॥ ३७ इन्द्रियाणामतिशयो नास्ति चेन्मा भूत्पुरुषाणा भविष्यतीत्युक्ते सत्याह ॥ ३८ अर्थग्रहणशक्ति प्रज्ञा ॥ ३९ मेधा पाठग्रहणशक्ति ॥

प्राज्ञोपि हि नरः सूक्ष्मानर्थान्द्रष्टुं क्षमोपि सन्। सजातीरनतिक्रामन्नतिशेते परान्नरान्। ३। एकशास्त्रविचारेषु दृश्यतेऽतिशयो महान्। न तु शास्त्रान्तरज्ञानं तन्मात्रेणैव लभ्यते। ४। ज्ञात्वा व्याकरणं दूरं बुद्धिः शब्दापशब्दयोः। प्रकृष्यते न नक्षत्रतिथिग्रहणनिर्णये। ५। ज्योतिर्विच्च प्रकृष्टोपि चन्द्रार्कग्रहणादिषु। न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति। ६। तथा वेदेतिहासादिज्ञानातिशयवानपि। न स्वर्गदेवताऽपूर्वप्रत्यक्षीकरणे क्षमः। ७। दशहस्तान्तरं व्योम्नि यो नामोत्प्लुत्य गच्छति। न योजनमसौ गन्तुं शक्तोऽभ्यासशतैरपि। ८।" इति। प्रसङ्गविपर्ययाभ्यां चास्याशेषार्थविषयत्वं बाध्यते। तथा हि। सर्वज्ञस्य ज्ञानं प्रत्यक्षं यद्यभ्युपगम्यते तदा तद्धर्मादिग्राहकं न स्याद्विद्यमानोपलम्भनत्वात्। विद्यमानोपलम्भनं तत्–सत्सम्प्रयोगजत्वात्। सत्सम्प्रयोगजं तत्–प्रत्यक्षशब्दवाच्यत्वादस्मदादिप्रत्यक्षवत्। तद्धर्मादिग्राहकं चेन्न विद्यमानोपलम्भनं–धर्मादेरविद्यमानत्वात्। तत्त्वे चासत्सम्प्रयोगजत्वे चाऽप्रत्यक्षशब्दवाच्यत्वम्। धर्मज्ञत्वनिषेधे चान्याशेषार्थप्रत्यक्षत्वेपि न प्रेरणा प्रामाण्यप्रतिबन्धो धर्मे तस्या एव प्रामाण्यात्। तदुक्तं "सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात्। केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः। १। धर्मज्ञत्वनिषेधस्तु केवलोत्रोपयुज्यते। सर्वमन्यद्विजानंस्तु पुरुषः केन वार्यते। २।" किञ्चास्य ज्ञानं चक्षुरादिजनितं धर्मादिग्राहकमभ्यासजनितं वा स्याच्छब्दप्रभवं वानुमानाविर्भूतं वा? प्रथमपक्षे धर्मादिग्राहकत्वायोगश्चक्षुरादीनां प्रतिनियतरूपादिविषयत्वेन तत्प्रभवज्ञानस्याप्यत्रैव प्रवृत्तेः। अथाभ्यासजनितं ज्ञानाभ्यासादिप्रकर्षतरतमादिक्रमेण तत्प्रकर्षसम्भवे सकलस्वभावातिशयपर्यन्तं संवेदनमवाप्यते इत्यपि मनोरथमात्रम्।–अभ्यासो हि कस्यचित्प्रतिनियतशिल्पकलादौ तदुपदेशाद् ज्ञानाच्च दृष्टः। न चाशेषार्थोपदेशो ज्ञानं वा सम्भवति। तत्सम्भवे किमभ्यासप्रयासेनाशेषार्थज्ञानस्य सिद्धत्वात्। अन्योन्याश्रयश्च। अभ्यासात्तज्ज्ञानं ततोऽभ्यास इति। शब्दप्रभवं तदित्यप्ययुक्तं परस्पराश्रयणानुषङ्गात्। सर्वज्ञप्रणीतत्वेन हि तत्प्रामाण्येऽशेषार्थविषयज्ञानसम्भवस्तत्सम्भवे चाशेषज्ञस्य तथाभूतशब्दप्रणेतृत्वमिति। अभ्युपगम्यते च प्रेरणाप्रभवज्ञानवतो धर्मज्ञत्वं "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलं नान्यत् किंचनेन्द्रियादिकम्" इत्यभिधानात्। अनुमानाविर्भूतमित्यप्यसङ्गतं–धर्मादेरतीन्द्रियत्वेन तज्ज्ञापकलिङ्गस्य तेन सह सम्बन्धासिद्धेरसिद्धसम्बन्धस्य चाज्ञापकत्वात्। किञ्चानुमानेनाशेषज्ञत्वेऽस्मदादीनामपि तत्प्रसङ्गो–भावाभावोभयरूपं जगत्प्रमेयत्वादित्याद्यनुमानस्यास्मदादीनामपि भावात्। अनुमानागमज्ञानस्य चास्पष्टत्वात्तज्ज-

---

१ पूर्वोक्तं भावयति ॥ २ तत्र दृष्टान्तमाह ॥ ३ दृष्टान्तं भावयति ॥ ४ न्यासपर्यन्तम् ॥ ५ प्रकृष्टा भवति ॥ ६ पुनरपि दृष्टान्तं भावयति ॥ ७ चकारो दृष्टान्तसमुच्चये ॥ ८ अदृष्ट ॥ ९ लोकप्रसिद्ध दृष्टान्तमाह ॥ १० प्रसङ्गविपर्यययोर्लक्षणमुत्तरपक्षे वदिष्यति ॥ ११ सर्वज्ञज्ञानस्य ॥ १२ जैनादिभि सर्वज्ञवादिभि ॥ १३ पुण्यपापादि ॥ १४ इति प्रसङ्गेन तस्याशेषार्थविषयत्व बाध्यते ॥ १५ तस्य परोक्षत्वमित्यर्थ ॥ १६ इति विपर्ययेण तस्याशेषार्थविषयत्व बाध्यते ॥ १७ अविद्यमानोपलम्भनत्वे ॥ १८ वैदिकी ॥ १९ प्रेरणाप्रामाण्ये ॥ २० धर्माधर्माभ्यामन्यत् ॥ २१ न केनापि ॥ २२ सर्वज्ञस्य ॥ २३ सकलार्थग्रहणलक्षणातिशय ॥ २४ आगम ॥ २५ धर्मादिग्राहक सर्वज्ञज्ञानम् ॥ २६ अशेषार्थविषय ॥ २७ मन्वादे ॥ २८ कालेन ॥ २९ देशेन ॥

नितस्याप्यवैशद्यसम्भवान्न तज्ज्ञानवान्सर्वज्ञो युक्तः । न च वक्तव्यं–पुनःपुनर्भाव्यमानं भावनाप्रकर्षपर्यन्ते योगिज्ञानरूपतामासादयत्तद्वैशद्यभाग् भविष्यति । दृश्यते चाभ्यासवलात्कामशोकाद्युपप्लुतज्ञानस्य वैशद्यमिति–तद्वदस्याप्युपप्लुतत्वप्रसङ्गात् । किञ्चास्याखिलार्थग्रहणं सकलज्ञत्वं प्रधानभूतकतिपयार्थग्रहणं वा ? तत्राद्यपक्षे क्रमेण तद्ग्रहणं युगपद्वा ? न तावत्क्रमेणातीतानागतवर्त्तमानार्थानां परिसमाप्त्यऽभावात्तज्ज्ञानस्याप्यपरिसमाप्तेः सर्वज्ञत्वायोगात् । नापि युगपत्–परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्र ज्ञाने प्रतिभासासम्भवात् । सम्भवे वा प्रतिनियतार्थस्वरूपप्रतीतिविरोधः । किञ्चैकक्षण एवाशेषार्थग्रहणाद् द्वितीयक्षणेऽकिञ्चिज्ज्ञः स्यात् । तथा परस्थरागादिसाक्षात्करणाद्रागादिमानन्यथा सकलार्थसाक्षात्करणविरोधः । नापि प्रधानभूतकतिपयार्थग्रहणम् ।—इतरार्थव्यवच्छेदेनैतेषामेव प्रयोजननिष्पादकत्वात्प्राधान्यमिति निश्चयो हि सकलार्थज्ञाने सत्येव घटते नान्यथा । तच्च प्रागेव कृतोत्तरम् । कथं चातीतानागतग्रहणं तत्स्वरूपासम्भवाद् ? असतो ग्रहणे तैमिरिकज्ञानवत्प्रामाण्याभावः । सत्त्वेन ग्रहणेऽतीतादेर्वर्त्तमानत्वम् । तथा चान्यकालस्यान्यकालतया वस्तुनो ग्रहणात्तज्ज्ञानस्याऽप्रामाण्यम् । कथं चासौ तन्त्राद्याखिलार्थाज्ञाने तत्कालेप्यसर्वज्ञैर्ज्ञातुं शक्यते ? तदुक्तं "सर्वज्ञोयमिति ह्येतत्तत्कालेपि बुभुत्सुभिः । तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् । १ । कल्पनीयाश्च सर्वज्ञा भवेयुर्वहवस्तव । य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते । २ । सर्वज्ञो नाववुद्धश्च येनैव स्यान्न तं प्रति । तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् । ३ ।" इति ।

अत्र प्रतिविधीयते । यत्तावदुक्तं सदुपलम्भकप्रमाणपञ्चकाविषयत्वं साधनं–तदसिद्धं–तत्सद्भावावेदकस्यानुमानादेः सद्भावात् । तथा हि । कश्चिदात्मा सकलपदार्थसाक्षात्कारी–तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिवन्धप्रत्ययत्वात् । यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिवन्धप्रत्ययं तत्तत्साक्षात्कारि । यथापगततिमिरादिप्रतिवन्धं लोचनविज्ञानं रूपसाक्षात्कारि । तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिवन्धप्रत्ययश्च कश्चिदात्मेति । न तावत्सकलार्थग्रहणस्वभावत्वमात्मनोऽसिद्धं चोदनावलान्निखिलार्थज्ञानोत्पत्त्यन्यथानुपपत्तेस्तस्य तत्सिद्धेः सकलमनेकान्तात्मकं सत्त्वादित्यादिव्याप्तिज्ञानोत्पत्तेर्वा । यद्धि यद्विषयं तत्तद्ग्रहणस्वभावम् । यथा रूपादिपरिहारेण रसविषयं रासनविज्ञानं रसग्रहणस्वभावम् । सकलार्थविषयश्चात्मा व्याप्त्यागमज्ञानाभ्यामिति । सोयं चोदना हि भूतं भवन्तं भविष्यन्तं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलं पुरुषानिति स्वयं ब्रुवाणो विधिप्रतिषेधविचारणानिवन्धनं साकल्येन व्याप्तिज्ञानं च प्रतिपद्यमानः सकलार्थग्रहणस्वभावतामात्मनो निराकरोतीति कथं स्वस्थः ? प्रक्षीणप्रतिवन्धप्रत्ययत्वं च प्रागेव प्रसाधितत्वान्नासिद्धम् । साध्यसाधनयोश्च प्रतिवन्धो न प्रत्यक्षानुमानाभ्यां प्रतिज्ञायते येनोक्त-

---

१ अनुमानादिज्ञानजनितास्पष्टज्ञानवान् ॥ २ आगमानुमानजनितास्पष्ट ज्ञानम् ॥ ३ व्याहत ॥ ४ सर्वज्ञज्ञानस्य ॥ ५ मोक्षलक्षण ॥ ६ सर्वज्ञ ॥ ७ तेनसर्वज्ञज्ञानेन ॥ ८ तर्हि सर्वज्ञैरेव सर्वज्ञो ज्ञायते इत्युक्ते सत्याह ॥ ९ यत ॥ १० मूलस्य वाक्यकारणस्य सर्वज्ञलक्षणस्य ॥ ११ अन्यस्य रथ्यापुरुषस्य ॥ १२ जैनैः ॥ १३ प्रक्षीण प्रतिवन्धलक्षण प्रत्यय कारण यस्य ॥ १४ ननु ॥ १५ आत्मा सकलार्थग्रहणस्वभावो भवति सकलार्थविषयत्वादित्युपरिष्टाद्योज्यम् ॥ १६ मीमांसक ॥ १७ बुद्धिमान् ॥ १८ विशेष्यम ॥

दोषानुषङ्गः स्यात्—तर्काख्यप्रमाणान्तरात्तत्सिद्धेः । यच्चाप्रतिपन्नपक्षधर्मत्वो हेतुर्न प्रतिनियतसाध्यप्रतिपत्त्यङ्गमित्युक्तं तदप्यपेशलम् । न हि सर्वज्ञोऽत्र धर्मित्वेनोपात्तो येनास्यासिद्धिरयं दोषः । किं तर्हि? कश्चिदात्मा । तत्र चाविप्रतिपत्तेः । न चापक्षधर्मस्य हेतोरगमकत्वं "पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते" इति स्वयमभिधानात् । यदप्युक्तं–सत्तासाधने सर्वां हेतुत्रयीं दोषजाति नातिवर्तत इति तत्सर्वानुमानोच्छेदकारित्वादयुक्तम् । शक्यं हि वक्तुं "धूमत्वादिर्यद्यग्निमत्पर्वतधर्मस्तदाऽसिद्धः । को हि नामाग्निमत्पर्वतधर्मं हेतुमिच्छन्नग्निमत्त्वमेव नेच्छेत् । तद्विपरीतधर्मश्चेद्विरुद्धः—साध्यविरुद्धसाधनात् । उभयधर्मश्चेद्व्यभिचारी–सपक्षेतरयोर्वर्तनात् । विमत्यधिकरणभावापन्नधर्मिधर्मत्वे धूमवत्त्वादेः सर्वं सुस्थम् । यथा चाचलस्यानलवत्त्वादिना प्रसिद्धसत्ताकस्य सन्दिग्धाग्निमत्त्वादिसाध्यधर्मस्य धर्मो हेतुर्न विरुध्यते तथा प्रसिद्धात्मत्वादिविशेषणसत्ताकस्याप्रसिद्धसर्वज्ञत्वोपाधिसत्ताकस्य च धर्मिणो धर्मः प्रकृतो हेतुः कथं विरुध्येत?" यदप्यविशेषेण सर्वज्ञः कश्चित्साध्यते विशेषेण वेत्याद्यऽभिहित तदप्यभिधानमात्रं सामान्यतस्तत्साधनात्तस्यैव विवादात् । विशेषविप्रतिपत्तौ पुनर्दृष्टेष्टाविरुद्धवाक्त्वादर्हत एवाशेषार्थज्ञत्वं सेत्स्यति । कथं वा तत्प्रतिषेधः? अत्राप्यस्य दोषस्य समानत्वात् । अर्हतो हि तत्प्रतिषेधसाधनेऽप्रसिद्धविशेषणः पक्षो व्याप्तिश्च न सिध्येत् दृष्टान्तस्य साध्यशून्यतानुषङ्गात् । अनर्हतश्चेत्स एव दोषो बुद्धादेः पक्षस्यासिद्धेः । अनिष्टानुषङ्गश्चार्हतस्तत्प्रतिषेधात् । सामान्यतस्तत्प्रतिषेधे सर्वं सुस्थम् । यच्चोक्तमेकज्ञानप्रत्यक्षत्वं सूक्ष्माद्यर्थानां साध्यत्वेनाभिप्रेतं प्रतिनियतविषयानेकज्ञानप्रत्यक्षत्वं वेत्यादि तदप्युक्तिमात्रं प्रत्यक्षसामान्येन कस्यचित्सूक्ष्माद्यर्थानां प्रत्यक्षत्वसाधनात् । प्रसिद्धे च तेषां सामान्यतः कस्यचित्प्रत्यक्षत्वे तत्प्रत्यक्षस्यैकत्वमिन्द्रियानिन्द्रियानपेक्षत्वात्सिध्येत्—तदपेक्षस्यैवास्यानेकत्वप्रसिद्धेः । तदनपेक्षत्वं च प्रमाणान्तरात्सिद्धेत् । तथा हि । योगिप्रत्यक्षमिन्द्रियानिन्द्रियानपेक्षं सूक्ष्माद्यर्थविषयत्वात् । यत्पुनरिन्द्रियानिन्द्रियापेक्षं तन्न सूक्ष्माद्यर्थविषयम् । यथास्मदादिप्रत्यक्षम् । तथा च योगिनः प्रत्यक्षम् । तस्मात्तथेति । किञ्चैवं साध्यविकल्पनेनानुमानोच्छेदः । शक्यते हि वक्तुं 'साध्यधर्मिधर्मोऽग्निः साध्यत्वेनाभिप्रेतो दृष्टान्तधर्मिधर्म उभयधर्मो वा? प्रथमपक्षे विरुद्धो हेतुस्तद्विरुद्धेन दृष्टान्तधर्मिणि तद्धर्मेणाग्निना धूमस्य व्याप्तिप्रतीतेः । साध्यविकलश्च दृष्टान्तः स्यात् । द्वितीयपक्षे तु प्रत्यक्षादिविरोधः । अथोभयगताग्निसामान्य साध्यते तर्हि सिद्धसाध्यता' । यच्चान्यदुक्तं प्रमेयत्वं किमशेषज्ञेयव्यापिप्रमाणप्रमेयत्वव्यक्तिलक्षणमस्मदादिप्रमाणप्रमेयत्व-

---

१ अनवस्थेतरेतराश्रय ॥ २ अर्थसाक्षात्कारित्वे सत्येव प्रक्षीणप्रतिबन्धप्रत्ययत्व [illegible] ॥ [illegible] ॥ ३ परेण ॥ ४ अनुमाने ॥ ५ [illegible] ॥ ६ ज्ञानवान् ॥ ७ अतश्च हेतूपन्यासो व्यर्थं ॥ ८ अनग्निमत्पर्वतधर्म ॥ ९ [illegible] ॥ १० [illegible] ॥ ११ [illegible] ॥ १२ [illegible] ॥ १३ [illegible] ॥ पुरुष स सोऽर्हन् यन् सर्वज्ञो न भवतीति ॥ १४ अन्यथा ॥ १५ रथ्यापुरुषस्य ॥ १६ [illegible] ॥ १७ [illegible] ॥ १८ [illegible] ॥ १९ [illegible] ॥ २० [illegible] ॥ अप्रसिद्धविशेषण पक्ष इत्यादिदूषणानि विशेषपक्षोक्तानि नोपढौकन्ते इति ॥ २१ प्रत्यक्ष ॥ २२ [illegible] ॥ २३ [illegible] ॥ २४ [illegible] (जैनाना) [illegible] ॥

व्यक्तिस्वरूपं वेत्यादि तद्धूमादिसकलसाधनोन्मूलनहेतुत्वान्न वक्तव्यम् । तथा हि । साध्यधर्मिधर्मो धूमो हेतुत्वेनोपात्तो दृष्टान्तधर्मिधर्मो वा स्यादुभयगतसामान्यरूपो वा ? साध्यधर्मिधर्मत्वे दृष्टान्ते तस्याभावादनन्वयो हेतुदोषः । दृष्टान्तधर्मिधर्मत्वे साध्यधर्मिण्यभावादसिद्धता । उभयगतसामान्यरूपत्वेप्यसिद्धतैव–प्रत्यक्षत्वाप्रत्यक्षत्वेनात्यन्तविलक्षणमहानसाचलप्रदेशव्यक्तिद्वयाश्रितसामान्यस्यैवासम्भवात् । अथ कण्ठाक्षिविक्षेपादिलक्षणधर्मकलापसाधर्म्यान्न महानसाचलप्रदेशाश्रितधूमव्यक्त्योरत्यन्तवैलक्षण्यं येनोभयगतसामान्यासिद्धेरसिद्धता स्यात् तर्हि स्वापूर्वार्थव्यवसायात्मकत्वादिधर्मकलापसाधर्म्यस्यातीन्द्रियेन्द्रियविषयप्रमाणव्यक्तिद्वयेऽत्यन्तवैलक्षण्यनिवर्त्तकस्य सम्भवादुभयसाधारणसामान्यसिद्धेः कथं प्रमेयत्वसामान्यस्यासिद्धिः ? यच्चेदमुक्तं प्रसङ्गविपर्ययाभ्यां चास्याशेषार्थविषयत्वं बाध्यत इत्यादि तन्मनोरथमात्रम् । साध्यसाधनयोर्व्याप्यव्यापकभावसिद्धौ हि व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको यत्र प्रदर्श्यते तत्प्रसङ्गसाधनम् । व्यापकनिवृत्तौ चावश्यं भाविनी व्याप्यनिवृत्तिः स विपर्ययः । न च प्रत्यक्षत्वसत्सम्प्रयोगजत्वविद्यमानोपलम्भनत्वधर्माद्यनिमित्तत्वानां व्याप्यव्यापकभावः क्वचित् प्रतिपन्नः । स्वात्मन्येवासौ प्रतिपन्न इत्यप्यसङ्गतं–चक्षुरादिकरणग्रामप्रभवप्रत्यक्षस्याव्यवहितदेशकालस्वभावाविप्रकृष्टप्रतिनियतरूपादिविषयत्वाभ्युपगमान्नियमस्य चाभावाद्विप्रकृष्टार्थग्राहकेपि प्रत्यक्षशब्दवाच्यत्वदर्शनात् । तथा हि । अनेकयोजनशतव्यवहितार्थग्राहि वैनतेयप्रत्यक्षं रामायणादौ प्रसिद्धं लोके चातिदूरार्थग्राहि गृध्रवराहादिप्रत्यक्षं स्मरणसव्यपेक्षेन्द्रियादिजन्यप्रत्यभिज्ञाप्रत्यक्षं च कालविप्रकृष्टस्यातीतकालसम्बन्धित्वस्यातीतदर्शनसम्बन्धित्वस्य च ग्राहि पुरोवस्थितेऽर्थे भवतैवाभ्युपगम्यते । अन्यथा "देशकालादिभेदेन तत्रास्त्यवसरो मितेः । इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम्" इत्यादिना तस्यागृहीतार्थाधिगन्तृत्वं पूर्वापरकालसम्बन्धित्वलक्षणनित्यत्वग्राहकत्वं च प्रतिपाद्यमानं विरुध्येत । प्रातिभं च ज्ञानं शब्दलिङ्गाक्षव्यापारानपेक्षं श्वो मे भ्राता आगन्ता इत्याद्याकारमनागतातीन्द्रियकालविशेषणार्थप्रतिभासं जाग्रद्दशाया स्फुटतरमनुभूयते । किञ्च धर्मादेरतीन्द्रियत्वाच्चक्षुरादिनानुपलम्भोऽविद्यमानत्वाद्वा स्यादविशेषणत्वाद्वा ? न तावदाद्यः पक्षः–अतीन्द्रियस्याप्यतीतकालादेरुपलम्भाभ्युपगमात् । नाप्यविद्यमानत्वाद्धाविधर्मादेरतीतकालादेरिवाविद्यमानत्वेप्युपलम्भसम्भवात् । अविशेषणत्वं तु तस्यासिद्धं सकललो-

---

१ पर्वतधूमवत्त्वादित्युक्ते ॥ २ महानसे ॥ ३ यो य पर्वतधूमवान् स सोग्निमानित्यन्वयो न ॥ ४ महानसधूमवत्त्वादित्युक्ते ॥ ५ अतीन्द्रियविषयश्चेन्द्रियविषयश्च तयोर्ग्राहकं प्रमाणम् ॥ ६ मदशास्त्रप्रवर्तकस्येत्यर्थं ॥ ७ सर्वज्ञस्य ॥ ८ अनुमाने ॥ ९ व्याप्य ॥ १० व्यापक ॥ ११ व्याप्य ॥ १२ व्यापक ॥ १३ दृष्टान्ते ॥ १४ समीपवर्त्ति ॥ १५ यस्य ॥ १६ यथाविधे प्रत्यक्षे व्याप्यव्यापकभाव साध्यसाधनाना प्रतिपन्नस्तथाविधेऽसौ स्यान्न सर्वज्ञत्वप्रत्यक्षे तत्र व्याप्यव्यापकभावस्याप्रतिपन्नत्वादित्यर्थ ॥ १७ यत्प्रत्यक्षशब्दवाच्य तदव्यवहितदेशकालार्थग्राहकमिति नियमस्य ॥ १८ ज्ञाने ॥ १९ वराह पिपीलिका ॥ २० अनिन्द्रियमादिपदेन ॥ २१ धर्मस्य ॥ २२ देवदत्तलक्षणे ॥ २३ मीमासकेन ॥ २४ स्वभावादिरादिपदेन ॥ २५ पूर्वप्रमाणगृहीतेर्थे देवदत्तलक्षणे ॥ २६ प्रत्यभिज्ञाया ॥ २७ परिज्ञातम् ॥ २८ प्रत्यभिज्ञानस्य ॥ २९ भवता ॥ ३० योगजधर्मकारणधर्मोपलम्भे ॥

कोपभोग्यार्थजनकत्त्वेन द्रव्यगुणकर्मजन्यत्वेन चास्याखिलार्थविशेषणत्वसम्भवात् । अतीताद्यतीन्द्रियकालादेरिवास्यापि विशेषणग्रहणप्रवृत्तचक्षुरादिना ग्रहणोपपत्तेः कथं धर्म प्रत्यऽस्यानिमित्तत्वसाधने प्रसङ्गविपर्ययसम्भवः ? प्रश्नादिमन्त्रादिना च संस्कृतं चक्षुर्यथा कालविप्रकृष्टार्थस्य द्रव्यविशेषसंस्कृतं च निर्जावकादिचक्षुर्जला-द्यन्तरितार्थस्य ग्राहकं दृष्टं तथा पुण्यविशेषसंस्कृतं सूक्ष्माद्यशेषार्थग्राहि भविष्यतीति न कश्चिद्दृष्टस्वभावातिक्रमः । स्वात्मनि च यावद्भिः कारणैर्जनितं यथाभूतार्थ-ग्राहि प्रत्यक्षं प्रतिपन्नं तथा सर्वत्र सर्वदा प्राण्यन्तरेपीति नियमे नक्तञ्चराणामनालोकान्धकारव्यवहितरूपाद्युपलम्भो न स्यात्स्वात्मनि तथाऽनुपलम्भात् । प्राण्यन्तरे स्वात्मन्यनुपलब्धस्यानालोकान्धकारव्यवहितरूपाद्युपलम्भलक्षणातिशयस्य सम्भवे सूक्ष्माद्युपलम्भलक्षणातिशयोपि स्यात् । जात्यन्तरत्वं चोभयत्र समा-नम् । अभ्युपगम्य चाक्षजत्वं सर्वज्ञज्ञानस्यातीन्द्रियार्थसाक्षात्कारित्वं समर्थितं; नार्थतः—तज्ज्ञानस्य घातिकर्मचतुष्टयक्षयोद्भूतत्वात् । यच्चास्य ज्ञानं चक्षुरादिजनितं वेत्याद्यभिहितं तदप्यचारु—चक्षुरादिजन्यत्वेप्यनन्तरं धर्मादिग्राहकत्वाविरोधस्योक्तत्वात् । यच्चाभ्यासजनितत्वेऽभ्यासो हीत्याद्युक्तं तदप्ययुक्तम्—उत्पादव्ययध्रौव्य-युक्तं सदित्यखिलार्थविषयोपदेशस्याविसंवादिनो ज्ञानस्य च सामान्यतः सम्भवात् । न च तज्ज्ञानवत एवाशेषज्ञत्वात्क्वार्थोभ्यासस्तस्य सामान्यतोऽस्पष्टरूपस्यैवावि-र्भावात्—अभ्यासस्य तत्प्रतिबन्धकापायसहायस्याशेषविशेषविषयस्पष्टज्ञानोत्पत्तौ व्यापारात् । नाप्यन्योन्याश्रयोऽभ्यासादेवाखिलार्थविषयस्पष्टज्ञानोत्पत्तेरनभ्यु-पगमात् । शब्दप्रभवपक्षेप्यन्योन्याश्रयानुषङ्गोऽसङ्गतः—कारकपक्षे तदसम्भवात् । पूर्वसर्वज्ञप्रणीतागमप्रभवं ह्येतस्याशेषार्थज्ञानं तस्याप्यन्यसर्वज्ञागमप्रभवम् । न चैवमनवस्थादोषानुषङ्गो बीजाङ्कुरवदनादित्वेनाभ्युपगमादागमसर्वज्ञपरम्परायाः । यच्चानुमानाविर्भावितत्त्वपक्षे सम्बन्धासिद्धेरित्युक्तं तदसमीचीनं—प्रमाणान्त-रात्सम्बन्धसिद्धेरभ्युपगमात । न खलु कश्चित्तस्यागोचरोस्ति—सर्वत्रेन्द्रियातीन्द्रियविषये प्रवृत्तेरन्यथा तत्रानुमानाप्रवृत्तिप्रसङ्गात्—तस्य तन्निबन्धनत्वात् । यच्चानु-मानागमज्ञानस्य चास्पष्टत्वादित्यभिहितं तदप्यसमीक्षिताभिधानम् ।—न हि सर्वथा कारणसदृशमेव कार्यं विलक्षणस्याप्यङ्कुरादेर्बीजादेरुत्पत्तिदर्शनात् । सर्वत्र हि सामग्रीभेदात्कार्यभेदः । अत्राप्यागमादिज्ञानेनाभ्यासप्रतिबन्धकापायादिसामग्रीसहायेनासादिताशेषविशेषवैशद्यं विज्ञानमाविर्भाव्यते । भावनाबलाद्वैशद्ये कामा-द्युपप्लुतज्ञानवत्तस्याप्युपप्लुतत्वप्रसङ्ग इत्यप्यसाम्प्रतं—यतो भावनाबलाद् ज्ञानं वैशद्यमनुभवतीत्येतावन्मात्रेण तज्ज्ञानस्य दृष्टान्तोपपत्तेः । न चाशेषदृष्टान्तधर्माणा साध्यधर्मिण्यापादनं युक्त सकलानुमानोच्छेदप्रसङ्गात् । न चाशेषज्ञज्ञानं क्रमेणाशेषार्थग्राहीष्यते येन तत्पक्षनिक्षिप्तदोषोपनिपातः सकलावरणपरिक्षये सहस्रकिरण-

१ अनागतमादिपदेन ॥ २ सर्वज्ञज्ञानस्य ॥ ३ अग्राह्कलग्नावने ॥ ४ आदिपदेन सत्ता ॥ ५ तन्त्रमादिपदेन ॥ ६ कर्णवार ॥ ७ योगिचक्षु ॥ ८ नक्तचरादौ सर्वज्ञलक्षणे प्राण्यन्तरे च ॥ ९ परमार्थत ॥ १० सर्वज्ञस्य ॥ ११ पुरुषस्य ॥ १२ अशेषविशेषविषयस्पष्टज्ञान ॥ १३ केवलात् ॥ १४ जेनै ॥ १५ उत्तरसर्वज्ञस्य ॥ १६ तर्कलक्षणात् ॥ १७इन्द्रियातीन्द्रियविषये प्रवृत्तिर्न स्यात्यदि ॥ १८ सर्वज्ञे ॥ १९ आदिपदेनानुमानम ॥ २० आदिपदेन देशकालादि ॥ २१ अशेषज्ञज्ञानस्य ॥ २२ प्राप्नोति ॥ २३ सर्वज्ञज्ञाने ॥ २४ जेने ॥

वद्युगपन्निखिलार्थोद्द्योतनस्वभावत्वात्तस्य करणक्रमव्यवधानातिवर्त्तित्वाच्च । यच्चोक्तं "युगपत्परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्र ज्ञाने प्रतिभासासम्भवः" तदप्य-सारम् ।–तत्र हि तेषामभावादप्रतिभासो ज्ञानस्यासामर्थ्याद्वा ? न तावदभावाच्छीतोष्णाद्यर्थानां सकृत्सम्भवात् । ज्ञानस्यासामर्थ्यादित्यसत्–परस्परविरुद्धानामन्धकारोद्द्योतादीनामेकत्र ज्ञाने युगपत्प्रतिभाससंवेदनात् । सकृदेकत्र विरुद्धार्थानां प्रतिभासासम्भवे यत्कृतकं तदनित्यमित्यादिव्याप्तिश्च न स्यात्साध्यसाधनरूपतया तयोर्विरुद्धत्वसम्भवात् । नाप्येकत्र तेषां प्रतिभासे तज्ज्ञानस्य प्रतिनियतार्थग्राहकत्वविरोधोऽन्धकारोद्द्योतादिविरुद्धार्थग्राहिणोऽपि प्रतिनियतार्थग्राहकत्वप्रतीतेः । यच्चान्यदुक्तम् "एकक्षण एवाशेषार्थग्रहणाद्द्वितीयक्षणेऽज्ञः स्यात्" तदप्यसम्बद्धम् ।–यदि हि द्वितीयक्षणेऽर्थानां तज्ज्ञानस्य चाभावस्तदाऽयं दोषः । न चैवम्–अनन्तत्वात्तद्द्वयस्य । पूर्वं हि भाविनोऽर्था भावित्वेनोत्पत्स्यमानतया प्रतिपन्ना न वर्त्तमानत्वेनोत्पन्नतया वा । साप्युत्पन्नता तेषां भवितव्यतया प्रतिपन्ना न भूततया । उत्तरकालं तु तद्विपरीतत्वेन ते प्रतिपन्नाः । यदा हि यद्धर्मविशिष्टं वस्तु तदा तज्ज्ञाने तथैव प्रतिभासते नान्यथा विभ्रमप्रसङ्गात् । इति कथं गृहीतग्राहित्वेनाप्यस्याप्रामाण्यम् ? यच्चेदं परस्थरागादिसाक्षात्करणाद्रागादिमानित्युक्तं तदप्ययुक्तम् । तथा परिणामो हि तत्त्वकारणं न संवेदनमात्रमन्यथा मद्यादिकमेवंविधरसमित्यादिवाक्यात्तच्छ्रोत्रियो यदा प्रतिपद्यते तदाऽस्यापि तद्रसास्वादनदोषः स्यात् । अरसनेन्द्रियजत्वात्तस्यादोषोयमित्यन्यत्रापि समानम् । न हि सर्वज्ञज्ञानमिन्द्रियप्रभवं प्रतिज्ञायते । किञ्चाङ्गनालिङ्गनसेवनाद्यभिलापस्येन्द्रियोद्रेकहेतोराविर्भावाद्रागादिमत्त्वं प्रसिद्धम् । न चासौ प्रक्षीणमोहे भगवत्यस्तीति कथं रागादिमत्त्वस्याशङ्कापि । यदप्यभिहितं कथं चातीतादेर्ग्रहणं तत्स्वरूपासम्भवादित्यादि तदप्यसारं–यतोऽतीतादेरतीतादिकालसम्बन्धित्वेनासत्त्वं तज्ज्ञानकालसम्बन्धित्वेन वा ? नाद्यः पक्षो युक्तो वर्त्तमानकालसम्बन्धित्वेन वर्त्तमानस्येव स्वकालसम्बन्धित्वेनातीतादेरपि सत्त्वसम्भवात् । वर्त्तमानकालसम्बन्धित्वेन त्वतीतादेरसत्त्वमभिमतमेव तत्कालसम्बन्धित्वतत्सत्त्वयोः परस्परं भेदात् । न चैतत्कालसम्बन्धित्वेनासत्त्वे स्वकालसम्बन्धित्वेनाप्यतीतादेरसत्त्वम् । वर्त्तमानकालसम्बन्धिनोप्यतीतादिकालसम्बन्धित्वेनासत्वात् तस्याप्यसत्त्वप्रसङ्गात् सकलशून्यतानुषङ्गः । न चातीतादेः सत्त्वेन ग्रहणे वर्त्तमानत्वानुषङ्गः–स्वकालनियतसत्त्वरूपतयैव तस्य ग्रहणात् । ननु चातीतादेस्तज्ज्ञानकाले असन्निधानात्कथं प्रतिभासः ? सन्निधाने वा वर्त्तमानत्वप्रसङ्गः प्रसिद्धवर्त्तमानवदित्यपि मन्त्रादिसंस्कृतलोचनादिज्ञानेन व्याप्तिज्ञानेन च प्रागेव कृतोत्तरम् । अथोच्यते । "पूर्वं पश्चाद्वा यदि क्वचित्कदाचिन्निखिलदर्शिनो विज्ञानं विश्रान्तं तर्हि तावन्मात्रत्वात्संसारस्य कुतोऽनाद्यनन्तता ? अथ न विश्रान्तं तर्हि नानेकयुगसहस्रेणापि सकलसंसारसाक्षात्करणम्" इति तदप्युक्तिमात्रं–यतः किमिदं विश्रान्तत्वं नाम ? किं किञ्चित्परिच्छेद्याऽपरस्यापरिच्छेदः

१ रूपरहनाद्यवयविनि ॥ २ आलिङ्गनेनाहिनकुलादीना च ॥ ३ कृतकत्वानित्यत्वयो ॥ ४ अग्रान्तलक्षण ॥ ५ भाविनोऽर्था ॥ ६ सर्वज्ञज्ञाने ॥ ७ उत्पत्स्यमानतादिनिरूपणप्रकारेण ॥ ८ सर्वज्ञज्ञानस्य ॥ ९ रागादिरूपतया ॥ १० तत्त्वस्य रागादिमत्त्वस्य ॥ ११ जानाति ॥ १२ मद्यादिज्ञानस्य ॥ १३ सर्वज्ञज्ञानेपि ॥ १४ वस ॥ १५ अर्थस्य ॥ १६ जैनानाम् ॥ १७ त्वयातीतार्थस्य ॥ १८ अन्यथा ॥ १९ अतीतकाल ॥ २० वर्त्तमानज्ञानकाले ॥ २१ उत्तरत्र ॥ २२ अर्थे ॥ २३ समाप्तम् ॥

सकलविषयदेशकालगमनासामर्थ्यादर्वान्तरेऽवस्थानं वा क्वचिद्विषये उत्पद्य विनाशो वा ? न तावदाद्यविकल्पो युक्तोऽनभ्युपगमात्[3] । न खलु सर्वज्ञज्ञानं क्रमेणार्थ-परिच्छेदकं, युगपदशेषार्थोद्द्योतकत्वात्तस्येत्युक्तम् । द्वितीयविकल्पोप्यनभ्युगमादेवायुक्तः । न हि विषयस्य देशं कालं वा गत्वा ज्ञानं तत्परिच्छेदकमिति केनाप्यभ्युपगतम्–अप्राप्यकारिणस्तस्य क्वचिद्गमनाभावात् । केवलं यथाऽनाद्यनन्तरूपतया स्थितोर्थस्तथैव तत्प्रतिपद्यते । तृतीयविकल्पोप्ययुक्तः क्वचिद्विषये तस्योत्पन्नस्यात्मस्वभावतया विनाशासम्भवात् । न हि स्वभावो भावस्य विनश्यति स्फटिकस्य स्वच्छतादिवत् । अन्यथा तस्याप्यभावः स्यात् । औपाधिकमेव हि रूपं नश्यति । यथा तस्यैव रक्तिमादि । कथं चैवंवादिनो वेदस्यानाद्यनन्ततप्रतिपत्तिस्तत्राप्युक्तविकल्पानामवतारात् । कथं वा साध्यसाधनयोः साकल्येन व्याप्तिप्रतिपत्तिः ? सामान्येन व्याप्तिप्रतिपत्तावप्यनाद्यनन्तसामान्यप्रतिपत्तावुक्तदोषानुषङ्ग एव । यच्चोक्तं "कथं चासौ तत्कालेप्यऽसर्वज्ञैर्ज्ञातुं शक्यते" तदपि फल्गुप्रायम् ।–विषयापरिज्ञाने विषयिणोप्यपरिज्ञानाभ्युपगमे कथं जैमिन्यादेः सकलवेदार्थपरिज्ञाननिश्चयोऽसकलवेदार्थविदाम् ? तदनिश्चये च कथं तद्व्याख्यातार्थाश्रयणादग्निहोत्रादावनुष्ठाने प्रवृत्तिः ? कथं वा व्याकरणादिसकलशास्त्रार्थापरिज्ञाने तदर्थज्ञतानिश्चयो व्यवहारिणाम् ? यतो व्यवहारप्रवृत्तिः स्यात् । सुनिश्चितासम्भवद्बाधकप्रमाणत्वाच्चाशेषार्थवेदिनो भगवतः सत्त्वसिद्धिः । न चेदमसिद्धम् । तथा हि । सर्वविदोऽभावः प्रत्यक्षेणाधिगम्यः प्रमाणान्तरेण वा ? न तावत्प्रत्यक्षेण । तद्धि सर्वत्र सर्वदा सर्वः सर्वज्ञो न भवतीत्येवं प्रवर्त्तते क्वचित्कदाचित्कश्चिद्वा ? प्रथमपक्षे न सर्वज्ञाभावस्तज्ज्ञानवत एवाशेषज्ञत्वात् । न हि सकलदेशकालाश्रितपुरुषपरिषत्साक्षात्करणमन्तरेण प्रत्यक्षतस्तदाधारमसर्वज्ञत्वं प्रत्येतुं शक्यम् । द्वितीयपक्षे तु न सर्वथा सर्वज्ञाभावसिद्धिः । अथ न प्रवर्त्तमानं प्रत्यक्षं सर्वज्ञाभावसाधकं किन्तु निवर्तमानम् । ननु कारणस्य व्यापकस्य वा निवृत्तौ कार्यस्य व्याप्यस्य वा निवृत्तिः प्रसिद्धा नान्यनिवृत्तावन्यनिवृत्तिरतिप्रसङ्गात् । न चाशेषज्ञस्य प्रत्यक्षं कारणं व्यापकं वा येन तन्निवृत्तौ सर्वज्ञस्यापि निवृत्तिः । न चैवं घटाद्यभावासिद्धिरेकज्ञानसंसर्गिपदार्थान्तरोपलम्भात् क्वचित्तत्सिद्धेः । न चात्राप्ययं न्यायः समानस्तत्संसर्गिण एव कस्यचिदभावात् । अन्यथा सर्वत्र तदभावविरोधो घटादिवत् । तन्न प्रत्यक्षेणाधिगम्यस्तदभावः । नाप्यनुमानेन विवादाध्यासितः पुरुषः

१ ता ॥ २ कस्मिंश्चिद्वस्तुनि ॥ ३ जनानाम् ॥, ४ जैनानाम् ॥ ५ ज्ञानस्य ॥ ६ पदार्थस्य ॥ ७ जपाकुसुमादिजनितम् ॥ ८ सर्वज्ञज्ञानस्य क्वचिद्विश्रान्तत्वान्न सर्वज्ञत्वमित्येव वादिन ॥ ९ वेदस्यानाद्यनन्ततग्राहक जैमिन्यादिज्ञान क्वचिद्विश्रान्तमित्यादि ॥ १० किंच ॥ ११ व्याप्तिर्विशेषत प्रत्येतु नायाति व्यक्तीनामानन्त्यात् । अत सामान्येनेत्युक्तम् ॥ १२ सामान्यमनाद्यनन्तमीदृशसामान्यस्य ग्राहक व्याप्तिज्ञान क्वचिद्विश्रान्त न वेत्यादि ॥ १३ सर्वज्ञ ॥ १४ सर्वज्ञ ॥ १५ अर्थ ॥ १६ ज्ञानस्य ॥ १७ भवादृशाम् ॥ १८ स्वात्मनि सुखादिवत् ॥ १९ असदादे ॥ २० अग्न्यादे ॥ २१ वृक्षत्वस्य ॥ २२ धूमादे ॥ २३ शिंशुपात्वस्य ॥ २४ अकारणस्याऽव्यापकस्य वा ॥ २५ अकार्यस्याऽव्याप्यस्य वा ॥ २६ घटनिवृत्तौ पटनिवृत्तिप्रसङ्गात् ॥ २७ असदादे ॥ २८ सर्वज्ञाभावासिद्धिप्रकारेण । कथम् ? न प्रवर्त्तमान प्रत्यक्ष घटाभावसाधक किन्तु निवर्त्तमानमित्युक्ते ननु कारणस्येत्यादिग्रन्थो निवृत्तिपर्यन्त समान । किन्तु सर्वज्ञपदस्थाने घटपद पठनीयम ॥ २९ भूतल ॥ ३० घटाद्यभाव ॥ ३१ सर्वज्ञेपि ॥ ३२ एकज्ञानससर्गिपदार्थान्तरोपलम्भात् क्वचिद् घटाभावप्रतिपत्तिलक्षण ॥ ३३ प्रदेशस्य ॥ ३४ एकज्ञानससर्गिकोपि कश्चित्प्रदेशो भवेद्यदि ॥

सर्वज्ञो न भवति वक्तृत्वाद्रथ्यापुरुषवदित्यनुमाने हि प्रमाणान्तरसंवादिनोऽर्थस्य वक्तृत्वं हेतुस्तद्विपरीतस्य वा स्याद्वक्तृत्वमात्रं वा ? प्रथमपक्षे विरुद्धो हेतुः प्रमाणान्तरसंवादिसूक्ष्माद्यर्थवक्तृत्वस्याशेषज्ञे एवभावात्। द्वितीयपक्षे तु सिद्धसाधनं–तथाभूतस्य वक्तुरसर्वज्ञत्वेनास्माभिरभ्युपगमात्। वक्तृत्वमात्रस्य तु हेतोः साध्यविपर्ययेण सर्वज्ञत्वेनानुपलब्धेन सह सहानवस्थानपरस्परपरिहारस्थितिलक्षणविरोधासिद्धेस्ततो व्यावृत्त्यभावान्न स्वसाध्यनियतत्वं यतो गमकत्वं स्यात्। सर्वज्ञे वक्तृत्वस्यानुपलब्धेस्ततो व्यावृत्तिरित्यप्यसम्यक्सर्वसम्बन्धिनोऽनुपलम्भस्यासिद्धेस्तेनैव सर्वज्ञान्तरेण वा तत्र तस्योपलम्भसम्भवात्। सर्वज्ञस्य कस्यचिदभावात्सर्वसम्बन्धिनोऽनुपलम्भस्य सिद्धिरित्यसङ्गतं–प्रमाणान्तरात्तत्सिद्धावस्य वैयर्थ्यात्। अतः सिद्धौ चक्रकानुषङ्गः। नापि स्वसम्बन्धिनोऽनुपलम्भात्तद्व्यतिरेकनिश्चयोऽस्य परचेतोवृत्तिविशेषैरनैकान्तिकत्वात्। न चाखिलसाधनेषु दोषस्यास्य समानत्वान्निखिलानुमानोच्छेदस्तत्र विपक्षव्यावृत्तिनिमित्तस्यानुपलम्भव्यतिरेकेण प्रमाणान्तरस्य भावात्। न चात्र कार्यकारणभावः प्रसिद्धोऽसर्वज्ञत्वधर्मानुविधानाभावाद्वचनस्य। यद्धि यत्कार्यं तत्तद्धर्मानुविधायि प्रसिद्धं वन्ह्यादिसामग्रीगतसुरभिगन्धाद्यनुविधायिधूमवत्। तथा हि। असर्वज्ञत्व सर्वज्ञत्वादन्यत्पर्युदासवृत्त्या किञ्चिज्ज्ञत्वमभिधीयते। न च तत्तरतमभावाद्वचनस्य तथाभावो दृश्यते। तद्धिप्रकृष्टमत्यल्पज्ञानेषु कृम्यादिषु। न च तत्र वचनप्रवृत्तेः प्रकर्षो दृश्यते। अथ प्रसज्यप्रतिषेधवृत्त्या सर्वज्ञत्वाभावोऽसर्वज्ञत्वं तत्कार्यं वचनं तर्हि ज्ञानरहिते मृतशरीरादौ तस्योपलम्भप्रसङ्गो ज्ञानातिशयवत्सु चाखिलशास्त्रव्याख्यातृषु वचनातिशयोपलम्भो न स्यात्। न चैवम्। ततो ज्ञानप्रकर्षतरतमाद्यनुविधानदर्शनात्तस्य तत्कार्यता सातिशयतक्षादिकारणधर्मानुविधायिप्रासादादिकार्यविशेषवत्। तन्नानुमानात्तदभावसिद्धिः। नाप्यागमात्। स हि तत्प्रणीतोऽन्यप्रणीतोऽपौरुषेयो वा तदभावसाधकः स्यात्? तत्र यद्यागमप्रणेता सकलं सकलज्ञविकलं साक्षात्प्रतिपद्यते युक्तोऽसौ तत्र प्रमाणम्। किन्तु विद्यमानोपि न प्रकृतार्थोपयोगी–तथा प्रतिपद्यमानस्य तस्यैवाशेषज्ञत्वात्। न प्रतिपद्यते चेत्तर्हि रथ्यापुरुषप्रणीतागमवन्नासौ तत्र प्रमाणम्। न ह्यविदितार्थस्वरूपस्य प्रणेतुः प्रमाणभूतागमप्रणयनं नामातिप्रसङ्गात्। द्वितीयविकल्पेप्येतदेव वक्तव्यम्। अपौरुषेयोप्यागमो जैमिन्यादिभ्यो यदि सर्वत्र सर्वदा सर्वज्ञाभावं प्रतिपादयेत्तर्हि सर्वस्मै प्रतिपादयेत् केनचित् सह प्रत्यासत्तिवि-

---

१ आदिपदेनान्तरितदूरम् ॥ २ जैने ॥ ३ सर्वज्ञाभाव ॥ ४ अतश्च सन्दिग्धविपक्षव्यावृत्तिको हेतु ॥ ५ वक्तृत्वमात्रस्य ॥ ६ अविनाभूतत्वम् ॥ ७ वक्तृत्वस्य ॥ ८ प्रकृतसर्वज्ञेन ॥ ९ प्रकृतानुमानस्य ॥ १० वक्तृत्वानुमानस्य ॥ ११ वक्तृत्वानुमानात्सर्वज्ञाभावसिद्धिस्तत्सिद्धौ च सर्वज्ञात्साधनस्य व्यावृत्तिसिद्धिरतश्चानुमानमिति ॥ १२ वक्तृत्वस्य ॥ १३ सर्वज्ञत्वलक्षणाद्विपक्षात् व्यावृत्तिनिश्चय ॥ १४ अभावसाध्यसाधकानां निखिलसाधनानां पक्षेनुपलम्भ सर्वसम्बन्धी आत्मसम्बन्धी वेत्याद्युक्ते असिद्धानैकान्तिकत्वलक्षणस्य ॥ १५ यत्राग्निर्नास्ति तत्र धूमोपि नास्ति ॥ १६ उक्तस्य ॥ १७ वक्तृत्वासर्वज्ञत्वयो ॥ १८ यस ॥ १९ वचनमसर्वज्ञकार्यं न भवति तद्धर्मानुविधानाभावात् ॥ २० सन्दिग्धानैकान्तिकत्वे सतीदमाह ॥ २१ यस ॥ २२ आदिपदेन धूमगन्ध ॥ २३ यदि ॥ २४ सर्वथा ज्ञानाभाव ॥ २५ ज्ञानातिशय ॥ २६ यस ॥ २७ सातिशयत्व ॥ २८ नैमकलज्ञविकलो ॥ २९ सर्वज्ञाभावलक्षणेऽर्थे ॥ ३० सर्वज्ञाभावे ॥ ३१ रथ्यापुरुषस्य प्रमाणभूतागमप्रणेतृत्व स्यात् ॥ ३२ मीमांसकेन । नैयायिकादिना च ॥

प्रकर्षविरहात्। तथा च—विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात्। स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्। हिरण्यगर्भं प्रकृत्य सर्वज्ञ इत्यादौ न कस्यचिद्विप्रतिपत्तिः स्यात्—किमनेन सर्वज्ञः प्रतिपाद्यते कर्मविशेषो वा स्तूयते इति। न खलु प्रदीपप्रकाशिते घटादौ कस्यचिद्विप्रतिपत्तिः—किमयं घटः पटो वेति। न च स्वरूपेऽस्याप्रामाण्यम्। अविसंवादो हि प्रमाणलक्षणं कार्ये स्वरूपे वार्थे, नान्यत्। यत्र सोस्ति तत्प्रमाणम्। न चाशेषज्ञाभावावेदकं किञ्चिद्वेदवाक्यमस्ति–तत्सद्भावावेदकस्यैव श्रुतेः। तन्नागमादप्यस्याभावसिद्धिः। नाप्युपमानात्। तत्खलूपमानोपमेययोरध्यक्षत्वे सति सादृश्यावलम्बनमुदयमासादयति नान्यथा। न चात्रत्येदानीन्तनोपमानभूताशेषपुरुषप्रत्यक्षत्वमुपमेयभूताशेषान्यदेशकालपुरुषप्रत्यक्षत्वं चाभ्युपगम्यते सर्वज्ञसिद्धिप्रसङ्गात्–निखिलार्थप्रत्यक्षत्वमन्तरेणाशेषपुरुषपरिषत्साक्षात्कारित्वासम्भवात्। नाप्यर्थापत्तेस्तदभावावगमः–सर्वज्ञाभावमन्तरेणानुपजायमानस्य प्रमाणषट्कविज्ञातस्य कस्यचिदर्थस्यासम्भवात्। वेदप्रामाण्यस्य गुणवत्पुरुषप्रणीतत्वे सत्येव भावात्। अपौरुषेयत्वस्याग्रे विस्तरतो निषेधात्। न चार्थापत्तिरनुमानात्प्रमाणान्तरमित्यग्रे वक्ष्यते। तद्वदत्रापि व्याप्त्यादिचिन्तायां दोषान्तरं चापादनीयम्। नाप्यभावप्रमाणात्तदभावसिद्धिस्तस्यासिद्धेः। तदसिद्धिश्चाभावप्रमाणलक्षणस्य 'प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते। सात्मनो परिणामो वा विज्ञानं वान्यवस्तुनि' इत्यादेः प्रागेव विस्तरतो निराकरणात्सिद्धा। इत्यलमतिप्रसङ्गेन। न चानुमाने तत्सद्भावावेदके सत्येतत्प्रवर्त्तते–'प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता' इत्यभिधानात्। किञ्चाऽभावप्रमाणं 'गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया' इति सामग्रीतः प्रादुर्भवति। न चाशेषज्ञनास्तिताधिकरणाखिलदेशकालप्रत्यक्षता कस्यचिदस्त्यऽतीन्द्रियार्थदर्शित्वप्रसङ्गात्। नाप्यशेषज्ञः क्वचित्कदाचित्केनचित्प्रतिपन्नो येनासौ स्मृत्वा निषेध्येत–सर्वत्र सर्वदा तन्निषेधविरोधात्। न च निषेध्यनिषेध्याधारयोरप्रतिपत्तौ निषेधो नामातिप्रसङ्गात्। न ह्यप्रतिपन्ने भूतले घटे च घटनिषेधो घटते। यथा चाभावप्रमाणस्योत्पत्तिः स्वरूपं विषयो वा न सम्भवति तथा प्राक्प्रपञ्चेनोक्तमिति कृतमतिप्रसङ्गेन। तन्नाभावप्रमाणादप्यशेषज्ञाभावसिद्धिः। तदेवं सिद्धं सुनिश्चितासम्भवद्बाधकप्रमाणत्वमप्यशेषज्ञस्य प्रसाधकम्। इत्यलमतिप्रसङ्गेन।

ननु चावरणविश्लेषादशेषवेदिनो विज्ञानं प्रभवतीत्यसाम्प्रतं तस्यानादिमुक्तत्वेनावरणस्यैवासम्भवादिति चेत्तदयुक्तम्–अनादिमुक्तत्वस्यासिद्धेः। तथा हि। नेश्वरोऽनादिमुक्तो मुक्तत्वात्तदन्यमुक्तवत्। बन्धापेक्षया च मुक्तव्यपदेशः। तद्रहिते चास्याप्यभावः स्यादाकाशवत्। ननु चानादिमुक्तत्वं तस्यानादेः क्षित्यादि-

१ प्रस्तुत ॥ २ वेदवाक्येन ॥ ३ यागलक्षण ॥ ४ श्रुतिवाक्यस्य ॥ ५ प्रवर्त्तक ॥ ६ प्रमाणत्वेनाङ्गीकृतवचनादौ ॥ ७ अभ्युपगमम्यते चेत्तर्हि सर्वज्ञो वेदप्रामाण्यान्यथानुपपत्ते ॥ ८ सपक्षेऽन्वयादि ॥ ९ विचारणायाम् ॥ १० आश्रयासिद्धिलक्षणाद्दोषादन्यत्सम्नन्वाप्रतिपत्त्यनवस्थेतरेतराश्रयलक्षण दोषान्तरम् ॥ ११ अभावप्रमाणदूषणविस्तरेण ॥ १२ घटासदशलक्षणे ॥ १३ सर्वज्ञसद्भावे प्रमाणोपन्यासविस्तरेण ॥ १४ अशेषवेदी सावरणो न भवति अनादिमुक्तत्वाद्। य सावरण सोनादिमुक्तो न भवति यथा स्तम्भादि ॥ १५ मुक्तो भवति अनादिमुक्तो भवतीति सन्दिग्धानैकान्तिकत्वे सतीद वाक्यमाह ॥ १६ ईश्वरो मुक्तव्यपदेशभाग् न भवति वन्धरहितत्वादाकाशवत ॥

वार्च्यं–तस्याप्यचेतनतयाधिष्ठात्रऽपेक्षोपपत्तेः। तथा हि। अदृष्टं चेतनाधिष्ठितं कार्ये प्रवर्त्ततेऽचेतनत्वात्तन्त्वादिवत्। न चास्मदाद्यात्मैवाधिष्ठायकस्तस्यादृष्ट-परमाण्वादिविषयविज्ञानाभावात्। न च चेतनस्याकस्मात्प्रवृत्तिरुपलब्धा। प्रवृत्तौ वा निष्पन्नेपि कार्ये प्रवर्त्तेत–विवेकशून्यत्वात्। तथा वार्त्तिककारेणापि प्रमाण-द्वयं तत्सिद्धयेऽभ्यधायि। "महाभूतादि व्यक्तं चेतनाधिष्ठितं प्राणिनां सुखदुःखनिमित्तं रूपादिमत्त्वात्तुर्यादिवत्। तथा पृथिव्यादीनि महाभूतानि बुद्धिमत्कार-णाधिष्ठितानि स्वासु धारणाद्यासु क्रियासु प्रवर्त्तन्तेऽनित्यत्वाद्वास्यादिवत्"। तथाऽविद्धकर्णेन च—"तनुकरणभुवनोपादानानि चेतनाधिष्ठितानि स्वकार्यमारभन्ते–रूपादिमत्त्वात्तन्त्वादिवत्"। तथा द्वीन्द्रियग्राह्याग्राह्यं विमतिभावापन्नं बुद्धिमत्कारणपूर्वकं स्वारम्भकावयवसन्निवेशविशिष्टत्वाद् घटादिवत्। वैधर्म्येण परमाणवो यथा। द्वाभ्यां दर्शनस्पर्शनेन्द्रियाभ्यां ग्राह्यं पृथिव्यप्तेजोलक्षणं त्रिविध द्रव्यमऽग्राह्य वाय्वादिकम्। वायौ हि रूपसंस्काराभावादनुपलब्धिः। रूपसंस्कारो रूपसमवायः। द्व्यणुकादीना त्वऽमहत्वात्। उक्तं च "महत्यनेकद्रव्यत्वाद्रूपविशेषाच्चं रूपोपलब्धिः"। प्रशस्तमतिना च—"सर्गादौ पुरुषाणा व्यवहारोऽन्योपदेशपूर्वकः उत्तरकालं प्रबुद्धानां प्रत्यर्थनियतत्वादप्रसिद्धवाग्व्यवहाराणां कुमाराणा गवादिषु प्रत्यर्थनियतो वाग्व्यवहारो यथा मात्राद्युपदेशपूर्वकः" इति। उद्द्योतकरेण च—"भुवनहेतवः प्रधानपरमाण्वदृष्टाः स्वकार्योत्पत्तावतिशयवद्बुद्धिमन्तमधिष्ठितारमपेक्षन्ते स्थित्वा प्रवृत्तेस्तन्तुतुर्यादिवत्। तथा बुद्धिमत्कारणाधिष्ठितं महाभूतादि व्यक्तं सुखदुःखनिमित्तं भवत्यचेतनत्वात्कार्यत्वाद्विनाशित्वाद्रूपादिमत्वाद्वा वास्यादिवत्"। इत्यनवद्यं भगवतः प्रलयकालेऽप्यलुप्तज्ञानाद्यतिशयस्य साधनम्।

अत्र प्रतिविधीयते। सावयवत्वात्कार्यत्वं क्षित्यादेः प्रसाध्यते। तत्र किमिदं सावयवत्वं नाम? सहावयवैर्वर्त्तमानत्वं तैर्जन्यमानत्वं वा सावयवमिति बुद्धिवि-षयत्वं वा? प्रथमपक्षे सामान्यादिनानेकान्तः। गोत्वादि सामान्यं हि सहावयवैर्वर्त्तते, न च कार्यम्। द्वितीयपक्षेप्यसिद्धो हेतुः परमाण्वाद्यवयवानां प्रत्यक्षतोऽसिद्धौ क्षित्यादेस्तज्जन्यमानत्वस्याप्यसिद्धेः। प्रत्यक्षानुपलम्भसाधनश्च कार्यकारणभावः। द्व्यणुकादिकं स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धं कार्यत्वात्पटादिवदित्यनु-मानात्तेषा प्रसिद्धिरित्यप्यसमीचीनं चक्रकप्रसङ्गात्। परमाणुप्रसिद्धौ हि क्षित्यादेस्तैर्जन्यमानत्वलक्षणसावयवत्वसिद्धिस्तत्सिद्धौ च कार्यत्वसिद्धिः ततश्च परमाणु-

---

१ जैनादिभि ॥ २ प्रेरितम् ॥ ३ प्रेरक ॥ ४ कारण विना ॥ ५ ईश ॥ ६ परमाणुव्यवच्छेदार्थं महदिति पदम् ॥ ७ पृथिव्यादि ॥ ८ कार्यम् ॥ ९ यथा वार्त्तिककारेणाभ्यधायीति पूर्वेण सम्बन्ध ॥ १० परमाण्वादिकारणानि ॥ ११ क्षित्यादिकम् ॥ १२ परमाणु ॥ १३ रचनाविशेष ॥ १४ व्यतिरेकेण ॥ १५ आदिपदेन द्व्यणुकादिकम् ॥ १६ अनेकद्रव्यत्वाद्रूपविशेषाचेत्युच्यमाने द्व्यणुकादौ रूपोपलब्धि स्यात्तद्व्यवच्छेदार्थं महतीति पदम् ॥ १७ महत्यनेकद्रव्यत्वादित्युच्यमाने वायावपि रूपोपलब्धि स्यात्तद्व्यवच्छेदार्थं रूपविशेषादित्युक्तम् ॥ १८ सृष्टिप्रारम्भे ॥ १९ आदिपदेन पित्रादि ॥ २० साङ्ख्योद्देशेनास्य प्रयोग ॥ २१ मीमासकाद्युद्देशेनास्य पदस्य प्रयोग ॥ २२ खण्डमुण्डशावलेयत्वादिस्वव्यक्तिभि सह वर्त्तते ॥ २३ नित्यत्वात्तस्य ॥ २४ द्व्यणुकादि ॥ २५ घटमृत्पिण्डादो कार्यकारणभाव प्रत्यक्षत सिद्धो द्व्यणुकपरमाण्वादौ तु कार्यकारणभावोऽनुमानादिति भाव ॥ २६ बुद्ध्या (व्यापकत्वान्महत्परिमाणोपेतात्मन कार्यत्वाद्बुद्ध्यादे) व्यभिचारपरिहारार्थं द्रव्यत्वे सतीति विशेषण द्रष्टव्यम् ॥ २७ परमाण्वादीनाम् ॥ २८ त्रिभिरावर्त्तन चक्रकदूषणम् ॥

प्रसिद्धिरिति । महापरिमाणोपेतप्रशिथिलावयवकर्पासपिण्डोपादानेनाऽतिनिविडावयवाल्पपरिमाणोपेतकर्पासपिण्डेनानेकान्तश्च । बलवत्पुरुषप्रयत्नप्रेरितहस्ताद्यभिघातादवयवक्रियोत्पत्तेरवयवविभागात्संयोगविनाशान्महाकर्पासपिण्डविनाशोऽल्पकर्पासपिण्डोत्पादस्तु स्वारम्भकावयवकर्मसंयोगविशेषवशादेव भवतीत्यपि विनाशोत्पादप्रक्रियोद्घोषणमात्रं—प्रमाणतोऽप्रतीतेः । कर्पासद्रव्यं हि महापरिमाणपिण्डाकारपरित्यागेनाल्पपरिमाणपिण्डाकारतयोत्पद्यमानं प्रमाणतः प्रतीयते । आशूत्पत्तेर्भेदानवधारणात्तथा प्रतीतिरित्यप्यसङ्गतं सकलभावानां क्षणिकत्वानुषङ्गात् । अभेदाध्यवसायस्तु सदृशापरापरोत्पत्तिविप्रलम्भादित्यनिष्टसिद्धिप्रसङ्गात् । नाप्यागमात्परमाण्वादिप्रसिद्धिस्तत्प्रामाण्याप्रसिद्धेः । सावयवमिति बुद्धिविषयत्वमप्यात्मादिनानैकान्तिकं तस्याकार्यत्वेपि तत्प्रसिद्धेः । सार्वयवार्थसंयोगान्निरवयवत्वेप्यस्य तद्बुद्धिविषयत्वमित्यौपचारिक तदप्यसङ्गतं तस्य निरवयवत्वे व्यापित्वविरोधात् परमाणुवत् । तदपि ह्यौपचारिकमेव स्यात् । तदेवं सावयवत्वासिद्धेः कथं ततः क्षित्यादेः कार्यत्वसिद्धिः ? प्रागसतः स्वकारणसमवायात्सत्तासमवायाद्वा तत्सिद्धिश्चेत्कुतः प्राक् ? कारणसमवायाच्चेत् तत्समवायसमये प्रागिवास्य स्वरूपसत्त्वस्याभावो न वा ? अभावे प्रागिति विशेषणमनर्थकम् । कार्यस्य हि कारणसमवायसमये स्वरूपेण सत्त्वसम्भवे तद्वत्प्रागपि सत्त्वे कार्यता न स्यात् । ततः प्रागित्यर्थवत्स्यात् । प्रागिव तत्समवायसमयेप्यस्य स्वरूपसत्त्वाभावे त्वसत इत्येवाभिधातव्यम् । न चासतः कारणसमवायः—खरविषाणादेरपि तत्प्रसङ्गात् । न चास्य कारणाभावान्न तत्प्रसङ्ग इत्यभिधातव्यम्—क्षित्यादेरपि तदभावप्रसङ्गादसत्त्वाविशेषात् । क्षित्यादेः कारणोपलम्भान्न दोष इत्यप्यसारम्—कार्यकारणयोरुपलम्भे हीदमस्य कारणं कार्यं चेदमिति प्रतिभागः स्यात् । न च प्रत्यक्षतः क्षित्यादेरुपलम्भोऽसतस्तस्य तज्जनकत्वविरोधात् खरविषाणवत् । न चाजनकं विषयः—उपलम्भकारणमुपलम्भविषय इत्यभ्युपगमात् । प्रागसतः सत्तासम्बन्धेप्येतत्सर्वं समानम् । न समानं—खरशृङ्गादेः क्षित्यादिकार्यस्य विशेषसम्भवात् । तद्ध्यत्यन्ताऽसत् । क्षित्यादिकं न तत्राऽप्यसतस्तत्सम्बन्धात्तु सदित्यपि मनोरथमात्रं—सत्त्वासत्त्वयोरेकत्रैकदा प्रतिषेधविरोधात् । न सदित्यभिधानात्तस्य सत्तासम्बन्धात्प्रागभावः स्यात्सत्प्रतिषेधलक्षणत्वादस्य । नाप्यसदित्यभिधानात्तु भावः—असत्त्वप्रतिषेधरूपत्वात्तस्य रूपान्तराभावात् । ततोऽसदेव तदभ्युपगन्तव्यम् । तत्रास्य खरशृङ्गादेर्विशेषः । किञ्च सत्ता सत्यऽसती वा ? यद्यऽसती कथं तया वन्ध्यासुतयेव सम्बन्धादन्येषां सत्त्वम् ? सती चेत्स्वतोऽन्यसत्तातो वा ? यद्यन्यसत्तातोऽनवस्था । स्वतश्चेत्

---

१ क्रिया ॥ २ कथनमात्रम् ॥ ३ पूर्वपिण्डविनाश एवोत्तरपिण्डोत्पत्तिरित्यभेदतया ॥ ४ आशुवृत्ते ॥ ५ विसंवादात् ॥ ६ क्षित्यादिकं कार्यं सावयवत्वादित्यस्य ॥ ७ आदिपदेनाकाशादिना ॥ ८ शरीरादिमूर्तिमद्भिः ॥ ९ परमाणु ॥ १० इह तन्तुषु पटसमवायो यथा ॥ ११ क्षित्यादिकार्यत्वस्य ॥ १२ क्षित्यादिकार्यस्य ॥ १३ नासत इति विशेषणम् ॥ १४ कारण ॥ १५ न प्रागिति ॥ १६ परेण त्वया ॥ १७ प्रत्यक्षस्याजनकं क्षित्यादिकम् ॥ १८ असत्त्वादेवाजनकम् ॥ १९ प्रत्यक्षस्य ॥ २० प्रत्यक्षकारणं प्रत्यक्षजनकमित्यर्थः ॥ २१ प्रत्यक्षविषय ॥ २२ प्रागित्यादि ॥ २३ सत्तासम्बन्धवैयर्थ्यप्रसङ्गात् ॥ २४ खरविषाणादेरपि सत्तासम्बन्धप्रसङ्गात् ॥ २५ न सदित्यस्य ॥ २६ सद्भाव ॥ २७ परेण ॥ २८ क्षित्यादीनाम् ॥

पदार्थानामपि स्वत एव सत्त्वं स्यादिति व्यर्थं तत्परिकल्पनम् । एतेन द्वितीयविकल्पोऽप्यपास्तः । कार्यस्य हि स्वतः सत्त्वोपगमे किं तत्कल्पनया साध्यम्? अनवस्था-
प्रसङ्गात् । तदेवं कार्यत्वासिद्धेरसिद्धो हेतुः । किञ्च कथञ्चित्कार्यत्वं क्षित्यादेः सर्वथा वा? सर्वथा चेत्पुनरप्यसिद्धत्वं द्रव्यतोऽशेषार्थानामकार्यत्वात् । कथञ्चित् चेद्वि-
रुद्धत्वं-सर्वथा बुद्धिमन्निमित्तत्वात्साध्याद्विपरीतस्य कथञ्चिद्बुद्धिमन्निमित्तत्वस्य साधनात् । अनैकान्तिकं च-आत्मादिभिस्तेषां बुद्धिमन्निमित्तत्वाभावेपि तत्सम्भ-
वात् । कथञ्चिदप्यकार्यत्वे चैतेषां कार्यकारित्वस्याभावस्तस्याऽकर्तृरूपत्यागेन कर्तृरूपोपादानाविनाभावित्वात् । तत्त्यागोपादानयोश्चैकरूपे वस्तुन्यसम्भवात्सिद्धं कथ-
ञ्चित् कार्यत्वं तेषाम् । कर्तृत्वाकर्तृत्वरूपयोरात्मादिभ्योऽर्थान्तरत्वान्न तद्विनाशोत्पादाभ्यां तेषामपि तथाभावो यतः कार्यत्वं स्यादित्यपि श्रद्धामात्रं-तयोस्ततोऽर्था-
न्तरत्वे सम्बन्धासिद्धिप्रसङ्गात् । समवायादेश्च कृतोत्तरत्वादित्यलमतिप्रसङ्गेन । बुद्धिमत्कारणमित्यत्र च मत्वर्थस्य साध्यविशेषणस्यानुपपत्तिः । बुद्धिमतो हि बुद्धिर्व्यति-
रिक्ता वाऽव्यतिरिक्ता वा? तत्र तस्यास्ततो व्यतिरेकैकान्ते तस्येति सम्बन्धस्याभावः । सा हि तस्य तद्गुणत्वात्तत्समवायाद्वा तत्कार्यत्वाद्वा तदाधेयत्वाद्वा स्यात्? न तावत्त-
द्गुणत्वात्सा तस्येत्यभिधातव्यं-ततो व्यतिरेकैकान्ते सा तस्यैव गुणो नाकाशादेरिति व्यवस्थापयितुमशक्तेः । नापि तत्समवायात्-तस्यैवासम्भवात् । सम्भवे वा तस्य
ताभ्यां भेदैकान्ते व्यवस्थापकत्वायोगात्सर्वत्राविशेषाच्च । तत्कार्यत्वात्सा तस्येति चेत्कुतस्तत्कार्यत्वम्? तस्मिन्सति भावादाकाशादौ प्रसङ्गः । तदभावेऽभावाच्चेन्न नित्यव्या-
पित्वाभ्यां तस्य तदयोगात् । तदाधेयत्वात्सा तस्येति चेत्किमिदं तदाधेयत्वं नाम? समवायेन तत्र वर्त्तनं चेत्तत्कृतोत्तरम् । तादात्म्येन वर्त्तनं चेन्न-अनभ्युपगमात् ।
सम्बन्धमात्रेण वर्त्तनं चेत्तर्हि घटादेर्भूतलादिगुणत्वप्रसङ्गः-सम्बन्धमात्रेण वर्त्तमानस्य तस्य तदाधेयत्वसम्भवात् । किञ्च व्याप्त्या तेनास्यास्तत्र वर्त्तनमव्याप्त्या वा? न
तावद्व्याप्त्या-आत्मविशेषगुणत्वादस्मदादिबुद्ध्यादिवत् । परममहापरिमाणेन व्यभिचार इत्ययुक्तं तत्र विशेषगुणत्वाभावात् । नन्वेवमस्मदादिबुद्ध्यादौ सकलार्थग्राहित्वा-
भावो दृष्टः सोपि तत्र स्यादिति चेदस्तु नाम-दृष्टान्ते व्याप्तिदर्शनमात्रात्सर्वत्र साध्यसिद्धेर्भवताभ्युपगमात् । कथमन्यथा प्रकृतसिद्धिः । यथा चास्मदादिबुद्धिवैलक्षण्यं
तद्बुद्धेरदृष्टं परिकल्प्यते तथा घटादौ कर्मकर्तृकरणनिर्वर्त्त्यकार्यत्वं दृष्टं वने वनस्पत्यादिषु चेतनकर्तृरहितमपि स्यादित्येतैर्व्यभिचारो हेतोः । अथाऽव्याप्त्या तर्हि दे-
शान्तरोत्पत्तिमत्कार्येषु कथं तस्या व्यापारः-असन्निधानात् । तथापि व्यापारेऽदृष्टस्याप्यग्न्यादिदेशेऽसन्निहितस्योर्ध्वज्वलनादिहेतुता स्यादित्यग्नेरूर्ध्वज्वलनमित्याद्यात्म-

---

१ न वेत्ययम् ॥ २ कारणसमवायसत्तासमवायकल्पनया ॥ ३ द्रव्यपर्यायाभ्याम् ॥ ४ कार्यत्व ॥ ५ कूटस्थनित्यस्येव ॥ ६ नित्ये ॥ ७ विनाशोत्पाद ॥ ८ समवायादिसम्बन्धनिराकरणविस्तरेण ॥ ९ किञ्च ॥ १० साध्य कारण तस्य विशेषण बुद्धिमत् ॥ ११ परेण यौगेन ॥ १२ बुद्धिबुद्धिमद्भ्याम् ॥ १३ बुद्धिमत इय बुद्धिरिति ॥ १४ गगनादौ समवायस्य व्यापकत्वात् ॥ १५ चेत्तर्हि ॥ १६ समपि सर्वदाऽस्ति यत ॥ १७ सामस्त्येन ॥ १८ आ-त्मविशेषगुणेन ॥ १९ आकाशगुणत्वात्परममहापरिमाणस्य जैनानाम् । आत्मा तु तेषां देहपरिमाण इति ॥ २० व्याप्त्या वर्त्तमानत्वप्रतिषेधे ॥ २१ ईश्वरलक्षणे बुद्धिमति ॥ २२ नैयायिकेन ॥ २३ बुद्धिमत्कारणत्वस्य ॥ २४ का ॥ २५ परेण २६ घट ॥ २७ कुम्भकार ॥ २८ चक्रादि ॥ २९ सुकृतस्य ॥ ३० अग्नेरूर्ध्वस्थितमनादि । तस्य शुभपचन भोक्तृदेवदत्तादृष्टेनेति ॥ ३१ नैयायिकमते आत्मन सर्वगतत्वात्तद्गुणोऽदृष्टमपि सर्वगतमेवातो देशान्तरे का-लान्तरे चाम्रपाकपटमुक्ताफलादीन् तद्भोक्तृदेवदत्तादृष्ट तत्र गत्वा सहकारि भूयोत्पादयति ॥

सर्वगतत्वसाधनमयुक्तम् । अव्यतिरेकैकान्ते चात्ममात्रं बुद्धिमात्रं वा स्यात् । तत्कथं मत्वर्थः ? न हि तदेव तेनैव तद्वद्भवति । किञ्चासौ तद्बुद्धिः क्षणिकाऽक्षणिका वा ? यदि क्षणिका तदा तस्याः कथं द्वितीयक्षणे प्रादुर्भावः कारणत्रयाधीनत्वात्तस्य । न चेश्वरेऽसमवायिकारणमात्ममनःसंयोगस्तच्छरीरादिकं च निमित्तं कारणमस्ति । कारणत्रयाभावेप्यस्मदादिबुद्धिवैलक्षण्यात्तस्याः प्रादुर्भावे क्षित्यादिकार्यस्य घटादिकार्यवैलक्षण्याद्बुद्धिमत्कारणमन्तरेणाप्युत्पत्तिः किन्न स्यात् ? महेश्वरबुद्धिवच्च मुक्तात्मनामप्यानन्दादिकं शरीरादिनिमित्तकारणमन्तरेणाप्युत्पत्स्यत इति कथं बुद्ध्यादिविकलं जडात्मस्वरूपं मुक्तिः स्यात् ? अथाऽक्षणिका तद्बुद्धिः । नन्वत्रापि क्षणिकश्शब्दोऽस्मदादिप्रत्यक्षत्वे सति विभुद्रव्यविशेषगुणत्वात् सुखादिवदित्यत्रानुमानेऽनयैव हेतोरनेकान्तोऽस्या इव विभुद्रव्यविशेषगुणत्वेऽन्यस्यास्मदादिप्रत्यक्षत्वेपि नित्यत्वासम्भवात् । तथा क्षणिका महेश्वरबुद्धिर्बुद्धित्वादस्मदादिबुद्धिवदित्यनुमानविरोधश्च । अथ बुद्धित्वाविशेषेपि ईशास्मदादिबुद्ध्योरक्षणिकत्वेतरलक्षणो विशेषः परिकल्प्यते तथा घटादिक्षित्यादिकार्ययोरप्यकर्तृकर्तृपूर्वकत्वलक्षणो विशेषः किन्नेष्यते ? तथा च कार्यत्वादिहेतोरनेकान्तः । तदेवं बुद्धिमत्त्वासिद्धेः कथं तत्कारणत्वेन कार्यत्वं व्याप्येत ? अस्तु वाऽविचारितरमणीयं बुद्धिमत्कारणत्वव्याप्तं कार्यत्वं तथाप्यत्र यादृग्भूतं बुद्धिमत्कारणत्वेनाऽभिनवकूपप्रासादादौ व्याप्तं कार्यत्वं प्रमाणतः प्रसिद्धं यदक्रियादर्शिनोपि जीर्णकूपप्रासादादौ लौकिकेतरयोः कृतबुद्धिजनकं तादृग्भूतस्य क्षित्यादावसिद्धेरसिद्धो हेतुः । सिद्धौ वा जीर्णकूपप्रासादादाविवाऽक्रियादर्शिनोपि कृतबुद्धिप्रसङ्गः । न च प्रकृत्याऽत्यन्तभिन्नोपि धर्मः शब्दमात्रेणाभेदी हेतुत्वेनोपादीयमानोऽभिमतसाध्यसिद्धये समर्थो भवत्यन्यत्राप्यस्याविरोधेनाशङ्काऽनिवृत्तेः । यथा वल्मीके धर्मिणि कुम्भकारकृतत्वसिद्धये मृद्विकारत्वमात्रं हेतुत्वेनोपादीयमानम् । नन्वेतत्कार्यसमं नाम जात्युत्तरम् । तदुक्तं "कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनं तत्कार्यसमम्" इति । अस्य चासदुत्तरत्वाज्ज्ञातैः प्रकृतसाध्यसिद्धिप्रतिबन्धोऽन्यथा सकलानुमानोच्छेदः । शब्दानित्यत्वे हि साध्ये किं घटादिगतं कृतकत्वं हेतुत्वेनोपादीयते किं वा शब्दगतमुभयगतं वा ? प्रथमपक्षे हेतोरसिद्धिः । न ह्यन्यगतो धर्मोऽन्यत्र वर्त्तते । द्वितीये तु साधनविकलो दृष्टान्तः । तृतीयेप्युभयदोषानुषङ्गः । इत्यप्यसारं कारणमात्रजन्यतालक्षणस्य कृतकत्वस्य विपक्षे बाधकप्रमाणबलादनित्यत्वमात्रव्याप्तत्वेनाऽवधारितस्य शब्देप्युपलम्भात् । तत्रोक्तदूषणस्यासदुत्तरत्वाज्जात्युत्तरत्वम् । न चैवं कार्यसामान्यं बुद्धिमत्कारणत्वमात्रव्याप्तं

१ समवाय्यसमवायिनिमित्तेति ॥ २ समवायिकारण त्वात्मास्ति ॥ ३ नैयायिकमते ॥ ४ अक्षणिकबुद्धिपक्षेपि ॥ ५ परममहापरिमाणेन व्यभिचारपरिहारार्थमेतत् ॥ ६ पर ॥ ७ इतर परीक्षक ॥ ८ क्षित्यादौ ॥ ९ स्वभावेन ॥ १० कार्यत्वशब्देन ॥ ११ बुद्धिमद्धेतुकस्य ॥ १२ विपक्षेऽबुद्धिमद्धेतुकत्वादौ ॥ १३ कृतबुद्ध्युत्पादकरूपस्य कार्यस्य ॥ १४ क्षित्यादिक घटादिवद् बुद्धिमद्धेतुक तर्वादिवदबुद्धिमद्धेतुक वेत्याशङ्का ॥ १५ वल्मीक कुम्भकारकृतो भवति मृद्विकारत्वाद् घटादिवत् ॥ १६ पूर्वोक्तम् ॥ १७ भेदलेश स कीदृश कृतबुद्ध्यनुत्पादक ॥ १८ बुद्धिमद्धेतुकत्व ॥ १९ कार्यसमजात्युत्तरात् ॥ २० घटादिगतकृतकत्वस्य शब्देऽभावात् ॥ २१ शब्दगतकृतकत्वस्य घटादावभावात् ॥ २२ नित्ये ॥ २३ यन्नित्य तन्न कृतक यथाकाशमिति ज्ञानवलात् ॥

क्षित्यादावुपलभ्यते, विपक्षे बाधकप्रमाणाभावेन सन्दिग्धानैकान्तिकत्वात्तस्य । अन्यथाऽक्रियादर्शिनोपि कृतबुद्धिप्रसङ्गः । यदि च घटादिलक्षणं विशिष्टकार्यं तन्मात्रव्याप्तं प्रतिपद्याऽविशिष्टकार्यस्यापि क्षित्यादेस्तत्पूर्वकत्वं साध्यते तर्हि पृथ्वीलक्षणभूतस्य रूपरसगन्धस्पर्शवत्त्वं प्रतिपद्य भूतत्वादेव वायोरपि तत्साध्यताम् । अथाऽत्र प्रत्यक्षादिप्रमाणबाधः सोन्यत्रापि समानः । यदप्युक्तं—व्युत्पन्नप्रतिपत्तॄणां नासिद्धत्वं कार्यत्वादेस्तदप्ययुक्तं यतः प्रतिबन्धप्रतिपत्तिलक्षणा व्युत्पत्तिस्तेषां तद्व्यतिरिक्ता वा स्यात् ? प्रथमपक्षे क्षित्यादिगतकार्यत्वादौ प्रकृतसाध्यसाधनाभिप्रेते व्युत्पत्त्यसम्भवः—यथोक्तसाध्यव्याप्तस्य तत्र तस्याभावात् । भावे वा सशरीरस्यास्मदादीन्द्रियग्राह्यस्यानित्यबुद्ध्यादिधर्मकलापोपेतस्य घटादौ तद्व्यापकत्वेन प्रतिपन्नस्यात्र ततः सिद्धिः । न खलु हेतुव्यापकं विहायाव्यापकस्यात्यन्तविलक्षणसाध्यधर्मस्य धर्मिणि प्रतिपत्तौ हेतोः सामर्थ्यम् । कारणमात्रप्रतिपत्तौ तु सिद्धसाध्यता । ननु बुद्धिमत्कारणमात्रं ततस्तत्र सिध्यत्पक्षधर्मतावलाद्विशिष्टविशेषाधारमेव सेत्स्यति—निर्विशेषस्य सामान्यस्यासम्भवात्, घटादौ प्रतिपन्नस्य चास्मदादेस्तन्निर्माणासामर्थ्यात् । नन्वेवं क्षित्यादौ बुद्धिमत्कारणत्वासिद्धिरेव स्यादस्मदादेस्तन्निर्माणासामर्थ्यादन्यस्य च हेतुव्यापकत्वेन कदाचनाप्यप्रतिपत्तेः खरविषाणवत्, निराधारस्य च सामान्यस्यासम्भवात् । न हि गोत्वाधारस्य खण्डादिव्यक्तिविशेषस्यासम्भवे तद्विलक्षणमहिष्याद्याश्रितं गोत्वं कुतश्चित्प्रसिद्ध्यति । अस्मादृशान्यादृशविशेषपरित्यागेन कर्तृत्वमात्रानुमाने च चेतनेतरविशेषत्यागेन कारणमात्रानुमानं किन्नानुमन्यते ? धूममात्रात्पावकमात्रानुमानवत् । यादृशमेव हि पावकमात्रं पैङ्गल्यादिधर्मोपेतं कण्ठाक्षिविक्षेपकादित्वापाण्डुरत्वादिधर्मोपेतधूममात्रस्य प्रत्यक्षानुपलम्भप्रमाणजनितोहाख्यप्रमाणात्सर्वोपसंहारेण व्यापकत्वेन महानसादौ प्रतिपन्नं तादृशस्यैवान्यत्राप्यतोनुमानं नात्यन्तविलक्षणस्य—व्यक्तिसम्बन्धित्वमात्रस्यैव भेदात् । न च व्यक्तीनामप्यात्यन्तिको भेदो महानसादिवदन्यासामपि दृश्यतेयोपगमात् । न च कार्यविशेषस्य कर्तृविशेषमन्तरेणानुपलम्भात् तन्मात्रमपि कर्तृविशेषानुमापकं युक्तं—तस्य कारणत्वमात्रेणैवाविनाभावनिश्चयात्, धूममात्रस्याग्निमात्रेणाविनाभावनिश्चयवत् । घटादिलक्षणकार्यविशेषस्य तु कारणविशेषेणाविनाभावावगमश्चान्दनादिधूमविशेषस्याग्निविशेषेणाविनाभावावगमवत् । तथापि कार्यमात्रस्य कारणविशेषानुमापकत्वे धूमादिकार्यविशेषस्य महानसादौ तत्कालव-

---

१ बुद्धिमत्कारणरहिते तर्वादौ ॥ २ बुद्धिमत्कारणरहिते तर्वादौ कार्यसामान्य वर्त्तते बुद्धिमत्कारणसहिते घटादौ च कार्यसामान्य वर्त्तते । तत्किं बुद्धिमद्धेतुकमबुद्धिमद्धेतुक वेति सन्दिग्धानैकान्तिकत्वम् ॥ ३ कार्यत्वस्य ॥ ४ विपक्षे बाधक प्रमाण यदि स्यात् ॥ ५ क्षित्यादौ ॥ ६ दृष्टान्ते इव ॥ ७ अक्रियादर्शिनोपि कृतबुद्ध्युत्पादकत्वमात्रव्याप्तम् ॥ ८ अक्रियादर्शिन कृतबुद्ध्यनुत्पादकस्य ॥ ९ परेण ॥ १० क्षित्यादौ बुद्धिमद्धेतुपूर्वकत्वेपि ॥ ११ प्रतिबन्धोऽविनाभाव ॥ १२ अक्रियादर्शिनोपि कृतबुद्ध्युत्पादकत्वलक्षणे ॥ १३ क्षित्यादौ ॥ १४ कार्यत्व ॥ १५ क्षित्यादौ ॥ १६ अशरीरसर्वज्ञनित्यज्ञानत्वादिलक्षण ॥ १७ प्रोक्तक्षित्यादिके ॥ १८ वस ॥ १९ क्षित्यादि ॥ २० सर्वज्ञत्वादिधर्मकलापोपेतस्येश्वरस्य ॥ २१ कार्यत्वेति ॥ २२ नेत्रादि ॥ २३ परोक्ष ॥ २४ स्वीकारेण ॥ २५ पर्वतादौ ॥ २६ जलस्य ॥ २७ महानसात्य ॥ २८ पर्वतादिरूपव्यक्तीनाम् ॥ २९ उभयत्र ॥ ३० अक्रियादर्शिन कृतबुद्ध्युत्पादकलक्षणस्य ॥ ३१ बुद्धिमदर्थलक्षण ॥ ३२ कार्यमात्रम् ॥ ३३ कार्यमानस्य ॥ ३४ कार्यविशेषस्यैव कारणविशेषेण व्याप्तिसिद्धावपि ॥

न्ह्यविनाभावोपलम्भाद् धूमघटिकादौ तन्मात्रं तत्कालवन्ह्यनुमापकं स्यात् । अथ तत्र तत्कालवन्ह्यनुमाने प्रत्यक्षविरोधः, सोऽकृष्टजाते भूरुहादौ कर्त्रऽनुमानेपि समानः । तत्कर्त्तुरतीन्द्रियत्वात्तदविरोधे धूमघटिकादौ वह्नेरप्यतीन्द्रियत्वात्सोस्तु । भास्वररूपसम्बन्ध्यवयविद्रव्यत्वान्नातीन्द्रियत्वं तस्येति चेदेतदेव कुतोऽवसितम् ? महानसादौ तथाभूतस्यास्योपलम्भाच्चेत्तर्हि क्षित्यादिकर्तुः शरीरसम्बन्धिनोऽतीन्द्रियत्वं मा भूत्कुम्भकारादौ तस्यानुपलम्भात् । ननु वृक्षशाखाभङ्गादौ पिशाचादिः, स्वशरीरावयवप्रेरणे चात्माऽशरीरोऽपि कर्त्तोपलब्ध इत्यप्यसुन्दरं पिशाचादेः शरीरसम्बन्धरहितस्य कार्यकारित्वानुपपत्तेर्मुक्तात्मवत् । तत्सम्बन्धेनैव हि कुम्भकारादौ कार्यकारित्वं दृष्टं नान्यथा । तत्सम्बन्धोपगमे चास्य दृश्यत्वप्रसङ्गः कुम्भकारादिवत् । तच्छरीरस्य दृश्यत्वाद्दृश्योसौ न पिशाचादिर्विपर्ययादिति चेन्ननु शरीरत्वाविशेषेपि यथास्मदादिशरीरविलक्षणं तच्छरीरमभ्युपगम्यते तथा घटादिकार्यविलक्षणं भूरुहादिकार्यं कार्यत्वाविशेषेप्यभ्युपगम्यताम् । तथा चानेन प्रकृतो हेतुर्व्यभिचारी । तथास्मदादेः शरीरसम्बन्धमात्रेणैव तदवयवानां प्रेरकत्वोपपत्तेर्नापरशरीरसम्बन्धस्तत्रोपयोगी । तत्सम्बन्धमन्तरेण हि चेतनस्य स्वशरीरावयवेष्वन्यत्र वा कार्यकारित्वं नास्त्यनुपलम्भादित्येतावन्मात्रमेव नियम्यत इति महेश्वरस्यापि शरीरसम्बन्धेनैव कर्तृत्वमभ्युपगन्तव्यम् । तच्छरीरं च तत्कृतं यद्यभ्युपगम्यते तर्हि शरीरान्तरं तस्याभ्युपगन्तव्यमित्यनवस्थातः प्रकृतकार्ये तस्याव्यापारोऽपरापरशरीरनिर्वर्त्तने एवोपक्षीणशक्तिकत्वात् । तदनिष्पाद्यं चेत्तत्किं कार्यं नित्यं वा? प्रथमपक्षे तेनैव हेतोर्व्यभिचारस्तस्य कार्यत्वेप्यबुद्धिमत्पूर्वकत्वात् । बुद्धिमत्कारणान्तरपूर्वकत्वे चानवस्था–तच्छरीरस्याप्यपरबुद्धिमत्कारणान्तरपूर्वकत्वात् । नित्यं चेत्तर्हि तच्छरीरस्य शरीरत्वाविशेषेपि नित्यत्वलक्षणः स्वभावातिक्रमो यथाभ्युपगम्यते तथा भूरुहादेः कार्यत्वे सत्यप्यकर्तृपूर्वकत्वलक्षणोप्यभ्युपगम्यताम् । इति स एव तैर्व्यभिचारः कार्यत्वादेः । तत्र प्रतिबन्धप्रतिपत्तिलक्षणा व्युत्पत्तिस्तेषाम् । अथ तद्व्यतिरिक्ता व्युत्पत्तिः, सा स्वदुरागमाहितवासनावतां भवतु । न पुनस्तावन्मात्रेण कार्यत्वादेः साध्यं प्रति गमकत्वम् । अन्यथा वेदे मीमांसकस्य वेदाध्ययनवाच्यत्वादेरपौरुषेयत्वं प्रति गमकत्वं स्यात् । यच्चोक्तं "साध्याभावेपि प्रवर्त्तमानो हेतुर्व्यभिचारीत्युच्यते । न च तत्र कर्त्रभावो निश्चितः किन्त्वग्रहणम्" इति तदुक्तिमात्रम् । प्रमाणाविषयत्वेपि स्थावरादौ कर्त्रऽभावानिश्चये गगनादौ रूपाद्यभावानिश्चयः स्यात् । तत्र रूपादीनां बाधकप्रमाणसद्भावेनाभावनिश्चयेऽत्रापि तथा कर्त्रभावनिश्चयोस्तु । न चास्यानुपलब्धिलक्षणप्राप्तत्वादभावानिश्चयः । शरीरसम्बन्धेन हि कर्तृत्वं नान्यथा मुक्तात्मवत् । तत्सम्बन्धे चोपलब्धिलक्षणप्राप्तत्वप्रसङ्गः कुम्भकारादिवत् । तस्य हि शरीरसम्बन्ध एव दृश्यत्वं नान्यत, स्वरूपेणात्मनोऽदृश्यत्वात् पिशाचादिशरीरवत् । तच्छरीरस्यादृश्यत्वोपगमे च किञ्चित्कार्यमप्यबुद्धिपूर्वकं स्यादित्युक्तम् । यच्चोक्तं "क्षित्याद्यन्वयव्यतिरेकानुविधा-

१ गोपालघटिकादौ ॥ २ गोपालघटिकादौ ॥ ३ अस्मदाद्यात्मा ॥ ४ परेण ॥ ५ ईश्वरस्य ॥ ६ भूरुहादिना ॥ ७ अवयवप्रेरणे ॥ ८ अवयवप्रेरणे ॥ ९ तर्हि ॥ १० परेण ॥ ११ हि ॥ १२ परेण ॥ १३ क्षित्यादिकार्ये ॥ १४ अनिलजलरूपस्वभावस्य ॥ १५ पूर्वोक्त एव ॥ १६ स्थावरादिभि ॥ १७ भूरुहादीनाम् ॥ १८ व्युत्पन्नानाम् ॥ १९ यौग ॥ २० परेण ॥ २१ कर्तुं ॥ २२ कर्तुं ॥ २३ ईश्वरस्य ॥ २४ अशरीरत्वात्तस्य ॥ २५ ईश्वर ॥

नात्तेपामेव कारणत्वे धर्माधर्मयोरपि तन्न स्यात्” तन्न सूक्तं–जगद्वैचित्र्यान्यथानुपपत्त्या तयोस्तत्कारणत्वप्रसिद्धेः। भूम्यादेः खलु सकलकार्यं प्रति साधारणत्वाद्-दृष्टाख्यविचित्रकारणमन्तरेण तद्वैचित्र्यानुपपत्तिः सिद्धा । यदप्युक्तं “तत्र बुद्धिमतोऽभावादग्रहणं भावेप्यनुपलब्धिलक्षणप्राप्तत्वाद्वेति सन्दिग्धव्यतिरेकित्वे सकलानुमानोच्छेदः। यया सामग्र्या धूमादिर्जन्यमानो दृष्टस्तां नातिवर्त्तत इत्यन्यत्रापि समानं” तदप्ययुक्तम्। यादृग्भूतं हि घटादिकार्यं यादृग्भूतसामग्रीप्रभवं दृष्टं तादृग्भूतस्यैव तदतिक्रमाभावो नान्यादृग्विधस्य धूमादिवदेवेत्युक्तं प्राक्। यच्चेदमुक्तं “ज्ञानचिकीर्षाप्रयत्नाधारता हि कर्तृता न सशरीरेतरता” इत्यप्यसङ्गतं–शरीराभावे तदाधारत्वस्याप्यसम्भवान्मुक्तात्मवत्। तेषां खलूत्पत्तौ आत्मा समवायिकारणमात्ममनःसंयोगोऽसमवायिकारणं शरीरादिकं निमित्तकारणम्। न च कारणत्रयाभावे कार्योत्पत्तिरनभ्युपगमात् । अन्यथा मुक्तात्मनोपि ज्ञानादिगुणोत्पत्तिप्रसङ्गान्नवानां गुणानामत्यन्तोच्छेदो मुक्तिरित्यस्य व्याघातः। निमित्त-कारणमन्तरेणाप्येषामुत्पत्तौ च बुद्धिमत्कारणमन्तरेणाप्यङ्कुरादेः किं नोत्पत्तिः स्यात्? नित्यत्वाभ्युपगमात्तेषामदोषोयमित्ययुक्तं–प्रमाणविरोधात् । तथा हि। नेश्वरज्ञानादयो नित्यास्तत्त्वादस्मदादिज्ञानादिवत्। तज्ज्ञानादीना दृष्टस्वभावातिक्रमे भूरुहादीनामपि स स्यात्। न चाऽचेतनस्य चेतनानधिष्ठितस्य वास्यादि-वत्प्रवृत्त्यसम्भवात्, सम्भवे वा निरभिप्रायाणां देशादिनियमाभावप्रसङ्गात् तदधिष्ठातेश्वरः सकलजगदुपादानादिज्ञाताभ्युपगन्तव्य इत्यभिधातव्यं–तज्ज्ञत्वे-नास्याद्याप्यसिद्धेः। न चास्य तत्कर्तृत्वादेव तज्ज्ञत्वमितरेतराश्रयानुषङ्गात्। सिद्धे हि सकलजगदुपादानाद्यभिज्ञत्वे तत्कर्तृत्वसिद्धिस्तत्सिद्धौ च तदभिज्ञत्वसिद्धिः। अचेतनवच्चेतनस्यापि चेतनान्तराधिष्ठितस्य विष्टिकर्मकरादिवत्प्रवृत्त्युपलम्भान्महेश्वरेप्यधिष्ठातृ चेतनान्तरं परिकल्पनीयम्।स्वामिनोऽनधिष्ठितस्यापि प्रवृत्त्युपलम्भोऽ-कृष्टोत्पन्नाङ्कुराद्युपादाने समानः। घटाद्युपादानस्यानधिष्ठितस्याप्रवृत्त्युपलम्भात् तथाङ्कुराद्युपादानस्यापि कल्पने विष्टिकर्मकरादेः स्वाम्यनधिष्ठितस्याप्रवृत्तेर्महेश्वरेपि तथा स्यात्। तथा चानवस्था । चेतनस्याप्यपरचेतनाधिष्ठितस्य प्रवृत्त्यभ्युपगमे चाचेतनं चेतनाधिष्ठितमित्यत्र प्रयोगेऽचेतनमिति धर्मिविशेषणस्याचेतनत्वादिति हेतोश्चापार्थकत्वं व्यवच्छेद्याभावात्स्वहेतुप्रतिनियमाच्च । अचेतनस्यापि देशादिनियमो ज्यायान्–तस्य भवताप्यवश्याभ्युपगमनीयत्वात् । अन्यथा सर्वत्र सर्वदा सर्वकार्याणामुत्पत्तिः स्यात्–चेतनस्याधिष्ठातुर्नित्यव्यापित्वाभ्यां सर्वत्र सर्वदा सन्निधानात् । न च कारकशक्तिपरिज्ञानाविनाभावि तत्प्रयोक्तृत्वं–तस्याने-कधोपलम्भात्। किञ्चित्खलूपादानाद्यपरिज्ञानेपि प्रयोक्तृत्वं दृष्टं, यथा स्वापमदमूर्च्छाद्यवस्थायां शरीरावयवानाम् । किञ्चित्पुनः कतिपयकारकपरिज्ञाने; यथा कुम्भकारादेः करादिव्यापारेण दण्डादिप्रयोक्तृत्वम्। न खलु तस्याखिलकारकोपलम्भोस्ति–धर्माधर्मयोस्तद्धेतुभूतयोरनुपलम्भात्। उपलम्भे वा तयोर्देशादिनियतेषु

१ अक्रियादर्शिन कृतबुद्ध्युत्पादकम् २ चक्रादिरूप ॥ ३ कार्यस्य ॥ ४ अन्यस्य ॥ ५ अप्रेरितस्य ॥ ६ ज्ञानशून्यानाम् (कारणाना) ॥ ७ परेण ॥ ८ पालकी डोली इति वा लोके स्याता सस्कृते च शिविकेति ॥ ९ तर्हि ॥ १० चेतनस्य ॥ ११ फलाभावात् ॥ १२ स्वस्य कार्यस्य ॥ १३ उपादानकारण ॥ १४ अदृष्टादे ॥ १५ युक्त इत्यर्थ ॥ १६ यौगेन ॥ १७ प्रेरकत्वम् ॥ १८ प्रेरकत्वम् ॥ १९ प्रेरकत्वम् ॥ २० तस्य घटादिकार्यस्य ॥

कार्येष्विच्छाव्याघातो न स्यात्[1]। सर्वश्चाऽतीन्द्रियार्थदर्शी स्यात् । न हि कश्चित्तादृशो बुद्धिमानस्ति यो न किञ्चित्करोति कार्यं वा तादृशं विद्यते यत्राऽदृष्टं नोपयुज्यते । कारणशक्तेश्चातीन्द्रियत्वात्तदपरिज्ञानं सर्वप्राणिनां सुप्रसिद्धम् । यथास्थानं चास्याः सद्भावो निवेदितः । अन्यत्तु[3] शरीराऽनायासतो वाग्व्यापारमात्रेण । यथा स्वामिनः कर्मकरादिप्रयोक्तृत्वम् । अस्तु वा कारकप्रयोक्तृत्वस्य परिज्ञानेनाविनाभावस्तथाप्यशरीरेश्वरे तस्यासम्भवः—सर्वत्र शरीरसम्बन्धे सत्येवास्योपलम्भात् । यदप्यभ्यधायि "बुद्धिमत्कारणपूर्वकत्वमात्रस्य साध्यत्वान्न विशेषविरुद्धता कार्यत्वस्य। अन्यथा धूमाद्यनुमानोच्छेदः" तदप्यभिधानमात्रम् । कार्यमात्राद्धि कारणमात्रानुमाने विशेषविरुद्धताऽसम्भवस्तस्य तेन व्याप्तिप्रसिद्धेः । न पुनर्बुद्धिमत्कारणानुमाने—तस्य[6] तेनाव्याप्तेः[7] प्रतिपादितत्वात् । व्याप्तौ[8] वाऽनीश्वरासर्वज्ञत्वादिधर्मकलापोपेत एव कर्त्तात्र[9] सिद्ध्येत्—तथाभूतेनैव घटादौ व्याप्तिप्रसिद्धेः; न पुनरीश्वरत्वादिविरुद्धधर्मोपेतः—तस्य[10] तद्व्यापकत्वेन स्वप्नेऽप्यप्रतिपत्तेः । तथाप्यस्य[12] तं[13] प्रति गमकत्वे महानसप्रदेशे वन्हिव्याप्तो धूमः प्रतिपन्नो गिरिशिखरादौ प्रतीयमानो वन्हिविरुद्धधर्मोपेतोदकं प्रति गमकः स्यात् । धूमाद्यनुमानोच्छेदासम्भवश्च प्राक्प्रबन्धेन[14] प्रतिपादितः । यच्चान्यदुक्तं सर्वज्ञता चाशेषकार्यकरणादित्यादि तदप्ययुक्तं—कार्यकारित्वस्य कारणपरिज्ञानाविनाभावासम्भवस्योक्तत्वात् । एकस्याशेषकार्यकारिणो व्यवस्थापकप्रमाणाभावात् कार्यत्वादेश्च कृतोत्तरत्वात्कथमतः सर्वज्ञतासिद्धिः ? यच्चोक्तं तथा विश्वतश्चक्षुरित्यागमादप्यसौ[15] सिद्धस्तदप्युक्तिमात्रमन्योन्याश्रयानुषङ्गात् । प्रसिद्धप्रामाण्यो ह्यागमस्तत्प्रसाधको[16] नान्यथातिप्रसङ्गात्[17] । ततस्तत्प्रामाण्यप्रसिद्धौ[18] महेश्वरसिद्धिस्तत्सिद्धौ च तत्प्रणीतत्वेनागमप्रामाण्यप्रसिद्धिः । अन्येश्वरप्रणीतागमात्तत्सिद्धौ तस्याप्यन्येश्वरप्रणीतागमात्सिद्धावीश्वरागमानवस्था । पूर्वेश्वरप्रणीतागमात्तत्सिद्धौ परस्पराश्रयः । स्वप्रणीतागमात्तत्सिद्धौ चान्योन्यसंश्रयः । नित्यस्य त्वागमस्य परैः[19] प्रामाण्यं नेष्यते—महेश्वरकल्पनानर्थक्यप्रसङ्गात्[20]; प्रामाण्यस्योत्पत्तौ ज्ञप्तौ चेश्वरसद्भावस्याकिञ्चित्करत्वात् । यदप्युक्तं कारुण्याच्छरीरादिसर्गे प्राणिनां प्रवर्त्तते तदप्ययुक्तं—सुखोत्पादकस्यैव शरीरादिसर्गस्योत्पादकस्य प्रसङ्गात् । न हि करुणावतां यातनाशरीरोत्पादकत्वेन[21] प्राणिनां दुःखोत्पादकत्वं युक्तम् । धर्माधर्मसहकारिणः कर्त्तृत्वात्सुखवद्दुःखस्याप्युत्पादकोऽसौ । फलोपभोगेन हि तयोः प्रक्षयादपवर्गः प्राणिनां स्यात् । इति करुणयापि तद्विधाने[22] प्रवृत्त्यविरोधे[23] इत्यप्यसङ्गतं—तयोरीश्वरानायत्तत्वे[24] कार्यत्वे चाभ्यामेव कार्यत्वादेरनैकान्तिकत्वप्रसङ्गात् । तदुत्पत्तौ तस्याव्यापारे च विनाशेऽप्यव्यापारोस्तु । कारणान्तरोत्पन्नसुखदुःखलक्षणफलोपभोगेनानयोः प्रक्षयसम्भवात् । न हीश्वरस्यापि तत्फलोत्पादनादन्यत्तयोः क्षयकर्त्तृत्वम् ।

१ अस्मादृष्टेनेदं कार्यं भवत्वेवेदं न भवत्वेवेतीच्छा ॥ २ न च तथा ॥ ३ नेति सबन्ध ॥ ४ प्रयोक्तृत्वम् ॥ ५ विशेषविरुद्धताया असम्भवो न च ॥ ६ कार्यत्वस्य ॥ ७ बुद्धिमत्कारणपूर्वकत्वेन ॥ ८ क्षित्यादौ ॥ ९ कर्त्ता ॥ १० ईश्वरसर्वज्ञत्वादिधर्मकलापोपेतसाध्यस्य ॥ ११ कार्यत्व ॥ १२ कार्यत्वस्य ॥ १३ ईश्वरसर्वज्ञत्वादिधर्मकलापोपेतसाध्य प्रति ॥ १४ विस्तरेण ॥ १५ ईश ॥ १६ ईश्वर ॥ १७ अप्रसिद्धप्रामाण्यादागमादन्येषामीश्वराभाव स्यादिदं ॥ १८ यत प्रसिद्धप्रामाण्यागम ईश्वरप्रतिपादक ॥ १९ नैयायिकै ॥ २० अन्यथा ॥ २१ तीव्रवेदनाजनक ॥ २२ सुखदु ख ॥ २३ महेश्वरस्य ॥ २४ ईशकारणरहितत्वे ॥

किञ्च धर्माधर्मौ निष्पाद्य पुनस्तयोः क्षयकरणे किमुत्पत्तिकरणप्रयासेन? न हि प्रेक्षाकारी खात्वा पुनः समीकरणन्यायेनात्मानमायासयति प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति प्रसिद्धेश्च । अन्यथा प्रक्षालिताशुचिमोदकपरित्यागन्यायानुसरणप्रसङ्गः । अपवर्गविधानार्थं चास्य प्रवृत्तौ कथमपूर्वकर्मसञ्चयकर्तृत्वम् । तत्सहकारिणश्चास्य सुखदुःखोत्पादकशरीरोत्पादकत्वे वरं तत्फलोपभोक्तृप्राणिगणस्यैव तत्सव्यपेक्षस्य तदुत्पादकत्वमस्तु । किमदृष्टेश्वरपरिकल्पनया ? सर्वत्र कार्येऽदृष्टस्य व्यापारात् । तथा हि । यद्यदुपभोग्यं तत्तददृष्टपूर्वकम् । यथा सुखादि । उपभोग्यं च प्राणिनां निखिलं कार्यमिति । ननु यथा प्रभुः सेवाभेदानुरोधात्फलप्रदो नाप्रभुस्तथेश्वरोपि कर्मापेक्षः फलप्रदो नान्य इत्यपि मनोरथमात्रम् । राज्ञो हि सेवायत्तफलप्रदस्य यथा रागादियोगो नैर्घृण्यं सेवायत्तता च प्रतीता तथेशस्याप्येतत्सर्वं स्यात्–अन्यथा भूतस्यान्यपरिहारेण क्वचिदेव सेवके सुखादिप्रदत्वानुपपत्तेः । अथ यथा स्थपत्यादीनामेकसूत्रधारनियमितानां महाप्रासादादिकार्यकरणे प्रवृत्तिस्तथात्राप्येकेश्वरनियमितानां सुखाद्यनेककार्यकरणे प्राणिनां प्रवृत्तिरित्यप्यसाम्प्रतं–नियमाभावात् । न ह्ययं नियमो निखिलं कार्यमेकेनैव कर्त्तव्यं; नाप्येकनियतैर्बहुभिरिति––अनेकधा कार्यकर्तृत्वोपलम्भात् । तथा हि । क्वचिदेक एवैककार्यस्य कर्त्तोपलभ्यते । यथा कुविन्दः पटस्य । क्वचिदेकोऽप्यनेककार्याणाम् । यथा घटघटीशरावोदञ्चनादीनां कुलालः । क्वचिदनेकोऽप्यनेककार्याणाम् । यथा घटपटमकुटशकटादीनां कुलालादिः । क्वचिदनेकोऽप्येककार्यस्य । यथा शिविकोद्वहनादिकार्यस्यानेकपुरुषसंघातः । न चानेकस्थपत्यादिनिष्पाद्ये प्रासादादिकार्येऽवश्यतयैकसूत्रधारनियमितानां तेषां तत्र व्यापारः—प्रतिनियताभिप्रायाणामप्येकसूत्रधाराऽनियमितानां तत्करणाविरोधात् । किञ्चादृष्टापेक्षस्यास्य कार्यकर्तृत्वे तत्कृतोपकारोऽवश्यंभावी–अनुपकारकस्यापेक्षायोगात् । तस्य चातो भेदे सम्बन्धासम्भवः । सम्बन्धकल्पनायां चानवस्था । अभेदे तत्करणे महेश्वर एव कृत इत्यदृष्टकार्यतास्य । नाऽस्यादृष्टेन किञ्चित्क्रियते; सम्भूय कार्यमेव विधीयते सहकारित्वस्यैककार्यकारित्वलक्षणत्वादित्यप्यसाम्प्रतम् । सहकारिसव्यपेक्षो हि कार्यजननस्वभावस्तस्यादृष्टादिसहकारिसन्निधानाद्यदि प्रागप्यस्ति तदोत्तरकालभाविसकलकार्योत्पत्तिस्तदैव स्यात् । तथा हि । यद्यदा यज्जननसमर्थं तत्तदा तज्जनयत्येव यथान्त्यावस्थाप्राप्तं बीजमङ्कुरम् । प्रागप्युत्तरकालभाविसकलकार्यजननसमर्थश्चैकस्वभावतयाभ्युपगतो महेश्वर इति । तदा तदजनने वा तज्जननसामर्थ्याभावः । यद्धि यदा यन्न जनयति न तत्तदा तज्जननसमर्थस्वभावम् ।

---

१ भूमि खनित्वा ॥ २ तयोर्धर्माधर्मयो ॥ ३ अप्रसिद्धस्य ॥ ४ निखिलं कार्यं धर्मि प्राण्यदृष्टपूर्वकं भवतीति साध्यो धर्मः तदुपभोग्यत्वात् ॥ ५ वस्तु ॥ ६ यस्य पुरुषस्य ॥ ७ स्वामी ॥ ८ विशेष ॥ ९ अनुसरणात् ॥ १० निष्कृपत्वम् ॥ ११ तक्षकादीनाम् ॥ १२ ईश्वरस्य ॥ १३ ईश्वरात् ॥ १४ ततश्चेश्वरस्य निखिलं विलीयते ॥ १५ ईश्वरादृष्टाभ्यामेकीभूय ॥ १६ एकस्वभावतयाभ्युपगतो महेश्वरो धर्मी उत्तरकालभावि सकलं कार्यमदृष्टादिसन्निधानात्प्रागपि जनयतीति साध्यो धर्मः तदा तस्य तज्जननसामर्थ्यादिति शेष ॥ १७ नश्यदवस्थाप्राप्तम् ॥

यथा कुसूलस्थं वीजमङ्कुरमजनयन्न तज्जननसमर्थस्वभावम् । न जनयति चोत्तरकालभावि सकलं कार्यं पूर्वकार्योत्पत्तिसमये महेश्वर इति । तज्जननसमर्थस्वभावोप्यसौ सहकार्यऽभावात्तथा तन्न जनयतीत्यपि वार्त्तं समर्थस्वभावस्यापरापेक्षाऽयोगात् । समर्थस्वभावश्चापरापेक्षश्चेति विरुद्धमेतदनाधेयाऽप्रहेयातिशयत्वात्तस्य । किञ्चैते सहकारिणः किं तदायत्तोत्पत्तयोऽतदायत्तोत्पत्तयो वा? प्रथमपक्षे किं नैकदैवोत्पद्यन्ते? तदुत्पादकान्यसहकारिवैकल्याच्चेदनवस्था । तथा चास्यापरापरसहकारिजनने एवोपक्षीणशक्तिकत्वान्न प्रकृतकार्ये व्यापारः । वीजाङ्कुरादिवदनादित्वात्तत्प्रवाहस्य नानवस्था दोषायेत्यभ्युपगमे महेश्वरकल्पनावैयर्थ्यं—स्वसामग्र्यधीनोत्पत्तितया पूर्वपूर्वसामग्रीविशेषवशादपरापराखिलकार्योत्पत्तिप्रसिद्धेः । अथातदायत्तोत्पत्तयस्तर्हि तैरेव कार्यत्वादिहेतवोऽनैकान्तिकाः । इत्येतेन महाभूतादि व्यक्तं चेतनाधिष्ठितं प्राणिनां सुखदुःखनिमित्तं रूपादिमत्त्वात्तुर्यादिवदित्यादीनि वार्त्तिककारादिभिरुपन्यस्तप्रमाणानि निरस्तानि—यादृशं हि रूपादिमत्त्वमनित्यत्वं च चेतनाधिष्ठितं वास्यादौ प्रसिद्धं तादृशस्य क्षित्यादावसिद्धेः । रूपादिमत्त्वमात्रस्य च चेतनाधिष्ठितत्वेन प्रतिबन्धासिद्धेराशङ्कितविपक्षवृत्तितयाऽनैकान्तिकत्वम् । प्रतिबन्धाभ्युपगमे चेष्टविपरीतसाधनाद्विरुद्धमित्यादि पूर्वोक्तं सर्वमत्रापि योजनीयम् । किञ्चेश्वरबुद्धेरनित्यत्वप्रसाधनात्तदभिन्नस्येश्वरस्यानित्यत्वप्रसिद्धेस्तस्याप्यपरबुद्धिमदधिष्ठितत्वप्रसङ्गः स्यादित्यनवस्था । तदनधिष्ठितत्वे वा तेनैवानेकान्तो हेतोः । यच्चोक्तं सर्गादौ पुरुषाणां व्यवहार इत्यादि तत्रोत्तरकालं प्रबुद्धानामित्येतद्विशेषणमसिद्धम् । न खलु प्रलयकाले प्रलुप्तज्ञानस्मृतयो वितनुकरणाः पुरुषाः सन्ति तस्यैव सर्वथाऽप्रसिद्धेः । सिद्धौ वा स्वकृतकर्मवशाद्विशिष्टज्ञानान्तरेऽपूत्पत्तेस्तेषां कथं वितनुकरणत्वं प्रलुप्तज्ञानस्मृतित्वं वा? सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकश्च हेतुः । किञ्चान्योपदेशपूर्वकत्वमात्रे साध्ये सिद्धसाध्यता—अनादेर्व्यवहारस्याशेषपुरुषाणामन्योपदेशपूर्वकत्वेनेष्टत्वात् । ईश्वरोपदेशपूर्वकत्वे तु साध्येऽनैकान्तिकता—अन्यथापि तत्सम्भवात् । साध्यविकलता च दृष्टान्तस्य । न चास्योपदेष्टृत्वसम्भवो विमुखत्वान्मुक्तात्मवत् । तच्च वितनुकरणतयोपगमात्प्रसिद्धम् । स्थित्वा प्रवृत्तेरिति चेश्वरेणैवानैकान्तिकम् । स हि क्रमवत्कार्येषु स्थित्वा प्रवर्त्तते; न च चेतनान्तराधिष्ठितोऽनवस्थाप्रसङ्गात् । इत्यनयैव दिशा सप्तभुवनान्येकबुद्धिमन्निर्मितानि एकवस्त्वन्तर्गतत्वादेकावसथान्तर्गतापवरकवदित्यादिपरकीयप्रयोगोऽभ्यूह्यः । न ह्येकावसथान्तर्गतानामपवरकादीनामेकसूत्रधारनिर्मितत्वनियमो; येनेश्वरः सकलभुवनैकसूत्रधारः सिद्ध्येत्—अनेकसूत्रधारनिर्मितत्वस्या-

---

१ आरोपयितुमशक्योऽतिशयोऽनाधेय ॥ २ अन्ये स्फोटयितुमशक्योऽतिशयोऽप्रहेय ॥ ३ ईश्वरानपेक्षोत्पत्तय ॥ ४ सहकारिभि ॥ ५ सावयवकार्यत्वहेतुनिराकरणपरेण ग्रन्थेन ॥ ६ अविनाभावासिद्धे ॥ ७ भूरुहादिवचेतनानधिष्ठिते महाभूतादिव्यक्ते रूपादिमत्त्व वर्त्तते वास्यादिवचेतनाधिष्ठिते वा इति ॥ ८ सर्वज्ञत्वादिधर्मोपेताद्विपरीतस्यासर्वज्ञत्वादिधर्मोपेतस्य ॥ ९ प्रलयकालसमये एव न तु पश्चात् ॥ १० परोपदेशरहिते मैथुनादिव्यवहारवति पुंसि ॥ ११ ( हेतु ) ॥ १२ ईश्वरोपदेश विनापि ॥ १३ व्यवहारे प्रत्यर्थनियतत्वस्य ॥ १४ पुत्रादीना मात्राद्युपदेशपूर्वकत्वेनेश्वरोपदेशपूर्वकत्वाभावात् ॥ १५ विगतमुखत्वात् ॥ १६ साधनम् ॥ १७ आकाश ॥ १८ मन्दिर ॥

प्युपलम्भात् । एकाधिष्ठाना ब्रह्मादयः पिशाचान्ताः परस्परातिशयवृत्तित्वात् । इह येषा परस्परातिशयवृत्तित्वं तेषामेकायत्तता दृष्टा । यथेह लोके गृहग्रामनगरदेशाधिपतीनामेकस्मिन्सार्वभौमनरपतौ । तथा भुजगरक्षोयक्षप्रभृतीनां परस्परातिशयवृत्तित्वं च । तेन मन्यामहे–तेषामेकस्मिन्नीश्वरे पारतन्त्र्यमित्यसम्यक् । अत्र हीश्वराख्येनाधिष्ठायकेनैकाधिष्ठाना इति साध्येऽनैकान्तिकता हेतोर्विपर्यये[3] बाधकप्रमाणाभावात् प्रतिबन्धासिद्धेः । दृष्टान्तस्य च साध्यविकलता । अधिष्ठायकमात्रेण साधिष्ठाना इति साध्ये सिद्धसाध्यता–स्वर्निकायस्वामिनः शक्रादेर्भवान्तरोपात्ताऽदृष्टस्य चाधिष्ठायकतयाभ्युपगमात् । ततो महेश्वरस्याशेषजगत्कर्तृत्वप्रसाधकस्यानवद्यप्रमाणस्यासम्भवात्कुतोऽनादिमुक्तत्वसिद्धिर्यतोऽनाद्यशेषज्ञत्वमस्य स्यात्? प्रयोगः । क्षित्यादिकं नैकैकस्वभावभावपूर्वकं विभिन्नदेशकालाकारत्वाद्यदित्थं तदित्थं, यथा घटपटमकुटशकटादि । विभिन्नदेशकालाकारं चेदं तस्मान्नैकैकस्वभावभावपूर्वकमिति । न चेदमसिद्धं साधनमुर्वीपर्वततर्वादौ धर्मिणि विभिन्नदेशकालाकारत्वस्य सुप्रसिद्धत्वात् । नाप्यनैकान्तिकं विरुद्धं वा–विपक्षस्यैकदेशे तत्रैव वा वृत्तेरभावात् । नन्वेकस्याप्यनेककार्यकरणकुशलस्य कर्त्तुर्विचित्रसहकारिसान्निध्ये विचित्रकार्यकारित्वं दृश्यते । अतोऽनेकान्त इत्यप्यनुपपन्नं–तत्राप्येकस्वभावत्वस्यासिद्धेः–स्वरूपमभेदयतां सहकारित्वस्यासम्भवप्रतिपादनात् । नापि कालात्ययापदिष्टं प्रत्यक्षागमाभ्यां पक्षस्याबाध्यमानत्वात् । न हि क्षित्यादौ विचित्रकार्ये प्रत्यक्षेणैकैकस्वभावः कर्त्तोपलभ्यते––तस्यातीन्द्रियतया प्रत्यक्षागोचरत्वस्य प्रागेव प्रतिपादनादागमस्यापि तत्प्रतिपादकस्य प्रागेव प्रतिषेधात् । नापि सत्प्रतिपक्षं–विपरीतार्थोपस्थापकस्यानुमानान्तरस्याभावात् कार्यत्वादिहेतूनां चात्रैवानेकदोषदुष्टत्वप्रतिपादनादिति ।

ननु साधूक्तमावरणापाये सर्वज्ञत्वमिति । तत्तु प्रकृतेरेव–अत्रैवावरणसम्भवात् । नात्मनस्तस्यावरणाभावात्–प्रधानपरिणामः शुक्लं कृष्णं च कर्मेत्यभिधानात् । निखिलजगत्कर्तृत्वाच्चास्या एवाशेषज्ञत्वमस्तु । तदेतदप्यसमीक्षिताभिधानं–कर्मणः प्रधानपरिणामताप्रतिषेधात् सकलजगत्कर्तृत्वस्य चासिद्धेः । ननु प्रकृतिप्रभवैवेयं जगतः सृष्टिप्रक्रिया । तत्कथं तस्यास्तत्कर्तृत्वासिद्धिः? तथा हि । प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ।१। प्रथमं हि प्रकृतेर्महान्=विषयाध्यवसायलक्षणा बुद्धिरुत्पद्यते । बुद्धेश्चाहङ्कारोऽहं सुभगोऽहं दर्शनीय इत्याद्यभिमानलक्षणः । अहङ्कारात्पञ्च तन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानि इन्द्रियाणि चैकादश । पञ्च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणलक्षणानि । पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थसंज्ञानि । मनश्च सङ्कल्पलक्षणम् ।

१ ईश्वराश्रिता कार्यकरणे ॥ २ सन्दिग्धानैकान्तिकता ॥ ३ विपक्षे=कदाचित्स्वतन्त्रेषु गृहग्रामनगरदेशाधिपतिषु ॥ ४ ईश्वराख्येनैकाधिष्ठायकेन परस्परातिशयवृत्तित्वस्याविनाभावासिद्धे ॥ ५ सार्वभौमनरपतौ ईश्वरप्रेरणत्वासिद्धे ॥ ६ कथनातिशयमकुर्वताम् ॥ ७ प्रकृते ॥ ८ क्रम ॥

भोजनार्थं हि तत्र गृहे यास्यामि किं दधि भविष्यति गुडो वा भविष्यतीत्येवं सङ्कल्पवृत्तिर्मनः । पञ्चभ्यश्च तन्मात्रेभ्यः पञ्च भूतानि । शब्दादाकाशं, स्पर्शाद्वायू, रूपात्तेजो, रसादापो, गन्धात्पृथ्वीति । पुरुषश्चेति पञ्चविंशतितत्त्वानि । प्रकृत्यात्मकाश्चैते महदादयो भेदा; न त्वऽतोऽत्यन्तभेदिनो–लक्षणभेदाभावात् । तथा हि । त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि । [1]व्यक्तं तथा प्रधानं [2]तद्विपरीतस्तथा च पुमान् ।१। लोके[3] हि यदात्मकं कारणं तदात्मकमेव कार्यमुपलभ्यते । यथा कृष्णैस्तन्तुभिरारब्धः पटः कृष्णः । एवं प्रधानमपि त्रिगुणात्मकम् । तथा बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतात्मकं व्यक्तमपि । तथाऽविवेकि । इमे सत्त्वादय[4] इदं च महदादि व्यक्तमिति पृथक्कर्त्तुं न शक्यते । किन्तु ये गुणास्तद्व्यक्तं यद्व्यक्तं ते गुणा इति । तथा व्यक्ताव्यक्तद्वयमपि विषयो[5]–भोग्यस्वभावत्वात् । सामान्यं च–सर्वपुरुषाणां भोग्यत्वात्पण्यस्त्रीवत् । अचेतनात्मकं च–सुखदुःखमोहावेदकत्वात्प्रसवधर्मिवत् । तथा हि । प्रधानं बुद्धिं जनयति । बुद्धिरप्यहङ्कारम् । अहङ्कारोपि तन्मात्राणीन्द्रियाणि चैकादश । तन्मात्राणि च महाभूतानीति[6] । [7]प्रकृतिविकृतिभावेन परिणामविशेषाल्लक्षणभेदोप्यविरुद्धः । यथोक्तं–"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं [8]व्यक्तं विपरीतम[9]व्यक्तम्" । १ । व्यक्तमेव हि कारणवत् । तथा हि । प्रधानेन हेतुमती बुद्धिः । बुद्ध्या चाहङ्कारः[10] । अहङ्कारेण पञ्च तन्मात्राण्येकादश चेन्द्रियाणि । भूतानि[11] तन्मात्रैः । न त्वेवमव्यक्तं—तस्य कुतश्चि[12]दनुत्पत्तेः । तथा व्यक्तमनित्यम्–उत्पत्तिधर्मकत्वात्; नाव्यक्तं–तस्यानुत्पत्तिमत्त्वात् । यथा च प्रधानपुरुषौ दिवि चान्तरिक्षेऽत्र सर्वत्र व्यापितया वर्तेते न तथा व्यक्तम्[13] । यथा च संसारकाले त्रयोदशविधेन बुद्ध्यहङ्कारेन्द्रियलक्षणेन संयुक्तं सूक्ष्मशरीरादिकं व्यक्तं संसरति[14], नैवमव्यक्तं–तस्य विभुत्वेन[15] सक्रियत्वायोगात् । बुद्ध्यहङ्कारादिभेदेन चानेकविधं व्यक्तं; नाव्यक्तं–तस्यैकस्यैव सतो लोकत्रयकारणत्वात् । आश्रितं च व्यक्तं–यद्यस्मादुत्पद्यते तस्य तदाश्रितत्वात् । न त्वेवमव्यक्तं–तस्याकार्यत्वात् । लिङ्गं च लयं[16] गच्छतीति कृत्वा प्रलयकाले हि भूतानि तन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रियाणि चाहङ्कारेऽहङ्कारो बुद्धौ बुद्धिश्च प्रधाने । न चाव्यक्तं क्वचिदपि लयं गच्छतीति–तस्याविद्यमानकारणत्वात् । सावयवं च व्यक्तं–शब्दस्पर्शरूपरसगन्धात्मकैरवयवैर्युक्तत्वात् । न त्वेवमव्यक्तं–प्रधानात्मनि शब्दादीनामनुपलब्धेः । यथा च पितरि जीवति पुत्रो न स्वतन्त्रो भवति तथा व्यक्तं सर्वदा कारणायत्तत्वात्परतन्त्रम् । न त्वेवमव्यक्तं–तस्य नित्यमकारणाधीनत्वात् । ननु प्रधानात्मनि कुतो महदादीनां सद्भावसिद्धिर्यतः प्रागुत्पत्तेः सदेव कार्यमिति चेत् 'असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ।१।' इति हेतुपञ्चकात् ।

१ महदादि कार्यं त्रिगुणादिरूपेण व्यक्तम् ॥ २ व्यक्ताऽव्यक्ताभ्याम् ॥ ३ प्रधानमेव त्रिगुणात्मकम् । महदादिकार्यं कथं त्रिगुणात्मकं स्यादित्युक्ते सत्याह ॥ ४ आदिपदेन रजस्तमसी ॥ ५ पुरुषेण ॥ ६ स्वरूपावस्थानम् ॥ ७ लक्षणभेदाभावात्कथं कार्यकारणभावः स्यादित्युक्ते आह ॥ ८ महदादि ॥ ९ प्रधानम् ॥ १० हेतुमान् ॥ ११ महदादि कार्यम् ॥ १२ कारणात् ॥ १३ प्रवर्तते ॥ १४ गच्छति ॥ १५ व्यापकत्वेन ॥ १६ तिरोभावम् ॥

यदि हि कारणात्मनि प्रागुत्पत्तेः कार्यं नाभविष्यत्तदा तन्न केनचिदकरिष्यत । [1]यदसत्तन्न केनचित्क्रियते । यथा गगनाम्भोरुहम् । असच्च प्रागुत्पत्तेः परमते
कार्यमिति । क्रियते च तिलादिभिस्तैलादिकार्यम् । तस्मात्तच्छक्तितः प्रागपि सत्-व्यक्तिरूपेण तु कापिलैरपि प्राक् सत्त्वस्यानिष्टत्वात् । यदि चासद्भवेत्कार्यं तर्हि
पुरुषाणां प्रति[3]नियतोपादानग्रहणं न स्यात् । यथा हि शालिबीजादिषु शाल्यादीनामसत्त्वं तथा कोद्रवबीजादिष्वपि । तथा च कोद्रवबीजादयोपि शालिफलार्थि-
भिरुपादीयेरन् । न चैवम् । तस्मात्तत्र [5]तत्कार्यमस्तीति गम्यते । यदि चासदेव कार्यं [6]सर्वस्मात्तृणपांशुलोष्टादिकात्सर्वं सुवर्णरजतादि कार्यं स्यात्—ता-
दात्म्यवि[7]गमस्य [8]सर्वस्मिन्नविशिष्टत्वात् । न च सर्वं सर्वतो भवति तस्मात्[9]तत्रैव तस्य सद्भावसिद्धिः । ननु कारणानां प्रतिनि[10]यतेष्वेव कार्येषु प्रतिनियताः शक्त-
यः । तेन कार्यस्यासत्त्वाविशेषेपि किञ्चिदेव कार्यं कुर्वन्तीत्यप्यनुत्तरम् । शक्ता अपि हि हेतवः शक्यक्रियमेव कार्यं कुर्वन्ति नाशक्यक्रियम् । [11]यच्चासत्तन्न शक्यक्रियं
यथा गगनाम्भोरुहम् । असच्च परमते कार्यमिति । बीजादेः कारणभावाच्च सत्कार्यं—कार्यासत्त्वे तदयोगात् । तथा हि । न कारणभावो बीजादेरविद्यमान-
कार्यत्वात्खरविषाणवत् । तत्सिद्धमुत्पत्तेः प्राक्कारणे [13]कार्यम् । तच्च कारणं प्रधानमेवेत्यावेदयति हेतुपञ्चकात्—'भे[12]दानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ।१।' लोके हि [14]यस्य कर्त्ता भवति तस्य परिमाणं दृष्टम् । यथा कुलालः परिमितान्मृत्पिण्डात्परिमितं प्रस्थग्राहिणमाढकग्रा-
हिणं च घटं करोति । इदं च महदादि व्यक्तं परिमितं दृष्टम्—एका बुद्धिरेकोऽहङ्कारः, पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, पञ्चभूतानीति । अतो यत्परिमितं व्यक्तमु-
त्पादयति [15]तत्प्रधानमित्यवगमः । इतश्चास्ति प्रधानं—भेदानां समन्वयदर्शनात् । [16]यज्जातिसमन्वितं हि यदुपलभ्यते तत्तन्मयकारणसम्भूतम् । यथा घटशरावादयो भेदा
मृज्जातिसमन्विता मृदात्मककारणसम्भूताः । सत्त्वरजस्तमोजातिसमन्वितं चेदं व्यक्तमुपलभ्यते । सत्त्वस्य हि प्रसादलाघवो[17]र्द्धर्षप्रीत्यादयः कार्यम् । रजसस्तु [19]ता-
पशोषोद्वेगादयः । तमसश्च दैन्यबीभत्सगौरवादयः । अतो महदादीनां प्रसाददैन्यतापादिकार्योपलम्भात्प्रधानान्वितत्व[18]सिद्धिः । इतश्चास्ति प्रधानं—शक्तितः प्र-
वृत्तेः । लोके हि यो [20]यस्मिन्नर्थे प्रवर्त्तते स तत्र शक्तः । यथा तन्तुवायः पटकरणे । प्रधानस्य चास्ति शक्तिर्यया व्यक्तमुत्पादयति । सा च निराधारा न सम्भवतीति
प्रधानास्तित्वसिद्धिः । [21]कार्यकारणविभागाच्च । दृष्टो हि कार्यकारणयोर्विभागः । यथा मृत्पिण्डः कारणं घटः कार्यम् । स च मृत्पिण्डाद्विभक्तस्वभावो घटो मध्योदकादि

---

१ परमते प्रागुत्पत्ते कार्यं धर्मि, न केनचित्क्रियते इति साध्यो धर्मः—असत्त्वात् ॥ २ जैनादिमते ॥ ३ मृत्पिण्डे घटो नास्ति पटोपि नास्ति तदा मृत्पिडो घटस्योपादान, पटस्य न । तस्य तु तन्तव एवेति नियतोपादानम् ॥
४ शाल्यादि ॥ ५ तर्हि ॥ ६ अभावस्य ॥ ७ उपादानेऽनुपादाने च ॥ ८ कारणे ॥ ९ तदुपादाने ॥ १० शक्यक्रियेषु ॥ ११ परमते कार्यं धर्मि शक्यक्रिय न भवति असत्त्वादिति शेष ॥ १२ महदादि ॥
१३ महदादीनाम् ॥ १४ कार्यस्य ॥ १५ महदादिव्यक्तमेककारणपूर्वकं परिमितत्वाद् घटादिवत् ॥ १६ महदादिव्यक्तमेककारणसम्भूतमेकस्वरूपान्विततत्वाद्वा घटघटीशरावोदञ्चनादिवत् ॥ १७ उरसत्व ॥ १८ महदादिव्यक्तस्य ॥
१९ महदादिभेदानाम् ॥ २० कार्यप्रवृत्ति शक्तिपूर्विका प्रवृत्तित्वात्तन्तुवायप्रवृत्तिवत् ॥ २१ महदादिव्यक्तमेककारणपूर्वकं कार्यरूपत्वाद् घटादिवत् ॥

धारणाहरणसमर्थो न तु मृत्पिण्डः । एवं महदादि कार्यं दृष्ट्वा साधयामः—अस्ति प्रधानं यतो महदादिकार्यमुत्पन्नमिति । इतश्चास्ति प्रधानं—वैश्वरूप्यस्याविभागात् । वैश्वरूप्यं हि लोकत्रयमभिधीयते । तच्च प्रलयकाले क्वचिदविभागं गच्छति । उक्तं च—प्राक् पञ्चभूतानि पञ्चसु तन्मात्रेष्वविभागं गच्छन्तीत्यादि । अविभागो हि नामाविवेकः । यथा क्षीरावस्थायामन्यत्क्षीरमन्यद्दधीति विवेको न शक्यते कर्त्तुं तद्वत्प्रलयकाले व्यक्तमिदमव्यक्तं चेदमिति । अतो मन्यामहेस्ति प्रधानं यत्र महदाद्यऽविभागं गच्छतीति ।

अत्र प्रतिविधीयते[3] । प्रकृत्यात्मकत्वे महदादिभेदानां कार्यतया ततः[4] प्रवृत्तिविरोधः । न खलु यद्यस्मात्सर्वथाऽव्यतिरिक्तं तत्तस्य कार्यं कारणं वा युक्तं—भिन्नलक्षणत्वात्तयोः । अन्यथा[6] तद्व्यवस्था सङ्कीर्येत । तथा च यद्भवद्भिर्मूलप्रकृतेः कारणत्वमेव, भूतेन्द्रियलक्षणषोडशकगणस्य कार्यत्वमेव, बुद्ध्यहङ्कारतन्मात्राणां पूर्वोत्तरापेक्षया कार्यत्वं कारणत्वं चेति प्रतिज्ञातं तन्न स्यात् । तथा चेदमसङ्गतं—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ।१।' इति । सर्वेषामेव हि परस्परमव्यतिरेके कार्यत्वं कारणत्वं वा प्रसज्येत । आपेक्षिकत्वाद्वा[8] तद्भावस्य रूपान्तरस्य चापेक्षणीयस्याभावात्सर्वेषां पुरुषवत्प्रकृतिविकृतित्वाभावः । अन्यथा[11] पुरुषस्यापि प्रकृतिविकृतिव्यपदेशः स्यात् । यच्चेदं हेतुमत्त्वादिधर्मयोगि व्यक्तं विपरीतमव्यक्तं तदपि बालप्रलापमात्रम् । न हि यद्यस्मादभिन्नस्वभावं तत्तद्विपरीतं युक्तं भिन्नस्वभावलक्षणत्वाद्विपरीतत्वस्य । अन्यथा[13] भेदव्यवहारोच्छेद्यः(दः) स्यात् । सत्त्वरजस्तमसां चान्योन्यं भिन्नस्वभावनिबन्धनो भेदो न स्यादिति विश्वमेकरूपमेव स्यात् । ततो व्यक्तरूपाव्यतिरेकादव्यक्तमपि हेतुमत्त्वादिधर्मयोगि स्यात् व्यक्तस्वरूपवत् । व्यक्तं वाऽहेतुमत्त्वादिधर्मयोगि स्यादऽव्यक्तस्वरूपाव्यतिरेकात्तत्स्वरूपवदित्येकान्तेः । किञ्चान्वयव्यतिरेकनिश्चयसमधिगम्यो लोके कार्यकारणभावः प्रसिद्धः । न च प्रधानादिभ्यो महदाद्युत्पत्तिनिश्चयेऽन्वयो व्यतिरेको वा प्रतीतोस्ति येन प्रधानान्महान्महतोऽहङ्कार इत्यादि सिद्ध्येत् । न च नित्यस्य कारणभावोस्ति—क्रमाऽक्रमाभ्यां तस्यार्थक्रियाविरोधात् । ननु नित्यमपि प्रधानं कुण्डलादौ[15] सर्पवन्महदादिरूपेण परिणामं गच्छत्तेषां कारणमित्युच्यते । ते च तत्परिणामरूपत्वात्तत्कार्यतया व्यपदिश्यन्ते । परिणामश्चैकवस्त्वऽधिष्ठानत्वादभेदेपि न विरुध्यते । इत्यप्यनेकान्तावलम्बने प्रमाणोपपन्नं—नित्यैकान्ते परिणामस्यैवासिद्धेः । स हि तत्र भवन्

१ महदाद्यविभाग क्वचिदाश्रित अविभागत्वात्क्षीरे दध्याद्यविभागवत् ॥ २ एकत्वम् ॥ ३ जैनै ॥ ४ प्रकृते ॥ ५ प्रधान महदादे कारण न भवति तस्मात्सर्वथाऽव्यतिरिक्तत्वात् । महदादि प्रधानकार्यं न भवति तस्मात्सर्वथाऽव्यतिरिक्तत्वात् ॥ ६ भिन्नलक्षणाभावे ॥ ७ प्रकृत्यादि कार्यरूप कार्यरूपान्महदादेरव्यतिरेकात् ॥ ८ अपेक्षणीयाभावेपि प्रकृतिविकृतिभावो भविष्यतीत्युक्ते आह ॥ ९ भिन्नलक्षणत्वात्कार्यकारणभावयोरित्यस्यापेक्षया वाशब्द ॥ १० कार्यकारणभावस्य ॥ ११ अपेक्षणीयस्याभावेपि कस्यचित्प्रकृतित्व वा घटते चेत् ॥ १२ अव्यक्त धर्मि व्यक्ताद्विपरीत न भवति तस्मादभिन्नस्वभावत्वात् ॥ १३ विपरीतत्व भिन्नस्वभावनिबन्धन न भवतीति चेत् ॥ १४ सर्वं व्यक्तरूपमेवाऽव्यक्तरूपमेव वा स्यादिति ॥ १५ ऋजु सर्पो यथा कुण्डलाकारेण जायते स एव ऋज्वाकारेण जायते ॥ कुण्डलादौ स्वर्णवदिति पाठान्तरम् ॥

[illegible]त्यागाद्वा भवेदत्यागाद्वा? यद्यत्यागात्तदाऽवस्थासाङ्कर्य–वृद्धाद्यवस्थायामपि युवाद्यवस्थोपलब्धिप्रसङ्गात् । अथ त्यागात्तदा स्वभावहानिप्रसङ्गः। किञ्च सर्वथा तत्त्यागः कथञ्चिद्वा? सर्वथा चेत्कस्य परिणामः? पूर्वरूपस्य सर्वथा त्यागादपूर्वस्य चोत्पादात् । कथञ्चित् चेन्न किञ्चिद्विरुद्धं–तस्यैवार्थस्य प्राच्यरूपत्यागेनान्यथाभावलक्षणपरिणामोपपत्तेः। नित्यैकान्तता तु तस्य व्याहन्येत। अत्र हि नैकदेशेन तत्त्यागो निरंशस्यैकदेशाभावात् । नापि सर्वात्मना नित्यत्वव्याघातात् । किं च प्रवर्त्तमानो निवर्त्तमानश्च धर्मो धर्मिणोऽर्थान्तरभूतो वा स्यादनर्थान्तरभूतो वा? यद्यर्थान्तरभूतस्तर्हि धर्मी तदवस्थ एवेति कथमसौ परिणतो नाम? न ह्यर्थान्तरभूतयोरर्थयोरुत्पादविनाशे सत्यविचलितात्मनो वस्तुनः परिणामो भवति। अन्यथाऽऽत्मापि परिणामी स्यात्। तत्सम्बद्धयोर्धर्मयोरुत्पादविनाशात्तस्य परिणाम इत्यप्यसुन्दरं–धर्मिणा सदसतोः सम्बन्धाभावात् । सम्बन्धो हि धर्मस्य सतो भवेदसतो वा? न तावत्सतः स्वातन्त्र्येण प्रसिद्धाशेषस्वभावस्य[illegible]रनपेक्षतया क्वचित्पारतन्त्र्यासम्भवात् । नाप्यसतस्तस्य सर्वोपाख्याविरहलक्षणतया क्वचिदप्याश्रितत्वानुपपत्तेः। न खलु खरविषाणादिः क्वचिदाश्रितो युक्तः। न च प्रवर्त्तमानाप्रवर्त्तमानधर्मद्वयव्यतिरिक्तो धर्मी उपलब्धिलक्षणप्राप्तो दर्शनपथप्रस्थायी कस्यचिदिति। अतः स तादृशोऽसद्व्यवहारविषय एव विदुषाम्। अथानर्थान्तरभूत[illegible]धर्मिस्वरूपादव्यतिरिक्तत्वात्तयोरेकत्वमेवेति कथं परिणामो धर्मिणो धर्मयोर्वा विनाशप्रादुर्भावौ धर्मिस्वरूपवत्? धर्माभ्यां च धर्मिणो[illegible]पूर्वस्योत्पादः पूर्वस्य विनाश इति नैव कस्यचित्परिणामः सिध्यति। तस्मान्न परिणामवशादपि भवतां कार्यकारणव्यवहारो युक्तः। यच्चेदमु[illegible]मर्दनार्थमसदकरणादिहेतुपञ्चकमुक्तं तदसत्कार्यवादपक्षेपि तुल्यम् । शक्यते ह्येवमप्यभिधातुं 'न सदकरणादुपादानग्रहणात्सर्वसम्भवाभा[illegible]कारणभावाच्च सत्कार्यम् । १ ।' न सत्कार्यमिति सम्बन्धः । किञ्च सर्वथा सत्कार्य कथञ्चिद्वा? प्रथमपक्षोऽसम्भाव्यः। यदि हि [illegible] सर्वथा विशिष्टरसवीर्यविपाकादिना विभक्तरूपेण मध्यावस्थावत्सन्ति तर्हि तेषां किमुत्पाद्यमस्ति येन तानि कारणैः क्षीरादिभिर्जन्यानि [illegible] केनचिज्जन्यं यथा प्रधानमात्मा वा। सच्च सर्वात्मना परमते दध्यादीति न महदादेः कार्यता। नापि प्रधानस्य कार[illegible]मानकार्य [illegible] कारणं यथात्मा। अविद्यमानकार्य च प्रधानमिति। क्षीराद्यवस्थायामपि दध्यादीनां पश्चादिवोपलम्भप्रसङ्गश्च।

[illegible] ॥ ४ युवावस्थाया ॥ ५ प्रधानस्य ॥ ६ पूर्वरूपत्यागः ॥ ७ उत्तरपरिणामलक्षण ॥ ८ पूर्वपरिणामलक्षण ॥ ९ पुरुषादे ॥ १० मा[illegible] ॥ १४ पारतन्त्र्यं हि सम्बन्ध इति वचनात् ॥ १५ उपाख्या स्वभाव ॥ १६ धर्मिधर्मयो ॥ १७ धर्मयोर्विनाशप्रादुर्भावो धर्मिणो न भवत[illegible] ॥ १९ समाशा[illegible] ॥ २० सर्वेऽन्य कारणेन ॥ २१ कारणे ॥ २२ आदिना नवनीततक्रादि ॥ २३ दध्या[illegible] ॥ २५ इति–अनुमानात ॥ २६ प्रधान कस्यचित्कारणं न भवति ॥

अथ कथञ्चिच्छक्तिरूपेण सत्कार्यम् । ननु शक्तिर्द्रव्यमेव । तद्रूपतया सतः पर्यायरूपतया चासतो घटादेरुत्पत्त्यभ्युपगमे जिनपतिमतानुसरणप्रसङ्गः । किञ्च तच्छक्तिरूपं दध्यादेर्भिन्नमभिन्नं वा ? भिन्नं चेत्कथं कारणे कार्यसद्भावसिद्धिः ? कार्यव्यतिरिक्तस्य शक्त्याख्यपदार्थान्तरस्यैव सद्भावाभ्युपगमात् । आविर्भूतविशिष्टरसादिगुणोपेतं हि वस्तु दध्यादि कार्यमुच्यते । तच्च क्षीराद्यवस्थायामुपलब्धिलक्षणप्राप्तानुपलब्धेर्नास्ति । यच्चास्ति शक्तिरूपं तत्कार्यमेव न भवति । न चान्यस्य भावेऽन्यदस्त्यतिप्रसङ्गात् । अथाभिन्नं तर्हि दध्यादेर्नित्यत्वात्कारणव्यापारवैयर्थ्यम् । अभिव्यक्तौ कारणानां व्यापारान्न वैयर्थ्यमित्यप्यसत्—यतोऽभिव्यक्तिः पूर्वं सत्यसती वा ? सती चेत्कथं क्रियेत ? अन्यथा कारकव्यापारानुपरमः स्यात् । अथासती तथाप्याकाशकुशेशयवत्कथं क्रियेत ? असदकरणादित्यभ्युपगमाच्च । सर्वस्य सर्वथा सत्त्वेन च कार्यत्वासम्भवादुपादानपरिग्रहोपि न प्राप्नोति । सर्वसम्भवाभावोपि प्रतिनियतादेव क्षीरादेर्दध्यादीनां जन्मोच्यते । तच्च सत्कार्यवादपक्षे दूरोत्सारितम् । शक्तस्य शक्यकरणादिति चात्रासम्भाव्यम् । यदि हि केनचित् किञ्चिन्निष्पाद्येत तदा निष्पादकस्य शक्तिर्व्यवस्थाप्येत निष्पाद्यस्य च करणं नान्यथा । कारणभावोप्यर्थानां न घटते—कार्यत्वाभावादेव । किञ्चैते हेतवो भवत्पक्षे प्रवृत्ताः किं कुर्वन्ति ? स्वविषये हि प्रवृत्तं साधनं द्वयं करोति—प्रमेयार्थविषये प्रवृत्तौ संशयविपर्यासौ निवर्त्तयति निश्चयं चोत्पादयति । तच्च सत्कार्यवादे न सम्भवति । संशयविपर्यासौ हि भवतां मते चैतन्यात्मकौ बुद्धिमनःस्वभावौ वा ? पक्षद्वयेपि न तयोर्निवृत्तिः सम्भवति चैतन्यबुद्धिमनसां नित्यत्वेनानयोरपि नित्यत्वात् । नापि निश्चयस्योत्पत्तिस्तस्यापि सदा सत्त्वात् । इति साधनोपन्यासवैयर्थ्यम् । तस्मात्साधनोपन्यासस्यार्थवत्त्वमिच्छता निश्चयोऽसन्नेव साधनेनोत्पाद्यत इत्यङ्गीकर्त्तव्यम् । तथा चासदकरणादेर्हेतुगणस्यानैकान्तिकता । यथा चासतोपि निश्चयस्य करणं, तन्निष्पत्तये च यथा विशिष्टसाधनपरिग्रहो, यथा चास्य न सर्वस्मात्साधनाभासादेः सम्भवो, यथा चासावसन्नपि शक्तैर्हेतुभिः क्रियते तत्र च हेतूनां कारणभावोस्ति तथान्यत्रापि भविष्यति । अथ यद्यपि साधनप्रयोगात्प्राक्सन्नेव निश्चयस्तथापि न तत्प्रयोगवैयर्थ्यं तदभिव्यक्तौ तस्य व्यापारात् । तत्र केयमभिव्यक्तिः ? किं स्वभावातिशयोत्पत्तिस्तद्विषयज्ञानं वा तदुपलम्भावरणापगमो वा ? न तावत्स्वभावातिशयः । स हि निश्चयस्वरूपादभिन्नो भिन्नो वा ? यद्यभिन्नस्तर्हि निश्चयस्वरूपवत्सर्वदा सत्त्वान्नोत्पत्तिर्युक्ता । अथ भिन्नस्तस्यासाविति सम्बन्धाभावः । स ह्याधाराधेयभावलक्षणो वा जन्यजनकभावलक्षणो वा ? तत्राद्यपक्षोऽयुक्तः परस्परमनुपकार्योपकारकयोस्तदसम्भवात् । उपकारे वा तस्याप्यर्थान्तरत्वे सम्बन्धासिद्धिरनवस्था च । अनर्थान्तरत्वे साधनप्रयोगवैयर्थ्यं निश्च-

१ दध्यादिकार्यं धर्मि शक्तिरूपे कारणे नास्ति ततो भिन्नत्वात् ॥ २ ततो भिन्नत्व स्यात्कारणे विद्यमानत्व च स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ३ शक्तिरूपस्य ॥ ४ व्यक्तिरूप दध्यादिकार्यम् ॥ ५ पटस्य भावे पटस्य भावप्रसङ्गात् ॥ ६ विद्यमानापि क्रियमाणा चेत् ॥ ७ अविश्रान्ति ॥ ८ परेणैव ॥ ९ पदार्थस्य ॥ १० जैनै ॥ ११ कारणस्य ॥ १२ कार्यस्य ॥ १३ निष्पाद्यनिष्पादकभावाभावे शक्ति करण वा न व्यवस्थाप्यते ॥ १४ कार्यस्य सर्वथा सत्त्वात् ॥ १५ कारणापेक्षया ॥ १६ महदादावपि ॥ १७ निश्चयस्वभावातिशययो ॥ १८ निश्चयेनातिशयस्य ॥ १९ अतिशयात् ॥ २० प्रन्थस्य ॥ २१ निश्चयेनातिशयस्य क्रियमाण उपकार अतिशयादनर्थान्तरमित्यस्मिन् दूषणमाह ॥ २२ उपकाराय ॥

यादेवोपकाराऽनर्थान्तरस्यातिशयस्योत्पत्तेः[1] । अमूर्त्तत्वाच्चातिशयस्याधोगमनाभावान्न तस्य कश्चिदाधारो युक्तोऽधोगतिप्रतिबन्धकत्वेनाधारस्यावस्थितेः । नापि जन्यजनकभावलक्षणः सर्वदैव निश्चयाख्यकारणस्य सन्निहितत्त्वेन नित्यमतिशयोत्पत्तिप्रसङ्गात् । न च साधनप्रयोगापेक्षया निश्चयस्यातिशयोत्पादकत्वं युक्तमनुपकारिण्यपेक्षाऽयोगात् । उपकारित्वे वा पूर्ववद्दोषोऽनवस्था च । अपि चायमतिशयः सन्नसन्वा क्रियेत ? असत्त्वे पूर्ववत्साधनानामनैकान्तिकतापत्तिः । सत्त्वे च साधनवैयर्थ्यम् । तत्राप्यभिव्यक्तावनवस्था । तन्न स्वभावातिशयोत्पत्तिरभिव्यक्तिः । नापि तद्विषयज्ञानं सत्कार्यवादिनो मते तस्यापि नित्यत्वात्, द्वितीयज्ञानस्यासम्भवाच्च । एकमेव हि भवतां मते विज्ञानम्–आसर्गप्रलयादेका बुद्धिरिति सिद्धान्तस्वीकारात् । तदुपलम्भावरणापगमोप्यभिव्यक्तिर्न युक्ता–तदावरणस्य नित्यत्वेनापगमासम्भवात् । तिरोभावलक्षणोप्यपगमो न युक्तोऽत्यक्तपूर्वरूपस्य तिरोभावासम्भवात् । द्वितीयोपलम्भस्य चासम्भवात्कथं तदावरणसम्भवो येनास्यापगमोभिव्यक्तिः स्यात् ? न ह्यावरणमसतो युक्तं सद्वस्तुविषयत्वात्तस्य । बन्धमोक्षाभावश्च सत्कार्यवादिनोनुपज्यते । बन्धो हि मिथ्याज्ञानात् । तस्य च सर्वदावस्थितत्वेन सर्वदा सर्वेषां बद्धत्वात्कुतो मोक्षः ? प्रकृतिपुरुषयोः कैवल्योपलम्भलक्षणतत्त्वज्ञानाच्च मोक्षः । तस्य च सदावस्थितत्वेन सर्वदा सर्वेषां मुक्तत्वात्कुतो बन्धः ? सकलव्यवहारोच्छेदप्रसङ्गश्च । लोकः खलु हिताहितप्राप्तिपरिहारार्थं प्रवर्त्तते । सत्कार्यवादपक्षे तु न किञ्चिदप्राप्यमहेयं चास्तीति निरीहमेव जगत्स्यात् । यदसत्तन्न केनचित्क्रियते इति चासङ्गतं हेतोर्विपक्षे बाधकप्रमाणाभावेनानेकान्तात् । कारणशक्तिप्रतिनियमाद्धि किञ्चिदेवासत्क्रियते यस्योत्पादकं कारणमस्ति । यस्य तु गगनाम्भोरुहादेर्नास्ति कारणं तन्न क्रियते । न हि सर्वं सर्वस्य कारणमिष्टम् । नापि यद्यदसत्तत्तत्क्रियते एवेति व्याप्तिरिष्टा । किं तर्हि ? यत्क्रियते तत्प्रागुत्पत्तेः कथञ्चिदसदेवेति । ननु तुल्येप्यसत्कारित्वे कारणानां किमिति सर्वं सर्वस्यासतः कारणं न स्यादित्यन्यत्रापि समानम् । समाने हि सत्कारित्वे किमिति सर्वं सर्वस्य सतः कारणं न स्यात् ? कारणशक्तिप्रतिनियमात्सदप्यात्मादि न क्रियत इत्यन्यत्रापि समानम् । प्रतिपादितप्रकारेण सर्वथा सतः कार्यत्वासम्भवात्कथञ्चिदसत्कार्यवादे एव चोपादानग्रहणादित्यादेर्हेतुचतुष्टयस्य विरुद्धता–साध्यविपर्ययसाधनात् । तन्नोत्पत्तेः प्राक्कारणकार्यसद्भावसिद्धिः । यच्चोक्तं–भेदानां परिमाणादित्यादिहेतोः कारणं च प्रधानमेवैकं सिद्ध्यति तदप्युक्तिमात्रं–भेदानां परिमाणादित्यस्यैककारणपूर्वकत्वेनाविनाभावासिद्धेः–अनेककारणपूर्वकत्वेप्यस्याविरोधात् । कारणमात्रपूर्वकत्वेनैव हि तस्याविनाभावः । तत्साधने च सिद्धसाधनम् । भेदानां समन्वयदर्शनादिति चासिद्धम् । न खलु सुखदुःखमोहसमन्वितं प्रमाणतः प्रसिद्धं शब्दादि-

---

१ न तूपकारकस्योत्पत्ति ॥ २ स्वभावातिशयेपि ॥ ३ साधनेन ॥ ४ प्रागुक्तप्रकारेण ग्रन्थानवस्था ॥ ५ तन्निश्चयम् ॥ ६ निश्चयलक्षणज्ञानापेक्षया निश्चयव्यवस्थापकज्ञानस्य (तद्विषयज्ञानस्य) द्वितीयत्वम् ॥ ७ सात्त्यानाम् ॥ ८ निश्चयस्य ॥ ९ निश्चयज्ञानस्य ॥ १० आवरणस्य अव्यक्तरूप न सम्भवति–नित्यत्वात् ॥ ११ ॥ प्राणिनाम् ॥ १२ विवेकख्यातिलक्षणादे ॥ १३ बन्धमोक्षलक्षणस्य ॥ १४ परमते व्याद्यिकार्यं धर्मि न केनचित्क्रियते ॥ १५ असन्नपि क्रियत इत्यस्मिन् ॥ १६ खरविषाणादे ॥ १७ आत्मादे ॥ १८ असत्कार्यवादपक्षेपि ॥ १९ पर्यायरूपतया ॥ २० परमते सर्वथा सत्कार्यं साध्यम् ॥ २१ कथञ्चिदसत्कार्यस्य ॥ २२ शब्दादिव्यक्तम् ॥

व्यक्तस्याचेतनतया चेतनसुखादिसमन्वयविरोधात्। प्रयोगः–ये चैतन्यरहिता न ते सुखादिसमन्वयाः। यथा गगनाम्भोजादयः। चैतन्यरहिताश्च शब्दादय इति। ननु चैतन्येन सुखादिसमन्वयस्य यदि व्याप्तिः प्रसिद्धा तदा[1] तन्निवर्त्तमानं शब्दादिषु सुखादिसमन्वयत्वं निवर्त्तयेत्। न चासौ सिद्धा–पुरुषस्य चेतनत्वेपि सुखादिसमन्वयासिद्धेरित्यप्यपेशलं–स्वसंवेदनसिद्धिप्रस्तावे सुखादिस्वभावतयात्मनः प्रसाधनात्। यच्चान्यदुक्तं–प्रसादतापदैन्यादिकार्योपलम्भात्प्रधानान्वितत्वसिद्धिस्तदप्ययुक्तम्–अनेकान्तात्। कापिलयोगिनां हि पुरुषं प्रकृतिविभक्तं भावयतां पुरुषमालम्ब्य स्वभ्यस्तयोगानां प्रसादो भवति प्रीतिश्च। अनभ्यस्तयोगानां क्षिप्रतरमात्मानमपश्यतामुद्वेगः। प्रकृत्या जडमतीनां मोहो जायते। न चासौ पुरुषः प्रधानान्वितः परैरिष्टः। सङ्कल्पात्प्रीत्याद्युत्पत्तिर्न पुरुषादिति शब्दादिष्वपि समानम्। सङ्कल्पमात्रभावित्वे च प्रीत्यादीनामात्मरूपताप्रसिद्धिः–सङ्कल्पस्य ज्ञानरूपत्वात्–ज्ञानस्य चात्मधर्मतया स्वसंवेदनसिद्धिप्रस्तावे प्रतिपादितत्वात्। इत्यलमतिप्रसङ्गेन। अस्तु वा प्रीत्यादिसमन्वयो व्यक्ते तथापि न प्रधानप्रसिद्धिः–साधनस्यान्वयासिद्धेः। न खलु यथाभूतं त्रिगुणात्मकमेकं नित्यं व्यापि चास्य कारणं साधयितुमिष्टं तथाभूतेन क्वचिद्धेतोः प्रतिबन्धः सिद्धः। नापि यदात्मकं कार्यमुपलभ्यते कारणेनाप्यवश्यं तदात्मना भाव्यम्। अन्यथा महदादौ हेतुमत्त्वानित्यत्वाव्यापित्वादिधर्मोपलम्भात्प्रधानेपि ताद्रूप्यप्रसिद्धिप्रसङ्गाद्धेतोर्विरुद्धतानुषङ्गः। यच्चेदं निदर्शनमुक्तं–यथा घटशरावादयो मृज्जातिसमन्विता इति तदप्यसङ्गतं–साध्यसाधनविकलत्वादस्य। न हि मृत्त्वसुवर्णत्वादिजातिर्नित्यनिरंशव्याप्येकरूपा प्रमाणतः प्रसिद्धा येन तदात्मककारणसम्भूतत्वं तत्समन्वितत्वं च प्रसिद्ध्येत्–प्रतिव्यक्ति तस्याः प्रतिभासभेदाद्भेदसिद्धेः। विस्तरेण चास्याः सिद्ध्यभावं सामान्यविचारप्रस्तावे प्रतिपादयिष्याम इत्यलमतिविस्तरेण। तथा समन्वयादित्यस्यानेकान्तश्चेतनत्वभोक्तृत्वादिधर्मैः पुरुषाणां प्रधानपुरुषाणां च नित्यत्वादिधर्मैः समन्वितत्वेपि तथाविधैककारणपूर्वकत्वानभ्युपगमात्। एतेन शक्तितः प्रवृत्तेरित्याद्यप्यनैकान्तिकत्वादिदोषदुष्टत्वादेककारणपूर्वकत्वासाधनमित्यवसातव्यम्। तथा हि। प्रेक्षावत्कारणमेतेभ्यः प्रसाध्यते कारणमात्रं वा? प्रथमविकल्पेऽनेकान्तो विनापि हि प्रेक्षावता कर्त्रा स्वहेतुसामर्थ्यप्रतिनियमात्प्रतिनियतकार्यस्योत्पत्त्यविरोधात्। न च प्रधानं प्रेक्षावद्युक्तं तस्याचेतनत्वात्प्रेक्षायाश्च चेतनापर्यायत्वात्। अथ कारणमात्रं साध्यते तर्हि सिद्धसाध्यता। न ह्यस्माकं कारणमन्तरेण कार्यस्योत्पादोऽभीष्टः। कारणमात्रस्य च प्रधानमिति संज्ञाकरणे न किञ्चिद्विरुध्यतेऽर्थभेदाभा-

---

१ तथा इति मूलपुस्तके पाठ ॥ २ भिन्नम् ॥ ३ मनस ॥ ४ सङ्कल्पात्प्रीत्यादिहेतु शब्दादिरिति ॥ ५ ज्ञानस्यात्मधर्मत्वसमर्थनविस्तरेण ॥ ६ समन्वयदर्शनादित्यस्य ॥ ७ व्याप्त्यसिद्धे ॥ ८ दृष्टान्ते ॥ ९ सत्त्वादि ॥ १० समन्वयादिति हेतुर्नित्यत्वादिधर्मोपेते प्रधाने साध्ये प्रयुक्तोऽनित्यत्वादिधर्मोपेतप्रधानप्रसाधनाद्विरुद्ध ॥ ११ सा नित्यनिरंशव्याप्येकरूपजाति ॥ १२ तया नित्यनिरंशव्याप्येकरूपजात्या ॥ १३ नित्यनिरंशव्याप्येकरूपजातिनिराकरणविस्तरेण ॥ १४ नित्यनिरंशव्याप्येकरूपजात्या ॥ १५ हेतो ॥ १६ निरंशत्वादिभिश्च ॥ १७ परेण ॥ १८ हेतुद्वयनिराकरणपरेण ग्रन्थेन ॥ १९ हेतुत्रयमपि ॥ २० नित्यत्वमेषा यत ॥ २१ हेतुभ्य ॥ २२ अकृष्यभूरुहादिक प्रेक्षावत्कारणमन्तरेणापि दृश्यतेऽत सर्वं प्रेक्षावत्कारणपूर्वक वा नेति सन्दिग्धानेकान्त ॥ २३ कारणसामान्यम् ॥ २४ जैनानाम् ॥

वात् । किञ्च शक्तितः प्रवृत्तेरित्यनेन यदि कथञ्चिदव्यतिरिक्तशक्तियोगि[3]कारणमात्रं साध्यते तदा सिद्धसाध्यता । अथ व्यतिरिक्तविचित्रशक्तियुक्तमेकं नित्यं कारणं तदानैकान्तिकता[6] हेतोः । तथाभूतेन क्वचिदन्वयासिद्धेरसिद्धता च । न खलु व्यतिरिक्तशक्तिवशात्कस्यचित्कारणस्य क्वचित्कार्ये प्रवृत्तिः प्रसिद्धा–शक्तीनां स्वात्मभूतत्वात् । यच्चेदमुक्तमविभागाद्वैश्वरूप्यस्य तदप्यसाम्प्रतं–प्रलयकालस्यैवाप्रसिद्धेः । सिद्धौ वा तदासौ महदादीनां लयो भवन् पूर्वस्वभावप्रच्युतौ भवेदप्रच्युतौ वा ? यदि प्रच्युतौ तर्हि तेषां तदा विनाशसिद्धिः स्वभावप्रच्युतेर्विनाशरूपत्वात् । अथाप्रच्युतौ तर्हि लयानुपपत्तिः । न ह्यविकलमात्मनस्तत्त्वमनुभवतः कस्यचिल्लयो युक्तोऽतिप्रसङ्गात् । परस्परविरुद्धं चेदमविभागो वैश्वरूप्यमिति च । वैश्वरूप्यं च प्रधानपूर्वत्वे नोपपद्यत एव–तन्मयत्वेन सर्वस्य जगतस्तत्स्वरूपवदेकत्वप्रसङ्गात् । इति कस्याऽविभागः स्यादिति ? तन्न प्रधानस्य सकलजगत्कर्तृत्वं सिद्धं यतस्तत्सिद्धौ प्रधानस्य सर्वज्ञता—कर्तृत्वस्य कारणशक्तिपरिज्ञानाविनाभावासिद्धेरित्युक्तं प्रागीश्वरनिराकरणे । तदलमतिप्रसङ्गेन ।

एतेन सेश्वरसाङ्ख्यैर्यदुक्तं 'न प्रधानादेव केवलादमी कार्यभेदाः प्रवर्त्तन्ते तस्याचेतनत्वात् । न ह्यचेतनोऽधिष्ठायकमन्तरेण कार्यमारभमाणो दृष्टः । न चान्यात्माधिष्ठायको युक्तः–सृष्टिकाले तस्याज्ञत्वात् । तथा हि । बुद्ध्यध्यवसितमेवार्थं पुरुषश्चेतयते । बुद्धिसंसर्गाच्च पूर्वमसावज्ञ एव, न जातु कञ्चिदर्थं विजानाति । न चाज्ञातमर्थं कश्चित्कर्त्तुं शक्तः । अतो नासौ कर्त्ता । तस्मादीश्वर एव प्रधानापेक्षः कार्यभेदानां कर्त्ता । न केवलः । न खलु देवदत्तादिः केवलः पुत्रं कुम्भकारो वा घटं जनयति' इति तदपि प्रतिव्यूढं–प्रत्येकं तयोः कर्तृत्वस्यासम्भवे सहितयोरप्यसम्भवात् । अन्यथा प्रत्येकपक्षनिक्षिप्तदोषानुषङ्गः । अथोच्यते 'यदि नाम प्रत्येकं तयोः कर्तृत्वासम्भवस्तथापि सहितयोः कथं तदभावः ? न हि केवलानां चक्षुरादीनां रूपादिज्ञानोत्पत्तिसामर्थ्याभावे सहितानामप्यसौ युक्तः' तदप्युक्तिमात्रं–यतः साहित्यं नामानयोरन्योन्यं सहकारित्वम् । तच्चान्योन्यातिशयाधानाद्वा स्यादेकार्थकारित्वाद्वा ? न तावदाद्यकल्पना युक्ता–नित्यत्वेनानयोर्विकाराभावात् । नापि द्वितीयकल्पना युक्ता–कार्याणा यौगपद्यप्रसङ्गात् । अप्रतिहतसामर्थ्यस्येश्वरप्रधानाख्यकारणस्य सदा सन्निहितत्वेनाविकलकारणत्वात्तेषाम् । तथा हि । यद्यदाऽविकलकारणं तत्तदा भवत्येव । यथाऽन्त्यक्षणप्राप्तायाः सामग्रीतोऽङ्कुरः । अविकलकारणं चाशेषं कार्यमिति । ननु यद्यपि कारणद्वयमेतन्नित्यं सन्निहितं तथापि क्रमेणैवामी कार्यभेदाः प्रवर्त्तिष्यन्ते । महेश्वरस्य हि प्रधानगताः सत्त्वादयस्त्रयो गुणाः सहकारिणः । तेषां च क्रमवृत्तित्वात्कार्याणामपि क्रमः । तथा हि । यदोद्भूतवृत्तिना रजसा युक्तो भवत्यसौ तदा सर्गहेतुः प्रजानां भवति प्रसव[23]कार्यत्वाद्रजसः । यदा

१ अस्माभि कारणमात्र भवद्भि प्रधान प्रतिपाद्यते इत्यत्र ॥ २ द्रव्यस्वभावेन ॥ ३ कार्यनिष्पादने ॥ ४ धर्म्मस्वभावे भेद ॥ ५ साध्यते इति शेष ॥ ६ सन्दिग्धरूपा ॥ ७ स्वस्य ॥ ८ स्वरूपम् ॥ ९ वस्तुन ॥ १० प्रधानात्मनोरपि लयप्रसङ्गात् ॥ ११ अविभागाद्वैश्वरूप्यमिति ॥ १२ एकत्वम् ॥ १३ अनेकत्वम् ॥ १४ लोके आदौ विभागोस्ति यदि तदा पश्चाद्विभागानामविभाग स्यात् ॥ १५ कर्तृत्व कारणशक्तिज्ञानाविनाभावि न भवतीति समर्थनेन ॥ १६ प्रकृतीश्वरनिराकरणपरेण ग्रन्थेन ॥ १७ महदाद्य ॥ १८ ईश्वर प्रेरकम् ॥ १९ ससार्यात्मा ॥ २० कार्यम् ॥ २१ सहितयोस्तयो कर्तृत्वसम्भवश्चेत् ॥ २२ आलोकादीना च ॥ २३ प्रसव उत्पत्ति ॥

तु सत्त्वमुद्भूतवृत्ति संश्रयंते तदा लोकानां स्थितिकारणं भवति–सत्त्वस्य स्थितिहेतुत्वात् । यदा तमसोद्भूतशक्तिना समायुक्तो भवति तदा प्रलयं सर्वजगतः करोति–तमसः प्रलयहेतुत्वात् । तदुक्तं "रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः । १ ।" इत्यप्यसाम्प्रतं यतः प्रकृतीश्वरयोः सर्गस्थितिप्रलयानां मध्येऽन्यतमस्य क्रियाकाले तदपरकार्यद्वयोत्पादने सामर्थ्यमस्ति न वा ? यद्यस्ति तर्हि सृष्टिकालेपि स्थितिप्रलयप्रसङ्गोऽविकलकारणत्वादुत्पादवत् । एवं स्थितिकालेप्युत्पादविनाशयोर्विनाशकाले च स्थित्युत्पादयोः प्रसङ्गः । न चैतद्युक्तम् । न खलु परस्परपरिहारेणावस्थितानामुत्पादादिधर्माणामेकत्र धर्मिण्येकदा सद्भावो युक्तः । अथ नास्ति सामर्थ्यं तदैकमेव स्थित्यादीनां मध्ये कार्यं सदा स्यात्, यदुत्पादने तयोः सामर्थ्यमस्ति, नापरं कदाचनापि–तदुत्पादने तयोः सदा सामर्थ्याभावात्–अविकारिणोश्च प्रकृतीश्वरयोः पुनः सामर्थ्योत्पत्तिविरोधात् । अन्यथा नित्यैकस्वभावताव्याघातः । अथ तत्स्वभावेपि प्रधाने सत्त्वादीनां मध्ये यदेवोद्भूतवृत्ति तदेव कारणतां प्रतिपद्यते नान्यत् । तत्कथं स्थित्यादीनां यौगपद्यप्रसङ्ग इति ? अत्रोच्यते–तेषामुद्भूतवृत्तित्वं नित्यमनित्यं वा ? न तावन्नित्यं कादाचित्कत्वात् स्थित्यादीनां यौगपद्यप्रसङ्गाच्च । अथानित्यम् । कुतोऽस्य प्रादुर्भावः ? प्रकृतीश्वरादेवान्यतो वा हेतोः स्वतन्त्रो वा ? प्रथमपक्षे सदास्य सद्भावप्रसङ्गः–प्रकृतीश्वराख्यस्य हेतोर्नित्यरूपतया सदा सन्निहितत्वात् । न चान्यतस्तत्प्रादुर्भावो युक्तः–प्रकृतीश्वरव्यतिरेकेणापरकारणस्यानभ्युपगमात् । तृतीयपक्षे तु कादाचित्कत्वविरोधोऽस्य स्वातन्त्र्येण भवतो देशकालनियमायोगात् । स्वभावान्तरायत्तवृत्तयो हि भावाः कादाचित्काः स्युस्तद्भावाभावप्रतिबद्धत्वात्तत्सत्त्वासत्त्वयोः । नान्ये–तेषामपेक्षणीयस्य कस्यचिदभावात् । किञ्चात्मानं जनयति भावो निष्पन्नोऽनिष्पन्नो वा ? न तावन्निष्पन्नस्तस्यामवस्थायामात्मनोपि निष्पन्नरूपाव्यतिरेकितया निष्पन्नत्वान्निष्पन्नस्वरूपवत् । नाप्यनिष्पन्नोऽनिष्पन्नस्वरूपत्वादेव गगनाम्भोजवत् । तस्मात्प्रकारान्तरेणाशेषज्ञत्वासिद्धेरावरणापाये एवाशेषविषयं विज्ञानम् । तच्चात्मन एवेति परीक्षादक्षैः प्रतिपत्तव्यम् । तच्च विज्ञानमनन्तदर्शनसुखवीर्याविनाभावित्वादनन्तचतुष्टयस्वभावत्वमात्मनः प्रसाधयतीति सिद्धो मोक्षो जीवस्यानन्तचतुष्टयस्वरूपलाभलक्षणः–तस्यापेतप्रतिबन्धकस्यात्मस्वरूपतया जीवन्मुक्तिवत्परमुक्तावप्यभावासिद्धेः ॥

ये त्वात्मनो जीवन्मुक्तौ कवलाहारमिच्छन्ति तेषां तत्रास्यानन्तचतुष्टयस्वभावाभावोऽनन्तसुखविरहात् । तद्विरहश्च बुभुक्षाप्रभवपीडाक्रान्तत्वात् । तत्पीडाप्रतीकारार्थो हि निखिलजनानां कवलाहारग्रहणप्रयासः प्रसिद्धः । ननु भोजनादेः सुखाद्यनुकूलत्वात्कथं भगवतोऽतोऽनन्तसुखाद्यभावः ? दृश्यते ह्यस्मदादौ

१ ईश्वर कर्ता ॥ २ न जायते इत्यजो रुद्रस्तस्मै ॥ ३ त्रयी वेदास्त्रयी ॥ ४ सत्त्वरजस्तमोरूपाय ॥ ५ स्थितिप्रलयौ धर्मिणौ सृष्टिकाले भवत तदा अविकलकारणत्वात् ॥ ६ प्रजालक्षणे ॥ ७ सामर्थ्यमुत्पद्यते चेत् ॥ ८ कारणस्य ॥ ९ जायमानस्य ॥ १० कार्यलक्षणाद्भावादपर कारणलक्षणो भाव स्वभावान्तरम् ॥ ११ कारणाधीनवृत्तय इत्यर्थः ॥ १२ तस्य कार्यस्य ॥ १३ स्वरूपम् ॥ १४ कार्यलक्षण ॥ १५ निष्पन्नायाम् ॥ १६ जगत्कर्तृत्वादिलक्षणेन ॥ १७ जीवमयत्वेन ॥ १८ श्वेतपटा ॥

क्षुत्पीडिते निश्शक्तिके च भोजनसद्भावे सुखं वीर्यं चोत्पद्यमानमित्यप्ययुक्तम्—अस्मदादिसुखादेः कादाचित्कतया विषयेभ्य एवोत्पत्तिसम्भवात् । भगवत्सुखादेश्च तत्सम्भवेऽनन्तताव्याघातः । तथा हि । क्षुत्क्षामकुक्षिर्निश्शक्तिकश्चासौ यदा कवलाहारग्रहणे प्रवृत्तस्तदैव तदीयसुखवीर्ययोर्नष्टत्वात्कुतोऽनन्तता ? वीतरागद्वेषत्वाच्चास्य तद्ग्रहणप्रयासायोगः । प्रयोगः । केवली न भुङ्क्ते रागद्वेषाभावानन्तवीर्यसद्भावान्यथानुपपत्तेः । ननु सममित्रशत्रूणां साधूनां भोजनादिकं कुर्वतामपि वीतरागद्वेषत्वसम्भवादनैकान्तिको हेतुरित्यप्यसाम्प्रतं—मोहनीयकर्मणः सद्भावे भोजनादिकं कुर्वतां प्रमत्तगुणस्थानप्रवृत्तीना साधूनां परमार्थतो वीतरागत्वासम्भवात् । तन्नानैकान्तिकोयं हेतुः । नापि विरुद्धो विपक्षे वृत्तेरभावात् । कवलाहारित्वे चास्य सरागत्वप्रसङ्गः । प्रयोगः । यो यः कवल भुङ्क्ते स स न वीतरागो यथा रथ्यापुरुषः । भुङ्क्ते च कवलं भवन्मतः केवलीति । कवलाहारो हि सरणाभिलापाभ्यां भुज्यते । भुक्तवता च कण्ठोष्ठप्रमाणतस्तृप्तेनाऽरुचितस्त्यज्यते । तथा चाभिलाषाऽरुचिभ्यामाहारे प्रवृत्तिनिवृत्तिमत्त्वात्कथं वीतरागत्वम्? तदभावान्नासता । अथाभिलाषाद्यभावेप्याहारं गृह्णात्यसौ तथाभूतातिशयत्वात् । ननु चाहाराभावलक्षणोप्यतिशयोऽस्याभ्युपगन्तव्योऽनन्तगुणत्वाद्गगनगमनाद्यतिशयवत् । अथाहाराभावे देहस्थितिरेवास्य न स्यात् । तथा हि । भगवतो देहस्थितिराहारपूर्विका देहस्थितित्वादस्मदादिदेहस्थितिवत् । नन्वनेनानुमानेनास्याहारमात्रं कवलाहारो वा साध्येत? प्रथमपक्षे सिद्धसाध्यता—आसयोगकेवलिनो जीवा आहारिण इत्यभ्युपगमात्, तत्र च कवलाहाराभावेप्यन्यस्य कर्मनोकर्मादानलक्षणस्याविरोधात् । षड्विधो ह्याहारः "णोकम्म कम्महारो कवलाहारो य लेप्पमाहारो । ओज मणो वि य कमसो आहारो छव्विहो णेयो" इत्यभिधानात् । न खलु कवलाहारेणैवाहारित्वं जीवानाम्—एकेन्द्रियाण्डजत्रिदशानामभुञ्जानतिर्यग्मनुष्याणां चानाहारित्वप्रसङ्गात् । न चैवं "विग्गहगइमावण्णा केवलिणो समुहदो अजोगी[10] य । सिद्धा य अणाहारा सेसा आहारिणो जीवा" इत्यभिधानात् । द्वितीयपक्षे तु त्रिदशादिभिर्व्यभिचारस्तेषां कवलाहाराभावेपि देहस्थितिसम्भवात् । अथौदारिकशरीरस्थितित्वादिति विशेष्योच्यते । तथा हि । या या औदारिकशरीरस्थितिः सा सा कवलाहारपूर्विका यथास्मदादीनाम् । औदारिकशरीरस्थितिश्च भगवतः । इति न त्रिदशशरीरस्थित्या व्यभिचार इत्यप्यसारं—तदीयौदारिकशरीरस्थितेः परमौदारिकशरीरस्थितिरूपतयाऽस्मदाद्यौदारिकशरीरस्थितिविलक्षणत्वात् । तस्याश्च केवलावस्थायां केशादिवृद्ध्यभाववत्तद्भुक्त्यभावोप्यविरुद्ध एव । कथं चैवं वादिनो[11] भगवत्प्रत्यक्षमतीन्द्रियं स्यात्? शक्यं हि वक्तुं—तत्प्रत्यक्षमिन्द्रियजं—प्रत्यक्षत्वादस्मदादिप्रत्यक्षवत् । तथा

---

१ भगवदीय ॥ २ कवलाहाराभावमन्तरेणानुपपत्तेस्तयो ॥ ३ हेतोरेकाश गृहीला दूषयति ॥ ४ ग्वलाहारिणि ॥ ५ अभिलापायभावेप्याहारग्रहणलक्षण ॥ ६ जैने ॥ ७ नोकर्म (१), कर्माहार (२), कवलाहार (३), च लेप्य (४) आहार । ओज (५), मानसिक (६) अपि च क्रमश आहार षड्विधो ज्ञेय ॥ ८ विग्रहगतिमापन्ना केवलिन समुद्घात (दण्डकपाटेति समुद्घातद्वय) गता अयोगिनश्च । सिद्धाश्च अनाहारा शेषा आहारिणो जीवा ॥ ९ दण्डकवाटावस्थायाम् ॥ १० अर्हदवस्थात अन्ते सिद्धावस्थात आदौ या अवस्था सा अयोगावस्था ॥ ११ औदारिकशरीरस्थितिलास्कवलाहारित्वमेवेति ॥

सरागोऽसौ वक्तृत्वात्तद्वदेव । न ह्यस्मदादौ[4] दृष्टो धर्मः कश्चित्तत्र साध्यः कश्चिन्नेति वक्तुं युक्तं–स्वेच्छाकारित्वानुषङ्गात् । तथा च न कश्चित्केवली वीतरागो वा । इति कस्य भुक्तिः प्रसाध्यते? यदि चैकत्र तच्छरीरस्थितेः कवलाहारपूर्वकत्वोपलम्भात्सर्वत्र तथाभावः साध्यते तर्हि घटादौ सन्निवेशादेर्बुद्धिमत्पूर्वकत्वोपलम्भात्तन्वादीनामप्यतो बुद्धिमत्पूर्वकत्वसिद्धिः स्यात् । द्विचन्द्रादिप्रत्ययस्य निरालम्बनत्वोपलम्भाच्चाखिलप्रत्ययाना निरालम्बनत्वप्रसङ्गः स्यात् । अथ यादृशं बुद्धिमत्कारणव्याप्तं सन्निवेशादि घटादौ दृष्टं तादृशस्य तन्वादिष्वभावान्नातस्तेषां तत्पूर्वकत्वसिद्धिस्तर्हि यादृशमौदारिकशरीरस्थितित्वमस्मदादौ तद्भुक्तिपूर्वकं दृष्टं तादृशस्य भगवत्परमौदारिकशरीरस्थितावभावान्नातस्तस्यास्तद्भुक्तिपूर्वकत्वसिद्धिः । यथा च प्रत्ययत्वाविशेषेपि कस्यचिन्निरालम्बनत्वमन्यस्यान्यत्वं तथा च तच्छरीरस्थितेस्तत्त्वाविशेषेपि निराहारत्वमितरेच्चेष्यतामविशेषात् । अथान्यादृशमौदारिकशरीरस्थितित्वमन्यादृशाश्च पुरुषा न सन्तीत्युच्यते तर्हि मीमांसकमतानुप्रवेशः । अतो यथान्यादृशाः सन्ति पुरुषास्तथा तत्स्थितित्वमपि । कथमन्यथा सप्तधातुमलापेतत्वं तच्छरीरस्य स्यात्? तत्सम्भवे तत्स्थितेरतद्भुक्तिपूर्वकत्वमपि स्यात् । तपोमाहात्म्याच्चतुरास्यत्वादिवच्चाभुक्तिपूर्वकत्वे तस्याः को विरोधः? दृश्यते च पञ्चकृत्वो भुञ्जानस्य यादृशी तच्छरीरस्थितिस्तादृश्येव प्रतिपक्षभावनोपेतस्य चतुस्त्रिद्व्येकभोजनस्यापि । तथा प्रतिदिनं भुञ्जानस्य यादृशी सा तादृश्येवैकद्व्यादिदिनान्तरितभोजिनोपि । श्रूयते च बाहुबलिप्रभृतीनां संवत्सरप्रमिताहारवैकल्येपि विशिष्टा शरीरस्थितिः । आयुःकर्मैव हि प्रधानं तत्स्थितेर्निमित्तम् । भुक्त्यादिस्तु सहायमात्रम् । तच्छरीरोपचयोपि[20] लाभान्तरायविनाशात्प्रतिसमयं तदुपचयनिमित्तभूतानां दिव्यपरमाणूनां लाभाद् घटते । एवं छद्मस्थावस्थावच्च केवल्यवस्थायामप्यस्य भुक्त्यऽभ्युपगमेऽक्षिपक्ष्मनिमेषो नखकेशवृद्ध्यादिश्चाभ्युपगम्यताम् । तदभावातिशयाभ्युपगमे वा भुक्त्यभावातिशयोप्यभ्युपगन्तव्यो विशेषाभावात् । ननु मासं वर्षं वा तदभावे तत्स्थितावपि नाऽऽकालं तत्स्थितिः–पुनस्तदाहारे प्रवृत्त्युपलम्भादिति चेत्कुत एतत्? आकालं तत्स्थितेरनुपलम्भाच्चेत्सर्वज्ञवीतरागस्याप्यत एवासिद्धेर्लाभमिच्छतो मूलोच्छेदः स्यात् । दोषावरणयोर्हान्यतिशयोपलम्भेन क्वचिदात्यन्तिकप्रक्षयसिद्धेस्तत्सिद्धौ क्वचिच्छरीरिण्यात्यन्तिको भुक्तिप्रक्षयोपि प्रसिध्येत् तदुपलम्भस्यात्राप्यविशेषात् । तन्न शरीरस्थितेर्भगवतो भुक्तिसिद्धिः । अथोच्यते 'वेदनीयकर्मणः सद्भावात्तत्सिद्धिः । तथा हि । भगवति वेदनीयं स्वफलदायि–कर्मत्वादायुःकर्मवत्' तदप्युक्तिमात्रं–यतोऽतोप्यनुमानात्तत्फलमात्रं सिध्येन्न

---

१ कवलाहारलक्षण ॥ २ सरागत्वसेन्द्रियत्वलक्षण ॥ ३ भगवत सरागत्वे तत्प्रत्यक्षसेन्द्रियजत्वे च ॥ ४ अस्मदादौ ॥ ५ अक्रियादर्शिन कृतबुद्ध्युत्पादकत्वम् ॥ ६ सप्तधातुमलोपेतम् ॥ ७ तस्य=कवलस्य ॥ ८ औदारिकशरीरस्थितित्वादिति हेतो ॥ ९ कवलस्य ॥ १० द्विचन्द्रादिप्रत्ययस्य ॥ ११ घटादिप्रत्ययस्य ॥ १२ सालम्बनत्वम् ॥ १३ आहारपूर्वकत्वम् ॥ १४ परमौदारिकम् ॥ १५ अनाहारिण ॥ १६ मीमांसकमतेपि सर्वज्ञलक्षणोऽन्यादृश पुरुषो नास्ति ॥ १७ अन्यादृशौदारिकशरीरस्थिते ॥ १८ अकवल ॥ १९ भोजने विरक्तभावनोपेतस्य ॥ २० पुष्टि ॥ २१ वीतरागस्य ॥ २२ अतिशये ॥ २३ कालमभिव्याप्य । मरणपर्यन्तमित्यर्थ ॥ २४ कवलाहारमन्तरेण ॥ २५ तस्य कवलस्य ॥ २६ सर्वज्ञसद्भावम् ॥ २७ सर्वज्ञसद्भावोच्छेद ॥ २८ दोषा रागादिभावकर्म ॥ २९ आवरण द्रव्यकर्म ॥ ३० दृष्टान्ते ॥ ३१ आत्मनि ॥ ३२ स्वफल क्षुदादिदु राम् ॥

पुनर्भुक्तिलक्षणम् । अथ क्षुदादिनिमित्तवेदनीयसद्भावाद्भुक्तिसिद्धिः । ननु तन्निमित्तं तत्तत्रास्तीति कुतः ? क्षुदादिफलाच्चेदन्योन्याश्रयः । सिद्धे हि भगवति तन्निमित्तकर्मसद्भावे तत्फलसिद्धिस्तस्याश्च तन्निमित्तकर्मसद्भावसिद्धिरिति । अथाऽसातवेदनीयोदयात्तत्र तत्सिद्धिर्न–सामर्थ्यवैकल्यात् तस्य । अविकलसामर्थ्यं ह्यसातादिवेदनीयं स्वकार्यकारि । सामर्थ्यवैकल्यं च मोहनीयकर्मणो विनाशात्सुप्रसिद्धम् । यथैव हि पतिते सैन्यनायकेऽसामर्थ्यं सैन्यस्य तथा मोहनीयकर्मणि नष्टे भगवत्यसामर्थ्यमघातिकर्मणाम् । यथा च मन्त्रेण निर्विषीकरणे कृते मन्त्रिणोपभुज्यमानमपि विषं न दाहमूर्च्छादिकं कर्तुं समर्थं तथा असातादिवेदनीयं विद्यमानोदयमप्यसति मोहनीये निःसामर्थ्यत्वान्न क्षुद्दुःखकरणे प्रभु–सामग्रीतः कार्योत्पत्तिप्रसिद्धेः । मोहनीयाभावश्च प्रसिद्धो भगवतस्तीव्रतरशुक्लध्यानानलनिर्दग्धघनघातिकर्मेन्धनत्वात् । यदि च तदभावेपि तदुदयः स्वकार्यकारी स्यात्तर्हि परघातकर्मोदयात्परान् यष्ट्यादिभिस्ताडयेत् स एव वा परैस्ताड्येत । परघातोदयोपि हि संयतानामर्हदवसानानामस्ति । अथ परमकारुणिकत्वात्तदुदयेपि न परांस्ताडयत्युपसर्गाभावाच्च न च तैस्ताड्यते तर्ह्यनन्तसुखवीर्यत्वाद्बाधाविरहाच्चासातादिवेदनीयोदये सत्यपि भोजनादिकं न कुर्यात् । मोहकार्यत्वाच्च करुणायाः कथं तत्क्षये परमकारुणिकत्वं तस्य स्यात् ? किञ्च कर्मणां यद्युदयो निरपेक्षः कार्यमुत्पादयति तर्हि त्रिवेदानां कषायाणां वा प्रमत्तादिषूदयोस्तीति मैथुनं भ्रूकुट्यादिकं च स्यात् । ततश्च मनसः संक्षोभात्कथं शुक्लध्यानाप्तिः क्षपकश्रेण्यारोहणं वा ? तदभावाच्च कथं कर्मक्षपणादि घटेत ?[1] नन्वेवं नामाद्युदयोपि तत्र स्वकार्यकारी न स्यादित्यप्यसङ्गतं–शुभप्रकृतीनां तत्राप्रतिबद्धत्वेन स्वकार्यकारित्वसम्भवात् । यथा हि बलवता राज्ञा स्वमार्गानुसारिणा लब्धे देशे दुष्टा जीवन्तोपि न स्वदुष्टाचरणस्य विधातारः सुजनास्त्वप्रतिहततया स्वकार्यस्य विधातारस्तथा प्रकृतमपि । कथं पुनरशुभप्रकृतीनामेवार्हति प्रतिबद्धं सामर्थ्यं; न पुनः शुभप्रकृतीनामिति चेदुच्यते । अशुभप्रकृतीनामर्हन्नत्राऽनुभागं घातयति, न तु शुभानां; यतो गुणघातिनां दण्डो नाऽदोषाणाम् । यदि च प्रतिबद्धसामर्थ्यमप्यसातादिवेदनीयं स्वकार्यकारि स्यात्तर्हि दण्डकवाटप्रतरादिविधानं भगवतो व्यर्थम् । तद्धि यदा न्यूनमायुर्वेदनीयादिकमधिकस्थितिकं भवति तदाऽनेन कर्मणां समस्थित्यर्थं विधीयते । न चाधिकस्थितिकत्वेन फलदानसमर्थं कर्मोपायशतेनाप्यन्यथा कर्तुं शक्यमिति न कश्चिन्मुक्तः स्यात् । अथ तपोमाहात्म्यान्निर्जीर्णमधिकस्थितिकत्वेन फलदानासमर्थमायुःकर्म समानं क्रियते तथा वेद्यमपि क्रियतामविशेषात् । एतेनेदमप्यपास्तं–यदि वेदनीयमफलं, तत्र तन्नास्त्येव ज्ञानावरणादिवत् । तथा च कर्मपञ्चकस्याभावस्तत्र प्राप्नोतीति । कथम्? यद्यायुरधिकानि वेद्यादीनि स्वफलदानसमर्थानि तर्हि

१ इति चेन ॥ २ केवलिगुणस्थानान्तानाम् ॥ ३ उदितस्य कर्मण स्वकार्यकारित्वाभावप्रकारेण ॥ ४ दुष्टनिग्रहशिष्टपालनकारिणा ॥ ५ शुभाशुभकर्म ॥ ६ शक्तिम् ॥ ७ शुक्लध्यानतपोमाहात्म्येन भगवता ॥ ८ फलदानासमर्थम् ॥ ९ अघातिकर्मलस्य ॥ १० फलदानासमर्थम् ॥ ११ कथमपास्तमित्युच्यते ॥

मुक्त्यभावः । नो चेन्न तेषा कर्मत्वमिति तदपनयनाय योगिनो लोकपूरणादिप्रयासो व्यर्थः । अनुष्ठानविशेषेणापहतसामर्थ्यानामवस्थानं वेद्येपि समानम् । न च कारणमस्तीत्येतावतैव कार्योत्पत्तिः । अन्यथेन्द्रियादिकार्यस्याप्यनुपङ्गाद्भगवतो मतिज्ञानस्य रागादीनां च प्रसङ्गः । अथावरणक्षयोपशमस्य मोहनीयकर्मणश्च सहकारिणो विरहान्नेन्द्रियादि स्वकार्ये व्याप्रियते । अत एव वेदनीयमपि न व्याप्रियेत । न ह्यत्यन्तमात्मनि परत्र वा विरतव्यामोहस्तदर्थं किञ्चिदादातुं हातुं वा प्रवर्त्तते । प्रयोगः । यो यत्रात्यन्तं व्यावृत्तव्यामोहः स तदर्थं किञ्चिदादातुं हातुं वा न प्रवर्तते । यथा व्यावृत्तव्यामोहा माता पुत्रे । व्यावृत्तात्यन्तव्यामोहश्च भगवान् । ततः सोपि भोजनमादातुं क्षुदादिकं वा हातुं न प्रवर्त्तते । प्रवृत्तौ वा मोहवत्त्वप्रसङ्गः । तथा हि । यस्तदादातुं हातुं वा प्रवर्त्तते स मोहवान् यथाऽस्मदादिस्तथा चायं श्वेतपटाभिमतो जिन इति । तथा च कुतोऽस्याप्तता रथ्यापुरुषवत् ? न चेयं बुभुक्षा मोहनीयानपेक्षस्य वेदनीयस्यैव कार्यं येनात्यन्तव्यावृत्तव्यामोहेप्यस्याः सम्भवः । भोक्तुमिच्छा हि बुभुक्षा । सा कथं वेदनीयस्यैव कार्यम् ? इतरथा योन्यादिषु रन्तुमिच्छा रिरंसा तत्कार्यं स्यात् । तथा च कवलाहारवत् स्यादावपि तत्प्रवृत्तिप्रसङ्गान्नेश्वरादस्य विशेषः । यथा च रिरंसा प्रतिपक्षभावनातो निवर्त्तते तथा बुभुक्षापि । प्रयोगः । भोजनाकाङ्क्षा प्रतिपक्षभावनातो निवर्त्तते—आकाङ्क्षात्वात् स्त्र्याद्याकाङ्क्षावत् । नन्वस्तु तद्भावनाकाले तन्निवृत्तिः, पुनस्तदभावे प्रवृत्तिरित्येतत्स्त्र्याद्याकाङ्क्षायामपि समानम् । यथा चास्याश्चेतसः प्रतिपक्षभावनामयत्वाद-त्यन्तनिवृत्तिस्तथा प्रकृताकाङ्क्षाया अपि । अथाकाङ्क्षारूपा क्षुन्न भवति । तेन वीतमोहेप्यस्याः सम्भवस्तदप्ययुक्तमनाकाङ्क्षारूपत्वेप्यस्या दुःखरूपतयाऽनन्तसुखे भगवत्यसम्भवात् । तथा हि । यत्र यद्विरोधि बलवदस्ति न तत्राभ्युदितकारणमपि तद्भवति । यथाऽत्युष्णप्रदेशे शीतम् । अस्ति च क्षुद्दुःखविरोधि बलवत् केवलिन्यनन्तसुखम् । तथा यत्कार्यविरोध्यनिवर्त्त्यं यत्रास्ति तत्र तदविकलमपि स्वकार्यं न करोति । यथा श्लेष्मादिविरुद्धानिवर्त्यपित्तविकाराक्रान्ते न दध्यादि श्लेष्मादि करोति । वेद्यफलविरुद्धाऽनिवर्त्यसुखं च भगवतीति । अस्तु वा वेद्यं तत्र बुभुक्षाफलप्रदायि । तथापि बुभुक्षातः समवसरणस्थित एवासौ भुङ्क्ते चर्यामार्गेण वा गत्वा ? प्रथमपक्षे मार्गस्तेन नाशितः स्यात् । कथं च बुभुक्षोदयानन्तरमाहारासम्पत्तौ ग्लानस्य यथावद्बोधहीनस्य मार्गोपदेशो घटेत ? अथ तदुदयानन्तरं देवास्तत्राहारं सम्पादयन्ति न; अत्र प्रमाणाभावात् । आगम इति चेन्नोभयप्रसिद्धस्यास्याप्यभावात् । स्वप्रसिद्धस्य भावेपि नातस्तत्सिद्धिः—भुक्त्युपसर्गाभाव इत्यादेरपि प्रमाणभूतागमस्य भावात् । अथ चर्यामार्गेण गत्वासौ भुङ्क्ते । तत्रापि किं गृहं गृहं गच्छत्येकस्मिन्नेव वा गृहे भिक्षालाभं ज्ञात्वा प्रवर्त्तते ? तत्राद्यपक्षे भिक्षार्थं

१ फलदानसमर्थानि न भवन्तीति चेत् ॥ २ तर्हीत्यध्याह्रियते ॥ ३ इति सत्तानामभावेन परस्यानिष्टापादनम् ॥ ४ नामगोत्रविशेषाणाम् ॥ ५ कर्मलेन ॥ ६ आदिना त्रिवेदम् ॥ ७ मतिज्ञानस्य रागादेश्च ॥ ८ इच्छा हि लोभभेदत्वेन मोहनीयस्य कार्यम् ॥ ९ नरस्य ॥ १० क्षुदादिषु स धर्मी ॥ ११ यस्य वेदनीयस्य ॥ १२ कार्यं क्षुत् ॥ १३ अनन्तसुखम् ॥ १४ न केनापि निराकर्तुं शक्यम् ॥ १५ वेदनीयम् ॥ १६ (नरे) ॥ १७ श्लेष्मादिलक्षणस्य कार्यस्य करणे अविकलमपि ॥ १८ अनन्तसुखम् ॥ १९ वेदनीयम् ॥ २० श्वेतपटस्य ॥ २१ भगवत ॥ २२ अर्थे ॥ २३ श्वेतपटमते प्रसिद्धस्यागमस्य ॥ २४ जैनागमस्य ॥

गृहं गृहं पर्यटतो जिनस्याज्ञानित्वप्रसङ्गः। द्वितीयपक्षे तु भिक्षाशुद्धिस्तस्य न स्यात्। कथं चासौ मत्स्यादीन् व्याधलुब्धकप्रभृतिभिः सर्वत्र सर्वदा व्याहन्यमाना-न्प्राणिनस्तेषां पिशितानि च तथाऽशुच्यादींश्चार्थान् साक्षात्कुर्वन्नाहारं गृह्णीयात्? अन्यथा निष्करुणः स्यात्। जीवानां हि वधं विष्ठादिकं च साक्षात्कुर्वन्तो व्रतशी-लविहीना अपि न भुञ्जते। भगवांस्तु व्रतादिसम्पन्नस्तत्साक्षात्कुर्वन् कथं भुञ्जीत? अन्यथा तेभ्योप्यसौ हीनसत्त्वः स्यात्। यदप्युच्यते—यत्किञ्चिद्दृष्टं शुद्धमशुद्धं तत्स्मरन्तो यथास्मदादयो भोजनं कुर्वन्ति तथा केवली साक्षात्कुर्वन्निति तदप्युक्तिमात्रम्। न ह्यस्मदादीनां परमचारित्रपदप्राप्तेनाशेषज्ञेन भगवता साम्यमस्ति। अस्मदादयोपि हि यथाकथञ्चित्किञ्चिदशुद्धं वस्तु दृष्टं स्मरन्तो भोजनपरित्यागेऽसमर्थास्तद्भुञ्जते तदा तद्दोषविशुद्ध्यर्थं गुरुवचनादात्मानं निन्दन्तः प्रायश्चित्तं कुर्वन्ति। ये तु तत्त्यागे समर्थाः पिण्डविशुद्धावुद्यतमनसो निर्वेदस्य परां काष्ठामापन्नास्त्यक्तशरीरापेक्षा जितजिव्हा अन्तरायविषये निपुणमतयस्ते स्मरन्तोपि न भुञ्जते। किञ्चासौ भोजनं कुर्वाणः किमेकाकी करोति शिष्यैर्वा परिवृतः? यदैकाकी पैश्चाल्लग्नान् शिष्यान्विनिवार्य श्रावकानां गृहे गत्वा भुङ्क्ते तर्हि दीनः स्यात्। अथ तैः परिवृतस्तर्हि सावद्यप्रसङ्गः। किञ्चासौ भुक्त्वा प्रतिक्रमणादिकं करोति वा न वा? करोति चेदवश्यं दोषवान् सम्भाव्यते—तत्करणान्यथानुपपत्तेः। न करोति चेत्तर्हि भुजिक्रियातः समुत्पन्नं दोषं कथं निराकुर्यात्? आहारकथामात्रेणापि ह्यप्रमत्तोपि सन् साधुः प्रमत्तो भवति, नार्हन्भुञ्जानोपीति श्रद्धामात्रम्। प्रमत्तत्वे चास्य श्रेणितः पतितत्वान्न केवलभाक्त्वम्। किमर्थं चासौ भुङ्क्ते? शरीरोपचयार्थं ज्ञानध्यानसंयमसंसिद्ध्यर्थं वा क्षुद्वेदनाप्रतीकारार्थं वा प्राणत्राणार्थं वा? न तावच्छरीरोपचयार्थं—लाभान्तरायप्रक्षयात्प्रतिसमयं विशिष्टपरमाणुलाभतस्तत्सिद्धेः। तदर्थं तद्ग्रहणे चासौ कथं निर्ग्रन्थः स्यात् प्राकृतपुरुषवत्? नापि ज्ञानादि-सिद्ध्यर्थं यतो ज्ञानं तस्याखिलार्थविषयमक्षयस्वरूपं संयमश्च यथाख्यातः सर्वदा विद्यते। ध्यानं तु परमार्थतो नास्ति निर्मनस्कत्वाद्योगनिरोधत्वेनोपचारतस्तत्रास्य सम्भ-वात्। नापि प्राणत्राणार्थमपमृत्युरहितत्वात्। नापि क्षुद्वेदनाप्रतीकारार्थमनन्तसुखवीर्ये भगवत्यस्याः सम्भवाभावस्योक्तत्वात्। ननु भगवतो भोजनाभावे कथमेकादश जिने परीषहा इत्यागमविरोधो न स्यात्? तदसत्तेषां तत्रोपचारेणैव प्रतिपादनात्। उपचारनिमित्तं च वेदनीयसद्भावमात्रम्। परमार्थतस्तु तत्र तेषां सद्भावे क्षुदादि-परीषहसद्भावाद्बुभुक्षावद्रोगवधतृणस्पर्शपरीषहसद्भावान्महद्दुःखं स्यात्। तथा च दुःखितत्वान्नासौ जिनोऽस्मदादिवत्। तथा भोजनं रसनेन शीतादिकं च स्पर्शनादि-नेन्द्रियेण यद्यसावनुभवेत्तर्हि भगवतो मतिज्ञानानुषङ्गः। अथ केवलज्ञानेन; तत्रापि सर्वं भोजनादिकं परशरीरस्थमप्यस्यानुपज्यते। न चात्मशरीरस्थमेवास्य तन्नान्यदि-त्यभिधातव्यं—भगवतो वीतमोहस्य स्वपरशरीरमतिविभागाभावात्। यच्चोपचारतोप्यस्यैकादश परीषहा न सम्भाव्यन्ते तत्र तन्निषेधपरत्वात् सूत्रस्य—एकेनाधिका

---

१ केनचित्प्रकारेण मार्गादिगमनलक्षणेन ॥ २ यतय ॥ ३ पृष्ठे ॥ ४ भगवतो भुक्तिक्रियातो दोष एव न सम्पद्यते इत्युक्ते आह ॥ ५ प्रमत्तो न भवतीति यावत् ॥ ६ प्राकृतो नीच ॥ ७ आयुषोऽपवर्तरहितत्वात् ॥ ८ जिने ॥ ९ द्रव्यरूपेण ॥ १० भोजन रसनेनानुभवेद्वा केवलज्ञानेन वेति विकल्प्य क्रमेण दूषयन्नाह ॥ ११ तर्हि ॥ १२ केवलज्ञानेन तत्राप्यनुभवोऽस्तीति भाव ॥ १३ (एकादश जिने इति सूत्रस्य जिननिष्ठैकादशपरीषहाणा निषेधपरत्वात्) ॥

न दश परीषहा जिने एकादश जिने, इति व्युत्पत्तेः । प्रयोगः । भगवान् क्षुदादिपरीषहरहितोऽनन्तसुखत्वात्सिद्धवत् । किञ्च भोजनं कुर्वाणो भगवान्किल लोकैर्नावलोक्यते चक्षुपेत्यभिधीयते भवता । तत्रादर्शनेऽयुक्तसेवित्वादेकान्तमाश्रित्य भुङ्क्ते इति कारणं वहलान्धकारस्थितभोजनं वा विद्याविशेषेण स्वस्य तिरोधानं वा ? तत्राद्यपक्षे पारदारिकवद्दीनैवद्धा दोषसम्भावनाप्रसङ्गः । अन्धकारस्तु न सम्भाव्यते तद्देहदीप्त्या तस्य निहतत्वात् । विद्याविशेषोपयोगे चास्य निर्ग्रन्थत्वाभावः । कथं चादृश्याय तस्मै दानं दातृभिर्दीयते ? अथातिशयविशेषः कश्चित्तस्य, येन भुञ्जानो नावलोक्यते तर्हि भोजनाभावलक्षण एवास्यातिशयोस्तु । किं मिथ्याभिनिवेशेन ? ततो जीवन्मुक्तस्यात्मनोऽनन्तचतुष्टयस्वभावत्वमिच्छता कवलाहाररहितत्वमेवैष्टव्यमित्यलमतिप्रसङ्गेन ।

ननु चानन्तचतुष्टयस्वरूपलाभो मोक्ष इत्ययुक्तं–बुद्ध्यादिविशेषगुणोच्छेदरूपत्वात्तस्य । तदुच्छेदे च प्रमाणं 'नवानामात्मविशेषगुणानां सन्तानोऽत्यन्तमुच्छिद्यते–सन्तानत्वात्प्रदीपसन्तानवत्' । न चायमसिद्धो हेतुः–पक्षे प्रवर्त्तमानत्वात् । नापि विरुद्धः–सपक्षे प्रदीपादौ सत्त्वात् । नाप्यनैकान्तिकः–पक्षसपक्षवद्विपक्षे परमाण्वादावप्रवृत्तेः । नापि कालात्ययापदिष्टो विपरीतार्थोपस्थापकयोः प्रत्यक्षागमयोरसम्भवात् । नापि सत्प्रतिपक्षः प्रतिपक्षसाधनाभावात् । ननु सन्तानोच्छेदरूपेपि मोक्षे हेतुर्वाच्यो निर्हेतुकविनाशानभ्युपगमादित्यप्यचोद्यं–तत्त्वज्ञानस्य विपर्ययज्ञानव्यवच्छेदक्रमेण निःश्रेयसहेतुत्वोपपत्तेः । दृष्टं च सम्यग्ज्ञानस्य मिथ्याज्ञानोच्छेदे शुक्तिकादौ सामर्थ्यम् । ननु चातत्त्वज्ञानस्यापि तत्त्वज्ञानोच्छेदे सामर्थ्यं दृश्यते–ज्ञानस्य ज्ञानान्तरविरोधित्वेन मिथ्याज्ञानोत्पत्तौ सम्यग्ज्ञानोच्छेदप्रतीतेरित्यप्ययुक्तं–यतो नानयोरुच्छेदमात्रमभिप्रेतम् । किं तर्हि ? सन्तानोच्छेदः । यथा च सम्यग्ज्ञानान्मिथ्याज्ञानसन्तानोच्छेदो नैवं मिथ्याज्ञानात्सम्यग्ज्ञानसन्तानस्य–अस्य सत्यार्थत्वेन वलीयस्त्वात् । निवृत्ते च मिथ्याज्ञाने तन्मूला रागादयो न सम्भवन्ति कारणाभावे कार्यानुत्पादात् । रागाद्यभावे तत्कार्या मनोवाक्कायप्रवृत्तिर्व्यावर्त्तते । तदभावे च धर्माधर्मयोरनुत्पत्तिः । आरब्धशरीरेन्द्रियविषयकार्ययोस्तु सुखदुःखफलोपभोगात्प्रक्षयः । अनारब्धतत्कार्ययोरप्यवस्थितयोस्तत्फलोपभोगादेव प्रक्षयः । तथा चागमः–नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति । अनुमानं च । पूर्वकर्माण्युपभोगादेव क्षीयन्ते कर्मत्वात्प्रारब्धशरीरकर्मवत् । न चोपभोगात्प्रक्षये कर्मान्तरस्यावश्यं

---

१ अन्ये ॥ २ मा दृष्ट्वा कश्चिद्भोजन याचिष्यत इति दीनवित्तल दोषो दीनचित्तस्य ॥ ३ व्यापारे ॥ ४ प्रपञ्चेन ॥ ५ बुद्धिसुखदु खेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारलक्षणानाम् ॥ ६ धर्माधर्माभ्या बुद्धिरुत्पद्यते बुद्धे संस्कार संस्कारादिच्छाद्वेषौ इच्छाद्वेषाभ्या प्रयत्नस्तस्मात्सुखदु खे भवत इति नवाना गुणाना सन्तान ॥ ७ सर्वथा ॥ ८ नित्ये ॥ ९ प्रतिपक्षसाधको हेतु सत्प्रतिपक्ष ॥ १० मिथ्या ॥ ११ सम्यग्ज्ञानान्मिथ्याज्ञानाभावस्तदभावाद्रागाद्यभावस्तदभावाच्च मनोवाक्कायप्रवृत्तिरूपप्रयत्नाभावस्तदभावाद्धर्माधर्मयोरभाव इति ॥ १२ द्विचन्द्रादिज्ञानस्य ॥ १३ एकचन्द्रज्ञानस्य ॥ १४ आमूलत सन्ततिच्छेदे एवाभिप्राय ॥ १५ स्रग्वनितादिक सुखहेतुरिति अहिकण्टकादिक दु खहेतुरिति च सम्यग्ज्ञानात् ॥ १६ स्रग्वनितादिक दु खहेतुरिति ज्ञानात् ॥ १७ धर्माधर्मयो (वस ) ॥ १८ प्रारब्ध शरीर येन तच्च तत्कर्म च ॥

भावात्संसारानुच्छेदः–समाधिबलादुत्पन्नतत्त्वज्ञानस्यावगतकर्मसामर्थ्योत्पादितयुगपदशेषशरीरद्वारावाप्ताशेषभोगस्योपात्तकर्मप्रक्षयात्, भाविकर्मोत्पत्तिनिमित्तमिथ्याज्ञानजनितानुसन्धानविकलत्वाच्च संसारोच्छेदोपपत्तेः । अनुसन्धानं हि रागद्वेषौ–अनुसन्धीयेते गतं चित्तमाभ्यामिति व्युत्पत्तेः । न च मिथ्याज्ञानाभावेभिलापस्यैवासम्भवाद्भोगानुपपत्तिः–तदुपभोगं विना हि कर्मणां प्रक्षयानुपपत्तेः–तत्त्वज्ञानिनोपि कर्मक्षयार्थितया प्रवृत्तेर्वैद्योपदेशेनातुरवदौषधाचरणे । यथैव ह्यातुरस्यानभिलषितेप्यौषधाचरणे व्याधिप्रक्षयार्थं प्रवृत्तिः–तद्व्यतिरेकेण तत्प्रक्षयानुपपत्तेस्तथात्रापि । ननु तत्त्वज्ञानिनां तत्त्वज्ञानादेव सञ्चितकर्मप्रक्षय इत्यप्यागमोस्ति 'यथैधांसि समिद्धोग्निर्भस्मसात्कुरुते क्षणात् । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति । तथा च विरुद्धार्थत्वादुभयोरेकत्रार्थे कथं प्रामाण्यमित्ययुक्तं–तत्त्वज्ञानस्य साक्षात्तद्विनाशे व्यापाराभावात् । तद्धि कर्मसामर्थ्यावगमतोऽशेषशरीरोत्पत्तिद्वारेणोपभोगात्कर्मणा विनाशे व्याप्रियते इत्यग्निरिवोपचर्यते ज्ञानमित्यागमव्याख्यानादविरोधः । न चैतद्वाच्यं–तत्त्वज्ञानिनां कर्मविनाशस्तत्त्वज्ञानादितरेषां तूपभोगादिति–ज्ञानेन कर्मविनाशे प्रसिद्धोदाहरणाभावात्, फलोपभोगात्तु तत्प्रक्षये तत्सद्भावात् । अन्ये तु मिथ्याज्ञानजनितसंस्कारस्य सहकारिणोऽभावाद्विद्यमानान्यपि कर्माणि न जन्मान्तरे शरीराद्यारम्भकाणीति मन्यन्ते तेषामनुत्पादितकार्यस्यादृष्टस्याप्रक्षयान्नित्यत्वप्रसङ्गः । अनागतयोर्धर्माधर्मयोरुत्पत्तिप्रतिषेधे तत्त्वज्ञानिनो नित्यनैमित्तिकानुष्ठानं किमर्थमिति चेत् प्रत्यवायपरिहारार्थम् । न च मिथ्याज्ञानाभावे दुष्कर्मणोऽभावात् कस्य परिहारार्थं तदित्यभिधातव्यं–यतो मिथ्याज्ञानाभावे निषिद्धाचरणनिमित्तस्यैव प्रत्यवायस्याभावो, न विहितानुष्ठाननिमित्तस्य–अकुर्वन्विहितं कर्म प्रत्यवायेन लिप्यते इत्यागमात् । ततस्तदनुष्ठानं तत्परिहारार्थं युक्तम् । तदुक्तं "नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया । मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः ॥१॥ नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ॥२॥ अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः । काम्ये निषिद्धे च परं प्रवृत्तिप्रतिषेधतः ॥३॥" स्वर्गकाम इत्याद्यागमजनितकामेन यागाभिलापेण निर्वर्त्यं हि काम्यमग्निष्टोमादि । कैवल्यं तु सकलविशेषगुणोच्छेदविशिष्टात्मस्वरूपं निर्वाणम् । न च विपर्ययज्ञानप्रध्वंसादिक्रमेण तद्विशिष्टात्मस्वरूपनिर्वाणस्य तत्त्वज्ञानकार्यत्वादनित्यत्वं वाच्यं–यतो विशेषगुणोच्छेदस्यानित्यत्वमापाद्यते तद्विशिष्टात्मनो वा । न तावद्विशेषगुणोच्छेदस्य–अस्य प्रध्वं-

१ ध्यान ॥ २ नु ॥ ३ पूर्वोपात्त ॥ ४ सम्बध्यते ॥ ५ अनेन पूर्वं ममेदमिव दु न्वादिकं दत्तमिति ॥ ६ बुद्धि ॥ ७ तत्त्वज्ञानिन पुरुषस्य ॥ ८ कर्मफलस्य ॥ ९ कर्मफलोपभोगे ॥ १० उक्तमेव समर्थयति ॥ ११ कर्मफलोपभोगे तत्त्वज्ञानिन ॥ १२ दीप्त ॥ १३ तथाप्यागमसद्भावे च ॥ १४ आगमयो ॥ १५ मोक्षोपायलक्षणे ॥ १६ अग्रे वक्ष्यमाणम् ॥ १७ अतत्त्वज्ञानिनाम् ॥ १८ कुत ? ॥ १९ प्रारब्धशरीरकर्मवदिति ॥ २० तत्त्वज्ञाने समुत्पन्ने सतीति शेष ॥२१ भावनारूपस्य ॥२२ इन्द्रियविषयादेश्च ॥२३ नैयायिकविशेषा ॥२४ धर्माधर्मस्य ॥२५ ततोऽनुभवनप्रकारेणैव मोक्षोऽभ्युपगन्तव्य ॥२६ सति । प्रागुक्तन्यायेन ॥२७ नरस्य ॥२८ दुष्कर्म ॥ २९ जैनादिना ॥ ३० विप्रवधादि ॥ ३१ नित्यनैमित्तिकादे ॥ ३२ कर्मणा ॥ ३३ काम्य याग ॥ ३४ निषिद्ध विप्रवधादि ॥ ३५ कर्मणो ॥३६ अनुष्ठाने ॥ ३७ मनुष्य ॥ ३८ विस्तारयेत् ॥ ३९ उत्कृष्टविज्ञान ॥ ४० मोक्षम ॥४१ ( मूलपाठस्त्वत्र 'केवल' इति । अनेन त्रिमात्रिकाक्षरेण छन्दोभङ्ग स्यादिति 'परं' शब्दो नियोजित । केवलशब्दस्य पर्यायोऽर्थ टिप्पण्या लिखितश्च ) ॥ ४२ निष्पाद्यमनुष्ठानम् ॥ ४३ मिथ्याज्ञान ॥

साभावरूपत्वात् । कार्यवस्तुनो ह्यनित्यत्वं प्रसिद्धम् । तद्विशिष्टात्मनश्च वस्तुत्वेपि कार्यत्वाभावान्नानित्यत्वम् । न च बुद्ध्यादिविनाशे गुणिनस्तथाभावो युक्तस्तयोरत्यन्तभेदात् । तत्तादात्म्ये त्वयं दोषः स्यादेव ।

अथ मोक्षावस्थायां चैतन्यस्याप्युच्छेदान्न कृतबुद्धयस्तत्र प्रवर्त्तन्ते इत्यानन्दरूपो मोक्षोऽभ्युपगन्तव्यः—आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते इत्यागमात् । आत्मा सुखस्वभावोऽत्यन्तप्रियबुद्धिविषयत्वादनन्यपरतयोपादीयमानत्वाच्च । यद्यदेवंविधं तत्तत्सुखस्वभावं यथा वैषयिकं सुखम् । तथा चात्मा एवंविधस्तस्मात्सुखस्वभाव इत्यनुमानाच्चास्यानन्दस्वभावताप्रतीतिरित्यप्यसाम्प्रतं—यतस्तत्सुखं नित्यमनित्यं वा? न तावदनित्यं तत्स्वभावतयात्मनोप्यनित्यत्वप्रसङ्गात् । नित्यं चेत्तत्संवेदनमपि नित्यमनित्यं वा? यदि नित्यं मुक्तेतरावस्थयोरविशेषप्रसङ्गस्तत्सुखसंवेदनयोर्नित्यत्वेनोभयत्र सत्त्वाविशेषात् । स्मरणानुपपत्तिश्चानुभवस्यैवावस्थानात् । संस्कारानुपपत्तिश्चानुभवस्य निरतिशयत्वात् । करणजन्यसुखेन चास्य संसारावस्थायां साहचर्यग्रहणप्रसङ्गात् सुखद्वयोपलम्भः सदा स्यात् । अथ धर्माधर्मफलेन सुखादिना शरीरादिना वा नित्यसुखसंवेदनस्य प्रतिबद्धत्वेनानुभवाभावान्न मुक्तेतरावस्थयोरविशेषः सदा सुखद्वयोपलम्भो वा । तदयुक्तं—शरीरादेः सुखार्थत्वेन तत्प्रतिबन्धकत्वायोगात् । न हि यद्यदर्थं तत्तस्यैव प्रतिबन्धकं युक्तम् । नापि वैषयिकसुखाद्यनुभवेन तत्प्रतिबन्धः । तेन हि नित्यसुखस्य तदनुभवस्य वा प्रतिबन्धोऽनुत्पत्तिलक्षणो विनाशलक्षणो वा न युक्तः—द्वयोरपि नित्यत्वाभ्युपगमात् । न च संसारावस्थायां बाह्यविषयव्यासङ्गाद्विद्यमानस्याप्यनुभवस्यासंवेदनं, तदभावात्तु मोक्षावस्थायां संवेदनमित्यभिधातव्यं—तदनुभवस्य नित्यत्वेन व्यासङ्गानुपपत्तेः । आत्मनो हि व्यासङ्गो रूपादौ विषये ज्ञानोत्पत्तौ विषयान्तरे ज्ञानानुत्पत्तिरिन्द्रियस्याप्येकस्मिन्विषये ज्ञानजनकत्वेन प्रवृत्तस्य विषयान्तरे ज्ञानाजनकत्वम् । स चात्रानुपपन्नः—सुखवत्तज्ज्ञानस्यापि सदा सत्त्वात् । शरीरादेस्तु प्रतिबन्धकत्वे तदपहर्तुर्हिंसाफलं न स्यात्प्रतिबन्धकविघातकारकस्योपकारकत्वेन लोके प्रतीतेः । अथानित्यं तत्संवेदनं तदोत्पत्ति-

१ निस्स्वरूपत्वात् ॥ २ गुणगुणिनो ॥ ३ गुणगुणिनो ॥ ४ गुणविनाशे गुणिविनाशलक्षण ॥ ५ वेदान्ती भास्करीय ॥ ६ बुद्धे ॥ ७ विनाशात् ॥ ८ प्रेक्षावन्त ॥ ९ वैशेषिकेण ॥ १० आत्मन ॥ ११ व्यक्ती क्रियते ॥ १२ ससारिमुक्तात्मनो साधारणमनुमानम् ॥ १३ पुत्रादिशरीरेण व्यभिचारपरिहारार्थमत्यन्तपदोपादानम् ॥ १४ आत्मन ॥ १५ वनिताशरीरेण व्यभिचारपरिहारार्थमनन्यपरतयेत्युक्तम् ॥ १६ स्वप्रधानत्वेनेत्यर्थ ॥ १७ अनन्यपरतयोपादीयमानत्वादिति कोर्थ ? आत्मन आत्मनि लीनतया स्वस्वरूपस्योपादीयमानत्व आश्रयमाणत्व यस्यात्मन इति ॥ १८ वैषयिकसुखप्रकारेण ॥ १९—२० ससारावस्थाया मुक्तावस्थाया च ॥ २१ अस्ति च ससारावस्थाया सुखस्मरणम् ॥ २२ प्रत्यक्षस्य ॥ २३ प्रत्यक्षविशेषो धारणाज्ञान सस्कार ॥ २४ अस्ति च सस्कारस्योत्पत्ति समारावस्थायाम् ॥ २५ भावरूपस्य ॥ २६ नित्यसुखस्य ॥ २७ नित्यानित्यसुखद्वयस्य ॥ २८ यदा यदा वैषयिक सुखमुत्पद्यते तदा तदा द्वयोरुपलम्भ इत्यर्थं ॥ २९ कार्येण ॥ ३० दु खादिना च ॥ ३१ इन्द्रियादिना च ॥ ३२ प्रतिहतत्वेन ॥ ३३ अत्रार्थं प्रयोजनम् ॥ ३४ भोगायतन शरीरमिति वचनात् ॥ ३५ प्रतिपक्षम् ॥ ३६ वनितादिवत ॥ ३७ नित्यसुखसवेदनयो ॥ ३८ वेदान्तिना ॥ ३९ नित्यसुखानुभवस्य ॥ ४० वेदान्तिना ॥ ४१ आत्मन इन्द्रियस्य वा ॥ ४२ तत्समये ॥ ४३ व्यासक्त ॥ ४४ रूपे ॥ ४५ रसे ॥ ४६ नित्यसुखे ॥ ४७ सुखतत्सवेदनयो ॥ ४८ नरस्य ॥

कारणं वाच्यम् । अथ योगजधर्मापेक्षः पुरुषान्तःकरणसंयोगोऽसमवायिकारणम् । ननु योगजधर्मस्य मुक्तावसम्भवात् कथमसौ तत्संयोगेनापेक्ष्येत ? यतस्तत्र ततस्तदुत्पत्तिः स्यात् । अथाद्यं योगजधर्मापेक्षान्तःकरणसंयोगो विज्ञानं जनयति तच्चापेक्ष्योत्तरोत्तरं ज्ञानम् । तदप्ययुक्तम् । न हि शरीरसम्बन्धानपेक्षं विज्ञानमेवान्तःकरणसंयोगस्य ज्ञानोत्पत्तौ सहकारिकारणं दृष्टम् । न च दृष्टविपरीतं शक्यं कल्पयितुमतिप्रसङ्गात् । आकस्मिकं तु कार्यं न भवत्येवाऽहेतोः–सर्वत्र सर्वदा भावप्रसङ्गात् । किञ्च यथा मुक्तावस्थायामनित्यसुखमतिक्रम्य नित्यं परिकल्प्यते तथा नित्यत्वधर्माधिकरणं शरीरादिकमपि परिकल्पनीयम् । कार्यत्वात् तस्य कथं नित्यत्वधर्माधिकरणत्वं–दृष्टविरोधादप्रमाणकत्वाच्चेत्यन्यत्रापि समानम् । न खलु नित्यसुखसाधकत्वेन प्रत्यक्षानुमानागमानां मध्ये किञ्चित्प्रवर्त्तते अस्मदादीन्द्रियजप्रत्यक्षस्यात्र व्यापारानुपलम्भात् । योगिप्रत्यक्षं त्वेवं प्रवर्त्ततेऽन्यथा वेत्यद्यापि विवादपदापन्नम् । यच्चात्मा सुखस्वभाव इत्यनुमानं तदपि न नित्यसुखस्वभावतासाधकं–सुखस्वभावतामात्रस्यैवातः प्रसिद्धेः । किञ्च सुखस्वभावत्वं सुखत्वजातिसम्बन्धित्वम् । तन्नात्मनि सम्भाव्यते–गुणे एवास्योपलम्भात् । न ह्येका काचिज्जातिर्द्रव्यगुणयोः साधारणोपलभ्यते । अथ सुखाधिकरणत्वम् । तन्न–अस्य नित्यानित्यविकल्पानुपपत्तेः । तथा सुखत्वस्य सुखस्य वाधिकरणतायां तज्ज्ञानस्यापि नित्यानित्यविकल्पः समानः । साधनं चात्यन्तप्रियबुद्धिविषयत्वमनन्यपरतयोपादीयमानत्वं चानैकान्तिकत्वादसाधनं—दुःखाभावेपि भावात् । अनन्यपरतयोपादीयमानत्वं चासिद्धम् । न ह्यात्माऽन्यार्थं नोपादीयते–सुखार्थमस्योपादानात् । अत्यन्तप्रियबुद्धिविषयत्वमप्यसिद्धं–दुःखितायामप्रियबुद्धेरपि भावात् । आनन्दं ब्रह्मणो रूपमित्याद्यागमो नित्यसुखसद्भावावेदक इत्यप्यसमीचीनं–तस्यैतदर्थत्वासिद्धेः । आनन्दशब्दो ह्यात्यन्तिकदुःखाभावे प्रयुक्तत्वाद्गौणः । दृष्टश्च दुःखाभावे सुखशब्दप्रयोगः । यथा भाराक्रान्तस्य ज्वरादिसन्तप्तस्य वा तदपाये । किञ्चात्मस्वरूपान्नित्यसुखमव्यतिरिक्तं तद्व्यतिरिक्तं वा ? प्रथमपक्षे आत्मस्वरूपवत् सर्वदा सुखसंवित्तिप्रसङ्गाद्बद्धमुक्तयोरविशेषप्रसङ्गः । अनाद्यऽविद्याच्छादितत्वान्न स्वप्रकाशानन्दसंवित्तिः संसारिण इत्यप्यपेशलम् । आच्छाद्यते ह्यप्रकाशस्वरूपं वस्तु । यत्तु प्रकाशस्वरूपं तत्कथमन्येनाच्छाद्येत ? मेघादिना त्वादित्यादेराच्छादनं युक्तं–तस्यातोऽर्थान्तरत्वान्मूर्त्तस्य मूर्त्तेनाच्छादनापत्तेः । अविद्यायास्तु सत्त्वान्यत्वाभ्यामनिर्वचनीयतया तुच्छस्वभावत्वान्न स्वप्रकाशानन्दाच्छादकत्वम् । त-

---

१ वेदान्तिना ॥ २ मन ॥ ३ आत्मा तु समवायिकारणम् ॥ ४ नित्यसुखसवेदनस्य ॥ ५ वैशेषिक ॥ ६ नित्यसुखसवेदनस्य ॥ ७ नित्यसुखसवेदनम् ॥ ८ आत्मान्त करणसयोगो जनयति ॥ ९ किन्तु शरीरसम्बन्धापेक्ष सद्विज्ञान सहकारिकारण दृष्टम् ॥ १० सौगताद्यैरपि क्षणिकत्वादिसिद्धिप्रसङ्गात् ॥ ११ वेदान्तिना भवता ॥ १२ इन्द्रिय च ॥१३ नित्यसुखे ॥१४ नित्यसुखग्राहकत्वेन ॥१५ नित्यसुखाग्राहकत्वेन ॥ १६ जाति =सामान्यम् ॥ १७ निश्चीयते ॥ १८ सुखलक्षणे ॥ १९ सुखाधिकरणत्वस्य सुखस्वभावत्वस्य ॥ २० अन्यलीनतया ॥ २१ वैशेषिक ॥ २२ नित्य चेन्मुक्तेतरावस्थाया अविशेषप्रसङ्ग इत्यादि दूषणम् । अनित्य चेदुत्पत्तिकारण वाच्यमित्यादि दूषणम् ॥ २३ तथा दूषणान्तरसमुच्चये ॥ २४ आत्मन ॥ २५ दु खाभावो हि त्यक्तभारस्यात्यन्तप्रियबुद्धिविषय अनन्यपरतयोपादीयमानश्च । न त्वसौ सुखस्वभावस्तस्य तुच्छरूपत्वात् ॥ २६ अभावस्य नि स्वरूपत्वान्नैयायिकादिमते ॥ २७ सुखलीनतयाऽह सुखीत्युल्लेखेन ॥ २८ अवस्थायाम् ॥ २९ आगमे ॥ ३० बद्ध ससारी ॥ ३१ ब्रह्मण सकाशात् ॥ ३२ विद्यमानत्वाविद्यमानत्वाभ्याम् ॥

न्नाद्यः पक्षो युक्तः । द्वितीयपक्षोऽप्ययुक्तो नित्यसुखस्यात्मनोऽर्थान्तरस्य प्रत्यक्षादेः प्रतिपादकस्य प्रतिषिद्धत्वाद्बाधकस्य च प्रदर्शितत्वात् । तन्न परमानन्दाभिव्यक्तिर्मोक्षः । नापि[1] विशुद्धज्ञानोत्पत्तिः[2]—रागादिमतो विज्ञानात्तद्रहितस्यास्योत्पत्तेरयोगात् । यथैव हि बोधाद्[3] बोधरूपता ज्ञानान्तरे[4] तथा रागादेरपि स्यात्तादात्म्यात्[5] । अन्यथा[6] तादात्म्याभावः स्यात् । न च बोधादेव बोधरूपतेति प्रमाणमस्ति विलक्षणादपि[7] कारणाद्विलक्षणकार्यस्योत्पत्तिदर्शनात्[8] । बोधस्य[9] च बोधान्तरहेतुत्वे पूर्वकालभावित्वं समानजातीयत्वमेक[10]सन्तानत्वं वा न हेतुः—व्यभिचारात् । तथा हि । पूर्वकालभावित्वं तत्[11]समानक्षणैः[12] समानजातीयत्वं[13] च सन्तानान्तरज्ञानै[14]र्व्यभिचारि । तेषां हि पूर्वकालभावित्वे तत्[15]समानजातीयत्वे च सत्यपि न विवक्षित[16]ज्ञानहेतुत्वम् । एकसन्तानत्वं चान्त्य[17]ज्ञानेन[18] व्यभिचारि । अथ नेष्यत[19] एवान्त्यज्ञानं—सर्वदा[20]ऽऽरम्भात्[21] । तथा हि । मरणशरीरज्ञानमपि ज्ञानान्तर[22]हेतुर्जाग्रदवस्थाज्ञानं[23] च सुषुप्तावस्थाज्ञानस्येति[24] । नन्वेवं मरणशरीरज्ञानस्यान्तराभव[25]शरीरज्ञानहेतुत्वे गर्भशरीरज्ञानहेतुत्वे वा सन्तानान्तरेपि ज्ञानजनकत्वं किन्न स्यान्नियतहेतोरभावात् । अथेष्यत[26] एवोपाध्यायज्ञानं शिष्यज्ञानस्य हेतुः । अन्य[27]स्य[28] कस्मान्न भवति? [29][30][31]कर्मवासना नियामिका[32] चेन्न[33]—तस्या ज्ञानव्यतिरेकेणासम्भवात् । तत्[34]तादात्म्ये हि विज्ञानं बोधरूपतया अविशिष्टं[35][36] बोधाच्च बोधरूपतेत्य[37]विशेषेण[38] ज्ञानं[39] विदध्यात्[40] । सुषुप्तावस्थाज्ञानस्य जाग्रदवस्थाज्ञानं कारणमित्यप्यसम्भाव्यं सुषुप्तावस्थायां च ज्ञानाभ्युपगमे[41] जाग्रदवस्थातो[42] विशेषो न स्यादुभय[43]त्रापि स्वसंविदितज्ञानसद्भावाविशेषात् । मिद्धेना[44]भिभूतत्वं[45] विशेष इत्यप्यसत्तस्यापि तद्धर्मतया[46] तादात्म्येनाभिभावकत्वायोगात् । तद्व्यतिरेके[47] तु रूपवेदना[49]दिपदार्थस्वरूपव्यतिरिक्तं तत्स्वरूपं निरूप्यताम् । अभिभवश्च यदि विनाशः, कथं तत्र[50] ज्ञानस्य सत्त्वं विनाशस्य वा निर्हेतुकत्वम्? अथ तिरोभावो, न विज्ञानसत्त्वैव संवेदनमित्यभ्युपगमे तस्या[51]नुपपत्तेः । अतः सुषुप्तावस्थायां विज्ञानासत्त्वेनान्त्यज्ञानसद्भावादेकसन्तानत्वं व्यभिचारीति । यच्चोच्यते[52] । विशिष्ट-

---

१ सौगतमाशङ्क्य ॥ २ मोक्ष ॥ ३ पूर्वज्ञानात् ॥ ४ उत्तरज्ञाने ॥ ५ बोधस्य रागादिना ॥ ६ रागादिर्यदि न स्यात् ॥ ७ बीजादे ॥ ८ अङ्कुरादे ॥ ९ प्रथमस्य ॥ १० एकात्मत्वम् ॥ ११ उत्तरज्ञानजनकप्राक्तनबोधस्य ॥ १२ पुरुषान्तरबोधैः पूर्वकालभाविभिः ॥ १३ ज्ञानत्वेन समानजातीयत्वम् ॥ १४ पुरुषान्तरबोधैः पूर्वकालभाविभिः ॥ १५ पूर्वज्ञानस्य ॥ १६ विवक्षितमुत्तरम् ॥ १७ बौद्धानां मते योगिनां मरणे चरमचित्तमुत्तरचित्तं नोत्पादयतीति भाव ॥ १८ योगिचरमचित्तेन ॥ १९ मया ॥ २० पूर्वविज्ञानेन विज्ञानान्तरस्य ॥ २१ जननात् ॥ २२ गर्भशरीरज्ञानस्य ॥ २३ (जाग्रदवस्थाज्ञानवदिति सुष्ठुतरम्) ॥ २४ जैनमतमङ्गीकृत्य यौगं प्रति सौगतेनोक्तम् ॥ २५ मध्यभवशरीरस्य कार्मणस्य ॥ २६ बौद्धेन ॥ २७ वैशेषिक ॥ २८ शिष्यात् ॥ २९ बौद्ध ॥ ३० वासना ज्ञानरूपैव ॥ ३१ अदृष्ट क्रिया च ॥ ३२ कथं नियामिका? मरणशरीरज्ञानादन्तराभवशरीरज्ञानं गर्भशरीरज्ञानं चोत्पद्यते उपाध्यायज्ञानाच्छिष्यज्ञानं चेति ॥ ३३ वैशेषिक ॥ ३४ विज्ञानस्य ॥ ३५ साधारणम् ॥ ३६ विशेषरहितम् ॥ ३७ हेतो ॥ ३८ सन्तानान्तरेपि ॥ ३९ उत्तरम् ॥ ४० पूर्वज्ञानं कर्तृ ॥ ४१ बौद्धेन त्वया ॥ ४२ सुषुप्तावस्थाजाग्रदवस्थयो ॥ ४३ सुषुप्तावस्थाजाग्रदवस्थयो ॥ ४४ अतिजाड्येनातिनिद्रया वा ॥ ४५ पराभव ॥ ४६ बौद्धानां मते यथा नैर्मल्यादिगुणो ज्ञानस्य तथा मिद्धादिदोषोपि ज्ञानस्य धर्म इति ॥ ४७ ज्ञानात् ॥ ४८ मिद्धस्य ॥ ४९ आदिशब्देन विज्ञानसंज्ञासंस्कारा गृह्यन्ते ॥ ५० सुषुप्तावस्थायाम् ॥ ५१ विज्ञानस्य ॥ ५२ बौद्धेन ॥

भावनाभ्यासवशाद्रागादिविनाशस्तदप्यसङ्गतं निर्हेतुकत्वाद्विनाशस्य, अभ्यासानुपपत्तेश्च । अभ्यासो ह्यवस्थिते ध्यातर्यतिशयाधायकत्वेन स्यान्न क्षणिकज्ञानमात्रे । न च सन्तानापेक्षयाऽतिशयो युक्तस्तस्यावास्तवत्वात्, अविशिष्टाद्विशिष्टोत्पत्तेरयोगाच्च । अविशिष्टाद्धि पूर्वज्ञानादुत्तरोत्तरं सातिशयं कथमुत्पद्येत ? तत्कथं योगिनां सकलकल्पनाविकलज्ञानसम्भव इति ? यच्च सन्तानोच्छित्तिर्निःश्रेयसमिति मतं तत्र निर्हेतुकतया विनाशस्योपायवैयर्थ्यमयत्नसिद्धत्वादिति । अन्ये त्वनेकान्तभावनातो विशिष्टप्रदेशेऽक्षयशरीरादिलाभो निःश्रेयसमिति मन्यन्ते । तथा हि । नित्यत्वभावनायां स्नेहोऽनित्यत्वे च द्वेष इत्युभयपरिहारार्थमनेकान्तभावना । इत्यप्यपरीक्षिताभिधानं मिथ्याज्ञानस्य निःश्रेयसकारणत्वायोगात् । अनेकान्तज्ञानं मिथ्यैव विरोधवैयधिकरण्याद्यऽनेकबाधकोपनिपातात् । स्वदेशादिषु सत्त्वं परदेशादिषु चासत्त्वमितरेतराभावादिष्यते एव । स्वकार्येषु कर्तृत्वं कार्यान्तरेषु चाकर्तृत्वं न प्रतिषिध्यते—यद्यस्यान्वयव्यतिरेकाभ्यामुत्पत्तौ व्याप्रियमाणमुपलब्धं तत्तस्य कारणं नान्यस्येत्यभ्युपगमात् । तथा मुक्तावप्यनेकान्तो न व्यावर्तेत इति स एव मुक्तः संसारी चेति प्रसक्तम् । तथाऽनेकान्तेप्यनेकान्तप्रसङ्गात्सदसन्नित्यानित्यादिरूपव्यतिरिक्तं रूपान्तरमपि प्रसज्येतेति । अन्ये त्वात्मैकत्वज्ञानात्परमात्मनि लयः सम्पद्यते इति ब्रुवते । तथा हि । आत्मैव परमार्थसंस्ततोऽन्यत्र भेदे प्रमाणाभावात् । प्रत्यक्षं हि पदार्थानां सद्भावस्यैव ग्राहकं न भेदस्येत्यविद्यासमारोपितो भेदः । तेप्यतत्त्वज्ञा—आत्मैकत्वज्ञानस्य मिथ्यारूपतया निःश्रेयसाऽसाधकत्वात् । तन्मिथ्यात्वं चार्थानां प्रमाणतो वास्तवभेदप्रसिद्धेः । एवं शब्दाद्वैतज्ञानमपि मिथ्यारूपतया निःश्रेयसाप्रसाधकं द्रष्टव्यम् । निरस्तं चात्माद्वैतं शब्दाद्वैतं च प्राक्प्रबन्धेनेत्यलमतिप्रसङ्गेन । प्रकृतिपुरुषविवेकोपलम्भः स्वरूपे चैतन्यमात्रेऽवस्थानलक्षणनिःश्रेयसस्य साधनमित्यन्ये । तथा हि । पुरुषार्थसम्पादनाय प्रधानं प्रवर्त्तते । पुरुषार्थश्च द्वेधा शब्दादिविषयोपलब्धिः प्रकृतिपुरुषविवेकोपलम्भश्च । सम्पन्ने हि पुरुषार्थे चरितार्थत्वात्प्रधानं न शरीरादिभावेन परिणमते । विज्ञानं वा दुष्टतया कुट्टिनीस्त्रीवद्भोगसम्पादनाय पुरुषं नोपसर्पतीत्यप्यसाम्प्रतं—प्रधानासत्त्वस्य प्रागेवोक्तत्वात् । सति हि प्रधाने पुरुषस्य तद्विवेकोपलम्भः स्यात् । अस्तु वा तत्तथापि पुरुषस्यं निमित्तमनपेक्ष्य तत्प्रवर्त्ततापेक्ष्य वा ? न तावदनपेक्ष्य मुक्तात्मन्यपि शरीरादिसम्पादनाय तत्प्रवृत्तिप्रसङ्गात् । अथापेक्ष्य प्रवर्त्तते । किं तदपेक्ष्यम् ? विवेकानुपलम्भोऽदृष्टं वा ? न तावद्विवेकानुपलम्भः—तस्य विवेकोपलम्भविनष्टत्वेन मुक्तात्मन्यपि सम्भवात् ।

१ क्रिय ॥ २ रागादिरहितत्वेन ॥ ३ विशुद्धज्ञानोत्पत्ते ॥ ४ क्रिय ॥ ५ निर्विशेषस्य ॥ ६ योगाचारस्य ॥ ७ ध्यानादे ॥ ८ विनाशस्य ॥ ९ जैना ॥ १० मोक्षशिलोपरि ॥ ११ स्वरूपदेहो वा ॥ १२ आदिशब्देन ज्ञानादि ॥ १३ रोद्ध ॥ १४ युक्ता ॥ १५ वैशेषिकेणापि मया ॥ १६ कारणम् ॥ १७ कार्यस्य ॥ १८ दूषणान्तरम् ॥ १९ सत्त्वे सत्त्वमसत्त्व चेत्यनेन प्रकारेण ॥ २० ब्रह्माद्वैतवादिन ॥ २१ प्रवेश ॥ २२ मोक्षम् ॥ २३ निर्विकल्पकम् ॥ २४ घटपटादीनाम् ॥ २५ हेतो ॥ २६ मिथ्याज्ञानेन ॥ २७ कल्पित ॥ २८ घटपटादीनाम् ॥ २९ प्रत्यक्षादे ॥ ३० परमार्थ ॥ ३१ वास्तवभेदसिद्धिप्रकारेण ॥ ३२ अद्वैतनिराकरणस्य ॥ ३३ का ॥ ३४ भेदभावनाज्ञानम् ॥ ३५ प्रधान प्रति ॥ ३६ भेदभावनाभाव ॥ ३७ भेदभावनाया योग्यवस्थाया सम्भवात् । मुक्त्यवस्थाया तु तस्या विनाशात्प्रयोजनाभावात ॥

न चानुत्पत्तिविनाशयोरसत्त्वेन विशेषं पश्यामः। द्वितीयविकल्पोप्ययुक्तोऽदृष्टस्यापि प्रधाने शक्तिरूपतया व्यवस्थितस्योभयत्राविशेषात्। दुष्टतया च विज्ञातं प्रधानं पुरुषं नोपसर्पतीति चायुक्तं तस्याचेतनतयाऽहमनेन दुष्टतया विज्ञातमिति ज्ञानासम्भवात्। ततः पूर्ववत्प्रवृत्तिरविशेषेणैव स्यात्। इत्यलमतिप्रसङ्गेन। तदा द्रष्टुः स्वरूपेऽवस्थानं मोक्ष इति चाभ्युपगतमेव विशेषगुणरहितात्मस्वरूपे तस्यावस्थानाभ्युपगमात्। चिद्रूपेऽवस्थानमित्येतत्तु न घटतेऽनित्यत्वेन चिद्रूपताया विनाशात्। न चाक्षाद्यन्वयव्यतिरेकानुविधायिन्यास्तस्या नित्यत्वे प्रमाणमस्ति। आत्मस्वरूपतास्तीति चेन्ननु चिद्रूपतात्मनोऽभिन्ना भिन्ना वा स्यात्? अभेदे पर्यायमात्रमात्मा चिद्रूपता चेति। तस्य च नित्यत्वाभ्युपगमात् सिद्धसाध्यता। भेदे तु संयोगादिभिरनैकान्तिकत्वं तेषामात्मधर्मत्वेपि नित्यत्वाभावात्। गुणगुणिनोश्च तादात्म्यविरोधादित्युपरम्यते। ततो बुद्ध्यादिविशेषगुणोच्छेदविशिष्टात्मस्वरूप एव मोक्षस्तत्त्वज्ञानादिति स्थितम्।

अत्र प्रतिविधीयते। यत्तावदुक्तं नवानामात्मविशेषगुणानां सन्तानोत्यन्तमुच्छिद्यते। तत्रात्मनो भिन्नानां बुद्ध्यादिविशेषगुणानामात्मन्येव समवायादिना वृत्त्यसिद्धेः प्रागेवोक्तत्वात् कथमात्मविशेषगुणानां सन्तानः सिद्धो यतः हेतोराश्रयासिद्धिर्न स्यात्? तथा तेषां परेणास्वसंविदितत्वेनाभ्युपगमात्। ज्ञानान्तरग्राह्यत्वे चानवस्थादिदोषप्रसक्तेरज्ञातस्य च सत्त्वाप्रसिद्धेः पुनरप्याश्रयासिद्धत्वम्। आत्मनोऽभिन्नानां तत्साधने तु तस्याप्यत्यन्तोच्छेदप्रसङ्गात् कस्यासौ मोक्षः? कथञ्चिदभेदस्तु नाभ्युपगम्यते। अभ्युपगमे वा नात्यन्तोच्छेदसिद्धिरित्यनन्तरं वक्ष्यामः। सन्तानत्वं च हेतुः सामान्यरूपं विशेषरूपं वा? सामान्यरूपं चेत्परसामान्यरूपमपरसामान्यरूपं वा? प्रथमपक्षे गगनादिनानेकान्तोऽत्यन्तोच्छेदाभावेप्यत्र हेतोर्वर्तनात्। सत्तासामान्यरूपत्वे च सन्तानत्वस्य सत्सदिति प्रत्ययहेतुत्वमेव स्यान्न पुनः सन्तानप्रत्ययहेतुत्वम्। अथ विशेषगुणाश्रिता जातिः सन्तानत्वं तर्हि द्रव्यविशेषे प्रदीपदृष्टान्ते तस्याऽसम्भवात्साधनविकलो दृष्टान्तः। न च सन्तानत्वं परमपरं वा सामान्यं सर्वथा भिन्नं बुद्ध्यादिषु वृत्तिमत्प्रसिद्धं—तद्वृत्तेः समवायस्य प्रतिषिद्धत्वात्। इति स्वरूपासिद्धत्वम्। अथ विशेषरूपं—तत्राप्युपादानोपादेयभूतबुद्ध्यादिलक्षणक्षणविशेषरूपं पूर्वापरसमानजातीयक्षणप्रवाहमात्ररूपं वा? प्रथमपक्षे सन्तानत्वस्यासाधारणानैकान्तिकत्वं तथाभूतस्यास्यान्यत्रानानुवृत्तेः। अभ्युपगमविरोधश्च। न खलु परेण बुद्ध्यादिक्षणोपादानोऽपरोऽखिलो बुद्ध्यादिक्षणोऽभ्युपगम्यते। अन्यथा मुक्त्यवस्थायामपि पूर्वपूर्वबुद्ध्याद्युपादानक्षणा-

---

१ किञ्च ॥ २ विवेकानुपलम्भो नाम विवेकोपलम्भाभाव । कथम्? विवेकोपलम्भस्यानुत्पत्ति ससार्यात्मनि विवेकोपलम्भस्य विनाशो मुक्तात्मनि ॥ ३ ससारिमुक्तात्मनो ॥ ४ पुरुषेण ॥ ५ साङ्ख्यपरिकल्पितमुक्त्युपायनिराकरणेन ॥ ६ उक्तरीत्या मोक्षोपायस्वरूप विचार्यमाण नास्ति चेन्मा भून्मोक्षस्वरूप तु स्यादित्युक्ते आह ॥ ७ मुक्त्यवस्थायाम् ॥ ८ आत्मन ॥ ९ (आत्मन) ॥ १० यौगेन ॥ ११ स्वरूपे निर्दिष्टमेतत् ॥ १२ यौगमते चिद्रूप बुद्धि ॥ १३ नाममात्रम् ॥ १४ पराभ्युपगतमोक्षनिराकरणे ॥ १५ मया ॥ १६ तदाधेयत्व तद्गुणत्वादि ॥ १७ उच्छेद इत्यन्वय ॥ १८ बुद्ध्यादीनाम् ॥ १९ वैभाषिकेण ॥ २० बुद्ध्यन्तर ॥ २१ आदिनेतरेतराश्रय ॥ २२ सन्तानस्य ॥ २३ परेण ॥ २४ अस्मिन्नेव वादे ॥ २५ सत्ताख्यम् ॥ २६ साध्याभावे ॥ २७ किञ्च ॥ २८ द्वितीयविकल्प ॥ २९ सामान्यम् ॥ ३० किम ॥ ३१ सन्तानत्वम् ॥ ३२ सह ॥ ३३ रूपत्वेन सजातीयत्वम् ॥ ३४ दृष्टान्ते प्रदीपे ॥ ३५ उपादेय ॥

दुत्तरोत्तरोपादेयबुद्ध्यादिक्षणोत्पत्तिप्रसङ्गान्न बुद्ध्यादिसन्तानस्यात्यन्तोच्छेदः स्यात् । द्वितीयपक्षे तु पाकजपरमाणुरूपादिनानेकान्तस्तथाविधसन्तानत्वस्यात्र सद्भावेप्यत्यन्तोच्छेदाभावात् । विरुद्धश्चायं हेतुः कार्यकारणभूतक्षणप्रवाहलक्षणसन्तानत्वस्यैकान्तनित्यवदनित्येप्यसम्भवात्, अर्थक्रियाकारित्वस्यानेकान्ते एव प्रतिपादयिष्यमाणत्वात् । शब्दविद्युत्प्रदीपादीनामप्यत्यन्तोच्छेदासम्भवात्साध्यविकलो दृष्टान्तः । न च ध्वस्तस्यापि प्रदीपादेः परिणामान्तरेण स्थित्यभ्युपगमे प्रत्यक्षबाधा— वारि स्थिते तेजांसि भासुररूपाभ्युपगमेपि तत्प्रसङ्गात् । अथोष्णस्पर्शस्य भासुररूपाधिकरणतेजोद्रव्याभावेऽसम्भवात्तत्रानुद्भूतस्यास्य परिकल्पनमनुमानतस्तर्हि प्रदीपादेरप्यनुपादानोत्पत्तेरिवान्त्यावस्थातोऽपरापरपरिणामाधारत्वमन्तरेण सत्त्वकृतकत्वादिकं न सम्भवतीत्यनुमानतस्तत्सन्तत्यनुच्छेदः किन्न कल्प्यते? तथा हि । प्रदीपादिः सत्त्वात्कृतकत्वाद्वा घटादिवत् । सत्प्रतिपक्षश्च । तथा हि । बुद्ध्यादिसन्तानो नात्यन्तोच्छेदवानऽखिलप्रमाणानुपलभ्यमानतथोच्छेदत्वात् । य एवं स न तत्त्वेनोपेयो, यथा पाकजपरमाणुरूपादिसन्तानः । तथा चायं तस्मान्नात्यन्तोच्छेदवानिति । न च प्रस्तुतानुमानत एव सन्तानोच्छेदप्रतीतेः सर्वप्रमाणानुपलभ्यमानतथोच्छेदत्वमसिद्धं सन्तानत्वसाधनस्यासत्प्रतिपक्षत्वासिद्धेः । तत्सिद्धौ हि हेतोर्गमकत्वम् । कालात्ययापदिष्टत्वं चानेनैवानुमानेन बाधितपक्षनिर्देशानन्तरं प्रयुक्तत्वात् । यच्च तत्त्वज्ञानस्य विपर्ययज्ञानव्यवच्छेदक्रमेण निःश्रेयसहेतुत्वमित्युक्तं तदप्युक्तिमात्रं ततो विपर्ययज्ञानव्यवच्छेदक्रमेण धर्माधर्मयोस्तत्कार्यस्य च शरीरादेरभावेप्यनन्तातीन्द्रियाखिलपदार्थविषयसम्यग्ज्ञानसुखादिसन्तानस्याभावासिद्धेः । इन्द्रियजज्ञानादिसन्तानोच्छेदसाधने च सिद्धसाधनम् । इन्द्रियाद्यपाये ज्ञानादिसन्तानसद्भावश्चाशेषज्ञसिद्धिप्रस्तावे प्रतिपादितः । कथं चातीन्द्रियज्ञानाद्यनभ्युपगमे महेश्वरे तत्सद्भावः स्यात्? नित्यत्वं चेश्वरज्ञानस्येश्वरनिराकरणे प्रतिषिद्धम् । शरीराद्यपायेप्यस्य ज्ञानाद्यभ्युपगमेऽन्यात्मनोपि सोस्तु तत्स्वभावत्वात् । न च स्वभावापाये तद्वतोऽवस्थानमतिप्रसङ्गात् । यत्तूक्तमारब्धकार्ययोश्चोपभोगात्प्रक्षयस्तदपि न सूक्तमुपभोगात्कर्मणः प्रक्षये तदुपभोगसमये अपरकर्मनिमित्तस्याभिलापपूर्वकमनोवाक्कायव्यापारादेः सम्भवात् । अविकलकारणस्य प्रचुरतरकर्मणो भवतः कथमात्यन्तिकः प्रक्षयः? सम्यग्ज्ञानस्य तु मिथ्याज्ञानोच्छेदक्रमेण बाह्याभ्यन्तरक्रियानिवृत्तिलक्षणचारित्रोपबृंहितस्यागामिकर्मानुत्पत्तिसामर्थ्यवत्सञ्चितकर्मक्षयेपि सामर्थ्यं सम्भाव्यत एव । यथोष्णस्पर्शस्य भाविशीतस्पर्शानुत्पत्तौ सामर्थ्यवत्प्रवृत्ततत्स्पर्शादिध्वंसेपि सामर्थ्यं प्रतीयते । किन्तु परिणामिजीवाजीवादिवस्तुविषयमेव सम्यग्ज्ञानं, न पुनरेकान्तनित्यानित्यात्मादिविषयं—तस्य विपरीतार्थग्राहकत्वेन मिथ्यात्वोपपत्तेरि-

---

१ आदिना गन्धरसादि ॥२ कथञ्चिन्नित्यानित्ये ॥३ तमोरूपेण ॥४ उष्णे ॥५ अग्नौ ॥६ ईप् ॥७ सन्तानत्व हेतु ॥ ८ अभ्युपगम्य ॥ ९ सन्तानत्वादित्यत ॥ १० किंच ॥ ११ तद्=ज्ञानम् ॥ १२ पृथुबुध्नोदराद्याकाराभावे घटावस्थानप्रसङ्गात् ॥ १३ तस्य कर्मफलस्य ॥ १४ उत्पद्यमानस्य ॥ १५ सम्यग्ज्ञानान्मिथ्याज्ञानाभाव, मिथ्याज्ञानाभावाद्रागाद्यभाव, रागाद्यभावाद्बाह्य (वचनादि) +अन्तर (चिन्तन) क्रियानिवृत्तिरिति ॥ १६ सहितस्य ॥ १७ अङ्गकम्पउद्धर्पणादे ॥ १८ असदीयमपि तत्त्वज्ञान सञ्चितकर्मक्षयनिबन्धनमागामिकर्मानुत्पत्तिकारण स्यादित्युक्ते आह । नित्यादिवस्तुविषयज्ञानस्य सम्यग्ज्ञानता न प्रतीयते किन्तु इत्यादि ॥ १९ नित्यात्मादिविषयज्ञानस्य ॥

त्यग्रे निवेदयिष्यते । अतो यदुक्तं यथैधांसीत्यादि तत्सर्वं संवररूपचारित्रोपबृंहितसम्यग्ज्ञानाग्नेरशेषकर्मक्षये सामर्थ्याभ्युपगमात्सिद्धसाधनम् । यच्चाभ्यधायि समाधिबलादुत्पन्नतत्त्वज्ञानस्येत्यादि तदप्यभिधानमात्रमभिलापरूपरागाद्यभावेऽङ्गनाद्युपभोगासम्भवात् । तत्सम्भवे वावश्यंभावी गृद्धिमतो भवदभिप्रायेण योगिनोपि प्रचुरतरधर्माधर्मसम्भवो नृपत्यादेरिवातिभोगिनः । वैद्योपदेशादातुरोप्यौषधाद्याचरणे नीरुग्भावाभिलाषेणैव प्रवर्त्तते, न पुनर्ज्ञानमात्रात् । तन्नाशेषशरीरद्वारावाप्ताशेषभोगस्य कर्मान्तरानुत्पत्तिः । किं तर्हि? परिपूर्णसम्यग्दर्शनज्ञानचारित्रस्य । इत्यलं विवादेन जीवन्मुक्तेरपि त्रितयात्मकादेव हेतोः सिद्धेः । संसारकारणं हि मिथ्यादर्शनादित्रयात्मकं न पुनर्मिथ्याज्ञानमात्रात्मकम् । तच्चैकस्मात्सम्यग्ज्ञानमात्रात्कथं व्यावर्त्तेत इत्युक्तं सर्वज्ञसिद्धिप्रस्तावे । यच्चान्यदुक्तं नित्यनैमित्तिकानुष्ठानं केवलज्ञानोत्पत्तेः प्राक्काम्यनिषिद्धानुष्ठानपरिहारेण ज्ञानावरणादिदुरितक्षयनिमित्तत्वेन केवलज्ञानप्राप्तिहेतुस्तदिष्टमेवास्माकम् । आनन्दरूपता तु मोक्षस्याभीष्टैव । एकान्तनित्यता तु तस्याः प्रतिषिध्यते । चिद्रूपतावदानन्दरूपताप्येकान्तनित्येत्यप्ययुक्तं चिद्रूपताया अप्येकान्तनित्यत्वासिद्धेः सकलवस्तुस्वभावानां परिणामिनित्यत्वेनाग्रे समर्थयिष्यमाणत्वात् । अथानित्यत्वे तस्याः तत्संवेदनस्य चोत्पत्तिकारणं वक्तव्यम् । ननूक्तमेव प्रतिबन्धापायलक्षणं तत्कारणं सर्वज्ञसिद्धिप्रस्तावे । आत्मैव हि प्रतिबन्धकापायोपेतो मोक्षावस्थायां तथाभूतज्ञानसुखादिकारणं–घटाद्यावरणापायोपेतप्रदीपक्षणवत्स्वपरप्रकाशकापरप्रदीपक्षणोत्पत्तौ तदुत्पादनभावस्यान्यापेक्षायोगात् । यद्धि यदुत्पादनस्वभावं न तत्तदुत्पादनेऽन्यापेक्षं, यथान्त्या कारणसामग्री स्वकार्योत्पादने । तदुत्पादनस्वभावश्चातीन्द्रियज्ञानसुखाद्युत्पत्तौ प्रतिबन्धकापायोपेत आत्मेति संसारावस्थायामप्युपलभ्यते वासीचन्दनकल्पानां सर्वत्र समवृत्तीनां विशिष्टध्यानादिव्यवस्थितानां सेन्द्रियशरीरव्यापाराऽजन्यः परमाल्हादरूपोऽनुभवः । अस्यैव भावनावशादुत्तरोत्तरावस्थामासादयतः परमकाष्ठा गतिः सम्भाव्यत एव । आनन्दरूपताभिव्यक्तिश्चानाद्यऽविद्याविलयादित्यभीष्टमेवाऽष्टप्रकारपारमार्थिककर्मप्रवाहरूपाऽनाद्यविद्याविलयादनन्तसुखसंज्ञानादिस्वरूपप्रतिपत्तिलक्षणमोक्षावाप्तेरभीष्टत्वात् । विशुद्धज्ञानसन्तानोत्पत्तिलक्षणोप्यसौ मोक्षोऽभ्युपगम्यते । स तु चित्तसन्तानः सान्वयो युक्तः । बद्धो हि मुच्यते नाबद्धः । न च निरन्वये चित्तसन्ताने बद्धस्य मुक्तिः । तत्र ह्यन्यो बद्धोऽन्यश्च मुच्यते । सन्तानैक्याद्बद्धस्यैव मुक्तिरपीति चेन्ननु यदि सन्तानार्थः परमार्थसंस्तदात्मैव सन्तानशब्देनोक्तः स्यात् । अथ

---

१ अनेकान्तसिद्धौ ॥ २ आकाङ्क्षावत ॥ ३ न केवल योगी ॥ ४ सम्यग्दर्शनादित्रयमोक्षकारणविषयविवादेन ॥ ५ न केवल परममुक्ते ॥ ६ कारणात् ॥ ७ चतुर्थपरिच्छेदे ॥ ८ अतीन्द्रिय ॥ ९ एव ॥ १० घटस्थप्रदीपवत् ॥ ११ उत्तर ॥ १२ आत्मन ॥१३ इन्द्रियवनितादे ॥१४ प्रतिबन्धकापायोपेत आत्मा धर्मी अतीन्द्रियज्ञानसुखाद्युत्पत्तौ अन्य नापेक्षते इति साध्य, तदुत्पादनस्वभावत्वादिति शेष ॥१५ अन्त्यतन्तुसयोग ॥१६ पटलक्षणस्य ॥ १७ स प्रसिद्ध उत्पादनस्वभावो यस्यात्मन ॥ १८ असिद्धत्वे हेतोरुद्भाविते परिहारमाह ॥ १९ कुठार ॥ २० तुल्यानाम् ॥ २१ शत्रुमित्रयो ॥ २२ आदिना दानम् ॥ २३ भेद ॥ २४ निश्चीयते ॥ २५ प्राप्ति ॥ २६ बौद्धविशेषैरभ्युपगत ॥ २७ ज्ञानस्य ॥ २८ सद्रव्य ॥ २९ पूर्वक्षण ॥ ३० उत्तरक्षण ॥ ३१ अपिशब्दाद्बन्धोपि ॥ ३२ बौद्धाना मते पूर्वोत्तरक्षणानामेक आधारभूत सन्तान स अपरमार्थ सन्केवल पूर्वक्षण उत्तरक्षण सन्तानी स तु परमार्थसन् ॥

संवृतिसं[1]सत्तदेकस्य परमार्थसतोऽसत्त्वादन्यो बद्धोऽन्यश्च मुच्यते इति मुक्त्यर्थं प्रवृत्तिर्न स्यात्। अथात्यन्तनानात्वे[3]पि दृढतरैकत्वाध्यवसायाद्बद्धमात्मानं मोचयिष्यामीत्यभिसन्धानवतः[4] प्रवृत्तेर्नायं दोषो, न तर्हि नैरात्म्यदर्शनम्[5]। इति कुतस्तन्निबन्धना मुक्तिः? अथास्ति तद्दर्शनं शास्त्रसंस्कारजं, न तर्ह्येकत्वाध्यवसायोऽस्खलद्रूप इति कुतो बद्धस्य मुक्त्यर्थं प्रवृत्तिः स्यात्? तथा[7] च मिथ्याध्यारोपहानार्थं यत्नोऽ[8]सत्यपि मोक्तरीति[9] प्लवते। तस्मात्सान्वया[10] चित्तसन्ततिरभ्युपगन्तव्या—सकलविज्ञानक्षणत्वेपि जीवाभावे बन्धमोक्षयोस्तदर्थं वा प्रवृत्तेरनुपपत्तेः। न चान्योन्यविलक्षणाऽपरापरचित्तक्षणानामनुयायिजीवाभावो[12] विरोधादित्यभिधातव्यं[13]—स्वसंवेदन[14]प्रत्यक्षेण तत्रानुयायिरूपतया तस्य प्रतीतेः। प्रतीयमानस्य च कथं विरोधो नामानुपलम्भसाध्यत्वात्तस्य। तद्व्यापारे चासत्यात्मनि प्रत्यभिज्ञानप्रत्ययस्य प्रादुर्भावो न स्यात्। अथात्मन्यप्यारोपितैकत्वविषयत्वादस्य प्रादुर्भावो, न[16]—अस्यारोपितैकत्वविषयत्वे स्वात्मन्यनुमानात्क्षणिकत्वं निश्चिन्वतो निवृत्तिप्रसङ्गात्, निश्चयारोपमनसो[24]र्विरोधात्। निवर्तत एवेति चेत्तर्हि सहजस्याभिसंस्कारिकस्य च सत्त्वदर्शनस्याभावात्तदैव तन्मूलरागादिनिवृत्तेर्मुक्तिः स्यात्। भ्रान्तत्वे चास्य प्रत्यक्षस्याशेषस्यापि भ्रान्तत्वप्रसङ्गो[33] बाह्याध्यात्मिकभावेष्वेकत्वग्राहकत्वेनैवाशेषप्रत्यक्षाणां प्रवृत्तिप्रतीतेः। तथा च प्रत्यक्षस्याभ्रान्तत्वविशेषणमसम्भाव्यमेव स्यात्। समर्थयिष्यते च प्रत्यभिज्ञानप्रत्ययस्यानारोपितार्थग्राहकत्वमभ्रान्तत्वं च। तन्नैकत्वाभावः। अनुभूयमानस्यापि चैकत्वस्यानेकत्वेन विरोधे ग्राह्यग्राहकसंवित्तिलक्षणविरुद्धरूपत्रयाध्यासितज्ञानस्यार्थस्वलक्षणस्य चैकदा स्वपरकार्यकर्तृत्वाकर्तृत्वलक्षणविरुद्धधर्मद्वयाध्यासितस्यैकत्वविरोधः स्यात्। यच्चान्यद्रागादिमतो विज्ञानान्न तद्रहितस्यास्योत्पत्तिरित्याद्युक्तं तदप्यसाम्प्रतं रागादिरहितस्याखिलपदार्थविषयविज्ञानस्याशेषज्ञसाधनप्रस्तावे प्रतिपादितत्वात्। न च बोधाद्बोधरूपतेति प्रमाणमस्तीत्यप्ययुक्तम्। विलक्षणकारणाद्विलक्षणकार्यस्योत्पत्त्यभ्युपगमेऽचेतनाच्छरीरादेश्चैतन्योत्पत्तिप्रसङ्गाच्चार्वाकमतानुषङ्गः। प्रसाधितश्च परलोकी प्रागित्यलमतिप्रसङ्गेन। यच्चाभ्यधायि सुषुप्तावस्थाया विज्ञानसद्भावे जाग्रदवस्थातो न विशेषः स्यात्तदप्यभिधानमात्रं यतस्तदा विज्ञानसद्भावेपि अतिनिद्रयाभिभूतत्वान्न जाग्रदवस्थातोऽविशेषो मत्तमूर्च्छिताद्यवस्थायां मदिराद्युत्पादितमदवेदनाद्यभिभूतविज्ञानवत्। ननु कोयं मिद्धेनाभिभवः? ज्ञानस्य नाशश्चेत्कथं तस्य सत्त्वम्?

---

१ कल्पनासन् ॥ २ आत्मन ॥ ३ क्षणानाम् ॥ ४ अभिप्रायवत ॥ ५ निर्विकल्पकस्य ॥ ६ भावना ॥ ७ बद्धस्य मुक्त्यर्थं प्रवृत्त्यभावे च ॥ ८ नैरात्म्यभावनालक्षण ॥ ९ विनश्यति ॥ १० अन्वयाभावे बन्धो मोक्षो वा न घटते यत ॥ ११ सद्रूपा ॥ १२ अन्यथा ॥ १३ परेण ॥ १४ पूर्वक्षणे अहमेव दुःखी उत्तरक्षणेऽहमेव सुखीति ॥ १५ खस्मिन् ॥ १६ न केवल वहि ॥ १७ सद्रूपा ॥ १८ चेदिति शेष ॥ १९ स्वरूपे ॥ २० यतस्तत्क्षणिकमित्यादि ॥ २१ आरोपितैकत्वविषयस्य प्रत्यभिज्ञाप्रत्ययस्य ॥ २२ अनुमानेन ॥ २३ सोह प्रत्यभिज्ञानरूपो विकल्प ॥ २४ मन =ज्ञानम् ॥ २५ एकत्र ॥ २६ अनुमानमनित्यत्वसाधने एकस्मिन्वस्तुनि प्रवृत्त प्रत्यभिज्ञानं एकत्वसाधने इति विरोध ॥ २७ क्षणिकत्वनिश्चयसमये एकत्वविषय प्रत्यभिज्ञानम् ॥ २८ ग्राम्यजनसम्बन्धिन ॥ २९ पण्डितजनसम्बन्धिन ॥ ३० जीव ॥ ३१ प्रत्यभिज्ञानस्य ॥ ३२ क्षणिकत्वनिश्चयसमये एव ॥ ३३ सौगतस्य ॥ ३४ प्रत्यक्ष कल्पनापोढमभ्रान्तमित्यत्र सूत्रे ॥ ३५ किञ्च ॥ ३६ सुखदुःखनानालक्षणोपलम्भेन ॥ ३७ नीलस्वलक्षणस्य ॥ ३८ उत्तरनीलादिक्षणस्य ॥ ३९ अर्थान्तरपीतादे ॥ ४० अचेतनादात्मन ॥ ४१ ज्ञानलक्षणस्य ॥ ४२ दूरस्थितेन चार्वाकेणोक्तमस्मदीयमतमेवास्तु। तत्राह ॥ ४३ सुप्तावस्था ज्ञानवती आत्मन अवस्थात्वान्मत्तमूर्च्छिताद्यवस्थावत् ॥ ४४ मत्तता ॥ ४५ पीडा ॥ ४६ विषयपीडा ॥ ४७ सुषुप्तावस्थायाम् ॥

तिरोभावश्चेन्न–स्वपरप्रकाशरूपज्ञानाभ्युपगमे तस्याप्यसम्भवात्। इत्यप्यचर्चिताभिधानं मणिमन्त्रादिनाऽग्न्यादिप्रतिबन्धे शरावादिना प्रदीपादिप्रतिबन्धे च समानत्वात्।[1]
न हि तत्राप्यग्न्यादेर्नाशः प्रतिबन्धः प्रत्यक्षविरोधात्। नापि तिरोभावः स्वपरप्रकाशस्वभावस्य[2] स्फोटादिकार्यजननसमर्थस्य तिरोभावस्याप्यसम्भवात्[3]। प्रती-
त्यनतिक्रमेणात्र स्वरूपसामर्थ्यप्रतिबन्धाभ्युपगमोऽन्यत्रापि समानः। मिद्धादिसामग्रीविशेषवशाद्धि बाह्याध्यात्मिकार्थविचारविधुरं गच्छत्तृणस्पर्शज्ञानसमानं
सुषुप्तावस्थायां ज्ञानमास्ते। न हि स्वपरप्रकाशस्वभावत्वमात्रेणैवास्य[4] तन्निरूपणसामर्थ्यं सर्वत्रानभिभूतस्यैवार्थस्य[5] स्वकार्यकारित्वप्रतीतेः। अन्यथा दहनादिस्व-
भावस्याग्नेः सदा[6] दाहकत्वप्रकाशकत्वप्रसङ्गः। गच्छत्तृणस्पर्शसंवेदनस्य वा तदर्थनिरूपकत्वानुषङ्गः।[7]अथात्र मनोव्यासङ्गोऽस्मरणकारणमन्यत्र मिद्धादिकमित्यविशेषः।
अस्ति चात्र स्वापलक्षणार्थनिरूपणमेतावत्कालं निरन्तरं सुप्तोहमेतावत्कालं सान्तरमित्यनुस्मरणप्रतीतेः।[8] न च स्वापलक्षणार्थाननुभवेपि सुप्तोत्थानानन्तरं गाढोहं
तदा सुप्त इत्यनुस्मरणं घटते–तस्यानुभूतवस्तुविषयत्वेनानुभवाविनाभावित्वात्[9]। अन्यथा[10] घटाद्यर्थाननुभवेपि तत्रानुस्मरणसम्भवात्कुतस्तदनुभवोपि सिद्ध्येत्? न च
मत्तमूर्च्छिताद्यवस्थायामपि विज्ञानाभावाद्दृष्टान्तस्य साध्यविकलतेत्याशङ्कनीयं तदवस्थातः प्रच्युतस्योत्तरकालं मया न किञ्चिदप्यनुभूतमित्यनुभवाभावप्रसङ्गात्[11]
स्मृतेरनुभवपूर्वकत्वात्[12]।[13] अतो येनानुभवेन सतात्मा निखिलानुभवविकलोऽनुभूयते तस्यामवस्थायां सोऽवश्याभ्युपगन्तव्यः। किञ्च सुप्ताद्यवस्थायां विज्ञानाभावं स
एवात्मा प्रतिपद्यते पार्श्वस्थो[14] वा? स एव चेत्तत एव ज्ञानात्तदभावाद्वा[15] ज्ञानान्तराद्वा? न तावत्तत एव–अस्यासत्त्वात्–तदेव नास्ति तत्र, तत एव चाभावगति-
रित्यन्योन्यं विरोधात्। ज्ञानाभावात्तत्र तदभावपरिच्छित्तिरित्ययुक्तं परिच्छेदस्य ज्ञानधर्मतयाऽभावेऽसम्भवात्[16][17]। अन्यथा[18] ज्ञानस्यैवाभाव इति नामकृतं स्यात्।
अथ ज्ञानान्तरात्तत्र तदभावगतिः। किं तत्कालभाविनो जाग्रत्प्रबोधकालभाविनो वा? प्रथमपक्षे कथं सुषुप्ताद्यवस्थायां सर्वथा ज्ञानाभावः? अथ जाग्रत्प्र-
बोधकालभाविज्ञानाभ्यामन्तराले[19] ज्ञानाभावोऽवसीयते। ननु तद्दशाभाविज्ञानयोः[20] सुषुप्ताद्यवस्थाभाविज्ञानं नोपलब्धिलक्षणप्राप्तम्। तत्कथं ताभ्यां तदभावोऽव-
सीयेत[21]? अन्यथाऽदृष्टस्यापि[22] परलोकादेरभावोऽध्यक्षत एव स्यात्। तथा च प्रमाणेतरसामान्यस्थितेरित्याद्यसङ्गतम्[23]। नापि पार्श्वस्थोन्यस्तत्र तदभावं प्रतिपद्यते
कारणस्वभावव्यापकानुपलब्धेर्विरुद्धविधेर्वा तदभावाविनाभाविनो लिङ्गस्यात्रानुपलब्धेः। न तत्र विज्ञानसद्भावेपि लिङ्गाभावः समान इत्यभिधातव्यं स्वात्मनि
स्वसंविदितज्ञानाविनाभावित्वेनाऽवधारितस्य[24] प्राणापानशरीरोष्णताकारविशेषादेस्तत्सद्भावावेदिनो लिङ्गस्यात्रोपलब्धेर्जाग्रद्दशायामप्यन्यचेतोवृत्तेस्तद्व्यतिरेकेणान्य-

१ मणिमन्त्रशरावादिना अग्निप्रदीपप्रतिबन्धे ॥ २ ज्ञानस्य स्वपरप्रकाशरूप तिरोहितमतिरोहित चैतन्यम् ॥ ३ चैतन्यस्य ॥ ४ देशे ॥ ५ अभिभूतस्य स्वकार्यकारित्व यदि स्यात् ॥ ६ प्रतिबन्धसमयेपि ॥ ७ कार्यान्तरे
प्रवृत्ति ॥ ८ असावधानत्व वा ॥ ९ किंच ॥ १० सुप्तोहमिति शेष ॥ ११ प्रत्यक्षेण ॥ १२ अनुभवाविनाभावित्व स्मरणस्य यदि न स्यात् ॥ १३ स्मृति ॥ १४ अन्य ॥ १५ सुषुप्तावस्थाया यस्य ज्ञानस्याभावस्तस्मादेव
ज्ञानात् ॥ १६ ज्ञानस्य ॥ १७ ज्ञानाभावे परिच्छेदो यदि स्यात् ॥१८ ज्ञानमन्तरेण परिच्छेदानुपपत्तिर्यत ॥ १९ सन्ध्याकालप्रात काल । तत्र भावि॥२० ताद्वि ॥ २१ यथा घट उपलब्धिलक्षणप्राप्तो भवति तदा पश्चादन्यत्र
घटाभावोऽवसीयते ॥ २२ अनुपलब्धिलक्षणप्राप्तस्य प्रत्यक्षाद्यभाव स्याद्यदि ॥ २३ प्रतिषेधाच्च कस्यचिदितिपर्यन्तम् ॥ २४ अन्यपुरुषै ॥

तोऽप्रतीतेः । ननु द्विविधोऽत्र[1] प्राणादिश्चैतन्यप्रभवो जाग्रद्दशायां प्राणादिप्रभवश्च सुषुप्ताद्यवस्थायामिति । तत्र[2] चैतन्यप्रभवप्राणादेर्जाग्रद्दशायां चैतन्यानुमानं युक्तं, न पुनः प्राणादिप्र[3]प्राणादेः । न खलु गोपालघटादौ धूमप्रभवधूमादग्न्यनुमानं दृष्टम्—अग्निप्रभवधूमादेव तद्दर्शनात् । इत्यप्यसङ्गतं—सुषुप्तेतरावस्थयोः प्राणादेर्विशेषाऽप्रतीतेः । यथैव हि सुप्तः[4] प्राणिति[5] तथेतरो[6]ऽपि । अन्यथा[7] किमयं सुप्तः किं वा जागर्तीति सन्देहो न स्यात् । यदि[8] चैते सुषुप्तस्य चैतन्यप्रभवा न स्युः किन्तु प्राणादिप्रभवास्तर्हि जाग्रतः परवञ्चनाभिप्रायेण सुषुप्तव्याजेनावस्थितस्य तादृशामेव[9] तेषां भावो न स्यात् । न ह्यग्नेर्जायमानो धूमः प्रयत्नशतैरपि धूमादन्य[10]तो वा जायते धूमप्रभवो[11] वाग्नेरिति । दृश्यन्ते च ते यादृशा एव सुषुप्तस्य तादृशा एवास्यापि । तन्नैते भिन्नकारणप्रभवाः । चैतन्येतरप्रभवांश्च प्राणादीन्विवेचयन्वीतरागेतरप्रभवव्यापारादीनपि विवेचयतु । तथा च सरागा अपि वीतरागवच्चेष्टन्ते वीतरागाश्च सरागवदिति वीतरागेतरविभागो निश्चेतुमशक्य इति ब्रुवते । धूमश्चाग्नेर्धूमाच्चोत्पद्यमानो यथा प्रतिपन्नस्तथा प्राणादिश्चैतन्यात्तदभावाच्चोत्पद्यमानः स्वात्मनि परत्र चानेन[16] प्रत्येतुं न शक्यते । क्वचित्तदभावस्य निश्चेतुमशक्यत्वादित्युक्तम् । धूमे च किमयं धूमोऽग्नेर्धूमान्तराद्वेति सन्देहः प्रवृत्तस्याग्निदर्शनेतराभ्यां[17] निवर्त्तते । प्राणादौ तु किमयमनन्तरचैतन्यप्रभवः किं वा भूतभाविजन्मान्तरचैतन्यप्रभव इति सन्देहः कुतो निवर्त्तेत ? परचैतन्यस्य द्रष्टुमशक्यत्वात् । ततोऽस्य न निश्शङ्कं परप्रतिपादनार्थं शास्त्रप्रणयनं युक्तम् । सन्देहात्तु तत्प्रणयनं चार्वाकस्याप्यविरुद्धमित्ययुक्तमुक्तमन्यधियो गतेरिति । सुषुप्तादौ चाद्यः प्राणादिः कुतो जायताम् ? जाग्रद्विज्ञानसहकारिणो जाग्रत्प्राणादेरिति चेन्नैकस्माज्जाग्रद्विज्ञानादनन्तरभावी प्राणादिः कालान्तरभावि च प्रबोधज्ञानमित्यस्यासम्भाव्यमानत्वात् । न ह्येकस्मात्सामग्रीविशेषात्क्रमभाविकार्यद्वयसम्भवो नाम । अन्यथा नित्यादप्यक्रमात्क्रमवत्कार्योत्पत्तिप्रसङ्गः । तथा च नाऽक्रमात्क्रमिणो भावा इत्यस्य विरोधः । तस्मात्तत्कालभाविन एव ज्ञानात्प्राणादिप्रभवोऽभ्युपगन्तव्यः । तत्कथं तत्र ज्ञानाभावसिद्धिः ? स्वापसुखसंवेदनं चात्र सुप्रतीतं सुखमहमस्वापमित्युत्तरकालं तत्प्रतीत्यन्यथानुपपत्तेः । न ह्यननुभूते वस्तुनि स्मरणं प्रत्यभिज्ञानं चोपपद्यते । न च तदा स्वापसुखनिरूपणाभावात्तत्संवेदनाभावस्तदऽहर्जातबालकस्य मुखप्रक्षिप्तस्तन्यजनितसुखसंवेदनेन व्यभिचारात् । न खलु तत्तेनेदमित्थमिति निरूप्यते । न च दुःखाभावात्सुखशब्दप्रयोगोऽत्र गौणोऽभावस्य प्रतियोगिभावान्तरस्वभावतया व्यवस्थितेः । इत्यलमतिप्रसङ्गेन ।

---

१ आत्मावस्थायाम् ॥ २ उभयोर्मध्ये ॥ ३ प्रभव ॥ ४ पुरुषः ॥ ५ श्वासोच्छ्वास गृह्णाति ॥ ६ जीवति ॥ ७ जाग्रत् ॥ ८ उभयो श्वासे विशेषश्चेत् ॥ ९ यत सादृश्ये एव सन्देह । अस्ति च सन्देह ॥ १० किंच ॥ ११ सुषुप्तस्य यादृश प्राणा ॥ १२ घटादे ॥ १३ धूम ॥ १४ न जायते ॥ १५ प्राण ॥ १६ सौगतेन ॥ १७ इतरमग्न्यदर्शनम् ॥ १८ जाग्रद्दशायाम् १९ तथागतस्य ॥ २० किंच ॥ २१ मतस्य ॥ २२ एतस्मात्कार्यद्वयसम्भवश्चेत् ॥ २३ एकरूपात् ॥ २४ स्वापदशा ॥ २५ सुषुप्तावस्थायाम् ॥ २६ किंच ॥ २७ सुषुप्तावस्थायाम् ॥ २८ सुखसंवेदन विना ॥ २९ सुषुप्तावस्थायाम् ॥ ३० दुग्ध ॥ ३१ दु खाभावे सुखशब्दो न पारमार्थिकसुखस्य वाचक इति हेतो ॥ ३२ सुखमहमस्वापमित्यस्मिन्वाक्ये ॥ ३३ औपचारिक ॥ ३४ दु खस्य ॥ ३५ दु खलक्षणाद्भावादपरं सुखलक्षण भावान्तरम् ॥ ३६ स्वापावस्थाया ज्ञानसद्भावसाधनविस्तरेण ॥

यच्चोक्तमनेकान्तज्ञानस्य बाधकसद्भावेन मिथ्यात्वोपपत्तेर्न निःश्रेयससाधकत्वं तदप्युक्तिमात्रं तज्ज्ञानस्यैवाबाधिततया सम्यक्त्वेन वक्ष्यमाणत्वात् । नित्यानित्यत्वयोर्विधिप्रतिषेधरूपत्वादभिन्ने धर्मिण्यभाव इत्याद्यप्ययुक्तं प्रतीयमाने वस्तुनि विरोधासिद्धेः । न च येन रूपेण नित्यत्वविधिस्तेनैवानित्यत्वविधिः, येनैकत्र विरोधः स्यात्—अनुवृत्तव्यावृत्ताकारतया नित्यानित्यत्वविधेरभ्युपगमात् । विभिन्नधर्मनिमित्तयोश्च विधिप्रतिषेधयोर्नैकत्र प्रतिषेधोऽतिप्रसङ्गात् । न चानुवृत्तव्यावृत्ताकारयोः सामान्यविशेषरूपतयात्यन्तिको भेदः पूर्वोत्तरकालभाविस्वपर्यायतादात्म्येनावस्थितस्यानुगताकारस्य बाह्याध्यात्मिकार्थेषु प्रत्यक्षप्रतीतौ प्रतिभासनादित्यग्रे प्रपञ्चयिष्यते । स्वदेशादिषु सत्त्वं परदेशादिष्वसत्त्वं च वस्तुनोऽभ्युपगम्यते एवेतरेतराभावादित्यप्यसमीक्षिताभिधानमितरेतराभावस्य घटादभेदे तद्विनाशे पटोत्पत्तिप्रसङ्गात् पटाभावस्य विनष्टत्वात् । अथ घटाद्भिन्नोऽसौ तर्हि घटादीनामन्योन्यं भेदो न स्यात् । यथैव हि घटस्य घटाभावाद्भिन्नत्वाद् घटरूपता तथा पटादेरपि स्यात् । नाप्येषां परस्पराभिन्नानामभावेन भेदः कर्तुं शक्यो भिन्नाभिन्नभेदकरणे तस्याकिञ्चित्करत्वप्रसङ्गात् । नापि भेदव्यवहारः स्वहेतुभ्योऽसाधारणतयोत्पन्नानां सकलभावानां प्रत्यक्षे प्रतिभासनादेव भेदव्यवहारस्यापि प्रसिद्धेः । प्रतिक्षिप्तश्चेतरेतराभावः प्रागेवेति कृतं प्रयासेन । कार्यान्तरेषु वा कर्तृत्वं न प्रतिषिध्यते इत्याद्यप्यसारमेकान्तपक्षे कार्यकारित्वस्यैवासम्भवात् । यच्च मुक्तावप्यनेकान्तो न व्यावर्त्तते तदिष्यते एव । अनेकान्तो हि द्वेधा क्रमानेकान्तोऽक्रमानेकान्तश्च । तत्र क्रमानेकान्तापेक्षया य एव प्रागमुक्तः स एवेदानीं मुक्त इति स एव मुक्तः संसारी चेत्यविरोधः । अनेकान्तेऽनेकान्ताभ्युपगमोऽप्यदूषणमेव—प्रमाणपरिच्छेद्यस्यानेकधर्माध्यासितवस्तुस्वरूपानेकान्तस्य नयपरिच्छेद्यैकान्ताविनाभावित्वात् । आत्मैकत्वज्ञानादित्यादिग्रन्थस्तु सिद्धसाध्यतया न समाधानमर्हति । न च गुणपुरुषान्तरविवेकदर्शनं निःश्रेयससाधनं घटते प्रकर्षपर्यन्तावस्थायामप्यात्मनि शरीरेण सहावस्थानान्मिथ्याज्ञानवत् । अथ फलोपभोगकृतोपात्तकर्मक्षयापेक्षं तत्त्वज्ञानं परनिःश्रेयसस्य साधनं तदनपेक्षं चापरनिश्रेयसस्येत्युच्यते तदप्युक्तिमात्रं—फलोपभोगस्यौपक्रमिकानौपक्रमिकविकल्पानतिक्रमात् । तस्यौपक्रमिकत्वे कुतस्तदुपक्रमोऽन्यत्र तपोतिशयात् ।-इति तत्त्वज्ञानं तपोतिशयसहायमन्तर्भूततत्त्वार्थश्रद्धानं परनिःश्रेयसकारणमित्यनिच्छतोऽप्यायातम् । तस्यानौपक्रमिकत्वे तु सदा सद्भावानुषङ्गः । यच्च स्वरूपे चैतन्यमात्रेऽवस्थानं मोक्ष इत्युक्तं तदयुक्तं—चैतन्यविशेषेऽनन्तज्ञानादिस्वरूपेऽवस्थानस्य मोक्षत्वसाधनात् । न ह्यनन्तज्ञानादि-

१ अनेकान्तसिद्धौ ॥ २ एकस्मिन् ॥ ३ नित्यानित्यात्मकतया ॥ ४ वस ॥ ५ अन्यथा ॥ ६ कर्तृत्वाकर्तृत्वधर्मयोरेकत्र धर्मिणि प्रतिषेधप्रसङ्गात् ॥ ७ अनेकान्तसिद्धौ ॥ ८ घटे पटाभाव पटे घटाभाव इतीतरेतराभाव ॥ ९ कपालेषु ॥ १० घटे ॥ ११ घटाभावाद्भिन्नरूपत्वाद् घटरूपता ॥ १२ वस ॥ १३ अभिन्नभेदकरणे पदार्थ एव कृतो भवेद् । भिन्नभेदकरणे पदार्थसाङ्कर्यम् ॥ १४ अभावकृत ॥ १५ इतरेतराभावनिराकरणप्रयासेनालम् ॥ १६ अनेकान्त एवेति योमावेकान्त (सर्वथा) सोनेकान्ते प्रतिषिध्यते। केन ? द्वितीयानेकान्तपदेन । कथम् ? न विद्यते अनेकान्त एवेति एकान्तो यस्यानेकान्तस्य तस्याभ्युपगम ॥ १७ अनवस्थादिकम् ॥ १८ यस । कथम् ? स चासावनेकान्तश्च तस्य ॥ १९ प्रकृतिसत्त्वादिगुणयोर्भेदाद्गुण इत्युक्ते प्रकृतिर्ग्राह्या ॥ २० पुरुषविशेष ॥ २१ भेदभावनाज्ञानम् ॥ २२ विवेकदर्शनस्य ॥ २३ असन्मते तु सम्यग्दर्शनादिक परमप्रकर्षप्राप्तशरीरेण सहावस्थायि न भवति अयोगिचरमसमये एव शरीराभावलक्षणे तत्सद्भावात् ॥ २४ जीवन्मुक्ति ॥ २५ सकामनिर्जरा अकामनिर्जरा चेति ॥ २६ भेद ॥ २७ वर्जने ॥ २८ योगस्य ॥ २९ फलोपभोगश्चेति कृला ॥ ३० सदा मुक्तिप्रसङ्ग ॥

कमात्मनोऽस्वरूपं सर्वज्ञत्वादिविरोधात् । प्रधानस्य सर्वज्ञत्वादिस्वरूपं नात्मन इत्यसत्तस्याचेतनत्वेनाकाशादिवत्तद्विरोधात् । ज्ञानादेरप्यचेतनत्वात्प्रधानस्वभ(भा)वत्वाविरोधश्चेत्कुतस्तदचेतनत्वसिद्धिः ? अचेतना ज्ञानादय उत्पत्तिमत्त्वाद् घटादिवदित्यनुमानाच्चेन्न हेतोरनुभवेनानेकान्तात् तस्य चेतनत्वेऽप्युत्पत्तिमत्त्वात् । न चोत्पत्तिमत्त्वमसिद्धं परापेक्षत्वाद्बुद्ध्यादिवत् । परापेक्षोसौ बुद्ध्यध्यवसायापेक्षत्वात् 'बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते' इत्यभिधानात् । कालात्ययापदिष्टश्चायं हेतुर्ज्ञानादीनां स्वसंवेदनप्रत्यक्षाच्चेतनत्वप्रसिद्धेरध्यक्षबाधितपक्षानन्तरं प्रयुक्तत्वात् । चेतनसंसर्गात्तेषां चेतनत्वप्रसिद्धिरित्यप्यचर्चिताभिधानं शरीरादेरपि तत्प्रसिद्धिप्रसङ्गात् चेतनप्र(त्व)संसर्गाविशेषात् । शरीराद्यसम्भवी तेषां संसर्गविशेषोस्तीति चेत्स कोन्योऽन्यत्र कथञ्चित्तादात्म्यात् ? तददृष्टकृतकत्वादेः शरीरादावपि भावात् । ततो नाचेतना ज्ञानादयः स्वसंवेद्यत्वादनुभववत् । स्वसंवेद्यास्ते परसंवेदनान्यथानुपपत्तेरिति स्वसंवेदनसिद्धिप्रस्तावे प्रतिपादितम् । तथा चात्मस्वभावास्ते चेतनत्वादनुभववत् । सुखमप्यात्मस्वभाव एव मोक्षेऽभिव्यज्यमानत्वाद् ज्ञानवत् । अनात्मस्वभावत्वे तत्र तदभिव्यक्तिर्न स्याद्दुःखवत् । तथा सुखात्मको मोक्षश्चेतनात्मकत्वे सत्यखिलदुःखविवेकात्मकत्वात्संहृतसकलविकल्पध्यानावस्थावत् । तथानन्तं तत्-आत्मस्वभावत्त्वे सत्यपेतप्रतिवन्धत्वात् । ज्ञानवदेव । अपेतप्रतिवन्धत्वं तु मोहनीयादेः प्रतिवन्धकस्य कर्मणोऽपायात्प्रसिद्धमेव । इति सिद्धमनन्तज्ञानादिचैतन्यविशेषेऽवस्थानं पुंसो मोक्ष इति ।

ननु पुंस एवानन्तज्ञानादिस्वरूपलाभलक्षणो मोक्ष इत्ययुक्तं स्त्रीणामप्यस्योपपत्तेः । तथा हि । अस्ति स्त्रीणां मोक्षोऽविकलकारणत्वात्पुरुषवत् । तदसद्धेतोरसिद्धेः । तथा हि । मोक्षहेतुर्ज्ञानादिपरमप्रकर्षः स्त्रीषु नास्ति परमप्रकर्षत्वात्सप्तमपृथ्वीगमनकारणापुण्यपरमप्रकर्षवत् । यदि नाम तत्र तत्कारणापुण्यपरमप्रकर्षाभावो, मोक्षहेतोः परमप्रकर्षाभावे किमायातम् ? कार्यकारणव्याप्यव्यापकभावाभावे हि तयोः कथमन्यस्याभावेऽन्यस्याभावोऽतिप्रसङ्गात् ? इति चेत्सत्यम् । अयं हि तावन्नियमोस्ति । यद्वेदस्य मोक्षहेतुपरमप्रकर्षस्तद्वेदस्य तत्कारणापुण्यपरमप्रकर्षोस्त्येव । यथा पुंवेदस्य । न च चरमशरीरेण व्यभिचारः पुंवेदसामान्यापेक्षयोक्तेः ।

---

१ दर्शनेन ॥ २ अनुभवस्य ॥ ३ अर्थप्रतिबिम्बन ॥ ४ निश्चितम् ॥ ५ आत्मा ॥ ६ अनुभवति ॥ ७ विना ॥ ८ पुरुषादृष्टकृत अन्य ससर्गविशेषो ज्ञानादिभिरात्मनोऽस्तीत्युक्ते आह ॥ ९ ससर्गस्य ॥ १० पटादि पर ॥ ११ ज्ञानस्य स्वसंविदितत्वाभावे ॥ १२ चेतनत्वसिद्धितया ॥ १३ सुखस्य ॥ १४ अखिलदु खविवेकात्मकत्वादित्युक्ते घटेन व्यभिचारस्तत्परिहारार्थं चेतनात्मकत्वे सतीत्युक्तम् ॥ १५ चेतनात्मकत्वादित्युच्यमाने खण्ड्यमानज्ञानेन व्यभिचारस्तत्परिहारार्थमखिलदु खविवेकात्मकत्वादित्युक्तम् ॥ १६ आत्मस्वभावत्वादित्युच्यमाने दु खेन व्यभिचारस्तत्परिहारार्थमपेतप्रतिवन्धत्वादित्युक्तम् ॥ १७ अपेतप्रतिवन्धत्वादित्युच्यमाने प्रदीपेन व्यभिचारस्तत्परिहारार्थमात्मस्वभावत्वे सतीत्युक्तम् ॥ १८ लक्षणम् ॥ १९ श्वेतपट ॥ २० मोक्षहेतुज्ञानादिपरमप्रकर्षतत्कारणापुण्यपरमप्रकर्षयो ॥२१ अकारणस्याव्यापकस्य वा ॥२२ अकार्यस्याव्यापकस्य वा ॥२३ घटाभावे त्रैलोक्याभावो भवेत् ॥ २४ अविनाभाव ॥ २५ पुंसि सप्तमपृथ्वीगमनकारणापुण्यप्रकर्षोस्ति मोक्षहेतुज्ञानादिपरमप्रकर्षत्वात् ॥ २६ व्याप्यो हेतु ॥ २७ साध्यो व्यापक ॥ २८ इति पुंसि अनयोर्व्याप्यव्यापकभाव सिद्ध सन् स्त्रीषु व्यापकाभावे व्याप्याभाव साधयत्येवेति भाव ॥ २९ आत्मना ॥

विपरीत[1]स्तु नियमो[2] न सम्भवत्येव नपुंसकवेदे तत्कारणापुण्यपरमप्रकर्षे सत्यप्यन्यस्यानभ्युपगमात् पुंस्यभ्युपगमाच्च, अनित्य[3]त्वस्य प्रयत्नानन्तरीयकत्वेतरत्ववत्। तत[4]श्च स्त्रीवेदस्यापि यदि मोक्षहेतुः परमप्रकर्षः स्यात्तदा तदभ्युपगमादेवापरोप्यनिष्टोऽवश्यमापद्यते। अ[5]न्यथा पुंस्यपि न स्यात्। सिद्धे च प्रतिबन्धद्व[6]याभावेपि कृतिकोदयादिवदुक्त[7]प्रकर्षयोरविनाभावे स्त्रीणां तत्कारणापुण्यपरमप्रकर्षप्रतिषेधेन मोक्षहेतुपरमप्रकर्षो निषिध्यते। न च 'नपुंसकस्य मोक्षहेतुपरमप्रकर्षोऽस्ति तत्कारणापुण्यपरमप्रकर्षसद्भावात्पुंवत्। पुंसो वा नास्त्यत एव नपुंसकवत्। तत्कारणाऽपुण्यपरमप्रकर्षो वा नपुंसके नास्ति परमप्रकर्षत्वात्स्त्रीवदित्यप्यनिष्टापत्तिरुभयप्रसिद्धाद्धेतोरुभयप्रसिद्धस्य[10] निषेधेनोभ[11]योस्तुल्य[12]त्वात्' इत्यभिधातव्यम्—उभयाभिप्रेतागमेन बाधना[12]त्। स्त्रीणां तु तत्कारणापुण्यपरमप्रकर्षपरा[13]भ्युपगतेनैव मोक्षहेतुपरमप्रकर्षेणापाद्य तत्प्रतिषेधेन तद्धेतुरेव प्रतिषिध्यत इत्यस्ति विशेष[14]ः। यद्वा[15] नोक्तानुमाने तत्कारणापुण्यपरमप्रकर्षाभावाद्धेतोर्मो[16]क्षहेतुपरमप्रकर्षः स्त्रीषु निषिध्यतेऽपि तु परमप्रकर्षत्वाद् दृष्टान्ते दृष्टसाध्यव्याप्तिका[17]त्। न चात्र[18] केनचिद्व्यभिचारः स्त्रीसम्बन्धिनः कस्यचित्परमप्रकर्षस्यासम्भवात्। मायापरमप्रकर्षोऽस्तीति चेन्न स्त्रीणां मायाबा[19]हुल्यमात्रस्यैवागमे प्रसिद्धेः। अ[20]न्यथा पुंवत्सप्तमपृथिवीगमनानुषङ्गः। मायापरमप्रकर्षादन्यत्वे सतीति विशेष[21]णाद्वा न दोष[22]ः। तत्र ज्ञानादिपरमप्रकर्षो मोक्षहेतुस्तत्रास्ती[23]त्य[24]सिद्धो हेतुः। न खलु ज्ञानादयो यथा पुरुषे प्रकृष्यमाणाः प्रमाणतः प्रतीयन्ते तथा स्त्रीष्वपि। अ[25]न्यथा नपुंसके ते तथा स्युः। तथा[26] चास्याप्यपवर्गप्रसङ्गः। संयमस्तु[27] तद्धेतुस्तत्रासम्भाव्य एव। तथा हि। स्त्रीणां संयमो न मोक्षहेतुः—नियमेनर्द्धिविशेषाहेतुत्वा[28]न्यथानुपपत्तेः। यत्र हि संयमः सांसारिकलब्धीना[29]मप्यहेतुस्तत्रासौ कथं निःशेषकर्मविप्रमोक्षलक्षणमोक्षहेतुः स्यात्? नियमेन च स्त्रीणामेव ऋद्धिविशेषहेतुः संयमो नेष्यते, न तु पुरुषाणाम्। यदि हि नियमेन लब्धिविशेषस्याजनकः संयमः क्वचिदन्यत्राविवादास्पदीभूते मोक्षहेतुः प्रसिद्ध्येत् तदा तद्दृष्टान्तावष्टम्भेनात्राप्यसौ तथा प्रत्येतुं शक्येत, नान्यथा[30]ऽतिप्रसङ्गा[31]त्। संयममात्रं तु सदप्यासां न तद्धेतुस्तिर्यग्गृहस्थादिसंयमवत्। सचेलसंयमत्वाच्च नासौ तद्धेतुर्गृहस्थसंयमवत्। न चायमसिद्धो हेतुः। न

१ मोक्षहेतुपरमप्रकर्षो व्यापक साध्य, तत्कारणापुण्यपरमप्रकर्षो व्याप्यो हेतुरिति ॥ २ अविनाभाव ॥ ३ शब्द प्रयत्नानन्तरीयक अनित्यत्वादित्यत्रानित्यत्वस्य व्याप्यरूपस्य हेतोर्यथा प्रयत्नानन्तरीयकत्वम् ॥ ४ नियम सिद्धो यत ॥ ५ मोक्षहेतुपरमप्रकर्षसद्भावेपि अपरोऽनिष्टो नोपपद्यते चेत् ॥ ६ तादात्म्यतदुत्पत्तिलक्षणे द्वे ॥ ७ मोक्षहेतुपरमप्रकर्षसप्तमपृथ्वीगमनकारणापुण्यपरमप्रकर्षलक्षणयो ॥ ८ मोक्षहेतुपरमप्रकर्ष ॥ ९ साध्यस्य ॥ १० वादिप्रतिवादिनो ॥ ११ सितपटप्रसिद्धस्य स्त्रीनिर्वाणस्यास्माभि प्रतिषेधादस्मत्प्रसिद्धस्य सितपटेन प्रतिषेधात्। इति तुल्यत्वम् ॥ १२ सितपटपक्षस्य॥ १३ पर सितपट ॥ १४ इति कथ तुल्यत्वमुभयो ? ॥ १५ प्रागुक्तस्य परिहारान्तरे यद्वाशब्द ॥ १६ व्यापकाभावाद् व्याप्याभाव न कुर्म इत्यर्थ ॥ १७ यो य परमप्रकर्ष स स स्त्रीषु नास्तीति ॥ १८ स्त्रीषु मोक्षप्रतिषेधे ॥ १९ प्राचुर्यमात्र, न तु परमप्रकर्ष ॥ २० मायापरमप्रकर्षे स्त्रीष्वस्ति यदि ॥ २१ परमप्रकर्षत्वे ॥ २२ व्यभिचारलक्षण ॥ २३ परमप्रकर्षत्वादित्यत्रानुमाने ॥ २४ अविकलकारणत्वादिति ॥ २५ स्त्रीषु ज्ञानादय प्रकृष्यमाणाश्चेत्तर्हि ॥ २६ स्त्रीणा मोक्षहेतुसयमो विद्यते चेत् ॥ २७ तु पुन ॥ २८ स्त्रीणा मोक्षहेतुसयमो विद्यते चेत्तर्हि ॥ २९ ऋद्धीनाम् ॥ ३० दृष्टान्तत्वमन्तरेण ॥ ३१ गृहस्थस्यापि मोक्ष स्यात् खसयमात् ॥

हि स्त्रीणां निर्वस्त्रः संयमो दृष्टः प्रवचनप्रतिपादितो वा। न च प्रवचनाभावेपि मोक्षसुखाकाङ्क्षया तासां वस्त्रत्यागो युक्तोऽर्हत्प्रणीतागमोल्लङ्घनेन मिथ्यात्वाराधनाप्राप्तेः। यदि पुनर्नॄणामचेलोसौ तद्धेतुः स्त्रीणां तु सचेलस्तर्हि कारणभेदान्मुक्तेरप्यनुपज्येत भेदः स्वर्गादिवत्। देशसंयमिनश्चैवं मुक्तिः प्रसज्यते। तथा च लिङ्गग्रहणमनर्थकम्। सचेलसंयमश्च मुक्तिहेतुरिति कुतोऽवगतम्? स्वागमाच्चेन्नास्यासान् प्रत्यागमाभासत्वाद्भवतो यज्ञानुष्ठानागमवत्। स्त्रियो न मोक्षहेतुसंयमवत्यः साधूनामवन्द्यत्वाद्गृहस्थवत्। न चात्रासिद्धो हेतुः 'वरिससयदिक्खियाए अज्जाए अज्ज दिक्खिओ साहू। अभिगमणवंदणणमंसणविणएण सो पुज्जो' इत्यभिधानात्। वाह्याभ्यन्तरपरिग्रहवत्त्वाच्च न तास्तद्वत्यस्तद्वत्। न चायमसिद्धो हेतुः। प्रत्यक्षेणावगतो हि वस्त्रग्रहणादिवाह्यपरिग्रहोऽभ्यन्तरं स्वशरीरानुरागादिपरिग्रहमनुमापयति। न च शरीरोष्मणा वातकायिकादिजन्तूपघातनिवारणार्थं स्वशरीरानुरागाद्यभावेप्यसावुपादीयते इत्यभिधेयं पुंसामाचेलक्यव्रतस्य हिंसात्वानुषङ्गात्। तथा चार्हदादयो मुक्तिभाजस्तदुपदेष्टारो वा न स्युः। किन्तु सवस्त्रा एव गृहस्था मुक्तिभाजो भवेयुः। न चाचेलक्यं नेष्यते 'आचेलक्कुद्देसिय सेज्जाहररायपिंडकिदिकम्म' इत्यादेः पुरुषं प्रति दशविधस्य स्थितिकल्पस्य मध्ये तदुपदेशात्। किञ्च गृहीतेपि वस्त्रे जन्तूपघातस्तदवस्थः—तेनानावृतपाणिपादादिप्रदेशोष्मणा तदुपघातस्य परिहर्त्तुमशक्तेः, वस्त्रस्य यूकालिक्षाद्यनेकजन्तुसम्मूर्च्छनाधिकरणत्वाच्च। तथाविधस्यापि स्वीकरणे मूर्द्धजानां लुञ्चनादिक्रिया न स्यात्। वस्त्राकुञ्चनादेर्जातवातेनाकाशप्रदेशावस्थितजन्तूपपीडनाच्च व्यजनादिवातवत्। किञ्चैवमनेकप्राण्युपघातनिवारणार्थमविहारोप्यनुष्ठेयो वस्त्रग्रहणवदविशेषात्। प्रयत्नेन गच्छतो जन्तूपघातेप्यहिंसा निश्चलेपि समा। यथा च यज्ञानुष्ठानं पशुहिंसाङ्गत्वेनाऽश्रेयस्करत्वात्त्याज्यं तथा वस्त्रग्रहणमप्यविशेषात्। एतेन संयमोपकरणार्थं तदित्यपि निरस्तम्। किञ्च वाह्याभ्यन्तरपरिग्रहपरित्यागः संयमः। स च याचनसीवनप्रक्षालनशोषणनिक्षेपादानचौरहरणादिमनःसंक्षोभकारिणि वस्त्रे गृहीते कथं स्यात्? प्रत्युत संयमोपघातकमेव तत्स्याद्वाह्याभ्यन्तरनैर्ग्रन्थ्यप्रतिपन्थित्वात्। ह्रीशीतार्त्तिनिवृत्त्यर्थं वस्त्रादि यदि गृह्यते। कामिन्यादिस्तथा किन्न कामपीडादिशान्तये। १। येन येन विना पीडा पुंसां समुपजायते। तत्तत्सर्वमुपादेयं लावकादिपलादिकम्। २। वस्त्रखण्डे

---

१ निर्वस्त्रसंयम ॥ २ अदृष्टलक्षणकारणभेदाद्यथा स्वर्गादे प्रथमद्वितीयादिप्रकारेण भेद ॥ ३ सचेलसंयमवत्स्त्रीमुक्तिप्रकारेण ॥ ४ निर्ग्रन्थतालक्षणम् ॥ ५ सितपटस्य ॥ ६ महेश्वराय ॥ ७ अनुमाने ॥ ८ वर्षशतदीक्षिताया आर्यिकाया अद्य दीक्षित साधु। अभिगमनवन्दनानमस्कारेण विनयेन स पूज्य ॥ ९ सम्मुखगमन ॥ १० गुरुभक्तिपूर्वक ॥ ११ नमस्कार ॥ १२ परेण ॥ १३ आचेलक्यौद्देशिकशय्याधरराजकीयपिण्डोक्षाकृतिकर्मव्रतरोपणयोग्यत्व ज्येष्ठता प्रतिक्रमण मासिकवासिता स्थितिकल्पो योगश्च वार्षिको दशम ॥ १४ अनुप्रेक्षासंयमस्य ॥ १५ यूकाद्यनेकजन्तुसम्मूर्छनाधिकरणत्वाविशेषात्। एषा निवारणार्थम् ॥ १६ प्रसारणाच्च ॥ १७ व्यञ्जक ॥ १८ जन्तूपघातपरिहारार्थं वस्त्रस्योपादानप्रकारेण ॥ १९ अगमनम् ॥ २० वस्त्रस्य जन्तूपघातसमर्थनपरेण ग्रन्थेन ॥ २१ विशेषत ॥ २२ विरोधित्वात् ॥ २३ ताम्बूलादिश्च ॥ २४ वस्त्रग्रहणप्रकारेण ॥ २५ गृह्यते ॥ २६ यदि तर्हीति शेष ॥ २७ लावक पक्षिविशेष। पलमासम् ॥ २८ उपादेयम् ॥

गृहीतेपि विरक्तो यदि तत्त्वतः । स्त्रीमात्रेपि तथा किन्न तुल्याक्षेपसमाधितः[1] । ३ । नापि तन्वीमनःक्षोभनिवृत्त्यर्थं तदादृतम् । तद्वाञ्छाऽहेतुकत्वेन तन्निषेधस्य सम्भवात् । ४ । चक्षुरुत्पाटनं पट्टबन्धनं च प्रसज्यते । लोचनादेस्तदुत्पत्तौ निमित्तत्वाविशेषतः । ५ । चलचित्ताङ्गना काचित्संयतं च तपस्विनम् । यदीच्छति भ्रातृवर्त्किं दोपस्तस्य मतो नृणाम् । ६ । बीभत्सं मलिनं साधुं दृष्ट्वा शवशरीरवत् । अङ्गना नैव रज्यन्ते विरज्यन्ते तु तत्त्वतः । ७ । स्त्रीपरीषहभग्नैश्च वक्षरागैश्च विग्रहे । वस्त्रमादीयते यस्मात्सिद्धं ग्रन्थद्वयं ततः । ८ । न चैवं जन्तुरक्षागण्डादिप्रतीकारार्थं पिच्छौपधादौ गृह्यमाणेप्ययं दोपः समानस्त्रिचतुरपिच्छग्रहणस्य जन्तुरक्षार्थत्वात् शरीरे ममेदंभावाऽसूचकत्वाच्च औपधस्यापि प्रतिपन्नसामर्थ्यस्य गण्डादेर्व्यावृत्तिहेतुत्वान्नान्यविरोधित्वाच्च, वस्त्रे तु विपर्ययात्, परमनैर्ग्रन्थ्यसिद्ध्यर्थं पिच्छस्याप्यग्रहणाच्चौपधवत् । पिण्डौपध्यादयो हि सिद्धान्तानुसारेणोद्गमादिदोपरहिता रत्नत्रयाराधनहेतवो गृह्यमाणा न कस्यापि मोक्षहेतोर्हन्तारः । न हि तद्ग्रहणे रागादयोन्तरङ्गा बहिरङ्गा वा स्वभूषावेषादयो ग्रन्था जायन्ते । अतस्ते मोक्षहेतोरुपकर्त्तार एव । पिण्डग्रहणमन्तरेण ह्यपूर्णकालेपि विपत्तेरापत्तेरात्मघातित्वं स्यात्, न तु वस्त्रे । षष्ठाष्टमादिक्रमेण च मुमुक्षुभिः पिण्डोपि त्यज्यते । न तु स्त्रीभिः कदाचिद्वस्त्रम् । अथ वस्त्रादन्यस्याखिलस्य त्यागात्साकल्येनासां बाह्यं नैर्ग्रन्थ्यं तर्हि लोभादन्यकषायत्यागादेवाबाह्यमपि स्यात् । न च गृहीतेपि वस्त्रे ममेदम्भावस्याभावात्तदवतिष्ठते–विरोधात् । बुद्धिपूर्वकं हि हस्तेन पतितवस्त्रमादाय परिदधानोपि तन्मूर्च्छारहित इति कश्चेतनः श्रद्दधीत ? तन्वीमाश्लिष्यतोपि तद्रहितत्वप्रसङ्गात् । ततो वस्त्रग्रहणे बाह्याभ्यन्तरपरिग्रहप्राप्तेर्नैर्ग्रन्थ्यद्वयासम्भवान्न स्त्रीणां मोक्षः । स हि बाह्याभ्यन्तरकारणजन्यः कार्यत्वान्मापपाकादिवत् । तच्च बाह्यमाभ्यन्तरं च कारणमाकिञ्चन्यम् । तदभावे कथं स स्यात् ? इति परैर्हेतोरसिद्धेर्नानुमानात्स्त्रीमुक्तिसिद्धिः । नाप्यागमात्तन्मुक्तिप्रतिपादकस्यास्याभावात् । 'पुंवेदं वेदंतो जे पुरिसा खवगसेढिमारूढा । सेसोदयेण वि तहा झाणुवजुत्ता य ते दु सिज्झंति' इत्यादेरप्यागमस्य स्त्रीमुक्तिप्रतिपादकत्वाभावः । स हि पुंवेदोदयवत् शेपवेदोदयेनापि पुंसामेवापवर्गावेदक उभयत्रापि पुरुषा इत्यभिसम्बन्धात् । उदयश्च भावस्यैव न द्रव्यस्य । स्त्रीत्वान्यथानुपपत्तेश्चासां न मुक्तिः । आगमे हि जघन्येन सप्ताष्टभिर्भवैरुत्कर्पेण द्वित्रैर्जीवस्य रत्नत्रयाराधकस्य मुक्तिरुक्ता । यदा चास्य सम्यग्दर्शनारा-

---

१ रागादिसद्भावे सत्येव स्त्रीपरिग्रह इत्याक्षेपो वस्त्रेपि समान इति समाधानम् । एव यदि वस्त्रमात्रे गृहीते न रागस्तर्हि स्त्रीमात्रपरिग्रहेपि न राग ॥ २ स्वस्य ॥ ३ श्रोत्रादेश्च ॥ ४ यथा भ्रातृसमानत्व वनितायाम् । कुत एतत्त-
स्यम्? इच्छारहितत्वात्तस्य तपस्विन ॥ ५ शरीरे ॥ ६ कारणात् ॥ ७ वस्त्रागलक्षणबाह्याभ्यन्तरपरिग्रह ॥ ८ तत इत्यय शब्द श्लोकादौ द्रष्टव्यस्तेनायमर्थ वस्त्रस्वीकरणे अपर प्रयोजन नास्ति यतस्तत ॥ ९ वस्त्रपकारेण ॥
१० गण्डो रोगविशेष ॥ ११ मूर्च्छा–॥ १२ नैर्ग्रन्थ्य–॥ १३ जन्तुरक्षार्थाभावान्ममेदम्भावसूचकत्वाद् गण्डाद्यव्यावृत्तिहेतुत्वाद् नान्यविरोधित्वाच ॥ १४ किञ्च ॥ १५ औपधादेर्यथाऽग्रहणम् ॥ १६ सम्यग्दर्शनादे ॥ १७ अलङ्कार–॥
१८ मण्डन–॥ १९ देशनैयत्येन वस्त्रपरिधानादिलक्षणो वेप ॥ २० अगृह्यमाणे आत्मघातित्व स्यादिति शेप ॥ २१ तत्=रागादि ॥ २२ बाह्यमभ्यादिकमन्तरा शक्तिरेव यथा न हेतु ॥ २३ सितपटप्रयुक्तस्य अविकलकार-
णत्वादित्यस्य ॥ २४ अनुभवन्त ॥ २५ नपुसकस्त्रीवेदोदयेनापि ॥ २६ ध्यानोपयुक्ता ॥ २७ पुरुषा ॥ २८ मुक्तिसद्भावे सति ॥

धकत्वं, तत्प्रभृति सर्वासु स्त्रीपूत्पत्तिरेव न सम्भवतीति कथं स्त्रीमुक्तिसिद्धिः । ननु चानादिमिथ्यादृष्टिरपि जीवः पूर्वभवनिर्जीर्णाशुभकर्मा प्रथमतरमेव रत्नत्रयमाराध्य भरतपुत्रादिवन्मुक्तिमासादयत्यतः स्त्रीत्वेनोत्पन्नस्यापि मुक्तिरविरुद्धेति तदप्ययुक्तं-पूर्वं निर्जीर्णाशुभकर्मणः स्त्रीवेदेनोत्पत्तेरसम्भवात्तस्याप्यशुभकर्मत्वेन निर्जीर्णत्वात् । कथं पुनः स्त्रीवेदस्याशुभकर्मत्वमिति चेत्सम्यग्दर्शनोपेतस्य तत्त्वेनोत्पत्तेरयोगात् । ततो नास्ति स्त्रीणां मोक्षः पुरुषादन्यत्वान्नपुंसकवत् । अन्यथाऽस्याप्यसौ स्यात् । न चैतद्वाच्यं 'नास्ति पुंसो मोक्षः स्त्रीतोन्यत्वान्नपुंसकवत्'-उभयवादिसम्मतागमेन बाधितत्वात्, भवदागमस्य चास्मान्प्रति अप्रमाणत्वात् । तथा स्त्रीणां मोक्षो नास्त्युत्कृष्टध्यानफलत्वात्सप्तमपृथ्वीगमनवत् । अतोपि न तासां मुक्तिसिद्धिः । ततोऽनन्तचतुष्टयस्वरूपलाभलक्षणो मोक्षः पुरुषस्यैवेति प्रेक्षादक्षैः प्रतिपत्तव्यम् ।

मुख्यं सांव्यवहारिकं च गदितं भानुप्रदीपोपमं प्रत्यक्षं विशदस्वरूपनियतं साकल्यवैकल्यतः । निर्बाधं निर्यतस्वहेतुजनितं मिथ्येतरैः कल्पितं तल्लक्ष्मेति विचारचारुधिषणैश्चेतस्यलं चिन्त्यताम् ॥ १ ॥

इति श्रीप्रभाचन्द्रविरचिते प्रमेयकमलमार्त्तण्डे परीक्षामुखालङ्कारे द्वितीयः परिच्छेदः समाप्तः ॥ २ ॥

---

१ दिव्यस्त्र्यादिपु ॥ २ अन्यथानुपपत्ति सिद्धा यत ॥ ३ स्त्रीणा मोक्षश्चेत् ॥ ४ पुरुषादन्यत्वादित्यनुमान न वक्तव्यमस्मदागमेन बाधितत्वादिति सितपटेनोक्त त प्रत्याह सूरि ॥ ५ अनेन पद्येन परिच्छेदार्थमुपसहरन्नाह ॥ ६ सामग्रीविशेषेत्यादिकमिन्द्रियानिन्द्रिय च ॥ ७ नैयायिकादिभि ॥ ८ रुतम् ॥



श्रीः ।

# अथ तृतीयः परिच्छेदः ॥

अथेदानीं परोक्षप्रमाणस्वरूपनिरूपणाय "परोक्षमितरत्" इत्याह । प्रतिपादितविशदस्वरूपविज्ञानाद्यदन्यदऽविशदस्वरूपं विज्ञानं तत्परोक्षम् । तथा च प्रयोगः । अविशदज्ञानात्मकं परोक्षं परोक्षत्वात् । यन्नाऽविशदज्ञानात्मकं तन्न परोक्षं, यथा मुख्येतरप्रत्यक्षम् । परोक्षं चेदं वक्ष्यमाणं विज्ञानम् । तस्मादविशदज्ञानात्मक-मिति । तन्निमित्तप्रकारप्रकाशनाय प्रत्यक्षेत्याद्याह । प्रत्यक्षादिनिमित्तं यस्य, स्मृत्यादयो भेदा यस्य तत्तथोक्तम् ।

तत्र स्मृतेस्तावत्संस्कारेत्यादिना कारणस्वरूपे निरूपयति । संस्कारः सांव्यवहारिकप्रत्यक्षभेदो धारणा । तस्योद्बोधः प्रबोधः । स निबन्धनं यस्यास्तदित्याकारो यस्याः सा तथोक्ता स्मृतिः । विनेयानां सुखावबोधार्थं दृष्टान्तद्वारेण तत्स्वरूपं निरूपयति । यथेत्युदाहरणप्रदर्शने । स देवदत्त इति । एवंप्रकारं तच्छब्दपरामृष्टं यद्विज्ञानं तत्सर्वं स्मृतिरित्यवगन्तव्यम् । न चासावप्रमाणं संवादकत्वात् । यत्संवादकं तत्प्रमाणं यथा प्रत्यक्षादि । संवादिका च स्मृतिस्तस्मात्प्रमाणम् । ननु कोयं स्मृतिशब्दवाच्योर्थः ? ज्ञानमात्रमनुभूतार्थविषयं वा विज्ञानम् ? प्रथमपक्षे प्रत्यक्षादेरपि स्मृतिशब्दवाच्यत्वानुषङ्गः । तथा च कस्य दृष्टान्तता ? न खलु तदेव तस्यैव दृष्टान्तो भवति । द्वितीयपक्षेपि देवदत्तानुभूतार्थे यज्ञदत्तादिज्ञानस्य स्मृतिरूपताप्रसङ्गः । अथ येनैव यदेव पूर्वमनुभूतं वस्तु पुनः कालान्तरे तस्यैव तत्रैवोपजायमानं ज्ञानं स्मृतिरित्युच्यते । नन्वनुभूते जायमानमित्येतत्केन प्रतीयताम् ? न तावदनुभवेन तत्काले स्मृतेरेवासत्त्वात् । न चासती विषयीकर्त्तुं शक्या । न चाविषयीकृता तत्रोपजायते इत्यधिगतिः । न चानुभवकालेऽर्थस्यानुभूततास्ति तदा तस्यानुभूयमानत्वात् । तथा चानुभूयमाने स्मृतिरिति स्यात् । अथानुभूते स्मृतिरित्येतत्स्मृतिरेव प्रतिपद्यते, न-अनयातीतानुभवार्थयोरविषयीकरणे तथा प्रतीत्ययोगात् । तद्विषयीकरणे वा निखिलातीतविषयीकरणप्रस-ङ्गोऽविशेषात् । यदि चानुभूतता प्रत्यक्षगम्या स्यात्तदा स्मृतिरपि जानीयादहमनुभूते समुत्पन्नेति-अनुभवानुसारित्वात्तस्याः । न चासौ प्रत्यक्षगम्येत्युक्तम् । इत्यप्यसमी-क्षिताभिधानं-स्मृतिशब्दवाच्यार्थस्य प्रागेव प्ररूपितत्वात् । तदित्याकारानुभूतार्थविषया हि प्रतीतिः स्मृतिरित्युच्यते । ननु चोक्तमनुभूते स्मृतिरित्येतन्न स्मृति-

---

१ स्मृतिप्रत्यभिज्ञानतर्कानुमानागमविशेषा स्वभाविनो धर्मिण प्रसिद्धा । तत्र परोक्षत्व सामान्यरूप वादिप्रतिवादिनो प्रसिद्धस्वभाव -तेन वस्तुनोऽनेकधर्मात्मकत्वात् । तत्र स्थितो द्वितीयोऽविशदज्ञानात्मकोऽप्रसिद्ध साध्यते इति विशेष स्वभाविन ( स्वभावस्वभाविनोर्भेदात् ) सामान्यस्वभाव ब्रुवता दोषाभावात् ॥ २ कारण ॥ ३ भेद ॥ ४ स्मृति प्रत्यक्षपूर्विका । प्रत्यभिज्ञान प्रत्यक्षस्मरणपूर्वकम् । तर्क प्रत्यक्षस्मरणप्रत्यभिज्ञान-पूर्वक । अनुमान प्रत्यक्षस्मरणप्रत्यभिज्ञानतर्कपूर्वकम् । आगमस्तु श्रावणाध्यक्षसङ्केतस्मृतिपूर्वक ॥ ५ संस्कारस्य कारणमाद्य देवदत्तदर्शनम् । उद्बोधस्य कारण पाश्चात्य तत्सदृशतत्कार्यादिदर्शनम् ॥ ६ प्राकट्यम् ॥ ७ सौगतो वक्ति ॥ ८ अनुत्पन्नत्वेन ॥ ९ अनुभूतेऽर्थे ॥ १० अनुभवकालेऽर्थस्यानुभूयमानत्वे च ॥ ११ अनुभवश्चार्थश्च अनुभवार्थौ । अतीतौ च तावनुभवार्थौ च ॥ १२ अतीतत्वस्य ॥ १३ कर्त्ता ॥

प्रत्यक्षाभ्यां[1] प्रतीयते। तदप्यपेशलं मतिज्ञानापेक्षेणात्मनाऽनुभूयमानाऽनुभूतार्थविषयतायाः[2] स्मृतिप्रत्यक्षाकारयोश्चानुभवसम्भवाच्चित्राकारप्रतीतिवत् चित्रज्ञानेन। यथा चाशक्यविवेचनत्वाद्युगपच्चित्राकारतैकस्याविरुद्धा[4] तथा क्रमेणाप्यवग्रहेहावायधारणास्मृत्यादिचित्रस्वभावता[3]। न च प्रत्यक्षेणानुभूयमानतानुभवे तदेवार्थेऽनुभूततया[5] अप्यनुभवोऽनुपज्यते स्मृतिविशेषणापेक्षत्वात्तत्र तत्प्रतीतेः। नीलाद्याकारविशेषणापेक्षया ज्ञाने चित्रप्रतिपत्तिवत्। न चानुभूतार्थविषयत्वे स्मृतेर्गृहीतग्राहित्वेनाऽप्रामाण्यं रि(वि)च्छित्तिविशेषसम्भवात्। न[6] खलु यथा प्रत्यक्षे विशदाकारतया वस्तुप्रतिभासस्तथैव[7] स्मृतौ तत्र तस्या वैशद्याऽप्रतीतेः। पुनः[8] पुनर्भावयतो वैशद्यप्रतीतिस्तु भावनाज्ञानम्। तच्च तद्रूपतया भ्रान्तमेव स्वप्नादिज्ञानवत्। तथाप्यनुभूतार्थविषयत्वमात्रेणास्याः प्रामाण्यानभ्युपगमेऽनुमानेनाधिगतेऽग्नौ यत्प्रत्यक्षं तदप्यप्रमाणं स्यात्। असत्यतीतेर्थे प्रवर्त्तमानत्वात्तदप्रामाण्ये प्रत्यक्षस्यापि तत्प्रसङ्गस्तदर्थस्यापि तत्कालेऽसत्त्वात्[9]। तज्जन्मादेस्तत्रास्य[10] प्रामाण्ये स्मरणेपि तदस्तु। निराकृतं चार्थजन्मादि ज्ञानस्य प्रागेवेति कृतं प्रयासेन[11]। न चाविसंवादकत्वं स्मृतेरसिद्धं स्वयं स्थापितनिक्षेपादौ तद्गृहीतार्थे प्राप्तिप्रमाणान्तरप्रवृत्तिलक्षणाविसंवादप्रतीतेः[12]। यत्र तु विसंवादः सा स्मृत्याभासा प्रत्यक्षाभासवत्। विसंवादकत्वे चास्याः कथमनुमानप्रवृत्तिः? सम्बन्धस्यातोऽप्रसिद्धेः। न च सम्बन्धस्मृतिमन्तरेणानुमानमुदेत्यतिप्रसङ्गात्[13]। किञ्च सम्बन्धाभावात्तस्याः[14] विसंवादकत्वं कल्पितसम्बन्धविषयत्वाद्वा सतोप्यस्याऽनया विपयीकर्त्तुमशक्यत्वाद्वा? प्रथमपक्षे कुतोनुमानप्रवृत्तिः? अन्यथा[15] यतः कुतश्चित्सम्बन्धरहितादपत्र क्वचिदनुमानं स्यात्। कल्पितसम्बन्धविषयत्वेनास्याः विसंवादित्वे दृश्यप्राप्यैकत्वे[16] प्राप्यविकल्प्यैकत्वे[17] च प्रत्यक्षानुमानयोरविसंवादो न स्यात्। तत्सम्बन्धस्य[18] कल्पितत्वे चानुमानमप्येवंविधमेव स्यात्। तथा च कथमतोऽभीष्टतत्त्वसिद्धिः[19]? अथ सन्नपि सम्बन्धोनया[20] विपयीकर्त्तुं न शक्यते, यत्तु विपयीक्रियते सामान्यं[21] तस्याऽसत्त्वात्स्मृतेर्विसंवादित्वम्[22]। तदेतदनुमानेपि[23] समानम्। अध्यवसितस्वलक्षणाव्यभिचारित्वं[24] स्मृतावपि[25]। किञ्च लिङ्गलिङ्गिसम्बन्धः सत्तामात्रेणानुमानप्रवृत्तिहेतुस्तद्दर्शनात्तत्स्मरणाद्वा? तत्राद्यविकल्पे नालिकेरद्वीपायातस्याप्रतिपन्नाग्निधूमसम्बन्धस्यापि धूमदर्शनादग्निप्रतिपत्तिः स्यात्। न चाविज्ञातः सम्बन्धोस्त्युपलम्भनिबन्धनत्वात्सद्व्यवहारस्यान्यथातिप्रसङ्गात्। तद्दर्शनमात्रेण तत्प्रवृत्तौ वा-

१ प्रत्यक्षस्मरणयो २ विज्ञानस्य ॥ ३ आदिना प्रत्यभिज्ञानादि ॥ ४ एकस्यात्मनोऽविरुद्धा ॥ ५ उत्तरकालमात्मन ॥ ६ तमेव दर्शयति ॥ ७ वैशद्यमेव नास्ति कुत परिच्छित्तिविशेष इत्यभिप्राय वक्ति बौद्ध ॥ ८ अवग्रहादिभेदेनानुभवतो नरस्य ॥ ९ क्षणिकत्वात् ॥ १० आदिना तादूप्यम् ॥ ११ अर्थजन्मादिनिराकरणप्रयासेन ॥ १२ प्रत्यक्ष ॥ १३ विस्मृतसम्बन्धस्यापि अनुमानोत्पत्तिप्रसङ्गात् ॥ १४ दृष्टान्तसाध्यसाधनयो ॥ १५ सम्बन्धाभावे अनुमानप्रवृत्तिर्यदि स्यात् ॥ १६ अर्थाल्लिङ्गस्थानीयात् ॥ १७ यदेव दृष्ट जलस्वलक्षण तदेव प्राप्तमिति ॥ १८ अनुमानलक्षणो विकल्प। विकल्पस्य विषयो विकल्प्यो यो जलादि। पूर्वं विकल्प्य पश्चात्प्राप्य इति। कथम् विवादापन्नो देश प्रवृत्तस्य स्नानादिमान् जलत्वात्सम्प्रतिपन्नदेशवत्। इति यदेवानुमित स्नानादिक तदेव प्राप्तमिति ॥ १९ स्मृतिगृह्यमाण ॥ २० सर्वं क्षणिक सत्त्वादिति क्षणिकत्वसिद्धि ॥ २१ तादात्म्यतदुत्पत्तिलक्षण ॥ २२ अन्यापोह ॥ २३ न्यायरूपमनुमानेन स्वलक्षण विद्यमान तद्विपयीक्रियते सामान्य तद्विद्यमान न भवतीति ॥ २४ प्रत्यक्षेण ॥ २५ ग्रस्म ॥ २६ स्वलक्षण न व्यभिचरतीति न स्मृतेश्चेति ॥ २७ समानम् ॥ २८ परपक्षप्रतिक्षेप करोति सूरि ॥ २९ ग्रहण ॥ ३० अज्ञातस्यापि सत्त्वसिद्धिश्चेत् ॥ ३१ ईश्वरादेरपि सत्त्वसिद्धिप्रसङ्गात् ॥

लावस्थायां प्रतिपन्नाग्निधूमसम्बन्धस्य पुनर्वृद्धदशायां धूमदर्शनादग्निप्रतिपत्तिप्रसङ्गः । न चैवम् । तत्स्मृतावस्त्येवेति चेत्कथं नास्याः प्रमाणम् ? को हि स्मृतिपूर्वकमनुमानमभ्युपगम्य पुनस्तां निराकुर्यात् ? अनुमानस्यापि निराकरणानुषङ्गात् । न खलु कारणाभावे कार्योत्पत्तिर्नामाऽतिप्रसङ्गात् । समारोपव्यवच्छेदकत्वाच्चास्याः प्रामाण्यमनुमानवत् । न च स्मृतिविषयभूते सम्बन्धादौ समारोपस्यैवासम्भवात्कस्य व्यवच्छेद इत्यभिधातव्यं साधर्म्यदृष्टान्ताभिधानानर्थक्यप्रसङ्गात् । तत्र स्मृतिहेतुभूतं हि तत् । अन्यथा हेतुरेव केवलोभिधीयेत । ततस्तदभिधानान्यथानुपपत्तेस्तद्विषयभूते सम्बन्धादौ विस्मरणसंशयविपर्यासलक्षणः समारोपोस्तीत्यवगम्यते । तन्निराकरणाच्चास्याः प्रामाण्यमिति ।

अथेदानीं प्रत्यभिज्ञानस्य कारणस्वरूपप्ररूपणार्थं दर्शनेत्याद्याह । दर्शनस्मरणे कारणं यस्य तत्तथोक्तम् । सङ्कलनं विवक्षितधर्मयुक्तत्वेन प्रत्यवमर्शनं प्रत्यभिज्ञानम् । ननु प्रत्यभिज्ञायाः प्रत्यक्षप्रमाणस्वरूपत्वात्परोक्षरूपतयात्राभिधानमयुक्तम् । तथा हि । "प्रत्यक्षं प्रत्यभिज्ञा—अक्षान्वयव्यतिरेकानुविधानात्तदन्यप्रत्यक्षवत् । न च स्मरणपूर्वकत्वात्तस्याः प्रत्यक्षत्वाभावः सत्सम्प्रयोगजत्वेन स्मरणपश्चाद्भावित्वेप्यस्याः प्रत्यक्षत्वाविरोधात् । उक्तं च । 'न हि स्मरणतो यत्प्राक् तत् प्रत्यक्षमितीदृशम् । वचनं राजकीयं वा लौकिकं वापि विद्यते । १ । न चापि स्मरणात्पश्चादिन्द्रियस्य प्रवर्त्तनम् । वार्यते केनचिन्नापि तत्तदानीं प्रदुष्यति । २ । तेनेन्द्रियार्थसम्बन्धात्प्रागूर्ध्वं चापि यत्स्मृतेः । विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ।३।' अनेकदेशकालावस्थासमन्वितं सामान्यं द्रव्यादिकं च वस्त्वस्याः प्रमेयमित्यपूर्वप्रमेयसद्भावः । तदुक्तम् । गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि । तथापि व्यतिरेकेण पूर्वबोधात्प्रतीयते । १ । देशकालादिभेदेन तत्रास्त्यवसरो मितेः । यः पूर्वमवगतोंशः स न नाम प्रतीयते ।२। इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ।" तदप्यसमीचीनं—प्रत्यभिज्ञानेऽक्षान्वयव्यतिरेकानुविधानस्यासिद्धेः । अन्यथा प्रथमव्यक्तिदर्शनकालेप्यस्योत्पत्तिः स्यात् । पुनर्दर्शने पूर्वदर्शनाहितसंस्कारप्रबोधोत्पन्नस्मृतिसहायमिन्द्रियं तज्जनयति इत्यप्यसाम्प्रतं—प्रत्यक्षस्य स्मृतिनिरपेक्षत्वात् ।

---

१ स्मृतसम्बन्धस्य ॥ २ अनुमानप्रवृत्ति ३ मृत्पिण्डाभावे घटोत्पत्तिप्रसङ्गात् ॥ ४ साध्यसाधनविषये ॥ ५ समारोपाभावे उक्ति शेष ॥ ६ यत्सत्तत्सर्वं क्षणिकं यथा जलधर ॥ ७सम्बन्धस्मृतिहेतुभूतो दृष्टान्तो यदि न स्यात ॥ ८ एकत्वसादृश्यादिलक्षण ॥ ९ पुनर्ग्रहणम् ॥ १० मीमांसक ॥ ११ परोक्षप्रमाणे ॥ १२ सतो विद्यमानस्यार्थस्येन्द्रियेण सह संयोग सन्निकर्षस्तस्माज्जात सत्सम्प्रयोगजस्तस्य भावस्तत्त्व तेन ॥ १३ ज्ञानम् ॥ १४स्मरणानन्तरमिन्द्रियमर्थग्रहणाय न प्रवर्त्तते इत्युक्ते आह ॥ १५ स्मरणोत्तरकालम् ॥ १६ दुष्ट भवति ॥ १७ राजकीय लौकिक वचन न विद्यते येन । स्मरणादिन्द्रियस्य प्रवर्त्तन वा केनचिद्वा न निवार्यते येन । इन्द्रिय वा दुष्ट न भवति येन कारणेन ॥ १८ प्रत्यक्षस्मरणगृहीतग्राहित्वात्प्रत्यभिज्ञान प्रत्यक्षमप्रमाण स्यादित्यारेकायामाह ॥ १९ तिर्यक्सामान्यम् ॥ २० आदिना गुण ॥ २१ भेदेन ॥ २२ स्मरणप्रत्यक्षरूपात् ॥ २३ २४ पूर्वबोधाद्भेदेन प्रतीयते इत्युक्ते आह ॥ २४ अवस्थाभेदेन ॥ २५ प्रत्यभिज्ञानलक्षणप्रत्यक्षप्रमाणस्य ॥ २६ प्रत्यभिज्ञानलक्षणप्रत्यक्षस्य ॥ २७ पूर्वादिपर्याय ॥ २८ आद्य ॥ २९ यस ॥ ३० भास ॥ ३१ यम ॥ ३२ ताम ॥ ३३ क्रम ॥ ३४ यस ॥ ३५ बस ॥

तत्सापेक्षत्वेऽपूर्वार्थसाक्षात्कारित्वाभावः स्यात् । देशकालेत्याद्यप्ययुक्तमुक्तं यतो देशादिभेदेनाप्यध्यक्षं चक्षुःसम्बद्धमेवार्थं प्रकाशयत्प्रतीयते । न च प्रत्यभिज्ञातं प्रकाशयति–पूर्वोत्तरविवर्त्तवर्त्त्येकत्वविषयत्वात्तस्याः । वर्त्तमानश्चायं चक्षुःसम्बद्धः प्रसिद्धः । यदप्युच्यते–स्मरतः पूर्वदृष्टार्थानुसन्धानादुत्पद्यमाना मतिश्चक्षुःसम्बद्धत्वे प्रत्यक्षमिति, तदप्यसारम् । न हीन्द्रियमतिः स्मृतिविषयपूर्वरूपग्राहिणी । तत्कथं सा तत्सन्धानमात्मसात्कुर्यात्? पूर्वदृष्टसन्धानं हि तत्प्रतिभासनम् । तत्सम्भवे चेन्द्रियमतेः परोक्षार्थग्राहित्वात् परिस्फुटप्रतिभासता न स्यात् । यदि च स्मृतिविषयस्वभावतया दृश्यमानोऽर्थः प्रत्यक्षप्रत्ययैरवगम्येत तर्हि स्मृतिविषयः पूर्वस्वभावो वर्त्तमानतया प्रतिभातीति विपरीतख्यातिः सर्वं प्रत्यक्षं स्यात् । अव्यवधानेन प्रतिभासनलक्षणवैशद्याभावाच्च न प्रत्यभिज्ञानं प्रत्यक्षम् । इत्यलमतिप्रसङ्गेन ।

तच्च तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादिप्रकारं प्रतिपत्तव्यम् । तदेवोक्तप्रकारं प्रत्यभिज्ञानमुदाहरणद्वारेणाखिलजनाववोधार्थं स्पष्टयति । यथा स एवायं देवदत्तः, गोसदृशो गवयः, गोविलक्षणो महिषः, इदमस्माद्दूरं, वृक्षोयमित्यादि । ननु स एवायमित्यादि प्रत्यभिज्ञानं नैकं विज्ञानं–स इत्युल्लेखस्य स्मरणत्वादयमित्युल्लेखस्य चाध्यक्षत्वात् । न चाभ्यां व्यतिरिक्तं ज्ञानमस्ति यत्प्रत्यभिज्ञाशब्दाभिधेयं स्यात् । नाप्यनयोरैक्यं प्रत्यक्षानुमानयोरपि तत्प्रसङ्गात् । स्पष्टेतररूपतया तयोर्भेदेऽत्रापि सोऽस्तु । तदसाम्प्रतं–स्मरणप्रत्यक्षजन्यस्य पूर्वोत्तरविवर्तवर्त्त्येकद्रव्यविषयस्य सङ्कलनज्ञानस्यैकस्य प्रत्यभिज्ञानत्वेन सुप्रतीतत्वात् । न खलु स्मरणमेवातीतवर्त्तमानविवर्त्तवर्त्तिद्रव्यं सङ्कलयितुमलं–तस्यातीतविवर्त्तमात्रगोचरत्वात् । नापि दर्शनं–तस्य वर्तमानमात्रपर्यायविषयत्वात् । तदुभयसंस्कारजनितं कल्पनाज्ञानं तत्सङ्कलयतीति कल्पने तदेव प्रत्यभिज्ञानं सिद्धम् । प्रत्यभिज्ञानानभ्युपगमे च यत्सत्तत्सर्वं क्षणिकमित्याद्यनुमानवैयर्थ्यम् । तद्ध्येकत्वप्रतीतिनिरासार्थं, न पुनः क्षणक्षयप्रसिद्ध्यर्थं–तस्याध्यक्षसिद्धत्वेनाभ्युपगमात् । समारोपनिषेधार्थं तदित्यप्यपेशलं–सोयमित्येकत्वप्रतीतिमन्तरेण समारोपस्याप्यसम्भवात् । तदभ्युपगमे चायं स इत्यध्यक्षस्मरणव्यतिरेकेण नापरमेकत्वज्ञानमित्यस्य विरोधः । न चाध्यक्षस्मरणे एव समारोपः । तेनानयोर्व्यवच्छेदेऽनुमानस्यानुत्पत्तिरेव स्यात्–तत्पूर्वकत्वात्तस्य । कथं चैवंस्याः प्रतिक्षेपेऽभ्यासेतरावस्थायां प्रत्यक्षानुमानयोः प्रामाण्यप्रसिद्धिः? प्रत्यभिज्ञाया अभावे हि यद्दृष्टं यच्चानुमितं तदेव प्राप्तमित्येकत्वाध्यवसायाभावेनानयोरविसंवादासम्भवात् । तथा च प्रमाणमविसंवादि ज्ञानमिति प्रमाणलक्षणप्रणयनमयुक्तम् । अन्यद्दृष्टमनुमितं वा प्राप्तं

---

१ सन्दिग्धानैकान्तिकत्वे उद्भाविते इद वाक्य परिहार ॥ २ पुरुषस्य ॥ ३ प्रतिभासात् ॥ ४ तर्कस्य प्रत्यक्षतापरिहारार्थमाह ॥ ५ इन्द्रियमति स्मृतिविषयरूपग्राहिणी न भवति इन्द्रियमतित्वादित्यस्मिन्ननुमाने सन्दिग्धानैकान्तिकत्वेपरिहारे इद वाक्यम् ॥ ६ दृश्यमानार्थाद्विपरीतस्मृतिविषयो विपरीतख्याति ॥ ७ इत्यापद्यते ॥ ८ पूर्वस्मरणमुत्तरदर्शन च व्यववायक प्रत्यभिज्ञानस्य ॥ ९ प्रत्यभिज्ञानभेदलक्षणप्रत्यक्षप्रमाणस्य निराकरणविस्तरेण ॥ १० प्रत्यभिज्ञानभेद दर्शयति ॥ ११ प्रागुक्तलक्षणलक्षितमेव ॥ १२ तेन सदृश इत्यादि च ॥ १३ अत्राह सौगत ॥ १४ तदुभयस्य कार्यं सस्कार सौगताभिप्रायेण वा सता तेन जनितम् ॥ १५ प्रथममेव विशारव (क्षणक्षयिन) परमाणव प्रत्यक्षेण निश्चीयन्ते इति वचनात् ॥ १६ प्रत्यस्य ॥ १७ किम ॥ १८ अर्थाव्यभिचारित्वमविसवाद ॥ १९ प्रमाणे अविसवादित्वादिति प्रसिद्धहेतुभूतधर्मेण प्रामाण्यमप्रसिद्धधर्मं साध्यते इति प्रामाण्याविसवादयोर्भेद ॥

चान्यदित्येकत्वाध्यवसायाभावेप्यविसंवादे प्रामाण्ये चानयोरभ्युपगम्यमाने मरीचिकाचक्रे जलज्ञानस्यापि तत्प्रसङ्गः । न चैवंवादिनो नैरात्म्यभावनाभ्यासो युक्तः फलाभावात् । न चात्मदृष्टिनिर्वृत्तिः फलं-तस्या एवासम्भवात् । सोहमित्यस्तीति चेन्न-स्मरणप्रत्यक्षोल्लेखव्यतिरेकेण तदनभ्युपगमात् । तथा च कुतस्तन्निमित्ता रागादयो यतः संसारः स्यात्? ननु पूर्वापरपर्याययोरेकत्वग्राहिणी प्रत्यभिज्ञा । तस्य चासम्भवात्कथमियमविसंवादिनी यतः प्रमाणं स्यात्? प्रत्यक्षेण हि तद्रूपयोः प्रतीतिः स्वकालनियतार्थविषयत्वात्तस्येत्यपि मनोरथमात्रं-सर्वथा क्षणिकत्वस्याग्रे निराकरिष्यमाणत्वात् । प्रत्यक्षेणाऽतद्रूपतयार्थप्रतीतेश्चानुभवात्कथं विसंवादकत्वं तस्याः? ततः प्रमाणं प्रत्यभिज्ञा-स्वगृहीतार्थाविसंवादित्वात्प्रत्यक्षादिवत् । नीलाद्यनेकाकाराक्रान्तं चैकंज्ञानमभ्युपगच्छतः स एवायमित्याकारद्वयाक्रान्तैकज्ञाने को विद्वेषः? ननु स एवायमित्याकारद्वयं किं परस्परानुप्रवेशेन प्रतिभासतेऽननुप्रवेशेन वा? प्रथमपक्षेऽन्यतराकारस्यैव प्रतिभासः स्यात् । द्वितीयपक्षे तु परस्परविविक्तप्रतिभासद्वयप्रसङ्गः । अथ प्रतिभासद्वयमेकाधिकरणमित्युच्यते, न-एकाधिकरणत्वासिद्धेः । न खलु परोक्षापरोक्षरूपौ प्रतिभासावेकमधिकरणं बिभ्राते सर्वसंविदामेकाधिकरणत्वप्रसङ्गात् । इत्यप्यसारं-तदाकारयोः कथञ्चित्परस्परानुप्रवेशेनात्माधिकरणतयात्मन्येवानुभवात् । कथं चैवंवादिनश्चित्रज्ञानसिद्धिः? नीलादिप्रतिभासानां परस्परानुप्रवेशे सर्वेषामेकरूपतानुषङ्गात्कुतश्चित्रतैकनीलाकारज्ञानवत्? तेषां तदननुप्रवेशे भिन्नसन्ताननीलादिप्रतिभासानामिवात्यन्तभेदसिद्धेर्नितरां चित्रताऽसम्भवः । एकज्ञानाधिकरणतया तेषां प्रत्यक्षतः प्रतीतेः प्रतिपादितदोषाभावे प्रकृतेप्यसौ मा भूत्तत एव । अथोच्यते 'पूर्वमुत्तरं वा दर्शनमेकत्वेऽप्रवृत्तं कथं स्मरणसहायमपि प्रत्यभिज्ञानमेकत्वे जनयेत्? न खलु परिमलस्मरणसहायमपि चक्षुर्गन्धे ज्ञानमुत्पादयति' इति तदप्युक्तिमात्रं तथा च तज्जनकत्वस्यात्र प्रमाणप्रतिपन्नत्वात् । न च प्रमाणप्रतिपन्नं वस्तुस्वरूपं व्यलीकविचारसहस्रेणाप्यन्यथाकर्त्तुं शक्यं-सहकारिणां चाचिन्त्यशक्तित्वात् । कथमन्यथाऽसर्वज्ञज्ञानमभ्यासविशेषसहायं सर्वज्ञज्ञानं जनयेत्? एकत्वविषयत्वं च दर्शनस्याप्यन्यथा निर्विषयकत्वमेवास्य स्यादेकान्ताऽनित्यत्वस्य कदाचनाप्यप्रतीतेः । केवलं तेनैकत्वं प्रतिनियतवर्त्तमानपर्यायाधारतयार्थस्य प्रतीयते स्मरणसहायप्रत्यक्षजनितप्रत्यभिज्ञानेन तु स्मर्यमाणानुभूयमानपर्यायाधारतयेति विशेषः । न च लूनपुनर्जातनखकेशादिवत्सर्वत्र निर्विषया प्रत्यभिज्ञा क्षणक्षयैकान्तस्यानुपलम्भात् । तदुपलम्भे हि सा निर्विषया स्यादेकचन्द्रोपलम्भे द्विचन्द्रप्रतीतिवत् । लूनपुनर्जातनखकेशादौ च स एवायं नखकेशादिरित्येकत्वपरामर्शि प्रत्यभिज्ञानं लूननखकेशादिसदृशोयं पुनर्जातनखकेशादिरिति सादृश्यनिबन्धनप्रत्यभि-

१ जलम् ॥ २ अन्यन्नलमित्यर्थ ॥ ३ प्रत्यभिज्ञानाभावादितिवादिन ॥ ४ पश्चादात्मदर्शनाभाव ॥ ५ कुत ॥ ६ तद्यद्रूपयो ॥ ७ चतुर्थपरिच्छेदे ॥ ८ अन्यरूपतया ॥ ९ परस्परतादात्म्येन ॥ १० उभयोर्मध्ये ॥ ११ एकज्ञानस्य ॥ १२ भिन्न ॥ १३ एकत्वहानि स्यादिति दूषणम् ॥ ॥ १४ एकज्ञान ॥ १५ जैनै ॥ १६ दैवदत्तयज्ञदत्तादि ॥ १७ द्रव्यापेक्षया ॥ १८ एकाधिकरणप्रतीते ॥ १९ प्रत्यक्षम् ॥ २० पूर्वोत्तरविवर्त्तवर्त्यैकत्वे ॥ २१ दर्शनस्य ॥ २२ प्रत्यक्ष ॥ २३ अभावरूपत्वेन ॥ २४ सहकारिणामचिन्त्यशक्तित्व यदि न स्यात् ॥ २५ न केवल प्रत्यभिज्ञानस्य ॥ २६ दर्शनमेकत्वविषय यदि न स्यात् ॥

ज्ञानान्तरेण वाध्यमानत्वादप्रमाणं प्रसिद्धं, न पुनः साद्दश्यप्रत्यवमार्शि–तत्रास्याऽवाध्यमानतया प्रमाणत्वप्रसिद्धेः । न चैकत्रैकत्वपरामार्शिप्रत्यभिज्ञानस्य मिथ्यात्वदर्शनात्सर्वत्रास्य मिथ्यात्वं, प्रत्यक्षस्यापि सर्वत्र भ्रान्तत्वानुषङ्गान्न किञ्चित्कुतश्चित्कस्यचित्प्रसिद्ध्येत् । ततो यथा शुक्ले शङ्खे पीताभासं प्रत्यक्षं तत्रैव शुक्लाभासप्रत्यक्षान्तरेण वाध्यमानत्वादप्रमाणं, न पुनः पीते कनकादौ तथा प्रकृतमपीति । कथं च प्रत्यभिज्ञानविलोपेऽनुमानप्रवृत्तिः ? येनैवं हि पूर्वं धूमोऽग्नेर्दृष्टस्तस्यैव पुनः पूर्वधूमसदृशधूमदर्शनादग्निप्रतिपत्तिर्युक्ता नान्यस्यान्यदर्शनात् । न च प्रत्यभिज्ञानमन्तरेण तेनेदं सदृशमिति प्रतिपत्तिरस्ति–पूर्वप्रत्यक्षेणोत्तरस्य तत्प्रत्यक्षेण च पूर्वस्याग्रहणात्–द्वयप्रतिपत्तिनिवन्धनत्वादुभयसादृश्यप्रतिपत्तेः सम्वन्धप्रतिपत्तिवत् । ततः प्रत्यभिज्ञा प्रमाणमभ्युपगन्तव्या । तदप्रामाण्यं हि गृहीतग्राहित्वात्स्मरणानन्तरभावित्वात् शब्दाकारधारित्वाद्वाध्यमानत्वाद्वा स्यात् ? न तावदाद्यविकल्पो युक्तः । न हि तद्विषयभूतमेकं द्रव्यं स्मृतिप्रत्यक्षग्राह्यमित्युक्तम् । तद्गृहीतातीतवर्त्तमानविवर्त्ततादात्म्येनावस्थितद्रव्यस्य कथञ्चित्पूर्वार्थत्वेपि तद्विषयप्रत्यभिज्ञानस्य नाप्रामाण्यं लैङ्गिकादेरप्यप्रामाण्यप्रसङ्गात् तस्यापि सर्वथैवापूर्वार्थत्वासिद्धेः । सम्वन्धग्राहिविज्ञानविषयसाध्यादिसामान्यात् कथञ्चिदभिन्नस्यानुमेयस्य देशकालविशिष्टस्य तद्विषयत्वात्कथञ्चित्पूर्वार्थत्वसिद्धेः । तन्न गृहीतग्राहित्वात्तत्राप्रामाण्यम् । नापि स्मरणानन्तरभावित्वात्–रूपस्मरणानन्तरं रससन्निपाते समुत्पन्नरसज्ञानस्याप्यप्रामाण्यप्रसङ्गात् । तत्र हि रूपस्मृतेः पूर्वकालभावित्वात्समनन्तरकारणत्वं–वोधाद्वोधरूपतेत्यभ्युपगमात् । न चात्र वोधरूपतया समनन्तरकारणत्वमन्यत्र स्मृतिरूपतयेत्यभिधातव्यं–स्मृतिरूपवोधरूपयोस्तादात्म्ये क्वचिद्वोधरूपतया तत्तस्य क्वचित्तु स्मृतिरूपतयेति व्यवस्थापयितुमशक्तेः । कथं चैवंवादिनोऽनुमानं प्रमाणम् ? तद्धि लिङ्गलिङ्गिसम्वन्धस्मरणानन्तरमेवोपजायते । अन्यथा साधर्म्यदृष्टान्तोपन्यासो व्यर्थः स्यात् । शब्दाकारधारित्वं च प्रागेव प्रतिषिद्धम् । वाध्यमानत्वं चासिद्धम् । न खलु प्रत्यक्षं तद्वाधकं तस्य तद्विषयप्रवृत्त्यऽसम्भवात् । यद्धि यद्विषये न प्रवर्त्तते न तत्र तस्य साधकं वाधकं वा । यथा रूपज्ञानस्य रसज्ञानम् । न प्रवर्त्तते च प्रत्यभिज्ञानस्य विषये प्रत्यक्षमिति । नाप्यनुमानं तद्वाधकं प्रत्यभिज्ञानविषये तस्याप्यप्रवृत्तेः । क्वचिदनुमेयमात्रे प्रवृत्तिप्रसिद्धेस्तस्य तद्विषये प्रवृत्तौ वा सर्वथा वाधकत्वविरोधः । ततः प्रमाणं प्रत्यभिज्ञा सकलवाधकरहितत्वात्प्रत्यक्षादिवत् । एतेनैव गोसदृशो गवय इत्यादि सादृश्यनिवन्धनं प्रत्यभिज्ञानं प्रमाणमावेदितं प्रतिपत्तव्यं तस्यापि स्वविषये वाधविधुरत्वस्य संवादकत्वस्य च प्रसिद्धेः । ननु सादृश्यस्यार्थेभ्यो भिन्नाभिन्नादिविकल्पैर्विचार्यमाणस्यायोगात्तद्विषयप्रत्यभिज्ञानस्य वाधविधुरत्वमविसंवादकत्वं चासिद्धमित्यप्यास्तां तावत्–प्रत्यक्षादिप्रमाण-

---

१ देवदत्तादावपि ॥ २ किञ्चिद्वस्तु ॥ ३ प्रमाणात् ॥ ४ प्रतिपत्तु ॥ ५ अप्रसिध्येयत ॥ ६ एकत्वनिवन्धनस्य सादृश्यनिवन्धनस्य च ॥ ७ देवदत्तेन ॥ ८ यज्ञदत्तस्य ॥ ९ विपक्षलक्षणप्रन्तरदर्शनात् ॥ १० उद्धत्वादिपर्यायस्य ॥ ११ युवादिपर्यायस्य ॥ १२ सयोगादि ॥ १३ द्रव्यापेक्षया ॥ १४ आदिना शब्दस्य ॥ १५ तर्के ॥ १६ आदिना साधनम् ॥ १७ अग्न्यादे ॥ १८ सान्निध्ये ॥ १९ स्मृतिरूपता वोधरूपता चास्ति स्मरणज्ञानस्य ॥ २० स्मृतौ ॥ २१ स्मरणानन्तरभावित्वान्न प्रमाण प्रत्यभिज्ञा इत्येवम् ॥ २२ ज्ञाने ॥ २३ शब्दाद्वैतनिराकरणे ॥ २४ अग्न्यादौ ॥ २५ एकत्वनिवन्धनप्रत्यभिज्ञानप्रामाण्यसमर्थनग्रन्थेन ॥ २६ देवदत्तेन सदृशो यज्ञदत्त इत्यादि च ॥ २७ आदिना उभय=ग्रहणम ॥ २८ पुन ॥ २९ आदिनानुमानादि ॥

विषयभूतत्वेनाबाधिततत्स्वरूपस्य सामान्यसिद्धिप्रक्रमे प्रतिपादयिष्यमाणत्वात् । न च तस्मिन्[1]नेव स्वपुत्रादौ तादृशोयमिति प्रत्यभिज्ञानं सादृश्यनिबन्धनं स एवायमित्येकत्वनिबन्धनप्रत्यभिज्ञानेन बाध्यमानमप्रमाणं प्रतिपाद्य स्वपुत्रादिना सदृशे पुरुषे तादृशोयमित्यपि प्रत्यभिज्ञानमप्रमाणं प्रतिपादयितुं युक्तं–तस्याबाध्यमानत्वेन प्रमाणत्वात् । स्यान्मतं 'प्रत्यभिज्ञानमनुमानत्वेन प्रमाणमिष्यत एव[2] । तथा हि । पूर्वोत्तरार्थक्षणयो[3]रनर्थान्तरभूतं सादृश्यं तत्प्रत्यक्षाभ्यां प्रतीयत एव । यस्तु तथा प्रतिपद्यमानोपि सादृश्यव्यवहारं न करोति घटविविक्तभूतलप्रतिपत्तावपि घटाभावव्यवहारं[4]वत्स, प्रागुपलब्धार्थ[5]समानो[6]यं तत्सदृशाकारोपलम्भा[7]दित्युभयगतसदृशाकारदर्शनेन तथा व्यवहारं कार्यते, दृश्यानुपलम्भोपदर्शनेन घटाभावव्यवहारं[8]वत्' तदप्यसङ्गतं–प्राक्प्रतिपन्नधूमसदृशोयं धूम इत्यादि[9]लिङ्गप्रत्यभिज्ञा[10]नस्य[11] लैङ्गिकत्वे[12] तल्लिङ्ग[13]प्रत्यभिज्ञाज्ञानस्यापि लैङ्गिकत्वमित्यनवस्था[14]प्रसङ्गात् । किञ्चार्थे[15] सादृश्यव्यवहारस्य सदृशाकारनिबन्धनत्वे सदृशाकारेपि कुतस्तद्व्यवहारसिद्धिः? अपरतद्गतसदृशधर्मदर्शनाच्चे[16]दनवस्था । धर्मि[17]सादृश्यव्यवहारे चान्योन्याश्रयः । तन्नेयं सादृश्यप्रत्यभिज्ञा लिङ्गजाभ्युपगन्तव्या । नन्[18]नु गोदर्शनाहितसंस्कारस्य पुनर्गवयदर्शना[19]द्गवि स्मरणे सत्यनेन समानः स इत्येवमाकारस्य ज्ञानस्योपमानरूपत्वान्न प्रत्यभिज्ञानता । सादृश्यविशिष्टो हि[20] विशेषो विशेषविशिष्टं वा सादृश्यमुपमानस्यैव प्रमेयम् । उक्तं च । तस्मा[21]द्यत्[22]स्मर्य[23]ते[24] तत्स्यात्सादृश्येन विशेषितम् । प्रमेयमुपमानस्य सादृश्यं वा तदन्वि[25]तम्[26] । १ । प्रत्यक्षे[27]णावबुद्धेपि सादृश्ये[28] गवि च स्मृते । विशिष्टस्या[29]न्यतः[30] सिद्धेरुपमानप्रमाणता[31] । २ । इति । तदप्यसमीक्षिताभिधानमेकत्वसादृश्यप्रतीत्योः सङ्कलनाज्ञानरूपतया प्रत्यभिज्ञानतानतिक्रमात् । स एवायमिति हि यथोत्तरपर्यायस्य पूर्वपर्यायेणैकताप्रतीतिः प्रत्यभिज्ञा[32] तथा सादृश्यप्रतीतिरप्यनेन सदृश इत्य[33]विशेषात् । पूर्वोत्तरप्रत्ययवेद्यैकत्वगोचरत्वात्तस्याः प्रत्यभिज्ञानत्वे सादृश्यप्रतीतावपि तत्स्यात्[34] । न हि तत्ताभ्यां न परिच्छिद्यते[35]–'वस्तुत्वे सति चास्यैवं[36] सम्बद्धस्य च चक्षुषा । द्वयोरे[37]कत्र[38] वा दृष्टौ[39] प्रत्यक्षत्वं न वार्यते । १ । सामा[40]-

१ एकस्मिन् ॥ २ बौद्धसिद्धान्तोयम् ॥ ३ गोगवयलक्षणौ पूर्वोत्तरकालभाविप्रत्यक्षसम्बन्धित्वेन पूर्वोत्तरार्थक्षणौ ॥ ४ यथा घटाभावे व्यवहार न करोति साङ्ख्य इत्यर्थ ॥ ५ पूर्वदृष्टेन यज्ञदत्तादिना ॥ ६ दृश्यमानो देवदत्तादि ॥ ७ अय दृश्यमानो गवयो गोसदृश गोसदृशाकारत्वाद्गोगवयप्रत्यक्षत्वे सति सादृश्यव्यवहारात् ॥ ८ व्यक्तिद्वयगत ॥ ९ अत्र घटो नास्ति दृश्यत्वे सत्यनुपलब्धेरिति ॥ १० इय शिंशपा पूर्वदृष्टशिंशपासमाना इति च ॥ ११ लिङ्गरूपस्य ॥ १२ अनुरूपत्वे अङ्गीक्रियमाणे ॥ १३ तद्गतधर्मस्य ॥ १४ पर्वतधूम पूर्वदृष्टधूमसदृशस्तत्सदृशाकारत्वात्सम्प्रतिपन्नधूमवत् । तत्सदृशाकारत्वेन समान सदृशाकारत्वात् सम्प्रतिपन्नसदृशाकारवत् ॥ १५ गोगवयलक्षणे ॥ १६ गोगवयौ सदृशौ सदृशाकारत्वाद्देवदत्तयज्ञदत्तवत् । गोगवयाकारौ सदृशौ सदृशाकारत्वात् तद्वत् । द्वितीयौ आकारौ सदृशौ सदृशाकारत्वादित्यादि ॥ १७ त्वादि ॥ १८ मीमासक ॥ १९ पश्चात् ॥ २० गोलक्षणो धर्मी ॥ २१ धर्म ॥ २२ दृश्यमानात् ॥ २३ गवयात् ॥ २४ स्मर्यमाणम् ॥ २५ वस्तु ॥ २६ स्मर्यमाणगवान्वितम् ॥ २७ उपमानस्यैवेत्यत्र य एवकारस्तस्य सवाद दर्शयति ॥ २८ गवयगते ॥ २९ सादृश्यविशिष्टस्य गोस्तद्विशिष्टस्य वा साक्षादे ॥ ३० स्मरणप्रत्यक्षाभ्याम् ॥ ३१ स्मरणप्रत्यक्षाभ्या सकाशादन्यदुपमान तत ॥ ३२ प्रत्यभिज्ञा ॥ ३३ सङ्कलनरूपताया ॥ ३४ पूर्वोत्तरप्रत्ययवेद्यत्वाविशेषात् ॥ ३५ अन्यथा ॥ ३६ उक्तप्रकारेण मीमासकग्रन्थापेक्षया सादृश्यस्य वस्तुत्व कथमिति प्रश्ने अवयवसामान्ययोगप्रकारेण वस्तुत्वम् ॥ ३७ गोगवयलक्षणयोर्विशेषयो. ॥ ३८ गवये वा ॥ ३९ प्रत्यक्षे सति ॥ ४० एकत्र प्रत्यक्षत्व कथ न वार्यते इत्युक्ते आह ॥

न्यवञ्च सादृश्यमेकैकत्र समाप्यते । प्रतियोगिन्यदृष्टेपि तत्तस्मादुपलभ्यते, इत्यस्य विरोधानुषङ्गात् । यथा च पूर्वोत्तरप्रत्ययाभ्यां गवयगवादिविशिष्टमप्रतिपन्नं सादृश्यमनेन प्रतीयते तथा पूर्वोत्तरपर्यायविशिष्टमेकत्वं प्रत्यभिज्ञानेन । यदि चैकत्वज्ञानमेव प्रत्यभिज्ञा, सादृश्यज्ञानं तूपमानमित्यभ्युपगमस्तर्हि वैलक्षण्यज्ञानं किन्नाम प्रमाणं स्यात् ? यथैव हि गोदर्शनाहितसंस्कारस्य गवयदर्शिनोऽनेन समानः स इति प्रतिपत्तिस्तथा महिष्यादिदर्शिनोनेन विलक्षणः स इति वैलक्षण्ये प्रतीतिरप्यस्ति । सा च न प्रत्यभिज्ञोपमानयोरन्यतरा तदेकत्वसादृश्याऽविषयत्वात् । अतः प्रमाणान्तरं प्रमाणसंख्यानियमविघातकृद्भवेत्परस्य । ननु सादृश्याभावो वैलक्षण्यम् । तस्याभावप्रमाणविषयत्वान्न प्रमाणसंख्यानियमविघातस्तर्हि वैलक्षण्याभावः सादृश्यमिति स एव दोषः । नन्वनेकस्य समानधर्मयोगः सादृश्यं तत्कथं वैलक्षण्याभावमात्रं स्यादिति चेत्तर्हि वैलक्षण्यमपि विसदृशधर्मयोगस्तत्कथं सादृश्याभावमात्रं स्यादिति समानम् ।

एतेन 'गौरिव गवय इत्युपमानवाक्याहितसंस्कारस्य पुनर्वने गवयदर्शनादयं गवयशब्दवाच्य इति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुपमानमिति नैयायिकमतमपि प्रत्युक्तम् । यथैव ह्येकदा घटमुपलब्धवतः पुनस्तस्यैव दर्शने स एवायं घट इति प्रतिपत्तिः प्रत्यभिज्ञा तथा गोसदृशो गवय इति सङ्केतकाले गोसदृशगवयाभिधानयोर्वाच्यवाचकसम्बन्धं प्रतिपद्य पुनर्गवयदर्शनात्तत्प्रतिपत्तिः प्रत्यभिज्ञा किन्नेष्यते ? न खलु पूर्वमप्रतिपन्नेऽपूर्वदर्शनात्स्मृतिर्युक्ता । यतस्तथा प्रतिपत्तिः स्यात् । गोविलक्षणमहिष्यादिदर्शनाच्चायं गवयशब्दवाच्यो न भवतीति तत्संज्ञासंज्ञिसम्बन्धप्रतिषेधप्रतिपत्तिश्च यद्युपमानं प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति व्याहन्येत । अथ प्रसिद्धार्थवैधर्म्यादपीष्यते तर्हि प्रसिद्धार्थवैधर्म्याच्च साध्यसाधनमुपमानमित्युपसंख्यानं सूत्रे कर्त्तव्यम् । किञ्च प्रसिद्धार्थैकत्वात्साध्यसाधनमुपमानमित्यप्यभ्युपगम्यताम् । तथा च प्रत्यभिज्ञानस्य प्रत्यक्षेन्तर्भावोऽयुक्तः । तथा स्वसमीपवर्त्तिप्रासादादिदर्शनोपजनितसंस्कारस्य तत्प्रतियोगिभूधराद्युपलम्भादिदमस्माद्दूरमिति प्रतिपत्तिरामलकदर्शनाहितसंस्कारस्य विल्वादिदर्शनादतस्तत्सूक्ष्ममिति स्वदर्शनाविर्भूतसंस्कारस्य तद्विपरीतार्थोपलम्भादतोयं प्रांशुरिति च प्रतिपत्तिः किं नाम मानं स्यात् ? तथा वृक्षाद्यनभिज्ञो यदा कश्चित्कञ्चित्पृच्छति कीदृशो वृक्षादिरिति । स तं प्रत्याह 'शाखादिमान्वृक्ष एकशृङ्गो गण्डकोऽष्टपादः

---

१ ग्रन्थस्य ॥ २ एतावता ग्रन्थेन एकत्वप्रतीतिवत्सादृश्यप्रत्यभिज्ञानस्यापि पूर्वोत्तरप्रत्ययवेद्यसादृश्यगोचरत्वमस्तीति समर्थितम् ॥ ३ अप्रतिपन्न प्रतीयते ॥ ४ प्रत्यभिज्ञानस्य उपमानस्य च ॥ ५ वैलक्षण्यज्ञाने ॥ ६ मीमांसकस्य ॥ ७ वैलक्षण्याभावलक्षणसादृश्यस्याभावप्रमाणवेद्यत्वात् । उपमानप्रमाणभावे सति ॥ ८ गोगवयलक्षणार्थस्य ॥ ९ गवय ॥ १० तुच्छाभावरूपम् ॥ ११ अवयव ॥ १२ मीमांसकं प्रत्युपमानस्य प्रत्यभिज्ञानत्वसमर्थनपरेण ग्रन्थेन ॥ १३ उपमानस्य ॥ १४ गवयशब्दस्य ॥ १५ गवयपिण्डस्य ॥ १६ ज्ञानवत ॥ १७ आटविकाद् ज्ञाला ॥ १८ वाच्यवाचकसम्बन्धे ॥ १९ गवय ॥ २० गो ॥ २१ ज्ञातार्थसम्बन्धसाधर्म्यात् ॥ २२ गवयस्य ॥ २३ साध्यस्याय गवयशब्दवाच्य इति सञ्ज्ञासञ्ज्ञिसम्बन्धस्य ॥ २४ गवा ॥ २५ महिषस्य ॥ २६ साध्यसाधनमुपमानम् ॥ २७ गोगवयलक्षणेन ॥ २८ महिषस्य ॥ २९ साध्यस्याय गवयशब्दवाच्य इति सञ्ज्ञासञ्ज्ञिसम्बन्धस्य ॥ ३० गणना ॥ ३१ तत्रास्त्येव भवदीये सूत्रे ॥ ३२ पूर्वपर्यायेण ॥ ३३ उत्तरपर्यायस्य ॥ ३४ स एवायमित्यादि ॥ ३५ दूषणान्तरसमुच्चये ॥ ३६ कुब्ज ॥ ३७ प्रमाणम् ॥

शरभः चारुसटान्वितः सिंह' इत्यादि । [1]तद्वाक्याहितसंस्कारः प्रष्टा यदा शाखादिमतोर्थान् प्रतिपद्य अयं स वृक्षशब्दवाच्य इत्यादिरूपतया [2]तत्संज्ञासंज्ञिसम्बन्धं प्रतिपद्यते तदा किं नाम [3]तत्प्रमाणं स्यात् ? उपमानमित्यसम्भाव्यं सर्वत्रोक्तप्रकारप्रति[4]पत्तौ प्रसिद्धार्थसाधर्म्यासम्भवात् । ततः प्रतिनियतप्रमाणव्यवस्थामभ्युपगच्छ[5]ता प्रतिपादि[6]तप्रकारा प्रतीतिः प्रत्यभिज्ञै[7]वेत्यभ्युपगन्तव्यम् ।

अथेदानीमूहस्योपलम्भेत्यादिना कारणस्वरूपे निरूपयति । उपलम्भानुपलम्भौ साध्यसाधनयोर्यथाक्षयोपशमं स[8]कृत् पुनःपुनर्वा दृढतरं निश्चयानिश्चयौ न भूयोदर्शनादर्शने । ते[9]नातीन्द्रियसाध्यसाधनयोरागमानुमाननिश्चयानि[10]श्चयहेतुकसम्बन्धबोध[11]स्यापि सङ्ग्रहान्नाव्याप्तिः । [12]यथास्त्यस्य प्राणिनो धर्मविशेषो विशिष्टसुखादिसद्भावान्यथानुपपत्तेरित्यादौ[13], आदित्यस्य गमनशक्तिसम्बन्धोऽस्ति गतिमत्त्वान्यथानुपपत्तेरित्यादौ[14] च । न खलु धर्मविशेषः प्रवचनादन्यतः प्रतिपत्तुं शक्यः । नाप्यतोनुमानादन्यतः कुतश्चित्प्रमाणादादित्यस्य गमनशक्तिसम्बन्धः साध्यत्वाभिमतः । साधनं वा गतिमत्त्वं देशाद्देशान्तरप्राप्तिमत्त्वानुमानादन्यत इति । तौ निमित्तं यस्य व्याप्तिज्ञानस्य तत्तथोक्तम् । व्याप्तिः साध्यसाधनयोरविनाभावः । तस्य ज्ञानमूहः । न च बालावस्थायां निश्चयानिश्चयाभ्यां प्रतिपन्नसाध्यसाधनस्वरूपस्य पुनर्वृद्धावस्थायां तद्विस्मृतौ तत्स्वरूपोपलम्भेप्यविनाभावप्रतिपत्ते[15]रभावात्तयोस्तदहेतुत्वं स्मरणा[16]देरपि तद्धेतुत्वात् । भूयो निश्चयानिश्चयौ हि स्मर्यमाणप्रत्यभिज्ञायमानौ तत्कारणमिति स्मरणादेरपि तन्निमित्तत्वप्रसिद्धिः । मूलकारणत्वेन तूपलम्भादे[17]रत्रोपदेशः स्मरणादेस्तु प्रकृतत्वादेव तत्कारणत्वप्रसिद्धेरनुपदेश इत्यभिप्रायो गुरूणाम् ।

तच्च व्याप्तिज्ञानं तथोपपत्त्यन्यथानुपपत्तिभ्यां प्रवर्त्तत इत्युपदर्शयति । इदमस्मिन्नित्यादि । [22]इदं साधनत्वेनाभिप्रेतं वस्तु, अस्मिन्साध्यत्वेनाभिप्रेते वस्तुनि सत्येव सम्भवतीति तथोपपत्तिः । अन्यथा साध्यमन्तरेण न भवत्येवेत्यन्यथानुपपत्तिः । वाशब्द उभयप्रकारसूचकः । [23]तावेवोभयप्रकारौ सुप्रसिद्धव्यक्तिनिष्ठतया सुखाववोधार्थं प्रदर्शयति । यथाग्नावेव धूमस्तदभावे न भवत्येवेति च । ननु चास्याऽप्रमाणत्वात्किं कारणस्वरूपनिरूपणप्रयासेनेत्यप्यसाम्प्रतं—यतोस्याप्रामाण्यं गृहीतग्राहित्वाद्विसंवादित्वाद्वा स्यात्प्र[25]माणविषयपरिशोधकत्वाद्वा ? प्रथमपक्षे साध्यसाधनयोः साकल्येन व्याप्तिः प्रत्यक्षात्प्रतीयतेनुमानाद्वा ? न तावत्प्रत्यक्षात्तस्य

---

१ पृच्छ्यमानपुरुषस्य ॥ २ ते च ते सञ्ज्ञासञ्ज्ञिनश्च । वृक्ष इति सञ्ज्ञा, शाखादिमान् पदार्थः सञ्ज्ञी ॥ ३ अत्र वृक्षशब्दवाच्य इत्यादिकम् ॥ ४ इदमस्मादूरमित्यादौ च ॥ ५ प्रसिद्धार्थेन पूर्वप्रतिपन्नेन प्रासादादिना शाखादिमान्वृक्ष इत्यादिवाक्येन ॥ ६ तत्सदृश तद्विलक्षणमित्यादिरूपा ॥ ७ एकवारम् ॥ ८ अग्नेरनुपलम्भो भावान्तरोपलम्भोऽनिश्चय ॥ ९ प्रत्यक्षेण साध्यसाधनयो ॥ १० उपलम्भानुपलम्भौ निश्चयानिश्चयो येन कारणेन ॥ ११ तौ हेतू यस्य सम्बन्धबोधस्य ॥ १२ प्रत्यक्षपूर्वकनिश्चयानिश्चययो सङ्ग्रह अपिशब्दात् ॥ १३ निश्चयानिश्चयहेतुकसम्बन्धबोधस्य सङ्ग्रह क इत्युक्ते आह ॥ १४ अस्य प्राणिनोऽधर्मविशेषोस्ति दु खादिसद्भावादित्यादौ च ॥ १५ चन्द्रो गमनशक्तियुक्तो गतिमत्त्वादित्यादौ च ॥ १६ केवलमुपलम्भानुपलम्भयो ॥ १७ सा ध्यसाधनयो ॥ १८ आदिना प्रत्यभिज्ञानम् ॥ १९ अनुपलम्भस्य च ॥ २० सूत्रे ॥ २१ प्रस्तुतत्वात् ॥ २२ उल्लेखोयम् ॥ २३ तथोपपत्त्यन्यथानुपपत्तिरूपौ ॥ २४ अनुमान ॥ २५ अनिर्णयरूपत्वात्तर्कस्याप्रामाण्यमित्यभिप्राये सत्याह ॥

सन्निहितमात्रगोचरतया देशादिविप्रकृष्टाशेषार्थालम्बनत्वानुपपत्तेः, तत्रास्य वैशद्यासम्भवाच्च । न खलु सत्त्वानित्यत्वादयोऽग्निधूमादयो वा सर्वे भावाः सन्निधानवत्प्रत्यक्षे विशदतया प्रतिभान्ति प्राणिमात्रस्य सर्वज्ञतापत्तेरनुमानानर्थक्यप्रसङ्गाच्च । अविचारकतया चाध्यक्षं यावान् कश्चिद्धूमः स सर्वोऽपि देशान्तरे कालान्तरे वाग्निजन्माऽन्यजन्मा वा न भवतीत्येतावतो व्यापारान्कर्त्तुमसमर्थम् । पुरो व्यवस्थितार्थेषु प्रत्यक्षतो व्याप्तिं प्रतिपद्यमानः सर्वोपसंहारेण प्रतिपद्यते इत्यप्यसुन्दरमविषये सर्वोपसंहारायोगात् । प्रत्यक्षपृष्ठभाविनो विकल्पस्यापि तद्विषयमात्राध्यवसायत्वात्सर्वोपसंहारेण व्याप्तिग्राहकत्वाभावः । तथा चानिश्चित-प्रतिबन्धकत्वाद्देशान्तरादौ साधनं साध्यं न गमयेत् । ननु कार्यं धूमो हुतभुजः कार्यधर्मानुवृत्तितो विशिष्टप्रत्यक्षानुपलम्भाभ्यां निश्चितः स देशान्तरादौ तदभावेपि भवंस्तत्कार्यतामेवातिवर्त्तेत । इत्याकस्मिकोऽग्निनिवृत्तौ न क्वचिदपि निवर्त्तेत । नाप्यवश्यंतया तत्सद्भावे एव स्यादिति-अहेतोः । खरविषाणवत्तस्या-सत्त्वात्क्वचिदप्युपलम्भो न स्यात् सर्वत्र सर्वदा सर्वाकारेण वोपलम्भः स्यात् । स्वभावश्च 'तद्धेतोर्थस्याभावेपि यदि स्यात्तदार्थस्य निःस्वभावत्वं स्वभावस्य वाऽसत्त्वं स्यात् । तत्स्वभावतया चास्य कदाचिदप्युपलम्भो न स्यात् । उक्तं च 'कार्यं धूमो हुतभुजः कार्यधर्मानुवृत्तितः । सम्भवंस्तदभावेपि हेतुमत्तां विलङ्घयेत् । १ । स्वभावेप्यविनाभावो भावमात्रानुबन्धिनि । तदभावे स्वयं भावस्याभावः स्यादभेदतः । २ ।' इति । व्याप्तिप्रतिपत्तावपि तन्निश्चयकालोपल-ब्धेनैव व्यापकेन व्याप्यस्य व्याप्तिः स्यात् तस्यैव तथा निश्चयात्, न तादृशस्य । तादृशस्यापि साध्यव्याप्तत्वग्रहणे तद्ग्राहिणो विकल्पस्यागृहीतग्राहित्वं कथं न स्यात् ? यत्तु प्रत्यक्षेण क्वचित्प्रदेशे साध्यव्याप्तत्वेन प्रतिपन्नं ततस्तस्यानुमाने विशेषतो दृष्टानुमानं स्यात् । अन्यदेशादिस्थसाध्येनास्याव्याप्तेः । पारिशेष्यात्तादृशेन व्यापकेनान्यत्र तादृगस्य व्याप्तिसिद्धिश्चेत् ननु किमिदं पारिशेष्यम् ? प्रत्यक्षमनुमानं वा ? न तावत्प्रत्यक्षं देशान्तरस्थस्यानुमेयस्य प्रत्यक्षेणाप्रतिपत्तेः । अन्यथा-नुमानानर्थक्यानुषङ्गः । नाप्यनुमानं तत्राप्यनुमानान्तरेण व्याप्तिप्रतिपत्तावनवस्थाप्रसङ्गात् । तेनैव तत्प्रतिपत्तावन्योन्याश्रयः । एतेन साध्यसाधनयोः साकल्येना-नुमानाद्व्याप्तिप्रतिपत्तेस्तर्कस्याप्रामाण्यमिति प्रत्युक्तम् । तन्न प्रत्यक्षानुमानयोः साकल्येन व्याप्तिप्रतिपत्तौ सामर्थ्यम् । अथास्मदादिप्रत्यक्षस्य व्याप्तिप्रतिपत्ता-

---

१ क्षणिकत्व ॥ २ अन्यथेति शेष ॥ ३ निर्विकल्पकस्य परामर्शशून्यत्वात् ॥ ४ न विद्यते विचार यावान्कश्चिद्धूम स सर्वोऽप्यग्नेरेव कार्यं नार्थान्तरस्येति ॥ ५ जन ॥ ६ प्रत्यक्षस्य ॥ ७ प्रत्यक्षत सर्वोपसंहारे व्याप्तिग्रहणाभावे च ॥ ८ कर्तृं ॥ ९ अग्ने ॥ १० कार्यस्य धर्मे कारणे सति भवनलक्षणस्तदभावे अभवनलक्षण ॥ ११ अतिक्रमेत् ॥ १२ अकारणक ॥ १३ भूधरप्रदेशे ॥ १४ सत्त्वलक्षणहेतुर्व्याप्य ॥ १५ स्वलक्षणो हेतुर्व्याप्य ॥ १६ अनित्यत्वलक्षणस्य साध्यस्य व्यापकस्य ॥ १७ अनुयायिनि ॥ १८ इति स्थिति ॥ १९ स्वभावस्य भावस्य वा ॥ २० स्वभावस्य अग्नेर्य वा ॥ २१ साध्यसाधनयो ॥ २२ स्वातन्त्र्येणानवस्थानाभावात्स्वभावस्य ॥ २३ अविशेषादित्यर्थं ॥ २४ व्याप्तिनिश्चयकालोपलब्धस्य व्याप्यस्य साधनस्य ॥ २५ साध्येन व्याप्तत्वप्रकारेण ॥ २६ पूर्वदृष्टधूमसदृशस्य धूमस्य न तथा निश्चय ॥ २७ पूर्वदृष्टसदृशस्यापि धूमस्य ॥ २८ सादृश्यमगृहीतम् ॥ २९ महानसे ॥ ३० साधनम् ॥ ३१ साध्यस्य ॥ ३२ विशेषत खदिरादिरूपतया दृष्टस्य महानसादौ यादृशाग्नि प्रतिपन्नस्तस्य भूधरादौ अनुमानस्य ॥ ३३ महानसस्थाग्निसदृशेन ॥ ३४ भूधरनितम्बादौ ॥ ३५ अय धूमोऽग्निना व्याप्तो धूमत्वान्महानसधूमवदिति ॥ ३६ अनुमानेन व्याप्तिग्रहणेऽनवस्थेतरेतराश्रयत्वनिरूपणपरेण ग्रन्थेन ॥ ३७ तद्ग्राहित्वादस्याप्रामाण्यमित्यत्रासौ यो विस्तर ॥

वसामर्थ्येपि योगिप्रत्यक्षस्य तत् स्यादित्यप्यसत्तस्याप्यविचारकतया तावतो व्यापारात्कर्त्तुमसमर्थत्वाविशेषात् । कुतश्चास्योत्पत्तिर्विकल्पमात्राभ्यासादनुमानाभ्यासाद्वा ? प्रथमपक्षे कामशोकादिज्ञानवत्तस्याप्रामाण्यप्रसङ्गः । द्वितीयपक्षेप्यन्योन्याश्रयः व्याप्तिविषये हि योगिप्रत्यक्षे सत्यनुमानं तस्मिंश्च सति तदभ्यासाद्योगिप्रत्यक्षमिति । अस्तु वा योगिप्रत्यक्षं तथापि तत्प्रतिपन्नार्थेष्वनुमानवैयर्थ्यम् । साध्यसाधनविशेषेषु स्पष्टं प्रतिभातेष्वपि अनुमाने सर्वत्रानुमानानुषङ्गात् स्वरूपस्याप्यध्यक्षतोऽप्रसिद्धिः । परार्थं तस्यानुमानमिति चेत्तर्हि योगी परार्थानुमानेन गृहीतव्याप्तिकमगृहीतव्याप्तिकं वा परं प्रतिपादयेत् ? गृहीतव्याप्तिकं चेत्कुतस्तेन गृहीता व्याप्तिः ? न तावत्स्वसंवेदनेन्द्रियमनोविज्ञानैस्तेषां तदविषयत्वात् । योगिप्रत्यक्षेण व्याप्तिप्रतिपत्तावनुमानवैयर्थ्यमित्युक्तम् । अगृहीतव्याप्तिकस्य च प्रतिपादनानुपपत्तिरतिप्रसङ्गात् । मानसप्रत्यक्षाद्व्याप्तिप्रतिपत्तिरित्यन्ये तेप्यतत्त्वज्ञाः प्रत्यक्षस्येन्द्रियार्थसन्निकर्षप्रभवत्वाभ्युपगमात् । अणुस्वभावमनसो युगपदशेषार्थैस्तत्सम्बन्धस्य च प्रागेव प्रतिविहितत्वात्कथं तत्प्रत्ययेनापि व्याप्तिप्रतिपत्तिः ? ननु साध्यसाधनधर्मयोः क्वचिद्व्यक्तिविशेषे प्रत्यक्षत एव सम्बन्धप्रतिपत्तिरित्यप्ययुक्तं साकल्येन तत्प्रतिपत्त्यभावानुषङ्गात् । साध्यं च किमग्निसामान्यमग्निविशेषोऽग्निसामान्यविशेषो वा ? न तावदग्निसामान्यं तदनुमाने सिद्धसाध्यतापत्तेः । विशेषतोऽसिद्धेश्च ? नाप्यग्निविशेषस्तस्यानन्वयात् । अग्निसामान्यविशेषस्य साध्यत्वे तेन धूमस्य सम्बन्धः कथं सकलदेशकालव्याप्त्याध्यक्षतः सिद्ध्येत् ? तथा तत्सम्बन्धासिद्धौ च यत्र यत्र यदा यदा धूमोपलम्भस्तत्र तत्र तदा तदाग्निसामान्यविशेषविषयमनुमानं नोदयमासादयेत् । न ह्यन्यथा सम्बन्धग्रहणमन्यथानुमानोत्थानं नाम, अतिप्रसङ्गात् । ततः सर्वाक्षेपेण व्याप्तिग्राही तर्कः प्रमाणयितव्यः । ननु यावान्कश्चिद्धूमः स सर्वोप्यग्निजन्माऽनग्निजन्मा वा न भवतीत्यूहापोहविकल्पज्ञानस्य सम्बन्धग्राहिप्रत्यक्षफलत्वान्न प्रामाण्यमित्यप्यसमीचीनं प्रत्यक्षस्य सम्बन्धग्राहित्वप्रतिषेधात् । तत्फलत्वेन चास्याऽप्रामाण्ये विशेषणज्ञानफलत्वाद्विशेष्यज्ञानस्याप्यप्रामाण्यानुषङ्गो हानोपादानोपेक्षाबुद्धिफलत्वात्तस्य । प्रामाण्ये चोहापोहज्ञानस्यापि प्रमाणत्वमस्तु सर्वथा विशेषाभावात् । तन्नास्य गृहीतग्राहित्वादप्रामाण्यम् । नापि विसंवादित्वात्स्वविषयेस्य संवादप्रसिद्धेः । साध्यसाधनयोरविनाभावो हि तर्कस्य विषयः । तत्र चाविसंवादकत्वं सुप्रसिद्धमेव । कथमन्यथानुमानस्याविसंवादकत्वम् ? न खलु तर्कस्यानुमाननिबन्धनसम्बन्धे संवादाभावेऽनुमानस्यासौ घटते । ननु चास्य निश्चितः संवादो नास्ति विप्रकृष्टार्थविषय-

---

१ निर्विकल्पकत्वेन ॥ २ विकल्पस्याप्रमाणत्वेनाऽङ्गीकरणात् ॥ ३ उत्पन्ने ॥ ४ स्वस्वरूपादौ ॥ ५ भूभवनवार्द्धितोत्थितमपि नरं प्रतिपादयेत् ॥ ६ यौगा ॥ ७ तैरेव ॥ ८ अणुपरिमाण मन ॥ ९ ते एव धर्मौ ॥ १० अग्नित्वसामान्यम् ॥ ११ यत्र यत्र धूमस्तत्र तत्र खदिराग्निरिति ॥ १२ अग्नित्वस्य ॥ १३ साधनवैयर्थ्यमिति भाव ॥ १४ तत्राविवादाद्व्याप्तिग्रहणकाले एवास्य प्रसिद्धे । कथमन्यथा साध्यसाधनयोर्व्याप्तिनिर्णीति स्यात् ? ॥ १५ देशादिना ॥ १६ अग्नित्वस्य ॥ १७ अग्निसामान्यविशेषेण ॥ १८ देशान्तरकालान्तरसम्बन्धित्वेन ॥ १९ अग्न्यविनाभूतधूमाज्जलानुमानोत्पत्तिप्रसङ्गात् ॥ २० स्वीकारेण ॥ २१ अन्वय ॥ २२ व्यतिरेक ॥ २३ साकल्येन ॥ २४ ॥ दण्डज्ञान ॥ २५ दण्डि ॥ २६ अनुमानलक्षणफलसद्भावात् ॥ २७ तर्कस्य ॥ २८ साकल्येन ॥ २९ तर्कस्य विसवादकत्व सुप्रसिद्ध यदि न स्यात् ॥ ३० विषये ॥

त्वात्तदऽसत्। तर्कस्य संवादसन्देहे[2] हि कथं निस्सन्देहानुमानोत्थानम्? तदभावे च कथं सामस्त्येन प्रत्यक्षस्याप्रामाण्यव्यवच्छेदेन प्रामाण्यप्रसिद्धिः? ततो निस्सन्देहमनुमानमिच्छता साध्यसाधनसम्बन्धग्राहि प्रमाणमसंदिग्धमेवाभ्युपगन्तव्यम्। समारोपव्यवच्छेदकत्वाच्चास्य प्रामाण्यमनुमानवत्। प्रमाणविषयपरिशोधकत्वान्नोहः प्रमाणमित्यपि वार्त्तं प्रमाणविषयस्याप्रमाणेन परिशोधनविरोधान्मिथ्याज्ञानवत्प्रमेयार्थवच्च। प्रयोगः—प्रमाणं तर्कः प्रमाणविषयपरिशोधकत्वादनुमानादिवत्। यस्तु न प्रमाणं स न प्रमाणविषयपरिशोधकः। यथा मिथ्याज्ञानं प्रमेयो वार्थः। प्रमाणविषयपरिशोधकश्चायं, तस्मात्प्रमाणम्। तथा प्रमाणं तर्कः प्रमाणानामनुग्राहकत्वात्। यत्प्रमाणानामनुग्राहकं तत्प्रमाणं यथा प्रवचनानुग्राहकं प्रत्यक्षमनुमानं वा। प्रमाणानामनुग्राहकश्चायमिति। न चायमसिद्धो हेतुः। प्रमाणानुग्रहो हि प्रथमप्रमाणप्रतिपन्नार्थस्य प्रमाणान्तरेण तथैवावसायः—प्रतिपत्तिदार्ढ्यविधानात्। स चात्रास्ति प्रत्यक्षादिप्रमाणेनावगतस्य देशतः साध्यसाधनसम्बन्धस्य दृढतरमनेनावगमात्। ततः साध्यसाधनयोरविनाभावावबोधनिबन्धनमूहज्ञानं परीक्षादक्षैः प्रमाणमभ्युपगन्तव्यम्। न चोहः सम्बन्धज्ञानजन्मा यतोऽपरापरोहानुसरणादनवस्था स्यात्—प्रत्यक्षानुपलम्भजन्मत्वात्तस्य। स्वयोग्यताविशेषवशाच्च प्रतिनियतार्थव्यवस्थापकत्वं प्रत्यक्षवत्। प्रत्यक्षे हि प्रतिनियतार्थपरिच्छेदो योग्यतात एव, न पुनस्तदुत्पत्त्यादेः, ततस्तत्परिच्छेदकत्वस्य प्राक्प्रतिषिद्धत्वात्। योग्यताविशेषः पुनः प्रत्यक्षस्येवास्य स्वविषयज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषः प्रतिपत्तव्यः। ननु यथा तर्कस्य स्वविषये सम्बन्धग्रहणनिरपेक्षा प्रवृत्तिस्तथानुमानस्याप्यस्तु—सर्वत्र ज्ञाने स्वावरणक्षयोपशमस्य स्वार्थप्रकाशनहेतोरविशेषात्। तथा चानर्थकं सम्बन्धग्रहणार्थं तर्कपरिकल्पनं तदप्यसमीचीनं यतोऽनुमानस्याभ्युपगम्यत एव स्वयोग्यताग्रहणनिरपेक्षमनुमेयार्थप्रकाशनम्। उत्पत्तिस्तु लिङ्गलिङ्गिसम्बन्धग्रहणनिरपेक्षा नास्त्यऽगृहीततत्सम्बन्धस्य प्रतिपत्तुः क्वचित्कदाचित्तदुत्पत्त्यप्रतीतेः। न च प्रत्यक्षस्याप्युत्पत्तिः करणार्थसंबन्धग्रहणापेक्षा प्रतिपन्ना स्वयमगृहीततत्सम्बन्धस्यापि प्रतिपत्तुस्तदुत्पत्तिप्रतीतेः। तद्वदूहस्यापि स्वार्थसम्बन्धग्रहणानपेक्षस्योत्पत्तिप्रतिपत्तेर्नोत्पत्तौ सम्बन्धग्रहणापेक्षा युक्तिमतीत्यनवद्यम्।

अथेदानीमनुमानलक्षणं व्याख्यातुकामः साधनादित्याद्याह। साध्याऽभावाऽसम्भवनियमनिश्चयलक्षणात्साधनादेव हि शक्याऽभिप्रेताप्रसिद्धत्वलक्षणस्य साध्यस्यैव यद्विज्ञानं तदनुमानं प्रोक्तं विशेषणयोरन्यतरस्याप्यपाये ज्ञानस्यानुमानत्वासम्भवात्। ननु चास्तु साधनात्साध्यविज्ञानमनुमानम्। तत्तु साधनं निश्चित-

---

१ प्रत्यक्ष प्रमाणमविसंवादकत्वादिति ॥ २ तर्कस्य सत्रादसन्देहे निस्सन्देहानुमानोत्थान न स्यादत ॥ ३ तर्क ॥ ४ अनुमान ॥ ५ तर्क ॥ ६ दूरस्थितस्यार्थस्य प्रत्यक्षविषयस्य यथानुमान परिशोधकम् ॥ ७ प्रत्यक्ष ॥ ८ दूरस्थजललक्षणस्य ॥ ९ द्वितीयप्रत्यक्षेण ॥ १० एकदेशत ॥ ११ निश्चयात् ॥ १२ यथानुमान साध्यसाधनसम्बन्धग्राहितर्कपूर्वकमूहोपि तथा स्यात्। तथा चानवस्था इत्युक्ते आह ॥ १३ धूमधूमध्वजविषय एक एवोह सकलानुमानव्यवस्थापक कुतो न स्यादित्युक्ते आह ॥ १४ तस्य अर्थस्य ॥ १५ स्वस्यानुमानस्य कारणभूता योग्यता ॥ १६ अपिशब्देनानुमानस्य सङ्ग्रह ॥ १७ इन्द्रिय ॥ १८ घटादि ॥ १९ स्वमात्मीय तत्किमुपलम्भानुपलम्भौ अर्थ इति सम्बन्ध। वा उपलम्भानुपलम्भयोश्च सम्बन्ध ॥ २० व्याप्तिज्ञानस्य कारणस्वरूपनिरूपणम् ॥ २१ स्वरूपम् ॥ २२ शक्य=प्रत्यक्षाद्यबाधितम् ॥ २३ अभिप्रेतम्=इष्टम् ॥ २४ अप्रसिद्धत्वम्=असिद्धम् ॥ २५ बस ॥ २६ साध्यसाधनयो ॥ २७ साध्यस्य साधनस्य वा ॥

पक्षधर्मत्वादिरूपत्रययुक्तम् । पक्षधर्मत्वं हि तस्यासिद्धत्वव्यवच्छेदार्थं लक्षणं निश्चीयते । सपक्ष एव सत्त्वं तु विरुद्धत्वव्यवच्छेदार्थम् । विपक्षे चासत्त्वमेवानैकान्तिकत्वव्यवच्छित्तये । तदनिश्चये साधनस्यासिद्धत्वादिदोषत्रयपरिहारासम्भवात् । उक्तं च । हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः । असिद्धविपरीतार्थव्यभिचारिविपक्षतः । इत्याशङ्क्याह । **साध्याविनाभावित्वेन निश्चितो हेतुः** । असाधारणो हि स्वभावो भावस्य लक्षणमव्यभिचारादग्नेरौष्ण्यवत् । न च त्रैरूप्यस्यासाधारणता–हेतौ तदाभासे च तत्सम्भवात्पञ्चरूपत्वादिवत् । असिद्धत्वादिदोषपरिहारश्चास्यान्यथानुपपत्तिनियमनिश्चयलक्षणत्वादेव प्रसिद्धः स्वयमसिद्धस्यान्यथानुपपत्तिनियमनिश्चयासम्भवाद्विरुद्धानैकान्तिकवत् । किञ्च त्रैरूप्यमात्रं हेतोर्लक्षणं विशिष्टं वा त्रैरूप्यम् ? तत्राद्यविकल्पे धूमवत्त्वादिवद्वक्तृत्वादावप्यस्य सम्भवात्कथं तल्लक्षणत्वम् ? न खलु बुद्धोऽसर्वज्ञो वक्तृत्वादे रथ्यापुरुषवदित्यत्र हेतोः पक्षधर्मत्वादिरूपत्रयसद्भावे परैर्गमकत्वमिष्यतेऽन्यथानुपपन्नत्वविरहात् । द्वितीयविकल्पे तु कुतो वैशिष्ट्यं त्रैरूप्यस्यान्यत्रान्यथानुपपन्नत्वनियमनिश्चयात् । इति स एवास्य लक्षणमक्षूणं परीक्षादक्षैरुपलक्ष्यते–तद्भावे पक्षधर्मत्वाद्यभावेपि उदेष्यति शकटं कृतिकोदयादित्यादेर्गमकत्वेन वक्ष्यमाणत्वात् सपक्षे सत्त्वरहितस्य च श्रावणत्वादेः शब्दानित्यत्वे साध्ये गमकत्वप्रतीतेः । ननु नित्यादाकाशादेर्विपक्षादिव सपक्षादप्यनित्याद् घटादेः सतो व्यावृत्तत्वेन श्रावणत्वादेरसाधारणत्वादनैकान्तिकता तदसत्यम्–असाधारणत्वस्यानैकान्तिकत्वेन व्याप्त्यऽसिद्धेः । सपक्षविपक्षयोर्हि हेतुरसत्त्वेन निश्चितोऽसाधारणः संशयितो वा ? निश्चितश्चेत्कथमनैकान्तिकः ? पक्षे साध्याभावेनुपपद्यमानतया निश्चितत्वेन संशयहेतुत्वाभावात् । श्रावणत्वं हि श्रवणज्ञानग्राह्यत्वं तज्ज्ञानं च शब्दादात्मानं लभमानं तस्य ग्राहकं, नान्यथा–नाकारणं विषय इत्यभ्युपगमात् । शब्दश्च नित्यस्तज्जननैकस्वभावो यदि तर्हि श्रवणप्रणिधानात्पूर्वं पश्चाच्च तज्ज्ञानोत्पत्तिप्रसङ्गः । न ह्यविकले कारणे कार्यस्यानुत्पत्तिर्युक्ता अतत्कार्यत्वप्रसङ्गात् । प्रयोगः । यस्मिन्नविकले सत्यपि यन्न भवति न तत्तत्कार्यं यथा सत्यप्यविकले कुलाले अभवन्पटो न तत्कार्यः । सत्यपि शब्दे पूर्वं पश्चाच्चाविकले न भवति च तज्ज्ञानमिति । ननु च श्रोत्रप्रणिधानात्पूर्वं पश्चाच्च तज्ज्ञानजननैकस्वभावोपि शब्दस्तन्न जनयत्यावृतत्वात् । तदप्यसङ्गतम् । आवरणं हि द्रष्टृदृश्ययोरन्तराले वर्तमानं वस्तु लोके प्रसिद्धम् । यथा काण्डपटादिकम् । श्रोत्रशब्दयोश्च व्यापकत्वे सर्वत्र सर्वदा तत्करणैकस्वभावयोरत्यन्तसंश्लिष्टयोः किं नामान्तराले वर्तेत ? वृत्तौ वा तयोर्व्यापकत्वव्याघातस्तदवष्टब्धदेशपरिहारेणानयोर्वर्तनादित्याप्तवचनादिनिबन्धनमर्थज्ञानमागम इत्यत्र विस्तरेण विचारयिष्यामः । तत्रास्याऽऽवृतत्वात्तज्ज्ञानाजन-

१ सपक्षे एव सत्त्वमित्युच्यमाने विपक्षे एकदेशेन सत्त्वनिवृत्ति स्यात् । तद्व्यवच्छेदार्थं साध्येन विपक्षे हेतोरसत्त्व यथा स्यादिति विपक्षे चासत्त्व चेत्युक्तम् ॥ २ दिग्नागेन ॥ ३ एते एव विपक्षास्तेभ्यस्तत ॥ ४ स्वरूपेण ॥ ५ यस ॥ ६ ताद्वि ॥ ७ अनुमाने ॥ ८ बौद्धे ॥ ९ वजने ॥ १० परिपूर्णम् ॥ ११ शब्दत्वादेश्च ॥ १२ विद्यमानात् ॥ १३ यद्यदसाधारण तत्तदनैकान्तिकमिति ॥ १४ शब्दे ॥ १५ अनित्यत्वस्य ॥ १६ श्रावणत्वहेतो ॥ १७ साध्याभावे अनुपपद्यमानतया निश्चितत्व हेतो कथमित्युक्ते आह ॥ १८ एकाग्रताया ॥ १९ शब्दक्षणे ॥ २० श्रवणज्ञानस्य ॥ २१ श्रवणज्ञान शब्दकार्यं न भवति शब्देऽविकले सति पूर्वं पश्चाच्चानुत्पद्यमानत्वात् ॥ २२ आवारकवायुभि ॥ २३ द्रष्टृदृश्ययो ॥ २४ मध्ये ॥ २५ वस्त्रविशेष ॥ २६ आवरणाभाव ॥ २७ शब्दस्य ॥

कत्वं किन्त्वसत्त्वादेव । इति श्रावणत्वादेः सपक्षविपक्षाभ्यां व्यावृत्तत्वेपि पक्षे साध्याविनाभावित्वेन निश्चितत्वाद्गमकत्वमेव । न च सपक्षविपक्षयोरसत्त्वेन निश्चितः
पक्षे साध्याविनाभावित्वेन निश्चेतुमशक्यः सर्वानित्यत्वे साध्ये सत्त्वादेरहेतुत्वप्रसङ्गात् । न खलु सत्त्वादिर्विपक्ष एवासत्त्वेन निश्चितः सपक्षेपि तदसत्त्वनिश्चयात् ।
सपक्षस्याभावात्तत्र सत्त्वादेरसत्त्वनिश्चयान्निश्चयहेतुत्वं न पुनः श्रावणत्वादेः सद्भावेपीति चेन्ननु श्रावणत्वादिरपि यदि सपक्षे स्यात्तदा तं व्याप्नुयादेवेति समाना-
न्तर्व्याप्तिः । सति विपक्षे धूमादिश्चासत्त्वेन निश्चितो निश्चयहेतुर्मा भूत् । विपक्षे सत्यसति चासत्त्वेन निश्चितः साध्याविनाभावित्वाद्धेतुरेवेति चेत्तर्हि सपक्षे
सत्यसति चासत्त्वेन निश्चितो हेतुरस्तु तत एव । नन्वेवं सपक्षे तदेकदेशे वा सन्कथं हेतुः सपक्षेऽसन्नेव हेतुरित्यनवधारणात् । विपक्षेपि तदसत्त्वानवधारणमस्त्वित्य-
युक्तं–साध्याविनाभावित्वव्याघातानुषङ्गात् । यदि पुनः सपक्षविपक्षयोरसत्त्वेन संशयितोऽसाधारण इत्युच्यते तदा पक्षत्रयवृत्तितया निश्चितया संशयितया
वाऽनैकान्तिकत्वं हेतोरित्यायातम् । न च श्रावणत्वादौ सास्तीति गमकत्वमेव । विरुद्धताप्येतेन प्रत्युक्ता । यो हि विपक्षैकदेशेपि न वर्त्तते स कथं तत्रैव वर्त्तेत
असिद्धता तु दूरोत्सारितैव श्रावणत्वस्य शब्दे सत्त्वनिश्चयात् । तन्न पक्षधर्मत्वं सपक्षे सत्त्वं वा हेतोर्लक्षणम् । विपक्षे पुनरसत्त्वमेव निश्चितं साध्याविनाभा-
वनियमनिश्चयस्वरूपमेव । इति तदेव हेतोः प्रधानं लक्षणमस्तु । किमत्र लक्षणान्तरेण ? न च सपक्षे सत्त्वाभावे हेतोरनन्वयत्वानुषङ्गः अन्तर्व्याप्तिलक्षणस्य
तथोपपत्तिरूपस्यान्वयस्य सद्भावादन्यथानुपपत्तिरूपव्यतिरेकवत् । न खलु दृष्टान्तधर्मिण्येव साधर्म्यं वैधर्म्यं वा हेतोः प्रतिपत्तव्यमिति नियमो युक्तः सर्वस्य
क्षणिकत्वादिसाधने सत्त्वादेरहेतुत्वप्रसङ्गात् । ननु त्रैरूप्यं हेतोर्लक्षणं मा भूत् पक्वान्येतानि फलान्येकशाखाप्रभवत्वादुपयुक्तफलवदित्यादौ मूर्खोयं देवदत्तस्त-
त्पुत्रत्वादितरतत्पुत्रवदित्यादौ च तदाभासेपि तत्सम्भवात् । पञ्चरूपत्वं तु तल्लक्षणं युक्तमेवानवद्यत्वात् । एकशाखाप्रभवत्वस्यावाधितविषयत्वासम्भवादामता-
ग्राहिप्रत्यक्षेणैव तद्विषयस्य वाधितत्वात् । तत्पुत्रत्वादेश्चासत्प्रतिपक्षत्वाभावात्तत्प्रतिपक्षस्य शास्त्रव्याख्यानादिलिङ्गस्य सम्भवात् । प्रकरणसमस्याप्यसत्प्रति-
पक्षत्वाभावादहेतुत्वम् । तस्य हि लक्षणं 'यस्मात् प्रकरणचिन्ता स प्रकरणसम' इति । प्रक्रियेते साध्यत्वेनाधिक्रियेते अनिश्चितौ पक्षप्रतिपक्षौ यौ तौ प्रकरणम् ।

---

१ हेतु ॥ २ सर्वमनित्य सत्त्वादिति ॥ ३ नित्ये ॥ ४ निश्चयहेतुत्वम् ॥ ५ सपक्षस्य ॥ ६ सपक्षेऽसत्त्वनिश्चयादिति शेष ॥ ७ सपक्षे ॥ ८ श्रावणत्वादे सति विपक्षे तत्रासत्त्वेन निश्चितस्य स्वसाध्यसाधकत्वे अङ्गीक्रियमाणे ॥ ९ पक्षे ॥ १० स्वसाध्यस्य ॥ ११ सति विपक्षे असत्त्वाविशेषात् ॥ १२ हेतु १३ सपक्षे असत्त्वेन निश्चितस्य हेतुत्वप्रकारेण ॥ १४ चेतनास्तरव. स्वापादिमत्त्वात् सत्त्वादिति हेतु सिद्धेषु न प्रवर्त्तते अन्यत्र प्रवर्त्तते ॥ १५ नित्ये ॥ १६ न केवल सपक्षे ॥ १७ अनैकान्तिकत्वनिराकरणपरेण ग्रन्थेन ॥ १८ पक्षधर्मत्वसपक्षेसत्त्वलक्षणेन ॥ १९ पक्षे एव ॥ २० अन्वय ॥ २१ व्यतिरेक ॥ २२ दृष्टान्तस्यासत्त्वात् ॥ २३ योग ॥ २४ भक्षित ॥ २५ स श्यामस्तत्पुत्रत्वादित्यादौ च ॥ २६ अनुष्णोग्निर्द्रव्यत्वाज्जलवत् इति च ॥ २७ साध्यस्य ॥ २८ तत्पुत्रो विद्वान् शास्त्रव्याख्यानसद्भावात् ॥ २९ तत्पुत्रत्वादिति हेतो ॥ ३० हेतो ॥ ३१ स्वीक्रियेते ॥ ३२ वादिना य पक्षो निश्चित स प्रतिवादिना अनिश्चित । य प्रतिवादिना निश्चित स वादिना न निश्चित ॥ ३३ वादिप्रतिवादिभ्याम् ॥

तस्य चिन्ता संशयात्प्रभृत्याऽऽनिश्चयात्पर्यालोचना यतो[1] भवति स[2] एव । तन्निश्चयार्थं प्रयुक्तः प्रकरणसमः । पक्षद्वयेप्यस्य[3] समानत्वादुभयत्राप्यन्वयादिसद्भावात् । तद्यथा । अनित्यः शब्दो नित्यधर्मानुपलब्धेर्घटादिवत् । यत्पुनर्नित्यं तन्नानुपलभ्यमाननित्यधर्मकं यथात्मादि । एवमेकेनान्यतरानुपलब्धेरनित्यत्वसिद्धौ साधकत्वेनोपन्यासे सति द्वितीयः[12] प्राह । यद्यनेन प्रकारेणानित्यत्वं प्रसाध्यते तर्हि नित्यतासिद्धिरप्यस्त्वन्यतरानुपलब्धेस्तत्रापि सद्भावात् । तथा हि । नित्यः शब्दोऽनित्यधर्मानुपलब्धेरात्मादिवत् । यत्पुनर्न नित्यं तन्नानुपलभ्यमानाऽनित्यधर्मकं यथा घटादीत्यप्यविचारितरमणीयम् । साध्याविनाभावित्वव्यतिरेकेणापरस्याबाधितविषयत्वादेरसम्भवात् तदेव प्रधानं हेतोर्लक्षणमस्तु । किं पञ्चरूपप्रकल्पनया । न च प्रमाणप्रसिद्धत्रैरूप्यस्य हेतोर्विषये बाधा सम्भवति । अनयोर्विरोधात् । साध्यसद्भावे एव हि हेतोर्धर्मिणि सद्भावस्त्रैरूप्यम् । तदभावे एव च तत्र तत्सम्भवो बाधा । भावाभावयोश्चैकत्रैकस्य विरोधः । किञ्चाध्यक्षागमयोः कुतो हेतुविषयबाधकत्वम् ? स्वार्थव्यभिचारित्वाच्चेद्धेतावपि सति त्रैरूप्ये तत्समानमित्यसावप्यनयोर्विषये बाधकः स्यात् । दृश्यते हि चन्द्रार्कादिस्थैर्यग्राह्यऽध्यक्षं देशान्तरप्राप्तिलिङ्गप्रभवानुमानेन बाध्यमानम् । अथैकशाखाप्रभवत्वाद्यनुमानस्य भ्रान्तत्वाद्बाध्यत्वम् । कुतस्तद्भ्रान्तत्वम् ? अध्यक्षबाध्यत्वात् त्रैरूप्यवैकल्याद्वा ? प्रथमपक्षेऽन्योन्याश्रयः । भ्रान्तत्वेऽध्यक्षबाध्यत्वं ततश्च भ्रान्तत्वमिति । द्वितीयपक्षस्त्वयुक्तस्त्रैरूप्यसद्भावस्यात्र परेणाभ्युपगमात् । अनभ्युपगमे वाऽत एवास्याऽगमकत्वोपपत्तेः किमध्यक्षबाधासाध्यम् ? किञ्चाबाधितविषयत्वं निश्चितमनिश्चितं वा हेतोर्लक्षणं स्यात् ? न तावदनिश्चितमतिप्रसङ्गात् । नापि निश्चितं तन्निश्चयासम्भवात् । स हि स्वसम्बन्धी सर्वसम्बन्धी वा ? स्वसम्बन्धी चेत्तत्कालीनः सर्वकालीनो वा ? न तावत्तत्कालीनस्तस्यासम्यगनुमानेपि सम्भवात् । नापि सर्वकालीनस्तस्यासिद्धत्वात् । कालान्तरेप्यत्र बाधकं न भविष्यतीत्यसर्वविदा निश्चेतुमशक्यत्वात् । सर्वसम्बन्धिनोपि तत्कालस्योत्तरकालस्य वा तन्निश्चयस्यासिद्धत्वमर्वाग्दृशा सर्वत्र सर्वदा सर्वेषामत्र बाधकस्याभाव इति निश्चेतुमशक्तेस्तन्निश्चयनिबन्धनस्याभावात् । तन्निबन्धनं ह्यनुपलम्भः संवादो वा स्यात् ? न तावदनुपलम्भः सर्वात्मसम्बन्धिनोऽस्याऽसिद्धानैकान्तिकत्वात् । नापि संवादः प्रागनुमानप्रवृत्तेस्तस्यासिद्धेः । अनुमानोत्तरकालं तत्सिद्ध्यभ्युपगमे परस्पराश्रयः । अनुमानात्प्रवृत्तौ संवादनिश्चयस्ततश्चाबाधितविषयत्वावगमेऽनुमानप्रवृत्तिरिति । न चाविनाभावनिश्चयादेवाबाधितविषयत्वनिश्चयो हेतौ, पञ्चरूपयोगिन्यऽविना-

---

१ बाधकादिमध्ये ॥ २ आ मर्यादायाम् ॥ ३ हेतो ॥ ४ हेतु ॥ ५ हेतो ॥ ६ पक्षधर्मत्वादि ॥ ७ सपक्षधर्मत्वादि ॥ ८ तथा हि ॥ ९नित्यत्व ॥ १० यौगेन ॥ ११ अनित्यधर्मस्य ॥ १२ मीमासक ॥ १३ असत्प्रतिपक्षत्वस्य च ॥ १४ यौगमतमालम्ब्य सूरिभिरुच्यते ॥ १५ वस ॥ १६ किं त्रैरूप्य का च बाधा कथ च तयोर्विरोध इत्युक्ते आह ॥ १७ पर्वते ॥ १८ यदा हेतोर्धर्मिणि सद्भावस्तदा पक्षधर्मत्वम् । यदा च साध्यसद्भावे हेतोर्धर्मिणि सद्भावस्तदान्वय । यदा च साध्यसद्भावे एव हेतोर्धर्मिणि सद्भावस्तदा विपक्षेऽसत्त्वम् । कथ साध्यसद्भाव एव इत्येवकारेण विपक्षेऽसत्त्व गम्यम् ॥ १९ साध्यस्य ॥ २० साध्य ॥२१ एकशाखाप्रभवत्वलक्षणे ॥ २२ यौगेन ॥ २३ पक्षधर्मत्वादेरप्यनिश्चितस्य हेतुत्वप्रसङ्गात् ॥ २४ अनुमानकालीन ॥ २५ एकशाखाप्रभवत्वलक्षणे ॥ २६ सम्यगनुमाने ॥ २७ अनुमान ॥ २८नृणाम् ॥२९ अनुमानविषये ॥३० भावुकस्य ॥३१आत्मन स्वस ॥

भावपरिसमाप्तिवादिनाम्[1] अबाधितविषयत्वाऽनिश्चये[2]ऽविनाभावनिश्चयस्यैवासम्भवात् । तन्नैकशाखाप्रभवत्वादेर्बाधितविषयत्वाद्धेत्वाभासत्वम् । नापि तत्पुत्रत्वादेः सत्प्रतिपक्षत्वात् । यतः प्रतिपक्षस्तुल्यबलोऽतुल्यबलो वा सन् स्यात् ? न तावदाद्यः पक्षो द्वयोः[3]स्तुल्यबलत्वे एकस्य बाधकत्वमपरस्य च बाध्यत्वमिति विशेषानुपपत्तेः । न च पक्षधर्मत्वाद्यभाव[4] एकस्य विशेषस्तस्यानभ्युपगमात्[5] । अभ्युपगमे वाऽत एवैकस्य[6] दुष्टत्वसिद्धेर्न किञ्चिदनुमानबाधया । द्वितीयपक्षेऽप्यतुल्यबलत्वं तयोः[7] पक्षधर्मत्वादिभावाभावकृतमनुमानबाधाजनितं वा स्यात् ? प्रथमपक्षोऽनभ्युपगमादेवायुक्तः पक्षधर्मत्वादेरुभयोर[8]प्यभ्युपगमात् । द्वितीयोऽप्यसम्भाव्यस्तस्याद्यापि विवादपदापन्नत्वात् । न खलु द्वयोस्त्रैरूप्याविशेषतस्तुल्यत्वे सत्येकस्य बाध्यत्वमपरस्य च बाधकत्वमिति व्यवस्थापयितुं शक्यमविशेषेणैव तत्प्रसङ्गात् । इतरेतराश्रयश्च । अतुल्यबलत्वे सत्यनुमानबाधा तस्यां चातुल्यबलत्वमिति । यच्च प्रकरणसमस्यानित्यः शब्दोऽनुपलभ्यमाननित्यधर्मकत्वादित्युदाहरणं तत्रानुपलभ्यमाननित्यधर्मकत्वं शब्दे तत्त्वतोऽप्रसिद्धं न वा ? प्रथमपक्षे पक्षवृत्तितयाऽस्याऽसिद्धेरसिद्धत्वम् । द्वितीयपक्षे तु साध्यधर्मान्विते धर्मिणि तत्प्रसिद्धं तद्रहिते वा ? आद्यविकल्पे साध्यवत्येव धर्मिण्यस्य सद्भावसिद्धिः । कथमगमकत्वम् ? न हि साध्यधर्ममन्तरेण धर्मिण्यऽभवनं विहायापरं हेतोरविनाभावित्वम् । तच्चेत्समस्ति, कथं न गमकत्वम् ? अविनाभावनिबन्धनत्वात्तस्य । द्वितीयपक्षे तु विरुद्धत्वं साध्यधर्मरहिते धर्मिणि प्रवर्त्तमानस्य विपक्षवृत्तितया विरुद्धत्वोपपत्तेः । अथ सन्दिग्धसाध्यधर्मवति तत्तत्र प्रवर्त्तते तर्हि सन्दिग्धविपक्षव्यावृत्तिकत्वादस्याऽनैकान्तिकत्वम् । नन्वेवं[10] सर्वो हेतुरनैकान्तिकः स्यात्साध्यसिद्धेः प्राक्साध्यधर्मिणः[11] साध्यधर्मसदसत्त्वाश्रयत्वेन सन्दिग्धत्वात् । ततोऽनुमेय[12]व्यतिरिक्ते साध्य[13]धर्मवति धर्म्यन्तरे[14] साध्याभावे[15] च प्रवर्त्तमानो हेतुरनैकान्तिकः साध्याभाववत्येव तु पक्षधर्मत्वे सति विरुद्धः[16] । यस्तु विपक्षाद्व्यावृत्तः सपक्षे चानुगतः पक्षधर्मो निश्चितः[17] स्वसाध्यं गमयत्येवेत्यभ्युपगन्तव्यमित्यप्यसुन्दरं यतो यदि साध्य[18]धर्मिव्यतिरिक्ते धर्म्यन्तरे[19] हेतोः स्वसाध्येन प्रतिबन्धोऽभ्युपगम्यते तर्हि साध्यधर्मिण्युपादीयमानो[20] हेतुः कथं साध्यं साधयेत् ? तत्र साध्यमन्तरेणाप्यस्य सद्भावाभ्युपगमात् । तद्व्यतिरिक्ते एव धर्म्यन्तरे[21] साध्येनास्य प्रतिबन्धग्रहणात् । न चान्यत्र[22] साध्याविनाभावित्वेन निश्चितो हेतुरन्यत्र साध्यं गमयत्यतिप्रसङ्गात्[23] । ततः साध्यधर्मिण्येव हेतोर्व्याप्तिः प्रतिपत्तव्या । ननु यदि साध्यधर्मान्वितत्वेन साध्यधर्मिण्य[24]सौ पूर्वमेव[25] प्रतिपन्नस्तर्हि साध्यधर्मस्यापि पूर्वमेव प्रतिपन्नत्वाद्धेतोः पक्षधर्मताग्रहणस्य वैयर्थ्यं तदप्यसङ्गतं—यतः

---

१ यौगादीनाम् ॥ २ उक्तन्यायेन ॥ ३ तत्पुत्रत्वव्याख्यानवत्त्वहेत्वो ॥ ४ तत्पुत्रत्वादिलेतस्य ॥ ५ यौगेन ॥ ६ तत्पुत्रत्वादिलेतस्य ॥ ७ तत्पुत्रत्वव्याख्यानवत्त्वहेत्वो ॥ ८ तत्पुत्रत्वस्य पक्षधर्माद्यभाव व्याख्यानवत्त्वस्य च पक्षधर्मादिसद्भाव ॥ ९ तत्पुत्रत्वव्याख्यानवत्वहेत्वो ॥ १० सन्दिग्धसाध्यधर्मवति प्रवर्त्तमानस्यानैकान्तिकत्वप्रकारेण ॥ ११ पर्वतस्य शब्दस्य वा ॥ १२ अनित्यतयाऽनुमेयाच्छब्दात् ॥ १३ घटे ॥ १४ आकाशादौ ॥ १५ सपक्षविपक्षयोरिति यावत् ॥ १६ शब्दो नित्य कृतकत्वाद्घटवत् । साध्याभाववत्येव घटे कृतकत्वस्य शब्दलक्षणपक्षधर्मत्वे सति प्रवर्तमानस्य विरुद्धत्वम् ॥ १७ शब्दात् पर्वतात् वा ॥ १८ घटे महानसादौ वा ॥ १९ शब्दे पर्वते वा ॥ २० घटे महानसे वा ॥ २१ घटे महानसे वा ॥ २२ शब्दे पर्वते वा ॥ २३ काष्ठे लोहलेख्यत्वोपलम्भाद्वज्रेऽपि तथाप्रसङ्गात् ॥ २४ शब्दे ॥ २५ पक्षधर्मताग्रहणात् ॥

प्रतिबन्धसाधकप्रमाणेन सर्वोपसंहारेण साधनधर्मः साध्यधर्माभावे क्वचिदपि न भवतीति सामान्येन प्रतिबन्धः प्रतिपन्नः । पक्षधर्मताग्रहणकाले तु यत्रैव धर्मिण्युपलभ्यते हेतुस्तत्रैव साध्यं साधयतीति पक्षधर्मताग्रहणस्य विशेषविषयप्रतिपत्तिनिबन्धनत्वान्नानुमानस्य वैयर्थ्यम्[3] न खलु विशिष्टधर्मिण्युपलभ्यमानो हेतुस्तद्गतसाध्यमन्तरेणोपपत्तिमान्[4] तस्य तेन व्याप्तत्वाभावप्रसङ्गात् । अत एव प्रतिपन्नप्रतिबन्धैकहेतुसद्भावे धर्मिणि न विपरीतसाध्योपस्थापकहेत्वन्तरस्य सद्भावः । अन्यथा द्वयोरप्यनयोः स्वसाध्याविनाभावित्वान्नित्यत्वानित्यत्वयोश्चैकत्रैकदैकान्तवादिमते विरोधतोऽसम्भवात्तद्व्यवस्थापकहेत्वोरप्यसम्भव. । सम्भवे वा तयोः स्वसाध्याविनाभूतत्वान्नित्यत्वानित्यत्वधर्मसिद्धिर्धर्मिणः स्यादिति कुतः प्रकरणसमस्यागमकता एकान्तत्वसिद्धिर्वा ? अथान्यतरस्यात्र[13] स्वसाध्याविनाभावत्रैकल्यं तथाप्यत एवास्यागमकतेति किं तत्प्रतिपादनप्रयासेन ? किञ्च नित्यधर्मानुपलब्धिः प्रसज्यप्रतिषेधरूपा पर्युदासरूपा वा शब्दानित्यत्वे हेतुः स्यात् ? तत्राद्यः पक्षोऽयुक्तस्तुच्छाभावस्य साध्यासाधकत्वान्निषिद्धत्वाच्च । द्वितीयपक्षे त्वनित्यधर्मोपलब्धिरेव हेतुः । सा च शब्दे यदि सिद्धा, कथं नानित्यतासिद्धिः ? अथ तच्चिन्तासम्बन्धिपुरुषेणासौ प्रयुज्यत इति तत्रासिद्धा तर्हि कथं न सन्दिग्धो हेतुर्वादिनं प्रति ? प्रतिवादिनस्त्वसौ स्वरूपासिद्ध एव नित्यधर्मोपलब्धेस्तत्रास्य सिद्धेः । तन्न पञ्चरूपत्वमप्यस्य लक्षणं घटते अबाधितविषयत्वादेर्विचार्यमाणस्यायोगात्पक्षधर्मत्वादिवत् । यदि चैकस्य हेतोः पक्षधर्मत्वाद्यनेकधर्मात्मकत्वमिष्यते तदानेकान्तः समाश्रितः स्यात् । न च यदेव पक्षधर्मस्य सपक्षे एव सत्त्वं तदेव विपक्षात्सर्वतोऽसत्त्वमित्यभिधातव्यमन्वयव्यतिरेकयोर्भावाभावरूपयोः सर्वथा तादात्म्यायोगात् । तत्त्वे वा केवलान्वयी केवलव्यतिरेकी वा सर्वो हेतुः स्यात्, न त्रिरूपवान् । व्यतिरेकस्य चाभावरूपत्वाद्धेतोस्तद्रूपत्वेऽभावरूपो हेतुः स्यात् । न चाभावस्य तुच्छरूपत्वात्स्वसाध्येन धर्मिणा सम्बन्धः । यदि च सपक्ष एव सत्त्वं विपक्षासत्त्वं, न ततो भिन्नं तर्हि तदेवास्यासाधारणं कथं स्यात् ? वस्तुभूतान्योन्याभावमन्तरेण प्रतिनियतस्यास्याप्यत्रासम्भवात् । अथ ततस्तदन्यधर्मान्तरं तर्ह्येकस्यानेकधर्मात्मकस्य हेतोस्तथाभूतसाध्याविनाभावित्वेन निश्चितस्यानेकान्तात्मकार्थप्रसाधकत्वात्कथं न परोपन्यस्तहेतूनां विरुद्धता ? एकान्तविरुद्धेनानेकान्तेन व्याप्तत्वात् । किञ्च

---

१ ऊहेन ॥ २ हेतु ॥ ३ ननु यथास्माक साध्यधर्मव्यतिरिक्ते एव धर्म्यन्तरे खसा येन हेतो प्रतिबन्धग्रहणाभ्युपगमे साध्यधर्मिणि साध्यधर्ममन्तरेणाप्यस्य सद्भावादगमकत्वम् । तथा भवतामपि प्रतिबन्धपसाधकप्रमाणेन सामान्येनैवाविनाभावप्रतिपत्तेर्विशिष्टधर्मिणि उपलभ्यमानस्य हेतोस्तद्गतसाध्यमन्तरेणाप्युपपत्तिसम्भवादित्युक्ते वक्ति न रातिवति ॥ ४ अन्यथा ॥ ५ सर्वत्र ॥ ६ अनुपलभ्यमाननित्यधर्मत्वलक्षणस्य ॥ ७ शब्दे ॥ ८ नित्यत्वलक्षण ॥ ९ अनुपलभ्यमानानित्यधर्मकत्वलक्षणस्य ॥ १० हेत्वो ॥ ११ शब्दे धर्मिणि ॥ १२ अनित्यत्वमेव शब्दस्येति ॥ १३ द्वयोर्मध्ये एकस्यापस्य ॥ १४ प्रकरण ॥ १५ नित्यधर्मानुपलब्धेरनित्यत्व प्रतिपादयाम । अनित्य धर्मानुपलब्धेर्नित्यत्व साधयाम इति ॥ १६ शब्दे धर्मिणि ॥ १७शब्दे ॥१८ असत्प्रतिपक्षत्वस्य च ॥ १९ हेतो ॥ २० सपक्षे सत्त्वम् ॥ २१ विपक्षेऽसत्त्वम्॥२२ अस्मिन्पक्षे व्यतिरेकस्यान्वयरूपत्वे तादात्म्यम् ॥२३ अत्र पक्षे अन्वयस्य व्यतिरेकरूपत्वे तादात्म्यम् ॥ २४ केवलव्यतिरेकीत्यस्मिन्पक्षे ॥ २५ हेतुरुपस्य ॥ २६ अभावपक्षे हेतो ॥ २७ यस ॥ २८ भित ॥ २९ यस ॥ ३० विपक्षासत्त्वलक्षणम् ॥ ३१ वैशेषिक ॥

परैः[2] सामान्यरूपो हेतुरुपादीयते विशेषरूपो वा उभयमनुभयं वा ? सामान्यरूपश्चेत्तर्किं व्यक्तिभ्यो भिन्नमभिन्नं वा ? भिन्नं चेन्न व्यक्तिभ्यो भिन्नस्य सामान्यस्याऽप्रतिभासमानतयाऽसिद्धत्वात् । तथाभूतस्यास्य सामान्यविचारे निराकरिष्यमाणत्वाच्च । अथाभिन्नम् । कथञ्चित्सर्वथा वा ? सर्वथा चेन्न सर्वथा व्यक्त्यव्यतिरिक्तस्यास्य व्यक्तिस्वरूपवद्व्यक्त्यन्तराननुगमतः सामान्यरूपतानुपपत्तेः । कथञ्चित्पक्षस्त्वनभ्युपगमादेवायुक्तः । नापि व्यक्तिरूपो हेतुस्तस्यासाधारणत्वेन[3] गमकत्वायोगात् । नाप्युभयं परस्परानुविद्धमुभयदोषप्रसङ्गात्[4] । नाप्यनुभयमन्योन्यव्यवच्छेदरूपाणामेकाभावे द्वितीयविधानादनुभयस्यासत्त्वेन[5] हेतुत्वायोगात् । ततः पदार्थान्तरानुवृत्त[6]व्यावृत्त[7]रूपमात्मानं बिभ्रदेकमेवार्थस्वरूपं प्रतिपत्तुर्भेदा[8]भेद[9]प्रत्ययप्रसूतिनिबन्धनं हेतुत्वेनोपादीयमानं तथाभूतसाध्यसिद्धिनिबन्धनमभ्युपगन्तव्यम् । किञ्चैकान्तवाद्युपन्यस्तहेतोः किं सामान्यं साध्यं विशेषो वोभयं वा अनुभयं वा ? न तावत्सामान्यं केवलस्या[10][11]स्यासम्भवादर्थक्रिया[12]कारित्वविकलत्वाच्च । नापि विशेषस्तस्यान्[13]नुयायितया हेत्वऽव्यापकस्य साधयितुमशक्तेः । नाप्युभयमुभयदोषानतिवृत्तेः । नाप्यनुभयं तस्यासतो हेत्वव्यापकत्वेन साध्यत्वायोगात् । यच्चान्यदुक्तं 'प्रत्यक्ष[14]पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोऽदृष्टं[15] चेति, तत्र पूर्ववच्छेषवत्[16][17]केवलान्वयि[18] । यथा सदसद्वर्गः[19] कस्यचिदेकज्ञानालम्बनमनेकत्वात् पञ्चाङ्गुलवत् । पञ्चाङ्गुलव्यतिरिक्तस्य सदसद्वर्गस्य पक्षीकरणादन्यस्या[20][21]भावाद्विपक्षाभावः । अत एव व्यतिरेकाभावः । पूर्ववत्सामान्यतोऽदृष्टं केवलव्यतिरेकि । यथा सात्मकं जीवच्छरीरं प्राणादिमत्त्वादिति । पूर्ववच्छेषवत्सामान्यतोऽदृष्टमन्वयव्यतिरेकि[22] । यथा[23] विवादास्पदं तनुकरणभुवनादि बुद्धिमत्कारणं कार्यत्वादिभ्यो घटादिवत् । यत्पुनर्बुद्धिमत्कारणं न भवति न तत्कार्यत्वादिधर्माधारो यथात्मादिरि[24]ति ।' तदप्येतेन[25] प्रत्याख्यातं सर्वत्रा[26]न्यथानुपपन्नत्वस्यैव हेतुलक्षणतोपपत्तेस्तस्मिन्सत्येव हेतोर्गमकत्वप्रतीतेः । केवलान्वयिनो हि यद्यन्यथानुपपन्नत्वं प्रमाण[27]निश्चितमस्ति, किमन्वयाभिधानेन ? अथान्वया[28]भावे तदभावस्तदनिश्चयो वेति तदभिधानं, स्यादेतद्यद्यविनाभावस्तेन व्याप्तः स्यात्—अव्यापक[29]निवृत्तेर[30]व्याप्यनिवृत्ता[31]वतिप्रसङ्गात्[32] । व्याप्तश्चेत्तर्हि प्राणादौ तन्निवृत्तावविनाभावनिवृत्तेरगमकत्वं स्यात् । न खलु यद्[33]यस्य[34] व्यापकं तत्[35]तदभावे भवति वृक्षत्वाभावे शिंशपात्ववत् । गमकत्वे वास्य नान्वयेनासौ[36] व्याप्तः स्यात् । यदभावे हि यद्भवति न

---

१ पराभ्युपगतसामान्य धर्मिसामान्यरूपता न भजति व्यक्त्यन्तराननुगमात् । व्यक्तिस्वरूपवत् । सामान्य व्यक्त्यन्तर नानुगच्छति व्यक्तिभ्योऽभिन्नत्वात् । व्यक्तिस्वरूपवत् ॥ २ परेण ॥ ३ दृष्टान्तेऽसत्त्वेन ॥ ४ परस्परानुविद्ध तु परैर्नाभ्युपगम्यते ॥ ५ निरपेक्षम् ॥ ६ व्यक्त्यन्तरेषु ॥ ७ सदृशपरिणामेन ॥ ८ व्यक्तिभेदेषु ॥ ९ देशकालादिभेदेन भेदप्रत्यय ॥ १० धूमो धूम इत्यभेदप्रत्यय ॥ ११ व्यक्तिरहितस्य ॥ १२ पाकादि ॥ १३ अन्यत्र व्यक्तिनिषेधेषु ॥ १४ लिङ्गप्रत्यक्ष यत ॥ १५ समासरहितानि पदान्यत्र ॥ १६ सर्वावयवापेक्षयाऽऽदो प्रयुज्यमानत्वात्पक्ष पूर्वं पूर्वमस्य हेतोरस्तीति पूर्ववत्पक्षधर्म इत्यर्थ ॥ १७ शेषो दृष्टान्त सोस्य हेतोरस्तीति शेषवत्सपक्षे सन्नित्यर्थ ॥ १८ सपक्षे सत्साध्यम् ॥ १९ द्रव्यगुणादि ॥ २० प्रागभावादि ॥ २१ पक्षीभूताद् दृष्टान्तभूतादन्यस्य व्यतिरिक्तस्य विपक्षस्य ॥ २२ साधनसामान्यस्य साध्यसामान्येन व्याप्ति सामान्य ततोऽदृष्ट व्यतिरेकिदृष्टान्ते ॥ २३ व्यतिरेकिदृष्टान्त ॥ २४ गगन च ॥ २५ अन्यथानुपपन्नत्वमेव हेतुलक्षणमिति समर्थनपरेण ग्रन्थेन ॥ २६ अनुमाने ॥ २७ तर्कलक्षण ॥ २८ दृष्टान्ते हेतो सत्त्वमन्वय ॥ २९ अन्वयस्य ॥ ३० अविनाभावस्य ॥ ३१ सत्याम् ॥ ३२ घटनिवृत्तौ पटनिवृत्तिप्रसङ्गात् ॥ ३३ अविनाभावोऽन्वयेन ॥ ३४ अविनाभावस्य ॥ ३५ अन्वय ॥ ३६ अविनाभाव. ॥

तत्तेन व्याप्तम् । यथा रासभाभावे भवन्धूमादिर्न तेन व्याप्त । भवति चान्वयाभावेपि तदविनाभाव इति । सदसद्वर्गः कस्यचिदेकज्ञानालम्बनमनेकत्वादित्ययं च हेतुः कुतः केवलान्वयी ? व्यतिरेकाभावाच्चेदयमपि कुतः ? तद्विपयस्य विपक्षस्याभावाच्चेदथ कोयं विपक्षाभावः ? पक्षसपक्षावेव निवृत्तिर्मात्रं वा ? प्रथमपक्षे[1] परमतप्रसङ्गो[2]ऽभावस्य भावान्तरस्वभावतास्वीकारात्[3] । द्वितीयपक्षे तु स तथाविधः प्रतिपन्नो न वा ? न प्रतिपन्नश्चेत्तर्हि विपक्षाभावसन्देहाद्व्यतिरेकाभावोपि सन्दिग्ध इति केवलान्वयोपि तादृगेव । अथ प्रतिपन्नः । स यदि साध्यनिवृत्त्या साधननिवृत्त्याधारः प्रतिपन्नस्तर्हि स एव विपक्षः[4], कथं विपक्षाभावो यतो व्यतिरेकाभावः ? साध्यसाधनाभावाधारतया निश्चितस्य विपक्षत्वात्[5] । तच्च[6] भाववदभावस्यापि न विरुध्यते । कथमन्यथा सदसद्वर्गः कस्यचिदेकज्ञानालम्बनमित्यत्रासन्[7] पक्षः स्यात् ? असन्पक्षो भवति न विपक्ष इति किंकृतो[8] विभागः ? अथाऽसद्वर्गशब्देन सामान्यसमवायान्त्यविशेषा[9] एवोच्यन्ते, नाभावस्तर्हि तद्विपयं ज्ञानं न कस्यचिदनेनं[10] प्रसाधितमिति सुव्यवस्थितम्[11] । ईश्वरस्याखिलकार्यकारणग्रामपरिज्ञानं[12] प्रागभावाद्यज्ञाने कार्यत्वादेरप्यज्ञानात्[13][14] । किञ्च यद्यभावोऽत्र[15] पक्षसपक्षाभ्यां वहिर्भूतस्तर्ह्यनेनानेकत्वादित्यनैकान्तिको हेतुस्तदनेकत्वेपि कस्यचिदेकज्ञानावलम्बनत्वानभ्युपगमात्[16] । अभ्युपगमे वा कथमभावो न पक्षः ? तथा विपक्षोप्यस्तु[17] । नन्वेवं[18] विपक्षाभावोपि तदालम्बनमिति पक्ष एव स्यात् । तथा च पुनरपि विपक्षाभावं[19] एव । इति चेत्तर्हि पुनरपि तदेव[20] चोद्यं—कोयं विपक्षाभाव इति । यदि पक्षसपक्षावेव[21],भावाद्भिन्नस्याभावस्याभावः । अथ तुच्छा विपक्षनिवृत्तिस्तदभावः, सोपि यद्यप्रतिपन्नस्तर्हि सन्दिग्धः । तत्सन्देहे च व्यतिरेकाभावोपि तादृगेवेति न निश्चितः केवलान्वय इत्यादि तदवस्थं[22] पुनः पुनरावर्त्तते इति चैक्रकप्रसङ्गः[23][24] । ततः केवलान्वयित्वेनाभ्युपगतस्य[25] विपक्षाभाव एव तुच्छो विपक्षः । ततः साध्यनिवृत्त्या साधननिवृत्तिश्चेति कथं न व्यतिरेकः ? अत[26] एवाविनाभावस्य तत्परिज्ञानस्य च प्राणादिमत्त्ववद्भावात्किमन्वयेन[27] ? अथ विपक्षाभावस्योपादानत्वायोगान्न[28] ततः साध्यसाधनयोर्व्यावृत्तिस्तन्न । भावः प्रागभावादिभ्यो भिन्नस्ते वा परस्परतो भिन्ना इत्यादावप्यभावस्यापादानत्वाभावप्रसङ्गात्[29] सर्वेषां[30] साङ्कर्यं स्यात् । किञ्चान्वयो व्याप्तिरभिधीयते । सा च त्रिधा–वहिर्व्याप्तिः साकल्यव्याप्तिरन्तर्व्याप्तिश्चेति । तत्र प्रथमव्याप्तौ भग्नघटव्यतिरिक्तं

---

१ प्रसज्य ॥ २ जैनमत ॥ ३ जैनेन ॥ ४ विपक्षाभावो विपक्षो भवति साध्यनिवृत्त्या साधननिवृत्त्याधार स्यात्सम्प्रतिपन्नविपक्षवत् ॥५ भाव एव महान्हदलक्षण आकाशलक्षणो वा विपक्ष स्यात् न त्वभाव इत्युक्ते आह ॥ ६ अभावस्य विपक्षत्वे विरोधश्चेत् ॥ ७ असन् ॥ ८ केन ॥ ९ ये सत्तासम्बन्धात्सन्तस्ते सद्वर्गवाच्या । ये तु स्वत सन्तस्ते असद्वर्गशब्दवाच्या इत्यर्थ ॥ १० अनेकत्वादित्यनेन अनुमानेन ॥ ११ उपहास ॥ १२ प्रागसत्कार्य यस्मिन् कपाले उत्पन्ने यस्य वस्तुनो घटलक्षणस्य नियमेन प्रध्वसस्तत्कारणम् ॥ १३ कारणत्वस्य ॥ १४ प्रागभावादिरूप ॥ १५ अनुमाने ॥ १६ अभावस्यैकभावावलम्बनत्वम् ॥ १७ तुच्छरूपोऽभाव ॥ १८ अभावस्य विपक्षतासद्भावप्रकारेण ॥ १९ विपक्षश्चासावभावश्चेति ॥ २० एकज्ञानरूप ॥ २१ पूर्वोक्तमेव ॥ २२ विपक्षाभावस्तर्हि ॥ २३ सा प्राक्तनी अवस्था यस्य ॥ २४ ग्रन्थचक्रक ॥ २५ हेतो ॥२६व्यतिरेकसद्भावादेव॥२७ईश्वर्थे वत् ॥ २८ अनेकत्वादिगतेन ॥ २९ तुच्छरूपत्वादपादानत्वायोग ॥ ३० भावाभावाना प्रागभावादीना भावाभावादीनाम् ॥

सर्वं क्षणिकं सत्त्वात्कृतकत्त्वाद्वा । तद्वत् विवादापन्नाः प्रत्यया निरालम्बनाः प्रत्ययत्वात्स्वप्नप्रत्ययवत्, ईश्वरः किञ्चिज्ज्ञो रागादिमान्वा–वक्तृत्वादिभ्यो रथ्यापुरुषवदित्यादेर्गमकत्वं स्यात् केवलान्वयस्यात्र सुलभत्वात् । ननु सर्वं न सत्त्वादिकं क्षणिकत्वादिना व्याप्तमात्मादौ क्षणिकत्त्वाद्यसत्त्वात्–तत्र तदसत्त्वे तत्रार्थक्रियासत्त्वात्सत्त्वं न स्यात् । किञ्च घटादिदृष्टान्ते सत्त्वादिकं क्षणक्षयादौ सति दृष्टमपि यदि क्वचित्तदभावेपि स्यान्न तर्हि वहिर्व्याप्तिरन्वयो, लक्षणयुक्ते बाधासम्भवे तल्लक्षणमेव दूषितं स्यात् । अथ सकलव्याप्तिरन्वयः । ननु केयं सकलव्याप्तिः? दृष्टान्तधर्मिणीव साध्यधर्मिण्यन्यत्र च साध्येन साधनस्य व्याप्तिः सेति चेत् सा कुतः प्रतीयताम्? प्रत्यक्षतोऽनुमानाद्वा? प्रत्यक्षतश्चेत् किमिन्द्रियान्मानसाद्वा? न तावदिन्द्रियाच्चक्षुरादेरिन्द्रियस्य सकलसाध्यसाधनार्थसन्निकर्षवैधुर्ये तदनुपपत्तेः । न हि तद्वैधुर्ये तद्युक्तमिन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं ज्ञानं प्रत्यक्षमित्यभिधानात् । तस्य तत्सन्निकर्षे वा प्राणिमात्रस्याशेषज्ञत्वप्रसङ्गान्न कश्चिदीश्वराद्विशेष्येत । ननु साध्यसाधनयोः साकल्येन ग्रहणं सकलव्याप्तिग्रहणम् । साध्यं चाग्निसामान्यं साधनं च धूमसामान्यम् । तयोश्चानवयवयोरेकत्रापि साकल्येन ग्रहणमस्ति । विशेषप्रतिपत्तिस्तु सर्वत्र पक्षधर्मतावलादेवेति चेत् तर्हि क्षणिकत्वादि साध्यं, सत्त्वादि साधनं तयोश्चानवयवयोः प्रदीपादौ सहदर्शनादेव सकलव्याप्तिग्रहः किन्न स्यात्? मानसप्रत्यक्षादपि व्याप्तिप्रतिपत्तावयमेव दोषः । तन्न प्रत्यक्षतः सकलव्याप्तिग्रहः । नाप्यनुमानतोऽनवस्थाप्रसङ्गात् । सामान्यस्य च साध्यत्वे साधनवैफल्यं तत्राविवादात् व्याप्तिग्रहणकाल एवास्य प्रसिद्धेः । कथमन्यथा सामान्यधर्मयोः साकल्येन व्याप्तिर्निर्णीता स्यात्? साध्यत्वं चास्यासतः करणं सतो ज्ञापनं वा? प्रथमपक्षे सामान्यस्यानित्यत्वाऽसर्वगतत्वप्रसङ्गः । द्वितीयपक्षेप्यस्य दृश्यत्वे धर्मिवत्प्रत्यक्षत्वमिति किं केन ज्ञाप्यते? अन्यथा धूमसामान्यमप्यग्निसामान्येन ज्ञाप्येत । अथ व्यक्तिसहायत्वाद्धूमसामान्यमेव प्रत्यक्षं नान्यत् । ततोऽयमदोषः । न–अस्य सामान्यविचारे सहायापेक्षाप्रतिक्षेपात् । यच्चोक्तं–विशेषप्रतिपत्तिस्तु पक्षधर्मतावलादेवेति, तत्र पक्षधर्मता धूमस्य तत्सामान्यस्य वा? तत्राद्यः पक्षोऽसङ्गतो विशेषेण व्याप्तेरप्रतिपत्तितस्तद्गमकत्वायोगात् । द्वितीयपक्षेप्यग्निसामान्यस्यैव धूमसामान्यात्सिद्धिः स्यात्–तेनैव तस्य व्याप्तेः । नाग्निविशेषस्य-अनेनाव्याप्तेः । अथ साधनसामान्यात्साध्यसामान्यप्रतिपत्तेरेवेष्टविशेषप्रतिपत्तिः, सामान्यस्य विशेषनिष्ठत्वात् । ननु तत्सामान्यमपि विशेषमात्रेण व्याप्तं सत्तदेव गमयेन्नान्यत् ।

---

१ यौग प्रति ॥ २ लक्षणम् ॥ ३ लक्ष्यम् ॥ ४ सत्त्वादिलक्षणे हेतौ ॥ ५ वहिर्व्याप्तिरूपस्यान्वयस्य कथं बाधासम्भव ? आत्मादौ क्षणिकत्वाभावेपि सत्त्वमस्ति यत ॥ ६ सकलेषु साध्यसाधनेषु ॥ ७ व्यक्त्यन्तरेषु ॥ ८ अशब्दजम् ॥ ९ सकलयो ॥ १० अनुमाने ॥ ११ अनुमाने ॥ १२ हेतो ॥ १३ निरंशयो ॥ १४ युगपत् ॥ १५ पर्वतोऽग्निमान्धूमवत्त्वादिति सत्यानुमाने धूमोऽग्निकार्यं तदन्वयव्यतिरेकानुविधायित्वादित्यनेनानुमानेन व्याप्ति प्रतीयते इत्यादिप्रकारेण ॥ १६ साध्यसामान्यस्य ॥ १७ व्याप्तिग्रहणकाले साध्यसामान्यस्य सिद्धिर्नास्ति चेत् ॥ १८ साध्यसाधनयो ॥ १९ निष्पादनम् ॥ २० हेतुना ॥ २१ साध्यसामान्यस्य ॥ २२ हेतुना ॥ २३ प्रत्यक्षमपि ज्ञाप्यते चेत् ॥ २४ धूमविशेष ॥ २५ अग्निसामान्यम् ॥ २६ साध्यसाधनसामान्यस्य ॥ २७ ग्रन्थे ॥ २८ स. यसाधनयो ॥ २९ यत्र यत्र पुरो भवति पर्वतस्थधूमस्तत्राग्निरिति ॥ ३० सिद्धि ॥ ३१ धूमसामान्यस्य ॥ ३२ यस ॥ ३३ अग्निविशेष ॥ ३४ प्रेष्टविशेषम् ॥

अथ विशिष्टविशेषाधारं लिङ्गसामान्यं प्रतीयमानं विशिष्टविशेषाधिकरणं साध्यसामान्यं गमयतीत्युच्यते, तदप्युक्तिमात्रं–तथा व्याप्तेरभावात् । अथ विपक्षे सद्भाववाधकप्रमाणवशात्तत्सिद्धिरिष्यते तर्हि तावतैव पर्याप्तत्वात् किमन्वयेन परस्य ? एतेनान्तर्व्याप्तिरपि चिन्तिता । न खलु प्रत्यक्षादितः सापि प्रसिद्ध्यति । तत्र पूर्ववच्छेषवदिति सूक्तम् । यच्चान्यदुक्तं 'पूर्ववत्सामान्यतो दृष्टं चेति । चशब्दो भिन्नप्रक्रमः, सामान्यत इत्यस्यानन्तरं द्रष्टव्यः । ततोयमर्थः–पूर्ववत्पक्षवत्सामान्यतोपि न केवलं विशेषतो दृष्टं विपक्षे । अनेन केवलव्यतिरेकी हेतुर्दर्शितः । सात्मकं जीवच्छरीरं प्राणादिमत्त्वादित्यादिः' तदप्ययुक्तं–यतः प्राणादेरन्वयाभावे कुतोऽविनाभावावगतिः ? व्यतिरेकाच्चेत् । तथा हि । यस्माद् घटादेः सात्मकत्वनिवृत्तौ प्राणादयो नियमेन निवर्त्तन्ते तस्मात्सात्मकत्वाभावः प्राणाद्यभावेन व्याप्तो धूमाभावेनेव पावकाभावः । जीवच्छरीरे च प्राणाद्यभावविरुद्धः प्राणादिसद्भावः प्रतीयमानस्तदभावं निवर्त्तयति । स च निवर्त्तमानः स्वव्याप्यं सात्मकत्वाभावमादाय निवर्त्तते इति सात्मकत्वसिद्धिस्तत्र । इत्यप्यसारं–यतोनुमानान्तरेप्येवमविनाभावप्रसिद्धेः -।- केवलव्यतिरेक्येव सर्वमनुमानं स्यादन्वयमात्रेण तत्सिद्धावतिप्रसङ्गस्योक्तत्वात् । किञ्च साध्यनिवृत्त्या साधननिवृत्तिर्व्यतिरेकः । स च कंचित्कदाचित्सर्वत्र सर्वदा वा स्यात् ? न तावदाद्यः पक्षस्तथा व्यतिरेकस्य साधनाभासेपि सम्भवात् । द्वितीयपक्षोप्ययुक्तः साकल्येन व्यतिरेकप्रतिपत्तेः प्रत्यक्षादिप्रमाणतः परेषामन्वयप्रतिपत्तेरिवासम्भवात् । एतेनं पूर्ववच्छेषवत्सामान्यतो दृष्टमन्वयव्यतिरेक्यनुमानं प्रत्याख्यातं पक्षद्वयोपक्षिप्तदोषानुषङ्गात् । यच्च तदुदाहरणं–विवादापन्नं तनुकरणभुवनादिकं बुद्धिमद्धेतुकं कार्यत्वादिभ्यो घटादिवदित्युक्तं तदपीश्वरनिराकरणप्रकरणे विशेषतो दूषितमिति पुनर्न दूष्यते । अथ पूर्ववत्–कारणात्कार्यानुमानं, शेषवत्–कार्यात्कारणानुमानं, सामान्यतो दृष्टम्–अकार्यकारणादकार्यकारणानुमानं सामान्यतोऽविनाभावमात्रादिति व्याख्यायेते तदप्यविनाभावनियमनिश्चायकप्रमाणाभावादेवायुक्तं परेषाम् । स्याद्वादिनां तु तद्युक्तं तत्सद्भावात् । इत्याचार्यैः स्वयमेव कार्यकारणेत्यादिना हेतुप्रपञ्चे प्रपञ्चयिष्यति । यदपि पूर्ववत्पूर्वं लिङ्गलिङ्गिसम्बन्धस्य कंचिन्निश्चयादन्यत्र

---

१ पर्वतस्थधूम ॥ २ पर्वतस्थाग्नि ॥ ३ वस ॥ ४ यो य पुरोवर्त्तिपर्वतस्थधूम स पुरोवर्त्तिपर्वतस्थाग्निमानिति ॥ ५ हेतो ॥ ६ अनुपलम्भ ॥ ७ व्याप्ति ॥ ८ व्याप्ते ॥ ९ यौगस्य ॥ १० साकल्यव्याप्तिशोधनपरेण ग्रन्थेन ॥ ११ निराकृता ॥ १२ अन्वयदृष्टान्तस्य ॥ १३ कारणात् ॥ १४ कारणात् ॥ १५ व्यापकेन ॥ १६ धूमाभाव पावकाभावे सत्यसति च भवति धूमाभावस्य व्यापकत्वेन तदतनिष्टत्वात् ॥ १७ देशे ॥ १८ स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यादौ ॥ १९ केवलान्वयिकेवलव्यतिरेकिलक्षणपक्षद्वयनिराकरणपरेण ग्रन्थेन ॥ २० पूर्वं कारण तल्लिङ्गमस्यानुमानस्यास्तीति पूर्ववत् । कारणलिङ्गजनितमनुमानमित्यर्थं ॥ २१ असौ पुमान् रूपादिज्ञानवान् चक्षुरादिमत्त्वान्मद्वदित्युदाहरणम् । शेषवदिति शेष कार्यं तल्लिङ्गमस्यानुमानस्यास्तीति शेषवत् । कार्यलिङ्गजनितमनुमानमित्यर्थं । सात्मक जीवच्छरीर प्राणादिमत्त्वादित्युदाहरणम् ॥ २२ दृष्टान्ते ॥ २३ कार्यं यो हेतुर्न भवति कारण वा यो हेतुर्न भवति तस्माद्धेतो कार्यं यन्न भवति साध्य कारण वा यन्न भवति साध्य तस्यानुमानम् । मातुलिङ्ग रूपवद्रसवत्त्वात्सम्प्रतिपन्नमातुलिङ्गवदित्युदाहरणम् ॥ २४ सूत्रम् ॥ २५ व्याख्यानम् ॥ २६ ऊह ॥ २७ जटाधराणाम् ॥ २८ अनुमानत्रितयम् ॥ २९ लिङ्गलिङ्गिसम्बन्ध पूर्वं निश्चीयमानत्वात् पूर्वं सोस्यानुमानस्यास्तीति पूर्ववत् । अग्निमान्पर्वतो धूमवत्त्वान्महानसवदित्युदाहरणम् ॥ ३० महानसे ॥ ३१ पर्वते ॥

प्रवर्त्तमानमनुमानम् । शेषवत्परिशेषानुमानं–प्रसक्तप्रतिषेधे परिशिष्टस्य प्रतिपत्तेः । सामान्यतो दृष्टं विशिष्टव्यक्तौ सम्बन्धाग्रहणात्सामान्येन दृष्टम् । यथा गतिमानादित्यो देशाद्देशान्तरप्राप्तेर्देवदत्तवदिति । तदप्येतेन प्रत्याख्यातमुक्तप्रकाराणां प्रमाणतः प्रसिद्धाविनाभावानां प्रतिपादयिष्यमाणहेतुप्रपञ्चत्वेन स्याद्वादिनामेव सम्भवात् । न चायं भेदो घटते । सर्वं हि लिङ्गं पूर्ववदेव परिशेषानुमानस्यापि पूर्ववत्त्वप्रसिद्धेः । प्रसक्तप्रतिषेधस्य परिशिष्टप्रतिपत्त्यविनाभूतस्य पूर्वं क्वचिन्निश्चितस्य विवादाध्यासितपरिशिष्टप्रतिपत्तौ साधनस्य प्रयोगात्, सामान्यतो दृष्टस्याऽपि पूर्ववत्त्वप्रतीतेः, क्वचिद्देशान्तरप्राप्तेर्गतिमत्त्वाविनाभाविन्या एव देवदत्तादौ प्रतिपत्तेः, अन्यथा तदनुमानाप्रवृत्तेः । परिशेषानुमानमेव वा सर्वं–पूर्ववतोपि धूमात्पावकानुमानस्य प्रसक्ताऽपावकप्रतिषेधात्प्रवृत्तिघटनात् । तदप्रसक्तौ विवादानुपपत्तेरनुमानवैयर्थ्यं स्यात् । सामान्यतो दृष्टस्यापि देशान्तरप्राप्तेरादित्यगत्यनुमानस्य तदगतिमत्त्वस्य प्रसक्तस्य प्रतिषेधादेवोपपत्तेः । सकलं सामान्यतो दृष्टमेव वा–सर्वत्र सामान्येनैव लिङ्गलिङ्गिसम्बन्धस्य प्रतिपत्तेः, विशेषतस्तत्सम्बन्धस्य प्रतिपत्तुमशक्तेः । ततोनुमानं तत्प्रभेदं चेच्छताऽविनाभाव एवैकं हेतोः प्रधानं लक्षणं प्रतिपत्तव्यम् ।

ननु चास्तु प्रधानं लक्षणमविनाभावो हेतोः । तत्स्वरूपं तु निरूप्यतामप्रसिद्धस्वरूपस्य लक्षणत्वायोगादित्याशङ्क्य सहक्रमेत्यादिना तत्स्वरूपं निरूपयति । सहभावनियमः क्रमभावनियमश्चाविनाभावः प्रतिपत्तव्यः । कयोः पुनः सहभावः कयोश्च क्रमभावो यन्नियमोऽविनाभावः स्यादित्याह–सहचारिणो रूपरसादिलक्षणयोर्व्याप्यव्यापकयोश्च शिंशपात्ववृक्षत्वादिस्वभावयोः सहभावः प्रतिपत्तव्यः । पूर्वोत्तरचारिणोः कृत्तिकाशकटोदयादिस्वरूपयोः कार्यकारणयोश्चाग्निधूमादिस्वरूपयोः क्रमभाव इति । कुतोसौ प्रोक्तप्रकारोऽविनाभावो निर्णीयते इत्याह—

तर्कात्[23]तन्निर्णयः । न पुनः प्रत्यक्षादेरित्युक्तं तर्कप्रामाण्यप्रसाधनप्रस्तावे ।

ननु साधनात्साध्यविज्ञानमनुमानमित्युक्तम् । तत्र किं साध्यमित्याह–[24]ईष्टमबाधितमसिद्धं साध्यम् । संशयादिव्यवच्छेदेन हि प्रतिपन्नमर्थस्वरूपं सिद्ध-

---

१ शेष परिशिष्यमाणोर्थः सोस्यास्तीति शेषवत् । अत्रोदाहरण शब्द क्वचिदाश्रितो गुणत्वाद्रूपवदिति ॥ २ उद्धरितार्थस्याकाशादे ॥ ३ अनुमानम् ॥ ४ साध्यसाधन नास्तीति चेत् ॥ ५ हेतूनाम् ॥ ६ देवदत्ते गतिमत्त्वदेशाद्देशान्तरप्राप्त्यो साध्यसाधनयोर्धर्मयो सामान्येन प्रतिपत्ति ॥ ७ पूर्ववच्छेषवत्सामान्यतोदृष्टलक्षणानाम् ॥ ८ ऊहलक्षणात् ॥ ९ क्वचिदनाश्रितलस्य ॥ १० घटस्य ॥ ११ क्वचिदाश्रितलस्य ॥ १२ आकाशस्य ॥ १३ क्वचिदाश्रितलस्य ॥ १४ रूपादौ ॥ १५ शब्दे क्वचिदाश्रितलस्य ॥ १६ गुणवत्त्वस्य ॥ १७ देशाद्देशान्तरप्राप्तेर्गतिमत्त्वाविनाभाविन्या देवदत्ते प्रतिपत्तिर्नास्तीति चेत् ॥ १८ आदित्यगतिमत्त्वस्य १९ पूर्ववच्छेषवदित्यनुमानद्वयम् ॥ २० अनुमाने ॥ २१ यौगेन भवता ॥ २२ ताद्वि (षष्ठीद्विवचनमित्यर्थः) । ययो ॥ २३ तस्य अविनाभावस्य ॥ २४ साध्यत्वेनाभिप्रेतम् ॥

मुच्यते। तद्विपरीतमसिद्धम् । तच्च सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यासिद्धपदम्। किमयं स्थाणुः पुरुषो वेति चलितप्रतिपत्तिविषयभूतो ह्यर्थः सन्दिग्धोभिधीयते । शुक्तिकाशकले रजताध्यवसायलक्षणविपर्यासगोचरस्तु विपर्यस्तः । गृहीतोऽगृहीतोपि वार्थो यथावदनिश्चितस्वरूपोऽव्युत्पन्नः–तथाभूतस्यैवार्थस्य साधने साधनसामर्थ्यात्, न पुनस्तद्विपरीतस्य–तत्र तद्वैफल्यात्।

इष्टाऽबाधितविशेषणद्वयस्यानिष्टेत्यादिना फलं दर्शयति । अनिष्टं हि सर्वथा नित्यत्वं शब्दे जैनस्य । अश्रावणत्वं तु प्रत्यक्षबाधितम् । आदिशब्देनानुमानादिबाधितपक्षपरिग्रहः । तत्रानुमानबाधितो यथा, नित्यः शब्द इति । आगमबाधितो यथा, प्रेत्याऽसुखप्रदो धर्म इति । स्ववचनबाधितो यथा, माता मे वन्ध्येति। लोकबाधितो यथा, शुचि नरशिरःकपालमिति। तयोरनिष्टाध्यक्षादिबाधितयोः साध्यत्वं मा भूदितीष्टाबाधितवचनम् ।

ननु यथा शब्दे कथञ्चिदनित्यत्वं जैनस्येष्टं तथा सर्वथाऽनित्यत्वमाकाशगुणत्वं चान्यस्येति तदपि साध्यमनुपज्यते। न च वादिनो यदिष्टं तदेव साध्यमित्यभिधातव्यं सामान्याभिधायित्वेनेष्टस्यान्यत्रोप्यविशेषात्। इत्याशङ्कापनोदार्थमाह–

'न चासिद्धवदिष्टं प्रतिवादिनो' विशेषणम्। न हि सर्वं सर्वापेक्षया विशेषणं प्रतिनियतत्वाद्विशेषणविशेष्यभावस्य। तत्रासिद्धमिति साध्यविशेषणं प्रतिवाद्यपेक्षया । न पुनर्वाद्यपेक्षया–तस्यार्थस्वरूपप्रतिपादकत्वात् । न चाविज्ञातार्थस्वरूपः प्रतिपादको नामातिप्रसङ्गात्। प्रतिवादिनस्तु प्रतिपाद्यत्वात्तस्य चाविज्ञातार्थस्वरूपत्वाविरोधात् तदपेक्षयैवेदं विशेषणम् । इष्टमिति तु साध्यविशेषणं वाद्यपेक्षया । वादिनो हि यदिष्टं तदेव साध्यं न सर्वस्य । तदिष्टमप्यध्यक्षाद्यबाधितं साध्यं भवतीति प्रतिपत्तव्यं तत्रैव साधनसामर्थ्यात्।

तदेव समर्थयमानः प्रत्यायनाय हीत्याद्याह। इच्छया खलु विषयीकृतमिष्टमुच्यते। स्वाभिप्रेतार्थप्रतिपादनाय चेच्छा वक्तुरेव।

तस्य चोक्तप्रकारस्य साध्यस्य हेतोर्व्याप्तिप्रयोगकालापेक्षया साध्यमित्यादिना भेदं दर्शयति। क्वचिद्व्याप्तिकाले साध्यं धर्मो नित्यत्वादिस्तेनैव हेतोर्व्याप्तिसम्भवात्। प्रयोगकाले तु तेन साध्यधर्मेण विशिष्टो धर्मी साध्यमभिधीयते। प्रतिनियतसाध्यधर्मविशेषणविशिष्टतया हि धर्मिणः साधयितुमिष्टत्वात् साध्यव्यपदेशाविरोधः। अस्यैव पर्यायमाह–पक्ष इति यावत्। ननु च कथं धर्मी पक्षो धर्मधर्मिसमुदायस्य तत्त्वात् । तत्र–साध्यधर्मविशेषणविशिष्टतया हि धर्मिणः साधयितुमिष्टस्य पक्षाभिधाने दोषाभावात्।

---

१ अर्थानाम् ॥ २ पूर्वम् ॥ ३ सिद्धौ ॥ ४ सूत्रेण ॥ ५ शब्द अश्रावण इत्युक्ते ॥ ६ प्रत्यभिज्ञायमानत्वादिति हेतु ॥ ७ कृतकत्वादिति हेतुना बाध्य पक्षोत्र ॥ ८ पुरुषाश्रितत्वादधर्मवत् ॥ ९ पुरुषसयोगेपि अगर्भत्वात् प्रसिद्धवन्ध्यावत् ॥ १० प्राण्यङ्गत्वान्छङ्खशुक्तिवत् ॥ ११ साध्ययो ॥ १२ वैशेषिकस्य ॥ १३ जैनस्य ॥ १४ प्रतिवादिन्यपि ॥ १५ इष्टाऽसिद्धयोर्मध्ये ॥ १६ सम्यग्धिन ॥ १७ शब्दस्य ॥ १८ इति ॥ १९ पक्ष इति ॥

स च पक्षत्वेनाभिप्रेतः प्रसिद्धो धर्मी। तत्प्रसिद्धिश्च क्वचिद्विकल्पतः क्वचित्प्रत्यक्षादितः क्वचिच्चोभयत इति प्रदर्शनार्थं, प्रत्यक्षसिद्धस्यैव धर्मित्वमित्येकान्तनिराकरणार्थं च विकल्पसिद्ध इत्याद्याह। विकल्पेन सिद्धे तस्मिन्धर्मिणि सत्तेतरे साध्ये–हेतुसामर्थ्यतः। यथा अस्ति सर्वज्ञः सुनिश्चितासम्भवद्बाधकप्रमाणत्वात्, नास्ति खरविषाणं तद्विपर्ययादिति। न खलु सर्वज्ञखरविषाणयोः सदसत्तायां साध्यायां विकल्पादन्यतः सिद्धिरस्ति, तत्रेन्द्रियव्यापाराभावात्। ननु चेन्द्रियप्रतिपन्न एवार्थे मनोविकल्पस्य प्रवृत्तिप्रतीतेः कथं तत्रेन्द्रियव्यापाराभावे विकल्पस्यापि प्रवृत्तिरित्यप्यपेशलं–धर्माधर्मादौ तत्प्रवृत्त्यभावानुषङ्गात्। आगमसामर्थ्यप्रभवत्वेनास्यात्र प्रवृत्तौ प्रकृतेप्यतस्तत्प्रवृत्तिरस्तु विशेषाभावात्। प्रमाणं प्रत्यक्षादिकम्। उभयं प्रमाणविकल्पौ। ताभ्यां सिद्धे पुनर्धर्मिणि साध्यधर्मेण विशिष्टता साध्या। यथाग्निमानयं देशः, परिणामी शब्द इति। देशो हि धर्मित्वेनोपात्तोऽध्यक्षप्रमाणत एव प्रसिद्धः, शब्दस्तूभाभ्याम्। न खलु देशकालान्तरिते ध्वनौ प्रत्यक्षं प्रवर्त्तते श्रूयमाणमात्र एवास्य प्रवृत्तिप्रतीतेः। विकल्पस्य त्वऽनियतविषयतया तत्र प्रवृत्तिरविरुद्धैव। ननु चैवं देशस्याप्यग्निमत्त्वे साध्ये कथं प्रत्यक्षसिद्धता? तत्र हि दृश्यमानभागस्याग्निमत्त्वसाधने प्रत्यक्षबाधनं साधनवैफल्यं वा–तत्र साध्योपलब्धेः। अदृश्यमानभागस्य तु तत्साधने कुतस्तत्प्रत्यक्षतेति? तदप्यसमीचीनमवयविद्रव्यापेक्षया पर्वतादेः सांव्यवहारिकप्रत्यक्षप्रसिद्धताभिधानात्। अतिसूक्ष्मेक्षिकापर्यालोचने न किञ्चित्प्रत्यक्षं स्यात्। बहिरन्तर्वाऽस्मदादिप्रत्यक्षस्याशेषविशेषतोऽर्थसाक्षात्करणेऽसमर्थत्वात्। योगिप्रत्यक्षस्यैव तत्र सामर्थ्यात्। ननु प्रयोगकालवद्व्याप्तिकालेपि तद्विशिष्टस्य[12] धर्मिण एव साध्यव्यपदेशः कुतो न स्यादित्याशङ्कयाह—

**व्याप्तौ तु साध्यं धर्म एव, न पुनस्तद्वान्—अन्यथा तदघटनात्,** अनेन हेतोरन्वयासिद्धेः। न खलु यत्र यत्र कृतकत्वादिकं प्रतीयते तत्र तत्रानित्यत्वादिविशिष्टशब्दाद्यन्वयोस्ति।

ननु[13] प्रसिद्धो धर्मीत्यादिपक्षलक्षणप्रणयनमयुक्तम्–अस्ति सर्वज्ञ इत्याद्यनुमानप्रयोगे पक्षप्रयोगस्यैवासम्भवात्, अर्थादापन्नत्वात्तस्य। अर्थादापन्नस्याप्यभिधाने पुनरुक्तत्वप्रसङ्गः–अर्थादापन्नस्य स्वशब्देनाभिधानं पुनरुक्तमित्यभिधानात्। तत्प्रयोगेपि च हेत्वादिवचनमन्तरेण साध्याप्रसिद्धेस्तद्वचनादेव च तत्प्रसिद्धेर्व्यर्थः पक्षप्रयोगः। इत्याशङ्क्य साध्यधर्माधारेत्यादिना प्रतिविधत्ते। साध्यधर्मोऽस्तित्वादिः। तस्याधार आश्रयः [यत्रासौ साध्यधर्मो वर्त्तते] तत्र सन्देहः–किमसौ साध्यधर्मोऽस्तित्वादिः सर्वज्ञे वर्त्तते सुखादौ वेति। तस्यापनोदाय गम्यमानस्यापि[15] पक्षस्य वचनम्। साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मो-

१ अनुमाने ॥ २ निश्चितसवाद सवाद शब्दप्रत्ययो विकल्पस्तेन ॥ ३ अमत्ता ४ इन्द्रियव्यापाराभावात् ॥ ५ शब्दगम्यत्वाविशेषात् ॥ ६ प्रसिद्ध ॥ ७ शब्दस्य केवलप्रत्यक्षत सिद्ध्यभावप्रकारेण ॥ ८ स्यात् ॥ ९ नाऽवयव (प्रदेश) द्रव्यापेक्षया ॥ १० असर्वज्ञप्रत्यक्ष ॥ ११ विचार ॥ १२ साध्यधर्म ॥ १३ बौद्ध ॥ १४ अर्थादापन्नस्य ॥ १५ व्याप्तिप्रदर्शनद्वारेण ॥

पसंहारवत् । तस्याऽवचनं साध्यसिद्धिप्रतिबन्धकत्वात्प्रयोजनाभावाद्वा ? तत्र प्रथमपक्षोऽयुक्तो वादिना साध्याविनाभावनियमैकलक्षणेन हेतुना स्वपक्षसिद्धौ साधयितुं प्रस्तुतायां प्रतिज्ञाप्रयोगस्य तत्प्रतिबन्धकत्वाभावात् ततः प्रतिपक्षासिद्धेः । द्वितीयपक्षोऽप्ययुक्तस्तत्प्रयोगे प्रतिपाद्यप्रतिपत्तिविशेषस्य प्रयोजनस्य सद्भावात्; पक्षाऽप्रयोगे तु केषाचिन्मन्दमतीनां प्रकृतार्थाप्रतिपत्तेः । ये तु तत्प्रयोगमन्तरेणापि प्रकृतार्थं प्रतिपद्यन्ते तान्प्रति तदप्रयोगोऽभीष्ट एव । "प्रयोगपरिपाटी तु प्रतिपाद्यानुरोधतः" इत्यभिधानात् । ततो युक्तो गम्यमानस्याप्यस्य प्रयोगः । कथमन्यथा शास्त्रादावपि प्रतिज्ञाप्रयोगः स्यात् ? न हि शास्त्रे नियतकथाया प्रतिज्ञा नाभिधीयते-अग्निरत्र धूमात्, वृक्षोयं शिंशपात्वादित्याद्यभिधानानां तत्रोपलम्भात् । परानुग्रहप्रवृत्तानां शास्त्रकाराणां प्रतिपाद्यावबोधनाधीनधियां शास्त्रादौ प्रतिज्ञाप्रयोगो युक्तिमानेवोपयोगित्वात्तस्येत्यभिधाने वादेपि सोऽस्तु-तत्रापि तेषां तादृशत्वात् ॥ अमुमेवार्थं को वेत्यादिना परोपहसनव्याजेन समर्थयते । को वा प्रामाणिकः कार्यस्वभावानुपलम्भभेदेन पक्षधर्मत्वादिरूपत्रयभेदेन वा त्रिधा हेतुमुक्त्वाऽसिद्धत्वादिदोषपरिहारद्वारेण समर्थयमानो न पक्षयति अपि तु पक्षं करोत्येव । न चाऽसमर्थितो हेतुः साध्यसिद्ध्यङ्गमतिप्रसङ्गात् । ततः पक्षप्रयोगमनिच्छता हेतुमनुक्त्वैव तत्समर्थनं कर्त्तव्यम् । हेतोरवचने कस्य समर्थनमिति चेत् । पक्षस्याप्यनभिधाने क हेत्वादि प्रवर्त्तताम् ? गम्यमाने प्रतिज्ञाविषय एवेति चेद्गम्यमानस्य हेत्वादेरपि समर्थनमस्तु । गम्यमानस्यापि हेत्वादेर्मन्दमतिप्रतिपत्त्यर्थं वचने तदर्थमेव प्रतिज्ञावचनमप्यस्तु विशेषाभावात् । ततः साध्यप्रतिपत्तिमिच्छता हेतुप्रयोगवत्पक्षप्रयोगोप्यभ्युपगन्तव्यः । तद्द्वयस्यैवानुमानाङ्गत्वात् । इत्याह-एतद्द्वयमेवानुमानाङ्गम् ।

ननु पक्षहेतुदृष्टान्तोपनयनिगमनान्यवयवा इत्यभिधानाद् दृष्टान्तादेरप्यनुमानाङ्गत्वसम्भवादेतद्द्वयमेवाङ्गमित्ययुक्तमुक्तम् । प्रतिज्ञा ह्यागमः । हेतुरनुमानं प्रतिज्ञातार्थस्य तेनानुमीयमानत्वात् । उदाहरणं प्रत्यक्षं-वादिप्रतिवादिनोर्यत्र बुद्धिसाम्यं तदुदाहरणमिति वचनात् । उपनय उपमानं-दृष्टान्तधर्मिसाध्यधर्मिणोः सादृश्यात्, प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमित्यभिधानात् । सर्वेषामेकविषयत्वप्रदर्शनफलं निगमनमित्याशङ्क्योदाहरणस्य तावत्तदङ्गत्वं निराकुर्वन्नाह ॥ नोदाहरणम् । अनुमानाङ्गमिति सम्बन्धः । तद्धि किं साक्षात्साध्यप्रतिपत्त्यर्थमुपादीयते हेतोः साध्याविनाभावनिश्चयार्थं वा व्याप्तिस्मरणार्थं वा? प्रकारान्तरासम्भवात् । तत्राद्यविकल्पोऽयुक्तः । न हि तत्साध्यप्रतिपत्त्यङ्गं तत्र यथोक्तहेतोरेव साध्याविनाभावनियमैकलक्षणस्य व्यापारात् । द्वितीयविकल्पो-

१ सुनिश्चिताऽसम्भवद्बाधकप्रमाणत्वायमिति साधनस्य पक्षधर्मत्वेन प्रदर्शनमुपसंहारस्तद्वत् ॥ २ अस्ति सर्वज्ञ इति ॥ ३ गम्यमानस्य पक्षस्य प्रयोगो न भवति ॥ ४ सुगोटाम् ॥ ५ धर्मकीर्त्यादीनाम् ॥ ६ सौगतेन ॥ ७ मिपेण ॥ ८ हेत्वाभासस्यापि साध्यसिद्ध्यङ्गताप्रसङ्गात् ॥ ९ न केवल हेतो ॥ १० साध्य न ॥ ११ साध्यसाधनस्यैव परिहारेण दृष्टान्तस्य समर्थनमारिशब्देन ग्राह्यम् ॥ १२ एतत् ॥ १३ करणे युट् ॥ १४ महानसादि ॥ १५ धूमवत्त्वेन ॥ १६ प्रसिद्ध महानस तेन सादृश्यं पर्वतस्य धूमवत्त्वेन ॥ १७ धूमनाशायम् ॥ १८ धूमवत्त्वशब्दाच्चात्र पर्वतस्य साध्य तस्य साधन ज्ञानम् ॥ १९ प्रमाणानाम् ॥ २० अग्नित्व ॥ २१ अक्रमपरम्परया साध्यप्रतिपत्ति कथमेवावि गाद्धेतो साध्यसिद्धिरिति ॥

प्यसम्भाव्यः । न हि हेतोस्तेन साध्येनाविनाभावस्य निश्चयार्थं वा तदुपादानं युक्तं विपक्षे बाधकादेव तत्सिद्धेः । न हि सपक्षे सत्त्वमात्राद्धेतोर्व्याप्तिः[2] सिद्ध्यति ।
स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यत्र तदाभासेपि तत्सम्भवात् । ननु साकल्येन साध्यनिवृत्तौ साधननिवृत्तेरत्रासम्भवात्परत्र गौरेपि तत्पुत्रे तत्पुत्रत्वस्य भा-
वान्न व्याप्तिस्तर्हि साकल्येन साध्यनिवृत्तौ साधननिवृत्तिनिश्चयरूपाद्बाधकादेव[3] व्याप्तिप्रसिद्धेरलं दृष्टान्तकल्पनया । किञ्च वादिप्रतिवादिनोर्यत्र बुद्धिसाम्यं स
दृष्टान्तो भवति प्रतिनियतव्यक्तिरूपः । यथाऽग्नौ[4] साध्ये महानसादिः । व्यक्तिरूपं च निदर्शनं कथं तदविनाभावनिश्चयार्थं[5] स्यात् ? प्रतिनियतव्यक्तौ तन्नि-
श्चयस्य कर्तुमशक्तेः । अनियतदेशकालाकाराधारतया[6] सामान्येन तु व्याप्तिः । कथमन्यथान्यत्र[7] साधनं साध्यं साधयेत् ? तत्रापि दृष्टान्तेपि तस्यां व्याप्तौ वि-
प्रतिपत्तौ सत्यां दृष्टान्तान्तरान्वेषणेऽनवस्थानं स्यात् । नापि व्याप्तिस्मरणार्थं दृष्टान्तोपादानं तथाविधस्य प्रतिपन्नाविनाभावस्य हेतोः प्रयोगादेव तत्स्मृतेः । एवं
चाप्रयोजनं तदुदाहरणम् । परं केवलमभिधीयमानं साध्यसाधने साध्यधर्मिणि सन्देहयति–सन्देहवती करोति । कुतोऽन्यथोपनयनिगमने ?
मा भूद्दृष्टान्तस्यानुमानं प्रत्यङ्गत्वमुपनयनिगमनयोस्तु स्यादित्याशङ्कापनोदार्थमाह—न च ते तदङ्गे साध्यधर्मिणि हेतुसाध्ययोर्वचनादेव हेतुसाध्यप्रतिपत्तौ
संशयाभावात् । तथापि दृष्टान्तादेरनुमानावयवत्वे हेतुरूपत्वे वा समर्थनमेव वरं हेतुरूपमनुमानावयवो वास्तु साध्ये तस्योपयोगात् । समर्थनं हि नाम
हेतोरसिद्धत्वादिदोषं निराकृत्य स्वसाध्येनाऽविनाभावसाधनम् । साध्यं प्रति हेतोर्गमकत्वे च तस्यैवोपयोगो नान्यस्येति ।
ननु व्युत्पन्नप्रज्ञानां साध्यधर्मिणि हेतुसाध्ययोर्वचनादेवासंशयादर्थप्रतिपत्तेर्दृष्टान्तादिवचनमनर्थकमस्तु । बालानां त्वऽव्युत्पन्नप्रज्ञानां व्युत्पत्त्यर्थं तन्नानर्थ-
कमित्याह ।
बालव्युत्पत्त्यर्थं तत्त्रयोपगमे दृष्टान्तोपनयनिगमनत्रयाभ्युपगमे, शास्त्र एवासौ तदभ्युपगमः कर्तव्यः, न वादेऽनुपयोगात् । न खलु वादकाले
शिष्या व्युत्पाद्यन्ते व्युत्पन्नप्रज्ञानामेव वादेऽधिकारात् । शास्त्रे चोदाहरणादौ व्युत्पन्नप्रज्ञा वादिनो वादकाले ये प्रतिवादिनो यथा प्रतिपद्यन्ते तान् तथैव प्रतिपा-
दयितुं समर्था भवन्ति प्रयोगपरिपाट्याः प्रतिपाद्यानुरोधतो जिनपतिमतानुसारिभिरभ्युगमात् ।
तत्र तद्व्युत्पादनार्थं दृष्टान्तस्य स्वरूपं प्रकारं चोपदर्शयति । दृष्टान्तो द्वेधाऽन्वयव्यतिरेकभेदात् । दृष्टो हि विधिनिषेधरूपतया वादिप्रतिवादिभ्यामविप्रतिपत्त्या

१ ऊहात् ॥ २ अविनाभाव ॥ ३ ऊहात् ॥ ४ पर्वते ॥ ५ साध्यसाधनयो ॥ ६ प्रतिनियतव्यक्तौ तन्निश्चयस्य कर्तुमशक्तेरित्येतद्भावयति ॥ ७ सामान्येन व्याप्तिर्न स्याद्यदि ॥ ८ दृष्टान्तादन्यत्र ॥ ९ यदि सन्देहवती न करोति ॥ १० उपनयनिगमनादेश्च ॥ ११ सपक्षे दृष्टान्ते सत्त्वमुपनयश्च हेतुस्वरूपम् । कुत ? त्रिरूपो हेतुर्यत इति सौगत ॥ १२ हेतुलक्षण कीदृशम् ? दृष्टान्तोपनयनिगमनलक्षणत्रिरूपलप्रदर्शनस्वरूपम्॥ १३ हेतुरूपोक्तु । कथम् ? हेतो समर्थन हेतुरेवेत्यनेन प्रकारेण ॥ १४ विपक्षे साकल्येन बाधकप्रमाणप्रदर्शन हेतुसमर्थनम् ॥ १५ एतदेव ॥ १६ शास्त्रे यदुदाहरणादि तस्मिन् ॥ १७ वा ॥ १८ एवं च सति ॥ १९ सामान्यत स्वरूप दृष्टान्तेनोक्त शेषतस्तत्स्वरूप तु साध्यव्याप्तमित्यादिना दर्शयति ॥

प्रतिपन्नोऽन्तः साध्यसाधनधर्मौ यत्रासौ दृष्टान्त इति व्युत्पत्तेः। अथ कोऽन्वयदृष्टान्तः कश्च व्यतिरेकदृष्टान्त इति चेत् साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः। यथाग्नौ साध्ये महानसादिः। साध्याभावे साधनव्यतिरेको यत्र कथ्यते स व्यतिरेकदृष्टान्तः। यथा तस्मिन्नेव साध्ये महाह्रदादिः।

अथ को नाम उपनयो निगमनं वा किमित्याह—हेतोरुपसंहार उपनयः। प्रतिज्ञायास्तूपसंहारो निगमनम्। उपनयो हि साध्याविनाभावित्वेन विशिष्टे साध्यधर्मिण्युपनीयते येनोपदर्श्यते हेतुः सोऽभिधीयते। निगमनं तु प्रतिज्ञाहेतूदाहरणोपनयाः साध्यलक्षणैकार्थतया निगम्यन्ते सम्बद्ध्यन्ते येन तदिति। तच्चानुमानं द्व्यवयवं[1] त्र्यवयवं[2] पञ्चावयवं[3] वा? द्विप्रकारं भवतीति दर्शयन् तदनुमानं द्वेधेत्याह। कुतस्तद् द्वेधेति चेत् स्वार्थपरार्थभेदात्। तत्र स्वार्थमनुमानं साधनात्साध्यविज्ञानमित्युक्तलक्षणम्। किं पुनः परार्थानुमानमित्याह परार्थमित्यादि। तस्य स्वार्थानुमानस्यार्थः साध्यसाधने तत्परामर्शिवचनाज्जातं यत्साध्यविज्ञानं तत्परार्थानुमानम्।

ननु वचनात्मकं परार्थानुमानं प्रसिद्धम्। तच्चोक्तप्रकारं साध्यविज्ञानं परार्थानुमानमिति वर्णयता कथं सङ्गृहीतमित्याह 'तद्वचनमपि तदर्थपरामर्शि वचनमपि तद्धेतुत्वात्[7] ज्ञानलक्षणमुख्यानुमानहेतुत्वादुपचारेण परार्थानुमानमुच्यते'। उपचारनिमित्तं चास्य प्रतिपादकप्रतिपाद्यापेक्षयानुमानकार्यकारणत्वम्। तत्प्रतिपादकज्ञानलक्षणानुमानहेतुः कारणं यस्य तद्वचनस्य तस्य वा प्रतिपाद्यज्ञानलक्षणानुमानस्य हेतुः कारणम्। तद्भावस्तद्धेतुत्वम्। तस्मादिति। मुख्यरूपतया तु ज्ञानमेव प्रमाणं परनिरपेक्षतयाऽर्थप्रकाशकत्वादिति प्राक्प्रतिपादितम्।

यथा चानुमानं द्विप्रकारं तथा हेतुरपि द्विप्रकारो भवतीति दर्शनार्थं स हेतुर्द्वेधेत्याह। योऽविनाभावलक्षणलक्षितो हेतुः प्राक्प्रतिपादितः स द्वेधा भवति उपलब्ध्यनुपलब्धिभेदात्। तत्रोपलब्धिर्विधिसाधिकैवानुपलब्धिश्च प्रतिषेधसाधिकैवेत्यनयोर्विषयनियममुपलब्धिरित्यादिना विघटयति। अविनाभावनिमित्तो हि साध्यसाधनयोर्गम्यगमकभावः। यथा चोपलब्धेर्विधौ साध्येऽविनाभावाद्गमकत्वं तथा प्रतिषेधेऽपि[10]। अनुपलब्धेश्च यथा प्रतिषेधे[11] ततो गमकत्वं तथा विधावपी[12]त्यग्रे स्वयमेवाचार्यो वक्ष्यति। सा चोपलब्धिर्द्विप्रकारा भवत्यविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्चेति। तत्र साध्येनाविरुद्धस्य व्याप्यादेरुपलब्धिर्विधौ साध्ये षोढा भवति व्याप्य[13]कार्यकारणपूर्वोत्तरसहचरभेदात्। ननु[14] कार्यकारणभावस्य कुतश्चित्प्रमाणादप्रसिद्धेः कथं कार्यं कारणस्य तद्वा कार्यस्य गमकं स्यादित्यपि[15]त्यास्तां तावद्विषयपरिच्छेदे सम्बन्धपरीक्षायां कार्यकारणतादि[16]सम्बन्धस्य प्रसाधयिष्यमाणत्वात्। ननु प्रसिद्धेऽपि कार्यकारणभावे कार्यमेव कारणस्य गमकं तस्यैव तेना-

१ वस ॥ २ जेनस्य ॥ ३ मीसासकस्य ॥ ४ यौगस्य ॥ ५ अनेन प्रकारेण ॥ ६ तद्द्योति ॥ ७ परार्थानुमानमुच्यते इति सम्बन्ध ॥ ८ हेतो ॥ ९ अनेन प्रकारेण ॥ १० साध्ये। अविनाभावाद्गमकत्वमुपलब्धे ॥ ११ साध्ये ॥ १२ साध्ये। ततो गमकत्वमनुपलब्धे ॥ १३ स्वभावहेतुरयम् ॥ १४ ज्ञानाद्वैतवादी शून्यवादी वा बौद्धविशेष आह ॥ १५ न केवलमग्रे प्राक्तन वक्ष्यतीत्यपि ॥ १६ आदिना सयोगादिग्रहणम् ॥

विनाभावात्। न पुनः कारणं कार्यस्य—तदभावात्। इत्यसङ्गतं—कार्याविनाभावितयाऽवधारितस्यानुमानकालप्राप्तस्य च्छत्रादे[१]र्विशिष्टकारणस्य च्छायादिकार्यानुमापकत्वेन सुप्रसिद्धत्वात्। न ह्यनुकूलमात्रमन्त्यक्षणप्राप्तं[२] वा कारणं लिङ्गमुच्यते, येन प्र[४]तिवन्धवैकल्यसम्भवा[६]द्व्यभिचारि स्यात्, द्वितीयक्षणे कार्यस्य प्रत्यक्षीकरणादनुमानानर्थक्यं वा।

तदेव समर्थयमानो रसादेकसामग्र्यनुमानेनेत्याद्याह। आस्वाद्यमानाद्धि रसात्त[७]ज्जनिका सामग्र्यनुमीयते। पश्चात्तदनुमानेन रूपानुमानम्। सजातीयं हि रूपक्षणान्तरं जनयन्नेव प्राक्तनो रूपक्षणो विजातीयरसादिक्षणान्तरोत्पत्तौ प्रभु[८]र्भवेन्नान्यथा। तथा चैकसामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव किञ्चि[९]त्कारणं हेतुर्यत्र सा[१०]मर्थ्याप्रतिवन्धकारणा[११]न्तरावैकल्ये भवतः। अथ पूर्वोत्तरचा[१२]रिणोः प्रतिपादितहेतुभ्यो[१३]र्थान्तरत्वसमर्थनार्थमाह 'न च पूर्वोत्तरकालव[१४]र्त्तिनोस्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेः'। प्रयोगो—यै[१५]र्यत्काले अनन्तरं वा नास्ति न तस्य तेन तादात्म्यं तदुत्पत्तिर्वा। यथा भविष्यच्छङ्खचक्रवर्त्तिकाले असतो रावणा[१६]देः। नास्ति च शकटोदयादिकाले अनन्तरं वा कृत्तिकोदयादिकमिति। ता[१७]दात्म्यं हि समसमयस्यैव कृतकत्वानित्यत्वादेः प्रतिपन्नम्। अग्निधूमादेश्चान्योन्यमव्यवहितस्यैव तदुत्पत्तिः, न पुनर्व्यवहितकालस्य, अतिप्र[१८]सङ्गात्। ननु प्र[१९]ज्ञाकराभिप्रायेण भाविरोहिण्युदयकार्यतया कृत्तिकोदयस्य गमकत्वात्कथं कार्यहेतौ नास्या[२०]न्तर्भाव इति चेत् कथमेवं[२१]मभूद्भरण्युदयः कृत्तिकोदयादित्यनुमानम्? अ[२२]थ भरण्युदयोपि कृत्तिकोदयस्य कारणं तेनायम[२३]दोषः। ननु येन स्वभावेन भरण्युदयात्कृत्तिकोदयस्तेनैव यदि शकटोद[२४]यात्तदा भरण्युदयादिवाऽतोपि पश्चादसौ स्यात्। यथा च शक[२५]टोदयात्प्राक्त[२६]थैव भरण्युदया[२७]दपि। यदि चातीतानागतयोरेकत्र कार्ये व्यापारस्तर्ह्यास्वाद्यमानरसस्यातीतो रसो भावि च रूपं हेतुः स्यात्। ततो न वर्त्तमानस्य रूपस्य वातीतस्य वा प्रतीतिरित्ययुक्तमुक्तमित्यतीतैकका[२७]लानां[२८] गतिर्नाऽनागतानामिति। अथान्यतरकार्यमसौ तर्ह्यन्यतरस्यै[२९]वातः प्रतीतिर्भवेत्। ननु स्वस[३०]त्तासमवायात्पूर्वमसन्तोपि मरणा[३१]दयोऽरिष्टा[३२]दिकार्यकारिणो दृष्टास्ततोऽनैका[३३]न्तो हेतोरित्याशङ्क्य भाव्यतीतयोरित्यादिना प्रतिविधत्ते। त[३४]द्व्यापाराश्रितं हि त[३५]द्भावभावित्वम्। न च पूर्वमेवोत्पन्नमरिष्टं करतलरे-

१ चन्द्रादेर्वा ॥ २ आदिना समुद्रवृद्धि ॥ ३ तन्तुसयोगरूप ॥ ४ मन्त्रौपधादिना प्रतिवन्ध ॥ ५ द्वन्द्व ॥ ६ सहकारिणा क्षित्यादीना वैकल्यम् ॥ ७ तस्य सहकारिकारणस्य ॥ ८ समर्थ ॥ ९ विशिष्ट नानुकूलादिरूप कारणम् ॥ १० मणिमन्त्रादिना ॥ ११ क्षित्युदकादिकस्य ॥ १२ हेत्वो ॥ १३ साध्यसाधनयो ॥ १४ तादात्म्यतदुत्पत्ती धर्मिणौ कृत्तिकोदयशकटोदययोर्न भवत शकटोदयकालेऽनन्तर वा कृत्तिकोदयस्यानुपलब्धे ॥ १५ तादात्म्य तदुत्पत्तिर्वा ॥ १६ सन्दिग्धानैकान्तिकत्वे सतीद वाक्यम् ॥ १७ रावणशङ्खचक्रवर्त्तिनोरतीतानागतयोस्तादात्म्यतदुत्पत्तिप्रसङ्गात् ॥ १८ बौद्धाना मध्ये प्रज्ञाकरबौद्धो नाम भाविकारणवादी कश्चिद्ग्रन्थकार ॥ १९ पूर्वचरस्य ॥ २० पूर्वचरस्य कार्यहेतावन्तर्भावप्रकारेण ॥ २१ भूतकारणवादिमतमाश्रित्योच्यते ॥ २२ अनुमानाभावलक्षण ॥ २३ कृत्तिकोदय ॥ २४ रोहिणी ॥ २५ कृत्तिकोदय ॥ २६ प्राक् कृत्तिकोदय स्यात् ॥ २७ अतीतश्चैकश्च अतीतैकौ कालौ येषा रूपादीनाम् ॥ २८ साध्यार्थानाम् ॥ २९ शकटोदयभरण्युदययोर्मध्ये ॥ ३० कारणस्य ॥ ३१ आदिना राज्यादयश्च ॥ ३२ उत्पातहस्तरेखादि ॥ ३३ अरिष्टादिना ॥ ३४ कारणस्य ॥ ३५ कारणस्य ॥

खादिकं वा भाविनो मरणस्य राज्यादेर्व्यापारमपेक्षते स्वयमुत्पन्नस्यापरापेक्षायोगात् । अथास्योत्पत्तिर्मरणादिनैव क्रियते, न–असतःखरविषाणवत्कर्तृत्वायोगात् । कार्यकालेऽसत्त्वेपि स्वकाले सत्त्वाददोषश्चेन्ननु किं भाविनो मरणादेः स्वकाले पूर्वं सत्त्वमरिष्टादेर्वा । भाविनः पूर्वं सत्त्वे ततः पश्चादरिष्टादिकमुपजायमानं पाश्चात्यं न पूर्वमित्ययुक्तमुक्तं पूर्वमसन्तोपि मरणादयोऽरिष्टादिकार्यकारिण इति । अथान्यभाविमरणाद्यपेक्षयारिष्टादिकं पूर्वमुच्यते । ननु तदपि सत् स्वकाले यदि ततः प्रागेव स्यात्तर्हि पाश्चात्यमरिष्टादिकं कथं ततः पूर्वमुच्यते ? अन्यभाविमरणाद्यपेक्षया चेदनवस्था । अथ पूर्वमरिष्टादिकं स्वकाले पश्चाद्भाविमरणादिकं स्वकालनियतं भवेत्तर्हि निष्पन्नस्य निराकाङ्क्षस्यास्य पश्चादुपजायमानेन मरणादिना कथं करणं कृतस्य करणायोगात् । अन्यथा न क्वचित्कार्ये कस्यचित्कारणस्य कदाचिदुपरमः स्यात् पुनःपुनस्तस्यैव करणात् । अथ निष्पन्नस्याप्यनिष्पन्नं किञ्चिद्रूपमस्ति तत्करणात्तत्कारणं कल्प्यते । तत्ततो यद्यभिन्नं तदेव तत्तस्य च न करणमित्युक्तम् । भिन्नं चेत्तदेव तेन क्रियते नारिष्टादिकमित्यायातम् । तत्सम्बन्धिनस्तस्य करणात्तदपि कृतमिति चेद्भिन्नयोः कार्यकारणभावान्नान्यः सम्बन्धः स्वयं सौगतैस्तथाऽभ्युपगमात् । तत्र चारिष्टादिना तत्क्रियेत तेन वारिष्टादिकम् ? प्रथमपक्षेऽरिष्टादेरेव तन्निष्पत्तेर्मरणादिकमकिञ्चित्करमेव क्वचिदप्यनुपयोगात् । तेनारिष्टादिकरणे पूर्वनिष्पन्नस्य पश्चादुपजायमानेन तेन किं क्रियत इत्युक्तम् । अथाऽनिष्पन्नं किञ्चिदस्ति, तत्रापि पूर्ववच्चर्चानवस्था च, ननु यद्यत्र कार्यकारणभावो न स्यात्कथं तर्हि एकदर्शनादन्यानुमानमिति चेदविनाभावादिति ब्रूमः । तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धेप्यविनाभावादेव गमकत्वम् । तदभावे वक्तृत्वतत्पुत्रत्वादेस्तादात्म्यतदुत्पत्तिप्रतिबन्धे सत्यप्यसर्वज्ञत्वे श्यामत्वे च साध्ये गमकत्वाप्रतीतेः । तदभावेपि चाविनाभावप्रसादात्कृत्तिकोदयचन्द्रोदयोद्गृहीताण्डकपिपीलिकोत्सर्पणैकाम्रफलोपलभ्यमानमधुररसस्वरूपाणां हेतूनां यथाक्रमं शकटोदयसमानसमयसमुद्रवृद्धिभाविवृष्टिसमसमयसिन्दूरारुणरूपस्वभावेषु साध्येषु गमकत्वप्रतीतेश्च । तदुक्तं "कार्यकारणभावादिसम्बन्धानां द्वयी गतिः । नियमानियमाभ्यां स्यादनियमादनङ्गता । १ । सर्वेऽप्यनियमा ह्येते नानुमोत्पत्तिकारणम् । नियमात्केवलादेव न किञ्चिन्नानुमीयते । २ ।" ततः शरीरनिर्वर्त्तकाऽदृष्टादिकारणकलापादरिष्टकरतलरेखादयो निष्पन्नाः भाविनो मरणराज्यादेरनुमापका इति प्रतिपत्तव्यम् । जाग्रद्बोधस्तु प्रबोधबोधस्य हेतुरित्येतत्प्रागेव प्रतिविहितं स्वापाद्यवस्थायामपि ज्ञानस्य प्रसाधितत्वात् । ततो भाव्यतीतयोर्मरणजाग्रद्बोधयोरपि नारिष्टोद्बोधौ प्रति हेतुत्वम् । येनाभ्यामनैकान्तिको हेतुः स्यादिति स्थितम् । यथा च पूर्वोत्तरचारिणोर्न तादात्म्यं तदुत्पत्तिर्वा

१ इति चेत् ॥ २ अरिष्टादिकाले ॥ ३ मरणादे सकाशात्पूर्वं सत्त्वम् ॥ ४ सकाशात् ॥ ५ द्वितीयविकल्पोयम् ॥ ६ अरिष्टादे ॥ ७ परेण ॥ ८ निष्पन्नानिष्पन्नयो ॥ ९ सयोगादि ॥ १० अन्यसम्बन्धाभावप्रकारेण ॥ ११ अनिष्पन्नम् ॥ १२ अनिष्पन्नरूपेण ॥ १३ कार्ये ॥ १४ अरिष्टादि ॥ १५ घटन ॥ १६ अन्धकारावस्थायामास्वाद्यमानमाम्रफल सिन्दूरारुणरूपयुक्त भवति मधुररसोपेतत्वादुपभुक्ताम्रफलवत् ॥ १७ आदिना तादात्म्यसयोगादि ॥ १८ प्रकार ॥ १९ अविनाभावाभावात् ॥ २० अनुमान प्रति ॥ २१ अनियमादनङ्गतेत्येतदेवाचष्टे सर्वे इत्यादिना ॥ २२ कार्यकारणतादात्म्यादय ॥ २३ वक्तृत्वतत्पुत्रत्वादीनां हेत्वाभासानां येऽविनाभावरहिता कार्यकारणादिसम्बन्धास्ते सर्वे अनुमानोत्पत्तिकारण न भवन्ति ॥ २४ तर्ह्यनुमोत्पत्तौ प्रति किं कारणमित्युक्ते सत्याह ॥ २५ अविनाभावात् ॥ २६ साध्यम् ॥ २७ आदिनात्मादि ॥ २८ यौगेन ॥ २९ मोक्षविचारावसरे ॥ ३० साध्यसाधनयो ॥

तथा सहचारिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च। येयोः परस्परपरिहारेणावस्थानं न तयोस्तादात्म्यं, यथा घटपटयोः। परस्परपरिहारेणाव-
स्थानं च सहचारिणोरिति। एककालत्वाच्चानयोर्न तदुत्पत्तिः। ययोरेककालत्वं न तयोस्तदुत्पत्तिर्यथा सव्येतरगोविषाणयोः। एककालत्वं च सहचारिणोरिति।
न चास्वाद्यमानाद्रसात्सामग्र्यनुमानं ततो रूपानुमानमनुमितानुमानादित्यभिधातव्यं तथा व्यवहाराभावात्। न हि आस्वाद्यमानाद्रसाद् व्यवहारी साम-
ग्रीमनुमिनोति रससमसमयस्य रूपस्यानेनानुमानात्। व्यवहारेण च प्रमाणचिन्ता भवता प्रतन्यते। प्रामाण्यं व्यवहारेणेत्यभिधानात्। सामग्रीतो रूपानुमाने च
कारणात्कार्यानुमानप्रसङ्गाल्लिङ्गसंख्याव्याघातः स्यात्। तानेव व्याप्यादिहेतून् बालव्युत्पत्त्यर्थमुदाहरणद्वारेण स्फुटयति। तत्र व्याप्यो हेतुर्यथा–परिणामी
शब्दः कृतकत्वात्। य एवं स एवं दृष्टो, यथा घटः। कृतकश्चायं तस्मात्परिणामीति।

'दृष्टान्तो द्वेधा अन्वयव्यतिरेकभेदात्' इत्युक्तम्। तत्रान्वयदृष्टान्तं प्रतिपाद्य व्यतिरेकदृष्टान्तं प्रतिपादयन्नाह। यस्तु न परिणामी स न कृतको दृष्टो,
यथा वन्ध्यास्तनन्धयः। कृतकश्चायं तस्मात्परिणामीति। कृतकत्वं हि परिणामित्वेन व्याप्तं–पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामशून्यस्य सर्वथा
नित्यत्वे क्षणिकत्वे वा शब्दस्य कृतकत्वानुपपत्तेर्वक्ष्यमाणत्वात्।

किं पुनः कार्यलिङ्गस्योदाहरणमित्याह 'अस्त्यत्र शरीरे बुद्धिर्व्याहारादेः'। व्याहारो वचनम्। आदिशब्दाद्व्यापाराकारविशेषपरिग्रहः। ननु ताल्वाद्यन्व-
यव्यतिरेकानुविधायितया शब्दस्योपलम्भात्कथमात्मकार्यत्वं येनातस्तदस्तित्वसिद्धिः स्यात्? न खल्वात्मनि विद्यमानेपि विवक्षाविद्धपरिकरे कफादिदोषकण्ठादि-
व्यापाराभावे वचनं प्रवर्त्तते। तदप्यसारं शब्दोत्पत्तौ ताल्वादिसहायस्यैवात्मनो व्यापाराभ्युपगमात्। घटाद्युत्पत्तौ चक्रादिसहायस्य कुम्भकारादेर्व्यापारवत्।
कथमन्यथा घटादेरप्यात्मकार्यता? कार्यकार्यादेश्च कार्यहेतावेवान्तर्भावः। कारणलिङ्गं यथा–अस्त्यत्र छाया छत्रात्। कारणकारणादेरत्रैवानुप्रवेशान्नार्था-
न्तरत्वम्। पूर्वचरलिङ्गं यथा–उदेष्यति शकटं कृत्तिकोदयात्। पूर्वपूर्वचराद्यनेनैव सङ्गृहीतम्। उत्तरचरं लिङ्गं यथा–उदगाद्भरणिस्तत एव, कृत्तिको-
दयादेव। उत्तरोत्तरचरमेतेनैव सङ्गृह्यते। सहचरं लिङ्गं यथा—अस्त्यत्र मातुलुङ्गे रूपं रसात्। संयोगिनं एकार्थसमवायिनश्च साध्यसमकालस्यात्रैवान्त-
र्भावो द्रष्टव्यः।

---

१ तादात्म्यतदुत्पत्त्योरभाव ॥ २ तादात्म्य सहचारिणोर्नास्ति परस्परपरिहारेणावस्थानात् ॥ ३ कृतम् ॥ ४ अनुमितायाः सामग्र्याः सकाशादनुमान रूपस्य ॥ ५ परेण भवता ॥ ६ सौगतेन ॥ ७ त्रि ८ उद्दिष्टानेव ॥
९ अपेक्षितपरव्यापार कृतक उच्यते ॥ १० आत्मा ॥ ११ मुच्छायतादि ॥ १२ सहित ॥ १३ सहाय ॥ १४ कण्ठादिव्यवहारभाव एव कारणम् ॥ १५ जैने ॥ १६ ताल्वाद्यन्वयव्यतिरेकानुविधायित्वेन
ताल्वादेरेव कार्यं शब्द इत्येव यदि ॥ १७ अमूर्त्त शिवक स्यासात् ॥ १८ महोऽग्नलाना कण्ठाद्येरविक्षेपकारी धूमवदग्निमत्त्वात्। कण्ठादिविक्षेपस्य कारणं धूमत्वस्य च कारण वह्निरिति ॥ १९ उदाह्रियते ॥
२० आत्मनोनाऽखिल विशिष्टशरीरात्। अत्रापि नैयायिकमतानुसरणे कार्यहेतोरेव धूमादेरिव संज्ञा ॥ २१ नैयायिकमतानुसरणे सहचरहेतोरिव संज्ञा ॥ २२ हेतो. ॥

अथाविरुद्धोपलब्धिमुदाहृत्येदानीं विरुद्धोपलब्धिमुदाहर्त्तुं विरुद्धेत्याद्याह । प्रतिषेध्येन यद्विरुद्धं तत्सम्बन्धिनां तेषां व्याप्यादीनामुपलब्धिः प्रतिषेध्ये साध्ये तथाऽविरुद्धोपलब्धिवत् षट्प्रकारा । तानेव षट् प्रकारान्यथेत्यादिना प्रदर्शयति । यथेत्युदाहरणप्रदर्शने । नास्त्यत्र शीतस्पर्श औष्ण्यात् । औष्ण्यं हि व्याप्यमग्नेः । स च विरुद्धः शीतस्पर्शेन प्रतिषेध्येनेति । विरुद्धकार्यं लिङ्गं यथा—नास्त्यत्र शीतस्पर्शो धूमात् । विरुद्धकारणं लिङ्गं यथा—नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात् । सुखेन हि प्रतिषेध्येन विरुद्धं दुःखम् । तस्य कारणं हृदयशल्यम् । तत्कुतश्चित्तदुपदेशादेः सिद्ध्यत्सुखं प्रतिषेधतीति । विरुद्धपूर्वचरं यथा—नोदेष्यति मुहूर्त्तान्ते शकटं रेवत्युदयात् । शकटोदयविरुद्धो ह्यश्विन्युदयस्तत्पूर्वचरो रेवत्युदय इति । विरुद्धोत्तरचरं यथा—नोदगाद्भरणिर्मुहूर्त्तात्पूर्वं पुष्योदयात् । भरण्युदयविरुद्धो हि पुनर्वसूदयस्तदुत्तरचरः पुष्योदय इति । विरुद्धसहचरं यथा—नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागात् । परभागाभावेन हि विरुद्धस्तत्सद्भावस्तत्सहचरोऽर्वाग्भाग इति ।

अथोपलब्धिं व्याख्यायेदानीमनुपलब्धिं व्याचष्टे । सा चानुपलब्धिरुपलब्धिवद्द्विप्रकारा भवति । अविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्चेति । तत्राद्यप्रकारं व्याख्यातुकामोऽविरुद्धेत्याद्याह । प्रतिषेध्येनाविरुद्धस्यानुपलब्धिः प्रतिषेध्ये साध्ये सप्तधा भवति । स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलब्धिभेदात् । तत्र स्वभावानुपलब्धिर्यथा—नास्त्यत्र भूतले घट उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः । पिशाचादिभिर्व्यभिचारो मा भूदित्युपलब्धिलक्षणप्राप्तस्येति विशेषणम् । कथं पुनर्यो नास्ति स उपलब्धिलक्षणप्राप्तस्तत्प्राप्तत्वे वा कथमसत्त्वमिति चेदुच्यते । आरोप्यैतद्रूपं निषिध्यते सर्वत्रारोपितरूपविषयत्वान्निषेधस्य । यथा नायं गौर इति । न ह्यत्रैतच्छक्यं वक्तुं, सति गौरत्वे न निषेधो निषेधे वा न गौरत्वमिति । नन्वेवमदृश्यमपि पिशाचादिकं दृश्यरूपतयाऽऽरोप्य प्रतिषेध्यतामिति चेन्न । आरोपयोग्यत्वं हि यस्यास्ति तस्यैवारोपः । यश्चार्थो विद्यमानो नियमेनोपलभ्येत स एवारोपयोग्यो, न तु पिशाचादिः । उपलम्भकारणसाकल्ये हि विद्यमानो घटो नियमेनोपलम्भयोग्यो गम्यते, न पुनः पिशाचादिः । घटस्योपलम्भकारणसाकल्यं चैकज्ञानसंसर्गिणि प्रदेशादावुपलभ्यमाने निश्चीयते । घटप्रदेशयोः खलूपलम्भकारणान्यविशिष्टानीति । यश्च यद्देशाधेयतया कल्पितो घटः स एव तेनैकज्ञानसंसर्गी, न देशान्तरस्थः । तंतश्चैकज्ञानसंसर्गिपदार्थान्तरोपलम्भे

१ साध्येन ॥ २ प्रतिषेध्येन ॥ ३ व्याप्य ॥ ४ प्रतिषेध्येन घटेनाविरुद्ध क तत्स्वभावो घटस्वभाव इत्यर्थं ॥ ५ कृतम् ॥ ६ प्रकल्प्य घटसम्बन्धित्वेन भूतलम् ॥ ७ क्वचिदपि न निषेध्यस्यारोपितरूपविषयत्वमित्युक्ते आह ॥ ८ वस्तुनि ॥ ९ आरोपितस्य प्रतिषेध्यत्वे ॥ १० विद्यमानत्वे पिशाचादिरप्युपलभ्येतेत्युक्ते आह ॥ ११ पिशाचादिरप्यारोपयोग्य कुतो न स्यादित्युक्ते आह ॥ १२ प्रत्यक्ष ॥ १३ इन्द्रियालोकादिना ॥ १४ निषेध्यस्य घटस्य कथमुपलम्भकारणसाकल्य निश्चीयत इत्युक्ते आह ॥ १५ इन्द्रिय ॥ १६ घटेन ॥ १७ घटस्योपलम्भकारणसाकल्य च न स्यात् एकज्ञानसंसर्गिपदार्थान्तरोपलम्भश्च भविष्यतीत्युक्ते आह ॥ १८ समानानि ॥ १९ घटप्रदेशयोर्भिन्नज्ञानग्राह्यत्वादेकज्ञानसंसर्गित्वाभावो भूतलस्येत्युक्ते आह ॥ २० कल्पितस्य घटस्यैकज्ञानसंसर्गित्व सिद्ध यत ॥ २१ भूतल ॥

योग्यतया सम्भावितस्य घटस्योपलब्धिलक्षणप्राप्तानुपलम्भः सिद्धः । ननु चैकज्ञानसंसर्गिण्युपलभ्यमाने सत्यपीतरविषयज्ञानोत्पादनशक्तिः सामग्र्याः समस्तीत्यवसातुं न शक्यते-प्रभाववतो योगिनः पिशाचादेर्वा प्रतिबन्धात्ततोपि घटस्यैकज्ञानसंसर्गिणि प्रदेशादावुपलभ्यमानेप्यनुपलम्भसम्भवात् । तदयुक्तं-यतः प्रदेशादिनैकज्ञानसंसर्गिण एव घटस्याभावो नान्यस्य । यस्तु पिशाचादिनाऽन्यत्वमापादितः स नैव निषेध्यते । इह चैकज्ञानसंसर्गिभासमानोर्थस्तज्ज्ञानं च पर्युदासवृत्त्या घटस्याऽसत्तानुपलब्धिश्चोच्यते । ननु चैवं केवलभूतलस्य प्रत्यक्षसिद्धत्वात्तद्रूपो घटाभावोपि सिद्ध एवेति किमनुपलम्भसाध्यम् ? सत्यमेवैतत्तथापि प्रत्यक्षप्रतिपन्नेप्यभावे यो व्यामुह्यति साङ्ख्यादिः सोनुपलम्भं निमित्तीकृत्य प्रतिपाद्यते । अनुपलम्भनिमित्तो हि सत्त्वरजस्तमःप्रभृतिष्वसद्व्यवहारः । स चात्राप्यस्तीति निमित्तप्रदर्शनेन व्यवहारः प्रसाध्यते । दृश्यते हि विशाले गवि सास्नादिमत्त्वात्प्रवर्त्तितगोव्यवहारो मूढमतिर्विशङ्कटे सादृश्यमुत्प्रेक्षमाणोपि न गोव्यवहारं प्रवर्त्तयतीति विशङ्कटे वा प्रवर्त्तितो गोव्यवहारो न विशाले स निमित्तप्रदर्शनेन गोव्यवहारे प्रवर्त्यते । सास्नादिमन्मात्रनिमित्तको हि गोव्यवहारस्त्वया प्रवर्त्तितपूर्वो न विशालत्वविशङ्कटत्वनिमित्तक इति । तथा महत्यां शिंशपायां प्रवर्त्तितवृक्षव्यवहारो मूढमतिः स्वल्पायां तस्यां तद्व्यवहारमप्रवर्त्तयन्निमित्तोपदर्शनेन प्रवर्त्यते वृक्षोयं शिंशपात्वादिति । व्यापकानुपलब्धिर्यथा-नास्त्यत्र शिंशपा वृक्षाऽनुपलब्धेः । कार्यानुपलब्धिर्यथा-नास्त्यत्राऽप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः । नास्त्यत्र धूमोऽनग्नेरिति कारणानुपलब्धिः । न भविष्यति मुहूर्त्तान्ते शकटं कृत्तिकोदयानुपलब्धेरिति पूर्वचरानुपलब्धिः । नोदगाद्भरणिर्मुहूर्त्तात्प्राक् तत एव । कृत्तिकोदयानुपलब्धेरेव । इत्युत्तरचरानुपलब्धिः । नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेरिति सहचरानुपलब्धिः ।

अथानुपलब्धिः प्रतिषेधसाधिकैवेति नियमप्रतिषेधार्थं विरुद्धेत्याद्याह । विधेयेन विरुद्धस्य कार्यादेरनुपलब्धिर्विधौ साध्ये सम्भवन्ती त्रिधा भवति-विरुद्धकार्यकारणस्वभावानुपलब्धिभेदात् । तत्र विरुद्धकार्यानुपलब्धिर्यथा-अस्मिन्प्राणिनि व्याधिविशेषोस्ति निरामयचेष्टानुपलब्धेः । आमयो हि व्याधिः । तेन विरुद्धस्तदभावः । तत्कार्या विशिष्टचेष्टा तस्या अनुपलब्धिर्व्याधिविशेषास्तित्वानुमानम् । विरुद्धकारणानुपलब्धिर्यथा-अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् । दुःखेन हि विरुद्धं सुखम् । तस्य कारणमभीष्टार्थेन संयोगः । तदभावस्तदनुपलब्धिर्दुःखास्तित्वं गमयतीति । विरुद्धस्वभावानुपलब्धिर्यथा-अनेकान्ता-

---

१ दृश्यत्वेन ॥ २ प्रदेशे ॥ ३ घट ॥ ४ अतिशयवतो मायाविन कुतश्चित् ॥ ५ भिन्नज्ञानससर्गिण ॥ ६ अदृश्यलम् ॥ ७ कुतो न प्रतिषेध्येत्युक्ते आह ॥ ८ भूतललक्षण ॥ ९ जैनै ॥ १० भूतलसद्भाव एव घटाभाव इत्येवम् ॥ ११ अनेन हेतुना ॥ १२ प्रतिबोध्यते ॥ १३ प्रत्यक्षसिद्धेऽभावे व्यवहार स्वयमेव स्यात्रान्यस्मात् । ततोऽनुपलम्भो व्यर्थ इत्युक्ते आह ॥ १४ सत्त्वे रजो नास्त्यनुपलब्धेरिति ॥ १५ कथ निमित्तप्रदर्शनमित्याह स चात्राप्यस्तीति ॥ १६ अस्मिन् ॥ १७ हस्वे ॥ १८ सास्नादिमत्त्वादि निमितम् ॥ १९ कथम् ॥ २० काष्ठादिसहकारिवैकल्याभावत. ॥ २१ नमन ॥ २२ साध्येन ॥ २३ एतेषामनुपलब्धय ॥

त्मकं वस्त्वेकान्तानुपलब्धेः । अनेकान्तेन हि विरुद्धो नित्यैकान्तः क्षणिकैकान्तो वा । तस्य चानुपलब्धिः प्रत्यक्षादिप्रमाणेनाऽस्य ग्रहणाभावात्सुप्रसिद्धा । यथा च प्रत्यक्षादेस्तद्ग्राहकत्वाभावस्तथा विषयविचारप्रस्तावे विचारयिष्यते ।

ननु चैतत्साक्षाद्विधौ निषेधे वा परिसङ्ख्यातं साधनमस्तु । यत्तु परम्परया विधेर्निषेधस्य वा साधकं तदुक्तसाधनप्रकारेभ्योऽन्यत्वादुक्तसाधनसङ्ख्याव्याघातकारि छलसाधनान्तरमनुषज्येत । इत्याशङ्क्य परम्परयेत्यादिना प्रतिविधत्ते । यतः परम्परया सम्भवत्कार्यकार्यादि साधनमत्रैव अन्तर्भावनीयं ततो नोक्तसाधनसङ्ख्याव्याघातः । तत्र विधौ कार्यकार्यं कार्याविरुद्धोपलब्धौ अन्तर्भावनीयम् । यथाऽभूदत्र चक्रे शिवकः स्थासात् । शिवकस्य हि साक्षाच्छत्रकः कार्यं स्थासस्तु परम्परयेति । निषेधे तु कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथाऽन्तर्भाव्यते तद्यथा । नास्त्यत्र गुहायां मृगक्रीडनं मृगारिशब्दनात् । मृगक्रीडनस्य हि कारणं मृगः । तेन च विरुद्धो मृगारिः । तत्कार्यं च तच्छब्दनमिति ।

ननु यद्यव्युत्पन्नानां व्युत्पत्त्यर्थं दृष्टान्तादियुक्तो हेतुप्रयोगस्तर्हि व्युत्पन्नानां कथं तत्प्रयोग इत्याह—

**व्युत्पन्नप्रयोगस्तु तथोपपत्त्याऽन्यथाऽनुपपत्त्यैव वा ।** एतदेवोदाहरणद्वारेण दर्शयति । **अग्निमानयं देशस्तथा धूमवत्त्वोपपत्तेर्धूमवत्त्वान्यथानुपपत्तेर्वा ।** कुतो व्युत्पन्नानां तथोपपत्त्यन्यथानुपपत्तिभ्यां प्रयोगनियम इत्याशङ्क्य हेतुप्रयोगो हीत्याद्याह । यतो हेतोः प्रयोगो व्याप्तिग्रहणानतिक्रमेण विधीयते । सा च व्याप्तिस्तावन्मात्रेण तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेण व्युत्पन्नैर्निश्चीयते इति न दृष्टान्तादिप्रयोगेण व्याप्त्यवधारणार्थेन किञ्चित्प्रयोजनम् । नापि साध्यसिद्ध्यर्थं तत्प्रयोगः फलवान्—यतस्तावतैव [ चकार एवकारार्थे ] निश्चितविपक्षासम्भवहेतुप्रयोगमात्रेणैव साध्यसिद्धिः । तेन पक्षो गम्यमानोपि व्युत्पन्नप्रयोगे तदाधारसूचनाय साध्याधारसूचनायोक्तः । यथा च गम्यमानस्यापि पक्षस्य प्रयोगो नियमेन कर्त्तव्यस्तथा प्रागेव प्रतिपादितम् ।

अथेदानीमवसरप्राप्तस्यागमप्रमाणस्य कारणस्वरूपे प्ररूपयन्नाप्तेत्याद्याह । आप्तेन प्रणीतं वचनमाप्तवचनम् । आदिशब्देन हस्तसंज्ञादिपरिग्रहः । तन्निबन्धनं यस्य तत्तथोक्तम् । अनेनाक्षरश्रुतमनक्षरश्रुतं च सङ्गृहीतं भवति । अर्थज्ञानमित्यनेन चान्यापोहज्ञानस्य शब्दसन्दर्भस्य चागमप्रमाणव्यपदेशाभावः । शब्दो

---

१ एकान्तस्वरूपानुपलब्धेरिति पाठान्तरम् ॥ २ विद्यमानम् ॥ ३ कार्यादिष्वेव ॥ ४ साध्ये ॥ ५ ता ॥ ६ तथा कार्यकार्यं कार्याऽविरुद्धोपलब्धावन्तर्भावनीयमिति सम्बन्ध ॥ ७ अग्निमत्त्वे सति ॥ ८ अनुमानप्रमाणप्रतिपादनानन्तरम् ॥ ९ मुखेन सञ्ज्ञा ॥ १० अर्थज्ञानमित्येतावत्युच्यमाने प्रत्यक्षादावतिव्याप्तिरत उक्तं वाक्यनिबन्धनमिति । वाक्यनिबन्धनमर्थज्ञानमित्युच्यमानेपि यादृच्छिकसंवादिषु विप्रलम्भवाक्यजन्येषु सुप्तोन्मत्तादिवाक्यजन्येषु वा नदीतीरफलसंसर्गादिज्ञानेष्वतिव्याप्ति अत उक्तमाप्तेति । आप्तवाक्यनिबन्धनज्ञानमित्युच्यमानेप्याप्तवाक्यकर्मके (कारणे) श्रावणप्रत्यक्षेऽतिव्याप्तिरत उक्तमर्थेति । अर्थस्तात्पर्यरूढप्रयोजनारूढ इति यावत् । तात्पर्यमेव वचसीत्यभियुक्तवचनात् वचसा प्रयोजनस्य प्रतिपादकत्वात् ॥ ११ आप्तवचनादि ॥ १२ अर्थज्ञानस्य ॥ १३ आदिपदेन ॥ १४ आप्तशब्दोपादानादपौरुषेयव्यवच्छेद ॥ १५ अन्यस्मात्पदार्थादन्यस्य पदार्थस्यापोहो निराकरण तस्य व्यावृत्तिरूपापोहविषय एव शब्दो न त्वर्थविषय इति बौद्ध ॥ १६ अगो व्यावृत्तिर्गौः । व्यावृत्तिस्तुच्छा अर्थरूपा न भवति ॥ १७ शब्द एवार्थो न वाह्यार्थ ॥

हि प्रमाणेकारणकार्यत्वादुपचारत एव प्रमाणव्यपदेशमर्हति । ननु चातीन्द्रियार्थस्य द्रष्टुः कस्यचिदाप्तस्याभावात् तत्राऽपौरुषेयस्यागमस्यैव प्रामाण्यात्कथमाप्तवचननिबन्धनं तदित्यपि मनोरथमात्रम्–अतीन्द्रियार्थद्रष्टुर्भगवतः प्राक्प्रसाधितत्वादागमस्य चाऽपौरुषेयत्वासिद्धेः । तद्धि पदस्य वाक्यस्य वर्णानां वाऽभ्युपगम्येत ? प्रकारान्तराऽसम्भवात् । तत्र न तावत्प्रथमद्वितीयविकल्पौ घटेते । तथा हि । वेदपदवाक्यानि पौरुषेयाणि पदवाक्यत्वाद्भारतादिपदवाक्यवत् । अपौरुषेयत्वप्रसाधकप्रमाणाभावाच्च कथमपौरुषेयत्वं वेदस्योपपन्नम् ? न च तत्प्रसाधकप्रमाणाभावोऽसिद्धः । तथा हि । तत्प्रसाधकं प्रमाणं प्रत्यक्षमनुमानमर्थापत्त्यादि वा स्यात् ? न तावत्प्रत्यक्षं तस्य शब्दस्वरूपमात्रग्रहणे चरितार्थत्वेन पौरुषेयत्वापौरुषेयत्वधर्मग्राहकत्वाभावात् । अनादिसत्त्वस्वरूपं चापौरुषेयत्वं कथमक्षप्रभवप्रत्यक्षपरिच्छेद्यमक्षाणां प्रतिनियतरूपादिविषयतया अनादिकालसम्बन्धाऽभावतस्तत्सम्बन्धसत्त्वेनाप्यसम्बन्धात् । सम्बन्धे वा तद्वदनागतकालसम्बद्धधर्मादिस्वरूपेणापि सम्बन्धसम्भवान्न धर्मज्ञप्रतिषेधः स्यात् । नाप्यनुमानं तत्प्रसाधकम् । तद्धि कर्त्रेऽस्मरणहेतुप्रभवं वेदाध्ययनशब्दवाच्यत्वलिङ्गजनितं वा स्यात् कालत्वसाधनसमुत्थं वा ? तत्राद्यपक्षे किमिदं कर्त्तुरस्मरणं नाम कर्तृस्मरणाभावोऽस्मर्यमाणकर्त्तृकत्वं वा ? प्रथमपक्षे व्यधिकरणाऽसिद्धो हेतुः । कर्तृस्मरणाभावो ह्यात्मन्यपौरुषेयत्वं वेदे वर्त्तते इति । द्वितीयपक्षे तु दृष्टान्ताभावः । नित्यं हि वस्तु न स्मर्यमाणकर्तृकं, नाप्यस्मर्यमाणकर्त्तृकं प्रतिपन्नं, किन्त्वकर्तृकमेव । हेतुश्च व्यर्थविशेषणः । सति हि कर्तरि स्मरणमस्मरणं वा स्यान्नासति, खरविषाणवत् । अथाऽकर्त्तृकत्वमेवात्र विवक्षितं तर्हि स्मर्यमाणग्रहणं व्यर्थं, जीर्णकूपप्रासादादिभिर्व्यभिचारश्च । अथ सम्प्रदायाऽविच्छेदे सत्यऽस्मर्यमाणकर्तृकत्वं हेतुस्तथाप्यनेकान्तः । सन्ति हि प्रयोजनाभावादस्मर्यमाणकर्तृकाणि वटे वटे वैश्रवण इत्याद्यनेकपदवाक्यान्यविच्छिन्नसम्प्रदायानि । न च तेपामपौरुषेयत्वं भवतापीष्यते । असिद्धश्चायं हेतुः–पौराणिका हि ब्रह्मकर्तृकत्वं स्मरन्ति 'वक्त्रेभ्यो वेदास्तस्य विनिःसृताः' इति । 'प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयते' इति चाभिधानात् । यो वेदांश्च प्रहिणोतीत्यादिवेदवाक्येभ्यश्च तत्कर्त्ता स्मर्यते । स्मृतिपुराणादिवच्च । ऋषिनामाङ्किताः काण्वमाध्यन्दिनतैत्तिरीयादयः शाखाभेदाः कथमस्मर्यमाणकर्तृकाः ? तथा हि । एतास्तत्कृतकत्वात्तन्नामभिर-

---

१ ज्ञान ॥ २ ता ॥ ३ गणधरादिप्रतिपाद्यज्ञानापेक्षया कारणत्व शब्दस्य (दिव्यध्वने) ॥ ४ प्रतिपादकज्ञानस्य (सर्वज्ञज्ञानस्य) हि कार्यं शब्द ॥ ५ अर्थज्ञानम् ॥ ६ परेण मीमांसकेन ॥ ७ श्रावणप्रत्यक्षम् ॥ ८ वस ॥ ९ ता ॥ १० न केवलमनादिकालेन ॥ ११ अनुष्ठेयत्वेन ॥ १२ पुण्य ॥ १३ आदिना पापम् ॥ १४ इति ॥ १५ कर्तृविषय यत्स्मरण ज्ञान तस्याभाव ॥ १६ स्मर्यमाणकर्तृप्रतिषेध ॥ १७ आकाशवदिति दृष्टान्त ॥ १८ भिन्नाधिकरण सन् ॥ १९ दृष्टान्ते ॥ २० व्यर्थविशेषण कथमित्युक्ते आह ॥ २१ खरविषाणे यथा स्मरणमस्मरण वा नास्ति कर्त्रऽभावात् ॥ २२ अनुमाने ॥ २३ वेदे वर्णक्रम पाठक्रम उदात्तादिक्रमश्च सम्प्रदाय ॥ २४ चत्वरे चत्वरे ईश्वर पर्वते पर्वते राम सर्वत्र मधुसूदन । सा ते भवतु सुप्रीता देवी गिरिनिवासिनी । विद्यारम्भ करिष्यामि सिद्धिर्भवतु मे सदा ॥ २५ कथम् ॥ २६ चतुर्भ्य ॥ २७ ब्रह्मण ॥ २८ अस्मर्यमाणकर्तृकस्य हेतोरनैकान्तिकत्वासिद्धत्वे ते उद्भाव्य पुनरप्यसिद्धत्वमुद्भावयन्ति ॥ २९ एकस्मान्मनो सकाशादपरो मनु मन्वन्तरम् । तत्तत्प्रति प्रतिमन्वन्तरम् ॥ ३० वेद ॥ ३१ स्मृति ॥ ३२ भिन्ना ॥ ३३ करोति ॥ ३४ प्रसन्नो भवतु इत्यादिभ्यश्च ॥ ३५ सन्तान ॥ ३६ गोत्रभेदा ॥

ङ्कितास्तद्दृष्टत्वात्तत्प्रकाशितत्वाद्वा ? प्रथमपक्षे कथमासामपौरुषेयत्वमस्मर्यमाणकर्तृकत्वं वा ? उत्तरपक्षद्वयेपि यदि तावदुत्सन्ना शाखा कण्वादिना दृष्टा प्रकाशिता वा तदा कथं सम्प्रदायाऽविच्छेदोऽतीन्द्रियार्थदर्शिनः प्रतिक्षेपश्च स्यात् । अथानवच्छिन्नैव सा सम्प्रदायेन दृष्टा प्रकाशिता वा तर्हि यावद्भिरुपाध्यायैः सा दृष्टा प्रकाशिता वा तावतां नामभिस्तस्याः किन्नाङ्कितत्वं स्याद्विशेषाभावात् ? एतेन 'छिन्नमूलं वेदे कर्तृस्मरणं तस्य ह्यनुभवो मूलम् । न चासौ तत्र तद्विषयत्वेन विद्यते' इत्यपि प्रत्युक्तम् । यतोऽध्यक्षेण तदनुभवाभावात् तत्र तच्छिन्नमूलं प्रमाणान्तरेण वा ? अध्यक्षेण चेत् किं भवत्सम्बन्धिना सर्वसम्बन्धिना वा ? यदि भवत्सम्बन्धिना तर्ह्यागमान्तरेपि कर्तृग्राहकत्वेन भवत्प्रत्यक्षस्याप्रवृत्तेस्तत्कर्तृस्मरणस्य छिन्नमूलत्वेनास्मर्यमाणकर्तृकत्वस्य भावाद्व्यभिचारी हेतुः । अथागमान्तरे कर्तृग्राहकत्वेनास्मत्प्रत्यक्षस्याप्रवृत्तावपि परैः कर्तृसद्भावाभ्युपगमात् ततो व्यावृत्तमस्मर्यमाणकर्तृकत्वमपौरुषेयत्वेनैव व्याप्यते । इति अव्यभिचारः, न–परकीयाभ्युपगमस्याप्रमाणत्वात् । अन्यथा वेदेपि परैः कर्तृसद्भावाभ्युपगमतोऽस्मर्यमाणकर्तृकत्वादित्यसिद्धो हेतुः स्यात् । अथ वेदे सर्विगान-कर्तृविशेषे विप्रतिपत्तेः कर्तृस्मरणमसतोऽप्रमाणम् । तत्र हि केचिद्धिरण्यगर्भमपरेऽष्टकादीन् कर्तॄन् स्मरन्तीति । नन्वेवं कर्तृविशेषे विप्रतिपत्तेस्तद्विशेषस्मरणमेवाप्रमाणं स्यात्, न कर्तृमात्रस्मरणम् । अन्यथा कादम्बर्यादीनामपि कर्तृविशेषे विप्रतिपत्तेः कर्तृमात्रस्मरणत्वेनास्मर्यमाणकर्तृकत्वस्य भावात्पुनरप्यनेकान्तः । अथ वेदे कर्तृविशेषे विप्रतिपत्तिवत्कर्तृमात्रेपि विप्रतिपत्तेस्तत्स्मरणमप्यप्रमाणम् । कादम्बर्यादीनां तु कर्तृविशेषे एव विप्रतिपत्तेस्तत्प्रमाणमित्यनैकान्तिकत्वाभावोऽस्मर्यमाणकर्तृकत्वस्य–विपक्षे प्रवृत्त्यभावात् । ननु वेदे सौगतादयः कर्त्तारं स्मरन्ति न मीमांसका इत्येवं कर्तृमात्रे विप्रतिपत्तेर्यदि तदप्रमाणं तर्हि तद्वदस्मरणमप्यप्रमाणं किन्न स्याद्विप्रतिपत्तेरविशेषात् । तथा चासिद्धो हेतुः । अथ यद्यनुपलम्भपूर्वकमस्मर्यमाणकर्तृकत्वं हेतुत्वेनोच्येत तदोक्तप्रकारेणाऽसिद्धानैकान्तिकत्वे स्याताम् । तदभावपूर्वके तु तस्मिंस्तयोरनवकाशः । न–अत्र कर्त्रऽभावग्राहकस्य प्रमाणान्तरस्यैवाऽसम्भवात् । अस्मादेवानुमानात्तदभावसिद्धावन्योन्याश्रयः । अतो ह्यऽनुमानात्तदभावसिद्धौ तत्पूर्वकमस्मर्यमाणकर्तृकत्वं सिद्ध्यति । तत्सिद्धौ चातोऽनुमानात्तदभावसिद्धिरिति । ननु वेदे कर्तृसद्भावाभ्यु-

१ कण्वादि ॥ २ कण्वादि ॥ ३ नष्टा ॥ ४ कर्तृस्मरणमूलस्य वेदपदवाक्यानीत्याद्यनुमानेऽस्य पुराणस्मृतिवेदवाक्यस्य च प्रवर्त्तनपरेण ग्रन्थेन ॥ ५ कारणम् ॥ ६ कथम् ॥ ७ ज्ञानादिपिटकत्रये ॥ ८ सौगते ॥ ९ व्याघुटितम् ॥ १० सविप्रतिपत्तिक ॥ ११ यदि कर्तृविशेषे विप्रतिपत्ति कर्तृमात्रस्मरणस्याऽप्रामाण्यम् ॥ १२ बाण शङ्करो वेति ॥ १३ कादम्बर्यादौ ॥ १४ उक्तप्रकारेण हेतोरसिद्धत्वे प्रतिपादितेऽनुमानबलेन हेतुसिद्धिं करोति पर ॥ १५ अनुपलम्भेन हेतुना साधित यदस्मर्यमाणकर्तृकत्व साधनं तत् ॥ १६ अनुपलम्भ स्वसम्बन्धी सर्वसम्बन्धी वा स्यात् ? पौरस्त्यपक्षेऽसिद्धत्वम् । पाश्चात्यपक्षेऽनेकान्तिकत्वम् ॥ १७ वेद अस्मर्यमाणकर्तृक अनुपलभ्यमानकर्तृकत्वात् आकाशवत् । इत्यनेनानुमानेन हेतुसिद्धिं विदधाति ॥ १८ अनुपलम्भलक्षणस्य हेतोरुभयदोषदुष्टत्वाद्धेत्वन्तरेण प्रकृतहेतु साधयति ॥ १९ वेद अस्मर्यमाणकर्तृक कर्त्रभावाद्व्योमवत् इत्यनेनानुमानेन साधिते ॥ २० अस्मर्यमाणकर्तृकत्वादेव ॥ २१ अस्मर्यमाणकर्तृकत्वात् ॥ २२ अस्मर्यमाणकर्तृकत्वात् ॥

पगमे तत्कर्त्तुः पुरुषस्यावश्यं तदनुष्ठानसमये अनुष्ठातॄणामनिश्चितप्रामाण्यानां तत्प्रामाण्यप्रसिद्धये स्मरणं स्यात् । ते ह्यदृष्टफलेषु कर्मस्वत्र निःसंशयाः प्रवर्त्तन्त । यदि तेषां तद्विषयः सत्यत्वनिश्चयः सोपि तदुपदेष्टुः स्मरणात्स्यात् । यथा पित्रादिप्रामाण्यवशात्स्वयमदृष्टफलेष्वपि कर्मसु तदुपदेशात्प्रवर्त्तन्ते 'पित्रादिभिरेतदुपदिष्टं तेनानुष्ठीयते' । एवं वैदिकेष्वपि कर्मस्वनुष्ठीयमानेषु कर्त्तुः स्मरणं स्यात् । न चाभियुक्तानामपि वेदार्थानुष्ठातॄणां त्रैवर्णिकानां तत्स्मरणमस्ति । तथा चैवं प्रयोगः 'कर्त्तुः स्मरणयोग्यत्वे सत्यस्मर्यमाणकर्तृकत्वादपौरुषेयो वेदः' । तदप्यसम्बद्धमागमान्तरेप्यस्य हेतोः सद्भावबाधकप्रमाणाऽसम्भवेन सद्भावसम्भवतः सन्दिग्धविपक्षव्यावृत्तिकत्वेनानैकान्तिकत्वात् । किञ्च विपक्षविरुद्धं विशेषणं विपक्षाद्व्यावर्त्तमानं स्वविशेष्यमादाय निवर्त्तेत । न च पौरुषेयत्वेन सह कर्त्तुः स्मरणयोग्यत्वस्य सहानवस्थानलक्षणः परस्परपरिहारस्थितिलक्षणो वा विरोधः सिद्धः । सिद्धौ वा तत एव साध्यप्रसिद्धेरस्मर्यमाणकर्तृकत्वादिति विशेष्योपादानं व्यर्थम् । यच्चोक्तं तदनुष्ठानसमय इत्यादि तदागमान्तरेपि समानम् । न चेति चिन्त्यतां "न चायं नियमः—अनुष्ठातारोऽभिप्रेतार्थानुष्ठानसमये तत्कर्त्तारमनुस्मृत्यैव प्रवर्त्तन्ते" । न खलु पाणिन्यादिप्रणीतव्याकरणप्रतिपादितशब्दव्यवहारानुष्ठानसमये तदर्थानुष्ठातारोऽवश्यन्तया व्याकरणप्रणेतारं पाणिन्यादिकमनुस्मृत्यैव प्रवर्त्तन्त इति प्रतीतम् । निश्चिततत्समयानां कर्तृस्मरणव्यतिरेकेणाप्याशुतरं भवत्यादिसाधुशब्दोपलम्भात् । तत्र भवत्सम्बन्धिप्रत्यक्षेणानुभवाभावात् तत्र तच्छिन्नमूलम् । नापि सर्वसम्बन्धिप्रत्यक्षेण । तेन ह्यनुभवाभावोऽसिद्धः । न ह्यर्वाग्दृशां सर्वेषां तत्र कर्तृग्राहकत्वेन प्रत्यक्षं न प्रवर्त्तेत इत्यवसातुं शक्यमिति । तत्र तत्स्मरणस्य च्छिन्नमूलत्वासिद्धेरस्मर्यमाणकर्तृकत्वादित्यसिद्धो हेतुः । अथ प्रमाणान्तरेणानुभवाभावः । तन्न—अनुमानस्य आगमस्य च प्रमाणान्तरस्य तत्र कर्तृसद्भावावेदकस्य प्राक्प्रतिपादितत्वात् । किञ्चास्मर्यमाणकर्तृकत्वं वादिनः प्रतिवादिनः सर्वस्य वा स्यात् ? वादिनश्चेत्तदनैकान्तिकं—सा ते भवतु सुप्रीतेत्यादौ विद्यमानकर्तृकेप्यस्य सम्भवात् । प्रतिवादिनश्चेत्तदसिद्धम् । तत्र हि प्रतिवादी स्मरत्येव कर्त्तारम् । एतेन सर्वस्यास्मरणं प्रत्याख्यातम् । सर्वात्मज्ञानविज्ञानरहितो वा कथं सर्वस्य तत्र कर्त्रऽस्मरणमवैति ? किञ्चातः स्वतान्त्र्येणापौरुषेयत्वं साध्येत पौरुषेयत्वसाधनमनुमानं वा बाध्येत ? प्राच्यविकल्पे स्वातन्त्र्येणापौरुषेयत्वस्यादेः साधनं प्रसङ्गो वा ? स्वातन्त्र्यपक्षे नाऽतोऽपौरुषेयत्वसिद्धिः पदवाक्यत्वतः पौरुषेयत्वप्रसिद्धेः । अतो न

---

१ कुत एतदित्याह ॥ २ अनिरीक्षितफलेषु ॥ ३ यागेषु ॥ ४ वक्ष्यमाणप्रकारेण ॥ ५ कथ नि सशया प्रवर्त्तन्ते ॥ ६ कर्म ॥ ७ कारणेन ॥ ८ व्याप्टतानाम् ॥ ९ उक्तप्रकारेण ॥ १० वक्ष्यमाणरीत्या ॥ १२ पिटके ॥ १३ पौरुषेयपिटके ॥ १४ पौरुषेयत्वं विपक्ष ॥ १५ विरोधस्य ॥ १६ अपौरुषेयत्वमिति ॥ १७ अभिप्रेतार्थप्रतिपादकवाक्य ॥ १८ भवतीत्यादि ॥ १९ उच्चारण ॥ २० अस्य शब्दस्यायमर्थ इति ॥ २१ सङ्केतानाम् ॥ २२ तस्मात् ॥ २३ असर्वज्ञानाम् ॥ २४ वेदे ॥ २५ वेदे ॥ २६ प्रसना ॥ २७ वेदे ॥ २८ वेदे ॥ २९ अस्मर्यमाणकर्तृकत्वात् ॥ ३० अस्मर्यमाणकर्तृकत्वादिति ॥ ३१ साधनम् ३२ अस्मर्यमाणकर्तृकत्वात् ॥

ज्ञायते किमस्मर्यमाणकर्तृत्वादपौरुषेयो वेदः पदवाक्यात्मकत्वात्पौरुषेयो वा ? न च सन्देहहेतोः प्रामाण्यम् । ननु न प्रकृताद्धेतोः सन्देहोत्पत्तिर्येनास्याऽप्रामाण्यम् । किन्तु प्रतिहेतुतः । तस्य चैतस्मिन्सत्यऽप्रवृत्तेः कथं संशयोत्पत्तिः ? तदयुक्तम् । यथैव हि प्रकृतहेतोः सद्भावे पौरुषेयत्वसाधकहेतोरप्रवृत्तिरभिधीयते तथा पदवाक्यत्वलक्षणहेतुसद्भावे सत्यस्मर्यमाणकर्तृकत्वस्याप्यप्रवृत्तिरस्तु विशेषाभावात् । तन्न स्वतन्त्रसाधनमिदम् । नापि प्रसङ्गसाधनम् । तत्खलु पौरुषेयत्वाभ्युपगमे वेदस्य तत्कर्त्तुः पुरुषस्य स्मरणप्रसङ्गः स्यात् । इत्यनिष्टापादनस्वभावम् । न च कर्तृस्मरणं परस्यानिष्टम् । स हि पदवाक्यत्वेन हेतुना तत्कर्त्तुः स्मरणं प्रतीयन् कथं तत्स्मरणस्याऽनिष्टतां ब्रूयात् ? पौरुषेयत्वसाधनानुमानबाधापक्षेपि किमनेनास्य स्वरूपं बाध्यते विषयो वा ? न तावत्स्वरूपमपौरुषेयत्वानुमानस्याप्यनेन स्वरूपबाधनानुषङ्गात् तयोस्तुल्यबलत्वेनान्योन्यं विशेषाभावात् । अतुल्यबलत्वे वा किमनुमानबाधया ? येनैव दोषेणास्याऽतुल्यबलत्वं तत एवाप्रामाण्यप्रसिद्धेः । विषयबाधाप्यनुपपन्ना तुल्यबलत्वेन हेत्वोः[13] परस्परविषयप्रतिबन्धे वेदस्योभयधर्मशून्यत्वानुषङ्गात् । एकस्य वा स्वविषयसाधकत्वेऽन्यस्यापि तत्प्रसङ्गाद्‌ धर्मद्वयात्मकत्वं स्यात् । अतुल्यबलत्वे तु यत एवातुल्यबलत्वं तत एवाऽप्रामाण्यप्रसिद्धेः किमनुमानबाधयेत्युक्तम् । एतेन "वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा" इत्यनेनानुमानेन पौरुषेयत्वप्रसाधकानुमानस्य बाधेत्यपि प्रत्याख्यातं प्रकृतदोषाणामत्राप्यविशेषात् । किञ्चात्र निर्विशेषणमध्ययनशब्दवाच्यत्वमपौरुषेयत्वं प्रतिपादयेत्कर्त्रऽस्मरणविशिष्टं वा ? निर्विशेषणस्य हेतुत्वे निश्चितकर्तृकेषु भारतादिष्वपि भावादनैकान्तिकत्वम् । किञ्च यथाभूतानां पुरुषाणामध्ययनपूर्वकं दृष्टं तथाभूतानामेवाध्ययनशब्दवाच्यत्वमध्ययनपूर्वकत्वं साधयत्यन्यथाभूतानां वा ? यदि तथाभूतानां तदा सिद्धसाधनम् । अथान्यथाभूतानां तर्हि सन्निवेशादिवदऽप्रयोजको हेतुः । अथ तथाभूतानामेव तत्तथा ततः साध्यते । न च सिद्धसाधनं सर्वपुरुषाणामतीन्द्रियार्थदर्शनशक्तिवैकल्येनातीन्द्रियार्थप्रतिपादकप्रेरणाप्रणेतृत्वासामर्थ्येनेदृशत्वात् । तदप्यसाम्प्रतं यतो यदि प्रेरणायास्तथाभूतार्थप्रतिपादने अप्रामा-

१ कारणस्य ॥ २ अस्मर्यमाणकर्तृत्वस्य ॥ ३ अपौरुषेयत्वलक्षणस्वसाध्यसाधकस्य ॥ ४ अस्मर्यमाणकर्तृत्वादिति ॥ ५ विप्रतिकूलहेतुत ॥ ६ प्रतिकृतहेतौ सति पदवाक्यत्व हेत्वन्तरं न प्रवर्त्तते । पदवाक्यत्वे तु सत्यपि प्रकृतो हेतु वर्तते इति योऽसौ विशेषस्तस्याभावात् ॥ ७ वेद स्मर्यमाणकर्तृक पौरुषेयत्वाद्भारतवत् । हेतुरूपव्याप्याभ्युपगमेनानिष्टस्य साध्यरूपव्यापकाभ्युपगमस्यापादन प्रसङ्ग ॥ ८ जैनस्य ॥ ९ जानन् ॥ १० पदवाक्यत्वलक्षण ॥ ११ पौरुषेयत्वाऽपौरुषेयत्वानुमानयो ॥ १२ पौरुषेयत्वलक्षणस्य विषयस्य ॥ १३ पदवाक्यत्वाऽस्मर्यमाणकर्तृकत्वलक्षणयो ॥ १४ अपौरुषेयत्वपौरुषेयत्वलक्षण ॥ १५ पौरुषेयत्वाऽपौरुषेयत्वलक्षण ॥ १६ वेदस्य ॥ १७ अस्मर्यमाणकर्तृकत्वानुमानस्यापौरुषेयत्वप्रसाधनानुमान प्रति बाधकत्वानिराकरणपरेण ग्रन्थेन ॥ १८ विशेषणमेतत् ॥ १९ अधुनातनसदृशानाम् ॥ २० अस्माभिरपि तथाभूताना गुर्वेऽध्ययनपूर्वकत्व प्रतिपाद्यते ॥ २१ अतीन्द्रियार्थदर्शिनाम् ॥ २२ आदिना कार्यत्वादिवत् ॥ २३ अकिञ्चित्करो हेतुस्तेषा गुर्वध्ययनपूर्वकत्व नास्ति यत ॥ २४ सपक्षव्यापकपक्षव्यावृत्तो ह्युपाध्याहितसम्बन्धो हेतुरप्रयोजक ॥ २५ जैनाना तु मते सर्वपुरुषाणामतीन्द्रियार्थदर्शने शक्तिवैकल्य नास्ति केषाञ्चिदतीन्द्रियार्थदर्शनशक्तिरस्तीति भाव. ॥ २६ अग्निष्टोमेन यजेतेति लिङादिश्रवणानन्तर शब्दो मा प्रेरयतीति दर्शनात् प्रेरणान्विततया कृति (याग) प्रतीयते । सा च प्रेरणा वेद इत्यर्थः ॥

ण्याभावः सिद्धः स्यात्[1]। स्यादेतत्[2]–यावता गुणवद्वक्त्रऽभावे तद्गुणैरनिराकृतैर्दोषैरपोहितत्वात्[4] तत्र सापवादं प्रामाण्यं, तथाभूतां[6] प्रेरणामतीन्द्रियार्थदर्शनशक्तिविरहिणोपि कर्त्तुं समर्था इति कुतस्तथाभूतप्रेरणाप्रणेतृत्वासामर्थ्येनाऽशेषपुरुषाणामीदृशत्वसिद्धिर्यतः सिद्धसाधनं न स्यात् ? अथ न गुणवद्वक्तृकत्वेनैव शब्देऽप्रामाण्यनिवृत्तिरपौरुषेयत्वेनाप्यस्याः सम्भवात् । तेनायमदोषः । तदुक्तं "शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितम् । तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः ॥ १ ॥ तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यऽसम्भवात् । यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ २" इति । तदप्यसमीचीनं यतोऽपौरुषेयत्वमस्याः किमन्यतः प्रमाणात्प्रतिपन्नमत एव वा ? यद्यन्यतस्तदाऽस्य वैयर्थ्यम् । अत एव चेन्नन्वतोऽनुमानादपौरुषेयत्वसिद्धौ प्रेरणायामप्रामाण्याभावः स्यात् । तदभावाच्च तथाभूतप्रेरणाप्रणेतृत्वासामर्थ्येन सर्वपुरुषाणामीदृशत्वसिद्धिरितरेतराश्रयः । तन्न निर्विशेषणोयं हेतुः प्रकृतसाध्यसाधनः । अथ सविशेषणस्तदा विशेषणस्यैव केवलस्य गमकत्वाद्विशेष्योपादानमनर्थकम् । भवतु विशेषणस्यैव गमकत्वम् । का नो हानिः ? सर्वथाऽपौरुषेयत्वसिद्ध्या प्रयोजनात् । तदप्ययुक्तं यतः कर्त्रऽस्मरणं विशेषणं किमभावाख्यं प्रमाणमर्थापत्तिरनुमानं वा ? तत्राद्यः पक्षो न युक्तोऽभावप्रमाणस्य स्वरूपसामग्रीविषयाऽनुपपत्तितः प्रामाण्यस्यैव प्रतिषिद्धत्वात् । किञ्च सदुपलम्भकप्रमाणपञ्चकनिवृत्तिनिबन्धनास्य प्रवृत्तिः 'प्रमाणपञ्चकं यत्र' इत्याद्यभिधानात् । न च प्रमाणपञ्चकस्य वेदे पुरुषसद्भावावेदकस्य निवृत्तिः–पदवाक्यत्वलक्षणस्य पौरुषेयत्वप्रसाधकत्वेनानुमानस्य प्रतिपादनात्[21] । न चास्याऽप्रामाण्यमभिधातुं शक्यं यतोऽस्याऽप्रामाण्यम् । किमनेन बाधितत्वात्साध्याविनाभावित्वाभावाद्वा स्यात् ? तत्राद्यपक्षे चक्रकप्रसङ्गः । तथा हि । न यावदभावप्रमाणप्रवृत्तिर्न तावत्प्रस्तुतानुमानबाधा । यावच्च न तस्य बाधा न तावत्सदुपलम्भकप्रमाणनिवृत्तिः । यावच्च न तस्य निवृत्तिर्न तावत्तन्निबन्धनाऽभावाख्यप्रमाणप्रवृत्तिः । तदप्रवृत्तौ च नानुमानबाधेति । द्वितीयपक्षस्त्वयुक्तः स्वसाध्याविनाभावित्वस्यात्र सम्भवात् । न खलु पदवाक्यात्मकत्वं पौरुषेयत्वमन्तरेण क्वचिद्दृष्टं येनास्य स्वसाध्याविनाभावाभावः स्यात् । एतेन कर्तुरस्मरणमन्यथानुपपद्यमानं कर्त्रऽभावनिश्चायकमर्थापत्तिगम्यमपौरुषेयत्वं वेदानामित्यपास्तम्–अन्यथानुपपद्यमानत्वासम्भवस्यात्र प्रागेव प्रतिपादितत्वात् । कर्त्रऽस्मरणमनुमानरूपमऽपौरुषेयत्वं प्रसाधयतीत्यप्यनुपपन्नं प्रागेव कृतोत्तरत्वात् । एतेन 'अतीतानागतौ कालौ वेदकारविवर्जितौ । कालत्वात्तद्यथा कालो वर्त्तमानः समीक्ष्यते । १ ।'

---

१ तर्हि ॥ २ न कुतोपि ॥ ३ येन कारणेन ॥ ४ प्रामाण्यनिराकृतत्वात् ॥ ५ सदोषम् ॥ ६ अप्रामाण्यभूताम् ॥ ७ सक्षम ॥ ८ न तु स्वभावत ॥ ९ अपौरुषेयवेदवाक्यानन्तरोत्पन्नेषु स्मृतिग्रन्थेषु ॥ १० एतदेव समर्थयत्यग्रे ॥ ११ अपौरुषेयवेदे ॥ १२ निराकृतानाम् ॥ १३ असबन्धादय ॥ १४ आश्रय पुरुष ॥ १५ वेदाध्ययनवाच्यत्वादिति ॥ १६ वेदाध्ययनवाच्यत्वस्य ॥ १७ वेदाध्ययनवाच्यत्वात् ॥ १८ वेदाध्ययनवाच्यत्वात् ॥ १९ अप्रामाण्याभावात् ॥ २० अनुमानबाधेति ॥ २१ कथम्? ॥ २२ एव ॥ २३ अभावप्रमाणप्रवृत्तौ प्रस्तुतानुमानबाधा तस्या सदुपलम्भकप्रमाणनिवृत्तिस्तस्या च पदवाक्यत्वस्य स्वसाध्याविनाभावित्वमिति समर्थनपरेण ग्रन्थेन ॥ २४ अपौरुषेयत्व विना ॥ २५ वेदोऽपौरुषेय कर्त्रऽस्मरणान्यथानुपपत्ते ॥ २६ कर्तृस्मरणादित्यत्र ॥ २७ पिटकादौ ॥ २८ वटे वटे वैश्रवण इत्यादिनाऽनैकान्तिकसमर्थनेन ॥

क्षच्छायादिवद्वस्त्वन्तरमेव । न चान्यप्रतिभासेऽन्यप्रतिभासो नामाऽतिप्रसङ्गात् । न च जलभानोर्गगनभानुना सादृश्यादेकत्वं कमनीयकामिनीनयनयोरपि तत्प्रसङ्गात् । नापि तद्विकारे जलभानुविकारादेकत्वं वृक्षच्छाययोरपि तत्प्रसङ्गात् । ननु तत्र तत्प्रतिविम्बानां वस्त्वन्तरत्वे कुतः प्रादुर्भावः स्यादिति चेज्जलादित्यादिलक्षणस्वसामग्रीविशेषात् । तर्हि स्वच्छताविशेषसद्भावाज्जलादर्शादयो मुखादित्यादिप्रतिविम्बाकारविकारधारिणः कस्मान्न सर्वदोपलभ्यन्ते इति चेत्स्वसामग्र्यऽभावतोऽभावाच्छन्दसुखादिवत् । कश्चिद्धि विकारः सहकारिनिवृत्तावप्यनिवर्त्तमानो दृष्टो, यथा घटादिः । कश्चित्तु निवर्त्तमानो, यथा शब्दादिः । अचिन्त्यशक्तित्वाद्भावानाम् । ताल्वादिव्यापारसहकारिनिवृत्तौ हि पुद्गलस्य श्रावणस्वभावव्यावृत्तिः । स्रग्वनितानिवृत्तौ चाल्हादनाकारव्यावृत्तिरात्मनः सकलजनप्रसिद्धा । एवमादित्यादिसहकारिनिवृत्तौ जलादेस्तत्प्रतिविम्बाकारनिवृत्तिरविरुद्धा । ततो निराकृतमेव तत्—अत्र ब्रूमो यदा तावज्जले सौर्येणेत्यादि । स्वप्रदेशस्थतया सवितुर्ग्रहणासिद्धेः । चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितमिति चातीवाऽसङ्गतं प्रमाणाभावात् । न हि चक्षुस्तेजांसि जलेनाभिसम्वन्ध्य पुनः सवितारं प्रति प्रवर्त्तितानि प्रत्यक्षादिप्रमाणतः प्रतीयन्ते । यथा च चक्षूरश्मीनां विषयं प्रति प्रवृत्तिर्नास्ति तथा चक्षुरप्राप्यकारित्वप्रघट्टके प्रतिपादितम् । इत्यलमतिविस्तरेण । यच्चान्यदुक्तं देशभेदेन भिन्नत्वमित्यादि, तदप्यसारं—यतो यदि प्रत्यक्षमेवानुमानस्य वाधकं नानुमानं प्रत्यक्षस्य तर्हि चन्द्रार्कादौ स्थैर्याध्यक्षं देशादेशान्तरप्राप्तिलिङ्गजनितगत्यनुमानेन वाध्यं न स्यात् । अथास्य प्रत्यक्षरूपतैव नास्ति वाधितविषयत्वात् । तत्प्रकृतेपि समानं लूनपुनर्जातनखकेशादिवत्सादृश्यप्रतीत्या तन्नानात्वप्रसाधकानुमानेन वाचाऽत्राप्येकत्वप्रतीतेर्वाधितविपयत्वाऽविशेषात् । अतोऽयुक्तमेतत्—स एवेति मतिर्नापि सादृश्यं न च तत्क्वचित् । विनावयवसामान्यैर्वर्णेष्ववयवैर्वा न च, इति—अवयवसामान्यस्याप्यत्रात एव प्रसिद्धेः । तेनायुक्तमुक्तं पर्यायेणेत्यादि—देवदत्ते हि स एवायमिति प्रत्ययोऽत्र तु तेनानेन चायं सदृश इति । न च सदृशप्रत्ययादेकत्वं गोर्गवययोरपि तत्प्रसङ्गात् । यद्यप्युच्यते । जैनकापिलनिर्दिष्टं शब्दश्रोत्रादिसर्पणम् । साधीयोऽस्मात्तदप्यत्र युक्त्या नैवावतिष्ठते ।१। जैनेन हि निर्दिष्टं श्रोतारं प्रति शब्दस्य सर्पणं कापिलेन तु वक्तारम् । श्रोत्रादेर्यत्तदेव साधीयोऽस्मान्नैयायिकोपकल्पितात् । वीचीतरङ्गन्यायेन शब्दस्यामूर्त्तस्यागमनात् । तदप्यत्र युक्त्या नैवावतिष्ठते । यस्मात्—शब्दस्यागमनं तावददृष्टं परिकल्पितम् । मूर्त्तिस्पर्शादिमत्त्वं च तेषामभिभवः सताम् ।१।

---

१ मुखादिप्रतिविम्बाकारस्य ॥ २ चक्रचीवरादि ॥ ३ उत्पत्तेरुत्तरकाले ॥ ४ आदिना सुखम् ॥ ५ कथम् ॥ ६ शब्दरूपस्य ॥ ७ व्याघुटनम् ॥ ८ यस्माद्वस्त्वन्तरत्वं सिद्धं प्रतिविम्वानाम् ॥ ९ पुनः ॥ १० सौर्येण तेजसा ॥ ११ घटादिपदार्थम् ॥ १२ चक्षूरश्मीनां विषयं प्रति गमननिराकरणेन ॥ १३ वाधकम् ॥ १४ ग्राहि ॥ १५ स्थैर्यलक्षणस्य ॥ १६ गकारे ॥ १७ कथम् ॥ १८ गकार ॥ १९ गकारे ॥ २० सादृश्यप्रतीत्यैकत्वप्रतीतेर्वाधितविपयत्वं यतः ॥ २१ स एवायं गकारादि ॥ २२ गकारादौ ॥ २३ वर्णानां निरंशत्वात् ॥ २४ अंशा ॥ २५ तेन सदृशोयं गकारः ॥ २६ वर्णेन ॥ २७ वर्णं ॥ २८ अन्यथा ॥ २९ मीमांसकेन ॥ ३० सांख्य ॥ ३१ श्रेय ॥ ३२ अग्रे वक्ष्यमाणात् ॥ ३३ जगति वर्णेषु वा ॥ ३४ मीमांसकस्य ॥ ३५ गमनम् ॥ ३६ लहरी ॥ ३७ कुतः ॥ ३८ प्रत्यक्षादिप्रमाणेनाप्रातीतिकम् ॥ ३९ कुड्यादिना तिरोभावः ॥

त्वगग्राह्यत्वमन्ये च भागाः सूक्ष्माः[1] प्रकल्पिताः । तेषामदृश्यमानानां[2] कथं च रचनाक्रमः[3] ।२। कीदृशाद्रचनाभेदाद्वर्णभेदश्च[4] जायताम् । द्रवित्वेन विना चैषां संक्षेपः कल्प्यते कथम् ।३। आगच्छतां च विश्लेषो न भवेद्वायुना कथम् । लघवोऽवयवा[10] ह्येते निबद्धा[11] न च केनचित्[12][13] ।४। वृक्षाद्यभिहतानां[14] च विश्लेषो लोष्ठवद्भवेत् । एकश्रोत्रप्रवेशे[15] च नान्येषां[16] स्यात्पुनः श्रुतिः[17] ।५। न चावान्तरवर्णानां[18] नानात्वस्यास्ति कारणम्[19] । न चैकस्यैव[20] सर्वासु गमनं दिक्षु युज्यते[21] ।६। इत्यादि । तद्व्यञ्जकवाय्वागमनेपि[22] समानम् । शक्यते हि शब्दस्थाने वायुं पठित्वा वायोरागमनं तावददृष्टं परिकल्पितमित्याद्यभिधातुम् । किञ्चाऽदृष्टकल्पनागौरवदोषो भवत्पक्ष[23] एवानुषज्यते । तथा हि । शब्दस्य पूर्वापरकोट्योः सर्वत्र च देशेऽनुपलभ्यमानस्य सत्त्वम् । तस्य चावारकाः स्तिमिता वायवः प्रमाणतोऽनुपलभ्यमानाः कल्पनीयास्तदपनोदकाश्चान्ये[24] । तेषां शक्तिनानात्वं कल्पनीयं, नास्मत्पक्षे[25] । पौद्गलिकत्वं च यथावसरं गुणनिषेधप्रक्रमे प्रसाधयिष्यामः । तत्सिद्धं घटस्य चक्रादिव्यापारकार्यत्ववच्छब्दस्य ताल्वादिव्यापारकार्यत्वमिति साधूक्तमाप्तवचनमित्यादि ।

ननु[26] शब्दार्थयोः सम्बन्धासिद्धेः कथमाप्तप्रणीतोपि शब्दोर्थे ज्ञानं कुर्याद्यत आप्तवचननिबन्धनमित्यादि वचः शोभेतेत्याशङ्कापनोदार्थं[27] सहजयोग्यतेत्याद्याह । सहजा स्वाभाविकी[28] योग्यता शब्दार्थयोः प्रतिपाद्यप्रतिपादकशक्तिः[29] ज्ञानज्ञेययोर्ज्ञाप्यज्ञापकशक्तिवत् । न हि तत्राप्यतो योग्यतातोऽन्यः[30] कार्यकारणभावादिः सम्बन्धोस्तीत्युक्तम्[31] । तस्यां सत्यां सङ्केतः[32] । तद्वशाद्धि स्फुटं शब्दादयो[33][34] वस्तुप्रतिपत्तिहेतवः ॥ यथा[35] मेर्वादयः सन्तीति ।

ननु चासौ सहजयोग्यताऽनित्या नित्या वा ? न तावदनित्या[36]ऽनवस्थाप्रसङ्गात्[37] । येन हि प्रसिद्धसम्बन्धेनायमित्यादिना[38][39] शब्देनाप्रसिद्धसम्बन्धस्य घटादेः शब्दस्य सम्बन्धः क्रियते तस्याप्यन्येन[40][41] प्रसिद्धसम्बन्धेन सम्बन्धस्तस्याप्यन्येनेति । नित्यत्वे चास्याः सिद्धं नित्यसम्बन्धाच्छब्दानां वस्तुप्रतिपत्तिहेतुत्वमिति मीमांसकास्तेप्य[42]तत्त्वज्ञाः—हस्तसंज्ञादिसम्बन्धवच्छब्दार्थसम्बन्धस्यानित्यत्वेप्यर्थप्रतिपत्तिहेतुत्वसम्भवात्[43] । न खलु हस्तसंज्ञादीनां स्वार्थेन सम्बन्धो नित्यस्तेषामनित्यत्वे तदाश्रि-

---

१ अवयवा ॥ २ अदृष्टा ॥ ३ रचना=बन्ध ॥ ४ अदृष्ट ॥ ५ भेद ॥ ६ वर्णोत्पत्तौ ॥ ७ शब्दाना पुद्गलरूपाणाम् ॥ ८ जैनानाम् ॥ ९ शब्दाना वायूना च ॥ १० जैनोक्ता ॥ ११ सम्बद्धा ॥ १२ कारणेन ॥ १३ वर्णवायूत्पत्तौ ॥ १४ पुद्गलरूपाणा वर्णानाम् ॥ १५ एकस्य नरस्य ॥ १६ नृणाम् ॥ १७ अव्यापक शब्दो जैनमते यत ॥ १८ मध्योत्पन्नानाम् ॥ १९ नैयायिकस्य ॥ २० गत्य ॥ २१ जेनस्य ॥ २२ ताल्वादिजनितशब्दाभिव्यञ्जकध्वने ॥ २३ मीमासकपक्षे ॥ २४ व्यञ्जका ॥ २५ जैन ॥ २६ सौगत ॥ २७ निराकरणार्थम् ॥ २८ न त्वौपाधिकी ॥ २९ वाच्यवाचकसामर्थ्यम् ॥ ३० अपर ॥ ३१ पूर्वं प्रथमपरिच्छेदे ॥ ३२ अस्य शब्दस्यायमर्थ , अस्य गोशब्दस्य साास्नादिमानर्थ इति च ॥ ३३ प्रागुक्ता ॥ ३४ आदिना हस्ताङ्गुलीसंज्ञा ॥ ३५ उदाहरणे ॥ ३६ अन्यथा॥ ३७ कथम् ? तथा हि॥ ३८ अर्थेन सह॥ ३९ इदमित्यादिना च॥ ४० यथा प्रसिद्धसम्बन्धेन घटशब्देन घट एव वाच्यस्तथाऽप्रसिद्धसम्बन्धेनापि घटशब्देन घट एव वाच्य इति ॥ ४१ शब्देन ॥ ४२ वदन्ति ॥ ४३ आदिना नयनाङ्गुल्यादिसंज्ञा ॥

तसम्बन्धस्य नित्यत्वविरोधात् । न हि भित्तिव्यपाये तदाश्रितं चित्रं न व्यपैतीत्यभिधातुं शक्यम् । न चानित्यत्वेऽस्यार्थप्रतिपत्तिहेतुत्वं न दृष्टं प्रत्यक्षविरोधात् । एवं शब्दार्थसम्बन्धेप्येतद्वाच्यम् । स हि न तावदनाश्रितो नभोवदनाश्रितस्य सम्बन्धत्वाऽसम्भवात् । आश्रितश्चेत्किं तदाश्रयो नित्योऽनित्यो वा ? नित्यश्चेत् कोयं नित्यत्वेनाभिप्रेतस्तदाश्रयो नाम? जातिर्व्यक्तिर्वा ? न तावज्जातिस्तस्याः शब्दार्थत्वे प्रवृत्त्याद्यभावप्रतिपादनात् । निराकरिष्यमाणत्वाच्च । व्यक्तेस्तु तदाश्रयत्वे कथं नित्यत्वमनभ्युपगमात्तथा प्रतीत्यभावाच्च । अनित्यत्वे च तदाश्रयत्वस्य सिद्धं तद्व्यपाये सम्बन्धस्यानित्यत्वं भित्तिव्यपाये चित्रवत् । ततोऽयुक्तमुक्तं 'नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः । सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः' इति—सदृशपरिणामविशिष्टस्यार्थस्य शब्दस्य तदाश्रितसम्बन्धस्य चैकान्ततो नित्यत्वासम्भवात् । सर्वथा नित्यस्य वस्तुनः क्रमयौगपद्याभ्यामर्थक्रियासम्भवतोऽसत्त्वं चाऽश्वविषाणवत् । अनवस्थादूषणं चायुक्तमेवाऽयमित्यादेः शब्दस्यानादिपरम्परातोऽर्थमात्रे प्रसिद्धसम्बन्धत्वात्तेनावगतसम्बन्धस्य घटादिशब्दस्य सङ्केतकरणात् । नित्यसम्बन्धवादिनोपि चानवस्थादोषस्तुल्य एव । अनभिव्यक्तसम्बन्धस्य हि शब्दस्याभिव्यक्तसम्बन्धेन शब्देन सम्बन्धाभिव्यक्तिः कर्त्तव्या । तस्याप्यन्येनाभिव्यक्तसम्बन्धेनेति । यदि पुनः कस्यचित्स्वत एव सम्बन्धाभिव्यक्तिरपरस्यापि सा तथैवास्तीति सङ्केतक्रिया व्यर्था । शब्दविभागाभ्युपगमे चालं सम्बन्धस्य नित्यत्वकल्पनया । कल्पने चाऽगृहीतसङ्केतस्याप्यतोऽर्थप्रतिपत्तिः स्यात् । सङ्केतस्तस्य व्यञ्जक इत्यप्ययुक्तं नित्यस्य व्यङ्ग्यत्वायोगात् । नित्यं हि वस्तु यदि व्यक्तं व्यक्तमेव, अथाव्यक्तमप्यव्यक्तमेवाभिन्नस्वभावत्वात्तस्य । शब्दाभिव्यक्तिपक्षनिक्षिप्तदोषानुषङ्गश्चात्रापि तुल्य एव । किञ्च सङ्केतः पुरुषाश्रयः स चातीन्द्रियार्थज्ञानविकलतयान्यथापि वेदे सङ्केतं कुर्यादिति कथं न मिथ्यात्वलक्षणमस्याप्रामाण्यम् । किञ्चासौ नित्यसम्बन्धवशादेकार्थनियतोऽनेकार्थनियतो वा स्यात् ? एकार्थनियतश्चेत्किमेकदेशेन सर्वात्मना वा ? सर्वात्मनैकार्थनियमेर्थान्तरे वेदात्प्रतिपत्तिर्न स्यात् । ततश्चास्याज्ञानलक्षणमप्रामाण्यम् । एकदेशेन चेत्स किमेकदेशोऽभिमतैकार्थनियतोऽनभिमतैकार्थनियतो

१ विनाशे ॥ २ विनश्यति ॥ ३ वक्तुम् ॥ ४ अन्यथा ॥ ५ प्रत्यक्षेण सिद्धा हस्तसञ्ज्ञादयोऽनित्या यत ॥ ६ अनित्यहस्तसञ्ज्ञादिसम्बन्धस्यार्थप्रतिपत्तिप्रतिपादनत्वप्रकारेण ॥ ७ तादृि ॥ ८ वक्ष्यमाणम् ॥ ९ अन्यथा ॥ १० अमूर्त्तनभोवत् ॥ ११ गगनस्य त्वर्थेन सम्बन्ध उपचारत एव, न तु साक्षात्तस्याऽमूर्त्तत्वात् ॥ १२ दृष्ट ॥ १३ सामान्यम् ॥ १४ विशेष ॥ १५ यदा सामान्यरूपौ शब्दार्थौ सम्बन्धस्य वाच्यवाचकरूपस्याधारभूतौ तदा तावेव विपर्यीकुर्याच्छब्द इति भाव ॥ १६ आदिना निवृत्ति ॥ १७ पूर्वम् ॥ १८ चतुर्थपरिच्छेदे ॥ १९ नित्यजाते ॥ २० सम्बन्धस्य ॥ २१ परेण ॥ २२ व्यक्तेर्नित्यत्वस्य ॥ २३ व्यक्तिरूपस्य ॥ २४ अनित्य सम्बन्धो यत ॥ २५ सामान्य ॥ २६ वाच्यवाचकलक्षणा ॥ २७ मीमासाया ग्रन्थे ॥ २८ अभ्युपगता ॥ २९ विषमपदव्याख्यानमनुतन्त्र तेन सह वर्त्तन्ते इति । तेषा सूत्राणाम् ॥ ३० सर्वथा ॥ ३१ प्रवाहत ॥ ३२ पुरोवर्त्तिन्यनिर्द्धारितार्थे ॥ ३३ अर्थेन सह ॥ ३४ मीमासकस्य ॥ ३५ कथम् ॥ ३६ अर्थेन सह ॥ ३७ अनवस्थापरिहारार्थम् ॥ ३८ नापरेण ॥ ३९ हेतो ॥ ४० पुरुषेण क्रियमाणा ॥ ४१ अयमित्यादिशब्दस्य स्वत एव सम्बन्ध । घटादिशब्दस्य तु अयमित्यादिना शब्देनापरेण सम्बन्ध इति ॥ ४२ नित्यत्वस्य ॥ ४३ तु ॥ ४४ सम्बन्धस्य नित्यत्वात् ॥ ४५ नित्यशब्दस्य ॥ ४६ सङ्केतेन ॥ ४७ एकस्वभावत्वात् ॥ ४८ नित्यसम्बन्धाभिव्यक्तौ अष्टविकल्पप्रकारेण ॥ ४९ सर्वस्वरूपेण ॥ ५० पुरुषाणाम् ॥ ५१ वेदेनार्थान्तरप्रतिपत्त्यभावात् ॥

वा ? अनभिमतैकार्थनियतश्चेत्कथं न मिथ्यात्वलक्षणमप्रामाण्यम् ? अभिमतैकार्थनियतश्चेत्किं पुरुषात्स्वभावाद्वा ? प्रथमपक्षे अपौरुषेयत्वसमर्थनप्रयासो व्यर्थः[1]। पुरुषो हि रागाद्यन्धत्वात्प्रतिक्षिप्यते[2]। तस्माच्चेद्वेदैकदेशोऽर्थनियमं प्रतिपद्यते[3]। किमपौरुषेयत्वेन[4]? अनेकार्थनियमे च विरुद्धोप्यर्थः सम्भवेत्। तथा चास्य[5] मिथ्यात्वम्। किञ्चासौ सम्बन्ध ऐन्द्रियोऽतीन्द्रियोऽनुमानगम्यो वा स्यात्? न तावदैन्द्रियः[6] स्वेन्द्रिये[7] स्वेन रूपेणाप्रतिभासमानत्वात्[8]। अतीन्द्रियश्चेत्कथं प्रतिपत्त्यङ्गं ज्ञापकस्य[9] निश्चयापेक्षणात्[10]। सन्निधिमात्रेण[11] ज्ञापनेऽतिप्रसङ्गात्[12]। अनुमानगम्यश्चेन्न लिङ्गाभावात्[13]। तस्य हि लिङ्गं ज्ञानमर्थः शब्दो वा ? न तावज्ज्ञानं[16] सम्बन्धासिद्धौ[17] तत्कार्यत्वेनास्याऽनिश्चयात्। नार्थोऽर्थस्तस्य तेन सम्बन्धासिद्धेः[19]। न हि सम्बन्धार्थयोस्तादात्म्यं सम्बन्धस्यानित्यत्वानुषङ्गात्। नापि तदुत्पत्तिरनभ्युपगमात्[22]। असम्बद्धश्चार्थः[23] कथं सम्बन्धं ज्ञापयत्यतिप्रसङ्गात्[24]। ज्ञापने[25] वा[26] शब्दा एवं सम्बन्धविकलाः किमर्थं न ज्ञापयन्त्यलं सिद्धोपस्थायिना नित्यसम्बन्धेन। तत्रार्थोपि लिङ्गम्। नापि शब्दोऽर्थपक्षोक्तदोषानुषङ्गात्। ततो नित्यसम्बन्धस्य प्रमाणतोऽप्रसिद्धेर्न तद्वशाद्वेदोऽर्थप्रतिपादकः। अथ स्वभावादेवासौ तत्प्रतिपादकस्तन्न—अयमेवास्माकमर्थो नायमिति वेदेनानुक्तेः। तदुक्तम् "अयमर्थो नायमर्थ इति शब्दा वदन्ति न। कल्प्योयमर्थः पुरुषैस्ते च रागादिविप्लुताः ।१।" इति। ततो लौकिको वैदिको वा शब्दः सहजयोग्यतासङ्केतवशादेवार्थप्रतिपादकोऽभ्युपगन्तव्यः प्रकारान्तरासम्भवात्। ननु[29] चार्थप्रतिपादकत्वमेषामसम्भाव्यम्। य एव हि शब्दाः सत्यर्थे[28] दृष्टास्ते एवातीतानागतादौ[29] तदभावेपि दृश्यन्ते। यदभावे च यद्दृश्यते न तत्तत्प्रतिबद्धम्। यथा श्वाऽभावेपि दृश्यमानो गौर्न तत्प्रतिबद्धः[30]। अर्थाभावेपि दृश्यन्ते च शब्दास्तन्नैतेऽर्थप्रतिपादकाः। किन्त्वन्यापोहमात्राभिधायकाः[31]। तदप्यविचारितरमणीयमर्थवतः शब्दात्तद्रहितस्यास्यान्यत्वात्[33]। न चान्यस्य व्यभिचारेऽन्यस्याप्यसौ युक्तोऽन्यथा गोपालघटिकादिधूमस्याग्निव्यभिचारोपलम्भात्पर्वतादिप्रदेशवर्तिनोपि[34] स स्यात्। तथा च कार्यहेतवे दत्तो जलाञ्जलिः[35]। सकलशून्यता च[36] स्वप्नादिप्रत्ययानां क्वचिद्विभ्रमोपलम्भतो निखिलप्रत्ययानां तत्प्रसङ्गात्। यत्नतः परीक्षितं कार्यं[38] कारणं नातिवर्तत इत्यन्यत्रापि[39] समानम्। यत्नतो[40] हि शब्दोर्थवत्त्वेतरस्वभावतया परीक्षितोर्थं न व्यभिचरतीति। तथा[41] चान्यापोहमात्राभिधायित्वं शब्दानां

---

१ मीमांसकस्य ॥ २ मीमांसकैः ॥ ३ वेदस्य ॥ ४ द्वितीयपक्षे ॥ ५ वेदस्य ॥ ६ इन्द्रियविषय ॥ ७ श्रोत्रलोचनलक्षणे ॥ ८ असाधारणरूपेण ॥ ९ वाच्यवाचकसामर्थ्यस्यातीन्द्रियत्वात् ॥ १० सम्बन्धस्य ॥ ११ नाज्ञात ज्ञापक नाम ॥ १२ शब्दार्थयो सारूप्येण सम्बन्धस्यार्थज्ञापने ॥ १३ सम्बन्धमात्रेण ॥ १४ मीमांसकवत्सौगतानपि बोधयेदिति ॥ १५ सम्बन्धेन सहाविनाभाविलिङ्गस्य ॥ १६ सम्बन्धोस्ति ज्ञानात् ॥ १७ सम्बन्धासिद्धेरिति खपुस्तकीय पाठ ॥ १८ सम्बन्धोस्ति अर्थात् ॥ १९ कथम् ॥ २० अन्यथा ॥ २१ अर्थवत् ॥ २२ सम्बन्धाद्गुणरूपादर्थोत्पत्ति ॥ २३ सम्बन्धेन सह ॥ २४ तथा च खरविषाण सम्बन्ध ज्ञापयतु ॥ २५ असम्बद्धार्थेन ॥ २६ सम्बन्धस्य ॥ २७ सौगत ॥ २८ विद्यमाने ॥ २९ काले ॥ ३० भा ॥ ३१ अपोह्यते व्यावर्त्यतेनेनाभावेनेति ॥ ३२ एव ॥ ३३ भिन्नत्वात् ॥ ३४ धूमात् ॥ ३५ परेण ॥ ३६ कथम् ॥ ३७ अर्थे ॥ ३८ धूमादि ॥ ३९ अग्न्यादि ॥ ४० शब्दे ॥ ४१ कथम् ? तथा हि ॥ ४२ व्यभिचाराभावे च,॥

श्रद्धामात्रगम्यम् । किञ्चान्यापोहमात्राभिधायित्वे प्रतीतिविरोधो गवादिशब्देभ्यो विधिरूपावसायेन प्रत्ययप्रतीतेः । अन्यनिषेधमात्राभिधायित्वे च तत्रैव चरितार्थत्वात्सास्नादिमतोऽर्थस्यातोऽप्रतीतेः तद्विषयाया गवादिबुद्धेर्जनकोऽन्यो ध्वनिरन्वेषणीयः । अथैकेनैव गोशब्देन बुद्धिद्वयस्योत्पादान्न परो ध्वनिर्मृग्यो, न–एकस्य विधिकारिणो निषेधकारिणो वा ध्वनेर्युगपद्विज्ञानद्वयलक्षणफलानुपलम्भाद्विधिनिषेधज्ञानयोश्चान्योन्यं विरोधात् कथमेकस्मात्सम्भवः । यदि च गोशब्देनागोशब्दनिवृत्तिर्मुख्यतः प्रतिपद्यते तर्हि गोशब्दश्रवणानन्तरं प्रथमतरमगौरित्येषा श्रोतुः प्रतिपत्तिर्भवेत् । न चैवम्–अतो गोबुद्ध्यनुत्पत्तिप्रसङ्गात् । तदुक्तम् । नन्वन्यापोहकृच्छब्दो युष्मत्पक्षेऽनुवर्णितः । निषेधमात्रं नैवेह प्रतिभासेऽवगम्यते ।१। किन्तु गौर्गवयो हस्ती वृक्ष इत्यादिशब्दतः । विधिरूपावसायेन मतिः शाब्दी प्रवर्त्तते ।२। यदि गौरित्ययं शब्दः समर्थोऽन्यनिवर्त्तने ।[27] जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ।३। ननु ज्ञानफलाः शब्दा न चैकस्य फलद्वयम् । अपवादविधिज्ञानं फलमेकस्य वः कथम् ।४। प्रागगौरिति विज्ञानं गोशब्दश्राविणो भवेत् । येनागोः प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ।५। किञ्चापोहलक्षणं सामान्यं वाच्यत्वेनाभिधीयमानं पर्युदासलक्षणं चाभिधीयेत प्रसज्यलक्षणं वा ? प्रथमपक्षे सिद्धसाध्यता ।[41] यदेव ह्यगोनिवृत्तिलक्षणं सामान्यं गोशब्देनोच्यते भवता तदेवास्माभिर्गोत्वाख्यं भावलक्षणं सामान्यं गोशब्दवाच्यमित्यभिधीयेत—अभावस्य भावान्तरात्मकत्वेन व्यवस्थितत्वात् । कश्चायं भवतामश्वादिनिवृत्तिस्वभावो भावोऽभिप्रेतः ? न तावदसाधारणो गवादिस्वलक्षणात्मा—तस्य सकलविकल्पगोचरातिक्रान्तत्वात् । नापि शावलेयादिव्यक्तिविशेषोऽसामान्यप्रसङ्गतः । यदि गोशब्दः शावलेयादिवाचकः स्यात्तर्हि तस्यानन्वयान्न स सामान्यविषयः स्यात् । तस्मात्सर्वेषु सजातीयेषु शावलेयादिपिण्डेषु यत्प्रत्येकं परिसमाप्तं तन्निबन्धना गोबुद्धिः । तच्च गोत्वाख्यमेव सामान्यम् । तस्याऽगोऽपोहशब्देनाभिधानान्नाममात्रं भिद्येत । उक्तं च । अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् । गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम् ।१। भावान्तरात्मकोऽभावो येन सर्वो व्यवस्थितः । तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम् ।२। नेष्टोऽसाधा-

१ कुत ॥ २ अस्तित्वरूपनिश्चयेन ॥ ३ स्नानादिमदर्थस्य ॥ ४ अगवादिव्यावृत्ति ॥ ५ एव ॥ ६ द्वितीय ॥ ७ शब्द ॥ ८ ध्वने ॥ ९ गवायस्तित्व ॥ १० अगवादिव्यावृत्ति ॥ ११ परस्परविरुद्धार्थप्रतिपादनविरोधात् ॥ १२ यत्र विधिविज्ञान तत्र निषेधविज्ञान नास्ति । यत्र निषेधज्ञान न तत्र विधिज्ञानमिति ॥ १३ बुद्धिद्वयस्य ॥ १४ परेण भवता ॥ १५ अगो निवृत्ते पूर्वम् ॥ १६ एव ॥ १७ अश्वादि ॥ १८ अन्यथा १९ गौरिति बुद्धिस्तस्या अनुत्पत्ति ॥ २० त करोतीति ॥ २१ बौद्ध ॥ २२ प्रतिपादित ॥ २३ गौरयमित्यस्मिन् ॥ २४ तर्हि कथ प्रतिभास ? ॥ २५ अर्थस्य ॥ २६ अश्वादि ॥ २७ तर्हि ॥ २८ भान्तु ॥ २९ विधिनिषेधज्ञान ॥ ३० शब्दस्य ॥ ३१ विधिनिषेधलक्षणम ॥ ३२ निषेध ॥ ३३ शब्दस्य ॥ ३४ बौद्धानाम् ॥ ३५ अगोर्निवृत्ते पूर्वम् ॥ ३६ अश्व ॥ ३७ जनस्य ॥ ३८ कुत ॥ ३९ गोशब्दस्यार्थत्वेन ॥ ४० बौद्धमते ॥ ४१ कथम् ॥ ४२ सौगतेन ॥ ४३ जैने ॥ ४४ सत्ता ॥ ४५ अगोनिवृत्तिलक्षणोऽभावो भावान्तरेण गोत्वेन व्यवतिष्ठते ॥ ४६ क्षणिकनिरंशनिरन्वयरूप ॥ ४७ अन्यथा ॥ ४८ सामान्यस्यापोहस्याभावोऽसामान्य तस्य प्रसङ्गात् ॥ ४९ विशेष ॥ ५० शावलेयादिना ॥ ५१ यो य शब्द स स शावलेयाद्यर्थवाचक इति ॥ ५२ सास्नादिमत्त्वम् ॥ ५३ अगोव्यावृत्ति ॥ ५४ नार्थत ॥ ५५ गोशब्दस्य ॥ ५६ सौगत ॥ ५७ गोत्व वस्त्वेवाऽगोपोहगिरा उक्तम् । कुतस्तथा हि ॥ ५८ कारणेन ॥ ५९ पर्युदासपक्षे ॥

रणस्तावद्विशेषो निर्विकल्पनात् । तथा च शावलेयादिरसामान्यप्रसङ्गतः ।३। तस्मात्सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम् । गोबुद्धिस्तन्निमित्ता स्याद्गोत्वादन्यच्च नास्ति तत् ।४। द्वितीयपक्षे तु न किञ्चिद्वस्तु वाच्यं शब्दानामित्यतोऽप्रवृत्तिनिवृत्तिप्रसङ्गस्तुच्छरूपाभावस्य चानभ्युपगमान्न प्रसज्यप्रतिषेधाभ्युपगमो युक्तः— परमतप्रवेशानुषङ्गात्। अपि च ये विभिन्नसामान्यशब्दा गवादयो ये च विशेषशब्दाः शावलेयादयस्ते भवदभिप्रायेण पर्यायाः प्राप्नुवन्त्यर्थभेदाभावाद्वृक्षपादपादिशब्दवत् । न खलु तुच्छरूपाभावस्य भेदो युक्तो वस्तुन्येव संसृष्टत्वैकत्वनानात्वादिविकल्पानां प्रतीतेः । भेदाभ्युपगमे वाऽभावस्य वस्तुरूपतापत्तिः । तथा हि । ये परस्परं भिद्यन्ते ते वस्तुरूपा, यथा स्वलक्षणानि । परस्परं भिद्यन्ते चाऽपोहा इति । न चापोह्यलक्षणसम्बन्धिभेदादपोहानां भेदः प्रमेयाभिधेयादिशब्दानामप्रवृत्तिप्रसङ्गात् । तदभिधेयापोहानामपोह्यलक्षणसम्बन्धिभेदाभावतो भेदासम्भवात् । अत्र हि यत्किञ्चिद्व्यवच्छेद्यत्वेन कल्प्यते तत्सर्वं व्यवच्छेद्याकारेणालम्ब्यमानं प्रमेयादिस्वभावमेवावतिष्ठते । न ह्यविषयीकृतं व्यवच्छेत्तुं शक्यमतिप्रसङ्गात् । न च सम्बन्धिभेदो भेदकोऽन्यथा बहुषु शावलेयादिव्यक्तिष्वेकस्याऽगोपोहस्याऽभावप्रसङ्गः । यस्य चान्तरङ्गाः शावलेयादिव्यक्तिविशेषा न भेदकास्तस्याऽश्वादयो भेदका इत्यतिसाहसम् । सम्बन्धिभेदाच्च वस्तुन्यपि भेदो नोपलभ्यते किमुताऽवस्तुनि । तथा हि । देवदत्तादिकमेकमेव वस्तु युगपत्क्रमेण वानेकैराभरणादिभिरभिसम्बद्ध्यमानमनासादितभेदमेवोपलभ्यते । भवतु वा सम्बन्धिभेदाद्भेदः । तथापि वस्तुभूतसामान्यानभ्युपगमे भवतां स एवापोहाश्रयः सम्बन्धी न सिद्धिमासादयति यस्य भेदात्तद्भेदः स्यात् । तथा हि । गवादीनां यदि वस्तुभूतं सारूप्यं प्रसिद्धं भवेत्तदाश्वाद्यपोहाश्रयत्वमविशेषेणैषां प्रसिद्ध्येन्नान्यथा । अतोऽपोहविषयत्वमेषामिच्छताऽवश्यं सारूप्यमङ्गीकर्त्तव्यम् । तदेव च सामान्यं वस्तुभूतं भविष्यतीत्यपोहकल्पना वृथैव। यदि वाऽसत्यपि सारूप्ये शावलेयादिष्वगोपोहकल्पना तदा गवाश्वयोरपि कस्मान्न कल्प्येताऽसौ विशे-

---

१ नेष्ट इति शेष ॥ २ अन्यथा ॥ ३ असाधारणशावलेयद्वय न घटते यस्मात् ॥ ४ सकलगोव्यक्तिषु ॥ ५ वर्त्तते ॥ ६ सामान्यम् ॥ ७ प्रसज्यपक्षे ॥ ८ प्रवृत्तिश्च निवृत्तिश्च प्रवृत्तिनिवृत्ती तयोरभावोऽप्रवृत्तिनिवृत्ती तयो प्रसङ्ग ॥ ९ सौगते ॥ १० अन्यथा युक्तश्चेत् ॥ ११ नैयायिकादि ॥ १२ सौगतस्य ॥ १३ यस ॥ १४ अश्वशब्दगोशब्दादि ॥ १५ सामान्यस्याभिधायका ॥ १६ बौद्ध ॥ १७ भवन्ति ॥ १८ सर्वेषा पदार्थाना तुच्छस्वरूपत्व यत ॥ १९ नि स्वभावस्य ॥ २० अपोहस्य ॥ २१ न तुच्छरूपाभावे ॥ २२ अन्येन सम्बद्धत्व ॥ २३ आदिना प्रमेयत्वादि ॥ २४ भेदानाम् ॥ २५ सौगते ॥ २६ अपोहस्य ॥ २७ तल्लक्षणत्वाद्वस्तुत्वस्य ॥ २८ कथम् ॥ २९ अश्वादिनिवृत्तय (गवादय) ॥ ३० अपोह्या व्यावर्त्या अश्वादय ॥ ३१ अभावानाम् ॥ ३२ अन्यथा ॥ ३३ प्रमेयादि ॥ ३४ स्वरूप ॥ ३५ स्वरूपेण नास्ति यत ॥ ३६ प्रमेयादिशब्देषु ॥ ३७ अप्रमेयादि ॥ ३८ व्यावर्त्यत्वेन ॥ ३९ व्यावर्त्याकारेण ॥ ४० विषयीक्रियमाणम् ॥ ४१ वर्त्तते ॥ ४२ व्यवच्छेद्यमप्रमेयादि ॥ ४३ परिच्छेत्तुम् ॥ ४४ गगनकुसुममपि परिच्छेत्तु शक्य स्यात् ॥ ४५ अपोहानाम् ॥ ४६ किन्तु प्रतिव्यक्ति भिन्न एव स्यात् ॥ ४७ अव्यभिचारि प्रतिनियतमन्तरङ्गम् ॥ ४८ अपोहे ॥ ४९ कटककुण्डलादिभि ॥ ५० सम्बन्धिभि ॥ ५१ अपोहस्य ॥ ५२ परमार्थसत्य ॥ ५३ गोत्वादि ॥ ५४ विवक्षित ॥ ५५ सन् ॥ ५६ सम्बन्धिन ॥ ५७ अपोहस्य ॥ ५८ अर्थानाम् ॥ ५९ सदृशरूपम् ॥ ६० शावलेयादिषु ॥ ६१ सामान्यम् ॥ ६२ गोत्वादि ॥ ६३ साधारणेन ॥ ६४ सारूप्याभावे ॥ ६५ सामान्यानभ्युपगमे विवक्षितोऽपोहाश्रय सम्बन्धी न सिद्ध्यति यत ॥ ६६ सौगतेन ॥ ६७ नियमेन ॥ ६८ अश्वाद्यभाव ॥ ६९ एक ॥ ७० सारूप्यासत्त्वाविशेषात् ॥

पाभावात् । तदुक्तम् । अथाऽसत्यपि सारूप्ये स्यादपोहस्य कल्पना । गवाश्वयोरयं कस्मादगोपोहो न कल्प्यते ।१। शाबलेयाच्च भिन्नत्वं बाहुलेयाश्वयोः समम् । सामान्यं नान्यदिष्टं चेत्क्वागोपोहः प्रवर्त्तताम् ।२। यथा च स्वलक्षणादिषु समयासम्भवान्न शब्दार्थत्वं तथाऽपोहेपि । निश्चितार्थो हि समयकृत्समयं करोति । न चापोहः केनचिदिन्द्रियैर्व्यवसीयते तस्यावस्तुत्वादिन्द्रियाणां च वस्तुविषयत्वात् । नाप्यनुमानेन—वस्तुभूतसामान्यमन्तरेणानुमानस्यैवाऽप्रवृत्तेः । अस्तु वा समयस्तथापि कथमश्वादीनां गोशब्दानभिधेयत्वम् ? सम्बन्धानुभवक्षणेऽश्वादेस्तद्विषयत्वेनादृष्टेरित्यनुत्तरं यतो यदि यद्गोशब्दसङ्केतकाले दृष्टं ततोऽन्यत्र गोशब्दप्रवृत्तिर्नेष्यते तदा कस्मात्सङ्केतेन विषयीकृताच्छावलेयादिगोपिण्डादन्यद्बाहुलेयादि गोशब्देनापोह्यं न भवेत् । इतरेतराश्रयश्चाऽगोव्यवच्छेदेन हि गोः प्रतिपत्तिः । स चाऽगौर्गोनिषेधात्मा ततश्चागौरित्यत्रोत्तरपदार्थो वक्तव्यो यो न गौरित्यत्र नञा प्रतिषेध्येत । न ह्यनिर्ज्ञातस्वरूपस्य निषेधो विधातुं शक्यः । अथाऽगोनिवृत्त्यात्मा गौरेव । नन्वेवमगोनिवृत्तिस्वभावत्वाद्गोरगोप्रतिपत्तिद्वारेणैव प्रतीतिः । अगोश्च गोप्रतिषेधात्मकत्वाद्गोप्रतिपत्तिद्वारेणेति स्फुटमितरेतराश्रयत्वम् । अथाऽगोशब्देन यो गौर्निषिध्यते स विधिरूप एवागोव्यवच्छेदलक्षणापोहसिद्ध्यर्थम् । तेनेतरेतराश्रयत्वं न भविष्यति । यद्येवं सर्वस्य शब्दस्यापोहोऽर्थ इत्येवमपोहकल्पना वृथा विधिरूपस्यापि शब्दार्थस्य भावात् । अन्यथेतरेतराश्रयो दुर्निवारः । तदुक्तम् । सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः । तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ।१। स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयः । सिद्धश्चेद्गौरपोहार्थं वृथापोहप्रकल्पनम् ।२। गव्यसिद्धे त्वगौर्नास्ति तदभावेप्यगौः कुतः । नाधाराधेयवृत्त्यादिसम्बन्धश्चाप्यभावयोः ।३। दिग्नागेन विशेषणविशेष्यभावसमर्थनार्थं नीलोत्पलादिशब्दा अर्थान्तरनिवृत्तिविशिष्टानर्थानाहुरित्युक्तम् । तदयुक्तम् । यस्य हि येन कश्चिद्वास्तवः सम्बन्धः सिद्धस्तत्तेन विशिष्टमिति वक्तुं युक्तम् । न च नीलोत्पलयोरनीलानुत्पल-

१ यदि ॥ २ शाबलेयादौ ॥ ३ एकगो ॥ ४ कारणात् ॥ ५ गवाश्वयोर्भिन्नत्वादेकगोपोहाश्रयत्व नेत्युक्ते आह ॥ ६ समानम् ॥ ७ परमार्थभूतम् ॥ ८ भिन्नम् ॥ ९ विशेषेषु क्षणिकनिरंशादिषु ॥ १० शाबलेयादिषु ॥ ११ सङ्केत ॥ १२ घटते इति शेष ॥ १३ अस्य शब्दस्यायमर्थ इति ॥ १४ ना ॥ १५ नरेण ॥ १६ निश्चीयते ॥ १७ स्वलक्षण ॥ १८ अपोहे ॥ १९ अपोहे समयसद्भावेपि ॥ २० स्यात् ॥ २१ अनुमानमप्यन्यापोह नावबोधयति ॥ २२ गोशब्देन मार्जारादिनदर्शस्य अनुमानस्य कार्यस्वभावसम्पाद्यत्वात् । अन्यापोहस्य निरुपाख्यत्वेनानर्थक्रियाकारित्वेन च स्वभावकार्ययोरसम्भवात् ॥ २३ काले ॥ २४ ता ॥ २५ दर्शनाभावात् ॥ २६ दृष्ट [illegible] ॥ २७ अन्ये ॥ २८ परेण ॥ २९ खण्डमुण्डादिनाना ॥ ३० गोशब्दस्याय वाच्य इति ॥ ३१ सौगतेन ॥ ३२ गोपिण्डम् ॥ ३३ अश्वादि व्यावर्त्त्यम् ॥ ३४ सङ्केतकाले सङ्केतेनाविषयीकृतत्वाद्बाहुलेयादे ॥ ३५ [illegible]न्तरमाह ॥ ३६ कथम् ॥ ३७ गोशब्दात् ॥ ३८ परेण त्वया ॥ ३९ समासारम्भे वाक्ये ॥ ४० पदार्थस्य ॥ ४१ पुरुषेण ॥ ४२ अश्वाद्यभावात्मा ॥ ४३ उत्तरपदार्थ ॥ ४४ भो सौगत ॥ ४५ ता ॥ ४६ उत्तरपदार्थस्य ॥ ४७ अपोहे ॥ ४८ ता ॥ ४९ एव ॥ ५० प्रतीति ॥ ५१ पूर्वोक्तप्रकारेण ॥ ५२ सास्नादिमात्राभावरूप इति भाव ॥ ५३ नागोनिवृत्त्यात्मा ॥ ५४ स्वरूप ॥ ५५ तर्हि ॥ ५६ सत ॥ ५७ गोशब्देन ॥ ५८ एव सति ॥ ५९ उच्यते एव गौरित्युक्ते आह ॥ ६० विधिरूपेण ॥ ६१ अज्ञाते ॥ ६२ जैनेनोच्यते ॥ ६३ विशेष्यपदाभिधेयोऽभावो विशेष्य आधारश्च विशेषणपदाभिधेयोऽभावो विशेषणमाधेयस्तेनाभिप्राय परस्य(सौगतस्य)नीलो घट इत्यादिवत् ॥ ६४ न केवल सङ्केत ॥ ६५ कारिकोत्तरार्धं व्याचष्टे ॥ ६६ अनील अनुत्पललक्षण ॥ ६७ अभावगर्हितान् ॥ ६८ कथम् ॥ ६९ विशेषणम् ॥ ७० विशेषेण ॥ ७१ अर्थरूपो ॥

व्यवच्छेदरूपत्वेनाभावरूपयोराधाराधेयत्वादिः सम्बन्धः सम्भवति–नीरूपत्वात् । आदिग्रहणेन संयोगसमवायैकार्थसमवायादिसम्बन्धग्रहणम् । न चासति वास्तवे सम्बन्धे तद्विशिष्टस्य[3] प्रतिपत्तिर्युक्ताऽतिप्रसङ्गात् । नास्माकमनीलादिव्यावृत्त्या[6] विशिष्टोऽनुत्पलादिव्यवच्छेदोऽभिमतो[12] यतोयं दोषः स्यात्[13] । किं तर्हि? अनीलानुत्पलाभ्यां व्यावृत्तं वस्त्वेव तथा[13] व्यवस्थितम्[14] । तच्चार्थान्तरव्यावृत्त्या[15][16] विशिष्टं शब्देनोच्यते[17] इत्यप्यपेशलं–स्वलक्षणस्याऽवाच्यत्वात्[18][19] । न च स्वलक्षणस्याव्यावृत्त्या विशिष्टत्वं[20] सिद्ध्यति[21] यतो न वस्त्वपोहोऽसाधारणं तु वस्तु । न च वस्त्वऽवस्तुनोः सम्बन्धो युक्तो वस्तुद्वयाधारत्वात्तस्य । अस्तु वा सम्बन्धस्तथापि विशेषणत्वमपोहस्याऽयुक्तम् । न हि सत्तामात्रेण[22] किञ्चिद्विशेषणम्[23] । किं तर्हि? ज्ञातं सद्यत्स्वाकारानुरक्तया[27] बुद्ध्या विशेष्यं[24] रञ्जयति तद्विशेषणम्[25] । न चापोहेऽयं प्रकारः सम्भवति[26] । न ह्यश्वादिबुद्ध्यापोहोऽध्यवसीयते । किं तर्हि? वस्त्वेव । अपोहज्ञानासम्भवश्चोक्तः प्राक् । न चाज्ञातोप्यपोहो विशेषणं भवति । नागृहीतविशेषणा विशेष्ये बुद्धिरित्यभिधानात् । अस्तु वाऽपोहज्ञापनं तथाप्यर्थे[28] तदाकारबुद्ध्यभावात्तस्याऽविशेषणत्वम्[29] । सर्वं हि विशेषणं स्वाकारानुरूपां[30] विशेष्ये बुद्धिं जनयद्दृष्टम् । न त्वन्यादृशं[31] विशेषणमन्यादृशी[32] बुद्धिं विशेष्ये जनयति[33] । न खलु नीलमुत्पले रक्तमिति प्रत्ययमुत्पादयति । दण्डो[34] वा कुण्डलीति । न चाश्वादिष्व[35]भावानुरक्ता[36] शाब्दी[37] बुद्धिरुपजायते । किन्तर्हि? भावाकाराध्यवसायिनी[38] । तथापि[39] विशेषणत्वे[40], सर्वं सर्वस्य विशेषणं स्यात्[41] । अनुरागे[42] वाऽभावरूपेण[43] वस्तुनः[44] प्रतीतेर्वस्तुत्वमेव न स्यात्[45]–भावाभावयोर्विरोधात् । शब्देनाऽगम्यमानत्वाच्चाऽसाधारणवस्तुनो[46] न व्यावृत्त्या[47] विशिष्टत्वं प्रत्येतुं शक्यम्[48] । उक्तं च । न चासाधारणं वस्तु गम्यतेपोहवत्तया[49] । कथं वा परिकल्प्येत सम्बन्धो वस्त्ववस्तुनोः ॥ १ ॥ स्वरूपसत्त्वमात्रेण[50] न स्यात्किञ्चिद्विशेषणम् । स्वबुद्ध्या[51] रज्यते येन विशेष्यं तद्विशेषणम्

---

१ एकार्थसमवाय मातुलिङ्गलक्षणे रूपवद्रसादे ॥ २ आदिना तादात्म्यम् ॥ ३ नील ॥ ४ उत्पलस्य ॥ ५ विशेषणविशेष्यतया सह्यविन्ध्ययोरपि प्रतिपत्ति स्यादिति ॥ ६ भवतामय प्रसङ्ग इत्युक्ते सत्याह ॥ ७ जैनानाम् ॥ ८ रक्तादि ॥ ९ विशेषणेन ॥ १० अपघ्रादि ॥ ११ विशेष्य ॥ १२ न कुतोपि ॥ १३ नीलोत्पलरूपेण ॥ १४ इति जैन ॥ १५ अर्थ स्वलक्षणरूप ॥ १६ अनीलाऽनुत्पलरूप ॥ १७ इति सौगत ॥ १८ कुत ॥ १९ यद्वस्तु तत्स्वलक्षणमेवेति शब्देन ॥ २० सौगतमते ॥ २१ अन्यव्यावृत्तिरूप तु सामान्यमेव ॥ २२ अपोहोस्तीत्यस्तित्वमात्रेण ॥ २३ लोके ॥ २४ उत्पलम् ॥ २५ स्यात् ॥ २६ अज्ञातत्वादपोहस्य ॥ २७ न तावत्प्रत्यक्षेणापोहग्रहणमित्यादि ॥ २८ स्वलक्षणरूपे ॥ २९ स्थिरस्थूलाकार स्वलक्षणोस्तीति ज्ञायते न त्वभावरूपापोहाकार ॥ ३० सतीं सदृशीम् ॥ ३१ अभावरूपम् ॥ ३२ भावरूपाम् ॥ ३३ कथम् ॥ ३४ पुरुषस्य ॥ ३५ स्वलक्षणरूपेषु ॥ ३६ अपोहाशक्ता ॥ ३७ शब्दजनिता सविकल्पेत्यर्थ । बोद्धाना मते निर्विकल्पकज्ञानानन्तरोत्पन्नसविकल्पकज्ञानेन स्वलक्षणस्य निश्चयो यत ॥ ३८ स्थिरस्थूलाकार पदार्थाकार ॥ ३९ स्वाकारानुरूपबुद्ध्यजनकत्वेपि ॥ ४० अपोहस्य ॥ ४१ स्वाकारानुरूपबुद्ध्यजनकत्वाविशेषात् ॥ ४२ अश्वादिषु शब्दजबुद्धेरभावेन सहानुरागे सति ॥ ४३ यदा भावाकारो धृतस्तदाऽभावरूपमेव स्वलक्षण निश्चिनुयादिति भाव ॥ ४४ स्वलक्षणस्य ॥ ४५ कुत ॥ ४६ स्वलक्षणस्य ॥ ४७ अपोहेन ॥ ४८ अर्थान्तरव्यावृत्त्या विशिष्ट स्वलक्षणरूप वस्तु शब्देनोच्यत इति वदन्त वादिन प्रति समर्थनमुक्तमिति ज्ञेयम् ॥ ४९ अपोहस्य ॥ ५० कथ तर्हि विशेषण स्यादित्युक्ते आह ॥ ५१ स्वस्य=विशेषणस्य ॥

। २ । न चाप्यश्वादिशब्देभ्यो जायतेपोहभासनम् । विशेष्ये बुद्धिरिष्टेह न चाज्ञातविशेषणा । ३ । न चान्यरूपमन्यादृक् कुर्याज्ज्ञानं विशेषणम् । कथं वाऽन्यादृशे ज्ञाने तदुच्येत विशेषणम् । ४ । अथान्यथा विशेष्येपि स्याद्विशेषणकल्पना । तथा सति हि यत्किञ्चित्प्रसज्येत विशेषणम् । ५ । अभावगम्यरूपे च न विशेष्येस्ति वस्तुता । विशेषितमपोहेन वस्तु वाच्यं न तेऽस्त्यतः । ६ । शब्देनागम्यमानं च विशेष्यमिति साहसम् । तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः । ७ । इतश्च सामान्यं वस्तुभूतं शब्दविषयो, यतो व्यक्तीनामसाधारणवस्तुरूपाणामशब्दवाच्यत्वान्न व्यक्तीनामपोह्यता अनुक्तस्य निराकर्तुमशक्यत्वादपोह्येत सामान्यं—तस्य वाच्यत्वात् । अपोहानां त्वभावरूपतयाऽपोह्यत्वासम्भवात्, अभावानामभावाभावात्, वस्तुविषयत्वात्प्रतिषेधस्यापोह्यत्वेऽपोहानां वस्तुत्वमेव स्यात् । तस्मादश्वादौ गवादेरपोहो भवन् सामान्यभूतस्यैव भवेदित्यपोह्यत्वाद्वस्तुत्वं सामान्यस्य । तदुक्तम् । यदा चाऽशब्दवाच्यत्वान्न व्यक्तीनामपोह्यता । तदापोह्येत सामान्यं तस्यापोहाच्च वस्तुता । १ । नाऽपोह्यत्वमभावानामभावाऽभाववर्जनात् । व्यक्तोऽपोहान्तरेऽपोहस्तस्मात्सामान्यवस्तुनः । २ । किञ्चापोहानां परस्परतो वैलक्षण्यं वा स्यादवैलक्षण्यं वा ? तत्राद्यपक्षे भावस्यागोशब्दाभिधेयस्याभावो गोशब्दाभिधेयः । स चेत्पूर्वोक्तादभावाद्विलक्षणस्तदा भाव एव भवेदभावनिवृत्तिरूपत्वाद्भावस्य । न चेद्विलक्षणस्तदा गौरप्यगौः प्रसज्येत तदवैलक्ष्येण तादात्म्यप्रतिपत्तेः । तन्न वाच्याभिमतापोहानां भेदसिद्धिर्नापि वाचकाभिमतानाम् । तथा हि । शब्दानां भिन्नसामान्यवाचिनां विशेषवाचिनां च परस्परतोऽपोहभेदो वासनाभेदनिमित्तो वा स्याद्वाच्यापोहभेदनिमित्तो वा ? प्रथमपक्षोऽयुक्तोऽवस्तुनि वासनाया एवासम्भवात् । तदसम्भवश्च तद्धेतोर्निर्विषयप्रत्ययस्यायोगात् । नापि वाच्यापोहभेदनिमित्तस्तद्भेदस्य प्रागेव कृतोत्तरत्वात् । ननु प्रत्य-

---

१ प्रतीति ॥ २ जगति ॥ ३ अभावरूपम् ॥ ४ भावरूपम् ॥ ५ विशेष्ये ॥ ६ जैनानामिद दूपण न जायते तेपा सर्वं वस्तु भावाभावात्मक यत ॥ ७ भावरूपे ॥ ८ अभावरूपे ९ परेण ॥ १० यदि ११ भावरूपे ॥
१२ अपोहस्य ॥ १३ अनिर्वचनीयम् ॥ १४ स्वलक्षणरूपे ॥ १५ विशेपणेन ॥ १६ स्वलक्षणरूपम् ॥ १७ शब्देन ॥ १८ सौगतस्य ॥ १९ अपोहस्य विशेपणस्य ॥ २० स्वलक्षणम् ॥ २१ येन कारणेनापोहशब्दयोर्वा-
च्यवाचकभावो नास्ति तेन ॥ २२ शब्दजनितबुध्या गम्य शब्देन वाच्यश्च ॥ २३ गोत्वादि ॥ २४ स्वलक्षणस्यावाच्यत्व कुत ? सङ्केताभावात् ॥ २५ शब्देनावाच्यस्य ॥ २६ अपोहितुम् ॥ २७ शब्देन ॥
२८ अन्यव्यावृत्तीनाम् (सर्वेपा पदार्थानामपोहरूपत्वात्सर्वे भावा अपोहा) ॥ २९ व्यावर्त्यत्व ॥ ३० अत्र खरविपाणवद्दृष्टान्त ॥ ३१ अपोहानाम् ॥ व्यावर्त्यानाम् ॥ ३२ व्यावर्त्यत्वे ॥ ३३ अङ्गीक्रियमाणे परेण ॥ ३४ अभावा-
भावानाम् ॥ ३५ वर्तमान ॥ ३६ हेतो ॥ ३७ स्वलक्षणा ॥ ३८ वस्तुविपयो निपेधो यत ॥ ३९ निपेधस्य निपेधासम्भवात् ॥ ४० अपोह्या(?)न्तरेऽश्वादौ ॥ ४१ गौ ॥ ४२ व्यक्तीनामपोहाना चापोहता नास्ति
यस्मात् ॥ ४३ एव ॥ ४४ ता ॥ ४५ गोशब्दाश्वशब्दवाच्यानामन्यव्यावृत्तीनाम् ॥ ४६ विसदृशता ॥ ४७ अश्व ॥ ४८ वाच्यस्य ॥ ४९ गोशब्दाभिधेयोऽभावो यत ॥ ५० अगोशब्दाभिधेयात् ॥ ५१ द्वितीयपक्षे
दूपणमुद्भावयन्ति ॥ ५२ एकस्वरूप ॥ ५३ भवेत् ॥ ५४ भिन्नपदार्थ ॥ ५५ तस्मादगोशब्दवाच्यादपोहादवैलक्षण्य गोशब्दवाच्यस्यापोहस्य ॥ ५६ एकत्वात् ॥ ५७ गोशब्दाऽगोशब्दवाच्यापोहयो ॥ ५८ अर्थ ॥
५९ शब्द ॥ ६० अपोहानाम् ॥ ६१ गोलक्षणाश्वलक्षण ॥ ६२ खण्डमुण्डादि ॥ ६३ शब्दापोहभेद ॥ ६४ पूर्वविकल्पज्ञान शब्दविपय वासना ॥ ६५ एव ॥ ६६ वस ॥ ६७ अर्थ ॥ ६८ वाचकापोहे ॥ ६९ वा-
सनाकारणस्य ॥ ७० तुच्छरूपत्वान्निर्विपयत्वमपोहस्य सविकल्पकज्ञानस्य ॥

क्षणैव शब्दानां कारणभेदाद्विरुद्धधर्माध्यासाच्च भेदः प्रसिद्ध एवेत्यप्यसाम्प्रतं यतो वाचकं शब्दमङ्गीकृत्यैवमुच्यते । न च श्रोत्रज्ञानप्रतिभासिस्वलक्षणात्मा शब्दो वाचकः सङ्केतकालानुभूतस्य व्यवहारकालेऽचिरनिरुद्धत्वात् । इति न स्वलक्षणस्य वाचकत्वं भवदभिप्रायेण । तदुक्तम् । नार्थशब्दविशेषेण वाच्यवाचकतेष्यते । तस्य पूर्वमदृष्टत्वात्सामान्यं तूपदिश्यते । १ । तत्र शब्दान्तरापोहे सामान्ये परिकल्पिते । तथैवावस्तुरूपत्वाच्छब्दभेदो न कल्प्यते । २ । ततो ये अवस्तुनी न तयोर्गम्यगमकभावो, यथा खपुष्पखरविषाणयोः । अवस्तुनी च वाच्यवाचकापोहौ भवतामिति । ननु मेघाभावाद्वृष्ट्यभावप्रतिपत्तेरनैकान्तिकता हेतोरित्यप्ययुक्तम् । तद्विविक्ताकाशालोकात्मकं हि वस्तु मत्पक्षेऽत्रापि प्रयोगेस्त्येव–अभावस्य भावान्तरस्वभावत्वप्रतिपादनात् । भवत्पक्षे तु न केवलमपोहयोर्विवादास्पदीभूतयोर्गम्यगमकत्वाभावोपि तु वृष्टिमेघाद्यभावयोरपि । किञ्चापोहो वाच्योऽर्थोवाच्यो वा ? वाच्यश्चेत्किं विधिरूपेणान्यव्यावृत्त्या वा ? यदि विधिरूपेण, कथमपोहः सर्वशब्दार्थः ? अथान्यव्यावृत्त्या तर्हि नापोहोपि शब्दाधिगम्यो मुख्यः । अनवस्था च तद्व्यावृत्तेरपि व्यावृत्त्यन्तरेणाभिधानात् । अथाऽवाच्यस्तर्ह्यन्यशब्दार्थोऽपोहं शब्दः प्रतिपादयतीत्यस्य व्याघातः । किञ्च नान्यापोहः अनन्यापोह इत्यादौ विधिरूपादन्यद्वाच्यं नोपलभ्यते प्रतिषेधद्वयेन विधेरेवाध्यवसायात् । कश्चायमन्यापोहशब्दवाच्योर्थो यत्रान्यापोहसंज्ञा स्यात् ? अथ विजातीयव्यावृत्तानर्थानाश्रित्यानुभवादिक्रमेण यदुत्पन्नं विकल्पज्ञानं तत्र

---

१ गवादीनाम् ॥ २ ताल्वादि ॥ ३ भिन्न ॥ ४ अध्यासो ग्रहणम् ॥ ५ पारमार्थिकार्थस्य ॥ ६ परेण सौगतेन ॥ ७ स्वलक्षणरूपशब्दस्य ॥ ८ विनष्टत्वात् ॥ ९ हेतो ॥ १० शब्दस्वभावस्य ॥ ११ बौद्ध ॥ १२ अस्वलक्षणरूपै शब्दैरस्वलक्षणरूपार्थप्रतिपादने न किञ्चित्साध्यसिद्धिर्बौद्धमते इत्यभिप्राय ॥ १३ परेण ॥ १४ सङ्केतकालात् ॥ १५ अज्ञातत्वात् ॥ १६ उत्तरकाले ॥ १७ अर्थशब्दयो ॥ १८ तर्हि सामान्याकारेण वाच्यवाचकतास्त्वित्याशङ्कायामाह ॥ सामान्यस्य वाच्यवाचकतयोपदेशो च ॥ १९ गोशब्दादश्वशब्द शब्दान्तर तेन वाच्योऽपोहस्तत्र ॥ २० अवास्तवे ॥ परिकल्पितप्रकारेण ॥ २१ शब्दानाम् ॥ २२ सामर्थ्यते ॥ २३ सौगतानाम् ॥ २४ अभावरूपयोरपि गम्यगमकभावोस्तीति वक्ति बौद्ध ॥ २५ गम्यगमकभावसद्भावात् ॥ २६ अवस्तुत्वादिति ॥ २७ मेघादिभिन्न ॥ २८ जैन ॥ २९ सौगत ॥ ३० वाच्यवाचकयो ॥ ३१ तुच्छरूपत्वात् ॥ ३२ अन्यस्य ॥ ३३ शब्देन ॥ ३४ अथवा ॥ ३५ शब्देन ॥ ३६ अस्तित्वसद्भावेन ॥ ३७ एव ॥ ३८ अपोहस्य विधिरूपेण वाच्यत्वात्सर्वशब्दार्थोऽपोह एव न भवतीत्यर्थ ॥ ३९ अपोह ॥ ४० न केवल स्वलक्षणम् ॥ ४१ अन्यव्यावृत्तिरपि वाच्याऽवाच्या वा स्यात् ? अवाच्या तदाऽवाच्ययान्यव्यावृत्त्या कथमपोहो वाच्योतिप्रसङ्गात् । अथ वाच्या किं विधिरूपेणान्यव्यावृत्त्या वा ? न तावद्विधिरूपेणोक्तदोषानुषङ्गात् । अथान्यव्यावृत्त्या अन्यव्यावृत्तिर्वाच्या चेत्तत्राप्यन्यव्यावृत्तिर्यया वाच्या सापि वाच्याऽवाच्या वेत्यादिप्रकारेणानवस्था ॥ ४२ कुत ॥ ४३ शब्देन ॥ ४४ अश्व ॥ ४५ यस्य ॥ ४६ अश्वलक्षण ॥ ४७ गौरिति ॥ ४८ मतस्य ॥ ४९ अपोहस्याऽवाच्यत्वात् ॥ ५० सर्वेषां परस्परेण व्यावृत्तिस्वभावो यत ॥ ५१ अविधिरूपम् । वस्तु ॥ ५२ आदौ यो नञ् स एकोपोहो द्वितीयेन तस्याप्यपोह । द्वौ नञौ प्रकृतमर्थं गमयत ॥ ५३ इति ॥ ५४ सङ्केत ॥ ५५ ॥ कश्चिद्बौद्धविशेष प्राह ॥ ५६ अश्वादिभ्य ॥ ५७ खण्डमुण्डादिस्वलक्षणान् ॥ ५८ प्रथम खण्डमुण्डाद्यनुभवो नाम निर्विकल्पक दर्शन, तदनु विकल्पवासनाप्रबोधस्तदनु सङ्केतकालगृहीतवाच्यवाचकस्मरण तदन्वित वाच्यवाचकमिति योजन, तदनु विकल्पोय गौरिति ॥

यत्प्रतिभाति ज्ञानात्मभूतं विजातीयव्यावृत्तार्थाकारतयाध्यवसितमर्थप्रतिविम्बकं तत्रान्यापोह इति संज्ञा। ननु विजातीयव्यावृत्तपदार्थानुभवद्वारेण शाब्दं विज्ञानं तथाभूतार्थाध्यवसाय्युत्पद्यते इत्यत्राविवाद एव। किन्तु तत्तथाभूतपारमार्थिकार्थग्राह्यभ्युपगन्तव्यमध्यवसायस्य ग्रहणरूपत्वात्। विजातीयव्यावृत्तेश्च समानपरिणामरूपवस्तुधर्मत्वेन व्यवस्थापितत्वान्नाममात्रमेव भिद्येत। यच्चोक्तं 'तत्प्रतिविम्बकं च शब्देन जन्यमानत्वात्तस्य कार्यमेवेति। कार्यकारणभाव एव वाच्यवाचकभावः' तदप्ययुक्तं शब्दाद्विशिष्टसङ्केतसव्यपेक्षाद्बाह्यार्थे प्रतिपत्तिप्रवृत्तिप्राप्तिप्रतीतेः। स एवास्यार्थो युक्तो, न तु विकल्पप्रतिबिम्बकमात्रं शब्दात्तस्य वाच्यतयाऽप्रतीतेः। अतोऽयुक्तमुक्तं "प्रतिविम्बस्य मुख्यमन्यापोहत्वं विजातीयव्यावृत्तस्वलक्षणस्यान्यव्यावृत्तेश्चौपचारिकम्" इति। अन्यापोहस्य हि वाच्यत्वे मुख्योपचारकल्पना युक्तिमती। तच्चास्य नास्तीत्युक्तम्। ततः प्रतिनियताच्छब्दात्प्रतिनियतेऽर्थे प्राणिनां प्रवृत्तिदर्शनात्सिद्धं शब्दप्रत्ययानां वस्तुभूतार्थविषयत्वम्। प्रयोगः। ये परस्परासङ्कीर्णप्रवृत्तयस्ते वस्तुभूतार्थविषयाः। यथा श्रोत्रादिप्रत्ययाः। परस्पराऽसङ्कीर्णप्रवृत्तयश्च दण्डीत्यादिशाब्दप्रत्यया इति। न चायमसिद्धो हेतुर्दण्डी विषाणीत्यादिधीध्वनी हि लोके द्रव्योपाधिकौ प्रसिद्धौ, शुक्लः कृष्णो भ्रमति चलतीत्यादिकौ तु गुणक्रियानिमित्तौ, गौरश्व इत्यादी सामान्यविशेषोपाधी, इहात्मनि ज्ञानमित्यादिकौ सम्बन्धोपाधिकावेवेति प्रतीतेः। ननु चाकृतसमया ध्वनयोऽर्थाभिधायकाः कृतसमया वा? प्रथमपक्षेतिप्रसङ्गः। द्वितीयपक्षे तु क तेषां सङ्केतः? स्वलक्षणे जातौ वा तद्योगे वा जातिमत्यर्थे वा बुद्ध्याकारे वा? प्रकारान्तरासम्भवात्। न तावत्स्वलक्षणे। समयो हि व्यवहारार्थं क्रियमाणः सङ्केतव्यवहारकालव्यापके वस्तुनि युक्तो, नान्यत्र। न च स्वलक्षणस्य सङ्केतव्यवहारकालव्यापकत्वं शाबलेयादिव्यक्तिविशेषाणां देशादिभेदेन परस्परतोऽत्यन्तव्यावृत्ततयाऽन्वयाभावात्तत्रानन्त्येन सङ्केतासम्भवाच्च। विकल्पबुद्धावध्याहृत्य तेषु सङ्केताभ्युपगमे विकल्पस-

---

१ अश्वादिभ्य ॥ २ ज्ञानादभेदरूपम् ॥ ३ जैनबौद्धयो ॥ ४ ज्ञाने ज्ञानस्वरूपार्थाकारोऽपोह इति बौद्धविशेषस्याऽभिप्राय ॥ ५ श्रावणप्रत्यक्षम् ॥ ६ निश्चयस्य ॥ ७ सौगतेन ॥ ८ पदार्थाना ज्ञानस्य ॥ ९ बौद्धमते ॥ १० खण्डमुण्डादिस्वव्यक्त्यपेक्षया ॥ ११ विजातीयव्यावृत्ति समानपरिणामरूपसामान्य चेति ॥ १२ स्वग्रन्थे ॥ १३ अर्थे। ज्ञाने ॥ १४ घटपटादिलक्षणे ॥ १५ अर्थतया ॥ १६ सम्बन्धिन्या ॥ १७ तथा हि ॥ १८ शब्देन ॥ १९ किञ्चापोहावाच्योचेत्यादिना ॥ २० शब्दार्थोऽपोहो विचार्यमाणो न घटते यत ॥ २१ परमार्थ ॥ २२ वस ॥ २३ असङ्कलित ॥ २४ लोचनादिज्ञानानि ॥ २५ द्वन्द्व ॥ २६ ध्वनि शब्द ॥ २७ उपाधि =विशेषण कारणमित्यर्थं ॥ २८ धीध्वनी ॥ २९ धीध्वनी ॥ ३० गोत्वादि ॥ ३१ अश्वादेर्व्यावर्त्तमानत्वात्तदेव विशेष ॥ ३२ धीध्वनी ॥ ३३ सबन्ध =समवाय ॥ ३४ अत्र प्रतिविधीयते इत्येतावत प्राक् सौगत पूर्वपक्षयति ॥ ३५ घटादिवाचका ॥ ३६ घटशब्द पटाभिधायको भवतु सङ्केताभावात् ॥ ३७ सदृशपरिणामलक्षणे सकेतोस्ति ॥ ३८ बुद्ध्यावर्थाकारे ॥ ३९ प्रतिविम्बके ॥ ४० क्षणिकादिरूपे ॥ ४१ प्रवृत्तिनिवृत्तिरूप ॥ ४२ स्थायिनि ॥ ४३ अव्यापके क्षणिके ॥ ४४ आदिना खण्डमुण्डाशबलादीनाम् ॥ ४५ आदिना कालस्वरूपस्वभावा ॥ ४६ खण्डो मुण्डादत्यन्तव्यावृत्त इति सम्बन्धाभावात् ॥ ४७ यो यत्रैव स तत्रैव यो यदैव तदैव स । न देशकालयोर्व्याप्तिर्भावानामिह विद्यते ॥ ४८ यो यो गोशब्द स स मुण्डवाचक इति ॥ ४९ व्यक्तिषु ॥ ५० गोशब्दस्य ॥ ५१ सर्वव्यक्तयो गोशब्देन वाच्या इति आरोप्य ॥ ५२ जैनादिना ॥

मारोपितार्थविषय एव शब्दसङ्केतो, न परमार्थ[2]वस्तुविषयः स्यात् । स्थिरैकरूपत्वाद्धिमाचलादिभावानां[3] सङ्केतव्यवहारकालव्यापकत्वेन समयसम्भ-
वोप्यसम्भाव्यस्तेषामप्यनेकाणुप्रचयस्वभावानां प्रादुर्भावानन्तरमेवापवर्गितया तदसम्भवात् । किञ्चैतेषु[6] समयः क्रियमाणोऽनुत्पन्नेषु क्रियेतोत्पन्नेषु वा ?
न तावदनुत्पन्नेषु[7] परमार्थतः समयो युक्तोऽसतः सर्वोपाख्यारहितस्याधारत्वानुपपत्तेः । नाप्युत्पन्नेषु तस्यार्था[9]नुभवशब्दस्मरणपूर्वकत्वाच्छब्दस्मर-
णकाले चार्थस्य प्रध्वंसात् । सर्वेषां[11] स्वलक्षणक्षणानां सादृश्य[12]मैक्येना[13]ध्यारोप्य सङ्केतविधाने[14] सिद्धं स्वलक्षणस्याऽवाच्यत्वं—बुद्ध्यारोपितसादृश्यस्यैवा-
भिधानैरभिधानात् । वाच्यत्वे[15][16] वा शब्दबुद्धेः[17] स्पष्टप्रतिभासप्रसङ्गः । न चैवम् । न खलु यथेन्द्रियबुद्धिः स्पष्टप्रतिभासा प्रतिभासते तथा शब्द-
बुद्धिः । प्रयोगश्च । यो यत्कृते प्रत्यये न प्रतिभासते न स तस्यार्थः । यथा रूपशब्दप्रभवप्रत्यये रसाप्रतिभासने नासौ तदर्थः । न प्रति-
भासते च शाब्दप्रत्यये स्वलक्षणमिति । उक्तं च । अन्यथै[22]वाग्निसम्बन्धा[23]द्दाहं[24] दग्धो[25] हि[26] मन्यते[27] । अन्यथा[28] दाहशब्देन दाहार्थः सम्प्रतीयते । १ । न चैकस्य वस्तुनो
रूपद्वय[29]मस्ति[30] येनास्पष्टं वस्तुगत[31]मेव रूपं शब्दैरभिधीयेत एकस्य[32] द्वित्वविरोधात् । तन्न स्वलक्षणे सङ्केतः[33] । नापि जातौ । तस्याः[34][35] क्षणिकत्वे स्वलक्षणस्येवा-
न्वयाभावान्न[36] सङ्केतः फलवान्[37] । अक्षणिकत्वे[38] तु क्रमेण ज्ञानोत्पादकत्वाभावः[39] । नित्यैकस्वभावस्य परापेक्षाप्यसम्भाव्या[40] । प्रतिषिद्धा चेयं[41] यथास्थानम् । इत्यलमति-
प्रसङ्गेन[42] । नापि[43] तद्योगे[44] सङ्केतस्तस्यापि समवायादिलक्षणस्य[45] निराकृतत्वात् । जातितद्योगयोश्चासम्भवे तद्वतोऽप्यर्थस्यासम्भवात्कथं तत्रापि सङ्केतो[46] बुद्ध्याकारे[47]
वा ? स हि बुद्धितादात्म्येन स्थितत्वान्न बुद्ध्यन्तरं प्रतिपाद्यमर्थं वानुगच्छति[48][49] । किञ्चैतैः[50] शब्दादर्थक्रियार्थी[52] पुरुषोऽर्थक्रियाक्षमानर्थान्विज्ञाय प्रवर्तिष्यते
इति मन्यमानैर्व्यवहर्तृभिरभिधायका[53] नियुज्यन्ते, न व्यसनितया[54] । न चासौ विकल्पबुद्ध्याकारो[55]ऽर्थिनो[56]ऽभिप्रेतं शीतापनोदादिकार्यं सम्पादयितुं समर्थः । किञ्च

---

१ नस ॥ २ वस ॥ ३ पदार्थानाम् ॥ ४ सङ्केत ॥ ५ विनाशितया ॥ ६ शाबलेयादिविशेषेषु ॥ ७ अजातेषु ॥ ८ उपाख्या स्वभाव ॥ ९ समयस्य ॥ १० अयमस्य शब्दस्य वाच्य इति॥ ११ त्रिकालत्रिलोकोदरवर्त्तिनाम् ॥ १२ सदृशापरापरोत्पत्त्या यत्सादृश्यम् ॥ १३ अभेदेन ॥ १४ अङ्गीक्रियमाणे जैनादिना ॥ १५ शब्देन ॥ १६ आरोपितसामान्यस्यैव वाच्यत्व शब्देन यत ॥ १७ शब्दे जाताया १८ स्वलक्षणस्य ॥ १९ उपर्युक्तसमर्थनम् ॥ २० नेत्रादि ॥ २१ स्वलक्षणरूपोऽर्थं ॥ २२ स्पष्टत्वेन ॥ २३ ॥ रस ॥ २४ स्पर्शनेन्द्रियेण ॥ २५ साक्षात् ॥ २६ दाहमित्युक्ते मुख्य दह्यते ॥ २७ पुमान् ॥ २८ अस्पष्टत्वेन ॥ २९ स्पष्टत्वास्पष्टत्वे ॥ ३० युक्तिसिद्धम् ॥ ३१ स्पष्टास्पष्टत्वलक्षणम् ॥ ३२ रूपस्य ॥ ३३ परमार्थभूत ॥ ३४ कुत ॥ ३५ जाते ॥ ३६ गोत्वादिसामान्ये ॥ ३७ भवेत् ॥ ३८ अनुस्यूतत्वे ॥ ३९ तस्या जाते ॥ ४० पर=निमित्तम् ॥ ४१ जाति ४२ जातौ सङ्केतनिराकरणप्रसङ्गेन ॥ ४३ पक्षान्तरम् ॥ ४४ तयो स्वलक्षणजात्यो सम्बन्धे ॥ ४५ आदिना सयोगतादात्म्यादेश्च, ॥ ४६ शब्देन ४७ अर्थस्य ॥ ४८ नान्वेति ॥ ४९ अत केन साकं सङ्केत, स्यात् ॥ ५० वि-वक्षितत्वात् ॥ ५१ जैनमताभिप्राय वक्ति सौगत ॥ ५२ अर्थ =प्रयोजनम् ५३ शब्दा ॥ ५४ कार्यं विना प्रवृत्तिर्व्यसनम् ॥ ५५ अर्थस्य ॥ ५६ पुरुषस्य ॥

बुद्ध्याकारे शब्दसङ्केताभ्युपगमेऽपोहवादिपक्ष एवाभ्युपगतो भवेत्। तथा हि। अपोहवादिनापि बुद्ध्याकारो बाह्यरूपतयाध्यवसितः शब्दार्थोऽभीष्ट एवार्थविवक्षां च कार्यतया शब्दो गमयति। यथा धूमोऽग्निमिति।

अत्र प्रतिविधीयते। कृतसमया एव ध्वनयोऽर्थाभिधायकाः। समयश्च सामान्यविशेषात्मकेऽर्थेऽभिधीयते, न जात्यादिमात्रे। तथाभूतश्चार्थो वास्तवः सङ्केतव्यवहारकालव्यापकत्वेन प्रमाणसिद्धः सामान्यविशेषात्मा तदर्थं इत्यत्रातिविस्तरेण वर्णयिष्यते। सामान्यविशेषयोर्वस्तुभूतयोस्तत्सम्बन्धस्य चात्र प्रमाणतः प्रसाधयिष्यमाणत्वात्। न चात्राप्यानन्त्याद्व्यक्तीनां परस्परानुगमाच्च सङ्केताऽसम्भवः समानपरिणामापेक्षया क्षयोपशमविशेषाविर्भूतोहाख्यप्रमाणेन तासां प्रतिभासमानतया सङ्केतविषयतोपपत्तेः। कथमन्यथानुमानप्रवृत्तिस्तत्राप्यानन्त्याननुगमरूपतया साध्यसाधनव्यक्तीनां सम्बन्धग्रहणासम्भवात्। अन्यव्यावृत्त्या सम्बन्धग्रहणमित्यप्यसत्—तस्या एव सदृशपरिणामसामान्यासम्भवे असम्भाव्यमानत्वात्। न चाऽसदृशेष्वप्यर्थेषु सामान्यविकल्पजनकेषु तद्दर्शनद्वारेण सदृशव्यवहारे हेतुत्वं—नीलादिविशेषाणामप्यभावानुपङ्गात्। यथा हि परमार्थतोऽसदृशा अपि तथाभूतविकल्पोत्पादकदर्शनहेतवः सदृशव्यवहारभाजो भावास्तथा स्वयमनीलादिस्वभावा अपि नीलादिविकल्पोत्पादकदर्शननिमित्ततया नीलादिव्यवहारभाक्त्वं प्रतिपत्स्यन्ते। सदृशपरिणामाभावे चार्थानां सजातीयेतरव्यवस्थाऽसम्भवात्कुतः कस्य व्यावृत्तिः? अन्यव्यावृत्त्या सम्बन्धावगमेपि चैतत्सर्वं समानं तत्रानन्त्याननुगमरूपत्वस्याऽविशेषात्। ततो ये यत्र भावतः

---

१ अर्थप्रतिबिम्बेरूपे ॥ २ जेनेन ॥ ३ सोगत ॥ ४ जैनस्य ॥ ५ सौगतेन ॥ ६ ज्ञानात्मा बुद्ध्याकार एव वाह्यार्थो नापर कश्चिदित्यभिप्रायो बौद्धविशेषस्य ॥ ७ आन्तरार्थस्य वक्तुमिच्छा ज्ञानस्वभावा शब्दस्य कारणभूताम् ॥ ८ कार्यरूप ॥ ९ ज्ञापयति ॥ १० ज्ञानस्वभावा विवक्षा एव वाह्यार्थ शब्दविषयो नापर कश्चिदित्यपि बौद्धविशेषाभिप्राय ॥ अन्यापोहरूपो बुद्ध्याकाररूपो विवक्षारूप एव त्रिविध शब्दविषयो बौद्धमते इति ज्ञेयम् ॥ ११ कार्यम् ॥ १२ कारणम् ॥ १३ परकृतपक्षे ॥ १४ शब्दा ॥ १५ वाचका ॥ १६ तादात्म्यस्वरूपे ॥ १७ परार्थे ॥ १८ क्रियते ॥ १९ केवलाया जातौ केवले विशेषे वा नाभिधीयते ॥ २० सङ्केतितार्थो नास्तीत्युक्ते आह ॥ २१ सूत्रे ॥ २२ जैनाचार्यै ॥ २३ प्रत्यक्षादित ॥ २४ व्यवहारकाले ॥ २५ अस्य शब्दस्यायमर्थ इत्येवरीत्या ॥ २६ सदृश ॥ २७ ये ये त्रिकालत्रिलोकोदरवर्तिन. साम्नादिमन्तस्ते ते गोशब्देन वाच्या इत्येवम् ॥ २८ कुत ॥ २९ अनुमानव्यवहारकाले ॥ ३० परस्पर ॥ ३१ असाध्यासाधनरूपेण ॥ ३२ अविनाभावलक्षण ॥ ३३ या गोव्यक्तयस्ता गोशब्देन वाच्या इति ॥ ३४ पूर्वं निराकृतत्वात् ॥ ३५ खण्डादिषु ॥ ३६ सामान्यरूपश्चासो विकल्पश्च ॥ ३७ अयमनेन सदृश इति विकल्पोय गौरय गौरेति विकल्प ॥ ३८ विसदृशार्थ ॥ ३९ प्रतीति ॥ ४० मुखेन ॥ ४१ कथम्? तथा हि ॥ ४२ खण्डमुण्डादय पदार्था ॥ ४३ सन्त ॥ ४४ स्यु ॥ ४५ स्वरूपेण ॥ ४६ नीललक्षणभावा ॥ ४७ विकल्प = ज्ञानम् ॥ ४८ सामान्य ॥ ४९ साम्नादिमत्त्वादिना ॥ ५० गोघटपटादीनाम् ॥ ५१ विजातीय ॥ ५२ कस्मात् ॥ ५३ साध्यसाधनव्यक्तीनाम् ॥ ५४ किञ्च ॥ ५५ सङ्केतपक्षे यत्परेणोच्यते ॥ ५६ अन्यव्यावृत्तिविषयकम ॥ ५७ अन्यव्यावृत्तयोऽनन्ता इत्येवम् ॥ ५८ व्यावृत्तिग्रहणकाले ॥ ५९ साध्यसाधनव्यक्तीना सम्बन्धावगमो यथा वस्तुनि शब्दस्य सङ्केतपरिज्ञानमपि तथा स्याद्यत ॥ ६० वस्तुनि ॥ ६१ परमार्थत ॥

कृतसमया न भवन्ति न ते तस्याभिधायकाः । यथा सास्नादिमत्यर्थेऽकृतसमयोऽश्वशब्दः । न भवन्ति च भावतः कृतसमयाः सर्वस्मिन्वस्तुनि सर्वे ध्वनय इत्यत्र प्रयोगेऽसिद्धो हेतुरुक्तप्रकारेणार्थे ध्वनीना समयसम्भवात् । यच्च हिमाचलादिभावानामप्यनेकपरमाणुप्रचयात्मनां क्षणिकत्वेन समयासम्भव इत्युक्तं तदप्युक्तिमात्रं सर्वथा क्षणिकत्वस्य बाह्याध्यात्मिकार्थे प्रतिपेत्स्यमानत्वात् । तथा चोत्पन्नेष्वप्यर्थेषु सङ्केतसम्भवादयुक्तमुक्तमुत्पन्नेष्वनुत्पन्नेषु वा सङ्केतासम्भव इत्यादि । ननु शब्देनार्थस्याभिधेयत्वे साक्षादेवातोऽर्थप्रतिपत्तेरिन्द्रियसंहतेर्वैफल्यप्रसङ्गः ; तन्नातोऽर्थस्याऽस्पष्टाकारतया प्रतिपत्तेः । स्पष्टाकारतया तत्प्रतिपत्त्यर्थमिन्द्रियसंहतिरप्युपपद्यते एवेति कथं तस्या वैफल्यम्? स्पष्टाऽस्पष्टाकारतयार्थप्रतिभासभेदश्च सामग्रीभेदान्न विरुध्यते दूरासन्नार्थोपनिबद्धेन्द्रियप्रतिभासवत् । अथाऽसत्यप्यर्थेऽतीतानागतादौ शब्दस्य प्रवृत्ति[त्ते]र्नास्यार्थाभिधायकत्वं तदसत्त्वस्येदानीमभावेपि स्वकाले भावात् । अन्यथा प्रत्यक्षस्याप्यर्थविषयत्वाभावः स्यात् तद्विषयस्यापि तत्कालेऽभावात् । अविसंवादस्तु प्रमाणान्तरप्रवृत्तिलक्षणोऽध्यक्षवच्छब्देप्यनुभूयत एव । आसीद्वह्निरित्याद्यतीतविषये वाक्ये विशिष्टभस्मादिकार्यदर्शनोद्भूतानुमानेन संवादोपलब्धेः ; चन्द्रार्कग्रहणाद्यनागतार्थविषये तु प्रत्यक्षप्रमाणेनैव। क्वचिद्विसंवादात्सर्वत्र शाब्दस्याऽप्रामाण्ये प्रत्यक्षस्यापि क्वचिद्विसंवादात्सर्वत्राप्रामाण्यप्रसङ्गः । ततो निराकृतमेतत् "अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचरः । शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते । १ । अन्यथैवाग्निसम्बन्धाद्दाहं दग्धोभिमन्यते। अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते । २ ।" इत्यादि । सामग्रीभेदाद्विशदेतरप्रतिभासभेदो न पुनर्विषयभेदात्–सामान्यविशेषात्मकार्थविषयतया सकलप्रमाणानां तद्भेदाभावादित्यग्रे वक्ष्यमाणत्वात् । ततो यो यत्कृते प्रत्यये न प्रतिभासते इत्यादिप्रयोगे हेतुरसिद्धः सामान्यविशेषात्मार्थलक्षणस्वलक्षणस्य शाब्दप्रत्यये प्रतिभासनात् । प्रयोगः । यद्यत्र व्यवहृतिमुपजनयति तत्तद्विषयम् । यथा सामान्यविशेषात्मके वस्तुनि

---

१ सास्नादिमदर्थाभिधायको न भवति यत ॥ २ परकृते ॥ ३ भावतोऽकृतसमयत्वादिति ॥ ४ समानपरिणामापेक्षयेत्यादिना ॥ ५ परेण ॥ ६ घटादौ ॥ ७ ज्ञानादौ ॥ ८ परेण ॥ ९ प्रतिपाद्यत्वे ॥ १० अवयव ग्रानेन ॥ ११ श्रूयमाणाच्छब्दात् ॥ १२ चक्षुरादिसमूहस्य ॥ १३ सूक्तम् ॥ १४ विवक्षिताच्छब्दात् ॥ १५ घटते ॥ १६ एकार्थे ॥ १७ एकार्थस्य ॥ १८ स्पष्टाऽस्पष्टतया ॥ १९ एकार्थस्य ॥ २० शब्दोच्चारणसमये ॥ २१ अर्थस्यानभिधायकत्वे ॥ २२ क्षणिकत्वात् ॥ २३ प्रत्यक्षोत्पत्तिकाले इव ॥ २४ ज्ञाने ॥ २५ कथम् ॥ २६ इह प्रदेशे ॥ २७ किञ्चिदुष्णताकाष्ठाद्याकारधारित्वविशिष्ट ॥ २८ भविष्यत् ॥ २९ वाच्ये ॥ ३० शब्दप्रतिपाद्ये ॥ ३१ अर्थे ॥ ३२ अङ्गीक्रियमाणे परेण ॥ ३३ अभिन्नविषयत्वेपि शाब्दप्रत्यक्षयो प्रतिभासभेदो दर्शितो यत ॥ ३४ स्वलक्षणम् ॥ ३५ सामान्यम् ॥ ३६ कुत ॥ ३७ अर्थम् ॥ ३८ जानाति ॥ ३९ उत्पादिताक्ष अन्ध इत्यर्थः ॥ ४० क्रियाविशेषणमेतत् ॥ ४१ परोक्ष जानातीत्यर्थ ॥ ४२ अर्थम् ॥ ४३ स्पर्शनेन्द्रियग्राह्यतया ॥ ४४ स्पष्टत्वेन ॥ ४५ जानाति ॥ ४६ अस्पष्टत्वेन ॥ ४७ आसन्नदूरत्वादि ॥ ४८ सामान्यविशेषात्मकार्थो विषयो भवतीति साध्य । शब्दो धर्मी ॥ ४९ वस ॥ ५० विषय ॥ ५१ चतुर्थाध्याये ॥ ५२ शब्दप्रत्ययेऽर्थप्रतिभास सिद्धो यत ॥ ५३ अनुमाने ॥ ५४ शब्दकृते प्रत्ययेऽप्रतिभासमानत्वात्स्वलक्षणस्येति ॥ ५५ कुत ॥ ५६ यस ॥ ५७ शब्दज्ञानजनितज्ञाने ॥ ५८ विकल्पज्ञानम् ॥

व्यवहृतिमुपजनयत्प्रत्यक्षं तद्विषयम्। तत्र व्यवहृतिमुपजनयति च शब्द इति। न चासिद्धो हेतुर्बहिरन्तश्च शाब्दव्यवहारस्य तथाभूते वस्तुन्युपलम्भात्। भवत्कल्पितस्वलक्षणस्य तु प्रत्यक्षेऽन्यत्र वा स्वप्नेप्यप्रतिभासनात्। प्रतिज्ञापदयोश्च व्याघातः। तथा हि। अन्यदेवेन्द्रियग्राह्यमित्यनेन शब्देन कश्चिदर्थोभिधीयते वा न वा? नाभिधीयते चेत्कथमिन्द्रियग्राह्यस्यान्यत्वमतः प्रतीयते? अथाभिधीयतेर्थस्तर्हि तस्यैव तद्विषयत्वप्रसिद्धेः कथन्न शब्दस्यार्थागोचरत्वप्रतिज्ञाऽतो व्याहन्येत? साक्षादिन्द्रियग्राह्यागोचरोऽसाविति चेत्पारम्पर्येणासौ तद्गोचरो भवति न वा? यदि न भवति तर्हि साक्षादिति विशेषणं व्यर्थम्। अथ भवति तर्हि तज्ज्ञा प्रतीतिः किमिन्द्रियजप्रतीतितुल्या तद्विलक्षणा वा? यदि तत्तुल्या तदा शब्दात्प्रत्येति विनष्टाक्षो न तु प्रत्यक्षमीक्षते इत्यनेन विरोधः। तद्विलक्षणा चेन्न तर्हि प्रतीतिवैलक्षण्यं विषयभेदसाधनमेकत्रापि विषये तदभ्युपगमात्। दाहशब्देन चात्र कोर्थोभिप्रेतः? किमग्निरुष्णस्पर्शो रूपविशेषः स्फोटस्तद्दुःखं वा? अस्तु यः कश्चित्। किमेभिर्विकल्पैर्भवतां सिद्धमिति चेदेतेषां मध्ये योर्थोभिप्रेतो भवतां तेनार्थेनार्थवत्त्वप्रसिद्धेस्तस्यानर्थविषयत्वाभावः सिद्ध इति। नन्वेवं दहनसम्बन्धाद्यथा स्फोटो दुःखं वा तथा दाहशब्दादपि किन्न स्यादर्थप्रतीतेरविशेषात् +- तत्रान्यकार्यत्वात्तस्य। न खलु दहनप्रतीतिकार्यं स्फोटादि। किं तर्हि? दहनदेहसम्बन्धविशेषकार्यं-सुषुप्ताद्यवस्थायामप्रतीतावप्यग्नेस्तत्सम्बन्धविशेषात् स्फोटादेर्दर्शनाद्दूरस्थस्य चक्षुषा प्रतीतावप्यदर्शनात् त्वगिन्द्रियेणापि प्रतीतावप्यदर्शनात्। तस्मादभिन्नेपि विषये सामग्रीभेदाद्विशदेतरप्रतिभासभेदोऽभ्युपगन्तव्यः। मन्त्रादिबलेन रूपद्वयमस्त्येकस्य द्वित्वविरोधादिति। यदि चाभावोभिधीयते शब्दैर्भावो नाभिधीयते इति क्रियाप्रतिषेधान्न किञ्चित्कृतं स्यात्। तथा चेदमप्ययुक्तं-न चैकस्य वस्तुनो तस्वर्गापवर्गादिष्वाप्तप्रणीतवाक्यात्प्रतिपत्तिः श्रेयः-साधनानुष्ठाने प्रवृत्तिर्वा? अन्यथा सर्वस्मादपि वाक्यात्सर्वत्रार्थे प्रतिपत्तिप्रवृत्त्यादिप्रसङ्गः। तथा च कथं नदीदेशद्वीपपर्वसत्येतरव्यवस्था-

---

१ विकल्पम् ॥ २ नायनादि ॥ ३ तत्र व्यवहृतिजनकत्वात् ॥ ४ गवादौ ॥ ५ आत्मादौ ॥ ६ सौगत ॥ ७ अनुमानादौ ॥ ८ खरविषाणवत् ॥ ९ व्याघातमेव दर्शयति ॥ १० बौद्धमते शब्द कश्चिदप्यर्थं न वक्ति तर्हि ॥ ११ अर्थस्य ॥ १२ भिन्नत्वम् ॥ १३ अर्थोऽगोचरो यस्य ॥ १४ अव्यवधानेन ॥ १५ वस ॥ १६ स्वलक्षण प्रत्यक्ष गृह्णाति। प्रत्यक्षात् विकल्प ( नीलमिद पीतमिदमिति )। विकल्पाच्च शब्द उत्पद्यते। विकल्पयोनय शब्दा इत्यभिधानादिति ॥ १७ स गोचरो यस्य शब्दस्य ॥ १८ पारम्पर्येणेन्द्रियग्राह्यार्थगोचरो भवति शब्द ॥ १९ सामान्यार्थं जानाति ॥ २० अन्धो ना ॥ २१ क्रियाविशेषणम्। चक्षु प्रत्यक्षेण यादृशमीक्षते न तादृशमिति भाव ॥ २२ अर्थम् ॥ २३ शब्दजेन्द्रियजप्रतीत्यो समानत्वात् ॥ २४ दूरनिकटैकपादपादौ स्वलक्षणे ॥ २५ परेण ॥ २६ लोके ॥ २७ सौगतस्य तव ॥ २८ जैनानाम् ॥ २९ पदार्थानाम् ॥ ३० सौगतानाम् ॥ ३१ शब्दस्य ॥ ३२ तेनार्थेनार्थवत्त्वमिद्धिप्रकारेण ॥ ३३ वह्निदहनसम्बन्धादर्थप्रतीतिर्विद्यते शब्दादप्यर्थप्रतीतिरिति ॥ ३४ दहनस्य ॥ ३५ स्फोटादिकस्य ॥ ३६ दूरपादपादौ ॥ ३७ दूरनिकटादि ॥ ३८ परेण। अनेन कथनेन बौद्धस्य यथा स्वलक्षणस्य प्रत्यक्षेण स्पष्टतया प्रतिभासन तथा शब्देनाप्यस्पष्टतया प्रतिभासन जातमिति ॥ ३९ सामग्रीभेदात्प्रतिभासभेदे च ॥ ४० वैशद्यावैशद्यरूपम् ॥ ४१ अपोह ॥ ४२ भावस्य ॥ ४३ तर्हीति शेष ॥ ४४ शब्दे ॥ ४५ शब्देन किञ्चित् वाच्य स्यात् ॥ ४६ शब्देन कस्याप्यकरणेप्यर्थप्रतीतिरनुष्ठाने प्रवृत्तिश्च यदि ॥ ४७ अकृतत्वाविशेषात् ॥

भावश्च तत्त्वेतरप्रतिपत्तेरभावात् । तथा[1] च 'यत्सत्तत्सर्वमक्षणिकं क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्' इत्यादेरिव यत्सत्तत्सर्वं क्षणिकं नित्ये क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तेरित्यादेरप्यसत्त्वानुषङ्गः । विपर्यय[2]प्रसङ्गो वा—सर्वथार्थासंस्पर्शि[3]त्वाविशेषात् । कस्यचि[4]दनुमानवाक्यस्य कथञ्चि[5]दर्थसंस्पर्शित्वे[6] सर्वथार्थस्यानभिधेयत्वविरोधः । स्वपक्षविपक्षयोश्च सत्यासत्यत्वप्रदर्शनाय शास्त्रं प्रणयन्[7]वस्तु[8] सर्वथाऽनभिधेयं प्रतिजानातीत्युपेक्षणीयप्रज्ञः सर्वथाभिधेयरहितेन तेन[9] तस्य[10] प्रणेतुमशक्तेः । शक्तस्य सूचकं हेतुवचोऽशक्त[11]मपि स्वेय[12]मित्यभिधानात्[13] । तत्कृता[14] तत्त्वसिद्धिमुपजीवति[15], नार्थस्य तद्वाच्यतामिति किमपि महाद्भुतम् । वस्तुदर्शन[16]वंश[17]प्रभवत्वाद्धेतुवचो वस्तुसूचकमित्यक्षणिकवादिनो[18]ऽपि समानम् । मद्वचनमेवार्थदर्शनवंशप्रभवं, न पुनः परवचनमित्यन्यत्रापि समानम् । सकलवचसां विवक्षामात्रविषयत्वाभ्युपगमाच्च । तावन्मात्रसूचकत्वेन च शाब्दस्य[19] प्रामाण्ये सर्वं शाब्दविज्ञानं प्रमाणं स्यात्परागमस्या[20]पि प्रतिबोध्य[21]भिप्रायप्रतिपादकत्वाविशेषात् । किञ्चार्थव्यभिचारवच्छब्दानां विवक्षाव्यभिचारस्यापि दर्शनात्कथं ते तामपि प्रतिपादयेयुः? गोत्र[22]स्खलनादौ ह्यन्य[23]विवक्षायामप्यन्य[24]शब्दप्रयोगो दृश्यत एव । सुविवेचितं कार्यं[25] कारणं[26] न व्यभिचरतीति नियमोऽर्थविशेषप्रतिपादकत्वेप्यस्याऽस्तु । न चास्य विवक्षायास्तदधिरूढार्थस्य वा प्रतिपादकत्वं युक्तं ततो बहिरर्थे[27] प्रतिपत्तिप्रवृत्तिप्राप्तिप्रतीतेः प्रत्यक्षवत् । यथैव हि प्रत्यक्षात्प्रतिपत्तृप्रणिधान[28]सामग्रीसापेक्षात्प्रत्यक्षार्थप्रतिपत्तिस्तथा सङ्केतसामग्रीसापेक्षादेव शब्दाच्छब्दार्थप्रतिपत्तिः सकलजनप्रसिद्धा । अन्यथाऽतो[29] बहिरर्थे प्रतिपत्त्यादिविरोधः । न चार्थेऽर्थिनो[30]ऽर्थित्वादेव प्रवृत्तेः शब्दोऽप्रवर्त्तकोऽध्यक्षादेरप्येवम[31]प्रवर्त्तकत्वप्रसङ्गात् तदर्थेऽप्यभिलाषा[32]देव प्रवृत्तिप्रसिद्धेः । परम्परया[33] प्रवर्त्तकत्वं[34] शब्दे[35]ऽप्यस्तु विशेषाभावात्[36] । का चेयं विवक्षा नाम? किं शब्दोच्चारणेच्छामात्रमनेन शब्देनामुमर्थं प्रतिपादयामीत्यभिप्रायो वा? प्रथमपक्षे वक्तृश्रोत्रोः शास्त्रादौ प्रवृत्तिर्न स्यात् । न खलु कश्चिदनुन्मत्तः[37] शब्द[38]निमित्तेच्छामात्रप्रतिपत्त्यर्थं शास्त्रं वाक्यान्तरं वा प्रणेतुं श्रोतुं प्रवर्त्तते । दशदाडिमादिवाक्यैः सह सर्ववाक्यानामविशेषप्रसङ्गश्च सर्वेषां स्वप्रभवेच्छा[39]मात्रानुमापकत्वा[40]विशेषात् । अथानेन

---

१ सत्येतरव्यवस्थाऽभावे च ॥ २ पूर्वोक्तस्य सत्यत्वमुत्तरोक्तस्यासत्यत्वमित्यर्थं ॥ ३ अविषयत्व शब्दाना यत ॥ ४ सौगतोक्तस्य ॥ ५ कथञ्चित्पारम्पर्येण । कथम्? प्रथमतस्त्रिरूपधूमादिस्वलक्षणलिङ्गदर्शन, तदनु सम्बन्धस्मरण,, तदनु शब्दप्रयोग इति ॥ ६ सौगतेनाङ्गीक्रियमाणे ॥ ७ दिग्नागादि ॥ ८ स्वलक्षणम् ॥ ९ शब्देन ॥ १० शास्त्रान्तरेपि स्वलक्षणसूचक वचोस्तीति वदति ॥ शक्तस्य समर्थस्य हेतोर्धूमादिस्वलक्षणस्य वाच्यस्य ॥ ११ साध्येऽशक्तमपि ॥ १२ स्वरूपेण ॥ १३ सौगतेन ॥ १४ वचन ॥ १५ अङ्गीकरोति ॥ १६ त्रिरूपधूमादिस्वलक्षणलिङ्ग ॥ १७ वंश =अन्वय ॥ १८ जैनस्य ॥ १९ ज्ञानस्य ॥ २० परवचनस्य ॥ २१ जैनादि ॥ २२ गोत्र=नाम ॥ २३ देवदत्त ॥ २४ जिनदत्त ॥ २५ शब्दलक्षणम् ॥ २६ विवक्षालक्षणम् ॥ २७ घटपटादौ ॥ २८ प्रणिधानमेव सामग्री ॥ २९ शब्दात् ॥ ३० पुरुषस्य ॥ ३१ पुरुषस्य ॥ ३२ अर्थित्वादेव ॥ ३३ प्रत्यक्षमभिलाषमुत्पादयति । अभिलाषाच्चार्थे प्रवृत्तिरिति ॥ ३४ प्रत्यक्षस्य ॥ ३५ शब्दोप्यभिलाषमुत्पादयति । अभिलाषात्प्रवृत्तिरिति ॥ ३६ परम्परया प्रवर्तकत्वस्य ॥ ३७ धीमान् ॥ ३८ शब्दस्य निमित्त कारण या सा । सा चासाविच्छा च सैवेच्छा एवभूता यत शब्दोच्चार पुरुषस्य ॥ ३९ स्वेषा वाक्याना प्रभव उत्पत्तिर्यस्या इच्छाया सा चासाविच्छा चेति ॥ ४० विवक्षा धर्मिणी अस्यास्तीति साध्य शब्दोच्चारणान्यथानुपपत्तेरिति ॥

शब्देनामुमर्थं प्रतिपादयामीत्यभिप्रायो विवक्षा । तत्सूचकत्वेन शब्दानामनुमानत्वं तदप्ययुक्तं–व्यभिचारात् । न हि शुकशारिकोन्मत्तादयस्तथाभिप्रायेण वाक्यमुच्चारयन्ति । किञ्च समयानपेक्षं वाक्यं तादृशमभिप्रायं गमयेत्तत्सापेक्षं वा ? आद्यविकल्पे सर्वेषामर्थप्रतिपत्तिप्रसङ्गान्न कश्चिद्भाषानभिज्ञः स्यात् । समयापेक्षस्तु शब्दोऽर्थमेव किं न गमयति ? न ह्ययमर्थाद्बिभेति येन तत्र साक्षान्न वर्तेत । यश्चाशक्यसमयत्वादिकेऽर्थे शब्दाप्रवृत्तौ न्यायः सोऽभिप्रायेपि समान इत्यभिप्रायावगमोपि शब्दान्न स्यात् । तन्न स्वलक्षणस्याभिधानेनानिर्देश्यत्वम् । किञ्च तच्छब्देनाऽप्रतिपाद्याऽनिर्देश्यत्वमस्योच्येत प्रतिपाद्य वा ? न तावद्-प्रतिपाद्याऽतिप्रसङ्गात् । प्रतिपाद्य चेन्न–स्ववचनविरोधात् । शब्देन हि स्वलक्षणं प्रतिपादयता निर्देश्यत्वमस्याभ्युपगतं स्यात् । पुनश्च तदेव प्रतिषिद्धमिति । कथं चानिर्देश्यशब्देनाप्यस्यानभिधानेऽनिर्देश्यत्वसिद्धिः ? भ्रान्तिमात्रात् ततस्तत्सिद्धौ न परमार्थतस्तदनिर्देश्यमसाधारणं वा सिद्ध्येत् । प्रत्यक्षात्तथाभूतस्यास्य प्रसिद्धिरित्यपि मनोरथमात्रं निर्देश्ययोग्यस्य साधारणासाधारणरूपस्य वस्तुनस्तेन साक्षात्करणात् । वस्तुव्यतिरेकेण नापरा निर्देश्यता साधारणता वा प्रतिभातीत्यसाधारणतायामपि समानम् । वस्तुस्वरूपमेव सेत्यन्यत्रापि समानम् । किञ्च विकल्पप्रतिभास्यऽन्यापोहगता वाच्यता वस्तुनि प्रतिषिध्यते वस्तुगता वा ? आद्यविकल्पे सिद्धसाध्यता । न ह्यन्यापोहवाच्यतैव वस्तुवाच्यता–तत्प्रतिषेधविरोधात् । द्वितीयपक्षे तु स्ववचनविरोध इत्युक्तम् । ततः प्रामाणिकत्वमात्मनोऽभ्युपगच्छता प्रतीतिसिद्धा वाच्यतार्थस्याभ्युपगन्तव्या ।

सत्यं, वाच्य एवार्थः । तद्वाचकस्तु पदादिस्फोट एव, न पुनर्वर्णाः । ते हि किं समस्ता व्यस्ता वा तद्वाचकाः ? यदि व्यस्तास्तदैकेनैव वर्णेन गवाद्यर्थप्रतिपत्तिरुत्पादितेति द्वितीयादिवर्णोच्चारणमनर्थकम् । अथ समुदितास्तन्न क्रमोत्पन्नानामनन्तरविनष्टत्वेन समुदायस्यैवासम्भवात् । न च युगपदुत्पन्नानां तेषां समुदायकल्पना–एकपुरुषापेक्षया युगपदुत्पत्त्यसम्भवात्, प्रतिनियतस्थानकरणप्रयत्नप्रभवत्वात्तेषाम् । न च भिन्नपुरुषप्रयुक्तगकारौकारविसर्जनीयानां समुदायेप्यर्थप्रतिपादकं प्रतिपन्नं–प्रतिनियतवर्णक्रमे प्रतिपत्त्युत्तरकालभावित्वेन शाब्दप्रतिपत्तेः प्रतिभासनात् । न चान्त्यो वर्णः पूर्ववर्णानुगृहीतो वर्णानां क्रमोत्पादे सत्यर्थप्रतिपादकः–

---

१ अस्येवविधोभिप्रायोस्ति तदभिधायकशब्दोच्चारणादिति ॥ २ समय =सकेत ॥ ३ स्वैतया ॥ ४ अविशेषत ॥ ५ क्वचिद्देशादौ ॥ ६ सकलभाषात्मकशब्दश्रवणात् ॥ ७ द्वितीयविकल्प ॥ ८ अर्थानामानन्त्यात् ॥ ९ अभिप्रायाणामानन्त्यात् ॥ १० शब्दश्रोतृणाम् ॥ ११ अशक्यसमयत्वाविशेषात् ॥ १२ सामान्यविशेषात्मकस्यार्थस्य ॥ १३ शब्देन ॥ १४ स्वलक्षणेति शब्देन ॥ १५ घटादेरप्यनिर्देश्यत्वप्रसङ्गात् ॥ १६ इति ॥ १७ इद स्वलक्षणमनिर्देश्यमिति अकथने ॥ १८ स्वलक्षणस्य ॥ १९ निर्विकल्पकात् ॥ २० शब्देन ॥ २१ स्वलक्षणव्यतिरेकेण साधारणतापि पृथक् नो भातीति ॥ २२ निर्देश्यताया साधारणताया च ॥ २३ वस्तुस्वरूपत्वम् ॥ २४ बुद्धि ॥ २५ शब्देन ॥ २६ स्वलक्षणे ॥ २७ स्वलक्षणमनिर्देश्यमित्यनेनोल्लेखेन ॥ २८ बुद्धिप्रतिबिम्बरूपस्यान्यापोहगतस्य ( वाच्यत्वस्य ) स्वलक्षणेऽस्माभिरपि प्रतिषेधाभ्युपगमात् ॥ २९ वस्तुनि अन्यापोहवाच्यता विद्यते चेन्न तर्हि प्रतिषेध । कथमिति विरोध ॥ ३० शब्देन हीत्यादि ॥ ३१ शब्देन ॥ ३२ लब्धावसरो मीमांसकोऽवतिष्ठते ॥ ३३ शब्दै ॥ ३४ वर्णादिनाभिव्यज्यमानो नित्यो व्यापक पदादीनामर्थं पदादिस्फोट ॥ ३५ तदेव भावयति ॥ ३६ गौरित्यत्र गकारौकारविसर्जनीया ॥ ३६ गकारादिना ॥ ३७ हेतो ॥ ३८ औकारादि ॥ ३९ उत्पत्ते ॥ ४० तात्वादि ॥ ४१ क्रिया ॥ ४२ विसर्जनीयलक्षण ॥ ४३ गकारौकाराभ्याम् ॥

पूर्ववर्णानामन्त्यवर्णं प्रत्यनुग्राहकत्वायोगात् । तद्ध्यन्त्यवर्णं प्रति जनकत्वं तेषां स्यादर्थज्ञानोत्पत्तौ सहकारित्वं वा[1] न तावज्जनकत्वं–वर्णाद्वर्णोत्पत्तेरभावात्–प्रतिनियतस्थानकरणादिप्रभवत्वात्तस्य, वर्णाभावेप्याद्यवर्णोत्पत्त्युपलम्भाच्च । नाप्यर्थज्ञानोत्पत्तौ सहकारित्वं तेषामन्त्यवर्णानुग्राहकत्वमविद्यमानानां[3] सहकारित्वस्यैवासम्भवात् । यथा चान्त्यवर्णं प्रति पूर्ववर्णाः सहकारित्वं न प्रतिपद्यन्ते तथा तज्जनितसंवेदनान्यपि, तत्प्रभवसंस्काराश्च । किंच संवेदनप्रभवसंस्काराः स्वोत्पादकविज्ञानविषयस्मृतिहेतवो, नार्थान्तरे ज्ञानमुत्पादयितुं समर्थाः । न खलु घटज्ञानप्रभवः संस्कारः पटे स्मृतिं विदधद्दृष्टः । न च तत्संस्कार[11]प्रभवस्मृतीनां तत्सहायता तासां युगपदुत्पत्त्यभावात् । अयुगपदुत्पन्नाना चावस्थित्यसम्भवात्[12] । न[13] चाखिलसंस्कारप्रभवैका स्मृतिः सम्भवति–अन्योन्यविरुद्धानेकार्थानुभवप्रभवसंस्काराणामप्येकस्मृतिजनकत्वप्रसङ्गात् । न चान्त्यवर्णोऽनपेक्ष एव गौरित्यत्रान्त्यो वर्णोऽर्थे प्रतिपादकः पूर्ववर्णोच्चारणवैयर्थ्यानुषङ्गात् । घटशब्दान्त्यव्यवस्थितस्यापि ककुदादिमदर्थप्रतिपादकत्वप्रसङ्गाच्च । तत्र वर्णाः समस्ता व्यस्ता वार्थप्रतिपादकाः सम्भवन्ति । अस्ति च गवादिशब्देभ्योऽर्थप्रतीतिः । तदन्यथानुपपत्त्या वर्णव्यतिरिक्तोऽर्थप्रतीतिहेतुः स्फोटोऽभ्युपगन्तव्यः । श्रोत्रविज्ञाने चासौ निरवयवोऽक्रमः प्रतिभासते–श्रवणव्यापारानन्तरमभिन्नार्थावभासिन्याः संविदोऽनुभवात् । न चासौ वर्णविषया वर्णानां परस्परव्यावृत्तरूपतयैकप्रतिभासजनकत्वविरोधात् । न चेयं सामान्यविषया वर्णत्वव्यतिरेकेणापरसामान्यस्य गकारौकारविसर्जनीयेष्वसम्भवात्, वर्णत्वस्य च प्रतिनियतार्थप्रत्यायकत्वायोगात् । न चेयं भ्रान्ता अबाध्यमानत्वात् । न चाबाध्यमानप्रत्ययगोचरस्यापि स्फोटस्यासत्त्वमवयविद्रव्यादेरप्यसत्त्वप्रसङ्गात् । नित्यश्चासौ स्फोटोऽभ्युपगन्तव्यः। अनित्यत्वे सङ्केतकालानुभूतस्य तदैव ध्वस्तत्वात्कालान्तरे देशान्तरे च गोशब्दश्रवणात्ककुदादिमदर्थप्रतीतिर्न स्यादसङ्केतिताच्छब्दादर्थप्रतिपत्तेरसम्भवात् । सम्भवे वा द्वीपान्तरादागतस्य गोशब्दाद्वार्थप्रतिपत्तिः स्यात्, सङ्केतकरणवैयर्थ्यं चासज्येत ।

अत्र प्रतिविधीयते । प्रतीयमानात्पूर्ववर्णध्वंसविशिष्टादन्त्यवर्णादर्थप्रतीतेरभ्युपगमादुक्तदोषाभावः । न चाभावस्य सहकारित्वं विरुद्धं–वृन्तफलसंयोगाभा-

---

१ उत्पद्य विनष्टत्वात्पूर्ववर्णानाम् ॥ २ आद्यो गकार ॥ ३ असता पूर्ववर्णानाम् ॥ ४ उत्पत्त्यनन्तर विनष्टत्वात् ॥ ५ ( पूर्ववर्णाना ) धारणारूपा ॥ ६ अन्त्यवर्णश्रवणकाले प्राक्तनवर्णसंवेदनसंस्काराभावात् ॥ ७ पूर्ववर्णानाम् ॥ ८ पूर्ववर्णज्ञान ॥ ९ पूर्ववर्णलक्षण ॥ १० बहिरर्थे गवादौ ॥ ११ पूर्ववर्णस्मृतीनाम् ॥ १२ प्राक्तनप्राक्तनाना विनष्टत्वात् ॥ १३ सर्वेषामेका स्मृतिर्भविष्यतीत्युक्ते आह ॥ १४ अन्त्यवर्णसहाया ॥ १५ घटपटलकुटशकटादि ॥ १६ अन्त्यवर्णापेक्षया अन्यवर्णौ=गकारौकारौ ॥ १७ विसर्जनीयस्य ॥ १८ गोरूप ॥ १९ मा भवन्त्वित्युक्ते आह ॥ २० स्फोट विना ॥ २१ निरश ॥ २२ अभिन्न –एक ॥ २३ अर्थ स्फोटेन ॥ २४ एकार्थेनावभासिन्या ॥ २५ अभिनरूप ॥ २६ एकज्ञानसूचक ॥ २७ गवादे ॥ २८ स्फोट एव प्रतिनियतार्थप्रत्यायको यत ॥ २९ अर्थ =गोलक्षण । तस्य । ककुदादिमतोर्थस्य च ॥ ३० घ ( घटवाचकघटशब्दे ) कारादावपि वर्णत्वस्य सत्त्वात् ॥ ३१ श्रोत्रप्रत्यक्षज्ञानेन ॥ ३२ प्रत्यक्षज्ञानगोचरस्य घटादे ॥ ३३ स्फोटस्य ॥ ३४ स्फोटात् ॥ ३५ गोरहितात् ॥ ३६ तथा च ॥ ३७ श्रूयमाणात् ॥ ३८ वाक्यपक्षे वर्णस्थाने पद ग्राह्यम् ॥ ३९ जैनै ॥ ४० पूर्ववर्णोच्चारणादिवैयर्थ्यलक्षण उक्तदोप ॥

वस्याप्रतिबद्धगुरुत्वफलप्रपातक्रियाजनने तद्दर्शनात्। दृष्टं चोत्तरसंयोगं कुर्वत्प्राक्तनसंयोगाभावविशिष्टं[4] कर्म। परमाण्वग्निसंयोगश्च परमाणौ तद्गतपूर्वरूपप्रध्वंसविशिष्टो रक्ततामुत्पादयन्प्रतीतः। यद्वा पूर्ववर्णविज्ञानाभावविशिष्टस्तज्ज्ञानजनितसंस्कारसव्यपेक्षो वाऽन्त्यो वर्णोऽर्थप्रतीत्युत्पादकः। ननु संस्कारस्य कथं विपर्यान्तरे विज्ञानजनकत्वमित्यप्यचोद्यं तद्भावभावितयार्थप्रतीतेरुपलब्धेः। पूर्ववर्णविज्ञानप्रभवसंस्कारश्च प्रणालिकयाऽन्त्यवर्णसहायतां प्रतिपद्यते। तथा हि। प्रथमवर्णे तावद्विज्ञानम्। तेन च संस्कारो जन्यते। ततो द्वितीयवर्णविज्ञानम्। तेन च पूर्वज्ञानाहितसंस्कारसहितेन विशिष्टः संस्कारो जन्यते। एवं तृतीयादावपि योजनीयं, यावदन्त्यः संस्कारोऽर्थप्रतिपत्तिजनकान्त्यवर्णसहायः। अथ वा शब्दार्थोपलब्धिनिमित्तक्षयोपशमप्रतिनियमादविनष्टा एव पूर्ववर्णसंविदस्तत्संस्कारांश्चाऽन्त्यवर्णसंस्कारं विदधति। तथाभूतसंस्कारप्रभवस्मृतिसव्यपेक्षो वान्त्यो वर्णः पदार्थप्रतिपत्तिहेतुः। वाक्यार्थप्रतिपत्तावप्ययमेव न्यायोऽङ्गीकर्त्तव्यः। वर्णाद्वर्णोत्पत्त्यभावप्रतिपादनं च सिद्धसाधनमेव। तदेवं यथोक्तसहकारिकारणसव्यपेक्षादन्त्यवर्णादर्थप्रतिपत्तेरन्वयव्यतिरेकाभ्यां निश्चयात् स्फोटपरिकल्पनाऽसम्भव एव तदभावेप्यर्थप्रतिपत्तेरुक्तप्रकारेण सम्भवेऽन्यथानुपपत्तेः प्रक्षयात्। न खलु दृष्टादेव कारणात्कार्योत्पत्तावदृष्टकारणान्तरपरिकल्पनायुक्तिः सङ्गताऽतिप्रसङ्गात्। न चैवं वादिनो वर्णेभ्यः स्फोटाभिव्यक्तिर्घटते। तथा हि। न समस्तास्ते स्फोटमभिव्यञ्जयन्ति उक्तप्रकारेण तेषां सामस्त्यासम्भवात्। नापि प्रत्येकं वर्णान्तरोच्चारणानर्थक्यप्रसङ्गात्। एकेनैव वर्णेन सर्वात्मनाऽस्याभिव्यक्तत्वात्। पदार्थान्तरप्रतिपत्तिव्यवच्छेदार्थं तदुच्चारणमिति चेन्न तदुच्चारणेपि तत्प्रतिपत्तेरेवानुषङ्गात्। यथा हि गौरिति पदस्यार्थो गकारोच्चारणात्प्रतीयते तथौकारोच्चारणादौशनस इति पदार्थोपि। तथा च गौरिति पदादेव गौरौशनस इत्यर्थद्वयं प्रतीयेत। संशयो वा स्यात्। किमेकपदस्फोटाभिव्यक्तये गाद्यनेकवर्णोच्चारणं पदान्तरस्फोटव्यवच्छेदेन किं वानेकपदस्फोटाभिव्यक्तयेऽनेकगाद्यवर्णोच्चारणमिति। न च पूर्ववर्णैः स्फोटस्य संस्कारेऽन्त्यो वर्णस्तस्याभिव्यञ्जकः। इति न वर्णान्तरोच्चारणवैयर्थ्यमभिव्यक्तिव्यतिरिक्तसंस्कारस्वरूपानवधारणात्। न खलु तत्र तैर्वेगाख्यः संस्कारो निर्वर्त्त्यते तस्य मूर्तेष्वेव भावात्। नापि वासनारूपोऽचेतनत्वात्। स्फोटस्य तच्चैतन्याभ्युपगमे वा

---

१ शाखादिना ॥ २ वस ॥ ३ तस्य कारणत्वस्य ॥ ४ श्येनादे ॥ ५ गमनक्रिया ॥ ६ कृष्णादिरूप ॥ ७ घटादौ ॥ ८ पक्षेऽन्त्यपदम् ॥ ९ पूर्ववर्णानाम् ॥ १० गोपिण्डे ॥ ११ प्रवाहेण ॥ १२ पक्षे प्रथमपदे ॥ १३ समुत्पद्यते ॥ १४ उभयविषय । धारणाऽपरनामक ॥ १५ भवति ॥ १६ द्रव्यत्वस्वरूपापेक्षया ॥ १७ ये अविनष्टा ॥ १८ तत सस्कारस्य सव्यपेक्षोऽन्त्यवर्णोऽर्थप्रतीतिजनक इति ॥ १९ परेण ॥ २० जैनानाम् ॥ २१ उक्तप्रकारे ॥ २२ ताल्वादि ॥ २३ अन्त्यवर्णसद्भावेऽर्थप्रतिपत्तिस्तदभावेऽर्थप्रतिपत्त्यभाव इत्येवम् ॥ २४ स्फोटसद्भावेऽर्थप्रतिपत्ति स्फोटाभावे च तदभाव इति । स्फोटानुमापिकाया ॥ २५ दृष्टाग्निकारणाद्धूमो जलकार्यं स्यात् ॥ २६ समस्तेभ्यो व्यस्तेभ्यो वा वर्णेभ्योऽर्थप्रतीतिर्नास्तीत्येव वादिन ॥ २७ गौरित्यत्र गोभिव्यक्तस्फोटप्रतिपन्नार्थाद्गोलक्षणादन्यपदाभिव्यक्तस्फोटप्रतिपन्नार्थोऽर्थान्तरम् । प्रकृता त्पदार्थादन्य पदार्थ पदार्थान्तरम् ॥ २८ घटादिपदस्फोट ॥ २९ पदार्थप्रतिपत्तिं दर्शयन्त्याचार्या ॥ ३० एकस्य गकारस्य ॥ ३१ उशनसि शब्दे भव औशनस शुक्र इत्यर्थ ॥ ३२ कुला ॥ ३३ हेतो ॥ ३४ उत्तरवर्ण ॥ ३५ कथम् ? तथा हि ॥ ३६ वर्णे ॥ ३७ पदार्थेषु ॥ ३८ वासनायाश्चेतनत्वात् ॥

स्वशास्त्रविरोधः । नापि स्थितस्थापको[1]ऽस्यापि मूर्त्तद्रव्यवृत्तित्वात्स्फोटस्य चाऽमूर्त्तत्वाभ्युपगमात्[3] । किञ्चासौ संस्कारः स्फोटस्वरूपस्तद्धर्मो वा? तत्राद्यविकल्पोऽयुक्तः स्फोटस्य वर्णोत्पाद्यत्वानुषङ्गात्[4] । द्वितीयविकल्पोऽसम्भाव्यो व्यतिरिक्ताव्यतिरिक्तविकल्पानुपपत्तेः । स्फोटात्तस्याव्यतिरेके तत्करणे स्फोट एव कृतो भवेत् । तथा चास्याऽनित्यत्वानुषङ्गात् स्वाभ्युपगमविरोधः । ततस्तद्धर्मस्य व्यतिरेके सम्बन्धानुपपत्तिस्तदनुपकारकत्वात्[5] । तस्योपकाराभ्युपगमे[6] व्यतिरिक्ताऽव्यतिरिक्तविकल्पानुषङ्गः । तत्रापि पूर्वोक्त एव दोषोऽनवस्थाकारी । न च व्यतिरिक्तधर्मसद्भावेपि[9] स्फोटस्यानभिव्यक्तस्वरूपापरित्यागे पूर्ववदर्थप्रतिपत्तिहेतुत्वम्[10][11][12] । तत्त्यागे चाऽनित्यत्वप्रसक्तिः[13] । किञ्च पूर्ववर्णैः संस्कारः स्फोटस्य क्रियमाणः किमेकदेशेन क्रियते सर्वात्मना वा? यद्येकदेशेन तदा तद्देशानामप्यतोर्थान्तरानर्थान्तरपक्षयोः पूर्वोक्तदोषानुषङ्गः । सर्वात्मना तु संस्कारे[14] सर्वत्र सर्वेषां[15] ततोऽर्थप्रतिपत्तिः स्यात्[16] । किञ्च स्फोटसंस्कारः स्फोटविषयसंवेदनोत्पादनमावरणापनयनं वा? यद्यावरणापनयनं तदैकत्रैकदावरणापगमे सर्वदेशावस्थितेः सर्वदा व्यापिनित्यतयोपलभ्येत—नित्यव्यापित्वाभ्यामपगतावरणस्यास्य सर्वत्र सर्वदोपलभ्यस्वभावत्वात्[21] । अनुपलभ्यस्वभावत्वे वा न क्वचित्कदाचित्केनचिदप्युपलभ्येत । अथैकदेशेनावरणापगमः[22] क्रियते । नन्वेवमावृतानावृतत्वेन सावयवत्वमस्यानुपज्येत[23] । अथाऽविनिर्भागत्वादेकत्रानावृतः सर्वत्रानावृतोऽभ्युपगम्यते तर्हि तद्देशस्थोऽशेषदेशावस्थितैरुपलब्धिप्रसङ्गः । यथा च निरवयवत्वादेकत्रानावृतः सर्वत्रानावृतः तथैकत्रावृतः सर्वत्राप्यावृत इति मनागपि नोपलभ्येत । अथ स्फोटविषयसंवेदनोत्पादस्तत्संस्कारः, सोप्ययुक्तो—वर्णानामर्थप्रतिपत्तिजननवत् स्फोटप्रतिपत्तिजननेपि सामर्थ्यासम्भवान्यायस्य समानत्वात् । अथ मतं[33] "पूर्ववर्णश्रवणज्ञानाहितसंस्कारस्यात्मनोऽन्त्यवर्णश्रवणज्ञानानन्तरं पदादिस्फोटस्याभिव्यक्तेरयमदोषस्तदप्यसङ्गतं पदार्थप्रतिपत्तेरप्येवं प्रसिद्धेः[36] स्फोटपरिकल्पनानर्थक्यात् । चिदात्मव्यतिरेकेण[37] तत्त्वान्तरस्यास्यार्थप्रकाशनसामर्थ्यासम्भवाच्च । स एव हि चिदात्मा विशिष्टशक्तिः स्फोटोऽस्तु । स्फुटति[38] प्रकटीभवत्यर्थोस्मिन्निति[39] स्फोटश्चिदात्मा । पदार्थज्ञानावरणवीर्यान्तरायक्षयोपशमविशिष्टः पदस्फोटः[40][41] । वाक्यार्थज्ञा-

---

१ मीमासक ॥ २ स्थितस्थापकरूपस्य ॥ ३ मीमासकेन ॥ ४ तथा च स्फोटनित्यत्वव्याघात ॥ ५ स्फोटेन सह ॥ ६ स्फोटधर्मलक्षणसस्कारेण स्फोटस्योपकार क्रियते ॥ ७ परेण ॥ ८ स्फोटात् ॥ ९ धर्मं =सस्कार ॥ १० सस्कारात्पूर्वं यथाऽकृतसस्कारस्य स्फोटस्यार्थप्रतिपत्तिहेतुत्व नास्ति ॥ ११ घटते ॥ १२ अन्यथा ॥ १३ स्फोटोऽनित्य पूर्वाकारपरित्यागात् घटाकारपरिणतमृत्पिण्डवत् ॥ १४ स्फोटस्य ॥ १५ प्राणिनाम् ॥ १६ व्यापकत्वनित्यत्वात् ॥ १७ प्रतिपत्तॄणाम् ॥ १८ एकस्थानेक ॥ १९ स्फोटकाले ॥ २० नरेण ॥ २१ नित्यव्यापिन सदैकस्वभावत्वात् ॥ २२ न सर्वात्मना ॥ २३ ततश्च निरंशत्वव्याघात । स्फोटो न निरंश आवृताऽनावृतदेशत्वात् ॥ २४ निरंशत्वात् ॥ २५ मीमासकेन ॥ २६ पूर्ववत् ॥ २७ नृभि ॥ २८ ईषत् ॥ २९ स्फोट ॥ ३० प्रथमपक्ष ॥ ३१ पुरुष प्रति ॥ ३२ समस्ता व्यस्ता वा वर्णा स्फोटप्रतिपत्तिं जनयन्तीत्यादिप्रकारेण ॥ ३३ मीमांसकस्य तव ॥ ३४ जनित ॥ ३५ पुरुषस्य ॥ ३६ तथा च ॥ ३७ ज्ञान ॥ ३८ कथम्? तथा हि ॥ ३९ हेतो ॥ ४० आत्मा ॥ ४१ भवति ॥ ४२ कथमिदानीं द्वैविध्यमस्य स्यादित्याशङ्कायामाह ॥

नावरणवीर्या[1]न्तरायक्षयोपशमविशिष्टस्तु[2] वाक्यस्फोटः । इति[3] भावश्रुतज्ञानपरिणतस्यात्मनस्तथाभिधानाऽविरोधात् । वायवः[4] स्फोटाभिव्यञ्जका इत्यप्ययुक्तं शब्दाभिव्यक्तिवत्स्फोटाभिव्यक्तेस्तेभ्योऽनुपपत्तेः । तेषां च व्यञ्जकत्वे[6] वर्णकल्पनावैफल्यं स्फोटाभिव्यक्तावर्थप्रतिपत्तौ चामीषामनुपयोगात्[7] । स्थिते[8] च स्फोटस्य वर्णवायूत्पादात्पूर्वं सद्भावे वर्णानां वायूनां वा व्यञ्जकत्वं परिकल्प्येत । न चास्य सद्भावः कुतश्चित्प्रमाणात्प्रतिपन्नः । यच्चोक्तं "नादेनाऽहितबीजायां[10] अन्त्येन ध्वनिना[11] सह । आवृत्तिपरिपाकायां[12][13] बुद्धौ[14] शब्दो[15]ऽवभासते" इति तदप्येतेना[16]पाकृतम् । नित्यत्व[17]मन्तरेणापि चार्थप्रतिपत्तिर्यथा भवति तथा प्रतिपादितमेव[18] । यच्च श्रवणव्यापारानन्तरमित्याद्यु[19]क्तं तदप्यसारं घटादिशब्देषु परस्परव्या[20]वृत्तकालप्रत्या[21]सत्तिविशिष्टवर्णव्यतिरेकेण स्फोटात्मनोऽर्थप्रकाशकस्यैकस्याध्यक्षप्रतिपत्तिविषयत्वेनाप्रतिभासनात् ।

[22]न चाभिन्न[23]प्रतिभासमात्रादभिन्नार्थव्यवस्थाऽन्यथा दूरादविरलानेकतरुषु[25] एकप्रतिभासादेकत्वव्यवस्था स्यात् । न चास्य बाध्यमा[24]नत्वान्नैकत्वव्यवस्थापकत्वं स्फोटप्रतिभासेपि बाध्यमानत्वस्य प्रदर्शितत्वात् । न खलु निरवयवोऽक्रमो नित्यत्वादिधर्मोपेतो[26]ऽसौ क्वचिदपि प्रत्ययेऽवभासते । कथं चैवं शब्दस्फोटवद्गन्धादि[27]स्फोटोप्यऽर्थप्रतीतिनिमित्तं न स्यात्[28] । यथैव हि शब्दः कृ[29]तसङ्केतस्य क्वचिदर्थे प्रतिपत्तिहेतुस्तथा गन्धादिर[30]प्यविशेषात् । एवंविधमेकं[31] गन्धं समाघ्राय स्पर्शं च संस्पृश्य रसं चास्वाद्य रूपं चालोक्य त्वयैवंविधोर्थः प्रतिपत्तव्य इति समयग्राहिणां पुनः क्वचित्तादृशगन्धाद्युपलम्भात्तथा[33]विधार्थनिर्णयप्रसिद्धो गन्धादिविशेषाभिव्यङ्ग्यो गन्धादिस्फोटोऽस्तु विशेषाभिव्यङ्ग्यपदादिस्फोटवत् । एतेन[34] हस्तपादकरणमात्रिकाङ्गहारादिस्फोटोप्यापादितो द्रष्टव्यः । पदादिस्फोट एव, न तु स्वाव[35]यवक्रियाविशेषाभिव्यङ्ग्यो[36] हंसपक्षमादिर्हस्तस्फोटो, विकुट्टि[37]तादिलक्षणः पादस्फोटो, हस्तपादसमा[38]योगलक्षणः करणस्फोटः, करणद्वयरूपो मात्रिकास्फोटो, मात्रिका-

---

१ वीर्यं शक्ति ॥ २ आत्मा ॥ ३ तथाभिधाने विरोधो भविष्यतीत्यत्राह ॥ ४ वर्णा मा भवन्तु किन्तु ॥ ५ कुत ॥ ६ स्फोटस्य ॥ ७ उपकाराभावात् ॥ ८ सति ॥ ९ पूर्ववर्णेन वायुना वा ॥ १० बीज सस्कार ॥ ११ अन्त्यवर्णेन वायुना वा ॥ १२ आवृत्ति सामस्त्येनोच्चारणम् ॥ १३ पूर्णायाम् ॥ १४ ज्ञाने ॥ १५ स्फोट ॥ १६ वायुभ्य स्फोटाभिव्यक्तिनिराकरणेन ॥ १७ अनित्येभ्यो वर्णेभ्य कथ स्यादर्थप्रतिपत्तिरित्युक्ते सत्याह ॥ १८ पूर्वं वर्णविचारे ॥ १९ परेण ॥ २० घकारात् टकारो व्यावृत्त इत्यादिप्रकारेण ॥ २१ पूर्वक्षणे घकारोच्चारणमुत्तरक्षणे टकारोच्चारणमिति ॥ २२ यद्यपि घटादिशब्देषु परस्परव्यावृत्तकालप्रत्यासत्तिविशिष्टवर्णव्यतिरेकेण स्फोट प्रत्यक्षविषयत्वेन नावभासते तथापि अभिन्नप्रतिभासोस्ति । ननु तत स्फोटव्यवस्था भविष्यतीत्याशङ्कायामाह ॥ २३ शब्देषु स्फोटस्य ॥ २४ समीप गते सति ॥ २५ अनेकतरुप्रतीत्या ॥ २६ स्फोट ॥ २७ श्रवणेन्द्रियविषयभूते शब्दे शब्दस्यार्थप्रतिपादकत्वाभावादर्थप्रतिपत्त्यर्थं स्फोटकल्पने 'घ्राणेन्द्रियादिविषयेषु गन्धादिषु तदर्थं चत्वार स्फोटा कल्पनीयास्तेषामपि तदभावादिति भाव ॥ २८ गन्धादिस्फोटनिराकरणद्वारेण शब्दादिस्फोट निराकुर्वन्तीति भाव ॥ २९ अस्य शब्दस्यायमर्थ इति ॥ ३० जातिकुसुमादीनामन्यादीनामाम्रफलादीना कामिन्यादीना च प्रतिपत्तिहेतु ॥ ३१ अर्थे कृतसकेतस्य ॥ ३२ गन्धादिस्फोटस्य कथ सकेत इत्याशङ्कायामाह ॥ ३३ यथाविध पूर्वं श्रुत ॥ ३४ गन्धादिस्फोटापादनपरेण ग्रन्थेन ॥ ३५ नर्तनसमये नृत्यकारस्य ॥ ३६ अवयवा=हस्तपादादयोऽङ्गुल्यादयश्च ॥ ३७ विकुट्टित भ्रमणम् ॥ ३८ युगपद्व्यापार समायोग ॥

समूहलक्षणोऽङ्गहारस्फोटो वेति मनोरथमात्रं तस्यापि स्वस्वावयवाभिव्यङ्ग्यस्य स्वाभिनेयार्थप्रतिपत्तिहेतोरशक्यनिराकरणत्वात्। तन्निराकरणे वा शब्दस्फोटाभिनिवेशो दूरतः परित्याज्यः आक्षेपसमाधानानामुभयत्र समानत्वात्। ततः शब्दस्फोटस्वरूपस्य विचार्यमाणस्यायोगान्नासौ पदार्थप्रतिपत्तिनिबन्धनं प्रेक्षादक्षैः प्रतिपत्तव्यम्। किन्तु पदं वाक्यं वा तन्निबन्धनत्वेन प्रतिपत्तव्यम्।

किं पुनः पदं वाक्यं वा यन्निबन्धनाऽर्थप्रतिपत्तिरित्यभिधीयते। वर्णानां परस्परापेक्षाणां निरपेक्षः समुदायः पदम्। पदानां तु तदपेक्षाणां निरपेक्षः समुदायो वाक्यमिति। नन्वेवं कथमिदं साधनवाक्यं घटते ? यत्सत्तत्सर्वं परिणामि, यथा घटः, संश्च शब्द इति, तस्मात्परिणामी इत्याकाङ्क्षणात्साकाङ्क्षस्य वाक्यत्वानिष्टेरित्यप्यचोद्यं—कस्यचित्प्रतिपत्तुस्तदनाकाङ्क्षत्वोपपत्तेः। निराकाङ्क्षत्वं हि प्रतिपत्तृधर्मो वाक्येष्वध्यारोप्यते। न पुनः शब्दधर्मस्तस्याचेतनत्वात्। स चेत्प्रतिपत्ता तावतार्थं प्रत्येति, किमित्यपरमाकाङ्क्षेत् ? पक्षधर्मोपसंहारपर्यन्तसाधनवाक्यादर्थप्रतिपत्तावपि निगमनवचनापेक्षायां निगमनान्तपञ्चावयववाक्यादप्यर्थप्रतिपत्तौ परापेक्षाप्रसङ्गान्न क्वचिन्निराकाङ्क्षत्वसिद्धिः। तथा च वाक्याभावान्न वाक्यार्थप्रतिपत्तिः कस्यचित्स्यात्। ततो यस्य प्रतिपत्तुर्यावत्सु परस्परापेक्षेषु पदेषु समुदितेषु निराकाङ्क्षत्वं तस्य तावत्सु वाक्यत्वसिद्धिरिति प्रतिपत्तव्यम्। एतेन प्रकरणादिगम्यपदान्तरसापेक्षश्रूयमाणसमुदायस्य निराकाङ्क्षस्य सत्यभामादिपदवद्वाक्यत्वं प्रतिपादितं प्रतिपत्तव्यम्। यच्चोच्यते "आख्यातशब्दः सङ्घातो जातिः संघातवर्त्तिनी। एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृती। १। पदमाद्यं पदं चान्त्यं पदं सापेक्षमित्यपि। वाक्यं प्रति मतिर्भिन्ना वहुधा न्यायवेदिनाम्। २।" इति, तदप्युक्तिमात्रं—यस्मादाख्यातशब्दः पदान्तरनिरपेक्षः सापेक्षो वा वाक्यं स्यात् ? न तावदाद्यः पक्षः पदान्तरनिरपेक्षस्यास्य पदत्वात्।

---

१ अभिनेय =अनुकरणम् ॥ २ (जैनमतापेक्षया) अवयवक्रियाभिनेयार्थव्यतिरेकेणान्यार्थस्य हस्तपादादिस्फोटलक्षणस्याप्रतिभासनलक्षण आक्षेपस्तर्हि वर्णार्थव्यतिरेकेणान्यस्य स्फोटलक्षणार्थस्याप्रतिभासनमिति समाधानम्। ननु वर्णानामनित्यत्वेनार्थप्रतिपादकत्वायोगात्स्फोट एवार्थप्रतिपत्तिहेतुरित्यभ्युपगन्तव्यम्। तन्न—क्रियाया अप्यनित्यत्वेनाभिनेयार्थप्रतिपादकत्वायोगाद्धस्तादिस्फोटोऽभ्युपगन्तव्य (मीमांसकेन) इति ॥ ३ पदादिस्फोटहस्तादिस्फोटयो ॥ ४ प्रश्ने सति ॥ ५ जैने ॥ ६ पदान्तरगतवर्णनिरपेक्ष ॥ ७ परस्पर ॥ ८ वाक्यान्तरपदात् ॥ ९ निरपेक्षस्य पदसमुदायस्य वाक्यत्वप्रकारेण ॥ १० साध्यसिद्धौ ॥ ११ जैनस्य तव ॥ १२ सर्वं परिणामि सत्त्वादिति योज्यम् ॥ १३ आकाङ्क्षणे वाक्यत्वं कुतो न स्यादित्युक्ते सत्याह साकाङ्क्षस्येति ॥ १४ जैनस्य ॥ १५ व्युत्पन्नस्य यस्य हि प्रतिपत्तुस्तस्मात्परिणामीत्यत्राकाङ्क्षाक्षयस्तदपेक्षया तद्वाक्यं भवत्युक्तवाक्यलक्षणसद्भावात्, नान्यापेक्षया ॥ १६ चेतन ॥ १७ शब्दोऽचेतन इति वचनात् ॥ १८ साधनवाक्यमात्रेण ॥ १९ साध्यार्थम् ॥ २० तर्हीति शेषः ॥ २१ वाक्ये ॥ २२ निराकाङ्क्षत्वसिद्ध्यभावे च ॥ २३ क्वचित् ॥ २४ वाक्याभावाद्वाक्यार्थप्रतिपत्तिर्नास्ति यत ॥ २५ अर्थप्रतिपत्तिमिच्छत पुरुषस्य ॥ २६ वाक्यसिद्धिप्रकारेण ॥ २७ आदिना सामर्थ्यम् ॥ २८ तिष्ठतिभवतीत्यादि ॥ २९ प्रकरणादिगम्यपदान्तरादपरवाक्यान्तरपदस्य ॥ ३० पदसमुदायस्य प्रकरणादिगम्यतिष्ठतीत्यादिपदान्तरसापेक्षस्य वाक्यत्वं यथा तद्वदत्रापि विचारणीयम् ॥ ३१ वाक्यस्य लक्षणान्तरम् ॥ ३२ भवतिगच्छतीत्यादि ॥ ३३ वाक्यम् ॥ ३४ वर्णानाम् ॥ ३५ वर्णत्वलक्षणा ॥ ३६ स्फोट ॥ ३७ वर्णानाम् ॥ ३८ अनुसहति =परामर्श ॥

अन्यथाख्यातपदाभावः स्यात् । द्वितीयपक्षेपि क्वचिन्निरपेक्षोसौ न वा? प्रथमपक्षेऽस्मन्मतप्रसङ्गः । द्वितीयपक्षस्त्वयुक्तः पदान्तरसापेक्षस्याप्यस्य क्वचिन्निरपेक्षत्वाभावे प्रकृतार्थापरिसमाप्त्या वाक्यत्वाऽयोगाद्देवदत्तवाक्यवत् । संघातो वाक्यमित्यत्रापि देशकृतः कालकृतो वा वर्णानां संघातः स्यात्? न तावदाद्यविकल्पो युक्तः क्रमोत्पन्नप्रध्वंसिनां तेषामेकस्मिन्देशेऽवस्थित्या संघातत्वासम्भवात् । द्वितीयविकल्पे तु पदरूपतामापन्नेभ्यो वर्णेभ्योऽसौ भिन्नोऽभिन्नो वा? न तावद्भिन्नोनंशस्तथाविधस्यास्याऽप्रतीतेः, संघातत्वविरोधाच्च वर्णान्तरवत् । अथ तेभ्योऽभिन्नोसौ, किं सर्वथा कथञ्चिद्वा? सर्वथा चेत्कथमसौ संघातः? संघातिस्वरूपवत् । अन्यथा प्रतिवर्णं संघातप्रसङ्गः । न चैको वर्णः संघातो नामातिप्रसङ्गात् । कथञ्चिच्चेज्जैनमतप्रसङ्गः परस्परापेक्षाऽनाकाङ्क्षपदरूपतापन्नवर्णानां कालप्रत्यासत्तिरूपसंघातस्य कथञ्चिद्वर्णेभ्योऽभिन्नस्य जैनोक्तवाक्यलक्षणानतिक्रमात् । साकाङ्क्षान्योन्यानपेक्षाणां तु तेषां वाक्यत्वे प्राक्प्रतिपादितदोषानुषङ्गः । एतेन जातिः संघातवर्त्तिनी वाक्यमित्यपि नोत्सृष्टं–निराकाङ्क्षान्योन्यापेक्षपदसंघातवर्त्तिन्याः सदृशपरिणामलक्षणायाः कथञ्चित्ततोऽभिन्नाया जातेर्वाक्यत्वघटनात् । अन्यथा संघातपक्षोक्ताशेषदोषानुषङ्गः । एकोनवयवः शब्दो वाक्यमित्येतत्तु मनोरथमात्रं तस्याप्रामाणिकत्वात् स्फोटस्यार्थप्रतिपादकत्वेन प्रागेव प्रतिविहितत्वात् । क्रमो वाक्यमित्येतत्तु संघातवाक्यपक्षान्नातिशेते । इति तद्दोषेणैव तद्दुष्टं द्रष्टव्यम् । बुद्धिर्वाक्यमित्यत्रापि भाववाक्यं द्रव्यवाक्यं वा सा स्यात्? प्रथमप्रकल्पनायां सिद्धसाध्यता–पूर्वपूर्ववर्णज्ञानाहितसंस्कारस्यात्मनो वाक्यार्थग्रहणपरिणतस्यान्त्यवर्णश्रवणाऽनन्तरं वाक्यार्थाववोधहेतोर्बुद्ध्यात्मनो भाववाक्यस्याऽस्माभिरभीष्टत्वात् । द्रव्यवाक्यरूपतां तु बुद्धेः कश्चेतनः श्रद्दधीत? प्रतीतिविरोधात् । एतेनानुसंहृतिर्वाक्यमित्यपि चिन्तितं यथोक्तपदानुसंहृतिरूपस्य चेतसि परिस्फुरतो भाववाक्यस्य परामर्शात्मनोऽभीष्टत्वात् । आद्यं पदमन्त्यमन्यद्वा पदान्तरापेक्षं वाक्यमित्यपि नोक्तवाक्याद्भिद्यते परस्परापेक्षपदसमुदायस्य निराकाङ्क्षस्य

१ आख्यातशब्दस्य वाक्यत्वे ॥ २ वाक्यान्तरे ॥ ३ जैन ॥ ४ अस्मदुक्तस्यैव वाक्यलक्षणस्येच्छयाभ्युपगमात् ॥ ५ निरपेक्षत्वात् ॥ ६ पदान्तरे ॥ ७ देवदत्त गामित्यादिवत् ॥ ८ पक्षे ॥ ९ पदाना वा ॥ १० वाक्यम् ॥
११ सकृत् ॥ १२ स्वपुस्तके 'नश' इति पाठो नास्त्येव । पदेभ्यो भिन्न इत्यर्थ ॥ १३ एकस्य वर्णस्य सघातत्व विरुद्ध यथा ॥ १४ वर्ण ॥ १५ सघात सर्वथा सघातिभ्यो वर्णेभ्योऽभिन्नोपि यदि स्यात्तर्हि ॥ १६ अस्तु
इत्युक्ते सत्याह ॥ १७ एकार्थव्यक्तेरपि जातित्वप्रसङ्गात् ॥ १८ एकस्मिन्वर्णे विवर्तमाने ( वर्णसमूहानष्टे सति ) सघातो न निवर्त्तते इति भिन्न । वर्णेभ्यो ( पक्षे पदेभ्य ) भेदेनानुपलभ्यमानत्वादभिन्न ( सघात ) इति
१९ वाक्यान्तरपदेभ्य ॥ २० पदाना परस्परापेक्षाणा निरपेक्ष समुदायो वाक्यमिति ॥ २१ वाक्यान्तरपदेभ्य ॥ २२ सघातो वाक्यमित्येतन्निराकरणपरेण ग्रन्थेन ॥ २३ सर्वेषु वर्णेषु वर्णत्वलक्षणा ॥ २४ श्रोत्रग्राह्यत्वेन
ताल्वादिव्यापारजनितत्वेन वा, न सर्वथा ॥ २५ पदेभ्यो वर्णेभ्यश्च ॥ २६ प्रतिवर्ण वाक्यत्वप्रसङ्गरूप ॥ २७ निरश ॥ २८ स्फोट ॥ २९ एको वर्ण समुत्पद्यते पश्चाद्द्वितीय ततस्तृतीय इत्यादिप्रकारेण वर्णाना क्रम ॥
३० वर्णानाम् ॥ ३१ पक्षे ॥ ३२ जैने ॥ ३३ अचेतनत्वाद्वाक्याना चेतनत्वाद्बुद्धेश्च ॥ ३४ बुद्धिर्वाक्यमित्येतन्निराकरणपरेण ग्रन्थेन ॥ पदरूपतामापन्नाना वर्णाना परामर्शोनुसहृति ॥ ३५ एव ॥ ३६ प्रतिभासमानस्य ॥
३७ 'देवदत्त' इति ॥ ३८ 'गच्छति' इति ॥ ३९ परस्परापेक्षादि इत्यस्मात् ॥

वाक्यत्वप्रसिद्धेः । अन्यथा पदादिसिद्धेरभावानुषङ्गः स्यात् । अन्ये मन्यन्ते 'पदान्येव पदार्थप्रतिपादनपूर्वकं वाक्यार्थाववोधं विदधानानि वाक्यव्यपदेशं प्रतिपद्यन्ते "पदार्थानां तु मूलत्वमिष्टं तद्भावभावतः । पदार्थपूर्वकस्तस्माद्वाक्यार्थोयमवस्थितः" इत्यभिधानात्' तेप्यन्धसर्पविलप्रवेशन्यायेनोक्तवाक्यलक्षणमेवानुसरन्ति अन्योन्यापेक्षानाकाङ्क्ष[क्ष]पदसमुदायस्य वाक्यत्वेन तैरप्यभ्युपगमात् ।

यदि च पदान्तरार्थैरन्वितानां[11]मेव[12]ार्थानां[13] पदै[14]रभिधानात्पदार्थप्रतिपत्तेर्वाक्यार्थप्रतिपत्तिः स्यात् तदा देवदत्त[15]पदेनैव देवदत्तार्थस्य गामभ्याजेत्यादिपदवाक्यार्थैरन्वितस्याभिधानाच्छेष[16]पदोच्चारणवैयर्थ्यम्[17] । प्रथम[18]पद[19]स्यैव च वाक्यरूपताप्रसङ्गः । यावन्ति वा पदानि तावतां वाक्यत्वं यावन्तश्च पदार्थास्तावतां वाक्यार्थत्वं स्यात् । अविवक्षित[20]पदार्थव्यवच्छेदार्थत्वान्न गामित्यादिपदोच्चारणवैयर्थ्यमित्यत्राप्यावृत्त्या[21] वाक्यार्थप्रतिपत्तिः स्यात् प्रथमपदेनाभिहितस्य द्वितीयादिपदाभिधेयैरन्वितस्यार्थस्य द्वितीयादिपदैः पुनः पुनः प्रतिपादनात्[22] । अथ द्वितीयादिपदैः[23] स्वार्थस्य प्रधानभावेन पूर्वोत्तरपदाभिधेयार्थैरन्वितस्याभिधानं नाद्यपदेन[24] । अतो[25]यमदोपस्तर्हि यावन्ति पदानि तावन्तस्तदर्थाः पदान्तराभिधेयार्थान्विताः प्राधान्येन प्रतिपत्तव्या इति तावत्यो वाक्यार्थप्रतिपत्तयः कथं न स्युः ? न ह्यन्त्य[26]पदो[27]च्चारणात्तदर्थस्याशेषपूर्वपदाभिधेयैरन्वितस्य प्रतिपत्तेर्वाक्यार्थाववोधो भवति, न पुनः प्रथमपदोच्चारणात् तदर्थस्यावा[28]न्तरपदाभिधेयैरन्वितस्य[29], द्वितीयादिपदोच्चारणाच्चाऽशेषपदाभिधेयैरन्वितस्य तदर्थस्य प्रतिपत्ते[30]रित्यत्र निमित्तमुत्पश्यामः[31] । अथ[32] 'गम्यमानै[33]स्तैस्तै[34]स्यान्वितत्वं, न पुनरभिधीयमानैः[35] । तेनायमदोपः । किमि[36]दानी[37]मभिधीयमान एव पदस्यार्थः[38] ? तथोपगमे[39] कथमन्विताभिधानं[40]—विवक्षितपदस्य[41] गम्यमानपदान्तरा[42]भिधेयार्थानामविषयत्वात् । अथ पदानां द्वौ

---

२ परस्परापेक्षारहित पद यदि वाक्यम् ॥ २ सर्वस्य पदस्य वाक्यत्वात् ॥ ३ भट्टप्राभाकरा ॥ ४ अवयवार्थप्रतिपत्तिपूर्वकत्वाद्वाक्यार्थप्रतिपत्ते ॥ ५ कारणत्व वाक्यार्थं प्रति ॥ ६ वाक्यार्थस्य ॥ ७ पिपीलिकाद्युपद्रवभयाद्विलपरित्यागे भ्रमित्वा पुनरपि तत्रैव प्रवेशो यथा तथानिच्छया स्वीकारोन्धसर्पविलप्रवेशन्याय ॥ ८ जैनोक्त ॥ ९ वाक्यविचारानन्तर वाक्यार्थं विचारयन्नाह ॥ १० गामित्यादिपदान्तरार्थ ॥ ११ मन्यद्धानाम् ॥ १२ देवदत्तलक्षणोर्थो गामित्यादिपदार्थैरन्वितो गामित्यादिपदार्थाश्च पूर्वोत्तरपदार्थैरन्विता भवन्ति ॥ १३ सर्वथा ॥ १४ केवलैर्देवदत्तादिके ॥ १५ एकेन ॥ १६ गामभ्याज शुक्ला दण्डेनेति ॥ १७ पूर्वपदार्थस्योत्तरपदार्थ सर्वथान्वितत्वात् ॥ १८ तथा च ॥ १९ देवदत्तेति ॥ २० विवक्षिताद् देवदत्त इत्युक्ते गामभ्याज शुक्ला दण्डेनेत्यादिपदार्थादविवक्षितो देवदत्तेत्युक्ते पठ गच्छ याहि पिवेत्यादि पदार्थ तस्य व्यवच्छेदार्थत्वात् ॥ २१ पुन पुन प्रवृत्तिरावृत्ति ॥ २२ एकस्येवार्थस्य ॥ २३ देवदत्तपदापेक्षया गामभ्याज शुक्ला दण्डेनेति पदे ॥ २४ द्वितीयादिपदार्थस्याभिधान प्रधानभावेन ॥ २५ न द्वितीयादिपदार्थस्याभिधान प्रधानभावेन यत ॥ २६ उक्तमेव समर्थयन्ति । सर्वेभ्य पदेभ्यो वाक्यार्थाववोधो भवतीति परस्याभिप्राय मनसि धृत्वा वक्ति जैन ॥ २७ दण्डेनेति ॥ २८ प्रकृतादुच्चार्यमाणात्पदादन्यत्पद पदान्तरम् ॥ २९ प्रतिपत्तेर्वाक्यार्थावबोधो, न पुनरिति । प्राक्तन न पुनरिति पदमत्र सम्बन्धनीयम् ॥ ३० वाक्यार्थाववोधो, न पुनरिति सम्बन्ध ॥ ३१ वय जैना ॥ ३२ पदान्तराभिधेयार्थैरन्वितत्वे आवृत्त्या वाक्यार्थप्रतिपत्तिलक्षणदोषो जायते तन्निरासार्थं पदान्तरार्थाना गम्यमानाभिधेयमानो द्वावर्थाविति परो वदति ॥ ३३ पदान्तरैर्ज्ञायमानैर्गोचरीकृतैरित्यर्थ ॥ ३४ उच्चार्यमाणपदार्थस्य ॥ ३५ उच्यमानैर्द्वितीयादिपदार्थे ॥ ३६ आक्षेप ॥ ३७ एव प्रतिपादनसमये ॥ ३८ ज्ञायमानो न भवति ॥ ३९ परेणाङ्गीकृते सति ॥ ४० पूर्वपदार्थ उत्तरपदार्थैरन्वित इति ॥ ४१ देवदत्तादे ॥ ४२ गामित्यादि ॥

व्यापारौ—स्वार्थाभिधानव्यापारः पदान्तरार्थगमकत्वव्यापारश्च । कथमेवं[2] पदार्थप्रतिपत्तिरावृत्त्यौ[3] न स्यात्पदव्यापारात्प्रतीयमानस्येव गम्यमानस्यापि पदार्थत्वात् । न च पदव्यापारात्प्रतीयमानत्वाविशेषेपि कश्चिदभिधीयमानः कश्चिद्गम्यमान इति विभागो युक्तः । ननु पदप्रयोगः प्रेक्षावता पदार्थप्रतिपत्त्यर्थो वाक्यार्थप्रतिपत्त्यर्थो वाभिधीयेत ? न तावत्पदार्थप्रतिपत्त्यर्थोऽस्य प्रवृत्त्यऽहेतुत्वात् । अथ वाक्यार्थप्रतिपत्त्यर्थस्तदा पदप्रयोगानन्तरं पदार्थे प्रतिपत्तिः साक्षाद्भवतीति तत्र पदस्याभिधानव्यापारः पदार्थान्तरे तु गमकत्वव्यापारः ।' तदप्यसाम्प्रतं—वृक्ष इति पदप्रयोगे शाखादिमदर्थस्यैव प्रतिपत्तेः । तदर्थाच्च प्रतिपन्नात्तिष्ठतीत्यादिपदवाच्यस्य स्थानाद्यर्थस्य सामर्थ्यतः प्रतीतेस्तत्र पदस्य साक्षाद्व्यापाराऽभावतो गमकत्वायोगात् तदर्थस्यैव तद्गमकत्वात् । परम्परया तत्रास्य व्यापारे लिङ्गवचनस्य लिङ्गिप्रतिपत्तौ व्यापारोऽस्तु । तथा च शाब्दमेवानुमानज्ञानं स्यात् । लिङ्गवाचकाच्छब्दाल्लिङ्गस्य प्रतिपत्तेः सैव शाब्दी न पुनस्तत्प्रतिपन्नलिङ्गाल्लिङ्गिप्रतिपत्तिरतिप्रसङ्गात् तर्हि वृक्षशब्दात्स्थानाद्यर्थप्रतिपत्तिर्भवन्ती शाब्दी मा भूत्तत एवास्य स्वार्थप्रतिपत्तावेव पर्यवसितत्वाल्लिङ्गशब्दवत् । किञ्च विशेष्यपदं विशेष्यं विशेषणसामान्येनान्वितं विशेषणविशेषेण वाऽभिधत्ते तदुभयेन वा ? प्रथमपक्षे विशिष्टवाक्यार्थप्रतिपत्तिविरोधः । द्वितीयपक्षे तु निश्चयासम्भवः—प्रतिनियतविशेषणस्य शब्देनानिर्दिष्टस्य स्वोक्तविशेष्येऽन्वयसंशीतेर्विशेषणान्तराणामपि सम्भवात् । वक्तुरभिप्रायात्प्रतिनियतविशेषणस्य तत्रान्वयश्चेन्नयं प्रति शब्दोच्चारणं तस्य वक्त्रभिप्रायाऽप्रत्यक्षतस्तदनिर्णयप्रसङ्गात् , आत्मानमेव प्रति वक्तुः शब्दोच्चारणानर्थक्यात् । तृतीयपक्षे तूभयदोषानुषङ्गः । एतेन क्रियासामान्येन क्रियाविशेषेण तदुभयेन वान्वितस्य साधनस्य साधनसामान्येन साधनविशेषेण तदुभयेन वान्वितायाः प्रतिपादनमाख्यातेन प्रत्याख्यातम् । यदि च पदात्पदार्थे उत्पन्नं ज्ञानं वाक्यार्थाध्यवसायि स्यात्तर्हि चक्षुरादिप्रभवं रूपादिज्ञानं गन्धाध्यवसायि किन्न स्यात् ? अथास्य गन्धादिसाक्षात्कारित्वाभावान्नायं दोषस्तर्हि पदोत्थपदार्थज्ञानस्यापि वाक्यार्थावभासित्वाभावात्कथं तदध्यवसायित्वं स्यात् ? चक्षुरादेर्गन्धादाविव पदस्य वाक्यार्थसम्बन्धानवधारणतः सामर्थ्यानुपपत्तेः । तन्नान्वितौभिधानं

१ द्वितीयादि ॥ २ सति ॥ ३ पुन पुन ॥ ४ केवल देवदत्तपदार्थस्य केवलमभ्याजेति पदार्थस्य चेति ॥ ५ प्रयोजनार्थिना पुसा प्रवृत्तिहेतुर्न भवति । नहि गौरिति शब्दश्रवणात्प्रवृत्तिर्निवृत्तिर्वा घटते ॥ ६ पदप्रयोग ॥
७ गम्ये ॥ ८ ततश्चान्वितत्वमेव शब्दार्थं ॥ ९ वृक्ष इत्यादे ॥ १० वृक्षपदार्थस्य ॥ ११ सामर्थ्यात् ॥ १२ वृक्षशब्दाच्छाखादिमदर्थप्रतिपत्तिस्तस्या सकाशात्स्थानाद्यर्थप्रतिपत्तिरिति परम्परा ॥ १३ वृक्षपदस्य ॥ १४ परेणाङ्गीकृते सति ॥ १५ धूमवचनस्य ॥ १६ लिङ्गी=अग्नि ॥ १७ किंतु न लिङ्गप्रभवम् ॥ १८ शाब्दी ॥ १९ प्रत्यक्षप्रतीतिरिन्द्रियादुत्पद्यमाना शाब्दी स्यात् ॥ २० वृक्षशाखादिमत्यर्थे साक्षाद्व्यापार स्थानाद्यर्थे तु परम्परयेति ॥
२१ शाखादिमदर्थं ॥ २२ यथा लिङ्गवाचक शब्दो धूमप्रतिपत्तौ पर्यवसित सन्नग्निगमको न भवति, धूमस्येव गमकत्वया वृक्षशब्द शाखादिमदर्थस्य वाचको भवति, न पदार्थान्तरगमक ॥ २३ अन्विताभिधानपक्षे दूषणमाह ॥ २४ गामिति कर्तृ ॥ २५ गोलक्षणम् ॥ २६ शुक्लेति ॥ २७ प्रतिनियतविशेषविशिष्ट ॥ २८ शुक्लमिति शब्देन ॥ २९ गामिति शब्देन ॥ ३० सास्नादिमदर्थे गोपिण्डे ॥ ३१ या गौ सा किं शुक्लेन विशिष्टा कृष्णेन वेति ॥ ३२ कृष्णादीनाम् ॥ ३३ शब्देनानिर्दिष्टत्वाविशेषात् ॥ ३४ गामित्यादिकारकपदस्य क्रियाकाङ्क्षित्वे विकल्पत्रयम् ॥ ३५ अभ्याजेत्यादिक्रियापदस्य कारकपदाकाङ्क्षित्वे विकल्पत्रयम् ॥ ३६ वाच्यवाचकलक्षण ॥
३७ पदार्थान्तरैरन्विता अर्था इति ॥

श्रेयः । नाप्यभिहितान्वयो[1]–यतोऽभिहिताः पदै[2]रर्थाः[3] शब्दान्तरादन्वीयन्ते[4][5] बुद्ध्या वा ? न तावदाद्यः पक्षः–शब्दान्तरस्याशेषपदार्थविषयस्याभिहितान्वयनिबन्धनस्याभावात्[6] । द्वितीयपक्षे तु बुद्धिरेव[7] वाक्यं[8] ततो वाक्यार्थप्रतिपत्तेः । न पुनः पदान्येव[9] । ननु पदार्थेभ्योऽपेक्षाबुद्धिसन्निधानात्परस्परमन्वितेभ्यो वाक्यार्थप्रतिपत्तेः परम्परया पदेभ्य एव भावान्नातो व्यतिरिक्तं वाक्यं तर्हि प्रकृत्यादि[10]व्यतिरिक्तं पदमपि मा भूत्–प्रकृत्यादीनामन्वितानां[11]मभिधानेऽभिहितानां वाऽन्वये[12] पदार्थप्रतिपत्तिप्रसिद्धेः । ननु पदमेव लोके वेदे वार्थप्रतिपत्तये प्रयोगार्हं, न तु केवला प्रकृतिः प्रत्ययो वा–पदादपोद्धृत्य[13] तद्व्युत्पादनार्थं[14] यथाकथञ्चित्तदभिधानात् । तदुक्तम् 'अथ[15] गौरित्यत्र कः शब्दः[16] ? गकारौकारविसर्जनीया इति भगवानुपवर्षः[17]' इति । यथैव हि वर्णोऽनंशः प्रकल्पितमात्रा[18]भेदै[19]स्तथा गौरिति पदमप्यनंशमपोद्धृ[20]तौकारादिभेदं स्वार्थ[21]प्रतिपत्तिनिमित्तमवसीयते । इत्यप्यनालोचिताभिधानं–वाक्यस्यैवं[22] तात्त्विकत्वप्रसिद्धेः तद्व्युत्पादनार्थं ततोऽपोद्धृत्य पदाना[23]मुपदेशाद्वाक्यस्यैव लोके शास्त्रे वा[24]र्थप्रतिपत्तये प्रयोगार्हत्वात्[25] । तदुक्तं "द्विधा[26] कैश्चित्पदं भिन्नं[27] चतुर्धा पञ्चधा[28]पि वा । अपोद्धृत्यैव[29] वाक्येभ्यः प्रकृतिप्रत्ययादि[31]वत्" इति । ततः प्रकृत्याद्यवयवेभ्यः कथञ्चिद्भिन्न[32]मभिन्नं[33] च पदं प्रातीतिकमभ्युपगन्तव्यम् । न तु सर्वथाऽनंशं वर्णवत्[34]तद्ग्राहकाभावात् । तद्वत्पदेभ्यः कथञ्चिद्[35]भिन्नमभिन्नं[36] च वाक्यं द्रव्य[37]भाववाक्यभेदभिन्नं प्रोक्त[38]लक्षणलक्षितं प्रतीतिपदमारूढमभ्युपगन्तव्यम् । अलं प्रतीत्यपलापेनेति ।

प्रामाण्यं[39] सुधियो[40] धियो यदि मतं संवादतो निश्चितात्स्मृत्यादेरपि किन्न तन्मत[41]मिदं तस्या[42]ऽविशेषात्स्फुटम् । तत्संख्या[43] परिकल्पितेयमधुना[44] सन्तिष्ठतेऽतः कथं तस्माज्जैनमते मतिर्मतिमतां स्थेयाच्चिरं निर्मले । १ ।

इति श्रीप्रभाचन्द्रदेवविरचिते प्रमेयकमलमार्तण्डे परीक्षामुखालङ्कारे तृतीयः परिच्छेदः ॥ श्रीः ॥

---

१ इति प्राभाकरमत निरस्य भाट्टमतनिरासार्थमाह ॥ २ वाक्यार्थ ॥ ३ देवदत्तादिकैः ॥ ४ एकेन शब्दान्तरेण ॥ ५ परस्पर सम्बध्यन्ते ॥ ६ एकेन पदान्तरेण सर्वेषा पदार्थो ज्ञातो भवेत्तदा तेन कृत्वा सम्बन्धप्रतिपत्तिर्यत ॥ ७ पदपरिज्ञानम् ॥ ८ वाक्यम् ॥ ९ यस ॥ १० आदिपदेन प्रत्यय गत्वादिग्रहणम् ॥ ११ परस्पर सम्बद्धानाम् ॥ १२ क्रियाकारकरूपे विशेषणविशेष्यरूपे च ॥ १३ पृथक्कृत्य ॥ १४ पदनिष्पत्त्यर्थम् ॥ १५ अहो ॥ १६ पदसंज्ञक ॥ १७ (उपवर्षनामाऋषि) प्राह ॥ १८ मात्रा उदात्तादय ॥ १९ वस ॥ २० कल्पित ॥ २१ साक्षादिमदर्थ ॥ २२ उक्तप्रकारेण ॥ २३ पदानि ॥ २४ अर्थ प्रवृत्तिनिवृत्तिलक्षण ॥ २५ न तु गामिति पदेन कस्यचित्प्रवृत्तिर्निवृत्तिर्वा घटते यत ॥ २६ सुबन्त तिङन्त पदमित्यादि ॥ २७ पृथक्कृतम् ॥ २८ नामाऽऽख्यातनिपातकर्मप्रवचनीयभेदेन ॥ २९ उपसर्गाधिकम् ॥ ३० पदानि ॥ ३१ तथया पदादपोद्ध्रियते तथा वाक्येभ्य पदान्यपोद्ध्रियन्ते इति भाव ॥ ३२ पद प्रकृतिर्न भवति, पद च प्रकृतिर्नेति व्यावृत्तिरूपेण ॥ ३३ समुदायरूपेण ॥ ३४ निरशस्य वर्णस्य यथा ग्राहक प्रमाण नास्ति तथाऽनशपदस्य च ॥ ३५ पद वाक्य न भवति, वाक्य च पद न भवतीति व्यावृत्तिरूपेण ॥ ३६ समुदायरूपेण ॥ ३७ वचनात्मक द्रव्यवाक्य, बोधात्मक तु भाववाक्यम् ॥ ३८ पदाना परस्परापेक्षाणा निरपेक्ष समुदायो वाक्यमिति ॥ ३९ सकल परिच्छेदार्थमुपसहरन्नाह ॥ ४० पुस ॥ ४१ प्रामाण्यम् ॥ ४२ सवादस्य ॥ ४३ तस्य–प्रमाणस्य ॥ ४४ स्मृत्यूहादीना प्रामाण्यप्रतिपादनसमये ॥

श्रीः ।

## अथ चतुर्थः परिच्छेदः ॥

अथोक्तप्रकारं प्रमाणं किं निर्विषयं सविषयं वा ? यदि निर्विषयं, कथं प्रमाणं[2], केशोण्डुकादिज्ञानवत्[1] । अथ सविषयं, कोऽस्य विषयः ? इत्याशङ्क्य विषयविप्रतिपत्तिनिराकरणार्थं "सामान्यविशेषात्मेत्याद्याह । तस्य प्रतिपादितप्रकारप्रमाणस्यार्थो विषयः । किंविशिष्टः ? सामान्यविशेषात्मा[3] । कुत एतत्[4] ? अनुवृत्तव्या[5]वृत्तप्रत्ययगोचरत्वात् । यो हि यदाकारोल्लेखि[6]प्रत्ययगोचरः स तदात्मको दृष्टो, यथा नीलाकारोल्लेखिप्रत्ययगोचरो नीलस्वभावोऽर्थः । सामान्यविशेषाकारोल्लेख्यनुवृत्तव्यावृत्तप्रत्ययगोचरश्चाखिलो बाह्याध्यात्मिकप्रमेयोऽर्थः । तस्मात्सामान्यविशेषात्मेति । न केवलमतो हेतोः स तदात्मा । अपि तु पूर्वोत्तरा[7]कारपरिहारावाप्तिस्थिति[8]लक्षणपरिणामेनाऽर्थक्रियोपपत्तेश्च । सामान्यविशेषात्मा तदर्थ इत्यभिसम्बन्धः । कतिप्रकारं सामान्यमित्याह, सामान्यं द्वेधा । कथमिति चेत् तिर्यगूर्ध्वताभेदात् । तत्र तिर्यक्सामान्यस्वरूपं व्यक्ति[9]निष्ठतया सोदाहरणं प्रदर्शयति । सदृशपरिणाम[10]स्तिर्यक् खण्डमुण्डादिषु गोत्ववत् । ननु[11] खण्डमुण्डादिव्यक्तिव्यतिरेकेणापरस्य भवत्कल्पित[12]सामान्यस्याप्रतीतितो गगनाम्भोरुहवदसत्त्वादसाम्प्रतमेवेदं तल्लक्षणप्रणयनमित्यप्यसमीचीनं गौगौरित्याद्यबाधितप्रत्ययविषयस्य सामान्यस्याऽभावासिद्धेः । तथाविधस्याप्यस्यासत्त्वे[13] विशेषस्याप्यसत्त्वप्रसङ्गस्तथाभूत[14]प्रत्ययत्वव्यतिरेकेणापरस्य[15] तद्व्यवस्थानिबन्धनस्या[16]त्रा[17]प्यसत्त्वात् । अबाधितप्रत्ययस्य च विषयव्यतिरेकेणापि सद्भावाभ्युपगमे[18] ततो[19] व्यवस्थाऽभावप्रसङ्गः । न चानुगताकारत्वं[20] बुद्धेर्बाध्यते[22] सर्वत्र देशादा[21]वनुगतप्रतिभासस्याऽस्खलद्रूपस्य तथाभूतव्यवहारहेतोरुपलम्भात् । अतो व्यावृत्ताकारानुभवानधिगतमनुगताकारमवभासयन्त्य[24]ऽबाधितरूपा बुद्धिरनुभूयमानानुगताकारं वस्तुभूतं सामान्यं व्यवस्थापयति । ननु विशेषव्यतिरेकेण नापरं सामान्यं बुद्धिभेदाभावात्[23] । न च बुद्धिभेदमन्तरेण पदार्थभेदव्यवस्थाऽतिप्रसङ्गात् । तदुक्तं "न भेदौ[25] भिन्नमस्त्यन्यत्सामान्यं बुद्ध्यभेदतः[26] । बुद्ध्याकारस्य भेदेन पदार्थस्य विभिन्नता[27]" इति । तदप्यपेशलं सामान्यविशेषयोर्बुद्धिभेदस्य प्रतीतिसिद्धत्वात् ।

---

१ न्यापूर्वेत्यादि ॥ २ ज्ञान धर्मि प्रमाण न भवतीति साध्यो धर्मो निर्विषयत्वात्केशोण्डुकज्ञानवत् ॥ ३ सामान्य च विशेषश्च सामान्यविशेषौ तावात्मानो यस्य स तथोक्त ॥ ४ सिद्धम् ॥ ५ गौगौरित्यादिप्रत्यय अनुवृत्त । श्याम शबलो न भवतीत्यादिप्रत्ययो व्यावृत्तरूप ॥ ६ उल्लेख =प्रतिभास ॥ ७ पूर्वोत्तराकारौ पर्यायौ=विशेष ॥ ८ स्थितिलक्षण द्रव्यमूर्द्धतासामान्यम् । ध्रौव्यमित्यर्थं ॥ ९ विशेषो व्यक्ति ॥ १० सास्नादिमत्त्वेन ॥ ११ सौगत ॥ १२ जैन ॥ १३ परेणाङ्गीक्रियमाणे सति ॥ १४ अबाधितप्रत्ययविषयत्वाविशेषादिति ॥ १५ प्रमाणान्तरस्य ॥ १६ विशिष्टस्थितिकारण व्यवस्था ॥ १७ विशेषसत्त्वेपि ॥ १८ परेण ॥ १९ गौर्गौरिति ॥ २० विशेषणम् ॥ २१ आदिना कालादौ ॥ २२ अनुगताकारत्व बुद्धेर्न बाध्यते यत ॥ २३ इद सामान्यमय विशेष इति ॥ २४ विशेषात् ॥ २५ स्वतन्त्रम् ॥ २६ अभेदे हेतुरयम् ॥ २७ यत ॥

रूपरसादेस्तुल्यकालस्याभिन्नाश्रयवर्तिनोऽप्यत[1] एव भेदप्रसिद्धेः । एकेन्द्रियाध्यवसेयत्वाज्जातिव्यक्त्योरभेदे वातातपादावप्यभेद[3]प्रसङ्गः । तत्रापि हि प्रतिभास-भेदान्नान्यो भेदव्यवस्थाहेतुः । स च सामान्यविशेषयोरप्यस्ति । सामान्यप्रतिभासो ह्यनुगताकारो विशेषप्रतिभासस्तु [6]व्यावृत्ताकारोऽनुभूयते । [7]दूरादूर्ध्व[8]ता-सामान्यमेव च प्रतिभासते, न स्थाणुपुरुषविशेषौ—तत्र सन्देहात् । तत्परिहारेण प्रतिभासनमेव च सामान्यस्य ततो व्यतिरेकस्तल्लक्षणत्वाद्भेदस्य । यदप्युक्तं "ताभ्यां तद्व्यतिरेकश्च किन्नाऽदूरेऽवभासनम् । दूरेऽवभासमानस्य सन्निधानेऽतिभासनम्" तदप्यसुन्दरं विशेषेपि समानत्वात् । सोपि हि यदि सामान्याद्व्यतिरिक्तस्तर्हि दूरे वस्तुनः स्वरूपे सामान्ये प्रतिभासमाने किन्नाव[10]भासते? न हीन्द्रधनुषि नीले रूपे प्रतिभासमाने पीता[11]दिरूपं दूरान्न प्रतिभासते । अथ निकटदेशसामग्री विशेषप्रतिभासस्य जनिका । दूरदेशवर्त्तिनां च प्रतिपत्तॄणां सा नास्तीति न विशेषप्रतिभासस्तर्हि सामान्यप्रतिभासस्य जनिका दूरदेशसामग्री निकटदेशवर्त्तिनां चासौ नास्तीति न निकटे तत्प्रतिभासनमिति समः समाधिः । अस्ति च निकटे सामान्यस्य प्रतिभासनं स्पष्टं विशेषस्य प्रतिभासवत् यादृशं तु दूरे तस्यास्पष्टं प्रतिभासनं तादृशं न निकटे [12]स्वसामग्र्यभावात् । तद्वदेव । न चानुगतप्रतिभासो वहिः साधा[13]रणनिमित्तनिरपेक्षो घटते प्रतिनियत-देशकालाकारतया तस्य प्रतिभासाभावप्रसङ्गात् । न चाऽसाधारणा व्यक्तय एव [14]तन्निमित्तं तासां भेदरूपतयाऽऽविष्ट[15]त्वात् । तथापि तन्निमित्त[16]त्वे कर्का[17]दिव्यक्तीनामपि गौगौरिति बुद्धिनिमित्त[18]त्वानुषङ्गः । न चाऽत[19]त्कार्य[20]कारणव्यावृत्तिरेक[21]प्रत्यवमर्शाद्येकार्थ[22]साधनहेतुरत्यन्त[23]भेदेपीन्द्रियादिव[24]त्समुदितेतर[25]गुडूच्यादिव[26]द्व्यक्तीनामपि गौगौरिति बुद्धिनिमित्तत्वानुषङ्गः । गुडूच्यादिदृष्टान्तोपि त्यभिधातव्यं—सर्वथा समानपरिणामानाधारे [28]वस्तुन्यतत्कार्यकारणव्यावृत्तेरेवासम्भवात् । अनुगतप्रत्ययाद्वस्तुनि [30]प्रवृत्त्यऽभावप्रसङ्गाच्च ।

१ वीजपूरादि ॥ २ अय रस इद रूपमिति वुद्धिभेदात् ॥ ३ एकेन्द्रिया( स्पर्शनेन्द्रिय ) ध्यवसायस्याविशेषात् ॥ ४ अथ वातोऽयमातप इति ॥ ५ गौगौरित्येवम् ॥ ६ अयमस्माद्भिन्न इति ॥ ७ युक्त्यन्तरेण सामान्य व्यवस्थापयति जैन ॥ ८ ऊर्ध्वताकारसदृशसामान्यम् ॥ ९ ऊर्ध्वताकारसामान्यस्य ॥ १० विशेष ॥ ११ इन्द्रधनुषि विद्यमानम् ॥ १२ दूरदेशतादि ॥ १३ समानाकारलक्षणसामान्यपदार्थ ॥ १४ न यदि साधारणनिमित्त सामान्य तन्निमित्तम् ॥ १५ व्यापकत्वात् ॥ १६ परेणाङ्गीकृते ॥ १७ कर्क =श्वेताश्व ॥ १८ व्यक्तीना तन्निमित्तत्वाविशेषात् ॥ १९ या या व्यक्तयस्तास्ता भेदरूपा ॥ २० कार्य च कारण च कार्यकारणे तस्य खण्डादे कार्यकारणे न विद्येते ते अकार्यकारणे यस्याऽसावतत्कार्यकारण कर्कादिस्तस्माद्व्यावृत्ति । दृष्टान्ते समासयुक्तिं दर्शयति । दृष्टान्ते त्वेकेन्द्रियादिरूपे तच्छब्देन विवक्षितेन्द्रियादिरन्यत्र समुदितेतरगुडूच्यादिर्ग्राह्य । वहुव्रीहि-समासकरणानन्तर कर्कादिवदन्या विवक्षितेन्द्रियादिरन्या विवक्षितप्रयोगश्च ग्राह्य । तस्माद्व्यावृत्तिरित्यवसातव्य ॥ २१ कर्कादीनामुत्तरक्षणा कारणानि, तेभ्यो व्यावृत्ति ॥ २२ गौगौरित्यादि ॥ २३ आदिशब्देनैक्य-वहारादिर्ग्राह्य ॥ २४ खण्डादयो विशेषा धर्मिण समानपरिणामरहिता एव एकप्रत्यवमर्शाद्येकार्थसाधनहेतव अतत्कार्यकारणकर्कादिव्यावृत्तित्वादिन्द्रियादिवत् ॥ २५ व्यक्तीनाम् ॥ २६ आदिना—अर्थक्रियो-ग्यतादिग्रहणम् ॥ २७ समुदितेतरगुडूच्यादयो विशेषा समानपरिणामरहिता एव एकप्रत्यवमर्शाद्येकार्थहेतवोऽतत्कार्यकारणाविवक्षितेन्द्रियादिव्यावृत्तित्वाद्यथा ॥ २८ गुण्ड्या ॥ २९ खण्डादिव्यक्तौ ॥ ३० अभावरूपाया व्यावृत्तेर्ज्ञातत्वादनुगतप्रत्ययस्य ॥

साध्यविकलः । न[1] खलु ज्वरोपशमनशक्तिसमानपरिणामाभावे गुडूच्यादयो ज्वरोपशमनहेतवः, न पुनर्दधित्रपुषरसादयोपीति शक्यव्यवस्थम् । चक्षुरादयो वा रूपज्ञानहेतवस्तज्जननशक्तिसमानपरिणामविरहिणोपि न पुना रसादयोपीति निर्निबन्धना व्यवस्थितिः । किञ्चानुगतप्रत्ययस्य सामान्यमन्तरेणैव देशादिनियमेनोत्पत्तौ व्यावृत्तप्रत्ययस्यापि विशेषमन्तरेणैवोत्पत्तिः स्यात् । शक्यं हि वक्तुमभेदाविशेषेप्येकमेव ब्रह्मादिरूपं प्रतिनियतानेकनीलाद्याभासनिबन्धनं भविष्यतीति किमपररूपादिस्वलक्षणपरिकल्पनया । ततो रूपादिप्रतिभासस्येवानुगतप्रतिभासस्याप्यालम्बनं वस्तुभूतं परिकल्पनीयम् । इत्यस्ति वस्तुभूतं सामान्यम् । एककार्यतासादृश्येनैकत्वाध्यवसायो व्यक्तीनामित्यप्यचारु कार्याणामभेदासिद्धेः, वाहदोहादिकार्यस्य प्रतिव्यक्ति भेदात् । तत्राप्यपरैककार्यतासादृश्येनैकत्वाध्यवसायेऽनवस्था । ज्ञानलक्षणमपि कार्यं प्रतिव्यक्ति भिन्नमेव । अनुभवानामेकपरामर्शप्रत्ययहेतुत्वादेकत्वम् । तद्धेतुत्वाच्च व्यक्तीनामित्युपचरितोपचारोपि श्रद्धामात्रगम्योऽनुभवानामप्यत्यन्तवैलक्षण्येनैकपरामर्शप्रत्ययहेतुत्वायोगात् । अन्यथा कर्कादिव्यक्त्यनुभवेभ्योपि खण्डमुण्डादिव्यक्तौ एकपरामर्शप्रत्ययस्योत्पत्तिः स्यात् । अथ प्रत्यासत्तिविशेषात्खण्डमुण्डाद्यनुभवेभ्य एवास्योत्पत्तिर्नान्यतः । ननु प्रत्यासत्तिविशेषः कोन्योऽन्यत्र समानाकारानुभवात्, एकप्रत्यवमर्शहेतुत्वेनाभिमतानां निर्विकल्पकबुद्धीनामप्रसिद्धेश्च । अतोऽयुक्तमेतत् "एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी । एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता" इति । ततोऽबाधबोधाधिरूढत्वात्सिद्धं सदृशपरिणामरूपं वस्तुभूतं सामान्यम् । तस्याऽनभ्युपगमे "नो चेद्भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् । शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनादित्यस्य, अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपताम् । तस्मात्प्रमेयोऽधिगतेः प्रमाणं मेयरूपता' इत्यस्य च विरोधानुषङ्गः । तच्चाऽनित्यासर्वगतस्वभावमभ्युपगन्तव्यं नित्यसर्वगतस्वभावत्वेऽर्थक्रियाकारित्वायोगात् । न खलु गोत्वं वाहदोहादावुपयुज्यते तत्र व्यक्तीनामेव व्यापाराभ्युपगमात् । स्वविषयज्ञानजनकत्वेपि व्यापारोस्य केवलस्य व्यक्तिसहितस्य वा ? केवलस्य चेद्व्यक्त्यन्तरालेप्युपलम्भप्रसङ्गः । व्यक्तिसहितस्य चेत्किं प्रतिपन्नाखिलव्यक्तिसहितस्याऽप्रति-

१ तथा हि ॥ २ कर्कटी ॥ ३ निर्विकल्पस्य ॥ ४ वाह्यनीलादिस्वलक्षणम् ॥ ५ वाह्यनीलादिविशेषमन्तरेणैव ॥ ६ सौगतेन त्वया ॥ ७ व्यक्तीनामेककार्यत्वसमर्थनार्थम् ॥ ८ निर्विकल्पकप्रत्यक्षज्ञानानाम् ॥ ९ गौगारिति ॥ १० एकत्वम् ॥ ११ विकल्पगतमेकत्वमनुभवेऽनुभवगत चैकत्व व्यक्तिष्विति ॥ १२ निर्विकल्पकेभ्य ॥ १३ सौगतेन ॥ १४ उपचरितोपचारोपि श्रद्धामात्रगम्यो यत ॥ १५ निर्विकल्पिका बुद्धि ॥ १६ एका ॥ १७ परेण ॥ १८ चेत्पक्षान्तरसूचकम् । इति हेतो स्वलक्षणे भ्रान्तिनिमित्तेनाक्षणिकत्व नो संयोज्येत चेत्तर्हि स्वलक्षणस्य परमार्थभूतमक्षणिकत्व स्यात् स्वलक्षणस्य क्षणिकत्वसिद्ध्यर्थं सर्वं क्षणिक सत्त्वादित्यनुमान च व्यर्थं स्यादिति भाव ॥ १९ परमार्थभूतसादृश्यापरापरोत्पत्तिलक्षणेन ॥ २० पुरुषेण ॥ २१ क्षणिके स्वलक्षणे वस्तुनि ॥ २२ अक्षणिकत्वलक्षणम् ॥ २३ वायथार्थक ॥ २४ अपरमार्थभूत ॥ २५ परमार्थभूतरूपसादृश्यदर्शनात् ॥ २६ ग्रन्थस्य ॥ २७ विषयविषयिभाव न कारयतीत्यर्थं ॥ २८ निर्विकल्पकबुद्धिम् ॥ २९ अन्यत्सन्निकर्षादि कर्तृ ॥ ३० पदार्थसादृश्याकारधारित्वम् ॥ ३१ उभाभ्या श्लोकाभ्या परस्य सादृश्याङ्गीकारो विद्यत इति सूचितम् ॥ ३२ सामान्यस्य ॥ ३३ व्यक्तिरहित केवलम् ॥ ३४ पुरुष प्रति ॥ ३५ सामान्यस्य । न च तथा ॥

पन्नाखिलव्यक्तिसहितस्य वा ? तत्राद्यपक्षोऽयुक्तः—असर्वविदोऽखिलव्यक्तिप्रतिपत्तेरसम्भवात् । द्वितीयपक्षे पुनरेकव्यक्तेरप्यग्रहणे सामान्यज्ञानानुषङ्गः । प्रतिपन्न-
कतिपयव्यक्तिसहितस्य जनकत्वे तु तस्य ताभिरुपकारः क्रियते न वा ? प्रथमपक्षे सामान्यस्य व्यक्तिकार्यता—तदभिन्नोपकारकरणात् । ततो भिन्नस्यास्य करणे
तस्येतिव्यपदेशासिद्धिः । तत्कृतोपकारेणाप्युपकारान्तरकरणेऽनवस्था । द्वितीयपक्षे तु व्यक्तिसहभाववैयर्थ्यं सामान्यस्य—अकिञ्चित्करस्य सहकारित्वासम्भवात् ।
सामान्येन सहैकज्ञानजनने व्यापाराद्व्यक्तीनां तत्सहकारित्वेपि किमालम्बनभावेन तत्र तासां व्यापारोधिपतित्वेन वा ? प्राच्यकल्पनायामेकमनेकाकारं सामान्य-
विशेषज्ञानं सर्वदा स्यात् स्वालम्बनानुरूपत्वात्सकलविज्ञानानाम् । द्वितीयविकल्पे तु व्यक्तीनामनधिगमेपि सामान्यज्ञानप्रसङ्गः । न खलु रूपज्ञाने चक्षुषोधिगत-
स्याधिपतित्वेन व्यापारो दृष्टो अदृष्टस्य वा/ सर्वथा नित्यवस्तुनः क्रमाऽक्रमाभ्यामर्थक्रियाविरोधाच्चास्य न कस्याञ्चिदर्थक्रियायां व्यापारः । व्यापारे वा
सहकारिनिरपेक्षितया सदा कार्यकारित्वानुषङ्गस्तदवस्थाभाविनः कार्यजननस्वभावस्य सदा सम्भवात् । अभावे चाऽनित्यत्वं स्वभावभेदलक्षणत्वात्तस्य । कार्या-
जननस्वभावत्वे वास्य सर्वदा कार्याजनकत्वप्रसङ्गः । यो हि यदऽजनकस्वभावः सोन्यसहितोपि न तज्जनयति यथा शालिबीजं क्षित्याद्यविकलसामग्रीयुक्तं
कोद्रवाङ्कुरम् । अजनकस्वभावं च सामान्यं कार्यस्य—इत्यवस्तुत्वापत्तिर्नित्यैकस्वभावसामान्यस्य—अर्थक्रियाकारित्वलक्षणत्वाद्वस्तुनः । तथा तत्सर्वसर्वगतं स्वव्य-
क्तिसर्वगतं वा ? न तावत्सर्वसर्वगतं व्यक्त्यन्तरालेऽनुपलभ्यमानत्वाद्व्यक्तिस्वात्मवत् । तत्रानुपलम्भो हि तस्याऽव्यक्तत्वाद्व्यवहितत्वाद्दूरस्थितत्वाददृश्यत्वा-
त्स्वाश्रयेन्द्रियसम्बन्धविरहादाश्रयसमवेतरूपाभावाद्वा स्याद्गत्यन्तराऽभावात् ? न तावदव्यक्तत्वात्—एकत्र व्यक्तौ सर्वत्र व्यक्तेरभिन्नत्वात् । अव्यक्तत्वाच्चान्तराले
तस्यानुपलम्भे व्यक्तिस्वात्मनोप्यनुपलम्भोऽत एवास्तु । तत्रास्य सद्भावावेदकप्रमाणाभावादसत्त्वादेवाऽनुपलम्भे सामान्यस्यापि सोऽसत्त्वादेवास्तु विशेषाभावात् ।
न खलु प्रत्यक्षतस्तत्तत्रोपलभ्यते विशेषरहितत्वात् खरविषाणवत् । किञ्च प्रथमव्यक्तिग्रहणवेलायां तदभिव्यक्तस्यास्य ग्रहणेऽभेदात्तस्य सर्वत्र सर्वदोपलम्भप्रसङ्गः
सर्वात्मनाभिव्यक्तत्वात् । अन्यथा व्यक्ताव्यक्तस्वभावभेदेनानेकत्वानुषङ्गादसामान्यरूपतापत्तिः । तस्मादुपलब्धिलक्षणप्राप्तस्यानुपलम्भाद्व्यक्त्यन्तराले सामान्य-

---

१ न विशेषज्ञानानुषङ्गः । न च तथा—विशेषमन्तरेण सामान्याप्रतीतेः ॥ २ अयमुपकारः सामान्यस्येति ॥ ३ सम्बन्धसिद्ध्यर्थम् ॥ ४ गौगौरित्यादि ॥ ५ सामान्यस्यैकत्वादेकं सामान्यज्ञानम् ॥ ६ व्यक्तीनामने-
कत्वादनेकाकारम् ॥ ७ अपरिज्ञाता व्यक्तयः सामान्यज्ञानं कथं जनयन्तीत्युक्तं सत्याहाचार्यः ॥ ८ चक्षुर्धर्मस्य ॥ ९ सामान्यलक्षणस्य ॥ १० स्वविषयज्ञानलक्षणे ॥ ११ तदवस्था=सहकारिरहितत्वम् ॥ १२ कूटस्थनित्य-
सामान्यस्य ॥ १३ सामान्यं कार्यजनकं न भवति तदजनकत्वादित्यध्याहार्यम् ॥ १४ सहकारिकारणे ॥ १५ अर्थो घटादि तस्य क्रिया कार्यत्वं जन्यत्वमिति यावत् । तां करोति यः पदार्थो मृत्पिण्डलक्षणः सोर्थक्रियाकारी ।
तस्य भावस्तत्त्वम् । तस्मात् ॥ १६ सर्वासु स्वसम्बन्धिखण्डमुण्डादिव्यक्तिषु ॥ १७ स्वव्यक्तौ विवक्षितैकव्यक्तौ ॥ १८ एकस्यां व्यक्तौ ॥ १९ प्राकट्ये सति ॥ २० व्यक्तिषु ॥ २१ सामान्यस्याभिव्यक्ते ॥ २२ प्रकट-
रूपसामान्यस्यैकत्वात् ॥ २३ व्यक्त्यन्तराले ॥ २४ नाऽभावात् । ततश्च सामान्यवद्व्यक्तेरपि व्यापकत्वान्नित्यत्वप्रसङ्गः ॥ २६ सद्भावावेदकप्रमाणाभावस्य ॥ २७ व्यापकत्वनित्यत्वात् ॥ २८ विशेषरूपताप्रतिपत्तिरिति
भावस्तस्याऽनेकरूपत्वात् ॥

स्यासत्त्वं व्यक्तिस्वात्मवत्[१]। व्यक्त्यन्तरालेऽस्ति सामान्यं युगपद्भिन्नदेशस्वाधारवृत्तित्वे सत्येकत्वाद्वंशादिवदित्यनुमानात्तत्र तद्भावसिद्धिरित्यप्यसङ्गतं हेतोः प्रतिवाद्यऽसिद्धत्वात्[३]। न हि भिन्नदेशासु व्यक्तिषु सामान्यमेकं प्रत्यक्षतः स्थूणादौ वंशादिवत्प्रतीयते यतो युगपद्भिन्नदेशस्वाधारवृत्तित्वे सत्त्येकत्वं तस्य सिध्यत्स्वाधारान्तरालेऽस्तित्वं साधयेत्[४]। तन्नाव्यक्तत्वात्तत्राऽनुपलम्भः[५]। नापि व्यवहितत्वादभिन्नत्वादेव। नापि दूरस्थितत्वात्तत एव[६]। नाप्यदृश्यात्मत्वात्स्वाश्रयेन्द्रियसम्बन्धविरहादाश्रयसमवेतरूपाभावाद्वा[७]–अभेदादेव। तन्न सर्वसर्वगतं सामान्यम्। नापि स्वव्यक्तिसर्वगतं–प्रतिव्यक्ति परिसमाप्तत्वेनास्याऽनेकत्वानुषङ्गाद् व्यक्तिस्वरूपवत्[८]। कार्त्स्न्यैकदेशाभ्यां वृत्त्यनुपपत्तेश्चाऽसत्त्वम्[९]। किञ्चैकत्र व्यक्तौ सर्वात्मना वर्त्तमानस्यास्यान्यत्र वृत्तिर्न स्यात्[१०]। तत्र हि वृत्तिस्तद्देशे गमनात्पिण्डेन सहोत्पादात्तद्देशे सद्भावादंशवत्तया वा स्यात्? न तावद्गमनादन्यत्र पिण्डे तस्य वृत्तिर्निष्क्रियत्वोपगमात्[११]। किञ्च पूर्वपिण्डपरित्यागेन तत्तत्र गच्छेदपरित्यागेन वा? न तावत्परित्यागेन प्राक्तनपिण्डस्य गोत्वपरित्यक्तस्यागोरूपताप्रसङ्गात्। नाप्यपरित्यागेनापरित्यक्तप्राक्तनपिण्डस्यास्यानंशस्य रूपादेरिव गमनासम्भवात्। न ह्यपरित्यक्तपूर्वाधाराणां रूपादीनामाधारान्तरसङ्क्रान्तिर्दृष्टा[१२]। नापि पिण्डेन सहोत्पादात्तस्याऽनित्यतानुषङ्गात्। नापि तद्देशे सत्त्वात्पिण्डोत्पत्तेः प्राक् तत्र[१३] निराधारस्यास्यावस्थानाभावात्। भावे वा स्वाश्रयमात्रवृत्तित्वविरोधः। नाप्यंशवत्तया–निरंशत्वप्रतिज्ञानात्। ततो व्यक्त्यन्तरे सामान्यस्याभावानुषङ्गः।

परेषां[१४] प्रयोगः '[१५]ये यत्र नोत्पन्ना नापि प्रागवस्थायिनो नापि पश्चादन्यतो देशादागतिमन्तस्ते तत्राऽसन्तः। यथा खरोत्तमाङ्गे तद्विषाणम्। तथा च सामान्यं तच्छून्यदेशोत्पादवति[१६] घटादिके वस्तुनि' इति। ये[१७] तु व्यक्तिस्वभावं सामान्यमभ्युपगच्छन्ति 'तादात्म्यमस्य[१८] कस्माच्चेत्स्वभावादिति गम्यताम्' इत्यभिधानात्, तेषां[१९] व्यक्तिवत्तस्यासाधारणरूपत्वानुषङ्गाद्[२०] व्यक्त्युत्पादविनाशयोश्चास्यापि तद्योगित्वप्रसङ्गान्न[२१] सामान्यरूपता। अथाऽसाधारणरूपत्वमुत्पादविनाशयोगित्वं चास्य नाभ्युपगम्यते[२२] तर्हि विरुद्धधर्माध्यासितो[२३] व्यक्तिभ्योऽस्य भेदः स्यात्। उक्तं च "न याति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वमाधारमहो व्यसनसन्ततिः॥१॥ तादात्म्यं चेन्मतं जातेर्व्यक्तिजन्मन्यजातता। नाशेऽनाशश्च केनेष्टस्तद्वच्चानन्वयो न किम्॥२॥ व्यक्तिजन्मन्यजाता चेदागता

१ देवदत्तेन व्यभिचारपरिहारार्थं विशेषणद्वयम्॥ २ स्तम्भादौ॥ ३ जैनादि॥ ४ व्यक्तावऽभिव्यक्तस्य सामान्यस्य॥ ५ एकस्वभावत्वात् (व्यक्त्या सह)॥ ६ व्यापित्वात्॥ ७ सामान्यस्याश्रया खण्डादय॥ ८ इन्द्रियसम्बद्धत्वादिविशिष्टव्यक्तिरूपत्वात्॥ ९ व्यक्तीनामानन्त्यात्॥ १० अनेकलसाशलक्षण दूषणमुदेष्यतीति भाव॥ ११ सामान्य निष्क्रियमिति वचनात्॥ १२ परेण॥ १३ व्यक्तिदेशे॥ १४ जटिलानाम्॥ १५ सामान्यमसत् अनुत्पद्यमानादित्वादित्युपरिष्टाद्योज्यम्॥ १६ तच्छून्यौ च तद्देशोत्पादो चेति॥ १७ मीमांसका॥ १८ व्यक्तिरेव स्वभावो यस्य तयोरभेदात्॥ १९ व्यक्त्या सह॥ २० मीमांसकानाम्॥ २१ असाधारणरूपताया व्यक्तेरभिन्नत्वात्॥ २२ सामान्यस्य॥ २३ व्यक्तिसामान्ययोरभेदात्॥ २४ परेण॥ २५ घटपटयोरिव॥ २६ व्यक्त्यन्तरम्॥ २७ व्यक्तिदेशे॥ २८ व्यक्तौ भग्नाया सत्त्याम्॥ २९ सामान्यस्य विशेषणम्॥ ३० वृथा स्थिति॥ ३१ व्यक्त्या सह॥ ३२ तदा इति शेष॥ ३३ जाते॥ ३४ व्यक्ते॥ ३५ जाते॥ ३६ व्यक्तिवत्॥ ३७ असाधारणता॥ ३८ किन्तु स्यादेव॥ ३९ सति॥

नाश्रयान्तरात्[1] । प्रागासीन्न च तद्देशे सा तया सङ्गता कथम् । ३ । व्यक्तिनाशे न चेन्नष्टा गता व्यक्त्यन्तरं न च । तच्छून्ये न स्थिता देशे सा जातिः क्वेति कथ्यताम् । ४ । व्यक्तेर्जात्यादियोगेऽपि[2][3] यदि जातेः स[4] नेष्यते[5] । तादात्म्यं[6] कथमिष्टं स्यादनुपप्लुतचेतसाम्[7] । ५ ।" ततो यदुक्तं कुमारिलेन "विपर्ययेण[8] हि बुद्धीनां[9] विना नोत्पत्तिरिष्यते[10] । विशेषादन्यदिच्छन्ति[11] सामान्यं तेन तद्ध्रुवम्[12] । १ । ताँ[13] हि तेन विनोत्पन्ना मिथ्याः स्युर्विपर्ययादृते[14] । न त्वन्येन[15] विना वृत्तिः[16] सामान्यस्येह दुष्यति[17] ।२।" इति तन्निरस्तं–नित्यसर्वगतसामान्यस्याश्रयादेकान्ततो[18] भिन्नस्याभिन्नस्य वाऽनेकदोषदुष्टत्वेन प्रतिपादितत्वात् । अनुगतप्रत्ययस्य च सदृशपरिणामनिबन्धनत्वप्रसिद्धेः[19] । स चानित्योऽसर्वगतोऽनेकव्यक्त्यात्मकतयाऽनेकरूपश्च रूपादिवत्प्रत्यक्षत एव प्रसिद्धः । ततो भट्टेनायुक्तमुक्तं "पिण्डभेदेषु गोबुद्धिरेकगोत्व[20]निबन्धना । गवाभासैकरूपाभ्यामेकगोपिण्डबुद्धिवत्[21] ।१।" यच्चेदमुक्तं "न शाबलेयाद्गोबुद्धिस्ततोऽन्यालम्बनापि वा[22][23][24] । तदभावेऽपि[25] सद्भावाद् घटे[26] पार्थिवबुद्धिवत्[27]" तत्सिद्धसाधनं–व्यक्तिव्यतिरिक्तसदृशपरिणामालम्बनत्वात्तस्याः[28] । यच्च सामान्यस्य सर्वगतत्वसाधनमुक्तं 'प्रत्येकसमवेतार्थविषया वाथ[29] गोमतिः[30] । प्रत्येकं[31] कृत्स्नरूपत्वात्प्रत्येकं व्यक्तिबुद्धिवत् । १ । प्रयोगः । येयं गोबुद्धिः[31] सा प्रत्येकसमवेतार्थविषया[32] प्रतिपिण्डं कृत्स्नरूपपदार्थाकारत्वात्[33]प्रत्येकव्यक्तिविषयबुद्धिवत् । एकत्वमप्यस्य प्रसिद्धमेव । तथा हि । यद्यपि सामान्यं प्रत्येकं सर्वात्मना परिसमाप्तं तथापि तदेकमेवैकाकारबुद्धिग्राह्यत्वात्[34] । यथा नव्युक्तवाक्येषु ब्राह्मणादिनिवर्त्तनम्[35][36] । न चेयं मिथ्या कारणदोषबाधकप्रत्ययाभावात्[37] । उक्तं च । 'प्रत्येकसमवेतापि जातिरेकैकबुद्धितः[38] । नव्युक्तेष्विव वाक्येषु ब्राह्मणादिनिवर्त्तनम् ।१। नैकरूपा मतिर्गोत्वे मिथ्या वक्तुं च शक्यते । नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ।२।' तदप्युक्तिमात्रं–प्रतिपिण्डं कृत्स्नरूपपदार्थाकारत्वस्य[39] सदृशपरिणामाविनाभावित्वेन[40] साध्यविपरीतार्थे[41] साधनस्य विरुद्धत्वात् । नित्यैकरूपप्रत्येकपरिसमाप्तसामान्यसाधने दृष्टान्तस्य साध्यविकलता[43] । तथाभूतस्य[44] चास्य सर्वात्मना बहुषु[45] परिसमाप्तत्वे

---

१ व्यक्त्यन्तरात् ॥ २ जाति =जन्म ॥ ३ आदिना विनाशग्रहणम् ॥ ४ जात्यादियोग ॥ ५ तद्वांतिशेष ॥ ६ जातिव्यक्त्यो ॥ ७ अभ्रान्तचेतसाम् ॥ ८ सामान्येन ॥ ९ अनुगताकाराणाम् ॥ १० यैर्वादिभि ॥ ११ ते ॥ १२ नित्यमचलम् ॥ १३ विपर्ययेण विनोत्पत्ति कथमित्युक्ते आह ॥ १४ यत्त ॥ १५ समवायेन ॥ १६ तादात्म्येन स्वभावाद्वर्त्तत इत्यर्थ ॥ १७ व्यक्ते सकाशात् ॥ १८ एकत्वापत्तिव्यपदेशाभावाद्योनेके ॥ १९ सास्नादिमत्त्वेनायमनेन सदृश इति ॥ २० गौर्गौरिति ॥ २१ गवाभासश्चैकरूप च ताभ्याम् । एक( गौर्गौरित्याध्यात्मिककारण )ज्ञानत्वादेकरूप(गोरूपपिण्ड बाह्यकारण )त्वाच्चेत्यर्थ ॥ २२ सामान्यनिबन्धनेति ॥ २३ ततोन्यत्= खण्डादि ॥ २४ नेति सबन्ध ॥ २५ शाबलेयाभावेपि खण्डादिगोबुद्धिसद्भावात् तदभावेऽपि शाबलेयादेस्तत्सद्भावादित्यर्थ ॥ २६ गोबुद्धे ॥ २७ श्वेतपीतादिविशेषमन्तरेण यथा घटे पृथिवीत्वसामान्येन पार्थिवबुद्धि ॥ २८ न केवलमेकगोत्वनिबन्धना ॥ २९ एकामेका व्यक्ति प्रति ॥ ३० गोमते ॥ ३१ गोर्गौरिति प्रत्यय ॥ ३२ अर्थो=गोत्वलक्षणसामान्यम् ॥ ३३ गोत्वादिसामान्य ॥ ३४ अय गोरय गौरिति ॥ ३५ नाय ब्राह्मणो नाय ब्राह्मण इत्यादि ॥ ३६ एकमेव ॥ ३७ इन्द्रियादि ॥ ३८ गौर्गौरिति ॥ ३९ हेतो ॥ ४० सदृशपरिणाम =साध्यम् ॥ ३१ सर्वगतत्व ॥ ४२ असर्वगतत्वे ॥ ४३ व्यक्तीना नित्यत्वमेकरूपत्व च नास्ति यतः ॥ ४४ एकत्वानुमाने दूषणमाह ॥ ४५ विशेषेषु ॥

सर्वेषां व्यक्तिभेदाना परस्परमेकरूपतापत्तिरेकव्यक्तिपरिनिष्ठितस्वभावसामान्यपदार्थसंसृष्टत्वादेकव्यक्तिस्वरूपवत् । सामान्यस्य वानेकत्वापत्तिर्युगपदनकेवस्तुपरिसमाप्तात्मरूपत्वाद्दूरतरदेशावच्छिन्नानेकभाजनगतविल्वादिफलवत् । ततोऽयुक्तमुक्तं—नात्र वाधकप्रत्ययोस्तीति—प्राक्प्रतिपादितप्रकारेणानेकवाधकप्रत्ययोपनिपातात् । प्रत्येकसमवेतार्थश्च जातेरसिद्धत्वादेकबुद्धिग्राह्यत्वादित्याश्रयासिद्धो हेतुः । स्वरूपासिद्धश्चावाधंसादृश्यवोधादिगम्यत्वेनैकाकारप्रत्ययग्राह्यत्वस्यासिद्धेः । ब्राह्मणादिनिवृत्तिश्च परमार्थतो नैकरूपास्तीति साध्यविकलमुदाहरणम् । एतेन यदुक्तमुद्द्योतकरेण 'गवादिष्वनुवृत्तिप्रत्ययः पिण्डादिव्यतिरिक्तान्निमित्ताद्भवति विशेषकत्वान्नीलादिप्रत्ययवत् । तथा गोतोऽर्थान्तरं गोत्वं भिन्नप्रत्ययविषयत्वाद्रूपादिवत् तस्येति च व्यपदेशविषयत्वात् । यथा चैत्रस्याश्वश्चैत्राद्व्यपदिश्यमान' इति, तन्निरस्तम्—अनुवृत्तिप्रत्ययस्य हि सामान्येन पिण्डादिव्यतिरिक्तनिमित्तमात्रसाधने सिद्धसाध्यतानुषङ्गात्सदृशपरिणामनिवन्धनतयाऽस्याभ्युपगमात् । नित्यैकानुगामिसामान्यनिवन्धनत्वसाधेन दृष्टान्तस्य साध्यविकलता । न ह्येवंभूतेन क्वचिदन्वयः सिद्धः । न चानुगतज्ञानोपलम्भादेव तथाभूतसामान्यसिद्धिः । यतः किं यत्रानुगतज्ञानं तत्र सामान्यसम्भवः प्रतिपद्यते यत्र वा सामान्यसम्भवस्तत्रानुगतज्ञानमिति ? तत्राद्यः पक्षोऽयुक्तो गोत्वादिसामान्येषु सामान्यं सामान्यमित्यनुगताकारप्रत्ययोपलम्भेनाऽपरसामान्यकल्पनाप्रसङ्गात् । न चात्रासौ प्रत्ययो गौणोऽस्खलद्वृत्तित्वेन गौणत्वासिद्धेः । तथा प्रागभावादिष्वप्यभावेष्वभावोऽभाव इत्यनुगतप्रत्ययप्रवृत्तिरस्ति । न च परैरभावसामान्यमभ्युपगतम् । न खलु तत्रानुगाम्येकं निमित्तमस्त्यन्यत्र सदृशपरिणामात् । ननु चापरसामान्यस्य प्रागभावादिष्वभावेपि सत्ताख्यं महासामान्यमस्ति । तद्बलादेवाभावप्रत्ययोऽनुगतो भविष्यति । उक्तं च "ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते । सैवैव ह्यत्र सामान्यमनुत्पत्त्यादिरूपता । १ । अनुत्पत्त्यादिविशिष्टैर्थः ।" तदयुक्तमभिप्रेतपदार्थव्यतिरिक्तानां मतान्तरीयार्थानामुत्पाद्यकेथार्थानां वाऽभावप्रतीतिविषयतोपलम्भेन सत्त्वप्रसङ्गात् । तत्राभावेष्वनुवृत्तप्रतीतेरनुगाम्येकसामान्यनिवन्धनत्वमस्तीत्यन्यत्राप्यस्यास्तन्निवन्धनत्वाभावः । प्रयोगः । ये क्रमित्वानुगामित्ववस्तु-

१ अभिन्नत्वात् । तादात्म्यापन्नत्वात् ॥ २ सम्पूर्ण ॥ ३ भिन्नभिन्न ॥ ४ नित्याया एकरूपाया प्रत्येक परिसमाप्तायाश्च ॥ ५ अय गोरय गोरिति ॥ ६ आश्रयभूताया जातेरभावात् ॥ ७ अयमनेन सदृश इति ॥ ८ अनेकरूप-
सामान्य ॥ ९ कृत्वा ॥ १० एकाकारप्रत्ययेन ग्राह्य सामान्य परमते ॥ ११ सामान्यस्य ॥ १२ नाय क्षत्रियो ब्राह्मणो नाय वैश्यो ब्राह्मण इत्यादिना कृत्वाऽभावानामनेकत्वात् । अभाव अभाव इति प्रत्ययसयुक्तप्रागभावादि-
वत् ॥ १३ एकत्वेन साध्येन ॥ १४ मीमासक प्रति नित्यसर्वगतजातिनिराकरणपरेण ग्रन्थेन ॥ १५ शवलशावलेयादिविशेषगोपिण्डादि ॥ १६ सर्वगनित्यत्वात् ॥ १७ भेदकत्वात् ॥ १८ गोरिद गोत्वमिति ॥ १९ भेदेनाभि-
धीयमान ॥ २० साधारणेन कृत्वा ॥ २१ जेनानाम् ॥ २२ पिण्डादिव्यतिरिक्तान्नित्यैकानुगामिसामान्यान्निमित्ताद्भवतीति साध्यम् ॥ २३ यो यो भेदकप्रत्यय स स नित्यैकानुगामिसामान्याद्भवतीति ॥ २४ परेण ॥
२५ गवादिव्यक्तिनिष्ठेषु गोत्वादिसामान्येषु घटत्वमपि सामान्य पटत्वमपि सामान्यमित्यनुगताकारप्रत्यय ॥ २६ गोत्वादिभ्य ॥ २७ कल्पित ॥ २८ अभावत्वस्य ॥ २९ परेण ॥ ३० एका सर्वगता ॥ ३१ आदिना
नित्यसर्वगतत्वादिग्रहणम् ॥ ३२ ततोऽभावप्रत्ययोऽनुगतो भविष्यति ॥ ३३ अभिप्रेतानि द्रव्यगुणकर्माणि ॥ ३४ अद्वैतप्रधानादीनाम् ॥ ३५ लोके विचित्रकार्याणाम् ॥

त्वोत्पत्तिमत्त्वसत्त्वादिधर्मोपेतास्ते परकल्पितनित्यैकसर्वगतसामान्यनिबन्धना न भवन्ति । यथाऽभावेष्वभावोऽभाव इति प्रत्ययाः, सामान्येषु सामान्यं सामान्यमिति प्रत्यया वा । तथा चामी प्रत्यया इति । अथ यत्र सामान्यं तत्रैवानुगतज्ञानकल्पना,—न पाचकादिषु तदभावेप्यनुगतप्रत्ययप्रवृत्तेः । न खलु तत्रानुगाम्येकं सामान्यमस्ति यत्प्रसादात्तत्प्रवृत्तिः स्यात् । निमित्तान्तरमस्तीति चेत्तत्किं कर्म कर्मसामान्यं वा स्याद् व्यक्तिशक्तिर्वा? न तावत्कर्म तस्य प्रतिव्यक्ति विभिन्नत्वात् । विभिन्नं ह्यऽभिन्नस्य कारणं न भवतीति सर्वोयमारम्भः । तच्चेद्भिन्नमपि तथाभूतकार्यकारणं तदान्यत्र कः प्रद्वेषः ? किञ्च तत्कर्म नित्यं वा स्यादनित्यं वा ? न तावन्नित्यं तथानुपलब्धेरनभ्युपगमाच्च । अनित्यं तु न सर्वदा स्थितिमदिति विनष्टे तस्मिन्न तथाभूतो व्यपदेशो ज्ञानं वा स्यात्—अपचत' क्रियाविरहात् । पचन्नेव हि तथा व्यपदिश्येत नान्यथा । तन्न कर्मतस्य प्रत्ययस्य निबन्धनम् । नापि कर्मसामान्यम् । तद्धि कर्माश्रितं कर्माश्रयाश्रितं वा ? यदि कर्माश्रितं कथमन्यत्र ज्ञानं जनयेत् ? न ह्यन्यत्र वृत्तिमदन्यत्र ज्ञानकारणमतिप्रसङ्गात् । किञ्च कर्मसामान्यात्पाकः पाक इति प्रत्ययः स्यान्न पुनः पाचकः पाचक इति । अथ कर्माश्रयाश्रितं, तन्न—कर्माश्रितत्वात् । परम्परया कर्माश्रयाश्रितं तदित्यसारमपचतः कर्मविवेकात् । विविक्ते च कर्मणि न कर्मत्वं कर्मणि तदाश्रये वाऽऽश्रितमनाश्रितं च कथं तत्तत्र तथाज्ञानहेतुः स्यात् ? अथाऽपचतोऽतीतानागते कर्मणी तथाव्यपदेशज्ञाननिबन्धनं, न कर्मत्वम् । ननु सत्यसती वा ते तन्निबन्धनं स्याताम् । न तावत्सती—अतीतस्य प्रच्युतत्वादनागतस्य चालब्धात्मस्वरूपत्वात् । असती च कथं कस्यापि निबन्धनमतिप्रसङ्गात् । तन्न कर्मत्वमपि तत्प्रत्ययस्य निबन्धनम् । नापि व्यक्तिरनिष्टेर्विभिन्नत्वाच्च । नापि शक्तिः । सा हि पाचकादन्याऽनन्या वा स्यात् ? अनन्यत्वे तयोरन्यतरदेव स्यात् । अन्यत्वे चास्या एव कार्योपयोगित्वेन कर्तुरकर्तृत्वानुषङ्गः । अथ पारम्पर्येणोपयोगः । कर्त्ता हि शक्तावुपयुज्यते, शक्तिश्च कार्ये । नन्वसौ शक्तावुपयुज्यते स्वरूपेण शक्त्यन्तरेण वा ? शक्त्यन्तरेणोपयोगेऽनवस्था । स्वरूपेणोपयोगे कार्येप्यसौ तथा किन्नोपयुज्यते ? किं परम्परापरिश्रमेण? न चान्यन्निमित्तमस्ति । पाचकत्वमस्तीति चेत्तत्किं द्रव्योत्पत्तिकाले व्यक्तमव्यक्तं वा ? व्यक्तं चेत्तर्हि पाकक्रियायाः प्रागेव तथा ज्ञानाभिधाने स्याताम् । अथाऽव्यक्तं तर्हि पश्चादपि न ते स्यातां—विशेषाभावात् । तथा हि ।

---

१ पुरुषेषु ॥ २ पाचक पाचक इत्यादि ॥ ३ कथं सामान्य नास्तीत्युक्ते आह ॥ ४ पचनक्रियाया पूर्वं नास्ति ॥ ५ देवदत्तयज्ञदत्तचैत्रमैत्रेषु पचनक्रियालक्षणं कर्म भिन्नम् ॥ ६ अनुगताकारस्य ॥ ७ जैनमताभ्युपगते प्रतिव्यक्ति भिन्ने सदृशपरिणामे ॥ ८ शब्दबुद्धिकर्मणा त्रिक्षणावस्थायित्वाभ्युपगमात् ॥ ९ परेण ॥ १० पाचक इति ॥ ११ पाचक इति ॥ १२ पाचक इति ॥ १३ कर्मवत्पुरुषाश्रितम् ॥ १४ कर्माश्रये देवदत्ते ॥ १५ कर्मणि १६ देवदत्ते ॥ १७ गृहे वृत्तिमान्प्रदीपो गुहाया ज्ञानकारणं स्यादित्यतिप्रसङ्ग ॥ १८ कर्मत्वं कर्माश्रितं कर्म च देवदत्ताश्रितमिति ॥ १९ पुरुषस्य ॥ २० नष्टे ॥ २१ सामान्यम् ॥ २२ देवदत्ते ॥ २३ पाचक इति ॥ २४ पाचक पाचक इति ॥ २५ अनुगतप्रत्ययस्य ॥ २६ परेणानभ्युपगमात् ॥ २७ अनेकत्वात् ॥ २८ पचनलक्षणं कार्यम् ॥ २९ कर्मादिभ्योऽन्यन्निमित्तं भविष्यतीत्याह ॥ ३० पाचक पाचक इति ज्ञानव्यपदेशयोरनुगतप्रत्ययहेतु ॥ ३१ देवदत्तलक्षण ॥ ३२ पाचक इति ॥ ३३ भेदाभावान्नित्यत्वस्यैकस्वभावत्वात् ॥

यथान्यापेक्षो विशेषः स्वामर्थक्रियां व्यावृत्तिज्ञानलक्षणां कुर्वन्नर्थक्रियाकारी तथा सामान्यमप्यनुगतज्ञानलक्षणामर्थक्रियां कुर्वत्कथमर्थक्रियाकारि न स्यात् ? तद्ग्राह्यां पुनर्वाहदोहाद्यर्थक्रियां यथा न केवलं सामान्यं कर्तुमुत्सहते तथा विशेषोऽप्युभयात्मनो वस्तुनो गवादेस्तत्रोपयोगात् । इत्यर्थक्रियाकारित्वेनापि सामान्यविशेषाकारयोरभेदात्सिद्धं वास्तवत्वम् । ततोऽपाकृतमेतत् "सर्वे भावाः स्वभावेन–स्वस्वभावव्यवस्थितेः । स्वभावपरभावाभ्यां यस्माद्व्यावृत्तिभागिनः ।१। तस्माद्यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः । जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ।२।" इति । ननु सादृश्ये सामान्ये स एवायं गौरिति प्रत्ययः कथं शबलं दृष्ट्वा धवलं पश्यतो घटेतेति चेदेकत्वोपचारादिति ब्रूमः । द्विविधं ह्येकत्वं मुख्यमुपचरितं च । मुख्यमात्मादिद्रव्ये । सादृश्ये तूपचरितम् । नित्यसर्वगतस्वभावत्वे सामान्यस्यानेकदोषदुष्टत्वप्रतिपादनात् । तेन समानोयमिति प्रत्ययश्च कथं स्यात् ? तयोरेकसामान्ययोगाच्चेन्न–सामान्यवन्तावेताविति प्रत्ययप्रसङ्गात् । तयोरभेदोपचारे तु सामान्यमिति प्रत्ययः स्यात्, न पुनस्तेन समानोयमिति । यष्टिपुरुषयोरभेदोपचाराद्यष्टिसहचरितः पुरुषो यष्टिरिति यथा । ननु व्यक्तिवत्समानपरिणामेष्वपि समानप्रत्ययस्यापरसमानपरिणामहेतुकत्वप्रसङ्गादनवस्था स्यात् । तमन्तरेणाप्यत्र समानप्रत्ययोत्पत्तौ पर्याप्तं खण्डादिव्यक्तौ समानपरिणामकल्पनयेत्यन्यत्रापि समानम् । विसदृशपरिणामेष्वपि हि विसदृशप्रत्ययो यदि तदन्तरहेतुकोऽनवस्था । स्वभावतश्चेत् सर्वत्र विसदृशपरिणामकल्पनानर्थक्यम् । न च सदृशपरिणामानामर्थवत्स्वात्मन्यपि समानप्रत्ययहेतुत्वेऽर्थानामपि तत्प्रसङ्गः प्रतिनियतशक्तित्वाद्भावानाम् । अन्यथा घटादेः प्रदीपात्स्वरूपप्रकाशोपलम्भात्प्रदीपेपि तत्प्रकाशः प्रदीपान्तरादेव स्यात् । स्वकारणकलापादुत्पन्नाः सर्वेऽर्था विसदृशप्रत्ययविषयाः स्वभावत एवेत्यभ्युपगमे समानप्रत्ययविषयास्ते तथा किं नाभ्युपगम्यन्ते । अलं प्रतीत्यपलापेन ।

---

१ सदृशपरिणामलक्षणम् ॥ २ अनुगतज्ञानलक्षणार्थक्रिया यत ॥ ३ विशेषनिरपेक्षम् ॥ ४ केवलतया ॥ ५ सामान्यविशेषात्मन ॥ ६ न केवलमनावितप्रत्ययविषयत्वेन ॥ ७ सामान्यविशेषावेव चाकारो तयोरभेदाद्विशेषाभावादित्यर्थ ॥ ८ सामान्यविशेषाकारौ सिद्धो यत ॥ ९ प्रतिक्षण ध्वसिन परस्परमससृष्टा परमाणुरूपा, गवादिस्वलक्षणाः ॥ १० वर्त्तन्ते इति शेष ॥ ११ स्वेषा भावाना स्वरूपेण व्यवस्थिते ॥ १२ सजातीयविजातीयपरमाणुरूपार्थत ॥ १३ विजातीयादर्थात् ॥ १४ स्वलक्षणानाम् ॥ १५ व्यावृत्तिनिबन्धन येषा ते ॥ १६ सामान्यभेदा ॥ १७ वासनात ॥ १८ ते खण्डादिकर्कादयश्च विशेषाश्च तानवगाहन्ते इत्येवशीला ॥ १९ विशेषा एव सन्ति न सामान्यमिति भाव ॥ २० जैनेनाङ्गीक्रियमाणे सादृश्ये सामान्ये सति ॥ २१ स एवायमात्मादि पदार्थ इति ॥ २२ सास्नादिमत्त्वेन ॥ २३ भवता मीमासकानाम् ॥ २४ खण्डमुण्डयो शबलधवलयोर्वा ॥ २५ सामान्यतद्वतो ॥ २६ परेणाङ्गीक्रियमाणे ॥ २७ इद (व्यक्ति) सामान्यमिति ॥ २८ कुन्ता प्रविशन्ति अश्वा आगच्छन्तीत्यादिवद्वा ॥ २९ व्यक्तियया सादृश्यपरिणामात्तेन मुण्डेन सदृश खण्ड इत्यादि ॥ ३० समान इति परिणामेषु ॥ ३१ विसदृशपरिणामपक्षेपि ॥ ३२ अपरविसदृश ॥ ३३ तर्हीति शेष ॥ ३४ विशेषरूपाणाम् ॥ ३५ स्वात्मनि समानप्रत्ययहेतुत्वप्रसङ्ग ॥ ३६ प्रतिनियतशक्तित्वाभावात् ॥ ३७ सौगतेन ॥

एतेन नित्यं निखिलब्राह्मणव्यक्तिव्यापकं ब्राह्मण्यमपि प्रत्याख्यातम्। न हि तत्तथाभूतं प्रत्यक्षादिप्रमाणतः प्रतीयते। ननु च ब्राह्मणोयं ब्राह्मणोयमिति प्रत्यक्षत एवास्य प्रतिपत्तिः। न चेदं विपर्ययज्ञान बाधकाभावात्। नापि संशयज्ञानमुभयांशानवलम्बित्वात्। पित्रादिब्राह्मण्यज्ञानपूर्वकोपदेशसहाया चास्य व्यक्तिर्व्यञ्जिका। तत्रापि तत्सहायेति। न चात्राऽनवस्था बीजाङ्कुरादिवदनादित्वात्तत्तद्रूपोपदेशपरम्परायाः। तथानुमानतोपि। तथा हि। ब्राह्मणपदं व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धं पदत्वात्पटादिपदवत्। न चायमसिद्धो हेतुर्धर्मिणि विद्यमानत्वात्। नापि विरुद्धो विपक्षे एवाभावात्। नाप्यनैकान्तिकः पक्षविपक्षयोरवृत्तेः। नापि दृष्टान्तस्य साध्यवैकल्यं पटादौ व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धत्वाभावे व्यक्तीनामानन्त्येनाऽनन्तेनापि कालेन सम्बन्धग्रहणाघटनात्। तथा वर्णविशेषाध्ययनाचारयज्ञोपवीतादिव्यतिरिक्तनिमित्तनिबन्धनं ब्राह्मण इति ज्ञानं तन्निमित्तबुद्धिविलक्षणत्वाद्गवाश्वादिज्ञानवदित्यतोपि तत्सिद्धिः। तथा ब्राह्मणेन यष्टव्यं ब्राह्मणो भोजयितव्य इत्याद्यागमाच्चेति।

अत्रोच्यते। यत्तावदुक्तं प्रत्यक्षत एवास्य प्रतिपत्तिस्तत्र किं निर्विकल्पकात्सविकल्पकाद्वा ततस्तत्प्रतिपत्तिः स्यात्? न तावन्निर्विकल्पकात्तत्र जात्यादिपरामर्शाभावात्। भावे वा सविकल्पकानुषङ्गः। अन्यथा "अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥१॥ ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया। बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता॥२॥" इति वचो विरुद्ध्येत। नापि सविकल्पकात्कठकलापादिव्यक्तीनां मनुष्यत्वविशिष्टतयेव ब्राह्मण्यविशिष्टतयापि प्रतिपत्त्यसम्भवात्। पित्रादिब्राह्मण्यज्ञानपूर्वकोपदेशसहाया व्यक्तिर्व्यञ्जिकास्येत्यप्यसारं यतः पित्रादिब्राह्मण्यज्ञानं प्रमाणमप्रमाणं वा? अप्रमाणं चेत्कथमतोर्थसिद्धिरतिप्रसङ्गात्। प्रमाणं चेत्किं प्रत्यक्षमनुमानं वा? प्रत्यक्षं चेन्नास्य तद्ग्राहकत्वेन प्रागेव प्रतिषेधात्। किञ्च ब्राह्मण्यजातेः प्रत्यक्षतासिद्धौ यथोक्तोपदेशस्य प्रत्यक्षहेतुतासिद्धिस्तत्सिद्धौ च तत्प्रत्यक्षतासिद्धिरित्यन्योन्याश्रयः। यथा च ब्राह्मण्यजातेः प्रत्यक्षत्वमुपदेशेन व्यवस्थाप्यते तथा ब्रह्माद्यद्वैतप्रत्यक्षत्वमपि। तत्कथमप्रतिपक्षा पक्षसिद्धिर्भवतः स्यात्? अथाद्वैताद्युपदेशस्याध्यक्षबाधितत्वान्न प्रत्यक्षाङ्गत्वं, तदन्यत्रापि समानम्। ब्राह्मण्यविविक्तपिण्डग्राहिणाध्यक्षेणैव हि

१ विस्फारिताक्षस्य पुरुषस्य पुरो व्यवस्थितेषु क्षत्रियादिसद्वेषु ॥ २ इति=अनुगतैकाकारप्रत्ययतया ॥ ३ पित्रादिब्राह्मण्यज्ञानादस्य पुत्रस्य ब्राह्मण्यमित्युपदेश ॥ ४ कठकलापादि ॥ ५ ब्राह्मणोय ब्राह्मणोयमिति सामान्यस्य वाचकत्वाद् ब्राह्मण इति सामान्यपदम् ॥ ६ ब्राह्मण्य तदेवाभिधेय तेन सम्बद्धम् ॥ ७ पदत्वस्य ॥ ८ नापि दृष्टान्तस्य साधनवैकल्य पटादिपदे पदत्वस्य विद्यमानत्वात् ॥ ९ पटत्व ॥ १० द्वितीयमनुमानम् ॥ ११ गोत्वादि ॥ १२ ब्राह्मण इति ज्ञानस्य ॥ १३ अपुरुषकृतात् ॥ १४ जात्यादिपरामर्शकत्वेपि निर्विकल्पकत्वे ॥ १५ इन्द्रिय ॥ १६ अक्षिविस्फालनानन्तरम् ॥ १७ तज्ज्ञान वक्तु न शक्यते यत । विशेषणविशेष्यरहित शुद्ध भेदरहितसन्मात्रलक्षणवस्तुतो जातम् ॥ १८ भेदसहित समन्वितमिति यावत् ॥ १९ कठ खरे ऋचा भेद ॥ २० ब्राह्मणव्यक्तीनाम् ॥ २१ वैधर्म्यदृष्टान्तोयम् । यत्र दृष्टान्तदार्ष्टान्तयोरुभयोरस्तित्व तत्रान्वयदृष्टान्त । यत्रैकस्यास्तित्वमेकस्य नास्तित्व तत्र व्यतिरेकदृष्टान्त ॥ २२ संशयादपि स्वाभिमतार्थसिद्धिप्रसङ्गात् ॥ २३ ब्राह्मण्यजाति ॥ २४ अनन्तरमेव ॥ २५ व्यवस्थाप्यता शास्त्रोपदेशेन ॥ २६ परपक्षस्यानिराकरणात् ॥ २७ अङ्ग=कारणम् ॥

तदुपदेशो बाध्यते । अथाऽदृश्या ब्राह्मण्यजातिस्तेनायमदोषः । कथं तर्हि सा प्रत्यक्षेत्युक्तं शोभेत ? किञ्चौपाधिकोयं[1] ब्राह्मणशब्दः । तस्य च निमित्तं[2] वाच्यम् । तच्च किं पित्रोरविप्लुतत्वं[3] ब्रह्मप्रभवत्वं वा ? न तावदविप्लुतत्वमनादौ काले तस्याध्यक्षेण ग्रहीतुमशक्यत्वात् । प्रायेण प्रमदानां कामातुरतयेह जन्मन्यपि व्यभिचारोपलम्भाच्च कुतो योनिनिबन्धनो ब्राह्मण्यनिश्चयः ? न च विप्लुतेतरपित्रऽपत्येषु वैलक्षण्यं लक्ष्यते । न खलु वडवायां गर्दभाश्वप्रभवापत्येष्विव ब्राह्मण्यां ब्राह्मणशूद्रप्रभवापत्त्येष्वपि वैलक्षण्यं लक्ष्यते [क्रियाविलोपात्[4] + शूद्रान्नादेश्च[5] जातिलोपः[6] स्वयमेवाभ्युपगतः 'शूद्रान्नाच्छूद्रसम्पर्काच्छूद्रेण सह भाषणात् । इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते' इत्यभिधानात् । कथं[7] चैवं वादिनो ब्रह्मव्यासविश्वामित्रप्रभृतीनां ब्राह्मण्यसिद्धिस्तेषा[8] तज्जन्यत्वासंभवात् । तन्न पित्रोरविप्लुतत्वं[9] तन्निमित्तम् । नापि ब्रह्मप्रभवत्वं सर्वेषां तत्प्रभवत्वेन ब्राह्मणशब्दाभिधेयतानुषङ्गात् । तन्मुखाज्जातो ब्राह्मणो नान्य इत्यपि भेदो ब्रह्मप्रभवत्वे प्रजानां दुर्लभः । न खल्वेकवृक्षप्रभवं फलं मूले मध्ये शाखायां च भिद्यते । ननु नागवल्लीपत्राणां मूलमध्यादिदेशोत्पत्तेः कण्ठभ्रामर्यादिभेदो[10] दृष्ट एवमत्रापि प्रजाभेदः स्यादित्यप्यसद्यतस्तत्पत्राणां जघन्योत्कृष्टप्रदेशोत्पादात्तत्पत्राणां तद्भेदो युक्तो ब्रह्मणस्तु तद्देशाभावान्न तद्भेदः । तद्देशभावे चास्य जघन्योत्कृष्टतादिप्रसङ्गः स्यात् । किञ्च ब्रह्मणो ब्राह्मण्यमस्ति वा न वा ? नास्ति चेत्कथमतो ब्राह्मणोत्पत्तिः ? न ह्यमनुष्यादिभ्यो मनुष्याद्युत्पत्तिर्घटते । अस्ति चेत्किं सर्वत्र मुखप्रदेश एव वा ? सर्वत्र इति चेत्स एव प्रजानां भेदाभावोनुषज्यते । मुखप्रदेशे एव चेदन्यत्र प्रदेशे तस्य शूद्रत्वानुषङ्गः । तथा च न पादादयोस्य[11] वन्द्या वृषलादिवत् । मुखमेव हि विप्रोत्पत्तिस्थानं वन्द्यं स्यात् । किञ्च ब्राह्मण एव तन्मुखाज्जायते तन्मुखादेवासौ जायेत ? विकल्पद्वयेप्यन्योन्याश्रयः । सिद्धे हि ब्राह्मणत्वे तस्यैव तन्मुखादेव जन्मसिद्धिस्तत्सिद्धेश्च ब्राह्मणत्वसिद्धिरिति । अथ जात्या ब्राह्मण्यस्य सिद्धिस्तन्मुखादेव तज्जन्मनर्थायमदोषो,[12] न—अस्याः प्रत्यक्षतोऽप्रतीतेः । न खलु खण्डमुण्डादिषु सादृश्यलक्षणगोत्ववद्देवदत्तादौ ब्राह्मण्यजातिः प्रत्यक्षतः प्रतीयते । अन्यथा किमयं ब्राह्मणोऽन्यो वेति संशयो न स्यात् । तथा च तन्निरासाय गोत्राद्युपदेशो व्यर्थः । न हि गौरयं मनुष्यो वेति निश्चयो गोत्राद्युपदेशमपेक्षते । ननु यथा सुवर्णादिकं परोपदेशसहायात्प्रत्यक्षात्प्रतीयते तथा सापीत्यप्ययुक्तं यतो न पीततामात्रं सुवर्णमतिप्रसङ्गात्[13] । किन्तु तद्विशेषः । स च नाध्यक्षो दाहच्छेदादिवैयर्थ्यप्रसङ्गात् । तस्यापि सहायत्वे[14] तज्जातौ[15] किञ्चित्तथाविधं सहायं वाच्यम् । तच्चाकारविशेषो वा स्यादध्ययनादिकं वा ? न तावदाकारविशेषस्तस्याब्राह्मणेपि सम्भवात् । अत एवाध्ययनं क्रियाविशेषो वा तत्सहायतां

---

१ विशेष्यवाच्यस्य विशेषण ( तस्य वाचकत्वात् ) वच ( तद्वाचक ) इत्यभिधानात् ॥ २ प्रवृत्तेरिति शेष ॥ ३ अभ्रान्तत्वम् ॥ ४ पित्रो ॥ ५ ब्राह्मण्यस्य ॥ ६ जाते ब्राह्मण्यस्य ॥ ७ ततो नित्यत्वव्याघात ॥ ८ मीमासकेन ॥ ९ पित्रोरविप्लुतत्व ब्राह्मणशब्दप्रवृत्तिनिवृत्तिनिमित्तमित्येव वादिन ॥ १० अविप्लुतपितृ ॥ ११ ब्राह्मणशब्दप्रवृत्तिनिमित्तम् ॥ १२ मूले उत्पन्नानि पत्राणि कण्ठस्य भ्रम कुर्वन्ति, मध्ये उत्पन्नानि कण्ठस्य सुस्वरत्व कुर्वन्तीति भेद ॥ १३ तत्र ब्राह्मण्याभावात् ॥ १४ सिद्धिरिति सम्बन्ध ॥ १५ रीतिकादे सुवर्णत्वप्रसङ्गात् ॥ १६ सुवर्णादिज्ञाने ॥ १७ ब्राह्मण्य ॥

न प्रतिपद्यते । दृश्यते हि शूद्रोपि स्वजातिविलोपाद्देशान्तरे ब्राह्मणो भूत्वा वेदाध्ययनं तत्प्रणीतां च क्रियां कुर्वाणः । ततो ब्राह्मण्यजातेः प्रत्यक्षतोऽप्रतिभासनात्कथं व्रतवन्धवेदाध्ययनादि विशिष्टव्यक्तावेव सिद्ध्येत्? यदप्युक्तं ब्राह्मणपदमित्याद्यनुमानं तत्र व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धत्वं तत्पदस्याध्यक्षवाधितं कठकलापादिव्यक्तीनां ब्राह्मण्यविविक्तानां प्रत्यक्षतो निश्चयादश्रावणत्वविविक्तशब्दवत् । अप्रसिद्धविशेषणश्च पक्षः । न खलु व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयाभिसम्बद्धत्वं मीमांसकस्यास्माकं वा क्वचित्प्रसिद्धं व्यक्तिभ्यो व्यतिरिक्ताव्यतिरिक्तस्य सामान्यस्याभ्युपगमात् । हेतुश्चानैकान्तिकः सत्ताकाशकालपदे अद्वैतादिपदे वा व्यक्तिव्यतिरिक्तैकनिमित्ताभिधेयसम्बद्धत्वाभावेपि पदत्वस्य भावात् । तत्रापि तत्सम्बद्धत्वकल्पनायां सामान्यवत्त्वेनाद्वैताश्वविषाणादेर्वस्तुभूतत्वानुपङ्गात् कुतोऽप्रतिपक्षा पक्षसिद्धिः स्यात्? सत्तायाश्च सामान्यवत्त्वप्रसङ्गो गगनादीनां चैकव्यक्तिकत्वात्कथं सामान्यसम्भवः? दृष्टान्तश्च साध्यविकलः पटादिपदे व्यक्तिव्यतिरिक्तैकनिमित्तत्वासिद्धेः । एतेन वर्णविशेषेत्याद्यनुमानं प्रत्युक्तम् । नगरादौ च व्यक्तिव्यतिरिक्तैकनिमित्तनिवन्धनाभावेपि तथाभूतज्ञानस्योपलम्भादनेकान्तः । न खलु नगरादिज्ञाने व्यतिरिक्तमनुवृत्तप्रत्ययनिवन्धनं किञ्चिदस्ति काष्ठादीनामेव प्रत्यासत्तिविशिष्टत्वेन प्रासादादिव्यवहारनिवन्धनानां नगरादिव्यवहारनिवन्धनत्वोपपत्तेः । अन्यथा पण्णगरीत्यादिष्वपि वस्त्वन्तरकल्पनानुपङ्गः । ब्राह्मणेन यष्टव्यमित्याद्यागमोपि नात्र प्रमाणं प्रत्यक्षवाधितार्थाभिधायित्वात्तृणाग्रे हस्तियूथशतमास्त इत्यागमवत् । ननु ब्राह्मण्यादिजातिविलोपे कथं वर्णाश्रमव्यवस्था तन्निवन्धनो वा तपोदानादिव्यवहारो जैनानां घटेतेत्यप्यसमीचीनं क्रियाविशेषयज्ञोपवीतादिचिन्होपलक्षिते व्यक्तिविशेषे तद्व्यवस्थायास्तद्व्यवहारस्य चोपपत्तेः । कथमन्यथा परशुरामेण निःक्षत्रीकृत्य ब्राह्मणदत्तायां पृथिव्यां क्षत्रियसम्भवः? यथा चानेन निःक्षत्रीकृतासौ तथा केनचिन्निर्ब्राह्मणीकृतापि सम्भाव्येत । ततः क्रियाविशेषादिनिवन्धन एवायं ब्राह्मणादिव्यवहारः । एतेनाविगानत्रैवर्णिकोपदेशोत्र वस्तुनि प्रमाणमिति प्रत्युक्तं तस्याप्यव्यभिचारित्वाभावात् । दृश्यन्ते हि वहवस्त्रैवर्णिकैरविगानेन ब्राह्मणत्वेन व्यवह्रियमाणा विपर्ययभाजः ।

---

१ ब्राह्मणे ॥ २ ब्राह्मण्य ॥ ३साध्यधर्मं ॥ ४ अश्रावणत्वविविक्तशब्दस्याध्यक्षतो निश्चयाद्यथाऽश्रावण शब्द इति पक्ष प्रत्यक्षवाधितस्तथेत्यर्थं ॥ ५ दृष्टान्ते ॥ ६ भिन्नज्ञानजनकत्वे भिन्न व्यक्तिभ्य, पृथक्कर्तुमशक्यत्वादभिन्न सामान्यमिति ॥ ७ मीमांसकैर्जैनैश्च ॥ ८ पदत्वादिति ॥ ९ आदिना अश्वविषाणादिपदे ॥ १० साध्याभावे ॥ ११ हेतो ॥ १२ इदमेव विवृणोति ॥ १३ घटादिवत् ॥ १४ अर्थस्य ॥ १५ परमते ॥ १६ एषा भेदा उपचरिता इत्यर्थं ॥ १७ नैकव्यक्तिक सामान्यमिति वचनात् ॥ १८ गगनत्वादि ॥ १९ इति साध्याभावो दर्शित ॥ २० पटादिपदवदिति ॥ २१ नित्यसर्वगतादिरूपसामान्य ॥ २२ पदत्वानुमाननिराकरणेन ॥ २३ पदे ॥ २४ साध्याभावे ॥ २५ वर्णविशेषादिनिमित्तवुद्धिवैलक्षण्यस्योपलम्भात् ॥ २६ नगरमिति ज्ञानोपलम्भात् ॥ २७ व्यक्ते सकाशात् ॥ २८ नगरपदव्यतिरिक्त पण्णगरीशब्दवाच्यवस्त्वन्तरम् ॥ २९ ब्राह्मण्ये ॥ ३० ब्राह्मण्य ॥ ३१ ब्रह्मचारी गृहीत्यादि ॥ ३२ वर्णाश्रमाणा तदधीनत्वात् । न तु शूद्रजात्यधीनत्वम् ॥ ३३ ब्राह्मणादौ ॥ ३४ अतो ज्ञायते क्रियाविशेषादिक चिह्न दृष्ट्वैव पुरुषेषु क्षत्रियव्यवहार कृत ॥ ३५ रावणेन ॥ ३६ पुनर्ब्राह्मणेति व्यवहार क्रियादिविशेषचिह्न दृष्ट्वैव कृतोस्तीति ज्ञायते ॥ ३७ क्षत्रियब्राह्मणयोर्निराकरणे पुनर्व्यवस्थापने च क्रियादिविशेष एव निवन्धनमित्यर्थं ॥ ३८ आगमनिराकरणपरेण ॥ ३९ अविवादत ॥ ४० यत्र ब्राह्मण्यजातिस्तत्र त्रैवर्णिकोपदेश इति ॥ ४१ ब्राह्मण्ये ॥ ४२ त्रैवणिकशास्त्रोपदेशं ॥ ४३ शूद्रा ॥

तत्र परपरिकल्पितायां जातौ प्रमाणमस्ति । यतोऽस्याः सद्भावः स्यात् । सद्भावे वा वेश्यापाटक[1]ादिप्रविष्टानां ब्राह्मणी[2]नां ब्राह्मण्याभावो निन्दा च न स्याज्जातिर्यतः पवित्रताहेतुः । सा च भवन्मते तदवस्थैव । अन्यथा गोत्वादपि ब्राह्मण्यं निकृष्टं स्यात् । गवादीना हि चाण्डालादिगृहे चिरोषितानामपीष्टं शिष्टैरादानं, न तु ब्राह्मण्यादीनाम् । अथ क्रियाभ्रंशात्तत्र ब्राह्मण्यादीनां निन्द्यता, न–तज्जात्युपलम्भे तद्विशिष्टवस्तुव्यवसाये च पूर्ववत्[3]क्रियाभ्रंशस्याप्यऽसम्भवात् । ब्राह्मणत्वजातिविशिष्टव्यक्तिव्यवसायो ह्यप्रवृत्ताया अपि क्रियायाः प्रवृत्तेर्निमित्तम् । स च तदवस्थ एव भवदभ्युपगमेन । क्रियाभ्रंशे तज्जातिनिवृत्तौ च ब्रात्येप्यस्या निवृत्तिः स्यात्तद्भ्रंशाविशेषात् । किञ्च क्रियानिवृत्तौ तज्जातेर्निवृत्तिः स्याद् यदि क्रिया तस्याः कारणं व्यापिका वा स्यान्नान्यथातिप्रसङ्गात् । न चास्याः कारणं व्यापकं वा किञ्चिदिष्टम् । न च क्रियाभ्रंशे जातेर्विकारोस्ति भिन्नेष्वभिन्ना नित्या निरवयवा च जातिरित्यभिधानात् । न चाविकृताया निवृत्तिः सम्भवत्यतिप्रसङ्गात् । किञ्चेदं ब्राह्मणत्वं जीवस्य शरीरस्योभयस्य वा स्यात्संस्कारस्य वा वेदाध्ययनस्य वा ? गत्यन्तरासम्भवात् । न तावज्जीवस्य–क्षत्रियविट्शूद्रादीनामपि ब्राह्मण्यस्य प्रसङ्गात् । तेषामपि जीवस्य विद्यमानत्वात् । नापि शरीरस्यास्य पञ्चभूतात्मकस्यापि घटादिवद् ब्राह्मण्यासम्भवात् । न खलु भूताना व्यस्तानां समस्तानां वा तत्सम्भवति । व्यस्तानां तत्सम्भवे क्षितिजलपवनहुताशनाकाशानामपि प्रत्येकं ब्राह्मण्यप्रसङ्गः । समस्ताना च तेषां तत्सम्भवे घटादीनामपि तत्सम्भवः स्यात्तत्र तेषा सामस्त्यसम्भवात् । नाप्युभयस्योभयदोषानुषङ्गात् । नापि संस्कारस्यास्य शूद्रबालके कर्त्तुं शक्तितस्तत्रापि तत्प्रसङ्गात् । किञ्च संस्कारात्प्राग्ब्राह्मणबालस्य तदस्ति वा न वा? यद्यस्ति संस्कारकरणं वृथा । अथ नास्ति तथापि तद्वृथा । अब्राह्मणस्याप्यतो ब्राह्मण्यसम्भवे शूद्रबालकस्यापि तत्सम्भवः केन वार्येत? नापि वेदाध्ययनस्य–शूद्रेपि तत्सम्भवात् । शूद्रोपि हि कश्चिद्देशान्तरं गत्वा वेदं पठति पाठयति वा । न तावतास्य ब्राह्मणत्वं भवद्भिरभ्युपगम्यत इति । ततः सदृशक्रियापरिणामादिनिबन्धनैवेयं ब्राह्मणक्षत्रियादिव्यवस्था । इति सिद्धं सर्वत्र सदृशपरिणामलक्षणं समानप्रत्ययहेतुस्तिर्यक्सामान्यमिति ।

किं पुनरूर्ध्वतासामान्यमित्याह–परापरविवर्त्तव्यापिद्रव्यमूर्द्धता । सामान्यमित्यभिसम्बन्धः । तदेवोदाहरणद्वारेण स्पष्टयति–मृदिव स्थासादिषु । ननु पूर्वोत्तरविवर्त्तव्यतिरेकेणापरस्य तद्व्यापिनो द्रव्यस्याप्रतीतितोऽसत्त्वात्कथं तल्लक्षणमूर्द्ध्वतासामान्यं संदित्यप्यसमीचीनं प्रत्यक्षत एवार्थानामन्वयिरूपप्रतीतेः प्रति-

१ गृह, प्रासाद, शालादिस्थानभेदे पाटकशब्द ॥ २ इय ब्राह्मणीति ॥ ३ वेश्यागृहादिप्रवेशात्पूर्ववत् ॥ ४ वेश्यादिगृहे ॥ ५ नमस्कारादे ६ वेश्यादिगृहादौ ॥ ७ नित्यत्वादिरूपाया जाते । ततो नास्ति क्रियाभ्रंश इत्यर्थ ॥ ८ कदाचिन्नमस्कारहीनेपि ॥ ९ अग्निनिवृत्तौ धूमनिवृत्तिरतोऽग्नि कारण धूमस्य । तद्वत् ॥ १० वृक्षनिवृत्तौ शिंशपात्वनिवृत्तिरतो वृक्ष शिंशपाया व्यापकस्तद्वत् ॥ ११ घटनिवृत्तौ पटनिवृत्ति स्यात् ॥ १२ क्रिया–सन्ध्यावन्दनादि ॥ १३ नाशरूप १४ आत्माकाशादेरपि निवृत्ति स्यादिति ॥ १५ वेदाध्ययनमात्रेण ॥ १६ पूर्वापरकालवर्त्ति त्रिकालानुयायीत्यर्थ ॥ १७ पर्यायरूपविशेषव्यापित्वाद्व्यक्तिनिष्ठत्वमूर्द्ध्वतासामान्य सिद्धम् ॥ १८ विवर्त्तेषु ॥ १९ तदेव जैनैरुपादानकारण प्रोक्त नैयायिकादिभिश्च समवायिकारणमुक्तमित्यर्थ ॥ २० सौगत ॥ २१ विद्यमानम् ॥ २२ सर्वविवर्त्तानुगामी=अन्वयी ॥

क्षणविशरारुतया स्वप्नेऽपि तत्र तेषां प्रतीत्यभावात् । यथैव पूर्वोत्तरविवर्त्तयोर्व्यावृत्तप्रत्ययादन्योन्यमभावः प्रतीतस्तथा मृदाद्यनुवृत्तप्रत्ययात्स्थितिरपि । ननु कालत्रयानुयायित्वमेकस्य स्थितिः । तस्याश्चाऽक्रमेण प्रतीतौ युगपन्मरणावधि ग्रहणं, क्रमेण प्रतीतौ न क्षणिका बुद्धिस्तथा तां प्रत्येतुं समर्था क्षणिकत्वात् । इत्यप्ययुक्तं—बुद्धेः क्षणिकत्वेपि प्रतिपत्तुरक्षणिकत्वात् । प्रत्यक्षादिसहायो ह्यात्मैवोत्पादव्ययध्रौव्यात्मकत्वं भावानां प्रतिपद्यते । यथैव हि घटकपालयोर्विनाशोत्पादौ प्रत्यक्षसहायोसौ प्रतिपद्यते तथा मृदादिरूपतया स्थितिमपि । न खलु घटादिसुखादीनां भेदं एवावभासते, न त्वेकत्वमित्यभिधातुं युक्तं—क्षणक्षयानुमानोपन्यासस्यानर्थक्यप्रसङ्गात् । स ह्येकत्वप्रतीतिनिरासार्थो न क्षणक्षयप्रतिपत्त्यर्थस्तस्य प्रत्यक्षेणैव प्रतीत्यभ्युपगमात् । न चानन्तरातीतानागतक्षणयोः प्रत्यक्षस्य प्रवृत्तौ स्मरणप्रत्यभिज्ञानुमानानां वैफल्यं तत्र तेषां साफल्यानभ्युपगमात् । अतिव्यवहिते तदङ्गीकरणात् । न चाक्षणिकस्यात्मनोऽर्थग्राहकत्वे स्वगतबालवृद्धाद्यवस्थानामतीतानागतजन्मपरम्परायाः सकलभावपर्यायाणां चैकदैवोपलम्भप्रसङ्गो ज्ञानसहायस्यैवार्थग्राहकत्वाभ्युपगमात् । तस्य च प्रतिबन्धकक्षयोपशमाऽनतिक्रमेण प्रादुर्भावान्नोक्तदोषानुषङ्गः । न च द्रव्यग्रहणेऽतीताद्यवस्थानां ततोऽभिन्नत्वाद्ग्रहणप्रसङ्गोऽभिन्नत्वस्य ग्रहणं प्रत्यनङ्गत्वात् । अन्यथा ज्ञानादिक्षणानुभवे सच्चेतनादिवत् क्षणक्षयस्वर्गप्रापणशक्त्याद्यनुभवानुषङ्गः । तस्माद्यत्रैवास्य ज्ञानपर्यायप्रतिबन्धापायस्तत्रैव ग्राहकत्वनियमो नान्यत्रेत्यनवद्यमात्मा प्रत्यक्षसहायोऽनन्तरातीतानागतपर्याययोरेकत्वं प्रतिपद्यते इति, स्मरणप्रत्यभिज्ञानसहायश्चातिव्यवहितपर्यायेष्वपि । तयोश्च प्रामाण्यं प्रागेव प्रसाधितम् । ननु स्मरणप्रत्यभिज्ञानयोः पूर्वोपलब्धार्थविषयत्वे तद्दर्शनकाल एवोत्पत्तिप्रसङ्गस्तद्दर्शनवत्तद्विषयत्वेनानयोरप्यविकलकारणत्वात् । न चैवम् । तस्मान्न ते तद्विषये । प्रयोगः । यस्मिन्नविकलेपि यन्न भवति, न तत्तद्विषयम् । यथा रूपेऽविकले तत्राभवच्छ्रोत्रविज्ञानम् । न भवतोऽविकलेपि च पूर्वोपलब्धार्थे स्मृतिप्रत्यभिज्ञाने इति । तदप्यपेशलं

१ न केवल जाग्रदवस्थायाम् ॥ २ पूर्वनिवर्त्तादुत्तरविवर्त्तो व्यावृत्त ॥ ३ भेद ॥ ४ बौद्धमते ॥ ५ इद मृद्रूपमिद मृद्रूपमिति ॥ ६ द्रव्यरूपपदार्थस्य ॥ ७ सत्याम् ॥ ८ यथा भवति तथा ॥ ९ ज्ञान स्यादात्मद्रव्यादे. ॥ १० आत्मन ॥ ११ अक्षणिक आत्मा स चेत्सदैव कथ न जानातीत्युक्ते आह ॥ १२ आदिपदेन प्रत्यभिज्ञानादि ॥ १३ मृदादिपदार्थानाम् ॥ १४ बाह्यपदार्थ ॥ १५ आभ्यन्तरीयपदार्थ ॥ १६ आदिना आत्मादीनाम् ॥ १७ घटात्कपाल भिन्न कपालाद्घटो भिन्न इति भेद परस्पर तथा सुखदु खादेरात्मा भिन्नस्तस्मात्सुखादि भिन्नमिति भेद परस्परम् ॥ १८ अभिधीयते सौगतेन ॥ १९ सर्वथा नास्तिरूपस्य निषेधो न घटते गगनकुसुमवत् ॥ २० सौगतेन ॥ २१ प्रत्यक्षादिसहाय इत्यनादिग्रहण निरर्थकमित्युक्ते आह ॥ २२ घटकपाललक्षणयो ॥ २३ जैनेन ॥ २४ नित्य आत्मातीतानागतपर्यायानेकदैव ग्रहीष्यतीत्युक्ते आह ॥ २५ अङ्गीक्रियमाणे जैनै २६ स्वतोऽभिन्नाना पर्यायाणाम् ॥ २७ जैनै ॥ २८ ज्ञानेन युगपद्ग्रहीष्यतीत्युक्ते आह ॥ २९ ज्ञानस्य ॥ ३० प्रतिबन्धक कर्म ॥ ३१ युगपन्मरणावधिग्रहणलक्षण ॥ ३२ ज्ञानम् ॥ ३३ अकारणत्वात् ॥ ३४ ससारिण ॥ ३५ पदार्थ ॥ ३६ तत्र सौगतस्य । ज्ञानादिलक्षणादभिन्नसद्भावात् ॥ ३७ घटकपाललक्षणयो ॥ ३८ एकत्व प्रतिपद्यते ॥ ३९ स्मृतिप्रत्यभिज्ञानयो प्रामाण्य न विद्यते । तत्सहाय आत्मातिव्यवहितपर्यायेषु कथमेकत्व जानीयादित्युक्ते सत्याह ॥ ४० तृतीयाध्याये ॥ ४१ प्रत्यक्षेण ॥ ४२ स उपलब्धोर्थो विषयो ययोस्ते । तत्त्वे ॥ ४३ प्रत्यक्ष ॥ ४४ स उपलब्धार्थो विषयो ययोस्ते ॥ ४५ अनुत्पाद्यमानत्वात् ॥

तद्दर्शनकाले तयोः कारणाभावेनाऽप्रादुर्भावात् । न ह्यर्थस्तयोः कारणं ज्ञानं प्रति कारणत्वस्यार्थे प्रागेव प्रतिषेधात् । स्मरणं हि संस्कारप्रबोधकारणकम् । संस्कारश्च कालान्तराविस्मरणकारणलक्षणधारणारूपस्तद्दर्शनकाले नास्तीति कथं तदैवास्योत्पत्तिः प्रत्यभिज्ञानस्य वा? तदुत्पत्तौ हि दर्शनं पूर्वदर्शनाहितसंस्कारप्रबोधप्रभवस्मृतिसहायं प्रवर्त्तते । तच्च प्राग्नास्तीति कथं तदैव तदुत्पत्तिः? अथ मतम् । आत्मनः केवलस्यैवातीताद्यर्थग्रहणसामर्थ्ये स्मरणाद्यपेक्षावैयर्थ्यम् । तदसामर्थ्ये वा नितरां तद्वैयर्थ्यम् । न खलु केवलं चक्षुर्विज्ञानं गन्धग्रहणेऽसमर्थं सत्तत्स्मृतिसहायं समर्थं दृष्टमिति । तदप्यसङ्गतं यतः स्मरणादिरूपतया परिणतिरेवात्मनोऽतीताद्यर्थग्रहणसामर्थ्यम् । तत्कथं तदपेक्षावैयर्थ्यम् । चक्षुर्विज्ञानस्य तु गन्धग्रहणपरिणामस्यैवाभावान्न तत्स्मृतिसहायस्यापि गन्धग्रहणे सामर्थ्यमिति युक्तमुत्पश्यामः । ततो निराकृतमेतत्पूर्वोत्तरक्षणयोर्ग्रहणे कथं तत्र स्थास्नुताप्रतीतिरिति आत्मना तयोर्ग्रहणसम्भवात् । भवतां तु तयोरप्रतीतौ कथं मध्यक्षणस्य तत्राऽस्थास्नुताप्रतीतिरिति चिन्त्यताम् । पूर्वदर्शनाहितसंस्कारस्य मध्यक्षणदर्शनात्तत्क्षणस्मृतिस्तस्याश्च स इह नास्तीत्यस्थास्नुतावगमे स्थास्नुतावगमोऽप्येवं किन्न स्यात्? ननु चास्थास्नुता पूर्वोत्तरयोर्मध्येऽभावस्तस्य वा तत्र? स च तदात्मकत्वात्तद्ग्रहणेनैव गृह्यते । तदप्यसारं तदप्रतीतौ तत्रास्यात्र वा तयोर्निषेधस्याप्यसम्भवात् । न ह्यप्रतिपन्नघटस्यात्र घटो नास्तीति प्रतीतिरस्ति । कथं चैवं स्थास्नुता न प्रतीयेत । सापि हि पूर्वोत्तरयोर्मध्ये कथञ्चित्सद्भावस्तस्य वा तत्र? स च तदात्मकत्वात्तद्ग्रहणेनैव गृह्येत । ननु स्थास्नुतार्थानां नित्यतोच्यते । सा च त्रिकालापेक्षा । तदप्रतिपत्तौ च कथं तदपेक्षनित्यताप्रतिपत्तिस्तदसाम्प्रतं वस्तुस्वभावभूतत्वेनान्यानपेक्षत्वान्नित्यतायास्तथाभूतायाश्चास्याः प्रत्यक्षादिप्रमाणप्रसिद्धत्वेन प्रतीतेः प्रतिपादनात् । न खलु स्वयं नित्यतारहितस्य त्रिकालेनासौ क्रियतेऽनित्यतावत् । न हि वर्तमानकालेनानित्यता क्रियते तस्याऽसत्त्वात् । सत्त्वे वा तदनित्यत्वस्याप्यपरेण करणेऽनवस्थाप्रसङ्गः । ततो यथा स्वभावतः पूर्वोत्तरकोटिविच्छिन्नः क्षणो जातः क्षणिको विधीयते कालनिरपेक्षश्च प्रतीयते तथाऽक्षणिकत्वमपि । ननु चाक्षणिकत्वमर्थानामतीतानागतकालसम्बन्धित्वेनातीतानागतत्वम् । न च कालस्यातीतानागतत्वं सिद्धम् । तद्धि किमपरातीतादिकालसम्बन्धात्तथाभूतपदार्थक्रियासम्बन्धाद्वा स्यात्स्वतो वा? प्रथमपक्षेऽनवस्था । द्वितीयपक्षेपि पदार्थक्रियाणां कुतोऽतीतानागतत्वम्? अपरातीतानागतप-

---

१ नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवदित्यत्र द्वितीयपरिच्छेदे ॥ २ तर्हि स्मरणप्रत्यभिज्ञानयो कारण किमित्युक्ते आह ॥ ३ कारणम् ॥ ४ द्वितीयम् ॥ ५ तस्य प्रत्यक्षादिसहायरहितस्य ॥ ६ क्षणिकबुद्ध्या ॥ ७ अक्षणिकेन ॥ ८ अय मध्यक्षणस्तत्र नाभून भविष्यतीति प्रतीति ॥ ९ परेण ॥ १० क्षण ॥ ११ दर्शनम्=अनुभव ॥ १२ सकाशात् ॥ १३ पूर्वदर्शनाहितसंस्कारस्य मध्यक्षणदर्शनात्तत्क्षणस्मृति- । तस्याश्च स इह द्रव्यरूपेणास्तीति ॥ १४ क्षणयो ॥ १५ क्षणे ॥ १६ अभाव ॥ १७ पूर्वोत्तरक्षणयोरभावात्मकत्वान्मध्यक्षणस्य ॥ १८ द्रव्यरूपेण ॥ १९ द्रव्यरूपेण ॥ २० द्रव्यरूपेण मध्यक्षणस्य ॥ २१ अग्रे ॥ २२ पदार्थस्य ॥ २३ सौगताभ्युपगमरीत्या ॥ २४ कालस्य ॥ २५ कालेन ॥ २६ कालनिरपेक्षम् ॥ २७ अपरस्यापरस्मात्सिद्धावन्योन्याश्रयप्रसङ्गात् ॥

दार्थक्रियासम्बन्धाच्चेदनवस्था । अतीतानागतकालसम्बन्धाच्चेदन्योन्याश्रयः । स्वतः कालस्यातीतानागतत्वेऽर्थानामपि स्वत एवातीतानागतत्वमस्तु । किमतीतानागतकालसम्बन्धित्वकल्पनया ? इत्यप्यसमीक्षिताभिधानं स्वरूपत एवातीतादिसमयस्यातीतादित्वप्रसिद्धेः । अनुभूतवर्त्तमानत्वो हि समयोतीतोनुभविष्यद्वर्त्तमानत्वश्चानागतः । तत्सम्बन्धित्वाच्चार्थानामतीतानागतत्वम् । न च कालवदर्थानामपि स्वरूपेणैवातीतानागतत्वं युक्तम् । न ह्येकस्य धर्मोन्यत्राप्यासञ्जयितुं युक्तोन्यथा निम्बादेस्तिक्ततादिधर्मो गुडादेरपि स्यात् । ज्ञानधर्मो वा स्वपरप्रकाशकत्वं घटादेरपि स्यात् । तद्धर्मो वा जडता ज्ञानस्यापि स्यात् । ननु चानुवृत्ताकारप्रत्ययोपलम्भादक्षणिकत्वधर्मोर्थानां साध्यते । स च बाध्यमानत्वादसत्यस्तदप्यसम्यक् यतोऽस्य बाधको विशेषप्रतिभास एव । स चानुपपन्नः । तथा हि । अनुवृत्ताकारे प्रतिपन्नेऽप्रतिपन्ने वासौ तद्बाधको भवेत् ? यदि प्रतिपन्ने तदा किमनुवृत्तप्रतिभासात्मको विशेषप्रतिभासस्तद्व्यतिरिक्तो वा ? प्रथमपक्षेऽनुवृत्तप्रतिभासस्य मिथ्यात्वे विशेषप्रतिभासस्यापि तदात्मकत्वात्तत्प्रसक्तेः कथमसौ तद्बाधकः ? द्वितीयपक्षेप्यनुवृत्ताकारप्रतिभासमन्तरेण स्थासकोशादिप्रतिभासस्य तद्व्यतिरिक्तस्यासंवेदनात्तद्बाधकत्वायोगात् । अनुवृत्ताकाराप्रतिपत्तौ च विशेषप्रतिभासस्यैवासम्भवात्कथं तद्बाधकता ? किञ्च विपरीतार्थव्यवस्थापकं प्रमाणं बाधकमुच्यते प्रतिक्षणविनाशिपदार्थव्यवस्थापकत्वेन च प्रत्यक्षमनुमानं वा प्रवर्त्तेतान्यस्य प्रमाणत्वेन सौगतैरनभ्युपगमात् । तत्र न तावत्प्रत्यक्षं तद्व्यवस्थापकं तत्र तथार्थानामप्रतिभासनात् । न हि प्रतिक्षणं[11] त्रुट्यद्रूपतां बिभ्राणास्तत्रार्थाः प्रतिभासन्ते स्थिरस्थूलसाधारणरूपतयैव तत्र तेषां प्रतिभासनात् । न चान्यादृग्भूतः प्रतिभासोऽन्यादृग्भूतार्थव्यवस्थापकोऽतिप्रसङ्गात् । न च तत्र तथा तेषां प्रतिभासेपि सदृशापरापरोत्पत्तिविप्रलम्भाद्यथानुभवं व्यवसायानुपपत्तेः स्थिरस्थूलादिरूपतया व्यवसाय इत्यभिधातव्यमनुपहतेन्द्रियस्यान्यादृग्भूतार्थनिश्चयोत्पत्तिकल्पनायां प्रतिनियतार्थव्यवस्थित्यभावानुषङ्गात् । नीलानुभवेपि पीतादिनिश्चयोत्पत्तिकल्पनाप्रसङ्गात् । तथा च यत्रैव जनयेदेनां तत्रैवास्य प्रमाणतेत्यस्य विरोधः । ततो यथाविधार्थाध्यवसायी विकल्पस्तथाविधार्थस्यैवानुभवो ग्राहकोभ्युपगन्तव्यः । न चार्थस्य प्रतिविनाशित्वात्तत्सामर्थ्यबलोद्भूतेनाध्यक्षेणापि तद्रूपमेवानुकरणीयमिति वाच्यमितरेतराश्रयानुषङ्गात् । सिद्धे हि क्षणक्षयित्वेऽर्थानां तत्सामर्थ्याविनाभाविनोध्यक्षस्य तद्रूपानुकरणं सिद्ध्यति । तत्सिद्धौ च क्षणक्षयित्वं तेषां सिध्यतीति । नाप्यनुमानं तद्ग्राहकं तत्र प्रत्यक्षाप्रवृत्तावनुमानस्याप्रवृत्तेः । तथा हि । अध्यक्षाधिगतमविनाभावमाश्रित्य पक्षधर्मतावगमबलादनुमानमुदयमासादयति । प्रत्यक्षाविषये तु स्वर्गादाविवा-

१ कालस्यातीताऽनागतत्वे सिद्धे सति पदार्थक्रियाणामतीतानागतत्वसिद्धिस्तत्सिद्धौ च तत्सिद्धिरिति ॥ २ द्रव्यरूपेण पुरुषेण ॥ ३ भण्यते ॥ ४ समय ॥ ५ अतीतानागतकाल ॥ ६ सयोजयितुम् ॥ ७ वाधकत्वेनेति शेष ॥ ८ मिथ्यात्वा ॥ ९ द्वितीयविकल्पोऽयम् ॥ १० आगमादे ११ विनश्यद्रूपताम् ॥ १२ पटज्ञान घटव्यवस्थापकं स्यात् ॥ १३ क्षणिकोव क्षणिकोयमिति ॥ १४ जायते ॥ १५ निर्विकल्पकप्रत्यक्ष कर्तृ ॥ १६ सविकल्पकबुद्धिम् ॥ १७ निर्विकल्पकस्य ॥ १८ अतिप्रसङ्गो यत ॥ १९ तस्य विनाशधर्मस्य ॥ २० तस्य प्रतिक्षण विनाशधर्मस्य ॥ २१ तथा च सति तथाविधार्थस्यैवानुभवो ग्राहको भविष्यतीत्यर्थं ॥ २२ क्षणिकेर्थ ॥ २३ दृष्टान्तधर्मिणि ॥ २४ विनाशिपदार्थेन सह ॥

नुमानस्याप्रवृत्तिरेव । किञ्चात्र स्वभावहेतोः कार्यहेतोर्वा व्यापारः स्यात् ? न तावत्स्वभावहेतोः क्षणिकस्वभावतया कस्यचिदर्थस्वभावस्यानिश्चयात्, क्षणिकत्व-
स्याध्यक्षागोचरत्वात् । अध्यक्षगोचरे एव ह्यर्थे स्वभावहेतोर्व्यवहृतिप्रवर्तनफलत्वम्[2] । यथा विशददर्शनावभासिनि तरौ वृक्षत्वव्यवहारप्रवर्त्तनफलत्वं शिंशपायाः[3] । तदप्युक्तिमात्रं–हेतोर-
अथोच्यते यो यद्भावं प्रत्यन्यानपेक्षः स तत्स्वभावनियतः । यथाऽन्त्या कारणसामग्री स्वकार्योत्पादने । विनाशं प्रत्यन्यानपेक्षाश्च भावा इति । तदप्युक्तिमात्रं–हेतोर-
सिद्धेः । न खलु मुद्गराद्यनपेक्षा घटादयो भावाः प्रमाणतो विनाशमनुभवन्तोनुभूयन्ते प्रतीतिविरोधात् । किञ्चात्रान्यानपेक्षत्वमात्रं हेतुस्तत्स्वभावत्वे सत्यन्यान-
पेक्षत्वं वा ? प्रथमपक्षे यववीजादिभिरनेकान्तो हेतोः । शाल्यङ्कुरोत्पादनसामग्रीसन्निधानावस्थायां तदुत्पादनेऽन्यानपेक्षाणामप्येषां तद्भावनियमाभावात् ।
द्वितीयपक्षे तु विशेष्यासिद्धो हेतुस्तत्स्वभावत्वे सत्यप्यन्यानपेक्षत्वासिद्धेः । न ह्यन्त्या कारणसामग्री स्वकार्योत्पादनस्वभावापि द्वितीयक्षणानपेक्षा तदुत्पादयति ।
दहनस्वभावो वा वह्निः करतलादिसंयोगानपेक्षो दाहं विदधाति । भागे विशेषणासिद्धं च तत्स्वभावत्वे सत्यन्यानपेक्षत्वं शृङ्गोत्थशरादीनां क्षणिकस्वभावाभावात् । न च
किञ्च यदि नामाऽहेतुको विनाशस्तथापि यदैव मुद्गरादिव्यापारानन्तरमुपलभ्यते तदैवासावभ्युपगमनीयो नोदयानन्तरं कस्यचित्तदा तदुपलम्भाभावात् । न चान्ते क्षयोपलम्भादा-
मुद्गरादिव्यापारानन्तरमस्योपलम्भात्प्रागपि सद्भावः कल्पनीयः प्रथमक्षणे तस्यानुपलम्भान्मुद्गरादिव्यापारानन्तरमप्यभावानुषङ्गात् । न चान्ते क्षयोपलम्भादा-
दावप्यसावभ्युपगन्तव्यः सन्तानेनानेकान्तात् । किञ्चोदयानन्तरध्वंसित्वं भावानां भिन्नाभिन्नविकल्पाभ्यामन्येन ध्वंसस्यासम्भवादवसीयते प्रमाणान्तराद्वा ?
तत्रोत्तरविकल्पोऽयुक्तः प्रत्यक्षादेरुदयानन्तरध्वंसित्वेनार्थग्राहकत्वाप्रतीतेः । प्रथमविकल्पे तु भिन्नाभिन्नविकल्पाभ्या मुद्गराद्यनपेक्षत्वमेवास्य स्यान्न तूदयानन्तरं
भावः । न खलु निर्हेतुकस्याश्वविषाणादेः पदार्थोदयानन्तरमेव भावितोपलब्धा । अथाहेतुकत्वेन ध्वंसस्य सदा सम्भवात्कालाद्यनपेक्षातः पदार्थोदयानन्तरमेव
भावः । नन्वेवमहेतुकत्वेन सर्वदा भावात्प्रथमक्षणे एवास्य भावानुषङ्गो नोदयानन्तरमेव । न ह्यनपेक्षत्वादहेतुकः क्वचित्कदाचिच्च भवति तथाभावस्य सापेक्षत्वेना-
हेतुकत्वविरोधिना सहेतुकत्वेन व्याप्तत्वात्, तथा सौगतैरप्यभ्युपगमात् । ननु प्रथमक्षणे एव तेषां ध्वंसे सत्त्वस्यैवासम्भवात्कुतस्तत्प्रच्युतिलक्षणो ध्वंसः स्यात् ?

---

१ सत्त्वादिति ॥ २ दृष्टम् ॥ ३ अयं वृक्षः शिंशपात्वादिति ॥ ४ 'भावा धर्मिण । विनाशस्वभावनियता इति साध्यधर्मे । विनाशं प्रत्यन्यानपेक्षत्वादिति हेतु ' इत्युपरित ॥५ साध्याभावे प्रवर्त्तमानत्वात् ॥६ विनाशहेतु ॥
७ बौद्धमतेऽपि एकस्मिन्क्षणे कारणं कार्यं न करोति यत ॥ ८ सर्वे भावा विनाशस्वभावनियता इति पक्षस्यैकदेशे भागासिद्धो हेतुरित्यर्थः ॥९ महिषमृगादिशृङ्गेऽन्यनिरपेक्षतयोत्थशरादीनाम् ॥ १० एकस्मिन्क्षणे पदार्थे उत्पन
द्वितीयक्षणे मुद्गरादिव्यापारमन्तरेण विनश्यतीति नाभ्युपगमनीयं त्वया सौगतेन ॥ ११ तस्य विनाशस्य ॥ १२ मुद्गरादिव्यापारानन्तरं विनाशोस्ति मुद्गरादिव्यापारात्पूर्वं (उत्पत्तिक्षणाद् द्वितीयक्षणे) मपि विनाशोस्तीत्युक्ते आह ॥
१३ विनाशस्य ॥ १४ मुद्गरादिव्यापारात्पूर्वक्षणे ॥ १५ मुद्गरादिव्यापारस्यान्ते ॥ १६ मुद्गरादिव्यापारात्पूर्वम् ॥ १७ निर्वाणस्यान्ते उत्तरक्षणोत्पत्ते क्षयोस्ति, नादौ ॥ १८ यद्यदन्ते क्षयि तत्तदादौ क्षयीति ॥ १९ मुद्गरादिना ॥
२० स्थितिपक्षे उत्पादपक्षे चाग्रे यदुक्तमस्ति तत्सर्वमत्र द्रष्टव्यम् ॥ २१ अर्थस्य ॥ २२ नाशस्य । निर्हेतुकत्वात् ॥ २३ अश्वलक्षण ॥ २४ कालाद्यनपेक्षत्वाविशेषात् ॥ २५ किंतु सर्वदैव भवतीत्यर्थः ॥ २६ क्वचित्कदाचिद्भवत.
पदार्थस्य ॥ २७ कालादिना ॥ २८ अनुत्पन्नत्वात् ॥

ततः स्वहेतोरेवार्था[1] ध्वंसस्वभावाः प्रादुर्भवन्तीत्यप्यविचारितरमणीयं यतो यदि भावहेतोरेव तत्प्रच्युतिस्तदा किमेकक्षणस्थायिभावहेतोस्तत्प्रच्युतिः कालान्तरस्थायिभावहेतोर्वा? प्रथमपक्षोऽयुक्त एव क्षणस्थायिभावहेतुत्वस्याऽद्याप्यसिद्धेः। तत्कृतत्वं तत्प्रच्युतेरसिद्धमेव। द्वितीयपक्षे तु क्षणिकताऽभावानुषङ्गः। किञ्च भावहेतोरेव तत्प्रच्युतिहेतुत्वे किमसौ[2] भावजननात्प्राक्तत्प्रच्युतिं[3] जनयत्युत्तरकालं समकालं वा? प्रथमपक्षे प्रागभावः प्रच्युतिः[4] स्यान्न प्रध्वंसाभावः। द्वितीयपक्षे तु भावोत्पत्तिवेलायां तत्प्रच्युतेरुत्पत्त्यभावान्न[5] भावहेतुस्तद्धेतुः[6]। तथा[7] चोत्तरोत्तरकालभाविभावपरिणतिमपेक्ष्योत्पद्यमाना तत्प्रच्युतिः कथं भावोदयानन्तरं भाविनी स्यात्? तृतीयपक्षेपि भावोदयसमसमयभाविन्या तत्प्रच्युत्या सह भावस्यावस्थानाविरोधान्न कदाचिद्भावेन नष्टव्यम्। कथं चासौ[8] मुद्गरादिव्यापारानन्तरमेवोपलभ्यमाना तदभावे चानुपलभ्यमाना तज्जन्या न स्यादन्यत्रापि[9] हेतुफलभावस्यान्वयव्यतिरेकानुविधानलक्षणत्वात्। न च मुद्गरादीनां कपालसन्तत्युत्पादे एवं[10] व्यापार इत्यभिधातव्यं घटादेः स्वरूपेणाविकृतस्यावस्थाने पूर्ववदुपलब्ध्यादिप्रसङ्गात्[11]। न चास्य तदा[12] स्वयमेवाभावान्नोपलब्ध्यादिप्रसङ्गस्तदभावस्यापि तदैवोपलभ्यमानतयाऽन्यदा चानुपलभ्यमानतया कपालादिवत्तत्कार्यतानुषङ्गात्[13]। अथ घट एव मुद्गरादिकं[14] विनाशकारणत्वेन प्रसिद्धमपेक्ष्य समानक्षणान्तरोत्पादनेऽसमर्थं[15] क्षणान्तरमुत्पादयति तदप्यपेक्ष्य अपरमसमर्थतरं तदप्युत्तरमसमर्थतमं यावद्घटसन्ततेर्निवृत्तिरित्युच्यते[16][17]। ननु चात्रापि[18] घटक्षणस्यासमर्थक्षणान्तरोत्पादकत्वेनाभ्युपगतस्य मुद्गरादिना कश्चित्सामर्थ्यविघातो[19] विधीयते वा न वा? प्रथमविकल्पे कथमभावस्याहेतुकत्वम्[20]? द्वितीयविकल्पे तु मुद्गरादिसन्निपाते तज्जनकस्वभावाऽव्याहतौ समर्थक्षणान्तरोत्पादप्रसङ्गः[21] समर्थक्षणान्तरजननस्वभावस्य[22] भावात्प्राक्तनक्षणवत्[23]। किं च भावोत्पत्तेः प्राग्भावस्याभावनिश्चये तदुत्पादककारणोपादनं[24] कुर्वन्तः प्रतीयन्ते प्रेक्षापूर्वकारिणः तदुत्पत्तौ च निवृत्तव्यापारा विनाशकहेतुव्यापारानन्तरं च शत्रुमित्रध्वंसे[26] सुखदुःखभाजोऽनुभूयन्ते[27]। न चानयोः सद्भावः सुखदुःखहेतुः। ततस्तद्व्यतिरिक्तोऽभावस्तद्धेतुरभ्युपगन्तव्यः[28]। किञ्चाभावस्यार्थान्तरत्वानभ्युपगमे किं घट एव प्रध्वंसोभिधीयते कपालानि तदपरं पदार्थान्तरं[29]

१ अर्थोत्पत्तिकारणात् ॥ २ मृचकादे ॥ ३ भावस्य घटादे ॥ ४ घटादिभावस्य ॥ ५ घटप्रध्वंसस्य ॥ ६ भावोत्पत्तिवेलाया येन कारणेन भावोत्पत्तिर्जाता तस्मिन्नेव समये तेनैव कारणेन घटप्रध्वसो जायते तदा उभयो कारणमेक स्यादिति भाव ॥ ७ भावहेतोर्विनाशहेतुत्वाभावे च ॥ ८ कपालोत्पत्तौ ॥ ९ मुद्गरादिना सह ॥ १० न घटप्रच्युतौ ॥ ११ आदिना जलाहरणादिग्रहणम् ॥ १२ मुद्गरादिसन्निधानकाले ॥ १३ घटाभाव कार्यं भवति मुद्गराद्यन्वयव्यतिरेकानुविधायित्वात् ॥ १४ सहायमात्रम् ॥ १५ घटस्य घट एव ॥ १६ घटभङ्गलक्षणम् ॥ १७ मुद्गरादिक कर्मत्वेन ॥ १८ भवदुक्तपक्षे ॥ १९ घटस्य ॥ २० मुद्गरादिकारणजन्यत्वात् ॥ २१ समानक्षणान्तरोत्पादने ॥ २२ घटस्य ॥ २३ उत्पादात् ॥ २४ मृचकादि ॥ २५ स्वीकरणम् ॥ २६ कस्यचित्पुरुषस्य घट दृष्ट्वा स्नेहो जायते कस्यचित्तु द्वेषो जायते इति स्वभावद्वययुक्तत्वाद्घट एव शत्रुमित्ररूप । तस्य प्रध्वसे ॥ २७ अनेन वाक्येन सहेतुको विनाशोस्तीति दर्शितम् ॥ २८ स मुद्गरादिर्हेतुर्यस्य स ॥ २९ पटादिकमित्यर्थ ॥

वा ? प्रथमपक्षे घटस्वरूपेऽपरं नामान्तरं कृतम् । तत्स्वरूपस्य त्वविचलितत्वान्नित्यत्वानुपङ्गः । अथैकक्षणस्थायि घटस्वरूपं प्रध्वंसो, न-एकक्षणस्थायितया तद्रूप-
स्याद्याप्यप्रसिद्धेः । द्वितीयपक्षेपि प्राक्कपालोत्पत्तेः घटस्यावस्थितेः कालान्तरावस्थायित्वैवास्य, न क्षणिकता । किञ्च कपालकाले स न इति शब्दयोः किं भि-
न्नार्थत्वमभिन्नार्थत्वं वा ? भिन्नार्थत्वे कथं न नञ्शब्दवाच्यः पदार्थान्तरमभावः ? अभिन्नार्थत्वे तु प्रागपि नञ्प्रयोगप्रसक्तिः । न चानुपलम्भे सति नञ्प्रयोगं
इत्यभिधातव्यं व्यवधानाद्यभावे स्वरूपादप्रच्युतार्थस्यानुपलम्भानुपपत्तेः । स्वरूपात्प्रच्युतौ वा कथं न कपालकाले मुद्गरादिहेतुकं भावान्तरं प्रच्युतिर्भवेत् ।
अथ घटकपालव्यतिरिक्तं भावान्तरं घटप्रध्वंसः । नन्वत्रापि तेन सह घटस्य युगपदवस्थानाविरोधात् कथं तत्तत्प्रध्वंसः ? अन्यथोत्पत्तिकालेपि तत्प्रध्वंसप्रसङ्गा-
द्घटस्योत्पत्तिरेव न स्यात् । अन्यानपेक्षतया चाग्नेरुष्णत्ववत्स्वभावतोऽभावस्य भावे स्थितेरपि स्वभावतो भावः किन्न स्यात् ? शक्यते हि तत्राप्येवं
वक्तुं कालान्तरस्थायी स्वहेतोरेवोत्पन्नो भावो न तद्भावे भावान्तरमपेक्षते । अग्निरिवोष्णत्वे । भिन्नाभिन्नविकल्पस्य चाभाववत् स्थितावपि समानत्वात्
तत्राप्यन्यानपेक्षतया निर्हेतुकत्वानुपङ्गः । तथा हि । न वस्तुनो व्यतिरिक्ता स्थितिस्तद्धेतुना क्रियते तस्याऽस्थास्नुतापत्तेः । स्थितिसम्बन्धात्स्थास्नुतेत्यप्ययुक्तं
स्थितितद्वतोर्व्यतिरेकपक्षाभ्युपगमे तावत्तादात्म्यसम्बन्धोऽसङ्गतः । कार्यकारणभावोप्यनयोः सहभावादयुक्तः । असहभावे वा स्थितेः पूर्वं तत्कारणस्यास्थिति-
प्रसङ्गः । स्थितेरपि स्वकारणादुत्तरकालमनाश्रयतानुपङ्गः । अव्यतिरिक्तस्थितिकरणे च हेतुवैयर्थ्यम् । ततः स्थितिस्वभावनियतार्थस्तद्भावं प्रत्यन्यानपेक्षत्वादिति
स्थितम् । अहेतुकविनाशाभ्युपगमे चोत्पादस्याप्यऽहेतुकत्वानुपङ्गो विनाशहेतुपक्षनिक्षिप्तविकल्पानामत्राप्यविशेषात् । तथा हि । उत्पादहेतुः स्वभावत एवोत्पित्सुं भाव-
मुत्पादयत्यनुत्पित्सुं वा ? आद्यविकल्पे तद्धेतुवैफल्यम् । द्वितीयविकल्पेप्यनुत्पित्सोरुत्पादे गगनाम्भोजादेरुत्पादप्रसङ्गः । स्वहेतुसन्निधेरेवोत्पित्सोरुत्पादाभ्युपगमे
विनाशहेतुसन्निधानाद्विनश्वरस्य विनाशोप्यभ्युपगमनीयो न्यायस्य समानत्वात् । ततः कार्यकारणयोरुत्पादविनाशौ न सहेतुकाऽहेतुकौ कारणानन्तरं सहभा-
वाद्रूपादिवत् । न चानयोः सहभावोऽसिद्धः—"नाशोत्पादौ समं यद्वन्नामोन्नामौ तुलान्तयोः" इत्यभिधानात् । न चाहेतुकेन पर्यायसहभाविना द्रव्येणानेकान्तः

---

१ प्रध्वस इति ॥ २ गगनादिवत् ॥ ३ वहुतरकालम् ॥ ४ यावत् कपालानि ॥ ५ घटे सत्यपि घटो नास्तीति ॥ ६ घटस्य ॥ ७ कर्तव्य ॥ ८ देशकालादिना ॥ ९ पृथुबुध्नोदरादे ॥ १० घटलक्षणस्य ॥ ११ घटात् ॥
१२ तृतीयविकल्प ॥ १३ पदार्थान्तरस्य सदैव सद्भावात् ॥ १४ भिन्नाभिन्नविकल्पाभ्या यथाऽभाव कारणान्तरनिरपेक्ष ( बौद्धमते )स्तथा ताभ्या स्थितिरपि कारणनिरपेक्ष ( जैनमते )ति भाव ॥ १५ घटपटयोरिव ॥
१६ सव्येतरगोविषाणवत् ॥ १७ घटस्य ॥ १८ स्वकारणस्य क्षणभङ्गुरत्वेन नष्टत्वादिति भाव ॥ १९ घटात् ॥ २० अव्यतिरिक्तस्थितिकरणे च स्थितिमद्वस्त्वेव कृत स्यात् । तस्य च स्वहेतुनैव कृतत्वात्स्थितेर्हेतुना करणमनु-
पपन्नमित्यस्य वैयर्थ्यम् ॥ २१ स्थितावन्यानपेक्षतया निर्हेतुकत्व सिद्ध यत ॥ २२ स्थितिस्वभावम् ॥ २३ भिन्नाऽभिन्नवक्ष्यमाणानाम् ॥ २४ स्वभावत एव भावस्योत्पत्तिसम्भवात् ॥ २५ कारणेन ॥ २६ ययो सहभावस्तयो
सहेतुकासहेतुकत्वभावेन न जननमिति ॥ २७ रूपरसादीना यथा ॥

कारणानन्तरमिति विशेषणात्। न चैवमसिद्धत्वं मुद्गरादिव्यापारानन्तरं कार्योत्पादवत्कारणविनाशस्यापि प्रतीतेर्विनष्टो घट उत्पन्नानि कपालानीति व्यवहारद्वय-दर्शनात्। न च साध्यविकलमुदाहरणम्। न हि कारणभूतो रूपादिकलापः कार्यभूतस्य रूपस्यैव हेतुर्न तु रसादेरिति प्रतीतिः। नाप्यसहभावो रूपादीनां येन साध-नर्विकलं स्यात्। तन्नोक्तहेतोरर्थानां क्षणक्षयावसायः। नापि सत्त्वात्प्रतिबन्धासिद्धेः। न च विद्युदादौ सत्त्वक्षणिकत्वयोः प्रत्यक्षत एव प्रतिबन्धसिद्धेर्घटादौ सत्त्वमुपलभ्यमानं क्षणिकत्वं गमयतीत्यभिधातव्यं तत्राप्यनयोः प्रतिबन्धासिद्धेः। विद्युदादौ हि मध्ये स्थितिदर्शनं पूर्वोत्तरपरिणामौ प्रसाधयति। न हि विद्यु-दादेरनुपादानोत्पत्तिर्युक्तिमती प्रथमचैतन्यस्याप्यनुपादानोत्पत्तिप्रसङ्गतः परलोकाभावानुषङ्गात्, विद्युदादिवत्तत्रापि प्रागुपादानाऽदर्शनात्। न चानुमीयमान-मत्रोपादानं विद्युदादावपि तथात्वानुषङ्गात्। नाप्यस्य निरन्वया सन्तानोच्छित्तिश्चरमक्षणस्याकिञ्चित्करत्वेनावस्तुत्वापत्तितः पूर्वपूर्वक्षणानामप्यवस्तुत्वापत्तेः सकलसन्तानाभावप्रसङ्गः। विद्युदादेः सजातीयकार्याकरणेपि योगिज्ञानस्य करणान्नावस्तुत्वमिति चेन्नास्वाद्यमानरससमानकालरूपोपादानस्य रूपाकरणेपि रससहकारित्वप्रसङ्गात्। ततो रसाद्रूपानुमानं न स्यात्। तथा दृष्टत्वान्न दोष इत्यन्यत्रापि समानं विद्युच्छब्दादेरपि विद्युच्छब्दाद्यन्तरोपलम्भात्। न चैकत्र सत्त्वक्षणिकत्वयोः सहभावोपलम्भात्सर्वत्र ततस्तदनुमानं युक्तमन्यथा सुवर्णे सत्त्वादेव शुक्लतानुमितिप्रसङ्गः शुक्ले शङ्खे शुक्लतया तत्सहभावोपलम्भात्। अथ सुवर्णाकारनिर्भासिप्रत्यक्षेण शुक्लतानुमानस्य बाधितत्वान्न तत्र शुक्लतासिद्धिस्तर्हि घटादौ क्षणिकतानुमानस्य स एवायमित्येकत्वप्रतिभासेन बाधितत्वात्प्रतिक्षण-विनाशितासिद्धिर्न स्यात्। अथैकत्वप्रत्यभिज्ञा भिन्नेष्वपि लूनपुनर्जातनखकेशादिष्वभेदमुल्लिखन्ती प्रतीयत इत्येकत्वे नाऽसौ प्रमाणम्। नन्वेवं कामलोपहताक्षाणां धवलिमानमाबिभ्राणेष्वपि पदार्थेषु पीताकारनिर्भासिप्रत्यक्षमुदेतीति सत्यपीताकारेपि न तत्प्रमाणम्। भ्रान्तादभ्रान्तस्य विशेषोन्यत्रापि समानः। प्रसाधितं च प्रत्यभिज्ञानस्याभ्रान्तत्वं प्रागित्यलमतिप्रसङ्गेन। अथ विपक्षे बाधकप्रमाणबलात्सत्त्वक्षणिकत्वयोरविनाभावोवगम्यते। ननु तत्र सत्त्वस्य बाधकं प्रत्यक्षमनुमानं वा स्यात्? न तावत्प्रत्यक्षं तत्र क्षणिकत्वस्याप्रतिभासनात्। न चाप्रतिभासमानक्षणक्षयैस्वरूपं प्रत्यक्षं विपक्षाद्व्यावर्त्य सत्त्वं क्षणिकत्वनियतमादर्शयितुं समर्थम्। अथानुमानेन तत्ततो व्यावर्त्य क्षणिकनियततया साध्येत। ननु 'तदनुमानेप्यविनाभावस्यानुमानबलात्प्रसिद्धिः। तथा चानवस्था। न च तद्बाधकमनुमानमस्ति।

१ उपादानरूप ॥ २ सहकारिलक्षण ॥ ३ इत्युदाहरणस्य ॥ ४ उदाहरणम् ॥५ तत्स्वभावत्वे सत्त्यन्यानपेक्षत्वादिति ॥६ सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ७ प्रथमचैतन्य जन्मान्तरचैतन्यपूर्वक चिद्विवर्त्तत्वान्मध्यचिद्विवर्त्तव-दिति ॥ ८ विद्युदुत्तरपरिणामाविनाभाविनी न भविष्यतीत्युक्ते आह ॥ ९ उत्तराकारपरिणमनविषये ॥ १० अकिञ्चित्करत्वाविशेषात् ॥ ११ अन्त्यचित्तक्षणस्यार्थक्रियाशून्यत्वेनासत्त्वप्रसङ्गात् तस्यासत्त्वे तत्पूर्वक्षणस्याप्यर्थक्रियारहि-तत्वेनासत्त्वम्। तत एव तत्पूर्वक्षणानामप्यसत्त्वेन सर्वशून्यतापत्तिरेव स्यात् ॥ १२ पूर्वोत्तरक्षणाना समूह सन्तान । तन्मध्ये एकैकक्षण सन्तानी ॥ १३ विजातीयस्य ॥ १४ पूर्वरूपस्य ॥ १५ उत्तररूपाकरणे ॥ १६ अस्त्यत्र मातुलिङ्गे रूप रसादिति ॥ १७ उपादानकारणाद्रूपात् सजातीयरूपकरणप्रकारेण ॥ १८ तृतीयपरिच्छेदे ॥ १९ प्रत्यभिज्ञानस्याभ्रान्तत्वसमर्थनेन ॥ २० अक्षणिकत्वे ॥ २१ सत्त्वस्य ॥ २२ वस ॥ २३ सत्त्व क्षणिकत्वनियत तदन्वयव्यतिरेकानुविधानादिति ॥

ननु 'यत्र क्रमयौगपद्याभ्यामर्थक्रियाविरोधो न तत्सत्। यथा गगनाम्भोरुहम्। अस्ति च नित्ये स[1] इत्यतोनुमानात्ततो व्यावर्त्तमानं सत्त्वमनित्ये एवावतिष्ठत इत्यवसीयते।' तन्न–सत्त्वाक्षणिकत्वयोर्विरोधाऽसिद्धेः। विरोधो हि सहानवस्थानलक्षणः परस्परपरिहारस्थितिलक्षणो वा स्यात्? न तावदाद्यः। स हि पदार्थस्य पूर्वमुपलम्भे पश्चात्पदार्थान्तरसद्भावादभावावगतौ निश्चीयते शीतोष्णवत्[2]। न च नित्यत्वस्योपलम्भोस्ति सत्त्वप्रसङ्गात्। नापि द्वितीयो विरोधस्तयोः सम्भवति नित्यत्वपरिहारेण सत्त्वस्य तत्परिहारेण वा नित्यत्वस्यानवस्थानात्। क्षणिकतापरिहारेण ह्यक्षणिकता व्यवस्थिता तत्परिहारेण च क्षणिकतेत्यनयोः परस्परपरिहारस्थितिलक्षणो [3]विरोधः[4]। न चार्थक्रियालक्षणसत्त्वस्य क्षणिकतया व्याप्तत्वान्नित्येन विरोधोन्योन्याश्रयानुषङ्गात्। अर्थक्रियालक्षणं सत्त्वं क्षणिकतया व्याप्तं नित्यताविरोधात्सिध्यति, सोप्यस्य क्षणिकतया व्याप्तेरिति। ननु 'चार्थक्रियायाः क्रमयौगपद्याभ्यां व्याप्तत्वात्तयोश्चाक्षणिकेऽसम्भवात्कुतः क्रमवत्यऽर्थक्रिया नित्ये सम्भविनी? न च सहकारिक्रमान्नित्ये क्रमवत्त्यप्यसौ सम्भवत्यस्योपकारकानुपकारकपक्षयोः सहकार्यऽपेक्षाया एवासम्भवात्। नापि यौगपद्येनासौ नित्ये सम्भवति पूर्वोत्तरकार्ययोरेकक्षण एवोत्पत्तेर्द्वितीयक्षणे तस्यानर्थक्रियाकारित्वेनावस्तुत्वप्रसङ्गात्।' इत्यप्यसारमेकान्तनित्यवदऽनित्येपि क्रमाक्रमाभ्यामर्थक्रियाऽसम्भवात्, तस्याः कैथञ्चिन्नित्ये एव सम्भवात्, तत्र क्रमाक्रमवृत्त्यनेकस्वभावत्वप्रसिद्धेः। [6]अन्यत्र तु तत्स्वभावत्वाप्रसिद्धेः पूर्वापरस्वभावत्यागोपादानान्वितरूपाभावात्सकृदनेकशक्त्यात्मकत्वाभावाच्च। न खलु कूटस्थेर्थे पूर्वोत्तरस्वभावत्यागोपादाने स्तः क्षणिके चान्वितं रूपमस्ति–यतः क्रमः कालकृतो देशकृतो वा। नापि युगपदनेकस्वभावत्वं यतो यौगपद्यं स्यात्–कौटस्थ्यविरोधान्निरन्वयविनाशित्वव्याघाताच्च। किञ्च क्षणिकं वस्तु विनष्टं सत्कार्यमुत्पादयत्यविनष्टमुभयरूपमनुभयरूपं वा? न तावद्विनष्टं चिरतरनष्टस्येवानन्तरनष्टस्याप्यसत्त्वेन जनकत्वविरोधात्। नाप्यविनष्टं क्षणभङ्गभङ्गप्रसङ्गात्। सकलशून्यतानुषङ्गाद्वा सकलकार्याणामेकदैवोत्पद्य विनाशात्। नाप्युभयरूपं निरंशैकस्वभावस्य विरुद्धोभयरूपासम्भवात्। नाप्यनुभयरूपमन्योन्यव्यवच्छेदरूपाणामेकनिषेधस्यापरविधाननान्तरीयकत्वेनानुभयरूपत्वायोगात्। कथं च निरन्वयनाशित्वे कारणस्योपादानसहकारित्वस्य व्यवस्था? तत्स्वरूपापरिज्ञानात्। उपादानकारणस्य हि स्वरूपं किं स्वसन्ततिनिवृत्तौ कार्यजनकत्वम्? यथा मृत्पिण्डः स्वयं निवर्तमानो घटमुत्पादयति। आहोस्विदनेकस्मादुत्पद्यमाने कार्ये स्वगतविशेषाधायकत्वं समनन्तरप्रत्ययत्वमात्रं वा स्यान्नियमवदन्वयव्यतिरेकानु-

---

१ नित्य सत्र भवति क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्॥ २ तम प्रकाशयोरिव वा॥ ३ न तु सत्त्वाक्षणिकत्वयो॥ ४ प्रथमभेदे वाध्यबाधकभावेन विरोध। द्वितीयभेदे तु स्वभावेनैव—यत्र क्षणिकत्व तत्र न सत्त्वमिति विरोध॥ ५ द्रव्यत्वेन॥ ६ सर्वथा क्षणिके॥ ७ अवस्थितस्य पदार्थस्यैकस्य हि नानादेशकालकलाव्यापित्व देशक्रम कालक्रमश्च॥ ८ नित्यक्षणिकाभ्या कृताना कार्याणाम्॥ ९ एकानेकात्मकत्वप्रसक्ते॥ १० क्षणिकस्य॥ ११ युगपदनेकस्वभावत्ववत् क्रमेणापि तथा प्राप्ते॥ १२ द्वितीयक्षणे कार्याजनकत्वात्॥ १३ अविनाभूतत्वेन॥ १४ एक कार्यं प्रत्युपादानत्वमपर प्रति सहकारित्वमिति॥ १५ जैनो बौद्ध प्रति वक्ति॥ १६ बौद्धमते॥ १७ (ज्ञान प्रति) इन्द्रियार्थालोकादिकारणकलापात्। (घट प्रति) मृदादिकारणकलापात्॥ १८ ज्ञानलक्षणे घटादौ वा॥

विधानं वा ? प्रथमपक्षे कथञ्चित्[1]सन्ताननिवृत्तिः सर्वथा[2] वा? कथञ्चिच्चेत्परमत[3]प्रसङ्गः । सर्वथा चेत्परलोकाभावानुषङ्गो ज्ञान[4]सन्तानस्य सर्वथा निवृत्तेः । द्वितीयपक्षेपि किं स्वगतकतिपयविशेषाधायकत्वं सकलविशेषाधायकत्वं वा ? तत्राद्यविकल्पे सर्वज्ञज्ञाने स्वाकारार्पकस्यास्मदादिज्ञानस्य[5] तत्प्रत्युपादानभावः[6] । तथा च सन्तानसङ्करः । रूपस्य वा रूपज्ञानं प्रत्युपादानभावोनुषज्येत स्वगतकतिपयविशेषाधायकत्वाविशेषात्[7] । रूपोपादानत्वे च परलोकाय दत्तो जलाञ्जलिः । कतिपयविशेषाधायकत्वेनोपादानत्वे चैकस्यैव ज्ञानादिक्षणस्यानुवृत्तव्यावृत्ताऽनेकविरुद्धधर्माध्यासप्रसङ्गात्स एव परमतप्रसङ्गः । द्वितीयविकल्पे तु कथं निर्विकल्पकाद्विकल्पोत्पत्तिः ? रूपाकारात्समनन्तरप्रत्ययाद्रसाकारप्रत्ययोत्पत्तिर्वा ? स्वगतसकलविशेषाधायकत्वाभावात् । सन्तानबहुत्वोपगमात्सर्वस्य स्वसदृशादेवोत्पत्तिरित्यभ्युपगमे त्वेकस्मिन्नपि पुरुषे प्रमातृबहुत्वापत्तिः । तथा च गवाश्वादिदर्शनयोर्भिन्नसन्तानत्वादेकेन दृष्टेर्थे परस्यानुसन्धानं न स्याद्देवदत्तेन दृष्टे यज्ञदत्तवत् । किञ्च सकलस्वगतविशेषाधायकत्वे सर्वात्मनोपादेयक्षणे एवास्योपयोगात्तत्रानुपयुक्तस्वभावान्तराभावाच्चैकसामग्र्यन्तर्गतं प्रति सहकारित्वाभावः । तत्कथं रूपादेरसतो गतिः ? स्वभावान्तरोपगमे त्रैलोक्यान्तर्गतान्यजन्यकार्यान्तरापेक्षया तस्याजनकत्वमपि स्वभावान्तरमभ्युपगन्तव्यम् । इत्यायातमेकस्यैवोपादानसहकार्यऽजनकत्वाद्यनेकविरुद्धधर्माध्यासितत्वम् । न चैते धर्माः काल्पनिकास्तत्कार्याणामपि तथात्वप्रसङ्गात् । समनन्तरप्रत्ययत्वमप्युपादानलक्षणमनुपपन्नम् । कार्ये समत्वं कारणस्य सर्वात्मनैकदेशेन वा ? सर्वात्मना चेद्यथा कारणस्य प्राग्भावित्वं तथा कार्यस्यापि स्यात् । तथा च सव्येतरगोविषाणवदेककालत्वात्तयोः कार्यकारणभावो न स्यात् । तथा कारणाभिमतस्यापि स्वकारणकालता, तस्यापि सेति सकलशून्यं जगदापद्येत । कथञ्चित्समत्वे योगिज्ञानस्याप्यस्मदादिज्ञानावलम्बनस्य तदाकारत्वेनैकसन्तानत्वप्रसङ्गः स्यात् । अनन्तरत्वं च देशकृतं कालकृतं वा स्यात् ? न तावद्देशकृतं तत्तत्रोपयोगि व्यवहितदेशस्यापीह जन्ममरणचित्तस्य भाविजन्मचित्तोपादानत्वोपगमात् ।

---

१ पर्यायरूपेण ॥ २ द्रव्यरूपेणापि ॥ ३ तथैव जैनानामपीष्टत्वात् ॥ ४ एकजन्मनि वर्त्तमानस्य । उत्तरोत्तरज्ञानसन्तान एवात्मेति वचनात् ॥ ५ अकिञ्चिज्ज्ञत्वं वर्जयित्वाऽन्यान् चेतनत्वादिज्ञानगतविशेषान् समर्पयतीति भाव ॥ ६ सहकारिकारणभूतस्य ॥ ७ अस्मदादिज्ञान यदा सर्वज्ञो विषयीकरोति तदा तत्स्वाकार कतिपय समर्पयति यत ॥ ८ सहकारिकारणभूतस्य ॥ ९ कार्यभूतम् ॥ १० कतिपयविशेषा =रूपगतजडत्व वर्जयित्वा स्वगतश्वेतपीताद्याकारविशेषा ॥ ११ रूपज्ञानस्य ॥ १२ अचेतनरूपादुपादानाच्चैतन्योत्पत्तिर्यत ॥ १३ रूप रूपज्ञाने रूप समर्पयति न तु जडत्वम् ॥ १४ आदिना अर्थादि ॥ १५ अर्पितानर्पितादिविशेषापेक्षयाऽनुवृत्तत्व्यावृत्त रूप ॥ १६ अनेकान्तात्मकत्वाज् ज्ञानस्य ॥ १७ उत्तरनिर्विकल्पकज्ञानस्योपादानात्सविकल्पकस्य सहकारिकारणात् ॥ १८ रूपज्ञानादुत्तररूपज्ञानस्योपादानादुत्तररसज्ञानस्य सहकारिकारणात् ॥ १९ एकस्मिन्पुरुषे ॥ २० निर्विकल्पकस्य निर्विकल्पकमुपादान सविकल्पकस्य सविकल्पकमुपादानमिति भाव ॥ २१ ज्ञानसन्तानस्य बहुत्वात् ॥ २२ गोदर्शनेन ॥ २३ अश्वादिदर्शनस्य ॥ २४ य एवाह पूर्वं गामद्राक्ष स एवाहमिदानीमश्व पश्यामीति क्रमेण, युगपदश्वगावौ पश्यामीत्यक्रमेण च ॥ २५ स्वगतसकलविशेषाधायकत्वे दूषणान्तरमाह ॥ २६ कार्यजन्ये ॥ २७ रूपाद्युपादानस्य ॥ २८ पूर्वरूपरसौ एकसामग्री ॥ २९ उत्तररसम् ॥ ३० पूर्वरूपस्य ॥ ३१ ज्ञानम् ॥ ३२ रूपाद्युपादानस्य ॥ ३३ आदिपदेन पूर्वकालभावित्वमुत्तरकालनाशित्वम् ॥ ३४ अयथार्था ॥ ३५ तृतीयविकल्प ॥ ३६ प्रत्यय =कारणम् ॥ ३७ समकालत्वमित्यर्थ ॥ ३८ सर्वात्मना समानत्वात् ॥ ३९ पूर्वरूपक्षणे कार्ये पूर्वतररूपक्षणस्य कारणभूतस्य समत्वम् ॥ ४० कार्यकारणयोरभावात् ॥ ४१ ज्ञातत्वेन ॥ ४२ बहुव्रीहि ॥ ४३ कथञ्चित्समत्वेन सद्भावात् ॥ ४४ सौगतेन ॥

नापि कालानन्तर्यं तद्व्यवहितकालस्यापि जाग्रच्चित्तस्य प्रवुद्धचित्तोत्पत्तावुपादानत्वाभ्युपगमात् । अव्यवधानेन प्रागभावमात्रमनन्तरत्वमित्यप्ययुक्तं क्षणिकैकान्त-
वादिनां विवक्षितक्षणानन्तरं निखिलजगत्क्षणानामुत्पत्तेः सर्वेषामेकसन्तानत्वप्रसङ्गात् । नियमवदन्वयव्यतिरेकानुविधानं तल्लक्षणमित्यप्यसमीचीनं—बुद्धेतरचि-
त्तानामप्युपादानोपादेयभावानुषङ्गात्, तेषामव्यभिचारेण कार्यकारणभूतत्वाविशेषात् । निरास्रवचित्तोत्पादात्पूर्वं बुद्धचित्तं प्रति सन्तानान्तरचित्तस्याकारणत्वान्न
तेषामव्यभिचारी कार्यकारणभाव इति चेन्न—यतः प्रभृति तेषां कार्यकारणभावस्तत्प्रभृतितस्तस्याव्यभिचारात् । अन्यथाऽस्याऽसर्वज्ञत्वं स्यात्—नाकारणं विषय
इत्यभ्युपगमात् । अव्यभिचारेण कार्यकारणभूतत्वाविशेषेपि प्रत्यासत्तिविशेषवशात्केषाञ्चिदेवोपादानोपादेयभावो, न सर्वेषामिति चेत्स कोन्योन्यत्रैकद्रव्यतादा-
त्म्यात्? देशप्रत्यासत्ते रूपरसादिभिर्वातातपादिभिर्वा व्यभिचारात्, कालप्रत्यासत्तेरेकसमयवर्तिभिरशेषार्थैरनेकान्तात्, भावप्रत्यासत्तेश्चैकार्थोद्भूतानेकपुरुषवि-
ज्ञानैरनेकान्तात् । न चात्रान्वयव्यतिरेकानुविधानं घटते । न खलु समर्थे कारणे सत्यभवतः स्वयमेव पश्चाद्भवतस्तदन्वयव्यतिरेकानुविधानं नाम, नित्यवत् ।
स्वदेशवत्स्वकाले सति समर्थे कारणे कार्यं जायते नासतीत्येतावता क्षणिकपक्षेऽन्वयव्यतिरेकानुविधाने नित्येपि तत्स्यात् । स्वकालेऽनाद्यनन्ते सति समर्थे
नित्ये स्वसमये कार्यस्योत्पत्तेरसत्यऽनुत्पत्तेश्च प्रतीयमानत्वात् । सर्वदा नित्ये समर्थे सति स्वकाले एव कार्यं भवत्कथं तदन्वयव्यतिरेकानुविधायीति चेत्तर्हि का-
रणक्षणात्पूर्वं पश्चाच्चानाद्यनन्ते तदभावेऽविशिष्टे क्वचिदेव तदभावसमये भवत्कार्यं कथं तदनुविधायीति समानम् । नित्यस्य प्रतिक्षणमनेककार्यकारित्वे
क्रमशोनेकस्वभावत्वसिद्धेः कथमेकत्वं स्यादिति चेत्क्षणिकस्य कथमिति समः पर्यनुयोगः । स हि क्षणस्थितिरेकोपि भावोऽनेकस्वभावो विचित्रकार्यत्वान्नानार्थ-
क्षणवत् । न हि कारणशक्तिभेदमन्तरेण कार्यनानात्वं युक्तं रूपादिज्ञानवत् । यथैव हि कर्कटिकादौ रूपादिज्ञानानि रूपादिस्वभावभेदनिवन्धनानि तथा क्षण-
स्थितेरेकस्मात्प्रदीपादिक्षणाद्वर्तिकादाहतैलशोषादिविचित्रकार्याणि शक्तिभेदनिमित्तकानि व्यवतिष्ठन्ते । अन्यथा रूपादेरपि नानात्वं न स्यात् । ननु च शक्ति-
मतोऽर्थान्तरानर्थान्तरपक्षयोः शक्तीनामघटनात्तासां परमार्थसत्त्वाभावस्तर्हि रूपादीनामपि प्रतीतिसिद्धद्रव्यादर्थान्तरानर्थान्तरविकल्पयोरसम्भवात्परमार्थसत्त्वा-

---

१ निद्रायाम् ॥ २ अन्येन वस्तुना तिरोधायकेन ॥ ३ पूर्वरूपस्य कारणस्य ॥ ४ चेतनाऽचेतनाना कार्याणाम् ॥ ५ चतुर्थविकल्प ॥ ६ सुगत ॥ ७ किञ्चिज्ज्ञ ॥ ८ चित्त ज्ञानम् ॥ ९ अस्मदादिज्ञानसद्भावे सुगतस्या-
स्मदादिज्ञानविषयकज्ञानोत्पत्तिस्तदभावे नोत्पत्तिरित्यन्वयव्यतिरेकाभ्याम् ॥ १० आस्रवरहितचित्त ॥ ११ सास्रवम् ॥ १२ निरास्रवचित्तोत्पत्ते ॥ १३ यदैव घटस्तदेव मृत्पिण्ड इति ॥ १४ बुद्धस्य ॥ १५ यत्सुगतज्ञानोत्पत्तो कारण
तदेव विषय ॥ १६ सुगतचित्ताना परस्परम् ॥ १७ अत्रात्मैव एकद्रव्यम् ॥ १८ प्रत्यासत्तिरत्रैक्यम्। यत्र यत्र देशप्रत्यासत्तिस्तत्र तत्रोपादानोपादेयभाव इत्युच्यमाने ॥ १९ भाव =स्वरूपम् ॥ २० क्षणिके ॥ २१ पूर्वक्षणे जाग्रद्-
शान्त्यचित्ते ॥ २२ उत्तरक्षणस्य प्रवुद्धचित्तस्य २३ कारण विना ॥ २४ सौगतेनाङ्गीक्रियमाणे ॥ २५ कारणे ॥ २६ अव्यापकत्वेनाभिमते ॥ २७ क्षणिकस्यानेकस्वभावत्व नास्त्यत' कथ सम पर्यनुयोग इत्याह ॥
२८ विचित्रकार्यत्वमस्तु न त्वनेकस्वभावत्वमिति सन्दिग्धानैकान्तिकत्वे सतीदम् ॥ २९ आदिना स्वपरप्रकाशनादिग्रहणम् ॥ ३० अर्थात्सकाशात् ॥ ३१ भिन्नाश्चेत्तस्येति सम्वन्धाभाव । सम्बन्धसिद्ध्यर्थमुपकारकल्पनेऽ-
नवस्था । अभिन्नाश्चेच्छक्तय एव शक्तिमन्त एव वा स्यु ॥

भावः स्यात्। प्रत्यक्षबुद्धौ प्रतिभासमानत्वाद्रूपादयः परमार्थसन्तो न पुनस्तच्छक्तयस्तासामनुमानबुद्धौ प्रतिभासमानत्वादित्यप्ययुक्तं क्षणक्षयस्वर्गप्रापणशक्त्यादीनामपरमार्थसत्त्वप्रसङ्गात्। ततो यथा क्षणिकस्य युगपदनेककार्यकारित्वेप्येकत्वाविरोधस्तथाऽक्षणिकस्य क्रमशोनेककार्यकारित्वेपीत्यनवद्यम्। यच्चार्थक्रियालक्षणं सत्त्वमित्युक्तं तत्र लक्षणशब्दः कारणार्थः स्वरूपार्थो ज्ञापकार्थो वा स्यात्? प्रथमपक्षे किमर्थक्रियालक्षणं कारणं सत्त्वस्य तद्वार्थक्रियायाः? तत्रार्थक्रियातः सत्त्वस्योत्पत्तौ प्राक् पदार्थानां सत्त्वमन्तरेणाप्यस्याः प्रादुर्भावान्निर्हेतुकत्वं निराधारकत्वं वानुपज्येत। अथ सत्त्वादर्थक्रियोत्पद्यते तदार्थक्रियातः प्रागपि सत्त्वसिद्धेर्भावानां स्वरूपसत्त्वमायातम्। अथ स्वरूपार्थोसौ तत्रापि तद्धेतोरसत्त्वप्रसङ्गः। न ह्यर्थक्रियाकाले तद्धेतुर्विद्यते। न चान्यकालस्यास्यान्यकाला सा स्वरूपमतिप्रसङ्गात्। नापि ज्ञापकार्थोसावर्थक्रियाकालेर्थस्यासत्त्वादेव। असतश्चास्याऽतः कथं सत्ताज्ञप्तिरतिप्रसङ्गात्। न चार्थक्रियोदयात्प्राक् कारणमासीदिति व्यवस्थापयितुं शक्यम्। यतो यदि स्वरूपेण पूर्वं हेतुरवगतो भवेत्तदनन्तरं चार्थक्रिया, तदार्थक्रिया प्रतिपन्नसम्बन्धोपलभ्यमाना प्राग्धेतुसत्तां व्यवस्थापयतीति स्यात्। न चार्थक्रियामन्तरेण हेतुः स्वरूपेण कदाचिदप्युपलब्धः परैः—स्वरूपसत्त्वप्रसङ्गात्। अर्थक्रियायाश्चापरार्थक्रिया यदि सत्त्वव्यवस्थापिका तदानवस्था। न चार्थक्रियाऽनधिगतसत्त्वस्वरूपापि हेतुसत्त्वव्यवस्थापिकाऽश्वविषाणादेरपि तत्सत्त्वव्यवस्थापकत्वानुषङ्गात्। न च हेतुजन्यत्वादर्थक्रिया सती नार्थक्रियान्तरोदयादित्यभिधातव्यमितरेतराश्रयानुषङ्गात्। हेतुसत्त्वाद्धयऽर्थक्रिया सती तत्सत्त्वाच्च हेतोः सत्त्वमिति। अस्तु वार्थक्रियालक्षणं सत्त्वम्। तथाप्यतोर्थाना क्षणस्थायिता क्षणिकत्वं साध्येत क्षणादूर्द्ध्वमभावो वा? प्रथमपक्षे सिद्धसाध्यता नित्यस्याप्यर्थस्य क्षणावस्थित्यभ्युपगमात्। कथमन्यथास्य सदावस्थितिः क्षणावस्थितिनिबन्धनत्वात् क्षणान्तराद्यवस्थितेः। अथ क्षणादूर्द्ध्वमभाव साध्यते तन्नाऽभावेन सहास्य प्रतिबन्धासिद्धेः। न चाप्रतिबन्धविषयोऽश्वविषाणादिवदनुमेयः। तन्न सत्त्वादप्यर्थानां क्षणिकत्वावगतिः। नापि कृतकत्वादुक्तप्रकारेण क्षणिके कार्यकारणभावप्रतिषेधतः कृतकस्याऽसिद्धस्वरूपत्वेन तदवगतिं प्रत्यनङ्गत्वात्। ततः प्रतीत्यनुरोधेन स्थिरः स्थूलः साधारणस्वभावश्च भावोभ्युपगन्तव्यः।

ननु चार्णूनामयःशलाकाकल्पत्वेनान्योन्यं सम्बन्धाभावतः स्थूलादिप्रतीतेर्भ्रान्तत्वात्कथं तद्वशात्तत्स्वभावो भावः स्यात्? तथा हि। सम्बन्धोर्थानां पारतन्त्र्यलक्षणो वा स्याद्रूपश्लेषलक्षणो वा स्यात्? प्रथमपक्षे किमसौ निष्पन्नयोः सम्बन्धिनोः स्यादनिष्पन्नयोर्वा? न तावदनिष्पन्नयोः स्वरूपस्यैवाऽसत्त्वात्

१ तस्य प्रदीपस्य ॥ २ साधन विचार्यते ॥ ३ लक्ष्यते जन्यते कार्यमनेनेति लक्षण कारणमित्यर्थ —अनेकार्थत्वाद्धातूनाम् ॥ ४ सत्त्वस्य ॥ ५ सत्त्वस्य ॥ ६ द्वयो पक्षयोर्मध्ये ॥ ७ कारणभूतात् ॥ ८ सर्वथा क्षणिकत्वात् ॥ ९ न हि स्वरूपिस्वरूपयो कालभेदो यत ॥ १० गगनकुसुमादेरपि ज्ञापकत्वप्रसङ्गात् ॥ ११ अर्थक्रिया=स्नानपानादि ॥ १२ जलादिलक्षण । अर्थक्रियाया ॥ १३ कारणेन सह ॥ १४ अर्थक्रियाकारणम् ॥ १५ सांगतै ॥ १६ अनुमानत्रयेण क्षणिकत्व पदार्थाना न सिद्ध्यति यत ॥ १७ रूपरसगन्धस्पर्शपरमाणूना सजातीयविजातीयव्यावृत्ताना परस्परमसम्बद्धानाम् ॥

शशाश्वविषाणवत् । निष्पन्नयोश्च पारतन्त्र्याभावादसम्बन्ध एव । उक्तं च "पारतन्त्र्यं हि सम्बन्धः सिद्धे का[1] परतन्त्रता । तस्मात्सर्वस्य भावस्य सम्बन्धो नास्ति तत्त्वतः । १ ।" नापि रूपश्लेषलक्षणोऽसौ[3] सम्बन्धिनोर्द्वित्वे रूपश्लेषविरोधात् । तयोरैक्ये[4] वा सुतरा सम्बन्धाभावः—सम्बन्धिनोरभावे सम्बन्धायोगात्, द्विष्ठत्वात्तस्य । अथ नैरन्तर्यं[5] तयो रूपश्लेषो, नास्यान्तरालाभावरूपत्वेनाऽतात्त्विकत्वात्[6] सम्बन्धरूपत्वायोगः । निरन्तरतायाश्च सम्बन्धरूपत्वे सान्तरतापि कथं सम्बन्धो न स्यात्[7] ? किञ्चासौ रूपश्लेषः सर्वात्मनैकदेशेन वा स्यात् ? सर्वात्मना रूपश्लेषेऽणूनां पिण्डाणुमात्रः स्यात् । एकदेशेन तच्छ्लेषे[8] किमेकदेशास्तस्यात्मभूताः परभूता वा ? आत्मभूताश्चेन्नैकदेशेन[9] रूपश्लेषस्तदभावात् । परभूताश्चेत्तैरप्यणूनां[10] सर्वात्मनैकदेशेन वा रूपश्लेषे स एव पर्यनुयोगोऽनवस्था च स्यात् । तदुक्तं "रूपश्लेषो हि सम्बन्धो द्वित्वे स च कथं भवेत् । तस्मात्प्रकृतिभिन्नानां[11][12] सम्बन्धो नास्ति तत्त्वतः । १ ।" किञ्च परापेक्षैव सम्बन्धस्तस्य द्विष्ठत्वात् । तं चापेक्षते भावः[13] स्वयं सन्नसन्वा ? न तावदसन्नपेक्षाधर्माश्रयत्वविरोधात् खरशृङ्गवत् । नापि सन् सर्वनिराशंसत्वात्[14] । अन्यथा सत्त्वविरोधात् । तन्न परापेक्षा नाम यद्रूपः सम्बन्धः सिद्ध्येत् । उक्तं च "परापेक्षा हि सम्बन्धः सोऽसन् कथमपेक्षते[15] । संश्च सर्वनिराशंसो भावः कथमपेक्षते । १ ।" किञ्चासौ सम्बन्धः सम्बन्धिभ्यां भिन्नोऽभिन्नो वा ? यद्यभिन्नस्तदा सम्बन्धिनावेव, न सम्बन्धः कश्चित् । स एव वा, न ताविति । भिन्नश्चेत्सम्बन्धिनौ केवलौ[17] कथं सम्बधौ स्याताम् ? भवतु वा सम्बन्धोऽर्थान्तरम्[18] । तथापि तेनैकेन सम्बन्धेन सह द्वयोः सम्बन्धिनोः कः सम्बन्धः ? यथा सम्बन्धिनोर्यथोक्तदोषान्न कश्चित्सम्बन्धस्तथात्रापि । तेनानयोः सम्बन्धान्तराभ्युपगमे चानवस्था स्यात्तत्रापि सम्बन्धान्तरानुषङ्गात् । तन्न सम्बन्धिनोः सम्बन्धबुद्धिर्वास्तवी तद्व्यतिरेकेणान्यस्य सम्बन्धस्यासम्भवात् । तदुक्तं "द्वयोरेकाभिसम्बन्धात्सम्बन्धो यदि तद्द्वयोः[19] । कः[20] सम्बन्धोऽनवस्था च न सम्बन्धमतिस्तथा । १ ।" ततः—तौ च भावौ तदन्यश्च[21] सर्वे ते[22] स्वात्मनि स्थिताः । इत्यमिश्राः स्वयं भावास्तान् मिश्रयति कल्पना[23] । २ । तौ च भावौ सम्बन्धिनौ । ताभ्यामन्यश्च सम्बन्धः । सर्वे ते स्वात्मनि स्वस्वरूपे स्थिताः । तेनामिश्रा व्यावृत्तस्वरूपाः[26] स्वयं भावास्तथापि तान्मिश्रयति योजयति कल्पना[24] । अत एव[25] तद्वास्तवसम्बन्धाभावेपि तामेव कल्पनामनुरुन्धानैर्व्यवहर्तृभिर्भावानां भेदोऽन्यापोहस्तस्य[27] प्रत्यायनाय क्रियाकारकादिवाचिनः शब्दाः प्रयोज्यन्ते—देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादयः । न खलु कारकाणां क्रियया सम्बन्धोस्ति क्षणिकत्वेन क्रियाकाले

---

१ मम्बन्धिनि ॥ २ सह्यविन्ध्ययोरिव ॥ ३ अन्योन्यस्वभावानुप्रवेशलक्षण ॥ ४ इति चेदित्युपरित ॥ ५ अन्तराभावो नैरन्तर्यमिति ॥ ६ तुच्छभावरूपत्वादभावस्य ॥ ७ निरन्तरतावत्पदार्थद्वयापेक्षत्वाविशेषात् ॥ ८ अंशा ॥ ९ निरंशत्वादणो ॥ १० सम्बन्धिनो ॥ ११ प्रकृत्या=स्वभावेन ॥ १२ अणूनाम् ॥ १३ सम्बन्धलक्षण ॥ १४ सर्वेषु निराकाङ्क्षत्वात् ॥ १५ परमपेक्षते चेत् ॥ १६ परम् ॥ १७ सम्बन्धरहितौ ॥ १८ सम्बन्धिभ्याम् ॥ १९ स च सम्बन्धिनौ च ॥ २० सम्बन्धसम्बन्धिनो ॥ २१ अन्यथेति शेष ॥ २२ सम्बन्ध ॥ २३ वासनारूपा । कर्त्री ॥ २४ अवास्तवी ॥ २५ कल्पनैव मिश्रयति यत ॥ २६ स्थिरस्थूलसाधारणाकाररूप ॥ २७ अगोव्यावृत्तिर्गौः । अघटव्यावृत्तिर्घट इत्यादि ॥

कारकाणामसम्भवात् । उक्तं च "तामेव चानुरुन्धानैः क्रियाकारकवाचिनः । भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ।[१]" कार्यकारणभावस्तर्हि सम्बन्धो भविष्यतीत्यप्यसमीचीनं कार्यकारणयोरसहभावतस्तस्यापि द्विष्ठस्यासम्भवात् । न खलु कारणकाले कार्यं तत्काले वा कारणमस्ति तुल्यकालं कार्यकारणभावानुपपत्तेः सव्येतरगोविषाणवत् । तन्न सम्बन्धिनौ सहभाविनौ विद्येते येनानयोर्वर्त्तमानोऽसौ सम्बन्धः स्यात् । अद्विष्ठे च भावे सम्बन्धतानुपपन्नैव । कार्ये कारणे वा क्रमेणासौ सम्बन्धो वर्त्तते इत्यप्यसाम्प्रतं यतः क्रमेणापि भावः सम्बन्धाख्य एकत्र कारणे कार्ये वा वर्त्तमानोऽन्यनिस्पृहः=कार्यकारणयोरन्यतरानपेक्षो नैकवृत्तिमान् सम्बन्धो युक्तस्तदभावेपि=कार्यकारणयोरभावेपि तद्भावात् । यदि पुनः कार्यकारणयोरेकं कार्यं कारणं वापेक्ष्यान्यत्र कार्ये कारणे वासौ सम्बन्धः क्रमेण वर्त्तत इति सस्पृहत्वेन द्विष्ठ एवेष्यते तदानेनापेक्ष्यमाणेनोपकारिणा भवितव्यं यस्मादुपकार्योऽपेक्ष्यः स्यान्नान्यः । कथं चोपकारोऽसत्यऽसन् यदा कारणकाले कार्याख्यो भावोऽसन् तत्काले वा कारणाख्यस्तदा नैवोपकुर्यादसामर्थ्यात् । किञ्च यद्येकार्थाभिसम्बन्धात्कार्यकारणता तयोः तर्हि द्वित्वसंख्यापरत्वापरत्वविभागादिसम्बन्धात्प्राप्ता सा सव्येतरगोविषाणयोरपि । न येन केनचिदेकेन सम्बन्धात्सेष्यते । किं तर्हि ? सम्बन्धलक्षणेनैवेति चेत्तन्न द्विष्ठो हि कश्चित्पदार्थः सम्बन्धः । नातोऽर्थद्वयाभिसम्बन्धादन्यत्तस्य लक्षणं, येनास्य संख्यादेर्विशेषो व्यवस्थाप्येत । कैस्यचिद्भावे भावोऽभावे चाभावः । तावुपाधी विशेषणं यस्य योगस्य=सम्बन्धस्य स कार्यकारणता यदि, न सर्वसम्बन्धस्तदा तावेव योगोपाधी भावाभावौ कार्यकारणताऽस्तु किमसत्सम्बन्धकल्पनया । भेदाच्चेद्भावे हि भावोऽभावे चाभाव इति बहवोऽभिधेयाः । कथं कार्यकारणतेत्येकार्थाभिधायिना शब्देनोच्यते ? नन्वयं शब्दो नियोक्तारं समाश्रितः । नियोक्ता हि यं शब्दं यथा प्रयुङ्क्ते तथा प्राह । इत्यनेकत्राप्येका श्रुतिर्न विरुध्यते इति तावेव कार्यकारणता । यस्मात् पश्यन्नेकं कारणाभिमतमुपलब्धिलक्षणप्राप्तस्याऽदृष्टस्य कार्याख्यस्य दर्शने सति तददर्शने च सत्यऽपश्यन्कार्यमन्वेति । इदमतो भवतीति प्रतिपद्यते

१ कल्पनामऽग्रास्तवीं बुद्धिम् ॥ २ सामान्यसम्बन्ध सदूष्य सम्बन्धविशेष दूषयनाह ॥ ३ क्षणिकत्वात् ॥ ४ कार्यकारणलक्षणे ॥ ५ कार्यकारणलक्षणे ॥ ६ 'अन्यनिस्पृहस्य' प्रत्यर्थं ॥ ७ प्रत्यर्थं ॥ ८ अन्यतरस्य ॥ ९ अस्य कार्यस्येद कारणमिति ॥ १० हेतो ॥ ११ कार्येण कारणेन वा ॥ १२ सम्बन्धेन ॥ १३ लोके ॥ १४ कार्यं कारणमपेक्ष्य कारणे कार्यमपेक्ष्य यो वर्त्तते सम्बन्धस्तम् ॥ १५ खरविषाणादिवत् ॥
१६ सम्बन्धलक्षण ॥ १७ द्वन्द्व ॥ १८ आदिना पृथक्त्वादि ॥ १९ द्वित्वसंख्यालक्षणैकार्थाभिसम्बन्धस्याविशेषात् ॥ २० एकेन सह ॥ २१ कार्यस्य कारणस्य वा ॥ २२ कार्यकारणताया स्यात् ॥ २३ भावाभावौ ॥
२४ उपाधि=विशेषणम् ॥ २५ सम्बन्ध ॥ २६ जैनानाशङ्क्याह बौद्ध ॥ २७ भावाभावाभ्यां कार्यकारणभावसम्बन्धस्य ॥ २८ सम्बन्धस्य ॥ २९ चत्वारोऽर्था ॥ ३० कार्यकारणसम्बन्धप्रतिपादक कार्यकारणलक्षण ॥
३१ एकार्थमभिप्रेत्यानेकार्थं वाभिप्रेत्य ॥ ३२ एकार्थाननेकार्थान्वा ॥ ३३ यथोदविशब्द उदकानि अस्मिन्धीयन्ते स उदधिरित्यादि ॥ ३४ कारणाभिमतपदार्थदर्शनात्पूर्वम् ॥ ३५ कथम् ? तथा हि ॥
३६ स्वयम् ॥

जनोऽत इदं जातमित्याख्यातृभिर्विनापि[1]। तस्माद्[2]दर्शनादर्शने[3] विषयिणि[4] विषयोपचाराद्भावाभावौ[5] मुक्त्वा कार्यबुद्धेरसम्भवात्[6] कार्यादिश्रुतिर्[7]प्यत्र भावाभावयोर्मा लोकः प्रतिपदमियतीं शब्दमालामभिदध्यादिति व्यवहारलाघवार्थं[8] निवेशितेति[10][11]। अन्वयव्यतिरेकाभ्यां[12] कार्यकारणता, नान्या चेत्कथं भावाभावाभ्यां सा प्रसाध्यते[13] तद्[14]भावाभावात्। लिङ्गात्तत्कार्यतागतिर्याप्यनुवर्ण्यते[15]स्येदं कार्यं कारणं चेति सङ्केतविषयाख्या सा। यथा गौरयं सास्नादिमत्त्वादित्यनेन[16] गोव्यवहारस्य विषयः प्रदर्श्यते[17]। यतश्च[18] भावे भाविनि भवनधर्मिणि तद्भावः=कारणाभिमतस्य भाव एव कारणत्वं भावे एव कारणाभिमतस्य भाविता कार्याभिमतस्य कार्यत्वमिति प्रसिद्धे प्रत्यक्षानुपलम्भतो हेतुफलते, ततो भावाभावावेव कार्यकारणता, नान्या। तेनैतावन्मात्रं भावाभावौ तावेव तत्त्वं[19] यस्यार्थ[20]स्यासावेतावन्मात्रतत्त्वः। सोऽर्थो[21] येषां विकल्पानां[22] ते एतावन्मात्रतत्त्वार्थाः=एतावन्मात्रवीजाः[23] कार्यकारणगोचराः[24]। दर्शयन्ति घटितानिव=सम्बद्धा[25]निवाऽसम्बद्धानप्यर्थान्। एवं घटनाच्च मिथ्यार्थाः[26]। किञ्चासौ कार्यकारणभूतोऽर्थो भिन्नोऽभिन्नो[27] वा स्यात्? यदि भिन्नस्तर्हि भिन्ने का घटना[28] स्वस्वभावव्यवस्थितेः[29]। अथाऽभिन्नस्तदाऽभिन्ने कार्यकारणतापि का? नैव स्यात्। स्यादेतत्—न भिन्नस्याभिन्नस्य[30] वा सम्बन्धः। किं तर्हि? सम्बन्धाख्येनैकेन सम्बन्धादित्यत्रापि भावे=सत्तायामन्यस्य[31] सम्बन्धस्य विश्लिष्टौ[32][33] कार्यकारणाभिमतौ श्लिष्टौ स्याताम्। कथं च तौ संयोगिसमवायिनौ? आदिग्रहणात्[34]स्वस्वाम्यादिकम्[35]? सर्वमेतेनानन्तरोक्तेन सामान्यसम्बन्धप्रतिषेधेन चिन्तितम्[36]। संयोग्यादीनामन्योन्यमनुपकाराच्चाऽजन्यजनकभावाच्च न सम्बन्धी[37] च तादृशोऽनुपकार्योपकारकभूतः[38]। अथास्ति कश्चित्[39]समवायी[40] योऽवयविरूपं कार्यं जनयति। अतो नानुपकारादसम्बन्धितेति। तन्न—यतो जननेपि कार्यस्य केनचित्समवायिनाभ्युपगम्यमाने[41] समवायी, नासौ तदा—जननकाले कार्यस्यानिष्पत्तेः[42]। न च ततो जननात्समवायित्वं[43] सिद्ध्यति—कुम्भकारादेरपि घटे समवायित्वप्रसङ्गात्। तयोः[44] सम-

१ शब्दोक्तेरामन्तरेण उपदेशके पुरुषे ॥ २ कारणस्य ॥ ३ कार्यस्य ॥ ४ कार्यकारणाभिमतयो पदार्थयो कार्यकारणता भवतीति ॥ ५ दर्शनादर्शनलक्षणे ज्ञाने ॥ ६ भावाभावावेव कार्यं, नान्यदित्यर्थः ॥ ७ श्रुतिः=शब्द ॥ ८ न केवल कार्यकारणश्रुति किंतु ॥ ९ भावे भाव अभावे चाऽभाव इत्येतावतीम् ॥ १० समर्पिता ॥ ११ इति=नन्ववादी ब्रूते ॥ १२ भावाभावाभ्यामनुमीयमाना यदि कार्यकारणता ताभ्यामन्या तदा दूषणम् ॥ १३ सम्बन्धवादिना ॥ १४ तस्य=कारणस्य ॥ १५ अस्य कारणस्येद कार्यमस्य च कार्यस्येद कारणमिति ॥ १६ अनुमानेन ॥ १७ प्रकारान्तरेण तावेव कार्यकारणतेति निरूपयति ॥ १८ कार्यलक्षणे ॥ १९ स्वरूपम् ॥ २० कार्यकारणस्य ॥ २१ अर्थ =विषय ॥ २२ भ्रान्तज्ञानानाम् ॥ २३ वस ॥ २४ विकल्पा ॥ २५ प्रत्यर्थं ॥ २६ विकल्पा ॥ २७ परस्परम् ॥ २८ सम्बन्ध ॥ २९ कार्यकारणयो ॥ ३० कार्यस्य कारणस्य वा ॥ ३१ प्रत्यर्थीयम् ॥ ३२ भिनस्य ॥ ३३ स्वरूपेण ॥ ३४ कारिकायाम् ॥ ३५ स्वामिभृत्यभावसम्बन्धादिकम् ॥ ३६ निराकृतम् ॥ ३७ अर्थ ॥ ३८ उपकारक ॥ ३९ तन्त्वादि ॥ ४० सम्बन्धवादिना ॥ ४१ कार्येण समम् ॥ ४२ समवायिना कारणेन कार्यस्य निष्पादनसमये कार्यस्यानिष्पन्नत्वात्कुत कार्येण समत्व कारणस्य? तत्करणे सति तस्य विनष्टत्वात् ॥ ४३ तन्तूनाम् ॥ ४४ तन्तुपटयो ॥

वायिनोः परस्परमनुपकारेपि ताभ्यां वा समवायस्य नित्यतया समवायेन वा तयोः परत्र[1] वा क्वचिदनुपकारेपि[2] सम्बन्धो यदीष्यते तदा विश्वं परस्परासम्बद्धं समवायि परस्परं स्यात्। यदि च संयोगस्य[3] कार्यत्वात्तस्य ताभ्यां[4] जननात्संयोगिता तयोस्तदा[5] संयोगजननेपीष्टौ। ततः संयोगजननान्न तौ संयोगिनौ कर्मणोपि[6] संयोगितापत्तेः। संयोगो ह्यन्यतरकर्मज[7] उभयकर्मजश्चेष्यते। आदिग्रहणात्संयोगस्यापि संयोगिता स्यात्। न संयोगजननात्संयोगिता। किन्तर्हि? स्थापनादिति चेन्न स्थितिश्च प्रतिवर्णिता=ग्रन्थान्तरे प्रतिक्षिप्ता–स्थाप्यस्थापकयोर्जन्यजनकत्वाभावान्नान्या स्थितिरिति[18]। "कार्यकारणभावोपि तयोरसहभावतः। प्रसिद्ध्यति कथं द्विष्ठोऽद्विष्ठे सम्बन्धता कथम्। १। क्रमेण भाव एकत्र वर्त्तमानोन्यनिस्पृहः। तदभावेपि तद्भावात्सम्बन्धो नैकवृत्तिमान्। २। यद्यपेक्ष्य तयोरेकमन्यत्रासौ प्रवर्त्तते। उपकारी ह्यपेक्ष्यः स्यात्कथं चोपकरोत्यसन्। ३। यद्येकार्थाभिसम्बन्धात्कार्यकारणता तयोः। प्राप्ता द्वित्वादिसम्बन्धात्सव्येतरविषाणयोः। ४। द्विष्ठो हि कश्चित्सम्बन्धो नातोन्यत्तस्य लक्षणम्। भावाभावोपधिर्योगः कार्यकारणता यदि। ५। योगोपाधी न तावेव कार्यकारणतात्र किम्। भेदाच्चेन्नन्वऽयं शब्दो नियोक्तारं समाश्रितः। ६। पश्यन्नेकमदृष्टस्य दर्शने तददर्शने। अपश्यत्कार्यमन्वेति विना व्याख्यातृभिर्जनः। ७। दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसम्भवात्। कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता। ८। तद्भावाभावात्तत्कार्यगतिर्याप्यनुवर्ण्यते। सङ्केतविषयाख्या सा सास्नादेर्गोगतिर्यथा। ९। भावे भाविनि तद्भावो भाव एव च भाविता। प्रसिद्धे हेतुफलते प्रत्यक्षानुपलम्भतः। १०। एतावन्मात्रतत्त्वार्थाः कार्यकारणगोचराः। विकल्पा दर्शयन्त्यर्थान् मिथ्यार्था घटितानिव। ११। भिन्ने का घटनाऽभिन्ने कार्यकारणतापि का। भावे ह्यन्यस्य विश्लिष्टौ श्लिष्टौ स्यातां कथं च तौ। १२। संयोगिसमवाय्यादि सर्वमेतेन चिन्तितम्। अन्योन्यानुपकाराच्च न सम्बन्धी च तादृशः। १३। जननेपि हि कार्यस्य केनचित्समवायिना। समवायी तदा नासौ न ततोतिप्रसङ्गतः। १४। तयोरनुपकारेऽपि समवाये परत्र वा। सम्बन्धो यदि विश्वं स्यात्समवायि परस्परम्। १५। संयोगजननेपीष्टौ ततः संयोगिनौ न तौ। कर्मादियोगितापत्तेः स्थितिश्च प्रतिवर्णिता। १६।" इति।

---

१ असमवायिनि कारणे कार्ये वा ॥ २ उपकारकत्वाभावाविशेषात् ॥ ३ सम्बन्धस्य ॥ ४ समवायिभ्याम् ॥ ५ संयोगिनो ॥ ६ क्रियाया ॥ ७ कर्मण सकाशात्सयोगजननात् ॥ ८ तथा च द्रव्ययोरेव हि सयोगो, न कर्मणोरेवेति मत विघटेत ॥ ९ शैलश्येनयो ॥ १० मल्लयो ॥ ११ कारिकायाम् ॥ १२ गुणरूपस्य ॥ १३ हस्तपुस्तकसयोगात्कायपुस्तकसयोगस्योत्पत्ते ॥ १४ सयोगिभ्या स्थाप्यपदार्थस्य सयोगलक्षणस्य स्थितिनिष्पादनात् ॥ १५ सयोगिनो स्योगस्य च ॥ १६ निराकृता ॥ १७ प्रत्यर्थं ॥ १८ जन्यजनकभावस्तु प्राक्प्रतिक्षिप्त इत्यर्थ ॥ १९ कार्ये कारणे वा ॥ २० तयो कार्यकारणयो ॥ २१ तस्य=सम्बन्धस्य ॥ २२ सम्बन्ध ॥ २३ नरम् ॥ २४ कारणम् ॥ २५ कार्यस्य ॥ २६ तस्य=कारणस्य ॥ २७ तस्य=कारणस्य ॥ २८ तस्य=कारणस्य ॥ २९ साधनात् ॥ ३० कार्यता ॥ ३१ अन्वयव्यतिरेकत ॥ ३२ सम्बन्ध ॥ ३३ सम्बन्धस्य ॥ ३४ समवायिनो ॥ ३५ तर्हीति शेष ॥ ३६ कुत ? यत ॥

अस्तु वा कार्यकारणभावलक्षणः सम्बन्धः । तथाप्यस्य प्रतिपन्नस्याप्रतिपन्नस्य वा सत्त्वं सिद्ध्येत्? न तावदप्रतिपन्नस्यातिप्रसङ्गात्[1] । प्रतिपन्नस्य चेत्कुतोऽस्य प्रतिपत्तिः? प्रत्यक्षेण प्रत्यक्षानुपलम्भाभ्यां[2] वानुमानेन वा? प्रकारान्तराऽसम्भवात्[3] । प्रत्यक्षेण चेदग्निस्वरूपग्राहिणा धूमस्वरूपग्राहिणोभयस्वरूपग्राहिणा वा? न तावदग्निस्वरूपग्राहिणा । तद्धि तत्सद्भावमात्रमेव प्रतिपद्यते, न धूमस्वरूपम् । तदप्रतिपत्तौ च न तदपेक्षयाग्नेः कारणत्वावगमः[4] । न हि प्रतियोगि[5]स्वरूपाप्रतिपत्तौ तं[6] प्रति कस्यचित्कारणत्वमन्यद्वा धर्मान्तरं प्रत्येतुं शक्यमतिप्रसङ्गात् । नापि धूमस्वरूपग्राहिणा प्रत्यक्षेण कार्यकारणभावावगमोऽत एव । उभयस्वरूपग्रहणे खलु तन्निष्ठसम्बन्धावगमो युक्तो, नान्यथा । नाप्युभयस्वरूपग्राहिणा—तत्रापि हि तयोः[10] स्वरूपमात्रमेव[11] प्रतिभासते न त्वग्नेर्धूमं प्रति कारणत्वं तस्यैव तं प्रति कार्यत्वम् । न हि स्वस्वरूपनिष्ठपदार्थद्वयस्यैकज्ञानप्रतिभासमात्रेण[12] कार्यकारणभावप्रतिभासो[13] घटपटादेरपि तत्प्रसङ्गात्[14] । यत्प्रतिभासानन्तरमेकत्र ज्ञाने[15] यस्य[16] प्रतिभासस्तयोस्तदवगम इत्यपि तादृग्[17] घटप्रतिभासानन्तरं पटस्यापि प्रतिभासनात्[18] । न च क्रमभाविपदार्थद्वयप्रतिभाससमन्वय्येकं[19] ज्ञानमिति वक्तुं शक्यं सर्वत्र[20] प्रतिभासभेदस्य भेदनिबन्धनत्वात्[21] । अथाग्निधूमस्वरूपद्वयग्राहिज्ञानद्वयानन्तरभाविस्मरणसहकारीन्द्रियजनितविकल्पज्ञाने[22] तद्द्वयस्य पूर्वापरकालभाविनः प्रतिभासात्कार्यकारणभावनिश्चयो भविष्यतीत्युच्यते[23] तदप्युक्तिमात्रं—चक्षुरादीनां तज्ज्ञानजननासामर्थ्ये[24] स्मरणसव्यपेक्षाणामपि जनकत्वविरोधात् । न हि परिमलस्मरणसव्यपेक्षं लोचनं सुरभि चन्दनमिति प्रत्ययमुत्पादयति[28] । तत्सव्यपेक्षलोचनव्यापारानन्तरमेते[29] कार्यकारणभूता इत्यवभासनात्तद्भावः सविकल्पकप्रत्यक्षप्रसिद्ध इत्यप्यसमीचीनं गन्धस्यापि लोचनज्ञानविषयत्वप्रसङ्गात्[30] । गन्धस्मरणसहकारिलोचनव्यापारानन्तरं सुरभि चन्दनमिति प्रत्ययप्रतीतेः । तन्न प्रत्यक्षेणासौ प्रतीयते । नापि प्रत्यक्षानुपलम्भाभ्यां प्रत्यक्षस्येवानुपलम्भस्यापि प्रतिषेध्य[31]विविक्तवस्तुमात्र[32]विषयत्वेनात्राऽसामर्थ्यात् । अथाग्निसद्भाव एव धूमस्य भावस्तदभावे चाभावः कार्यकारणभावः । स चैताभ्यां प्रतीयते इत्युच्यते तर्हि वक्तृत्वस्यासर्वज्ञत्वादिना व्याप्तिः[33] स्यात् । तद्धि

---

१ गगनाब्जादेरपि सत्त्वप्रसङ्गोऽप्रतिपन्नत्वाविशेषात् ॥ २ अन्वयव्यतिरेकज्ञानाभ्याम् ॥ ३ उक्तप्रकारेभ्य प्रमाणान्तरस्य परेणानभ्युपगमात् ॥ ४ अयमग्निर्धूमस्य कारणमिति ॥ ५ प्रतियोगी=धूम ॥ ६ धूमम् ॥ ७ अग्न्यादेर्वस्तुन ॥ ८ सादृश्यादिकम् ॥ ९ रासकुसुमादिक प्रत्यपि कस्यचित्कारणत्वप्रसङ्गात् ॥ १० अग्निधूमयो ॥ ११ न त्वयमग्निर्धूमस्य कारण धूमोऽग्ने कार्यमिति प्रतिभास ॥ १२ एव ॥ १३ युक्त ॥ १४ तस्य=कार्यकारणभावस्य ॥ १५ एकज्ञानप्रतिभासमानत्वस्याविशेषात् ॥ १६ अर्थस्य ॥ १७ कुत ॥ १८ एक ज्ञान परिहरति पर पदार्थद्वयप्रतिभासे ॥ १९ अनुयायि ॥ २० ज्ञाने ज्ञेये च ॥ २१ घटपटयोरिव ॥ २२ तौ अग्निधूमाविति । मीमासकाभ्युपगते प्रत्यभिज्ञाप्रत्यक्षे ॥ २३ सम्बन्धवादिना ॥ २४ अग्निधूमद्वयकार्यकारणभावज्ञानोत्पादनासामर्थ्ये ॥ २५ ज्ञानस्य ॥ २६ कर्तृपदम् ॥ २७ कर्मपदम् ॥ २८ परिमलस्मरणसव्यपेक्षत्वेपि लोचने सति चन्दन सुरभीति ज्ञान घ्राणेन्द्रियादेव जायत इत्यर्थ ॥ २९ अग्निधूमादय ॥ ३० तदपि कुत इत्याह ॥ ३१ अग्निधूमादि ॥ ३२ महाह्रदादि ॥ ३३ असर्वज्ञत्वादिसद्भावे वक्तृत्वस्य सद्भावस्तदभावे चाभाव इति ॥

रागादिमत्त्वाऽसर्वज्ञत्वसद्भावे स्वात्मन्येव दृष्टम् तदभावे चोपलशकलादौ न दृष्टम् । तथा च सर्वज्ञवीतरागाय दत्तो जलाञ्जलिः । वक्तृत्वस्य वक्तुकामताहेतुकत्वान्नायं दोषो रागादिसद्भावेपि वक्तकामताभावे तस्यासत्त्वात् । नन्वेवं व्यभिचारे विवक्षाप्यस्य निमित्तं न स्यादन्यविवक्षायामप्यन्यशब्दोपलम्भात् । अन्यथा गोत्रस्खलनादेरभावप्रसङ्गात् । अथार्थविवक्षाव्यभिचारेपि शब्दविवक्षायामप्यव्यभिचारो न स्वप्नावस्थायामन्यत्र गतचित्तस्य वा शब्दविवक्षाभावेपि वक्तृत्वसंवेदनात् । न च व्यवहिता सा तन्निमित्तमिति वक्तव्यं प्रतिनियतकार्यकारणभावाभावप्रसङ्गात् सर्वस्य तत्प्राप्तेः । अथासर्वज्ञत्वाद्यभावे सर्वत्र वक्तृत्वं न सम्भवतीत्यत्र प्रमाणाभावान्न तस्य तेन कार्यकारणभावलक्षणः प्रतिबन्धः सिद्ध्यति, तदग्निधूमादावपि समानम् । अथाग्न्यभावे धूमस्य भावे तद्धेतुकताविरहात्सकृदप्यहेतोरग्नेस्तस्य भावो न स्यात् । दृश्यते च महानसादावग्नितः । ततो नानग्नेर्धूमसद्भाव इति प्रतिबन्धसिद्धिरित्यभिधीयते, तदप्यभिधानमात्रम् । यथैव हीन्धनादेरेकदा समुद्भूतोप्यग्निरन्यदारणिनिर्मथनान्मण्यादेर्वा भवन्नुपलभ्यते, धूमो वाग्नितो जायमानोपि गोपालघटिकादौ पावकोद्भूतधूमादप्युपजायते तथाग्न्यभावेपि कदाचिद्धूमो भविष्यतीति कुतः प्रतिबन्धसिद्धिः ? अथ यादृशोग्निरिन्धनादिसामग्रीतो जायमानो दृष्टो न तादृशोऽरणितो मण्यादेर्वा । धूमोपि यादृशोग्नितो न तादृशो गोपालघटिकादौ वन्हिप्रभवधूमादन्यादृशात्तादृशभावेतिप्रसङ्गात् । इति नाग्निजन्यधूमस्य तत्सदृशस्य चानग्नेर्भावः । भावे वा तादृशधूमजनकस्याग्निस्वभावतैवेति न व्यभिचारः । तदुक्तम् "अग्निस्वभावः शक्रस्य मूर्धा यद्यग्निरेव सः । अथानग्निस्वभावोसौ धूमस्तत्र कथं भवेत्" इत्यादि । तदेतद्वक्तृत्वेपि समानम् । तद्धि सर्वज्ञे वीतरागे वा यदि स्यादसर्वज्ञाद्रागादिमतो वा कदाचिदपि न स्यादहेतोः सकृदप्यसम्भवात् । भवति च तत्ततः । अतो न सर्वज्ञे तस्य तत्सदृशस्य वा सम्भव इति प्रतिबन्धसिद्धिः । किञ्च कार्यकारणभावः सकलदेशकालावस्थिताखिलाग्निधूमव्यक्तिक्रोडीकरणेनावगतोऽनुमाननिमित्तं, नान्यथा । न च निर्विकल्पकसविकल्पकप्रत्यक्षस्येयति वस्तुनि व्यापारः, प्रत्यक्षानुपलम्भयोर्वा । किञ्च कार्योत्पादनशक्तिविशिष्टत्वं कारणत्वम् । न

---

१ सर्वज्ञो वीतरागश्च नास्तीति भाव ॥ २ सर्वज्ञास्तित्ववादिना जैनादिना ॥ ३ सर्वज्ञास्तित्व सूचयन्नाह ॥ ४ साधनस्य ॥ ५ न तु रागादिहेतुकत्वात् ॥ ६ असर्वज्ञत्वलक्षण ॥ ७ आदिना द्वेषादि ॥ ८ उक्तप्रकारेण ॥ ९ वक्तृत्वसाधनस्य ॥ १० अग्निदत्त ॥ ११ जिनदत्तादि ॥ १२ नाम ॥ १३ वक्तृत्वस्य ॥ १४ कार्यान्तरे ॥ १५ शब्दविवक्षा यदासीत्तदा वक्तृत्वस्य निमित्त स्यात्कार्यान्तरेणाव्यवहिता । अतोऽव्यवहिता या शब्दविवक्षा पश्चात्तन्निमित्त भवतीत्युक्ते आह ॥ १६ व्यवहितस्य कार्यस्य १७ तस्य=व्यवहितकारणत्वस्य ॥ १८ आदिना रागादिमत्त्वादि ॥ १९ नृपु ॥ २० अविनाभाव ॥ २१ यतो युक्तिमन्तरेण बौद्धेनोक्तमिति भाव ॥ २२ धूमोग्न कार्यं न भवतीति भाव ॥ २३ तस्य भाव ॥ २४ अनेन प्रकारेण ॥ २५ कार्यकारणयोरविनाभावसिद्धि ॥ २६ जैनादिना भवता ॥ २७ सूर्यकान्तादे ॥ २८ धूमाग्निलक्षणकार्यकारणयो ॥ २९ मतम् ॥ ३० न दृष्ट इति सबन्ध ॥ ३१ वन्हिप्रभवधूम ॥ ३२ जलादग्निसद्भावप्रसङ्गात् ॥ ३३ अर्थस्य ॥ ३४ धूमाग्निलक्षणकार्यकारणयो ॥ ३५ तर्हि ॥ ३६ कुत ? ॥ ३७ वक्तृत्वस्य ॥ ३८ वक्तृत्वस्यासर्वज्ञत्वादिना ॥ ३९ आवृत्तत्वेन । एकत्वेन च ॥

चासौ शक्तिः प्रत्यक्षावसेया किन्तु कार्यदर्शनगम्या "शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" इत्यभिधानात्। तत्र कार्यात्कारणत्वावगमेऽनुमानाच्छक्त्यवगमः स्यात्। तत्रापि शक्तिकार्ययोः प्रतिबन्धप्रतीतिर्न प्रत्यक्षादेरुक्तदोषानुषङ्गात्। अनुमानात्तदवगमेऽनवस्थेतरेतराश्रयानुषङ्गो वा स्यात्। एतेन तृतीयोपि पक्षश्चिन्तित इति।

तदेतत्सर्वमसमीचीनं सम्बन्धस्याध्यक्षेणैवार्थानां प्रतिभासनात्। तथा हि। पटस्तन्तुसम्बद्ध एवावभासते। रूपादयश्च पटादिसम्बद्धाः सम्बन्धाभावे तु तेषां विश्लिष्टः प्रतिभासः स्यात्। तमन्तरेणान्यस्य संश्लिष्टप्रतिभासहेतोरभावात्। कथं च सम्बन्धे प्रतीयमानेऽप्रतीयमानस्याप्यसम्बन्धस्य कल्पना प्रतीतिविरोधात्। अर्थक्रियाविरोधश्चाणूनामन्योन्यमसम्बन्धतो जलधारणाहरणाद्यर्थक्रियाकारित्वानुपपत्तेः। रज्जुवंशदण्डादीनामेकदेशाकर्षणे तदन्याकर्षणं चासम्बन्धवादिनो न स्यात्। अस्ति चैतत्सर्वम्। अतस्तदन्यथानुपपत्तेश्चासौ सिद्धः। यच्च पारतन्त्र्यं हीत्याद्युक्तं तदप्ययुक्तमेकत्वपरिणतिलक्षणपारतन्त्र्यस्यार्थानां प्रतीतितः सुप्रसिद्धत्वात्। अन्यथोक्तदोषानुषङ्गः। न चार्थानां सम्बन्धः सर्वात्मनैकदेशेन वाभ्युपगम्यते येनोक्तदोषः स्यात्। प्रकारान्तरेणैवास्याभ्युपगमात्। सर्वात्मैकदेशाभ्यां हि तस्यासम्भवात् प्रकारान्तरस्य वा भावात् तत्प्रतीत्यन्यथानुपपत्तेश्च ताभ्या जात्यन्तरतया श्लेषः स्निग्धरूक्षतानिबन्धनो बन्धोऽभ्युपगन्तव्योऽसौ सक्तुतोयादिवत्। विश्लिष्टरूपतापरित्यागेन हि संश्लिष्टरूपतया कथञ्चिदन्यथात्वलक्षणैकत्वपरिणतिः सम्बन्धोऽर्थानां चित्रसंवेदने नीलाद्याकारवत्। न हि चित्रसंविदो जात्यन्तररूपतयोत्पादादन्यो नीलाद्यनेकाकारैः सम्बन्धः सर्वात्मनैकदेशेन वा तैस्तस्याः सम्बन्धे प्रोक्ताशेषदोषानुषङ्गाविशेषात्। स चैवंविधः सम्बन्धोऽर्थानां क्वचिन्निखिलप्रदेशानामन्योन्यप्रदेशानुप्रवेशतः। यथा सक्तुतोयादीनाम्। क्वचित्तु प्रदेशसंश्लिष्टतामात्रेण यथाङ्गुल्यादीनाम्। न चान्तर्बहिर्वा साशवस्तुवादिनः सांशत्वानुषङ्गो दोषायेष्टत्वात्। न चैवमनवस्था तद्वतस्तत्प्रदेशानामत्यन्तभेदाभावात्। तद्भेदे हि तेषामपि तद्वता प्रदेशान्तरैः सम्बन्ध इत्यनवस्था स्यात्। नान्यथाऽनेकान्तात्मकवस्तुनोऽत्यन्तभेदाभेदाभ्यां जात्यन्तरत्वाच्चित्रसंवेदनवदेव। नन्वेवं परमाणूनाम-

१ धूमादे ॥ २ अग्न्यादे ॥ ३ कार्यकारणभावरूपेण ॥ ४ अनुमानेन चासौ कार्यकारणभाव प्रतीयते इति ॥ ५ बौद्धोक्तम् ॥ ६ कथमर्थाना सम्बन्धस्याध्यक्षेण प्रतिभासनमित्युक्ते सत्याह ॥ ७ अवभासन्ते ॥ ८ पटादे सकाशाद्भिन्न ॥ ९ अन्य कश्चित्संश्लिष्टप्रतिभासहेतुर्भविष्यतीत्युक्ते सत्याह ॥ १० प्रत्यक्षेण ॥ ११ अर्थानाम् ॥ १२ अन्ययेति शेष ॥ १३ असम्बन्धपक्षे ॥ १४ अन्यस्य=शेष=मकलभागस्य ॥ १५ सौगतस्य ॥ १६ परस्परमसम्बद्धत्वात् ॥ १७ मा भवत्वित्युक्ते सत्याह ॥ १८ अनुमानत १९ स्कन्धरूपेण ॥ २० बाह्याध्यात्मिकानाम् ॥ २१ तव सौगतस्य स्यात् ॥ २२ जैनै ॥ २३ सौगतोक्त ॥ २४ पिण्डोणुमात्र स्यादित्यादि ॥ २५ कथ तर्हि सम्बन्ध इत्युक्ते सत्याह ॥ २६ जैनै ॥ २७ अपरप्रकारस्य ॥ २८ प्रकारान्तरत्वेन ॥ २९ परेण ॥ ३० एकलोलीभावात्मलक्षणया ॥ ३१ पर्यायरूपेण ॥ ३२ आदौ दधिगुडौ पृथक् तिष्ठत पश्चात्सयोगेन कृत्वाऽन्यथास्वभाव पर्यायरूप पानक जातमिति ॥ ३३ ज्ञानस्य ॥ ३४ कथञ्चिन्नीलाकारेभ्योऽशक्यविवेचनत्वेन ॥ ३५ उत्पत्ते ॥ ३६ भिन्न ॥ ३७ सौगतेन ॥ ३८ पिण्डोणुमात्र स्यादित्यादि ॥ ३९ साशत्वादि ॥ ४० इति प्रतिबन्धविधानम् ॥ ४१ सम्बन्धिनि पदार्थे ॥ ४२ भवति ॥ ४३ सम्बन्धमात्रेण ॥ ४४ जैनस्य ॥ ४५ पदार्थात् ॥ ४६ सर्वथा ॥ ४७ कथञ्चिद्भेदे ॥ ४८ अन्तो=धर्म ॥ कथञ्चिद्भेदाभेदरूपस्य ॥ ४९ सर्वथानेकत्वैकत्वाभ्याम् ॥ ५० सांशवस्तुप्रकारेण ॥

प्यंशवत्त्वप्रसङ्गः स्यादित्यप्यनुत्तरं यतोऽत्रांशशब्दः स्वभावार्थोऽवयवार्थो वा स्यात् ? यदि स्वभावार्थो[1], न कश्चिद्दोषस्तेषां विभिन्नदिग्विभागव्यवस्थितानेकाणुभिः सम्बन्धान्यथानुपपत्त्या तावद्धा स्वभावभेदोपपत्तेः । अवयवार्थस्तु तत्रासौ नोपपद्यते तेषामभेद्यत्वेनावयवासम्भवात् । न [3]चैवं तेषामविभागित्वं विरुध्यते यतोऽविभागित्वं भेदयितुमशक्यत्वं, न पुनर्निःस्वभावत्वम् । यत्तूक्तं—निष्पन्नयोरनिष्पन्नयोर्वा पारतन्त्र्यलक्षणः सम्बन्धः स्यादित्यादि तदप्यसारं कथञ्चिन्निष्पन्नयोस्तदभ्युपगमात् । पटो[5] हि तन्तुद्रव्यरूपतया निष्पन्न एवान्वयिनो द्रव्यस्य पटपरिणामोत्पत्तेः प्रागपि सत्त्वात् । स्वरूपेण[6] त्वऽनिष्पन्नस्तन्तुद्रव्यमपि स्वरूपेण निष्पन्नं पटपरिणामरूपतयाऽनिष्पन्नम् । तथाङ्गुल्यादिद्रव्यं स्वरूपेण निष्पन्नं संयोगपरिणामात्मकत्वेनानिष्पन्नमिति । किञ्च पारतन्त्र्यस्याऽभावाद्भावानां सम्बन्धाभावे तेन व्याप्तः क्वचित्सम्बन्धः प्रसिद्धो न वा ? प्रसिद्धश्चेत्कथं सर्वत्र सर्वदा सम्बन्धाभावः ? विरोधात् । नो चेत्कथं व्याप्यव्यापकाभावाद्व्याप्यस्याभावसिद्धिरतिप्रसङ्गात् । रूपश्लेषो हीत्याद्यप्येकान्तवादिनामेव दूषणं, नास्माकं—कथञ्चित्सम्बन्धिनोरेकत्वापत्तिस्वभावस्य रूपश्लेषलक्षणसम्बन्धस्याभ्युपगमात् । अशक्यविवेचनत्वं हि सम्बन्धिनो रूपश्लेषोऽसाधारणस्वरूपता च तदश्लेषः । स चानयोर्द्वित्वं न विरुन्ध्यात् तथा प्रतीतेश्चित्राकारैकसंवेदनवत् । न चापेक्षिकत्वात्सम्बन्धस्वभावो मिथ्याऽर्थानां सूक्ष्मत्वादिवदित्यभिधातव्यमसम्बन्धस्वभावस्यापि तथाभावानुषङ्गात् । सोपि ह्यापेक्षिक एव कञ्चिदर्थमपेक्ष्य कस्यचित्तद्व्यवस्थित्यन्यथानुपपत्तेः स्थूलत्वादिवत् । प्रत्यक्षबुद्धौ प्रतिभासमानः सोऽनापेक्षिक एव तत्पृष्ठभाविविकल्पेनाध्यवसीयमानो यथापेक्षिकस्तथाऽवास्तवोपीत्यन्यत्रापि समानम् । न खलु सम्बन्धोऽध्यक्षेण न प्रतिभासते यतोऽनापेक्षिको न स्यात् । एतेन परापेक्षा हीत्याद्यपि प्रत्युक्तमसम्बन्धेपि समानत्वात् । द्वयोरेकाभिसम्बन्धादित्याद्यप्यविज्ञातपराभिप्रायस्य विजृम्भितं यतो नास्माभिः सम्बन्धिनोस्तथापरिणतिव्यतिरेकेणान्यः सम्बन्धोभ्युपगम्यते, येनानवस्था स्यात् । तथा च तामेव चानुरुन्धानैरित्याद्यप्ययुक्तं क्रियाकारकादीनां सम्बन्धिनां तत्सम्बन्धस्य च प्रतीत्यर्थं तदभिधायकानां प्रयोगप्रसिद्धेः । अन्यापोहस्य च प्रागेवापास्तस्वरूपत्वाच्छब्दार्थत्वमनुपपन्नमेव । चित्रज्ञानवच्चानेकसम्बन्धितादात्म्येप्येकत्वं सम्बन्ध-

१ तर्हि ॥ २ स्वभावभेदाऽभावे ॥ ३ स्वभावभेदसम्भवे ॥ ४ कथम् ॥ ५ तन्त्वादे ॥ ६ पटरूपेण ॥ ७ पट ॥ ८ भावाना सम्बन्धो नास्ति पारतन्त्र्याभावात् ॥ ९ दृष्टान्ते ॥ १० ज्ञात ॥ ११ ज्ञातत्वस्य ॥ १२ अथ न प्रसिद्धस्तर्हि ॥ १३ असाध्य ॥ १४ असाधनस्य ॥ १५ अन्यथा ॥ १६ घटाभावे पटाभावप्रसङ्गात् ॥ १७ अनेकान्तवादिना जैनानाम् १८ एकलोलीभाव ॥ १९ इद तोयमिमे सक्तव इति विभागस्य कर्तुमशक्यत्वात् ॥ २० सक्तुतोययोर्भिन्नस्वरूपता ॥ २१ पृथक्त्वम् ॥ २२ इद चित्रज्ञानमिमे चित्राकारा इति ॥ २३ परेण ॥ २४ अर्थानाम् ॥ २५ आपेक्षिकत्वाविशेषात् ॥ २६ आपेक्षिकत्वाभावे ॥ २७ निर्विकल्पकबुद्धौ ॥ २८ साधनमसिद्धमुद्भावयति ॥ २९ स्यादेव ॥ ३० भवदुक्त्या सम्बन्धस्य परापेक्षित्वसमर्थनेन ॥ ३१ दूषणम् ॥ ३२ सौगतोक्तन्यायस्य ॥ ३३ जैन ॥ ३४ सौगतस्य ॥ ३५ विश्लिष्टरूपतापरित्यागेन संश्लिष्टरूपतायाः एकलोलीभावलक्षणपरिणति ॥ ३६ सम्बन्धसिद्धौ ॥ ३७ देवदत्त गामभ्याजेत्यादीनाम् ॥ ३८ शब्दानाम् ॥ ३९ सम्बन्धिनामनेकत्वे सम्बन्धस्याप्यनेकत्व स्यादित्युक्ते सत्याह ॥ ४० चित्रैकज्ञानवत् ॥ ४१ तन्तुलक्षणे पक्षे नीलाकारादिभि ॥ ४२ पटस्य ॥

स्याविरुद्धमेव । यदप्युक्तं कार्यकारणभावोपीत्यादि तदप्यविचारितरमणीयं यतो नास्माभिः सहभावित्वं क्रमभावित्वं वा कार्यकारणभावनिबन्धनमिष्यते । किन्तु यद्भावे नियता यस्योत्पत्तिस्तत्तस्य कार्यमितरच्च कारणम् । तच्च किञ्चित्सहभावि । यथा घटस्य मृद्द्रव्यं दण्डादि वा । किञ्चित्तु क्रमभावि । यथा प्राक्तनः पर्यायः । तत्प्रतिपत्तिश्च प्रत्यक्षानुपलम्भसहायेनात्मना नियते व्यक्तिविशेषे तर्कसहायेन वा नियते प्रसिद्धा । एकमेवं च प्रत्यक्षं प्रत्यक्षानुपलम्भशब्दाभिधेयम् । तद्धि कार्यकारणभावाभिमतार्थविषयं प्रत्यक्षम् । तद्विविक्तान्यवस्तुविषयमनुपलम्भशब्दाभिधेयम् । तथा हि । एतावद्भिः प्रकारैर्धूमोऽग्निजन्यो न स्यात् यद्यग्निसन्निधानात्प्रागपि तत्र देशे स्यात्, अन्यतो वा गच्छेत्, तदन्यहेतुको वा भवेत् । एतच्च सर्वमनुपलम्भपुरस्सरेण प्रत्यक्षेण प्रत्याख्यातम् । एतेन प्रागनुपलब्धस्य रासभस्य कुम्भकारसन्निधानानन्तरमुपलभ्यमानस्य तस्य तत्कार्यता स्यादिति प्रतिव्यूढम् । यदि हि तस्य तत्र प्राग्सत्त्वमन्यदेशादनागमनमन्याहेतुकत्वं च निश्चेतुं शक्येत, स्यादेव कुम्भकारकार्यता । तत्तु निश्चेतुमशक्यम् । न च भिन्नार्थग्राहि प्रत्यक्षद्वयं द्वितीयाग्रहणे तदपेक्षं कारणत्व कार्यत्वं वा ग्रहीतुमसमर्थमित्यभिधातव्यं क्षयोपशमविशेषवतां धूममात्रोपलम्भेप्यभ्यासवशाद्वह्निजन्यत्वावगमप्रतीतेः । अन्यथा वाष्पादिवैलक्षण्येनास्याऽनवधारणात्ततोऽप्यनुमाभावे सकलव्यवहारोच्छेदप्रसङ्गः । ततः कारणाभिमतपदार्थग्रहणपरिणामापरित्यागवतात्मना कार्यस्वरूपप्रतीतिरभ्युपगन्तव्या । नीलाद्याकारव्याप्येकज्ञाने तत्स्वरूपवत् । ननु नालिकेरद्वीपादिवासिनामकस्माद्धूमस्याग्नेर्वोपलम्भेपि कार्यकारणभावस्यानिश्चयान्नासौ वास्तवस्तद्व्यपेगलं वाह्यान्तःकारणप्रभवत्वात्तन्निश्चयस्य । क्षयोपशमविशेषो हि तस्यान्तःकारणम् । तद्भावभावित्वाभ्यासस्तु वाह्यम् । अकार्यकारणभावावगमस्त्वऽतद्भावभावित्वाभ्यासः । तदभावान्न क्वचित्तेषां कार्यकारणभावस्याऽकार्यकारणभावस्य वा निश्चय इति । धूमादिज्ञानजननसामग्रीमात्रात्तत्कार्यत्वादिनिश्चयानुत्पत्तेर्न कार्यत्वादि धूमादेः स्वरूपमिति चेत्तर्हि क्षणिकत्वादिरपि तत्स्वरूपं मा भूत्तत एव । क्षणिकत्वाभावेऽवस्तुत्वमन्यत्रापि समानं

---

१ जैने ॥ २ सहभवतीत्येवशीलम् ॥ ३ यद् घटोत्पत्तिकाले भवति ॥ ४ कुशूलादि ॥ ५ उत्तरपर्यायस्य कारणम् ॥ ६ महानसे ॥ ७ महान्हदे ॥ ८ परिमिते ॥ ९ धूमाग्न्यो ॥ १० यावान् कश्चित्कार्यलक्षणपदार्थं स कारणे सति भवति, नान्यथेति ॥ ११ आत्मना ॥ १२ अनुपलम्भशब्देन किमुच्यते इत्याह ॥ १३ नानुमानादिकम् ॥ १४ अग्निधूम ॥ १५ वस ॥ १६ महान्हदादि ॥ १७ 'अनुपलम्भ' इति ॥ १८ प्रत्यक्षम् ॥ १९ तथा हीत्यादिना प्राक् प्रतिपादितार्थं व्यतिरेकद्वारेण समर्थ्यते ॥ २० प्राक् प्रतिपादिते प्रत्यक्षानुपलम्भादिभि ॥ २१ तान्प्रकारानाह ॥ २२ एवमस्तु इत्युक्ते सत्याह ॥ २३ प्रत्यक्षानुपलम्भादिभि कार्यकारणभावसिद्धिसमर्थनेन ॥ २४ निराकृतम् ॥ २५ कुम्भकारावस्थितप्रदेशे ॥ २६ कुम्भकारसन्निधानात् ॥ २७ कुम्भकारापेक्षया ॥ २८ तर्हि ॥ २९ रासभस्य ॥ ३० अग्निधूम ॥ ३१ अग्निधूमयोर्मध्येऽन्यतरस्य ॥ ३२ एकेन ॥ ३३ अगृहीतकार्यकारणान्यतरापेक्षम् ॥ ३४ परेण ॥ ३५ कार्यकारणभावज्ञानाच्छादककर्मण ॥ ३६ नृणाम् ॥ ३७ धूमस्य ॥ ३८ पूर्वोक्तात्कारणाद्धूमस्य वन्हिजन्यत्वावगमाभावे ॥ ३९ दूरत ॥ ४० धूमोऽग्ने कार्यमिति ॥ ४१ परेण ॥ ४२ कारण ॥ ४३ कार्यस्य ॥ ४४ पुन॰ पुनर्दर्शनम् ॥ ४५ कारणम् ॥ ४६ वाह्यान्त –कारणयो ॥ ४७ अग्निधूमयोरुपलम्भेपि येषा वाह्यान्त कारणे स्तस्तेषामेव तयो कार्यकारणभावपरिच्छित्तिर्नान्येषामिति भाव ॥ ४८ नेत्रादि ॥ ४९ वन्हि ॥ ५० आदिना कारणत्वादि ॥ ५१ आदिनाग्न्यादे ॥ ५२ धूमादिज्ञानसामग्रीमात्रात् क्षणिकत्वानिश्चयादेव ॥

सर्वथाप्यकार्यकारणस्य वस्तुत्वानुपपत्तेः खरशृङ्गवत् । न च कार्यस्यानुत्पन्नस्यैव कार्यत्वं धर्मोऽसत्त्वात् । नाप्युत्पन्नस्याऽत्यन्तं भिन्नं तत्तद्धर्मत्वात् । तत एव कारणस्यापि कारणत्वं धर्मो नैकान्ततो भिन्नम्। तच्च ततोऽभिन्नत्वात्तद्ग्राहिप्रत्यक्षेणैव प्रतीयते तद्व्यक्तिस्वरूपवत् । दृश्यते हि पिपासाद्याक्रान्तचेतसामितरार्थव्यवच्छेदेनावालं तदपनोदसमर्थे जलादौ प्रत्यक्षात्प्रवृत्तिः । तच्छक्तिप्रधानताया तु कार्यदर्शनात्तन्निश्चीयते तद्व्यतिरेकेणार्थासम्भवात् । न च स्वरूपेणाकार्यकारणयोस्तद्भावः सम्भवति । नाप्युत्तरकालं भिन्नेन तेनानयोः कार्यकारणताऽभिन्ना कर्तुं शक्या विरोधात् । नापि भिन्ना तयोः स्वरूपेणाकार्यकारणताप्रसङ्गात् । न च स्वरूपेण कार्यकारणयोरर्थान्तरभूततत्सम्बन्धकल्पने किञ्चित्प्रयोजनं कार्यकारणतायाः स्वतः सिद्धत्वात् । ननु कार्याप्रतिपत्तौ कथं कारणस्य कारणताप्रतिपत्तिस्तदपेक्षत्वात्तस्याः । कथमेवं पूर्वापरभागाप्रतिपत्तौ मध्यभागस्यातो व्यावृत्तिप्रतिपत्तिरपेक्षाकृतत्वाविशेषात् । ततः पश्यन्नयं क्षणिकमेव पश्यतीति वचो विरुध्येत मध्यक्षणस्वभावत्वात्तद्व्यावृत्तेः । तद्ग्राहिज्ञानेन प्रतिपत्तिश्चेत्तर्हि कार्योत्पादनशक्तेः कारणस्वभावत्वात्तद्ग्राहिणैव ज्ञानेन प्रतिपत्तिरिष्यतां विशेषाभावात् । उक्ता च कार्यप्रतिपत्तिः प्रत्यक्षादिसहायेनात्मनेत्युपरम्यते । किञ्च कार्यानिश्चये शक्तेरप्यनिश्चये नीलादिनिश्चयोपि मा भूत् । यदेव हि तस्याः कार्यं तदेव नीलादेरप्यनयोरभेदात् । वक्तृत्वस्य चासर्वज्ञत्वादिना व्याप्त्यसम्भवः सर्वज्ञसिद्धिप्रघट्टके प्रतिपादितः । न चेन्धनादिप्रभवपावकस्य मण्यादिप्रभवपावकादभेदो येन नियतः कार्यकारणभावो न स्यात् । अन्यादृशाकारो हीन्धनप्रभवः पावकोऽन्यादृशाकारश्च मण्यादिप्रभवः । तद्विचारे च प्रतिपत्त्रा निपुणेन भाव्यम् । यत्नतः परीक्षितं हि कार्यं कारणं नातिवर्त्तते । कथमन्यथा वीतरागेतरव्यवस्था तच्चेष्टायाः साङ्कर्योपलम्भात् । कथं चैवं वादिनो मृतेतरव्यवस्था स्यात् । व्यापारव्याहाराकारविशेषस्य हि क्वचिच्चैतन्यकार्यतयोपलम्भे सत्यस्त्यत्र जीवच्छरीरे चैतन्यं व्यापारादिकार्यविशेषोपलम्भात् । मृतशरीरे तु नास्ति तदनुपलम्भादिति कार्यविशेषस्योपलम्भानुपलम्भाभ्यां कारणविशेषस्य भावाभावप्रसिद्धेस्तद्व्यवस्था युज्येत । अकार्यकारणभावेपि चैतत्सर्वं समानम् । सोपि हि द्विष्ठः कथमसहभाविनोः कार्यकारणत्वाभ्यां निषेध्ययोर्वर्तेत । न चाद्विष्ठोसौ सम्बन्धाभाव-

१ धूमादिक धर्म्यऽवस्तु भवतीति साध्यमकार्यकारणत्वाच्छशविषाणवत् ॥ २ धर्मधर्मिणोरत्यन्तभेदाभावात् ॥ ३ सन्दिग्धानैकान्तिकत्वेय परिहार ॥ ४ कारणभूते ॥ ५ कारणत्वम् ॥ ६ कार्यस्य ॥ ७ घटपटयोरिव ॥ ८ अकारणात् ॥ ९ सम्बन्धेन ॥ १० अभिन्ना चेत्कथ भिन्नेन सम्बन्धेन विधीयते ? विधीयते चेत्कथमभिन्नेति विरोध ॥ ११ अग्न्यादे ॥ १२ क्षणविशेषणम् ॥ १३ वर्त्तमानक्षणस्य ॥ १४ पूर्वापरभागाद्व्यावृत्तिर्मध्यक्षणस्येति प्रतिपत्ति कथ घटते ॥ १५ मध्यभागस्यातो व्यावृत्तिप्रतिपत्त्यभावत ॥ १६ योगी ॥ १७ बस ॥ १८ एव ॥ १९ कार्यस्य ॥ २० मध्यक्षणस्वभावत्वाद्व्यावृत्तेस्तद्ग्राहिज्ञानेन प्रतिपत्तिर्घटते । कार्योत्पादनशक्ते कारणभावत्वात्तद्ग्राहिज्ञानेन प्रतिपत्तिर्नेत्यत्र ॥ २१ कारणसम्बन्धिन्या कार्योत्पादनलक्षणाया ॥ २२ तव सौगतस्य ॥ २३ कुत ॥ २४ शक्तिनीलाद्यो ॥ २५ निरंशवस्तुवादिमते ॥ २६ जैनै ॥ २७ किंतु भेद एव ॥ २८ सर्वज्ञेन ॥ २९ अग्न्यादिलक्षणम् ॥ ३० इन्धनमण्यादिकम् ॥ ३१ जपतपोध्यानादे ॥ ३२ दृष्टान्तभूते ॥ ३३ कथम् ॥ ३४ गोमहिषयो ॥ ३५ अकार्यकारणयो ॥ ३६ अनयो सम्बन्धाभावोय त ॥ ३७ अकार्यकारणभायत सम्बन्धाभावरूपो न भवत्यद्विष्टत्वाद्घटसत्त्ववत् ॥

विरोधात् । पूर्वत्र भावे वर्त्तित्वा परत्र क्रमेणासौ वर्त्तमानोऽन्यनिस्पृहत्वेनैकवृत्तिमत्त्वात्कथं सम्बन्धाभावरूपता प्रतिपद्येत ? अथाकार्यकारणयोरेकमपेक्ष्यान्यत्रासौ क्रमेण वर्त्तत इति सस्पृहत्वेनास्य द्विष्ठत्वात्तदभावरूपतेष्यते तदा तेनापेक्ष्यमाणेनोपकारिणा भवितव्यम् । कथं चोपकरोत्यसन्नित्यादि सर्वमत्रापि योजनीयम् । अकार्यकारणभावस्याप्यर्थानामनभ्युपगमे तु कार्यकारणाभावो वास्तवः स्यात् । उभयाभावस्तु न युक्तो विरोधात्, क्वचिन्नीलेतरत्वाभाववत् । ततो यथा कुतश्चित्प्रमाणादकार्यकारणभावो गवाश्वादीनामतद्भावभावित्वप्रतीतेः परस्परं परमार्थतो व्यवतिष्ठते तथाग्निधूमादीनां तद्भावभावित्वप्रतीतेः कार्यकारणभावोपि-वाधकाभावात् । तत्र प्रमाणतः प्रतीयमानः सम्बन्धः स्वाभिप्रेततत्त्ववन्निह्नवनीयो, येन स्थूलादिप्रतीतेर्भ्रान्तत्वात्तत्स्वभावतार्थस्य न स्यात् । चित्रज्ञानवद्युगपदेकस्यानेकाकारसम्बन्धित्ववत्क्रमेणापि तत्तस्याविरुद्धम् । इति सिद्धं परापरविवर्त्तव्याप्येकद्रव्यलक्षणमूर्द्ध्वतासामान्यम् । यथा च द्वेधा सामान्यं तथा-विशेषश्च । चकारोपिशब्दार्थे । कथं तद्द्वैविध्यमित्याह-पर्यायव्यतिरेकभेदात् । तत्र पर्यायस्वरूपं निरूपयति । एकस्मिन्द्रव्ये क्रमभाविनः परिणामाः पर्यायाः । अत्रोदाहरणमाह-आत्मनि हर्षविषादादिवत् ।

ननु हर्षादिविशेषव्यतिरेकेणात्मनोऽसत्त्वादयुक्तमिदमुदाहरणमित्यन्यः । सोप्यप्रेक्षापूर्वकारी चित्रसंवेदनवदनेकाकारव्यापित्वेनात्मनः स्वसंवेदनप्रत्यक्षप्रसिद्धत्वात् । यद्यथा प्रतिभासते तत्तथैव व्यवहर्त्तव्यम् । यथा वेद्याद्याकारात्मसंवेदनरूपतया प्रतिभासमानं संवेदनम् । सुखाद्यनेकाकारैकात्मतया प्रतिभासमानश्चात्मेत्यनुमानप्रसिद्धत्वाच्च । सुखदुःखादिपर्यायाणामन्योन्यमेकान्ततो भेदे च प्रागहं सुख्यासं सम्प्रति दुःखी वर्ते इत्यनुसन्धानप्रत्ययो न स्यात् । तथाविधवासनाप्रबोधादनुसन्धानप्रत्ययोत्पत्तिरित्यप्यसत्यम् । अनुसन्धानवासना हि यद्यनुसन्धीयमानसुखादिभ्यो भिन्ना तर्हि सन्तानान्तरसुखादिवत्स्वसन्तानेप्यनुसन्धानप्रत्ययं नोत्पादयेदविशेषात् । तदभिन्ना चेत्तावद्धा भिद्येत । न खलु भिन्नादभिन्नमभिन्नं नामातिप्रसङ्गात् । तथा च तत्प्रबोधात्कथं सुखादिष्वेकमनुसन्धानज्ञानमुत्पद्येत । तेभ्यस्तस्याः कथञ्चिद्भेदे ना-

---

१ अभावात् ॥ २ अकारणे ॥ ३ अकार्ये ॥ ४ यथास्माकं सम्बन्धो न घटते तथा तवापीत्यर्थं ॥ ५ असम्बन्धस्य ॥ ६ सौगतेन मया ॥ ७ असम्बन्धेन ॥ ८ अकारणेनाऽकार्येण वा ॥ ९ अकार्यमकारण वा ॥ १० असम्बन्धे ॥ ११ न केवल कार्यकारणभावस्य ॥ १२ परेण ॥ १३ उक्तप्रकारेण सम्बन्धो निराकर्त्तुं न शक्यते यत ॥ १४ असम्बन्ध ॥ १५ नराश्ववत् ॥ १६ चैतन्यव्याहारादिकार्यवत् ॥ १७ परस्पर परमार्थतो व्यवतिष्ठते ॥ १८ उभयत्र ॥ १९ कार्यकारणाविनाभाव ॥ २० सौगत ॥ २१ असम्बन्धादिवत् ॥ २२ किंतु स्यादेव ॥ २३ ज्ञानस्य ॥ २४ जीवादिपदार्थस्य ॥ २५ ज्ञानसुखवीर्यदर्शनादय आत्मन सहभावित्वाद्गुणा स्यु । क्रमभावित्वाच पर्यायाश्च भवन्ति-कुतो वस्तुनोऽनेकधर्मात्मकत्वात् ॥ २६ भेद ॥ २७ अपरस्य ॥ २८ सौगत ॥ २९ आदिना वेदकसंवित्तिग्रह ॥ ३० हर्षविषादादिग्रह ॥ ॥ ३१ साधनमसिद्धमित्युक्ते सत्याह ॥ ३२ सर्वथा ॥ ३३ आत्मन सकाशात् ॥ ३४ प्रत्यभिज्ञान ॥ ३५ गम्यमान ॥ ३६ सर्वथा ॥ ३७ सुखादिस्वरूपेण ॥ ३८ उभयत्र भिन्नत्वस्य ॥ ३९ तर्हि ॥ ४० सुखादयो यावन्त ॥ ४१ एकम् ॥ ४२ अन्यथा ॥ ४३ घटपटादिभ्योऽभिन्नाना तत्स्वरूपाणा भिन्नत्वप्रसङ्गात् ॥ ४४ वासनाया अचेतनत्वे च ॥ ४५ ॥ अनेकवासना ॥ ४६ अनेकसुखानुसन्धानज्ञानमुत्पद्येतेत्यर्थ. ॥ ४७ कारणबहुत्वे कार्यबहुत्वमिति वचनात् ॥ ४८ आत्मा वासनेति च ॥

ममात्रं भिद्येताऽहमहमिकया स्वसंवेदनप्रत्यक्षप्रसिद्धस्यात्मनः सहक्रमभाविनो गुणपर्यायानात्मसात्कुर्वतो वासनेति नामान्तरकरणात् । क्रमवृत्तिसुखादीनामेकसन्ततिपतितत्वेनानुसन्धाननिवन्धनत्वमित्यपि तादृगेवात्मनः सन्ततिशब्देनाभिधानात् । तेषां कथञ्चिदेकत्वाभावेनैकपुरुषसुखादिवदेकसन्ततिपतितत्वस्याप्ययोगात् । आत्मनोऽनभ्युपगमे च कृतनाशाकृताभ्यागमदोषानुषङ्गः । कर्तुर्निरन्वयनाशे हि कृतस्य कर्मणो नाशः कर्त्तुः फलानभिसम्बन्धात् । अकृताभ्यागमश्चाकर्त्तुरेव फलाभिसम्बन्धात् । ततस्तद्दोषपरिहारमिच्छतात्मनोनुगमोभ्युपगन्तव्यः । न चाप्रमाणकोयं तत्सद्भावावेदकयोः स्वसंवेदनानुमानयोः प्रतिपादनात् । अहमेव ज्ञातवानहमेव वेद्मीत्यादेरेकप्रमातृविषयप्रत्यभिज्ञानस्य च सद्भावात् । तथा चोक्तं भट्टेन "तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः । पुरुषोभ्युपगन्तव्यः कुण्डलादिषु सर्पवत्" इति । "तस्मात्तत्प्रत्यभिज्ञानात्सर्वलोकावधारितात् । नैरात्म्यवादबाधः स्यादिति सिद्धं समीहितम्" इति च । अथ कथमतः प्रत्यभिज्ञानादात्मसिद्धिरिति चेदुच्यते । प्रमातृविषयं तदित्यत्र तावदावयोरविवाद एव । स च प्रमाता भवन्नात्मा भवेद् ज्ञानं वा? न तावदुत्तरः पक्षोऽहं ज्ञातवानहमेव च साम्प्रतं जानामीत्येकप्रमातृपरामर्शेन ह्यहंबुद्धेरुपजायमानाया ज्ञानक्षणो विषयत्वेन कल्प्यमानोतीतो वा कल्प्येत वर्तमानो वोभौ वा सन्तानो वा? प्रकारान्तरासम्भवात् । तत्राद्यविकल्पे ज्ञातवानित्ययमेवाकारावसायो युज्यते–पूर्वं तेन ज्ञातत्वात् । सम्प्रति जानामीत्येतत्तु न युक्तम् । न ह्यसावतीतो ज्ञानक्षणो वर्त्तमानकाले वेत्ति पूर्वमेवास्य निरुद्धत्वात् । द्वितीयपक्षे तु सम्प्रति जानामीत्येतद्युक्तं–तस्येदानीं वेदकत्वात् । ज्ञातवानित्याकारग्रहणं तु न युक्तं–प्रागस्यासम्भवात् । अत एव न तृतीयोपि पक्षो युक्तः । न खलु वर्तमानातीतावुभौ ज्ञानक्षणौ ज्ञातवन्तौ, नापि जानीतः । किं तर्हि? एको ज्ञातवानन्यस्तु जानातीति । चतुर्थपक्षोप्ययुक्तोतीतवर्त्तमानज्ञानक्षणव्यतिरेकेणान्यस्य सन्तानस्यासम्भवात् । कल्पितस्य सम्भवेपि न ज्ञातृत्वम् । न ह्यसौ ज्ञानवान्पूर्वं, नाप्यधुना जानाति कल्पितत्वेनास्याऽवस्तुत्वात् । न चावस्तुनो ज्ञातृत्वं सम्भवति वस्तुधर्मत्वात्तस्य + इत्यतोऽन्यस्य प्रमातृत्वासम्भवादात्मैव प्रमाता सिद्ध्यति -+ इति सिद्धोऽतः प्रत्यभिज्ञानादात्मेति । ननु चात्मा सुखादिपर्यायैः सम्बद्ध्यमानः परित्यक्तपूर्वरूपो वा सम्बद्ध्येताऽपरित्यक्तपूर्वरूपो वा? प्रथमपक्षे निरन्वयनाशप्रसङ्गोऽवस्थातुः कस्यचिदभावात् । द्वितीयपक्षे तु पूर्वोत्तरावस्थयोरात्मनोऽविशेषादपरिणामित्वानुषङ्गः । प्रयोगः । यत्पूर्वोत्तरावस्थासु न विशिष्यते न तत्परिणामि । यथाकाशम् । न विशिष्यते पूर्वोत्तरावस्था-

१ अह सुल्यह दु खीति ॥ २ स्वकर्मान् ॥ ३ हर्षविषादादीना च ॥ ४ आत्मद्रव्यापेक्षया ॥ ५ कथम्? ॥ ६ कर्मण ॥ ७ पुरुषस्य ॥ ८ कर्मण ॥ ९ कर्मफलकाले तदभावात् ॥ १० सौगतेन ॥ ११ पूर्वम् ॥ १२ इदानीम् ॥ १३ सुखादिपर्यायाणा सर्वथात्मन सकाशाद्भेदाभेदौ, तयो ॥ १४ परिहारेण ॥ १५ सुखादिस्वरूपतया ॥ १६ चिद्रूपतया ॥ १७ भेदाभेदात्मक ॥ १८ आकारेषु ॥ १९ स्वर्णवदिति पाठान्तरम् ॥ २० ज्ञानसन्ततिरेवात्मा नान्य कश्चिदिति हेतोर्नैरात्म्यम् ॥ २१ जैनबौद्धयो ॥ २२ प्रत्यभिज्ञानेन ॥ २३ सौगतेन ॥ २४ अतीतवर्त्तमानलक्षणो ॥ २५ निश्चय ॥ २६ अतीतज्ञानक्षणस्य ॥ २७ अतीतज्ञानक्षणस्य ॥ २८ कथम्? ॥ २९ विनष्टत्वात् ॥ ३० एकस्य ज्ञातवत्त्वशातृत्त्वासम्भवादेव ॥ ३१ इत्युल्लेख ॥ ३२ इत्युल्लेख ॥ ३३ इत्युल्लेखो युक्त ॥ ३४ अतीतज्ञानक्षणादे ॥ ३५ अवशिष्यमाणत्वात् ॥ ३६ पूर्वाकारापरित्यागात् ॥ ३७ 'आत्मा धर्मी, परिणामी न भवतीति साध्य, पूर्वोत्तरावस्थास्वविशिष्टत्वात्' इत्युपस्थितसयोज्यम् ॥ ३८ भिद्यते ॥

स्वात्मेति[1]।-तदपरीक्षिताभिधानमात्मनो[2] भेदेन प्रसिद्धसत्ताकैः सुखादिपर्यायैः स्वस्य सम्बन्धानभ्युपगमात्[3]। आत्मैव हि तत्पर्यायतया परिणमते नीलाद्याकारतया चित्रज्ञानवत् स्वपरग्रहणशक्तिद्वयात्मकतयैकविज्ञानवद्वा[4]। न[5] खलु ययैव शक्त्यात्मानं प्रतिपद्यते विज्ञानं तयैवार्थं[6] तयोरभेदप्रसङ्गात्। अन्यथात्मनो येन रूपेण सुखपरिणामस्तेनैव दुःखपरिणामेप्यनयोरभेदो न स्यात्। न च तच्छक्तिभेदे तदात्मनो ज्ञानस्यापि भेदोन्यथैकस्य स्वपरग्राहकत्वं न स्यात्। नापि चित्रज्ञानस्य नीलाद्यनेकाकारतया परिणामेप्येकाकारताव्याघातः। तद्वत्सुखाद्यनेकाकारतया परिणामेप्यात्मनो नैकत्वव्याघातो विशेषाभावात्। न चैकत्र युगपदन्यत्र तु कालभेदेन परिणामाद्विशेषः प्रतीतेर्नियामकत्वात्। यत्र हि प्रतीतिर्देशकालभिन्ने तदऽभिन्ने वा वस्तुन्येकत्वं प्रतिपद्यते तत्रैकत्वं प्रतिपत्तव्यम्। यत्र तु नानात्वं प्रतिपद्यते तत्र तु नानात्वमिति। ततो यदुक्तं 'सर्वात्मनैवाभेदे भेदस्तद्विपरीतः कथं भवेत्? न ह्येकदा विधिप्रतिषेधौ परस्परविरुद्धौ युक्तौ। प्रयोगः। यत्राभेदस्तत्र तद्विपरीतो न भेदः। यथा तेषामेव पर्यायाणां द्रव्यस्य च यत्प्रतिनियतमसाधारणमात्मस्वरूपं तस्य न स्वभावाद्भेदः। अभेदश्च द्रव्यपर्याययोरिति। किञ्च पर्यायेभ्यो द्रव्यस्याभेदो द्रव्यात्पर्यायाणां वा? प्रथमपक्षे पर्यायवद्द्रव्यस्याप्यऽनेकत्वानुषङ्गः। तथा हि। यद्व्यावृत्तिस्वरूपाऽभिन्नस्वभावं तद्व्यावृत्तिमत्। यथा पर्यायाणां स्वरूपम्। व्यावृत्तिमद्रूपाव्यतिरिक्तं च द्रव्यमिति। द्वितीयपक्षे तु पर्यायाणामप्येकत्वानुषङ्गः। तथा हि। यदनुगतस्वरूपाऽव्यतिरिक्तं तदनुगतात्मकमेव। यथा द्रव्यस्वरूपम्। अनुगतात्मस्वरूपाऽभिन्नस्वभावाश्च सुखादयः पर्याया' इत्यादि तन्निरस्तं–प्रमाणप्रतिपन्ने वस्तुरूपे कुचोद्याऽनवकाशात्। न खलु मदोन्मत्तो हस्ती सन्निहितं व्यवहितं वा परं मारयति ।-सन्निहितस्य मारणे मेण्ठस्यापि मारणप्रसङ्गः। व्यवहितस्य च मारणेऽतिप्रसङ्गः ।- इत्यनर्थानल्पकल्पनाभयात्स्वकार्यकरणादुपरमते। चित्रज्ञानादावपि चैतत्सर्वं समानम्। प्रतिक्षिप्तं च प्रतिक्षणं क्षणिकत्वं प्रागित्यलमतिप्रसङ्गेन।

अथेदानीं व्यतिरेकलक्षणं विशेषं व्याचिख्यासुरर्थान्तरेत्याह। एकस्मादर्थात्सजातीयो विजातीयो वार्थोऽर्थान्तरम्। तद्गतो विसदृशपरिणामो व्यतिरेको

---

१ का (पञ्चमी) ॥ २ जैनै ॥ ३ कथम्? तथा हि ॥ ४ ज्ञानस्य शक्तिद्वयं न विद्यते इत्याशङ्कायामाह ॥ ५ स्वस्य स्वरूपम् ॥ ६ एकयेव शक्त्या स्वरूपार्थयो प्रतिपत्तौ ॥ ७ आत्मनि ॥ ८ आत्मनि ॥ ९ ('प्रतीते' इति खपुस्तके पाठ ॥ १० सुखादिपर्यायै ॥ ११ परेण ॥ १२ नीलाद्यनेकाकारे ॥ १३ परेण ॥ १४ सति ॥ १५ द्रव्यपर्याययोर्भेद ॥ १६ भेदाभेदो ॥ १७ द्रव्यपर्यायौ धर्मिणौ भिन्नौ न भवतस्तयोरभेदादिति अनुमान सौगतप्रयुक्तमुपरितोन योज्यम् ॥ १८ पक्षे नीलाद्याकाराणाम् ॥ १९ प्रथमपक्षे आत्मन । द्वितीयपक्ष चित्रज्ञानस्य ॥ २० अन्योन्यम् ॥ २१ पक्षे नीलाद्याकारचित्रज्ञानयो ॥ २२ पक्षे नीलाद्याकारेभ्य ॥ २३ पक्षे चित्रज्ञानस्य ॥ २४ व्यावृत्तय =पर्याया ॥ २५ भेदवत् ॥ २६ तस्मादनेकमिति ॥ २७ अनुगतस्वरूप=द्रव्यम् ॥ २८ द्रव्यपर्यायात्मके ॥ २९ कुप्रश्न ॥ ३० मदोन्मत्तो हस्ती मारयत्येवेति प्रमाणप्रतिपन्न ॥ ३१ हस्तिपकस्य ॥ ३२ मारणात् ॥ ३३ हस्ती ॥ ३४ सर्वात्मनेत्यादि सौगतमते ॥ ३५ चित्रज्ञानाकारो भिन्नौ न भवत तयोरभेदादित्येवम् ॥ ३६ खण्डलक्षणाद्गो सजातीयो मुण्डलक्षणो गौ, विजातीयो महिष खण्डापेक्षया मुण्डो विसदृशाकारो महिषापेक्षया च विसदृशाकार इत्यर्थ ॥

गोमहिषादिवत्। यथा गोषु खण्डमुण्डादिलक्षणो विसदृशपरिणामो महिषेषु विशालविसङ्कटत्वलक्षणो गोमहिषेषु चान्योन्यमसाधारणस्वरूपलक्षण इति। तावेवं-
प्रकारौ सामान्यविशेषावात्मा यस्यार्थस्याऽसौ तथोक्तः। स प्रमाणस्य विषयः। न तु केवलं सामान्यं विशेषो वा—तस्य द्वितीयपरिच्छेदे विषयभेदात्प्रमाणभेद इति
सौगतमतं प्रतिक्षिपता प्रतिक्षिप्तत्वात्। नाप्युभयं स्वतन्त्रं तथाभूतस्यास्याप्यप्रतिभासनात्।

ननु[1] चार्थस्य सामान्यविशेषात्मकत्वमयुक्तं तदात्मकत्वेनास्य ग्राहकप्रमाणाभावात्। सामान्यविशेषाकारयोश्चान्योन्यं प्रतिभासभेदेनात्यन्तं[2] भेदात्। प्रयोगः।
सामान्याकारविशेषाकारौ परस्परतोऽत्यन्तं भिन्नौ भिन्नप्रमाणग्राह्यत्वाद्घटपटवत्[3]। पटादौ हि भिन्नप्रमाणग्राह्यत्वमत्यन्तभेदे सत्येवोपलब्धं तत्सामान्यविशे-
पाकारयोरुपलभ्यमानं कथं नात्यन्तभेदं प्रसाधयेत्? अन्यत्राप्यस्य तदप्रसाधकत्वप्रसङ्गात्। न खलु प्रतिभासभेदाद्विरुद्धधर्माध्यासाच्चान्यत्पटादीनामप्यन्योन्यं
भेदनिबन्धनमस्ति। स चावयवावयविनोर्गुणगुणिनोः क्रियातद्वतोः सामान्यविशेषयोश्चास्त्येव[6]। पटप्रतिभासो हि तन्तुप्रतिभासवैलक्षण्येनानुभूयते। तन्तुप्रतिभासश्च
पटप्रतिभासवैलक्षण्येन। एवं पटप्रतिभासाद्रूपादिप्रतिभासवैलक्षण्यमप्यवगन्तव्यम्। विरुद्धधर्माध्यासोऽप्यनुभूयत एव। पटो हि पटत्वजातिसम्बन्धी विलक्षणार्थ-
क्रियासम्पादकोतिशयेन महत्त्वयुक्तः तन्तवस्तु तन्तुत्वजातिसम्बन्धिनोल्पपरिमाणाश्च—इति कथं न भिद्यन्ते? तादात्म्यं चैकत्वमुच्यते। तस्मिंश्च सति प्र-
तिभासभेदो विरुद्धधर्माध्यासश्च न स्याद्विभिन्नविषयत्वात्तत्तयोः। यदि च तन्तुभ्यो नार्थान्तरं पटस्तर्हि तन्तवोपि नांशुभ्योर्थान्तरं, तेपि स्वावयवेभ्यः।
इत्येवं तावच्चिन्त्यं यावन्निरंशाः परमाणवः। तेभ्यश्चाभेदे सर्वस्य कार्यस्यानुपलम्भः स्यात्। तस्मादर्थान्तरमेव पटात्तन्तवो रूपादयश्च प्रतिपत्तव्याः। तथा
विभिन्नकर्तृकत्वात्तन्तुभ्यो भिन्नः पटो घटादिवत्। विभिन्नशक्तिकत्वाद्वा विषाऽगदवत्। पूर्वोत्तरकालभावित्वाद्वा पितापुत्रवत्। विभिन्नपरिमाणत्वाद्वा बदराम-
लकवत्। तथा तन्तुपटादीनां तादात्म्ये पटः तन्तव इति वचनभेदः पटस्य भावः पटत्वमिति षष्ठी तद्धितोत्पत्तिश्च न प्राप्नोतीति। किञ्च तादात्म्यमित्यत्र किं स पट
आत्मा येषां तन्तूनां तेषां भावस्तादात्म्यमिति विग्रहः कर्तव्यः? ते वा तन्तवः आत्मा यस्य पटस्य स च, ते आत्मा यस्येति वा? प्रथमपक्षे पटस्यैकत्वात्तन्तूनामप्येकत्व-
प्रसङ्गः। तन्तूना वाऽनेकत्वात्पटस्याप्यनेकत्वानुषङ्गः। अन्यथा तत्तादात्म्यं न स्यात्। द्वितीयविकल्पेप्ययमेव दोषः। तृतीयपक्षश्चाविचारितरमणीयस्तद्व्यतिरिक्तस्य

---

१ वैशेषिक ॥ २ सर्वथा ॥ ३ सन्दिग्धानैकान्तिकत्वे प्रतिपादिते सत्याह ॥ ४ साधनमिदम् ॥ ५ सत्त्वम् ॥ ६ कथम् ? तथा हि ॥ ७ आदिपदेन क्रियादिग्रह ॥ ८ शीतापनोदादि ॥ ९ अवयवावयव्यादय ॥
१० प्रतिभासभेदे विरुद्धधर्माध्यासे च सत्यपि तादात्म्य भविष्यतीत्युक्ते सत्याह ॥ ११ तन्त्ववयवेभ्य ॥ १२ द्व्यणुकादिलक्षणस्य ॥ १३ परमाणुद्वयेन द्व्यणुकमारभ्यते। द्व्यणुकत्रितयेन त्र्यणुकमारभ्यते। तत्र प्रत्यक्षमेव
तत उपरितननियमाभाव ॥ १४ जेनेन ॥ १५ प्रतिभासभेदविरुद्धधर्माध्यासप्रकारेण ॥ १६ योषित्कुविन्द ॥ १७ अगद =औषधम् ॥ १८ एकवचनबहुवचनत्वेन ॥ १९ भेदाभावे सति। भेदे षष्ठीति वचनात् ॥ २० वस्तुन ॥
२१ स तदात्मा। तस्य भावस्तादात्म्यम् ॥ २२ एकरूपपटादभिन्नास्तन्तव एकरूपमापन्ना इति ॥

वस्तुनोऽसम्भवात् । न हि तन्तुपटव्यतिरिक्तं वस्त्वन्तरमस्ति यस्य तन्तुपटस्वभावतो[1]च्येत । न च तन्तुपटादीनां[2] कथञ्चिद्भेदाभेदात्मकत्वमभ्युपगन्तव्यं संशयादिदोषोपनिपातानुषङ्गात् । केन[3] खलु स्वरूपेण तेषां भेदः केन चाभेद इति संशयः[4] । तथा यत्राभेदस्तत्र भेदस्य विरोधो यत्र च भेदस्तत्राभेदस्य शीतोष्णस्पर्शवदिति विरोधः । तथाऽभेदस्यैकत्वस्वभावस्यान्यदधिकरणं भेदस्य चानेकस्वभावस्यान्यदिति वैयधिकरण्यम् । तथैकान्ते[5]नैकात्मकत्वे यो दोषोऽनेकस्वभावत्वाभावलक्षणोऽनेकात्मकत्वे चैकस्वभावत्वाभावलक्षणः सोऽत्राप्यनुपज्यते इत्युभयदोषः[6] । तथा येन स्वभावेनार्थस्यैकस्वभावता तेनानेकस्वभावत्वस्यापि प्रसङ्गो येन चानेकस्वभावता तेनैकस्वभावत्वस्यापीति सङ्करप्रसङ्गः—'सर्वेषां[7] युगपत्प्राप्तिः सङ्करः' इत्यभिधानात् । तथा येन स्वभावेनानेकत्वं तेनैकत्वं प्राप्नोति । येन चैकत्वं तेनानेकत्वमिति व्यतिकरः—'परस्परविषयगमनं व्यतिकरः' इति प्रसिद्धेः । तथा येन रूपेण भेदस्तेन कथञ्चिद्भेदो येन चाभेदस्तेनापि कथञ्चिदभेद इत्यनवस्था । अतोऽप्रतिपत्तितो[8]ऽभाव[9]स्तत्त्वस्यानुपज्येतानेकान्तवादिनाम् । एवं सत्त्वा[10]द्यनेकान्ताभ्युपगमेऽप्येतेऽष्टौ दोषा द्रष्टव्याः । तत्र तदा[11] पारमार्थः प्रमाणप्रमेयः[12] । किन्तु परस्परतोऽत्यन्तविभिन्ना[13] द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षडेव पदार्थाः[14] । तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि । पृथिव्यप्तेजोवायुरित्येतच्चतुःसंख्यं द्रव्यं नित्यानित्यविकल्पाद्द्विभेदम् । तत्र परमाणुरूपं नित्यं सद[15]कारणवत्त्वात् । तदारब्धं तु द्व्यणुकादि कार्य[16]द्रव्यमनित्यम्[17] । आकाशादिकं तु नित्यमेवानुत्पत्तिमत्त्वात्[18] । एषां[19] च द्रव्यत्वाभिसम्बन्धाद्द्रव्यरूपता[20] । एतच्चेतरे[21]भ्यव्यवच्छेदकमेषां लक्षणम्[22] । तथा हि । पृथिव्यादीनि मनःपर्यन्तानीतरेभ्यो भिद्यन्ते, द्रव्याणीति व्यवहर्त्तव्यानि द्रव्यत्वाभिसम्बन्धात् । यानि नैवं न तानि द्रव्यत्वाभिसम्बन्धवन्ति यथा गुणादीनीति[23] । पृथिव्यादीनाम[24]प्य[25]वान्तरभेद[26]वतां पृथिवीत्वाद्यभिसम्बन्धो लक्षणम् । इतरे[27]भ्यो भेदे व्यवहारे तच्छब्दवाच्यत्वे वा साध्ये केवलव्यतिरेकि[28]रूपं द्रष्टव्यम्[29] । अभेदवतां त्वाका-

---

१ तन्तुपटौ स्वभावौ यस्य ॥ २ आदिपदेन गुणगुण्यादीनाम् ॥ ३ कथम् ? तथा हि ॥ ४ भेदाभेदात्मकत्वे वस्तुनोऽसाधारणाकारेण निश्चेतुमशक्ते संशय ॥ ५ भेदाभेदात्मकत्वे ॥ ६ अयमपि वैयधिकरण्येऽन्तर्भवति ॥ ७ स्वभावानाम् ॥ ८ संशयादिदोषवत ॥ ९ अनुपलम्भ ॥ १० आदिना=असत्त्वादि ॥ ११ सामान्यविशेषात्मा ॥ १२ ग्राह्य ॥ १३ विभिन्नप्रत्ययविषयत्वाद्विरलक्षणलक्षितत्वाद्भिन्नकारणप्रभवत्वाद्भिन्नार्थक्रियाकारित्वाच्च । घटपटवत् ॥ १४ प्रमाणग्राह्या ॥ १५ खकुसुमादिना व्यभिचारपरिहारार्थं सदिति । तेनाव्यापिघटादिना व्यभिचारस्तन्निरासार्थमकारणवत्त्वादिति ॥ १६ अवयविरूपम् ॥ १७ उत्पत्तिमत्त्वात् ॥ १८ सत्त्वे सतीति योज्यम् १९ नवसंख्योपेतपृथिव्यादीनाम् ॥ २० प्रतिपत्तव्या ॥ २१ इतरे=गुणादय ॥ २२ असाधारणस्वरूपम् ॥ २३ अत्रापि साध्याभावे साधनाभावोऽस्ति ॥ २४ द्रव्याणां गुणादिभ्यो भेदादिकं प्रसाध्येदानीं नवद्रव्याणां तद्भेदानां च परस्पर भेदादिक साधयति वैशेषिक ॥ २५ ननु यद्यपि नवानां पृथिव्यादीनां गुणादिभ्यो भेदस्तथा व्यवहारस्तच्छब्दवाच्यत्व च समर्थित तथापि तेषां तद्भेदानां च परस्पर भेदस्तथा व्यवहारस्तच्छब्दवाच्यत्वमिति च साध्येषु किं साधनमित्युक्ते आह ॥ २६ घटपटादि मृष्टजलादि प्रतिपादिशीतवातादि इत्यादयोऽवान्तरभेदाश्च तेष्वेव सम्भवन्ति आकाशादीनां नित्यनिरंशत्वाभ्यामवान्तरभेदासम्भवात् ॥ २७ अबादिभ्य ॥ २८ साधनम् ॥ २९ पृथिवी धर्मिणीतरेभ्यो भिद्यते पृथिवीति वा व्यवहर्तव्या पृथिवीत्वाभिसम्बन्धाद्नादिवत् । एवमबादिष्वपि द्रष्टव्यम् ॥

शकालदिग्द्रव्याणामनादिसिद्धा तच्छब्दवाच्यता द्रष्टव्या । एवं रूपादयश्चतुर्विंशतिगुणाः । उत्क्षेपणादीनि पञ्च कर्माणि । परापरभेदभिन्नं द्विविधं सामान्यमनुगतज्ञानकारणम् । नित्यद्रव्यव्यावृत्तयोऽन्त्या विशेषा अत्यन्तव्यावृत्तिबुद्धिहेतवः । अयुतसिद्धानामाधार्याधारभूतानामिहेदमितिप्रत्ययहेतुर्यः सम्बन्धः स समवायः । अत्र पदार्थषट्के द्रव्यवद्गुणा अपि केचिन्नित्या एव केचित्त्वनित्या एव । कर्माऽनित्यमेव । सामान्यविशेषसमवायास्तु नित्या एवेति ।

अत्र प्रतिविधीयते । अनेकधर्मात्मकत्वेनार्थस्य ग्राहकप्रमाणाभावोऽसिद्धः । तथा हि । वास्तवानेकधर्मात्मकोऽर्थः परस्परविलक्षणानेकार्थक्रियाकारित्वात्पितृपुत्रपौत्रभ्रातृभागिनेयाद्यनेकार्थक्रियाकारिदेवदत्तवत् । न चायमसिद्धो हेतुरात्मनो मनोज्ञाङ्गनानिरीक्षणस्पर्शनमधुरध्वनिश्रवणताम्बूलादिरसास्वादनकर्पूरादिगन्धाघ्राणमनोज्ञवचनोच्चारणचङ्क्रमणावस्थानहर्षविषादानुवृत्तव्यावृत्तज्ञानाद्यन्योन्यविलक्षणानेकार्थक्रियाकारित्वेनाध्यक्षतोनुभवात् । घटादेश्च स्वान्यव्यक्तिप्रदेशाद्यपेक्षयानुवृत्तव्यावृत्तसदसत्प्रत्ययस्थानगमनजलधारणादिपरस्परविलक्षणानेकार्थक्रियाकारित्वेन प्रत्यक्षतः प्रतीतेरिति । दृष्टान्तोपि न साध्यसाधनविकलो वास्तवानेकधर्मात्मकत्वाऽन्योन्यविलक्षणानेकार्थक्रियाकारित्वयोस्तत्र सद्भावात् । ननु भिन्नप्रमाणग्राह्यत्वेन धर्मधर्मिणोरत्यन्तभेदप्रसिद्धेः सिद्धेपि धर्मिणि वास्तवानेकधर्माणां सद्भावे तादात्म्याप्रसिद्धिरित्यप्यसमीचीनमनैकान्तिकत्वाद्धेतोः । प्रत्यक्षानुमानाभ्यां हि भिन्नप्रमाणग्राह्यत्वेप्यात्मादिवस्तुनो भेदाभावः दूरेतरदेशवर्त्तिनामस्पष्टेतरप्रत्ययग्राह्यत्वेपि वा पादपस्याऽभेदः । ननु चात्र प्रत्ययभेदाद्विषयभेदोऽस्त्येव । प्रथमसमयवर्त्ति हि विज्ञानमूर्द्धताविषयमुत्तरं च शाखादिविशेषविषयमित्यप्यसाम्प्रतमेवंविषयभेदाभ्युपगमे यमहमद्राक्षं दूरस्थितः पादपमेतर्हि तमेव पश्यामीत्येकत्वाध्यवसायो न स्यात्स्पष्टेतरप्रतिभासानां सामान्यविशेषविषयत्वेन घटादिप्रतिभासवद्भिन्नविषयत्वात् । अथ पादपापेक्षया पूर्वोत्तरप्रत्ययानामेकविषयत्वं सामान्यविशेषापेक्षया तु विषयभेदः । कथमेवमनेकान्ताभ्युपगमो न विशीर्येत? गुणगुण्यादिष्वप्येतस्तद्वत्कथञ्चिद्भेदाभेदप्रसिद्धेर्भिन्नप्रमाणग्राह्यत्वस्य विरुद्धत्वम् । एकान्ततोऽवयवावयव्यादीना भिन्नप्रमाणग्राह्यत्वं चासिद्धं पटोयमित्याद्युल्लेखेनाभिन्नप्रमाणग्राह्यत्वस्यापि सम्भवात् । ननु पटोयमित्याद्युल्लेखेनावयव्येव प्रतिभासते नावयवास्तत्कथमभिन्नप्रमाणग्राह्यत्वमित्यप्य-

---

१ पृथिव्यादिप्रकारेण ॥ २ सत्ताख्य ॥ ३ द्रव्यत्वादि ॥ ४ इद सदिद सत्, इद द्रव्यमिद द्रव्यमित्येवम् ॥ ५ अपृथक्सिद्धानाम् ॥ ६ गुणगुण्यादीनाम् ॥ ७ नित्यद्रव्याश्रिता ॥ ८ यथाकाशादो परममहत्त्वादि ॥ ९ अनित्यद्रव्याश्रिता ॥ १० स्वामिदासादय ॥ ११ वाह्यार्थस्य ॥ १२ स्वश्चान्यश्च तौ । व्यक्तिश्च प्रदेशादयश्च ते । स्वान्ययोर्व्यक्तिप्रदेशादय । तेषामपेक्षा, तया । ततश्चायमर्थः स्वव्यक्त्यपेक्षया स्वप्रदेशाद्यपेक्षयान्यव्यक्त्यपेक्षयाऽन्यप्रदेशाद्यपेक्षया यथाक्रममनुवृत्तव्यावृत्तप्रत्यय सदसत्प्रत्ययलक्षणार्थक्रियाकारित्वादि ॥ १३ आदिना कालभावग्रहणम् ॥ १४ घटस्तिष्ठति ॥ १५ घटो जले गच्छति पत्रमाकाशे गच्छतीत्यादि ॥ १६ सत्प्रतिपक्षत्व हेतो सद्भावयति पर ॥ १७ धर्म सह धर्मिणो धर्मिणा वा धर्मिणाम् ॥ १८ सर्वथा भेदाभावे ॥ १९ भिन्नप्रमाणग्राह्यत्वादित्यस्य ॥ २० अह सुख्यह दु खीत्यादिस्वसवेदनेन आत्मास्ति व्याहारादिकार्यदर्शनादित्याद्यनुमानेन च ॥ २१ पुरुषाणाम् ॥ २२ यथा ॥ २३ कुतस्तथा हि ॥ २४ दूरत ॥ २५ समीपे शाखादिमानिति ॥ २६ नर ॥ २७ तव परस्य ॥ २८ ययोर्भिन्नप्रमाणग्राह्यत्व तयो सर्वथा भेद इति ॥ २९ भिन्नप्रमाणग्राह्यत्वात् ॥ ३० साध्यविपर्ययव्याप्तो विरुद्ध ॥ ३१ साधनम् ॥ ३२ असिद्धत्व परिहरति पर ॥ ३३ पट ॥

पेशल तद्भेदाप्रसिद्धेः । तन्तव एव ह्यातानवितानीभूता अवस्थाविशेषविशिष्टाः पटोयमित्याद्युल्लेखेन प्रतिभासन्ते नान्यस्ततोर्थान्तरं. पटः । प्रमाणं हि यथाविधं वस्तुस्वरूपं गृह्णाति तथाविधमेवाभ्युपगन्तव्यम् । यत्रात्यन्तभेदग्राहकं तत्तत्रात्यन्तभेदो यथा घटपटादौ । यत्र पुनः कथञ्चिद्[1]भेदग्राहकं तत्र कथञ्चिद्भेदो[2] यथा तन्तुपटादाविति । अतः[3] कालात्ययापदिष्टं चेदं[4] साधनं यथानुष्णोग्निर्द्रव्यत्वाज्जलवत् । न च घटादौ[6] तथाविधभेदेनास्य व्याप्त्युपलम्भात्सर्वत्रात्यन्तभेदकल्पना युक्ता क्वचित्तार्णत्वादिविशेषाधारेणाग्निना धूमस्य व्याप्त्युपलम्भेन सर्वत्राप्यतस्तथाविधविशेषसिद्धिप्रसङ्गात् । अथ तार्णत्वादिविशेषं परित्यज्य सकलविशेषसाधारणमग्निमात्रं धूमात्प्रसाध्यते । नन्वेवमत्यन्तभेदं परित्यज्यावयवावयव्यादिष्वपि भिन्नप्रमाणग्राह्यत्वाद्भेदमात्रं[9] किं न प्रसाध्यते[10] विशेषाभा[11]वात् । दृष्टान्तश्च[12] साध्यविकलत्वान्न[13] साधनाङ्गमत्यन्तभेदस्यात्राप्यसिद्धेः । तदसिद्धिश्च सद्रूपतया घटादीनामभेदात् । साधनविकलश्च स्फारिताक्षस्यैकस्मिन्नप्यध्यक्षे[14] घटादीनां प्रतिभाससम्भवात्[15] । न च प्रतिविषयं विज्ञानभेदोऽभ्युपगन्तव्यो[16] मेचकज्ञानाभावप्रसङ्गात् । घटादिवस्तुनोप्येकविज्ञानविषयत्वाभावानुषङ्गाच्च । अत्राप्यूर्द्ध्वाधोमध्यभागेषु तद्भेदस्य[17] कल्पयितुं शक्यत्वात् । तथा[18] चावयविप्रसिद्धये दत्तो जलाञ्जलिः[19] । प्रतीतिविरोधो[20]ऽन्यत्रापि[21] न काकैर्भक्षितः । विरुद्धधर्माध्यासोपि[22] धूमादिना[23]नैकान्तिकत्वान्नावयवावयविनोरात्यन्तिकं[24] भेदं प्रसाधयति । न[25] खलु स्वसाध्येतरयोर्गमकत्वागमकत्वलक्षणविरुद्धधर्माध्यासेपि धूमो भिद्यते । नन्वत्रापि सामग्रीभेदोस्त्येव । धूमस्य हि पक्षधर्मत्वादिकारणोपचितस्य स्वसाध्यं प्रति गमकत्वं[26] तद्विपरीतकारणोपचितस्य सामग्र्यन्तरत्वात्साध्यान्तरे[27]ऽगमकत्वम् । न त्वेकस्यैव गमकत्वागमकत्वं सम्भवति । इत्यप्यन्धसर्पविलप्रवेशन्यायेनानेकान्तावलम्बनं धूमस्याभिन्नत्वात् । य एव हि धूमोऽविनाभावसम्बन्धस्मरणादि[28]कारणोपचितो वन्हि प्रति गमकः स एव साध्यान्तरेऽगमक इति । अथान्यः स्वसाध्यं प्रति गमकोऽन्यश्चान्यत्रागमकस्तर्हि यो गमको धूमस्तस्य स्वसाध्यवत्साध्यान्तरेपि सामर्थ्यादेकस्मादेव धूमान्निखिलसाध्यसिद्धिप्रसङ्गाद्धेत्वन्तरोपन्यासो व्यर्थः स्यात् । किञ्चातो[29]ऽप्राप्तपटावस्थेभ्यः प्राक्तनावस्थाविशिष्टेभ्यस्तन्तुभ्यः पटस्य भेदः साध्येत पटावस्थाभाविभ्यो वा? प्रथमपक्षे सिद्धसाध्यता पूर्वोत्तरावस्थयोः सकलभावाना भेदाभ्युपगमात्[30] । न

---

१ पर्यायतया ॥ २ अभ्युपगन्तव्य ॥ ३ प्रमाणेन सर्वथा भेदस्य बाधनात् ॥ ४ न केवलमसिद्धम् ॥ ५ भिन्नप्रमाणग्राह्यत्वादिति ॥ ६ घटपटयो ॥ ७ सर्वथा ॥ ८ तन्तुपटादौ ॥ ९ यथाग्निमात्रे साधिते सति खादिराग्निस्तथा पार्णाग्निरपि लभ्यते एवं भेदमात्रे साधिते भेदो लभ्यतेऽभेदोपि लभ्यते इति भावार्थ ॥ १० परेण त्वया ॥ ११ विशेषपरित्यागस्य ॥ १२ घटपटवदिति ॥ १३ अत्यन्तभेद- साध्य ॥ १४ युगपत् ॥ १५ सेनावनादिज्ञानवत् ॥ १६ सर्वथा ॥ १७ तस्य ज्ञानस्य ॥ १८ घटादिवस्तुनो भेदे च ॥ १९ ज्ञानभेदेनैव सिद्धे ॥ २० एकोयं घट इति ॥ २१ अवयवावयव्यादे सर्वथा भेदे साध्ये ॥ २२ हेतु ॥ २३ चक्षुरादिना च ॥ २४ ययोर्विरुद्धधर्माध्यासस्तयोरात्यन्तिको भेद इत्यनुमाने ॥ २५ उक्तमेव समर्थयन्ति ॥ २६ महानसादौ ॥ २७ जलादौ ॥ २८ आदिना पक्षधर्मत्वादिग्रहणम् ॥ २९ विरुद्धधर्माध्यासात् ॥ ३० जैने ॥

खलु यैवार्थस्य पूर्वावस्था सैवोत्तरावस्था–पूर्वाकारपरित्यागेनैवोत्तराकारोत्पत्तिप्रतीतेः । द्वितीयपक्षे तु हेतूनामसिद्धिः । न खलु पटावस्थाभावितन्तुभ्यः पटस्य भेदाप्रसिद्धौ विरुद्धधर्माध्यासविभिन्नकर्तृकत्वादयो धर्माः सिद्धिमासादयन्ति । कालात्ययापदिष्टत्वं चैतेषामातानवितानीभूततन्तुव्यतिरेकेणार्थान्तरभूतस्य पटस्याध्यक्षेणानुपलब्धेस्तेन भेदपक्षस्य बाधितत्वात् । तन्तवः पट इति संज्ञाभेदोप्यवस्थाभेदनिबन्धनो न पुनर्द्रव्यान्तरनिमित्तः । योषिदादिकरव्यापारोत्पन्ना हि तन्तवः कुविन्दादिव्यापारात्पूर्वं शीतापनोदाद्यर्थासमर्थास्तन्तुव्यपदेशं लभन्ते, तद्व्यापारादूत्तरकालं विशिष्टावस्थाप्राप्तास्तत्समर्थाः पटव्यपदेशमिति विभिन्नशक्तिकत्वाद्यप्यवस्थाभेदमेव तन्तूनां प्रसाधयति न त्ववयवावयवित्वेनात्यन्तिकं भेदम् । यच्चोक्तं 'पटस्य भावः' इत्यभेदे षष्ठी न प्राप्नोतीति तदप्ययुक्तं षण्णां पदार्थानामस्तित्वं षण्णां पदार्थानां वर्ग इत्यादौ भेदाभावेपि षष्ठ्याद्युत्पत्तिप्रतीतेः । न हि भवता षट्पदार्थव्यतिरिक्तमस्तित्वादीष्यते । ननु सतो ज्ञापकप्रमाणविषयस्य भावः सत्त्वम् । सदुपलम्भकप्रमाणविषयत्वं नाम धर्मान्तरं षण्णामस्तित्वमिष्यते । अतो नानेनानेकान्तस्तदसत्–षट्पदार्थसंख्याव्याघातानुषङ्गात्, तस्य तेभ्योन्यत्वात् । ननु धर्मिरूपा एव ये भावास्ते षट्पदार्थाः प्रोक्ताः । धर्मरूपास्तु तद्व्यतिरिक्ता इष्टा एव । तथा च पदार्थप्रवेशकग्रन्थः "एवं धर्मैर्विना धर्मिणामेव निर्देशः कृतः" इति ।

अस्त्वेवं तथाप्यस्तित्वादेर्धर्मस्य षट्पदार्थैः सार्धं कः सम्बन्धो येन तत्तेषां धर्मः स्यात्? संयोगः समवायो वा? न तावत्संयोगोऽस्य गुणत्वेन द्रव्याश्रयत्वात् । नापि समवायस्तस्यैकत्वेनेष्टत्वात् । समवायेन चास्य समवायसम्बन्धे समवायानेकत्वप्रसङ्गः । सम्बन्धमन्तरेण धर्मधर्मिभावाभ्युपगमे चातिप्रसङ्गः । किञ्चास्तित्वादेरपरास्तित्वाभावात्कथं तत्र व्यतिरेकनिबन्धना विभक्तिर्भवेत्? अथ तत्राप्यपरमस्तित्वमङ्गीक्रियते तदानवस्था स्यात् । उत्तरोत्तरधर्मसमावेशेन च सत्त्वादेर्धर्मिरूपत्वानुषङ्गात्षडेव धर्मिण इत्यस्य व्याघातः । ये धर्मिरूपा एव ते षट्केनावधारिता इत्यप्यसारमेवं हि गुणकर्मसामान्यविशेषसमवायानामनिर्देशः स्यात् । न ह्येषां धर्मिरूपत्वमेव द्रव्याश्रितत्वेन धर्मरूपत्वस्यापि सम्भवात् । तथा स्वस्य भावः स्वत्वमित्यत्राभेदेपि तद्धितोत्पत्तेरुपलम्भान्न सापि

१ स्वात्मोपलब्धिम् ॥ २ विरुद्धधर्माध्यासादयो यदि भेदप्रसाधका न भवेयुस्तदा कथं संज्ञाभेदो भविष्यतीत्याह ॥ ३ साधनम् ॥ ४ सामान्यविशेषयो । तन्तुपटादीनाम् ॥ ५ षट् पदार्था एव समूह ॥
६ वस्तुन ॥ ७ तदेव ॥ ८ षट्पदार्थेभ्यो भिन्नम् ॥ ९ धर्मिधर्मरूपयो षट्पदार्थास्तित्वयो सर्वथा भेदाभेदसद्भावात् ॥ १० यत्र षष्ठीतद्धितोत्पत्तिस्तत्रात्यन्तिको भेद इत्यस्य ॥ ११ सप्तमपदार्थापत्ते ॥
१२ अस्तित्वादय ॥ १३ मम वैशेषिकस्य ॥ १४ धर्मिभ्यो धर्माणा व्यतिरिक्तान्वेषणप्रकारेण ॥ १५ श्रूयते ॥ १६ परेण ॥ १७ अन्यथेति शेष ॥ १८ समवायपदार्थेस्तित्वेन भाव्य तत्तु तत्रापरसमवायपदार्थेन कृत्वा वर्त्तते । एव तस्यानेकत्वापत्तिर्भवेत् ॥ १९ गगनकुसुमाद्यस्तित्वाद्योर्धर्मिधर्मभाव स्यादित्यतिप्रसङ्ग ॥ २० यत्र षष्ठी विभक्तिस्तत्रात्यन्तभेद इत्यस्मिन्पक्षेऽनैकान्तिक दूषणमुद्भावयति जैन ॥
२१ सामान्यस्य ॥ २२ सत्ताया अस्तित्व गोत्वादेरस्तित्वमित्यत्र ॥ २३ अनेकान्तदोषपरिहाराय । परेण ॥ २४ अपरापरास्तित्वसद्भावात् ॥ २५ दूषणान्तरम् ॥ २६ पूर्वस्य पूर्वस्य ॥ २७ अर्थात्–एकस्यैव द्रव्यस्य निर्देश स्यात् ॥

भेदपक्षमेवावलम्बते। यच्चोक्तं 'तादात्म्यमित्यत्र कीदृशो विग्रहः कर्तव्यः' इत्यादि तत्रेत्थं विग्रहो द्रष्टव्यः। तस्य वस्तुन आत्मानौ द्रव्यपर्यायौ सत्त्वासत्त्वादिधर्मौ वा तदात्मानौ। तच्छब्देन वस्तुनः परामर्शात्तयोर्भावस्तादात्म्यं=भेदाभेदात्मकत्वम्। वस्तुनो हि भेदः पर्यायरूपत्वमेवाभेदस्तु द्रव्यरूपत्वमेव, भेदाभेदौ तु द्रव्यपर्यायस्वभावावेव। न खलु द्रव्यमात्रं पर्यायमात्रं वा वस्तूभयात्मनः समुदायस्य वस्तुत्वात्। द्रव्यपर्याययोस्तु न वस्तुत्वं, नाप्यवस्तुता। किन्तु वस्त्वेकदेशता। यथा समुद्रांशो न समुद्रो, नाप्यसमुद्रः, किन्तु समुद्रैकदेश इति। स पट आत्मा येषामित्यपि विग्रहे न दोषोऽवस्थाविशेषापेक्षया तन्तूनामेकत्वस्याभीष्टत्वात्। ते तन्तव आत्मा यस्येति विग्रहे तन्तूनामनेकत्वे पटस्याप्यनेकत्वं स्यादिति चेत्किमिदं तस्यानेकत्वं नाम? किमनेकावयवात्मकत्वं प्रतितन्तु तत्प्रसङ्गो वा? प्रथमपक्षे सिद्धसाध्यतातानवितानीभूतानेकतन्त्वाद्यवयवात्मकत्वात्तस्य। द्वितीयपक्षस्त्वयुक्तः प्रत्येकं तेषां तत्परिणामाभावात्। समुदितानामेव ह्यातानवितानीभूतः परिणामोऽमीषां प्रतीयते। तथाभूताश्च ते पटस्यात्मेत्युच्यते। वस्तुनो भेदाभेदात्मकत्वे संशयादिदोषानुषङ्गोऽयुक्तः। भेदाभेदाऽप्रतीतौ हि संशयो युक्तः क्वचित्स्थाणुपुरुषत्वाप्रतीतौ तत्संशयवत्। तत्प्रतीतौ तु कथमसौ? स्थाणुपुरुषप्रतीतौ तत्संशयवदेव। चलिता च प्रतीतिः संशयः। न चेयं तथेति। न चानयोर्विरोधः कथञ्चिदर्पितयोः सत्त्वासत्त्वयोरिव भेदाभेदयोर्विरोधासिद्धेस्तथा प्रतीतेश्च। प्रतीयमानयोश्च कथं विरोधो नामास्यानुपलम्भसाध्यत्वात्। न च स्वरूपादिना वस्तुनः सत्त्वे तदैव पररूपादिभिरसत्त्वस्यानुपलम्भोऽस्ति। न खलु वस्तुनः सर्वथा भाव एव स्वरूपं स्वरूपेणेव पररूपेणापि भावप्रसङ्गात्। नाप्यभाव एव पररूपेणेव स्वरूपेणाप्यभावप्रसङ्गात्। न च स्वरूपेण भाव एव पररूपेणाभावः परात्मना चाभाव एव स्वरूपेण भावस्तदपेक्षणीयनिमित्तभेदात्। स्वद्रव्यादिकं हि निमित्तमपेक्ष्य भावप्रत्ययं जनयत्यर्थः, परद्रव्यादिक त्वपेक्ष्याऽभावप्रत्ययम्। इत्येकत्वद्वित्वादिसंख्यावदेकवस्तुनि भावाभावयोर्भेदः। न ह्येकत्र द्रव्ये द्रव्यान्तरमपेक्ष्य द्वित्वादिसंख्या प्रकाशमाना स्वात्ममात्रापेक्षैकत्वसंख्यातो नान्या प्रतीयते। नापि सोभयी तद्वतो भिन्नैवास्याऽसंख्येयत्वप्रसङ्गात्। संख्यासमवायात्तत्त्वमित्यप्यसुन्दरं—कथञ्चित्तादात्म्यव्यतिरिक्तस्य समवायस्यासत्त्वप्रतिपादनात्। तत्सिद्धोऽपेक्षणीयभेदात्संख्यावत्सत्त्वासत्त्वयोर्भेदः। तथाभूतयोश्चानयोरेकवस्तुनि प्रतीयमानत्वात्कथं विरोधः? द्रव्यपर्यायरूपत्वादिना भेदाभेदयोर्वा मिथ्येयं प्रतीतिरित्यप्यसङ्गतं वाधकाभावात्। विरोधो वाधक इत्यप्ययुक्तमितरेतराश्रयानुषङ्गात्। सति हि विरोधे तेनास्यावाध्यमानत्वान्मिथ्यात्वसिद्धिस्ततश्च तद्विरोधसिद्धिरिति।

---

१ एतेनोर्ध्वतासामान्यपर्यायलक्षणविशेषात्मकवस्तु गृहीतम् ॥ २ एतेन तिर्यक्सामान्यव्यतिरेकविशेषात्मक वस्तु सङ्गृहीतम् ॥ ३ प्रत्येकम् ॥ ४ तन्तूनाम् ॥ ५ पटस्यैकत्वे तन्तूनामेकत्वाउपलक्षण ॥ ६ अवस्था=पटरूपा ॥ ७ आदिना अनुग्रहणम् ॥ ८ अस्माभिर्जैनैः ॥ ९ द्रव्यपर्यायापेक्षया ॥ १० विवक्षितयो (मुख्ययो) ॥ ११ स्वपरद्रव्यादिचतुष्टयापेक्षया ॥ १२ पर्यायापेक्षया भेद । द्रव्यापेक्षया चाभेद ॥ १३ भेदाभेदप्रकारेण ॥ १४ भाव =अस्तित्वम् ॥ १५ तयो =भावाभावयो ॥ १६ कथम्? तथा हि ॥ १७ स्वापेक्षया एकत्व यथा तथा परापेक्षया द्वित्व च ॥ १८ विशेष ॥ १९ सत्त्वेयत्वम् ॥ २० अग्रे ॥ २१ भिन्नयो ॥ २२ सत्त्वासत्त्वयो ॥

विरोधश्चाविकलकारणस्यैकस्य भवतो द्वितीयसन्निधानेऽभावादवसीयते । न च भेदसन्निधानेऽभेदस्याऽभेदसन्निधाने वा भेदस्याभावोऽनुभूयते । किञ्चात्र विरोधः सहानवस्थानलक्षणः परस्परपरिहारस्थितिस्वभावो वा वध्यघातकरूपो वा स्यात्? न तावत्सहानवस्थानलक्षणोऽन्योन्याव्यवच्छेदेनैकस्मिन्नाधारे भेदाभेदयोर्धर्मयोः सत्त्वासत्त्वयोर्वा प्रतिभासमानत्वात् । परस्परपरिहारस्थितिलक्षणस्तु विरोधः सहैकत्राम्रफलादौ रूपरसयोरिवानयोः सम्भवतोरेव स्यान्न त्वसम्भवतोः सम्भवदसम्भवतोर्वा । किञ्चायं विरोधो धर्मयोर्धर्मिणोर्वा? प्रथमपक्षे सिद्धसाधनमेतल्लक्षणत्वाद् धर्माणाम् । ऐकाधिकरण्यं तु तेषां न विरुध्यते मातुलिङ्गद्रव्ये रूपादिवत् । धर्मधर्मिणोस्तु विरोधे धर्मिणि धर्माणां प्रतीतिरेव न स्यात् । न चैवमबाधबोधाधिरूढप्रतिभासत्त्वात्तत्र तेषाम् । वध्यघातकभावोपि विरोधः फणिनकुलयोरिव बलवदबलवतोः प्रतीतः सत्त्वासत्त्वयोर्भेदाभेदयोर्वा नाशङ्कनीयस्तयोः समानबलत्वात् । अस्तु वा कश्चिद्विरोधः । तथाप्यसौ सर्वथा कथञ्चिद्वा स्यात्? न तावत्सर्वथा शीतोष्णस्पर्शादीनामपि सत्त्वादिना विरोधासिद्धेः । एकाधारतया चैकस्मिन्नपि हि धूपदहनादिभाजने क्वचित्प्रदेशे शीतस्पर्शः क्वचिच्चोष्णस्पर्शः प्रतीयत एव । अथानयोः प्रदेशयोर्भेद एवेष्यते । अस्तु नामानयोर्भेदः । धूपदहनाद्यवयविनस्तु न भेदः । न चास्य शीतोष्णस्पर्शाधारता नास्तीत्यभिधातव्यं प्रत्यक्षविरोधात् । तन्न सर्वथा विरोधः । कथञ्चिद्विरोधस्तु सर्वत्र समानः । किञ्च भावेभ्योऽभिन्नो भिन्नो वा विरोधः स्यात्? न तावत्तेभ्योऽभिन्नो विरोधो विरोधको युक्तः स्वात्मभूतत्वात्तत्स्वरूपवत् । विपर्ययानुषङ्गो वा । अथ भिन्नस्तथापि न विरोधकोऽनात्मभूतत्वादर्थान्तरवत् । अथार्थान्तरभूतोपि विरोधो विरोधको भावानां विशेषणभूतत्वात्, न पुनर्भावान्तरं तस्य तद्विशेषणत्वाभावात् । तदप्यसमीचीनम् । विरोधो हि तुच्छरूपोऽभावः । स यदि शीतोष्णद्रव्ययोर्विशेषणं तर्हि तयोरदर्शनापत्तिस्तत्सम्बद्धरूपत्वात् । असम्बद्धस्य च विशेषणत्वेतिप्रसङ्गात् । अन्यतरविशेषणत्वेप्येतदेव दूषणम् । तदेव च विरोधि स्याद्यस्यासौ विशेषणं नान्यत् । न चैकत्र विरोधो नामास्य द्विष्ठत्वात् । अन्यथा सर्वत्र सर्वदा तत्प्रसङ्गः । अथ

१ शीतस्य ॥ २ जायमानस्य ॥ ३ उष्ण ॥ ४ ययोस्तथा प्रतिभासमानत्वं न तयोस्तथा विरोधो यथा रूपरसयो । तथा प्रतिभासमानत्वं च भेदाभेदयोरिति ॥ ५ विद्यमानयो ॥ ६ अस्मिन्विरोधे सति दोषो नास्तीत्यर्थं ॥ ७ शशाश्वविषाणयोरिव ॥ ८ वन्ध्याऽवन्ध्यास्तनन्धययोरिव ॥ ९ जैनमते ॥ १० प्रदीपादौ ॥ ११ स्वपरप्रकाशादीनाम् ॥ १२ सत्त्वादिरूपाव्यवच्छेदत ॥ १३ शीतस्पर्श सन्नुष्णस्पर्श· सन्नित्यादिना धर्मेण ॥ १४ शीतोष्णस्पर्शादयो न विरुद्धा एकाधारतया प्रतीयमानत्वात् । यत्तथा प्रतीयते न तत्सर्वथा विरुद्ध यथा रूपरसादि, एकतुलाया नामोन्नामादिर्वा । एकाधारतया प्रतीयन्ते च धूपदहनादौ शीतोष्णस्पर्शादय इति ॥ १५ परेण ॥ १६ भावानामसाधारणस्वरूपप्रकारेण ॥ १७ घटाकारस्य पटेऽभावात् ॥ १८ घटपटादौ घटपटरूपादो वा ॥ १९ भावा अपि विरोधस्य विरोधका कुतो न भवेयुर्विरोधादभिन्नत्वाविशेषात् ? ॥ २० भावा विशेष्या विरोधो विशेषणमनयोर्भावयोर्विरोध इति ॥ २१ घटपटादिरूप ॥ २२ विवादापन्ने शीतोष्णद्रव्ये धर्मिणी न दृश्येते इति साध्यो धर्म । अभावसम्बद्धरूपत्वात् क्वचित्प्रदेशे घटवत् ॥ २३ शीतोष्णद्रव्ययोर्मध्ये शीतद्रव्यस्योष्णद्रव्यस्य वा ॥ २४ शीतोष्णद्रव्ययोर्मध्ये ॥ २५ विरोधस्य ॥ २६ अदर्शनापत्तिलक्षणम् ॥ २७ द्वितीयम् ॥ २८ शीतद्रव्यस्योष्णद्रव्यस्य वा ॥ २९ उष्णद्रव्य शीतद्रव्य वा ॥ ३० उष्णद्रव्ये शीतद्रव्ये वा ॥ ३१ तथा च घटस्य सद्रूपतावत् (सत्तासम्बन्धात्सद्रूपाणीति भावो वैशेषिकमते) रूपादिस्वभावतापि न स्यात् । न चैतद्युक्त प्रतीतिविरोधात् ॥

विरुध्यमानत्व[1]विरोधकत्व[2]ापेक्षया[3] कर्मकर्तृस्थो विरोधो विरोधसामान्यापेक्षयोभयविशेषणत्वाद्द्विष्ठोऽभिधीयते । नन्वेवं[4] रूपादेरपि द्विष्ठत्वापत्तिः किन्न स्यात्? तत्सामान्यस्यापि द्विष्ठत्वाविशेषात् । विरोधस्याभावरूपत्वे सामान्यविशेषत्वाभावानुपपत्तिश्च । गुणरूपत्वे गुणविशेषणत्वाभावानुषङ्गः । अथ षट्पदार्थव्यतिरिक्तत्वात् पदार्थविशेषो विरोधोऽनेकस्थो विरोध्यविरोधकप्रत्ययविशेषप्रसिद्धः समाश्रीयते तदाप्यस्यासम्बद्धस्य द्रव्यादौ विशेषणत्वं सम्बद्धस्य वा? न तावदसम्बद्धस्यातिप्रसङ्गाद्दण्डादौ तथाऽप्रतीतेश्च । न खलु पुरुषेणासम्बद्धो दण्डस्तस्य विशेषणं प्रतीतो येनात्रापि तथाभावः । अथ सम्बद्धः । किं संयोगेन समवायेन विशेषणभावेन वा? न तावत्संयोगेनास्याद्रव्यत्वेन संयोगानाश्रयत्वात् । नापि समवायेनास्य द्रव्यगुणकर्मसामान्यविशेषव्यतिरिक्तत्वेनासमवायित्वात् । नापि विशेषणभावेन सम्बन्धान्तरेणासम्बद्धे वस्तुनि विशेषणभावस्याप्यसम्भवात् । अन्यथा दण्डपुरुषादौ संयोगादिसम्बन्धाभावेपि स स्यात् । इत्यलं संयोगादिसम्बन्धकल्पनाप्रयासेन । विरोध्यविरोधकप्रत्ययविशेषस्तु[13] विशिष्टं वस्तुधर्ममेवालम्बते[14] इति वक्ष्यते समवायसम्बन्धनिराकरणप्रक्रमे । ततो विरोधस्य विचार्यमाणस्यायोगान्नानयोरसौ घटते । नापि वैयधिकरण्यं निर्बाधबोधे भेदाभेदयोः सत्त्वासत्त्वयोर्वा[15] एकाधारतया प्रतीयमानत्वात् । नाप्युभयदोषश्चौरपारदारिकाभ्यामचौरपारदारिकवज्जैनाभ्युपगतवस्तुनो[16] जात्यन्तरत्वात् । न खलु भेदाभेदयोः सत्त्वासत्त्वयोर्वाऽन्योन्यनिरपेक्षयोरेकत्वं जैनैरभ्युपगम्यते येनायं दोषस्तत्सापेक्षयोरेव[17] तदभ्युपगमात् तथा[18] प्रतीतेश्च । नापि सङ्करव्यतिकरौ[19] स्वरूपेणैवार्थे तयोः प्रतीतेः । नाप्यनवस्था[20] । धर्मिणो ह्यनेकरूपत्वं, न धर्माणां कथञ्चनेति वस्तुनो ह्यभेदो धर्म्येव, भेदस्तु धर्मा एव, तत्कथमनवस्था? अभावदोषस्तु दूरोत्सारित एवाशेषप्राणिनामनेकान्तात्मकार्थस्यानुभवसम्भवात्[21] ।

ननु शरीरेन्द्रियबुद्धिव्यतिरिक्तात्मद्रव्यस्य[22] इच्छादिगुणाश्रयस्य नित्यैकरूपत्वात्कथं सर्वस्यानेकान्तात्मकत्वम्? न च नित्यैकरूपत्वे कर्तृत्वभोक्तृत्वजन्ममरणजीवनहिंसकत्वादिव्यपदेशाभावः । ज्ञानचिकीर्षाप्रयत्नानां समवायो[23] हि कर्तृत्वम् । सुखादि[24]संवित्समवायस्तु भोक्तृत्वम् । अपूर्वैः शरीरेन्द्रियबुद्ध्यादिभिश्चाभि-

---

१ विरुध्यमान =शीत ॥ २ विरोधक =उष्ण ॥ ३ विरोध्यविरोधकभावसम्बन्धापेक्षया ॥ ४ ननु विशेषापेक्षया यत कर्तृस्थो विरोधो हि कर्मणि नास्ति कर्मस्थ कर्तरि नास्तीत्यद्विष्ठो विशेषापेक्षयेति भाव ॥ ५ विरोधप्रकारेण ॥ ६ भावाना विरोधकत्वापत्ति ॥ ७ विरोधस्याभावरूपत्व मा भूद्गुणरूपत्वं स्यादित्युक्ते आहाचार्य ॥ ८ गुणा निर्गुणा इति वचनाच्छीतोष्णस्पर्शयोर्गुणरूपयोर्विरोधो गुणरूप इति विशेषणत्वमस्य न घटतेऽन्यथा ॥ ९ सह्यो विन्ध्य प्रति विशेषण स्यादसम्बद्धत्वाविशेषात् ॥ १० असम्बद्धविशेषणत्वप्रकारेण ॥ ११ असम्बद्धत्वप्रकारेण ॥ १२ पञ्चसु पदार्थेषु समवायोस्ति यत ॥ १३ प्रत्ययो=ज्ञानम् ॥ १४ वस्तुनोऽव्यतिरिक्तमभावरूप विरोधमवलम्बते न तु व्यतिरिक्तम् ॥ १५ भेदाभेदयो सत्त्वासत्त्वयोर्वा ॥ १६ आत्मादिवस्तुन ॥ १७ द्रव्य पर्यायमपेक्ष्य वर्तते पर्यायो द्रव्यमपेक्ष्य वर्तते ॥ १८ परस्परापेक्षया ॥ १९ मेचकरत्नादौ ॥ २० धर्माणामपरधर्माऽसम्भवात् ॥ २१ प्रत्यक्षादिप्रमाणत ॥ २२ येषा वादिना शरीरमेवात्मा इन्द्रियाण्येवात्मा बुद्धिरेवात्मा वा तेषा मतनिरासार्थमिद विशेषणम् ॥ २३ आत्मना सह ॥ २४ आदिना चिकीर्षाप्रयत्नादि ॥ २५ पर्यायापेक्षया व्यावृत्त्यात्मकस्य चैतन्यापेक्षयानुगमात्मकस्य ॥

सम्बन्धो जन्म । प्राणात्तैस्तैस्तु वियोगो मरणम् । जीवनं तु सदेहस्यात्मनो धर्माधर्मापेक्षो मनसा सम्बन्धः । हिंसकत्वं च शरीरचक्षुरादीनां वधान्नं[1] पुनरात्मनो विनाशात् । तथा च सूत्रं "कार्याश्रयकर्तृवधाद्धिंसा" इति । कार्याश्रयः शरीरं सुखादेः कार्याश्रयत्वात् । कर्तॄणीन्द्रियाणि विषयोपलब्धेः कर्तृत्वादिति । तदप्यसमीक्षिताभिधानं सर्वथाऽपरित्यक्तपूर्वरूपत्वेनास्याकाशकुशेशयवद् ज्ञानादिसमवायस्यैवासम्भवात्[3] । कथं तदपेक्षया कर्तृत्वादिस्वरूपसम्भवः? पूर्वरूपपरित्यागे वा कथं नानेकान्तात्मकत्वं व्यावृत्त्यनुगमात्मकस्यात्मनः स्वसंवेदनप्रत्यक्षतः प्रसिद्धेः । व्यावृत्तिः खलु सुखदुःखादिस्वरूपापेक्षया । आत्मनोनुगमश्च चैतन्यद्रव्यत्वसत्त्वादिस्वरूपापेक्षया । तदात्मकत्वं चाध्यक्षत एव प्रसिद्धम् । ननु चानुवृत्तव्यावृत्तस्वरूपयोः परस्परं विरोधात्कथं तदात्मकत्वमात्मनो युक्तमित्यप्यसत्प्रमाणप्रतिपन्ने वस्तुस्वरूपे विरोधानवकाशात् । न खलु सर्पस्य कुण्डलेतरावस्थापेक्षयाङ्गुल्यादेर्वा सङ्कोचितेतरस्वभावापेक्षया व्यावृत्त्यनुगमात्मकत्वं प्रत्यक्षप्रतिपन्नं विरोधमध्यास्ते । ननु सुखाद्यवस्थानामात्मनोऽत्यन्तभेदात्तद्व्यावृत्तावप्यात्मनः किमायातं येनास्यापि व्यावृत्त्यात्मकत्वं स्यादित्यप्यपेशलं सुखाद्यात्मनोरत्यन्तभेदस्य प्रथमपरिच्छेदे प्रतिविहितत्वात् । ननु चाकारवैलक्षण्येप्यात्मसुखादीनामनानात्वेऽन्यत्राप्यन्यतोऽन्यस्यान्यत्वं न स्यात् ; तदप्यविचारितरमणीयं तद्वृत्तादात्म्येनान्यत्रान्यस्य प्रमाणतोऽप्रतीतेः । प्रतीतौ तु भवत्येवाकारनानात्वेप्यनानात्वं, प्रत्यभिज्ञाज्ञानवत्सामान्यविशेषवत्संशयज्ञानवन्मेचकज्ञानवद्वेति ।

यच्चोक्तं "द्रव्यादयः षडेव पदार्थाः प्रमाणप्रमेयाः" इत्यादि तदप्युक्तिमात्रं-द्रव्यादिपदार्थषट्कस्य विचारासहत्वात् । तथा हि । यत्तावच्चतुःसंख्यं पृथिव्यादि नित्यानित्यविकल्पाद्द्विभेदमित्युक्तं, तदयुक्तमेकान्तनित्ये क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्[13] । तल्लक्षणसत्त्वस्यातो व्यावृत्त्याऽसत्त्वप्रसङ्गात् । यदि हि परमाणवो द्व्यणुकादिकार्यद्रव्यजननैकस्वभावास्तर्हि तत्प्रभवकार्याणां सकृदेवोत्पत्तिप्रसङ्गोऽविकलकारणत्वात् । प्रयोगः । येऽविकलकारणास्ते सकृदेवोत्पद्यन्ते यथा समानसमयोत्पादा बहवोऽङ्कुराः । अविकलकारणाश्चाणुकार्यत्वेनाभिमता भावा इति । तथाभूतानामप्यनुत्पत्तौ सर्वदानुत्पत्तिप्रसक्तिर्विशेषाभावात्[16] । ननु[17] समवाय्यऽसमवायिनिमित्तभेदात्त्रिविधं कारणम् । यत्र हि कार्यं समवैति[18] तत्समवायि कारणम् । यथा द्व्यणुकस्याणुद्वयम् । यच्च कार्यैकार्थसमवेतं[19]

१ घटते ॥ २ आत्मन ॥ ३ व्यापित्वाव्यापित्वरूपे ॥ ४ घटपटादौ ॥ ५ आकारवैलक्षण्याविशेषात् ॥ ६ आत्मसुखादिवत् ॥ ७ घटे ॥ ८ पटस्य ॥ ९ तादात्म्ये ॥ १० पूर्वोत्तरपर्यायज्ञानद्वयाकारवत् ॥ ११ घटादौ ॥ १२ पटादे ॥ १३ यथा गोत्व सामान्यमश्वत्वसामान्यापेक्षया विशेष- ॥ १४ एकान्तनित्यस्य ॥ १५ एकान्तनित्या ॥ १६ अविकलकारणत्वस्य ॥ १७ साधनमसिद्धमिति पर सम्भावयति ॥ १८ पृथग्रूपत्वेनोत्पद्यते ॥ १९ कार्यं=पट तेनैकार्थे तन्तुलक्षणे समवेत पटम् ॥

कार्यकारणैकार्थसमवेतं वा कार्यमुत्पादयति तदसमवायि कारणम् । यथा पटारम्भे तन्तुसंयोगः । पटसमवेतरूपाद्यारम्भे पटोत्पादकतन्तुरूपादि च । शेषं तूत्पादकं निमित्तकारणम् । यथाऽदृष्टाकाशादिकम् । तत्र संयोगस्याऽपेक्षणीयस्याभावादविकलकारणत्वमसिद्धम् । तदप्यसाम्प्रतं संयोगादिनाऽनाधेयातिशयत्वेनाऽणूनां तदपेक्षाया अयोगात् । अथ संयोग एवामीषामतिशयः । स किं नित्योऽनित्यो वा? नित्यश्चेत्सर्वदा कार्योत्पत्तिः स्यात् । अनित्यश्चेत्तदुत्पत्तौ कोऽतिशयः स्यात्संयोगः क्रिया वा? संयोगश्चेत्किं स एव संयोगान्तरं वा? न तावत्स एवास्याद्याप्यसिद्धेः स्वोत्पत्तौ स्वस्यैव व्यापारविरोधाच्च । नापि संयोगान्तरं तस्यानभ्युपगमात् । अभ्युपगमे वा तदुत्पत्तावप्यपरसंयोगातिशयकल्पनायामनवस्था । नापि क्रियातिशयस्तदुत्पत्तावपि पूर्वोक्तदोषानुषङ्गात् । किञ्चादृष्टापेक्षादात्माणुसंयोगात्परमाणुषु क्रियोत्पद्यते इत्यभ्युपगमादात्मपरमाणुसंयोगोत्पत्तावप्यपरोतिशयो वाच्यस्तत्र च तदेव दूषणम् । किञ्चासौ संयोगो द्व्यणुकादिनिर्वर्त्तकः किं परमाण्वाद्याश्रितस्तदन्याश्रितोऽनाश्रितो वा? प्रथमपक्षे तदुत्पत्तावाश्रयं उत्पद्यते न वा? यद्युत्पद्यते तदाणूनामपि कार्यतानुषङ्गः । अथ नोत्पद्यते तर्हि संयोगस्तदाश्रितो न स्यात्–समवायप्रतिषेधात्, तेषा च तं प्रत्यकारकत्वात् । तदकारकत्वं चाऽनतिशयत्वात् । अनतिशयानामपि कार्यजनकत्वे सर्वदा कार्यजनकत्वप्रसङ्गोऽविशेषात् । अतिशयान्तरकल्पने चानवस्था तदुत्पत्तावप्यपरातिशयान्तरपरिकल्पनात् । ततस्तेषामसंयोगरूपतापरित्यागेन संयोगरूपतया परिणतिरभ्युपगन्तव्या । इति सिद्धं तेषां कथञ्चिदनित्यत्वम् । अन्याश्रितत्वेपि पूर्वोक्तदोषप्रसङ्गः । अनाश्रितत्वे तु निर्हेतुकोत्पत्तिप्रसक्तेः सदा सत्त्वप्रसङ्गस्ततः कार्यस्यापि सर्वदा भावानुषङ्गः । कथं चासौ गुणः स्यादनाश्रितत्वादाकाशादिवत्? किञ्चासौ संयोगः सर्वात्मनैकदेशेन वा तेषां स्यात्? सर्वात्मना चेत्पिण्डोणुमात्रः स्यात् । एकदेशेन चेत्सांशत्वप्रसङ्गोऽमीषाम् । तदेवं संयोगस्य विचार्यमाणस्यायोगात्कथमसौ तेषामतिशयः स्यात्? निरतिशयाना च कार्यजनकत्वे तु सकृन्निखिलकार्याणामुत्पादः स्यात् । न चैवम् । ततोमीषां प्राक्तनाजनकस्वभावपरित्यागेन विशिष्टसंयोगपरिणामपरि-

---

१ कार्यकारण पटगतरूपादि तेन सह एकार्थसमवेत तन्तुगतरूपम् ॥ २ आदिना कुविन्दादि ॥ ३ कारणत्रयमध्ये ॥ ४ द्व्यणुकादिकार्योत्पादने ॥ ५ परमाणुभि ॥ ६ परमाणूना परमाणुभि सह सयोग ॥ ७ नित्यत्वात् ॥ ८ सर्वदा नित्यसयोगलक्षणातिशयसद्भावात् ॥ ९ कारणम् ॥ १० परमाण्वो ॥ ११ परमाण्वो ॥ १२ स्वयमनुत्पन्नस्य स्वात्मनि व्यापार कथमिति विरोध ॥ १३ परेण ॥ १४ द्व्यणुकादीनि कार्याण्यात्मनोऽदृष्टवशाज्जायन्ते आत्मनो व्यापकत्वादिति हेतो ॥ १५ द्व्यणुकादिकार्योत्पादकलक्षणा ॥ १६ परेण ॥ १७ अनवस्थालक्षणम् ॥ १८ ततोऽन्यत्= अदृष्टाकाशादि निमित्तकारणम् ॥ १९ तस्य सयोगस्य ॥ २० द्व्यणुकोत्पादक सयोग परमाण्वाश्रित । त्र्यणुकोत्पादकसयोगो द्व्यणुकाश्रित स्कन्धोत्पादक सयोगस्त्र्यणुकाश्रित इति ॥ २१ परमाण्वादि ॥ २२ उत्पद्यमानत्वाद्घटवत् ॥ २३ तस्य परमाणो ॥ २४ समवायाद्भविष्यतीत्युक्ते सत्याह ॥ २५ अग्रे ॥ २६ कार्यकारणभावसम्बन्धेन तदाश्रितो भविष्यतीत्युक्ते सत्याहाचार्य ॥ २७ सयोगजनकस्वभावातिशया भावात् ॥ २८ अनतिशयत्वस्य ॥ २९ मयोगाश्रयस्यानुत्पद्यमानत्वेन संयोगस्तदाश्रितो न स्यात ॥ ३० पूर्वरूप ॥ ३१ सतो हेतुरहितस्य सर्वदा व्यवस्थिते ॥ ३२ द्व्यणुकादे ॥ ३३ अनाश्रितपक्षे दूषणान्तरमाहाचार्य ॥ ३४ अवयविनिषेधश्च भवेत् ॥ ३५ कथञ्चिदेकत्वलक्षण ॥

णतानां जनकस्वभावसम्भवात्सिद्धं कथञ्चिदनित्यत्वम् । प्रयोगः । ये क्रमवत्कार्यहेतवस्तेऽनित्या यथा क्रमवदङ्कुरादिनिर्वर्तका वीजादयस्तथा च परमाणव इति । ततोऽयुक्तमुक्तं–'नित्याः परमाणवः सदकारणवत्त्वादाकाशवत् । न चेदमसिद्धमावयोः परमाणुसत्त्वेऽविवादात् । अकारणवत्त्वं चातोऽल्पपरिमाणकारणाभावात्तेषां सिद्धम् । कारणं हि कार्यादल्पपरिमाणोपेतमेव । तथा हि । द्व्यणुकाद्यवयवि द्रव्यं स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धं कार्यत्वात्पटवदित्येकारणवत्त्वाऽसिद्धिः । परमाणवो हि स्कन्धावयविद्रव्यविनाशकारणकास्तद्भावभावित्वाद्धटविनाशपूर्वककपालवत् । न चेदमसिद्धं साधनं द्व्यणुकाद्यवयविद्रव्यविनाशे सत्येव परमाणुसद्भावप्रतीतेः । सर्वदा स्वतन्त्रपरमाणूनां तद्विनाशमन्तरेणाप्यत्र सम्भवाद्भागासिद्धो हेतुरित्यप्यसुन्दरं तेषामसिद्धेः । तथा हि । विवादापन्नाः परमाणवः स्कन्धभेदपूर्वका एव तत्त्वाद् द्व्यणुकादिभेदपूर्वकपरमाणुवत् । ननु पटोत्तरकालभावितन्तूनां पटभेदपूर्वकत्वेपि पटपूर्वकालभाविनां तेषामतत्पूर्वकत्ववत्परमाणूनामप्यस्कन्धभेदपूर्वकत्वं केषाञ्चित्स्यादित्यप्यनुपपन्नं तेषामपि प्रवेणीभेदपूर्वकत्वेन प्रतीत्या स्कन्धभेदपूर्वकत्वसिद्धेः । वेलवत्पुरुषप्रेरितमुद्गराद्यभिघातादवयवक्रियोत्पत्तेरवयवविभागात्संयोगविनाशाद्विनाशोऽर्थानामित्यादि विनाशोत्पादप्रक्रियोद्घोषणं तु प्रागेव कृतोत्तरम् । ततो नित्यैकत्वस्वभावाणूनां जनकत्वासम्भवात्तदारब्धं तु द्व्यणुकाद्यवयविद्रव्यमनित्यमित्यप्ययुक्तमुक्तं तन्त्वाद्यवयवेभ्यो भिन्नस्य च पटाद्यवयविद्रव्यस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भेनासत्त्वात् । न चास्योपलब्धिलक्षणप्राप्तत्वमसिद्धं महत्त्वेनेकद्रव्यत्त्वाद्रूपविशेषाच्च रूपोपलब्धिरित्यभ्युपगमात् । न च समानदेशत्वादवयविनोऽवयवेभ्यो भेदेनानुपलब्धिर्वातातपादिभी रूपरसादिभिश्चानेकान्तात् । तेषां समानदेशत्वेपि भेदेनोपलम्भसम्भवात् । किञ्चावयवावयविनोः शास्त्रीयदेशापेक्षया समानदेशत्वं लौकिकदेशापेक्षया वा? प्रथमपक्षेऽसिद्धो हेतुः । पटावयविनो ह्यन्ये एवारम्भकास्तन्त्वादयो देशास्तेषां चान्ये भवद्भिरभ्युपगम्यन्ते । द्वितीयपक्षेप्यनेकान्तः । लोके हि समानदेशत्वमेकभाजनवृत्तिलक्षणं भेदेनार्थानामुपलम्भेप्युपलब्धम् । यथा कुण्डे वदरादीनाम् । किञ्च कतिपयावयवप्रतिभासे सत्यऽवयविनः प्रतिभासो निखिलावयवप्रतिभासे वा? तत्राद्यविकल्पोऽयुक्तो जलनिमग्नमहाकायगजादेरुपरितनकतिपयावयवप्रतिभासेप्यखिलावय-

१ आदिना क्षितिजलवातातपादय ॥ २ परमाणूना कथञ्चिदनित्यत्व यत ॥ ३ आश्रयासिद्ध स्वरूपासिद्ध वा ॥ ४ जेनवैशेषिकयो ॥ ५ द्वितीयविशेषणम् ॥ ६ दृष्टान्ते तन्तव ॥ ७ कथम्?
तथा हि ॥ ८ अवयविद्रव्यभाव पूर्वमप्राप्तानामित्यर्थ ॥ ९ जगति ॥ १० स्वतन्त्रत्वेन ॥ ११ भेदो=विनाश ॥ १२ साधनस्यानैकान्तिकत्वमुद्भावयति पर ॥ १३ निष्पन्नपटासिष्कासितानाम् ॥
१४ स्कन्धभेदपूर्वकत्वेऽस्कन्धभेदपूर्वकत्वे च तत्त्वादिति हेतोर्वर्त्तनात् ॥ १५ घटविनाशपूर्वककपालवदिति दृष्टान्त साध्यसाधनविकल दर्शयन्नाह पर ॥ १६ एव प्रवेणीरूपस्यार्थस्याविनाशो ज्ञेय । तन्तवस्तु
स्वारम्भकावयवेभ्य समुत्पद्यन्ते । तत प्रवेणीभेदपूर्वकत्व पटपूर्वकालभाविनामपि तन्तूना नास्तीति भाव ॥ १७ उक्तन्यायात् ॥ १८ यौगपरिकल्पित स्थूलावयविद्रव्य निराकुर्वन्नाह जैन ॥ १९ सर्वथा ॥ २० भेदेन ॥
२१ विशेषणम् ॥ २२ परमाणुनाऽव्यभिचारार्थमेतत् ॥ २३ आकाशेन व्यभिचारपरिहारार्थं रूपविशेष इति ॥ २४ भेदे सत्यपि ॥ २५ अम्भ क्षीरवत् ॥ २६ पटस्य ॥ २७ अन्यथा समानदेशत्वाद्भेदेनानुपलब्धिर्यदि तर्हि ॥
२८ कथम्? तथा हि ॥ २९ प्रवेणिकासम्बन्धिनोशा ॥ ३० वैशेषिकै ॥

व्यापिनो गजाद्यवयविनोऽप्रतिभासनात्[1] । नापि द्वितीयविकल्पो युक्तो मध्यपरभागवर्त्तिसकलावयवप्रतिभासासम्भवेनावयविनोऽप्रतिभासप्रसङ्गात् । भूयोऽवयवग्रहणे[2] सत्यवयविनो ग्रहणमित्यप्ययुक्तं यतोऽर्वाग्भागभाव्यवयवग्राहिणा प्रत्यक्षेण परभागभाव्यवयवाग्रहणान्न तेन तद्व्याप्तिरवयविनो ग्रहीतुं शक्या व्याप्याग्रहणे तद्व्यापकस्यापि ग्रहीतुमशक्तेः[3] । प्रयोगः[4] । यद्येन रूपेण प्रतिभासते तत्तथैव तद्व्यवहारविषयः । यथा नीलं नीलरूपतया प्रतिभासमानं तद्रूपतयैव तद्व्यवहारविषयः । अर्वाग्भागभाव्यवयवसम्बन्धितया प्रतिभासते चावयवीति । न[5] च परभागभाविव्यवहितावयवाप्रतिभासनेऽप्यव्यवहितोऽवयवी प्रतिभातीत्यभिधातव्यं तदप्रतिभासने तद्गतत्वेनास्याऽप्रतिभासनात्[6] । तथा हि । यस्मिन्प्रतिभासमाने यद्रूपं न प्रतिभाति तत्ततो भिन्नम् । यथा घटे प्रतिभासमानेऽप्रतिभासमानं पटस्वरूपम्[8] । न प्रतिभासते चार्वाग्भागभाव्यवयवसम्बन्ध्यवयविस्वरूपे प्रतिभासमाने परभागभाव्यवयवसम्बन्ध्यवयविस्वरूपम्[9] । इति[10] कथं निरंशै[11]कावयविसिद्धिः[12] ? अर्वाग्भागपरभागभाव्यवयवसम्बन्धित्वलक्षणविरुद्ध[13]धर्माध्यासेऽप्यस्याभेदे सर्वत्र[14] भेदोपरतिप्रसङ्गोऽन्यस्य[15] भेदनिबन्धनस्यासम्भवात् । प्रतिभासभेदो भेदनिबन्धनमित्यप्यपेशलं विरुद्धधर्माध्यासं भेदकमन्तरेण प्रतिभासस्यापि भेदकत्वासम्भवात् । नापि परभागभाव्यवयवावयविग्राहिणा प्रत्यक्षेणार्वाग्भागभाव्यवयवसम्बन्धित्वं तस्य[16] ग्रहीतुं शक्यमुक्त[17]दोषानुषङ्गात् । नापि स्मरणेनार्वाक्परभागभाव्यवयवसम्बन्ध्यवयविस्वरूपग्रहः प्रत्यक्षानुसारेणास्य प्रवृत्तेः । प्रत्यक्षस्य च तद्ग्राहकत्वप्रतिषेधात् । नाप्यात्मार्वाक्परभागावयवव्यापित्वमवयविनो ग्रहीतुं समर्थो जडतया[18] तस्य तद्ग्राहकत्वानुपपत्तेः । अन्यथा स्वापमदमूर्च्छाद्यवस्थास्वऽपि तद्ग्राहित्वानुषङ्गः । प्रत्यक्षादि[19]सहायस्याप्यात्मनोवयविस्वरूपग्राहित्वायोगोऽवयविनो निखिलावयवव्याप्तिग्राहित्वेनाध्यक्षादेः प्रतिषेधात् । ननु चार्वाग्भागदर्शने सत्युत्तरकालं परभागदर्शनानन्तरस्मरण[20]सहकारीन्द्रियजनितं स एवायमिति प्रत्यभिज्ञाज्ञानमध्यक्षमवयविनः पूर्वापरावयवव्याप्तिग्राहकं तदप्यसाम्प्रतं प्रत्यभिज्ञाज्ञानेऽध्यक्षरूपत्वस्यैवासिद्धेः । अक्षाश्रितं विशदस्वभावं हि प्रत्यक्षम् । न चास्यैतल्लक्षणमस्तीति । अक्षाश्रितत्वे चास्याखिलावयवव्याप्यवयविस्वरूपग्राहकत्वासम्भवोऽक्षाणां सकलावयवग्रहणे व्यापारासम्भवात्[21] । न च स्मरणसहायस्यापीन्द्रियस्याविषये व्यापारः सम्भवति । यद्यस्याविषयो न तत्तत्र

---

१ सर्वथा तयोर्भेदात् ॥ २ वहु ॥ ३ दण्डाग्रहणे तत्सम्बन्धवान्दण्डी पुमान् ग्रहीतु न शक्यते यथा ॥ ४ अवयवी धर्मी अर्वाग्भागभाव्यवयवसम्बन्धितया तद्व्यवहारविषयस्तथैव प्रतिभासमानत्वादित्युपरिष्टाद्योज्यम् ॥ ५ परभागभाविव्यवहितावयवाप्रतिभासमानेपि अव्यवहितोऽवयवी भाति । ततस्तथैव प्रतिभासमानत्वमसिद्धमित्युक्ते सत्याह ॥ ६ अवयवी परभागभाव्यऽवयवगतत्वेन न प्रतिभासतेऽगृहीताधारत्वान्मेरुमूर्ध्नि मोदकराशिवत् ॥ ७ भिन्नम् ॥ ८ तस्मिन्प्रतिभासमानेऽप्रतिभासमानत्वादिति हेतो ॥ ९ तस्माद्भिन्नमेव ॥ १० भागद्वये सति ॥ ११ तन्तुलक्षणैरंशैः रहिता पटोंऽशी प्रतिपाद्यते तस्मात्सर्वथा भिन्ना अतो निरंशयवयवी ते तस्मात्सर्वथा भिन्ना अतस्तेषां विनाशेपि अस्य विनाशो नातो नित्यत्वमिति भाव ॥ १२ तव परस्य ॥ १३ व्यवहिताऽव्यवहितलक्षण ॥ १४ घटपटादौ ॥ १५ विरुद्धधर्माध्यासादपरस्य ॥ १६ अवयविन ॥ १७ व्याप्याग्रहणे तद्व्यापकस्यापि ग्रहीतुमशक्तेरित्यादि ॥ १८ परमते जड आत्मा ॥ १९ आदिना स्मरणग्रहणम् ॥ २० स्मरणं हि पूर्वभागस्य ॥ २१ तदविषयत्वात् ॥

स्मरणसहायमपि प्रवर्त्तते । यथा परिमलस्मरणसहायमपि लोचनं गन्धे । अविषयश्च व्यवहितोऽक्षाणां परभागभाव्यवयवसम्बन्धित्वलक्षणोऽवयविनः स्वभाव
इति । न चानेकावयवव्यापित्वमेकस्वभावस्यावयविनो घटते । तथा हि । यन्निरंशैकस्वभावं द्रव्यं तन्न सकृदनेकद्रव्याश्रितं, यथा परमाणु । निरंशैकस्वभावं
चावयविद्रव्यमिति । यद्वा यदनेकं द्रव्यं तन्न सकृन्निरंशैकद्रव्यान्वितम् । यथा कुटकुड्यादि । अनेकद्रव्याणि चावयवा इति । अस्तु वानेकत्रावयविनो
वृत्तिः । तथाप्यस्यासौ सर्वात्मनैकदेशेन वा स्यात्? यदि सर्वात्मना प्रत्येकमवयवेष्ववयवी वर्तेत तदा यावन्तोऽवयवास्तावन्त एवावयविनः स्युः । तथा
चानेककुण्डादिव्यवस्थितबिल्वादिवदनेकावयव्युपलम्भानुषङ्गः । अथैकदेशेनात्राप्यस्यानेकत्र वृत्तिः किमेकावयवक्रोडीकृतेन स्वभावेन स्वभावान्तरेण वा स्यात्?
तत्राद्यविकल्पोऽयुक्तस्तस्य तेनैवावयवेन क्रोडीकृतत्वेनान्यत्र वृत्त्ययोगात् । प्रयोगः । यदेकक्रोडीकृतं वस्तुस्वरूपं न तदेवान्यत्र वर्त्तते यथैकभाजनक्रोडीकृत-
माम्रादि न तदेव भाजनान्तरमध्यमध्यास्ते । एकावयवक्रोडीकृतं चावयविस्वरूपमिति । वृत्तौ वान्यत्रावयवे वृत्त्यनुपपत्तिरपरस्वभावाभावात् । एकावयव-
सम्बद्धस्वभावस्याऽतद्देशावयवान्तरसम्बन्धाभ्युपगमे च तदवयवानामेकदेशतापत्तिः । एकदेशतायां चैकात्म्यमविभक्तरूपत्वात् । विभक्तरूपावस्थितौ चैकदेशत्वं
न स्यात् । अथ स्वभावान्तरेणासाववयवान्तरे वर्त्तते तदास्य निरंशताव्याघातः । कथञ्चिदनेकत्वप्रसङ्गश्च स्वभावभेदात्मकत्वाद्वस्तुभेदस्य । ते च स्वभावा
यद्यतोऽर्थान्तरभूतास्तदा तेष्वप्यसौ स्वभावान्तरेण वर्तेतेत्यनवस्था । अथानर्थान्तरभूतास्तर्ह्यवयवैः[11] किमपराद्धं येनैते तथा नेष्यन्ते । तदिष्टौ चावयविनोऽनेकै-[13]
त्वमनित्यत्वं च स्वशिरस्ताडं पूत्कुर्वतोऽप्यायातम् । यदि चावयव्यविभागः स्यात्तदैकदेशस्यावरणे रागे चाखिलस्यावरणं रागश्चानुषज्यते रक्तारक्तयोरावृताना-
वृतयोश्चावयविरूपयोरेकत्वेनाभ्युपगमात् । न चैवं प्रतीतिः प्रत्यक्षविरोधात् । न चान्योन्यं विरुद्धधर्माध्यासेऽप्येकं[14] युक्तमत एवानुमानविरोधाच्च । तथा हि ।
यद्विरुद्धधर्माध्यासितं तन्नैकं यथा कुटकुड्याद्युपलभ्यानुपलभ्यस्वभावमावृतानावृतादिस्वरूपेण । विरुद्धधर्माध्यासितं चावयविस्वरूपमिति[15] । तथाप्येकत्वे
विश्वस्यैकद्रव्यत्वानुषङ्गः । ननु वस्त्रादे[16] रागः कुङ्कुमादिद्रव्येण संयोगः । स चाव्याप्यवृत्तिस्तत्कथमेकत्र रागे सर्वत्र राग एकदेशावरणे सर्वस्यावरणम्? तद-
प्यसारं यतो यदि पटादि निरंशमेकं द्रव्यं तदा कुङ्कुमादिना किं तत्राव्याप्तं येनाऽव्याप्यवृत्तिः संयोगो भवेत्? अव्याप्तौ वा भेदप्रसङ्गो व्याप्ताव्याप्तस्वरू-

---

१ परपरिकल्पितमवयविन स्वरूपमऽवयवप्रधानतया निराकुर्वन्नाह ॥ २ एकस्वभावत्व च नित्यनिरंशैकस्वभावत्वात् । अवयवान्तरे ॥ ३ अवयवान्तरे ॥ ४ विवक्षितावयवे ॥ ५ तेषा=विवक्षिताविवक्षितानाम् ॥
६ विवादापन्ना अवयवा एकदेशत्वभाजो भवन्त्येकस्वभावेनावयविना व्याप्यत्वादेकावयववत् ॥ ७ अवयवानाम् ॥ ८ अविभक्तरूपत्वमसिद्धमित्युक्ते सत्याह ॥ ९ किंतु साशत्वप्रसङ्ग ॥ १० अवयविन सकाशादभिन्ना ॥
११ तन्तुलक्षणे ॥ १२ अवयवी धर्म्यऽनेको भवतीति साध्यो धर्मोऽवयवेभ्योऽनर्थान्तरत्वात्तत्स्वरूपवत् । अवयवी धर्म्यऽनित्यो भवति अवयवेभ्योऽनर्थान्तरत्वात्तत्स्वरूपवत् । अवयवाना बहुत्वादनित्यत्वाच्चेति उभयत्र हेतु ॥
१३ वैशेषिकस्य ॥ १४ निरशम् ॥ १५ तस्मान्नैकम् ॥ १६ एकदेशे ॥ १७ अव्याप्यवृत्तिर्गुण सयोगलक्षण इति वचनात् ॥ १८ एकदेशे ॥ १९ देशे ॥ २० देशस्य ॥

पयोर्विरुद्धधर्माध्यासेनैकत्वायोगात् । किञ्चास्याव्याप्यवृत्तित्वं सर्वद्रव्याव्यापकत्वमेकदेशवृत्तित्वं वा ? न तावत्प्रथमः पक्षो द्रव्यस्यैकस्य सर्वशब्दविषयत्वानभ्युपगमात् । अनेकत्र हि सर्वशब्दप्रवृत्तिरिष्टा । नापि द्वितीयस्तस्यैकदेशासम्भवात् । अन्यथा सावयवत्वप्रसङ्गात् । ततो नास्त्यवयवी वृत्तिविकल्पाद्यनुपपत्तेरिति[3] । ननु चावयविनो निरासे यत्साधनं तत्किं स्वतन्त्रं प्रसङ्गसाधनं वा ? स्वतन्त्रं चेद्धर्मिसाध्यपदयोर्व्याघातः । यथेदं च नास्ति चेति । हेतोराश्रयासिद्धत्वं चावयविनोऽप्रसिद्धेः । न च वृत्त्या सत्त्वं व्याप्तं समवायवृत्त्यनभ्युपगमेपि भवतां रूपादेः सत्त्वाभ्युपगमात् । एकदेशेन सर्वात्मना वावयविनो वृत्तिप्रतिषेधे विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् प्रकारान्तरेण वृत्तिरभ्युपगता स्यात् । अन्यथा न वर्तत इत्येवाभिधातव्यम् । वृत्तिश्च समवायस्तस्य सर्वत्रैकत्वान्निरवयवत्वाच्च कात्स्न्र्यैकदेशशब्दाविषयत्वम् । अथ प्रसङ्गसाधनं परस्येष्ट्याऽनिष्टापादनात् । ननु परेष्टिः प्रमाणमप्रमाणं वा ? यदि प्रमाणं तर्हि तयैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य । न चानेनैवास्याऽबाधा तामन्तरेणास्याऽपक्षधर्मत्वात् । अथाप्रमाणं तर्हि प्रमाणं विना प्रमेयस्यासिद्धिरित्यभिधातव्यम् ।-किमनुमानोपन्यासेनास्याऽपक्षधर्मतयाऽप्रमाणत्वात् -।- इत्यप्यपरीक्षिताभिधानं यतः प्रसङ्गसाधनमेवेदम् । तच्च साध्यसाधनयोर्व्याप्यव्यापकभावसिद्धौ व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको व्यापकाभावो वा व्याप्याभावाविनाभावीत्येतत्प्रदर्शनफलम् । व्यापकभावसिद्धिश्चात्र लोकप्रसिद्धैव । लोको हि कस्यचित्क्वचित्सर्वात्मना वृत्तिमभ्युपगच्छति । यथा बिल्वादेः कुण्डादौ । कस्यचित्त्वेकदेशेन यथानेकपीठादिशयितस्य चैत्रादेः । यत्र च प्रकारद्वयं व्यावृत्तं तत्र वृत्तेरभाव एव । इति कथं न व्याप्तिर्यतोऽत्र प्रसङ्गसाधनस्यावकाशो न स्यात् ? निरस्ता चानेकस्मिन्नेकस्य वृत्तिः प्रागेव । यच्चोक्तं 'परेष्टिः प्रमाणमप्रमाणं वा' इत्यादि, तदप्ययुक्तं यतः प्रमाणाप्रमाणचिन्ता संवादविसंवादाधीना । परेष्टिमात्रेण च प्रतिपन्नेवयविनि संवादकप्रमाणाभावादप्रामाण्यं स्वयमेव भविष्यति ।

---

१ परेण ॥ २ तथा च निरंशत्वव्याघात स्यात् ॥ ३ शशविषाणवत् ॥ ४ पक्षहेतुदृष्टान्तादयो यत्र विद्यन्ते तत्स्वतन्त्रम् ॥ ५ परेष्टानिष्टापादन यत्र तत्प्रसङ्गसाधनम् ॥ ६ अवयवी धर्मी । नास्तीति साध्यपदम् ॥ ७ स्वमतापेक्षया वक्ति वैशेषिक । लोकप्रसिद्धोऽस्ति नास्तीति प्रतिपाद्यते जैनैरिति विरोध इति भाव । परस्पर विरोध इत्यर्थ ॥ ८ वादिनो जैनस्यापेक्षयाऽवयविनो धर्मिण ॥ ९ समवायवृत्त्यावयवेष्ववयवी वर्तते यत ॥ १० जैनेन ॥ ११ तादात्म्येन, न तु समवायेनेति भाव ॥ १२ किंच ॥ १३ शेषाभ्यनुज्ञा=सामान्याभ्युपगम ॥ १४ समवायेन ॥ १५ विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वाभावे ॥ १६ न तु सर्वा मनेक देशेनेत्यभिधातव्यम् ॥ १७ अवयवेष्ववयविन ॥ १८ अवयवेषु ॥ १९ अवयवेष्ववयविन समवाय कात्स्न्र्येनैकदेशेन वेति शब्द ॥ २० प्रतिवादिनो वैशेषिकस्य ॥ २१ पराभ्युपगमेन परस्यैवानिष्टापादनात् ॥ २२ अवयवेभ्यो भिन्नोऽवयवी सर्वथा विद्यते इति परेष्टि ॥ २३ अवयवी नास्ति वृत्तिविकल्पाद्यनुपपत्तेरिति ॥ २४ अवयवी नास्ति वृत्तिविकल्पाद्यनुपपत्तेरित्यस्य ॥ २५ विपरीतानुमानेन परेष्टे पराभ्युपगमस्य यदा बाधा स्यात्तदा परेष्टिविषयस्यावयविनोऽसत्त्वात्तद्धर्मत्व हेतोर्नास्तीति भाव ॥ २६ अवयविरूपस्य ॥ २७ जैनेन ॥ २८ एवकार स्वतन्त्रसाधननिरासार्थ ॥ २९ क्वचिद्दृष्टान्ते ॥ ३० अविनाभूत ॥ ३१ धर्मिणि ॥ ३२ प्रसङ्गसाधन भवति ॥ ३३ कात्स्न्र्यैकदेशवृत्तित्वयो ॥ ३४ अवयवेषु ॥ ३५ अवयवेष्ववयविन सर्वात्मनैकदेशेन वा वृत्ते ॥ ३६ एकदेशेन सर्वात्मना वेति प्रकारद्वयेन वृत्तिर्व्याप्ता । तथा चाऽवयविसत्त्व व्याप्तमिति हेतो ॥ ३७ एकस्यावयविनोऽनेकेष्ववयवेषु वृत्तिर्भविष्यति नन्वित्याशङ्कायामाहाचार्य ॥

ननु चेहेदमिति प्रत्ययप्रतीतेः प्रत्यक्षेणैवावयविनो वृत्तिसिद्धेः कथं संवादकप्रमाणाभावो यतोस्याः प्रामाण्यं न स्यादित्यप्यसङ्गतं तन्त्वाद्यवयवेषु व्यतिरिक्तस्य पटाद्यवयविनः समवायवृत्तेः स्वप्नेप्यप्रतीतेः। न च भेदेनाप्रतिभासमानस्येहेदं वर्त्तते इति प्रतीतिर्युक्ता। न हि भेदेनाप्रतिभासमाने कुण्डे इह कुण्डे वदराणीति प्रत्ययो दृष्टः। यद्यप्युक्तं वृत्तिश्च समवायस्तस्य सर्वत्रैकत्वान्निरवयवत्वाच्च कार्त्स्न्यैकदेशशब्दाविषयत्वमिति तदपि स्वमनोरथमात्रं–समवायस्याग्रे प्रवन्धेन प्रतिषेधात्। ननु तथाप्येकस्मिन्नवयविनि कार्त्स्न्यैकदेशशब्दाप्रवृत्तेरयुक्तोयं प्रश्नः किमेकदेशेन प्रवर्त्तते कार्त्स्न्येन वेति। कृत्स्नमिति ह्येकस्याशेषाभिधानम्। एकदेश इति चानेकत्वे सति कस्यचिदभिधानम्। ताविमौ कार्त्स्न्यैकदेशशब्दावेकस्मिन्नवयविन्यनुपपन्नावित्यप्यसमीचीनमेकत्रैकत्वेनावयविनोऽप्रतिभासमानात्प्रकारान्तरेण च वृत्तेरसम्भवात्। न खलु कुण्डादौ वदरादेः स्तम्भादौ वा वंशादेः कार्त्स्न्यैकदेशं परित्यज्य प्रकारान्तरेण वृत्तिः प्रतीयते। ततोऽवयवेभ्यो भिन्नस्यावयविनो विचार्यमाणस्यायोगान्नासौ तथाभूतोभ्युपगन्तव्यः। किं तर्हि? तन्त्वाद्यवयवानामेवावस्थाविशेषः स्वात्मभूतः शीतापनोदाद्यर्थक्रियाकारी प्रमाणतः प्रतीयमानः पटाद्यवयवीति प्रेक्षादक्षैः प्रतिपत्तव्यम्।

ननु रूपादिव्यतिरेकेणापरस्यावस्थातुः शीताद्यपनोदसमर्थस्याप्रतीतितोऽसत्त्वात्कस्यावयवित्वं भवतापि प्रसाध्यते? चक्षुःप्रभवप्रत्यये हि रूपमेवावभासते नापरस्तद्वान्। एवं रसनादिप्रत्ययेपि वाच्यमित्यविचारितरमणीयं यतः किमेकस्य रूपादिमतोऽसम्भवो विरुद्धधर्माध्यासेनैकत्रैकत्वानेकत्वयोस्तादात्म्यविरोधात्तद्ग्रहणोपायासम्भवाद्वा? प्रथमपक्षे तत्र तयोः कथञ्चित्तादात्म्यं विरुद्ध्यते सर्वथा वा? सर्वथा चेत्सिद्धसाध्यता। कथञ्चिदेकत्वं तु रूपादिभिर्विरुद्धधर्माध्यासेप्येकस्याऽविरुद्धं चित्रज्ञानस्येव नीलाद्याकारैर्विकल्पज्ञानस्येव वा विकल्पेतराकारैरिति। यथा च रूपादिरहितं प्रत्यक्षे न प्रतिभासते तथा तद्रहिता रूपादयोपि। न खलु मातुलिङ्गद्रव्यरहितास्तद्रूपादयः स्वप्नेप्युपलभ्यन्ते। वस्तुनश्चेदमेवाध्यक्षत्वं यदनात्मस्वरूपपरिहारेण बुद्धौ स्वरूपसमर्पणं नाम। इमे तु रूपादयो द्रव्यरहितास्तत्र स्वरूपं न समर्पयन्ति प्रत्यक्षतां च स्वीकर्त्तुमिच्छन्तीत्यमूल्यदानक्रयिणः। किञ्चेदं स्तम्भादिव्यपदेशार्हं रूपं किमेकं प्रत्येक-

द्रव्यं
स्व

१ सकाशात्॥ २ वदरेभ्य ॥ ३ विस्तरेण॥ ४ अशेषाणा स्वभावानाम्॥ ५ देशानाम्॥ ६ देशस्य॥ ७ सर्वथा ॥ ८ अवयवेषु॥ ९ परमतापेक्षया॥ १० वर्त्तनस्य॥ ११ सर्वथा॥ १२ आतानवितानीभूतपरिणामविशेष ॥ १३ अवयवेभ्य कथञ्चिदभिन्न. ॥ १४ रूपिप्रतिषेधक सौगत ॥ १५ आदिना रसगन्धवर्णशब्दा ॥ १६ अवयविरूपपदार्थस्य ॥ १७ हेतोरसिद्धत्व परिहरति पर ॥ १८ एकस्मिन्वस्तुनि ॥ १९ अवयविन ॥ २० रूपादीनाम् ॥ २१ द्रव्यरूपतया॥ २२ साहित्ये ॥ २३ अवयविन ॥ २४ इतरो=निर्विकल्पक पूर्वसविकल्पकादुपादानभूतान्निर्विकल्पकात्सहकारिभूतात्सविकल्पकमुत्पद्यते तदा तदुभयोराकार विभ्रति॥ २५ इदमेव सम्भावयति॥ २६ तर्हि रूपादयो द्रव्यरहिता बुद्धौ स्वरूपसमर्पका भविष्यन्तीत्याह॥ ॥ २७ द्रव्यरहितत्वादिति प्रथमान्तोपि हेतुर्ज्ञेय ॥ २८ मूल्य स्वरूपसमर्पणलक्षणमदत्त्वा क्रयिण इति भाव ॥

मनेकानंशपरमाणुसञ्चयमात्रं वा? प्रथमपक्षेऽधोमध्योर्द्ध्वात्मकैकरूपवद्रसाद्यात्मकैकस्तम्भद्रव्यप्रसङ्गः । द्वितीयपक्षे तु किमेकमनेकरूपपरमाण्वाकारं ज्ञानं तद्ग्राह-
कमेकैकपरमाण्वाकारमनेकं वा? प्रथमविकल्पे चित्रैकज्ञा[1]नवद्रूपाद्यात्मकैकद्रव्यप्रसिद्धिरनिषेध्या स्यात् । द्वितीयविकल्पे तु परस्परविविक्तज्ञानपरमाणुप्रति-
भासं[2]स्यासंवे[3]दनात्सकलशून्यतानुषङ्गः[4] । अथ तद्ग्रहणोपायासम्भवाद्रूपादिमतो द्रव्यस्याभावस्तन्न यमहमद्राक्षं तमेतर्हि स्पृशामीत्यनुसन्धा[5]नप्रत्ययस्य तद्ग्राहिणः
सद्भावात् । न च द्वाभ्यामिन्द्रिया[6]भ्यां रूपस्पर्शाधारैकार्थग्रहणं विना प्रतिसन्धानं न्याय्यं[7] रूपस्पर्शयोश्च प्रतिनियतेन्द्रियग्राह्यत्वादेतन्न सम्भवति । चेतनत्वा-
च्चात्मनः स्मरणा[8]दिपर्यायसहायस्यार्वाक्परभागावयवे[9]व्यापित्वग्रहणमप्यवयविद्रव्यस्योपपन्नम् । प्रसाधितं चानुसन्धानस्य सविषय[11]त्वमित्यलमतिप्रसङ्गे[12]न । तत्र
[13]परेषां चतुःसंख्यं द्रव्यं यथोपव[14]र्णितस्वरूपं घटते सर्वथा नित्यस्वभावाणूनामनर्थक्रियाकारित्वेनासम्भवतस्तदारब्धद्व्यणुकाद्यवयविद्रव्यस्याप्यसम्भवात् । न हि
कारणाभावे कार्यं प्रभवत्यतिप्रसङ्गात् । स्वावयवेभ्योर्थान्तरस्यावयविनो ग्राहकप्रमाणाभावाच्चासत्त्वम् । जातिभेदे[15]न पृथिव्यादिद्रव्याणां भेदोपवर्णनं चानुपपन्नं
स्वरूपासिद्धौ शशशृङ्गवद्भेदोपवर्णनासम्भवात् । जातिभेदेनात्यन्तं तेषां भेदे चान्योन्यमुपादानोपादेयभावो न स्यात् । येषां हि जातिभेदेनात्यन्तिको भेदो
न तेषां तद्भावः । यथात्मपृथिव्यादीनाम् । तथा तद्भेदश्च पृथिव्यादिद्रव्याणामिति । तन्तुपटाद्युपादानोपादेयभावेन व्यभि[16]चारपरिहारार्थमात्यन्तिकविशेषणम् । न
हि तत्रात्यन्तिकस्तद्भेदः [17]पृथिवीत्वादिसामान्यस्याभिन्नस्यो[18]पीष्टेः । नन्वेवं द्रव्यत्वादिना पृथिव्यादीनामप्यभेदात्तद्भावोस्तु + तन्नात्मपृथिव्यादीनामप्येवं तद्भे-
दाभावादुपादानोपादेयभावः स्यात् । तथा चात्माद्वैतप्रसङ्गात्कुतः पृथिव्यादिभे[19]दः स्यात्? तन्नात्यन्तिकभेदे पृथिव्यादीनां तद्भावो घटते । अ[20]स्ति चासौ
चन्द्रकौ[21]न्ताज्जलस्य जलान्मुक्ताफलादेः काष्ठादनलस्य व्यजनादेश्चानिलस्योत्पत्तिप्रतीतेः । चन्द्रकान्ताद्यन्तर्भूताज्जलादेरेव द्रव्याज्जलाद्युत्पत्तिरित्यप्यनुपपन्नं तत्र
तत्सद्भावावेदकप्रमाणाभावात् । तथापि चन्द्रकान्तादौ जलाद्यभ्युपगमे मृत्पिण्डादौ घटाद्यभ्युपगमोपि कर्तव्य[22] इति सांख्यदर्शनमेव स्यात् । ततो मृत्पिण्डादौ
घटादिवच्चन्द्रकान्तादौ जलादेरप्यप्रतीतितोऽभावादात्यन्तिकभेदे चोपादानोपादेयभावासम्भवात् पर्यायभेदेनान्योन्यं पृथिव्यादीनां भेदो रूपरसगन्धस्पर्शात्मक-

---

१ सौगतमते चित्रैकज्ञान स्वीकृतम् ॥ २ एकस्मिन्वस्तुनि ॥ ३ लोके ॥ ४ ज्ञेयग्राहकज्ञानाभावात् ज्ञेयस्याप्यभावात् ॥ ५ अनुसन्धान=प्रत्यभिज्ञानम् ॥ ६ चक्षु स्पर्शनाभ्याम् ॥ ७ अनेन प्रत्यक्षमपि तद्ग्राहकमुक्तम् । ततश्चात्म-
सिद्धिरिति ॥ ८ वैशेषिकमतनिरासार्थम् ॥ ९ बौद्धमतनिरासार्थम् ॥ १० रूपस्पर्श ॥ ११ प्रत्यभिज्ञानसमर्थनसमये ॥ १२ अनुसन्धानसमर्थनेन ॥ १३ वैशेषिकाणाम् ॥ १४ सर्वथा नित्यानित्यतया ॥ १५ पृथिवीत्वादिना ॥
१६ ययोर्जातिभेदेन भेदो न तयोरुपादानोपादेयभावोस्तीत्युक्त ततस्तन्तुपटादौ व्यभिचारो भवति ॥ १७ तन्तुत्वपटत्वजातिभेदे सत्यपि ॥ १८ तन्तुपटादिषु ॥ १९ अयमात्मेमे पृथिव्यादय इति ॥ २० मा भव-
त्वित्युक्ते सत्याह ॥ २१ पृथिवीरूपात् ॥ २२ सर्वं सर्वत्र विद्यते इति वचनात् ॥

पुद्गलद्रव्यरूपतया चाभेद इत्यनवद्यम् । रूपादिसमन्वयश्च गुणपदार्थपरीक्षायां चतुर्णामपि समर्थयिष्यते[3] । तन्न नित्यादिस्वभावमात्यन्तिकभेदभिन्नं च पृथिव्यादिद्रव्यं घटते ।

नाप्याकाशादि सर्वथा नित्यनिरंशत्वादिधर्मोपेतस्यास्याप्यप्रतीतेः । ननु चाकाशस्य तद्धर्मोपेतत्वं शब्दादेव लिङ्गात्प्रतीयते । तथा हि । ये विनाशित्वोत्पत्तिमत्त्वादिधर्माध्यासितास्ते क्वचिदाश्रिता, यथा घटादयः । तथा च शब्दा इति । गुणत्वाच्च ते क्वचिदाश्रिता, यथा रूपादयः । न च गुणत्वमसिद्धम् । तथा हि । शब्दो गुणः प्रतिषिध्यमानद्रव्यकर्मभावत्वे सति सत्तासंबन्धित्वाद्रूपादिवत् । न चेदं साधनमसिद्धम् । तथा हि । शब्दो द्रव्यं न भवत्येकद्रव्यत्वाद्रूपादिवत् । न चेदमप्यसिद्धम् । तथा हि । एकद्रव्यः शब्दः सामान्यविशेषवत्त्वे[11] सति वाह्यैकेन्द्रियप्रत्यक्षत्वात्तद्वदेव । सामान्यविशेषवत्त्वादित्युच्यमाने हि परमाणुभिर्व्यभिचारस्तन्निवृत्त्यर्थमिन्द्रियप्रत्यक्षत्वादित्युक्तम् । तथापि घटादिना व्यभिचारस्तन्निरासार्थमेकविशेषणम् । एकेन्द्रियप्रत्यक्षत्वादित्युच्यमाने आत्मना व्यभिचारस्तन्निवृत्त्यर्थं वाह्यविशेषणम् । रूपत्वादिना व्यभिचारपरिहारार्थं च सामान्यविशेषवत्त्वे सतीति विशेषणम् । तथा कर्मापि न भवत्यसौ संयोगविभागाकारणत्वाद्रूपादिवदेवेति । तस्मात्सिद्धं प्रतिषिध्यमानद्रव्यकर्मभावत्वं शब्दस्य । सत्तासम्बन्धित्वादित्युच्यमाने च द्रव्यकर्मभ्यामनेकान्तः । तन्निवृत्त्यर्थं प्रतिषिध्यमानद्रव्यकर्मभावत्वे सतीति विशेषणम् । प्रतिषिध्यमानद्रव्यकर्मभावत्वादित्युच्यमानेपि सामान्यादिना व्यभिचारस्तन्निवृत्त्यर्थं सत्तासम्बन्धित्वादित्यभिधानम् । तत्सिद्धं गुणत्वेन क्वचिदाश्रितत्वं शब्दानाम् । यश्चैषामाश्रयस्तत्पारिशेष्यादाकाशम् । तथा हि । न तावत्स्पर्शवतां परमाणूनां विशेषगुणः शब्दोऽस्मदादिप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवत् । नापि कार्यद्रव्याणां पृथिव्यादीनां विशेषगुणोसौ कार्यद्रव्यान्तराप्रादुर्भावेप्युपजायमानत्वात्सुखादिवत्,

---

१ पृथिव्यामेव गन्धोऽप्स्वेव रस इति वचनात्कथं चतुर्णामविशेषेण रूपाद्यात्मकत्वमित्याह ॥ २ समन्वय सम्बन्ध ॥ ३ जैनै ॥ ४ गगने ॥ ५ ॥ स्वावयवेषु ॥ ६ तस्मात्क्वचिदाश्रिता भवन्त्येव ॥ ७ आकाशविशेषगुण शब्द इति वचनात् ॥ ८ रूपिद्रव्ये ॥ ९ शब्दो द्रव्य न भवति कर्म च नेति ॥ १० त्रय पदार्था स्वरूपेणासन्त सत्तासम्बन्धात्सन्त इति वचनात् ॥ ११ गगनलक्षणमेक द्रव्य यस्य स एकद्रव्यस्तस्य भाव । दृष्टान्तपक्षे घटाद्येकद्रव्य यस्य रूपादे ॥ १२ सामान्यशब्देनात्रापरसामान्य गृह्यते ॥ १३ एकद्रव्यत्वाभावात् ॥ १४ घटादीनामेकद्रव्यत्वाभावात् ॥ १५ घटस्य स्पर्शनचक्षुरिन्द्रियाभ्या ग्राह्यत्वात् ॥ १६ यतो मनोलक्षणेन्द्रियप्रत्यक्ष आत्मा ॥ १७ अनेकद्रव्याश्रितत्वात् ॥ १८ विशेषणम् ॥ १९ इदानीं विशेष्य विचारयति ॥ २० सत्तासम्बन्धित्वे द्रव्यकर्मणोर्गुणत्वाभावात् ॥ २१ आदिना विशेषसमवाययोर्ग्रहणम् ॥ २२ गुणत्वाभावात् ॥ २३ सामान्यविशेषसमवाया स्वरूपेण सन्तो न तु सत्तासम्बन्धादित्यभिधानात् ॥ २४ पृथिव्यादिचतुर्णाम् ॥ २५ योगिप्रत्यक्षेण व्यभिचारपरिहारार्थम् ॥ २६ तेषामतीन्द्रियत्वात्तद्गुणोप्यतीन्द्रिय एवेति भाव ॥ २७ कार्य=द्व्यणुकादि ॥

अकारणगुणपूर्वकत्वादिच्छादिवत्, अयावद्द्रव्यभावित्वात्, अस्मदादिपुरुषान्तरप्रत्यक्षत्वे सति पुरुषान्तराप्रत्यक्षत्वाच्च तद्वत्, आश्रयाद्धेर्यादेरन्यत्रोपलब्धेश्च। स्पर्शवतां हि पृथिव्यादीनां यथोक्तविपरीता गुणाः प्रतीयन्ते। नाप्यात्मविशेषगुणोऽहङ्कारेण विभक्तग्रहणाद्बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वाच्च। बुद्ध्यादीनां चात्मगुणानां तद्वैपरीत्योपलब्धेः। नापि मनोगुणोऽस्मदादिप्रत्यक्षत्वाद्रूपादिवत्। नापि दिक्कालविशेषगुणस्तयोः पूर्वापरादिप्रत्ययहेतुत्वात्। अतः पारिशेष्याद्गुणो भूत्वाकाशस्यैव लिङ्गम्। तच्च शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकम्। विभु च सर्वत्रोपलभ्यमानगुणत्वात्, नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वाच्चात्मादिवत्। नित्यं शब्दाधिकरणं द्रव्यं सामान्यविशेषवत्त्वे सत्यनाश्रितत्वादात्मादिवत्। अनाश्रितं शब्दाधिकरणं द्रव्यं गुणवत्त्वे सत्यस्पर्शवत्त्वात्तद्वत्। असमवायवत्त्वे सत्यनाश्रितत्वाच्चास्य द्रव्यत्वमिति।

अत्र प्रतिविधीयते। शब्दानां सामान्येनाश्रितत्वं किमतः साध्यते नित्यैकामूर्तविभुद्रव्याश्रितत्वं वा? प्रथमपक्षे सिद्धसाध्यता तेषां पुद्गलकार्यतया तदाश्रितत्वाभ्युपगमात्। द्वितीयपक्षे तु संदिग्धविपक्षव्यावृत्तिकत्वेनानैकान्तिको हेतुस्तथाभूतसाध्यान्वितत्वेनास्य क्वचिद्दृष्टान्तेऽप्रसिद्धेः। प्रतिषिध्यमानकर्मभावत्वे सत्यपि च प्रतिषिध्यमानद्रव्यभावत्वमसिद्धं द्रव्यत्वाच्छब्दस्य। तथा हि। द्रव्यं शब्दः स्पर्शाल्पत्वमहत्त्वपरिमाणसंख्यासंयोगगुणाश्रयत्वात्। यद्यदेवंविधं तत्तद्द्रव्यं यथा बदरामलकबिल्वादि। तथा चायं शब्दस्तस्माद्द्रव्यम्। तत्र न तावत्स्पर्शाश्रयत्वमस्यासिद्धम्। तथा हि। स्पर्शवाञ्छब्दः स्वसम्बद्धार्थान्तराभिघातहेतुत्वान्मुद्गरादिवत्। सुप्रतीतो हि कंसपात्र्यादिध्वानाभिसम्बन्धेन श्रोत्राद्यभिघातस्तत्कार्यस्य बाधिर्यादेः प्रतीतेः। स चास्याऽस्पर्शवत्त्वे न स्यात्। न ह्यस्पर्शवता कालादिनाभिसम्बन्धेऽसौ दृष्टः। न च शब्दसहचरितेन वायुना तदभिघात इत्यभिधातव्यं शब्दाभिसम्बन्धान्वयव्यतिरेकानुविधायित्वात्तस्य। तथाभूतेपि तदभिघातेऽन्यस्यैव हेतुकल्पने तत्रापि कः समाश्वासः?

---

१ कारणस्य गगनस्य गुण कारणगुण। न विद्यते कारणगुण पूर्वं यस्य शब्दस्यासावकारणगुणपूर्वकस्तस्य भावस्तस्मात्। पृथिव्यादिविशेषगुणे परमाणुरूपस्य कारणस्य गुणपूर्वकत्वमस्तीति ॥ २ दृष्टान्तपक्षे आत्मा कारणम् ॥ ३ गगने सर्वत्र न विद्यते यत ॥ ४ इच्छादिवदेव ॥ ५ योतिशयेन दूरान्तरित ॥ ६ सर्वत्र सन्दिग्धानैकान्तिकत्वे सत्याह ॥ ७ कार्यद्रव्यान्तरप्रादुर्भावे समुपजायमानलक्षणा ॥ ८ अह सुखयह दु खीत्यादिचदहशब्दवान्। इत्यहकारेण विभक्तस्य रहितस्य शब्दस्य ग्रहणात् ॥ ९ सन्दिग्धानैकान्तिकत्वे सत्याह ॥ १० हेतोरसिद्धत्वपरिहारार्थमिदम् ॥ ११ दिगाकाशकालादि सर्वगत परमते शब्दस्य दिक्कालविशेषगुणत्वे शब्द एव तयोस्सद्भावे लिङ्ग स्यादिति भाव ॥ १२ अविशेष एकलम् ॥ १३ पटेन व्यभिचारपरिहारार्थम् ॥ १४ परमाणुभिर्व्यभिचारपरिहारार्थम् ॥ १५ स गुण शब्द ॥ १६ नित्यत्वमसिद्धमित्युक्ते सत्याह ॥ १७ अभावेन वा व्यभिचारपरिहारार्थम् ॥ १८ घटेन व्यभिचारपरिहारार्थम् ॥ १९ असिद्धत्वे सत्याह ॥ २० गुणेन व्यभिचारपरिहारार्थ गुणवत्त्वमिति विशेषण गुणाना निर्गुणत्वात् ॥ २१ समवायेनाभावेन वा व्यभिचारपरिहारार्थम् ॥ २२ गुणत्वादिति हेतो ॥ २३ इति विशेषणम् ॥ २४ अतोऽनुमानान्नभसो द्रव्यसिद्धिराश्रयमात्रस्यैव सिद्धिप्रसङ्गात् ॥ २५ जैनानाम् ॥ २६ विपक्ष अनित्यानेकमूर्तोऽविभुद्रव्याश्रितम् ॥ २७ रूपादयो दृष्टान्तभूता अनित्यादिविशिष्टपक्षे वर्तन्तेऽतोऽयमपि हेतुस्तादृशे पक्षे वर्तते अन्यादृशे वेति सन्दिग्ध ॥ २८ गुणत्वात् ॥ २९ नित्यैकव्याप्याश्रयाश्रितत्वे साध्यविकलो दृष्टान्तो रूपादीनां तद्विपरीताश्रयाश्रितत्वात् ॥ ३० ते च ते गुणाश्च ॥

शक्यं हि वक्तुं न वाय्वाद्यभिसम्बन्धात्तदभिघातः किन्त्वन्येन[1]। इत्यनवस्थानं हेतूनाम्। गुणत्वेनास्य निर्गुणत्वात्स्पर्शाभावात्तदभिघाताहेतुत्वे चक्रकप्रसङ्गः[2]। गुणत्वं ह्यद्रव्यत्वे तदप्यस्पर्शवत्त्वे तदपि गुणत्वे इति। स्पर्शवतार्थेनाभिहन्यमानत्वाच्च स्पर्शवानसौ। न चानेनाभिहन्यमानत्वमस्यासिद्धं प्रतिवातभित्त्यादिभिः शब्दस्याभिहन्यमानतया सकलजनसाक्षिकत्वात्[6]। मूर्तेन चामूर्त्तस्याविरोधेनाऽप्रतिघाताद्गगनभित्त्यादिवत्। तन्नास्य स्पर्शाश्रयत्वमसिद्धम्। नाप्यल्पमहत्त्वपरिमाणाश्रयत्वमल्पमहत्त्वप्रतीतिविषयत्वाद्बदरादिवत्। ननु चाल्पः शब्दो मन्द इत्यादिप्रतीत्या मन्दत्वमेव धर्मो गृह्यते। महान् पटुस्तीव्र इत्यादिप्रतीत्या च तीव्रत्वम्। न पुनः परिमाणमियत्तानवधारणात्। न ह्ययं महाञ्छब्द इति व्यवस्यन्नियानित्यवधारयति। यथा द्रव्याणि बदरामलकबिल्वादीनि[8]। मन्दतीव्रता चावान्तरो जातिविशेषो गुणवृत्तित्वाच्छब्दत्ववत्[10]। तदप्यपेशलं यतः कथं शब्दस्य गुणत्वं सिद्धं यतस्तद्वृत्तित्वान्मन्दत्वादेर्जातिविशेषत्वं सिद्ध्येत्? अद्रव्यत्वाच्चेत्तदपि कथम्? अल्पमहत्त्वपरिमाणानधिकरणत्वाच्चेत्तदपि कुतः? गुणत्वाच्चेच्चक्रकप्रसङ्गः। द्रव्यान्तरवदियत्तानवधारणाच्चेन्न वायुनानैकान्तात्[12]। न खलु बिल्वबदरादेरिव वायोरियत्तावधार्यते। वायोरप्रत्यक्षत्वादियत्ता सत्यपि नावधार्यते, न शब्दस्य विपर्ययादित्यप्ययुक्तं–गुणगुणिनोः[15] कथंचिदेकत्वे गुणप्रतिभासे गुणिनोपि[19] प्रतिभाससम्भवात्[17]। वायुगतस्पर्शविशेषस्यैवाध्यक्षत्वाभ्युपगमे च स्पर्शोत्र शीतः खरो वेति प्रतीतिः स्यान्न वायुरिति[18]। न खलु रूपावभासिनि प्रत्यये सोवभासते[20] स्पर्शविशेषपरिणामस्यैव[21] च वायुत्वात्कथं नास्य प्रत्यक्षत्वम्[22]? इयत्ता[23] चेयं यदि परिमाणादन्या[24] कथमन्यस्यानवधारणेऽन्यस्या[26]-भावः? न खलु घटानवधारणे पटाभावो युक्तः[27]। परिमाणं चेत्तर्हियत्तानवधारणात्परिमाणं नास्तीत्यत्र परिमाणं नास्ति परिमाणानवधारणादित्येतावदेवोक्तं स्यात्। अल्पत्वमहत्त्वप्रत्ययतस्तत्परिमाणावधारणे च कथं तदनवधारणं नामामलकादावपि तत्प्रसङ्गात्। मन्दतीव्रताभिसम्बन्धात्तत्प्रत्ययसम्भवे[28] च मन्द-

---

१ अनिर्वचनीयेन ॥ २ आदौ यत्प्रतिपादित तदेवान्ते स्यादिति चक्रकदोप इति भाव ॥ ३ मन्दिग्धानेकान्तिकत्वे इदम् ॥ ४ स्पर्शवद्भि ॥ ५ असिद्धमिति सम्बन्ध ॥ ६ शब्दस्य ॥ ७ अल्पत्वमहत्त्वपरिमाणम् ॥ ८ इयन्ति अवधारयति जन ॥ ९ तीव्रत्व मन्दत्व च परिमाणविशेषोऽस्त्वित्युक्ते सत्याह ॥ १० शब्दे ॥ ११ चक्रकपरिहारार्थं गुणत्वादिति हेतुस्थले इयत्तानवधारणादिति हेतु योजयति पर ॥ १२ अल्पत्वमहत्त्वपरिमाणाधिकरणत्वेपि वायोरियत्ता नावधार्यते इति भाव ॥ १३ अनैकान्तिकत्व हेतो परिहरन्नाह ॥ १४ प्रत्यक्षत्वात् ॥ १५ इयत्तावाय्वो ॥ १६ प्रदेशभेदाभावात् ॥ १७ ततश्च वायुगतस्य स्पर्शस्य प्रत्यक्षत्वाद्वायोरपि प्रत्यक्षत्व स्यात्। तथा च वायोरप्रत्यक्षत्व वक्तुमशक्य तव परस्य ॥ १८ न वायु शीत खरो वेति प्रतीति ॥ १९ रूपी वायु ॥ २० तथा च वायोरभाव स्यात् ॥ २१ कथंचिदेकत्वेन ॥ २२ त्वगिन्द्रियग्राह्यत्वम् ॥ २३ इयत्ताया अनवधारणे शब्दस्याल्पत्वमहत्त्वपरिमाणस्याभाव इत्यस्मिन्पक्षे दूषणान्तरम् ॥ २४ इयत्ता परिमाणाद्भिन्नाभिन्ना चेति विकल्पद्वयम् ॥ २५ इयत्तालक्षणस्य ॥ २६ परिमाणलक्षणस्य ॥ २७ अन्येति विकल्पे ॥ २८ द्वितीय=पक्षे ॥ २९ परेणाङ्गीक्रियमाणे ॥

वाहिनि नर्मदानीरेऽल्पमेतत्[1] तीव्रवाहिनि च कुल्या[2]जले महदे[3]तदिति प्रत्ययः स्यात् । न[4] चैवम् । तस्मान्न मन्दतीव्रतानिबन्धनो[5]यं प्रत्ययः । अपि त्वल्पमहत्त्वपरिमाणनिबन्धनः । अन्यथा बदरामलकादावपि तन्निबन्धनोसौ न स्यात् । बदरादीनां द्रव्यत्वेन तत्परिमाणसम्भवात्तस्य[6] तन्निबन्धनत्वे शब्देप्यत एवासौ तन्निबन्धनोस्तु विशेषा[7]भावात् । कारण[8]गतस्य चाल्पमहत्त्वपरिमाण[9]स्य शब्दे[10] उपचारात्तथा प्रत्यये बदरादावप्यसौ तथानुपद्येत । तन्नाल्पमहत्त्वपरिमाणाश्रयत्वमप्यस्यासिद्धम् । नापि सङ्ख्याश्रयत्वमेकः शब्दो द्वौ शब्दौ बहवः शब्दा इति संख्यावत्त्वप्रतीतेर्घटादिवत् । अथोपचाराच्छब्दे संख्यावत्त्वप्रतीतिः । ननु किं कारणगता विषयगता वा शब्दे संख्योपचार्येत ? कारणगता चेत्किं समवायिकारणगता कारणमात्रगता वा ? आद्यपक्षे एकः शब्द इति सर्वदा व्यपदेशप्रसङ्गस्तस्यैकत्वात् । द्वितीयपक्षे तु बहवः शब्दा इति व्यपदेशः स्यात्त[12]स्य बहुत्वात् । विष[13]यसंख्योपचारे तु गगनाकाशव्योमादिशब्दा बहुव्यपदेशभाजो न स्युर्गगनलक्षणविषयस्यैकत्वात् । पश्वा[14]दीनां च बहुत्वादेको गोशब्द इति स्वप्नेपि दुर्लभ[15]म् । यथाऽविरो[16]धं संख्यो[17]पचार इत्यप्ययुक्तं स्वयं संख्यावत्त्व[18]मन्तरेणाविरोधाऽसम्भवात् । किञ्च विपरी[19]तोपलम्भस्य बाधकस्य सद्भावे सत्युपचारकल्पना स्यान्न चाग्नित्वरहितपुरुषस्येवैकत्वादिसंख्यारहितस्य शब्दस्योपलम्भोस्तीति कथमुपचारकल्पना ? तथा[20]पि तत्कल्पनेऽनुपचरितमेव न किञ्चित्स्यात् । तन्न संख्याश्रयत्वमप्यसिद्धम् । नापि संयोगा[21]श्रय[22]त्वं वाय्वादिनाभिहन्यमानत्वात्पांश्वादिवत् । संयुक्ता[23] एव हि पांश्वादयो वायुनान्येन वाऽभिहन्यमाना दृष्टाः । तेन[24] तदभिघातश्च देवदत्तं प्रत्यागच्छ[25]तः प्रतिवातेन प्रतिनिवर्त्तनात्पांश्वादिवदेवाव[26]सीयते, तद[27]प्यन्यदिगवस्थिते[28]न श्रवणात् । नन्[29]तु गन्धादयो देवदत्तं प्रत्यागच्छन्तस्तेन निवर्त्यन्ते । न च तेषां तेन संयोगो निर्गुणत्वाद्गुणानाम् । तन्न तद्वतो द्रव्यस्यैवानेन प्रतिनिवर्त्तनात् केव[30]लानां तेषां निष्क्रियत्वेनागमननिवर्त्तनायोगात् । तत[31]ः सिद्धं गुणवत्त्वाद्द्रव्यत्वं शब्दस्य क्रियावत्त्वाच्च बाणादिवत् । निष्क्रियत्वे तस्य श्रोत्रेणाऽग्रहणमनभिसम्बन्धात् । तथापि ग्रहणे श्रोत्रस्याप्राप्यकारित्वं स्यात् । तथा च प्राप्यकारि चक्षुर्बाह्येन्द्रियत्वात्त्वगि-

---

१ जलम् ॥ २ अल्पा सरित् कुल्या ॥ ३ जलम् ॥ ४ भवलित्युक्ते सत्याहाचार्य ॥ ५ अल्पत्वमहत्त्वलक्षण ॥ ६ बदरादिष्वल्पत्वमहत्त्वप्रत्ययस्य ॥ ७ अल्पत्वमहत्त्वप्रत्यय ॥ ८ द्रव्यत्वेनाल्पत्वमहत्त्वपरिमाणसम्भवस्य ॥ ९ शब्दस्य कारणमाकाशम् ॥ १० द्रव्यस्य ॥ ११ कार्यरूपे ॥ १२ तातवादिभेर्यादिकारणमात्रस्य ॥ १३ विषय =शब्दस्य वाच्य ॥ १४ वाग्दिग्भूरश्मिवारिवाणाख्यस्वर्गोणा ग्रहणमादिशब्देन ॥ १५ किन्तु गोशब्दा बहवो भवेयुरिति भाव । न तु गोशब्दो बहुप्रकार ॥ १६ एकस्मिन्घटे एक शब्द इत्यादिवत् ॥ १७ पदार्थानाम् ॥ १८ शब्दलक्षणार्थानाम् ॥ १९ असंख्यावत्त्वस्य ॥ २० एकत्वादिसंख्यारहितस्योपलम्भाभावेपि ॥ २१ संयोगो गुण ॥ २२ शब्दस्य ॥ २३ सन्दिग्धत्वे सत्याह ॥ २४ साधनमसिद्धमित्युक्ते सत्याह ॥ २५ शब्दस्य ॥ २६ निश्चीयते ॥ २७ न चेदमसिद्धम् ॥ २८ पुरुषेणावसीयते ॥ २९ अनैकान्तिकहेतुमुद्भावयति पर ॥ ३० द्रव्यरहितानाम् ॥ ३१ व्यभिचारो नास्ति प्रतिनिवर्त्तनादित्यस्य हेतोर्थेत ॥

न्द्रियवदित्यस्यानैकान्तिकत्वम् । सम्बन्धकल्पने श्रोत्रं वा शब्दोत्पत्तिप्रदेशं गत्वा शब्देनाभिसम्बध्येत शब्दो वा स्वोत्पत्तिदेशादागत्य श्रोत्रेणाभिसम्बध्येत ? न तावद्धर्माधर्माभ्यां संस्कृतकर्णशष्कुल्यवरुद्धनभोदेशलक्षणश्रोत्रस्य शब्दोत्पत्तिदेशे गतिस्तथा प्रतीत्यभावात् निष्क्रियत्वाच्च । गतौ वा विवक्षितशब्दान्तरालवर्त्तिनामल्पशब्दानामपि ग्रहणप्रसङ्गः सम्बन्धाविशेषात् । अनुवातप्रतिवाततिर्यग्वातेषु प्रतिपत्त्यप्रतिपत्तीषत्प्रतिपत्तिभेदाभावश्च श्रोत्रस्य गच्छतस्तत्कृतोपकाराद्ययोगात् । नापि शब्दस्य श्रोत्रप्रदेशागमनं निष्क्रियत्वोपगमात् । आगमने वा सक्रियत्वम् । ननु नाद्य एवाकाशतच्छङ्खमुखसंयोगेश्वरादेः समवाय्यसमवायिनिमित्तकारणाज्जातः शब्दः श्रोत्रेणागत्य सम्बध्यते येनायं दोषः । अपि तु वीचीतरङ्गन्यायेनापरापर एवाकाशशब्दादिलक्षणात्समवाय्यसमवायिनिमित्तकारणाज्जातस्तेनाभिसम्बध्यते । तदप्यसमीचीनं सर्वत्र क्रियोच्छेदानुषङ्गात् । बाणादयोपि हि पूर्वपूर्वसमानजातीयलक्षणप्रभवा लक्ष्यप्रदेशव्यापिनो, न पुनस्त एवेति कल्पयितुं शक्यत्वात् । तत्र प्रत्यभिज्ञानान्नित्यत्वसिद्धेर्नैवं कल्पना चेन्नन्विदं प्रत्यभिज्ञानं शब्देपि समानमुपाध्यायोक्तं शृणोमि शिष्योक्तं वा शृणोमीति प्रतीतेः । ननु प्रत्यभिज्ञानस्य भवद्दर्शने दर्शनस्मरणकारणकत्वादत्र च तदभावात्कथं तदुत्पत्तिः ? न खलूपाध्यायोक्ते शब्दे दर्शनवत्स्मरणं भवत्यस्य पूर्वदर्शनाद्याहितसंस्कारप्रबोधनिबन्धनत्वात् । न च कारणाभावे कार्यं भवत्यतिप्रसङ्गात् । इत्यप्यनुपपन्नं सम्बन्धितांप्रतिपत्तिद्वारेणात्रैकत्वस्य प्रतीतेः । सम्बन्धितायां च दर्शनस्मरणयोः सद्भावसम्भवात्प्रत्यभिज्ञानस्योत्पत्तिरविरुद्धा । तथा हि । प्रत्यक्षानुपलम्भतोनुमानतो वा तत्कार्यतया तत्संबन्धिनं शब्दं प्रतिपद्येदानीं तत्स्मृत्युपलम्भोद्भूतं प्रत्यभिज्ञानं तत्सम्बन्धितया तं प्रतिपद्यमानमेकत्वविशिष्टमेव प्रतिपद्यते । अन्यथोपाध्यायोक्तं शृणोमीति प्रतीतिर्न स्यात् । किन्तु तदुक्तोद्भूतं तत्सदृशं शब्दान्तरं शृणोमीति प्रतीतिः स्यात् । वीचीतरङ्गन्यायेन तदुत्पत्तिश्चात्रैव निषेत्स्यते । यदि पुनर्लूनपुनर्जातनखकेशादिवत्सदृशापरापरोत्पत्तिनिबन्धनमेतत्प्रत्यभिज्ञानं न कालान्तरस्थायित्वनिबन्धनं तद्बाणादावपि समानम् । न समानमत्र बाधकसद्भावात् तथा कल्पना, नान्यत्र विपर्ययात् ।

---

१ शब्दस्य ॥ २ ताल्वादिकम् ॥ ३ निष्क्रियत्वमसिद्धमित्याह ॥ ४ अन्तराल भेर्यादिशब्दे ॥ ५ अविवक्षितानां नरादिशब्दानाम् ॥ ६ श्रोत्रेण ॥ ७ सत्सु ॥ ८ शब्दोत्पत्तिदेशं प्रति ॥ ९ आदिना अनुपकारेषदुपकारग्रहणम् ॥ १० परेण ॥ ११ तथा च द्रव्य शब्द इत्यायातम् शब्द क्रियावान्पूर्वदेशत्यागेन देशान्तरे समुपलभ्यमानत्वात् । यदित्थं तदित्थं यथा बाणादि । न चेदमसिद्ध वक्तृमुखप्रदेशत्यागेन श्रोत्रप्रदेशे समुपलभ्यमानत्वात् ॥ १२ आदिनानुकूलवातादिग्रह ॥ १३ आदिना ईश्वरादिग्रह ॥ १४ अन्त्य शब्द ॥ १५ प्रथममुक्ता ॥ १६ पूर्वक्षणे ॥ १७ उत्तरक्षणे ॥ १८ अह गुरु ॥ १९ एकत्वग्राहिण ॥ २० जैनमते ॥ २१ श्रोत्रेन्द्रियज्ञानवत् ॥ २२ अयमुपाध्यायोक्त शब्द इति ॥ २३ मया य शब्द श्रूयते स उपाध्यायेनोक्त इति ॥ २४ अन्वयव्यतिरेकत ॥ २५ श्रूयमाणम् ॥ २६ उपाध्यायसम्बन्धित्वेन तस्य शब्दस्य ॥ २७ दर्शनस्मृतिप्रभवम् ॥ २८ व्यजनानिलवत् ॥ २९ तेन उपाध्यायोक्तेन शब्देन ॥ ३० न चैवम् ॥ ३१ तथा चाशेषार्थानां क्षणिकत्वप्रसङ्गात्सौगतमतसिद्धि स्यात् ॥ ३२ शब्दे ॥ ३३ क्षणिकत्वेन ॥ ३४ नेमे ते बाणादय इत्यत्र बाधकाभावात् ॥

नन्वत्र[1] प्रत्यक्षमनुमानं वा बाधकं कल्प्येत? प्रत्यक्षं चेत्किमेकत्वविषयं क्षणिकत्वविषयं वा? न तावदेकत्वविषयं समविषयत्वेन तदनुकूलत्वात्[3]। नापि क्षणिकत्वविषयं शब्देऽन्यत्र वा तस्य[4] विवादगोचरापन्नत्वात्[5] । नाप्यनुमानम्। प्रत्यभिज्ञानं हि मानसप्रत्यक्षं भवन्मते[6]। तस्य कथमनुमानं बाधकम्? प्रत्यक्षमेव हि बाधकमाम्रताग्राह्येकशाखाप्रभवत्वानुमानस्य[7]। न पुनस्तदनुमानं प्रत्यक्षस्य। अथाध्यक्षाभासत्वादस्यानुमानं बाधकम् । यथा स्थिरचन्द्रार्कादिविज्ञानस्य देशान्तरप्राप्तिलिङ्गजनितं गत्यनुमानम् । कथं पुनरस्याध्यक्षाभासत्वम्? अनुमानेन बाधनाच्चेदनेनानुमानस्य बाधनादनुमानाभासता किन्न स्यात्? अथानुमानबाधितविषयत्वान्नेदमनुमानस्य बाधकमनुमानमप्येतद्[10]बाधितविषयत्वान्नास्य बाधकं स्यात्। न च तदनुमानमस्ति[11]। नन्विदमस्ति—क्षणिकः शब्दोऽस्मदादिप्रत्यक्षत्वे[12] सति विभुद्रव्यविशेषगुणत्वात्सुखादिवत्[13][14] । सत्यमस्ति[15], किन्त्वेकशाखाप्रभवत्ववदेतत्साधनं प्रत्यभिज्ञाप्रत्यक्षबाधितकर्मनिर्देशानन्तरं[16] प्रयुक्तत्वान्न[17] साध्यसिद्धिनिबन्धनम् । विभुद्रव्यविशेषगुणत्वं चासिद्धं शब्दस्य द्रव्यत्वप्रसाधनात् । धर्मादिना[18] व्यभिचारश्चास्य विभुद्रव्यविशेषगुणत्वेपि क्षणिकत्वाभावात्[19] । तस्यापि पक्षीकरणाद[20]व्यभिचारे न कश्चिद्धेतुर्व्यभिचारी सर्वत्र व्यभिचारविषयस्य पक्षीकरणात्। अस्मदादिप्रत्यक्षत्वे सतीति च विशेषणमनर्थकं[21] व्यवच्छेद्याभावात्[22]। धर्मादेश्च क्षणिकत्वे[24] स्वोत्पत्तिसमयानन्तरमेव विनष्टत्वात्ततो जन्मान्तरे फलं न स्यात् शब्दाच्छब्दोत्पत्तिवद्धर्मादेर्धर्माद्युत्पत्तिरित्यप्ययुक्तं तथाभ्युपगमाभावात्[23] । तद्वदपरापरतत्कार्योत्पत्तिप्रसङ्गाच्च[25][26] । परस्यानुकूलेष्वनुकूलाभिमानजनितोभिलापोऽभिलषितुरर्थाभिमुखक्रियाकारणमात्मविशेषगुणमारामोत्थ्येनुकूलेष्वनुकूलाभिमानजनिताभिलापत्वादात्मनोनुकूलेष्वनुकूलाभिमानजनिताभिलापवदित्यस्य च विरोधः । यस्माद्योसौ परस्यानुकूलेष्वनुकूलाभिमानजनिताभिलापजनित आत्मविशेषगुणो

---

१ शब्दाक्षणिकत्वप्रत्यभिज्ञाने ॥ २ प्रत्यभिज्ञानस्यैकविषयत्व प्रत्यक्षस्याप्येकविषयत्वम् ॥ ३ तेन=प्रत्यभिज्ञानेन ॥ ४ क्षणिकत्वविषयस्य प्रत्यक्षस्य ॥ ५ असिद्धत्वादिति भाव ॥ ६ वैशेषिकमते ॥ ७ पक्कान्येतानि फलानि एकशाखाप्रभवत्वादित्यनुमानस्याऽऽमताग्राहि प्रत्यक्ष बाधकम् ॥ ८ शब्दैकत्वविषयस्याध्यक्षस्य ॥ ९ शब्दस्य क्षणिकत्वसाधकेन ॥ १० एतेन=मानसप्रत्यक्षेण ॥ ११ शब्दक्षणिकत्वानुमानम् ॥ १२ परममहापरिमाणेन व्यभिचारपरिहारार्थमिद विशेषणम् ॥ १३ विभु आकाशमात्मा च ॥ १४ घटादिगतरूपादिना व्यभिचारनिरासार्थं विशेषेति ॥ १५ उपहासे ॥ १६ कर्म=प्रतिज्ञा ॥ १७ प्रत्यभिज्ञाप्रत्यक्षेण पूर्व शब्दस्याक्षणिकत्व साधित यत ॥ १८ विभुद्रव्यविशेषगुणत्वादित्येवोच्यमाने ॥ १९ क्षणिकत्व=साध्यम ॥ २० अनेकान्तपरिहाराय । पक्षान्त पातित्वाद्धर्मादे क्षणिकत्वमायातमिति भाव ॥ २१ व्यवच्छेद्यफल हि विशेषणमिति वचनात् ॥ २२ अस्मदादिप्रत्यक्षत्वे सतीति विशेषणेन किलास्मदाद्यऽप्रत्यक्षो धर्मादिर्व्यवच्छेद्य । तस्यापि पक्षीकरणे व्यवच्छेद्यमस्य विशेषणस्य नास्तीति भाव । सर्वेषा पक्षीकरणाद्विशेषणेन परिहरणीयस्याभावात् ॥ २३ परेण ॥ २४ धर्माधर्मयो क्षणिकत्वे ॥ २५ अस्तु । न चेवम् । न खलु धर्माद्युत्पत्तिवदपरापरवनिताद्यङ्गाद्युत्पत्ति प्रतीयते ॥ २६ प्रकृतसाध्ये हेत्वन्तरमिदम् ॥ २७ अनुष्ठातुर्वैशेषिकस्य ॥ २८ इज्यायागादिपूजादिषु धर्मोत्पादनकारणभूतेषु ॥ २९ धर्मजनकत्वेन ॥ ३० इमान्यनुकूलानीत्यभिमानस्तेन जनित ॥ ३१ अर्थ=स्रक्चन्दनादिक प्रति ॥ ३२ क्रिया=कार्यम् ॥ ३३ उत्तरजन्मनि ॥ ३४ धर्मलक्षण दृष्टान्तपक्षे प्रयत्नलक्षण च ॥ ३५ उत्पादयति, साधयति ॥३६ सामान्य हेतु ब्रुवता दोषाभावात् ॥३७ जीवस्य स्वस्य वा ॥३८ वस्त्रादिषु स्रक्चन्दनादिषु च ॥ ३९ अनुमानस्य ॥ ४० धर्मादेर्धर्माद्युत्पत्तौ सत्त्याम् ॥४१ धर्मलक्षण ॥४२ अनुष्ठातुर्वैशेषिकस्य ॥

नासावभिलषितुरर्थाभिमुखक्रियाकारणं तत्समानस्य तत्कारणत्वात्। यश्च तत्क्रियाकारणं नासौ यथोक्ताभिलापजनित इति। इच्छाद्वेषनिमित्तौ प्रवर्त्तकनिवर्त्तकौ धर्माधर्मावव्यवधानेन हिताहितविषयप्राप्तिपरिहारहेतोः कर्मणः कारणत्वे सत्यात्मविशेषगुणत्वात् प्रवर्त्तकनिवर्त्तकप्रयत्नवदित्यत्र हेतोर्व्यभिचारश्च। जन्मान्तरफलोदययोर्धर्माधर्मयोरव्यवधानेन हिताहितविषयप्राप्तिपरिहारहेतोः कर्मणः कारणत्वे सत्यात्मविशेषगुणत्वेपीच्छाद्वेषजनितत्वाभावात्। ततः शब्दाच्छब्दोत्पत्तिवद्धर्मादेर्धर्माद्युत्पत्त्यभावात्। क्षणिकत्वे चातो जन्मान्तरे फलासम्भवादक्षणिकत्वं तस्याभ्युपगन्तव्यमित्यनेनानैकान्तिको हेतुः। अथास्मदादिप्रत्यक्षत्वविशेषणविशिष्टस्य विभुद्रव्यविशेषगुणत्वस्यात्रासम्भवान्न व्यभिचारः। ननु मा भूद्व्यभिचारस्तथापि साकल्येन हेतोर्विपक्षाद्व्यावृत्त्यसिद्धिः। विपक्षविरुद्धं हि विशेषणं ततो हेतुं निवर्त्तयति। यथा सहेतुकत्वमहेतुकत्वविरुद्धं ततः कादाचित्कत्वम्। न चास्मदादिप्रत्यक्षत्वमक्षणिकत्वविरुद्धमक्षणिकेष्वपि सामान्यादिषु भावात्। ततो यथास्मदादिप्रत्यक्षा अपि केचित्प्रदीपादयो भावाः क्षणिकाः सामान्यादयस्त्वक्षणिकास्तथास्मदादिप्रत्यक्षा अपि विभुद्रव्यविशेषगुणाः केचित्क्षणिकाः केचिदक्षणिका भविष्यन्तीति सन्दिग्धो व्यतिरेकः। अथाक्षणिके क्वचिदस्मदादिप्रत्यक्षत्वविशेषणविशिष्टस्य विभुद्रव्यविशेषगुणत्वस्यादर्शनात्ततो व्यावृत्तिसिद्धिः; न–भवदीयादर्शनस्य साकल्येन भावाभावाप्रसाधकत्वात्। अन्यथा परलोकादेरप्यभावानुषङ्गः। सर्वस्यादर्शनं चासिद्धं सतोऽपि निश्चेतुमशक्यत्वात्। विपक्षेऽदर्शनमात्राद्व्यावृत्तिसिद्धौ 'यद्वेदाध्ययनं किञ्चित्तदध्ययनपूर्वकम्। वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा' इत्यस्यापि गमकत्वप्रसङ्गः। न खलु वेदाध्ययनमतदध्ययनपूर्वकं दृष्टम्। तथा चास्यानादित्वसिद्धेरीश्वरपूर्वकत्वेन प्रामाण्यं न स्यात्। न च कृतकत्वादावप्ययं दोषः समानस्तत्र विपक्षे हेतोः सद्भाव-

१ परापरोत्पत्त्या तस्मादन्यत्वात् ॥ २ अन्त्यो धर्मे ॥ ३ इच्छाद्वेषौ निमित्त कारण ययोर्धर्माधर्मयोरिति भाव ॥ ४ कार्यस्य निष्पादकानिष्पादकौ ॥ ५ कारणत्वादित्युच्यमाने चक्षुरादिना व्यभिचारस्तन्निवृत्त्यर्थमात्मविशेषगुणत्वादित्युक्तम्। तावत्युक्ते सुखादिनानेकान्तस्तत्परिहारार्थं कर्मण कारणत्वे सतीति विशेषणम्। तावत्युक्ते बुद्ध्यादिनानेकान्तस्तन्निरासार्थं हिताहितविषयप्राप्तिपरिहारहेतोरित्युपात्तम्। तावत्युक्ते इच्छाद्वेषाभ्यामनेकान्तस्तन्निरासार्थमव्यवधानेनेति विशेषणमुपादीयते ॥ ६ धर्माद्धितविषयप्राप्त्यहितविषयपरिहारो भवत। अधर्मादहितविषयप्राप्तिहितविषयपरिहारौ स्त इति सम्बन्ध ॥ ७ धर्माधर्मयो ॥ ८ अनुमाने ॥ ९ धर्मादे क्षणिकत्वे ॥ १० पूर्वधर्माधर्मसदृशयो ॥ ११ धर्मादे क्षणिकत्वे साध्ये ॥ १२ धर्मादे क्षणिकत्वाभावात् ॥ १३ अस्मदादिप्रत्यक्षत्वे सतीति विशेषण त्यक्त्वा विभुद्रव्यविशेषगुणत्वादित्यय हेतु ॥ १४ व्यभिचारपरिहारार्थम् ॥ १५ साधनस्य ॥ १६ धर्मादौ ॥ १७ शब्दे यथा सम्भवस्तथा धर्मादौ नास्ति यत ॥ १८ अक्षणिकात् ॥ १९ कथम्? तथा हि ॥ २० हेतोर्विपक्षे वृत्ति वारयति यत्तदेव हेतुविशेषणम् ॥ २१ अनित्य शब्द कादाचित्कत्वाद् घटवदित्युक्ते खननोत्सेचनादिना कादाचित्केन नभसानेकान्तिकत्वम्। तद्व्यवच्छेदार्थं सहेतुकत्वे सति कादाचित्कत्वादिति साधन प्रयोक्तव्यम् ॥ २२ विशेषणम् ॥ २३ अहेतुकम्–आकाशादि ॥ २४ हेतु निवर्तयति ॥ २५ अस्मदादिप्रत्यक्षत्वविशेषणस्य ॥ २६ पदार्था ॥ २७ सुखादय ॥ २८ धर्मादय ॥ २९ हेतोर्विपक्षाद्व्यावृत्ति ॥ ३० धर्मादौ ॥ ३१ आदिना परमाण्वादेश्च ॥ ३२ भवदीयादर्शनस्य परलोकादौ सद्भावाविशेषात्। तथा च चार्वाकमतप्रसङ्ग ॥ ३३ नरस्य ॥ ३४ सर्वेषा हेतोर्विपक्षेऽदर्शन विद्यते तथापि तस्य ॥ ३५ सर्वेषा प्राणिना ग्रहणाभावात्। अन्यथाऽशेषज्ञत्वप्रसङ्ग ॥ ३६ अक्षणिके ॥ ३७ अदर्शनसामान्यात् ॥ ३८ विपक्षात् ॥ ३९ अपौरुषेयत्वलक्षणसाध्यस्य ॥ ४० अवेदाध्ययनपूर्वके लोकवचने विपक्षे हेतोरदर्शनमात्राद्धेतोर्विपक्षाद्व्यावृत्तिसिद्धे सद्भावात् ॥ ४१ ईश्वरकर्तृकत्वेन ॥ ४२ भवन्मते ॥ ४३ हेतौ ॥ ४४ नित्ये गगनादौ। यत्कृतक न भवति तदनित्य न भवति यथा गगनमिति ॥

बाधकप्रमाणसम्भवात् । धर्मादेश्चास्मदाद्यप्रत्यक्षत्वे देवदत्तं प्रत्युपसर्पन्तः पश्वादयो देवदत्तगुणाकृष्टास्तं प्रत्युपसर्पणवत्त्वाद्ग्रासादिवदित्यनुमानं न स्याद्ग्रासेरग्रहणात् । मानसप्रत्यक्षेण व्याप्तिग्रहणे सिद्धं धर्मादेरस्मदादिप्रत्यक्षत्वम् । अथ बाह्येन्द्रियेणास्मदादिप्रत्यक्षत्वे सतीति हेतुर्विशेष्यते तदा साधनवैकल्यं दृष्टान्तस्य सुखादेस्तथा प्रत्यक्षत्वाभावात् । यदि च वीचीतरङ्गन्यायेन शब्दोत्पत्तिरिष्यते तदा प्रथमतो वक्तृव्यापारादेकः शब्दः प्रादुर्भवत्यनेको वा? यद्येकः, कथं नानादिक्कानेकशब्दोत्पत्तिः सकृदिति चिन्त्यम् । सर्वदिक्कताल्वादिव्यापारजनितवाय्वाकाशसंयोगानामसमवायिकारणाना समवायिकारणस्य चाकाशस्य सर्वगतस्य भावात् सकृत्सर्वदिक्कनानाशब्दोत्पत्त्यविरोधे शब्दस्यारम्भकत्वायोगः । यथैवाद्यः शब्दो न शब्देनारब्धस्ताल्वाद्याकाशसंयोगादेवासमवायिकारणादुत्पत्तेस्तथा सर्वदिक्कशब्दान्तराण्यपि-ताल्वादिव्यापारजनितवाय्वाकाशसंयोगेभ्य एवासमवायिकारणेभ्यस्तदुत्पत्तिसम्भवात् । तथा च संयोगाद्विभागाच्छब्दाच्च शब्दोत्पत्तिरिति सिद्धान्तव्याघातः । अथ शब्दान्तराणां प्रथमः शब्दोऽसमवायिकारणं तत्सदृशत्वात् । अन्यथा तद्विसदृशशब्दान्तरोत्पत्तिप्रसङ्गो नियामकाभावात् । नन्वेवं प्रथमस्यापि शब्दस्य शब्दान्तरसदृशस्यान्यशब्दादसमवायिकारणादुत्पत्तिः स्यात्तस्याप्यपरपूर्वशब्दादित्यनादित्वापत्तिः शब्दसन्तानस्य स्यात् । यदि पुनः प्रथमः शब्दः प्रतिनियतः प्रतिनियताद्वक्तृव्यापारादेवोत्पन्नः स्वसदृशानि शब्दान्तराण्यारभेत तर्हि किमाद्येन शब्देनासमवायिकारणेन प्रतिनियतवक्तृव्यापारात्तज्जनितप्रतिनियतवाय्वाकाशसंयोगेभ्यश्च सदृशापरापरशब्दोत्पत्तिसम्भवात्। तन्नैकः शब्दः शब्दान्तरारम्भकः । नाप्यनेकस्तस्यैकस्मात्ताल्वाद्याकाशसंयोगादुत्पत्त्यसम्भवात् । न चानेकस्ताल्वाद्याकाशसंयोगः सकृदेकस्य वक्तुः सम्भवति प्रयत्नस्यैकत्वात् । न च प्रयत्नमन्तरेण ताल्वादिक्रियापूर्वकोऽन्यतरकर्मजस्ताल्वाद्याकाशसंयोगः प्रसूते यतोनेकशब्दः स्यात् । अस्तु वा कुतश्चिदाद्यः शब्दोऽनेकस्तथाप्यसौ स्वदेशे शब्दान्तराण्यारभते देशान्तरे वा? न तावत्स्वदेशे देशान्तरे शब्दोपलम्भाभावप्रसङ्गात् । अथ देशान्तरे तत्रापि किं तद्देशे गत्वा स्वदेशस्थ एव वा देशान्तरे तान्यसौ जनयेत्? यदि स्वदेशस्थ एव तर्हि लोकान्तेपि तज्जनकत्वप्रसङ्गः । अदृष्टमपि च शरीरदेशस्थमेव देशान्तरवर्त्तिमणिमुक्ताफलाद्याकर्षणं कुर्यात् । तथा च धर्माधर्मौ स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभेते इत्यादिविरोधः । न च वीचीतरङ्गादावप्यप्राप्तकार्यदेशत्वे सत्यारम्भकत्वं दृष्टं येनात्रापि तथा तत्कल्प्येताध्यक्षविरोधात् । अथ तद्देशे गत्वा तर्हि

---

१ यद्यत्त प्रत्युपसर्पणवत्तत्तद्देवदत्तगुणाकृष्टमिति प्रत्यक्षेण धर्मादेरप्रत्यक्षत्वात् ॥ २ ततश्च धर्मादिना व्यभिचार पूर्ववदवस्थ एव ॥ ३ इति विशेषणेन ॥ ४ विभुद्रव्यविशेषगुणत्वादित्ययम् ॥ ५ बाह्येन्द्रियेण सुखादिवदिति दृष्टान्त प्रत्यक्षो न भवतीति भाव ॥ ६ शब्दादेव ॥ ७ सर्वदिक =सर्वगत ॥ ८ उपादानस्येत्यर्थ ॥ ९ भवन्मते ॥ १० प्रथमस्य ॥ ११ शब्दान्तर प्रति ॥ १२ शब्दान्तरेणारब्धानि ॥ १३ शब्दस्यारम्भकत्वायोगे च १४ भेरीदण्डयो ॥ १५ वंशादिविभागात् ॥ १६ वैशेषिकस्य तव ॥ १७ प्रतिनियतस्वरूप । विशिष्ट ॥ १८ कल्पितेन ॥ १९ न चेदमसिद्धम् ॥ २० ताल्वादिषु ॥ २१ स्वोत्पत्तिदेशे ताल्वादौ ॥ २२ स्वोत्पत्तिदेशादन्यदेशेषु ॥ २३ आद्योनेक शब्द ॥ २४ स्वाश्रय आत्मा आत्मनो व्यापकत्वात् ॥ २५ मणिमुक्ताफलादा । शरीरापेक्षया ॥ २६ आकर्षणादिलक्षणम् ॥ २७ कार्यम्=उत्तरवीचीलक्षणम् ॥ २८ उत्तरतरङ्गाणाम् ॥

सिद्धं शब्दस्य क्रियावत्त्वं द्रव्यत्वप्रसाधकम्। किञ्चाकाशगुणत्वे शब्दस्यास्मदादिप्रत्यक्षता न स्यादाकाशस्यात्यन्तपरोक्षत्वात्। तथा हि। येत्यन्तपरोक्षगुणिगुणा न तेस्मदादिप्रत्यक्षाः। यथा परमाणुरूपादयः। तथा च परेणाभ्युपगतः शब्द इति। न च वायुस्पर्शेन व्यभिचारस्तस्य प्रत्यक्षत्वप्रसाधनात्। किञ्चाकाशगुणत्वेऽस्मदादिप्रत्यक्षत्वे चास्यात्यन्तपरोक्षाकाशविशेषगुणत्वायोगः। प्रयोगः। यदस्मदादिप्रत्यक्षं तन्नात्यन्तपरोक्षगुणिगुणो यथा घटरूपादयस्तथा च शब्द इति। यच्चोक्तं सत्तासम्बन्धित्वादिति, तत्र किं स्वरूपभूतया सत्तया सम्बन्धित्वं विवक्षितमर्थान्तरभूतया वा? प्रथमपक्षे सामान्यादिभिर्व्यभिचारस्तेषां प्रतिषिध्यमानद्रव्यकर्मभावत्वे सति तथाभूतया सत्तया सम्बन्धित्वेपि गुणत्वासिद्धेः। द्वितीयपक्षस्त्वयुक्तः। न हि शब्दादयः स्वयमसन्त एवार्थान्तरभूतया सत्तया सम्बध्यमानाः सन्तो नामाश्वविषाणादेरपि तथाभावानुषङ्गात्। प्रतिपेत्स्यते चार्थान्तरभूतसत्तासम्बन्धेनार्थानां सत्त्वमित्यलमतिप्रसङ्गेन। यच्चोक्तं 'शब्दो द्रव्यं न भवत्येकद्रव्यत्वात्' तत्रैकद्रव्यत्वं साधनमसिद्धं यतो गुणत्वे गगने एवैकद्रव्ये समवायेन वर्तने च सिद्धे तत्सिध्येत्। तच्चोक्तया रीत्याऽपास्तमिति कथं तत्सिद्धिः? यदप्येकद्रव्यत्वे साधनमुक्तम्—एकद्रव्यः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वादिति तदपि प्रत्यनुमानबाधितम्। तथा हि। अनेकद्रव्यः शब्दोऽस्मदादिप्रत्यक्षत्वे सत्यपि स्पर्शवत्त्वाद् घटादिवत्। वायुनानेकान्तश्च। स हि बाह्यैकेन्द्रियप्रत्यक्षोपि नैकद्रव्यः। चक्षुषैकेनाऽस्मदादिभिः प्रतीयमानैश्चन्द्रार्कादिभिश्च। अस्मदादिविलक्षणैर्बाह्येन्द्रियान्तरेण तत्प्रतीतौ शब्देपि तथा प्रतीतिः किन्न स्यात्? अत्र तथानुपलम्भोऽन्यत्रापि समानः। एतेनेदमपि प्रत्युक्तं गुणः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वाद्रूपादिवदिति वाय्वादिभिर्व्यभिचारात्। ते हि सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षा, न च गुणाः। अन्यथा द्रव्यसंख्याव्याघातः स्यात्। ततः शब्दानां गुणत्वासिद्धेरयुक्तमुक्तं—यश्चैषामाश्रयस्तत्पारिशेष्यादाकाशमिति। यच्चोक्तं—न तावत्स्पर्शवतां परमाणूनामित्यादि तत्सिद्धसाधनं तद्गुणत्वस्य तत्रानभ्युपगमात्। यथा चास्मदादिप्रत्यक्षत्वे शब्दस्य परमाणुविशेषगुणत्वस्य विरोधस्तथाकाशविशेषगुणत्वस्यापि। तथा हि। शब्दोत्यन्तपरोक्षाकाशविशेषगुणो न भवत्यस्मदादिप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवत्। न ह्यस्मदादिप्रत्यक्षत्वं परमाणुविशेषगुणत्वमेव निराकरोति शब्दस्य, नाकाशविशेषगुणत्वमुभयत्राविशेषात्। यथैव हि परमाणुगुणो रूपादिरस्मदाद्यप्रत्यक्षस्तथाकाशगुणो महत्त्वादिरपि। यच्चाप्युक्तं—नापि कार्यद्रव्याणामित्यादि

१ वायुस्पर्शो ह्यत्यन्तपरोक्षगुणिगुणो भवत्यस्मदादिप्रत्यक्षो न भवतीति न ॥ २ आकाशगुण शब्द ॥ ३ सामान्यविशेषसमवायवत् (सामान्यविशेषसमवाया स्वत सन्त इति वचनात्) ॥ ४ शब्दस्य ॥ ५ द्रव्यगुणकर्मवत् ॥ ६ उभयथा सत्तासम्बन्धित्वस्य दृष्टत्वात्प्रकारान्तरासम्भवात् ॥ ७ आदिना विशेषसमवाययोर्ग्रहणम् ॥ ८ रूपादिवत् ॥ ९ शब्दस्य ॥ १० अनेकानि द्रव्याणि यस्य परमाणुद्रयाद्यपेक्षया ॥ ११ योगिप्रत्यक्षेण परमाणुना व्यभिचारपरिहारार्थम् ॥ १२ एकेन वायुपरमाणुना व्यभिचारपरिहारार्थम् ॥ १३ परमाण्वपेक्षया ॥ १४ परमाण्वपेक्षया ॥ १५ अनेकान्त इति सवन्ध एकद्रव्यलक्षणसाध्याभावात् ॥ १६ योगिभि ॥ १७ चक्षुषोपेक्षयान्येन स्पर्शनलक्षणेन ॥ १८ तथा चानेकान्तिक एव हेतु स्यादिति भाव ॥ १९ एकद्रव्य शब्द इत्यादिनिराकरणेन ॥ २० आदिना पृथिव्यप्तेजसा ग्रह ॥ २१ नवद्रव्याणा पञ्चद्रव्यत्वप्रसङ्ग इत्यर्थ ॥ २२ शब्दो विशेषगुणो न भवत्यस्मदादिप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवत् ॥ २३ जेने ॥ २४ विशेषणे ॥ २५ भवन्मते ॥ २६ अस्मन्मते ॥ २७ अस्मदादिप्रत्यक्षत्वस्य २८ पृथिव्यादीनाम् ॥

तदप्ययुक्तम् । शब्दस्याकाशगुणत्वनिषेधे[1] कार्यद्रव्यान्तराप्रादुर्भावेऽप्युत्पत्त्यभ्युपगमे[2] शब्दो निराधारो गुणः स्यात् । तथा च बुद्ध्यादयः क्वचिद्वर्तन्ते गुणत्वादित्यस्य व्यभिचारः[3] । ततः कार्यद्रव्यान्तरोत्पत्तिस्तत्राभ्युपगन्तव्येत्यसिद्धो हेतुः । अकारणगुणपूर्वकत्वं चासिद्धम् । तथा हि । नाकारणगुणपूर्वकः[6] शब्दोऽस्मदादिबाह्येन्द्रियग्राह्यत्वे सति गुणत्वात्पटरूपादिवत् । न चाणुरूपादिना सुखादिना वा हेतोर्व्यभिचारो बाह्येन्द्रियग्राह्यत्वे सतीति विशेषणात् । नापि योगिबाह्येन्द्रियग्राह्येणाणुरूपादिनाऽस्मदादिग्रहणात् । नापि सामान्यादिना गुणग्रहणात् । अयावद्द्रव्यभावित्वं च विरुद्धं साध्यविपरीतार्थप्रसाधनत्वात् । तथा हि । स्पर्शवद्द्रव्यगुणः[11] शब्दोऽस्मदादिबाह्येन्द्रियप्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वात्पटरूपादिवत् । अस्मदादिपुरुषान्तरप्रत्यक्षत्वे सति पुरुषान्तराप्रत्यक्षत्वादिति वास्वाद्यमानेन रसादिनानैकान्तिकः[12] । आश्रयाद्भेर्यादेरन्यत्रोपलब्धेरिति चासङ्गतं भेर्यादेः शब्दाश्रयत्वासिद्धेस्तस्य तन्निमित्तकारणत्वात् । आत्मादिगुणत्वप्रतिषेधस्तु सिद्धसाधनान्न समाधानमर्हति । यच्च शब्दलिङ्गाविशेषादित्याद्युक्तं तद्वन्ध्यासुतसौभाग्यव्यावर्णनप्रख्यं कार्यद्रव्यस्य व्यापित्वादिधर्मासम्भवात् । एतेनेदमपि निरस्तं—दिवि भुव्यन्तरिक्षे च शब्दाः श्रूयमाणैकार्थसमवायिनः शब्दत्वात् श्रूयमाणाद्यशब्दवत् । श्रूयमाणः शब्दः समानजातीयासमवायिकारणः सामान्यविशेषवत्त्वे सति नियमेनास्मदादिबाह्येकेन्द्रियप्रत्यक्षत्वात्कार्यद्रव्यरूपादिवदिति । प्रतिशब्दं पुद्गलद्रव्यस्य तत्समवायिकारणस्य भेदात् । शब्दस्य क्षणिकत्वनिषेधाच्च कथं समानजातीयासमवायिकारणत्वम् ? यदि चाकाशमनवयवं शब्दस्य समवायिकारणं स्यात्तर्हि शब्दस्य नित्यत्वं सर्वगतत्वं च स्यादाकाशगुणत्वात्तन्महत्त्ववत् । क्षणिकैकदेशवृत्तिविशेषगुणत्वस्य शब्दे प्रमाणतः प्रतिषेधाच्च । तत्त्वे वा कथं न शब्दाधारस्याकाशस्य सावयवत्वम् ? न हि निरवयवत्वे तस्यैकदेशे एव शब्दो वर्तते न सर्वत्रेति विभागो घटते । किञ्च सावयवमाकाशं हिमवद्विन्ध्यावरुद्धविभिन्नदेशत्वाद्भूमिवत् । अन्यथा तयो रूपरसयोरिवैकदेशाकाशावस्थितिप्रसक्तिः । न चैतद् दृष्टमिष्टं वा । कथं वा तदाधेयस्य शब्दस्य विनाशः ? स हि न तावदाश्रयविनाशाद्घटते तस्य नित्यत्वाभ्युपगमात् । नापि विरोधिगुणसद्भावात्तन्महत्त्वादेरेकार्थसमवेतत्वेन

---

१ जैने ॥ २ परेण ॥ ३ [illegible] कचिद्वर्त्तनाभावात् ॥ ४ कार्यद्रव्यान्तरात्परमाणुरूपाच्छब्दजनकात् ॥ ५ अकारण=गगनम् । तस्य गुणो महत्त्वादि ॥ ६ किंतु सशरीरसगन्धवर्णवत्पुद्गलद्रव्यहेतुक[illegible] ॥ ७ [illegible] ॥ ८ प्रसङ्गसाधनमेतत् ॥ ९ आत्मन स्वभावत्वात् ॥ १० वीचीतरङ्गन्यायेन शब्दाच्छब्दोत्पत्तेर्निषिद्धत्वात् ॥ ११ प्रसङ्गसाधनमेतत् ॥ १२ विशेषगुणो न [illegible] ॥ १४ आदिना मनोदिक्काला गृह्यन्ते ॥ १५ भेदाभावादेकमित्यर्थ ॥ १६ सदृशम् ॥ १७ शब्दस्य आकाशविशेषगुणत्वनिराकरणेन कार्यद्रव्यविशेषगुणत्वसाधनेन [illegible] २० गगनसमवायिकारणका ॥ २१ वीचीतरङ्गन्यायागतेन श्रूयमाणेन घटशब्देन आद्या घटशब्दा श्रूयमाणा घटशब्दस्यासमवायिकारणत्वेनाभिमता एकार्थसम[illegible] ॥ २३ [illegible] व्यभिचार इन्द्रियग्रहणात् । नापि घटादिना एकपदोपादानात् । नापि सुखादिना—बाह्यपदोपादानात् । नापि योगिबाह्येकेन्द्रियप्रत्यक्षेण [illegible] पदोपादानात ॥ २४ पटसमवेतरूपाद्यारम्भे पटोत्पादकतन्तुरूपादिवत् ॥ २५ अनेकात् ॥ २६ पर्यायरूपेण वस्तुनो विनाशात् ॥ [illegible] ॥ ३० परेण ॥ ३१ विरोधिगुणरूपस्य ॥

स्पर्शयोरिव विरोधित्वासिद्धेः । सिद्धौ वा श्रवणसमयेपि तदभावप्रसङ्गस्तदा तन्महत्त्वस्य भावात् । नापि संयोगादिविरोधिगुणस्तस्य तत्कारणत्वात् । नापि संस्कारस्तस्याकाशेऽसम्भवात् । सम्भवे वा तस्याभावे आकाशस्याप्यभावानुषङ्गस्तस्य तदव्यतिरेकात् । व्यतिरेके वा तस्येति सम्बन्धो न स्यात् । नापि शब्दोपलब्धिप्रापकादृष्टाभावात्तदभावस्तुच्छाभावस्यासामर्थ्यतो विनाशाहेतुत्वात् खरविषाणवत् । तन्न शब्दस्याकाशप्रभवत्वमभ्युपगन्तव्यम् । ननु चाऽस्य पौद्गलिकत्वेऽस्मदाद्यनुपलभ्यमानरूपाद्याश्रयत्वं न स्यात्पटादिवत् । तन्न–द्व्यणुकादिना हेतोर्व्यभिचारात् । नायनरश्मिषु जलसंयुक्तानले चानुद्भूतरूपस्पर्शवत् शब्दाश्रयद्रव्येऽस्मदाद्यनुपलभ्यमानानामप्यनुद्भूततया रूपादीनां वृत्त्यविरोधः । यथा च घ्राणेन्द्रियेणोपलभ्यमाने गन्धद्रव्येऽनुद्भूतानां रूपादीना वृत्तिस्तथात्रापि । यथा च तैजसत्वात्पार्थिवत्वाच्चात्रानुपलम्भेपि रूपादीनामनुद्भूततयास्तित्वसम्भावना तथा शब्देपि पौद्गलिकत्वात् । न च पौद्गलिकत्वमसिद्धम् । तथा हि । पौद्गलिकः शब्दोऽस्मदादिप्रत्यक्षत्वेऽचेतनत्वे च सति क्रियावत्त्वाद्बाणादिवत् । न च मनसा व्यभिचारोऽस्मदादिप्रत्यक्षत्वे सतीति विशेषणत्वात् । नाप्यात्मनाऽचेतनत्वे सतीति विशेषणात् । नापि सामान्येनास्य क्रियावत्त्वाभावात् । ये चास्मदादिप्रत्यक्षत्वे सति स्पर्शवत्त्वादित्यादयो हेतवः प्रागुपन्यस्तास्ते सर्वे पौद्गलिकत्वप्रसाधका द्रष्टव्याः । ततः शब्दस्याकाशगुणत्वासिद्धेर्नासौ तल्लिङ्गम् । कुतस्तर्हि तत्सिद्धिरिति चेद् युगपन्निखिलद्रव्यावगाहकार्यादिति ब्रूमः । तथा हि । युगपन्निखिलद्रव्यावगाहः साधारणकारणापेक्षस्तथावगाहत्वान्यथाऽनुपपत्तेः । ननु सर्पिषो मधुन्यवगाहो भस्मनि जलस्य जलेऽश्वादेर्यथा तथैवालोकतमसोरशेषार्थावगाहघटनान्नाकाशप्रसिद्धिस्तत्र–अनयोरप्याकाशाभावेऽवगाहानुपपत्तेः । ननु निखिलार्थाना यथाकाशेवगाहस्तथाकाशस्याप्यन्यस्मिन्नधिकरणेऽवगाहेन भवितव्यमित्यनवस्था । तस्य स्वरूपेवगाहे सर्वार्थानां स्वात्मन्येवावगाहप्रसङ्गात्कथमाकाशस्यातः प्रसिद्धिरित्यप्यपेशलमाकाशस्य व्यापित्वेन स्वावगाहित्वोपपत्तितोऽनवस्थाऽसम्भवात्, अन्येषामव्यापित्वेन स्वावगाहित्वायोगाच्च । न हि किञ्चिदल्पपरिमाणं वस्तु स्वाधिकरणं दृष्टमश्वादेर्जलाद्यधिकरणोपलब्धेः । कथमेवं दिक्कालात्मनामाकाशेवगाहो व्यापित्वादित्यप्यसाम्प्रतं हेतोरसिद्धेः । तदसिद्धिश्च दिग्द्रव्यस्यासत्त्वात् । कालात्मनोश्चासर्वगतद्रव्यत्वेनाग्रे समर्थनात्प्रसिद्धेति । ननु तथाप्यमूर्त्तत्वेन कालात्मनोः पाताभावात्कथं तदाधेयतेत्यप्ययुक्तममूर्त्तस्यापि ज्ञानस्यादेरात्मन्याधेयत्वप्रसिद्धेः । एतेनामूर्त्तत्वान्नाकाशं कस्यचिदधिकरणमित्यपि प्रत्युक्तममूर्त्तस्याप्यात्मनो ज्ञानाद्यधिकरणत्वप्रतीतेः । समानसमयवर्त्तित्वान्निखिलनाधाराधेयभावः अन्यथाकाशादुत्तरकालं भावस्तेषां स्यादित्यप्यसमीचीनं समसमयवर्तिनामप्यात्मामूर्त्तत्वादीना तद्भावप्रतीतेः । न खलु परेणाप्यत्र नात्रोभीष्टो नित्यत्वविरोधानुषङ्गात् । क्षणविशरारुतया निखिलार्थानां नाधाराधेयभाव इत्यपि मनोरथमात्रं क्षणविशरारुत्वस्यार्थानां प्रागेव प्रतिषेधात् । खे गाद्यऽबाधितप्रत्ययाच्च तद्भावप्रसिद्धेः । ततः परेषां निरवद्यलिङ्गाऽभावान्नाकाशद्रव्यस्य प्रसिद्धिः ।

१ शब्द प्रति ॥ २ संयोगादि शब्दकारणमिति वचनात् ॥ ३ कार्यरूपेण ॥ ४ यत्पौद्गलिकं तदस्मदाद्युपलभ्यमानरूपाद्याश्रयमित्युक्ते द्व्यणुकादिना पौद्गलिकेन व्यभिचारोऽस्मदाद्युपलभ्यमानरूपाश्रयत्वलक्षणसाध्याभावात् ॥ ५ ...णस्पर्श ॥ ६ अत्र रूप भासुरम् ॥ ७ परमते ॥ ८ परमते ॥ ९ नायनरश्म्यादिषु (जलसंयुक्तानले गन्धद्रव्ये) त्रिषु ॥ १० परस्य तव ॥ ११ पौद्गलिकत्वाभावाद्वावमनस ॥ १२ जैनै ॥ १३ वय जैना ॥ १४ सकलद्रव्याणा... कारणमाकाशम् ॥ १५ साधारणकारणमन्तरेण । आकाशाभावे ॥ १६ तुलनमित्यर्थं ॥ १७ जैनापेक्षया ॥ १८ आत्मादीनाम् ॥ १९ वैशेषिकेण ॥ २० आत्मन २१ सौगतमतमालम्ब्य ॥

नापि कालद्रव्यस्य । यच्चोच्यते—कालद्रव्यं च परापरादिप्रत्ययादेव लिङ्गात्प्रसिद्धम् । कालद्रव्यस्य चेतरस्माद्भेदे काल इति व्यवहारे वा साध्ये स एव लिङ्गम् । तथा हि । काल इतरस्माद्भिद्यते काल इति वा व्यवहर्त्तव्यः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गत्वात् । यस्तु नेतरस्माद्भिद्यते काल इति वा न व्यवह्रियते नासावुक्तलिङ्गो यथा क्षित्यादिः । तथा च कालः । तस्मात्तथेति । विशिष्टकार्यतया चैते प्रत्ययाः काले एव प्रतिबद्धाः । यद्विशिष्टकार्यं तद्विशिष्टकारणादुत्पद्यते । यथा घट इति प्रत्ययाः । विशिष्टकार्यं च परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्यया इति । परापरयोः खलु दिग्देशकृतयोः व्यतिकरो विपर्ययः[6] । यत्रैव हि दिग्विभागे पितर्युत्पन्नं परत्वं तत्रैव स्थिते पुत्रेऽपरत्वं, यत्र चापरत्वं तत्रैव स्थिते पितरि परत्वमुत्पद्यमानं दृष्टमिति दिग्देशाभ्यामन्यन्निमित्तान्तरं[10] सिद्धं निमित्तान्तरमन्तरेण व्यतिकरासम्भवात् । न[11] च परापरादिप्रत्ययस्यादित्यादिक्रियाद्रव्यं वलिपलितादिकं वा निमित्तं तत्प्रत्ययविलक्षणत्वात्पटादिप्रत्ययवत् । तथा च सूत्रम् "अपरस्मिन्परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि" । आकाशवच्चास्यापि विभुत्वनित्यैकत्वादयो धर्माः प्रतिपत्तव्या[13] इति ।

अत्रोच्यते[14]—परापरादिप्रत्ययलिङ्गानुमेयः कालः किमेकद्रव्यमनेकद्रव्यं वा ? न तावदेकद्रव्यं मुख्येतरकालभेदेनास्य द्वैविध्यात् । न हि समयावलिकादिर्व्यवहारकालो[16] मुख्यकालद्रव्यमन्तरेणोपपद्यते यथा मुख्यसत्त्वमन्तरेण क्वचिदुपचरितं सत्त्वम् । स च मुख्यः कालोऽनेकद्रव्यं प्रत्याकाशप्रदेशं व्यवहारकालभेदान्यथानुपपत्तेः । प्रत्याकाशप्रदेशं विभिन्नोहि व्यवहारकालः कुरुक्षेत्रलङ्काकाशदेशयोर्दिवसादिभेदान्यथानुपपत्तेः । ततः प्रतिलोकाकाशप्रदेशं कालस्याणुरूपतया भेदसिद्धिः । तदुक्तं—"लोयायासपएसे एक्केक्के जे ठिया हु एक्केका । रयणाणं रासीविव ते कालाणू मुणेयव्वा । १ ।" यौगपद्यादिप्रत्ययाविशेषात्तस्यैकत्वमित्यप्यसत्तत्प्रत्ययाविशेषासिद्धेः । तेषां परस्परं विशिष्टत्वात्कालस्याप्यतो विशिष्टत्वसिद्धिः । सहकारिणामेव विशिष्टत्वं न कालस्येत्यप्यनुत्तरं स्वरूपमभेदयतां सहकारित्वप्रतिक्षेपात् । यदि चास्य निरवयवैकद्रव्यरूपताभ्युपगम्यते कथं तर्ह्यतीतादिकालव्यवहारः ? स हि किमतीताद्यर्थक्रियासम्बन्धात्स्वतो वा स्यात् ? अतीताद्यर्थक्रियासम्बन्धाच्चेत्कुतस्तासामतीतादित्वम् ? अपरातीताद्यर्थक्रियासम्बन्धाच्चेदनवस्था । अतीतादिकालसम्बन्धाच्चेदन्योन्याश्रयः । स्वतस्तस्यातीतादिरूपता

---

१ आदिपदेन यौगपद्यायोगपद्यचिरक्षिप्रादिग्रह ॥ २ वस ॥ ३ तर्ह्येते प्रलया अविशिष्टनिमित्तका भविष्यन्तीत्युक्ते सत्याह ॥ ४ घटे सत्येव प्रसिद्धा ॥ ५ कथम् ? तथा हि ॥ ६ प्रलर्थे ॥ ७ सन्निहितदिग्देशे ॥ ८ कालापेक्षया दूरत्वम् ॥ ९ कालापेक्षया सन्निहितत्वम् ॥ १० कालद्रव्यम् ॥ ११ कालद्रव्य विनाऽन्यनिमित्त परापरादिप्रलयस्य भविष्यतीत्याशङ्कायामाह ॥ १२ प्रलय =प्रतीति ॥ १३ जैनादिभि ॥ १४ जैनै ॥ १५ व्यवहार ॥ १६ आदिना लवनिमेषघटिकामुहूर्त्तप्रहरादिग्रहणम् ॥ १७ अन्यादेरस्तित्वम् ॥ १८ माणवके ॥ १९ अग्ने ॥ २० कालपरमाणुलक्षणम् ॥ २१ मुख्यकालद्रव्यानेकत्वाभावे ॥ २२ हेतुरसिद्ध इत्युक्ते सत्याह ॥ २३ चन्द्रार्कादिदक्षिणायनोत्तरायणयो सतो ॥ २४ लोकाकाशप्रदेशे एकैके ये स्थिता खलु एकैके । रत्नाना राशिरिव ते कालाणवो ज्ञातव्या ॥ २५ सिद्धे हि क्रियाणामतीतादित्वे तत्सम्बन्धात्कालस्यातीतादित्वसिद्धिस्तत्सिद्धौ च तत्सम्बन्धात्तासा तत्सिद्धिरिति ॥

चायुक्ता निरंशत्वभेदरूपत्वयोर्विरोधात्[1]। यौगपद्यादिप्रत्ययाभावश्चैवंवादिनः स्यात् । तथा हि । यत्कार्यजातमेकस्मिन्काले[2] कृतं तद्युगपत्कृतमित्युच्यते । कालैकत्वे[3] चाखिलकार्याणामेककालोत्पाद्यत्वेनैकदैवोत्पत्तिप्रसङ्गान्न किञ्चिदयुगपत्कृतं स्यात्[4] । चिरक्षिप्रव्यवहाराभावश्चैवंवादिनः । यत्खलु बहुना कालेन कृतं तच्चिरेण कृतम् । यच्च स्वल्पेन कृतं तत्क्षिप्रं कृतमित्युच्यते । तच्चैतदुभयं कालैकत्वे दुर्घटम् । ननु चैकत्वेपि कालस्योपाधिभेदाद्भेदोपपत्तेर्न यौगपद्यादिप्रत्ययाभावः । तदुक्तं "मणिवत्[5]पावकवद्वोपाधिभेदात्कालभेदः" इति । तदप्ययुक्तं यतोऽत्रोपाधिभेदः कार्यभेद एव । स च युगपत्कृतमित्यत्राप्यस्त्येवेति किमित्ययुगपत्प्रत्ययो न स्यात्[6]? अथ क्रमभावी कार्यभेदः कालभेदव्यवहारहेतुः । ननु कोस्य क्रमभावः? युगपदनुत्पादश्चेद्युगपदनुत्पाद इत्यस्य भाषितस्य कोर्थः? एकस्मिन्कालेऽनुत्पादः[7]? सोयमितरेतराश्रयः । यावद्धि कालस्य भेदो न सिद्ध्यति न तावत्कार्याणां भिन्नकालोत्पादलक्षणः क्रमः सिध्यति । यावच्च कार्याणां क्रमभावो न सिध्यति न तावत्कालस्योपाधिभेदाद्भेदः सिध्यतीति । ततः प्रतिक्षणं क्षणपर्यायः कालो भिन्नस्तत्समुदायात्मको लवनिमेषादिकालश्च । तथा चैककालमिदं चिरोत्पन्नमनन्तरोत्पन्नमित्येवमादिव्यवहारः स्यादुपपन्नो, नान्यथा । एतेन परापरव्यतिकरः कालैकत्वे प्रत्युक्तः । तथा हि । भूम्यवयवैरालोकावयवैर्वा बहुभिरन्तरितं वस्तु विप्रकृष्टं परमिति चोच्यते स्वल्पैस्त्वन्तरितं सन्निकृष्टमपरमिति च । तथा बहुभिः क्षणैरहोरात्रादिभिर्वान्तरितं विप्रकृष्टं परमिति चोच्यते स्वल्पैस्त्वन्तरितं सन्निकृष्टमपरमिति च । बह्वल्पभावश्च गुरुत्वपरिमाणादिवदपेक्षानिबन्धनः कालैकत्वे दुर्घट इति यौगपद्यादिप्रत्ययाविशेषात् । कालस्यैकत्वे च गुरुत्वपरिमाणादेरप्येकत्वप्रसङ्गस्तुल्याक्षेपसमाधानत्वात् । ततो गुरुत्वपरिमाणादेरनेकगुणरूपतावत्कालस्यानेकद्रव्यरूपताभ्युपगन्तव्या । ये तु वास्तवं कालद्रव्यं नाभ्युपगच्छन्ति तेषां परापरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययानामभावः स्यात् । न खलु ते निर्निमित्ताः कादाचित्कत्वाद्घटादिवत् । नाप्यविशिष्टनिमित्ता विशिष्टप्रत्ययत्वात् । न च दिग्गुणजातिनिमित्तास्ते तज्जातप्रत्ययवैलक्षण्येनोपपत्तेः । तथा हि । अपरदिग्व्यवस्थितेऽप्रशस्तेऽधर्मजातीये स्थविरपिण्डे परोयमिति

---

१ निरंशस्य कालस्यातीतत्ववर्तमानत्वभविष्यत्त्वलक्षणधर्माणां सद्भावो न घटते इति भाव ॥ २ कार्यसमूह ॥ ३ कालस्य निरंशकलादिरूपत्वे ॥ ४ अयौगपद्याभावे तदपेक्षया जायमानस्य यौगपद्यस्याप्यभाव इति भाव ॥ ५ यथा स्फटिकमणौ पावके च यथाक्रम जपाकुसुमादिसादिरादिलक्षणोपाधिभेदाद्भेदस्तथा कायलक्षणोपाधिभेदाद्भेद कालस्यापीत्यर्थ ॥ ततश्च व्यतिकरो न स्यादिति भाव ॥ ६ कालक्रमेणोत्पाद इत्यर्थ ॥ ७ कालस्यैकत्वे यौगपद्याभावो यत ॥ ८ वस ॥ ९ विपर्यय ॥ १० कालस्य ॥ ११ असाद्य गुरुरस्माल्लघुरिति व्यवहारो वस्तुन एकत्वे दुर्घटो यथा ॥ १२ स्वपरापेक्षा ॥ १३ गुरुत्वादिप्रत्ययाविशेषात् ॥ १४ अल्पपरिमाणस्यापि ॥ १५ गुरुत्वपरिमाणमल्पत्वपरिमाण च प्रतिपदार्थं भिद्येत इत्याक्षेप । समाधान–तर्हि यौगपद्यादिप्रत्ययोपि प्रतिपदार्थं भिद्यते इति समानम् ॥ १६ नित्यनिरंशैकद्रव्यरूपत्वे चार्थाना भूतभविष्यद्वर्तमानत्व दुर्घटमतीतानागतवर्तमानकालभेदाभावात् । सिद्धे हि तद्भेदे तत्सम्बन्धादर्थाना तथा व्यपदेश स्यान्नान्यथातिप्रसङ्गात् । न चास्य तत्सिद्धिर्घटते नित्यनिरंशैकरूपत्वात् । यदेवविधं न तत्रातीतादिस्वरूपभेदा । यथा परमाणौ । नित्यनिरंशैकरूपश्च भवद्भि परिकल्पित काल ॥ १७ मीमासकसौगतद्राविडा ॥ १८ किंतु काललक्षणकारणोत्पाद्या इत्यर्थ ॥ १९ अविशिष्ट=साधारणम् ॥ २० परप्रत्यय, अपरप्रत्यय इत्यादिरूपेण ॥ २१ परापरादिप्रत्ययानाम् ॥ २२ निरुदिक् ॥ २३ गुणापेक्षया ॥ २४ मातङ्गादौ ॥

प्रत्ययो दृश्यते । परदिग्व्यवस्थिते चोत्तमजातीये प्रशस्ते यूनि पिण्डेऽपरोयमिति प्रत्ययो दृश्यते। अथादित्यादिक्रिया तन्निमित्तम् । जन्मनो हि प्रभृत्येकस्य प्राणिन आदित्यैर्[1]वर्तनानि भूयांसीति परत्वमन्यस्य चाल्पीयांसीत्यपरत्वम् । नन्वेवं कथं यौगपद्यादिप्रत्ययप्रादुर्भाव एकस्मिन्नेवादित्यपरिवर्त्तने सर्वेषामुत्पादात्, तथा व्यपदेशाभावाच्च[3] । युगपत्काल इति हि व्यपदेशो न पुनर्युगपदादित्यपरिवर्त्तनमिति[4] । न[5] च क्रियैव कालोस्याः क्रियारूपतयाऽविशेषा[6]त्तो युगपदादिप्रत्ययाभावानुषङ्गात् । तस्य चोक्तकार्यनिर्वर्त्तकस्य कालस्य क्रियेति नामान्तरकरणे नाममात्रं भिद्येत । न[8] च कर्तृकर्मणी एव यौगपद्यादिप्रत्ययस्य निमित्तं यतो यौगपद्यं बहूनां कर्तृणां कार्ये व्यापारो युगपदेते कुर्वन्तीति प्रत्ययसमधिगम्यः । बहूनां च कार्याणामात्मलाभो युगपदेतानि कृतानीति–प्रत्ययसमधिगम्यः । न चात्र कर्तृमात्रं कार्यमात्रं वालम्बनमतिप्रसङ्गात्[11] । यत्र हि क्रमेण कार्यं तत्रापि कर्तृकर्मणोः सद्भावात्स्यादेतद्विज्ञानम् । न चैवम् । यथाऽयौगपद्यप्रत्ययोप्ययुगपदेते कुर्वन्तीति, अयुगपदेतत्कृतमिति नाविशिष्टं कर्तृकर्ममात्रमालम्बतेऽतिप्रसङ्गादेव । अतस्[12]तद्विशेषणं कालोऽभ्युपगन्तव्यः । कथमन्यथा चिरक्षिप्रव्यवहारोपि स्यात्? एक एव हि कर्त्ता किञ्चित्कार्यं चिरेण करोति व्यासङ्गादनर्थित्वाद्वा, किञ्चित्तु क्षिप्रमर्थितया । तत्र चिरेण कृतं क्षिप्रं कृतमिति प्रत्ययौ विशिष्टत्वाद्विशिष्टं निमित्तमाक्षिपत इति कालसिद्धिः । लोकव्यवहाराच्च । प्रतीयन्ते हि प्रतिनियत एव काले प्रतिनियता वनस्पतयः पुष्यन्तीत्यादिव्यवहारं कुर्वन्तो व्यवहारिणः[13] । यथा वसन्तसमये एव पाटलादिकुसुमानामुद्भवो, न कालान्तरे । इत्येवं कार्यान्तरेष्व[14]प्यभ्यूह्यम् । प्रसवनकालमपेक्षते इति व्यवहारात् समयमुहूर्त्तयामाहोरात्रार्द्धमासर्त्वयनसंवत्सरादिव्यवहाराच्च तत्सिद्धिः । तत्र परपरिकल्पितं कालद्रव्यमपि घटते ।

नापि दिग्द्रव्यं तत्सद्भावे प्रमाणाभावात् । यच्च दिशः सद्भावे प्रमाणमुक्तं–मूर्तेष्वेव द्रव्येषु मूर्त्तद्रव्यमवधिं कृत्वेदमतः पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेणाऽपरोत्तरेणोत्तरपूर्वेणाधस्तादुपरिष्टादित्यमी दश प्रत्यया यतो भवन्ति सा दिगिति । तथा च सूत्रम् "अत इदमिति[15] यतस्तद्दिशो लिङ्गम्" । तथा[16] च दिग्द्रव्यमितरेभ्यो भिद्यते दिगिति व्यवहर्त्तव्यं पूर्वादिप्रत्ययलिङ्गत्वात्[17] । यत्तु न तथा न तत्पूर्वादिप्रत्ययलिङ्गम् । यथा क्षित्यादि । तथा चेदम् । तस्मात्तथेति । न चैते प्रत्यया निर्निमित्ताः कादाचित्कत्वात्[18] । नाप्यविशिष्ट[19]निमित्ता विशिष्टप्रत्ययत्वाद्दण्डीति-

१ अतद्गुणसविज्ञानोय वस । यौगपद्यमादिर्येषामयौगपद्यादीना ते यौगपद्यादय इति । तेनायोगपद्यादिप्रत्ययप्रादुर्भाव कथमित्यर्थ सपन्न ॥ २ युगपदादित्यपरिवर्तनमिति ॥ ३ अमुना हेतुना यौगपद्यस्याभाव कृत ॥ ४ कालव्यतिरिक्तस्य निमित्तस्य यौगपद्यादिप्रत्यये विचार्यमाणस्यानुपपद्यमानत्वात्तदादित्यपरिवर्तन स्यात्क्रियाविशेषो वा ? न तावदादित्यपरिवर्तनमेकस्मिन्नप्यादित्यपरिवर्तने सर्वेषामुत्पादादिति । अस्य परिवर्तन मेरुप्रादक्षिण्येन परिभ्रमणमहोरात्रमभिधीयते । तस्मिन्नेकस्मिन्नपि यौगपद्यादिप्रतीतिविषयभूतार्थानामुत्पाद प्रतीयते एव तथा व्यपदेशाभावाचेति ॥ ५ क्रिया कालो भविष्यतीत्याह ॥ ६ कालरूपतया यौगपद्यादिप्रत्ययो, न पुन क्रियारूपतया ॥ ७ भेदाभावत ॥ ८ तर्हि कर्तृकर्मणी यौगपद्यादिप्रत्ययस्य निमित्त भविष्यतीत्युक्ते सत्याह ॥ ९ यौगपद्यम् ॥ १० यौगपद्यप्रत्यये ॥ ११ विषय , कारणमित्यर्थ ॥ १२ युगपदेते कुर्वन्ति युगपदेतानि कृतानीति तयो- कर्तृकर्मणो ॥ १३ पुरुषा ॥ १४ पुत्रोत्पत्त्यादिलक्षणेषु ॥ १५ ज्ञान भवतीति शेष ॥ १६ लिङ्गसिद्धौ ॥ १७ वस ॥ १८ पटादिवत् ॥ १९ साधारणाऽऽकाशादिकारणका न भवन्तीति भाव ॥

प्रत्ययवत् । न चान्योन्यापेक्षमूर्तद्रव्यनिमित्ताः परस्पराश्रयत्वेनोभयप्रत्ययाभावानुषङ्गात् । ततोऽन्यनिमित्तोत्पाद्यत्वासम्भवादेते दिश एवानुमापकाः । प्रयोगः । यदेतत्पूर्वापरादिज्ञानं तन्मूर्तद्रव्यव्यतिरिक्तपदार्थनिबन्धनं तत्प्रत्ययविलक्षणत्वात्सुखादिप्रत्ययवत् । विभुत्वैकत्वनित्यत्वादयश्चास्या धर्माः कालवदवगन्तव्याः । तस्याश्चैकत्वेपि प्राच्यादिभेदव्यवहारो भगवतः सवितुर्मेरुं प्रदक्षिणमावर्त्तमानस्य लोकपालगृहीतदिक्प्रदेशैः संयोगाद्धटते । तदप्यसमीचीनं प्रोक्तप्रत्ययानामाकाशहेतुकत्वेनाकाशाद्दिशोऽर्थान्तरत्वासिद्धेः । तत्प्रदेशश्रेणिष्वेव ह्यादित्योदयादिवशात्प्राच्यादिदिग्व्यवहारोपपत्तेर्न तेषां निर्हेतुकत्वं नाप्यविशिष्टपदार्थहेतुकत्वम् । तथाभूतप्राच्यादिदिक्संबन्धाच्च । मूर्तद्रव्येषु पूर्वापरादिप्रत्ययविशेषस्योत्पत्तेर्न परस्परापेक्षया मूर्त्तद्रव्याण्येव तद्धेतवो येनैकतरस्य पूर्वत्वासिद्धावन्यतरस्यापरत्वासिद्धिः । तदसिद्धौ चैकतरस्य पूर्वत्वायोगादितरेतराश्रयत्वेनोभयाभावः स्यात् । नन्वेवमाकाशप्रदेशश्रेणिष्वपि कुतस्तत्सिद्धिः? स्वरूपत एव तत्सिद्धौ तस्य परावृत्त्यभावप्रसङ्गः । अन्योन्यापेक्षया तत्सिद्धावन्योन्याश्रयणादुभयाभावस्तदेतद्दिक्प्रदेशेष्वपि पूर्वापरादिप्रत्ययोत्पत्तौ समानम् । यथैव हि मूर्त्तद्रव्यमवधिं कृत्वा मूर्त्तेष्वेवेदमतः पूर्वेणेत्यादिप्रत्यया दिग्द्रव्यहेतुकास्तथा दिग्भेदमवधिं कृत्वा दिग्भेदेष्वेवेयमतः पूर्वेत्यादिप्रत्यया द्रव्यान्तरहेतुकाः सन्तु विशिष्टप्रत्ययत्वाविशेषात् । तथा चानवस्था परस्परापेक्षया तत्सिद्धावितरेतराश्रयणादुभयाभावः । स्वरूपतस्तत्प्रत्ययप्रसिद्धौ तेनैवानेकान्तात् कुतो दिग्द्रव्यसिद्धिस्तत्प्रत्ययपरावृत्यभावश्चानुपज्यः । सवितुर्मेरुं प्रदक्षिणमावर्त्तमानस्येत्यादिन्यायेन दिग्द्रव्ये प्राच्यादिव्यवहारोपपत्तौ तत्प्रदेशपङ्क्तिष्वप्यत एव तद्व्यवहारोपपत्तेरलं दिग्द्रव्यकल्पनया देशद्रव्यस्यापि कल्पनाप्रसङ्गात् । अयमतः पूर्वो देश इत्यादिप्रत्ययस्य देशद्रव्यमन्तरेणानुपपत्तेः । पृथिव्यादिरेव देशद्रव्यमित्यसत्तत्र पृथिव्यादिप्रत्ययोत्पत्तेः । पूर्वादिदिक्कृतः पृथिव्यादिषु पूर्वदेशादिप्रत्ययश्चेत्तर्हि पूर्वाद्याकाशकृतस्तत्रैव पूर्वादिदिक्प्रत्ययोस्त्वऽलं दिक्कल्पनाप्रयासेन । नन्वेवमादित्योदयादिवशादेवाकाशप्रदेशपङ्क्तिष्विव पृथिव्यादिष्वपि पूर्वापरादिप्रत्ययसिद्धेराकाशप्रदेशश्रेणिकल्पनाप्यनर्थिका भवत्विति चेन्न पूर्वस्यां

१ एकस्य वस्तुन पूर्वत्वसिद्धौ सत्या तदपेक्षया इतरस्यापरत्वसिद्धिरितरस्यापरत्वसिद्धौ सत्या च तदपेक्षयाऽपरत्वसिद्धि(प्रथमस्य पूर्वत्वसिद्धि)रिति ॥ २ नान्यस्याकाशादे ॥ ३ इन्द्रादि ॥ ४ आकाशस्यैकत्वादि-
व्यवहार कथ स्यादित्याह ॥ ५ आकाशप्रदेशलक्षण ॥ ६ पूर्वादे ॥ ७ पश्चिमादे ॥ ८ मूर्तद्रव्येषु पूर्वापरादिप्रत्ययविशेषोत्पत्तिप्रकारेण ॥ ९ तस्य=पूर्वापरत्वस्य ॥ १० पूर्वापरादे ॥ ११ परावृत्ति.=निवृत्ति ॥
१२ न च तथा पूर्वादिदिशामपि कस्यचिद्देशस्यापेक्षया पश्चिमादिव्यपदेशोस्ति ॥ १३ पूर्वापेक्षयाऽपर , अपरापेक्षया पूर्व इति ॥ १४ चोद्यम् ॥ १५ भवन्मते ॥ १६ दिक्षु ॥ १७ दिश सकाशात् ॥ १८ जैनमते ॥
१९ अन्या दिग्द्रव्यापेक्षयाऽनवस्था तत्रापि तत्प्रत्ययहेतुत्वस्यापरदिग्द्रव्यहेतुत्वप्रसङ्गात् ॥ २० दिग्भेदेषु दिग्द्रव्यव्यतिरिक्तद्रव्यान्तराभावेपि पूर्वापरादिप्रत्ययस्य स्वतो जायमानत्वात् ॥ २१ पूर्वापरेति ॥ २२ पूर्वापरा-
दिप्रत्ययेन ॥ २३ तत्प्रत्ययविलक्षणत्वादिलस्य हेतो ॥ २४ दिग्द्रव्य पूर्वापरादिप्रत्ययस्य कारण न भवतीति भाव ॥ २५ पूर्वापर ॥ २६ तस्य=आकाशस्य ॥ २७ प्राच्यादि ॥ २८ तथा च नव द्रव्याणीति
द्रव्यसंख्याव्याघात स्यात् ॥ २९ तस्य पृथिव्यादिप्रत्ययहेतुत्वेनायमत पूर्वो देश इति प्रत्ययहेतुत्वाऽनुपपत्ते ॥

दिशि पृथिव्यादय इत्याद्याधाराधेयव्यवहारोपलम्भात्पृथिव्याद्यधिकरणभूतायास्तत्प्रदेशपङ्क्तेः परिकल्पनस्य सार्थकत्वात् । आकाशस्य च प्रमाणान्तरतः प्रसाधितत्वात् । तन्न परपरिकल्पितं दिग्द्रव्यमप्युपपद्यते ।

नाप्यात्मद्रव्यम् । तद्धि सर्वगतत्वादिधर्मोपेतं परैरभ्युपेयते । न चास्य तदुपेतत्वमुपपद्यते प्रत्यक्षविरोधात् । प्रत्यक्षेण ह्यात्मा सुख्यहं दुःख्यहं घटादिकमहं वेद्मीत्यहमहमिकया स्वदेह एव सुखादिस्वभावतया प्रतीयते, न देहान्तरे परसम्बन्धिनि, नाप्यन्तराले । इतरथा सर्वस्य सर्वत्र तथा प्रतीतिरिति सर्वदर्शित्वं भोजनादिव्यवहारसङ्करश्च स्यात् । अनुमानविरोधाच्चास्य तद्धर्मोपेतत्वायोगः । तथा हि । नात्मा परममहापरिमाणाधिकरणो द्रव्यान्तराऽसाधारणसामान्यवत्त्वे सत्यनेकत्वाद्घटादिवत् । अनेकत्वादित्युच्यमाने हि सामान्येनानेकान्तस्तत्परिहारार्थं सामान्यवत्त्वे सतीति विशेषणम् । तथाकाशादिना व्यभिचारस्तत्परिहारार्थं द्रव्यान्तरासाधारणसामान्यवत्त्वे सतीत्युच्यते । एकस्माद्धि द्रव्यादन्यद्द्रव्यं द्रव्यान्तरम् । तदसाधारणसामान्यवत्त्वे सत्यनेकत्वमाकाशादौ नास्तीति । अत एव परममहापरिमाणलक्षणगुणेनापि नानेकान्तः । तथा नात्मा तत्परिमाणाधिकरणो दिक्कालाकाशान्यत्वे सति द्रव्यत्वाद्घटादिवत् । न सामान्येन परममहापरिमाणेन वानेकान्तस्तयोरद्रव्यत्वात् । नापि दिगादिना तदन्यत्वे सतीति विशेषणात् । तथा नात्मा तत्परिमाणाधिकरणः क्रियावत्त्वाद्घ्राणादिवत् । न चेदमसिद्धं योजनमहमागतः क्रोशं वेत्यादिप्रतीतितस्तत्सिद्धेः । न च मनः शरीरं वागतमित्यभिधातव्यं तस्याहंप्रत्ययाऽवेद्यत्वात् । अन्यथा चार्वाकमतप्रसङ्गः स्यात् । प्रसाधयिष्यते चाग्रे विस्तरतोस्य क्रियावत्त्वमित्यलमतिप्रसङ्गेन । तथात्माऽणुपरममहत्त्वपरिमाणानधिकरणश्चेतनत्वात् । ये तु तत्परिमाणाधिकरणा न ते चेतनाः । यथाकाशपरमाण्वादयः । चेतनश्चात्मा । तस्मान्न तत्परिमाणाधिकरण इति । ननु चात्मा परममहापरिमाणाधिकरणो न भवतीति प्रतिज्ञाऽनुमानवाधिता । तच्चानुमानम्—आत्मा व्यापकोऽणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वादाकाशवत् । अणुपरिमाणानधिकरणोसावस्मदादिप्रत्यक्षविशेषगुणाधिकरणत्वाद्घटादिवत् । तथा नित्यद्रव्यमात्माऽस्पर्शवद्द्रव्यत्वादाकाशवदेवेति । अत्रोच्यते । अणुपरिमाणप्रतिषेधोत्र पर्युदासः प्रसज्यो वाभिप्रेतः? यदि पर्युदासस्तदासौ भावान्तरस्वीकारेण प्रवर्त्तते । भावान्तरं च किं परममहापरिमाणमवान्तरपरिमाणं वा स्यात्? प्रथमपक्षे साध्याविशिष्टत्वं हेतुविशेषणस्य ।

---

१ व्योम ॥ २ निखिलद्रव्यावगाहान्यथानुपपत्ते ॥ ३ आत्मन सर्वैरात्मभि सम्बन्धात् ॥ ४ गोलाऽश्वलमहिषत्वादिना ॥ ५ सामान्यवत्त्वादित्युच्यमाने ॥ ६ यतो द्रव्यत्व सत्त्व वा सामान्यमाकाशादिषु ॥ ७ आत्मलक्षणात् ॥ ८ आकाशम् ॥ ९ गुणत्व सामान्यसद्भावादनेकत्वाभावाच्च ॥ १० तत्—परममहत् ॥ ११ अत्रैवात्मसर्वगतत्वादिनिराकरणे ॥ १२ कालात्ययापदिष्टेन हेतुना ॥ १३ परमाणुभिरनेकान्तपरिहारार्थमेतत् । परमाणुषु नित्यत्वमस्ति व्यापकत्व च नास्तीति भाव ॥ १४ हेतोर्विशेषणसमर्थनार्थमेतत् ॥ १५ योगिप्रत्यक्षविशेषगुणाधिकरणै परमाणुभिर्व्यभिचारस्तत्परिहारार्थमस्मदादिपदम् ॥ १६ प्रत्यक्षाश्च ते विशेषगुणाश्च तेषामधिकरणम् ॥ १७ हेतोर्विशेष्यदलसमर्थनार्थम् ॥ १८ क्रिययाऽनेकान्तपरिहारार्थ द्रव्येति ॥ १९ हेतोर्विशेषणं निरस्यति जैन ॥ २० साध्यसमत्वम् । महापरिमाणस्यार्थो हि व्यापकत्वम् । एव सति आत्मा व्यापक व्यापकत्वादित्यायात महापरिमाणव्यापकत्वयो समानार्थत्वात् ॥

यथाऽनित्यः शब्दोऽनित्यत्वे सति बाह्येन्द्रियप्रत्यक्षत्वादिति । द्वितीयपक्षे तु विरुद्धत्वं यथा नित्यः शब्दोऽनित्यत्वे सति बाह्येन्द्रियप्रत्यक्षत्वादिति । प्रसज्यपक्षेप्यसिद्धत्वं तुच्छस्वभावाभावस्य प्रमाणाविषयत्वेन प्रतिपादनात् । सिद्धौ वा किमसौ साध्यस्य स्वभावः कार्यं वा? यदि स्वभावस्तर्हि साध्यस्यापि तद्वत्तुच्छरूपतानुषङ्गः । अथ कार्यं, तन्न–तुच्छस्वभावाभावस्य कार्यत्वायोगात् । कार्यत्वं हि किं स्वकारणसत्तासमवायः कृतमिति बुद्धिविषयत्वं वा? न तावदाद्यः पक्षोऽभावस्य स्वकारणसत्तासमवायानभ्युपगमात् । अन्यथा भावरूपतैवास्य स्यात् । नापि द्वितीयस्तुच्छस्वभावाभावस्य तद्विषयत्वासम्भवात् । तस्य हि प्रमाणागोचरत्वे कथं कृतबुद्धिविषयत्वं सम्भवेत्? अनैकान्तिकं चैतत् खननोत्सेचनानन्तरमकार्येप्याकाशे कृतबुद्धिविषयत्वसम्भवात् । नित्यद्रव्यत्वं च किं कथञ्चित्सर्वथा वा विवक्षितम्? कथञ्चिच्चेद्घटादिनानेकान्तस्तस्याणुपरिमाणानधिकरणत्वे कथञ्चिन्नित्यद्रव्यत्वे च सत्यपि व्यापित्वाभावात् । सर्वथा चेदसिद्धत्वं सर्वथा नित्यस्य वस्तुनोऽनर्थक्रियाकारित्वेनाश्वविषाणप्रख्यत्वप्रतिपादनात् । अस्मदादिप्रत्यक्षविशेषगुणाधिकरणत्वाच्चाणुपरिमाणप्रतिषेधमात्रमेव स्याद्घटादिवत् । तस्य चेष्टत्वात्सिद्धसाध्यता । असर्वगद्रव्यत्वाच्चात्मनो यदि कथञ्चिन्नित्यत्वं साध्यते तदा सिद्धसाध्यता । अथ सर्वथा तर्हि हेतोरनन्वयत्वमाकाशादीनामपि सर्वथा नित्यत्वस्य प्रतिषिद्धत्वात् । ननु देहान्तरे परसम्बन्धिन्यन्तराले चात्मा न प्रतीयते इत्ययुक्तमुक्तमनुमानात्तत्रास्य सद्भावप्रतीतेः । तथा हि । देवदत्ताङ्गनाद्यङ्गं देवदत्तगुणपूर्वकं कार्यत्वे तदुपकारकत्वाद्ग्रासादिवत् । कार्यदेशे च सन्निहितं कारणं तज्जन्मनि व्याप्रियते नान्यथा । अतस्तदङ्गादिकार्यप्रादुर्भावदेशे तत्कारणवत्तद्गुणसिद्धिः । यत्र च गुणाः प्रतीयन्ते तत्र तद्गुण्यप्यनुमीयते एव तमन्तरेण तेषामसम्भवात् । इत्यप्यसाम्प्रतं यतो देवदत्ताङ्गनाद्यङ्गादिकार्यस्य कारणत्वेनाभिप्रेता ज्ञानदर्शनादयो देवदत्तात्मगुणा धर्माधर्मौ वा? न तावज्ज्ञानदर्शनसुखादयः स्वसंवेदनस्वभावास्तज्जन्मनि व्याप्रियमाणाः प्रतीयन्ते । वीर्यं तु शक्तिः । सापि तद्देह एवानुमीयते तत्रैव तल्लिङ्गभूतक्रियायाः प्रतीतेः । तज्ज्ञानादेस्तद्देह एव तत्कार्यकारणविमुखस्याध्यक्षादिना प्रतीतेस्तद्बाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टः कार्यत्वे सति तदुपकारकत्वादिति हेतुः । अथ धर्माधर्मौ तदङ्गादिकार्यं तन्निमित्तमस्माभिरपीष्यते एव । तदात्मगुणत्वं तु तयोरसिद्धम् । तथा हि । न धर्माधर्मावात्मगुणावऽचेतनत्वाच्छब्दादिवत् । न सुखादिना व्यभिचारोत्र हेतोरवर्त्तनात् तद्विरुद्धेन स्वसंवेदनलक्षणचैतन्येनास्याऽव्याप्तत्वासाधनात् । नाप्यसिद्धताऽचेतनौ तौ स्वग्रहणविधुरत्वात्पटादिवत् । न च बुद्ध्यास्य व्यभिचारोऽस्याः स्वग्रहणात्मकत्वप्रसाधनात् । प्रसाधितं च पौद्गलिकत्वं कर्मणा सर्वज्ञसिद्धि-

१ व्यापकत्वविशिष्टस्यात्मन ॥ २ हेतोर्विशेष्य निरस्यति ॥ ३ न तु परममहापरिमाणमवान्तरपरिमाण वा सिध्येत् ॥ ४ तथाविधसाध्येन व्याप्तस्य हेतोर्दृष्टान्ते सत्त्व नास्तीति भाव ॥ ५ महेश्वरेणानेकान्तपरिहारार्थं त मेत् ॥ ६ व्याघ्रादिना व्यभिचारपरिहारार्थं तदुपकारकेति ॥ ७ लिङ्ग–ज्ञापकम् ॥ ८ भारवाहादिकाया ॥ ९ देवदत्ताङ्गनाद्यङ्गादि ॥ १० वीर्यानुमान ॥ ११ पक्ष ॥ १२ वम ॥ १३ धर्माधर्मरूपाणाम् ॥

प्रस्तावे तदलमतिप्रसङ्गेन । तदेवं धर्माधर्मयोस्तदात्मगुणत्वनिषेधात्तन्निषेधानुमानबाधितमेतद्देवदत्ताङ्गनाद्यङ्गं देवदत्तगुणपूर्वकमिति । अस्तु वा तयोर्गुणत्वं तथापि न तदङ्गनाङ्गादिप्रादुर्भावदेशे तत्सद्भावसिद्धिः । न खलु सर्वं कारणं कार्यदेशे सदेव तज्जन्मनि व्याप्रियते–अञ्जनतिलकमन्त्राऽयस्कान्तादेराकृष्यमाणाङ्गनादिदेशेऽसतोप्याकर्षणादिकार्यकर्तृत्वोपलम्भात् । कार्यत्वे सतीति च विशेषणमनर्थकम् । यदि हि तद्गुणपूर्वकत्वाभावेपि तदुपकारकत्वं दृष्टं स्यात् तदा कार्यत्वे सतीति विशेषणं युज्येत–सति सम्भवे व्यभिचारे च विशेषणमुपादीयमानमर्थवद्भवतीति न्यायात् । कालेश्वरादौ दृष्टमिति चेत्तर्हि कालेश्वरादिकमतद्गुणपूर्वकमपि यदि तदुपकारकं, कार्यमपि किञ्चिदन्यपूर्वकमपि तदुपकारकं भविष्यतीति सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिको हेतुः क्वचित्सर्वज्ञत्वाभावे साध्ये वागादिवत् । न च नित्यैकस्वभावात्कालेश्वरादेः कस्यचिदुपकारः सम्भवतीत्युक्तम् । न च नकुलशरीरप्रध्वंसाभावोऽहेरुपकारकोस्ति तस्मिन्सति सुखावासभ्रमणादिभावादतः सोपि तद्गुणपूर्वकः स्यात् । तथा च कार्यत्वासम्भवेन सविशेषणस्य हेतोरवर्त्तमानाद्भागासिद्धो हेतुः । प्रत्युक्तं चाभावस्यानन्तरमेव कार्यत्वम् । अथाऽतद्गुणपूर्वकोऽन्यदप्यतद्गुणपूर्वकमपि तदुपकारकं किन्न स्यात्? साध्यविकलं चेदं निदर्शनं ग्रासादिवदिति । तत्र ह्यात्मनः को गुणो धर्मादिः प्रयत्नो वा स्यात्? धर्मादिश्चेत् साध्यवत्प्रसङ्गः । प्रयत्नश्चेत्कोयं प्रयत्नो नामाऽऽत्मनस्तदवयवाना वा हस्ताद्यवयवप्रविष्टानां परिस्पन्दः? स तर्हि चलनलक्षणा क्रिया कथं गुणोऽन्यथा गमनादेरपि गुणत्वानुषङ्गात्क्रियावार्त्तोच्छेदः । तथा चायुक्तं क्रियावत्त्वं द्रव्यलक्षणम् । यदप्युक्तम् 'अदृष्टं स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभते एकद्रव्यत्वे सति क्रियाहेतुगुणत्वात्प्रयत्नवत् । न चास्य क्रियाहेतुत्वमसिद्धम् । तथा हि । अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्म देवदत्तविशेषगुणकारित कार्यत्वे सति तदुपकारकत्वात्पाण्यादिपरिस्पन्दवत् । नाप्येकद्रव्यत्वम् । तथा हि । एकद्रव्यमदृष्टं विशेषगुणत्वाच्छब्दवत् । एकद्रव्यगुणत्वादित्युच्यमाने रूपादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं क्रियाहेतुगुणत्वादिति विशेषणम् । क्रियाहेतुगुणत्वादित्युच्यमाने हस्तमुसलसंयोगेन स्वाश्रयासंयुक्तस्तम्भादिक्रियाहेतुनानेकान्तस्तन्निवृत्त्यर्थमेकद्रव्यत्वे सतीति । एकद्रव्यत्वे सति क्रियाहेतुत्वादित्युच्यमाने स्वाश्रयासंयुक्तलोहादिक्रियाहेतुनाऽयस्कान्तेनानेकान्तस्तत्परिहारार्थं गुणत्वादित्यु-

---

१ ततश्चाचेतनत्व कर्मणाम् ॥ २ कर्मणा पौद्गलिकत्वसमर्थनस्य ॥ ३ आदिना लोहादिदेशे ॥ ४ हेतोर्विपक्षे वृत्तिनिवृत्त्यर्थं हेतौ विशेषण योजयन्त्याचार्या इति वचनात् ॥ ५ विपक्षे ॥ ६ कुत्रचिन्निदर्शने ॥ ७ विशेष्यस्य ॥ ८ हेतो ॥ ९ अकार्यरूपे ॥ १० अकार्यत्वे सति तदुपकारकत्वम् ॥ ११ तस्य=देवदत्तादे ॥ १२ अभावस्य कार्यत्वासम्भवेन ॥ १३ अणुपरिमाणानधिकरणत्वस्य प्रसज्यपक्षे ॥ १४ देवदत्ताङ्गनाद्यङ्गमपि ॥ १५ साध्यमसिद्ध यथा तथा धर्मादिगुणत्वमप्यसिद्धम् ॥ १६ स्वाश्रय =आत्मा ॥ १७ द्वीपान्तरवर्तिपदार्थे ॥ १८ एकद्रव्यमात्मा । यस ॥ १९ यस ॥ २० आत्ममनसो सर्वथा भेदात् ॥ २१ अणुमनसो शरीरोत्पत्तिदेश प्रति गमनक्रिया ॥ २२ असिद्धमिति सबन्ध ॥ २३ पुद्गललक्षणैकद्रव्य रूप यत ॥ २४ क्रिया=हननलक्षणा ॥ २५ हस्तमुसलद्रव्यद्वयसद्भावात् । उलूखले धान्यादिके खण्ड्यमाने सति, दूरतोऽसयुक्तस्तम्भादि पततीति भाव ॥ २६ स्वाश्रयो=भूम्यादि ॥ २७ क्रिया=आकर्षणम् ॥ २८ भूम्यादौ स्थितोऽयस्कान्त ऊर्ध्वस्थितमसयुक्त लोहादिकमाकर्षतीति भाव ॥

कम् ।' तदेतदप्यविचारितरमणीयमदृष्टस्य गुणत्वप्रतिषेधात् । अतो विशेष्यासिद्धो हेतुर्विशेषणासिद्धश्चैकद्रव्यत्वाप्रसिद्धेः । तद्धि किमेकस्मिन्द्रव्ये संयुक्तत्वात्समवायेन वर्त्तमानादन्यतो वा स्यात् ? न तावत्संयुक्तत्वात्संयोगस्य गुणत्वेन द्रव्याश्रयत्वाददृष्टस्य चाद्रव्यत्वात् । अन्यथा गुणवत्त्वेनास्य द्रव्यत्वानुषङ्गात्क्रियाहेतुगुणत्वादित्येतद्विघटते । समवायेन वर्त्तनं च समवाये सिद्धे सिद्ध्येत् । स चासिद्धोऽग्रे निषेधात् । तृतीयपक्षस्त्वनभ्युपगमादेव न युक्तः । क्रियाहेतुत्वं चास्याऽनुपपन्नम् । तथा हि । देवदत्तशरीरसंयुक्तात्मप्रदेशे वर्त्तमानमदृष्टं द्वीपान्तरवर्त्तिषु मणिमुक्ताफलप्रवालादिषु देवदत्तं प्रत्युपसर्पणवत्सु क्रियाहेतुरुत द्वीपान्तरवर्त्तिद्रव्यसंयुक्तात्मप्रदेशे किं वा सर्वत्र ? तत्राद्यपक्षस्यानभ्युपगम एव श्रेयान्—अतिव्यवहितत्वेन द्वीपान्तरवर्त्तिद्रव्यैस्तस्यानभिसम्बन्धेन तत्र क्रियाहेतुत्वायोगात् । ननु स्वाश्रयसंयोगसम्बन्धसंभवात्तेषामनभिसम्बन्धोऽसिद्धः । अमुमेव ह्यात्मानमाश्रित्यादृष्टं वर्त्तते । तेन संयुक्तानि सर्वाण्यप्याकृष्यमाणद्रव्याणीत्यप्ययुक्तं—तस्य सर्वत्राविशेषेण सर्वस्याकर्षणानुषङ्गात् । अथ यददृष्टेन यज्जन्यते तददृष्टेन तदेवाकृष्यते, न सर्वं तर्हि देवदत्तशरीरारम्भकाणां परमाणूनां नित्यत्वेन तददृष्टाजन्यत्वात् कथं तददृष्टेनाकर्षणम् ? तथाप्याकर्षणेऽतिप्रसङ्गः। तन्नाद्यः पक्षो युक्तः । नापि द्वितीयः । तथा हि । यथा वायुः स्वयं देवदत्तं प्रत्युपसर्पणवानन्येषां तृणादीनां तं प्रत्युपसर्पणहेतुस्तथाऽदृष्टमपि तं प्रत्युपसर्पत्स्वयमन्येषां तं प्रत्युपसर्पतां हेतुः द्वीपान्तरवर्त्तिद्रव्यसंयुक्तात्मप्रदेशस्थमेव वा ? प्रथमपक्षे स्वयमेवादृष्टं तं प्रत्युपसर्पत्यदृष्टान्तराद्वा ? स्वयमेवास्य तं प्रत्युपसर्पणे द्वीपान्तरवर्त्तिद्रव्याणामपि तथैव तदित्यदृष्टपरिकल्पनमनर्थकम् । यद्देवदत्तं प्रत्युपसर्पति तद्देवदत्तगुणाकृष्टं तं प्रत्युपसर्पणादिति हेतुश्चानैकान्तिकः स्यात् । वायुवच्चादृष्टस्य सक्रियत्वं गुणत्वं बाधेत । शब्दवच्चापरापरस्योत्पत्तावपरमदृष्टं निमित्तकारणं वाच्यं, तत्राप्यपरमित्यनवस्था । अन्यथा शब्देऽप्यदृष्टस्य निमित्तत्वकल्पना न स्यात् । अदृष्टान्तरात्तस्य तं प्रत्युपसर्पणे तदप्यदृष्टान्तरं तं प्रत्युपसर्पत्यदृष्टान्तरात्तदपि तदन्तरादिति तदवस्थमनवस्थानम् । अथ द्वीपान्तरवर्त्तिद्रव्यसंयुक्तात्मप्रदेशस्थमेव तत्तेषां तं प्रत्युपसर्पणहेतुर्न—अन्यत्र प्रयत्नादावात्मगुणे तथानभ्युपगमात् । न खलु प्रयत्नो ग्रासादिसंयुक्तात्मप्रदेशस्थ एव हस्तादिसञ्चलनहेतुर्ग्रासादिकं देवदत्तमुखं प्रापयत्यन्तरालप्रयत्नवैफल्यप्रसङ्गात् । ननु प्रयत्नस्य विचित्रतोपलभ्यते । कश्चिद्धि प्रयत्नः स्वयमपरापरदेशवानन्यत्र क्रियाहेतुर्यथानन्तरोदितः । अन्यश्चान्यथा यथा शरासनाध्यासिपदसयुक्तात्मप्रदेशस्थ एव शरीरादीनां लक्ष्यप्रदेशप्रासि-

---

१ परस्य तव ॥ २ तस्याददृष्टस्याश्रय आत्मा तेन सयोग॰ ॥ ३ अदृष्टस्य ॥४ द्रव्याणाम् ॥ ५ अदृष्टेन सह ॥ ६ कथम् ? तथा हि ॥ ७ अनाकृष्यमाणेष्वपि ॥ ८ सयोगस्य ॥ ९ सर्वस्याप्याकर्षणप्रसङ्ग ॥ १० स्वयमुपसर्पताऽदृष्टेन ॥ ११ शब्दवदपरापरादृष्टस्योत्पत्ते कथ सक्रियत्वमित्याशङ्कायामाह ॥ १२ 'इति चेत्'इत्युपरिष्टाद्योज्यम् ॥ १३ हस्तादिगतात्मप्रदेशस्थ ॥ १४ येन प्रयत्नेन ग्रासो गृह्यते स प्रथम प्रयत्न । अन्तरालप्रयत्नस्तु येन ग्रासादिकमूर्ध्वं कृत्वा मुख प्रति नीयते स इति ॥ १५ य प्रयत्नो भिन्न भिन्न प्रदेश गृह्णातीत्यर्थं ॥ १६ ग्रासादौ ॥ १७ शरासनस्य धनुषोऽध्यास स्थितिस्तस्य पद स्थान हस्तरूप तत्र सयुक्तश्चासावात्मप्रदेशश्च तत्र तिष्ठतीति विग्रहवाक्यम् ॥

क्रियाहेतुरिति । सेयं चित्रता एकद्रव्याणां क्रियाहेतुगुणानां[1] स्वाश्रयसंयुक्तासंयुक्तद्रव्यक्रियाहेतुत्वेन किन्नेष्यते? विचित्रशक्तित्वाद्भावानाम् । दृश्यते हि भ्रामकाख्यस्यायस्कान्तस्य स्पर्शो गुण एकद्रव्यः स्वाश्रयसंयुक्तलोहद्रव्यक्रियाहेतुराकर्षकाख्यस्य तु स्वाश्रयासंयुक्तलोहद्रव्यक्रियाहेतुरिति । अथात्र द्रव्यं क्रियाहेतुर्न स्पर्शादिगुणः । कुत एतत्? द्रव्यरहितस्यास्य तद्धेतुत्वादर्शनाच्चेत्तर्हि वेगस्य[2] क्रियाहेतुत्वं क्रियायाश्च संयोगहेतुत्वं संयोगस्य[3] च द्रव्यहेतुत्वं न स्यात् । किन्तु द्रव्यमेवात्रापि[4] तत्कारणम् । ननु द्रव्यस्य तत्कारणत्वे वेगादिरहितस्यापि तत्स्यात्तर्हि स्पर्शस्य तदकारणत्वे तद्रहितस्यैवायस्कान्तादेस्तद्धेतुत्वं किन्न स्यात्? तथाविधस्यास्यादर्शनान्नेति चेत्तर्हि लोहद्रव्यक्रियोत्पत्तावुभयं दृश्यते उभयं कारणमस्तु विशेषाभावात् । तथा चैकद्रव्यत्वे सति क्रियाहेतुगुणत्वादित्यस्यानेकान्तः[10] । सर्वत्र[11] चादृष्टस्य वृत्तौ सर्वद्रव्यक्रियाहेतुत्वं स्यात् । यददृष्टं यद्द्रव्यमुत्पादयति तददृष्टं तत्रैव क्रियां करोतीत्यत्रापि शरीरारम्भकाणुषु क्रिया न स्यादित्युक्तम्[12] । अदृष्टस्य चाश्रय आत्मा । स च हर्षविषादादिविवर्तात्मको द्वीपान्तरवर्त्तिद्रव्यैर्वियुक्तमेवात्मानं स्वसंवेदनप्रत्यक्षतः प्रतिपद्यते इति प्रत्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टो हेतुः । तद्वियुक्तत्वेनाऽतस्तत्प्रतीतावप्यात्मनस्तद्द्रव्यैः संयोगाभ्युपगमे पटादीनां मेर्वादिभिस्तेषां वा पटादिभिः संयोगः किन्नेष्यते? यतः साङ्ख्यदर्शनं न स्यात्[13] । प्रमाणबाधनमुभयत्र[14] समानम् । किञ्च धर्माधर्मयोर्द्रव्यान्तरसंयोगस्य चात्मैक आश्रयः । स च भवन्मते निरंशः । तथा च धर्माधर्माभ्यां सर्वात्मनास्यालिङ्गिततनुत्वान्न तत्संयोगस्य तत्रावकाशस्तेन वा न तयोरिति । अथ धर्माधर्मालिङ्गिततत्स्वरूपपरिहारेण तत्संयोगस्तत्स्वरूपान्तरे वर्त्तते तर्हि घटादिवदात्मनः सावयवत्वं स्वारम्भकावयवारभ्यत्वमनित्यत्वं च स्यात् । एतेनैतन्निरस्तं[15]—देवदत्तं प्रत्युपसर्पन्तः पश्वादयो देवदत्तगुणाकृष्टास्तं प्रत्युपसर्पणवत्त्वाद्ग्रासादिवदिति । यथैव हि तद्विशेषगुणेन प्रयत्नाख्येन समाकृष्टास्तं प्रत्युपसर्पन्तः समुपलभ्यन्ते ग्रासादयस्तथा नयनाञ्जनादिना द्रव्यविशेषेणाप्याकृष्टाः स्त्र्यादयस्तं प्रत्युपसर्पन्तः समुपलभ्यन्ते एव । अतः किं प्रयत्नसधर्मणा[16] केनचिदाकृष्टाः पश्वादयः किं वाञ्जनादिसधर्मणेति[18] सन्देहः । शक्यं हि परेणाप्येवं[19] वक्तुं—विवादापन्नाः[20] पश्वादयोऽञ्जनादिसधर्मणा समाकृष्टास्तं प्रत्युपसर्पणवत्त्वात्स्त्र्यादिवत् । अथ तदभावेपि[21] प्रयत्नादपि तद्दृष्टेरनेकान्तस्तर्हि[22] प्रयत्नसधर्मणो गुणस्याभावेप्यञ्जनादेरपि तद्दृष्टेर्भवदीयहेतोरप्यनैकान्तिकत्वं[23] स्यात् । अत्रानुमीयमानस्य प्रयत्नसधर्मणो हेतुत्वादव्यभिचारेऽन्यत्राप्यञ्जनादिसध-[24]

---

१ अदृष्टलक्षणानाम् ॥ २ अवयवाश्रितस्य ॥ ३ अवयवेष्वेव ॥ ४ अवयवलक्षणतन्त्वाश्रितस्य संयोगस्य ॥ ५ अवयविलक्षणपटस्य ॥ ६ अवयविद्रव्यम् ॥ ७ क्रियासंयोगद्रव्येष्वेव ॥ ८ तस्य=क्रियाया संयोगस्य द्रव्यस्य च ॥ ९ सर्शायस्कान्तौ ॥ १० स्पर्शेन ॥ ११ 'किं वा सर्वत्र' इति तृतीयो विकल्पोयम् ॥ १२ पूर्वम् ॥ १३ सर्वं सर्वत्र विद्यते इति वचनात् ॥ १४ असदुक्ते भवदुक्ते च ॥ १५ द्रव्यस्यापि क्रियाहेतुत्वसमर्थनपरेण ग्रन्थेन एकद्रव्यत्वे सति क्रियाहेतुगुणत्वानुमाननिराकरणेन वा ॥ १६ प्रयत्नमदृशेनेत्यर्थ ॥ १७ गुणेन ॥ १८ अदृष्टलक्षणेन द्रव्यविशेषेण ॥ १९ जैनेनापि ॥ २०गुणेन समाकृष्टा द्रव्येण वेति ॥ २१अञ्जनादिसधर्मद्रव्यविशेषाभावेपि ॥ २२ तस्य=ग्रासाद्याकर्षणस्य ॥ २३ तस्य=स्त्र्याद्याकर्षणस्य ॥ २४ उपसर्पणकारणत्वात् ॥

मणे[1]नुमीयमानस्य हेतु[2]त्वादव्यभिचारः स्यात् । तत्र[3] प्रयत्नस्यैव सामर्थ्याद[4]स्य वैफल्येऽत्राप्यञ्जनादेरेव सामर्थ्यात्तद्वैफल्यं किं न स्यात् ? अथाञ्जनादेरेव तद्धेतुत्वे सर्व[5]स्य तद्वतः स्त्र्याद्याकर्षणं स्यात् । न चाञ्जनादौ सत्यप्यविशिष्टे तद्वतः सर्वान्प्रति स्त्र्याद्याकर्षणं । ततोऽवसीयते तदविशेषेपि यद्वै[6]कल्यात्तन्न स्यात्तदपि तत्कारणं नाञ्जनादिमात्रमित्यप्यपेशलं प्रयत्नकारणेपि समानत्वात् । न खलु सर्वं प्रयत्नवन्तं प्रति ग्रासादयः समुपसर्पन्ति तदपहारादिदर्शनात् । ततोऽत्राप्यन्यत्कारणमनुमीयताम् । अन्यथा न प्रकृतेप्यविशेषात् । अञ्जनादेश्च स्त्र्याद्याकर्षणं प्रत्यकारणत्वे घटादिवत्तदर्थिनां तदुपादानं न स्यात् । उपादाने वा सिकतासमूहात्तैलवन्न कदाचित्ततस्तत्स्यात् । न च दृष्टसामर्थ्यस्याञ्जनादेः कारणत्वपरिहारेणात्रान्यकारणत्वकल्पने भवतो[7]ऽनवस्था[8]तो[9] मुक्तिः स्यात् । अथाञ्जनादिकमदृष्टसहकारि तत्कारणं न केवलं, हन्तैवं सिद्धमदृष्टवदञ्जनादेरपि तत्कारणत्वम् । ततः सन्देह एव किं ग्रासादिवत्प्रयत्नसधर्मणाकृष्टाः पश्वादय[10] किं वा स्त्र्यादिवदञ्जनादिसधर्मणा तत्[11]संयुक्तेन द्रव्येणे[12]ति । परिस्पन्दमानात्मप्रदेशव्यतिरेकेण ग्रासाद्याकर्षणहेतोः प्रयत्नस्यापि तद्विशेषगुणस्य परं प्रत्यसिद्धेः साध्यविकलता दृष्टान्तस्य । यच्चोक्तं 'देवदत्तं प्रत्युपसर्पन्ते' इति तत्र देवदत्तशब्दवाच्यः कोर्थः ? शरीरमात्मा तत्संयोगो वात्मसंयोगविशिष्टं शरीरं वा शरीरसंयोगविशिष्ट आत्मा वा शरीरसंयुक्त आत्मप्रदेशो वा ? यदि शरीरं तर्हि शरीरं प्रत्युपसर्पणाच्छरीरगुणाकृष्टाः पश्वादय इत्यात्मविशेषगुणाकृष्टत्वे साध्ये शरीरगुणाकृष्टत्वसाधनाद्विरुद्धो हेतुः । अथात्मा, तस्य समाकृष्यमाणार्थदेशकालाभ्यां सदाभि[13]सम्बन्धान्न तं प्रति किञ्चिदुपसर्पेत् । न ह्यत्यन्ताश्लिष्टकण्ठकामिनी कामुकमुपसर्पति । अन्यदेशो ह्यर्थोऽन्यदेशं प्रत्युपसर्पति । यथा लक्ष्यदेशार्थं प्रति बाणादिः । अन्यकालं वा प्रत्यन्यकालो यथाङ्कुरं प्रत्यपरापरशक्तिपरिणामलाभेन बीजादिः । न चै[14]तदुभयं नित्यव्यापित्वाभ्यामात्मनि सर्वत्र सर्वदा सन्निहिते सम्भवत्यतो देवदत्तं प्रत्युपसर्पन्त इति धर्मिविशेषणं देवदत्तगुणाकृष्टा इति साध्यधर्मस्तं प्रत्युपसर्पणवत्त्वादिति साधनधर्मः पर[15]स्य स्वरुचिविरचित एव स्यात् । अथ शरीरात्मसंयोगो देवदत्तशब्दवाच्यो, नाऽस्य तच्छब्दवाच्यत्वे तं प्रति चैषा[16]मुपसर्पणे तद्गुणाकृष्टास्ते इत्यायातम् । न च गुणेषु गुणाः सन्ति निर्गुणत्वात्तेषाम् । आत्मसंयोगविशिष्टं शरीरं तच्छब्दवाच्यमित्यत्रापि पूर्ववद्विरुद्धत्वं द्रष्टव्यम् । शरीरसंयोगविशिष्ट आत्मा तच्छब्दवाच्य इत्यत्रापि प्राक्तन एव दोषो नित्यव्यापित्वेनास्य सर्वत्र सर्वदा सन्निधानानिवारणात् । न खलु घटसंयुक्तमाकाशं मे[17]घा[18]दौ न सन्निहितम् । अथ शरीरसंयुक्त आत्मप्रदेशस्तच्छब्देनोच्यते स काल्पनिकः पारमार्थिको वा ? काल्पनिकत्वे काल्पनिकात्मप्रदेशगुणाकृष्टाः पश्वादयस्त-

---

१ अदृष्टलक्षणद्रव्यविशेषस्य ॥ २ स्त्र्याद्याकर्षणे ॥ ३ ग्रासाद्याकर्षणे ॥ ४ द्रव्यस्य ॥ ५ स्त्र्याद्याकर्षणेपि ॥ ६ प्राणिन. ॥ ७ अदृष्ट ॥ ८ यम ॥ ९ वैशेषिकस्य ॥ १० दृष्टसामर्थ्यस्यान्यकारणस्य परिहारेणेत्यादिप्रकारेण ॥ ११ कारणाना पूर्वपूर्वकारणपरित्यागेनाऽपरापरकारणपरिकल्पनात् ॥ १२ अदृष्ट ॥ १३ आत्मना ॥ १४ द्रव्यमिदम् ॥ १५ नित्यसर्वगतत्वादात्मन ॥ १६ देशकालकृतोपसर्पणम् ॥ १७ वैशेषिकस्य ॥ १८ इति चेदिति योज्यम् ॥ १९ पश्वादीनाम् ॥

थाभूतात्मप्रदेशं प्रत्युपसर्पणवत्त्वादिति तद्गुणानामपि काल्पनिकत्वं साधयेत्। तथा च सौगतस्येव तद्गुणकृतः प्रेत्यभावोपि न पारमार्थिकः स्यात्। न हि कल्पितस्य पावकस्य रूपादयस्तत्कार्यं वा दाहादिकं पारमार्थिकं दृष्टम्। पारमार्थिकाश्चेदात्मप्रदेशास्ते ततोऽभिन्ना भिन्ना वा? यद्यभिन्नास्तदात्मैव ते इति नोक्तदोषपरिहारः। भिन्नाश्चेत्तद्विशेषगुणाकृष्टाः पश्वादय इत्येतत्तेषामेवात्मत्वं प्रसाधयतीत्यन्यात्मकल्पनानर्थक्यम्। कल्पने वा सावयवत्वेन कार्यत्वमनित्यत्वं चास्य स्यादित्युक्तम्। यच्चान्यदुक्तं सर्वगत आत्मा सर्वत्रोपलभ्यमानगुणत्वादाकाशवदिति। तत्र किं स्वशरीर एव सर्वत्रोपलभ्यमानगुणत्वं हेतुरुत स्वशरीरवत्परशरीरेऽन्यत्र च? तत्र प्रथमपक्षे विरुद्धो हेतुस्तत्रैव ततस्तस्य सर्वगतत्वसिद्धेः। द्वितीयपक्षे त्वसिद्धस्तथोपलम्भाभावात्। न खलु बुद्ध्यादयस्तद्गुणाः सर्वत्रोपलभ्यन्ते। अन्यथा प्रतिप्राणि सर्वज्ञत्वादिप्रसङ्गः। अथ मन्याखेटवत्खेटान्तरे मनुष्यजन्मवज्जन्मान्तरे चोपलभ्यमानगुणत्वं विवक्षितम्। तत्किं युगपत्क्रमेण वा? युगपच्चेदसिद्धो हेतुः। क्रमेण चेत्सर्वे सर्वगताः स्युर्घटादीनामपि तथा सर्वत्रोपलभ्यमानगुणत्वसम्भवात्। तेषां देशान्तरगमनात्तत्सम्भवे आत्मनोपि ततस्तत्सम्भवोस्तु तद्वत्तस्यापि सक्रियत्वात्। प्रत्यक्षेण हि सर्वो देशाद्देशान्तरमायातमात्मानं प्रतिपद्यते। तथा च वदत्यहमद्य योजनमेकमागतः। मनः शरीरं वागतमिति चेत्किं पुनस्तदहम्प्रत्ययवेद्यम्? तथा चेच्चार्वाकमतानुषङ्गः। ननु चास्य सक्रियत्वे लोष्टादिवन्मूर्तिभिः सम्बन्धः स्यात्। तत्र केयं मूर्तिर्नामासर्वगतद्रव्यपरिमाणं रूपादिमत्त्वं वा स्यात्? तत्राद्यपक्षो न दोषावहोभीष्टत्वात्। न हीष्टमेव दोषाय जायते। रूपादिमती मूर्त्तिः स्यादिति चेन्न व्याप्त्यभावात्। रूपादिमन्मूर्त्तिमानात्मा सक्रियत्वाद्घाणादिवदित्यप्यसुन्दरं मनसाऽनैकान्तिकत्वात्। न चास्य पक्षीकरणं रूपादिविशेषगुणानधिकरणं सन्मनोर्थं प्रकाशयति शरीरादर्थान्तरत्वे सति सर्वत्र ज्ञानकारणत्वादात्मवदित्यनुमानविरोधानुषङ्गात्। ननु सक्रियत्वे सत्यात्मनोऽनित्यत्वं स्याद्घटादिवदित्यपि वार्त्तं परमाणुभिर्मनसा चानेकान्तात्। किञ्चास्यातः कथञ्चिदनित्यत्वं साध्येत सर्वथा वा? कथञ्चिच्चेत्सिद्धसाधनम्। सर्वथा चानित्यत्वस्य घटादावप्यसिद्धत्वात्साध्यविकलता दृष्टान्तस्य। किञ्चात्मनो निष्क्रियत्वे संसाराभावो भवेत्। संसारो हि शरीरस्य मनस आत्मनो वा स्यात्? न तावच्छरीरस्य मनुष्यलोके भस्मीभूतस्यामरपुराऽगमनात्। नापि मनसो निष्क्रियस्यास्यापि तद्विरहात्। सक्रियत्वेपि तत्क्रियायास्ततोऽभेदे तद्वत्तदनित्यत्वप्रसङ्गान्नास्य क्वचित्क्षणमात्रमवस्थानं स्यात्। भेदे सम्बन्धासिद्धिः समवा-

---

१ अशिगोणवत् पृथ्व्यादौ ॥ २ आत्मन समाकृष्यमाणार्थदेशकालाभ्यामित्यादिना ॥ ३ तस्य=आत्मन ॥ ४ आत्मप्रदेशानाम् ॥ ५ घटवत् ॥ ६ अन्तराले ॥ ७ परशरीरादौ ॥ ८ आदिना दुःखित्वादिग्रह ॥ ९ द्वितीयपक्षे [illegible] परमाणुत्वाद ॥ १० अथ शब्दो ग्रामभेदे ॥ ११ तथा प्रतीतेरभावात् ॥ १२ तत आत्मना मूर्तिमता भाव्यमिति भाव ॥ १३ शरीरमसर्वगतद्रव्यमत्र ॥ १४ यद्यत्सक्रिय तत्तद्रूपादिमन्मूर्तिमदिति ॥ १५ मनस [illegible] रूपादिमन्मूर्तिमत्त्वाभावात् ॥ १६ एव निरूपणे घटेन व्यभिचार ॥ १७ इष्टानिष्टार्थेषु ॥ १८ ज्ञानकारणत्वादित्युच्यमाने चक्षुषा व्यभिचारस्तन्निवृत्त्यर्थं सर्वत्रेति विशेषणम्। तथापि शरीरेण [illegible] शरीरादित्यादि ॥ १९ कारणमत्र सहकारि ॥ २० पर्यायापेक्षया ॥ २१ क्रियामनसो समवायेन सम्बन्धो भविष्यतीत्युक्ते सत्याहाचार्य ॥

यनिषेधात् । अचेतनं च तदनिष्टनरकादिपरिहारेणेष्टे स्वर्गादौ कथं प्रवर्त्तेत ? स्वभावत ईश्वरात्तदात्मनोऽदृष्टाद्वा ? प्रथमपक्षे दत्तः सर्वत्र ज्ञानाय जलाञ्जलिः । अथेश्वरप्रेरणात्, न–तन्निषेधात्, । को वायमीश्वरस्याग्रहो यतस्तत्प्रेरयति, न तदात्मानम् ? अस्य प्रेरणे चेदमनुगृहीतं भवति "अज्ञो जन्तुरनीशोयमात्मनःसुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा" इति । तदात्मप्रेरणादित्यत्रापि ज्ञातमज्ञातं वा तत्तेन प्रेर्येत ? न तावदाद्यो विकल्पो जन्तुमात्रस्य तत्परिज्ञानाभावात् । नापि द्वितीयोऽज्ञातस्य बाणादिवत्प्रेरणासम्भवात् । ननु स्वप्ने स्वहस्तादयोऽज्ञाता एव प्रेर्यन्ते, न–अहितपरिहारेण हिते प्रेरणासम्भवात् । ज्वलज्ज्वलनज्वालाजालेपि तत्प्रेरणोपलम्भात् । अदृष्टप्रेरणादित्यप्यसारमचेतनस्यापि तत्प्रेरकत्वायोगात् । तत्प्रेरितस्यात्मन एव वरं प्रवृत्तिरस्तु चेतनत्वात्तस्य । दृश्यते हि वशीकरणौषधसंयुक्तस्य चेतनस्यानिष्टगृहगमनपरिहारेण विशिष्टगृहगमनम् । तन्न मनसोपि संसारः । आत्मनस्तु स्याद्यद्येकदेहपरित्यागेन देहान्तरमसौ व्रजेत् । तथा च घटादिवत्तस्य सर्वत्रोपलभ्यमानगुणत्वमित्युभयोः सर्वगतत्वं न वा कस्यचिद्विशेषात् । यच्चाकाशवदित्युक्तं तत्राकाशस्य को गुणः सर्वत्रोपलभ्यते ? शब्दो महत्त्वं वा ? न तावच्छब्दोऽस्याकाशगुणत्वनिषेधात् । नापि महत्त्वमस्यातीन्द्रियत्वेनोपलम्भासम्भवात् । एतेन बुद्ध्यधिकरणं द्रव्यं विभु नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वादाकाशवदित्यपि प्रत्युक्तं साधनविकलत्वाद्दृष्टान्तस्य हेतोश्चानैकान्तिकत्वं परमाणूनां नित्यत्वे सत्यस्मदाद्युपलभ्यमानपाकजगुणाधिष्ठानत्वेपि विभुत्वाभावात् । तत्पाकजगुणानामस्मदाद्यप्रत्यक्षत्वे हि विवादाध्यासितं क्षित्यादिकमुपलब्धिमत्कारणं कार्यत्वाद्घटादिवदित्यत्र प्रयोगे व्याप्तिर्न स्यात् । अथ नित्यत्वे सत्यस्मदादिबाह्येन्द्रियोपलभ्यमानगुणत्वादित्युच्यते तर्हि बाह्येन्द्रियोपलभ्यमानत्वस्य बुद्धावसिद्धेर्विशेषणासिद्धो हेतुः । नित्यत्वं च सर्वथा कथञ्चिद्वा विवक्षितम् ? सर्वथा चेत्पुनरपि विशेषणासिद्धत्वम् । कथञ्चिच्चेद्घटादिनानेकान्तस्तस्य कथञ्चिन्नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वेपि विभुत्वाभावात् । यदप्युक्तं सर्वगत आत्मा द्रव्यत्वे सत्यमूर्त्तत्वादाकाशवत् । द्रव्यादित्युच्यमाने हि घटादिना व्यभिचारस्तत्परिहारार्थममूर्त्तत्वादित्युक्तम् । अमूर्त्तत्वादित्युच्यमाने च रूपादि

१ परमतेऽचेतन मन ॥ २ मन सन्नन्विजीवात् ॥ ३ इष्टानिष्टवस्तुषु ॥ ४ ज्ञानाभावेप्यचेतनस्य मनस इष्टानिष्टवस्तुषु प्रवृत्तिनिवृत्तिदर्शनात् ॥ ५ मन एव प्रेरयति नात्मानमयमेवाग्रह इत्याशङ्क्याह ॥ ६ अग्रे वक्ष्यमाण भवच्छास्त्रोक्तम् ॥ ७ भवता स्वीकृतम् ॥ ८ मनस प्रेरणे चेदमनुगृहीत न भवतीति भाव ॥ ९ तदात्मना ॥ १० अणुरूपमचेतनमतीन्द्रिय मनस्तस्य ॥ ११ अनैकान्तिकत्व भावयति ॥ १२ 'इति चेत्' इत्युपरित ॥ १३ तुर्यो विकल्प ॥ १४ मन एव ॥ १५ न मनस ॥ १६ अनिष्टनरकादिपरिहारेणेष्टस्वर्गादौ ॥ १७ चेतनत्वादात्मन प्रवृत्तिरसिद्धेत्युक्ते सत्याहाचार्य ॥ १८ घटपक्षे देशान्तरपरित्यागेन देशान्तरमसौ व्रजेत् ॥ १९ लोकत्रये ॥ २० आत्मघटयो ॥ २१ आत्मनोपीत्यर्थं ॥ २२ उभयोर्गमनस्य ॥ २३ अत साधनविकलो दृष्टान्त ॥ २४ सर्वत्रोपलभ्यमानगुणत्वादित्यस्य निराकरणपरेण ग्रन्थेन ॥ २५ परमाणुभिर्व्यभिचारपरिहारार्थम् ॥ २६ घटादिना व्यभिचारनिराकरणार्थम् ॥ २७ परेणाङ्गीक्रियमाणे ॥ २८ ईश्वरस्य ॥ २९ तत्पाकजगुणानामस्मदाद्यप्रत्यक्षत्वे यद्यत्कार्यं तत्तद्धीमद्धेतुकमिति मानसप्रत्यक्षेण साकल्येन व्याप्तिग्रहण न स्यादिति भाव । कार्याप्रत्यक्षत्वे कार्यकारणयोर्व्याप्त्यसम्भवात् ॥ ३० गुणरूपायाम् ॥ ३१ द्रव्यापेक्षया ॥ ३२ असर्वगतद्रव्यपरिमाणलक्षणमूर्त्तत्वस्य रूपादिष्वभावाद्रूपादीनाममूर्तत्वम् । रूपादीना तत्परिमाणाभावकुन 2 निर्गुणा गुणा इत्यभिधानात् ॥

गुणेन गमनादिकर्मणा वानेकान्तस्तन्निवृत्त्यर्थं द्रव्यत्वे सतीत्युक्तम्। तदप्यसमीचीनं यतोऽमूर्त्तत्वं मूर्त्तत्वाभावस्तत्र किमिदं मूर्त्तत्वं नाम? यत्प्रतिषे-
धोऽमूर्त्तत्वं स्यात्। रूपादिमत्त्वमसर्वगतद्रव्यपरिमाणं वा? प्रथमपक्षे मनसानेकान्तस्तस्य द्रव्यत्वे सत्यमूर्त्तत्वेपि सर्वगतत्वाभावात्। द्वितीयपक्षे तु
किमसर्वगतद्रव्यं भवतां[1] प्रसिद्धं यत्परिमाणं मूर्त्तिर्वर्ण्यते? घटादिकमिति चेत्कुतस्तत्तथा? तथोपलम्भाच्चेत्किं[2] पुनरसौ[3] भवतः प्रमाणम्? तथा चेत्तद्वदात्म-
नोपि स एवासर्वगतत्वं प्रसाधयतीति मूर्त्तत्वम्। अतोऽमूर्त्तत्वादित्यसिद्धो हेतुः। तदसाधने न प्रमाणं[4] लक्षणयुक्ते[5] वाधासम्भवे[6] तल्लक्षणमेव[7] दूषितं स्यादिति
न्यायात्। तथा चातो घटादावप्यसर्वगतत्वमतिदुर्लभम्। शक्यं हि वक्तुं घटादयः सर्वगता द्रव्यत्वे सत्यमूर्त्तत्वादाकाशवदिति। पक्षस्य प्रत्यक्षवाधनं हेतोश्चा-
सिद्धिरुभयत्र[8] समाना। ननु चात्मनः सर्वगतत्वात्तत्रास्त्यमूर्त्तत्वमसर्वगतद्रव्यपरिमाणसम्बन्धाभावलक्षणं न घटादौ विपर्ययात्। ननु चास्य कुतः सर्वगतत्वं
सिद्धं साधनान्तरादत एव वा? साधनान्तराच्चेत्तदैव समीहितसिद्धेर्द्रव्यत्वे सत्यमूर्त्तत्वादित्यस्य वैयर्थ्यम्। अत एव चेदन्योन्याश्रयः। सिद्धे हि तस्य
सर्वगतत्वेऽसर्वगतद्रव्योपरिमाणसम्बन्धरूपमूर्त्तत्वाभावोऽमूर्त्तत्वं सिध्यति। अतश्च तत्सर्वगतत्वमिति। किञ्चामूर्त्तत्वादिति किमयं प्रसज्यप्रतिषेधो मूर्त्तत्वाभाव-
मात्रममूर्त्तत्वं पर्युदासो वा मूर्त्तत्वादन्यद्भावान्तरमिति? तत्राद्यविकल्पोऽयुक्तस्तुच्छाभावस्य[12] प्राक्प्रवन्धेन प्रतिषेधात्। सतोपि चास्य ग्रहणोपायाभावादज्ञातासिद्धो
हेतुः। न हि प्रत्यक्षस्तद्ग्रहणोपायस्तस्येन्द्रियार्थसन्निकर्षजत्वात्, तुच्छाभावेन सह[13] मनसोऽन्यस्य चेन्द्रियस्य सन्निकर्षाभावात्। ननु[14] मन आत्मना सम्बद्ध-
मात्मविशेषणं च तदभावः। ततः सम्बद्धविशेषणीभावस्तेन[15] मनस इति। युक्तमिदं[16] यद्यसावात्मनो विशेषणं भवेत्। न चास्यैतदुपपन्नम्। विशेष्ये हि विशि-
ष्टप्रत्ययहेतुर्विशेषणं, यथा दण्डः पुरुषे। न च तुच्छाभावस्तत्प्रत्ययहेतुर्घटते सकलशक्तिविरहलक्षणत्वादस्य। अन्यथा भाव एव स्यादर्थक्रियाकारित्वलक्षणत्वात्
परमार्थसतो लक्षणान्तराभावात्। सत्तासम्बन्धस्य तल्लक्षणस्य कृतोत्तरत्वात्। किञ्च गृहीतं[19] विशेषणं भवति नाऽगृहीतविशेषणा विशेष्ये बुद्धिरित्यभिधानात्। ग्रहणे
चेतरेतराश्रयः। तथा हि। आत्मसम्बद्धेनेन्द्रियेणासौ[20][21] गृहीतः सिद्धः सन्नात्मनो विशेषणं सिध्यति। तत आत्मसम्बद्धेनेन्द्रियेण ग्रहणमिति। यदि चात्मा स्वयमसर्व-
गतद्रव्यपरिमाणसम्बन्धविकलः[22] सिद्धस्तर्हि तावतैव समीहितार्थसिद्धेः किमपरेण तदभावेनेति कथं विशेषणम्? अथ विपरीतः[23], कथं तदभावो यतो विशेषणम्? किञ्चा-
त्मतदभावाभ्यां सह विशेषणीभावः सम्बद्धोऽसम्बद्धो वा? सम्बद्धश्चेत्तर्हि यथात्मनि विशिष्टविज्ञानविधानादात्मनस्तदभावो[24][25] विशेषणं तथा विशेषणीभावोप्यात्मा विशे-

१ वैशेपिकाणाम्॥ २ असर्वगतत्वेन॥ ३ उपलम्भ॥ ४ असर्वगतद्रव्यपरिमाणोपलम्भ प्रमाणस्य लक्षणम्॥ ५ प्रमाणे॥ ६ प्रमाणस्यात्मन्यसर्वगतत्वासाधनलक्षणे वा वासम्भवे॥ ७ तस्य=प्रमाणस्य॥ ८ आत्मन्यसर्वगतत्वो-पलम्भस्याप्रमाणत्वे च॥ ९ आत्मनि घटादौ च॥ १० असर्वगतत्वात्॥ ११ अमूर्त्तत्वम्॥ १२ अभावनिराकरणावसरे॥ १३ तुच्छाभावेन सह मनस सन्निकर्षं दर्शयति पर॥ १४ अमूर्त्तत्वाभाव॥ १५ सम्बन्ध॥ १६ परेणोक्तं यत्॥ १७ मूर्त्तत्वाभावलक्षण विशेषणम्॥ १८ दण्डीति विशिष्टप्रत्ययहेतु॥ १९ ज्ञातम्॥ २० मनसा॥ २१ मूर्त्तत्वाभाव॥ २२ असर्वगतद्रव्य=शरीरम्॥ २३ असर्वगतद्रव्यपरिमाणसम्बन्धरहित॥ २४ आत्मा अमूर्त इति॥ २५ मूर्त्तत्वाभाव॥

प्यस्तदभावो विशेषणमिति विशिष्टप्रत्ययजननात्। विशेषणं समवायवत्प्रसक्तम्। तथा च तत्राप्यपरेण तत्सम्बन्धेन भवितव्यमित्यनवस्था। अथासम्बद्धः, कथं विशेषणविशेष्याभिमतयोः स भवेत्? यतस्तत्र विशिष्टप्रत्ययप्रादुर्भावः सम्बन्धो वा। विशिष्टप्रत्ययहेतुत्वाच्चेदीश्वरादौ प्रसङ्गः। तथापि स तयोरिति कल्पने भावस्याभावः समवायिनोऽसमवायस्तथैव स्यादित्यलं तत्र विशेषणीभावसम्बन्धकल्पनया। तन्न प्रत्यक्षं तद्ग्रहणोपायः। नाप्यनुमानं परस्य प्रत्यक्षाभावे तदभावात्तन्मूलत्वात्तस्य। नन्विदमस्त्यात्माऽमूर्त्त इति बुद्धिर्भिन्नाभावनिमित्ताऽभावविशेषणभावविषयबुद्धित्वादघटं भूतलमित्यादिबुद्धिवत्। इत्यप्यसारं—तथाविधाभावस्य विशेषणत्वासिद्धिप्रतिपादनात्। अभावविचारे चानयोर्हेतूदाहरणयोः प्रतिहतत्वान्न साध्यसाधकत्वम्। पर्युदासपक्षेप्यसर्वगतद्रव्यपरिमाणसम्बन्धभावान्मूर्त्तत्वादन्यदमूर्त्तत्वं सर्वगतद्रव्यपरिमाणेन परममहत्त्वेन सम्बन्धाभावः। स च न कुतश्चित्प्रमाणात्प्रसिद्ध इति हेतोरसिद्धिः। यच्चान्यदुक्तमात्मा व्यापको मनोन्यत्वे सत्यस्पर्शवद्द्रव्यत्वादाकाशवदिति, तदप्येतेनैव प्रत्युक्तं स्पर्शवद्द्रव्यप्रतिषेधेऽत्रापि प्रागुक्ताशेषदोषानुषङ्गात्। सन्दिग्धानैकान्तिकश्चायं हेतुः। तथा हि। अस्पर्शवद्द्रव्यत्वमाकाशादौ व्यापित्वे सत्युपलब्धं मनसि चाऽव्यापित्वे। तदिदानीमात्मन्युपलभ्यमानं किं व्यापित्वं प्रसाधयत्वव्यापित्वं वेति सन्देहः। ननु मनोद्रव्यत्वविशिष्टस्यास्पर्शवद्द्रव्यत्वस्य मनस्यनुपलम्भात्कथं सन्देहोऽत्रेति चेदत एव। यदि हि तद्विशिष्टं तत्तत्रोपलभ्येत तदा निश्चितानैकान्तिकत्वमेवास्य स्यान्न तु सन्दिग्धानैकान्तिकत्वमिति। तन्नात्मनः कुतश्चित्प्रमाणात्सर्वगतत्वसिद्धिरित्यसर्वगत एवासौ यथाप्रतीत्यभ्युपगन्तव्यः। ननु चात्मनोऽसर्वगतत्वे दिग्देशान्तरवर्त्तिभिः परमाणुभिर्युगपत्संयोगाभावोऽतश्चाद्यकर्माभावः। तदभावादन्त्यसंयोगस्य[13] तन्निमित्तशरीरस्य तेन तत्सम्बन्धस्य चाभावादनुपायसिद्धः सर्वदात्मनो मोक्षः स्यात्। स्यादेवं यदि यद्येन संयुक्तं तं प्रति तदेवोपसर्पतीत्ययं नियमः स्यात्। न चास्त्ययस्कान्तं प्रत्ययसस्तेनाऽसंयुक्तस्याप्युपसर्पणोपलम्भात्। यस्य चात्मा सर्वगतस्तस्यारब्धकार्यैरन्यैश्च परमाणुभिर्युगपत्संयोगात्तथैव तच्छरीरारम्भं प्रत्येकमभिमुखीभूतानां तेषामुपसर्पणमिति न जाने कियत्परिमाणं तच्छरीरं स्यात्। ननु ये तत्संयोगास्तदऽदृष्टापेक्षास्त एव स्वसंयोगिनां परमाणूनामाद्यं कर्म रचयन्तीति चेदथ केयं तददृष्टापेक्षा[16] नाम? एकार्थसमवाय[17] उपकारो वा सहाद्यकर्मजननं वा? तत्राद्यः पक्षोऽयुक्तः सर्व-

---

१ गुणगुणिनो समवाय इति ॥ २ विशेषणीभावस्य विशेषणत्वे च ॥ ३ स्वय सवन्धरूपोपि नैव ॥ ४ ईश्वरकालाकाशादयोपि विशिष्टप्रत्ययोत्पत्तौ निमित्तकारणकास्तेषामपि विशेषणीभाव सम्बन्धो भवतीति शेष ॥ ५ सवन्धस्य ॥ ६ सम्बन्धाभावेपि ॥ ७ अभावो विशेषणमस्य। स चासौ भावश्च स विषयो यस्यास्तस्या भाव इति वाक्यम् ॥ ८ द्रव्यत्वे सत्यमूर्त्तत्वादित्येतन्निरासेन ॥ ९ तुच्छरूपस्य ॥ १० अस्पर्शवद्द्रव्यत्वादित्यत्र नञ् पर्युदास प्रसज्यो वेत्यादि ॥ ११ विपक्षे बाधक प्रमाण चेदस्ति तदा सन्देहो निवर्त्ततेऽनुपलम्भमात्रेण तु परचेतोवृत्तिविशेषवत् सन्देहो भवेदेवेति भाव ॥ १२ शरीरारम्भकाणूना शरीरोत्पत्तिप्रदेश प्रति गमनमाद्य कर्म ॥ १३ शरीरनिष्पत्त्यवसानकालभावस्य ॥ १४ शरीरारम्भकाणूना शरीरोत्पत्तिदेश प्रति गमनम् ॥ १५ अत एव महच्छरीर न स्यात् ॥ १६ परमाणुसयोगानाम् ॥ १७ एकस्मिन्नात्मलक्षणेऽर्थे समवायोऽदृष्टस्य ॥

सहाद्यकर्मजननमित्यप्यसत्त-
परमाणुसंयोगानां तददृष्टैकार्थसमवायसद्भावात्[1]। उपकार इत्यप्ययुक्तमपेक्ष्यादपेक्षकस्यासम्बन्धानवस्थानुपङ्गेणोपकारस्यैवासम्भवात्[3]।
योरन्यतरस्यापि केवलस्य तज्जननसामर्थ्ये परापेक्षायोगात्[8]। यदि पुनः स्वहेतोरेवादृष्टसंयोगयोः सहितयोरेव कार्यजननसामर्थ्यमिष्यते तर्हि तत एवादृष्टस्यैव
तत्संयोगनिरपेक्षस्य तत्सामर्थ्यमस्तु। दृश्यते हि हस्ताश्रयेणायस्कान्तादिना स्वाश्रयासंयुक्तस्य भूभागस्थितस्य लोहादेराकर्षणमित्यलमतिप्रसङ्गेन[11]। यदप्युक्तं सावयवं
शरीरं प्रत्यवयवमनुप्रविशंस्तदात्मा सावयवः स्यात्। तथा च घटादिवत्समानजातीयावयवारभ्यत्वम्[13]। समानजातीयत्वं चावयवानामात्मत्वाभिसम्बन्धादित्येकत्रात्म-
न्यनन्तात्मसिद्धिः। यथा चावयवक्रियातो विभागात्संयोगविनाशाद्धटविनाशस्तथात्मविनाशोपि स्यात्। इत्यप्यपरीक्षिताभिधानं सावयवत्वेन भिन्नावयवारब्धत्वस्य
घटादावप्यसिद्धेः। न खलु घटादिः सावयवोपि प्राक् प्रसिद्धसमानजातीयकपालसंयोगपूर्वको दृष्टो, मृत्पिण्डात् प्रथममेव स्वावयवरूपाद्यात्मनोस्य प्रादुर्भावप्रतीतेः।
न चैकत्र पटादौ स्वावयवतन्तुसंयोगपूर्वकत्वोपलम्भात्सर्वत्र तद्भावो युक्तः। अन्यथा काष्ठे लोहलेख्यत्वोपलम्भाद्वज्रेपि तथाभावः स्यात्। प्रमाणवाधनमुभयत्र
समानम्। किञ्चास्य तथाभूतावयवारब्धत्वमादौ मध्यावस्थायां वा साध्येत? न तावदादौ स्तनादौ प्रवृत्त्यभावानुपङ्गात्। तद्धेत्वभिलाषप्रत्यभिज्ञानस्मरणदर्शनादे-
रभावात्। तदारम्भकावयवानां प्राक् सतां विषयदर्शनादिसम्भवे तेषामेवाहर्जातवेलायां सत्त्वान्तराणामिव प्रवृत्तिः स्यात्। मध्यावस्थायां तु तत्साधने प्रत्यक्ष-
विरोधः। अन्त्यावस्थाया चास्यात्यन्तविनाशे स्मरणाद्यभावात्स्तनादौ प्रवृत्त्यभाव एव स्यात्। न चेयं विनाशोत्पादप्रक्रिया क्वचिद्दृश्यते। न खलु कटकस्य केयूरी-
भावे कुतश्चिदङ्गेषु क्रियाविभागः संयोगविनाशो द्रव्यविनाशः पुनस्तदवयवाः केवलास्तदनन्तरं तेषु कर्मसंयोगक्रमेण केयूरीभाव इति। केवलं सुवर्णकारकादि-
व्यापारे कटकस्य केयूरीभावं पश्यामः। अन्यथा कल्पने च प्रत्यक्षविरोधः। न च सावयवशरीरव्यापित्वे सत्यात्मनस्तच्छेदे छेदप्रसङ्गो दोषाय कथञ्चित्तच्छेदस्ये-
ष्टत्वात्[30]। शरीरसम्बद्धात्मप्रदेशेभ्यो हि तत्प्रदेशानां छिन्नशरीरप्रदेशेऽवस्थानमात्मनश्छेदः। स चात्रास्त्येव। अन्यथा शरीरात्पृथग्भूतावयवस्य कम्पोपलब्धिर्न स्यात्।

---

१ तस्यात्मनोऽदृष्ट तेन सहैकस्मिन्नर्थे आत्मलक्षणे समवायस्य सद्भावात् ॥ २ व्यापित्वादात्मन ॥ ३ अपेक्ष्येणादृष्टेनापेक्षकस्याणुसयोगस्य क्रियमाण उपकारस्तस्मादभिन्नो भिन्नो वा स्यात्? अभेदे सोपि तज्जन्य स्यात्। भेदे सबन्धासिद्धि । अथापकारमुपकार कृत्वा तत्सम्बन्धीत्यादिपरिकल्पने चानवस्था। अथ सयोगस्योपकार इति न घटते अन्यथातिप्रसङ्ग । यथा सयोगस्य तथान्यस्यापि। तथा चात्मपरमाणुसयोगस्य नित्यत्वव्याघात स्यात् ॥ ४ अदृष्टाणुसयोगयोर्मध्येऽदृष्टस्य परमाणुसयोगस्य वा ॥ ५ अविशेषत सर्वत्र तज्जननस्यापि प्रसङ्गात् ॥ ६ आत्मन ॥ ७ अदृष्टात्माणुसयोगयो ॥ ८ परेण ॥ ९ ततश्चाणुसयोगपरिकल्पनेन किम् ॥ १० वस ॥ ११ ततश्च स्वाश्रयासयुक्तमेव परमाण्वादिकमाकृष्यते आत्मना। ततश्च सर्वगतत्वपरिकल्पनेनालमात्मन ॥ १२ आत्मत्वेन ॥ १३ आत्मन ॥ १४ उपादानकारणात् ॥ १५ आत्मादिषु ॥ १६ स्वावयवसयोगपूर्वकत्वम् ॥ १७ वज्रे आत्मनि च ॥ १८ समानजातीयभिन्नावयव ॥ १९ गर्भावस्थायाम् ॥ २० सस्कारस्य ॥ २१ तस्य आत्मन ॥ २२ समानजातीयभिन्नावयवारभ्यत्व प्रत्यक्षेण न ज्ञायते यत ॥ २३ अग्रे वक्ष्यमाणा ॥ २४ कारणात् ॥ २५ अवयवेषु ॥ २६ क्रिया ॥ २७ केयूरोत्पाद ॥ २८ वय जैना ॥ २९ अवयवापेक्षया ॥ ३० जैनस्य ॥ ३१ आत्मनि ॥

न च च्छिन्नावयवप्रतिष्ठस्यात्मप्रदेशस्य पृथगात्मत्वानुषङ्गस्तत्रैवानुप्रवेशात् । कथमन्यथा छिन्ने हस्तादौ कम्पादितल्लिङ्गोपलम्भाभावः स्यात् । ननु कथं छिन्नाच्छिन्नयोः संघटनं पश्चात् ? न-एकान्तेन छेदानभ्युपगमात् । पद्मनालतन्तुवदविच्छेदस्याप्यभ्युपगमात् । तथाभूतादृष्टवशाच्च तदविरुद्धमेव । ततो यद्यथा निर्बाधबोधे प्रतिभाति तत्तथैव सद्व्यवहारमवतरति । यथा स्वारम्भकतन्तुषु प्रतिनियतदेशकालाकारतया प्रतिभासमानः पटः । शरीरे एव प्रतिनियतदेशकालाकारतया निर्बाधबोधे प्रतिभासते चात्मेति । न चायमसिद्धो हेतुः शरीराद्बहिस्तत्प्रतिभासाभावस्य प्रतिपादितत्वात् । उक्तप्रकारेण चानवद्यस्य बाधकप्रमाणस्य कस्यचिदसम्भवान्न विशेषणासिद्धत्वमिति । तन्न परेषां यथाभ्युपगतस्वभावमात्मद्रव्यमपि घटते ।

नापि मनोद्रव्यं तस्य प्रागेव स्वसंवेदनसिद्धिप्रस्तावे निराकृतत्वात् । ततः पृथिव्यादेर्द्रव्यस्य यथोपवर्णितस्वरूपस्य प्रमाणतोऽप्रसिद्धेः पृथिव्यादीनि द्रव्याणीतरेभ्यो भिद्यन्ते द्रव्यत्वाभिसम्बन्धादित्यादिहेतूपन्यासोऽविचारितरमणीयस्तत्स्वरूपासिद्धौ हेतोराश्रयासिद्धत्वात् । स्वरूपासिद्धत्वाच्च । द्रव्यत्वाभिसम्बन्धो हि समवायलक्षणो भवताभ्युपगम्यते । न चासौ प्रमाणतः प्रसिद्ध इति विशेषणासिद्धत्वं च द्रव्यत्वसामान्यस्य यथाभ्युपगतस्वभावस्यासम्भवात् । तन्न परपरिकल्पितो द्रव्यपदार्थो घटते ।

नापि गुणपदार्थः । स हि चतुर्विंशतिप्रकारः परैरिष्टः । तथा हि । रूपरसगन्धस्पर्शाः संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च तु गुणा इति सूत्रसङ्गृहीताः सप्तदश चशब्दसमुच्चिताः गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाश्च सप्तेति । तत्र रूपं चक्षुर्ग्राह्यं पृथिव्युदकज्वलनवृत्ति । रसो रसनेन्द्रियग्राह्यः पृथिव्युदकवृत्तिः । गन्धो घ्राणग्राह्यः पृथिवीवृत्तिः । स्पर्शस्त्वगिन्द्रियग्राह्यः पृथिव्युदकज्वलनपवनवृत्तिः संख्या त्वेकादिव्यवहारहेतुरेकत्वादिलक्षणा एकद्रव्या चानेकद्रव्या च । तत्रैकसंख्या एकद्रव्या । अनेकद्रव्या तु द्वित्वादिसंख्या । सा च प्रत्यक्षत एव सिद्धा विशेषबुद्धेश्च निमित्तान्तरापेक्षत्वादनुमानतोऽपि[13] । परिमाणव्यवहारकारणं परिमाणं महदणु दीर्घं ह्रस्वमिति चतुर्विधम् । तत्र महद्द्विविधं नित्यमनित्यं च । नित्यमाकाशकालदिगात्मसु परममहत्त्वम् । अनित्यं त्र्यणुकादिद्रव्येषु । । अण्वपि नित्यानित्यभेदाद्द्विविधम् । परमाणुमनस्सु पारिमाण्डल्यलक्षणं नित्यम् । अनित्यं द्व्यणुके एव । बदरामलकबिल्वादिषु तु महत्स्वपि तत्प्रकर्षाभावमपेक्ष्य भाक्तोऽणुव्यवहारः । ननु महद्दीर्घत्वयोस्त्र्यणुकादिषु प्रवर्त्तमानयोर्द्व्यणुके चाणुत्वह्रस्वत्वयोः को विशेषः ? महत्सु दीर्घमानीयता

१ आत्मन्येव ॥ २ तस्य=आत्मन ॥ ३ प्रदेशयो ॥ ४ सङ्घटनकारिकर्मवशात् ॥ ५ शरीरे एव प्रतिनियतदेशकालाकारतया निर्बाधबोधे प्रतिभासमानत्वादिति ॥ ६ वैशेषिकद्वारा ॥ ७ वैशेषिकेण ॥ ८ नित्यनिरंशत्वेन ॥९ 'च'इति कपुस्तके नास्ति । ख, ग, घपुस्तकेभ्य संयोजित ॥१० एव ॥११ विशेष =भेद ॥१२ एकादिप्रत्यया विशेषग्रहणापेक्षा विशिष्टप्रत्ययत्वाद्दण्डीत्यादिप्रत्ययवदिति ॥१३ तत्रैकत्वसंख्या नित्यद्रव्येषु नित्या कार्यद्रव्येष्वनित्या । द्वित्वादिसंख्या तु परार्द्धान्ता अपेक्षाबुद्धिजन्या सर्वत्रानित्या ॥ १४ वर्तुलाकारमित्यर्थ ॥ १५ नन्वणुद्व्यणुके एव यदि वर्त्तते तर्हि बदरामलकादिष्वणुपरिमाणव्यवहार कथमित्याशङ्कायामाह ॥ १६तस्य=अतिशयस्य ॥ १७ उपचरित ॥ १८ परिमाणयो ॥ १९ वस्तुषु ॥ २० वस्तु ॥

दीर्घेषु महदानीयतामिति व्यवहारभेदप्रतीतेरस्त्यनयोः परस्परतो भेदः । अणुत्वह्रस्वत्वयोस्तु विशेषो योगिनां तद्दर्शिनां प्रत्यक्ष एव । महदादि च परिमाणं रूपादिभ्योऽर्थान्तरं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वात्सुखादिवत् । संयुक्तमपि द्रव्यं यद्वशादत्रेदं पृथगित्यपोद्ध्रियते तदपोद्धारव्यवहारकारणं पृथक्त्वं घटादिभ्योऽर्थान्तरं तत्प्रत्ययविलक्षणज्ञानग्राह्यत्वात्सुखादिवत् । अप्राप्तिपूर्विका प्राप्तिः संयोगः । प्राप्तिपूर्विका चाप्राप्तिर्विभागः । तौ च द्रव्येषु यथाक्रमं संयुक्तविभक्तप्रत्ययहेतू । इदं परमिदमपरमिति यतोऽभिधानप्रत्ययौ भवतस्तद्यथाक्रमं परत्वमपरत्वं च । बुद्ध्यादयः प्रयत्नान्ताश्च गुणाः सुप्रसिद्धा एव । गुरुत्वं च पृथिव्युदकवृत्ति पतनक्रियानिबन्धनम् । द्रवत्वं तु पृथिव्युदकज्वलनवृत्ति स्यन्दनहेतुः । पृथिव्यनलयोर्नैमित्तिकम् । अपां सांसिद्धिकम् । स्नेहस्त्वम्भस्येव स्निग्धप्रत्ययहेतुः । संस्कारस्तु त्रिविधो वेगो भावना स्थितस्थापकश्चेति । तत्र वेगाख्यः पृथिव्यप्तेजोवायुमनस्सु मूर्तद्रव्येषु प्रयत्नाभिघातविशेषापेक्षात्कर्मणः समुत्पद्यते । नियतदिक् क्रियाप्रतिबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविरोधी च । भावनाख्यः पुनरात्मगुणो ज्ञानजो ज्ञानहेतुश्च दृष्टानुभूतश्रुतेष्वप्यर्थेषु स्मृतिप्रत्यभिज्ञाकार्योन्नीयमानसद्भावः । मूर्तिमद्द्रव्यगुणः स्थितस्थापकः घनावयवसन्निवेशविशिष्टं स्वमाश्रयं कालान्तरस्थायिनमन्यथा व्यवस्थितमपि प्रयत्नतः पूर्ववद्यथावस्थितं स्थापयतीति कृत्वा । दृश्यते च तालपत्रादेः प्रभूततरकालसंवेष्टितस्य प्रसार्यमुक्तस्य पुनस्तथैवावस्थानं संस्कारवशात् । एवं धनुःशाखाशृङ्गदन्तादिषु भग्नापवर्तितेषु वस्त्रादौ चास्य कार्यं परिस्फुटमुपलभ्यत एव । धर्मादयस्तु सुप्रसिद्धा एवेति ।

तदेतत्स्वगृहमान्यं परेषां रूपादिगुणानां यथोपवर्णितस्वरूपेणावस्थानासम्भवात् । न खलु रूपं पृथिव्युदकज्वलनवृत्त्येव वायोरपि तद्वत्तासम्भवात् । तथा हि । रूपादिमान्वायुः पौद्गलिकत्वात्स्पर्शवत्त्वाद्वा पृथिव्यादिवत् । एवं जलानलयोरपि गन्धरसादिमत्ता प्रतिपत्तव्या । रूपरसगन्धस्पर्शमन्तो हि पुद्गलास्तत्कथं तद्विकाराणां प्रतिनियमः । रूपाद्याविर्भावतिरोभावमात्रं तु तत्राविरुद्धं जलकनकादिसंप्रयुक्तानले भासुररूपोष्णस्पर्शयोस्तिरोभावाविर्भाववत् । संख्यापि संख्येयार्थव्यतिरेकेणोपलब्धिलक्षणप्राप्ता नोपलभ्यते इत्यसती खरविषाणवत् । न च विशेषणमसिद्धं तस्या दृश्यत्वेनेष्टेः । तथा च सूत्रम् । संख्यापरिमाणानि पृथक्त्वं

---

१ महदादिपरिमाणस्य रूपादिभ्योऽभेदो भविष्यतीत्युक्ते सत्याह ॥ २ विभागात्पृथक्त्वस्य भेदाभावात्पृथक्त्वप्रतिपादन किमर्थमित्युक्ते सत्याह ॥ ३ पृथक् क्रियते ॥ ४ अस्तु विभागात्पृथक्त्वस्य भेदस्तथापि घटादिभ्योऽभेदो भविष्यतीत्युक्ते वक्ति ॥ ५ अनित्यावेव ॥ ६ अनित्यमेव ॥ ७ अनित्यमेव ॥ ८ अनित्या एव ॥ ९ तच्च पार्थिवाप्याणुषु नित्य द्व्यणुकादिष्वनित्यम् ॥ १० लाक्षालोहादिषु ॥ ११ सर्पि सुवर्णयो ॥ १२ अनित्यमित्यर्थं ॥ १३ नित्यमित्यर्थं । आप्याणुषु नित्यमाप्यद्व्यणुकादिषु त्वनित्यम् ॥ १४ असर्वगतद्रव्यपरिमाणवत्स्वित्यर्थं ॥ १५ कर्मधारय ॥ १६ वृक्षादिकेन स्पर्शवता द्रव्येण सह वेगाख्यस्य बाणादे संयोगे सति वेगाख्य संस्कार स्वय विनश्यतीत्यर्थं ॥ १७ आकृष्टमुक्तेषु ॥ १८ स त्रिविधोप्यय संस्कारो अनित्य एव । धर्माधर्मावात्मविशेषगुणावनित्यावेव । शब्दस्त्वाकाशविशेषगुणोऽनित्य एव ॥ १९ पृथिव्यादीनाम् ॥ २० पृथिव्यामेव गन्ध इत्यादि' ॥ २१ तर्हि सर्वत्र तेषामाविर्भाव कुतो न स्यादित्युक्ते सत्याह ॥ २२ उष्ण ॥ २३ अग्नेरपत्य प्रथम सुवर्णमित्यागमत प्रसिद्धतेजस्त्व कनकादीना तत कथमुक्त कनकादिसयुक्तानल इत्यारेकायामाह कनकेपि पृथिव्यंशोस्तीति ॥ २४ परस्य ॥

संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणीति । एकादिप्रत्यया विशेषग्रहणापेक्षा विशिष्टप्रत्ययत्वाद्दण्डीत्यादिप्रत्ययवदित्यनुमानतोपि न संख्यासिद्धिर्यतो यथैको गुणोपि वहवो गुणा इत्यादौ संख्यामन्तरेणाप्येकादिवुद्धिस्तथा घटादिष्वप्यसहायादिस्वभावेष्वेकादिवुद्धिर्भविष्यतीत्यलमर्थान्तरभूतयैकादिसंख्यया । न च गुणेषु संख्या सम्भवत्यद्रव्यत्वात्तेषां तस्याश्च गुणत्वेन द्रव्याश्रितत्वात् । न च गुणेपूपचरितमेकत्वादिज्ञानमस्खलद्वृत्तित्वात् । यदि चाश्रयगता संख्यैकार्थसमवायाद्गुणेपूपचर्येत तर्ह्येकस्मिन्द्रव्ये रूपादयो वहवो गुणा इति प्रत्ययोत्पत्तिर्न स्यात्तदाश्रयद्रव्ये वहुत्वसंख्याया अभावात् । षट् पदार्था इत्यादिव्यपदेशे च किं निमित्तमित्यभिधातव्यम् ? न ह्यत्रैकार्थसमवायिनी संख्या सम्भवति तया सह षट्पदार्थानां कंचित्समवायाभावात् । अस्तु वा संख्या । तथाप्यस्याः कथं गुणत्वसिद्धिः ? सत्त्वादिवत् +षट्स्वपि पदार्थेषु प्रवृत्तेः । ननु यदि संख्या गुणो न स्यात्तर्ह्यनित्यत्वमसमवायिकारणत्वं चास्या न स्यात् । अस्ति च तदुभयम् । तथा चोक्तम् । एकादिव्यवहारहेतुः संख्या । सा पुनरेकद्रव्या चानेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः । सलिलादयश्चादिपरमाणवश्चेति विग्रहः । अनेकद्रव्या तु द्वित्वादिका परार्द्धान्ता । तस्याः खल्वेकत्वेभ्योऽनेकविषयवुद्धिसहितेभ्यो निष्पत्तिरपेक्षावुद्धिनाशाच्च विनाशः क्वचिदाश्रयविनाशादुभयविनाशाच्चेति चार्थः । असमवायिकारणत्वं च द्वित्ववहुत्वसंख्यायाः द्व्यणुकादिपरिमाणं प्रतीति । एतदपि मनोरथमात्रं भेदवदस्याः कारणत्वाभावात् । यथैव हि कार्यभिन्नतायां कारणभिन्नताया असमवायिकारणत्वं भवता नेष्यते तथैकत्वस्यापि तन्नेष्टव्यं तस्या(ऽ)भेदपर्यायत्वात् । अभेदभेदौ च स्वात्मपरात्मापेक्षौ रूपादिष्वपि भवतः । यथा चैकमभिन्नमिति पर्यायस्तथानेकं भिन्नमित्यपि । तथा च द्वित्वादिरप्यनेकत्वपर्यायः । तस्योत्पत्त्यादिकल्पना न कार्या ।

---

१ अत्र दण्डपुरुषयो सयोगो विशेष ॥ २ निर्गुणा इति वचनात् ॥ ३ सख्यारहितेष्वित्यर्थं ॥४ अवाधित ॥५ आश्रयगतद्रव्यस्यैकत्वात् ॥६ केवलद्रव्यसमवेता ॥७ द्रव्यलक्षणेऽर्थे ॥ ८ उत्तरसख्योत्पत्तौ प्राक्तनसख्याऽसमवायिकारण, द्रव्य समवायिकारणमपेक्षावुद्धिर्निमित्तकारणमिति ॥ ९ आदिशब्दोत्र लुप्तो द्रष्टव्य ॥ १० सलिलादि( कार्यलक्षण )रूपादीनामनित्यत्वनिष्पत्तिर्यथा तथाऽनित्यैकद्रव्यगताया एकसख्याया अनित्यत्वनिष्पत्ति । यथा च जलादिपरमाणुरूपादीना ( कारणरूपाणाम् ) तथा नित्यैकद्रव्यगताया एकसख्याया नित्यत्वमिति भाव ॥ ११ कार्यरूपा ॥ १२ कारणरूपपरमाणव ॥ १३ द्वित्वादिसख्या प्रत्यपेक्षावुद्धे कारणत्वमेकत्वसख्यायास्त्वसमवायिकारणत्वमिति भाव १४ इमौ द्वावमी वहव ॥ १५ सख्येय आश्रय ॥ १६ सख्येयस्य च ॥ १७ सख्याम् ॥ १८ उत्तरगुण प्रति प्राक्तनगुणस्यासमवायिकारणत्वाभ्युपगमात् ॥ १९ द्वित्वादिसख्या प्रति ॥ २० द्वित्वादिसख्या प्रति ॥ २१ अभेदपर्यायत्वेप्यसमवायिकारणत्व कुतो न भवतीत्युक्ते सत्याह ॥ २२ एकनानात्वम् ॥ २३ रूपस्य स्वरूपापेक्षयाऽभेद । परापेक्षया भेद । एव रसादिषु वाच्यम् ॥ २४ अभेदोऽसमवायिकारण न भवति द्रव्यादन्यत्र वृत्तिमत्त्वाद्भेदवत्सत्त्वादिवद्वेति ॥ २५ अपिशब्देन द्रव्य ग्राह्य तत्रापि स्वपररूपापेक्षयाऽभेदभेदौ ॥ २६ आदिशब्देन नाशस्थितिसग्रह ॥ २७ द्वित्वादेरनेकपर्यायत्वे वस्तुस्वरूपमेवायातम् । तस्य च स्वकारणकलापादुत्पत्तेरनेकविषयवुद्धिसहितेभ्यो निष्पत्तिरित्यादि निरर्थकमिति भाव ॥

नन्वेवं[1] सर्वत्र द्वे त्रीणीत्यादिप्रतिभासप्रसङ्गा[3]त्प्रतिभासप्रविभागो न स्यादऽनेकत्वस्याविशिष्टत्वात्। तत्र—अपेक्षा[4]बुद्धिविशेषवत्तत्सिद्धेरप्रतिबन्धात्। यथैव ह्यनेकविप्रत्वाविशेषेपि काचिदपेक्षाबुद्धिर्द्वित्वस्योत्पादिका काचित्रित्वस्य। न[5] ह्यपेक्षाबुद्धेः पूर्वं द्वित्वादिगुणोस्त्यनवस्थाप्रसङ्गात्। अपेक्षाबुद्धिजनितस्य वा द्वित्वादेरानर्थक्यानुषङ्गात्। तथा द्वित्वादिप्रत्ययविभागोपि भविष्यति। यत एव चाभिन्नभिन्नत्वलक्षणाद्विशेषादपेक्षाबुद्धिविशेषस्तत एवैकत्वादिव्यवहारभेदोपि भविष्यति इत्यलमन्तर्गड्वनैकत्वादिगुणेन। एवं च गुणेष्वप्येकत्वादिव्यवहारोऽकष्टकल्पनः स्यात्। गणितव्यवहारश्च षट्पञ्चविंशतिभिः सार्धं शतमित्यादिः सुगमः। तस्मादभिन्न तावदेकमित्युच्यते तदपरेणाभिन्नेन सह द्वे इति, ते त्वपरेणाभिन्नेन सह त्रीणीत्येवमादिः समयो लोके प्रसिद्धो गणितप्रसिद्धश्चैकत्वादिव्यवहारहेतुर्द्रष्टव्य इति। अथ द्वित्वबहुत्वसंख्याया द्व्यणुकादिपरिमाणं प्रत्यसमवायिकारणत्वोपपत्तेः सद्भावसिद्धिः, तन्न—अस्यास्तदसमवायिकारणत्वे प्रमाणाभावात्। परिशेषोस्तीति चेन्न कारणपरिमाणस्यैवासमवायिकारणत्वसम्भवाद्रूपादिवत्। ननु परमाणुपरिमाणजन्यत्वे द्व्यणुकेपि परमाणुत्वप्रसङ्गः स्यात्तन्न कार्यकारणयोस्तुल्यपरिमाणत्वे दृष्टान्ताभावात्। सर्वत्र हि कारणपरिमाणादधिकमेव कार्यपरिमाणं दृश्यते। परिमाणवच्च कर्मण्यप्यसमवायिकारणत्वमस्याः स्यात्। दृश्यते हि द्वाभ्यां बहुभिर्वा पाषाणाद्युत्थापनम्। न चात्र संख्यायाः कारणत्वं भवद्भिरिष्टम्। अथास्यास्तत्रापि निमित्तत्वमिष्यते, को वै निमित्तत्वे विप्रतिपद्यते? सामान्यादीनामपि तदभ्युपगमात्। असमवायिकारणत्वं तु तस्याः परिमाणवदुत्थापनादिकर्मण्यभ्युपगन्तव्यम्। न चान्यत्रापीत्यलमतिप्रसङ्गेन। यदप्युक्त "महदादिपरिमाणं रूपादिभ्योर्थान्तरं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वात्सुखादिवत्" तदप्ययुक्तं हेतोरसिद्धेर्घटाद्यर्थव्यतिरेकेण महदादिपरिमाणस्याध्यक्षप्रत्ययग्राह्यत्वेनासंवेदनात्। असत्यपि महदादौ प्रासादमालादिषु महदादिप्रत्ययप्रादुर्भावप्रतीतेरनैकान्तिकश्चायम्। न च यत्रैव प्रासादादौ समवेतो मालाख्यो गुणस्तत्रैव महत्त्वादिकमपीत्येकार्थसमवायवशान्महती प्रासादमालेतिप्रत्ययोत्पत्तेर्नानैकान्तिकत्वं स्वसमयविरोधात्। न खलु प्रासादो भवद्भिरवयविद्रव्यमभ्युपगम्यते विजातीयानां द्रव्याणामनारम्भकत्वात्। किं तर्हि? संयोगात्मको गुणः। न च गुणः परिमाणवान् निर्गुणा गुणा इत्यभिधानात्। ततो मा-

१ द्वित्वादेरनेकत्वपर्यायत्वप्रकारेण ॥ २ त्रिचतु पञ्चपडादिवस्तुषु ॥ ३ द्वित्वादेरनेकपर्यायत्वात् ॥ ४ उत्तरमिद—द्वित्वादिसख्या प्रति करणत्वेनाभिमताया अपेक्षाबुद्धेरनेकत्वाविशेषेपि भेदो यथा तथा द्वित्वादिप्रत्ययविभागोपीति ॥ ५ अपेक्षाबुद्धे पूर्वमेव द्वित्वादिगुणोस्तीत्युक्ते सत्याह ॥ ६ द्वित्वादिगुणस्यापि द्वित्वादिकमपरस्माद्द्वित्वादिगुणात्तस्याप्यपरस्मादिति ॥ ७ भिनाभिन्नत्वलक्षणाद्विशेषादेकत्वादिभवनप्रकारेण ॥ ८ सख्येयात् ॥ ९ एकेन ॥ १० अपरसख्येयात् ॥ ११ सङ्केत ॥ १२ द्व्यणुकादिपरिमाणमसमवायिकारणक सद्रूपकार्यत्वाद्घटवदित्यनुमानम् ॥ १३ कारणरूपादेर्यथा कार्यरूपादिक प्रत्यसमवायिकारणत्वम् ॥ १४ द्व्यणुकादिपरिमाणस्य ॥ १५ परमाणुपरिमाणस्वरूपवत् ॥ १६ पाषाणाद्युत्थापनलक्षणे ॥ १७ नराभ्याम् ॥ १८ परै ॥ १९ विवाद करोति ॥ २० पुरुषत्वादीनाम् ॥ २१ अभ्युपगन्तव्य नेति सम्बन्ध ॥ २२ परिमाणे ॥ २३ सख्याया परिमाण प्रत्यसमवायिकारणत्वनिराकरणेन ॥ २४ गुणरूपे ॥ २५ आदिना पर्वतमालादिषु ॥ २६ अन्यथा ॥ २७ गुणे गुणसद्भावाभ्युपगमात् ॥ २८ वैशेषिकै ॥ २९ काष्ठादीनाम् ॥ ३० प्रासादलक्षणावयविद्रव्यम्। तस्य ॥ ३१ तन्त्वादिना सजातीया ये तन्त्वादयस्त एव पटाद्यवयविद्रव्यारम्भका इति भाव ॥

व्यतिरिक्तपृथक्त्वानाधारा[1] यथा रूपादयः। परस्परव्यावृत्तात्मानश्च घटादयोर्था इति । ततो[2] विभिन्नस्वभावतयोत्पन्नार्थस्यैव पृथगितिप्रत्ययविषयत्वप्रसिद्धेरलं पृथक्त्वगुणकल्पनया पृथक्प्रत्ययस्याप्यसाधारण[3]धर्मादेवोपपत्तेः । यदा ह्येकं वस्त्वितरेभ्यो भिन्नं पश्यति प्रतिपत्ता तदैकं पृथगिति प्रतिपद्यते । यदा तु द्वे वस्तुनीतरेभ्यो विलक्षणैकधर्मयोगाद्विभिन्ने पश्यति तदा द्वे पृथगिति मन्यते। यदा त्वेकदेशत्वादि[4]ना धर्मेणेतरेभ्यो वहूनि भिन्नानि पश्यति तदैतान्येतेभ्यः पृथगिति प्रतिपद्यते। यथा रूपादयो द्रव्यात्पृथगिति। संयोगस्तु समवायनिराकरणप्रघट्टके प्रतिपेत्स्यते । तदभावात्प्राप्तिपूर्विका अप्राप्तिर्विभाग इत्यपि निरस्तम्। न हि प्रागभाविसान्तरैरूपतापरित्यागेन निरन्तर[5]रूपतयोत्पन्नवस्तुव्यतिरेकेणान्यः संयोगः संयुक्तप्रत्ययविषयोनुभूयते। अविच्छिन्नोत्पत्तिकमेव[6] हि वस्तु निरन्तरप्रत्ययविषयो, निरन्तरोपरचितदेवदत्तयज्ञदत्तगृहवत्[7] । न खलु गृहयोः परेणापि[8] संयोगगुणाश्रयत्वमिष्टं[9] निर्गुणत्वाद्गुणानां तयोश्च संयोगात्मकत्वेन गुणत्वात्। नापि विच्छिन्नोत्पन्नवस्तुव्यतिरेकेणान्यो विभागो विभक्तप्रत्ययविषयो हिमवद्विन्ध्यवत्। न हि तयोर्विभागाश्रयत्वं प्राप्तिपूर्विकाया अप्राप्तेर्विभागलक्षणायास्तयोरभावात्। प्रयोगः—या संयुक्ताकारा बुद्धिः सा भवत्परिकल्पितसंयोगानास्पदवस्तुविशेषमात्रप्रभवा यथा संयुक्तौ प्रासादाविति बुद्धिः। संयुक्ताकारा च चैत्रः कुण्डलीत्यादिबुद्धिरिति। यद्वा यानेकवस्तुसन्निपाते सति संमुत्पद्यते[10] सा भवत्परिकल्पितसंयोगविकलानेकवस्तुविशेषमात्रभाविनी यथाऽविरलाऽवस्थिताऽनेकतन्तुविषया बुद्धिः । तथा च विमत्यधिकरणभावापन्ना संयुक्तबुद्धिरिति। तथा मेषादिषु विभक्तबुद्धि[11]र्विभागरहितपदार्थमात्रनिबन्धना विभक्तत्वादनेकपदार्थसन्निधानाय[12]त्तोदयत्वाद्वा देवदत्तयज्ञदत्तगृहविभागबुद्धिवद्हिमवद्विन्ध्यविभागबुद्धिवद्वा। सत्यपि वा संयोगे विभागस्य तदभावलक्षणत्वान्न गुणरूपता । कथमन्यथा पुत्रादौ चिरनिवृत्तेपि संयोगे विभक्तप्रत्ययः स्यात्? न खलु तत्र विभागः संभवत्यस्य[13] कियत्कालस्थायिगुणत्वेनाभ्युपगमात्। कथं वा हिमवद्विन्ध्यादौ संयोगेनुत्पन्नेपि विभक्तप्रत्ययः स्यात्? संयोगाभावात्[14]। व्यतिरिक्त[15]विभागस्वरूपस्य क्वचिदप्यनुपलम्भान्नोपचारकल्पनापि साध्वी[16]। विभागाभावे कुतः संयोगनिवृत्तिरिति चेत्कर्मण[17] एवेति ब्रूमः[18] कर्ममात्रादपि[19] तन्निवृत्तिः[20] स्यादित्यप्यदोषः[21]। संयोगमात्रनिवृत्तेरिष्टत्वात्। संयोगविशेषनिवृत्तिस्तु कर्म[22]विशेषात्त्वन्मते[23] ततो विभागविशे-

---

१ स्वव्यतिरिक्तपृथक्त्वानाधारा घटादयो यत ॥ २ वस्तुव्यतिरिक्तपृथक्त्वासम्भवात्कथं पृथक्त्वप्रत्ययोत्पत्तिरित्युक्ते सत्याह ॥ ३ असाधारण =तन्मात्रवृत्ति ॥ ४ आदिना काललस्वरूपत्वग्रह ॥ ५ भिन्नरूपतेत्यर्थ ॥ ६ अभिन्नरूपतयेत्यर्थं ॥ ७ अपृथक् ॥ ८ न केवलमस्माभि ॥ ९ गृहस्य गुणत्वमसिद्धमित्याह ॥ १० इन्द्रियाणामनेकवस्तुभि सह सन्निपाते सन्निकर्षे समुत्पद्यते इत्यर्थ ॥ ११ अयमस्मान्मेषाद्भिन्नो मेष इत्यादिप्रकारेण ॥ १२ अनेकपदार्थ सह सन्निकर्ष इन्द्रियाणाम्। तस्यायत्त उदयो यस्या इति वाक्यम् ॥ १३ विभागस्य । १४ यतो यत्र सयोगपूर्वको विभक्तप्रत्ययस्तत्रैव विभागव्यवहारो युज्यते। न चानयो प्राक् सयोग पश्चाद्विभाग इति ॥ १५ व्यतिरिक्तस्य=वस्तुन सकाशाद्भिन्नरूपस्य ॥ १६ क्वचि मुख्यत्वेनाप्रसिद्धस्योपचाराभावात्। सति सभवेन्यत्र निमित्तप्रयोजनवशादुपचार प्रकल्प्यते यत ॥ १७ क्रियात ॥ १८ जैना ॥ १९ कस्माच्चिदेव कर्मण इत्यर्थ ॥ २० तस्य=सयोगस्य ॥ २१ जैनानाम् ॥ २२ *यथा द्रव्यारम्भक(परमाणु)सयोगविशेषनिवृत्तिर्भिद्यमानवशाद्यवयविद्रव्यस्यावयवक्रियात इति सबन्ध* ॥ २३ तव=वैशेषिकस्य ॥

घोत्पत्तिवत् । कर्मणः संयोगोत्पादकत्वात्कथं तन्निवर्तकत्वमिति चेत्तर्हि हस्तवाणादिसंयोगस्य कर्मोत्पादकत्वोपलम्भात् कथं वृक्षादौ वाणादिसंयोगस्य तन्निवर्तकत्वं स्यात् ? अन्यस्य तन्निवर्तकत्वमन्यत्रापि समानम् । न खलु येनैव कर्मणा यः संयोगो जनितः स तेनैव निवर्त्यते इति । एतेन विभागजविभागोपि चिन्तितस्तस्यापि संयोगाभावरूपस्य क्रियात एवोत्पत्तिप्रसिद्धेः । ननु यदि विभागजविभागो न स्यात्तर्हि हस्तकुड्यसंयोगविनाशेपि शरीरकुड्यसंयोगविनाशो न प्राप्नोति, तन्न–हस्तकुड्यसंयोगव्यतिरेकेण शरीरकुड्यसंयोगस्यैवासंभवात् । हस्तकुड्यसंयोगादेवासौ कल्प्यते इति चेत्तर्हि हस्तकर्मदर्शनाच्छरीरेपि कर्म कस्मान्न कल्प्यते ? तुल्याक्षेपसमाधानत्वात् । यच्चोच्यते तत्प्रसिद्धयेऽनुमानं–विवक्षितावयवक्रियाऽऽकाशादिदेशेभ्यो विभागं न करोति द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वात् । या पुनराकाशादिदेशविभागकर्त्री सा संयोगविशेषनिवर्त्तकविभागजनिकापि न भवति । यथाङ्गुलिक्रियेति । यदि भिद्यमानवंशाद्यवयविद्रव्यस्यावयवक्रिया आकाशादिदेशेभ्यो विभागं कुर्यात्तर्हि वंशादिद्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वमेवास्या न स्यादङ्गुल्याद्यवयविद्रव्यक्रियावत् । ततोऽवयविद्रव्यस्याकाशादिदेशविभागोत्पादकोऽवश्यं विभागोऽभ्युपगन्तव्यः । इत्यप्यसाम्प्रतं विभागोत्पादकत्वस्यासिद्धत्वात् । क्रियात एव संयोगनिवृत्तेरुक्तत्वात् । अथावयविनस्तत्क्रियाऽऽकाशादिदेशसंयोगं न निवर्त्तयति द्रव्यारम्भकसंयोगनिवर्त्तकत्वादितीदमत्र विवक्षितं तथाप्यसाधारणो हेतुः सपक्षेप्याकाशादिदेशसंयोगानिवर्त्तके रूपादौ वृत्तेरभावात् । न चावयवसयोगादवयविनः संयोगोन्यस्तद्भेदैकान्तस्य प्रागेव प्रतिक्षेपात् । विनाशोत्पादप्रक्रियायाश्च कृतोत्तरत्वात् । तन्न विभागो घटते ।

नापि परत्वापरत्वे–परापरप्रत्ययाभिधानयोस्तदन्तरेणापि रूपादौ सम्भवात् । तथा हि । क्रमोत्पन्ननीलादिगुणेषु परं नीलमपरं चेति प्रत्ययोत्पत्तिरसत्यपि परत्वापरत्वलक्षणे गुणे दृष्टा गुणानां निर्गुणतयोपगमात् । तथा घटादिष्वपि स्यात् । अथात्र दिक्कालकृतः परापरप्रत्ययः । ननु घटादिष्वप्यसौ तत्कृतोस्तु विशेषाभावात् । तथा च प्रयोगः । योयं परापरादिप्रत्ययः स परपरिकल्पितगुणैरहितोर्थमात्रकृतक्रमोत्पादव्यवस्थानिबन्धनः परापरप्रत्ययत्वात् । रूपादिषु परापरप्रत्ययवत् । विप्रकृष्ट परं संनिकृष्टमपरमिति चानयोरेकार्थत्वान्न भेदं पश्यामः । ततश्चायुक्तमुक्तं=विप्रकृष्टसंनिकृष्टबुद्धिभ्यां परत्वापरत्वयोरुत्पत्तिरिति । न हि घटबुद्धिमपेक्ष्य कुम्भ उत्पद्यते इति युक्तम् । नापि पर्यायशब्दभेदादर्थो भिद्यते इति । किं च सामान्येषु महापरिमाणाल्पपरिमाणगुणेषु च महदल्पाधारत्वबु-

१ अत्र देशाद्देशान्तरप्राप्तिलक्षणमेव कर्म गृह्यते ॥ २ वृक्षादौ सयुज्य वाणादि पुनर्न ततोग्रदेश यातीत्यर्थ ॥ ३ सयोगनिवृत्ते कर्मजलप्रतिपादनेन ॥ ४ भिद्यमानवशाद्यवयविद्रव्यस्य ॥ ५ भिद्यमानवशाद्यवयविन इति शेष ॥ ६ द्रव्य वशादि ॥ ७ परमाणु ॥ ८ प्रसारणसङ्कोचनरूपा ॥ ९ द्रव्यारम्भकसयोगविरोधिविभागोत्पादकत्व च स्यादाकाशादिदेशेभ्यो विभाग च कुर्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ १० विभागाद्विभागो जात इत्यर्थ ॥ ११ जैनादिना ॥ १२ तर्हि विभागाभावे सयोगनिवृत्ति कथमिति शङ्कायामाह ॥ १३ अनेकान्तिक ॥ १४ तयो अवयवावयविनो ॥ १५ अवयवेषु क्रिया क्रियात सयोग सयोगादवयविन उत्पत्तिरिति प्रक्रियातस्तयोर्भेद इत्युक्ते सत्याह ॥ १६ द्रव्यारम्भकसयोगविरोधिविभागोत्पादकत्वसाधनमसिद्ध यत ॥ १७ न तु स्वाभाविक ॥ १८ गुणो परत्वापरत्वलक्षणौ ॥ १९ अर्थो दिक्काललक्षण ॥ २० गुणरूपेषु ॥ २१ परविप्रकृष्टयोरपरसन्निकृष्टयोश्च ॥ २२ परापररूपेषु इत्यर्थ ॥

द्व्यपेक्षयोः परत्वापरत्वयोरुत्पत्तिः कल्प्यतामविशेषात् । किं च परत्वापरत्वयोर्गुणत्वमभ्युपगच्छता मध्यत्वं च गुणोऽभ्युपगन्तव्यः कालदिक्कृतमध्यव्यवहारस्याप्यत्र समानत्वात् । सुखदुःखेच्छादीनां चाबुद्धिरूपत्वे रूपादिवन्नात्मगुणता युक्ता बुद्धिरूपत्वे चातो भेदेनाभिधानमयुक्तम् । कंचिद्विशेषमादाय बुद्ध्यात्मकानामप्यतो भेदेनाभिधानेऽभिधानादीनामपि भेदेनाभिधानं कार्यम् । इत्यलमतिप्रसङ्गेन । गुरुत्वादीनां तु पुद्गलगुणत्वं युक्तमेव । अतीन्द्रियं गुरुत्वं पातोपलम्भेनानुमेयत्वादित्येतन्न युक्तं करतलाद्युपरिस्थिते द्रव्यविशेषे पातानुपलम्भेऽपि गुरुत्वस्य प्रतिभासनात् । रजःप्रभृतीनामपि गुरुत्वं कस्मान्न गृह्यते इति चेद्ग्रहणायोग्यत्वात् । तावतैवातीन्द्रियत्वे गन्धरसादीनामप्यतीन्द्रियत्वं स्यात् । क्वचिद्दूरे तदाश्रयस्याम्रफलादेः प्रत्यक्षत्वेऽपि तेषां ग्रहणाभावादिति । पृथिव्यनलयोरप्यस्ति द्रवत्वमित्यनुपपन्नं सुवर्णादीनाम् 'अग्नेरपत्यं प्रथमं सुवर्णम्' इत्यागमतः प्रसिद्धतैजसत्वानां जतुप्रभृतिपार्थिवद्रव्याणां चाप्यस्यैव द्रवत्वस्य संयुक्तसमवायवशात्प्रतीतिसम्भवात् । अथ सर्वं पार्थिवं तैजसं च द्रव्यं द्रवत्वसंयुक्तं रूपित्वात्तोयवदित्यनुमानात्तस्य द्रवत्वसिद्धिस्तन्न प्रत्यक्षेण स्पन्दनकर्मानुपलम्भेन च बाधितविषयत्वात् । अथेत्थन्धर्मकं तत्र द्रवत्वं जातं यत्प्रत्यक्षं न भवति स्पन्दनक्रियां च न करोतीत्युच्यते तर्हि गुरुत्वरसावप्येवंधर्मकौ रूपित्वादेव किन्न तेजसोऽभ्युपगम्येते तुल्याक्षेपसमाधानत्वात् । तथा चास्योर्ध्वगतिस्वभावता न स्यात् । रसः पृथिव्युदकवृत्तिरित्यस्य च विरोध इति । स्नेहोऽम्भस्येवेत्यप्ययुक्तं घृतादेरपि लोके वैद्यकादिशास्त्रे च स्निग्धत्वेन प्रसिद्धत्वात् । घृतादावन्यनिमित्तत्वेनौपचारिकः स्निग्धप्रत्यय इत्यप्यसाम्प्रतं विपर्ययस्यापि कल्पयितुं शक्यत्वात् । तथा हि । तोयसम्पर्केऽप्योदनादौ च स्निग्धप्रत्ययो नास्ति घृतादिसम्पर्के तु स्निग्धप्रत्ययः सर्वेषामस्त्येवेति । कणिकादौ तोयस्य बन्धहेतुत्वोपलम्भात्तस्यैव स्नेहो विशेषगुण इत्यप्यसारं भवता स्नेहरहितत्वेनाभ्युपगतस्यापि क्षीरजतुप्रभृतेर्बन्धहेतुत्वेन प्रतीतेः । स्नेहस्य गुणत्वाभ्युपगमे च काठिन्यमार्दवादेरपि गुणत्वाभ्युपगमः कर्त्तव्यः । तथा च तत्संख्याव्याघातः स्यात् । ननु काठिन्यादेः संयोगविशेषरूपत्वात्कथं गुणसंख्याव्याघातहेतुत्वम् ? तथा चोक्तमवयवानां प्रशिथिलसंयोगो मृदुत्वमित्यादि । तदप्यसङ्गतं चक्षुषा संयोगेषु प्रतीयमानेष्वपि मार्दवादेरप्रतिभासनात् । यो हि यद्विशेषः स तस्मिन्प्रतीयमाने प्रतीयत एव । यथा रूपे प्रतीयमाने तद्विशेषो नीलादिः । न प्रतीयते च संयोगेषु प्रतीयमानेष्वपि काठिन्यादि । तस्मान्नासौ तद्विशेष इति । कटाद्यवयवानां प्रशिथिलसंयोगेऽपि मृदुत्वाप्रतीतेश्च विशिष्टचर्माद्यवयवानामप्यप्रशिथिलसंयोगित्वेऽपि मृदुत्वोपलब्धेश्चेति । ननु काठिन्यादेः संयोगविशेषरूपत्वाभावे कथं कठिनमेव कणिकादिद्रव्यं

---

१ उभयत्र । अपेक्षाबुद्धे ॥ २ आदिना मस्तकरुन्वादिग्रहणम् ॥ ३ आदिपदेन हरितालरीतिकाग्रहणम् ॥ ४ जलीयस्य ॥ ५ प्रत्यक्षौ न भवत पतनादिक्रिया च न कुरुत इति ॥ ६ प्रत्यक्षेण पतनादिकर्मानुपलम्भेन च बाधितविषयत्वात् तेजसो गुरुत्व रसत्वमित्याक्षेप । अथेत्थन्धर्मकं तेजसि गुरुत्व रसत्व च जातं यत्प्रत्यक्ष न भवति तत्पतनादिक्रिया च न करोतीति समाधानम् ॥ ७ तेजोद्रव्यस्य गुरुत्वरसत्वोपगमे च ॥ ८ तेजस्यपि रसस्य भावात् ॥ ९ अन्यत्=जलम् ॥

मर्दनादिना मृदुत्वमापाद्यते ? इत्यप्यसुन्दरम् । न हि तदेव द्रव्यं मृदु भवति । किं तर्हि ? पूर्वकठिनपर्यायनिवृत्तौ मृदुपर्यायोपेतं द्रव्यान्तरमुत्पद्यते । संयो-
गविशेषमृदुत्ववादिनापि पूर्वद्रव्यनिवृत्तिरत्राभ्युपगतैव । ततः स्पर्शविशेषो मृदुत्वादिरभ्युपगन्तव्यः–कठिनः स्पर्शो मृदुः स्पर्श इति प्रतीतिदर्शनात् । तथा च
पाकजत्वमपि स्पर्शस्योपपन्नं घटादिषु रूपादिवत् । विलक्षणस्पर्शोपलम्भान्नान्यथा । न च काठिन्यादिव्यतिरेकेण स्पर्शस्यान्यद्वैलक्षण्यं व्यवस्थापयितुं शक्य-
मिति । वेगाख्यस्तु संस्कारो न केवलं पृथिव्यादावेवास्त्यात्मन्यप्यस्य सम्भवात् । तस्यापि सक्रियत्वेन प्रमाधितत्वात् । न च क्रियातोऽर्थान्तरं वेगोऽस्याः
शीघ्रोत्पादमात्रे वेगव्यवहारप्रसिद्धेः । वेगेन गच्छतीति प्रतीतेः क्रियातोऽर्थान्तरं वेग इत्यप्ययुक्तं वेगेन गच्छति शीघ्रं गच्छतीत्यनयोरेकत्वात् । न च कर्मणः
कर्मारम्भकत्वेऽनुपरमप्रसङ्गः शब्दवत्तदुपरमोपपत्तेः । यथैव हि शब्दस्य शब्दान्तरारम्भकत्वेऽप्युपरमस्तथात्रापि । कर्म कर्मनाप्यं न विद्यते इत्यपि वचनमात्र-
त्वादविरोधकम् । न च विभिन्नः संस्कारो बाणादीनामपातहेतुः प्रतीयतेऽन्यथा कदाचिदपि तेषां पातो न स्यात्तत्प्रतिबन्धकस्य वेगस्य सर्वदावस्थानात् । न
च मूर्तिमद्वाय्वादिसंयोगोपहतशक्तित्वाद्वेगस्य तेषां पतनं प्रथममेव पातप्रसक्तेः । तत्संयोगस्य तद्विरोधिनस्तदापि सम्भवात् । न च प्राग्वेगस्य बलीयस्त्वा-
द्विरोधिनमपि मूर्तद्रव्यसंयोगमपास्य शरं देशान्तरं प्रापयतीत्यभिधातव्यं पश्चादप्यस्य बलीयस्त्वात्तथैव तत्प्रापकत्वप्रसक्तेः । न खलु वेगस्य पश्चादन्यथात्वं
तथोत्पत्तिकारणाभावात् । तत्समवायिकारणत्वस्येष्वादेः सर्वदाऽविशिष्टत्वात् । न च कर्माख्यं कारणं पश्चाद्विशिष्यते तस्यापि तुल्यपर्यनुयोगत्वात् । न च
प्रभूताकाशप्रदेशसंयोगोत्पादनात् संस्कारप्रक्षयादिषोः पातः संस्कारस्यैकस्वभावत्वेनावस्थितस्य प्रागिव पश्चादपि प्रक्षयानुपपत्तेः । न चाकाशस्य प्रदेशाः परेणे-
ष्यन्ते येन तत्संयोगाना भूयस्त्वं संस्कारप्रक्षयहेतुत्वं वा युक्तियुक्तं भवेत् । कल्पनाशिल्पिकल्पितानां संयोगभेदे कृतं तदायत्तभेदानां न संयोगानां संस्का-
रप्रक्षयहेतुत्वं दूरोत्सारितमेव ।

भावनाख्यस्तु संस्कारो धारणापरनामा नानिष्टः पूर्वपूर्वानुभवाहितसामर्थ्यलक्षणस्यात्मनोऽनर्थान्तरभूतस्य स्मृत्यादिहेतुत्वेनास्याभिरपीष्टत्वात् । स्थितस्था-
पकरूपस्तु संस्कारोऽसम्भाव्य एव । स हि किं स्वयमस्थिरस्वभावं भावं स्थापयति स्थिरस्वभावं वा ? न तावदस्थिरस्वभावं तत्स्वभावानतिक्रमात् । तथावि-

१ मृदुरूपोऽपि संयोगगुणविशेष ॥ २ मृदुनाऽपि स्पर्शविशेषत्वे च ॥ ३ मृदुनाऽपि स्पर्शविशेषस्याभावे [illegible] ॥ ४ [illegible] ॥
नम्भनिष्यति ततश्च विलक्षणस्पर्शोपलम्भेन पाकजत्वमप्यविरुद्धं [illegible] ॥ ५ [illegible] ॥ ६ [illegible] ॥
७ वेगस्य क्रियात्वे क्रियातः क्रियोत्पद्यत इति भाव ॥ ८ यद्यपि [illegible] तथापि [illegible] ॥ ९ [illegible] ॥
१० नित्यत्वाद्गुणानाम् ॥ ११ आकाशप्रदेशानाम् ॥ १२ संयोगानां नानाकारत्वम् ॥

धस्यापि स्थापनेति[1]प्रसङ्गः । क्षणादूर्ध्वं चार्थस्य स्वयमेवाभावात्कस्यासौ स्थापकः स्यात्? भावे वाऽस्थिरस्वभावताविरोधः । अथ द्वितीयः पक्षस्तदा स्थिरस्वभावेऽवस्थितानामर्थानां स्वयमेवावस्थानात्किमकिञ्चित्करस्थापकप्रकल्पनया? ततः स्वहेतुवशात्तथा तथा परिणतिरेवार्थानां स्थितस्थापकः संस्कारो, नान्यः।

धर्माधर्मशब्दानां तु गुणत्वं प्रागेव प्रतिविहितमित्यलमतिप्रसङ्गेन । ततः कर्तुः फलदाय्यात्मगुण आत्ममनःसंयोगजः स्वकार्यविरोधी[2][3] धर्माधर्मरूपतया भेदवानदृष्टाख्यो गुण इत्ययुक्तमुक्तम् । इदं तु युक्तं कर्तुः प्रिय[4]हित[5]मोक्षहेतुर्धर्मः, अधर्मस्त्वप्रिय[6]प्रत्ययहेतुरिति । तन्न गुणपदार्थोऽपि श्रेयान् ।

नापि कर्मपदार्थः । स हि पञ्चप्रकारः परैः प्रतिपाद्यते उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणीत्यभिधानात् । तत्रोत्क्षेपणं यदूर्ध्वाधःप्रदेशाभ्यां[7] संयोगविभागकारणं कर्मोत्पद्यते । यथा शरीरावयवे तत्सम्बद्धे वा मूर्त्तिमद्द्रव्ये ऊर्ध्वदिग्भाविभिराकाशदेशाद्यैः संयोगकारणमधोदिग्भागावच्छिन्नैश्च तैर्विभागकारणं[8] तद्विपरीतसंयोगकारणं[9] च कर्मावक्षेपणम् । ऋजुद्रव्यस्य कुटिलत्वकारणं च कर्माकुञ्चनम् । यथा ऋजुनोऽङ्गुल्यादिद्रव्यस्य येऽग्रावयवास्तेषामाकाशादिभिः स्वयं-योगिभिर्विभागे सति मूलप्रदेशैश्च संयोगे सति येन कर्मणाङ्गुल्यादिरवयवी कुटिलः संपद्यते तदाकुञ्चनम् । तद्विपर्ययेण संयोगविभागोत्पत्तौ येनावयवी ऋजुः सम्पद्यते तत्कर्म प्रसारणम् । अनियतदिग्देशैर्यत्संयोगविभागकारणं तद्गमनम् । उत्क्षेपणादिकं तु चतुःप्रकारमपि कर्म नियतदिग्देशसंयोगविभागकारणमिति । तदेतत्पञ्चप्रकारतोपवर्णनं[10] कर्मपदार्थस्याविचारितरमणीयं देशाद्देशान्तरप्राप्तिहेतुः परिस्पन्दात्मको हि परिणामोऽर्थस्य कर्मोच्यते । उत्क्षेपणादीनां चात्रैवान्तर्भावः । अत्रान्तर्भूतानामपि कश्चिद्विशेषमादाय भेदेनाभिधाने भ्रमणस्पन्दनादीनामप्यतो[11] भेदेनाभिधानानुषङ्गात्कथं पञ्चप्रकारतैवास्य? न चैकरूपस्यार्थस्य[12] क्रियासमावेशो युक्तः, सर्वदाऽविशिष्टत्वात् । यत्सर्वदाऽविशिष्टं न तस्य क्रियासम्भवो यथाकाशस्य । अविशिष्टं चैकरूपं वस्त्विति । न[13] चैकरूपत्वेप्यर्थानां गन्तृस्वभावता युक्ता निश्चलत्वाभावप्रसङ्गात् सर्वदा गन्तृत्वैकरूपत्वात् । अथाऽगन्तृत्वरूपताप्येषामङ्गीक्रियते तथा सत्याकाशवदगन्तृतैव स्यात् । एवं च गत्यवस्थायामप्यचलत्वमेषां प्रसक्तं तदपरित्यक्ताऽगतिरूपत्वान्निश्चलावस्थावत् । न चोभयरूपत्वादेषामयमदोषो[14] गन्तृत्वागन्तृत्वविरुद्धधर्माध्यासेनैकत्वव्याघातानुषङ्गादचलोऽनिलवत्[15] । यथा[16] चाक्षणिकैकरूपस्यार्थस्य क्रिया नोपपद्यते तथा क्षणिकैकरूपस्यापि–उत्पत्तिप्रदेश एवास्य प्रध्वंसेन प्रदेशान्तरप्राप्त्यसम्भ-

---

१ विद्युदादीनामपि स्थापक स्यादित्यतिप्रसङ्ग ॥ २ स्वकार्ये क्रियमाणे सति 'विरोधोऽभावो यस्य स ॥ ३ मुसलादिर्यया ॥ ४ प्रिय सुखद ॥ ५ हित परिणामपथ्य ॥ ६ दु खकारणकारणम् ॥ ७ ऊर्ध्वाध - प्रदेशाभ्या विपरीतौ अधऊर्ध्वप्रदेशौ ॥ ८ ऊर्ध्वा ॥ ९ ऊर्ध्वाध प्रदेशयो ॥ १० गमनस्य यथाऽनियतदिग्देशै सयोगविभागकारणत्व तथोत्क्षेपणादेरनियतदिग्देशाभ्या सयोगविभागकारणत्व ततश्च कथमुत्क्षेपणादीना भेद इत्युक्ते सत्याह ॥ ११ पञ्चप्रकारात्कर्मण ॥ १२ निरशस्याऽविचलितस्य जीवादे ॥ १३ सर्वदाऽविशिष्टश्च स्यात्क्रियासमवेतश्च स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह ॥ १४ गन्तृत्वमेवागन्तृत्वमेवेत्येकान्तप्रसङ्गलक्षण ॥ १५ पर्वतवायुवत् ॥ १६ लब्धावसरो हि सौगतो ब्रूते–अर्थस्याक्षणिकैकरूपत्वे क्रिया न घटते तर्हि क्षणिकैकरूपत्वे घटिष्यत इत्याशङ्कायामाह ॥

वात्। यो ह्युत्पत्तिप्रदेश एव ध्वंसमुपगच्छति न सोन्यदेशमाक्रामति। यथा प्रदीपः। उत्पत्तिप्रदेशध्वंसमुपगच्छति च क्षणिको भाव इति। न चार्थस्य क्षणिकत्वा-देशाद्देशान्तरप्राप्तिर्भ्रान्ता क्षणिकवादस्य प्रतिषिद्धत्वात्। ततः परिणामिन्येवार्थे यथोक्तं कर्मोपपद्यते। न चेदमर्थादर्थान्तरं तथाभूतस्यास्योपलब्धिलक्षण-प्राप्तस्यानुपलम्भेनासत्त्वात्। प्रयोगः। यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तन्नास्ति यथा क्वचित्प्रदेशे घटः। नोपलभ्यते च विशिष्टार्थस्वरूपव्यतिरेकेण कर्मेति। न चोपलब्धिलक्षणप्राप्तत्वमस्याऽसिद्धं संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणीत्यभिधानात्। तन्न कर्मपदार्थोपि परेषां घटते।

नापि सामान्यपदार्थस्तस्य पराभ्युपगतस्वभावस्य प्रागेवं प्रतिषिद्धत्वादिति।

विशेषपदार्थोप्यनुपपन्नः। विशेषा हि नित्यद्रव्यवृत्तयः परमाण्वाकाशकालदिगात्ममनस्सु वृत्तेरत्यन्तव्यावृत्तिबुद्धिहेतवः। ते च जगद्विनाशारम्भकोटिभूतेषु परमाणुषु मुक्तात्मसु मुक्तमनस्सु चान्तेषु भवा अन्त्या इत्युच्यन्ते तेषु स्फुटतरमालक्ष्यमाणत्वात्। वृत्तिस्तेषां सर्वस्मिन्नेव परमाण्वादौ नित्ये द्रव्ये विद्यते एव। अत एव नित्यद्रव्यवृत्तयोऽन्त्या इत्युभयपदोपादानम्। व्यावृत्तिबुद्धिविषयत्वं च विशेषाणां सद्भावसाधकं प्रमाणम्। यथा ह्यस्मदादीनां गवादिष्वाकृतिगुणक्रियावयवसंयोगनिमित्तोऽश्वादिभ्यो व्यावृत्तः प्रत्ययो दृष्टस्तद्यथा। गौः शुक्लः शीघ्रगतिः पीनककुदो महाघण्ट इति यथाक्रमम्। तथास्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु चान्यनिमित्ताभावे प्रत्याधार यद्बलाद्विलक्षणोयं विलक्षणोयमिति प्रत्ययप्रवृत्तिस्ते योगिनां विशेषप्रत्ययोन्नीतसत्त्वा अन्त्या विशेषाः सिद्धाः। इत्यपि स्वाभिप्रायप्रकाशनमात्रं तेषां लक्षणासम्भवतोऽसत्त्वात्। तथा हि। यदेतेषां नित्यद्रव्य-वृत्तित्वादिकं लक्षणमभिहितं तदसम्भवदोषदुष्टत्वादलक्षणमेव। यतो न किञ्चित्सर्वथा नित्यं द्रव्यमस्ति तस्य पूर्वमेव निरस्तत्वात्। तदभावे च तद्वृत्तित्वं लक्षणमेषां दूरोत्सारितमेव। यच्चायोगिप्रभवविशेषप्रत्ययबलादेषां सत्त्वं साध्यते तदप्ययुक्तं यतोऽण्वादीनां स्वस्वभावव्यवस्थितं स्वरूपं परस्परासङ्कीर्णरूपं वा भवेत्सङ्कीर्णस्वभावं वा? प्रथमे विकल्पे स्वत एवासङ्कीर्णाण्वादिरूपोपलम्भाद्योगिनां तेषु वैलक्षण्यप्रतिपत्तिर्भविष्यतीति व्यर्थमपरविशेषपदार्थपरिकल्पनम्।

१ बौद्धमतापेक्षयोदाहरणम्॥ २ सर्वथाऽक्षणिके क्षणिके वार्थेऽर्थक्रिया न घटते यत॥ ३ कर्मरूपतया परिणतो विशिष्ट॥ ४ विशेषणमसिद्धमित्युक्ते सत्याह॥ ५ सामान्यनिराकरणसमये॥ ६ घटपटादयोऽनित्य-द्रव्यवृत्तयोऽत्यन्तव्यावृत्तिहेतवो विशेषा। विशेषा इति बहुवचनेनानन्त्य विवक्षितम्॥ ७ सामान्यरहितनित्यद्रव्यवृत्तयोऽन्त्या विशेषा॥ ८ असादय सर्वथा व्यावृत्त इत्यादिरूपेण॥ ९ अन्तेऽवसाने भवन्ति सन्तीति यावत्। येभ्योऽपरे विशेषा न सन्तीत्यर्थ। सामान्यरूपेभ्यो विशेषेभ्योऽपरे गुणादयो विशेषा सन्ति। एभ्यस्तु नापरे किन्त्वेष्वेव वैशिष्ट्य समाप्यते॥ १० खण्डमुण्डादिरूपेषु विशेषेषु॥ ११ आकृति= जाति॥ १२ गुण,=श्वेतादि॥ १३ क्रिया गच्छत्यादि.॥ १४ अवयव, ककुदादि॥ १५ घण्टादिभि.॥ १६ उन्नीत=ज्ञातम्॥ १७ द्रव्यपरीक्षाप्रघट्टके॥

द्वितीये विशेषाख्यपदार्थान्तरसन्निधानेपि परस्परातिमिश्रितेषु परमाण्वादिषु तद्बलाद्व्यावृत्तप्रत्ययो योगिनां प्रवर्त्तमानः कथमभ्रान्तः स्वरूपतोऽव्यावृत्तरूपेष्वण्वादिषु व्यावृत्ताकारतया प्रवर्त्तमानस्यास्याऽतस्मिंस्तद्ग्रहणरूपतया भ्रान्तत्वानतिक्रमात्। तथा चैतत्प्रत्यययोगिनस्तेऽयोगिन एव स्युः। यदि च विशेषाख्यपदार्थान्तरव्यतिरेकेण विलक्षणप्रत्ययोत्पत्तिर्न स्यात्कथं तर्हि विशेषेषु तस्योत्पत्तिस्तत्रापरविशेषाभावात्? भावे वानवस्था नित्यद्रव्यवृत्तय इत्यभ्युपगमक्षतिश्च स्यात्। अथ स्वत एवात्रान्योन्यवैलक्षण्यप्रतिपत्तिस्तर्हि परमाण्वादीनामप्यत एव तत्प्रत्ययप्रवृत्तिर्भविष्यतीति कृतं विशेषाख्यपदार्थपरिकल्पनया। अथ विशेषेष्वपरविशेषयोगाद्व्यावृत्तबुद्धिपरिकल्पनायामनवस्थादिबाधकोपपत्तेरुपचारात्तेषु तद्बुद्धिः। ननु कोयं तद्बुद्धेरुपचारो नाम? असतो वस्तुस्वभावस्य विषयत्वेनाक्षेपश्चेत्कथं नास्या मिथ्यात्वं तद्योगिनां चायोगित्वम्? किञ्चासौ वस्तुस्वभावो विषयत्वेनाक्षिप्यमाणः संशयत्वेनाक्षिप्यते विपर्यस्तत्वेन वा? तत्राद्ये पक्षे व्यावृत्तरूपतया चलितप्रतिपत्तिविषयाणां विशेषाणां यथावत्प्रतिपत्त्यसम्भवात्तद्योगिनोऽयोगित्वमेव। द्वितीयेप्येतदेव दूषणं विशेषरूपविकलानपि तान् विशेषरूपतया प्रतिपद्यमानस्याऽयोगित्वप्रसङ्गाविशेषात्। यदि च बाधकोपपत्तेर्विशेषेषु व्यावृत्तबुद्धिर्नापरविशेषनिबन्धना तर्हि परमाण्वादिष्वसौ तन्निबन्धना नाभ्युपगन्तव्या तदविशेषात्। परमाण्वादौ हि विशेषेभ्योऽन्योन्यं व्यावृत्तबुद्ध्युत्पत्तौ सकलविशेषेभ्यः परमाणूनां व्यावृत्तबुद्धिर्विशेषान्तरात्स्यादित्यनवस्था। स्वतस्तेषां ततो व्यावृत्तबुद्धिहेतुत्वेऽन्योन्यमपि तद्धेतुत्वं स्वत एव स्यादिति व्यर्थमर्थान्तरविशेषपरिकल्पनम्। ननु यथाऽमेध्यादीनां स्वत एवाशुचित्वमन्येषां तु भावानां तद्योगात्तत्तथेहापि तत्स्वभावत्वाद्विशेषेषु स्वत एव व्यावृत्तप्रत्ययहेतुत्वं परमाण्वादिषु तु तद्योगात्। किञ्चातदात्मकेष्वप्यन्यनिमित्तः प्रत्ययो भवत्येव। यथा प्रदीपात्पटादिषु, न पुनः पटादिभ्यः प्रदीपे। एवं विशेषेभ्य एवाण्वादौ विशिष्टः प्रत्ययो नाण्वादिभ्यस्तत्र। इत्यप्यसमीचीनं यतोऽमेध्याद्यशुचिद्रव्यसंसर्गान्मोदकादयो भावा प्रच्युतप्राक्तनशुचिस्वभावा अन्ये एवाऽशुचिरूपतयोत्पद्यन्ते इति युक्तमेषामन्यसंसर्गादशुचित्वम्। न चाण्वादिष्वेतत्सम्भवति तेषां नित्यत्वादेव प्राक्तनाविविक्तरूपपरित्यागेनापरविविक्तरूपतयानुपपत्तेः। प्रदीपदृष्टान्तोप्यत एवासङ्गतः पटादीनां प्रदीपादिपदार्थान्तरोपाधिकस्य रूपान्तरस्यो-

---

१ सङ्कीर्णस्वरूपे ॥ २ तस्यासङ्कीर्णस्य ॥ ३ भ्रान्तप्रत्ययसम्बन्धिन इत्यर्थ ॥ ४ विशेषेषु विशेषाणा प्रवृत्ते ॥ ५ आदिना नित्यद्रव्यवृत्तय इत्यभ्युपगमक्षतिश्चेति ॥ ६ विशेषेषु ॥ ७ तस्य=व्यावृत्तस्य ॥ ८ अपरविशेषा उपचारभूतास्तत्सयोगात्तेषु जातोपि प्रत्यय उपचाररूप इत्यर्थ ॥ ९ असतो वैलक्षण्यस्य ॥ १० अन्योन्यव्यावृत्तरूपस्य ॥ ११ वैलक्षण्यरूप ॥ १२ उपचाररूप ॥ १३ अनवस्थादिरूपो बाधक ॥ १४ परमाण्वादिभ्य सर्वथा भिन्नेभ्य ॥ १५ विशेषान्तराणामप्यन्येभ्य इत्यादिप्रकारेण ॥ १६ अव्यावृत्तेषु अणुषु मुक्तमनस्सु च ॥ १७ अन्यो=विशेष ॥ १८ अन्यनिमित्तात् ॥ १९ इमे पटादय इति प्रत्यय ॥ २० सर्वथा भिन्नेभ्य ॥ २१ परमते ॥ २२ विशेषेभ्यो व्यावृत्तस्वरूपत्वेनोत्पत्तिमत्त्वम् ॥ २३ परमाण्वादीना नित्यत्वादेव ॥ २४ प्रकाशलक्षणस्य ॥

त्पत्तेः प्रकृते च तदसम्भवात् । अनुमानबाधितश्च विशेषसद्भावाभ्युपगमः । तथा हि । विवादाधिकरणेषु भावेषु विलक्षणप्रत्ययस्तद्व्यतिरिक्तविशेषनिबन्धनो न भवति व्यावृत्तप्रत्ययत्वाद्विशेषेषु व्यावृत्तप्रत्ययवदिति । तत्र विशेषपदार्थोपि श्रेयान्साधकाभावाद्बाधकोपपत्तेश्च ।

नापि समवायपदार्थोऽनवद्यतल्लक्षणाभावात्[1] । ननु चायुतसिद्धानामाधार्याधारभूतानामिहेदम्प्रत्ययहेतुर्यः सम्बन्धः[3] स समवाय इत्यनवद्यतल्लक्षणसद्भावात्तदभावोऽसिद्धः । न[4] चान्तरालाभावेनेह ग्रामे वृक्षा इतीहेदम्प्रत्ययहेतुना व्यभिचारः—संबन्धग्रहणात् । न चासौ सम्बन्धोऽभावरूपत्वात् । नापीहाकाशे शकुनिरितिप्रत्ययहेतुना[6] संयोगेनाधाराधेयभूतानामित्युक्तेः । न ह्याकाशस्य व्यापित्वेनाधस्तादेव भावोस्ति शकुनेरुपर्यपि भावात् । नापीह कुण्डे दधीतिप्रत्ययहेतुनाऽयुतसिद्धानामित्यभिधानात् । न खलु तन्तुपटादिवद्दधिकुण्डादयोऽयुतसिद्धास्तेषां युतसिद्धेः सद्भावात् । युतसिद्धिश्च पृथगाश्रयवृत्तित्वं पृथग्गतिमत्त्वं चोच्यते । न चासौ तन्तुपटादिष्वप्यस्ति तन्तून्विहाय पटस्यान्यत्रावृत्तेः । तथापीहाकाशे वाच्ये वाचक आकाशशब्द इति वाच्यवाचकभावेनेहात्मनि ज्ञानमिति विषयविषयिभावेन वा व्यभिचारोऽत्रायुतसिद्धेराधाराधेयभावस्य च भावादित्यप्यसाम्प्रतमुभयत्रावधारणाऽऽश्रयणात् । एतयोश्च युतसिद्धेष्वप्यनाधाराधेयभूतेष्वपि च भावाद्घटतच्छब्दज्ञानवत् । नन्वेवमयुतसिद्धानामेवेत्यवधारणेप्यव्यभिचारादाधाराधेयभूतानामिति वचनमनर्थकमाधाराधेयभूतानामेवेत्यवधारणेऽयुतसिद्धानामितिवचनवत् । ताभ्यामव्यभिचारादित्यप्यसारमेकद्रव्यसमवायिनां रूपरसादीनामयुतसिद्धानामेव परस्परं समवायाभावात् । एकार्थसमवायसम्बन्धव्यभिचारनिवृत्त्यर्थमुत्तरावधारणम् । न ह्येयं वाच्यवाचकभावादिवद्युतसिद्धानामपि सम्भवति । तथोत्तरावधारणे सत्यप्याधाराधेयभावेन संयोगविशेषेण सर्वदाऽनाधाराधेयभूतानामसम्भवताव्यभिचारो मा भूदित्येवमर्थं पूर्वावधारणम् । इति भेदकलक्षणस्याशेषदोषरहितत्वादिदमुच्यते । तन्तुपटादयः सामान्यतद्वदादयो वा संयुक्ता न भवन्तीति व्यवहर्तव्यं नियमेनायुतसिद्धत्वादाधाराधेयभूतत्वाच्च । ये तु संयुक्ता न ते तथा । यथा कुण्डबदरादयः । तथा चैते । तस्मात्सं-

१ ग्राहकप्रमाणाभावाच्च ॥ २ गुणगुण्यादीनाम् ॥ ३ आकाशपरमाण्वादीना युतसिद्धत्वव्यवस्थापनार्थमिदं लक्षणम् ॥ ४ य इहेदम्प्रत्ययहेतु स समवाय इत्युच्यमाने ॥ ५ कारणभूतेन ॥ ६ कारणभूतेन ॥ ७ अयुत = अपृथक् ॥ ८ वस । मल्लयोर्यथा ॥ ९ मेषयोर्यथा वा ॥ १० अयुतसिद्धानामाधार्याधारभूतानामित्युभयपदोपादानेपि ॥ ११ सम्बन्धेन ॥ १२ आकाशतद्वाचकशब्दयोरात्मज्ञानयोश्च ॥ १३ आधार्याधारभूतानामयुतसिद्धाना समवाय एवेति न नियम इति भाव ॥ १४ अयुतसिद्धानामाधार्याधारभूतानामित्यत्र ॥ १५ अवधारणम्=एवकार । अयुतसिद्धानामेवाधार्याधारभूतानामेव समवाय इति ॥ १६ शब्दश्च ज्ञान च शब्दज्ञाने । तस्य घटस्य शब्दज्ञाने तच्छब्दज्ञाने । घटश्च तच्छब्दज्ञाने चेति द्वन्द्व ॥ १७ भूम्याकाशौ घटतच्छब्दाधारौ तौ तत्र सिद्धो । घटतज्ज्ञाने आत्मभूम्याधारे ते तत्र सिद्धे इति ॥ १८ आधाराधेयभूतानामितिवचनस मर्थनार्थमिदम् । आधाराधेयभावस्य रूपरसादावभावात् ॥ १९ रूपरसादय एकार्था ॥ २० आधार्याधारभूतानामेवेति ॥ २१ प्रथमावधारणेनैव तद्व्यभिचारनिवृत्ति कुतो न भवतीत्याशङ्क्याह ॥ २२ अस्मिन्पर्वते वृक्षा इति ॥ २३ अयुतसिद्धानामेवेति ॥ २४ अनेन प्रकारेणाशेषदोषरहितत्वमयुतसिद्धेत्यादिभेदकलक्षणस्य । इतरेभ्यो द्रव्यादिभ्य समवायस्य भेदकत्वाल्लक्षण भेदकमयुतसिद्धेत्यादि ॥ २५ अग्रेतन प्रसक्तप्रतिषेधार्थमनुमानम् । संयोगाना प्रतिषेधात्समवायस्य सिद्धिर्यतो भवति तत परिशेषानुमानमित्यर्थ ॥ २६ आदिपदेन गुणगुणिन क्रियातद्वन्तश्च ॥

योगिनो न भवन्तीति । यद्वा तन्तुपटादिसम्बन्धः संयोगो न भवति नियमेनायुतसिद्धसम्बन्धत्वाद् ज्ञानात्मनोर्विषयविषयिभाववदिति । ननु समवायस्य प्रमाणतः प्रतीतौ संयोगाद्वैलक्षण्यसाधनं युक्तम् । न चासौ तस्यास्तीत्यप्यसत्प्रत्यक्षत[1] एवास्य प्रतीतेः । तथा हि । तन्तुसम्बद्ध एव पटः प्रतिभासते तद्रूपादयश्च पटादिसम्बद्धाः[2] । सम्बन्धाभावे सह्यविन्ध्यवद्विश्लेषप्रतिभासः स्यात् । अनुमानाच्चासौ प्रतीयते । तथा हि । इह तन्तुषु पट इत्यादीहप्रत्ययः सम्बन्धकार्यो-ऽबाध्यमानेहप्रत्ययत्वादिह[3] कुण्डे दधीत्यादिप्रत्ययवत् । न तावदयं प्रत्ययो निर्हेतुकः कादाचित्कत्वात् । नापि तन्तुहेतुकः पटहेतुको वा तत्र[4] तन्तवः पट इति वा प्रत्ययप्रसङ्गात् । नापि[5] वासनाहेतुकस्तस्याः कारणरहितायाः सम्भवाभावात् । पूर्वज्ञानस्य[6] तत्कारणत्वे तदपि कुतः स्यात्? तत्पूर्ववासनातश्चेदन-वस्था । ज्ञानवासनयोरनादित्वादयमदोषश्चेन्नैवं नीलादिसन्तानान्तरस्वसन्तानसंविदद्वैतादिसिद्धेरप्यभावानुषङ्गात्[7] । अनादिवासनावशादेव[8] नीलादिप्रत्ययस्य[9] स्वतो-[10][11][12][13]ऽवभासस्य च सम्भवात् । नापि[14] तादात्म्यहेतुकोयम् । तादात्म्यं ह्येकत्वम् । तत्र च सम्बन्धाभाव एव स्यात्—द्विष्ठत्वात्तस्य । न च तन्तुपटयोरेकत्वं प्रतिभासभेदाद्वि-रुद्धधर्माध्यासात् परिमाणसंख्याजातिभेदाच्च घटपटवत् । नापि संयोगहेतुको युतसिद्धेष्वेवार्थेषु संयोगस्य सम्भवात् । न चात्र समवायपूर्वकत्वं साध्यते येन दृष्टान्तः साध्यविकलो हेतुश्च विरुद्धः[16] स्यात् । नापि संयोगपूर्वकत्वं येनाभ्युपगमविरोधः स्यात् । किं तर्हि? सम्बन्धमात्रपूर्वकत्वम् । तस्मिंश्च सिद्धे परिशेषा-त्समवाय एव तज्जनको भविष्यति । तच्चेदं विवादास्पदमिदमिहेति ज्ञानं न समवायपूर्वकमबाधितेहज्ञानत्वादिह[17] कुण्डे दधीतिज्ञानवत् । इति विशेषविरुद्धानुमानं[18] तत्सकलानुमानोच्छेदकत्वादनुमानवादिनां[19][20] न प्रयोक्तव्यम् । यच्चोच्यते[21]—इदमिहेति ज्ञानं न समवायालम्बनं तत्सत्यं विशिष्टाधारविषयत्वात्[22] । न हीह तन्तुषु पट इत्यादीहप्रत्ययः केवलं समवायमालम्बते समवायविशिष्टतन्तुपटालम्बनत्वात् । वैशिष्ट्यं चानयोः सम्बन्ध इति । न चास्य संयोगवन्नानात्वमिहेति प्रत्ययाविशेषाद्विशे-षलिङ्गाभावाच्च सत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्च सत्तावत्[23] । न च सम्बन्धत्वमेव विशेषलिङ्गमस्यान्यथासिद्धत्वात्[24] । न हि संयोगस्य सम्बन्धत्वेन नानात्वं साध्यतेऽपि

---

१ प्रत्यक्षत ॥ २ पटतद्रूपादीनाम् ॥ ३ इहात्मनि रूपादय इत्यादीहप्रत्ययेन बाध्यमानेन व्यभिचारपरिहारार्थमिदम् ॥ ४ तन्त्वादौ ॥ ५ सौगत प्रत्याह ॥ ६ विकल्पज्ञानाद्वासना वासनातो विकल्पज्ञानमिति बीजाङ्कुरवत् ॥ ७ सन्तानान्तर च स्वसन्तानश्च तौ नीलादीना ग्राहकौ नीलसन्तानान्तरस्वसन्तानौ च स्वसंविदद्वैतादिश्च ज्ञानाद्वैतादिश्चेत्यर्थ । तेषा सिद्धिरिति वाक्यम् ॥ ८ नीलादे समुत्पद्यमानो नील नीलमिति प्रत्यय सन्नेव समुत्पद्यते विद्यमानानीलादे समुत्पद्यमानत्वान् तु कल्पनाशिल्पिकल्पितवासनात समुत्पद्यमान सन्समुत्पद्यते कल्पितवासनात समुत्पत्ते ॥ ९ ततोनादिवासनाहेतुकत्वमस्य प्रत्ययस्य नेत्यर्थ ॥ १० कुत ॥ ११ न तु नीलादे ॥ १२ आदिना सन्तानसग्रह ॥ १३ अन्यतोवभासमाने द्वैतप्रसक्तिस्तन्निरासार्थ 'स्वतो' विशेषणम् ॥ १४ संविदद्वैतस्य ॥ १५ जैनमतमाशङ्क्याह ॥ १६ सम्बन्धमात्रे साध्ये सम्बन्धविशेषसाधनात् ॥ १७ किन्तु सयोगपूर्वकम् ॥ १८ विशेषणसमवायपूर्वकत्वेन विरुद्धमसमवायपूर्वकत्व तस्यानुमानम् । विशेषविरुद्धानुमाने इदमुदाहरण पर्वत पर्वतस्थेनाग्निनाग्निमान भवति धूमवत्त्वान्महानसवदिति ॥ १९ पर्वतोग्नि-मान्धूमवत्त्वादित्यादे सम्यगनुमानस्य यदुच्छेदकानुमान तस्य वक्तुमशक्यत्वादिति भाव ॥ २० जैनादिना ॥ २१ जैनादिना ॥ २२ तस्य ज्ञानस्य ॥ २३ सत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्च सत्ताया नानात्व नास्ति यथा ॥ २४ समवायो नाना सम्बन्धत्वात्सयोगवदिति ॥

तु प्रत्यक्षेण भिन्नाश्रयसमवेतस्य क्रमेणोत्पादोपलब्धेः[1] । समवायस्य चानेकत्वे सत्यनुगतप्रत्ययोत्पत्तिर्न[2] स्यात् । संयोगे तु संयोगत्वबलान्नानात्वेपि स्यात् । न[3] चैतत्समवाये सम्भवति समवायत्वस्य[4] समवाये समवायाभावात्[5] । अन्यथानवस्था स्यात् । संयोगस्य[6] गुणत्वेन द्रव्यवृत्तित्वात् । संयोगत्वं[7] पुनः संयोगे समवेतमिति[8] । न चैकत्वे समवायस्य द्रव्यत्ववद्गुणत्वस्याप्यभिव्यञ्जकं[9] द्रव्यं कुतो न भवतीति वाच्यमाधारशक्तेर्नियामकत्वात्[10][11][12] । द्रव्याणां[13] हि द्रव्यत्वाधारशक्तिरेव[14] गुणादेस्तु गुणत्वाद्याधारशक्तिरिति[15]। न चानुगतप्रत्ययजनकत्वेन सामान्यादस्याऽभेदो भिन्नलक्षणयोगित्वात्[17] । यद्वा समवायीनि द्रव्याणीत्यादिप्रत्ययो विशेषणपूर्वको विशेष्यप्रत्ययत्वाद्दण्डीत्यादिप्रत्ययवदित्यतः[18] समवायसिद्धिः[19] । न चान्येषामत्रानुरागः[20][21] सम्भवति । किन्तर्हि ? समवायस्यैव । अतः स एव विशेषणम् । अप्रतिपन्नसमयस्य समवायीतिप्रतिभासाभावादस्याऽविशेषणत्वं दण्डादावपि समानं तस्य[22] दण्डाद्युल्लेखेन दण्डीत्यादिप्रत्ययानुत्पत्तेः । दण्डादेरभिधानयोजनाभावेप्यनेन वस्तुना तद्वानयमित्यनुरागप्रतीतिः संसृष्टा एते तन्तुपटादय इति सम्बन्धमात्रेपि[23] तुल्या । केवलं सङ्केताभावादयं समवाय इति व्यपदेशाभावः । प्रतिपन्नसमयस्तु दण्डादेरिव समवायस्यापि विशेषणतामभिधानयोजनाद्वारेण प्रतिपद्यते । यच्चान्यत्समवाये बाधकमुच्यते[24]—नानिष्पन्नयोः[25] समवायः सम्बन्धिनोरनुत्पादे सम्बन्धाभावात् । निष्पन्नयोश्च संयोग एव । असम्बन्धे[26] चास्य समवायिनोः समवाय इति व्यपदेशानुपपत्तिः । सम्बन्धे[27] वा न स्वतोसौ संयोगादीनामपि तथा तत्प्रसङ्गात् । परतश्चेदनवस्था । न च गुणादीनामाधेयत्वं निष्क्रियत्वात् । गतिप्रतिबन्धकश्चाधारो जलादेर्घटादिवत् । तथा न स्वरूपसंश्लेषः[28] समवायो यतस्तस्मिन्सत्येकत्वमेव न सम्बन्धः । नापि पारतन्त्र्यमनिष्पन्नयोराधारस्यैवासत्त्वात् । स्वतन्त्रेण निष्पन्नयोश्च न पारतन्त्र्यम् । इत्यप्यसमीचीनं यतो न निष्पन्नयोरनिष्पन्नयोर्वा समवायः स्वकारणसत्तासम्बन्धस्यैव निष्पत्तिरूपत्वात् । न हि निष्पत्तिरन्या समवायश्चान्यो येन पौर्वापर्यम् । एतेन[29] रूपसंश्लेषः पारतन्त्र्यं वेत्याद्य-

1 सयोगस्य ॥ २ अथ समवायोऽय समवाय इति ॥ ३ ननु समवायेपि समवायत्वबलान्नानात्वेप्यनुगतप्रत्ययोत्पत्ति स्यादिति शङ्कायामाह ॥ ४ सामान्यस्य ॥ ५ समवायत्वस्य समवाये सद्भावेऽपर समवाय समायातस्तत्रापि समवायत्वसमवायेऽपर समवाय समायात इति ॥ ६ तर्हि सयोगस्याप्यपरसयोगपूर्वकत्वेनानवस्था कुतो न स्यादित्याह ॥ ७ कथ तर्हि सयोगत्वमित्याह ॥ ८ सयोगान्तरापेक्षा नास्तीति भाव ॥ ९ येन समवायेन द्रव्ये द्रव्यत्व समवेत तेनैव समवायेन गुणे गुणत्वमपि समवेत समवायस्यैकत्वात् । ततश्चात्मनि समवेतस्य द्रव्यत्वस्य द्रव्य यथाभिव्यञ्जक भवति तथा गुणत्वस्याप्यभिव्यञ्जक कुतो न भवति एकसमवायसमवेतत्वाविशेषादिति भाव ॥ १० जैनादिना ॥ ॥ ११ द्रव्यस्वरूपाया ॥ १२ द्रव्यस्य ॥ १३ घटादीनाम् ॥ १४ द्रव्यत्वमेव स्वरूपशक्तिरिति भाव । निजा हि शक्ति पृथिव्यादीना पृथिवीत्वादिकमेव ॥ १५ गुणत्वादिकमेव स्वरूप शक्ति ॥ १६ स्वाभिधेयस्यैवाभिव्यञ्जक नान्ययेति भाव ॥ १७ अबाधितानुगतप्रत्ययहेतु सामान्यमिति लक्षण सामान्यस्य । समवायस्य त्वयुतसिद्धेत्यादि ॥ १८ दण्डलक्षणविशेषणपूर्वकत्वमत्र ॥ १९ तादात्म्यसयोगादीनाम् ॥ २० समवायीनि द्रव्याणीति वचने ॥ २१ विशेषणत्वम् ॥ २२ अप्रतिपन्नदण्डस्य ॥ २३ समवायस्याभिधानयोजनाभावेपि ससृष्टा एते तन्तुपटादय इति सम्बन्धमात्रेपि अनुरागप्रतीति ॥ २४ जैनादिना ॥ २५ असौ समवाय सम्बन्धिनोरनिष्पन्नयो स्यान्निष्पन्नयोर्वेति विकल्पद्वय हृदि निधाय दूषयति ॥ २६ किञ्चासौ समवाय समवायिभ्यामसम्बद्ध सम्बद्धो वेति विकल्पद्वय विधाय प्रथमविकल्पे दूषणमाह ॥ २७ सम्बद्धश्चेत्स्वत परतो वेति विकल्पद्वयमत्रापि योज्यम् ॥ २८ स्वरूपयो स्वभावयो सश्लेष सम्बन्ध ॥ २९ स्वकारणसत्तासम्बन्धस्यैव निष्पत्तिरूपत्वादित्यनेन ग्रन्थेन ॥

पास्तम् । नापि समवायस्य सम्बन्धान्तरे सम्बन्धो युक्तो येनानवस्था स्यात् सम्बन्धस्य समानलक्षणसम्बन्धेन सम्बन्धस्यान्यत्रादृष्टेः संयोगवत्[3] । अग्नेरुष्ण-तावत्तु स्वत एवास्य सम्बन्धो युक्तः स्वत एव सम्बन्धरूपत्वात्; न संयोगादीनां–तदभावात् । न ह्येकस्य स्वभावोऽन्यस्याप्यन्यथा स्वतोऽग्नेरुष्णत्वदर्शनाज्जला-दीनामपि तत्स्यात् । यच्चोक्तं निष्क्रियत्वात्तेषां[6] नाधेयत्वमिति तदप्यसत्संयोगिद्रव्यविलक्षणत्वाद्गुणादीनां संयोगिनां[8] सक्रियत्वेनैव तेषां निष्क्रियत्वेऽप्याधा-राधेयभावस्य प्रत्यक्षेण प्रतीतेश्चेति[9] ।

अत्र प्रतिविधीयते । यत्तावदुक्तमयुतसिद्धेत्यादि तत्रेदमयुतसिद्धत्वं शास्त्रीयं लौकिकं वा? तत्राद्यः पक्षोऽयुक्तस्तन्तुपटादीनां शास्त्रीयायुतसिद्धत्वस्यासम्भ-वात् । वैशेषिकशास्त्रे हि प्रसिद्धमपृथगाश्रयवृत्तित्वमयुतसिद्धत्वम् । तच्चेह नास्त्येव तन्तूनां स्वावयवांशुषु वृत्तेः, पटस्य च तन्तुषु । इति पृथगाश्रयवृत्तित्वसिद्धे-रपृथगाश्रयवृत्तित्वमसदेव । एवं गुणकर्मसामान्यानामप्यपृथगाश्रयवृत्तित्वाभावः प्रतिपत्तव्यः । लोकप्रसिद्धैकभाजनवृत्तिरूपं त्वयुतसिद्धत्वं दुग्धाम्भसोर्युतसि-द्धयोरप्यस्तीति[10] । ननु यथा कुण्डदध्यवयवाख्यौ[11] पृथग्भूतावाश्रयौ[12] तयोश्च[13] कुण्डस्य दध्नश्च वृत्तिर्न तथात्र[14] चत्वारोऽर्थाः प्रतीयन्ते, द्वावाश्रयौ[15] पृथग्भूतौ द्वौ चाश्रयिणौ[16] तन्तोरेव स्वावयवापेक्षयाश्रयित्वात् पटापेक्षया चाश्रयत्वात्त्रयाणामेवार्थानां[17] प्रसिद्धेः । पृथगाश्रयाश्रयित्वं युतसिद्धिरित्यस्य युतसिद्धिलक्षणस्याभावादयुत-सिद्धत्वं तेषामिति चेत्कथमेवमाकाशादीनां युतसिद्धिः स्यात्? तेषामन्याश्रयविवेकतः[21] पृथगाश्रयाश्रयित्वाभावात् । नित्यानां[22] च पृथग्गतिमत्त्वमित्यपि[23] तत्रा-सम्भाव्यम् । न खलु विभुद्रव्यपरमाणुवद्विभुद्रव्याणामन्यतरपृथग्गतिमत्त्वं परमाणुद्वयवदुभयपृथग्गतिमत्त्वं वा सम्भवत्यविभुत्वप्रसङ्गात् । तथैकद्रव्याश्र-याणा[26] गुणकर्मसामान्यानां परस्परं पृथगाश्रयवृत्तेरभावादयुतसिद्धिप्रसङ्गतोऽन्योन्यं समवायः स्यात् । स च नेष्टस्तेषामाश्रयाश्रयिसमवायभावात् । इत-रेतराश्रयभावासिद्धौ हि पृथगाश्रयसमवायित्वलक्षणा युतसिद्धिस्तत्सिद्धौ च तन्निषेधेन समवायसिद्धिरिति । ननु लक्षणं विद्यमानस्यार्थस्यान्यतो भेदेनाव-स्थापकं न तु सद्भावकारकम् । तेनायमदोषश्चेन्नन्न ज्ञापकपक्षे सुतरामितरेतराश्रयत्वम् । तथा हि । नाऽज्ञातया युतसिद्ध्या समवायो ज्ञातुं शक्यतेऽनधि-

१ समवायिना सह ॥ २ अपरसमवायेन ॥ ३ संयोगिनो संयोगस्य च समवायेन सम्बन्धसद्भावात् ॥ ४ कथं तर्ह्यस्य सम्बन्ध इत्याशङ्कायामाह ॥ ५ संयोगस्य ॥ ६ गुणादीनाम् ॥ ७ द्रव्याणाम् ॥ ८ संयोगिना सक्रि-यत्वादेव तेषामाधेयत्वमिति भाव ॥ ९ गुणादीना गुणवदादिषु वृत्तिरेषा च स्वावयवेष्वाश्रयभूतेषु वृत्तिरिति भाव ॥ ॥ १० अतिव्याप्तिदूषणमिदम् ॥ ११ कुण्ड च दधि च तथोक्ते तयोरवयवौ ॥ १२ अधिकरणभूतयो ॥ १३ तन्तुपटादिषु ॥ १४ ते के चत्वारोऽर्था इत्युक्ते सत्याह ॥ १५ कुण्डदध्यवयवौ ॥ १६ आश्रयौ दधिकुण्डावयवलक्षणौ विद्येते ययोर्दधिकुण्डयोस्तावाश्रयिणौ ॥ १७ समवाये ॥ १८ ततश्च ॥ १९ ततश्च तेषा समवायसिद्धिरिति भाव ॥ २० आदिना आत्मकालदिशा च ॥ २१ विवेक =अभाव । व्यापकत्वात्तेषामेकाश्रयवृत्ते ॥ २२ पृथगाश्रयाश्रयित्व युतसिद्धिलक्षण नित्येषु यद्यपि नास्ति तथापि पृथग्गतिमत्त्व भविष्यतीत्याह ॥ २३ लक्षणम् ॥ २४ मध्ये ॥ २५ एकद्रव्य=विभु आत्माकाशादि ॥ २६ वस ॥

गतश्चासौ न युतसिद्धिमवस्थापयितुमुत्सहते इति। न चातो लक्षणात्समवायः सिद्ध्यति व्यभिचारात्। तथा हि। नियमेनायुतसिद्धसम्बन्धत्वमाधाराधेयभूतसम्बन्धत्वं चाकाशे वाच्ये वाचकस्तच्छब्द इति वाच्यवाचकभावे आत्मनि विषयभूतेऽहमिति ज्ञानं विषयीति विषयविषयिभावे च विद्यते इति। ननु सर्वस्य वाच्यवाचकवर्गस्य विषयविषयिवर्गस्य च नियमेनायुतसिद्धसम्बन्धत्वासम्भवो युतसिद्धेष्वप्यस्य सम्भवाद्घटतच्छब्दज्ञानवत्। अतो न व्यभिचार इत्यप्यसारं वर्गापेक्षयापि लक्षणस्य विपक्षैकदेशवृत्तेर्व्यभिचारित्वात्। इष्टं च विपक्षैकदेशादव्यावृत्तस्य सर्वैरप्यनैकान्तिकत्वम्। यच्चोक्तं तन्तुपटादयः संयोगिनो न भवन्तीत्यादि तत्सत्यं तत्र तादात्म्योपगमात्। यत्तूक्तं प्रत्यक्षत एव समवायः प्रतीयत इत्यादि तदयुक्तम्। असाधारणस्वरूपत्वे हि सिद्धे सिध्येदथानां प्रत्यक्षता पृथुवुध्नोदराद्याकारघटादिवत्। न चास्य तत्सिद्धम्। तद्धि किमयुतसिद्धसम्बन्धत्वं सम्बन्धमात्रं वा? न तावदयुतसिद्धसम्बन्धत्वं सर्वैरप्रतीयमानत्वात्। यत्पुनर्यस्य स्वरूपं तत्तेनैव स्वरूपेण सर्वस्यापि प्रतिभासते। यथा पृथुवुध्नोदराद्याकारतया घट इति। न चैकस्य सामान्यात्मकं स्वरूपं युक्तं समानानामभावे सामान्याभावाद्गगने गगनत्ववत्। नापि सम्बन्धमात्रं समवायस्यासाधारणं स्वरूपं संयोगादावपि सम्भवात्। किञ्च तद्रूपतयासौ सम्बन्धवुद्धौ प्रतिभासेतेहेति प्रत्यये वा समवाय इत्यनुभवे वा? यदि सम्बन्धवुद्धौ, कोयं सम्बन्धो नाम? किं सम्बन्धत्वजातियुक्तः सम्बन्धोऽनेकोपादानजनितो वानेकाश्रितो वा सम्बन्धवुद्ध्युत्पादको वा सम्बन्धवुद्धिविषयो वा? न तावत्सम्बन्धत्वजातियुक्तः समवायस्यासम्बन्धत्वप्रसङ्गात्। द्रव्यादित्रयान्यतमरूपत्वाभावेन समवायान्तरासत्त्वेन चात्र सम्बन्धत्वजातेरप्रवर्त्तनात्। अथ संयोगवदनेकोपादानजनितस्तर्हि घटादेरपि सम्बन्धत्वप्रसङ्गः। नाप्यनेकाश्रितो घटत्वादेः सम्बन्धत्वानुषङ्गात्। नापि सम्बन्धवुद्ध्युत्पादको लोचनादेरपि तत्त्वप्रसक्तेः। नापि सम्बन्धवुद्धिविषयः सम्बन्धसम्बन्धिनोरेकज्ञानविषयत्वे सम्बन्धिनोपि तद्रूपतानुषङ्गात्। न च प्रतिविषयं ज्ञानभेदो मेचकज्ञानाभावप्रसङ्गात्। अथेहवुद्धौ समवायः प्रतिभासते, न–इहवुद्धेरधिकरणाध्यवसायरूपत्वात्। न चान्यस्मिन्नाकारे प्रतीयमानेऽन्याकारोर्थः कल्पयितुं युक्तोतिप्रसङ्गात्। अथ समवायवुद्ध्यासौ प्रतीयते तन्न समवायवुद्धेरसम्भवात्। न ह्येते तन्तवोयं पटोयं च समवाय इत्यन्योन्यविविक्तं त्रितयं वहिर्ग्राह्या-

---

१ विपक्षे ॥ २ शब्दश्च ज्ञानं च शब्दज्ञाने। तस्य घटस्य शब्दज्ञाने तच्छब्दज्ञाने इति द्वन्द्व ॥ ३ वाच्यवाचकभावविषयविषयिभावसमूहे विपक्षे नास्ति तथापि तस्यैकदेशवृत्तित्वादनैकान्तिक ॥ ४ असाधारणस्वरूपम् ॥ ५ समवायस्य ॥ ६ समवायेन सह समानानां वस्तूनाम् ॥ ७ तस्यैकत्वात्सामान्यस्यानेकवृत्तित्वात् ॥ ८ अयं सम्बन्ध इति ज्ञाने ॥ ९ समवायस्य ॥ १० सम्बन्धत्वजातेर्वृत्त्यर्थं समवाये ॥ ११ समवायान्तरागमस्य च समवायस्यैकत्वादवगन्तव्यम् ॥ १२ अनेकोपादानजनितत्वाविशेषात् ॥ १३ आदिपदेन प्रकाशादेश्च ॥ लोचनादिरपि वस्तुषु सम्बन्धवुद्धिं जनयति ॥ १४ प्रतिविषयं ज्ञानभेदात्कथं सम्बन्धिनोरेकज्ञानविषयत्वं यत सम्बन्धिनोरपि सम्बन्धरूपता स्यादित्याशङ्कायामाह ॥ १५ इति चेदिति शेषः ॥ १६ समवायस्याधाराधेयभावलक्षणसम्बन्धाकारोऽधिगतोऽसमवाय इति न घटते ॥ १७ इहेति वुद्धेरपि सम्बन्धप्रत्ययत्वे युक्तो न स्यादित्युक्ते सत्याह ॥ १८ अधिकरणलक्षणेर्थे ॥ १९ सम्बन्धलक्षण ॥ २० पटप्रतिभासे पटप्रतिभासप्रसङ्गात् ॥

कारतया कस्याञ्चित्प्रतीतौ प्रतीयते तथानुभवाभावात् । सर्वसमवाय्यनुगतैकस्वभावो धर्मो तत्र प्रतिभासेत तद्व्यावृत्तस्वभावो वा? न तावत्तद्व्यावृत्तस्वभावः सर्वतो व्यावृत्तस्वभावस्यान्यासम्बन्धित्वेन गगनाम्भोजवत्समवायत्वानुपपत्तेः । नापि तदनुगतैकस्वभावः सामान्यादेरपि समवायत्वानुषङ्गात् । न चाखिल-समवाय्यऽप्रतिभासे तदनुगतस्वभावतयासौ प्रत्यक्षेण प्रत्येतुं शक्यः । अथानुगतव्यावृत्तरूपव्यतिरेकेण सम्बन्धरूपतयासौ प्रतीयते तत्र सम्बन्धरूपतायाः प्रागेव कृतोत्तरत्वात् । यदप्युक्तम् 'इह तन्तुषु पट इत्यादीहप्रत्ययः सम्बन्धकार्योऽबाध्यमानेहप्रत्ययत्वादिह कुण्डे दधीत्यादिप्रत्ययवदित्यनुमानाच्चासौ प्रतीयते' इत्यादि, तदप्यसमीक्षिताभिधानं हेतोराश्रयासिद्धत्वात् । तदसिद्धत्वं चेह तन्तुषु पट इत्यादिप्रत्ययस्य धर्मिणोऽसिद्धेः । अप्रसिद्धविशेषणश्चायं हेतुः पटे तन्तवो वृक्षे शाखा इत्यादिरूपतया प्रतीयमानप्रत्ययेनेह तन्तुषु पट इति प्रत्ययस्य बाध्यमानत्वात् । स्वरूपासिद्धश्चायं तन्तुपटप्रत्यये इहप्रत्ययत्वस्यानुभवाभावात् । पटोयमित्यादिरूपतया हि प्रत्ययोनुभूयते । अनैकान्तिकश्चेह प्रागभावेऽनादित्वमिह प्रध्वंसाभावे प्रध्वंसाभावाभाव उत्पत्तिरित्यबाध्यमानेहप्रत्ययस्य सम्बन्धपूर्वकत्वा-भावात् । न चात्र विशेषणविशेष्यभावः सम्बन्धो वाच्यः सम्बन्धमन्तरेण विशेषणविशेष्यभावस्याऽसम्भवात् । अन्यथा सर्वं सर्वस्य विशेषणं विशेष्यं च स्यात् । सम्बन्धे सत्येव हि द्रव्यगुणकर्मादावेकस्य विशेषणत्वमपरस्य विशेष्यत्वं दृष्टम् । तदभावेपि विशेषणविशेष्यभावकल्पनायामतिप्रसङ्गः स्यात् । न चात्रा-दृष्टलक्षणः सम्बन्धो विशेषणविशेष्यभावनिबन्धनमित्यभिधातव्यं षोढासम्बन्धवादित्वव्याघातानुषङ्गात् । न चास्य सम्बन्धरूपता । सम्बन्धो हि द्विष्ठो भवताभ्युपेतः । अदृष्टश्चात्मवृत्तितया प्रागभावाऽनादित्वयोरतिष्ठन्कथं द्विष्ठो भवतीति चिन्त्यमेतत् । यदि चात्राऽदृष्टः सम्बन्धस्तर्हि गुणगुण्यादयोप्यत एव सम्बद्धा भविष्यन्तीत्यलं समवायादिसम्बन्धकल्पनया । किञ्चातोनुमानात्सम्बन्धमात्रं साध्यते तद्विशेषो वा? प्रथमपक्षे सिद्धसाध्यता तादात्म्यलक्षणसम्बन्धस्ये-ष्टत्वात्तन्तुपटादीनाम् । ननु तेषां तादात्म्ये सति तन्तवः पटो वा स्यात् । तथा च सम्बन्धिनोरेकत्वे कथं सम्बन्धो नामास्य द्विष्ठत्वात्? तदप्ययुक्तम् । यो हि द्विष्ठः सम्बन्धस्तस्यैत्थंभावो युक्तः । यस्तु तत्स्वभावतालक्षणः कथं तस्याभावो युक्तः? तन्तुस्वभाव एव हि पटो नार्थान्तरमातानवितानी-भूततन्तुव्यतिरेकेण देशभेदादिना पटस्यानुपलभ्यमानत्वात् । अथ सम्बन्धविशेषः साध्यते । स किं संयोगः समवायो वा? संयोगश्चेदभ्युपगमबाधा । सम-

---

१ कोय सम्बन्धो नाम २ किं [illegible] ३ इत्यादिरीला ॥ ३ [illegible] प्रति ॥ ३ [illegible] ॥ ४ इह तन्तुषु पट इति [illegible] पटे तन्तवो वृक्षे शाखा इत्यवयिन्यवयवाना [illegible] यत ॥ ५ यत ॥ ६ [illegible] ॥ ७ प्रागभावे ॥ ८ [illegible] ॥ ९ इह तन्तुषु पट इत्यादीहप्रत्यय सम्बन्धकार्योऽबाध्यमानेहप्रत्ययत्वादित्यत्र ॥ १० [illegible] ॥ ११ [illegible] ॥ १२ [illegible] पटस्य ॥ [illegible] सत्र लक्षण यस्य सम्बन्धस्येति वच ॥

वायश्चेद्दृष्टान्तस्य साध्यविकलता । अथोच्यते, न संयोगः समवायो वा साध्यते किन्तु सम्बन्धमात्रम् । तस्मिंश्च परिशेषात् समवायः सिध्यतीति तदप्युक्तिमात्रं परिशेषन्यायेन समवायस्य सिद्धेरसंभवात् तस्यानेकदोषदुष्टत्वेन प्रतिपादितत्वात् । यदि हि सम्बन्धान्तरमनेकदोषदुष्टं, समवायस्तु निर्दोषः स्यात्तदानीं तन्न्यायात् सिध्येत् । न चैवमित्युक्तम् । कश्चायं परिशेषो नाम ? प्रसक्तप्रतिषेधे विशिष्यमाणसंप्रत्ययहेतुः स इति चेत् स किं प्रमाणमप्रमाणं वा ? न तावदप्रमाणमभिप्रेतसिद्धौ समर्थमतिप्रसङ्गात् । प्रमाणं चेत्किं प्रत्यक्षमनुमानं वा ? न तावत्प्रत्यक्षं तस्य प्रसक्तप्रतिषेधद्वारेणाभिप्रेतसिद्धावसमर्थत्वात् । अथ केवलव्यतिरेक्यनुमानं परिशेषस्तर्हि प्रकृतानुमानोपन्यासवैयर्थ्यं तस्योपन्यासेऽपि परिशेषमन्तरेणाभिप्रेतसिद्धेरभावात् । परिशेषस्तु प्रमाणान्तरमन्तरेणापि तत्सिद्धौ समर्थ इति स एवोच्यताम् । न चासावुक्तः । तत् कथं समवायः सिध्येत् ? ननु चेहप्रत्ययस्य समवायाहेतुकत्वे निर्हेतुकत्वप्रसङ्गात् कादाचित्कत्वविरोधस्तदसत् तादात्म्यहेतुकतयास्य प्रतिपादितत्वात् । महेश्वरहेतुकत्वाद्वा कादाचित्कत्वाविरोधः । तस्य तदहेतुकत्वे वा तेनैव कार्यत्वादिहेतोर्व्यभिचारः । ननु महेश्वरोऽसंबन्धत्वात्कथं संबन्धबुद्धेः कारणमिति चेत् प्रभुशक्तेरचिन्त्यत्वात् । यो हीश्वरस्त्रैलोक्यकार्यकरणसमर्थः स कथं पटे रूपादय इति बुद्धिं न विदध्यात् ? प्रभुः खलु यदेवेच्छति तत्करोत्यन्यथा प्रभुत्वमेवास्य हीयते । न चेह कुण्डे दधीत्यादिप्रत्यये संबन्धपूर्वकत्वोपलम्भादत्रापि तत्पूर्वकत्वस्यैव सिद्धिस्तत्रापीश्वरहेतुकत्वं[23] कार्यस्येच्छैतस्तच्चोद्यानिवृत्तेः । संयोगश्चार्थान्तरभूतस्तन्निमित्तत्वेनात्राप्यसिद्धस्तस्यासिद्धस्वरूपत्वात् । ननु संयोगो नामार्थान्तरं न स्यात्तदा क्षेत्रे बीजादयो निर्विशिष्टत्वात् सर्वदैवाङ्कुरादिकार्यं कुर्युः । न चैवम् । तस्मात्सर्वदा कार्यानारम्भात् तेऽङ्कुरादिकार्योत्पत्तौ कारणान्तरसापेक्षा यथा मृत्पिण्डदण्डादयो घटकरणे कुम्भकारादिसापेक्षाः । योसावपेक्ष्यः स संयोग इति । किं च द्रव्ययोर्निरंशपणभावेनाध्यक्षत एवासौ प्रतीयते । तथा हि । केश्चित्केनचित्संयुक्ते द्रव्ये आहरेत्युक्ते ययोरेव द्रव्ययोः संयोगमुपलभते ते एवाहरति, न द्रव्यमात्रम् । किञ्च कुण्डली देवदत्त इत्यादिमतिरुपजायमाना किंनिबन्धनेत्यभिधातव्यम् ? न तावत्पुरुषकुण्डलमात्रनिबन्धना सर्वदा तस्याः सद्भावप्रसङ्गात् । किञ्च यदेव केनचित्कचिदुपलब्धसत्त्वं तस्यैवान्यत्र विधिप्रतिषेधमुखेन लोके व्यवहारप्रवृत्तिर्दृष्टा । यदि तु संयोगो न कदाचिदुपलब्धस्तत्कथमस्य चैत्रोऽकुण्डली कुण्डली वेत्येवं विभागेन व्यवहारो भवेत् ? चैत्रोऽकुण्डलीत्यत्र हि न कुण्डलं चैत्रो वा प्रतिपिध्यते

१ इह कुण्डे दधीत्यादिप्रत्ययवदित्यस्य ॥ २ संयोगतादात्म्यादिरूपम् ॥ ३ प्रसक्त=प्रमक्तपात सर्वत्राप्रसिद्धो ना संयोगतादात्म्यरूप । तस्य प्रतिषेधे सति विशिष्यमाण समवायरूपस्य सम्यक् प्रतीतिहेतुरित्यर्थः ॥ ४ परिशेष ॥ ५ प्रत्यक्षस्य सन्निहितरूपादिष्वेव प्रवर्तमानत्वात् ॥ ६ परिशेषोपि प्रमाणान्तरमन्तरेण तत्सिद्धावसमर्थो भविष्यतीत्युक्त त्वात् ॥ ७,८ इहेत्यैति प्रत्ययस्य ॥ ९ इहेत्यमिति प्रत्ययस्य ॥ १० इह तन्तुषु पट इत्यादीहप्रत्ययेपि ॥ ११ इह कुण्डे दधीत्यादिप्रत्यये ॥ १२ दधीत्यादिप्रत्ययस्य ॥ १३ ईश्वरस्य ॥ १४ तत्रोच हि महेश्वरहेतुकत्वाद्वा कादाचित्कत्वाविरोध इत्यादि ॥ १५ अर्थो यो क्रियाकारी ताभ्यामन्य संयोग इत्यर्थः ॥ १६ इहेति प्रत्ययनिमित्तत्वेन ॥ १७ इह कुण्डेपि ॥ १८ संयोगे सत्यप्यपूर्वसामर्थ्याद्यभावादित्यर्थ ॥ १९ गृहे स्थापिता गन्धोपीत्यर्थः ॥ २० कारणान्तरं संयोग ॥ २१ द्रव्ये संयोगवती इति ॥ २२ पुमान् ॥ २३ पुमा ॥ २४ संयोगरूपा पूर्वस्वभावप्रादुर्भावानपेक्षा ॥

तथा चैत्रः कुण्डलीत्यनेनापि विधिवाक्येन चैत्रकुण्डलयोर्नान्यतरस्य
देशादिभेदेनानयोः सतोः प्रतिषेधायोगात् । तस्माच्चैत्रस्य कुण्डलसंयोगः प्रतिपिध्यते । तथा चैत्रः कुण्डलीत्यनेनापि विधिवाक्येन चैत्रकुण्डलयोर्नान्यतरस्य
विधानं तयोः सिद्धत्वात् । पारिशेष्यात्संयोगस्यैव विधिर्विज्ञायते । इत्यप्युद्द्योतकरस्य मनोरथमात्रम् । तथा हि । यत्तावदुक्तं निर्विशिष्टत्वाद्बीजादयः सर्वदे-
वाङ्कुरं कुर्युस्तदयुक्तं तेषां निर्विशिष्टत्वासिद्धेः सकलभावानां परिणामित्वात् । ततो विशिष्टपरिणामापन्नानामेव तेषां जनकत्वं, नान्यथा । यच्चोक्तं सर्वदा कार्या-
नारम्भादित्यादि तत्रापि कारणमात्रसापेक्षत्वसाधने सिद्धसाध्यतास्माभिरपि विशिष्टपरिणामापेक्षाणां तेषां कार्यकारित्वाभ्युपगमात् । अथाभिमतसंयोगाख्यपदार्था-
न्तरसापेक्षत्वं साध्यते तदानेन हेतोरन्वयासिद्धेरनैकान्तिकता तमन्तरेणापि संभवाविरोधात् । दृष्टान्तस्य च साध्यविकलता । यदि च संयोगमात्रसापेक्षा एव
ते तज्जनकास्तर्हि प्रथमोपनिपाते एव क्षित्यादिभ्योऽङ्कुरादिकार्योदयप्रसङ्गः पश्चादिवाविकलकारणत्वात् । तदा तदनुत्पत्तौ वा पश्चादप्यनुत्पत्तिप्रसङ्गो विशेषाभावात् ।
यदप्युक्तं द्रव्ययोर्विशेषणभावेनेत्यादि तदप्ययुक्तं यतो न द्रव्याभ्यामर्थान्तरभूतः संयोगः प्रतिपत्तुः प्रत्यक्षे प्रतिभाति यतस्तद्दर्शनाद्विशिष्टे द्रव्ये आहरेत् । किं
तर्हि? प्राग्भाविसान्तरावस्थापरित्यागेन निरन्तरावस्थारूपतयोत्पन्ने वस्तुनी एव संयुक्तशब्दवाच्ये अवस्थाविशेषे प्रभावितत्वात् संयोगशब्दस्य । तेन यत्र
तथाविधे वस्तुनी संयोगशब्दविषयभावापन्ने पश्यति ते एवाहरति, नान्ये । यदप्युक्तं कुण्डलीत्यादि तदप्युक्तिमात्रं यतो यथैव हि चैत्रकुण्डलयोर्विशिष्टावस्था-
प्राप्तिः संयोगः सर्वदा न भवति तद्वत्कुण्डलीति मतिरप्यवस्थाविशेषनिबन्धना कथं तदभावे भवेत्? विधिप्रतिषेधावपि न केवलयोश्चैत्रकुण्डलयोः किन्त्ववस्था-
विशेषस्यैवेत्युक्तदोषानवकाशः । ततो ये अनेकवस्तुसन्निपाते सत्युपजायन्ते प्रत्यया न ते परपरिकल्पितसंयोगविषया यथा प्रविरलावस्थितानेकतन्तुविषयाः
प्रत्ययास्तथा चैते संयुक्तप्रत्यया इति । यच्चान्यदुक्तं विशेषविरुद्धानुमानं सकलानुमानोच्छेदकत्वान्न वक्तव्यमिति तत्किमनुमानाभासोच्छेदकत्वान्न वाच्यं
सम्यगनुमानोच्छेदकत्वाद्वा? तत्राद्यः पक्षोऽयुक्तः । न हि कालात्ययापदिष्टहेतूत्थानुमानोच्छेदकस्य प्रत्यक्षादेरनुमानवादिनोपन्यासो न कर्तव्योऽतिप्रसक्तेः ।
द्वितीयपक्षोप्ययुक्तः । न हि धूमादिसम्यगनुमानस्य विशेषविरुद्धानुमानसहस्रेणापि प्रत्यक्षादिभिरपहृतविषयेण बाधा विधातुं पार्यते । न च विशेषविरुद्धानुमा-
नत्वादेवेदमवाच्यं यतो न विशेषविरुद्धानुमानत्वमसिद्धत्वादिवद्धेत्वाभासनिरूपणप्रकरणे दोषो निरूपितो येनानुमानवादिभिस्तदसिद्धत्वादिवन्न प्रयुज्यते ।
ततो यद्दुष्टमनुमानं तदेव विशेषविघाताय न प्रयोक्तव्यम् । यथायं प्रदेशोत्रत्येनाग्निनाग्निमान्न भवति धूमवत्त्वान्महानसवदित्यादिकम् । यतस्ते न यो विशेषो

---

१ पुरुषकुण्डलयो पार्थक्येन स्थितावस्थायामपीत्यर्थं ॥ २ चैत्रोऽकुण्डलीति निषेधवाक्येन ॥ ३ अन्वय =अविनाभाव ॥ ४ मृत्पिण्डादय कुम्भकारापेक्षा घटकरणे प्रभवन्ति तथापि नासौ कुम्भकार सयोगस्वरूप इति ॥ ५ कुम्भकारस्य सयोगरूपत्वाभावादेव । उच्चारितत्वात् ॥ ६ अवस्थात्र सयुक्तरूपा ॥ ७ चैत्रकुण्डलयोर्विधिप्रतिषेधलक्षण उक्तदोष ॥ ८ इन्द्रियाणा सन्निकर्षे ॥ ९ अत्र प्रकरणे विशेष =समवाय ॥ १० कालात्ययापदिष्टहेत्वाभासस्येव प्रत्यक्षादेरप्युच्छेदानुप्रसङ्गात् ॥ ११ जैनाद्यै ॥

निराक्रियते स प्रत्यक्षेणैव तद्देशोपसर्पणे[1] सति प्रतीयते। न चैतत् समवाये संभवति प्रत्यक्षाद्यगोचरत्वेनास्य प्रतिपादितत्वात्। न चातद्विषयं बाधकमतिप्रसङ्गात्[2]। यत्पुनरुक्तं न चास्य संयोगवन्नानात्वमित्यादि तदप्यसमीचीनं तदेकत्वस्यानुमानबाधितत्वात्। तथा हि। अनेकः समवायो विभिन्नदेशकालाकारार्थेषु संबन्धबुद्धि[3]हेतुत्वात्। यो य इत्थंभूतः स सोनेको यथा संयोगः। तथा च समवायस्तस्मादनेक इति। प्रसिद्धो[4] हि दण्डपुरुषसंयोगात् कटकुड्यादिसंयोगस्य भेदः। निविडः संयोगः शिथिलः संयोग इति प्रत्ययभेदात्संयोगस्य भेदाभ्युपगमे नित्यं समवायः कदाचित्समवाय इति प्रत्ययभेदात्समवायस्यापि भेदोस्तु। समवायिनोर्नित्यकादाचित्कत्वाभ्यां समवाये तत्प्रत्ययोत्पत्तौ संयोगिनोर्निबिडत्वशिथिलत्वाभ्यां संयोगे तथा प्रत्ययोत्पत्तिः स्यान्न पुनः संयोगस्य निविडत्वादिस्वभावभेदात्। इत्येकं संधित्सोरन्यत् प्रच्यवते। तथा नाना समवायोऽयुतसिद्धावयविद्रव्याश्रितत्वात् संख्यावदित्यतोप्यस्यानेकत्वसिद्धिः। न चेदमसिद्धम्। अनाश्रितत्वे हि समवायस्य षण्णामाश्रितत्वमन्यत्र नित्यद्रव्येभ्य इत्यस्य विरोधः। अथ न परमार्थतः समवायस्याश्रितत्वं नाम धर्मो येनानेकत्वं स्यात्। किन्तूपचारात्। निमित्तं तूपचारस्य समवायिषु सत्सु समवायज्ञानम्। तत्त्वतो ह्याश्रितत्वेस्य स्वाश्रयविनाशे विनाशप्रसङ्गो गुणादिवत्। इत्यप्ययुक्त विशेषपरित्यागेनाश्रितत्वसामान्यस्य हेतुत्वात्, दिगादीनामाश्रितत्वापत्तेश्च। मूर्तद्रव्येपूपलब्धिलक्षणप्राप्तेषु दिग्लिङ्गस्येदमतः पूर्वेणेत्यादिप्रत्ययस्य काललिङ्गस्य च परत्वापरत्वादिप्रत्ययस्य सद्भावात्। तथा चान्यत्र नित्यद्रव्येभ्य इति विरुध्यते सामान्यस्यानाश्रितत्वप्रसङ्गश्चाश्रयविनाशेप्यविनाशात् समवायवत्। अस्तु वानाश्रितत्वं समवायस्य तथाप्यनेकत्वमनिवार्यम्। तथा हि। अनेकः समवायोनाश्रितत्वात्परमाणुवत्। नाकाशादिभिर्व्यभिचारस्तेषामपि कथंचिन्नानात्वसाधनात्। ततोऽयुक्तमुक्तमिहेति प्रत्ययाविशेषाद्विशेषलिङ्गाभावाच्चैकः समवाय इति विशेषलिङ्गाभावस्यानन्तरप्रतिपादितलिङ्गसद्भावतोऽसिद्धत्वात्। इहेति प्रत्ययाविशेषोप्यसिद्ध इहात्मनि ज्ञानमिह पटे रूपादिकमितीहेति प्रत्ययस्य विशेषात्। विशेषणानुरागो हि प्रत्ययस्य विशिष्टत्वम्। न चानुगतप्रत्ययप्रतीतितः समवायस्यैकत्वं सिध्यति गोत्वादिसामान्येषु षट्पदार्थेषु चानुगतस्यैकत्वस्याभावेप्यनुगतप्रत्ययप्रतीतेः। सत्तावदिति दृष्टान्तोपि साध्यसाधनविकलः सर्वथैकत्वस्य सत्प्रत्ययाविशेषस्य चासिद्धत्वात्। सर्वथैकत्वे हि सत्तायाः पटः सन्निति प्रत्ययोत्पत्तौ सर्वथा सत्तायाः प्रतीत्यनुषङ्गात् क्वचित् सत्तासंदेहो न स्यात्। तस्याः सर्वथा प्रतीतावपि

---

१ तस्य=अग्रे ॥ २ गगनकुसुमस्यापि बाधकत्वप्रसङ्गात् ॥ ३ सबन्ध इति बुद्धि सबन्धबुद्धि। तस्या ॥ ४ दृष्टान्त समर्थयति ॥ ५ परमाणुतद्रूपयो ॥ ६ तन्तुपटयो ॥ ७ समवायस्य ॥ ८ वैशेषिकस्य ॥ ९ द्रव्यगुणकर्मसामान्यविशेषसमवायानाम ॥ १० ग्रन्थस्य ॥ ११ स्वरूपम् ॥ १२ तन्तुपटादिषु ॥ १३ समवाय इति ज्ञानम् ॥ १४ स्वाश्रयादभिन्नत्वात् ॥ १५ गुणो गुण्याश्रित, अवयवोवयव्याश्रित इति विशेषपरित्यागेन ॥ १६ आश्रयविनाशेप्याश्रितत्वसामान्यस्याविनाश एव तस्य नित्यत्वात् ॥ १७ दिगादीनामाश्रितत्वे च सति ॥ १८ नित्यद्रव्याणामाश्रितत्वात् ॥ १९ प्रदेशभेदापेक्षया ॥ २० समवायस्य नानात्व सिद्ध यत. ॥ २१ भिन्नभिन्नविशेषणसबन्ध ॥ २२ इहेति प्रत्ययस्य ॥ २३ भिन्नत्वम् ॥ २४ गोत्वमपि सामान्य घटत्वमपि सामान्यमिति, अयमपि पदार्थोयमपि पदार्थ इत्येव प्रकारेण ॥

तद्विशेष्यार्थानामप्रतीतेः क्वचित्सत्तासंदेहे पटविशेषणत्वं तस्या अन्यदन्यदर्थान्तरविशेषणत्वम् । इत्यायातमनेकरूपत्वं तस्याः । यदप्युक्तं समवायीनि द्रव्याणीत्या-
द्विप्रत्ययो विशेषणपूर्वको विशेष्यप्रत्ययत्वादित्यादि तदप्यनल्पतमोविलसितं हेतोर्विशेषणासिद्धत्वात् । तदसिद्धत्वं च समवायानुरागस्याप्रतीतेः । प्रतीतौ वानुमानान-
र्थक्यम् । को हि नाम समवायानुरक्तं द्रव्यादिकं मन्यमानः समवायं न मन्येत तदनुरागाभावेपि तेनास्य विशेष्यत्वे खरशृङ्गेणापि तत्स्यादविशेषात् । ननु सत्वन्धा-
नुरक्तं द्रव्यादिकं प्रतिभाति । सत्यं प्रतिभाति । समवाये तु किमायातम् ? न च स एव स इति वाच्यं तादात्म्यादपि तत्संभवात् संयोगवत् । तथाप्यत्रैवाग्रहे
खरविषाणेप्याग्रहः किन्न स्यात् ? खरविषाणी पट इति प्रत्ययो विशेषणपूर्वको विशेष्यप्रत्ययत्वादिति । अत्राश्रयासिद्धतान्यत्रापि समाना । न खलु समवायी पट
इति प्रत्ययः केनाप्यनुभूयते । अथाप्रतिपन्नसमयस्य संश्लेषमात्रं प्रतिपन्नसमयस्य तु समवायीति प्रतिभातीति चेन्न ज्ञानाद्वयादेः प्रसङ्गात् । शक्यते हि तत्राप्येवं
वक्तुमप्रतिपन्नसमयस्य वस्तुमात्रमभिधानयोजनारहितं प्रतिभाति संकेतवशाच्चैतत्सर्वं ज्ञानाद्वयादि । स्वशास्त्रजनितसंस्कारवशाद्धि ज्ञानाद्वयादिप्रतिभा-
सोऽप्रमाणमित्यन्यत्रापि समानम् । न हि तत्रापि स्वशास्त्रसंस्काराद्दते समवायीति ज्ञानमनुभवत्यन्यजनः । न चैतच्छास्त्रमप्रमाणमेतच्च प्रमाणमिति प्रे-
क्षावतां वक्तुं युक्तमविशेषात् । समवाय इति प्रत्ययेनानैकान्तिकश्चायं[11] हेतुः । स हि विशेष्यप्रत्ययो न च विशेषणमपेक्षते । अथात्र समवायिनो
विशेषणम् । नन्वस्तु तेषां विशेषणत्वं यत्र समवायिनां समवाय इति प्रतिभासते । यत्र तु समवाय इत्येतावाननुभवस्तत्र किं विशेषणमिति
चिन्त्यताम् । अथ विशेषणाभावान्नेदं विशेष्यज्ञानं तर्ह्यन्यस्य विशेष्यस्यात्रासंभवाद्विशेषणज्ञानमपि तन्मा भूत् । न चैतद्युक्तम् । कथं चैवं पट इति
प्रत्ययो विशेष्यः स्यात् ? विशेषणाभावाविशेषात् । अथात्र पटत्वं विशेषणं तर्हि समवाय इति प्रत्यये किं विशेषणम् ? न तावत्समवायत्वम-
नभ्युपगमात् । अथ येन सता विशिष्टः प्रत्ययो जायते तद्विशेषणं तत्र समवाय इति प्रत्ययोत्पादे समवायत्वसामान्यस्यानभ्युपगमात्, द्रव्यादे-
श्चाप्रतिभासनाददृष्टस्यैव विशेषणत्वमिति, तन्न—यतः किं येन सता विशेष्यज्ञानमुत्पद्यते तद्विशेषणं किं वा यस्यानुरागः प्रतिभासते तदिति ? प्रथमपक्षे चक्षु-
रालोकादेरपि तदनिवार्यम् । अथ यस्यानुरागस्तद्विशेषणं न तर्हि दण्डीति प्रत्यये दण्डवद्दण्डशब्दोल्लेखेन समवाय इति प्रत्ययेप्यदृष्टस्य तच्छब्दयोजनाद्वारेणा-

---

१ दण्डाभावे दण्डीति प्रत्ययो यथा न स्यात्तथा समवायलक्षणविशेषणाभावेपि विशेष्यप्रत्ययो न स्यादिति भाव ॥ २ समवाय एवानुराग सवन्धस्तस्य ॥ ३ समवायेन ॥ ४ द्रव्यादे ॥ ५ तस्य=अनुरागस्य ॥ ६ आदिना ब्रह्माद्वैतादेश्च ॥ ७ अभिधान शब्द ॥ ८ समवाये ॥ ९ वैशेषिक ॥ १० विशेषणपूर्वकलक्षणसाध्याभावात् ॥ ११ विशेष्यप्रत्ययत्वादिति ॥ १२ तन्तुपटादय ॥ १३ समवायिभ्या भिन्नस्य ॥ १४ समवायि प्रकरणे ॥ १५ उभय मा भूदिति ॥ १६ समवाय प्रतिभासते इति प्रत्यये विशेषणभूतस्य तन्तुपटादे ॥ १७ अदर्शनीभूतस्य ॥ १८ इद विशेष्यमिति ज्ञानम् ॥ १९ सवन्ध ॥ २० विशेष्ये ॥ २१ दण्डीति प्रत्यये दण्डशब्दोल्लेखेन दण्डस्य यथानुराग मन्यते जनो, न तथा प्रकृतेऽदृष्टशब्दयोजनाद्वारेणादृष्टस्यानुरागमिति सवन्ध ॥

नुरागं[1] जनो मन्यते तथाप्यदृष्टस्य विशेषणत्वकल्पनायां दण्डीत्यादिप्रत्ययेप्यस्यैव तत्कल्पनास्तु किं द्रव्यादेर्[2]विशेषणभावकल्पनया? यच्चोक्तं स्वकारणसत्तासंवन्ध एवात्मलाभ[3] इत्यादि तन्न—आत्मलाभस्य स्वकारणसत्तासमवायपर्यायतायां नित्यत्वप्रसङ्गात्[4]। तन्नित्यत्वे च कार्यस्याविनाशित्वं स्यात्। किं चासौ सतां सत्तासमवायोऽसतां वा स्यात्? न तावदसतां व्योमोत्पलादीनामपि तत्प्रसङ्गात्। अथात्यन्तासत्त्वात्तेषां न तत्प्रसङ्गः[5]। गुणगुण्यादीनामत्यन्तासत्त्वाभावः कुतः? सिद्धे हि समवाये तेषामत्यन्तासत्त्वाभावस्तदभावाच्च समवाय इतरेतराश्रयः। समवायाच्चेदितरेतराश्रयः। सिद्धे हि समवाये तेषामत्यन्तासत्त्वाभावस्तदभावाच्च समवायः। नापि सताम्। समवायात्पूर्वं हि सत्त्वं तेषां समवायान्तरात्स्वतो वा? समवायान्तराच्चेन्नास्य[6]ैकत्वाभ्युपगमात्। अनेकत्वेप्यतोपि[7] पूर्वसमवायान्तरात्तेषां[8] सत्त्वमित्यनवस्था। स्वतः सत्त्वाभ्युपगमे तु समवायपरिकल्पनानर्थक्यम्। ननु न समवायात् पूर्वं तेषां सत्त्वमसत्त्वं वा सत्तासमवायात्सत्त्वाभ्युपगमादित्यप्यसङ्गतं परस्परव्यवच्छेदरूपाणामेकनिषेधस्यापरविधाननान्तरीयकत्वेनोभयनिषेधविरोधात्[9]। न चानुपकारिणोः[10] सत्तासमवाययोः परस्परसंवन्धो युक्तोतिप्रसङ्गात्। अव्यापि चेदं सत्त्वलक्षणं सत्तासमवायान्त्यविशेषेषु तस्यासंभवात्, त्रिषु पदार्थेषु सत्करी सत्तेत्यभिधानात्[11]। अतिव्यापि चाकाशकुशेशयादिष्वपि भावात्। न च तेषामसत्त्वान्न[12] सत्तासमवायोन्योन्याश्रयानुषङ्गात्। असत्त्वे हि तेषा सत्तासमवायविरहस्तद्विरहाच्चासत्त्वमिति[13]। न च सत्तासमवायः सत्त्वलक्षणं युक्तमर्थान्तरत्वात्। न ह्यर्थान्तरमर्थान्तरस्य स्वरूपमतिप्रसङ्गादर्थान्तरत्वहानिप्रसङ्गाच्च[14]। किं च सत्तासमवायात्पदार्थानां सत्त्वे तयोः कुतः सत्त्वम्? असत्संवन्धात्[15]सत्त्वेतिप्रसङ्गात्[16]। सत्तासमवायान्तराच्चेदनवस्था। स्वतश्चेत्पदार्थानामपि तत्स्वत एवास्तु। किं सत्तासमवायेन? यदप्यभिहितमग्नेरुष्णतावदित्यादि तदप्यभिधानमात्रं यतः प्रत्यक्षसिद्धे पदार्थस्वभावे स्वभावैरुत्तरं वक्तुं युक्तम्। न च समवायस्य स्वतः संवन्धत्वं संयोगादीनां तु तस्मादित्यध्यक्षप्रसिद्धं तत्स्वरूपस्याध्यक्षाद्यगोचरत्वप्रतिपादनात्। समवायोन्येन संवध्यमानो न स्वतः संवध्यते संवध्यमानत्वाद्रूपादिवदित्यनुमानविरोधाच्च। यदि चाग्निप्रदीपगङ्गोदकादीनामुष्णप्रकाशपवित्रतावत्समवायः स्वपरयोः संवन्धहेतुस्तर्हि तद्दृष्टान्तावष्टम्भेनैव[21] ज्ञानं स्वपरयोः प्रकाशहेतुः किन्न स्यात्? तथा च ज्ञानं ज्ञानान्तरवेद्यं प्रमेयत्वादिति ब्रुवते। यच्चोच्यते समवायः संवन्धान्तरं नापेक्षते स्वतः संवन्धत्वात्। ये तु संवन्धान्तरमपेक्षन्ते न ते स्वतः संवन्धा यथा घटादयः। न चायं न स्वतः संवन्धस्तस्मात्संवन्धान्तरं नापेक्षते इति। तदपि मनोरथमात्रं[22] हेतोरसिद्धेः।

१ अदृष्टानुरागाभ्युपगमाभावेपि ॥ २ दण्डादेस्तन्तुपटादेर्वा ॥ ३ कार्यरूपस्य वस्तुन स्वरूपोद्भव ॥ ४ सत्तासमवाययोर्नित्यत्वात् ॥ ५ व्योमोत्पलादीना सर्वथा असत्त्वे प्रतिपादिते आचार्या प्राहु ॥ ६ अस्य=समवायस्य ॥ ७ अतोपि=विवक्षितसमवायान्तरादपि ॥ ८ सताम् ॥ ९ व्यवच्छेदो हि परस्पर विरुद्धधर्मयोगिनामेव स्यात् ॥ १० परस्परम् ॥ ११ द्वन्द्वोत्र ज्ञेय ॥ १२ तेषा स्वरूपेणैव सत्त्वस्वभावत्वात् ॥ १३ तेषा हि सत्तासवन्धादेव सत्त्व, स्वय त्वसत्त्वमेवेति भाव ॥ १४ घटस्य पटस्वरूपत्वप्रसङ्गात् ॥ १५ सद्भ्या सत्तासमवायाभ्या सवन्ध सत्सवन्ध । न सत्सवन्धोऽसत्सवन्ध ॥ १६ गगनकुसुमादिषु ॥ १७ अपरसत्तासमवायाभ्या सवन्धाभावेपीत्यर्थ ॥ १८ तस्य=समवायस्य ॥ १९ तन्तुपटादिलक्षणसवन्धिना सह ॥ २० समवायसमवायिनो ॥ २१ अवष्टम्भोऽवलम्ब साहाय्य वा ॥ २२ स्वत सवन्धत्वादिति हेतो ॥

न हि समवायस्य स्वरूपासिद्धौ स्वतः संबन्धत्वं तत्र सिध्यति संयोगेनानेकान्ताच्च । स हि स्वतः संबन्धः संबन्धान्तरं चापेक्षते । न हि स्वतोऽसंबन्धस्वभावत्वे संयोगादेः परतस्तद्युक्तमतिप्रसङ्गात् । घटादीनां च संबन्धित्वान्न परतोपि संबन्धत्वम् । इत्ययुक्तमुक्तं न ते स्वतःसंबन्धा इति । तन्नास्य स्वतः संबन्धो युक्तः । परतश्चेत्कि संयोगात्समवायान्तराद्विशेषणभावाददृष्टाद्वा ? न तावत्संयोगात्तस्य गुणत्वेन द्रव्याश्रयत्वात् समवायस्य चाद्रव्यत्वात् । नापि समवायान्तरात् तस्यैकरूपतयाभ्युपगमात्, तत्त्वं भावेन व्याख्यातमित्यभिधानात् । नापि विशेषणभावात् संबन्धान्तरैरभिसंबद्धार्थेष्वेवास्य प्रवृत्तिप्रतीतेर्दण्डविशिष्टः पुरुष इत्यादिवत् । अन्यथा सर्वं सर्वस्य विशेषणं विशेष्यं च स्यात् । समवायादिसंबन्धानर्थक्यं च तदभावेपि गुणगुण्यादिभावोपपत्तेः । समवायस्य समवायिविशेषणतानुपपत्तिश्चात्यन्तमर्थान्तरत्वेनातद्धर्मत्वादाकाशवत् । न खलु संयुक्ताविमावित्यत्र संयोगिधर्मतामन्तरेण संयोगस्य तद्विशेषणता दृष्टा । न च समवायसमवायिनां सम्बन्धान्तराभिसम्बद्धत्वमनभ्युपगमात् । किञ्च विशेषणभावोप्येतेभ्योत्यन्तं भिन्नस्तत्रैव कुतो नियाम्येत ? समवायाच्चेदितरेतराश्रयः । समवायस्य नियमसिद्धौ हि ततो विशेषणभावस्य नियमसिद्धिस्तत्सिद्धेश्च समवायस्य तत्सिद्धिरिति । किञ्चायं विशेषणभावः षट्पदार्थेभ्यो भिन्नोऽभिन्नो वा ? भिन्नश्चेत्किं भावरूपोऽभावरूपो वा ? न तावद्भावरूपः षडेव पदार्था इति नियमविरोधात् । नाप्यभावरूपोऽनभ्युपगमात् । अभेदेपि न तावद्द्रव्यं गुणाश्रितत्वाभावप्रसङ्गात् । अत एव न गुणोपि । नापि कर्म कर्माश्रितत्वाभावानुषङ्गात् । अकर्म कर्मेत्यभिधानात् । नापि सामान्यं समवाये तदनुपपत्तेः पदार्थत्रयवृत्तित्वात्तस्य । नापि विशेषो विशेषाणां नित्यद्रव्याश्रितत्वात् । अनित्यद्रव्ये चास्योपलम्भात् समवाये चाभावानुषङ्गात् । युगपदनेकसमवायिविशेषणत्वे चास्यानेकत्वप्राप्तिः । यदिह युगपदनेकार्थविशेषणं तदनेकं प्रतिपन्नम् । यथा दण्डकुण्डलादि । तथा च समवायः । तस्मादनेक इति । न च सत्त्वादिनाऽनेकान्तस्तस्यानेकस्वभावत्वप्रसाधनात् । तन्न विशेषणभावेनाप्यसौ सम्बद्धः । नाप्यदृष्टेनास्य सम्बन्धरूपत्वासम्भवात् । सम्बन्धो हि द्विष्ठो भवताभ्युपगतोऽदृष्टश्चात्मवृत्तितया समवायसमवायिनोरतिष्ठन् कथं द्विष्ठो भवेत् । षोढा सम्बन्धवादित्वव्याघातश्च । यदि चाऽदृष्टेन समवायः सम्बध्यते तर्हि गुणगुण्यादयोप्यत एव सम्बद्धा भविष्यन्तीत्यलं समवायादिकल्पनया । न चादृष्टोप्यसम्बद्धः समवायसम्बन्धहेतुरतिप्रसङ्गात् । सम्बद्धश्चेत्कुतोस्य सम्बन्धः ? समवायाच्चेदन्योन्यसंश्रयः ।

---

१ न केवल हेतोरसिद्धेरेव ॥ २ आदिना संयुक्तसमवायादिसंबन्धग्रहणम् ॥ ३ समवायात् ॥ ४ तत्=संबन्धत्वम् ॥ ५ दृष्टान्तभूतानाम् ॥ ६ संयोगात् ॥ ७ 'समवायस्य संबन्ध स्वसमवायिषु' इति शेष ॥ ८ समवायस्य ॥ ९ परेण ॥ १० एकत्वम् ॥ ११ सत्तया ॥ १२ संबन्धान्तर=तादात्म्यसंयोगादि । समवायसमवायिलक्षणेष्वित्यपरा टिप्पणी ॥ १३ विशेषणभावस्य ॥ १४ अतद्धर्मत्व च स्यात्समवायिना विशेषणत्व च स्यादिति सन्दिग्धानैकान्तिकत्वपरिहारार्थमिदमाह ॥ १५ समवायस्य ॥ १६ समवायिभ्य ॥ १७ विशेषा नित्यद्रव्यवृत्तय इति वचनात् ॥ १८ विशेषणभावस्य ॥ १९ पूर्वम् ॥ २० समवायसिद्धौ हि समवायेनादृष्टस्य सम्बन्धत्व सिध्यति तत्सिद्धौ चाऽदृष्टस्य सम्बद्धस्य समवायहेतुत्व सिध्यति ॥

अन्यतश्चेदभ्युपगमव्याघातः। तन्न सम्बद्धः समवायः। नाप्यसम्बद्धः षण्णामाश्रितत्वमिति[2] विरोधानुषङ्गात्। कथं चासम्बद्धस्य सम्बन्धरूपतार्थान्तरवत्?
सम्बन्धबुद्धिहेतुत्वाच्चेन्महेश्वरादेरपि तत्प्रसङ्गः। कथं चासम्बद्धोऽसौ समवायिनोः सम्बन्धबुद्धिनिबन्धनम्। न ह्यङ्गुल्योः संयोगो घटपटयोरप्रवर्त्तमानस्तयोः
सम्बन्धबुद्धिनिबन्धनं दृष्टः। तथेहात्मनि ज्ञानमित्यादिसम्बन्धबुद्धिर्न सम्बन्ध्यऽसम्बद्धः सम्बन्धपूर्विका सम्बन्धबुद्धित्वाद्दण्डपुरुषसम्बन्धबुद्धिवदित्यनुमान-
विरोधश्च। किञ्चायं समवायः समवायिनोः परिकल्प्यतेऽसमवायिनोर्वा? यद्यसमवायिनोर्घटपटयोरप्येतत्प्रसङ्गः। अथ समवायिनोः, कुतस्तयोः सम-
वायित्वम्? समवायात्स्वतो वा? समवायाच्चेदन्योन्याश्रयः। सिद्धे हि समवायित्वे तयोः समवायस्तस्माच्च तत्त्वमिति। किञ्चाभिन्नं तेनानयोः
समवायित्वं विधीयते भिन्नं वा? न तावदभिन्नं तद्विधाने गगनादीनां विधानानुषङ्गात्। भिन्नं चेत्तयोस्तत्सम्बन्धित्वानुपपत्तिः। सम्बन्धान्तरकल्पने
चानवस्था। तत एव तन्नियमे चेतरेतराश्रयः। सिद्धे हि समवायिनोः समवायित्वनियमे समवायनियमसिद्धिस्ततश्च तन्नियमसिद्धिरिति। स्वत एव
तु समवायिनोः समवायित्वे किं समवायेन? ननु संयोगेप्येतत्सर्वं समानमित्यप्यवाच्यं संश्लिष्टतयोत्पन्नवस्तुस्वरूपव्यतिरेकेणास्याप्यसम्भवात्। भिन्न-
संयोगवशात्तु संयोगिनोर्नियमे समानमेवैतत्। यच्चान्यदुक्तं संयोगिद्रव्यविलक्षणत्वाद्गुणत्वादीनामित्यादि तदप्यनुक्तसमं यतो निष्क्रियत्वेप्येषामाधेयत्वमल्प-
परिमाणत्वात् तत्कार्यत्वात्तथा प्रतिभासाद्वा? तत्राद्यः पक्षोऽयुक्तः सामान्यस्य महापरिमाणगुणस्य चानाधेयत्वप्रसङ्गात्। द्वितीयपक्षोप्यत एवायुक्तः। तृती-
यपक्षोप्यविचारितरमणीयस्तेषामाधेयतया प्रतिभासाभावात्। तदभावश्च रूपादीनां स्वाधारेष्वन्तर्बहिश्च सत्त्वात्। न ह्यन्यत्र कुण्डादावधिकरणे बदरादीनामा-
धेयानां तथा सत्त्वमस्ति। अथ रूपादीनामाधेयत्वे सत्यपि युतसिद्धेरभावादुपरितनतया प्रतिभासाभावो, नं—युतसिद्धत्वस्योपरितनत्वप्रतीत्यहेतुत्वात्। अन्यथोर्ध्वा-
वस्थितवंशादेः क्षीरनीरयोश्च सम्बन्धे तत्प्रसङ्गात्।

ततः परपरिकल्पितपदार्थानां विचार्यमाणानां स्वरूपाव्यवस्थितेः कथं षडेव पदार्था इत्यवधारणं घटते? स्वरूपासिद्धौ संख्यासिद्धेरभावात्, प्रमाणप्रमे-
यसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां नैयायिकाभ्युपगतषोडशपदार्थानां षट्पदार्थाधिक्येन व्यवस्थानाच्च।
न च पदार्थषोडशकस्य षट्स्वेवान्तर्भावान्नातोधिकपदार्थव्यवस्थेत्यभिधातव्यं द्रव्यादीनामपि षण्णां प्रमाणप्रमेयरूपपदार्थद्वयेऽन्तर्भावात्पदार्थषट्कस्याप्यनुपपत्तेः।
अथ तदन्तर्भावेप्यवान्तरविभिन्नलक्षणवशात्प्रयोजनवशाच्च द्रव्यादिषट्कव्यवस्था तर्हि तत एव प्रमाणादिषोडशव्यवस्थाप्यस्तु विशेषाभावात्। न च सापि युक्ता

१ समवाय स्वत एव सम्बद्ध इत्यभ्युपगमे ॥ २ मतस्य ॥ ३ सम्बन्धी ॥ ४ घटपटाभ्यां पृथग्भूतः ॥ ५ शब्दगगनाभ्यां समवायाभिन्नस्य समवायित्वस्य समवायेन विधानात्तयोरपि विधानमित्यर्थः। एवं ज्ञाना-
त्मादिष्वपि ॥ ६ समवायिनोरिदं समवायित्वमिति सम्बन्धाभाव इति भावः ॥ ७ तत्सम्बन्धित्वसिद्ध्यर्थम् ॥ ८ तस्य=गुणादेः ॥ ९ आधेयतया ॥ १० गगनवर्त्तिनः ॥ ११ अल्पपरिमाणत्वाभावात् ॥ १२ घटादिषु ॥
१३ आधेयस्य बहिरेव सत्त्वसद्भावादिति भावः ॥ १४ अन्तर्बहिः प्रकारेण ॥ १५ इति चेन्न इत्यर्थः ॥ १६ युतसिद्धयोः ॥ १७ उपरितनतया प्रतिभासस्य ॥ १८ प्रमाणप्रमेयपदार्थद्वयेन्तर्भावे षण्णां विश्वतत्त्वप्रका-
शिकायाम् ॥ १९ विभिन्नलक्षणवशात्प्रयोजनवशाच्च द्रव्यादिषट्कव्यवस्था भवति प्रमाणादिषोडशव्यवस्था च न भवतीति विशेषं नोत्पश्यामः ॥

परोपगतस्वरूपाणां प्रमाणादीनां यथास्थानं प्रतिषेधाद्विपर्ययानध्यवसाययोश्च प्रमाणादिषोडशपदार्थेभ्योऽर्थान्तरभूतयोः प्रतीतेः। धर्माधर्मद्रव्ययोश्च। कुतः प्रमाणात्तत्सिद्धिरिति चेदनुमानात्। तथा हि। विवादापन्नाः सकलजीवपुद्गलाश्रयाः सकृद्गतयः साधारणबाह्यनिमित्तापेक्षा युगपद्भाविगतित्वादेकसरःसलिलाश्रयानेकमत्स्यगतिवत्। तथा सकलजीवपुद्गलस्थितयः साधारणबाह्यनिमित्तापेक्षा युगपद्भाविस्थितित्वादेककुण्डाश्रयानेकबदरादिस्थितिवत्। यत्तु साधारणं निमित्तं स धर्मोऽधर्मश्च ताभ्यां विना तद्गतिस्थितिकार्यस्यासम्भवात्। गतिस्थितिपरिणामिन एवार्थाः परस्परं तद्धेतवश्चेन्न—अन्योन्याश्रयानुषङ्गात्। सिद्धायां हि तिष्ठत्पदार्थेभ्यो गच्छत्पदार्थानां गतौ तेभ्यस्तिष्ठत्पदार्थानां स्थितिसिद्धिस्तत्सिद्धौ च गच्छत्पदार्थानां गतिसिद्धिरिति। साधारणनिमित्तरहिता एवाखिलार्थगतिस्थितयः प्रतिनियतस्वकारणपूर्वकत्वादिति चेत्कथमिदानी नर्त्तकीक्षणो निखिलप्रेक्षकजनानां नानातद्वेदनोत्पत्तौ साधारणं निमित्तम्। सहकारिमात्रत्वेन चेत्तर्हि सकलार्थगतिस्थितीना सकृद्भुवां धर्माधर्मौ सहकारिमात्रत्वेन साधारणं निमित्तं किन्नेष्यते? पृथिव्यादिरेव साधारणं निमित्तं तासामित्यप्यसङ्गतं गगनवर्त्तिपदार्थगतिस्थितीनां तदसम्भवात्। तर्हि नभः साधारणं निमित्तं तासामस्तु सर्वत्र भावादित्यप्यपेशलं तस्यावगाहनिमित्तत्वप्रतिपादनात्। तस्यैकस्यैवानेककार्यनिमित्ततायामनेकसर्वगतपदार्थपरिकल्पनानर्थक्यप्रसङ्गात्। कालात्मदिक्सामान्यसमवायकार्यस्यापि यौगपद्यादिप्रत्ययस्य बुद्ध्यादेरिदमतः पूर्वेणेत्यादिप्रत्ययस्यान्वयज्ञानस्येहेदमिति प्रत्ययस्य च नभोनिमित्तस्योपपत्तेस्तस्य सर्वत्र सर्वदा सद्भावात्। कार्यविशेषात्कालादिनिमित्तभेदव्यवस्थायां तत एव धर्मादिनिमित्तभेदव्यवस्थाप्यस्तु सर्वथा विशेषाभावात्। एतेनादृष्टनिमित्तत्वमप्यासां प्रत्याख्यातं पुद्गलानामदृष्टासम्भवाच्च। ये यदात्मोपभोग्याः पुद्गलास्तद्गतिस्थितयस्तदात्माऽदृष्टनिमित्ताश्चेत्तर्ह्यसाधारण निमित्तमदृष्टं तासां प्रतिनियतात्मादृष्टस्य प्रतिनियतद्रव्यगतिस्थितिहेतुत्वप्रसिद्धेः। न च तदनिष्टं तासां क्ष्मादेरिवासाधारणकारणस्यादृष्टस्यापीष्टत्वात्। साधारणं तु कारणं तासां धर्माधर्मावेवेति सिद्धः कार्यविशेषात्तयोः सद्भाव इति।

अथेदानीं फलविप्रतिपत्तिनिराकरणार्थमज्ञाननिवृत्तिरित्याद्याह। द्विविधं हि प्रमाणस्य फलं ततो भिन्नमभिन्नं च। तत्राज्ञाननिवृत्तिः प्रमाणादभिन्नं फलम्। ननु चाज्ञाननिवृत्तिः प्रमाणभूतज्ञानमेव। न तदेव तस्यैव कार्यं युक्तं विरोधात्। तत्कुतोसौ प्रमाणफलमित्यनुपपन्नम्। यतोऽज्ञानमज्ञप्तिः स्वपररूपयोर्व्यामोहः। तस्य निवृत्तिर्यथावत्तद्रूपयोर्ज्ञप्तिः प्रमाणधर्मत्वात् तत्कार्यतया न विरोधमध्यास्ते। स्वविषये हि स्वार्थस्वरूपे प्रमाणस्य व्यामोहविच्छेदाभावे निर्विकल्प-

१ वस ॥ २ बाह्य निमित्त धर्म ॥ ३ अन निमित्तमधर्म ॥ ४ तस्य=सकलजीवादे ॥ ५ नर्त्तकी एव क्षण पर्याय ॥ ६ कामोत्कटहर्षादि ॥७ तस्या ॥ ८ अनेकानि=गतिस्थित्यवगाहलक्षणानि ॥ ९ कार्यविशेषलस्य ॥
१० सकृद्भुवा सकलार्थगतिस्थितीना नभोनिमित्तत्वनिराकरणेन ॥११ तेषा पुद्गलानाम् ॥१२ येनात्मना ते पुद्गला उपभुज्यन्ते तस्य ॥१३ गत्यादीनाम् ॥१४ पृथिव्यादे ॥१५ जैनानाम् ॥१६ विषयविप्रतिपत्तिनिराकरणानन्तरम् ॥
१७ प्रमाणाद्भिन्नमेव फलमिति यौगा अभिन्नमेवेति सौगता इति भिन्नाभिन्नत्वाभ्यां फले विप्रतिपत्ति ॥१८ सौगत प्राह ॥१९ अज्ञाननिवृत्ते ॥ २० प्रमाणविषये ॥ २१ प्रमाणधर्मत्वादित्येतस्याऽसिद्धत्वनिरासार्थमिदम् ॥

कदर्शनात्सन्निकर्षाच्चाविशेषप्रसङ्गतः प्रामाण्यं न स्यात् । न च धर्मधर्मिणोः सर्वथा भेदोऽभेदो वा तद्भावविरोधानुषङ्गात् तदन्यतरवदर्थान्तरवच्च । अथाज्ञाननिवृत्तिर्ज्ञानमेवेत्यनयोः सामर्थ्यसिद्धत्वान्यथानुपपत्तेरभेदस्तन्न—अस्या[1]ऽविरुद्धत्वात् । सामर्थ्यसिद्धत्वं हि भेदे सत्येवोपलब्धं निमन्त्रणे आकारणवत्[4] । कथं चैवं वादिनो[5] हेतावन्वयव्यतिरेकधर्मयोर्भेदः सिध्येत्? साध्यसद्भावेऽस्तित्वमेव हि साध्याभावे हेतोर्नास्तित्वमित्यनयोरपि सामर्थ्यसिद्धत्वाविशेषात् । न[6] चानयोरभेदे[7] कार्यकारणभावो विरुध्यतेऽभेदस्य तद्भावाविरोधकत्वाज्जीवसुखादिवत् । साधकतमस्वभावं हि प्रमाणं स्वपररूपयोर्ज्ञप्तिलक्षणामज्ञाननिवृत्तिं निर्वर्त्तयति तत्रान्येनास्या[8] निर्वर्त्तनाभावात् । साधकतमस्वभावत्वं चास्य स्वपरग्रहणव्यापार एव तद्ग्रहणाभिमुख्यलक्षणः । तद्धि स्वकारणकलापादुपजायमानं स्वपरग्रहणव्यापारलक्षणोपयोगरूपं[9] सत्स्वार्थव्यवसायरूपतया परिणमते इत्यभेदेऽप्यनयोः[10] कार्यकारणभावाऽविरोधः ।

नन्वेवमज्ञाननिवृत्तिरूपतयेव[11] हानादिरूपतयाप्यस्य[12] परिणमनसम्भवात् तदप्यस्याऽभिन्नमेव फलं स्यादित्यप्यसुन्दरमज्ञाननिवृत्तिलक्षणफलेनास्य[13] व्यवधानसम्भवतो[14] भिन्नत्वाविरोधात् । अत आह हानोपादानोपेक्षाश्च प्रमाणाद्भिन्नं फलम् । अत्रापि कथञ्चिद्भेदो द्रष्टव्यः सर्वथा भेदे प्रमाणफलव्यवहारविरोधात् । अमुमेवार्थं स्पष्टयन् यः प्रमिमीते इत्यादिना लौकिकेतरप्रतिपत्तिप्रसिद्धां प्रतीतिं दर्शयति । यः प्रतिपत्ता प्रमिमीते स्वार्थग्रहणपरिणामेन परिणमते स एव निवृत्ताज्ञानः स्वविषये व्यामोहविरहितो जहात्यभिप्रेतप्रयोजनाप्रसाधकमर्थं, तत्प्रसाधकं त्वादत्ते, उभयप्रयोजनाऽप्रसाधकं तूपेक्षणीयमुपेक्षते चेति प्रतीतेः प्रमाणफलयोः कथञ्चिद्भेदाभेदव्यवस्था प्रतिपत्तव्या । नन्वेवं[16] प्रमातृप्रमाणफलानां भेदाभावात्प्रतीतिप्रसिद्धस्तद्व्यवस्थाविलोपः स्यात् । तदसाम्प्रतं कथञ्चिल्लक्षणभेदतस्तेषां भेदात् । आत्मनो हि पदार्थपरिच्छित्तौ साधकतमत्वेन व्याप्रियमाणं स्वरूपं प्रमाणं निर्व्यापारम् । व्यापारं[17] तु क्रियोच्यते[18] । स्वातन्त्र्येण पुनर्व्याप्रियमाणं प्रमाता । इति कथञ्चित्तद्भेदः । प्राक्तनपर्यायविशिष्टस्य कथञ्चिदवस्थितस्यैव बोधस्य परिच्छित्तिविशेषरूपतयोत्पत्तेरभेद[19] इति । साधनभेदाच्च[21] तद्भेदः[22] । करण[23]साधनं हि प्रमाणं साधकतमस्वभावम् । कर्तृसाधनस्तु[24] प्रमाता स्वतन्त्रस्वरूपः । भावसाधना[25] तु क्रिया स्वार्थनिर्णीतिस्वभावा । इति[26] कथञ्चिद्भेदाभ्युपग-

---

१ ज्ञानाज्ञाननिवृत्त्यो सामर्थ्यमस्ति तच्चाभेदमन्तरेण नोपपद्यते तस्मादनयोरभेद इति भाव ॥ २ अभेदमन्तरेण ॥ ३ भेदस्य ॥ ४ आह्वानवत् ॥ ५ अज्ञाननिवृत्तिर्ज्ञानमेवेत्यनयो सामर्थ्यसिद्धत्वान्यथानुपपत्तेरभेद इत्येव वादिन ॥ ६ नन्वज्ञाननिवृत्ति प्रमाणादभिन्न फलमित्यनेन प्रकारेण प्रमाणफलयोरभेदे कार्यकारणभावो विरुध्यत इत्युक्ते सत्याह ॥ ७ प्रमाणाज्ञाननिवृत्त्यो ॥ ८ सन्निकर्षादिना ॥ ९ अर्थग्रहणे व्यापारो ह्युपयोग इति वचनात् ॥ १० प्रमाणफलयो ॥ ११ साक्षात्फलमेतत् ॥ १२ परम्पराफलमेतत् ॥ १३ हानादे ॥ १४ प्रमाणादज्ञाननिवृत्ति फल स्यात् । अज्ञाननिवृत्तिफलात्पश्चाद्धानोपादानोपेक्षाश्च फलं स्यादिति भाव ॥ १५ इतर शास्त्र ॥ १६ य प्रतिपत्ता प्रमिमीते इत्यादिप्रकारेण ॥ १७ आत्मस्वरूपम् ॥ १८ परिच्छित्तिरूपा ॥ १९ प्रमाणस्य ॥ २० फलरूपतया ॥ २१ साधन करणकर्त्रादि ॥ २२ प्रमातृप्रमाणपरिच्छित्ति भेद ॥ २३ करणे साधन व्युत्पादन यस्य । प्रमीयते वस्तुतत्त्व येनेति तत्करणसाधन प्रमाणम् ॥ २४ कर्तरि साधन व्युत्पादन यस्य प्रमातु । प्रमिमीते इति तथोक्त ॥ २५ प्रमिति प्रमाणम् ॥ २६ य प्रतिपत्ता प्रमिमीते इत्यनेन प्रकारेण प्रमाणफलयोरभेदे कार्यकारणभावविरोध इत्युक्ते सत्याह ॥

मादेव कार्यकारणभावस्याप्यविरोधः। यच्चोच्यते आत्म[1]व्यतिरिक्तक्रियाकारि प्रमाणं कारकत्वाद्वास्यादिवत्, तत्र कथञ्चिद्भेदे साध्ये सिद्धसाध्यताऽज्ञाननिवृत्तेस्तद्धर्मतया हानादेश्च तत्कार्यतया प्रमाणात्कथञ्चिद्भेदाभ्युपगमात् । सर्वथा भेदे तु साध्ये साध्यविकलो दृष्टान्तः। वास्यादिना हि काष्ठादेश्छिदा निरूप्य[2]माणा छेद्यद्रव्यानुप्रवेशलक्षणैवावतिष्ठते । स चानुप्रवेशो वास्यादेरात्मगत एव धर्मो नार्थान्तरम्। ननु छिदा काष्ठस्था वास्यादिस्तु देवदत्तस्थ इत्यनयोर्भेद एवेत्यप्यसुन्दरं सर्वथा भेदस्यैवमसिद्धेः[3] सत्त्वादिनाऽभेदस्यापि प्रतीतेः। न च सर्वथा करणाद्भिन्नैव क्रियेति नियमोस्ति[4] प्रदीपः स्वात्मनात्मानं प्रकाशयतीत्यत्राभेदेनाप्यस्याः प्रतीतेः। न खलु प्रदीपात्मा[5] प्रदीपाद्भिन्नस्तस्याऽप्रदीपत्वप्रसङ्गात्[6] पटवत् । प्रदीपे प्रदीपात्मनो भिन्नस्यापि समवायात्प्रदीपत्वसिद्धिरिति चेन्नाऽप्रदीपेपि घटादौ प्रदीपत्वसमवायानुषङ्गात् । प्रत्यासत्तिविशेषात्प्रदीपात्मनः प्रदीप एव समवायो नान्यत्रेति चेत्स कोऽन्योन्यत्र कथञ्चित्तादात्म्यात्। एतेन[7] प्रकाशनक्रियाया अपि प्रदीपात्मकत्वं प्रतिपादितं प्रतिपत्तव्यं तस्यास्ततो भेदे प्रदीपस्याऽप्रकाशकद्रव्यत्वानुषङ्गात्। तत्रास्याः समवायान्नायं दोष इत्यप्यसमीचीनमनन्तरोक्ताऽशेषदोषानुषङ्गात् । तन्नान[8]योरात्यन्तिको भेदः। नाप्यभेदस्तदऽव्यवस्थानुषङ्गात्। न[9] खलु सारूप्यमस्य[10] प्रमाणमधिगतिः फलमिति सर्वथा तादात्म्ये व्यवस्थापयितुं शक्यं विरोधात्। ननु सर्वथाऽभेदेप्यनयोर्व्यावृत्तिभेदात्प्रमाणफलव्यवस्था घटते एव । अप्रमाणव्यावृत्त्या हि ज्ञानं[11] प्रमाणमफलव्यावृत्त्या च फलमित्यप्यविचारितरमणीयं परमार्थतः स्वेष्ट[12]सिद्धिविरोधात् । न च स्वभावभेदमन्तरेणान्यव्यावृत्तिभेदोप्युपपद्यते इत्युक्तं सारूप्यविचारे। कथं चास्याऽप्रमाणफलव्यावृत्त्या प्रमाणफलव्यवस्थावत्प्रमाणफलान्तरव्यावृत्त्याऽप्रमाणफलव्यवस्थापि न स्यात्? ततः पारमार्थिके प्रमाणफले प्रतीतिसिद्धे कथञ्चिद्भिन्ने प्रतिपत्तव्ये प्रमाणफलव्यवस्थान्य[13]थानुपपत्तेरिति स्थितम्।

> योनेकान्तपदं प्रवृद्धमतुलं स्वेष्टार्थसिद्धिप्रदं प्राप्तोऽनन्तगुणोदयं निखिल[14]विन्निःशेषतो निर्मलम्।
> स श्रीमानखिलप्रमाणविषयो जीयाज्जनानन्दनो मिथ्यैकान्तमहान्धकाररहितः श्रीवर्द्धमानोदितः ॥ ४ ॥

इति श्रीप्रभाचन्द्रविरचिते प्रमेयकमलमार्तण्डे परीक्षामुखालङ्कारे चतुर्थः परिच्छेदः ॥ श्रीः ॥

---

१ आत्मा=स्वरूपम् ॥ २ दृश्यमाना क्रियमाणा वा ॥ ३ भिन्नाधिकरणत्वेन ॥ ४ लोके ॥ ५ आत्मा=स्वरूप प्रदीपत्वमिति यावत् ॥ ६ अन्यथा ॥ ७ प्रदीपप्रदीपात्मनोरभेदप्रतिपादनेन ॥ ८ प्रमाणफलयो ॥ ९ सौगतमाशङ्क्योच्यते ॥ १० अर्थेन सादृश्य प्रमाणम् ॥ ११ निर्विकल्पकज्ञानस्य ॥ १२ स्वेष्ट प्रमाणफलयोर्भेद ॥ १३ पारमार्थिककथञ्चिद्भिन्नत्वव्यतिरेकेण ॥ १४ अखिलप्रमाणविषयपक्षे निखिलवित् केवलज्ञान यस्मादनेकान्तपदात्तन्निखिलविदनेकान्तपदम्। सर्वज्ञपक्षे तु निखिल वेत्तीति निखिलवित्। एतत्पद सर्वज्ञपरनामक विशेष्यमपराणि विशेषणानि। ततश्च निखिलवित्सर्वज्ञो जीयात्। विषयपक्षेऽखिलाना प्रमाणाना विषयोऽर्थ इति षष्ठपूर्वकस्तास । सर्वज्ञपक्षे तु निखिलवित्कथम्भूत अखिलप्रमाणविषय सर्वप्रमाणग्राह्य इत्यर्थ ॥

श्रीः।

# अथ पञ्चमः परिच्छेदः ॥



अथेदानीं तदाभासस्वरूपनिरूपणाय ततोन्यत्तदाभासमित्याद्याह । प्रतिपादितस्वरूपात्प्रमाणसंख्याप्रमेयफलाद्यदन्यत्तत्तदाभासमिति । तदेव तथा हीत्यादिना यथाक्रमं व्याचष्टे । तत्र प्रतिपादितस्वरूपात्स्वार्थव्यवसायात्मकप्रमाणादन्येऽस्वसंविदितगृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः प्रवृत्तिविषयोपदर्शकत्वाभावात् । पुरुषान्तरपूर्वार्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् । चक्षूरसयोर्द्रव्ये संयुक्तसमवायवच्च । एतच्च सर्वं प्रमाणसामान्यलक्षणपरिच्छेदे विस्तरतोऽभिहितमिति पुनर्नेहाभिधीयते । तथा विशदं प्रत्यक्षमित्युक्तं ततोन्यस्मिन्नऽवैशद्ये सति प्रत्यक्षं तदाभासं बौद्धस्याकस्मिकधूमदर्शनाद्वह्निविज्ञानवत् । इत्यप्युक्तं प्रपञ्चतः प्रत्यक्षपरिच्छेदे । वैशद्येपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत् । न हि करणज्ञानेऽव्यवधानेन प्रतिभासलक्षणं वैशद्यमसिद्धं स्वार्थयोः प्रतीत्यन्तरनिरपेक्षतया तत्र प्रतिभासनादित्युक्तं तत्रैव । तथाऽनुभूतेर्थे तदित्याकारा स्मृतिरित्युक्तम् । अननुभूतेऽतास्मिंस्तदिति ज्ञानं स्मरणाभासं जिनदत्ते स देवदत्तो यथेति । तथैकत्वादिनिवन्धनं तदेवेदमित्यादि प्रत्यभिज्ञानमित्युक्तम् । तद्विपरीतं तु सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमलकवदित्यादि प्रत्यभिज्ञानाभासम् । व्याप्तिज्ञानं तर्क इत्युक्तम् । ततोन्यत्पुनरसम्बन्धेऽव्याप्तौ तज्ज्ञानं=व्याप्तिज्ञानं तर्काभासम् । यावांस्तत्पुत्रः स श्याम इति यथा । साधनात्साध्यविज्ञानमनुमानमित्युक्तम् । तद्विपरीतं त्विदं वक्ष्यमाणमनुमानाभासम् । पक्षहेतुदृष्टान्तपूर्वकश्चानुमानप्रयोगः प्रतिपादित इति । तत्रेत्यादिना यथाक्रमं पक्षाभासादीनुदाहरति । तत्रानुमानाभासेऽनिष्टादिः पक्षाभासः । तत्रानिष्टो मीमांसकस्याऽनित्यः शब्द इति । स हि प्रतिवाद्याद्यादिदर्शनात्कदाचिदाकुलितबुद्धिर्विस्मरन्ननभिप्रेतमपि पक्षं करोति । तथासिद्धः पक्षाभासः यथा श्रावणः शब्द इति–वादिप्रतिवादिनोस्तत्राऽविप्रतिपत्तेः । तथा वाधितः प्रत्यक्षानुमानागमलोकस्ववचनैः पक्षाभासो भवति । तत्र प्रत्यक्षवाधितो यथाऽनुष्णोग्निर्द्रव्यत्वाज्जलवत् । अनुमानवाधितो यथाऽपरिणामी शब्दः कृतकत्वाद्घटवत् । तथा हि । परिणामी शब्दोऽर्थक्रियाकारित्वात्कृतकत्वाद् घटवदिति ।

---

१ तेषां=प्रमाणसंख्याविषयफलानाम् ॥ २ अस्वसंविदितस्य स्वग्राहकत्वाभावेनार्थप्रतिपत्त्ययोगात्प्रवृत्तिविषयोपदर्शकत्वाभाव ॥ ३ निर्विकल्पक दर्शनम् । तस्य प्रवृत्तिविषयोपदर्शकत्वाभावस्तज्जनितविकल्पस्यैव तदुपदर्शकत्वात् ॥ ४ आदिना विपर्ययानध्यवसायौ ॥ ५ अत्रोदाहरणानि यथाक्रममाह ॥ ६ सन्निकर्षवादिन प्रत्यपर च दृष्टान्तमाह ॥ ७ अयमर्थो–यथा चक्षूरसयो संयुक्तसमवाय सन्नपि न प्रमाण तथा चक्षूरूपयोरपि । तस्मादयमपि प्रमाणाभास एवेति ॥ ८ यथा धूमवाष्पादिविवेकनिश्चयाभावाद्व्याप्तिग्रहणाभावादकस्माद्धूमदर्शनाज्जात यद्वह्निविज्ञान तत्तदाभास भवति कस्मादनिश्चयात् । तथा बौद्धपरिकल्पित यन्निर्विकल्पकप्रत्यक्ष तत् प्रत्यक्षाभास भवति कस्मादनिश्चयात् ॥ ९ एकत्वप्रत्यभिज्ञानाभासम् ॥ १० सादृश्यप्रत्यभिज्ञानाभासम् । स्वय स्वेन सदृशमित्यर्थ ॥ ११ यमलक=युगलम् ॥ १२ अविनाभावाभावे ॥ १३ वाधित ॥ १४ आदिना सभ्यसभापत्यादिग्रह ॥ १५ स्वाभिप्रेत नित्य शब्द इति पक्षम् ॥

अर्थक्रियाकारित्वादयो हि हेतवो घटे परिणामित्वे सत्येवोपलब्धाः शब्देष्युपलभ्यमानाः परिणामित्वं प्रसाधयन्तीत्यपरिणामी शब्द इति पक्षस्यानुमानबाधा। आगमबाधितो यथा प्रेत्याऽसुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवदिति। आगमे हि धर्मस्याभ्युदयनिःश्रेयसहेतुत्वं तद्विपरीतत्वं चाधर्मस्य प्रतिपाद्यते। प्रामाण्यं चास्य प्रागेव प्रतिपादितम्। लोकबाधितो यथा शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खशुक्तिवदिति। लोके हि प्राण्यङ्गत्वाविशेषेपि किञ्चिदपवित्रं किञ्चित्पवित्रं च वस्तुस्वभावात्प्रसिद्धम्। यथा गोपिण्डोत्पन्नत्वाविशेषेपि वस्तुस्वभावतः किञ्चिद्दुग्धादि शुद्धं न गोमांसम्। यथा वा मणित्वाविशेषेपि कश्चिद्विषापहारादिप्रयोजनविधायी महामूल्योऽन्यस्तु तद्विपरीतो वस्तुस्वभाव इति। स्ववचनबाधितो यथा माता मे वन्ध्या पुरुषसंयोगेप्यगर्भत्वात्प्रसिद्धवन्ध्यावत्।

अथेदानीं पक्षाभासानन्तरं हेत्वाभासेत्यादिना हेत्वाभासानाह। साध्याविनाभावित्वेन निश्चितो हेतुरित्युक्तं प्राक्। तद्विपरीतास्तु हेत्वाभासाः। के ते? असिद्धविरुद्धानैकान्तिकाऽकिञ्चित्कराः। तत्रासिद्धस्य स्वरूपं निरूपयति। असत्सत्तानिश्चयोऽसिद्ध इति। सत्ता च निश्चयश्च। असन्तौ सत्तानिश्चयौ यस्य स तथोक्तः। तत्राविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वादिति। कथमस्याऽसिद्धत्वमित्याह। स्वरूपेणासिद्धत्वादिति। चक्षुर्ज्ञानग्राह्यत्वं हि चाक्षुषत्वम्। तच्च शब्दे स्वरूपेणासत्त्वादसिद्धम्। पौद्गलिकत्वात्तत्सिद्धिरित्यप्यपेशलं तदविशेषेप्यनुद्भूतस्वभावस्यानुपलम्भसम्भवाज्जलकनकादिसंयुक्तानले भासुररूपोष्णस्पर्शवदित्युक्तं तत्पौद्गलिकत्वसिद्धिप्रघट्टके। ये च विशेष्यासिद्धादयोऽसिद्धप्रकाराः परैरिष्टास्तेऽसत्सत्ताकत्वलक्षणासिद्धप्रकारान्नार्थान्तरं तल्लक्षणभेदाभावात्। यथैव हि स्वरूपासिद्धस्य स्वरूपतोऽसत्त्वादसत्सत्ताकत्वलक्षणमसिद्धत्वं तथा विशेष्यासिद्धादीनामपि विशेष्यत्वादिस्वरूपतोऽसत्त्वात्तल्लक्षणमेवासिद्धत्वम्। तत्र विशेष्यासिद्धो यथा अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्। विशेषणासिद्धो यथा अनित्यः शब्दश्चाक्षुषत्वे सति सामान्यवत्त्वात्। आश्रयासिद्धो यथाऽस्ति प्रधानं विश्वपरिणामित्वात्। आश्रयैकदेशासिद्धो यथा नित्याः परमाणुप्रधानात्मेश्वरा अकृतकत्वात्। व्यर्थविशेष्यासिद्धो यथाऽनित्याः परमाणवः कृतकत्वे सति सामान्यवत्त्वात्। व्यर्थविशेषणासिद्धो यथाऽनित्याः परमाणवः सामान्यवत्त्वे सति कृतकत्वात्। व्यर्थविशेष्यविशेषणश्चासावसिद्धश्चेति। व्यधिकरणासिद्धो यथाऽनित्यः शब्दः पटस्य कृतकत्वात्। व्यधिकरणश्चासावसिद्धश्चेति। ननु शब्दे कृतकत्वमस्ति तत्कथमस्यासिद्धत्वम्?

---

१ श्रावणज्ञानग्राह्यत्वमस्येति ॥ २ रूपादिलक्षणस्य। यस ॥ ३ चक्षुषा ॥ ४ परमार्थत प्रधान नास्तीति भाव ॥ ५ अयमाश्रयस्तत्र प्रधानेश्वरौ न स्त एव ॥ ६ कृतकत्वेनाऽनित्यत्वसिद्धिर्यत ॥ ७ व्यर्थं विशेषणं यस्य स तथोक्त, स चासावसिद्धश्चेति विग्रह ॥ ८ विशेष्यं च विशेषणं च विशेष्यविशेषणे। व्यर्थे विशेष्यविशेषणे यस्येति विग्रह ॥ ९ विभिन्नमधिकरणमस्येति विग्रह ॥

तदयुक्तं तस्य हेतुत्वेनाप्रतिपादितत्वात्[1]। न चान्यत्र प्रतिपादितमन्यत्र सिद्धं भवत्यतिप्रसङ्गात्[3]। भागासिद्धो[4] यथा नित्यः शब्दः प्रयत्नानन्तरीयकत्वात्[5]। व्यधिकरणासिद्धत्वं भागासिद्धत्वं च परप्रक्रियाप्रदर्शनमात्रं[6] न वस्तुतो हेतुदोषो व्यधिकरणस्याप्युदेष्यति शकटं कृत्तिकोदयात्, उपरि वृष्टो देवोऽधः पूरदर्शनादित्यादेर्गमकत्वप्रतीतेः। अविनाभावनिबन्धनो हि गम्यगमकभावः। न तु व्यधिकरणाव्यधिकरणनिबन्धनः स श्यामस्तत्पुत्रत्वात्, धवलः प्रासादः काकस्य कार्ष्ण्यादित्यादिवत्। न च व्यधिकरणस्यापि गमकत्वेऽविद्यमानसत्ताकत्वलक्षणमसिद्धत्वं विरुध्यते। न हि पक्षेऽविद्यमानसत्ताकोऽसिद्धोभिप्रेतो गुरूणाम्[7]। किं तर्हि? अविद्यमाना साध्येनासाध्येनोभयेन वाऽविनाभाविनी सत्ता यस्यासावसिद्ध इति[8]। भागासिद्धस्याप्यविनाभावसद्भावाद्गमकत्वमेव। न खलु प्रयत्नानन्तरीयकत्वमनित्यत्वमन्तरेण क्वापि दृश्यते। यावति च तत्प्रवर्त्तते तावतः शब्दस्यानित्यत्वं ततः प्रसिद्ध्यति। अन्यस्य त्वन्यतः कृतकत्वादेरिति। यद्वा प्रयत्नानन्तरीयकत्वहेतूपादानसामर्थ्यात्प्रयत्नानन्तरीयक एव शब्दोऽत्र पक्षः। तत्र चास्य सर्वत्र प्रवृत्तेः कथं भागासिद्धत्वमिति? अथेदानीं द्वितीयमसिद्धप्रकारं व्याचष्टे। अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमादिति। कुतोस्याविद्यमाननियततेत्याह। मुग्धबुद्धेर्वाष्पादिभावेन भूतसंघाते सन्देहात्। न खलु साध्यसाधनयोरव्युत्पन्नप्रज्ञो धूमादिरीदृशो वाष्पादिश्चेदृश इति विवेचयितुं समर्थः। साङ्ख्यं प्रति परिणामी शब्दः कृतकत्वादिति चाविद्यमाननिश्चयः। कुत एतत्? तेनाज्ञातत्वात्। न ह्यस्याविर्भावादन्यत्कारणव्यापारादसतो रूपस्यात्मलाभलक्षणं कृतकत्वं प्रसिद्धम्[17]। सन्दिग्धविशेष्यादयोप्यविद्यमाननिश्चयतालक्षणातिक्रमाभावान्नार्थान्तरम्। तत्र सन्दिग्धविशेष्यासिद्धो यथाऽद्यापि रागादियुक्तः कपिलः[18] पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात्[19]। सन्दिग्धविशेषणासिद्धो यथाद्यापि रागादियुक्तः कपिलः सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वात्। एते एवासिद्धभेदाः केचिदन्यतरासिद्धाः[20] केचिदुभयासिद्धाः[21] प्रतिपत्तव्याः। ननु नास्त्यन्यतरासिद्धो हेत्वाभासः[22]। तथा हि। परेणासिद्ध[23] इत्युद्भाविते यदि वादी तत्साधकं प्रमाणं न प्रतिपादयति तदा प्रमाणाभासवदुभयोरसिद्धः। अथ प्रमाणं प्रतिपादयेत्तर्हि प्रमाणस्यापक्षपातित्वादुभयोरप्यसौ सिद्धः। अन्यथा[24] साध्यमप्यन्यतरासिद्धं न कदाचित्सिद्ध्येदिति व्यर्थः प्रमाणोपन्यासः

---

१ शब्दस्यस्य कृतकत्वस्य ॥ २ तथा प्रतिपादितमपि कृतकत्व शब्दे सिद्धं भविष्यतीत्युक्ते सत्याह ॥ ३ एकत्र हेतूपन्यासे सर्वत्र साध्यसिद्धिप्रसङ्गात् ॥ ४ पक्षैकभागे असिद्ध । आश्रयैकदेशासिद्धभागासिद्धयोरय विशेष । तत्राश्रयैकदेशोऽसिद्धो हेतुश्च सिद्ध एव । अत्र त्वाश्रयैकदेशे हेतुरसिद्ध आश्रयेकदेशस्तु सिद्ध एव ॥ ५ प्रयत्नानन्तरीयकत्व पुरुषव्यापारोत्पन्ने शब्दे न तु मेघादिशब्दे इति भाव ॥ ६ परे नैयायिकादय ॥ ७ जैनानाम् ॥ ८ अव्यधिकरणव्यधिकरणत्वमुभयत्रास्ति तथाप्यविनाभावाभावेनासद्धेतुत्वमिति भाव ॥ ९ न चाशङ्कनीयम् ॥ १० दृष्टान्तेन ॥ ११ हेतो ॥ १२ साधनम् ॥ १३ पुरुषव्यापारोत्पन्ने शब्दे ॥ १४ मेघादिशब्दस्य धर्मिरूपस्य ॥ १५ पृथिव्यादिलक्षणाना भूताना सघातो धूमस्तस्मिन् धूमे ॥ १६ विद्यमानधूमेपि ॥ १७ यतस्तस्य सर्वस्य वस्तुन सद्भाव सदेति वच ॥ १८ साख्यगुरु ॥ १९ साख्येनोक्त भवता जैनाना विशेष्यासिद्धो हेतुरिति भाव ॥ २० वादिप्रतिवादिनोर्मध्ये एकस्य ॥ २१ वादिप्रतिवादिनो ॥ २२ किन्तर्हि? उभयासिद्ध एव ॥ २३ प्रतिवादिना ॥ २४ उपन्यस्तेपि निर्दुष्टे हेतुसाधके प्रमाणे यद्यसौ नोभयो सिद्ध स्यात्तर्हि ॥

स्यात्। इत्यप्यसमीचीनं यतो वादिना प्रतिवादिना वा सभ्यसमक्षं स्वोपन्यस्तो हेतुः प्रमाणतो यावन्न परं प्रति साध्यते तावत्तं प्रत्यस्य प्रसिद्धेरभावात्कथं नान्यतरासिद्धता? नन्वेवमप्यस्यासिद्धत्वं गौणमेव स्यादिति चेदेवमेतत्। प्रमाणतो हि सिद्धेरभावादसिद्धोऽसौ न तु स्वरूपतः । न खलु रत्नादिपदार्थस्तत्त्वतोऽप्रतीयमानस्तावत्कालं मुख्यतस्तदाभासो भवतीति ।

अथेदानीं विरुद्धहेत्वाभासस्य विपरीतस्येत्यादिना स्वरूपं दर्शयति। साध्यस्वरूपाद्विपरीतेन प्रत्यनीकेन निश्चितोऽविनाभावो यस्यासौ विरुद्धः। यथाऽपरिणामी शब्दः कृतकत्वादिति । कृतकत्वं हि पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनैवाविनाभूतं बहिरन्तर्वा प्रतीतिविषयः सर्वथा नित्ये क्षणिके वा तदभावप्रतिपादनात् । ये चाष्टौ विरुद्धभेदाः परैरिष्टास्तेप्येतल्लक्षणलक्षितत्वाविशेषतोऽत्रैवान्तर्भवन्तीत्युदाह्रियन्ते। सति सपक्षे चत्वारो विरुद्धाः। पक्षविपक्षव्यापक सपक्षावृत्तिर्यथा नित्यः शब्द उत्पत्तिधर्मकत्वात् । उत्पत्तिधर्मकत्वं हि पक्षीकृते शब्दे प्रवर्त्तते । नित्यविपरीते चानित्ये घटादौ विपक्षे । नाकाशादौ सत्यपि सपक्षे इति । विपक्षैकदेशवृत्तिः पक्षव्यापक सपक्षावृत्तिश्च यथा नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वात् । बाह्येन्द्रियग्रहणयोग्यतामात्रं हि बाह्येन्द्रियप्रत्यक्षत्वमत्र विवक्षितम्। तेनास्य पक्षव्यापकत्वम् । विपक्षैकदेशव्यापकत्वं चानित्ये घटादौ भावात्सुखादौ चाभावात् सिद्धम् । सपक्षावृत्तित्वं चाकाशादौ नित्येऽवृत्तेः। सामान्ये वृत्तिस्तु सामान्यवत्त्वे सतीति विशेषणाद्व्यवच्छिन्ना । पक्षविपक्षैकदेशवृत्तिः सपक्षावृत्तिश्च यथा सामान्यविशेषवती अस्मदादिबाह्यकरणप्रत्यक्षे वाग्मनसे नित्यत्वात्। नित्यत्वं हि पक्षैकदेशे मनसि वर्त्तते न वाचि । विपक्षे चास्मदादिबाह्यकरणाप्रत्यक्षे गगनादौ नित्यत्वं वर्त्तते न सुखादौ । सपक्षे च घटादावस्याऽवृत्तेः सपक्षावृत्तित्वम्। सामान्यस्य च सपक्षत्वं सामान्याविशेषवत्त्वविशेषणाद्व्यवच्छिन्नम् । योगिबाह्यकरणप्रत्यक्षस्य चाकाशादेरस्मदाद्यऽग्रहणादसपक्षत्वम्। पक्षैकदेशवृत्तिः सपक्षावृत्तिर्विपक्षव्यापको यथा नित्ये वाग्मनसे उत्पत्तिधर्मकत्वात्। उत्पत्तिधर्मकत्वं हि पक्षैकदेशे वाचि वर्त्तते न मनसि सपक्षे चाकाशादौ नित्ये न वर्त्तते । विपक्षे च घटादौ सर्वत्र वर्त्तते इति। तथाऽसति सपक्षे चत्वारो विरुद्धाः।- पक्षविपक्षव्यापकोऽविद्यमानसपक्षो यथाकाशविशेषगुणः शब्दः प्रमेयत्वात्। प्रमेयत्वं हि पक्षे शब्दे वर्तते। विपक्षे चानाकाशविशेषगुणे घटादौ । न तु सपक्षे तस्यैवाभावात्। न ह्याकाशे शब्दादन्यो विशेषगुणः कश्चिदस्ति यः सपक्षः स्यात्। परममहापरिमाणादेरन्यत्रापि प्रवृत्तितः साधारणगुणत्वात्। पक्षविपक्षैकदेशवृत्तिरविद्यमान-

---

१ साध्यस्यान्यतरासिद्धत्वात् ॥ २ यावत्प्रमाणत सिद्धेरेवाभावस्तावत्स्वरूपतोप्यसिद्ध कुतो न स्यादित्युक्ते सत्याह ॥ ३ सह ॥ ४ हेतो ॥ ५ एकान्वभाव्यऽक्षणिकलक्षणो नित्यैकलक्षण ॥ ६ साध्यविपरीतेन ॥ ७ नैयायिकादिभि ॥ ८ एतत्=विपरीतनिश्चिताविनाभावता ॥ ९ सपक्षे अवृत्तिरवर्त्तन यस्य स तयोक्त ॥ १० नित्यरूपे सपक्षे ॥ ११ नित्यत्वस्य हेतो ॥ १२ सामान्यस्य सपक्षत्वं भविष्यतीत्युक्ते सत्याह ॥ १३ अनित्यत्वेन ॥ १४ आदिना सख्यादेश्च ॥ १५ आत्मादावपि ॥

विपक्षव्यापको यथा द्रव्याणि दिक्कालमनांस्यमूर्तत्वात् । अमूर्तत्वं हि पक्षस्यैकदेशे दिक्काले वर्तते न मनसि । सपक्षस्य च द्रव्यरूपस्यैकदेशे आत्मादौ वर्तते, न घटादौ । विपक्षे चाद्रव्यरूपे गुणादौ सर्वत्रेति । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथाऽद्रव्याणि दिक्कालमनांस्यमूर्तत्वात् । अत्रापि प्राक्तनमेव व्याख्यानमद्रव्यरूपस्य गुणादेस्तु सपक्षतेति विशेषः । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा पृथिव्यप्तेजोवाय्वाकाशान्यऽनित्यान्यऽगन्धवत्त्वात् । अगन्धवत्त्वं हि पृथिवीतोऽन्यत्र पक्षैकदेशे वर्तते, न तु पृथिव्याम् । सपक्षे चानित्ये गुणे कर्मणि च । विपक्षे चात्मादौ नित्ये सर्वत्र वर्तत इति ।

अथेदानीमकिञ्चित्करस्वरूपं सिद्ध इत्यादिना व्याचष्टे । सिद्धे निर्णीते प्रमाणान्तरात्साध्ये प्रत्यक्षादिबाधिते च हेतुर्न किञ्चित्करोतीत्यकिञ्चित्करोऽनर्थको यथा श्रावणः शब्दः शब्दत्वादिति । न ह्यसौ स्वसाध्यं साधयति तस्याध्यक्षादेव प्रसिद्धेः । नापि साध्यान्तरं तत्रावृत्तेरित्यत आह किञ्चिदकरणात् । प्रत्यक्षादिबाधिते च साध्येऽकिञ्चित्करोसौ, अनुष्णोग्निर्द्रव्यत्वादित्यादौ यथा । कुतोस्याऽकिञ्चित्करत्वमित्याह किञ्चित्कर्तुमशक्यत्वात् । ननु प्रसिद्धः प्रत्यक्षानुमानागमलोकस्ववचनैश्च बाधितः पक्षाभासः प्रतिपादितः । तद्दोषेणैव चास्य दुष्टत्वात् पृथगकिञ्चित्कराभिधानमनर्थकमित्याशङ्क्य लक्षण एवेत्यादिना प्रतिविधत्ते । लक्षणे लक्षणव्युत्पादनशास्त्रे एवासावकिञ्चित्करत्वलक्षणो दोषो विनेयव्युत्पत्त्यर्थं व्युत्पाद्यते । न तु व्युत्पन्नानां प्रयोगकाले । कुत एतदित्याह व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वात् ।

अथेदानी दृष्टान्ताभासप्रतिपादनार्थं दृष्टान्तेत्याद्युपक्रमते । दृष्टान्तो ह्यन्वयव्यतिरेकभेदाद्द्विधेत्युक्तम् । तद्विपरीतस्तदाभासोपि तद्भेदाद्द्विधैव द्रष्टव्यः । तत्रान्वये दृष्टान्ताभासा असिद्धसाध्यसाधनोभयाः । अपौरुषेयः शब्दोऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवदिति । इन्द्रियसुखे हि साधनममूर्तत्वमस्ति । साध्यं त्वपौरुषेयत्वं नास्ति पौरुषेयत्वात्तस्य । परमाणुषु तु साध्यमपौरुषेयत्वमस्ति, साधनं त्वमूर्तत्वं नास्ति मूर्तत्वात्तेषाम् । घटे तूभयमपि पौरुषेयत्वान्मूर्तत्वाच्चास्येति । न केवलमेत एवान्वये दृष्टान्ताभासाः किन्तु विपरीतान्वयश्च । विपरीतोन्वयो व्याप्तिप्रदर्शनं यस्मिन्निति[6] । यथा यदपौरुषेयं तदमूर्तमिति । यदमूर्तं तदपौरुषेयमिति हि साध्येन व्याप्ते साधने प्रदर्शनीये कुतश्चिद्व्यामोहाद्यदपौरुषेयं तदमूर्तमिति प्रदर्शयति । न चैवं प्रदर्शनीयं विद्युदादिनातिप्रसङ्गादिति । विद्युद्वनकुसुमादौ ह्यऽपौरुषेयत्वेप्यमूर्तत्वं नास्तीति । व्यतिरेके दृष्टान्ताभासा असिद्धतद्व्यतिरेकाः । असिद्धस्तेषां साध्यसाधनोभयानां व्यतिरेको वृत्तिर्येषु ते तथोक्ताः । यथाऽपौरुषेयः शब्दोऽमूर्तत्वादित्युक्त्वा यन्नापौरुषेयं तन्नामूर्त्त [ पौरुषेयं तन्नामूर्तं ] परमाण्विन्द्रियसुखाकाशवदिति व्यतिरेकमाह । परमाणुभ्यो ह्यमूर्तत्वव्यावृत्तावप्यऽपौरुषेयत्वं न व्यावृत्तमपौरुषेयत्वात्तेषाम् ।

---

१ इयत्तावच्छिन्नपरिमाणयोगित्वं मूर्तिमत्त्वम् । निर्गुणा गुणा इति वचनादियत्तावच्छिन्नपरिमाणाभाव. ॥ २ अबाधितु ॥ ३ उपन्यासकाले ॥ ४ पक्षाभासलक्षणेन ॥ ५ अन्वयव्यतिरेकभेदात् ॥ ६ योग्निमान्स धूमवानितियथा ॥ ७ दृष्टान्तम् ॥

इन्द्रियसुखे त्वपौरुषेयत्वव्यावृत्तावप्यमूर्त्तत्वं न व्यावृत्तममूर्त्तत्वात्तस्य । आकाशे तूभयं न व्यावृत्तमपौरुषेयत्वादमूर्त्तत्वाच्चास्येति । न केवलमेत एव व्यतिरेके दृष्टान्ताभासाः किंतु विपरीतव्यतिरेकश्च । विपरीतो व्यतिरेको व्यावृत्तिप्रदर्शनं यस्येति । यथा यन्नामूर्त्तं तन्नापौरुषेयमिति । यन्नापौरुषेयं तन्नामूर्त्तमिति हि साध्यव्यतिरेके साधनव्यतिरेकः प्रदर्शनीयस्तथैव प्रतिबन्धादिति । अव्युत्पन्नव्युत्पादनार्थं पञ्चावयवोपि प्रयोगः प्राक् प्रतिपादितस्तत्प्रयोगाभासः कीदृश इत्याह बालप्रयोगाभासः पञ्चावयवेषु कियद्धीनता । यथाग्निमानयं देशो धूमवत्त्वात् । यदित्थं तदित्थं यथा महानस इति । धूमवांश्चायमिति वा । यो ह्यव्युत्पन्नप्रज्ञोऽनुमानप्रयोगे पञ्चावयवे गृहीतसङ्केतः स उपनयनिगमनरहितस्य निगमनरहितस्य वानुमानप्रयोगस्य तदाभासतां मन्यते । न केवलं कियद्धीनतैव बालप्रयोगाभासः किंतु तद्विपर्ययश्च । तेषामवयवानां विपर्ययस्तत्प्रयोगाभासो यथा तस्मादग्निमान्धूमवांश्चायमिति । स ह्युपनयपूर्वकं निगमनप्रयोगं साध्यप्रतिपत्त्यङ्गं मन्यते, नान्यथा । कुत एतदित्याह स्पष्टतया प्रकृतस्य साध्यस्य प्रतिपत्तेरयोगात् । यो हि यथा गृहीतसङ्केतः स तथैव वाक्प्रयोगात्प्रकृतमर्थं प्रतिपद्येत नान्यथा लोकवत् । यस्तु सर्वप्रकारेण वाक्प्रयोगे व्युत्पन्नप्रज्ञः स यथा यथा वाक्प्रयुज्यते तथा तथा प्रकृतमर्थं प्रतिपद्येत लोके सर्वभाषाप्रवीणपुरुषवत् । तथा च न तं प्रत्यनन्तरोक्तः कश्चित्प्रयोगाभास इति ।

अथेदानीमागमाभासप्ररूपणार्थमाह । रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् । रागाक्रान्तो हि पुरुषः क्रीडावशीकृतचित्तो विनोदार्थं वस्तु किंचिदप्राप्नुवन्माणवकैरपि सह क्रीडाभिलाषेणेदं वाक्यमुच्चारयति । यथा नद्यास्तीरे मोदकराशयः सन्ति धावध्वं माणवका इति । तथा कश्चित्कार्ये व्यासक्तचित्तो माणवकैः कदर्थितो द्वेषाक्रान्तोप्यात्मीयस्थानात्तदुच्चाटनाभिलाषेणेदमेव वाक्यमुच्चारयति । मोहाक्रान्तस्तु सांख्यादिरङ्गुल्यग्रे हस्तियूथशतमास्ते इति चोच्चारयति । न खल्वज्ञानमहामहीधराक्रान्तः पुरुषो यथावद्वस्तु विवेचयितुं समर्थः । ननु चैवंविधपुरुषवचनोद्भूतं ज्ञानं कस्मादागमाभासमित्याह विसंवादात् । प्रतिपन्नार्थविचलनं हि विसंवादो विपरीतार्थोपस्थापकप्रमाणावसेयः । स चैवात्रास्तीत्यागमाभासता ।

अथेदानीं संख्याभासोपदर्शनार्थमाह । प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्याभासम् । कस्मादित्याह लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिद्धेः । कुतोऽसिद्धिरित्याह अतद्विषयत्वात् । यथा चाध्यक्षस्य परलोकादिनिषेधादिरविषयस्तथा विस्तरतो द्वितीयपरिच्छेदे प्रतिपादितम् । अमुमेवार्थं समर्थयमानः सौगतादिपरिकल्पितां च संख्यां निराकुर्वाणः सौगतेत्याद्याह । यथैव हि सौगतसांख्ययौगप्राभाकरजैमिनीयानां मते प्रत्यक्षानु-

१ कुत इत्याह ॥ २ अविनाभावात् ॥ ३ अनुमानप्रयोग ॥ ४ बालव्युत्पत्त्यर्थमेव ॥ ५ पञ्चावयवानुमानवादी बालो वा ॥ ६ निगमनपूर्वस्योपनयप्रयोग न मन्यते ॥ ७ क्रीडाकारणम् ॥ ८ दृश्यमानव्यतिरिक्तम् ॥ ९ सांख्यमते सर्वं सर्वत्र विद्यते यत ॥ १० रजते नेदं रजतमिति यथा ॥ ११ रागाद्याक्रान्तपुरुषवचनजनिते ज्ञाने ॥ १२ आदिना परबुद्ध्यादिग्रह ॥

मानागमोपमानार्थापत्त्यभावैः प्रमाणैरेकैकाधिकैर्व्याप्तिर्न सिध्यत्यतद्विषयत्वात् तथा प्रकृतमपि । प्रयोगः । यद्यस्याऽविषयो न ततस्तत्सिद्धिः । यथा प्रत्यक्षानुमानाद्यविषयो व्याप्तिर्न ततः सिद्धिसौधशिखरमारोहति । अविषयश्च परलोकनिषेधादिः प्रत्यक्षस्येति । मा भूत्प्रत्यक्षस्य तद्विषयत्वमनुमानादेस्तु भविष्यतीत्याह अनुमानादेस्तद्विषयत्वे प्रमाणान्तरत्वं चार्वाकं प्रति, सौगतादीन्प्रति तर्कस्येव व्याप्तिगोचरत्वे । कुत एतदित्याह अप्रमाणस्याऽव्यवस्थापकत्वात्, प्रतिभासादिभेदस्य च भेदकत्वादिति । प्रतिपादितश्चायं प्रतिभासभेदः सामग्रीभेदश्चाध्यक्षादीनां प्रपञ्चतस्तद्द्वेधेत्यत्रेत्युपरम्यते ।

अथेदानीं विषयाभासप्ररूपणार्थं विषयेत्याद्युपक्रमते । विषयाभासाः-सामान्यं यथा सत्ताद्वैतवादिनः । केवलं विशेषो वा यथा सौगतस्य । द्वयं वा स्वतन्त्रं यथा यौगस्य । कुतोस्य विषयाभासतेत्याह तथाऽप्रतिभासनात् कार्याऽकरणाच्च । स ह्येवंविधोर्थः स्वयमसमर्थः समर्थो वा कार्यं कुर्यात्? न तावत्प्रथमः पक्षः स्वयमसमर्थस्याऽकारकत्वात्पूर्ववत् । नापि द्वितीयः पक्षः समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात्, परापेक्षणे परिणामित्वमन्यथा तदभावादिति । एतच्च सर्वं विषयपरिच्छेदे विस्तरतोभिहितमिति नेहाभिधीयते ।

अथेदानीं फलाभासं प्ररूपयन्नाह फलाभासं प्रमाणादभिन्नं भिन्नमेव वा । कुतोस्य फलाभासतेत्याह । अभेदे तद्व्यवहारानुपपत्तेः । न खलु सर्वथा तयोरभेदे इदं प्रमाणमिदं फलमिति व्यवहारः शक्यः प्रवर्त्तयितुम् । ननु व्यावृत्त्या तयोः कल्पना भविष्यतीत्याह व्यावृत्त्यापि न तत्कल्पना फलान्तराद्व्यावृत्त्याऽफलत्वप्रसङ्गात् । प्रमाणान्तराद्व्यावृत्तौ वाऽप्रमाणत्वस्येति । एतच्च फलपरीक्षायां प्रपञ्चितमिति पुनर्नेह प्रपञ्च्यते । तस्माद्वास्तवो भेदः प्रमाणफलयोस्तद्व्यवहारान्यथानुपपत्तेरिति प्रेक्षादक्षैः प्रतिपत्तव्यम् । अस्तु तर्हि सर्वथा तयोर्भेद इत्याशङ्कापनोदार्थमाह भेदे त्वात्मान्तरवत्तदनुपपत्तिः । समवायेतिप्रसङ्ग इत्यप्युक्तं तत्रैव ।

अथेदानीं प्रतिपन्नप्रमाणतदाभासस्वरूपाणां विनेयानां प्रमाणतदाभासावित्यादिना फलमादर्शयति । प्रतिपादितस्वरूपौ हि प्रमाणतदाभासौ यथावत्प्रतिपन्नाप्रतिपन्नस्वरूपौ जयेतरव्यवस्थाया निबन्धनं भवतः । तथा हि । चतुरङ्गवादमुररीकृत्य विज्ञातप्रमाणतदाभासस्वरूपेण वादिना सम्यक्प्रमाणे स्वपक्ष-

---

१ अनुमानस्य ॥ २ परलोकनिषेधादे ॥ ३ अस्तु प्रामाण्यमनुमानस्य किन्तु तत्प्रत्यक्षे एवान्तर्भविष्यतीत्युक्ते सत्याह ॥ ४ तत प्रत्यक्षेऽनुमानस्यान्तर्भावाभाव इत्यर्थं ॥ ५ अन्योन्यनिरपेक्षम् ॥ ६ केवलसामान्यतया केवलविशेषतया द्वयस्य स्वतन्त्रतया वा ॥ ७ केवलसामान्यरूप केवलविशेषरूपश्च ॥ ८ पश्चादपि ॥ ९ परस्य ॥ १० अनपेक्षाकारपरित्यागेनापेक्षाकारेण परिणमनात् ॥ ११ सर्वथा ॥ १२ तयो प्रमाणफलयो ॥ १३ अफलाद्व्यावृत्ति कथ यथा तथा फलान्तराद्व्यावृत्त्या भाव्यम् । तथा सति फलान्तराद्व्यावृत्ति फलविशेषाद्व्यावृत्तिरित्यर्थं । अफलत्वप्रसङ्ग गोर्व्यावृत्त्याऽगोत्व भवति यथा ॥ १४ वास्तवभेदाभावे ॥ १५ वादिना प्रतिपन्नाप्रतिपन्नस्वरूपौ प्रतिवादिनापि तथेत्यर्थं ॥ १६ सभ्यसभापतिवादिप्रतिवादीनि चत्वार्यङ्गानि यस्य स तथोक्त ॥

हितत्वं च वादेऽसिद्धं तस्यैव तत्संरक्षणार्थत्वोपपत्तेः । तथा हि । वाद एव तत्त्वाध्यवसायसंरक्षणार्थः प्रमाणतर्कसाधनोपालम्भत्वे सिद्धान्ताविरुद्धत्वे पञ्चावयवोपपन्नत्वे च सति पक्षप्रतिपक्षपरिग्रहवत्त्वात् । यस्तु न तथा स न तथा । यथाक्रोशादिः । तथा च वादस्तस्मात्तत्त्वाध्यवसायसंरक्षणार्थ इति । न चायमसिद्धो हेतुः प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद इत्यभिधानात् । पक्षप्रतिपक्षपरिग्रहवत्त्वादित्युच्यमाने जल्पोपि तथा स्यादित्यवधारणविरोधः । तत्परिहारार्थं प्रमाणतर्कसाधनोपालम्भत्वविशेषणम् । न हि जल्पे तदस्ति यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यभिधानात् । नापि वितण्डा तथानुषज्यते जल्पस्यैव वितण्डारूपत्वात्, स प्रतिपक्षस्थापनाहीनो वितण्डेति वचनात् । स यथोक्तो जल्पः प्रतिपक्षस्थापनाहीनतया विशेषितो वितण्डात्वं प्रतिपद्यते । वैतण्डिकस्य च स्वपक्ष एव साधनवादिपक्षापेक्षया प्रतिपक्षो हस्तिप्रतिहस्तिन्यायेन । तस्मिन्प्रतिपक्षे वैतण्डिको हि न साधनं वक्ति । केवलं परपक्षनिराकरणायैव प्रवर्त्तते इति व्याख्यानात् । पक्षप्रतिपक्षौ च वस्तुधर्मावेकाधिकरणौ विरुद्धावेककालावनवसितौ । वस्तुधर्माविति वस्तुविशेषौ वस्तुनः । सामान्येनाधिगतत्वाद्विशेषतोऽनधिगतत्वाच्च विशेषावगमनिमित्तो विचारः । एकाधिकरणाविति नानाधिकरणौ विचारं न प्रयोजयत उभयोः प्रमाणोपपत्तेः । तद्यथा । अनित्या बुद्धिर्नित्य आत्मेति । अविरुद्धावप्येवं विचारं न प्रयोजयतः । तद्यथा । क्रियावद्द्रव्यं गुणवच्चेति । एककालाविति भिन्नकालयोर्विचाराप्रयोजकत्वं प्रमाणोपपत्तेः । यथा क्रियावद्द्रव्यं निष्क्रियं च कालभेदे सति । तथाऽवसितौ विचारं न प्रयोजयतो निश्चयोत्तरकालं विवादाभावादित्यनवसितौ तौ निर्दिष्टौ । एवंविशेषणौ धर्मौ पक्षप्रतिपक्षौ । तयोः परिग्रह इत्थंभावनियमः एवंधर्मायं धर्मी नैवंधर्मेति च । ततः प्रमाणतर्कसाधनोपालम्भत्वविशेषणस्य पक्षप्रतिपक्षपरिग्रहस्य जल्पवितण्डयोरसम्भवात् सिद्धं वादस्यैव तत्त्वाध्यवसायसंरक्षणार्थत्वं लाभपूजाख्यातिवत् । तत्त्वस्याध्यवसायो

---

१ हेतु ॥ २ न जल्पवितण्डे इत्यर्थ ॥ ३ एवकारेण ॥ ४ केवलम् ॥ ५ यथोक्तेन वादलक्षणेनोपपन्न । यथोक्तोपपन्नग्रहणेन प्रमाणतर्कसाधनोपालम्भमात्रमुपलक्ष्यते न समस्त वादलक्षणं सिद्धान्ताविरुद्ध पञ्चावयवोपपन्न इत्युत्तरपदद्वयस्य निग्रहस्थाननियमनिबन्धनस्यात्र सम्बन्धाऽभावात् जल्पे समस्तनिग्रहस्थानासम्भवात् ॥ ६ तत्त्वाध्यवसायसरक्षार्थत्वेन ॥ ७ प्रतिवादि ॥ ८ हस्त्येव प्रतिहस्ती हस्त्यन्तरापेक्षया । तस्य न्यायेन ॥ ९ स्वपक्षसाधनाय हेतुम् ॥ १० प्रतिवादी य कश्चन सिद्धान्तमवलम्ब्यावस्थित प्रतिपक्षभङ्गमात्रेण विजयी भवति न तु जल्पवत्स्वपक्षसाधनेनेति भाव ॥ ११ पक्षप्रतिपक्षयोर्लक्षण कृत्वा जल्पवितण्डयो पक्षप्रतिपक्षपरिग्रहत्व निराकरोति जैन ॥ १२ शब्दाद्याश्रितनित्यानित्यत्वादिलक्षणौ ॥ १३ शब्दादिलक्षणस्य ॥ १४ भवतीति शेष ॥ १५ एकाश्रयौ नित्यानित्यलक्षणौ यथा ॥ १६ प्रवर्त्तयते यत इत्यध्याहार्यम् ॥ १७ प्रति ॥ १८ वादिप्रतिवादिनौ ॥ १९ नानाधिकरणयोर्वस्तुधर्मयो ॥ २० वस्तुधर्मद्वयस्यैकाधिकरणत्वे सति विचारो भवति, न तु नानाधिकरणे सतीति भाव ॥ २१ अनित्यस्य बुद्ध्यधिकरण नित्यस्य त्वात्माधिकरणम् । अत्र यथा प्रमाणोपपत्ते- विचारो न स्यात् ॥ २२ वादिप्रतिवादिनौ ॥ २३ वादिप्रतिवादिनो ॥ २४ प्रति ॥ २५ अनित्यलक्षण ॥ २६ शब्दादि ॥ २७ नित्यलक्षण ॥ २८ प्रमाणतर्काभ्या पक्षप्रतिपक्षौ साधनोपालम्भस्वरूपौ जल्पवितण्डयोर्न भवतस्तत्र तयोर्विचारत्वात् ॥ २९ लाभपूजाख्यातयो यथा वादस्यैव ॥

हि निश्चयस्तस्य संरक्षणं न्यायवलान्निखिलवाधकनिराकरणम्[1]। न पुनस्तत्र वाधकमुद्भावयतो यथाकथञ्चिन्निर्मुखीकरणं लकुटचपेटादिभिस्तस्य[2]करणस्यापि तत्त्वाध्यवसायसंरक्षणार्थत्वानुषङ्गात्। न[3] च जल्पवितण्डाभ्यां निखिलवाधकनिराकरणं छलजात्युपक्रम[4]परतया ताभ्यां संशयस्य विपर्ययस्य वा जननात्। तत्त्वाध्यवसाये सत्यपि हि पर[5]निर्मुखीकरणे प्रवृत्तौ प्राश्निकास्तत्र संशेरते[6] विपर्ययस्यन्ति वा। किमस्य तत्त्वाध्यवसायोस्ति किं वा नास्तीति नास्त्येवेति वा? परनिर्मुखीकरणमात्रे तत्त्वाध्यवसायरहितस्यापि प्रवृत्त्युपलम्भात् तत्त्वोपप्लववादिवत्। तथा चाख्यातिरेवास्य[9] प्रेक्षावत्सु स्यादिति[10] कुतः पूजा लाभो वा? ततः[11] सिद्धश्चतुरङ्गो[12] वादः स्वाभि[13]प्रेतार्थव्यवस्थापनफलत्वाद्वादत्वाद्वा लोकप्रख्यातवादवत्। एकाङ्गस्यापि वैकल्ये प्रस्तुतार्थाऽपरिसमाप्तेः। तथा हि। अहङ्कारग्रहग्रस्तानां मर्यादातिक्रमेण प्रवर्तमानानां शक्तित्रय[14]समन्वितौदासीन्या[15]दि[16]गुणोपेतसभापतिमन्तरेण "अपक्षपतिताः प्राज्ञाः सिद्धान्तद्वय[17]वेदिनः। असद्वादनिषेद्धारः प्राश्निकाः प्रग्रहा[18] इव" इत्येवंविधप्राश्निकांश्च विना को नाम नियामकः स्यात्? प्रमाणतदाभासपरिज्ञानसामर्थ्योपेतवादिप्रतिवादिभ्यां च विना कथं वादः प्रवर्तेत[19]? नन्वास्तु चतुरङ्गता वादस्य[20]। जयेतरव्यवस्था तु च्छलजातिनिग्रहस्थानैरेव न पुनः प्रमाणतदाभासयोर्दुष्टतयोद्भावितयोः परिहृतापरिहृतदोषमात्रेणेत्यप्यपेशलं छलादीनामसदुत्तरत्वेन स्वपरपक्षयोः साधनदूषणत्वासम्भवतो जयेतरव्यवस्थानिवन्धनत्वायोगात्[21]। ततः परेषां[22] सामान्यतो विशेषतश्च च्छलादीनां लक्षणप्रणयनमयुक्तमेव। तत्र सामान्यतश्छललक्षणं "वचनविघातोऽर्थविकल्पोपपत्त्या[23] छलम्" इति। तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति। तत्र वाक्छललक्षणं तेषामविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलमिति। अस्योदाहरणम्:—आढ्यो वै वैधवेयोयं वर्तते नवकम्वल इत्युक्ते[23] प्रत्यवस्थानं[24]—कुतोस्य नवकम्वलाः? नवकम्वलशब्दे हि सामान्यवाचिन्यत्र प्रयुक्ते नवोस्य कम्वलो जीर्णो नैवेत्यभिप्रायो वक्तुः। तस्मादन्यस्यासम्भाव्यमानार्थस्य कल्पना नवास्य कम्वला नाष्टाविति। एवं प्रत्यवस्थातुरन्यायवादित्वात्पराजयः। न खलु प्रेक्षावतां तत्त्वपरीक्षायां छलेन प्रत्यवस्थानं युक्तमिति यौगा[26]स्तेप्यतत्त्वज्ञाः। यतो यद्येतावतैव[27] जिगीषुर्निगृह्येत तर्हि पत्रवाक्यमनेकार्थं व्याचक्षाणोपि निगृह्यताम्। न चैवम्। यत्र हि पक्षे वादिप्रतिवादिनोर्विप्रतिपत्त्या प्रवृत्तिस्तत्सिद्धेरेवैकस्य जयोन्यस्य पराजयः न त्वनेकार्थत्वप्रतिपादनमात्रम्। एवं चाढ्यो वै वैधवेयो नवकम्वलत्वादेवदत्तवदिति प्रयोगे यदि वक्तुर्नवः[28] कम्वलोस्येति नवास्य

१ वाधक विरुद्धप्रमाणम् ॥ २ तस्य परस्य ॥ ३ जल्पवितण्डाभ्या निखिलवाधकनिराकरण भविष्यतीत्युक्ते सत्याह ॥ ४ उपक्रम प्रस्ताव ॥५ पर प्रतिवादी ॥६ सत्याम् ॥ ७ सन्देह कुर्वन्ति ॥ ८ तत्त्वाध्यवसायाभावेन ॥ ९ प्रसिद्धि ॥ १० वादिन ॥ ११ हेतो ॥ १२ चतुरङ्गलाभावसाधनमविजिगीषुविषयत्वसाधन, तत्त्वाध्यवसायसरक्षणार्थरहितत्वसाधनमसिद्ध यत ॥ १३ सन्दिग्धानैकान्तिकलपरिहारमाह ॥ १४ प्रभूत्साहमन्त्रभेदात् ॥ १५ उदासीन पक्षपातरहित ॥ १६ आदिना पापभीरुतादिसग्रह ॥ १७ वादिप्रतिवादिनो ॥१८ शकटोपयुक्तवलीवर्दद्वन्द्वधरणराशय (वलीवर्दावरोधकरज्जव) इव ॥१९ इति चतुरङ्गत्व सिद्ध वादस्य ॥ २० इति चातुर्विध्यम् ॥ २१ छलजात्यादिवादिनाम् ॥ २२ न मुखविधानेन ॥ २३ प्रतिज्ञादिना ॥ २४ दूषणदातु प्रतिवादिन ॥ २५ गुरुशिष्याणाम् ॥ २६ ब्रुवन्ति ॥ २७ अनेकार्थप्रतिपादनमात्रेण ॥ २८ छलवादी ॥

कम्बला इति चार्थद्वयं नवकम्बल इति शब्दस्याभिप्रेतं भवति तदा कुतोऽस्य नव कम्बला इति प्रत्यवतिष्ठमानो[1] हेतोरसिद्धतामेवोद्भावयति । अन्यस्तु[2] तदुभयार्थ-समर्थनेन तदेकतरार्थसमर्थनेन वा हेतुसिद्धिं प्रदर्शयति । नवस्तावदेकः कम्बलोऽस्य प्रतीतो भवता[3], अन्येऽप्यष्टौ[4] कम्बला गृहे तिष्ठन्तीत्युभयथा नवक-म्बलत्वस्य सिद्धेर्नासिद्धतोद्भावनीया । नवकम्बलयोगित्वस्य वा हेतुत्वेनोपादानात्सिद्ध एव हेतुः । इति स्वपक्षसिद्धौ सत्यामेव वादिनो जयः परस्य च परा-जयो नान्यथा[6] । तत्र वाक्छलं युक्तम् । नापि सामान्यच्छलम् । तस्य हि लक्षणं सम्भवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलमिति । तथा हि । विद्याचरणसम्पत्तिर्ब्राह्मणे सम्भवेदित्युक्तेऽस्य वाक्यस्य विघातोऽर्थविकल्पोपपत्त्याऽसद्भूतार्थकल्पनया क्रियते । यदि ब्राह्मणे विद्याचरणसम्पत्सम्भवति व्रात्येऽपि सम्भवेद्ब्राह्मणत्वस्य तत्रापि सम्भवात् । तदिदं ब्राह्मणैरवं विवक्षितमर्थं विद्याचरणसम्पल्लक्षणं क्वचिद्ब्राह्मणे तादृश्येति[15] । क्वचित्तु व्रात्येऽत्येति[17] तदभा-वेऽपि भावात् । इत्यतिसामान्यम् । तेन योगाद्वक्तुरभिप्रेतादर्थात्सद्भूतादन्यस्यासद्भूतार्थस्य कल्पना सामान्यच्छलम् । तच्चायुक्तं हेतुदोषस्यानैकान्तिकत्वस्यात्रापरेणो-द्भावनात् । न चानैकान्तिकत्वोद्भावनमेव सामान्यच्छलमनित्यः शब्दः प्रमेयत्वाद्घटवदित्यादेरपि सामान्यच्छलत्वानुषङ्गात् । अत्रापि हि प्रमेयत्वं क्वचिद्घटा-दावनित्यत्वमेति । आकाशादौ तदभावेऽपि भावादत्येतीति । तथाप्यस्यानैकान्तिकत्वेऽपि प्रकृतेऽपि तदस्तु विशेषाभावात् । तन्न सामान्यच्छलमप्युपपन्नम् । नाप्यु-पचारच्छलम् । तस्य हि लक्षणं धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलमिति । धर्मस्य हि क्रोशनादेर्विकल्पोऽध्यारोपस्तस्य निर्देशे मञ्चाः क्रोशन्ति गायन्तीत्यादौ तात्स्थ्यात्तच्छब्दोपचारेणासद्भूतार्थस्य तु परिकल्पनं कृत्वा परेण प्रतिषेधो विधीयते, न मञ्चाः क्रोशन्ति किन्तु मञ्चस्थाः पुरुषाः क्रोशन्तीति । तच्च परस्य पराजयाय जायते यथावक्तुरभिप्रायमप्रतिषेधात् । शब्दप्रयोगो हि लोके प्रधानभावेन गुणभावेन च प्रसिद्धः । ततो यदि वक्तुर्गौणोऽर्थोऽभिप्रेतस्तदा तस्या-नुज्ञानं प्रतिषेधो वा विधातव्यः । अथ प्रधानभूतस्तदा तस्य तौविति । यदा तु वक्ता गौणमर्थमभिप्रैति प्रधानभूतं परिकल्प्य परः प्रतिषेधति तदा तेन स्वमनीषा प्रतिषिद्धा स्यान्न परस्याभिप्राय इति नास्यायमुपालम्भः स्यात् । तदनुपालम्भाच्चासौ पराजीयते इत्यप्यविचारितरमणीयं यतो यद्येतावतैवासौ निगृह्येत तर्हि

---

१ प्रतिवादी ॥ २ वादी ॥ ३ प्रतिवादिना ॥ ४ अन्येऽप्यष्टौ गृहे तिष्ठन्तीति, नवकम्बलयोगित्वस्य वा हेतुत्वेनोपादानात्सिद्ध एव हेतुरित्युभयथा नवकम्बलत्वस्य सिद्धेर्नासिद्धताद्भावनीया । इति स्वपक्षसिद्धौ सत्यामेव वादिनो जय परस्य च पराजयो नान्यथेति वाक्यरचना द्रष्टव्या ॥ ५ नवो नूतन ॥ ६ स्वपक्षसिद्ध्यभावे जयपराजयौ न भवतो वादिप्रतिवादिनोरिति ॥ ७ जायमानस्य ॥ ८ अथ विद्याचरणसम्पत्सिमान्भवति ब्राह्मणत्वात्तादृश-ब्राह्मणवदिति ॥९ वादिना ॥ १० अर्थस्य विकल्पो भेदस्तस्योपपत्त्या कृत्वा ॥ ११ तर्हि ॥ १२ भ्रष्टे ब्राह्मणे ॥ ॥ १३ कर्तृ ॥ १४ व्यक्त्यन्तरे सपक्षे ॥ १५ प्राप्नोति ॥ १६ विपक्षरूपे ॥ १७ विद्याचरणसम्पल्लक्षणमर्थं ब्राह्मणत्व अतिक्रम्यवर्तते इत्यर्थ ॥ १८ ब्राह्मणत्वस्य ॥ १९ अतिशयेन ब्राह्मणत्वम् ॥ २० अनुमाने ॥ २१ अन्यथा ॥ २२ अनुमाने ॥ २३ अतिसामान्ययोगेऽपि ॥ २४ मुख्यार्थप्रतिषेध ॥ २५ उपचार ॥ २६ प्रयोगे कृते ॥ २७ प्रतिवादिना ॥ २८ वक्तऽभिप्रायानतिक्रमेण प्रतिषेध स्यादिति भाव ॥ २९ अनुज्ञानप्रतिषेधो विधातव्यौ । इय व्यवस्था भवतु ॥ ३० सा व्यवस्थात्रापि भविष्यतीत्युक्ते सत्याह ॥ ३१ प्रतिवादिना ॥ ३२ वादिन ॥ ३३ प्रतिषिद्ध ॥ ३४ वादिन ॥ ३५ पराजय ॥ ३६ तस्य=वादिन ॥ ३७ प्रतिवादी ॥ ३८ गौणेऽर्थेऽभिप्रेते मुख्यार्थप्रतिषेधमात्रेण ॥

यौगोपि सकलशून्यवादिनं प्रति मुख्यरूपतया प्रमाणादिप्रतिषेधं कुर्वन्निगृह्येत संव्यवहारेण प्रमाणादेस्तेनाभ्युपगमात् । ततः स्वपक्षसिद्ध्यैव परस्य पराजयो न पुनश्छलमात्रेण ।

नापि जातिमात्रेण । तथा हि । तस्याः सामान्यलक्षणं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरिति । तस्याश्चानेकत्वं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य भेदात् । तथा च न्यायभाष्यकारः "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति । ताश्च खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यऽप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुपपत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा" इति सूत्रकारवचनात् । तत्र साधर्म्यसमां जातिं न्यायभाष्यकारो व्याचष्टे—साधर्म्येणोपसंहारे कृते साध्यधर्मविपर्ययोपपत्तेः साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः प्रतिषेधः । निदर्शनं—क्रियावानात्मा क्रियाहेतुगुणाश्रयत्वात् । यो यः क्रियाहेतुगुणाश्रयः स स क्रियावान् यथा लोष्टस्तथा चात्मा तस्मात्क्रियावानिति ।-साधर्म्योदाहरणेनोपसंहारे कृते परः साध्यधर्मविपर्ययोपपत्तितः साधर्म्योदाहरणेनैव प्रत्यवतिष्ठते निष्क्रिय आत्मा विभुद्रव्यत्वादाकाशवदिति । न चास्ति विशेषः क्रियावत्साधर्म्यात्क्रियावता भवितव्यं न पुनर्निष्क्रियत्वसाधर्म्यान्निष्क्रियेणेति साधर्म्यसमो दूषणाभासः । न ह्यात्मनः क्रियावत्त्वे साध्ये क्रियाहेतुगुणाश्रयत्वस्य हेतोः स्वसाध्येन व्याप्तिर्विभुत्वान्निष्क्रियत्वसिद्धौ विच्छिद्यते । न च तदविच्छेदे तद्दूषणत्वं साध्यसाधनयोर्व्याप्तिविच्छेदसमर्थस्यैव दोषत्वेनोपवर्णनात् । वार्त्तिककारस्त्वेवमाह । साधर्म्येणोपसंहारे कृते तद्विपरीतसाधर्म्येण प्रत्यवस्थानं वैधर्म्येणोपसंहारे तत्साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः । यथाऽनित्यः शब्द उत्पत्तिधर्मकत्वात्कुम्भादिवदित्युपसंहृते परः प्रत्यवतिष्ठते यद्यऽनित्यघटसाधर्म्यादयमनित्यो नित्येनाप्याकाशेनास्य साधर्म्यममूर्त्तत्वमस्तीति नित्यः प्राप्तः । तथाऽनित्यः शब्द उत्पत्तिधर्मकत्वात् । यत्पुनरनित्यं न भवति तन्नोत्पत्तिधर्मकं यथाकाशमिति प्रतिपादिते परः प्रत्यवतिष्ठते यदि नित्याकाशवैधर्म्यादनित्यः शब्दस्तदा साधर्म्यमप्यस्याकाशेनास्त्यमूर्त्तत्वम् । अतो नित्यः प्राप्तः । अथ सत्यप्येतस्मिन्साधर्म्ये नित्यो न भवति न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चाऽनित्यः शब्द इति ।

१ ननु सकलशून्यवादिनाऽमुख्यरूपतयाभ्युपगतस्य प्रमाणादेर्मुख्यरूपतयैव प्रतिषेधं विदधान कथं योगो निगृह्येतेत्याशङ्कायामाह ॥ २ उपचारेण ॥ ३ नैतावता प्रतिवादिन पराजयो यत ॥ ४ दूषणम् ॥ ५ भेदात् ॥ ६ विधिसाध्यस्य ॥ ७ कार्याणि, तै समा ॥८ जातिषु मध्ये ॥९ साध्यस्य ॥१० साधनवादिना ॥११ सक्रियत्वलक्षणान्निष्क्रियत्व यथा विपर्यय ॥१२ जातिवादिना ॥ १३ गमनादि ॥ १४ प्रयत्नोत्र गुण ॥ १५ अन्वयेन ॥१६ वादिना ॥ १७ प्रतिवादी ॥ १८ क्रियावत्साधर्म्यात्क्रियावान्भवतु निष्क्रियत्वसाधर्म्यान्निष्क्रियो न भविष्यतीत्युक्ते सत्याह ॥१९ आत्मना ॥२० निराक्रियते ॥ २१ व्याप्तिविच्छेदो मा भवतु तद्दूषणत्व च भवत्वित्युक्ते सत्याह ॥ २२ साध्यसम इति, ॥ २३ उक्तसाधर्म्यात् ॥ २४ वैधर्म्यस्य ॥ २५ वादिना ॥ २६ जातिवादी ॥ २७ प्रतिकूलतया परिवर्त्तते ॥ २८ तर्हि ॥ २९ वादिना ॥ ३० जातिवादी ॥ ३१ उक्तवैधर्म्यात् ॥ ३२ यदि ॥ ३३ आकाशेन सह शब्दस्य ॥ ३४ घटेन सह शब्दस्य साधर्म्यात् ॥ ३५ शब्दस्य ॥

वैधर्म्यसमायास्तु जातेर्वैधर्म्येणोपसंहारे कृते साध्यधर्मविपर्ययाद्वैधर्म्येण साधर्म्येण वा प्रत्यवस्थानं लक्षणम् । यथात्मा निष्क्रियो विभुत्वात् । यत्पुनः सक्रियं तन्न विभु यथा लोष्टादि । विभुश्चात्मा तस्मान्निष्क्रियः । इत्युक्ते परः प्राह—निष्क्रियत्वे सत्यात्मनः क्रियाहेतुगुणाश्रयत्वं न स्यादाकाशवत् । अस्ति चैतत् । ततो नायं निष्क्रिय इति । साधर्म्येण तु प्रत्यवस्थानं क्रियावानेवात्मा क्रियाहेतुगुणाश्रयत्वात् । य ईदृशः स ईदृशो दृष्टो यथा लोष्टादिः । तथा चात्मा । तस्मात्क्रियावानेवेति ।

उत्कर्षसमादीनां लक्षणं साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा इति । तत्रोत्कर्षसमायास्तावल्लक्षणम् । दृष्टान्तधर्मं साध्ये समासञ्जयतो मतोत्कर्षसमा जातिः । तद्यथा । क्रियावानात्मा क्रियाहेतुगुणाश्रयत्वाल्लोष्टवदित्युक्ते परः प्रत्यवतिष्ठते—यदि क्रियाहेतुगुणाश्रयो जीवो लोष्टवत्क्रियावाँस्तदा तद्वदेव स्पर्शवान्भवेत् । अथ न स्पर्शवांस्तर्हि क्रियावानपि न स्यादविशेषात् । यस्तु तत्रैव क्रियावज्जीवसाधने प्रयुक्ते साध्ये साध्यधर्मिणि धर्मस्याभावं दृष्टान्तात्समासञ्जयन्वक्ति सोऽपकर्षसमां जातिं वक्ति । यथा लोष्टः क्रियाश्रयोऽसर्वगतो दृष्टस्तद्वदात्माप्यसर्वगतोस्तु विपर्यये विशेषो वा वाच्य इति । ख्यापनीयो वर्ण्योऽख्यापनीयोऽवर्ण्यः । तेन वर्ण्येनावर्ण्येन च समा जातिः । तद्यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते—यद्यात्मा क्रियावान् वर्ण्यः साध्यस्तदा लोष्टादिरपि साध्योस्तु । अथ लोष्टादिरवर्ण्यस्तर्ह्यात्माप्यवर्ण्योस्तु विशेषाभावादिति ।

विकल्पो विशेषः । साध्यधर्मस्य विकल्पं धर्मान्तरविकल्पात्प्रसञ्जयतो विकल्पसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते—क्रियाहेतुगुणोपेतं किञ्चिद्गुरु दृश्यते, यथा लोष्टादि । किञ्चित्तु लघूपलभ्यते, यथा वायुः । तथा क्रियाहेतुगुणोपेतमपि किञ्चित्क्रियाश्रयं युज्येत, यथा लोष्टादि । किञ्चित्तु निष्क्रियं, यथात्मेति । हेत्वाद्यवयवयोगी धर्मः साध्यः । तमेव दृष्टान्ते प्रसञ्जयतः साध्यसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्राह—यदि यथा लोष्टस्तथात्मा तदा यथात्मायं तथा लोष्टः स्यात् । सक्रिय इति साध्यश्चात्मा लोष्टोपि तथा साध्योस्तु । अथ लोष्टः क्रियावान्न साध्यस्तदात्मापि क्रियावान्साध्यो मा भूद्विशेषो वा वाच्य इति । दूषणाभासता चासां सत्साधने दृष्टान्तादिसामर्थ्ययुक्ते सति साध्यदृष्टान्तयोर्धर्मविकल्पमात्रात्प्रतिषेधस्य कर्तुमशक्यत्वात् । यत्र हि लौकिकेतरयो-

---

१ वादिना ॥ २ आत्मा ॥ ३ सामान्यलक्षणम् ॥ ४ साध्य =पक्ष ॥ ५ विकल्प =समारोप ॥ ६ समारोपयत ॥ ७ क्रियाहेतुगुणाश्रयत्वस्य ॥ ८ पक्षे ॥ ९ सर्वगतत्वलक्षणस्य ॥ १० सर्वगतत्वे ॥ ११ वादिना त्वया ॥ १२ साध्यधर्मिधर्मे ॥ १३ पक्ष ॥ १४ दृष्टान्तोपि ॥ १५ पक्षोस्तु ॥ १६ क्रियाश्रयत्वस्य ॥ १७ भेदम् ॥ १८ धर्मान्तरविकल्पेन प्रत्यवस्थान विकल्पसमा जाति ॥ १९ प्रतिवादिन ॥ २० आदिना प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनानि ॥ २१ उभयोरपि दृष्टान्तसाध्ययो साध्यत्वादनेन प्रत्यवस्थान साध्यसमा जाति ॥ २२ प्राक्तन वाक्य विवृणोति ॥ २३ सक्रिय इति ॥ २४ अस्ति चेत्तर्हि ॥ २५ त्वया वादिना ॥ २६ उत्कर्षसमादिषण्णाम् ॥ २७ विकल्प आरोप ॥

र्बुद्धिसाम्यं तस्य दृष्टान्तत्वान्न साध्यत्वमिति । सम्यक्साधने प्रयुक्ते प्राप्त्या यत्प्रत्यवस्थानं सा प्राप्तिसमा जातिः । अप्राप्त्या तु प्रत्यवस्थानमप्राप्तिसमेति । तद्यथा । हेतुः साध्यं प्राप्याप्राप्य वा साधयेत् ? प्राप्य चेद्धेतुसाध्ययोः प्राप्तयोर्युगपत्सम्भवात्कथमेकस्य हेतुतान्यस्य साध्यता युज्येतेति प्रत्यवस्थानं प्राप्तिसमा जातिः । अथाऽप्राप्य हेतुः साध्यं साधयेत्तर्हि सर्वसाध्यमसौ साधयेत् । न चाप्राप्तः प्रदीपः पदार्थानां प्रकाशको दृष्ट इति प्रत्यवस्थानमप्राप्तिसमेति । ताविमौ दूषणाभासौ प्राप्तस्यापि धूमादेरग्न्यादिसाधकत्वोपलम्भात्, कृत्तिकोदयादेस्त्वप्राप्तस्य शकटोदयादौ गमकत्वप्रतीतेरिति । दृष्टान्तस्यापि साध्यविशिष्टतया प्रतिपत्तौ साधनं वक्तव्यमिति प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते क्रियाहेतुगुणयोगात्क्रियावॉल्लोष्ट इति हेतुर्नोक्तः । न च हेतुमन्तरेण साध्यसिद्धिः । अस्याश्च दूषणाभासत्वम् । यथैव हि रूपं दिदृक्षूणां प्रदीपोपादानं प्रतीयते न पुनः स्वयं प्रकाशमानं प्रदीपं दिदृक्षूणाम् । तथा साध्यस्यात्मनः क्रियावत्त्वस्य प्रसिद्ध्यर्थं लोष्टस्य दृष्टान्तस्य ग्रहणमभिप्रेतं न पुनस्तस्यैव सिद्ध्यर्थं साधनान्तरस्योपादानं वादिप्रतिवादिनोरविवादविषयस्य दृष्टान्तस्य दृष्टान्तत्वोपपत्तेस्तत्र साधनान्तरस्याफलत्वादिति । प्रतिदृष्टान्तरूपेण प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः । यथात्रैव साधने प्रयुक्ते प्रतिदृष्टान्तेन परः प्रत्यवतिष्ठते क्रियाहेतुगुणाश्रयमाकाशं निष्क्रियं दृष्टमिति । कः पुनराकाशस्य क्रियाहेतुगुणः ? संयोगो वायुना सह । कालत्रयेप्यसम्भवादाकाशे क्रियायाः, न क्रियाहेतुर्वायुना संयोग इत्यप्यसारं वायुसंयोगेन वनस्पतौ क्रियाकारणेन समानधर्मत्वादाकाशे वायुसंयोगस्य । यस्त्वसौ तत्र क्रियां न करोति तन्नाकारणत्वात्किन्तु परममहापरिमाणेन प्रतिबद्धत्वात् । अथ क्रियाकारणवायुवनस्पतिसंयोगसदृशो वाय्वाकाशसंयोगो न पुनः क्रियाकारणं, न कश्चिदप्येवं हेतुरनैकान्तिकः स्यात् । अनित्यः शब्दोऽमूर्त्तत्वात्सुखादिवदित्यत्राप्यमूर्त्तत्वं हेतुः शब्देऽन्योन्यश्चाकाशे तत्सदृश इति कथमस्याकाशेनानैकान्तिकत्वम् ? सकलानुमानोच्छेदश्चानुमानस्य सादृश्यादेव प्रवर्त्तनात् । न खलु ये धूमधर्माः क्वचिद्धूमे दृष्टास्त एवान्यत्र दृश्यन्ते तत्सदृशानामेव दर्शनात् । ततोनेनं कस्यचिद्धेतोरनैकान्तिकत्वं क्वचिदनुमानात्प्रवृत्तिं चेच्छता तद्धर्मसदृशस्तद्धर्मोनुमन्तव्य इति क्रियाकारणवायुवनस्पतिसंयोगसदृशो वाय्वाकाशसंयोगोपि क्रियाकारणमेव । तथा च प्रतिदृष्टान्तेनाकाशेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः प्रतिषेधः । स चायुक्तोस्य दूषणाभासत्वात् । तथा हि । यदि तावदयं ब्रूते यथायं त्वदीयो दृष्टान्तो लोष्टादिस्तथा मदीयोप्याकाशादिरिति तदा व्याघातः । एकस्य हि दृष्टान्तत्वेन्यस्यादृष्टान्तत्वमेव उभयोस्तु दृष्टान्तत्वविरोधः । अथैवं ब्रूते यथायं मदीयो न दृष्टान्तस्तथा त्वदीयोपीति । तथापि व्याघातः । प्रतिदृष्टान्तस्य ह्यदृ-

---

१ विशेषाभावात् ॥ २ हेतुमन्तरेण साध्यसिद्धिर्भविष्यती युक्ते सत्याह ॥ ३ कथम् ? तथा हि ॥ ४ तद्वदात्मापि निष्क्रियो भवत्विति ॥ ५ तार्णत्वादय ॥ ६ महानसादौ ॥ ७ वादिना ॥ ८ पर्वतादौ ॥ ९ जातिवादी ॥ १० दृष्टान्त ॥ ११ व्याघात भावयति ॥ १२ शब्दस्य ॥

ष्टान्तत्वे दृष्टान्तस्यादृष्टान्तत्वव्याघातः प्रतिदृष्टान्ताभावे तस्य दृष्टान्तत्वोपपत्तेः । दृष्टान्तस्य वाऽदृष्टान्तत्वे प्रतिदृष्टान्तस्यादृष्टान्तत्वव्याघातः दृष्टान्ताभावे तस्य तत्त्वोपपत्तेरिति । प्रागुत्पत्तेः कारणाभावाद्या[1] प्रत्यवस्थितिः[2] सानुत्पत्तिसमा जातिः । तद्यथा । विनश्वरः शब्दः प्रयत्नानन्तरीयकत्वात्कटकादिवदित्युक्ते परः प्राह–प्रागुत्पत्तेरनुत्पन्ने शब्दे विनश्वरत्वस्य यत्कारणं[3] प्रयत्नानन्तरीयकत्वं तन्नास्ति ततोयमविनश्वर । शाश्वतस्य च शब्दस्य न प्रयत्नानन्तरं जन्मेति । सेयमनुत्पत्त्या प्रत्यवस्था दूषणाभासो न्यायातिलङ्घनात्[4] । उत्पन्नस्यैव हि शब्दस्य धर्मिणः प्रयत्नानन्तरीयकत्वमुत्पत्तिधर्मकत्वं वा भवति नानुत्पन्नस्य । प्रागुत्पत्तेः शब्दस्याऽसत्त्वे किमाश्रयोयमुपालम्भः ? न ह्ययमनुत्पन्नोऽसन्नेव शब्द इति प्रयत्नानन्तरीयक इत्यनित्य इति वा व्यपदेष्टुं शक्यः । सत्त्वे तु सिद्धमेव प्रयत्नानन्तरीयकत्वकारणं नश्वरत्वे साध्ये । अतः कथमस्य प्रतिषेध इति ? सामान्यघटयोरैन्द्रियिकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमा जातिः । यथा-ऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते परः सद्दूषणमपश्यन् संशयेन प्रत्यवतिष्ठते प्रयत्नानन्तरीयकेपि शब्दे सामान्येन साधर्म्यमैन्द्रियिकत्वं नित्येनास्ति घटेन चानित्येनास्ति । संशयः शब्दे नित्यत्वानित्यत्वधर्मयोरिति । अस्याश्च दूषणाभासत्वं शब्दाऽनित्यत्वाऽप्रतिबन्धित्वात् । यथैव हि पुरुषे शिरःसंयमनादिना विशेषेण निश्चिते सति न स्थाणुपुरुषसाधर्म्यादूर्ध्वत्वात्संशयस्तथा प्रयत्नानन्तरीयकत्वेन विशेषेणानित्ये शब्दे निश्चिते न घटसामान्यसाधर्म्यादैन्द्रियिकत्वात्संशयो युक्त इति । उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमा जातिः । यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्यनित्यसाधर्म्यात्प्रयत्नानन्तरीयकत्वाच्छब्दस्यानित्यतां कश्चित्साधयति । अपरः पुनर्गोत्वादिना सामान्येन साधर्म्यात्तस्य नित्यताम् । इत्यतः पक्षे विपक्षे च प्रक्रिया समानेति । ईदृशं च प्रक्रियाऽनतिवृत्त्या प्रत्यवस्थानमयुक्तं विरोधात् । प्रतिपक्षप्रक्रियासिद्धौ हि प्रतिषेधो विरुध्यते । प्रतिषेधोपपत्तौ तु प्रतिपक्षप्रक्रियासिद्धिर्व्याहन्यते इति । त्रैकाल्यासिद्धेर्हेतोरहेतुसमा जातिः । यथा सत्साधने दूषणमपश्यन्परः प्राह साध्यात्पूर्वं वा साधनमुत्तरं वा सहभावि वा स्यात्? न तावत्पूर्वमसत्यर्थे तस्य साधनत्वानुपपत्तेः । नाप्युत्तरमसति साधने पूर्वं साध्यस्य साध्यस्वरूपत्वासम्भवात् । नापि सहभावि स्वतन्त्रतया प्रसिद्धयोः साध्यसाधनभावासम्भवात्सह्यविन्ध्यवत् । इत्यहेतुसमत्वेन प्रत्यवस्थानमयुक्तं हेतोः प्रत्यक्षतो धूमादेर्वन्ह्यादौ प्रसिद्धेरिति । अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्राह— यदि प्रयत्नानन्तरीयकत्वेनानित्यः शब्दो घटवत्तदार्थापत्तितो नित्याकाशसाधर्म्यान्नित्योस्तु । यथैव ह्यस्पर्शवत्त्वं खे नित्ये दृष्टं तथा शब्देपीति । अस्याश्च दूषणाभा-

---

१ कारण तात्वादि ॥ २ प्रतिकूलता ॥ ३ लिङ्गम् ॥ ४ न्यायातिलङ्घनमेव भावयति ॥ ५ भूयोदर्शनात्रिश्चितव्याप्ते साधर्म्यवैधर्म्योपाधिप्रतिकूलतर्कादिना पक्षे सन्देहोपादानं संशयसमा जाति ॥ ६ शब्दलक्षणेन ॥ ७ साधर्म्यम् ॥ ८ केशवन्वादिना ॥ ९ अनित्यनित्येन घटसामान्येन ॥ १० प्रत्यनुमानेन प्रत्यवस्थान प्रकरणसमा जाति ॥ ११ ऐन्द्रियिकत्वात् ॥ १२ प्रक्रिया अनुमानरचना ॥ १३ साध्यस्य प्रागेव सिद्धत्वात्किमनेन हेतुनेति भाव ॥ १४ अर्थापत्त्या प्रत्यवस्थानम् ॥ १५ घटसाधर्म्येण ॥

सत्वं सुखादिनानैकान्तिकत्वात् । न चानैकान्तिकाद्धेतोः प्रतिपक्षसिद्धिरिति । एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सत्त्वोपपत्तितोऽविशेषसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते प्रयत्नानन्तरीयकत्वलक्षणैकधर्मोपपत्तेर्घटशब्दयोरनित्यत्वाविशेषे सत्त्वधर्मस्याप्यखिलार्थेषूपपत्तेरनित्यत्वाविशेषः स्यात् । तस्याश्च दूषणाभासता तथा साधयितुमशक्यत्वात् । न खलु यथा प्रयत्नानन्तरीयकत्वं साधनधर्मः साध्यमनित्यत्वं शब्दे साधयति तथा सर्वार्थे सत्त्वं धर्मान्तरस्यापि नित्यत्वस्याकाशादौ सत्त्वे सत्त्युपलम्भात्, प्रयत्नानन्तरीयकत्वे च सत्यऽनित्यत्वस्यैवोपलम्भादिति । उभयकारणोपपत्तेरुपपत्तिसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्राह–यद्यनित्यत्वे कारणं प्रयत्नानन्तरीयकत्वं शब्दस्यास्तीत्यनित्योऽसौ तदा नित्यत्वेप्यस्य कारणमस्पर्शवत्त्वमस्तीति नित्योप्यस्तु । इत्युभयस्य नित्यत्वस्यानित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमो दूषणाभासः । एवं ब्रुवता स्वयमेवानित्यत्वकारणं प्रयत्नानन्तरीयकत्वं तावदभ्युपगतम् । एवं तदभ्युपगमाच्चानुपपन्नस्तत्प्रतिषेध इति । निर्दिष्टकारणाभावेप्युपलम्भादुपलब्धिसमा जातिः । यथात्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते–शाखादिभङ्गजे शब्दे प्रयत्नानन्तरीयकत्वाभावेप्यनित्यत्वमस्तीति । दूषणाभासत्वं चास्याः प्रकृतसाधनाप्रतिबन्धित्वात् । न खलु साधनमन्तरेण साध्यं न भवतीति नियमोस्ति साधनस्यैव साध्याभावेऽभावनियमव्यवस्थितेः । न चानित्यत्वे प्रयत्नानन्तरीयकत्वमेव गमकमुत्पत्तिमत्त्वादेरपि तद्गमकत्वात् । तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमा जातिः । यथाऽविद्यमानः शब्द उच्चारणात्पूर्वमनुपलब्धेरुत्पत्तेः पूर्वं घटादिवत् । न खलूच्चारणात्प्राग्विद्यमानस्य शब्दस्यानुपलब्धिस्तदावरणानुपलब्धेरुत्पत्तेः प्राग्घटादेरिव । यस्य तु दर्शनात् प्राग्विद्यमानस्यानुपलब्धिस्तस्य नावरणानुपलब्धिः । यथा भूम्याद्यावृतस्योदकादेः । आवरणानुपलब्धिश्च श्रवणात्प्राक् शब्दस्य । इत्युक्ते परः प्राह–तस्य शब्दस्यानुपलब्धेरप्यनुपलम्भादभावसिद्धौ सत्यां शब्दस्याभावविपरीतत्वेन भावस्योपपत्तेरनुपलब्धिसमा जातिः । अस्याश्च दूषणाभासत्वमनुपलब्धेरनुपलब्धिस्वभावतयोपलब्धिविषयत्वात् । यथैव ह्युपलब्धिरुपलब्धेर्विषयस्तथानुपलब्धिरपि । कथमन्यथाऽस्ति मे घटोपलब्धिः, तदनुपलब्धिस्तु नास्तीति संवेदनमुपपद्यते ? साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमा जातिः । यथाऽनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते परः प्रत्यवतिष्ठते–यदि शब्दस्य घटेन साधर्म्यं कृतकत्वादिनाऽनित्यत्वं साधयेत्तदा सर्वं वस्त्वनित्यं प्रसज्येत घटादिनाऽनित्येन सत्त्वेन

---

१ अखिलेन ॥ २ अस्पर्शवत्त्वादिति ॥ ३ परेणाङ्गीक्रियमाणे ॥ ४ यथा सर्वार्थेषु साधनधर्मः सत्त्वमनित्यत्वं न साधयति तथा प्रयत्नानन्तरीयकत्वसाधनधर्मोऽनित्यत्वं न साधयतीत्युक्ते सत्याह ॥ ५ निर्दिष्टस्य साध्यधर्मनिर्दिष्टकारणस्याभावेपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानम् ॥ ६ साध्यस्य ॥ ७ तस्य=शब्दस्य ॥ ८ सन्दिग्धानैकान्तिकत्वपरिहारमाह ॥ ९ व्यतिरेकनिदर्शनमाह ॥ १० जातिवादी ॥ ११ अनुपलब्धेरप्यभावसिद्धिः कथमित्युक्ते सत्याह ॥ १२ द्वितीयानुमानमाश्रित्य जातिं वदति ॥ १३ कुत ॥ १४ अनुपलब्धेरुपलब्धिविषयत्वं यदि न स्यात् ॥ १५ एकस्यानित्यत्वे सर्वस्यानित्यत्वापादनमनित्यसमा जाति ॥ १६ धर्मेण ॥

कृत्वा साधर्म्यमात्रस्य सर्वत्राऽविशेषात् । तस्याश्च दूषणाभासत्वं प्रतिपेधकस्याप्यसिद्धिप्रसङ्गात् । पक्षो हि प्रतिपेध्यः प्रतिपेधकस्तु प्रतिपक्षः । तयोश्च साधर्म्यं प्रतिज्ञादियोगस्तेन विना तयोरसम्भवात् । ततः प्रतिज्ञादियोगाद्यथा पक्षस्यासिद्धिस्तथा प्रतिपक्षस्यापि । अथ सत्यपि साधर्म्ये पक्षप्रतिपक्षयोः पक्षस्यैवासिद्धिर्न प्रतिपक्षस्य तर्हि घटेन साधर्म्यात्कृतकत्वाच्छब्दस्याऽनित्यतास्तु, सकलार्थानां त्वनित्यता तेन साधर्म्यमात्रान्मा भूदिति । शब्दाऽनित्यत्वोक्तौ नित्यत्वप्रत्यवस्थितिर्नित्यसमा जातिः । तद्यथा—अनित्यः शब्द इत्युक्ते परः प्रत्यवतिष्ठते शब्दाश्रयमनित्यत्वं किं नित्यमनित्यं वा ? यदि नित्यं तर्हि शब्दोपि नित्यः स्यात् । अन्यथास्य तदाधारत्वं न स्यात् । अथानित्यं तथाप्ययमेव दोषः । अनित्यत्वस्याऽनित्यत्वे हि शब्दस्य नित्यत्वमेव स्यात् । दूषणाभासत्वं चास्याः प्रकृतसाधनाऽप्रतिबन्धित्वात् । प्रादुर्भूतस्य हि पदार्थस्य प्रध्वंसोऽनित्यत्वमुच्यते । तस्य प्रतिज्ञाने प्रतिपेधविरोधः । स्वयं तदप्रतिज्ञाने च प्रतिपेधो निराश्रयः स्यात् । तन्नानित्यता शब्दे नित्यत्वप्रत्यवस्थितेर्निराकर्तुं शक्येति । प्रयत्नानेककार्यत्वात्कार्यसमा जातिः । यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते परः प्रत्यवतिष्ठते प्रयत्नानन्तरं घटादीनां प्रागऽसतामात्मलाभोपि प्रतीत आवारकापनयनात् प्राक्सतामेवाभिव्यक्तिश्च । तत्कथमतः शब्दस्यानित्यतेति ? दूषणाभासता चास्याः प्रकृतसाधनाप्रतिबन्धित्वादेव । शब्दस्य हि प्रागसतः स्वरूपलाभलक्षणं जन्मैव प्रयत्नानन्तरीयकत्वमुपपद्यते प्रागनुपलब्धिनिमित्तस्याभावेप्यनुपलब्धितः सत्त्वासम्भवादिति ।

तदेतद्यौगकल्पितं जातीनां सामान्यविशेषलक्षणप्रणयनमयुक्तमेव साधनाभासेपि साधर्म्यादिना प्रत्यवस्थानस्य जातित्वप्रसङ्गात् । तथेष्टत्वान्न दोषः । तथा हि । असाधौ साधने प्रयुक्ते यो जातीनां प्रयोगः सोनभिज्ञतया वा साधनदोषस्य स्यात् तद्दोषप्रदर्शनार्थं वा प्रसङ्गव्याजेन । इत्यप्यसमीचीनं साधनाभासप्रयोगे जातिप्रयोगस्योद्द्योतकरेण निराकरणात् । जातिवादी च साधनाभासमेतदिति प्रतिपद्यते वा न वा ? यदि प्रतिपद्यते तर्हि य एवास्य साधनाभासत्वं हेतुदोषोऽनेन प्रतिपन्नः स एव वक्तव्यो, न जातिः प्रयोजनाभावात् । प्रसङ्गव्याजेन दोषप्रदर्शनार्थं सेत्यप्ययुक्तमनर्थसंशयात् । यदि हि परप्रयुक्तायां जातौ साधनाभासवादी स्वप्रयुक्तसाधनदोषं पश्यन् सभायामेवं ब्रूयात् ' मया प्रयुक्ते साधनेऽयं दोषः स चानेन नोद्भावितः । जातिस्तु प्रयुक्ता" इति तदा तावज्जातिवादिनो न जयः प्रयोजनमुभयोरज्ञानसिद्धेः । नापि साम्यं सर्वथा जयस्यासम्भवे तस्याभिप्रेतत्वात् "ऐकान्तिकं पराजयाद्वरं सन्देह" इत्यभि-

---

१ पूर्वोक्ताया जाते ॥ २ अन्यथा ॥ ३ प्रतिपक्षस्य ॥ ४ स्वम् ॥ ५ प्रतिज्ञादियोगेन ॥ ६ पक्षस्यानित्यत्वधर्मस्य नित्यत्वापादनेन तृतीयास प्रत्यवस्थान नित्यसमा जाति ॥ ७ अङ्गीकारे ॥ ८ उत्पत्ते ॥ ९ प्रयत्नेन ॥ १० उच्चारणात् ॥ ११ शब्दस्यानुपलब्धेर्निमित्तमावारकम् ॥ १२ दूषणस्य ॥ १३ मम यौगस्य ॥ १४ पूर्वपक्षवादिना ॥ १५ जातिवादिना प्रयुक्त ॥ १६ पूर्वपक्षवादिना प्रयुक्ते ॥ १७ प्रतिवादिप्रयुक्तस्य ॥ १८ नैयायिकाचार्येण ॥ १९ वादिन- ॥ २० अनर्थं दोष ॥

धानात् । तदप्रयोगेपि चैतत्समानम् । पूर्वपक्षवादिनो हि साधनाभासाभिधाने प्रतिवादिनश्च तूष्णींभावे यत्किञ्चिदभिधाने वा द्वयोरज्ञानप्रसिद्धितः प्राश्निकैः साम्यव्यवस्थापनात् । यदा च साधनाभासवादी स्वसाधने दोषं प्रच्छाद्य परप्रयुक्तां जातिमेवोद्भावयति तदा न तद्वादिनो जयः साम्यं वा प्रयोजनं पराजयस्यैव सम्भवात् । अथ साधनाभासमेतदित्यप्रतिपद्य जातिं प्रयुङ्क्ते तथाप्यफलस्तत्प्रयोगः प्रोक्तदोषानुषङ्गात् । सम्यक्साधने तु प्रयुक्ते तत्प्रयोगः पराजयायैव । अथ तूष्णीभावे पराजयोऽवश्यंभावी । तत्प्रयोगे तु कदाचिदसदुत्तरेणापि निरुत्तरः स्यात् । इत्यैकान्तिकपराजयाद्वरं सन्देह इत्यसौ युक्त एवेति चेन्न तथाप्यैकान्तिकपराजयस्यानिवार्यत्वात् । यथैव ह्युत्तरपक्षवादिनस्तूष्णींभावे सत्युत्तराऽप्रतिपत्त्या पराजयः प्राश्निकैर्व्यवस्थाप्यते तथा जातिप्रयोगेप्युत्तराप्रतिपत्तेरविशेषात्, तत्प्रयोगस्यासदुत्तरत्वेनानुत्तरत्वात् । ननु चास्य पराजयस्तैर्व्यवस्थाप्येत यद्युत्तराभासत्वं पूर्वपक्षवाद्युद्भावयेत् । अन्यथा पर्यनुयोज्योपेक्षणात्तस्यैव पराजयः स्यात् । नन्वेवमुत्तराभासस्योत्तरपक्षवादिनोपन्यासेप्यपरस्योद्भावनशक्त्यशक्त्यपेक्षया जयपराजयव्यवस्थायामनवस्था स्यात् । न खलु जातिवादिवदस्यापि तूष्णीभावः सम्भवति सम्यगुत्तराप्रतिपत्तावप्युत्तराभासस्योपन्याससम्भवात् । ततश्चोपन्यस्तजातिस्वरूपस्यातोऽन्यस्य चोद्भावनेप्युत्तरपक्षवादिनस्तत्परिहारे शक्तिमशक्ति चापेक्ष्यैव पूर्वपक्षवादिनो जयः पराजयो वा व्यवस्थाप्येत जातिवादिन इवेतरस्योद्भावनशक्त्यशक्त्यपेक्ष इति जातिलक्षणासदुत्तरप्रयोगादेव तत्परिहाराशक्तिनिश्चयात्पुनरुपन्यासवैफल्ये सत्साधनाभिधानादेवोत्तराभासत्वोद्भावनशक्तेरर्प्यवसायादितरस्यापि कथं तद्वैफल्यं न स्यात्? सत्साधनाभिधानात्तदभिधानसामर्थ्यमेवास्यावसीयते न परोपन्यस्तजात्युद्भावनसामर्थ्यं तर्हि जातिप्रयोगेप्युत्तराभासवादिनः सम्यगुत्तराभिधानासामर्थ्यमेवावसीयेत न परोद्भावितजातिपरिहारासामर्थ्यम् । ननु सदुत्तराभिधानासामर्थ्यादेव तत्परिहारासामर्थ्यनिश्चयः । तत्सद्भावे हि न सदुत्तराभिधानासामर्थ्यं स्यात् । एवं तर्हि सत्साधनाभिधानसामर्थ्यादेवास्य परोपन्यस्तजात्युद्भावनशक्त्यवसायोऽस्तु तदभावे तदभिधानसामर्थ्यायोगात् । सत्साधनाभिधानसमर्थस्यापि कदाचिदऽसदुत्तरेण व्यामोहसम्भवान्न तदुद्भावनसामर्थ्यमवश्यंभावीति चेत्तर्हि जातिवादिनः सदुत्तराभिधानासमर्थस्यापि स्वोपन्यस्तपरोद्भावितोत्तराभासपरिहारसामर्थ्यसम्भवात्पुनरुपन्यासश्चतुर्थोऽपेक्षणीयः स्यात् । साधनवादिनोपि तत्परिहारनिराकरणाय पञ्चमः । पुनर्जातिवादिनस्तन्निराकरणयोग्यतावबोधार्थं षष्ठ इत्यनवस्थानं स्यात् । ननु नायं दोषः पर्यनुयोज्योपेक्षणस्य प्रतिवादिनाऽनुद्भावनात् । कस्य पराजय इत्यनुयुक्ताः प्राश्निका एव हि पूर्वपक्षवादिनः पर्यनुयोज्योपेक्षणमुद्भावय-

---

१ पराजयायैव न जयायेति ॥ २ वादिना ॥ ३ प्रतिवादिन ॥ ४ जातिवादिन ॥ ५ त्वया जातिः प्रयुक्तेति वचनीय तस्योपेक्षणात् ॥ ६ तस्य उद्भावितस्य ॥ ७ उपन्यासो हि जाते ॥ ८ निश्चयात् ॥ ९ तस्य=जात्युद्भावनस्य ॥ १० प्राश्निकानाम् ॥ ११ आद्यपक्षवादिन ॥ १२ ततश्च तृतीया जातिरुद्भावनीयेत्यर्थं ॥ १३ पृष्टा ॥

न्ति । न खलु निग्रहप्राप्तो जातिवादी[1] स्वं कौपीनं[2] विवृणुयात्। तर्हि जात्यादिप्रयोगमपि ते[3] एवोद्भावयन्तु न पुनः पूर्वपक्षवादी, पर्यनुयोज्योपेक्षणं ते पूर्वपक्षवादिन एवोद्भावयन्ति न जात्यादिवादिनो जात्यादिप्रयोगमिति[4] महामाध्यस्थ्यं[5] तेषां[6] येनैकस्य[7] दोषमुद्भावयन्ति नापरस्येति । ततः[8] पूर्वपक्षवादिनं तूष्णींभावादिकमारचयन्तमुत्तराप्रतिपत्तिमुद्भावयन्नेव जातिवादी निगृह्णातीत्यभ्युपगन्तव्यम् । तत्रापि[10] कथम्भूतेनोत्तराप्रतिपत्त्युद्भावनेनामौ[11] विजयते[12]? किं स्वोपन्यस्तजात्यपरिज्ञानोद्भावनरूपेण[12] परोद्भावितजात्यन्तरनिराकरणलक्षणेन[13][14] चोत्तराप्रतिपत्तिमात्रोद्भावनाऽऽकारेण वा? तत्राद्यविकल्पे[15]ऽपकर्षसमाऽन्या[16] वा जातिर्मया प्रयुक्तापि न ज्ञातानेनेत्येवं[17] स्वोपन्यस्तजात्यपरिज्ञानमुद्भावयन्नात्मनः[18] सम्यगुत्तराप्रतिपत्तिमसम्बद्धाभिधायित्वं परकीयसाधनसम्यक्त्वं चोद्भावयतीति जात्युपन्यासवैयर्थ्यमवश्यम्भावित्वात्पराजयस्य । परेणाविज्ञातमात्मनो[19] दोषं स्वयमुद्भावयन्नपि न पराजयमास्कन्दतीति चेत्परेणाविज्ञातः स दोष इति कुतोऽवसितम्? तूष्णीभावादन्यस्य चोद्भावनादिति चेन्न वादविस्तरपरिहारार्थत्वात्तस्य[20] । स्ववाग्यन्त्रिता हि वादिनो न विचलिष्यन्तीति स्वयमुद्भावनीयं[21] दोषं परेणोद्भावयितुं तूष्णीभावोऽन्यस्य चोद्भावनं नाज्ञानात्। स्वयमुद्भाविते[22] हि दोषे जात्यादिवादी तत्परिहारार्थं किञ्चिदन्यद्ब्रूयादिति न वादावसानं स्यात्। परस्याऽज्ञानमाहात्म्यख्यापनार्थं[23] वा, पश्यतैवंविधस्याज्ञानमाहात्म्यं[24] येन स्वयमेव स्वदोषकलापमस्तसाधनस्य सम्यक्त्वं चोद्भावयतीति । एवंसाध्येन[25] पूर्वपक्षवादिना प्रत्यवस्थिते[26] किमत्र जातिवादी ब्रूयात्?—"जातिर्मया प्रयुक्तापि न ज्ञातानेनेति वचनादुत्तरकालमनेनावसितो[27] दोषकलापो, न प्राक् । अतोऽज्ञानेनैव प्रतिवादिना तूष्णीभूतमन्यद्वोद्भावितम्" इति । अत्रापि शपथः शरणम् । ननु यदि नाम जानतैव[28] पूर्वपक्षवादिना तूष्णीभूतमन्यद्वोद्भावितं तथापि तेन सदुत्तरानभिधानात्कथं नास्य पराजयः स्यात्? तदेतज्जातिवादिनो जात्युपन्यासेपि समानं जातीनां दूषणाभासत्वात्। तस्मान्न स्वोपन्यस्तजात्यपरिज्ञानोद्भावनरूपेणोत्तराऽप्रतिपत्त्युद्भावनेन तूष्णीभूतमन्यद्वोद्भावयन्तमितरं निगृह्णाति[29] । द्वितीयविकल्पे स्वोपन्यस्ता जातिः कथं परोद्भावितजात्यन्तररूपा न भवतीति वादिनेतरः प्रतिपाद्यते, न तावत्स्वोपन्यस्तजातिस्वरूपानुवादेन यथा नेयमुत्कर्षसमा जातिरपकर्षसमत्वादस्या इति—प्रथमपक्षोदितदोषप्रसङ्गात्[31] । नाप्यनुप-

---

१ जातिवाद्यह जातिमुक्तवान् त्वया वादिना न सम्भावितेति न प्रतिपादयतीति भाव ॥ २ गुह्येन्द्रियम् ॥ ३ प्राश्निका ॥ ४ नोद्भावयन्तीति सवन्ध ॥ ५ उपहासवचनमिदम् ॥ ६ प्राश्निकानाम् ॥ ७ प्राश्निकाना माध्यस्थ्याभावो यत ॥ ८ जानन् ॥ ९ परेण ॥ १० पक्षे ॥ ११ वादिनम् ॥ १२ पूर्वपक्षवादिन ॥ १३ पर =वादी ॥ १४ जात्यन्तर=जातिविशेष ॥ १५ त्रिषु विकल्पेषु मध्ये ॥ १६ उत्कर्षसमा वा जाति ॥ १७ पूर्वपक्षवादिना ॥ १८ जातिवादी ॥ १९ वादिना ॥ २० तूष्णीभावादे ॥ २१ प्रतिवादिना ॥ २२ वादिना जात्युद्भावनेपि वादावसान न भविष्यति ततश्च तूष्णींभावोऽन्योद्भावन च वादावसानाय व्यर्थमित्युक्ते सत्याह ॥ २३ प्रयोजनान्तर तूष्णींभावादेराह ॥ २४ निरीक्षध्व यूय सभ्या ॥ २५ वस ॥ २६ पर्यनुयुक्ते सति ॥ २७ सकाशात् ॥ २८ पूर्वपक्षवादिना ॥ २९ दोषम् ॥ ३० पूर्वपक्षवादी ॥ ३१ दोष =उत्तराप्रतिपत्ति ॥

लम्भादनुपलम्भमात्रस्याप्रमाणत्वात्, अनुपलम्भविशेषस्यापि स्वोपन्यस्तजातिस्वरूपोपलम्भलक्षणत्वात, तत्र चोक्तदोषप्रसङ्गात् । तन्न जातिवादी जात्यन्तरमुद्भावयन्तं प्रतिवादिनं तदुद्भावितजात्यन्तरनिराकरणलक्षणेनोत्तराप्रतिपत्त्युद्भावनेन विजयते । नाप्युत्तराप्रतिपत्तिमात्रोद्भावनरूपेण । त्वया न ज्ञातमुत्तरमित्युत्तराप्रतिपत्तिमात्रोद्भावने हि पूर्वपक्षवादिनस्तद्विशेषविषयः प्रश्नोऽवश्यंभावी "मया तावदुत्तरमुपन्यस्तमेतच्च कथमनुत्तरम्" इति । जातिवादिना[1] चास्योत्तराप्रतिपत्तिर्विशेषेणोद्भावनीया "मयोपन्यस्ताप्येषा जातिस्त्वया न ज्ञाता जात्यन्तरं चोद्भावितम्" इति । अत्र च प्रागुक्ताशेषदोषानुषङ्गः[2] । तदेवमुत्तराऽप्रतिपत्त्युद्भावनत्रयेपि जातिवादिनः पराजयस्यैकान्तिकत्वादैकान्तिकपराजयाद्वरं सन्देह इति जानन्नपि जात्यादिकं प्रयुङ्क्ते इत्येतद्वचो नैयायिकस्यानैयायिकतामाविर्भावयेत् । ततः स्वपक्षसिद्ध्यैव जयस्तदसिद्ध्या तु पराजयो, न तु मिथ्योत्तरलक्षणजातिशतैरपीति ।

नापि[3] निग्रहस्थानैः । तेषां हि विप्रतिपत्तिरप्रतिपत्तिश्च[4] निग्रहस्थानमिति सामान्यलक्षणम् । विपरीता कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः,–पक्षमभ्युपगम्य तस्याऽस्थापना, परेण स्थापितस्य वाऽप्रतिषेधः, प्रतिषिद्धस्य चाऽनुद्धार इति । प्रतिज्ञाहान्यादिव्यक्तिगतं तु विशेषलक्षणम् । तत्र प्रतिज्ञाहानेस्तावल्लक्षणं प्रतिदृष्टान्तधर्म्य(र्मा)नुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः । साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थितः प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । यथाऽनित्यः शब्द ऐन्द्रियिकत्वाद् घटवदित्युक्ते परः प्रत्यवतिष्ठते–सामान्यमैन्द्रियिकं नित्यं दृष्टम् । कस्मान्न तथा शब्दोपि ? इत्येवं स्वप्रयुक्तस्य हेतोराभासतामवस्यन्नपि कथावसानमकृत्वा प्रतिज्ञात्यागं करोति । यद्यैन्द्रियिकं सामान्यं नित्यं कामं घटोपि नित्योऽस्त्विति । न खल्वयं ससाधनस्य दृष्टान्तस्य नित्यत्वं प्रसजन्निगमनान्तमेव पक्षं जहाति । पक्षं च परित्यजन्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्य । इति भाष्यकारमतमसङ्गतमेव साक्षाद्दृष्टान्तहानिरूपत्वात्तस्यास्तत्रैव साध्यधर्मपरित्यागात् । परम्परया तु हेतूपनयनिगमनानां त्यागो दृष्टान्तासाधुत्वे तेषामप्यसाधुत्वात् । तथा च प्रतिज्ञाहानिरेवेत्यसङ्गतम् । वार्त्तिककारस्त्वेवमाचष्टे दृष्टश्चासावन्ते स्थितश्चेति दृष्टान्तः पक्षः, स्वपक्षः–प्रतिदृष्टान्तः प्रतिपक्षः । प्रतिपक्षस्य धर्मं स्वपक्षेभ्यनुजानन् प्रतिज्ञां जहाति । यदि सामान्यमैन्द्रियिक नित्यं शब्दोप्येवमस्त्विति । तदेतदप्युद्द्योतकरस्य जाड्यमाविष्करोति इत्थमेव प्रतिज्ञाहाने-

१ जातिवादी ॥ २ प्रागुक्त =उत्तराप्रतिपत्तिलक्षणादि ॥ ३ पराजयो न भवतीति ॥ ४ तत्त्वप्रतिपत्तेरभावो विप्रतिपत्ति ॥ ५ कथम् ? तथा हि ॥ ६ वादिपक्षस्य ॥ ७ अपरिहार ॥ ८ उक्ते हेतौ दूषणोद्भावने सति पक्षाभ्युपम प्रतिज्ञा ॥ ९ अभ्युपगम ॥ १० धर्मधर्मिसमुदाय प्रतिज्ञा तस्या हानि ॥ ११ प्रतिवादिना पर्यनुयुक्तो वादी ॥ १२ परकीयोदाहरणधर्मम् ॥ १३ वादिन ॥ १४ इन्द्रियग्राह्यत्वात् ॥ १५ वादिना ॥ १६ प्रतिवादी ॥ १७ जानन् ॥ १८ कथा वाद ॥ १९ साधनवादी ॥ २० वादी ॥ २१ अभ्युपगच्छन् ॥ २२ घटादिदृष्टान्त ॥ २३ प्रतिज्ञाहाने ॥ २४ शब्दानित्यत्व साध्यधर्म ॥ २५ विचारान्ते ॥ २६ नित्यत्वलक्षणम् ॥ २७ अनित्ये ॥ २८ वादी ॥ २९ ऐन्द्रियिकत्वाविशेषात् ॥ ३० प्रतिपक्षस्य स्वपक्षेऽभ्युपगमनेनैव ॥

रवधारयितुमशक्यत्वात् । प्रतिपक्षसिद्धिमन्तरेण च कस्यचिन्निग्रहाधिकरणत्वायोगात् । न खलु प्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानत एव प्रतिज्ञात्यागो येनायं[2]मेक एव प्रकारः प्रतिज्ञाहानौ स्यात् । [3]अधिक्षेपादिभिराकुलीभावात् प्रकृत्या सभाभीरुत्वादऽन्यमनस्कत्वादेर्वा निमित्तात्किञ्चित्साध्यत्वेन प्रतिज्ञाय तद्वि-परीतं प्रतिजानतोप्युपलम्भात् पुरुषभ्रान्तेरनेककारणत्वोपपत्तेरिति । तथा प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरं प्रतिज्ञातार्थस्याऽनित्यः शब्द इत्यादेरैन्द्रियिकत्वाख्यस्य हेतोर्व्यभिचारोपदर्शनेन प्रतिषेधे कृते तं दोषमनुद्धरन् धर्मविकल्पं करोति किमयं शब्दोऽसर्वगतो घटवत् किं वा सर्वगतः सामान्यवदिति । यद्यसर्वगतो घटवत्तर्हि तद्वदेवानित्योस्त्वित्येतत्प्रतिज्ञान्तरं नाम निग्रहस्थानं सामर्थ्याऽपरिज्ञानात् । स हि पूर्वस्या अनित्यः शब्द इति प्रतिज्ञायाः साधनायोत्तरामसर्वगतः शब्दोऽनित्य इति प्रतिज्ञामाह । न च प्रतिज्ञा प्रतिज्ञान्तरसाधने समर्थाऽतिप्रसङ्गात् । इत्यप्येतेनैव प्रत्युक्तं प्रतिज्ञाहानिवत्तस्याप्यनेकनिमित्तत्वोपपत्तेः । प्रतिज्ञाहानितश्चास्य कथं भेदः? पक्षत्यागस्योभयत्राऽविशेषात् । यथैव हि प्रतिदृष्टान्तधर्मस्य स्वदृष्टान्तेऽभ्यनुज्ञाना-त्पक्षत्यागस्तथा प्रतिज्ञान्तरादपि । यथा च स्वपक्षसिद्ध्यर्थं प्रतिज्ञान्तरं विधीयते तथा शब्दाऽनित्यत्वसिद्ध्यर्थं भ्रान्तिवशात्तद्वच्छब्दोपि नित्योस्त्वित्य-भ्यनुज्ञानम् । यथा चाभ्रान्तस्येदं विरुद्ध्यते तथा प्रतिज्ञान्तरमपि । निमित्तभेदाच्च तद्भेदेऽनिष्टनिग्रहस्थानान्तराणामप्यनुषङ्गः स्यात् । तेषां तत्रान्तर्भावे वा प्रतिज्ञान्तरस्यापि प्रतिज्ञाहानावन्तर्भावः स्यादिति । प्रतिज्ञाहेत्वोर्विरोधः-।-प्रतिज्ञाविरोधो|यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्यो भेदेनानुपलब्धेः । इत्यप्यसुन्दरं यतो हेतुना प्रतिज्ञायाः प्रतिज्ञात्वे निरस्ते प्रकारान्तरतः प्रतिज्ञाहानिरेवेयमुक्ता स्याद्धेतुदोषो वात्र विरुद्धतालक्षणः, न प्रतिज्ञादोष इति । पक्षप्रतिषेधे प्रति-ज्ञातार्थापनयनं प्रतिज्ञासंन्यासः । यथाऽनित्यः शब्द ऐन्द्रियिकत्वाद् घटवदित्युक्ते पूर्ववत्सामान्येनानैकान्तिकत्वे हेतोरुद्भाविते प्रतिज्ञासंन्यासं करोतिः—क एवमाह? नित्यः शब्द इत्यपि प्रतिज्ञाहानितो न भिद्येत हेतोरनैकान्तिकत्वोपलम्भेनात्रापि प्रतिज्ञायाः परित्यागाविशेषादिति । अविशेषोक्ते हेतौ प्रतिषिद्धे विशे-षमिच्छतो हेत्वन्तरम् । निदर्शनम्—एकप्रकृतीदं व्यक्तं विकाराणां परिमाणान्मृत्पूर्वकघटशरावोदञ्चनादिवत् । इत्यस्य व्यभिचारेण प्रत्यवस्थानं नाना-प्रकृतीनामेकप्रकृतीनां च दृष्टं परिमाणमित्यस्य हेतोरहेतुत्वं निश्चित्यैकप्रकृतिसमन्वये विकाराणां परिमाणादित्याह । तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं

---

१ वादिन प्रतिवादिनो वा ॥ २ प्रतिदृष्टान्तधर्मस्य स्वपक्षेभ्युपगम ॥ ३ अधिक्षेपस्तिरस्कार ॥ ४ सामान्येन ॥ ५ भेदम् ॥ ६ वादी ॥ ७ वादिन ॥ ८ ननु प्रतिज्ञान्तरात्पक्षत्यागस्तस्य स्वपक्षसिद्ध्यर्थं विधी-यमानत्वादित्युक्ते सत्याह ॥ ९ प्रतिज्ञाहानादौ ॥ १० यत्र प्रतिज्ञा विरुध्यते हेतुना हेतुर्वा प्रतिज्ञया विरुध्यते स प्रतिज्ञाविरोध ॥ ११ उक्तहेतो दूषणोद्भावने स्वसाध्यपरित्याग प्रतिज्ञासन्न्यास ॥ १२ वादिना ॥ १३ त्यागम् ॥ १४ अविशेषोक्ते हेतौ व्यभिचारेण प्रतिषिद्धे पश्चाद्विशेषणोपादान हेत्वन्तरम् ॥ १५ प्रतिवादिना ॥ १६ प्रधानम् ॥ १७ महदादिकार्यम् ॥ १८ वस्तुभेदानाम् ॥ १९ वादिनोक्तानुमानस्य ॥ २० घटमुकुटपट-लकुटशकटादीनाम् ॥ २१ एककारणानुस्यूतत्वे सतीत्यर्थ ॥ २२ वादी ॥

ब्रुवतो हेत्वन्तरं नाम निग्रहस्थानम् । इत्यप्यसुन्दरमेवं सत्यविशेषोक्के दृष्टान्तोपनयनिगमने प्रतिषिद्धे विशषमिच्छेतो दृष्टान्ताद्यन्तरमपि निग्रहस्थानान्तरम-
नुपज्येत तत्राक्षेपसमाधानानां समानत्वादिति । प्रकृतादर्थादप्रतिसम्बन्धार्थमर्थान्तरम् । यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां प्रकृतं
हेतुं प्रमाणसामर्थ्येनाहमसमर्थः समर्थयितुमित्यवस्यन्नपि कथामपरित्यजन्नर्थान्तरमुपन्यस्यति–नित्यः शब्दोऽस्पर्शवत्त्वादिति हेतुः । हेतुश्च हिनोतेर्धातो-
स्तुप्रत्यये कृदन्तं पदं च नामाख्यातोपसर्गनिपाता इति प्रस्तुत्य नामादीनि व्याचष्टे । तदेतदप्यर्थान्तरं निग्रहस्थानं समर्थे साधने दूषणे
वा प्रोक्ते निग्रहाय कल्प्येताऽसमर्थे वा ? न तावत्समर्थे स्वसाध्यं प्रसाध्य नृत्यतोपि दोषाभावाल्लोकवत् । असमर्थेपि प्रतिवादिनः पक्षसिद्धौ तन्नि-
ग्रहाय स्यादसिद्धौ वा ? प्रथमपक्षे तत्पक्षसिद्ध्यैवास्य निग्रहो न त्वतो निग्रहस्थानात् । द्वितीयपक्षेप्यतो न निग्रहः पक्षसिद्धेरुभयोरप्यभावा-
दिति । वर्णक्रमनिर्देशवन्निरर्थकम् । यथाऽनित्यः शब्दो जवगडदश्त्वात् । झभघढधष्वत् । इत्यपि सर्वथार्थशून्यत्वान्निग्रहाय कल्प्येत साध्यानुपयो-
गाद्वा ? तत्राद्यविकल्पोऽयुक्तः सर्वथार्थशून्यस्य शब्दस्यैवासम्भवात् । वर्णक्रमनिर्देशस्याप्यनुकार्येणार्थेनार्थवत्त्वोपपत्तेः । द्वितीयविकल्पे तु सर्व-
मेव निग्रहस्थानं निरर्थकं स्यात्साध्यसिद्धावनुपयोगित्वाविशेषात् । केनचिद्विशेषमात्रेण भेदे वा खात्कृताकम्पहस्तास्फालनकक्षापिट्टिकादेरपि
साध्यसिद्ध्यनुपयोगिनो निग्रहस्थानान्तरत्वानुषङ्ग इति । परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् । अत्रेदमुच्यते—वादिना त्रि-
रभिहितमपि वाक्यं परिषत्प्रतिवादिभ्यां मन्दमतित्वादविज्ञातं गूढाभिधानतो वा द्रुतोच्चाराद्वा ? प्रथमपक्षे सत्साधनवादिनोप्येतन्निग्रहस्थानं स्यात् ।
तत्राप्यनयोर्मन्दमतित्वेनाविज्ञातत्वसम्भवात् । द्वितीयपक्षे तु पत्रवाक्यप्रयोगेपि तत्प्रसङ्गो गूढाभिधानतया परिषत्प्रतिवादिनोर्महाप्राज्ञयोरप्यविज्ञातत्वोपलम्भात् ।
अथाभ्यामविज्ञातमप्येतद्वादी व्याचष्टे । गूढोपन्यासमप्यात्मनः स एव व्याचष्टाम् । अव्याख्याने तु जयाभाव एवास्य, न पुनर्निग्रहः परस्य पक्षसिद्धे-
रभावात् । द्रुतोच्चारेप्यनयोः कथञ्चित् ज्ञानं सम्भवत्येव सिद्धान्तद्वयवेदित्वात् । साध्यानुपयोगिनि तु वादिनः प्रलापमात्रे तयोरज्ञानं नाविज्ञातार्थं वर्ण-
क्रमनिर्देशवत् । ततो नेदमभिज्ञातार्थं निरर्थकाद्भिद्यते इति । पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् । यथा दश दाडिमानि षडपूपाः कुण्डमजाऽजिनं पलल-
पिण्ड इत्यपि निरर्थकान्न भिद्यते । यथैव हि जवगडदश्त्वादौ वर्णानां नैरर्थक्यं तथात्र पदानामिति । यदि पुनः पदनैरर्थक्यं वर्णनैरर्थक्यादन्यत्वान्निग्रहस्थानान्तर-
मभ्युपगम्यते तर्हि वाक्यनैरर्थक्यस्याप्याभ्यामन्यत्वान्निग्रहस्थानान्तरत्वं स्यात् पदवत् पौर्वापर्येणाप्रयुज्यमानानां वाक्यानामप्यनेकधोपलम्भात् ।

१ दृष्टान्ताद्यन्तर निग्रहस्थान न स्याद्वेद्वेलन्तरमपि निग्रहस्थान मा भूदिति ॥ २ प्रकृतप्रमेयानुपयोगिवचनमर्थान्तर नाम निग्रहस्थानम् ॥ ३ वस्तुधर्मानेकाधिकरणावित्यादि ॥ ४ अस्पर्शवत्त्वादिति ॥ ५ वादी ॥ ६ वादम् ॥
७ प्रकृतार्थं परित्यज्यान्यमर्थं ब्रूते इत्यर्थः ॥ ८ तस्य वादिन ॥ ९ वादिप्रतिवादिनो ॥ १० अर्थरहितशब्दोच्चारण निरर्थक नाम निग्रहस्थानम् ॥ ११ पश्चात्क्रियमाणेन ॥ १२ निरर्थकत्वान्निग्रहस्थानानाम् ॥ १३ वादिना ॥
१४ वादिना त्रिरुपन्यस्तमपि परिषत्प्रतिवादिभ्यामविज्ञातमविज्ञातार्थं नाम निग्रहस्थानं वादिन । प्रतिवादिनोप्येवम् ॥ १५ तात्पर्यम् ॥ १६ पूर्वापराऽसङ्गतपदकदम्बकोच्चारणादप्रतिष्ठितवाक्यार्थमपार्थक नाम निग्रहस्थानम् ॥

"शङ्ख' कदल्यां कदली च भेर्यां तस्या च भेर्यां सुमहद्विमानम् । तच्छङ्खभेरीकदलीविमानमुन्मत्तगङ्गप्रतिमं बभूव" इत्यादिवत् । यदि पुनः पदनैरर्थक्यमेव वाक्यनैरर्थक्यं पदसमुदायात्मकत्वात्तस्य तर्हि वर्णनैरर्थक्यमेव पदनैरर्थक्यं स्याद्वर्णसमुदायात्मकत्वात्तस्य । वर्णानां सर्वत्र निरर्थकत्वात्पदस्यापि तत्प्रसङ्गश्चेत्तर्हि पदस्यापि निरर्थकत्वात्तत्समुदायात्मनो वाक्यस्यापि नैरर्थक्यानुषङ्गः । पदार्थापेक्षया पदस्यार्थवत्त्वे वर्णार्थापेक्षया वर्णस्यापि तदस्तु प्रकृतिप्रत्ययादिवर्णवत् । न[3] खलु प्रकृतिः केवला पदं प्रत्ययो वा । नाप्यनयोरनर्थकत्वम् । अभिव्यक्तार्थाभावादनर्थकत्वे पदस्यापि तत्स्यात् । यथैव हि प्रकृत्यर्थः प्रत्ययेनाभिव्यज्यते प्रत्ययार्थश्च प्रकृत्या तयोः केवलयोरप्रयोगात् तथा देवदत्तस्तिष्ठतीत्यादिप्रयोगे सुबन्तपदार्थस्य तिङन्तपदेन तिङन्तपदार्थस्य च सुबन्तपदेनाभिव्यक्तेः केवलस्याप्रयोगः । पदान्तरापेक्षस्य पदस्य सार्थकत्वं प्रकृत्यपेक्षस्य प्रत्ययस्य तदपेक्षस्य च प्रकृत्यादिवर्णस्य समानमिति । अवयवविपर्यासवचनमप्राप्तकालम् । अवयवानां प्रतिज्ञादीनां विपर्यासेनाभिधानमप्राप्तकालं नाम निग्रहस्थानम् । इत्यप्यपेशलं प्रेक्षावतां प्रतिपत्तॄणामवयवक्रमनियमं विनाप्यर्थप्रतिपत्त्युपलम्भाद्देवदत्तादिवाक्यवत् । ननु यथापशब्दाच्छ्रुताच्छब्दस्मरणं[11] ततोऽर्थप्रत्यय इति शब्दादेवार्थप्रत्ययः परम्परया तथा प्रतिज्ञाद्यवयवव्युत्क्रमात्[12] तत्क्रमस्मरणं ततो[13] वाक्यार्थप्रत्ययो न तद्व्युत्क्रमात्, इत्यप्यसारमेवंविधप्रतीत्यभावात् । यस्माद्धि शब्दादुच्चरितादन्वयार्थे प्रतीतिः स एव तस्य वाचको नान्यः । अन्यथा शब्दात्तत्क्रमाच्चापशब्दे तद्व्युत्क्रमे च स्मरणं ततोऽर्थप्रतीतिरित्यपि वक्तुं शक्येत । एवं शब्दाद्यन्वाख्यानवैयर्थ्यं चेन्नैवं वादिनोऽनिष्टमात्रापादनात्, अपशब्देपि चान्वाख्यानस्योपलम्भात् । [16]संस्कृताच्छब्दात्सत्याद्धर्मोऽन्यस्मादधर्म इति नियमे चान्यधर्माधर्मोपायानुष्ठानवैयर्थ्यम् । धर्माधर्मयोश्चाप्रतिनियमप्रसङ्गोऽधार्मिके धार्मिके च तच्छब्दोपलम्भात् । भवतु वा तत्क्रमादर्थप्रतीतिः । तथाप्यर्थप्रत्ययः क्रमेण स्थितो येन वाक्येन व्युत्क्रम्यते तन्निरर्थकं, न त्वप्राप्तकालमिति । शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । तत्रार्थपुनरुक्तमेवोपपन्नं न शब्दपुनरुक्तमर्थभेदे शब्दसाम्येप्यस्याऽसम्भवात् "हसति[19] हसति स्वामिन्युच्चैरुदत्यतिरोदिति कृतपरिकरं स्वेदोद्गारि प्रधावति धावति । गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति धनलवैः[22] परिक्रीतं यैत्रं[23] प्रनृत्यति नृत्यति" इत्यादिवत् । ततः[24] स्वेष्टार्थवाचकैः[25] तैरेवान्यैर्वा शब्दैः सत्याः प्रतिपादनीयाः । तत्प्रतिपादकशब्दानां तु सकृत्पुनः[26]

---

१ उन्मत्ता गङ्गा यस्मिन्प्रदेशेऽसावुन्मत्तगङ्गं ॥ २ वाक्ये पदे च ॥ ३ प्रकृत्यादावपि पदानामेवार्थवत्त्वं न पुनर्वर्णानां येन दृष्टान्तः सिद्धः स्यादित्युक्ते सत्याह ॥ ४ वर्णस्य ॥ ५ पदस्य ॥ ६ सार्थकत्वम् ॥ ७ यथाक्रमोल्लङ्घनेन प्रयुज्यमानमनुमानवाक्यम् ॥ ८ अप्राप्तावसरम् ॥ ९ देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादिवत् ॥ १० सत्य शब्दस्य ॥ ११ स्मृतशब्दात् ॥ १२ विपर्ययात् ॥ १३ स्मृतक्रमात् ॥ १४ स्मृतापशब्दात्स्मृततत्क्रमात् ॥ १५ शब्दादेरपशब्दादिस्मरणप्रकारेण ॥ १६ पुनः पुनः कथनमन्वाख्यानम् ॥ १७ स कृताच्छब्दाद्धर्मोऽन्यस्मादधर्म इति नियमात् अपशब्देऽन्वाख्यापनमस्तीत्युक्ते सत्याह ॥ १८ इज्याऽध्ययनादिरन्य ॥ १९ सति ॥ २० क्रियाविशेषणम् ॥ २१ क्रियाविशेषणम् ॥ २२ मौल्येन सङ्गृहीतम् ॥ २३ यत्रमित्र यत्र=भृत्य ॥ २४ शब्दपौनरुक्त्यमुपपन्नं न भवेयत ॥ २५ प्रथमोच्चारिते ॥ २६ कथनानन्तरमेकवारम् ॥

पुनर्वाभिधानं निरर्थकं, न तु पुनरुक्तम्। यद्यप्यर्थादापन्नस्य[1] स्वशब्देन पुनर्वचनं पुनरुक्तमुक्तम्। यथोत्पत्तिधर्मकमनित्यमित्युक्त्वाऽर्थादापन्नस्यार्थस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयान्नित्यमनुत्पत्तिधर्मकमिति । तदपि प्रतिपन्नार्थप्रतिपादकत्वेन वैयर्थ्यान्निग्रहस्थानं, नान्यथा। तथा चेदं निरर्थकान्न विशिष्येतेति। विज्ञातस्य परिषदा त्रिरभिहितस्याऽप्रत्युच्चारणमननुभाषणम्। अप्रत्युच्चारयन्किमाश्रयं परपक्षप्रतिषेधं ब्रूयादित्यत्रापि किं सर्वस्य वादिनोक्तस्याननुभाषणं किं वा यन्नान्तरीयिका साध्यसिद्धिस्तस्येति? तत्राद्यः पक्षोऽयुक्तः परोक्तमशेषमप्रत्युच्चारयतोपि दूषणवचनाऽव्याघातात्। यथा सर्वमनित्यं सत्त्वादित्युक्ते सत्त्वादित्ययं हेतुर्विरुद्ध इति हेतुमेवोच्चार्य विरुद्धतोद्भाव्यते—"क्षणक्षयाद्येकान्ते सर्वथार्थक्रियाविरोधात्सत्त्वानुपपत्तेः" इति। समर्थ्यते च तावता च परोक्तहेतोर्दूषणात्किमन्योच्चारणेन? अतो यन्नान्तरीयिका साध्यसिद्धिस्तस्यैवाऽप्रत्युच्चारणमननुभाषणं प्रतिपत्तव्यम् । अथैवं दूषयितुमसमर्थः शास्त्रार्थपरिज्ञानविशेषविकलत्वात्तदाऽयमुत्तराऽप्रतिपत्तेरेव तिरस्क्रियते न पुनरननुभाषणादिति । अविज्ञातं चाज्ञानम्। विज्ञातार्थस्य परिषदा प्रतिवादिना यदविज्ञातं तदज्ञानं नाम निग्रहस्थानम्। अजानन् कस्य प्रतिषेधं ब्रूयात्? इत्यप्यसारं प्रतिज्ञाहान्यादिनिग्रहस्थानानां भेदाभावानुषङ्गात्, तत्राप्यज्ञानस्यैव सम्भवात्। तेषां तत्प्रभेदत्वे वा निग्रहस्थानप्रतिनियमाभावप्रसङ्गः परोक्तस्यार्द्धाज्ञानादिभेदेन निग्रहस्थानानेकत्वसम्भवात्। उत्तरस्याप्रतिपत्तिरप्रतिभासाप्यज्ञानान्न भिद्यत एव। निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । पर्यनुयोज्यो हि निग्रहोपपत्त्या चोदनीयस्तस्योपेक्षणं निग्रहं प्राप्तोसीत्यननुयोग एव । एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयम्। न खलु निग्रहप्राप्तः स्वं कौपीनं विवृणुयादित्यप्यज्ञानान्न व्यतिरिच्यत एव । अनिग्रहस्थाने निग्रहस्थानानुयोगो निरनुयोज्यानुयोगः। तस्याप्यज्ञानात्पृथग्भावोनुपपन्न एव। कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः। सिसाधयिषितस्यार्थस्याऽशक्यसाध्यतामवसीय कालयापनार्थं यत्कर्तव्यं व्यासज्य कथां विच्छिनत्तीदं मे करणीयं परिहीयते। तस्मिन्नवसिते पश्चात्कथयिष्यामि। इत्यप्यज्ञानतो नार्थान्तरमिति प्रतिपत्तव्यम्। स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा। यः परेण चोदितं दोषमनुद्धृत्य ब्रवीति भवत्पक्षेप्ययं दोषः समान इति स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसजन् परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यते । इत्यप्यज्ञानान्न भिद्यते एव। अनैकान्तिकता चात्र हेतोः । तथा हि । तस्करोयं पुरुषत्वात्प्रसिद्धत-

---

१ अर्थस्य ॥ २ पुनरुक्तत्वप्रकारेण ॥ ३ वादिना ॥ ४ प्रतिवादिना ॥ ५ प्रतिवाद्युक्तस्य ॥ ६ प्रतिवादिना ॥ ७ अन्यत् धर्मिसाध्यादि ॥ ८ सर्वस्य वादिनोक्तस्याननुभाषण न घटते यत ॥ ९ परेण ॥ १० हेतूच्चारण कृत्वा ॥ ११ प्रतिवादी ॥ १२ प्रतिवादी ॥ १३ परिषदा विज्ञातस्यापि वादिवाक्यस्य प्रतिवादिना यदविज्ञात तदज्ञान नाम ॥ १४ प्रतिवादी ॥ १५ आदिना अर्द्धार्द्धादिग्रह ॥ १६ प्राप्तदोषानुद्भावन पर्यनुयोज्योपेक्षण नाम निग्रहस्थानम् ॥ १७ प्रतिवादिन ॥ १८ इद ते निग्रहस्थानमायातमतो निग्रहीतोसीति वचनीय ॥ १९ पृष्टया ॥ २० ॥ गुह्यम् ॥ २१ दोषरहिते दोषोद्भावन निरनुयोज्यानुयोगो नाम निग्रहस्थानम् ॥ २२ ज्ञात्वा ॥ २३ स्वपक्षोक्तदोषमपरिहृत्य परपक्षेपि दूषणमुद्भावयतो मतानुज्ञा नाम निग्रहस्थानम् ॥ २४ वादी ॥ २५ प्रतिवादिना ॥ २६ स्वपक्षे ॥ २७ सम्मन्वयन् ॥

स्करवदित्युक्ते त्वमपि तस्करः स्यादि(इ)ति हेतोरनैकान्तिकत्वमेवोक्तं स्यात्। स[1] चात्मीयहेतोरात्मनैवाऽनैकान्तिकत्वं[2] दृष्ट्वा प्राह—भवत्पक्षेप्ययं दोषः समानः। त्वमपि पुरुषोसीत्यनैकान्तिकत्वमेवोद्भावयतीति। हीनमन्यतमेनाप्यवयवेन न्यूनम्। यस्मिन्वाक्ये[3] प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं हीनं नाम निग्रहस्थानं साधनाभावे साध्यसिद्धेरभावात्, प्रतिज्ञादीना च पञ्चानामपि साधनत्वात्। इत्यप्यसमीचीनं पञ्चावयवप्रयोगमन्तरेणापि साध्यसिद्धेः प्रतिपादितत्वात्, पक्षहेतुवचनमन्तरेणैव तत्सिद्धेरभावात्। अतस्तद्धीनमेव न्यूनं निग्रहस्थानमिति। हेतूदाहरणाधिकमधिकम्। यस्मिन्वाक्ये द्वौ हेतू द्वौ वा दृष्टान्तौ तदधिकं निग्रहस्थानमित्यपि वार्त्त तथाविधाद्वाक्यात्पक्षप्रसिद्धौ पराजयायोगात्। कथं चैवं[4] प्रमाणसंप्लवोभ्युपगम्यते[5]? अभ्युपगमे वाधिकत्वान्निग्रहाय जायेत। प्रतिपत्तिदार्ढ्यसंवादसिद्धिप्रयोजनसद्भावान्न निग्रह इत्यन्यत्रापि समानम्। हेतुना दृष्टान्तेन वैकेन प्रसाधितेप्यर्थे द्वितीयस्य हेतोर्दृष्टान्तस्य वा नानर्थक्यं तत्प्रयोजनसद्भावात्। न चैवमनवस्था कस्यचित्क्वचिन्निराकांक्षतोपपत्तेः प्रमाणान्तरवत्। कथं चास्य[8] कृतकत्वादौ[9] स्वार्थिकप्रत्ययवचनं, यत्कृतकं तदनित्यमिति व्याप्तौ[10] यत्तद्वचनं, वृत्तिपद[11]प्रयोगादेव चार्थप्रतिपत्तौ वाक्यप्रयोगोधिकत्वान्निग्रहस्थानं न स्यात्[12]? तथाविधस्याप्यस्य[13] प्रतिपत्तिविशेषोपायत्वात्तन्नेति चेत्कथमनेकस्य हेतोर्दृष्टान्तस्य वा तदुपायभूतस्य वचनं निग्रहाधिकरणम्? [14]निरर्थकस्य तु वचनं निरर्थकत्वादेव निग्रहस्थानं नाधिकत्वादिति।

[15]सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः प्रतिज्ञातार्थपरित्यागान्निग्रहस्थानम्। यथा नित्यानऽभ्युपेत्य शब्दादीन् पुनरनित्यान् ब्रूते इत्यपि प्रतिवादिनः प्रतिपक्षसाधने सत्येव निग्रहस्थानं, नान्यथा[16]। हेत्वाभासाश्च यथोक्ता असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमा निग्रहस्थानमित्यत्रापि विरुद्धहेतूद्भावने प्रतिपक्षसिद्धेर्निग्रहाधिकरणत्वं युक्तम्। असिद्धाद्युद्भावने तु प्रतिवादिना प्रतिपक्षसाधने कृते तद्युक्तं, नान्यथेति। एतेना[17]साधनाङ्गवचनादि[18] निग्रहस्थानं प्रत्युक्तमेकस्य स्वपक्षसिद्ध्यैवान्यस्य निग्रहप्रसिद्धेः। ततः स्थितमेतत् "स्वपक्षसिद्धेरेकस्य निग्रहोन्यस्य वादिनः। नासाधनाङ्गवचनमदोपोद्भावनं द्वयोः[19]" इति। इदं चानवस्थितम् 'असाधनाङ्गवचनमदोपोद्भावनं[20] द्वयोर्निग्रहस्थानमन्यत्तु[21] न युक्तमिति नेष्यते' इति। अत्र हि स्वपक्षं साधयन्वादिप्रतिवादिनोरन्यतरोऽसाधनाङ्गवचनादऽदोपोद्भावनाद्वा परं निगृह्णात्यसाधयन्वा? प्रथमपक्षे स्वपक्षसिद्ध्यैवास्य पराजयादन्योद्भावनं[22][23] व्यर्थम्। द्वितीयपक्षे त्वसाधनाङ्गवचनाद्यु-

---

१ वादी ॥ २ स्वयम् ॥ ३ अनुमानस्य ॥ ४ अधिकस्य निग्रहस्थानत्वप्रकारेण ॥ ५ एकस्मिन्प्रमाणविषये प्रमाणान्तरवर्तन प्रमाणसप्लव ॥ ६ परेण ॥ ७ हेतुदृष्टान्तान्तराक्षेपणप्रकारेण ॥ ८ अनुमाने ॥ ९ अधिकनिग्रहस्थानवादिन ॥ १० साधने ॥ ११ समासोत्र वृत्ति ॥ १२ स्यादेव ॥ १३ अधिकत्वान्निग्रहस्थानत्व क कारयेत्तद्वचनस्य ॥ १४ निरर्थकत्वान्निग्रहस्थान भविष्यतीत्युक्ते सत्याह ॥ १५ स्वीकृतागमविरुद्धप्रसाधनमपसिद्धान्तो नाम निग्रहस्थानम् ॥ १६ प्रतिपक्षसिद्ध्यभावे ॥ १७ सौगतमतमेतत् ॥ १८ आदिना अदोपोद्भावनादि ॥ १९ वादिप्रतिवादिनो ॥ २० एतदीय व्याख्यानमस्त्यग्रे ॥ २१ असाधनाङ्गवचन वादिन एव निग्रहस्थानमदोपोद्भावन तु प्रतिवादिन एवेति द्वयोरिति पदमुक्तम् ॥ २२ हेतो ॥ २३ अन्यस्य दोषस्य ॥

द्भावनेपि न कस्यचिज्जयः पक्षसिद्धेरुभयोरभावात् । यच्चास्य व्याख्यानं—साधनं सिद्धिस्तदङ्गं त्रिरूपं लिङ्गं तस्याऽवचनं तूष्णीभावो यत्किञ्चिद्भाषणं वा साधनस्य वा त्रिरूपलिङ्गस्याङ्गं समर्थनं विपक्षे बाधकप्रमाणदर्शनरूपं तस्याऽवचनं वादिनो निग्रहस्थानमिति, तत्पञ्चावयवप्रयोगवादिनोपि समानम् । शक्यं हि तेनाप्येवं वक्तुं सिद्ध्यङ्गस्य पञ्चावयवप्रयोगस्यावचनात्सौगतस्य वादिनो निग्रहः । ननु चास्य तदवचनेपि न निग्रहः प्रतिज्ञानिगमनयोः पक्षधर्मोपसंहारस्य सामर्थ्याद्गम्यमानत्वात् । गम्यमानयोश्च वचने पुनरुक्तत्वानुषङ्गात् । ननु तत्प्रयोगेपि हेतुप्रयोगमन्तरेण साध्यार्थाप्रसिद्धिरित्यप्ययेशलं पक्षधर्मोपसंहारस्याप्येवमवचनानुषङ्गात् । अथ सामर्थ्याद्गम्यमानस्यापि यत्सत्तत्सर्वं क्षणिकं यथा घटः संश्च शब्द इति पक्षधर्मोपसंहारस्य वचनं हेतोरपक्षधर्मत्वेनासिद्धत्वव्यवच्छेदार्थं तर्हि साध्याधारसन्देहापनोदार्थं गम्यमानस्यापि पक्षस्य निगमनस्य च पक्षहेतूदाहरणोपनयानामेकार्थत्वप्रदर्शनार्थं वचनं किन्न स्यात् ? न हि पक्षादीनामेकार्थत्वोपदर्शनमन्तरेण सङ्गतत्वं घटते भिन्नविषयपक्षादिवत् । ननु प्रतिज्ञातः साध्यसिद्धौ हेत्वादिवचनमनर्थकमेव स्याद्, अन्यथा नास्याः साधनाङ्गतेति चेत्तर्हि भवतोपि हेतुतः साध्यसिद्धौ दृष्टान्तोनर्थकः स्यात्, अन्यथा नास्य साधनाङ्गतेति समानम् । ननु साध्यसाधनयोर्व्याप्तिप्रदर्शनार्थत्वाद् दृष्टान्तो नानर्थकस्तत्र तदप्रदर्शने हेतोरगमकत्वादित्यप्यसङ्गतं सर्वानित्यत्वसाधने सत्त्वादेर्दृष्टान्ताऽसम्भवतोऽगमकत्वानुषङ्गात् । विपक्षव्यावृत्त्या सत्त्वादेर्गमकत्वे वा सर्वत्रापि हेतौ तथैव गमकत्वप्रसङ्गाद् दृष्टान्तोनर्थक एव स्यात् । विपक्षव्यावृत्त्या च हेतुं समर्थयन् कथं प्रतिज्ञां प्रतिक्षिपेत् ? तस्याश्चानभिधाने क्व हेतुः साध्यं वा वर्त्तेत ? गम्यमाने प्रतिज्ञाविषये एवेति चेत्तर्हि गम्यमानस्यैव हेतोरपि समर्थनं स्यान्न तूक्तस्य । अथ गम्यमानस्यापि हेतोर्मन्दमतिप्रतिपत्त्यर्थं वचनं तथा प्रतिज्ञावचने कोऽपरितोषः ? यच्चेदमसाधनाङ्गमित्यस्य व्याख्यान्तरं साधर्म्येण हेतोर्वचने वैधर्म्यवचनं वैधर्म्येण वा प्रयोगे साधर्म्यवचनं गम्यमानत्वात् पुनरुक्तम् । अतो न साधनाङ्गमित्यप्यसाम्प्रतं यतः सम्यक्साधनसामर्थ्येन स्वपक्षं साधयतो वादिनो निग्रहः स्यादप्रसाधयतो वा ? प्रथमपक्षे कथं साध्यसिद्ध्यऽप्रतिबन्धिवचनाधिक्योपलम्भमात्रेणास्य निग्रहो विरोधात् । नन्वेवं नाटकादिघोषणातोप्यस्य निग्रहो न स्यात् । सत्यमेवैतत् । स्वसाध्यं प्रसाध्य नृत्यतोपि दोषाभावाल्लोकवत् । अन्यथा ताम्बूलभक्षणभ्रूक्षेपखात्कृताकम्पहस्तास्फालनादिभ्योपि सत्यसाधनवादिनो निग्रहः स्यात् । अथ स्वपक्षमप्रसाधयतोस्य निग्रहः । नन्वत्रापि किं प्रतिवादिना स्वपक्षे साधिते वादिनो वचनाधिक्योपलम्भान्निग्रहो लक्ष्येतासाधिते वा ? प्रथमविकल्पे स्वपक्षसिद्ध्यैवास्य

---

१ व्याख्यानम् ॥ २ योगस्य ॥ ३ सौगतमतमालम्ब्याचार्येणोच्यते ॥ ४ प्रतिज्ञानिगमनप्रकारेण ॥ ५ व्यतिरेकेण ॥ ६ योगस्य ॥ ७ हेतुत साध्यसिद्धिर्न भवतीति चेत् ॥ ८ साध्यस्याऽज्ञापको भवति हेतुरिति भाव ॥ ९ विपक्षोत्र नित्य ॥ १० सौगत ॥ ११ प्रतिपादनम् ॥ १२ हेतोर्वचने ॥ १३ प्रतिपादनम् ॥ १४ स-यक्साध्यसिद्धिश्चेन्निग्रह कथ, निग्रहश्चेत्सा कथमिति विरोध ॥ १५ साध्यसिद्ध्यप्रतिबन्धिवचनाधिक्यमात्रतोपि न निग्रह इति प्रकारेण ॥

निग्रहाद्वचनाधिक्योद्भावनमनर्थकं तस्मिन् सत्यपि स्वपक्षसिद्धिमन्तरेण जयायोगात्। द्वितीयपक्षे तु युगपद्वादिप्रतिवादिनोः पराजयप्रसङ्गो जयप्रसङ्गो वा स्यात्स्वपक्षसिद्धेरभावाविशेषात्। ननु न स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ जयपराजयौ तयोर्ज्ञानाज्ञाननिबन्धनत्वात्। साधनवादिना हि साधु साधनं ज्ञात्वा वक्तव्यं दूषणवादिना च तद्दूषणम्। तत्र साधर्म्यवचनाद्वैधर्म्यवचनाद्वाऽर्थस्य प्रतिपत्तौ तदुभयवचने वादिनः प्रतिवादिना सभायामसाधनाङ्गवचनस्योद्भावनात् साधुसाधनाभिधानाज्ञानसिद्धेः पराजयः प्रतिवादिनस्तु तद्दूषणज्ञाननिर्णयाज्जयः स्यात्। इत्यप्यविचारितरमणीयं विकल्पानुपपत्तेः। स हि प्रतिवादी निर्दोषसाधनवादिनो वचनाधिक्यमुद्भावयेत्साधनाभासवादिनो वा? तत्राद्यविकल्पे वादिनः कथं साधुसाधनाभिधानाऽज्ञानं तद्वचनेयत्ताज्ञानस्यैवासम्भवात्। द्वितीयविकल्पे तु न प्रतिवादिनो दूषणज्ञानमवतिष्ठते साधनाभासस्यानुद्भावनात्। तद्वचनाधिक्यदोषस्य ज्ञानाद्दूषणज्ञोसाविति चेत्साधनाभासाज्ञानाददूषणज्ञोपीति नैकान्ततो वादिनं जयेत्तददोषोद्भावनलक्षणस्य पराजयस्यापि निवारयितुमशक्तेः। अथ वचनाधिक्यदोषोद्भावनादेव प्रतिवादिनो जयसिद्धौ साधनाभासोद्भावनमनर्थकम्। नन्वेवं साधनाभासानुद्भावनात्तस्य पराजयसिद्धौ वचनाधिक्योद्भावनं कथं जयाय प्रकल्प्येत? अथ वचनाधिक्यं साधनाभासं चोद्भावयतः प्रतिवादिनो जयः। कथमेवं साधर्म्यवचने वैधर्म्यवचनं तद्वचने वा साधर्म्यवचनं पराजयाय प्रभवेत्? कथं चैवं वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहवैयर्थ्यं न स्यात्? क्वचिदेकत्रापि पक्षे साधनसामर्थ्यज्ञानाज्ञानयोः सम्भवात्। न खलु शब्दादौ नित्यत्वस्यानित्यत्वस्य वा परीक्षायामेकस्य साधनसामर्थ्ये ज्ञानमन्यस्य चाज्ञानं जयस्य पराजयस्य वा निबन्धनं न सम्भवति। युगपत्साधनसामर्थ्यस्य ज्ञानेन वादिप्रतिवादिनोः कस्य जयः पराजयो वा स्यात्तदविशेषात्। न कस्यचिदिति चेत्तर्हि साधनवादिनो वचनाधिक्यकारिणः साधनसामर्थ्याऽज्ञानसिद्धेः प्रतिवादिनश्च वचनाधिक्यदोषोद्भावनात्तद्दोषमात्रे ज्ञानसिद्धेर्न कस्यचिज्जयः पराजयो वा स्यात्। न हि यो यद्दोषं वेत्ति स तद्गुणमपि कुतश्चिन्मारणशक्तिवेदनेपि विषद्रव्यस्य कुष्ठापनयनशक्तौ संवेदनानुदयात्। तन्न तत्सामर्थ्यज्ञानाज्ञाननिबन्धनौ जयपराजयौ शक्यव्यवस्थौ यथोक्तदोषानुषङ्गात्। स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ तु तौ निरवद्यौ पक्षप्रतिपक्षपरिग्रहवैयर्थ्याभावात्। कस्यचित्कुतश्चित्स्वपक्षसिद्धौ सुनिश्चितायां परस्य तत्सिद्ध्यभावतः सकृज्जयपराजयाप्रसङ्गात्। यच्चेदमदोषोद्भावनमित्यस्य व्याख्यानं प्रसज्यप्रतिषेधे दोषोद्भावनाऽभावमात्रमदोषोद्भावनं पर्युदासे तु दोषाभासानामन्यदोषाणां चोद्भावनं प्रतिवादिनो निग्रहस्थानमिति, तद्वादिना दोषवति साधने प्रयुक्ते सत्यनुमतमेव यदि वादी स्वपक्षं साधयेन्नान्यथा। वचनाधिक्यं तु दोषः प्रागेव प्रतिविहितः। यथैव हि पञ्चावयवप्रयोगे वचनाधिक्यं निग्रहस्थानं तथा त्र्यवयव-

१ साधनदूषण ज्ञात्वा वक्तव्यम् ॥ २ साध्यलक्षणस्य ॥ ३ एतावत्परिमाणेन साधुसाधन वाच्यमिति ज्ञानस्य ॥ ॥ ४ सर्वथा ॥ ५ ततश्च जयायैवोभयवचनम् ॥ ६ वादिन ॥ ७ प्रतिवादिन ॥ ८ अत्यन्ताभावमात्रम् ॥ ९ प्रतिवादिना ॥ १० वचनाधिक्यदोषनिराकरणसमये ॥ ११ यौगस्य ॥

प्रयोगे न्यूनतापि स्याद्विशेषाभावात्। प्रतिज्ञादीनि हि पञ्चाप्यनुमानाङ्गं "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा" इत्यभिधानात्। तेषां मध्येऽन्यतमस्याप्यनभिधाने न्यूनताख्यो दोषोनुपज्यत एव हीनमन्यतमेनापि न्यूनमिति वचनात्। ततो जयेतरव्यवस्थायाः प्रमाणतदाभासेत्यादितो नान्यनिबन्धनं व्यवतिष्ठते इत्येतच्छलादौ तन्निबन्धनत्वेनाग्रहग्रहं परित्यज्य विचारकभावमादायाऽमलमनसि प्रामाणिकाः स्वयमेव सम्प्रधारयन्तु। कृतमतिप्रसङ्गेन। साभासं गदितं प्रमाणमखिलं संख्याफलस्वार्थतः, सुव्यक्तैः सकलार्थसार्थविषयैः स्वल्पैः प्रसन्नैः पदैः। येनासौ निखिलप्रबोधजननो जीयाद्गुणाम्भोनिधिर्वाकीर्त्त्योः परमालयोऽत्र सततं माणिक्यनन्दिप्रभुः॥

इति श्रीप्रभाचन्द्रविरचिते प्रमेयकमलमार्तण्डे परीक्षामुखालङ्कारे पञ्चमः परिच्छेदः समाप्तः॥

१ सौगतस्य ॥ २ निग्रहस्थानम् ॥



अथ

## षष्ठः परिच्छेदः

प्राचां वाचाममृततटिनीपूरकर्पूरकल्पान्, वन्धानन्दा नवकुकवयो नूतनीकुर्वते ये ।
तेऽयस्काराः सुभटमुकुटोत्पाटिपाण्डित्यभाजं भित्त्वा खड्गं विदधति नवं पश्य कुण्ठं कुठारम् ॥

ननूक्तं प्रमाणेतरयोर्लक्षणमक्षूणं नयेतरयोस्तु लक्षणं नोक्तम् । तच्चावश्यं वक्तव्यम् । तदवचने विनेयानां नाऽविकला व्युत्पत्तिः स्यात् । इत्याशङ्कमानं प्रत्याह सम्भवदन्यद्विचारणीयमिति । सम्भवद्विद्यमानं कथितात्प्रमाणतदाभासलक्षणादन्यन्नयनयाभासयोर्लक्षणं विचारणीयं नयनिष्ठैर्दिग्मात्रप्रदर्शनपरत्वादस्य प्रयासस्येति । तल्लक्षणं च सामान्यतो विशेषतश्च सम्भवतीति तथैव तद्व्युत्पाद्यते । तत्राऽनिराकृतप्रतिपक्षो वस्त्वंशग्राही ज्ञातुरभिप्रायो नयः । निराकृतप्रतिपक्षस्तु नयाभासः । इत्यनयोः सामान्यलक्षणम् । स च द्वेधा द्रव्यार्थिकपर्यायार्थिकविकल्पात् । द्रव्यमेवार्थो विषयो यस्यास्ति स द्रव्यार्थिकः । पर्याय एवार्थो यस्यास्त्यसौ पर्यायार्थिकः । इति नयविशेषलक्षणम् । तत्राद्यो नैगमसङ्ग्रहव्यवहारविकल्पात् त्रिविधः । द्वितीयस्तु ऋजुसूत्रशब्दसमभिरूढैवंभूतविकल्पाच्चतुर्विधः ।

तत्रानिष्पन्नार्थसङ्कल्पमात्रग्राही नैगमः । निगमो हि सङ्कल्पस्तत्र भवस्तत्प्रयोजनो वा नैगमः । यथा कश्चित्पुरुषो गृहीतकुठारो गच्छन् किमर्थं भवान्गच्छतीति पृष्टः सन्नाह प्रस्थमानेतुमिति । एधोदकाद्याहरणे वा व्याप्रियमाणः किं करोति भवानिति पृष्टः प्राह ओदनं पचामीति । न चासौ प्रस्थपर्याय ओदनपर्यायो वा निष्पन्नस्तन्निष्पत्तये सङ्कल्पमात्रे प्रस्थादिव्यवहारात् । यद्वा नैकङ्गमो नैगमो धर्मधर्मिणोर्गुणप्रधानभावेन विषयीकरणात् । जीवगुणः सुखमित्यत्र हि जीवस्याप्राधान्यं विशेषणत्वात् सुखस्य तु प्राधान्यं विशेष्यत्वात् । सुखी जीव इत्यादौ तु जीवस्य प्राधान्यं न सुखादेर्विपर्ययात् । न चास्यैवं प्रमाणात्मकत्वानुषङ्गो धर्मधर्मिणोः प्राधान्येनात्र ज्ञप्तेरसम्भवात् । तयोरन्यतर एव हि नैगमनयेन प्रधानतयानुभूयते । प्राधान्येन द्रव्यपर्यायद्वयात्मकं चार्थमनुभवद्विज्ञानं प्रमाणं प्रतिपत्तव्यं नान्यदिति । सर्वथानयोरर्थान्तरत्वाभिसन्धिस्तु नैगमाभासो धर्मधर्मिणोः सर्वथार्थान्तरत्वे धर्मिणि धर्माणां वृत्तिविरोधस्य प्रतिपादितत्वादिति ।

---

१ कल्प सदृश ॥ २ 'वन्धान्' इति विशेष्यपदमध्याहार्यम् ॥ ३ परीक्षामुखस्य ॥ ४ प्रकरणस्य ॥ ५ विकलादेशविशेषमाश्रित्य प्रवृत्तो ज्ञातुरभिप्रायो ( ज्ञानस्वरूप ) नय ॥ ६ मामान्यलक्षणलक्षितो नय ॥ ७ द्रवति द्रोष्यत्यऽदुद्रुवच्चेति द्रव्य जीवादि ॥ ८ जीवस्य यथा नरनारकादि सुखदु ग्वादिर्वा ॥ ९ प्रस्थो मानविशेष ॥ १० एध =काष्टम् । दकमुदकम् ॥ ११ अन्योन्यगुणप्रधानभूतभेदाभेदप्ररूपणो नेगम ॥ १२ गोणमुख्यरूपेण ॥ १३ धर्मो धर्मी वा ॥ १४ अभिप्राय ॥ १५ भिन्नत्वे ॥

स्वजा[1]त्यविरोधेनैकध्यमुपनीयार्थानाक्रान्त[3]भेदान्[4] समस्तग्रहणात्संग्रहः । स च परोऽपरश्च । तत्र परः सकलभावानां[5] सदात्मनैकत्वमभि[6]प्रैति । सर्वमेकं सद्[7]-विशेषादित्युक्ते हि सदिति[8]वाग्विज्ञानानुवृत्तिलिङ्गा[9]नुमितसत्तात्मकत्वेनैकत्वमशेषार्थानां संगृह्यते । निराकृताऽशेषविशेषस्तु सत्ताऽद्वैताभिप्राय[10]स्तदाभासो[11] दृष्टेष्ट[12]-बाधनात् । तथाऽपरः संग्रहो द्रव्यत्वेनाशेषद्रव्याणामेकत्वमभिप्रैति । द्रव्यमित्युक्ते ह्यतीतानागतवर्तमानकालवर्त्तिविवक्षिताविवक्षितपर्याय[13]द्रवणशीलानां जीवा-जीवतद्भेदप्रभेदानामेकत्वेन संग्रहः[14] । तथा घट इत्युक्ते निखिलघटव्यक्तीनां घटत्वेनैकत्वसंग्रहः । सामान्यविशेषाणां सर्वथार्थान्तरत्वा[15]भिप्रायो[16]ऽनर्थान्तरत्वाभि-प्रायो[17] वाऽपरसङ्ग्रहाभासः प्रतीतिविरोधादिति ।

सङ्ग्रहगृहीतार्थानां विधिपूर्वकमवहरणं विभजनं भेदेन प्ररूपणं व्यवहारः । परसंग्रहेण हि सद्धर्माधारतया सर्वमेकत्वेन सदिति संगृहीतम् । व्यवहारस्तु तद्विभागमभिप्रैति । यत्सत्तद्द्रव्यं पर्यायो वा । तथैवापरः सङ्ग्रहः सर्वद्रव्याणि द्रव्यमिति सर्वपर्यायांश्च पर्याय इति संगृह्णाति । व्यवहारस्तु तद्विभागमभिप्रैति । यद्द्रव्यं तज्जीवादि [18]षड्विधम् । यः पर्यायः स द्विविधः सहभावी[19] क्रमभावी[20] च । इत्यपरसङ्ग्रहव्यवहारप्रपञ्चः प्रागृजुसूत्रात्परसङ्ग्रहादुत्तरः प्रतिपत्तव्यः सर्वस्य वस्तुनः कथञ्चित्सामान्यविशेषात्मकत्वसम्भवात् । न चास्यैवं[21] नैगमत्वानुषङ्गः सङ्ग्रहविषयप्रविभागपरत्वात् । नैगमस्य[22] तु गुणप्रधानभूतोभयविषयत्वात् । यः पुनः कल्प-नारोपितद्रव्यपर्यायप्रविभागमभिप्रैति स व्यवहाराभासः प्रमाणबाधितत्वात् । न हि कल्पनारोपित एव द्रव्यादिप्रविभागः स्वार्थक्रियाहेतुत्वाभावप्रसङ्गाद्ग-गनाम्भोजवत् । व्यवहारस्य चाऽसत्यत्वे तदानुकूल्येन प्रमाणानां प्रमाणता न स्यात् । अन्यथा स्वप्नादिविभ्रमानुकूल्येनापि तेषां तत्प्रसङ्गः । उक्तं च "व्यवहारा-नुकूल्यात्तु प्रमाणानां प्रमाणता । नान्यथा[23] बाध्यमानानां ज्ञानानां तत्प्रसङ्गतः" इति ।

ऋजु प्राञ्जलं[24] वर्तमानक्षणमात्रं सूत्रयतीत्यृजु[25]सूत्रः[26], सुखक्षणः[27] सम्प्रत्यस्तीत्यादि–द्रव्यस्य[28] सतोप्यनर्पणादतीतानागतक्षणयोश्च विनष्टानुत्पन्नत्वेनासम्भवात्[29] । न चैवं[30] लोकव्यवहारविलोपप्रसङ्गो नयस्याऽस्यैवं विषयमात्रप्ररूपणात् । लोकव्यवहारस्तु सकलनयसमूहसाध्य इति । यस्तु बहिरन्तर्वा द्रव्यं सर्वथा

१ स्वस्यार्थस्य जाति सदात्मिका ॥ २ एकप्रकारम् ॥ ३ अन्तर्लीनविशेषान् ॥ ४ प्रति ॥ ५ वस्तूनाम् ॥ ६ विषयीकरोति ॥ ७ द्वन्द्व ॥ ८ इद सदिद सदिति ॥ ९ एता एव लिङ्ग तेन ॥ १० ब्रह्मवाद ॥ ११ सङ्ग्रहाभास ॥ १२ दृष्टेन प्रत्यक्षेणेष्टेनानुमानेन च ॥ १३ परिणमनस्वभावानाम् ॥ १४ विशेषस्य सव्यपेक्ष सन्मात्रग्राही सङ्ग्रह ॥ १५ भेदरूपेण ॥ १६ अभेदरूपेण ॥ १७ यौगस्य मीमासकस्य च ॥ १८ जीवाऽजीवधर्माऽधर्मनभ काल-भेदात् ॥ १९ यथा चैतन्यम् ॥ २० सुखादिर्यथा ॥ २१ द्रव्यपर्यायविभिन्नत्वप्रकारेण ॥ २२ नैगमोऽपि सग्रहनयप्रविभागपरो भविष्यतीत्युक्ते सत्याह ॥ २३ व्यवहारानुकूल्याभावेन ॥ २४ व्यक्तम् ॥ २५ बोधयति ॥ २६ शुद्धपर्यायग्राही प्रतिपक्षसापेक्ष ऋजुसूत्र । क्षणिकैकान्तनयस्तु तदाभास ॥ २७ क्षण पर्याय ॥ २८ द्रव्यस्यातीतानागतक्षणयोश्च सूचक कुतो न स्यादित्युक्ते सत्याह ॥ २९ विवक्षाऽभावात् ॥ ३० सुख-क्षण सम्प्रतीत्यादिप्रकारेण ॥

प्रतिक्षिपत्यखिलार्थानां प्रतिक्षणं क्षणिकत्वाभिमानात् स तदाभासः प्रतीत्यतिक्रमात्। बाधविधुरा हि प्रत्यभिज्ञानादिप्रतीतिर्बहिरन्तश्चैकं द्रव्यं पूर्वोत्तरविवर्त्तवर्त्ति प्रसाधयतीत्युक्तमूर्द्ध्वतासामान्यसिद्धिप्रस्तावे। प्रतिक्षणं क्षणिकत्वं च तत्रैव प्रतिव्यूढमिति।

कालकारकलिङ्गसंख्यासाधनोपग्रहभेदाद्भिन्नमर्थं शपतीति शब्दो नयः शब्दप्रधानत्वात्। ततोऽपास्तं वैयाकरणानां मतम्। ते हि "धातुसम्बन्धे प्रत्ययाः" इति सूत्रमारभ्य विश्वदृश्वाऽस्य पुत्रो भवितेत्यत्र कालभेदेऽप्येकं पदार्थमादृताः—यो विश्वं द्रक्ष्यति सोऽस्य पुत्रो भवितेति भविष्यत्कालेनातीतकालस्याऽभेदाभिधानात् तथा व्यवहारोपलम्भात्। तच्चानुपपन्नं कालभेदेऽप्यर्थस्याऽभेदेऽतिप्रसङ्गात्, रावणशङ्खचक्रवर्त्तिशब्दयोरप्यतीतानागतार्थगोचरयोरेकार्थतापत्तेः। अथानयोर्भिन्नविषयत्वान्नैकार्थता। विश्वदृश्वा भवितेत्यनयोरप्यसौ मा भूत्तत एव। न खलु विश्वं दृष्टवान्=विश्वदृश्वेति शब्दस्य योऽर्थोऽतीतकालः स भवितेति शब्दस्यानागतकालो युक्तः पुत्रस्य भाविनोऽतीतत्वविरोधात्। अतीतकालस्याप्यनागतत्वाध्यारोपादेकार्थत्वे तु न परमार्थतः कालभेदेऽप्यभिन्नार्थव्यवस्था स्यात्। तथा करोति क्रियते इति कर्तृकर्मकारकभेदेऽप्यभिन्नमर्थं त एवाद्रियन्ते। यः करोति किञ्चित्स एव क्रियते केनचिदिति प्रतीतेः। तदप्यसाम्प्रतं देवदत्तः कटं करोतीत्यत्रापि कर्तृकर्मणोर्देवदत्तकटयोरभेदप्रसङ्गात्। तथा पुष्यस्तारका इत्यत्र लिङ्गभेदेऽपि नक्षत्रार्थमेकमेवाद्रियन्ते लिङ्गमशिष्यं लोकाश्रयत्वात्तस्येत्यसङ्गतं पटः कुटीत्यत्राप्येकत्वानुषङ्गात्। तथापोऽम्भ इत्यत्र संख्याभेदेऽप्येकमर्थं जलाख्यं मन्यन्ते संख्याभेदस्याऽभेदकत्वाद्गुर्वादिवत्। तदप्ययुक्तं पटस्तन्तव इत्यत्राप्येकत्वानुषङ्गात्। तथा एहि मन्ये रथेन यास्यसि न हि यास्यसि यातस्ते पितेति साधनभेदेऽप्यर्थाऽभेदमाद्रियन्ते "प्रहासे[13] मन्यवाचि युष्मन्मन्यतेऽस्मदेकवच्च" इत्यभिधानात्। तदप्यपेशलमहं पचामि त्वं पचसीत्यत्राप्येकार्थत्वप्रसङ्गात्। तथा सन्तिष्ठते प्रतिष्ठते इत्यत्रोपग्रहभेदेऽप्यर्थाभेदं प्रतिपद्यन्ते[14] उपसर्गस्य धात्वर्थमात्रोद्द्योतकत्वात्। तदप्यचारु—सन्तिष्ठते प्रतिष्ठते इत्यत्रापि स्थितिगतिक्रिययोरभेदप्रसङ्गात्। ततः कालादिभेदाद्भिन्न एवार्थः शब्दस्य। तथा हि। विवादापन्नो[15] विभिन्नकालादिशब्दो विभिन्नार्थप्रतिपादको विभिन्नकालादिशब्दत्वात् तथाविधान्य[16]शब्दवत्। नन्वेवं[17] लोकव्यवहारविरोधः स्यादिति चेद्विरुध्यतामसौ तत्त्वं तु मीमांस्यते। न हि भेषजमातुरेच्छानुवर्त्ति।

नानार्थान्समेत्याभिमुख्येन रूढः समभि[18]रूढः। शब्दनयो हि पर्यायशब्दभेदान्नार्थभेदमभिप्रैति कालादिभेदत एवार्थभेदाभिप्रायात्। अयं तु पर्यायभेदेनाप्यर्थभेदमभिप्रैति। तथा हि। इन्द्रः शक्रः पुरन्दर इत्याद्याः शब्दा विभिन्नार्थगोचरा विभिन्नशब्दत्वाद्वाजिवारणशब्दवदिति।

---

१ निराकरोति ॥ २ जैनै ॥ ३ संख्या=एकवचनादि ॥ ४ साधनो युष्मदस्मत्त्वभेदात्त्रिधा ॥ ५ उपग्रह=उपसर्ग ॥ ६ कालादिभेदाद्भिन्नमर्थं प्रतिपादयति शब्दो नयो यत ॥ ७ शब्दभेदादर्थभेदमकुर्वताम् ॥ ८ प्रतिज्ञातं त ॥ ९ अत एवातीतार्थको विश्वदृश्वशब्दो द्रक्ष्यतीति वर्त्स्यत्कालेन विगृह्यते ॥ १० वैयाकरणा ॥ ११ वैयाकरणा ॥ १२ आदिना लघ्वादिग्रह ॥ १३ जैनेन्द्रव्याकरणस्य सूत्रम्। मूल'क'पुस्तके 'प्रहसे' इति ॥ दीक्षि ॥ १४ वैयाकरणा ॥ १५ विश्वदृश्वा भविता करोति क्रियते इत्यादि ॥ १६ रावणशङ्खचक्रवर्त्यादिशब्दवत् ॥ १७ लिङ्गवचनादिभेदेनार्थभेदप्रकारेण ॥ १८ समाश्रित्य ॥ १९ पर्यायभेदात्पदार्थनानात्वप्ररूपक समभिरूढ ॥

एवंमित्थं विवक्षितक्रियापरिणामप्रकारेण भूतं परिणतमर्थं योभिप्रैति स एवम्भूतो नयः। समभिरूढो हि शकनक्रियायां सत्यामसत्यां च देवराजार्थस्य शक्रव्यपदेशमभिप्रैति पशोर्गमनक्रियायां सत्यामसत्यां च गोव्यपदेशवत् तथा रूढेः सद्भावात्। अयं तु शकनक्रियापरिणतिक्षणे एव शक्रमभिप्रैति, न पूजनाभिषेचनक्षणेऽतिप्रसङ्गात्। न चैवंभूतनयाभिप्रायेण कश्चिदक्रियाशब्दोस्ति गौरश्व इति जातिशब्दाभिमतानामपि क्रियाशब्दत्वात्। गच्छतीति गौराशुगाम्यश्व इति। शुक्लो नील इति गुणशब्दा अपि क्रियाशब्दा एव। शुचिभवनाच्छुक्लो, नीलनान्नील इति। देवदत्तो यज्ञदत्त इति यदृच्छाशब्दा अपि क्रियाशब्दा एव। देवा एनं देयासुरिति देवदत्तो, यज्ञे एनं देयादिति यज्ञदत्तः। तथा संयोगिसमवायिद्रव्यशब्दाः क्रियाशब्दा एव। दण्डोस्यास्तीति दण्डी, विषाणमस्यास्तीति विषाणीति। पञ्चतयी तु शब्दानां प्रवृत्तिर्व्यवहारमात्रान्न निश्चयात्। एवमेते शब्दसमभिरूढैवम्भूतनयाः सापेक्षाः सम्यगऽन्योन्यमनपेक्षास्तु मिथ्येति प्रतिपत्तव्यम्। एतेषु च नयेषु ऋजुसूत्रान्ताश्चत्वारोर्थप्रधानाः शेषास्तु त्रयः शब्दप्रधानाः प्रत्येतव्याः।

कः पुनरत्र बहुविषयो नयः को वाल्पविषयः, कश्चात्र कारणभूतः कार्यभूतो वेति चेत् पूर्वः पूर्वो बहुविषयः कारणभूतश्च परः परोल्पविषयः कार्यभूतश्चेति ब्रूमः। संग्रहाद्धि नैगमो बहुविषयो भावाऽभावविषयत्वात्। यथैव हि सति सङ्कल्पस्तथाऽसत्यपि। संग्रहस्तु ततोल्पविषयः सन्मात्रगोचरत्वात्, तत्पूर्वकत्वाच्च तत्कार्यः। संग्रहाद्व्यवहारोपि तत्पूर्वकः सद्विशेषावबोधकत्वादल्पविषय एव। व्यवहारात्कालत्रितयवृत्त्यर्थगोचरादृजुसूत्रोपि तत्पूर्वको वर्तमानार्थगोचरतयाल्पविषय एव। कारकादिभेदेनाऽभिन्नमर्थं प्रतिपद्यमानादृजुसूत्रतस्तत्पूर्वकः शब्दनयोप्यल्पविषय एव तद्विपरीतार्थगोचरत्वात्। शब्दनयात्पर्यायभेदेनार्थभेदं प्रतिपद्यमानात् तद्विपर्ययात्तत्पूर्वकः समभिरूढोप्यल्पविषय एव। समभिरूढतश्च क्रियाभेदेनाऽभिन्नमर्थं प्रतियतस्तद्विपर्ययात्तत्पूर्वक एवम्भूतोप्यल्पविषय एवेति। नन्वेते नयाः किमेकस्मिन्विषयेऽविशेषेण प्रवर्त्तन्ते किं वा विशेषोस्तीति? अत्रोच्यते। यत्रोत्तरोत्तरो नयोऽर्थांशे प्रवर्त्तते तत्र पूर्वः पूर्वोपि नयो वर्त्तते एव। यथा सहस्रेऽष्टशती तस्यां वा पञ्चशतीत्यादौ पूर्वसंख्योत्तरसंख्यायामविरोधतो वर्त्तते। यत्र तु पूर्वः पूर्वो नयः प्रवर्त्तते तत्रोत्तरोत्तरो नयो न प्रवर्त्तते पञ्चशत्यादावऽष्टशत्यादिवत्। एवं नयार्थे प्रमाणस्यापि सांशवस्तुवेदिनो वृत्तिरविरुद्धा न तु प्रमाणार्थे नयानां वस्त्वंशमात्रवेदिनामिति। कथं पुनर्नयसप्तभङ्ग्याः प्रवृत्तिरिति चेत्। प्रतिपर्यायं वस्तुन्येकत्राविरोधेन विधिप्रतिषेधकल्पनयेति ब्रूमः। तथा हि। सङ्कल्पमात्रग्राहिणो नैगमस्याश्रयणा-

१ क्रियाश्रयेण भेदप्ररूपणमित्थम्भावोत्र ॥ २ यथा नमनक्रिया कुर्वतोपि पाचकत्वप्रसङ्ग स्यात् ॥ ३ क्रियाप्रधानतया ॥ ४ अस्तीति क्रियात्र ॥ ५ जातिक्रियागुणयदृच्छासम्बन्धवाचकप्रकारेण ॥ ६ विद्यमाने वस्तुनि ॥ ७ अतीतेऽनागते च ॥ ८ पर्यायभेदेन भिन्नार्थगोचरत्वादित्यर्थः ॥ ९ प्राप्नुवत प्रकटयतो वा ॥ १० उत्तरोत्तरनयविषये पूर्वपूर्वनयप्रवर्तनप्रकारेण उत्तरोत्तरसङ्ख्याया पूर्वपूर्वसङ्ख्याप्रवर्तनप्रकारेण वा, पञ्चशत्यादावष्टशत्याद्यऽप्रवर्तनप्रकारेण वा ॥ ११ अविरोधेनेत्यभिधानात्प्रत्यक्षादिविरुद्धविधिप्रतिषेधकल्पनाया, एकत्र वस्तुनीत्यभिधानादनेकवस्त्वाश्रयविधिप्रतिषेधककल्पनायाश्च सप्तभङ्गीरूपता प्रत्युक्ता ॥ १२ विधिप्रतिषेधौ अस्तित्वनास्तित्वे ॥

द्विधिकल्पना प्रस्थादिकं कल्पनामात्रं=प्रस्थादि स्यादस्तीति। संग्रहाश्रयणात्तु[1] प्रतिषेधकल्पना, न प्रस्थादि सङ्कल्पमात्रं—प्रस्थादिसन्मात्रस्य [2]तथाप्रतीतेरसतः प्रतीतिविरोधादिति[3]। व्यवहाराश्रयणाद्वा द्रव्यस्य पर्यायस्य वा प्रस्थादिप्रतीतिस्तद्विपरीतस्याऽसतः सतो वा [4]प्रत्येतुमशक्तेः। ऋजुसूत्राश्रयणाद्वा पर्यायमात्रस्य प्रस्थादित्वेन प्रतीतिरन्यथा प्रतीत्यनुपपत्तेः। शब्दाश्रयणाद्वा कालादिभिन्नस्यार्थस्य प्रस्थादित्वमन्यथातिप्रसङ्गात्। समभिरूढाश्रयणाद्वा पर्यायभेदेन भिन्नस्यार्थस्य प्रस्थादित्वमन्यथाऽतिप्रसङ्गात्। एवम्भूताश्रयणाद्वा प्रस्थादिक्रियापरिणतस्यैवार्थस्य प्रस्थादित्वं नान्यस्यातिप्रसङ्गादिति। तथा स्यादुभयं क्रमार्पितोभयनयार्पणात्। स्यादवक्तव्यं सहार्पितोभयनयाश्रयणात्। एवमवक्तव्योत्तराः शेषास्त्रयो भङ्गा यथायोगमुदाहार्याः।

ननु चोदाहृता नयसप्तभङ्गी। प्रमाणसप्तभङ्गीतस्तु तस्याः किङ्कृतो विशेष इति चेत् सकलविकलादेशकृत इति ब्रूमः। विकलादेशस्वभावा हि नयसप्तभङ्गी वस्त्वंशमात्रप्ररूपकत्वात्। सकलादेशस्वभावा तु प्रमाणसप्तभङ्गी यथावद्वस्तुरूपप्ररूपकत्वात्। तथा हि। स्यादस्ति जीवादिवस्तु स्वद्रव्यादिचतुष्टयापेक्षया। स्यान्नास्ति परद्रव्यादिचतुष्टयापेक्षया। स्यादुभयं क्रमार्पितद्वयापेक्षया। स्यादवक्तव्यं सहार्पितद्वयापेक्षया। एवमवक्तव्योत्तरास्त्रयो भङ्गाः प्रतिपत्तव्याः।

कस्मात्पुनर्नयवाक्ये प्रमाणवाक्ये वा सप्तैव भङ्गाः सम्भवन्तीति चेत्। प्रतिपाद्यप्रश्नानां तावतामेव सम्भवात्। प्रश्नवशादेव हि सप्तभङ्गीनियमः। सप्तविध एव प्रश्नोपि कुत इति चेत्सप्तविधजिज्ञासासम्भवात्। सापि सप्तधा कुत इति चेत्सप्तधा संशयोत्पत्तेः। सोपि सप्तधा कथमिति चेत्तद्विषयवस्तुधर्मस्य सप्तविधत्वात्। तथा हि। सत्त्वं तावद्वस्तुधर्मस्तदनभ्युपगमे वस्तुनो वस्तुत्वायोगात् खरशृङ्गवत्। तथा कथञ्चिदसत्त्वं तद्धर्म एव स्वरूपादिभिरिव पररूपादिभिरप्यस्याऽसत्त्वानिष्टौ प्रतिनियतस्वरूपाऽसंभवाद्वस्तुप्रतिनियमविरोधः स्यात्। एतेन क्रमार्पितोभयत्वादीनां[30] वस्तुधर्मत्वं प्रतिपादितं प्रतिपत्तव्यं—तदभावे क्रमेण सदसत्त्वविकल्पशब्दव्यवहारविरोधात्। सहाऽवक्तव्यत्वोपलक्षितोत्तरधर्मत्रयविकल्पस्य शब्दव्यवहारस्य चासत्त्वप्रसङ्गात्। [32]न चामी व्यवहारा निर्विषया

---

१ संग्रहो नयः ॥ २ प्रस्थादित्वेन ॥ ३ गगनकुसुमवत् ॥ ४ सङ्कल्पमात्रस्य प्रस्थादिरूपेण ज्ञातुम् ॥ ५ प्रतिषेधकल्पना स्यात् ॥ ६ सङ्कल्पमात्रेण ॥ ७ प्रतिषेधकल्पनेति सम्बन्धः ॥ ८ पटादेरपि प्रस्थादित्वं स्यात् ॥ ९ प्रतिषेधकल्पना ॥ १० सङ्कल्पमात्रेण ॥ ११ सङ्कल्पमात्रेण ॥ १२ प्रतिषेधकल्पना ॥ १३ सङ्कल्पमात्रस्य ॥ १४ एतावता स्यादस्ति स्यान्नास्तीति भङ्गद्वयं सिद्धम् ॥ १५ प्रस्थादि स्यादस्ति नास्ति च ॥ १६ सह=युगपत् ॥ १७ अर्पित=विवक्षित ॥ १८ प्रस्थादि स्यादस्त्यवक्तव्यं, स्यान्नास्त्यवक्तव्यं, स्यादस्तिनास्त्यवक्तव्यश्चेति ॥ १९ प्रमाणात् ॥ २० सप्तप्रमाणसप्तभङ्गी यथाक्रमं भेदाभावादभेदोपचारेण कथ्यते स्यादस्ति स्यान्नास्तीत्यादि । तथा च स्यादस्ति जीवादिवस्तु स्यान्नास्ति जीवादिवस्तु इत्यादि ॥ २१ आदिना क्षेत्रकालभावग्रहः ॥ २२ ज्ञातुमिच्छा जिज्ञासा ॥ २३ [illegible] ॥ २४ परेणानङ्गीक्रियमाणे ॥ २५ जीवादिपदार्थस्य ॥ २६ अन्यथा ॥ २७ परेण ॥ २८ पृथुबुध्नोदराद्याकारं सास्नादिमत्त्वादिर्वा प्रतिनियतस्वरूपं ॥ २९ सत्त्वासत्त्वयोर्वस्तुधर्मत्वमभ्युपगमपरेण [illegible] ॥ ३० सहार्पितोभयत्वादीनां च ॥ ३१ [illegible] नेति ॥ ३२ ननु ये व्यवहारेभ्योऽन्यथानुपपत्त्या क्रमार्पितोभयत्वादयः पञ्च धर्मा अपि साध्यन्ते ते निर्विषया [illegible] ॥

एव वस्तुप्रतिपत्तिप्रवृत्तिप्राप्तिनिश्चयात्तथाविधरूपादिव्यवहारवत्[1][2] । ननु च प्रथमद्वितीयधर्मवत् प्रथमतृतीयादिधर्माणां[3] क्रमेतरार्पितानां धर्मान्तरत्वसिद्धेर्न सप्तविधधर्मनियमः सिद्ध्येदित्यप्यसुन्दरं क्रमार्पितयोः प्रथमतृतीयधर्मयोः धर्मान्तरत्वेनाऽप्रतीतेः, सत्त्वद्वयस्यासम्भवाद्विवक्षितस्वरूपादिना[4] सत्त्वस्यैकत्वात्[5] । तदन्यस्वरूपादिना सत्त्वस्य द्वितीयस्य सम्भवे विशेषादेशात्[10] तत्प्रतिपक्षभूतासत्त्वस्याप्यपरस्य सम्भवादपरधर्मसप्तकसिद्धिः[11][12] । सप्तभङ्ग्यन्तरसिद्धितो न कश्चिदुपालम्भः । एतेन[13] द्वितीयतृतीयधर्मयोः क्रमार्पितयोर्धर्मान्तरत्वमप्रातीतिकं[14] व्याख्यातम् । कथमेवं[15] प्रथमचतुर्थयोर्द्वितीयचतुर्थयोस्तृतीयचतुर्थयोश्च[16][17] सहितयोर्धर्मान्तरत्वं स्यादिति चेत् चतुर्थेऽवक्तव्यत्वधर्मे सत्त्वासत्त्वयोरपरामर्शात्[18] । न खलु सहार्पितयोस्तयोरवक्तव्यशब्देनाभिधानम् । किं तर्हि ? तथार्पितयोस्तयोः सर्वथा वक्तुमशक्तेरवक्तव्यत्वस्य धर्मान्तरस्य तेन प्रतिपादनमिष्यते । न च तेन सहितस्य सत्त्वस्यासत्त्वस्योभयस्य वाऽप्रतीतिर्धर्मान्तरत्वासिद्धिर्वा–प्रथमे भङ्गे सत्त्वस्य प्रधानभावेन प्रतीतेः, द्वितीये त्वसत्त्वस्य, तृतीये क्रमार्पितयोः सत्त्वासत्त्वयोश्चतुर्थे त्ववक्तव्यत्वस्य, पञ्चमे सत्त्वसहितस्य, षष्ठे पुनरसत्त्वोपेतस्य, सप्तमे क्रमे क्रमवत्तदुभययुक्तस्य[20] सकलजनैः सुप्रतीतत्वात् । ननु चावक्तव्यत्वस्य धर्मान्तरत्वे वस्तुनि वक्तव्यत्वस्याष्टमस्य धर्मान्तरस्य भावात्कथं सप्तविध एव धर्मः सप्तभङ्गीविषयः स्यादित्यप्यपेशलं सत्त्वादिभिरभिधीयमानतया[21][22] वक्तव्यत्वस्य प्रसिद्धेः सामान्येन वक्तव्यत्वस्यापि विशेषेण[23] वक्तव्यतायामवस्थानात् । भवतु वा वक्तव्यत्वावक्तव्यत्वयोर्धर्मयोः प्रसिद्धिः । तथाप्याभ्यां विधिप्रतिषेधकल्पनाविषयाभ्यां[24] सत्त्वासत्त्वाभ्यामिव सप्तभङ्ग्यन्तरस्यैव[25] प्रवृत्तेर्न तद्विषयसप्तविधधर्मनियमव्याघातः । यतस्तद्विषयः संशयः सप्तधैव न स्यात् तद्धेतुर्जिज्ञासा[26] वा तन्निमित्तः प्रश्नो वा वस्तुन्येकत्र सप्तविधवाक्यनियमहेतुः । इत्युपपन्नेयं प्रश्नवशादेकवस्तुन्यविरोधेन विधिप्रतिषेधकल्पना सप्तभङ्गी । अविरोधेनेत्यभिधानात्प्रत्यक्षादिविरुद्धविधिप्रतिषेधकल्पनायाः सप्तभङ्गीरूपता प्रत्युक्ता, एकवस्तुनीत्यभिधानाच्चानेकवस्त्वाश्रयविधिप्रतिषेधकल्पनाया इति ।

अथवा प्रागुक्तश्चतुरङ्गो वादः पत्रावलम्बनमप्यपेक्षते । अतस्तल्लक्षणमत्रावश्यमभिधातव्यं[27] यतो नास्याऽविज्ञातस्वरूपस्यावलम्बनं जयाय प्रभवतीति ब्रुवाणं प्रति सम्भवदित्याह । सम्भवद्विद्यमानमन्यत् पत्रलक्षणं विचारणीयं तद्विचारचतुरैः । तथा हि । स्वाभिप्रेतार्थसाधनानवद्यगूढपदसमूहात्मके

---

१ तथाविध प्रतिपत्तिप्रवृत्तिप्राप्तिनिश्चयहेतुभूत ॥२ तस्यापि निर्विषयत्वे सकलप्रत्यक्षादिव्यवहारापह्नवान्न कस्यचिदिष्टतत्त्वव्यवस्था स्यात् ॥३ आदिना द्वितीयतृतीयादिग्रह ॥४ युगपत् ॥५ मनुष्यस्वरूपे स्वद्रव्यक्षेत्रकालभावा स्वरूपम् । आदिना पररूपसग्रह । ते च यत परकीया द्रव्यादय' ॥ ६ एकजीवस्य ॥ ७ तस्मात् ॥ ८ अन्यस्य देवादे ॥ ९ भवान्तरापेक्षया ॥ १० पर्यायकथनात् ॥ ११ स =द्वितीयसत्त्व ॥१२ पस ॥ १३ प्रथमतृतीयधर्मयोर्धर्मान्तरत्वनिराकरणेन ॥ १४ इति ॥ १५ प्रथमतृतीयादिप्रकारेण ॥ १६ स्यादस्त्यवक्तव्यमिति ॥ १७ स्यान्नास्त्यवक्तव्यमिति ॥ १८ स्यादस्ति नास्त्यवक्तव्यमिति ॥ १९ अप्रतीते ॥ २० तदुभय सत्त्वासत्त्वम् ॥ २१ आदिना ह्यसत्त्व, सत्त्वासत्त्वे च सगृह्येते ॥ २२ वस्तुन ॥ २३ सदादिभङ्गत्रयरूपेण सघटते इत्यादिप्रकारेण ॥ २४ कल्पना भेद ॥ २५ यथा स्यादस्ति स्यान्नास्तीत्यादि तथा स्याद्वक्तव्य स्यादवक्तव्यं स्याद्वक्तव्यावक्तव्यमित्यादिप्रकारेण ॥ २६ वस ॥ २७ परीक्षामुखे ॥

प्रसिद्धावयवलक्षणं वाक्यं पत्रमित्यवगन्तव्य तथाभूतस्यैवास्य निर्दोषतोपपत्तेः। न खलु स्वाभिप्रेतार्थासाधकं दुष्टं सुस्पष्टपदात्मकं वा वाक्यं निर्दोषं पत्रं युक्तमतिप्रसङ्गात्[3]। न च क्रियापदादिगूढं काव्यमप्येवं पत्रं प्रसज्यते प्रसिद्धावयवत्वविशिष्टस्यास्य पत्रत्वाभिधानात्। न हि पदगूढादिकाव्यं प्रमाणप्रसिद्धप्रतिज्ञाद्यवयवविशेषणतया किञ्चित्प्रसिद्धं—तस्य तथा प्रसिद्धौ पत्रव्यपदेशसिद्धेरबाधनात्। तदुक्तं "प्रसिद्धावयवं वाक्यं स्वेष्टस्यार्थस्य साधकम्। साधु गूढपदप्रायं पत्रमाहुरनाकुलम्।" कथं प्रागुक्तविशेषणविशिष्टं वाक्यं पत्रं नाम? तस्य श्रोत्रसमधिगम्यपदसमुदयविशेषरूपत्वात्, पत्रस्य च तद्विपरीताकारत्वात्। न च यद्यतोऽन्यत्तत्तेन व्यपदेष्टुं शक्यमतिप्रसङ्गादिति चेदुपचरितोपचारादिति ब्रूमः। श्रोत्रपथप्रस्थायिनो हि वर्णात्मकपदसमूहविशेषस्वभाववाक्यस्य लिप्यामुपचारस्तत्रास्य जनैरारोप्यमाणत्वात्। लिप्युपचरितवाक्यस्यापि पत्रे तत्र लिखितस्य तत्रस्थत्वात्। इत्युपचरितोपचारात्पत्रव्यपदेशः सिद्धः। न च यद्यतोन्यत्तत्तेनोपचारादुपचरितोपचाराद्वा व्यपदेष्टुमशक्यं शक्रादन्यत्र व्यवहर्तृजनाभिप्राये शक्रोपचारोपलम्भात्। तस्माच्चान्यत्र काष्ठादावुपचरितोपचाराच्छक्रव्यपदेशसिद्धेः। अथवा प्रकृतस्य वाक्यस्य मुख्य एव पत्रव्यपदेशः। पदानि त्रायन्ते गोप्यन्ते रक्ष्यन्ते परेभ्यः स्वयं विजिगीषुणा यस्मिन्वाक्ये तत्पत्रमिति व्युत्पत्तेः। प्रकृतिप्रत्ययादिगोपनाद्धि पदानां गोपनं विनिश्चितपदस्वरूपतदभिधेयतत्त्वेभ्योपि परेभ्यः सम्भवत्येव। तस्योक्तप्रकारस्य पत्रस्यावयवौ क्वचिद्द्वावेव प्रयुज्येते तावतैव साध्यसिद्धेः। तद्यथा "स्वान्तभासितभूत्याद्यन्त्यन्तात्मतदुभान्तवाक्। परान्तद्योतितोद्दीप्तमितीतस्वात्मकत्वतः" इति। अन्त एव ह्यान्तः। स्वार्थिकोऽण्। वानप्रस्थादिवत्। प्रादिपाठापेक्षया सोरान्तः स्वान्तः उत्। तेन भासिता द्योतिता भूतिरुद्भूतिरित्यर्थः। सा आद्या येषा ते स्वान्तभासितभूत्याद्याः। ते च ते त्र्यन्ताश्च। उद्भूतिव्ययध्रौव्यधर्मा इत्यर्थः। ते एवात्मानः। तांस्तनोतीति स्वान्तभासितभूत्याद्यत्र्यन्तात्मतदिति साध्यधर्मः। उभान्ता वाग्यस्य तदुभान्तवाक्=विश्वम्, इति धर्मि। तस्य साध्यधर्मविशिष्टस्य निर्देशः। उत्पादादित्रिस्वभावव्यापि सर्वमित्यर्थः। परान्तो यस्यासौ परान्तः प्रः। स एव द्योतितं द्योतनमुपसर्ग इत्यर्थः। [13]तेनोद्दीप्ता चासौ मितिश्च तया ईतः स्वात्मा यस्य तत्परान्तद्योतितोद्दीप्तमितीतस्वात्मकं प्रमितिप्राप्तस्वरूपमित्यर्थः। तस्य भावस्तत्त्वं प्रमेयत्वमित्यर्थः—प्रमाणविषयस्य प्रमेयत्वव्यवस्थितेः। इति साधनधर्मनिर्देशः। दृष्टान्ताद्यभावेपि च हेतोर्गमकत्वमेतद्द्वयमेवानुमानाङ्गमित्यत्र समर्थितम्। अन्यथानुपपत्तिबलेनैव हि हेतोर्गमकत्वम्। सा चात्रास्त्येवैकान्तस्य प्रमाणागोचरतया विषयपरिच्छेदे समर्थनात्। एवं प्रतिपाद्याशयवशात्त्रिप्रभृतयोप्यवयवाः पत्रवाक्ये द्रष्टव्याः। तथा हि। चित्राद्यदन्तराणीयमारेकान्तात्मकत्वतः। यदित्थं न तदित्थं न यथाऽकि-

---

१ पत्रस्य ॥ २ अपगन्दबहुलम् ॥ ३ काव्यादेरपि पत्रत्वप्रसङ्गात् ॥ ४ अनाविलम् ॥ ५ घटस्य पटव्यपदेशप्रसङ्गात् ॥ ६ ब्रुमि ॥ ७ प्रतिवादिभ्य ॥ ८ अनुमानवाक्ये ॥ ९ विश्वम् ॥ १० प्रमेयत्वात् ॥ ११ प्रपराऽपममन्वादि प्रादि ॥१२ व्याप्नोति ॥ १३ परान्तद्योतितेन ॥ १४ प्राप्त ॥ १५ स्वमा यप्रतिपादनलम् ॥ १६ नैव ॥ १७ सर्वथा नित्यस्य क्षणिकस्य वा वस्तुन ॥

श्चिदिति त्रयः । १ । तथा चेदमिति प्रोक्तौ चत्वारोवयवा मताः । तस्मात्तथेति निर्देशे पञ्च पत्रस्य कस्यचित् । २ । चित्रमेकानेकरूपम् । तदततीति चित्रात् । एकानेकरूपव्यापि अनेकान्तात्मकमित्यर्थः । सर्वं विश्व यदित्यादिसर्वनामपाठापेक्षया यदन्तो विश्वशब्दो यत् अन्ते यस्येति व्युत्पत्तेः । तेन राणीयं शब्दनीयं विश्वमित्यर्थः । तदनेकान्तात्मकं विश्वमिति पक्षनिर्देशः । आरेका संशयः । सा अन्ते यस्येत्यारेकान्तः प्रमेयः प्रमाणप्रमेयसंशयेत्यादिपाठापेक्षया । स आत्मा यस्य तदारेकान्तात्मकम् । तस्य भावस्तत्त्वं, तस्मात् । इति साधनधर्मनिर्देशः । यदित्थं न भवति यच्चित्रान्न भवति तदित्थं न भवति आरेकान्तात्मकं न भवति । यथाऽकिञ्चित्[4]=न किञ्चित् । अथवाऽकिञ्चित्सर्वथैकान्तवाद्यभ्युपगतं तत्त्वम् । इति त्रयोवयवाः पत्रे क्वचित्प्रयुज्यन्ते । तथा चेदमिति पक्षधर्मोपसंहारवचने चत्वारः । तस्मात्तथाऽनेकान्तव्यापीति निर्देशे पञ्चेति ।

यच्चेदं यौगैः स्वपक्षसिद्ध्यर्थं पत्रवाक्यमुपन्यस्तं; सैन्यलङ्भाग् नाऽनन्तरानर्थार्थप्रस्वापकृदाऽऽशैट्स्यतोऽनीङ्क्नोनेनलङ्युक्कुलोद्भवो वैपोप्यनैश्यतापंस्तन्नऽनृरङ्लङ्जुट् परापरतत्त्ववित्तदन्योऽनादिरवायनीयत्वत एवं यदीदृक्तत्सकलविद्वर्गवदेतच्चैवमेवं तदिति पत्रम् । अस्यायमर्थः । इन आत्मा सकलस्यैहिकपारलौकिकव्यवहारस्य प्रभुत्वात् । सह तेन वर्तते इति सेनः । स एव चातुर्वर्ण्यादिवत्स्वार्थिके घ्यणि कृते सैन्यमिति भवति । तस्य लङ्=विलासः । तं भजते सेवते इति सैन्यलङ्भाक् । देह इति यावत् । अर्थः प्रयोजनं, तस्मै अर्थार्थः । न अर्थार्थोऽनर्थार्थः । प्रकृष्टो लौकिकस्वापाद्विलक्षणः स्वापः प्रस्वापः=बुद्ध्यादिगुणवियुक्तस्यात्मनोऽवस्थाविशेषः । मोक्ष इति यावत् । न हि तत्साध्यं किञ्चित्प्रयोजनमस्ति तस्य सकलपुरुषप्रयोजनानामन्ते व्यवस्थानात् । अनर्थार्थश्चासौ प्रस्वापश्च । नन्वेवं सौगतस्वापस्यापि ग्रहणं स्यात् । सोपि ह्यनर्थार्थप्रस्वापो भवति—सकलसन्ताननिवृत्तिलक्षणस्य मोक्षस्य सौगतैरभ्युपगमात् । तदुक्तं "दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद्विदिशं न काञ्चित्स्नेहक्षयात्केवलमेति शान्तिम् । १ । जीवस्तथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद्विदिशं न काञ्चित्क्लेशक्षयात्केवलमेति शान्तिम् । २ ।" अत्राह—नानन्तरेति । अन्तो विनाशस्तं राति पुरुषाय ददातीत्यन्तरः । नान्तरोऽनन्तरः पुरुषस्य विनाशदायको नेत्यर्थः । अनन्तरश्चासावनर्थार्थप्रस्वापश्चानन्तराऽनर्थार्थप्रस्वापः । नेति निपातः प्रतिषेधवाची । नानन्तरानर्थार्थप्रस्वापो । लौकिको निद्राकृतः स्वाप इत्यर्थः । तं कृन्तति छिनत्तीति नानन्तरानर्थार्थप्रस्वापकृत् । प्रबोधकारीन्द्रियादिकारणकलाप इति यावत् । शिषु इत्ययं धातुर्भौवादिकः सेचनार्थः जिषु डिपु शिषु विषु उक्ष पृषु वृषु सेचने इत्यभिधानात् । तस्माच्छेषणं भावे घञि कृते शेष इति भवति । अस्मात्स्वार्थिकेऽणि कृते शैषं इति जायते । शैषं करोति 'तत्करोति तदा-

१ अत सातत्यगमने ॥ २ खरविषाणवत् ॥ ३ आरेकान्तात्मकम् ॥ ४ देह ॥ ५ प्रबोधकारीन्द्रियादिकारणकलाप ॥ ६ आसमुद्रात् ॥ ७ गिरिनिकरो भुवनसन्निवेशश्च ॥ ८ इनलङ्युक्=सूर्याचन्द्रमसौ ॥ ९ पृथिव्यादिकार्यद्रव्यसमूह ॥ १० वक्ष्यते स्वयमेवाग्रेस्यार्थं ॥ ११ ज्ञानभोगादिपदार्थं ॥ १२ लङ विलासे ॥ १३ अनर्थार्थप्रस्वाप ॥ १४ परममोक्षस्य न तु जीवन्मोक्षस्य ॥ १५ रा दाने ॥ १६ शेष एव शैष ॥

चष्टे, तेनातिक्रामति धुरूप च' इति णिचि कृते टेः खे च कृते शैषीति भवति । तदन्ता धव इति धुसंज्ञाया सत्या प्राग्धोस्ते इत्याडा योगः । आशैषयति समन्ताद्धुवः सेकं करोतीति क्विपि तस्य च सर्वापहारेण लोपे डत्वे च कृते आशैडिति भवति । आशैट् चासौ स्यच्चाशैट्स्यत् लोकप्रसिद्धः समुद्रः । तस्मादाशैट्स्यतः । आ समुद्रादिति यावत् । निपूर्व इष इत्ययं धातुर्गत्यर्थः परिगृह्यते–इष गतिहिंसनयोश्चेति वचनात् । नीषते गच्छतीति नीट् । न नीडऽनीट् । तस्मात्स्वार्थिके के प्रत्ययेऽनीट्क इति भवति । अचलो गिरिनिकर इत्यर्थः । यदि वा अं विष्णुं नीषति गच्छति समाश्रयतीत्यनीड्=भुवनसन्निवेशः । तदुक्तम् । युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासते । तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः । १ । न विद्यते ना समवायिकारणभूतो यस्यासावऽना । "ऋण्मोः" इति कप् सान्तो न भवति सान्तो विधिरनित्य इति परिभाषाश्रयणात् । इनो भानुः । लपणं लट् कान्तिः-लप कान्ताविति वचनात् । लपा युक् योगो यस्यासौ लड्युक्–चन्द्रः । इनश्च लड्युक् चेनलड्युक् सूर्याचन्द्रमसौ । कुलमिव कुलं सजातीयारम्भकावयवसमूह । तस्मादुद्भव आत्मलाभो यस्यासौ कुलोद्भवः पृथिव्यादिकार्यद्रव्यसमूह । वेत्यनुक्तसमुच्चये । तेनानित्यस्य गुणस्य कर्मणश्च ग्रहणम् । एष प्रतीयमानः । अतो नाश्रयासिद्धिः । अद्भ्यो हितोऽप्यः–समुद्रादिः । निशायाः कर्म नैश्यमन्धकारादि । ताप औष्ण्यम् । स्तनतीति स्तन् मेघः । एतेषां द्वन्द्वैकवद्भावः । किम्भूतः स तेञ्च । न विद्यते ना पुरुषो निमित्तकारणमस्येति । रटनं परिभाषणं तस्य लड् विलासः । तं जुषते सेवते इति–जुषी प्रीतिसेवनयोरित्यभिधानात् । अनृरड्लड्जुट् । अत्रापि कवऽभावे निमित्तमुक्तम् । अत्र साध्यधर्ममाह । परापरतत्त्ववित्तदन्य इति । परं पार्थिवादिपरमाण्वादिकारणभूतं वस्तु । अपरं पृथिव्यादिकार्यद्रव्यम् । तयोस्तत्त्वं स्वरूपम् । तस्मिन्विद् बुद्धिर्यस्यासौ परापरतत्त्ववित् । कार्यकारणविषयबुद्धिमान् पुरुष इत्यर्थः । तस्मात्पैरोक्तादन्यः परापरतत्त्ववित्तदन्यो बुद्धिमत्कारण इत्यर्थः । यदा नपुंसकेन सम्बन्धस्तदा परापरतत्त्ववित्तदन्यदिति व्याख्येयम् । कुत एतदित्याह–अनादिरवायनीयत्वत इति । कार्यस्य हेतुरादिस्ततः प्रागेव तस्य भावात् । तस्मादन्योऽनादिः कार्यसन्दोहः । तस्य रवस्तत्प्रतिपादकं कार्यमिति वचनम् । तेनायनीयं प्रतिपाद्यं तस्य भावस्तत्त्वम् । तस्मादनादिरवायनीयत्वतः । कार्यत्वादित्यर्थः । एवं यदनादिरवायनीयं तदीदृग् बुद्धिमत्कारणम् । तत्कला अवयवा भागा इत्यर्थः । सह कलाभिर्वर्तते इति सकला । वित् आत्मलाभो–विद्ऌ लाभे इति वचनात् । यस्य सकला वित् वृणोति प्रच्छादयतीत्यौणादिके गे वर्ग इति भवति । सकलविच्चासौ वर्गश्चेति सकलविद्वर्गः । पट इत्यर्थः । तेन तुल्यं वर्त्तते इति सकलविद्वर्गवत् । एतच्च तन्वादि । एवमनादिरवायनीयप्रकारं

१ लोपे ॥ २ 'धु' इति धातुसञ्ज्ञा ॥ ३ (माघे) ॥ ४ तिष्ठन्ति ॥ ५ नारायणस्य ॥ ६ प्रकरणात्तपोधनोत्र नारद ॥ ७ सन्तोषा ॥ ८ समामान्त इत्यर्थ ॥ ९ हेतो ॥ १० अप्यादीनाम् ॥ ११ पुलिङ्गनिर्दिष्ट सर्व ष्लिङ्गनिर्दिष्ट सर्वम् ॥ १२ सामान्यनर ॥ १३ धर्मिणि ॥ १४ अबुद्धिमत्कारणात् ॥

तत्तस्माद्बुद्धिमत्कारणमिति । तदेतदसमीचीनमनुमानाभासत्वादस्य[1] । तदाभासत्वं च तदवयवानां प्रतिज्ञाहेतूदाहरणानां कालात्ययापदिष्टत्वाद्यनेकदोषदुष्टत्वेन तदाभासत्वात्सिद्धम् । एतच्चेश्वरनिराकरणप्रकरणाद्विशेषतोवगन्तव्यम् ।

ननु चोक्तलक्षणे पत्रे केनचित्कमप्युद्दिश्यावलम्बिते तेन[3] च गृहीते भिन्ने च यदा पत्रस्य दातैवं ब्रूयात्, नायं मदीयपत्रस्यार्थ इति, तदा किं कर्तव्यमिति चेत्, तदासौ विकल्प्य प्रष्टव्यः । कोयं भवत्पत्रस्यार्थो नाम ? किं यो भवन्मनसि वर्तते सोस्यार्थो वाक्यरूपात्पत्रात्प्रतीयमानो वा स्यात् ? भवन्मनसि वर्तमानः, ततोपि च प्रतीयमानो वा ? प्रकारान्तरासम्भवात् । तत्र प्रथमपक्षे पत्रावलम्बनमनर्थकम् । तद्धि प्रतिवादी समादाय विज्ञातार्थस्वरूपस्तत्र दूषणं वदतु विपरीतस्तु निर्जितो भवत्वित्यवलम्ब्यते । यश्च तस्मादर्थः प्रतीयते नासौ तदर्थ इति न तत्र केनचित्साधनं दूषणं वा वक्तव्यमनुपयोगात् । यस्तु तदर्थो भवच्चेतसि वर्तमानो नासौ कुतश्चित्प्रतीयते परचेतोवृत्तीनां दुरन्वयत्वादिति । तत्रापि न साधनं दूषणं वा सम्भवति । न ह्यप्रतीयमानं वस्तु साधनं दूषणं वार्हत्यतिप्रसङ्गात् । यदि पुनरन्यतः कुतश्चित्तं प्रतिपद्य प्रतिवादी तत्र साधनादिकं ब्रूयात् तर्हि पत्रावलम्बनानर्थक्यम् । तत एव तत्प्रतिपत्तिश्चेच्चित्रमेतत् 'तस्यासावर्थो न भवति ततश्च प्रतीयते' इति—गोशब्दादप्यश्वादिप्रतीतिप्रसङ्गात् । सङ्केते सति भवतीति चेत्कः सङ्केतं कुर्यात् ? पत्रदातेति चेत् किं पत्रदानकाले वादकाले वा तथा प्रतिवादिन्यन्यत्र वा ? तद्दानकाले प्रतिवादिनीति चेन्न तथा व्यवहाराभावात् । न खलु कश्चिदयं मम चेतस्यर्थो वर्ततेऽस्येदं पत्रं वाचकमस्मात्त्वयायमर्थो वादकाले प्रतिपत्तव्य इति सङ्केतं विदधाति । तथा तद्विधाने वा किं पत्रदानेन ? केवलमेवं वक्तव्यम् 'अर्थो मम चेतसि वर्तते । अत्र त्वया साधनं दूषणं वा वक्तव्यम्' इति । दृश्यन्ते साम्प्रतमप्यऽमत्सराः सन्त एवं वदन्तः । शब्दो नित्योऽनित्य इति वाऽस्माकं मनसि प्रतिभाति । तत्र यदि भवतां दूषणाद्यभिधाने सामर्थ्यमस्ति यामः सभ्यान्तिकमिति । कालान्तरेऽविस्मरणार्थं तद्दानं चेत् तर्ह्यगूढं पत्रं दातव्यम् । इतरथा तद्दानेपि विस्मरणसम्भवे किं कर्तव्यम् ? विस्मर्तुर्निग्रहश्चेन्न पूर्वसङ्केतविधानवैयर्थ्यप्रसङ्गात् । न तत्प्रसङ्गः प्रतिवादिनः पत्रार्थपरिज्ञानार्थत्वात्तस्येति चेत्तर्हि तत्परिज्ञानार्थं विस्मृतसङ्केतस्य पुनस्तद्विधानमेवास्तु, न तु निग्रहः । यदि च भवच्चित्ते वर्तमानोप्यर्थः सङ्केतबलेन पत्रादेव प्रतीयते तर्हि ततो यः प्रतीयते स तदर्थो न मनस्येव वर्तमानः । यदि पुनः सङ्केतसहायात्पत्रात्तस्य प्रतीतेर्न तदर्थत्वं तर्हि न कश्चित्कस्यचिदर्थः स्यात् सङ्केतमन्तरेण

१ अनुमानस्य ॥ २ वादिना ॥ ३ प्रतिवादिनम् ॥ ४ प्रतिवादिना ॥ ५ ज्ञातार्थे ॥ ६ अर्थं विचार्य पत्रे खण्डीकृते ॥ ७ प्रतिवादिना ॥ ८ कथम् ? ॥ ९ तत् पत्रम् ॥ १० व्यवहर्तृभिः ॥ ११ प्रमाणात् ॥ १२ अन्वयो=निश्चय ॥ १३ चेतसि वर्तमानेर्थेपि ॥ १४ चेतोवर्तमानपत्रार्थम् ॥ १५ चेतोवर्तमानपत्रार्थं ॥ १६ तस्य चेतसि वर्तमानपत्रार्थस्य ॥ १७ चेतसि वर्तमान ॥ १८ पत्रादप्रतीयमानोपि चेतसि वर्तमानपत्रार्थं सङ्केतकाले तदर्थो भविष्यतीत्याशङ्क्याह ॥ १९ पुरुषान्तरे ॥ २० पत्रदानकाले प्रतिवादिनि सङ्केतप्रकारेण ॥ २१ वादी ॥ २२ प्रतिवादिना ॥ २३ तद्दाने शेष ॥ २४ सङ्केतितार्थस्य ॥ २५ कर्तव्य इति शेष ॥

कुतश्चिच्छब्दादर्थाऽप्रतीतेः । तन्न तद्दानकाले प्रतिवादिनि सङ्केतः । नापि वादकाले तथाव्यवहारविरहादेव । किं च वादकालेपि चेद्वादी प्रतिवादिने स्वयं पत्रार्थं निवेदयति तर्हि प्रथमं पत्रग्रहीतुरुपन्यासोऽनवसर: स्यात् । तन्नायमपि पक्षः श्रेयान् । अथान्यत्र तर्हि स एव तदर्थज्ञ इति कथं प्रतिवादी साधनादिकं वदेत्? तस्य तदर्थाऽपरिज्ञानात् । प्रतिवादिनस्तदर्थापरिज्ञानं वादिनोभीष्टमेव तदर्थत्वात्पत्रदानस्येति चेत्तर्हि पत्रमनक्षरं दातव्यमतः सुतरा तदपरिज्ञानसम्भवात् । अशिष्टचेष्टाप्रसङ्गोन्यत्रापि समान इति न किञ्चित्प्रागुक्तलक्षणपत्रदानेन प्रयोजनम् । ननु वादप्रवृत्तिः प्रयोजनमस्त्येव । तद्दाने हि वादः प्रवर्त्तते । साधनाद्यभिधानं तु मानसार्थे वचनान्तरात्प्रतीयमान इत्यभिधाने तु पराक्रोशमात्रं लिखित्वा दातव्यं ततोपि वादप्रवृत्तेः सम्भवात् । किमतिगूढपत्रविरचनप्रयासेन? तन्नाद्यपक्षे पत्रावलम्बनं फलवत् । अथ तच्छब्दाद्यः प्रतीयते स तदर्थस्तर्हि खातपतिता नो रत्नवृष्टिः प्रकृतिप्रत्ययादिप्रपञ्चार्थप्रविभागेन प्रतीयमानस्य पत्रार्थत्वव्यवस्थितेः । अथ नायं तदर्थः । कथमन्यस्तदर्थः स्यात्? अथान्यार्थसम्भवेपि यस्तदवलम्बिनेष्यते स एव तदर्थः । कुत एतत्? ततः प्रतीतेश्चेदन्योप्यत एव स्यात् । अथ ततः प्रतीयमानत्वाविशेषेपि यस्तेनेष्यते स एव तदर्थो, नान्यः । ननु शब्दः प्रमाणमप्रमाणं वा? प्रमाणं चेत्तर्हि तेन यावानर्थः प्रदर्श्यते स सर्वोपि तदर्थ एव । न खलु चक्षुषानेकस्मिन्नर्थे घटादिके प्रदर्श्यमाने तद्वता य इष्यते स एव तदर्थो नान्य इति युक्तम् । अथाप्रमाणं तर्हि तेनेष्यमाणोपि नार्थः । न हि द्विचन्द्रादिकस्तद्दर्शिनेष्यमाणोर्थो भवितुमर्हति । अन्यथा परेणेष्यमाणोप्यर्थो किं न स्यात् । तन्नायमपि पक्षो युक्तः । ततो यः प्रतीयते तद्दातुश्चेतसि च वर्तते स तदर्थ इत्यत्रापि केनेदमवगम्यताम्? वादिना प्रतिवादिना प्राश्निकैर्वा? तत्राद्यविकल्पे प्रतिवादिना वादिमनोर्थानुकूल्येन पत्रे व्याख्याते वादिना तथावधारितेपि स वैयात्याद्यदैवं वदति 'नायमस्यार्थो मम चेतस्यन्यस्य वर्त्तनात् । विपरीतप्रतिपत्तेर्निगृहीतोसि' इति तदा किं कर्तव्यं प्राश्निकैः? तथाभ्युपगमश्चेन्महामध्यस्थास्ते यत्सदर्थप्रतिपादकस्यापि प्रतिवादिनो निग्रहं व्यवस्थापयन्ति वाद्यभ्युपगममात्रेण । न तावन्मात्रेणास्य निग्रहोऽपि तु यदा वादी स्वमनोगतमर्थान्तरं निवेदयतीति चेन्ननु तेन निवेद्यमानमर्थान्तरं पत्रस्याभिधेयमिति कुतोऽवगम्यताम्? तदप्रातिकूल्येन निवेदनाच्चेत् तत एव प्रतिवादिप्रतिपाद्यमानोप्यर्थस्तदभिधेयोस्तु विशेषाभावात् । वादिचेतस्यऽस्फुरणान्नेति चेदिदमपि कुतोऽवगम्यताम्? तत्रार्थदर्शनाच्चेत्किं पुनस्तच्चेतः प्राश्निकानां प्रत्यक्षं येनैवं स्यात्? तथा चेदतीन्द्रियार्थदर्शिभिस्तर्हि प्राश्निकैर्भवितव्यं नेतरपण्डितैः । तथा च प्रत्यक्षत एव वादिप्रतिवादिनोः सारेतरविभागं विज्ञायोपन्यासमन्तरेणैव जयेतरव्यवस्थां रचयेयुः । नो चेत्कथं तत्र कस्यचित्स्फुरणमस्फुरणं वा ते प्रतियन्तु? न ह्यप्रतिपन्नभूतल-

१ पुरुषान्तरे ॥ २ अन्य. ॥ ३ स्वमनसि व्यवस्थितार्थे ॥ ४ अस्माकम् ॥ ५ सिद्धोऽस्मदीय पक्ष इत्यर्थ ॥ ६ वादिना ॥ ७ पत्र गृहीता ॥ ८ पत्रात् ॥ ९ धार्ष्ट्यात् ॥ १० पत्रस्य ॥ ११ स्वीकर्त्तव्य ॥

स्यात्र भूतले घटोस्ति नास्तं ति वा प्रतीतिरस्ति। अथ स्वयमेव यदासौ वदति 'ममायमर्थो मनसि वर्तते नायमिति' तदा ते तथा प्रतिपद्यन्ते[3], न—तदापि संदेहात्। कि प्रतिवादिना योर्थो निश्चितः स एवास्य मनसि वर्तते शब्देन तु वदति नायमर्थो मम मनसीति, किन्त्वन्य एव यो मया प्रतिपाद्यते उतायमेवेति न निश्चयहेतुः। दृश्यन्ते ह्यनेकार्थं पत्रं विरचय्य, यदीदमस्यार्थतत्त्वं प्रतिवादी ज्ञास्यति तर्ह्येवं वदिष्यामो नेदमर्थतत्त्वमस्य किन्त्विदमिति, अथेदं ज्ञास्यति तत्राप्यन्यथा गदिष्यामः, इति सम्प्रधारयन्तो वादिनः। अथ गुर्वादिभ्यः पूर्वमसौ तन्निवेदयति। ततस्तेभ्यः प्राश्निकानां तन्निश्चयः, न—अत्राप्यारेकाऽनिवृत्तेः। स्वशिष्यपक्षपातेनान्यथापि तेषां वचनसम्भवात्। यदि पुनर्वादी वादप्रवृत्तेः प्राक् प्राश्निकेभ्यः प्रतिपादयति "मदीयपत्रस्यायमर्थः। अत्रार्थान्तरं ब्रुवन् प्रतिवादी भवद्भिर्निवारणीयः" इति। अत्रापि प्रागप्रतिपन्नपत्रार्थाना महामध्यस्थानामुभयाभिमतानामकस्मादाहूतानां सभ्यानां मध्ये विवादकरणे का वार्त्ता? पत्राद्यः प्रतीयते स एव तत्र तदर्थ इति चेदन्यत्रापि[13] स एवास्त्वविशेषात्। तत्राद्यः पक्षो युक्तः। नापि द्वितीयः। न खलु प्रतिवादी वादिमनो जानाति येन योस्य मनसि वर्त्तते स एव मयार्थो निश्चित इति जानीयात्। एतेन तृतीयोपि पक्षश्चिन्तितः सभ्यानामपि तन्निश्चयोपायाभावात्। किञ्चेदं पत्रं तद्दातुः स्वपक्षसाधनवचनं परपक्षदूषणवचनमुभयवचनमनुभयवचनं वा? तत्राद्यविकल्पत्रये सभ्यानामग्रे त्रिरुच्चारणीयमेव तत्त्रापि वैपम्यात्। तथोच्चारितमपि यद्वा प्राश्निकैः प्रतिवादिना च न ज्ञायते वाद्यऽभिप्रेतार्थानुकूल्येन तदा तद्दातुः किं भविष्यति निग्रहः? त्रिरभिहितस्यापि कष्टप्रयोगद्रुतोच्चारादिभिः परिषदा प्रतिवादिना चाज्ञातमज्ञातं नाम निग्रहस्थानमित्यभिधानात्। इति चेत्तस्य तर्हि स्ववधाय कृत्योत्थापनमुक्तविधिना सर्वत्र[17] तदज्ञानसम्भवात्। तावन्मात्रप्रयोगाच्च स्वपरपक्षसाधनदूषणभावे प्रतिवाद्युपन्यासमनपेक्ष्यैव सभ्याः वादिप्रतिवादिनोर्जयेतरव्यवस्थां कुर्युः। चतुर्थपक्षे तु तन्निग्रहः सुप्रसिद्ध एव स्वपरपक्षयोः साधनदूषणाऽप्रतिपादनात्। इत्यलमतिप्रसङ्गेन।

अथेदानीमात्मनः प्रारब्धनिर्वहणमौद्धत्यपरिहारं च सूचयन् परीक्षामुखेत्याद्याह। परीक्षा तर्कः, परि समन्तादशेषविशेषत ईक्षणं यत्रार्थानामिति व्युत्पत्तेः। तस्या मुखं तद्व्युत्पत्तौ प्रवेशार्थिनां प्रवेशद्वारं शास्त्रमिदं व्यधामहं विहितवानस्मि। पुनस्तद्विशेषणमादर्शमित्याद्याह। आदर्शधर्मसद्भावादिदमप्यादर्शः। यथैव ह्यादर्शः शरीरालङ्कारार्थिनां तन्मुखमण्डनादिकं विरूपकं हेयत्वेन सुरूपकं चोपादेयत्वेन सुस्पष्टमादर्शयति तथेदमपि शास्त्रं हेयोपादेयतत्त्वे तथात्वेन प्रस्पष्टमादर्शयतीत्यादर्श इत्यभिधीयते। तदीदृशं शास्त्रं किमर्थं विहितवान् भवानित्याह। [21]संविदे। कस्येत्याह

१ वादी ॥ २ प्रतिवादिनिगद्यमानार्थस्य वादिचेतसि स्फुरणास्फुरणप्रकारेण ॥ ३ इति चेदिति शेष ॥ ४ निवेदनयोगे चतुर्थी ॥ ५ वादी ॥ ६ पत्रार्थम् ॥ ७ निवेदनात् ॥ ८ पत्रार्थे ॥ ९ इति चेदिति शेष ॥ १० पक्षे ॥ ११ न कापि ॥ १२ अकस्मादाहूतेषु ॥ १३ पूर्वप्राश्निकेष्वपि ॥ १४ उभयपक्षनिराकरणेन ॥ १५ स्वपरपक्षसाधनदूषणकारकपत्रम् ॥ १६ राक्षसी ॥ १७ परिषदि ॥ १८ तस्य=पत्रार्थस्य ॥ १९ स्वपरपक्षसाधनदूषणकारकपत्र ॥ २० पत्रपरीक्षाया ॥ २१ सज्ज्ञानाय ॥

माद्दश[1]। कीदृशो भवान् यत्सदृशस्य संवित्त्यर्थं शास्त्रमिदमारभ्यते इत्याह बालः। एतदुक्तं भवति, यो मत्सदृशोऽल्पप्रज्ञस्तस्य हेयोपादेयतत्त्वसंविदे शास्त्रमिदमारभ्यते इति। किंवत् ? परीक्षादक्षवत्। यथा परीक्षादक्षो महाप्रज्ञः स्वसदृशशिष्यव्युत्पादनार्थं विशिष्टं शास्त्रं विदधाति तथाहमपीदं विहितवानिति। ननु चाल्पप्रज्ञस्य कथं परीक्षादक्षवत् प्रारब्धैवंविधविशिष्टशास्त्रनिर्वहणं तस्मिन्वा कथमल्पप्रज्ञत्वं परस्परविरोधादित्यप्यचोद्यमौद्धत्यपरिहारमात्रस्यैवैवमात्मनो ग्रन्थकृता प्रदर्शनात्। विशिष्टप्रज्ञासद्भावस्तु विशिष्टशास्त्रलक्षणकार्योपलम्भादेवास्याऽवसीयते। न खलु विशिष्टं कार्यमविशिष्टादेव कारणात् प्रादुर्भावमर्हत्यतिप्रसङ्गात्। माद्दशोऽबाल इत्यत्र नञ् वा द्रष्टव्यः। तेनायमर्थः। यो मत्सदृशोऽबालोऽनल्पप्रज्ञस्तस्य हेयोपादेयतत्त्वसंविदे शास्त्रमिदमहं विहितवान्। यथा परीक्षादक्षः परीक्षादक्षार्थं विशिष्टशास्त्रं विदधातीति। ननु चानल्पप्रज्ञस्य तत्संवित्तेर्भवत इव स्वतः सम्भवात्तं प्रति शास्त्रविधानं व्यर्थमेवेत्यप्यसुन्दरं तद्ग्रहणेऽनल्पप्रज्ञासद्भावस्य विशिं[6]ष्ये विवक्षितत्वात्। यथा ह्यहं तत्करणेऽनल्पप्रज्ञस्तज्ज्ञस्तथा तद्ग्रहणे योऽनल्पप्रज्ञस्तं प्रतीदं शास्त्रं विहितम्। यस्तु शास्त्रान्तरद्वारेणावगतहेयोपादेयस्वरूपो न तं प्रतीत्यर्थ इति।

इति श्रीप्रभाचन्द्रविरचिते प्रमेयकमलमार्त्तण्डे परीक्षामुखालङ्कारे षष्ठः परिच्छेदः समाप्तः ॥ छ ॥

ग[3]म्भीरं निखिलार्थगोचरमलं शिष्यप्रबोधप्रदं यद्व्यक्तं पदमद्वितीयमखिलं माणिक्यनन्दिप्रभोः। तद्व्याख्यातमदो यथावगमतः किञ्चिन्मया लेशतः स्थेयाच्छुद्धधियां मनोरतिगृहे चन्द्रार्कतारावधि। १। मोहध्वान्तविनाशनो निखिलतो विज्ञानशुद्धिप्रदो मेयानन्तनभोविसर्पणपटुर्वस्तूक्तिभाभासुरः। शिष्याब्जप्रतिबोधनः समुदितो योऽद्रेः परीक्षामुखाज्जीयात्सोत्र निबन्ध एष सुचिरं मार्त्तण्डतुल्योऽमलः। २। गुरुः श्रीनन्दिमाणिक्यो नन्दिताशेषसज्जनः। नन्दताद्दुरितैकान्तरजा जैनमतार्णवः। ३। श्रीपद्मनन्दिसैद्धान्तशिष्योऽनेकगुणालयः। प्रभाचन्द्रश्चिरं जीयाद्रत्ननन्दिपदे रतः। ४।

श्रीभोजदेवराज्ये श्रीमद्धारानिवासिना परापरपरमेष्ठिपदप्रणामार्जितामलपुण्यनिराकृतनिखिलमलकलङ्केन श्रीमत्प्रभाचन्द्रपण्डितेन निखिलप्रमाणप्रमेयस्वरूपोद्द्योतपरीक्षामुखपदमिदं विवृतमिति ॥

(इति श्रीप्रभाचन्द्रविरचितः प्रमेयकमलमार्त्तण्डः समाप्तः)

॥ शुभं भूयात् ॥

१ श्रीमदकलङ्कदेव ॥ २ तद्ग्रहणरूपे ॥ ३ अथेदानीं माणिक्यनन्दिपदव्यावर्णनपूर्वकं तत्पदाशीर्वादपूर्वकं चात्मन प्रारब्धनिर्वहणमौद्धत्यपरिहारं च सूचयन्नाह गम्भीरेत्यादि ॥ ४ अप्रमितम् ॥ ५ मार्त्तण्ड इत्यस्योपपत्तिं दर्शयति ॥ ६ स्वस्य ॥ ७. माणिक्यनन्दी ॥

॥ इति ॥

